परिमल संस्कृत ग्रन्थमाला संख्या-११

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम्

रामप्रणीतरामायणतिलक—शिवसहायप्रणीत
रामायणशिरोमणि—गोविन्दराजप्रणीत-
रामायणभूषणेति-टीकात्रयेणोपस्कृतम् ।

तच्च

**कट्टी श्रीनिवासशास्त्रिभिः**

संशोधितं पाठान्तरैः टिप्पण्यादिभिश्च समलंकृतम्

तथा

**श्रीसातकडिमुखोपाध्यायशर्मणा**

विनिर्मितया विशदभूमिकया श्लोकानुक्रमण्या च
सनाथीकृतम् ।

**द्वितीयो भागः**

[अयोध्याकाण्डम्]

**परिमल पब्लिकेशन्स**

**दिल्ली — अहमदाबाद**

प्रकाशक :

**परिमल पब्लिकेशन्स**

३३/१७ शक्तिनगर

दिल्ली-११०००७

(भारत)

अधिकृत विक्रेता :

**मेहरचन्द लछमनदास**

प्रकाशक एवं पुस्तक-विक्रेता

१ अन्सारी रोड, दरियागंज

नई दिल्ली-११०००२ (भारत)

१९८३

मूल्य : रु० २४०

मुद्रक :

**ए० के० डिस्ट्रीब्यूटर्स, द्वारा**

**डीलक्स आफसेट प्रिंटर्स**

**दिल्ली-११००३५**

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतं

# रामायणम् ।



तिलक-रामायणशिरोमणि-गोविन्दराजीये(भूषणे)ति

टीकात्रयसमलंकृतम्

# अयोध्याकाण्डम् ।



## प्रथमः सर्गः ।

भरते शत्रुघ्नेन सह मातुलगृहं गतेऽनेकाभिरामगुणैरावर्जितो दशरथो रामं युवराजं मेने यौवराज्याभिषेकसिद्धये च कैकयराजं विनानेकनृपपुंगवानानाय्य तैः समं सदः प्रविवेश ।

**गच्छता मातुलकुलं भरतेन तदानघः । शत्रुघ्नो नित्यशत्रुघ्नो नीतः प्रीतिपुरस्कृतः ॥ १ ॥**

### तिलकटीका ।

१ ] अयोध्याख्ये तु गुर्वर्थे त्यक्त्वा राज्यं गिरौ वसन् ।
पादुके भरतायादात्स रामः शरणं मम ॥

अथ रामस्य राज्याभिषेकार्हगुणान्प्रतिपादयितुं राज्याभिषेकादि च प्रतिपादयितुमेतदारम्भः । मातुलकुलं मातुलगृहम् अनघः सोदरस्य लक्ष्मणस्य बलवद्रामाश्रयप्रयुक्तेर्ष्यारहितः नित्यशत्रवः कामादयस्तद्धन्ता नीतः अनेन विना मातुलगृहभुज्यमानसुखमसत्कल्पमिति धिया नीत इत्यर्थः । प्रीत्या भरतविषयस्नेहेन पुरस्कृतो युक्तः तेन भरतनिर्बन्धेन गमनशङ्का वारिता । किं च भरतेन प्रीत्या पुरस्कृतोऽग्रेसरः कृतः तेन परस्परानुरागसूचनम् ॥ १ ॥

### रामायणशिरोमणिः ।

स्वस्ति श्रीरघुनाथः शर्म ददाति ।
यत्तद्भासा सकलं जगद्विभाति ॥ १ ॥
जयति जानकीजानिर्जननी या तु ।
श्रीमिथिलेशकुमारी जगतः पातु ॥ २ ॥
वेणीमाधवचरणौ जयतितराम् ।
शुद्धं लभे यत्कृपया पातुतराम् ॥ ३ ॥
आञ्जनेयमतिवन्द्ये मतिं ददातु ।
श्रीरामायणतिलकं पूर्ति यातु ॥ ४ ॥
समाप्य बालकाण्डस्य टीकां वाल्मीकिनिर्मितेः ।
करोम्ययोध्याकाण्डस्य रामायणशिरोमणिम् ॥ ५ ॥

बालकाण्डे सप्रसङ्गं रामप्रादुर्भूतिविवाहादि निरूप्य ब्रह्मादिप्रार्थितरामप्रतिज्ञातरावणवधादि वर्णयितुं रामराज्याभिषेकसमयं निरूपयन्नाह—गच्छतेत्यादिभिः । तदा पित्राज्ञाकाले मातुलकुलं गच्छता भरतेन अनघः अघसंसर्गशून्यः नित्यशत्रुघ्नः नित्यशत्रवो रागद्वेषादयः तन्निवारकः प्रीतिपुरस्कृतः भरतातिप्रीतिविषयीभूतः शत्रुघ्नो नीतः ॥ १ ॥

### भूषणटीका ।

श्रावं श्रावं शठारेः शमदमवपुषः कृष्णवकारविन्दादालोच्यालोच्य वाचा प्रकृतिमधुरया प्रोच्य विद्वज्जनेभ्यः ।
गोविन्दार्यः सुधीशः कुशिककुलमणिर्वृद्धगाढाश्रयार्थ्यं
सम्यक्साकेतकाण्डं सरसजनमुदे सादरं व्याकरोति ॥

प्रथमे काण्डेएतस्मिन्नन्तरेविष्णुरित्यादिना“यतो वा इमानि”इत्यादिश्रुतिप्रतिपादितं जगत्कारणत्वं अहं वेद्मि महात्मानमित्यादिना पुरुषसूक्तोक्तमहापुरुषत्वं त्वमनादिरनिर्देश्य इत्यादिना अचिन्त्यवैभवत्वमित्यनं सर्वस्मात्परत्वसूचकं अधिकं मेनिरे विष्णुमित्यादिना तदितरेषामपरत्वं च संप्रति तस्य हेयप्रत्यनीककल्याणै-

स तत्र न्यवसद्भ्रात्रा सह सत्कारसत्कृतः । मातुलेनाश्वपतिना पुत्रस्नेहेन लालितः ॥ २ ॥
तत्रापि निवसन्तौ तौ तर्प्यमाणौ च कामतः । भ्रातरौ स्मरतां वीरौ वृद्धं दशरथं नृपम् ॥ ३ ॥
राजापि तौ महातेजाः सस्मार प्रोषितौ सुतौ । उभौ भरतशत्रुघ्नौ महेन्द्रवरुणोपमौ ॥ ४ ॥

---

कतानता प्रतिपाद्यते द्वितीयकाण्डेन । अथवा पूर्वं वक्ष्यमाणधर्मानुष्ठानोपयोगितया रामायणपुरुषाणां महाकुलप्रसूतत्वमहागुरुकृपालब्धधनुर्वेदरहस्यत्वतत्संवादभूतताटकाताटकेयादिनिरासहरधनुर्भङ्गवैष्णवचापपरिग्रहप्रभृतिगुणाः सहधर्मचारिणीयोगश्च सप्रपञ्चं दर्शिताः । अथ तदनुष्ठिताः पितृवचनपरिपालनादिसामान्यधर्माः भगवच्छेषत्वपारतन्त्र्यभागवताभिमाननिष्ठारूपविशेषधर्माश्च प्रतिपाद्यन्ते । पूर्वकाण्डे लक्ष्मीयोगो दर्शितः अत्र भूमियोगः प्रदर्शित इत्यपि ब्रुवते । पूर्वं परत्वमुक्तमत्र सौलभ्यमित्यप्याहुः । पूर्वं लक्ष्मीविशिष्टं प्राप्यस्वरूपमुक्तं प्राप्तृरूपजीवस्वरूपमत्र निरूप्यते । तत्र प्रथममतिरहस्यतयाऽवश्यविज्ञातव्यां लघूपपादनां भागवताभिमाननिष्ठां शत्रुघ्नानुष्ठानमुखेन दर्शयति—गच्छतेति । गच्छता वर्तमाननिर्देशेन शत्रुघ्नगमनस्य भरतगमनेनैककालत्वावगमाद्दिवसनादिवत्तस्य तदेकपारतन्त्र्यं गम्यते मातुलकुलं मातुलगृहं द्वितीयया भरतोद्देश्यस्यैव शत्रुघ्नोद्देश्यत्वावबोधनाच्छेष्युद्देश्योद्देश्यकत्वरूपं पारतन्त्र्यमुच्यते भगवत्पारतन्त्र्यरूपं भागवतत्वमाह—भरतेनेति । भरत इति राज्यस्य भरणादिति सहस्रानीकनिर्वहणात् रामे वनं गते तदनुसारिणि च लक्ष्मणे राजनि च त्रिदशसदनमुपसेदुषि केवलरामाज्ञया प्राज्यराज्यभारनिर्वाहकरणेनेत्यर्थः । तदा तद्गमनकाल एव अनेन स्वानुकूलचन्द्रताराबलाद्यनपेक्षणोक्त्या पारतन्त्र्यमेव विशेषितम् । अनघः अस्मिन् प्रकरणे अनघशब्देन केवलरामभक्तिरुच्यते स्वशेषिभूतभरतोद्देश्यताकारेण हि शत्रुघ्नस्य रामभक्तिरुद्देश्या अत एव वक्ष्यति नाहं स्वपिमि जागर्मि तमेवार्यं विचिन्तयन्निति । जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे इति च । अनिष्टावहस्य पापशब्दवाच्यत्वात् । स्वशेषिभरतोद्देश्यत्वाकारं विना रामभक्तेरनिष्टावहत्वात्तस्याघत्वं "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति श्रुतौ सुकृतस्य मुमुक्षोरनिष्टावहत्वेन पाप्मत्वव्यपदेशात् शत्रुघ्नः शत्रून् लवणासुरादीन् हनिष्यत्ययमिति भाविप्रतिसंधानेन शत्रुघ्न इति वसिष्ठेन कृतनामधेयः नित्यशत्रुघ्नः नित्यशत्रवो ज्ञानेन्द्रियाणि शरीरे नित्यं संनिधाय विषयान्तरप्रावण्यरूपविपरीतकार्यकारित्वात् तान् हन्तीति नित्यशत्रुघ्नः इन्द्रियनिग्रहवानित्यर्थः । पुंसां दृष्टिचित्तापहारिण्यपि न ममेन्द्रियः रामविषयभक्तिः स्वाधिकारविरुद्धेति तन्निवर्तनमस्य कार्यमेव नीत इत्युक्तं न तु ययाविति तेनाविद्धत्पारतन्त्र्यमुक्तं प्रीतिपुरस्कृतः किं करोमि ज्येष्ठानुवर्तनं कनिष्ठेन कार्यमिति विधिपरतन्त्रो न मतः अपि तु प्रीतिप्रेरितोऽगच्छदित्युक्तं तेनाविद्धे स्वाभाविकस्य प्रीतिरेव अचेतनापेक्षया चेतनस्य विशेषः भगवत्पारतन्त्र्यं तु चेतनाचेतनसाधारणमेव यथात्यन्तपारतन्त्र्याही पुरुषः स्यात्तदा शत्रुघ्नवद्भागवतपारतन्त्र्यतया वर्तितव्यमिति व्यञ्जितं व्यञ्जनावृत्त्याभिमतार्थप्रदर्शनं सुत्तमकाव्यकृत्यम् ॥ १ ॥

२ ] ति० टी०—भरतस्तत्र मातुलकुले विशिष्टवस्त्राभरणभोजनादिरूपसत्कारेण सत्कृतः पुत्रस्नेहेन पुत्रादप्यधिकस्नेहेनेत्यर्थ इत्येके ॥ २ ॥

रा० टी०—स इति । अश्वपतिना अश्वानां स्वामिना मातुलेन युधाजिता सत्कारैः सत्कारयोग्यपदार्थैः सत्कृतः पुत्रस्नेहेन पुत्रविषयकानुरागेणेव लालितः स भरतः भ्रात्रा शत्रुघ्नेन सह तत्र केकयराजगृहे न्यवसत् ॥ २ ॥

गो० टी०—रामभक्तो भरतः कथं तं विहाय मातुलकुले न्यवसदित्यपेक्षायां रामाभिमानविषयभूतशत्रुघ्नसहवासादित्याह—स इति । सः भरतः तत्र मातुलगृहे अश्वपतिना मातुलेन युधाजिता सत्कारसत्कृतः आत्यश्वप्रदानादिना पूजितोऽपि पुत्रस्नेहेन पुत्रविषयस्नेहतुल्यस्नेहेन लालितः विशिष्टभोजनाच्छादनाभरणप्रदानादिभिरुपलालितोऽपि सन् भ्रात्रा शत्रुघ्नेन सह न्यवसत् भ्रातृस्नेहेनैव तत्र स्थितः न तु मातुलोपलालनमात्रादिति भावः, यद्वा सः शत्रुघ्नः भ्रात्रा सह लालित इत्यन्वयः "सहयुक्तेऽप्रधाने" इति तृतीया । अश्वपतिः स्वस्रीयादपि शत्रुघ्नमतिशयेन लालितवानित्यर्थः । अथवा भ्रात्रा सह न्यवसत् रामेण सह न्यवसत् सदा रामचिन्तया तेन सह वर्तमान इव स्थित इत्यर्थः ॥ २ ॥

३ ] ति० टी०—तत्रापि तादृशसत्कारवत्यपि मातुलगृहे कामतः कामैरभिमतविषयैः सार्वविभक्तिकस्तसिः । तर्प्यमाणौ अनेन सार्वदिकी विषयसुखानिष्टत्तिर्बोधिता । वृद्धम् अनेन शुश्रूषाकालात्ययेन धर्मलोपभयात्पितृस्मरणमिति सूचितम् । स्मरतामस्मरताम् अडभाव आर्षः ॥ ३ ॥

रा० टी०—तत्रेति । कामतः इच्छाविषयीभूतपदार्थैस्तर्प्यमाणौ संतोष्यमाणावपि तत्र मातुलकुले निवसन्तौ वासं कुर्वन्तौ वीरौ वीरत्वविशिष्टौ भ्रातरौ तौ शत्रुघ्नभरतौ वृद्धं वयस्तधिकं दशरथं नृपं स्मरतामस्मरताम् अडभाव आर्षः ॥ ३ ॥

गो० टी०—तत्रापीति । तत्र सर्वोपलालनभूयिष्ठे मातुलगृहे निवसन्तावपि कामतः काम्यमानसर्वाभिमतवस्तुभिः तृतीयार्थे तसिः तर्प्यमाणौ च संतोष्यमाणावपि वीरौ महोत्साहौ तौ भ्रातरौ भरतशत्रुघ्नौ वृद्धं नृपं जीर्णं महीपतिं दशरथं स्मरतामस्मरताम् अनित्यमागमशासनमित्यडभावः । दशरथो वृद्धोऽभूत् राज्यभरणे सम्यक् क्षमते अपीदानीं रामं युवराजं कारयेदिति अचिन्तयतामिति भावः ॥ ३ ॥

४ ] ति० टी०—प्रोषितौ विदेशगतौ ॥ ४ ॥

सर्वे एव तु तस्येष्टाश्चत्वारः पुरुषर्षभाः । स्वशरीराद्विनिर्वृत्ताश्चत्वार इव बाहवः ॥ ५ ॥
तेषामपि महातेजा रामो रतिकरः पितुः । स्वयंभूरिव भूतानां बभूव गुणवत्तरः ॥ ६ ॥
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः । अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः ॥ ७ ॥
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा । यथा वरेण देवानामदितिर्वज्रपाणिना ॥ ८ ॥

रा० टी०—राजेति । प्रोषितौ विदेशं प्राप्तौ उभौ तौ भरतशत्रुघ्नौ राजापि सस्मार ॥ ४ ॥

गो० टी०—राजापीति । महातेजाः सत्पुत्रलाभकृतनिरवधिकतेजस्कः राजा दशरथः महेन्द्रवरुणोपमौ तद्वान्निरपायमैत्रीसंपन्नौ प्रोषितौ देशान्तरगतौ निरवधिकप्रीतिविषयभूतौ उभौ भरतशत्रुघ्नौ सुतौ सस्मार सर्वसंपत्समृद्धस्यापि मे पुत्रद्वयासन्निधानमेव न्यूनतेत्यस्मरदिति भावः । उभाविति स्मृतिविषये तारतम्याभावोक्तिः ॥ ४ ॥

५ ] ति० टी०—विनिर्वृत्ता विनिर्गताः अनेन राज्ञो विष्णुरूपकध्वनिः ॥ ५ ॥

रा० टी०—स्मरणे हेतुमाह—सर्वे इति । स्वशरीराद्विनिर्वृत्ताः विनिष्क्रान्ताः चत्वारो बाहव इव चत्वारः पुरुषर्षभाः पुरुषश्रेष्ठाः सर्वे रामादयः तस्य दशरथस्य इष्टाः प्रिया एव बभूवुरिति शेषः ॥ ५ ॥

गो० टी०—रामलक्ष्मणसन्निधाने कथमितरपुत्रस्मरणमित्यत्राह—सर्वे इति । तुशब्द उक्तशङ्काव्यावृत्त्यर्थः । चत्वारः चतुर्धावस्थिताः पुरुषर्षभाः पुरुषोत्तमाः सर्वे अविशेषेण तस्य दशरथस्य शरीराद्विनिर्वृत्ताः निष्पन्नाः चत्वारो बाहव इव इष्टाः प्रिया एवासन् अभूतोपमा अयोगव्यवच्छेदार्थे एवकारः लोके कस्यचिच्चतुर्षु बाहुषु सत्सु यथा तस्यैकोऽपि नाप्रियो भवति एवं तेषु पुत्रेष्वेकोऽपि नानिष्टोऽभूदित्यर्थः । उपमाने स्वशरीरविनिर्वृत्तत्वोक्त्या एतेषु राज्ञः स्वशरीरविनिर्वृत्तत्वाभिमानमात्रमित्युक्तम् ॥ ५ ॥

६ ] ति० टी०—तत्रापि रामस्यात्यन्ताभिमतत्वमुत्कर्षं चाह—तेषामिति । तेषामपि मध्ये पितू रामो रतिकरो बभूव भूतानां प्राणिनां मध्ये स्वयंभूश्चतुर्मुख इव गुणवत्तरश्च बभूव ॥ ६ ॥

रा० टी०—तेषामिति । तेषां चतुर्णां मध्ये पितुः रतिकरः प्रीतिनिष्पादकः रामस्तु भूतानां प्राणिनां मध्ये स्वयंभूर्ब्रह्मेव गुणवत्तरः अतिशयगुणवान्बभूव ॥ ६ ॥

गो० टी०—एवं चतुर्णां प्रियत्वाविशेषेऽपि रामे गुणातिशयकृतप्रीतिविशेषोऽस्तीत्याह—तेषामिति । तेषामिति निर्धारणे षष्ठी भूतानां प्राणिनां मध्ये स्वयंभूः ब्रह्मेव तेषां पुत्राणां मध्ये गुणवत्तरः अतिशयेन गुणवान् महातेजाः तादृग्गुणप्रकाशकनिरवधिकतेजस्कः रामः पितू रतिकरो बभूव निरतिशयप्रीतिः रतिः ॥ ६ ॥

७ ] ति० टी०—गुणवत्तरत्वे हेतुः—स हीति । उदीर्णस्य दृप्तस्य । अर्थितः प्रार्थितः जज्ञे आविर्भूतः ॥ ७ ॥

रा० टी०—रामस्य गुणवत्तरत्वे हेतुमाह—स इति । उदीर्णस्य उद्भवविशिष्टस्य रावणस्य वधार्थिभिर्देवैः ब्रह्मादिभिः अर्थितः प्रार्थितः सनातनः नित्यः अविष्णुः विष्णुविष्णुः साकेताधीशः मानुषे लोके जज्ञे प्रादुर्बभूव ' * उदीर्ण उद्भवः ' इत्यमरः ॥ ७ ॥

गो० टी०—कथमितरापेक्षया गुणवत्तरत्वमित्यपेक्षायां विष्णोः प्रधानावतारत्वादित्याह—स हीति । हीति "अजायमानो बहुधा विजायते" इतिश्रुतिप्रसिद्धिं द्योतयति।देवैः नह्यनन्यप्रयोजनैरर्थितः किंतु प्रयोजनान्तरपरैः न केवलप्रयोजनान्तरपरैः अपित्वीश्वरोऽहममहं भोगीत्येवं दुरभिमानिभिः मदोऽपि दीव्यतिधातोरर्थं यत्र नरकासुरवधे स्वकार्यनिष्पत्त्यनन्तरं पारिजातनिमित्तं कृष्णेनैव योद्धुमुपक्रान्तैरित्यर्थः । उदीर्णस्य उद्भटस्य * 'उदीर्ण उद्भटः' इत्याद्यमरः । नैसर्गिकगर्वेण सर्वं जगद्विनाशयत इत्यर्थः । वधस्यार्थत्वे हेतुरयं रावणस्य यैर्वरो दत्तस्तानेव निलयान्निष्कासयत इत्यर्थः । वधार्थिभिः एकस्य संहारेण राज्यमखिलं सुखेन वर्तिष्यत इति प्रपन्नैः अर्थितः प्रार्थितः नोपासितः मानुषे लोके यत्र देवा अपि मनुष्यगन्धमसहमानाः छर्दनपूर्वकं कुत्सयन्तो योजनादुपरि स्थित्वा हविरादवते तेऽपि यस्य मनुष्यस्थानीयाः सोऽस्मिन् मानुषे लोके जातः हन्त किमिदं सौलभ्यमिति भावः । जज्ञे न नृसिंहादिवदाविर्भूतः स जज्ञे रामो जज्ञे लोको हि दशमासान् गर्भेऽवस्थाय जायते अयं तु ततश्च द्वादशे मास इत्युक्तरीत्या ततोऽप्यधिककालं गर्भे स्थित्वा जज्ञे विष्णुः व्यापकं वस्तु व्याप्यैकदेशस्य मनुष्योऽयमित्यभिमान्यमभूत्सनातनः नित्यवस्त्वेवमात्मानमन्यथा चकार ॥ ७ ॥

८ ] ति० टी०—देवानां वरेणेति वज्रपाणिविशेषणम् । वज्रपाणिना प्रार्थितेन देवानां वरेण वामनेनादितिरिवेत्यर्थ इत्यन्ये ॥ ८ ॥

रा० टी०—कौशल्येति । अमिततेजसा पुत्रेण तेन रामेण कौशल्या शुशुभे।तत्र दृष्टान्तः देवानां वरेण वज्रपाणिना इन्द्रेण अदितिर्यथा इदुवत्सविता गच्छतीतिवदुपमानोपमेयभावः ॥८॥

गो० टी०—न केवलं पितुरेवानन्दकरः मातुरपीत्याह—कौसल्येति । अमिततेजसा अपरिमितपराक्रमेण तेन रामेण पुत्रेण कौसल्या देवानां वरेण वज्रपाणिना इन्द्रेण अदितिर्यथा अदितिरिव शुशुभे बभौ तेन संतुष्टासीदित्यर्थः ॥ ८ ॥

१ विनिर्वृत्ता इति रा. पाठः । * एक उद्भव इत्यपर उद्भट इति लिखति । अमरे तु नान्यतरदपि दृश्यते ।

स हि रूपोपपन्नश्च वीर्यवाननसूयकः । भूमावनुपमः सूनुर्गुणैर्दशरथोपमः ॥ ९ ॥
स च नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते । उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥ १० ॥
कदाचिदुपकारेण कृतेनैकेन तुष्यति । न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥ ११ ॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः । कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥ १२ ॥

९ ] ति० टी०—गुणवत्तर इत्युक्तगुणानेवाह—स हीति । रूपं लावण्यं सौन्दर्यं च असूया गुणेषु दोषत्वाविष्करणं तद्र-हितः । भूमावनुपमः उक्तगुणविषये सूनुः कौसल्याया इति शेषः । दशरथोपमत्वं वक्ष्यमाणगुणैर्बोध्यम् ॥ ९ ॥

रा० टी०—रामस्य गुणानेव वर्णयन्नाह—स इत्यादिभिः । रूपोपपन्नः समातिशयरहितरूपविशिष्टः वीर्यवान् समातिशय-रहितप्रभावविशिष्टः अनसूयकः असूयारहितः । किंच अनिति पालयति सर्वमित्यनो विष्णुः पचाद्यच् तत्र सूः प्रेरणा यस्य सः प्रेरणार्थकषूधातोर्भावक्विबन्तः सूरिति उपलक्षणतया शिव-ब्रह्मविष्णुप्रेरक इत्यर्थः । उः शंभुः यः सर्वत्र प्राप्तिमान् विष्णुः याधातुप्रकृतिकघञर्थकप्रत्ययान्तप्रकृतिकार्शआद्यजन्तो य इति 'यकारस्तु प्रजापतिः' इत्यभिधानात् यो ब्रह्मा च तयोरेक-शेषे याविति ततः उश्च यौ च उयाः शंभुविष्णुब्रह्माणस्तेषां कं सुखं यस्मात् स उयकः । 'कं सुखेऽपि प्रकीर्तितम्' इति कोशः । शंभुविष्ण्वादिभ्योऽपि सुखदाता अनसूश्चासौ उयकश्च अनसूयकः भूमौ सर्वस्मिन् स्थले अनुपमः वास्तवोपमारहि-तोऽपि सूनुः दशरथनित्यसुतः स रामः गुणैः सत्यप्रतिज्ञत्वा-दिभिः दशरथोपमः प्रतीयत इति शेषः ॥ ९ ॥

गो० टी०—गुणवत्तर इत्युक्तं प्रपञ्चयति—स हीत्यादिना । सः रामः रूपोपपन्नः सौन्दर्ययुक्तः चकारेण रूपौदार्यगुणैरित्यु-क्तौदार्यादिकं समुच्चीयते वीर्यवान् मृगनाभिगन्धवत् स्वयमवि-कृत एव परेषां विकारकारी अनसूयकः गुणेषु दोषाविष्करणमसू-या अविद्यमानासूया यस्यासावनसूयकः भूमावनुपमः सूनुः भूमावेव तत्तुल्यः पुत्रः कौसल्यातिरिक्तायाः कस्याश्चिदपि ना-स्तीत्यर्थः दिवि त्वदितेर्वज्रपाणिरस्त्येवेति भावः । गुणैराकारे-ङ्गितचेष्टाभिः दशरथोपमः दीपादुत्पन्नप्रदीपवत् ॥ ९ ॥

१० ] ति० टी०—मृदुपूर्वं मृदूक्तिपूर्वम् स्वजनेन परु-षमुच्यमानोऽपि परुषमुत्तरं न प्रतिपद्यते न प्रयच्छति ॥ १० ॥

रा० टी०—स इति । नित्यं प्रशान्तात्मा स रामः मृदु यथा स्यात्तथा पूर्वं भाषते परुषं केनचित् हास्यादिना रूक्ष-मुच्यमानोऽपि परुषमुत्तरं न प्रतिपद्यते ब्रवीतीत्यर्थः ॥ १० ॥

गो० टी०—अथ दशरथादाधिक्यमाह—स इति । तुशब्देन दशरथाद्वैलक्षण्यमुच्यते सः रामः परुषं परुषवचनं केनचि-दुच्यमानोऽपि उत्तरं उत्तरवचनं न प्रतिपद्यते न वदतीत्यर्थः अपिशब्देन तद्गुणप्रसक्तिरेव नास्तीति गम्यते । उत्तराप्रति-पत्तौ हेतुः नित्यं प्रशान्तात्मेति अक्रोधनस्वभाव इत्यर्थः । न केवलमुत्तराप्रतिपत्तिः किंतु तं परुषवक्तारं प्रति मृदुपूर्वं सा-न्त्वपूर्वं च भाषते ॥ १० ॥

११ ] ति० टी०—शतमनन्तम् । आत्मवत्तया स्वाधी-नान्तःकरणतया ॥ ११ ॥

रा० टी०—कथंचिदिति । कथंचित् केनापि प्रकारेण कृतेन एकेनाप्युपकारेण तुष्यति आत्मवत् स्वदिव्यदेहवत् स्वी-करोति चेति शेषः । अत एव तया स्वदेहवत्तया स्वीकृतस्येति शेषः । अपकाराणां शतमपि न स्मरति ॥ ११ ॥

गो० टी०—अथास्य कृतज्ञत्वमाह—कथंचिदिति । कथं-चित्कृतेन यथातथा वापीत्युक्तरीत्या कृतेन यद्वा यादृच्छिकप्रास-ङ्गिकतया कृतेन यद्वा प्रयोजनान्तरपरतया कृतेन कथंचित्कृतेन अहृदयतया कृतेन कथंचित्कृतेन पत्रपुष्पाद्यन्यतमेन कृतेन यद्वा स्वस्मात् किंचित्फललाभाय कृतेन यद्वा सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वेत्येवं कृतेन उपकारेण अण्वपि महत्त्वेनाभिमन्य-मानस्य भगवतोऽभिप्रायेणोपकारेणेत्युक्तं कृतेन कर्तुमीप्सितेन "आशंसायां भूतवच्च" इति क्तः । एकेन सकृत् कृतेन तुष्यति सदा प्रीतिं प्राप्नोति तोषफलस्य कदाचिदपि न क्षय इति भावः । एवमुपकारेण तुष्यन्नपकारेणापि किं कुप्यति, नेत्याह—न स्मरतीति । अपकाराणां सम्यक्कृतापराधानां शतमपि असंख्येयमपि 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्' इत्युक्तेः न स्मरति न चिन्तयति कः पुनः कोपस्यावकाश इति भावः । उभयत्र हेतुमाह—आत्मवत्तयेति वशीकृतमनस्कतयेत्यर्थः । यद्वा आत्मवत्तया ज्ञानवत्तया उदाराः सर्व एवैते न कश्चिन्मापराध्यती-त्येवमध्यवसायवत्तयेत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—शीलं सुचरितम् । ज्ञानमात्मानात्मविवे-कज्ञानं वेदतदर्थज्ञानं च । अस्त्रयोग्यान्तरेष्वप्यस्त्रशस्त्रपरिश्रमयोग्य-कालस्य यदन्तरं मध्यं तेष्वपि सज्जनैरेव शास्त्ररहस्यं कथय-न्नास्त अन्यदा तु कैमुतिकन्यायसिद्धं सज्जनैकसंभाषणम् ॥१२॥

रा० टी०—शीलेति । अस्त्रयोग्यान्तरेषु अस्त्रोपलक्षितास्त्र-शस्त्राभ्यासयोग्यकालमध्येष्वपि शीलवृद्धादिविशेषणविशिष्टैः स-ज्जनैः सह कथयन् उचितव्यवहारयन्नेव नित्यमास्त तेनाऽन्यदेव-मिति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः ॥१२॥

गो० टी०—अथास्य गुणवर्धकं सत्सङ्गमाह—शीलवृद्धैरि-ति । शीलं सदाचारः सज्जनैरिति त्रिष्वप्यनुषज्यते शीलवृद्धैः स-दाचारसंपन्नैः सज्जनैः कथयन्नास्ते तैः सह सूक्ष्मतराचारविशेषान् प्रतिपादयन्नास्तेत्यर्थः ज्ञानवृद्धैः परिपक्वमोक्षविषयिभिः 'मोक्षे धीर्ज्ञानम्' इत्यमरः । तादृशैः सज्जनैः कथयन्नास्त तैर्वेदान्तार

१ प्रभाषते इति गो. पाठः । २ कथंचिदिति गो. रा. पाठः ।

बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः । वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥ १३ ॥
न चानृतकथो विद्वान्वृद्धानां प्रतिपूजकः । अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरज्यते[1] ॥ १४ ॥
सानुक्रोशो जितक्रोधो ब्राह्मणप्रतिपूजकः । दीनानुकम्पी धर्मज्ञो नित्यं प्रग्रहवाञ्छुचिः ॥ १५ ॥

इत्यनुद्धाटयन्नास्तेत्यर्थः । वयोवृद्धैः सज्जनैः कथयन्नास्त क्रमागतसंप्रदायविशेषान् कथयन्नास्तेत्यर्थः । सज्जनैरिति सामान्योक्त्या ग्रामकुलादितारतम्यं न तेनादृतमित्युच्यते तृतीयया तेषामप्रधानत्वावगमात्स्वयमेव तेषामर्थविशेषं दर्शयतीति सूचितं नित्यमित्यनेन नेदं कादाचित्कमित्युच्यते विशेषणत्रयं तु चकारेण ज्ञानशीलवयोवृद्धैः शीलज्ञानवृद्धैः ज्ञानवयोवृद्धैः शीलवयोवृद्धैश्चेति समुच्चीयते । नेदं नित्याग्निहोत्रवत् कचित्समय इत्याह—अस्त्रेति । अस्त्राणां योग्यः अभ्यासः 'योग्यो गुणनिकाभ्यासः' इति वैजयन्ती । तस्यान्तरेषु अवकाशेष्वपि आपिशब्देन समयान्तरे तत्कथनं किं पुनर्न्यायसिद्धमित्युक्तं सत्संगतिं विना क्षणमपि न तिष्ठतीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—मधुराभाषी मधुरमाभाषितुं शीलमस्य पूर्वभाषी आगतान्प्रति प्रथमभाषणेन स्वाभिमुख्यप्रदर्शकः । मधुरं शब्दतः प्रियमर्थतः । न च विस्मितोऽप्राप्तगर्वः ॥ १३ ॥

रा० टी०—रूक्षभाषणादिसाधकसामग्रीसत्त्वेऽपि रूक्षभाषणादि न करोतीत्याह—बुद्धिमानिति । बुद्धिमान् सर्ववचनविषयकप्रशस्तबुद्धिविशिष्टः मधुराभाषी मधुरमाभाषते तच्छीलः पूर्वभाषी नीचं प्रत्यपि पूर्वभाषणशीलः प्रियंवदः प्रियमेव वदति नत्वप्रियमित्यर्थः वीर्यवान्महापराक्रमवानपि महता स्वेन स्वकीयेन वीर्येण विस्मितः गर्वितो न ॥ १३ ॥

गो० टी०—परायत्तसकलव्यापारत्वमाह—बुद्धिमानिति । बुद्धिमान् प्रशस्तबुद्धिः कथं सर्वे जनाः सुखं वसेयुरित्येवं सर्वदा लोकसंरक्षणचिन्तापर इत्यर्थः । मधुराभाषी मधुरभाषणशीलः यद्यद्वक्ति तन्मधुरमेव वदतीत्यर्थः । पूर्वभाषी अतिनीचं प्रत्यपि स्वयमेव पूर्वं भाषमाण इत्यर्थः । प्रियंवदः प्रियवाग्वचनशीलः "प्रियवशे वदः खच्" इति ताच्छील्ये खच् । "खित्यनव्ययस्य" इति ह्रस्वः "अरुर्द्विषदजन्तस्य—" इति मुमागमः । शत्रुविषयेऽपि प्रियवचनशीलः वीर्यवान् आश्रितविरोधिनिरसनक्षमः पूर्वं वीर्यवानित्याविष्कृतत्वमुक्तमिति न पुनरुक्तिः । महता स्वेन वीर्येण न विस्मितः आश्रितसकलविरोधिनिरसने कृतेऽपि नातिस्वस्थमना यथावित्सुकरीत्या किं कृतं मयेत्यपर्याप्त एव स्थितः । 'गर्वः स्याद्विस्मयो मदः' इत्यमरः । वर्तते इति शेषः ॥ १३ ॥

१४ ] ति० टी०—न चानृतकथः तेन सदा सत्यवचनायोगव्यवच्छेदो बोध्यते । अनुरक्तोऽनुरञ्जितः अन्तर्भावितण्यर्थः अनुरज्यतेऽनुरञ्जयति तेन परस्परानुरागः ॥ १४ ॥

रा० टी०—नेति । अनृतकथः अनृता मृषा कथा कथनं यस्य स न मिथ्यावादिप्रतियोगिकभेदविशिष्ट इत्यर्थः । विद्वान् निखिलविषयकज्ञानवान् वृद्धानां ज्ञानादिना वृद्धिं प्राप्तानां प्रतिपूजकः अत एव प्रजाभिरनुरक्तः प्रजानिष्ठानुरागविषयीभूतः सन्प्रजा अपि अनुरज्यते अनुरञ्जयति प्रजाविषयकानुरागवान् भवतीत्यर्थः ॥ १४ ॥

गो० टी०—न चेति । स इति शेषः । स रामः अनृतकथो न भवति कथा प्रबन्धकल्पना अनृता असत्या कथा यस्य स तथा कल्पितेतिवृत्तकासत्काव्यालापवर्जित इत्यर्थः । वेत्तीति विद्वान् "विदेः शतुर्वसुः" अनृतकथाभावश्च न तदज्ञानात् किंतु तद्वर्ज्यत्वज्ञानादित्यर्थः । वृद्धानां पूर्वोक्तत्रिविधवृद्धानां प्रतिपूजकः प्रत्युद्गम्य पूजकः 'ब्राह्मणप्रतिपूजकः' इतिपाठे बालवृद्धसाधारण्येन ब्राह्मणमात्रपूजापरः दशवर्षश्च ब्राह्मणः शतवर्षश्च क्षत्रियः पितापुत्रौ स्मृतौ विद्धीत्यापस्तम्बः प्रजाभिः पण्डितपामराविशेषेण सर्वाभिः प्रजाभिः अनुरक्तः अनुरागविषयीकृतः । तत्र हेतुमाह—प्रजाश्चाप्यनुरञ्जते अनुरञ्जयतीत्यर्थः अन्तर्भावितण्यन्तोऽयं स्वयं पूर्वं प्रजा रञ्जयित्वा ततस्ताभिरनुरक्तो भवतीत्यर्थः । चादयः सर्वत्रोक्तगुणसमुच्चयार्थाः ॥ १४ ॥

१५ ] ति० टी०—अनुक्रोशो दया दुःखिषु तद्वान् । दीनानुकम्पी दीनानुकम्पया तदभिलषितप्रापकः अतो न पौनरुक्त्यम् । प्रग्रहो दुष्टनिग्रह इन्द्रियनिग्रहश्च ॥ १५ ॥

रा० टी०—सेति । सानुकः अनुकेण स्वीयपालनविषयकनिरन्तरयत्नेन सहितः अशः स्वतनुप्रकाशद्वारा सर्वत्र पूर्णः किंच सानुक्रोशो दयासहितः जितक्रोधः जितः क्रोधः स्वापकारिष्वपि कोपो येन सः ब्राह्मणप्रतिपूजकः ब्राह्मणसत्कारकारकः दीनानुकम्पी दीनविषयकदयावान् धर्मज्ञः निखिलधर्मबोधकः नित्यं प्रग्रहवान् अधर्मनिग्रहवान् शुचिः सकलपावनहेतुः ॥ १५ ॥

गो० टी०—सानुक्रोशेति । सानुक्रोशः सदयः 'कृपादयानुकम्पा स्यादनुक्रोशः' इत्यमरः । दया हि नामापरदुःखासहिष्णुत्वं जितक्रोधः वशीकृतकोपः नत्ववशेन क्रोध उत्पद्यत इत्यर्थः । ब्रह्म वेदः तद्विदन्तीति ब्राह्मणाः "तदधीते तद्वेद" इत्यण् । प्रत्युद्गम्य पूजकः प्रतिपूजकः ब्राह्मणानां प्रतिपूजक इति याजकादित्वात् षष्ठीसमासः । दीनानुकम्पी दीनेषु विशेषतोऽनुकम्पावान् विशेषो नाम यत्र दीनो दृष्टः तत्रैव स्थित्वा दानमानादिकरणम् । धर्मज्ञः सामान्यविशेषधर्मज्ञः प्रग्रहवान् नियमवान् अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममेति वक्ष्यति । शुचिः परस्वानाकाङ्क्षी 'योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः' इति मनुस्मरणात् ॥ १५ ॥

[1] रज्यते इति गो. पाठः ।

कुलोचितमतिः क्षात्रं स्वधर्मं बहु मन्यते । मन्यते परया प्रीत्या महत्स्वर्गफलं ततः ॥ १६ ॥
नाश्रेयसि रतो यश्च न विरुद्धकथारुचिः । उत्तरोत्तरयुक्तीनां वक्ता वाचस्पतिर्यथा ॥ १७ ॥
अरोगस्तरुणो वाग्मी वपुष्मान्देशकालवित् । लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥ १८ ॥
स तु श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः । बहिश्चर इव प्राणो बभूव गुणतः प्रियः ॥ १९ ॥
सर्वविद्याव्रतस्नातो यथावत्साङ्गवेदवित् । इष्वस्त्रे च पितुः श्रेष्ठो बभूव भरताग्रजः ॥ २० ॥

१६ ] ति० टी०—कुलोचितमतिः स्वकुलोचितदयादाक्षिण्यशरणागतसंरक्षणादिधर्मैकप्रवणबुद्धिः अत एव क्षात्रं धर्मं प्रजापालनादि बहु मन्यते । ततः क्षात्रधर्मात्प्रजापालनजन्यया शत्रुसंहारजन्यया च कीर्त्या महत्स्वर्गरूपं फलं साध्यं मन्यते यतोऽतः क्षात्रं धर्मं बहु मन्यत इवेत्यर्थः ॥ १६ ॥

रा० टी०—कुलेति । कुलोचिता इक्ष्वाकुकुलयोग्या मतिर्यस्य सः अत एव क्षात्रं क्षत्रियविहितं पालनमेव स्वधर्मं बहु अधिकं मन्यते । आधिक्ये हेतुमाह—ततः पालनरूपक्षात्रस्वधर्मान्महत्स्वर्गफलं साकेतप्राप्तिं परया प्रीत्या मन्यते ॥ १६ ॥

गो० टी०—कुलोचितमतिरिति । कुलोचितमतिः इक्ष्वाकुवंशोचितदयादाक्षिण्यशरणागतसंरक्षणादिधर्मैकप्रवणबुद्धिः स्वं क्षात्रं धर्मं दुष्टनिग्रहपूर्वकं प्रजापरिपालनरूपं बहुमन्यते गौरवेण जानाति 'श्रेयान् स्वधर्मः' इति श्रवणात् । परत्वापादकधर्मेभ्योऽपि जनित्वार्जितं क्षत्रधर्मं गौरवेण पश्यतीत्यर्थः । बहुमाने हेतुमाह—मन्यत इति । ततः क्षत्रधर्मात् परया कीर्त्या महत् स्वर्गफलं भवतीति मन्यते जानाति स्ववर्णस्वाश्रमोचितधर्मः कीर्तिद्वारा स्वर्गसाधनमिति ज्ञात्वा क्षत्रधर्मं विशिष्यानुतिष्ठतीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—अश्रेयस्यश्रेयस्करे निषिद्धकर्मणीत्यर्थः । धर्मविरुद्धकथारुचिर्न । वादादिषु बृहस्पतिरिव स्वोक्तनिर्वाहकयुक्तिवक्ता ॥ १७ ॥

रा० टी०—नेति । अश्रेयसि कल्याणविरुद्धे कर्मणि यो न रतः यश्च विरुद्धकथारुचिर्न उत्तरोत्तरयुक्तौ वादादिषु स्वपक्षनिर्वाहकोत्तरोत्तरयत्ने वाचस्पतिरिव वक्ता । इवुवस्तविता गच्छतीतिवदुपमानोपमेयभावः ॥ १७ ॥

गो० टी०—नेति । अश्रेयसि निष्फले कर्मणि न रतः न सक्तः कादाचित्कलीलाकर्मं न दुष्यतीति भावः । द्यूतादिषु न सक्त इत्यर्थः । तत्र हेतुर्विद्वानिति न विरुद्धकथारुचिः धर्मविरुद्धग्राम्यालापादिषु रुचिरहितः उत्तरोत्तरयुक्तौ लौकिकवैदिकविषयोत्तरोत्तरयुक्तिकथायां वाचस्पतिर्यथा बृहस्पतिरिव वक्ता अप्रतिहतवाग्व्यवहारः ॥ १७ ॥

१८ ] ति० टी०—अरोग इत्यनेन सत्कर्मानुष्ठानसामर्थ्यं च वपुष्मान्विपुलांसत्वादिलक्षणवपुर्विशेषवान् देशकालविदिति तत्तत्कर्मयोग्यदेशकालज्ञाता । निग्रहानुग्रहाय पुरुषाणां धर्मित्वाधर्मित्वस्वरूपसारज्ञाता स एक एव रामो लोके साधुः सर्वगुणयुक्तो ब्रह्मणा कृतः ॥ १८ ॥

रा० टी०—अरोग इति । अरोगः नित्यं सकारणरोगसंसर्गरहितः तरुणः नित्यतारुण्यविशिष्टः वाग्मी प्रशस्तवचनवान् वपुष्मान्प्राकृतविलक्षणत्वेनातिप्रशस्तशरीरः देशकालवित् लौकिकवैदिककर्मोचितदेशकालयोर्वेदिता पुरुषसारान् महात्मनो जानातीति पुरुषसारज्ञः साधुः परकार्यसाधनशीलः विनिर्मितः विशेषेण अन्यनिर्मितविलक्षणत्वेन निर्मितं निर्मितिर्यस्य सः अघटितघटनापटीयानित्यर्थः । लोके सर्वभुवनेषु एकः परप्रतापादिनाऽद्वितीय एव ॥ १८ ॥

गो० टी०—अरोग इति । "युवा स्यात् साधु युवाध्यायक आशिष्ठो द्रढिष्ठो बलिष्ठः" इत्यादिश्रुत्यर्थोऽनेन प्रतिपाद्यते अरोगः आधिव्याधिरहितः अनेन आशिष्ठ इत्युक्तमशनसामर्थ्यमाशीर्वादविषयत्वं चोक्तं तरुणः युवा वाग्मी प्रशस्तवाक् अनेन युवाध्यायक इत्युक्तमुक्तं वपुष्मान् प्रशस्तशरीरः अनेन बलिष्ठ इत्युक्तं कायबलमुक्तं देशकालवित् अध्ययनदेशकालज्ञः अनेन साधुशब्दार्थो विवृतः पुरुषसारज्ञः सकृद्दर्शनमात्रेण पुरुषहृदयसर्वस्वज्ञः 'सारो बले स्थिरांशे च' इत्यमरः । लोके एकः अद्वितीयः साधुरिति विनिर्मितः निश्चितः 'अपकारिषु यः साधुः स साधुरिति कीर्तितः' इत्युक्तसाधुविशेषत्वज्ञापनम् ॥ १८ ॥

१९ ] ति० टी०—एवं श्रेष्ठगुणैर्युक्तत्वोपदेशेऽपि दार्ढ्याय सत्यत्वप्रत्यापनाय च पुनरुपदिशति—स त्विति । श्रेष्ठगुणैरुक्तैर्वक्ष्यमाणैश्च प्राणसादृश्यकथनात्प्रजानां रामाधिकमिष्टं नास्तीति सूचितम् । गुणतो गुणैः ॥ १९ ॥

रा० टी०—स इति । श्रेष्ठैर्गुणैर्युक्तः पार्थिवात्मजः स रामः प्रजानां बहिश्चरः प्राण इव गुणतः गुणैः प्रियो बभूव ॥ १९ ॥

गो० टी०—स इति । श्रेष्ठैः उक्तैरन्यैश्च गुणैर्युक्तः पार्थिवात्मजः बहिश्चरः प्राण इव प्रजानां गुणतः गुणैः प्रियो बभूव ॥ १९ ॥

२० ] ति० टी०—सर्वविद्येति । तत्तद्विद्यापेक्षितब्रह्मचर्यसमाप्त्यनन्तरमेव स्नातः कृतसमावर्तनः अत एव यथावदित्यादि । इषवो मन्त्रहीनाः समन्त्रास्तेऽस्त्राणि । समाहारे द्वन्द्वः । पितुः श्रेष्ठस्तदपेक्षया श्रेष्ठः ॥ २० ॥

रा० टी०—सर्वेति । सर्वविद्याव्रतेषु विद्योपयोगिनिखिलव्रतेषु स्नातो निपुणः अत एव यथावत्साङ्गवेदवित् इष्वस्त्रे धनुर्विद्यायां भरताग्रजो रामः पितुः श्रेष्ठो बभूव 'सम्यग्विद्या' इति भूषणपाठः ॥ २० ॥

१ विद्वानिति गो. पाठः । २ युक्तौ चेति गो. रा. पाठः । ३ सम्यग्विद्येति गो. पाठः ।

कल्याणाभिजनः साधुरदीनः सत्यवागृजुः । वृद्धैरभिविनीतश्च द्विजैर्धर्मार्थदर्शिभिः ॥ २१ ॥
धर्मकामार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान् । लौकिके समयाचारे कृतकल्पो विशारदः ॥ २२ ॥
निभृतः संवृताकारो गुप्तमन्त्रः सहायवान् । अमोघक्रोधहर्षश्च त्यागसंयमकालवित् ॥ २३ ॥
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचः[1] । निस्तन्द्रीरप्रमत्तश्च[2] स्वदोषपरदोषवित् ॥ २४ ॥

गो० टी०—सम्यागिति । केचिद्विद्यामात्रेण स्नाताः केचिद्व्रतमात्रेण स्नाताः रामस्तु विद्याव्रताभ्यां स्नातः ' अधीत्य स्नायात् ' इतिस्मृत्युक्तरीत्या सम्यग्वेदानधीत्य व्रतानि च कृत्वा कृतसमावर्तन इत्यर्थः । यथावत् तत्त्वतः साङ्गवेदवित् साङ्गवेदार्थज्ञः अनया पृथगुक्त्या अध्ययनमक्षरराशिग्रहणफलमित्यवगम्यते । इष्वः अमन्त्रकाः शराः अस्त्राणि समन्त्रकाः सेनाङ्गत्वादेकवद्भावः इष्वस्त्रविषये पितुर्दशरथात् श्रेष्ठः दशरथादवराः खल्वितरे धन्विन इति भावः । भरताग्रजः अस्मिन्नर्थे भरतेन निरूपणीयो रामः महेष्वासे महाप्राज्ञे भरते स्वयमागत इति रामस्य वचनात् ॥ २० ॥

२१ ] ति० टी०—कल्याणानामभिजनो जन्मभूमिः अदीनः क्षोभहेतावप्यक्षुब्धान्तःकरणः सत्यवाक्कृच्छ्रेऽपि सत्यवक्ता अभिविनीतः शिक्षितः ॥ २१ ॥

रा० टी०—कल्याणेति । कल्याणाभिजनः कल्याणानि आश्रितानां मङ्गलानि अभिजनयति उत्पादयति सः साधुः आश्रितानां सरलस्वभावसंपादकः अदीनः सर्वकाले दैन्यरहितः सत्यवाक् सत्यप्रतिज्ञः ऋजुः सरलस्वभावः धर्मार्थदर्शिभिर्द्विजैः वृद्धैश्च अभिविनीतः शिक्षितपरनीतिमार्गः ॥ २१ ॥

गो० टी०—कल्याणेति । अभिजनः मातृपितृवंशः कल्याणः शोभनः अभिजनो येन स तथा । तत्र हेतुः—साधुरिति । निर्दोष इत्यर्थः । अदीनः क्षोभहेतुषु सत्स्वप्यक्षोभ्यान्तःकरणः सत्यवाक् अतिकृच्छ्रेऽपि सत्यवचनाभिरतः ऋजुः स्वाराध्यः अभिविनीतः सुशिक्षितः ॥ २१ ॥

२२ ] ति० टी०—स्मृतिप्रतिभानयोर्भेदः संक्षेपे व्याकृतः । लौकिके कृतकल्पः संपादितसामर्थ्यः समयाचारे धर्मे विशारदः कुशलः ॥ २२ ॥

रा० टी०—धर्मेति । धर्मकामार्थानां तत्त्वं तत्सूक्ष्माकारं जानाति स अर्थशब्देन परमार्थभूतमोक्षस्यापि ग्रहणान्न न्यूनता स्मृतिमान् अभावाप्रतियोगिस्मृतिविशिष्टः प्रतिभानवान् प्रतिभानं प्रतिवस्तुप्रकाशनं तद्वान् अत एव लौकिके लौकिकाचरणे समयं सम्यक् अयः शुभावहो विधिर्वैदिकविधिः तस्याचारे आचरणे च कृतः प्रकटितः कल्पः सामर्थ्यं येन अत एव विशारदः सर्वत्र निपुणः ॥ २२ ॥

गो० टी०—धर्मेति । धर्मकामार्थतत्त्वज्ञः ' न पूर्वाह्णमध्याह्नापराह्णानफलान् कुर्यात् ' इतिस्मृत्युक्तरीत्या पूर्वाह्णादिषु कालेषु कर्तव्यधर्मार्थकामज्ञ इत्यर्थः । स्मृतिमान् ज्ञातार्थविषये विस्मरणरहितः प्रतिभानवान् ' प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः ' इतिप्रोक्तलक्षणप्रातिभानयुक्तः लौकिके लौकिकप्रमाणके समयाचारे सांकेतिकाचारे ' संकेतस्तु समयः ' इत्यमरः । कृतकल्पः कृतसंस्थापनः विशारदः तदाचरणसमर्थः ॥ २२ ॥

२३ ] ति० टी०—निभृतो विनीतः संवृताकारो गूढाभिप्रायः । ' गुप्तमन्त्रः ' इति पाठे फलपर्यन्तमन्याविदितमन्त्रः । ' गुप्तैर्मित्रैः ' इति पाठः प्रचुरः गुप्तैर्मित्रत्वेन सर्वाज्ञातैः । तादृशा हि परराष्ट्रभेदादौ मुख्यसहायाः । त्यागो वित्तादेः सत्पात्रे दानम् संयमो न्यायेनार्जनं तत्समयज्ञः ॥ २३ ॥

रा० टी०—निभृत इति । नितरां भृताः सेविता मात्रादयः इत्यर्थः येन सः संवृतः प्राकृतैरज्ञात इत्यर्थः । आकारः प्राकृतविलक्षणस्वरूपं यस्य सः गुप्तमन्त्रः गुप्तः फलोत्पत्तेः पूर्वं ज्ञातुमशक्यो मन्त्रो यस्य सः सहायवान्प्रशस्तमन्त्रिविशिष्टः न मोघौ निष्फलौ क्रोधहर्षौ यस्य सः फलपर्यवसानकक्रोधाभासप्रसादौ समये स्वीकरोतीत्यर्थः । त्यागसंयमयोः दानग्रहणयोः कालं वेत्ति सः ॥ २३ ॥

गो० टी०—निभृत इति । निभृतः विनीतः ' वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः ' इत्यमरः । संवृताकारः हृदिस्थितकर्तव्यार्थव्यञ्जकेङ्गिताकारगोपनचतुरः संवृतत्वं गूढत्वं गुप्तमन्त्रः फलपर्यन्तमन्यैरविदितमन्त्र इत्यर्थः । सहायवान् प्रशस्तमन्त्रयुक्तः अमोघक्रोधहर्षः फलपर्यवसायिकोपसंतोषः त्यागसंयमकालवित् वस्तुत्यागतत्संग्रहणकालवित् ॥ २३ ॥

२४ ] ति० टी०—दृढभक्तिर्गुर्वादिषु स्थिरप्रज्ञो विस्मृतिहीनः नासद्ग्राह्यसद्वस्तुग्रहणशीलो न न दुर्वचः परोद्वेजकवचनहीनः निस्तन्द्रीर्निरालस्यः स्वीयानां दोषः स्वदोषः ॥ २४ ॥

रा० टी०—दृढेति । दृढमपरिच्युतं भक्तिः पित्रादिसेवा यस्य सः स्थिरा ध्वंसाप्रतियोगिनी प्रज्ञा यस्य सः असद्ग्राही असज्जनसंग्रहकर्ता न दुर्वचाः दुष्टं वचो यस्मिन्स न निस्तन्द्रीः आलस्यसंसर्गरहितः अप्रमत्तः अनवधानतारहितः स्वदोषपरदोषवित् न्याय्यकाले स्वदोषपरदोषयोः वित् यथावद्बोधयिता । अन्तर्भावितणिजर्थः ॥ २४ ॥

गो० टी०—दृढभक्तिरिति । दृढभक्तिः देवगुर्वादिषु निश्चलभक्तिः स्थिरप्रज्ञः भक्तिजन्याप्रकम्प्यतत्त्वज्ञानः अत एव नासद्ग्राही नासदर्थग्राही असज्जनसंग्रहणरहितो वा न दुर्वचाः न परुषभाषी निस्तन्द्रिः आलस्यरहितः सर्वदा शास्त्रपरिशीलनपर इत्यर्थः अत एवाप्रमत्तः शास्त्रार्थेष्वनवधानरहितः स्वदोषपरदोषवित् लोके कश्चित्पश्यति परदोषमात्मदोषं न पश्यति अयं

१ दुर्वचा इति गो. रा. पाठः । २ निस्तन्द्रिरिति गो. पाठः ।

शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः । यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥ २५ ॥
सत्संग्रहानुग्रहणे स्थानविन्निग्रहस्य च । आयकर्मण्युपायज्ञः संदृष्टव्ययकर्मवित् ॥ २६ ॥
श्रैष्ठ्यं चास्त्रसमूहेषु प्राप्तो व्यामिश्रकेषु च । अर्थधर्मौ च संगृह्य सुखतन्त्रो न चालसः ॥ २७ ॥
वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित् । आरोहे विनये चैव युक्तो वारणवाजिनाम् ॥ २८ ॥

तु न तथा परदोषवस्त्वद्दोषं च पश्यत्येव वक्ष्यति भरतं प्रति शिरसा याचतस्तस्य वचनं न कृतं मयेति ॥ २४ ॥

२५ ] ति० टी०—कृतज्ञः परेणाल्पमपि कृतमुपकारं जानाति तथा पुरुषाणामन्तरं तारतम्यं तद्विवेचने कोविदः यद्वा पुरुषाणामन्तरमभिप्रायस्तज्ज्ञः प्रग्रहो निग्रहः यथान्यायं यथोचितं कर्तुं विचक्षणः ॥ २५ ॥

रा० टी०—शास्त्रज्ञ इति । शास्त्रं शास्त्रानुसारिणीं शिक्षां तज्जानाति बोधयति सः कृतज्ञः कृतमन्यकर्तृकस्वोपकृतिं जानाति अन्येभ्योऽपि बोधयति सः पुरुषान्तरकोविदः पुरुषदर्शनमात्रेण तदभिप्रायज्ञानसामर्थ्यवानित्यर्थः । प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणो वक्ता । तत्र प्रग्रहो निग्रहः ॥ २५ ॥

गो० टी०—शास्त्रज्ञ इति । शास्त्रज्ञः साङ्गवेदातिरिक्तविद्यास्थानज्ञः कृतं कृतान्तं सिद्धान्तं जानातीति कृतज्ञः अतः कथंचिदुपकारेण कृतेनैकेन तुष्यतीत्यनेन न पुनरुक्तिः पुरुषाणामन्तरं तारतम्यं तत्र कोविदः पण्डितः पुरुषदर्शनमात्रेणायं साधुरयमसाधुरिति तत्तत्स्वरूपविशेषज्ञ इत्यर्थः यः प्रसिद्धः प्रग्रहः मित्रादिस्वीकारः अनुग्रहः स्वीकृतपरिपालनं तयोः यथान्यायं यथाशास्त्रं विचक्षणः समर्थः । शास्त्रमर्यादामनतिक्रम्य मित्रस्वीकारादिकृदित्यर्थः सुप्सुपेति समासः ॥ २५ ॥

२६ ] ति० टी०—उक्तमर्थमेव विवृणोति—सत्संग्रहानुग्रहणे इति । संग्रहः स्वीकारस्ततोऽनुग्रहणं सपरिवारस्य पालनम् । 'प्रग्रहणे' इति पाठेऽप्ययमेवार्थः । तत्र निग्रहस्य दुष्टनिग्रहस्य च करणे स्थानविद्देशकालज्ञः आयकर्मण्युपायज्ञः पुष्पेभ्यो मधुकर इव प्रजाभ्यः करेण धनग्रहणकर्मणि चतुर इत्यर्थः । 'कश्चिदायस्य चार्धेन चतुर्भागेन वा पुनः । पादभागैस्त्रिभिर्वापि व्ययः कार्यो नृपैरिह ॥' इति शास्त्रसंदृष्टव्ययकर्मज्ञः ॥ २६ ॥

रा० टी०—सदिति । सतां महात्मनां संग्रहः स्वीकारः अनुग्रहणं तत्सेवनं तयोः समाहारः तस्मिन्नासक्त इति शेषः । निग्रहस्य दण्डदानस्य स्थानवित् देशकालयोर्वेदिता आयकर्मणि करादिग्रहक्रियायाम् उपायज्ञः यत्नज्ञानवान् सूर्यः किरणैर्जलमिव अनायासतः करादिग्रहणकर्तेत्यर्थः । संदृष्टव्ययकर्मवित् संदृष्टं शास्त्रानुसारि यत् व्ययकर्म तद्वेदिता 'कश्चिदायस्य चार्धेन चतुर्भागेन वा पुनः । पादैर्भागैस्त्रिभिर्वापि व्ययः कार्यो नृपैरिह' इतिशास्त्रम् ॥ २६ ॥

गो० टी०—सदिति । सतां संग्रहे स्वीकारे प्रग्रहणे परिपालने च विचक्षण इति शेषः । निग्रहस्य असन्निग्रहस्य च स्थानवित् अवकाशवित् 'अवकाशे स्थितौ स्थानम्' इत्यमरः । आयकर्मणि न्यायप्राप्तधनार्जनकर्मणि उपायज्ञः पुष्पेभ्यो मधु मधुकर इव अपीडनेन प्रजाभ्यो धनमादातुं चतुर इत्यर्थः । संदृष्टव्ययकर्मवित् 'कश्चिदायस्य चार्धेन चतुर्भागेन वा पुनः । पादभागैस्त्रिभिर्वापि व्ययः संचोद्यते बुधैः' इत्यादिशास्त्रावगतव्ययकर्मज्ञः ॥ २६ ॥

२७ ] ति० टी०—व्यामिश्रकेषु प्राकृतादिभाषामिश्रितनाटकादिषु श्रैष्ठ्यं निपुणताम् । अर्थधर्मौ संगृह्य तदविरोधेन सुखतन्त्रः कामसेवीत्यर्थः । कर्तव्येष्वालस्यरहितः ॥ २७ ॥

रा० टी०—श्रैष्ठ्यमिति । शास्त्रसमूहेषु विद्वत्समाजेषु व्यामिश्रकेषु नाटकाद्युपयुक्तसंस्कृतमिश्रप्राकृतभाषादिवक्तृषु च श्रैष्ठ्यं प्राप्तः अर्थधर्मौ संगृह्य संचीय* सुखतन्त्रः अर्थधर्माविरोधेन सुखभोगी अलसः आलस्यवान् न ॥ २७ ॥

गो० टी०—श्रैष्ठ्यमिति । शास्त्रसमूहेषु वेदवेदाङ्गेषु श्रैष्ठ्यं महातात्पर्यज्ञत्वं प्राप्तः । व्यामिश्रकेषु संस्कृतप्राकृतभाषात्मककाव्यनाटकालंकारादिषु च श्रैष्ठ्यं प्राप्त इत्यनुषङ्गः । अर्थधर्मौ संगृह्य सुखतन्त्रः सुखपरतन्त्रः अर्थधर्मसंग्रहणपूर्वकमेव सुखसेवी न तु केवलकामपरतन्त्र इत्यर्थः । न चालसः अर्थधर्मसंग्रहे निरालस्यः ॥ २७ ॥

२८ ] ति० टी०—वैहारिकाणां क्रीडाप्रयोजनानां शिल्पानां गीतवाद्यचित्रकर्मादीनां विज्ञाता अर्थविभागवित् 'धर्माय यशसेऽर्थाय आत्मने स्वजनाय च । पञ्चधा विभजन्वित्तमिहामुत्र च शोभते ॥' इत्युक्तरीत्या तद्विभजनज्ञः । विनयो विविधगत्यानयनं शिक्षणं वा ॥ २८ ॥

रा० टी०—वैहारिकाणामिति । वैहारिकाणां विहारप्रयोजनानां शिल्पानां गीतवाद्यचित्रकर्मादीनां विज्ञाता अभिज्ञः अर्थविभागवित् अर्थानां धनादीनां विभागं शास्त्रोक्तविभजनं वेत्ति सः । तथाच शास्त्रम् 'धर्माय यशसेऽर्थाय आत्मने स्वजनाय च । पञ्चधा विभजन् वित्तमिहामुत्र च शोभते' इति । वारणवाजिनाम् आरोहे आरोहणे विनये शिक्षणे च युक्तो निपुणः तत्र वारणो गजः ॥ २८ ॥

गो० टी०—वैहारिकाणामिति । वैहारिकाणां विहारप्रयोजनानां "तदस्य प्रयोजनम्" इति ठक् । शिल्पानां गीतवादित्राणां चित्रकर्मादीनां च विज्ञाता विशेषज्ञः अर्थविभागवित् 'धर्माय यशसेऽर्थाय आत्मने स्वजनाय च । पञ्चधा विभजन् वित्तमिहामुत्र च शोभते ' इत्युक्तविभागवित् । वारण-

१ प्रग्रहणे इति गो. रा. पाठः । २ श्रैष्ठ्यं शास्त्रेष्विति गो. श्रैष्ठ्यशास्त्रेष्विति रा. पाठः । *चित्येति युक्तम् ।

धनुर्वेदविदां श्रेष्ठो लोकेऽतिरथसंमतः । अभियाता प्रहर्ता च सेनानयविशारदः ॥ २९ ॥
अप्रधृष्यश्च[1] संग्रामे क्रुद्धैरपि सुरासुरैः । अनसूयो जितक्रोधो न दृप्तो न च मत्सरी ॥ ३० ॥
नावज्ञेयश्च भूतानां न च कालवशानुगः । एवं श्रेष्ठैर्गुणैर्युक्तः प्रजानां पार्थिवात्मजः ॥ ३१ ॥
संमतस्त्रिषु लोकेषु वसुधायाः क्षमागुणैः । बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये[2] चापि शचीपतेः ॥ ३२ ॥
तथा सर्वप्रजाकान्तैः प्रीतिसंजननैः पितुः । गुणैर्विरुरुचे रामो दीप्तः सूर्य इवांशुभिः ॥ ३३ ॥

वाजिनां गजानामश्वानां च आरोहे आरोहणे विनये आरुह्य शिक्षणे च युक्तः समर्थः ॥ २८ ॥

२९ ] ति० टी०—अभियाता परसेनाभिमुखं याता प्रहर्ता शत्रूणाम् सेनानयश्चक्रादिव्यूहेन सेनान्यासस्तत्र विशारदो निपुणः ॥ २९ ॥

रा० टी०—धनुरिति । धनुर्वेदविदां धनुर्वेदान् धनुरादिस्वरूपादिबोधकानि शास्त्राणि विदन्ति तेषां मध्ये श्रेष्ठः लोके सर्वभवने अतिरथसंमतोऽतिरथैः पूजितः अभियाता संग्रामाभिमुखगमनशीलः हर्ता रिपुसेनानिवर्तकश्च सेनानयविशारदः सेनानये व्यूहरचनायां विशारदः निपुणः ॥ २९ ॥

गो० टी०—धनुरित्यर्धाधिकः धनुरादिस्वरूपप्रतिपादको वेदो धनुर्वेदः उपवेदत्वाद्धनुर्वेदस्य वेदत्वं तद्विदां मध्ये श्रेष्ठः समर्मधनुर्वेदविदित्यर्थः । लोके सर्वत्र अतिरथानां अप्रतिहतरथगतीनां संमतः पूजितः "मतिबुद्धि–" इत्यादिना क्तः "क्तेन च पूजायाम्" इति समासप्रतिषेधाभाव आर्षः । अभियाता शत्रुसमागमानन्तरं न प्रहर्तुमिच्छति किंतु स्वयमेव यत्र शत्रवस्तत्र गच्छति तत्रापि न दुर्गप्रदेशावलम्बनेन याति किंत्वभियाता अभिमुखं याता प्रहर्ता च अभिगम्य न योधैर्योधयति किंतु स्वयमेव नासीरे स्थित्वा प्रथमं प्रहरति सेनानयविशारदः स्वयं प्रहरन्नपि न स्वसेनां छेदयति किंतु परदुरवगाहचक्रव्यूहादिविभागेन सेनाप्रापणसमर्थः । अप्रधृष्यश्च प्रधर्षयितुमशक्यः सर्वथा विजयीत्यर्थः संग्रामे प्रणत्या तु जेतुं शक्य इत्यर्थः । न केवलं मनुष्यैः सुरासुरैः परस्परविरोधं विहाय मिलितैरपि न चोपशान्तैः क्रुद्धैः क्रोधपरवशैः ॥ २९ ॥

३० ] ति० टी०—मत्सरः परसंपद्द्वेषः ॥ ३० ॥

रा० टी०—अप्रधृष्य इति । क्रुद्धैः सुरासुरैरपि संग्रामे अप्रधृष्यः प्रधर्षयितुमशक्यः अनसूयः सर्वविषयकासूयारहितः अजितक्रः अजितः पराभवितुमशक्यः क्रः क्रुतिर्यस्य सः । तत्र हेतुः अधः न धो धाता यस्य सः स्वसत्ताश्रित इत्यर्थः । दृप्तः गर्ववान् न मत्सरी द्वेषवान् 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः ३०॥

गो० टी०—एवं कल्याणगुणपरिपूर्णत्वमुक्त्वा अथ हेयप्रत्यनीकत्वमाह—अनसूय इति । अनसूयः असूयारहितः जितक्रोधः क्रोधपारवश्यरहितः न दृप्तः न गर्विष्ठः न च मत्सरी परसंपद्विषये द्वेषरहितः 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः न च कालवशानुगः सत्त्वरजस्तमःप्रधानकालानुगुणसत्त्वरजस्तमोगुणो न भवति केवलसत्त्वमूर्तिरित्यर्थः ॥ ३० ॥

३१ ] ति० टी०—भूतानां प्राणिनाम् । 'सिद्धानाम्' इति पाठे सिद्धा देवभेदा इति कतककृत् । कालवशः कालपारतन्त्र्यं प्राकृतवत्तदनुसारी न स्वायत्तसर्वपरिकर इति यावत् ॥ ३१ ॥

रा० टी०—नेति । पार्थिवात्मजो रामः क्षमागुणैर्वसुधायाः तुल्यः बुद्ध्या बृहस्पतेस्तुल्यः वीर्ये शचीपतेस्तुल्यः इषुवत्सविता गच्छतीतिवदुपमानोपमेयभावः । अत एव भूतानामवज्ञेयः अनादरणीयो न कालवशा अनुगा अनुचरा यस्य स न कालानधीनानुचरवानित्यर्थः । एवमनेन प्रकारेण श्रेष्ठैः गुणैर्युक्तः अत एव त्रिषु ऊर्ध्वाधोमध्यवर्तिषु लोकेषु विद्यमानानां प्रजानां संमतः इष्ट आसीदिति शेषः । किंच वीर्ये समाधिकरहितपराक्रमे विद्यमानो रामः क्षमागुणैः त्रिषु लोकेषु विद्यमानायाः वसुधायाः संमतः पूजितः अत एव बृहस्पतेः शचीपतेश्च बुद्ध्या अतुल्यः तोलयितुमशक्यः कर्मणि यत् संज्ञापूर्वकविधेर नित्यत्वाद्गुणाभावः । नञर्थलाभस्तु वीर्यशब्दात्पूर्वमकारं छित्वा ॥ ३१–३२ ॥

गो० टी०—उक्तगुणोपसंहारपूर्वकं गुणान्तराण्याह—एवमिति । एवमुक्तप्रकारेण पार्थिवात्मजः रामः प्रजानां मध्ये श्रेष्ठैर्लोकोत्तरैर्गुणैर्युक्तः त्रिषु लोकेषु संमतः पूजितः । क्षमागुणैः क्षमारूपगुणैः बहुवचनं प्रकारभेदाभिप्रायेण वसुधायाः भूमेस्तुल्य इति वक्ष्यमाणमनुषज्यते ॥ ३१ ॥

३२ ] ति० टी०—एवं द्विवारं गुणश्रैष्ठ्यमुपपाद्य पुनरतिदार्ढ्याय तदुपपादयति—संमत इत्यादि । क्षमाप्रधानैर्गुणैर्वसुधायास्तुल्य इति परेणान्वयः ॥ ३२ ॥

३३ ] ति० टी०—तथेति । कान्तैरिष्टैस्तथा पितुः प्रीतिसंजननैर्गुणैः करणैर्विरुरुच इत्यन्वयः ॥ ३३ ॥

रा० टी०—तथेति । सर्वप्रजाकान्तैर्निखिलप्रजावाञ्छितैः तथा पितुः प्रीतिसंजननैः गुणैः अंशुभिः किरणैः दीप्तः सूर्य इव रामो विरुरुचे । किंच गुणैरुपलक्षितो राम इव अंशुभिर्दीप्तः सूर्यो विरुरुचे ॥ ३३ ॥

गो० टी०—उपसंहरति—तथेति । तथा पूर्वोक्तरीत्या सर्वप्रजाकान्तैः स्त्रीबालयुववृद्धानां प्रियैः पितुः प्रीतिसंजननैः दृष्टान्तार्थमिदं पितुरिव सर्वेषां प्रियैरित्यर्थः । एवंभूतैर्गुणैः रामः स्वतः सुन्दरः स्वतो दीप्तः सूर्योऽंशुभिरिव विरुरुचे बभौ ॥३३॥

१ अप्रधृष्यमिति रा. पाठः । २ वीर्येणापीति गो. पाठः ।

तमेवंवृत्तसंपन्नमप्रधृष्यपराक्रमम् । लोकनाथोपमं नाथमकामयत मेदिनी ॥ ३४ ॥
एतैस्तु बहुभिर्युक्तं गुणैरनुपमैः सुतम् । दृष्ट्वा दशरथो राजा चक्रे चिन्तां परंतपः ॥ ३५ ॥
अथ राज्ञो बभूवैव वृद्धस्य चिरजीविनः । प्रीतिरेषा कथं रामो राजा स्यान्मयि जीवति ॥ ३६ ॥
एषा ह्यस्य परा प्रीतिर्हृदि संपरिवर्तते । कदा नाम सुतं द्रक्ष्याम्यभिषिक्तमहं प्रियम् ॥ ३७ ॥
वृद्धिकामो हि लोकस्य सर्वभूतानुकम्पकः । मत्तः प्रियतरो लोके पर्जन्य इव वृष्टिमान् ॥ ३८ ॥
यमशक्रसमो वीर्ये बृहस्पतिसमो मतौ । महीधरसमो धृत्यां मत्तश्च गुणवत्तरः ॥ ३९ ॥

---

३४-३५ ] ति० टी०-एवमभिषेकोपयोगिगुणश्रैष्ठ्यमुक्त्वा राज्ञोऽभिषेकेच्छां दर्शयति-तमेवमिति । मेदिनी तद्देवता तद्वर्तिप्रजाश्च ॥ ३४ ॥ ३५ ॥

रा० टी-तमिति । एवं वृत्तेन वृत्तान्तेन संपन्नं संयुक्तं लोकनाथोपमं तं रामं मेदिनी पृथिवी नाथं स्वस्वामिनमकामयत ऐच्छत् ॥ ३४ ॥

गो० टी०-एवं रामगुणान् प्रदर्श्य तत्कृतं भूम्युपलक्षितसकललोकप्रावण्यं दर्शयति-तमेवमिति । एवं गुणसंपन्नत्ववत् व्रतसंपन्नं आश्रितसंरक्षणरूपव्रतसंपन्नं अप्रधृष्यपराक्रमं अकुण्ठपराक्रमं सर्वे लोकपाला उपमा यस्य तं रामं मदिनी नाथं अकामयत भूमेर्नाथस्त्वोचितोऽभूदित्यर्थः। अथवा एवं बालकाण्डोक्तरीत्या व्रतसंपन्नं रामस्तु सीतया सार्धमित्युक्तरीत्या क्रीडारससंपन्नं अप्रधृष्यपराक्रमं त्रिरोधिवर्गं मित्रत्वं सात्म्यभोगप्रदं लोकान् पालयतीति लोकपालः समस्तोपभोगसाधनसंपन्न इत्यर्थः । उप समीपे मा लक्ष्मीः सीतारूपा यस्य सः उपमः लोकपालश्चासावुपमश्चेति समासः तं लक्ष्म्या भोगाननुभवन्तं रामं मेदिन्यपि नाथमकामयत स्वयंवरेण कण्ठे मालिकां दातुमैच्छदित्यर्थः ॥ ३३ ॥

रा० टी०-एतैरिति । एतैरुक्तैः अनुपमैः उपमारहितैः बहुभिर्गुणैर्युक्तं सुतं दृष्ट्वा परंतपो दशरथो राजा चिन्तां चिन्तनं चक्रे ॥ ३५ ॥

गो० टी०-न केवलं लोकस्तं नाथमकामयत राजापीत्याह-एतैरिति । एतैः पूर्वोक्तैः बहुभिः असंख्येयैः अनुपमैः लोके कुत्राप्येतादृशगुणादर्शनादसदृशैः गुणैः युक्तं सुतं दृष्ट्वा राजा राज्यभरणश्रान्तः परंतपः शत्रुसंहारव्यग्रः दशरथः चिन्तां मनोरथं चक्रे ॥ ३४ ॥

३६ ] ति० टी०-चिन्ताप्रकारमाह-अथेति । मयि जीवति रामो राजा कथं भवेत् । तादृशस्य तस्य दर्शनजा येषात्युत्कटानिर्वचनीया प्रीतिर्मे कथं स्यादिति चिन्ता बभूवेत्यन्वयः ॥ ३६ ॥

रा० टी०-चिन्तास्वरूपमाह-अथेति । मयि जीवति पालयति सत्येव रामो राजा कथं स्यात् । अथ सकलमङ्गलमूलभूता एषा रामराजभूतिरिव प्रीतिः मत्प्रीतिविषयीभूता एवं चिन्तेति शेषः । चिरजीविनः बहुकालं पालयतः वृद्धस्य ज्ञानवयोभ्यामधिकस्य राज्ञो दशरथस्य बभूव । किंच जीवति सत्येव राजा स्यात् एषा राजभूतिरेव दशरथस्य मम प्रीतिरभिलाषः कथं स्यात् पूर्येत ॥ ३६ ॥

गो० टी०-तामेव चिन्तां स्पष्टयति अथेत्यादिना स्वर्गमवाप्नुयामित्यन्तेन-अथेति । अथ रामगुणदर्शनानन्तरं चिरजीविनः वृद्धस्य वयोवृद्धस्येति ज्ञानवृद्धव्यावृत्तिः वृद्धत्वात् प्रीतिरित्युच्यते एवं एवंप्रकारेणेत्यर्थः । मयि जीवति रामः कथं राजा स्यादित्येषा प्रीतिर्बभूव अत्र कथमित्युक्तिः कैकेयीवरदानकृतविघ्नशङ्काप्रतिसंधानेन ॥ ३६ ॥

३७ ] ति० टी०-प्रीतिरभिलाषः, अभिलाषाकारमाह-कदा नामेति । पूर्वपद्ये प्रीतिरानन्दः ॥ ३७ ॥

रा० टी०-एषेति । अभिषिक्तं सुतं कदाऽहं द्रक्ष्यामि एषा परा प्रीतिः अत्यभिलाषः अस्य राज्ञः हृदि संपरिवर्तते ॥ ३७ ॥

गो० टी०-प्रीतेरौत्कट्यमाह-एषेति । अत्रान्ते इतिकरणं द्रष्टव्यं द्रक्ष्यामि इत्येषा परा निरतिशया प्रीतिः अस्य दशरथस्य हृदि संपरिवर्तते सम्यक् अविच्छिन्नमनुवर्तते ॥३६॥

३८-३९ ] ति० टी०-पर्जन्यो मेघः ॥ ३८ ॥ ३९ ॥

रा० टी०-अभिषेकोपयोगिगुणानाह-वृद्धीति । यः सर्वभूतानुकम्पकः सर्वभूतविषयकदयावान् अत एव लोकस्य सर्वजनस्य वृद्धिकामः अत एव वृष्टिमान् पर्जन्य इव लोके मत्तोऽपि प्रियतरः वीर्ये यमशक्रसमः मतौ बुद्धौ बृहस्पतिसमः धृत्यां क्षमायां महीधरसमः मत्तोऽपि गुणवत्तरः अतिगुणवान् तमात्मजमिमां महीमधितिष्ठन्तमनेन वयसा दृष्ट्वा स्वर्गं सुखविशेषं यथा यथावत् अवाप्नुयाम् । श्लोकत्रयमेकान्वयि ॥ ३८-४० ॥

गो० टी०-अथ रामस्य राजत्वयोग्यतानुसंधानं दशरथस्य दर्शयति श्लोकत्रयेण-वृद्धिकाम इति । वृद्धिकाम इत्यनेनापूर्वैश्वर्यप्रदत्वमुक्तं सर्वभूतान्यनुकम्पयतीति सर्वभूतानुकम्पनः कर्तरि ल्युट् अनेन प्राप्तैश्वर्यसाधकत्वमुक्तं ममात्मज इति शेषः । दाने संतापहारित्वे च दृष्टान्तमाह-वृष्टिमान् पर्जन्य इवेति लोके विषये मत्तः प्रियतरः अतिशयेन प्रीतिमान् प्रीणातीति प्रियः पचाद्यच् ॥ ३७ ॥

गो० टी०-पूर्वं प्रियतरत्वमुक्तम् अत्र तद्धेतुगुणवत्तरत्वमुच्यते-यमशक्रसम इति । प्रत्येकं साम्यानर्हत्वाद्यमशक्रेत्युक्तम् ॥ ३८ ॥

---

१ [illegible] इति गो० पाठः ।

महीमहमिमां कृत्स्नामधितिष्ठन्तमात्मजम् । अनेन वयसा दृष्ट्वा यथा स्वर्गमवाप्नुयाम् ॥ ४० ॥
इत्येवं विविधैस्तैस्तैरन्यपार्थिवदुर्लभैः । शिष्टैरपरिमेयैश्च लोके लोकोत्तमैर्गुणैः[1] ॥ ४१ ॥
तं समीक्ष्य तदा राजा युक्तं समुदितैर्गुणैः[2] । निश्चित्य सचिवैः सार्धं यौवराज्यममन्यत[3] ॥ ४२ ॥
[4]दिव्यन्तरिक्षे भूमौ च घोरमुत्पातजं भयम् । संचचक्षेऽथ मेधावी शरीरे चात्मनो जराम् ॥ ४३ ॥
पूर्णचन्द्राननस्याथ शोकापनुदमात्मनः । लोके रामस्य बुबुधे संप्रियत्वं महात्मनः ॥ ४४ ॥
आत्मनश्च प्रजानां च श्रेयसे च प्रियेण च । प्राप्ते[5] काले स धर्मात्मा भक्त्या त्वरितवान्नृपः ॥ ४५ ॥

४० ] ति० टी०—अनेन वयसा वार्धकेन तथाभूतमात्मजं दृष्ट्वा यथा स्वर्गं यथाकालं यथायोग्यं वा स्वर्गमवाप्नुयामिति चिन्तां चक्रे इत्यनुकर्षेणान्वयः ॥ ४० ॥

गो० टी०—महीमिति । यथास्वर्गं स्वसदृशं स्वस्वकृतानुरूपं स्वर्गमित्यर्थः । यद्वा यथास्वर्गं यथाभूतस्वर्गं यस्त्वया सह स स्वर्ग इत्युक्तरामसौन्दर्यानुभवस्वर्गमित्यर्थः ॥ ३९ ॥

४१ ] ति० टी०—तैस्तैरुक्तैः । 'एतैः' इति पाठेऽप्येवमेव । शिष्टैरुक्तादन्यैश्चापरिच्छिन्नैर्लोके लोकोत्तमत्वेन प्रसिद्धैर्गुणैरुपलक्षितम् ॥ ४१ ॥

रा० टी०—इतीति । अन्यपार्थिवदुर्लभैः राजान्तरैरप्राप्यैः एवंविधैस्तैर्वर्णितैर्गुणैर्लोकोत्तमैः अपरिमेयैः इयत्तारहितैः समुदितैः नारदादिभिर्वर्णितैः शिष्टैः अवशिष्टैश्च गुणैर्युक्तं तं रामं समीक्ष्य सचिवैः सार्धं निश्चित्य यौवराज्यं रामयुवराजत्वममन्यत निरचिनोत् । 'युवराजम्' इति भूषणपाठः श्लोकद्वयमेकान्वयि ॥ ४१ ॥ ४२ ॥

गो० टी०—इतीतिश्लोकद्वयमेकान्वयम् । इति पूर्वोक्तरीत्या विविधैस्तैस्तैस्तत्तत्कार्यभेदेन प्रसिद्धैः अन्यपार्थिवदुर्लभैः सामान्यराजदुर्लभैः शिष्टैः उक्तव्यतिरिक्तसौशील्यादिभिः अपरिमेयैः असंख्येयैः कतिपयगुणाः प्रदर्शिताः शिष्टास्त्वपरिमेया इति भावः । लोके लोकोत्तरैर्लोके कुत्राप्येवं लोकोत्तरगुणा न सन्तीत्यर्थः । समुदितैः स्वाभाविकैः शुभैः कल्याणतमैः एतैर्गुणैर्युक्तं तं रामं समीक्ष्य महाराजो दशरथः सचिवैः सार्धं निश्चित्य युवराजममन्यत अयं युवराजो भवेदिति निश्चितवानित्यर्थः ॥ ४० ॥ ४१ ॥

४२ ] ति० टी०—तमुक्तानुक्तैः समुदितैर्गुणैर्युक्तं पुत्रं समीक्ष्य दृष्ट्वा सचिवैः सार्धं निश्चित्य तादृशगुणवत्त्वेन पुत्रस्य यौवराज्यममन्यत विचारितवान् ॥ ४२ ॥

४३ ] ति० टी०—दिव्युत्पाता ग्रहनक्षत्रादिवैकृतम् अन्तरिक्षे महावातदिग्दाहादयः भूम्युत्पाता भूकम्पादयः तज्जं तत्सूचितं भयमात्मनिष्ठं मन्त्रिभ्यः संचचक्ष उक्तवान् । तथा रामाभिषेककारणान्तरमात्मनः शरीरे जरां चावोचत् । अनेनोत्पातसूचितानिष्टयोग्यताध्वननम् ॥ ४३ ॥

रा० टी०—दिवीति । दिवि स्वर्गे अन्तरिक्षे तदधोदेशे भूमौ च घोरं भयंकरमुत्पातजं भयं शरीरे आत्मनो जरां च संचचक्षे मया दृश्यते इति कथयामास । तत्र दिव्युत्पातः नक्षत्रादिपातः अन्तरिक्षोत्पातो महावातादिः भूम्युत्पातो भूकम्पादिः उत्पातप्रकरणे जरां संचचक्षे इत्यनेन तद्वद् जराभावः सूचितः ॥ ४३ ॥

गो० टी०—अथ सद्योरामाभिषेककर्तव्यताहेतुं स्वविपत्तिसूचकं दुर्निमित्तमात्मनो जरां चालोचितवानित्याह—दिवीति । दिव्यन्तरिक्षे भूमौ च यान्युत्पातानि तज्जं भयमित्यर्थः तानि चोक्तानि ज्योतिःशास्त्रे—'स्वर्भानुकेतुनक्षत्रग्रहताराकचन्द्रजम् । दिवि चोत्पद्यते यच्च तद्दिव्यमिति कीर्तितम् । वाय्वभ्रसंध्यादिग्दाहपरिवेषतमांसि च । खपुरं चन्द्रचापं च तद्विद्यादन्तरिक्षजम् ॥ भूमावुत्पद्यते यच्च स्थावरं वाथ जङ्गमम् । तदैकदेशिकं भौममुत्पातं परिचक्षते' इति । भयावहानि घोराणि दिव्याद्युत्पातानीति फलितार्थः । मेधावी सूक्ष्मदर्शी राजा संचचक्षे दृष्टवान् मन्त्रिणां उक्तवानिति वा । आत्मनः शरीरे जरां च संचचक्षे ल्याभभाव आर्षः ॥ ४२ ॥

४४ ] ति० टी०—अथात्मनः शोकापनुदं शोकहर्तृपूर्णचन्द्रमुखस्य महात्मनो रामस्य संप्रियत्वं राज्याभिषेकेण सर्वानन्दकरत्वं बुबुधे ज्ञातवान् ॥ ४४ ॥

रा० टी०—पूर्णेति । पूर्णचन्द्राननस्य महात्मनो रामस्य संप्रियत्वं संप्रीतिमात्मनः स्वस्य शोकापनुदं शोकनाशकं बुबुधे ॥ ४४ ॥

गो० टी०—एवं रामाभिषेके हेतुद्वयमुक्तं सर्वलोकप्रियत्वं च हेतुमाह—पूर्णचन्द्राननस्येति । अथ उत्पातदर्शनानन्तरं पूर्णचन्द्राननस्य तद्वत् सर्वसंतापहरस्य महात्मनः महामते रामस्य लोके विषये संप्रियत्वं कीदृशंमात्मनः स्वस्य शोकापनुदमुत्पातादिभयनिवर्तकं सम्यक् प्रियत्वं बुबुधे अनुसंदधावित्यर्थः ॥ ४३ ॥

४५ ] ति० टी०—अत आत्मनश्च श्रेयसे प्रजानां च श्रेयसे प्रियेण च प्रजानिष्ठरामविषयप्रीतिरूपहेतुना च भक्त्या च रामपालनेन प्रजा धन्या भवन्त्विति प्रजाविषयस्नेहेन च स नृपो मन्त्रिणो रामाभिषेकाय त्वरितवान् ॥ ४५ ॥

रा० टी०—आत्मन इति । काले अभिषेकसमये प्राप्ते सति भक्त्या अतिप्रीत्योपलक्षितो धर्मात्मा स दशरथः आत्मनः प्रजानां च श्रेयसे कल्याणाय प्रियेण रामविषयक-

१ लोकोत्तरैरिति गो. पाठः । २ शुभैरिति गो. पाठः । ३ युवराजमिति गो. पाठः । ४ अर्धमिदं रा. नास्ति । ५ प्राप्तकालेनेति गो. पाठः ।

नानानगरवास्तव्यान्पृथग्जानपदानपि । समानिनाय मेदिन्यां प्रधानान्पृथिवीपतिः ॥ ४६ ॥
तान्वेश्म नानाभरणैर्यथार्हं प्रतिपूजितान् । ददर्शालंकृतो राजा प्रजापतिरिव प्रजाः ॥ ४७ ॥
न तु केकयराजानं जनकं वा नराधिपः । त्वरया चानयामास पश्चात्तौ श्रोष्यतः प्रियम् ॥ ४८ ॥
अथोपविष्टे नृपतौ तस्मिन्परपुरार्दने । ततः प्रविविशुः शेषा राजानो लोकसंमताः ॥ ४९ ॥
अथ राजवितीर्णेषु विविधेष्वासनेषु च । राजानमेवाभिमुखा निषेदुर्नियता नृपाः ॥ ५० ॥
स लब्धमानैर्विनयान्वितैर्नृपैः पुरालयैर्जानपदैश्च मानवैः ।
उपोपविष्टैर्नृपतिर्वृतो बभौ सहस्रचक्षुर्भगवानिवामरैः ॥ ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे प्रथमः सर्गः ॥ १ ॥

---

प्रजानिष्ठप्रीतिहेतुना त्वरितवान् अभिषेकाय त्वरां कृतवान् ॥ ४९ ॥

गो० टी० -एवमनुसंधानप्र नमाह-आत्मन इति । आत्मनः प्रजानां च श्रेयसे हितार्थाय प्रियेण च प्रियाय च चतुर्थ्यर्थे तृतीया धर्मात्मा धर्मशीलः धर्मेण प्राणिसंरक्षकः नृपः प्राप्तकालेनोपलक्षितः सन् भक्त्या प्रीत्या त्वरितवान् प्राप्तकालत्वं स्वस्य वृद्धत्वं रामयौवनं वसन्तकालो वा ॥ ४४ ॥

४६ ] ति० टी०-त्वरयित्वा च नानानगरवासिनस्तत्राधिकृतान्भिन्नाभिन्नजनपदस्वामिनश्च मन्त्रिद्वारा समानिनाय ॥४६॥

रा० टी०-नानेति । प्रधानान् नानानगरवास्तव्यान् अनेकनगरनिवासिनः पृथग्जानपदान् भिन्नभिन्नदेशाधीशांश्च मेदिन्यामयोध्याभूमौ समानिनाय ॥ ४६ ॥

गो० टी०-नानेति । नानानगरेषु वसन्तीति नानानगरवास्तव्याः तान् "वसस्तव्यत्कर्तरि णिच्च" इति कर्तरि तव्यत्प्रत्ययः पृथग्जानपदान् जनपदान्तरस्थान् मेदिन्याः भुवः प्रधानान् न केवलानवान्तरनृपतीनित्यर्थः पृथक् समानिनायेति वा ४६॥

गो० टी०-नेति । श्रोष्यत इत्यनन्तरमितिकरणं द्रष्टव्यम् अनानयने हेतुमाह-त्वरयेति । दूरवर्तित्वादिति भावः । केकयराजानमित्यत्र समासान्तविधेरनित्यत्वाट्टजभावः ॥ ४६ ॥

४७] ति० टी०-वेश्म नानाभरणैस्तद्दानैः प्रजापतिर्ब्रह्मा ४७

रा० टी०-तानिति । वेश्मभिर्गृहदानैर्नानाभरणैश्च प्रतिपूजितान् तान् आनीतान् प्रजापतिर्ब्रह्मा प्रजा इव अलंकृतो राजा ददर्श ॥ ४७ ॥

गो० टी०-तान् वेश्मनानाभरणैरिति । प्रथमं वेश्मनानाभरणैः प्रतिपूज्य पश्चात्तान् ददर्शेत्यर्थः ॥ ४७ ॥

४८ ] ति० टी०-केकयाद्यनानयने हेतुः-त्वरया चेति । चस्त्वर्थे अभिषेकविषयत्वरया त्वित्यर्थः । प्रियं रामाभिषेकम् अस्येति विचार्येति शेषः । अत्र भरतजनकयोरागमने विघ्नभिया देवास्तथा बुद्धिं राज्ञे दत्तवन्त इति तात्पर्यम् ॥ ४८ ॥

रा० टी०-नेति । त्वरया अभिषेकविषयकशीघ्रतया हेतुना तौ मिथिलाकेकयाधिपती प्रियं प्रीत्युत्पादकाभिषेकं पश्चात् श्रोष्यतः इति बुद्ध्या केकयराजानं जनकं च न आनयामास । समासान्तविधेरनित्यत्वाट्टजभावः ॥ ४८ ॥

४९] ति० टी०—शेषाः केकयजनकव्यतिरिक्ता आसन्नाः ४९

रा० टी०-अथेति । नृपतौ राजनि अथोपविष्टे समङ्गलमुपवेशकर्तरि सति लोकसंमताः शेषा राजानः प्रविविशुः ॥४९॥

गो० टी०-दर्शनप्रकारमेवाह-अथेति । प्रविविशुः सभामिति शेषः । शेषाः केकयराजजनकभिन्नाः ॥ ४८ ॥

५० ] ति० टी०-राजवितीर्णेषु राजदर्शितेषु नियता नियतदेशाधिपत्याः, यद्वा राजमुखमात्रनिरीक्षकाः ॥ ५० ॥

रा० टी०-अथेति । राजवितीर्णेषु राज्ञा दत्तेषु विविधेषु आसनेषु नियताः नियमिताः नृपाः खण्डमण्डलेश्वराः राजानमभिमुखाः सन्तो निषेदुः ॥ ५० ॥

गो० टी०-अथेति । राजवितीर्णेषु राजदत्तेषु नियताः नियतदेशाधिपत्याः अन्तरङ्गा वा पादप्रसारणादिनियमयुक्ता वा ४९

५१ ] ति० टी०-मानः सत्कारः पुरालयैः राजसेवार्थं सदायोध्यास्थितैः जानपदैः स्वस्वदेशस्थैः उपोपविष्टैः सभायां स्वसमीपोपविष्टैः । सहस्रचक्षुरिन्द्रः राज्ञोऽपि चारैस्तथा तैरेव च सर्वप्रजाराजचित्तस्थज्ञानम् ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय
आदिकाव्येऽयोध्याकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०-स इति । पुरालयैः राजसेवार्थमयोध्यायां कृतगृहैः उपोपविष्टैः नृपादिभिः वृतः स नृपतिः अमरैः सहस्रचक्षुरिव बभौ ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे प्रथमः सर्गः ॥ १ ॥

गो० टी०-स इति । लब्धमानैः प्राप्तबहुमानैः पुरालयैः नानानगरवासिभिः उपोपविष्टैः राजवचनश्रवणादरेण मन्दं मन्दं समीपं प्राप्तैः नृपैः मानवैश्च वृतो नृपतिः भगवान् माहात्म्यवान् सहस्रचक्षुः इन्द्र इव बभौ ॥ ५० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यायोध्याकाण्डव्याख्याने प्रथमः सर्गः ॥ १ ॥

---

१ पर्यविक्षत् गो. पाठः । २ समचत्वारिंशाष्टचत्वारिंशश्लोकयोर्व्यत्यासेन गो. रा. पाठः । ३ परार्दने इति गो. पाठः ।

## द्वितीयः सर्गः ।

जराजीर्णोऽहं भरक्षमे रामे राज्यभारं निवेश्य विश्राममाकाङ्क्षामि इति दशरथः स्वोद्देशं परिषत्स्थान् शशंस । ते तदनुमेनिरे- ऽथ तदभिप्रायजिज्ञासुर्दशरथो रामयौवराज्याङ्गीकरणकारणं पप्रच्छ तेऽप्यसंख्येयरामगुणान् संवर्ण्याङ्गीकृतं रामयौवराज्यं समर्थयाम्बभूवुस्तत्संपादने च त्वरयामासुः ।

ततः परिषदं सर्वामामन्त्र्य वसुधाधिपः । हितमुद्धर्षणं चैवमुवाच प्रथितं वचः ॥ १ ॥
दुन्दुभिस्वरकल्पेन गम्भीरेणानुनादिना । स्वरेण महता राजा जीमूत इव नादयन् ॥ २ ॥
राजलक्षणयुक्तेन कान्तेनानुपमेन च । उवाच रसयुक्तेन स्वरेण नृपतिर्नृपान् ॥ ३ ॥
विदितं भवतामेतद्यथा मे राज्यमुत्तमम् । पूर्वकैर्मम राजेन्द्रैः सुतवत्परिपालितम् ॥ ४ ॥
सोऽहमिक्ष्वाकुभिः सर्वैर्नरेन्द्रैः प्रतिपालितम् । श्रेयसा योक्तुमिच्छामि सुखार्हमखिलं जगत् ॥ ५ ॥
मयाप्याचरितं पूर्वैः पन्थानमनुगच्छता । प्रजा नित्यमनिद्रेण यथाशक्त्यभिरक्षिताः ॥ ६ ॥

१ ] ति० टी०—अथ राज्याभिषेकस्य सर्वप्रजार्थत्वात्तदनुमतय आह राजेत्याह—तत इति । आमन्त्र्याभिमुखीकृत्य हितं श्रेयस्करम् अत एवोद्धर्षणमुत्कृष्टहर्षजनकम् प्रथितं सर्वजनश्राव्यं यथा भवति तथोवाच ॥ १ ॥

रा० टी०—आहूतराजाद्यागमनौत्तरकालिकं वृत्तमाह—तत इत्यादिभिः । ततः आहूतराजाद्यागमनानन्तरं परिषदं राजादिसमूहमामन्त्र्य हितं सर्वोपकारकमत एव उद्धर्षणं सर्वहर्षजनकमेवमिदं वचः प्रथितं सर्वश्रोतव्यं यथा स्यात्तथोवाच ॥१॥

गो० टी०—अथ रामाभिषेकस्य सर्वसंमतत्वं दर्शयति द्वितीये—तत इत्यादि । ततः राजादिनिवेशानन्तरं परिषदं पौरजानपदसमूहमामन्त्र्य अभिमुखीकृत्य हितं श्रेयस्करमुद्धर्षणमुत्कूलहर्षजनकं प्रथितं प्रकटार्थमेवं वक्ष्यमाणरीत्या ॥ १ ॥

२ ] ति० टी०—तदेवाह—दुन्दुभीति । अनुनादः प्रतिध्वनिः नादयन् दिश इति शेषः ॥ २ ॥

३ ] ति० टी०—स्वरे राजलक्षणयुक्तत्वं स्निग्धगम्भीरत्वादियुक्तत्वम् । कान्तत्वं मृदुमधुरत्वादिना रसयुक्तेनाद्भुतरसयुक्तेन ॥ ३ ॥

रा० टी०—वचनप्रकारमेवाह—दुन्दुभीत्यादिश्लोकद्वयेन । दुन्दुभिर्भेरी तत्स्वरसदृशेन अनुनादिना प्रतिध्वनिनिष्पादनशीलेन स्वरेण स्वस्य आत्मीयराज्यस्य रः समर्पणं यस्मिन् तेन राजलक्षणयुक्तेन अत एव कान्तेन कमनीयेन अनुपमेन उपमारहितेन रसयुक्तेन आनन्दजनकेन स्वरेण अनुनादयन् सभामण्डलं पूरयन् सन् राजा सर्वानुरागनिष्पादको नृपतिश्चक्रवर्ती नृपानुवाच । द्वयोरेकत्रान्वयः ॥ २ ॥ ३ ॥

गो०टी०—प्रथितमुवाचेत्युक्तं विशदयति—दुन्दुभिस्वनकल्पेनेति । दुन्दुभिस्वनकल्पेन भेरीस्वनसदृशेन ईषदसमाप्तौ कल्पप्प्रत्ययः । गम्भीरेण गम्भीरार्थेन अनुनादिना दिशः प्रतिध्वनयता स्वरेण महता स्वरेण नादयन् जीमूत इव मेघ इव स्थितः राजा उवाच । पुनः स्वरः कीदृशः राजलक्षणयुक्तेन प्रभावानुरूपेण कान्तेन मृदुना रसयुक्तेन माधुर्यवता ॥२॥ ३ ॥

४ ] ति० टी०—मे राज्यं मया संप्रति पाल्यमानम् मम पूर्वैर्मन्वादिभिः पालितमिति विदितमित्यन्वयः ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—विदितमित्यादिभिः । मे एतद्राज्यं मम पूर्वकैः सुतवत् यथा यथावत्परिपालितमेतद्भवतां विदितम् । एतदित्युभयान्वयि ॥ ४ ॥

गो० टी०—स्वकृतराज्यपरिपालनस्य पूर्वकृतपालनादविशेषं सूचयन्नाह—विदितमिति । अन्ते इतिकरणं द्रष्टव्यम् उत्तमं विपुलं मे एतद्राज्यं मम पूर्वकैः पूर्वैः राजेन्द्रैः रघुप्रभृतिभिः सुतवत्परिपालितम् अतिप्रेम्णा सुरक्षितमित्येतद्भवतां विदितम् "क्तस्य च वर्तमाने" इति षष्ठी भवद्भिर्विदितमित्यर्थः ॥ ४ ॥

५ ] ति० टी०—ततः किं तत्राह—सोऽहमिति । श्रेयसा रामराज्याभिषेकद्वारा विशिष्टेन सुखेन यत इक्ष्वाकुभिः प्रतिपालितमत एव सुखार्हम् ॥ ५ ॥

रा० टी०—स इति । श्रेयसा अतिकल्याणेन योक्तुं संयोजयितुम् ॥ ५ ॥

गो० टी०—अस्तु ततः किमित्यत्राह—सोऽहमिति । सः तद्वंश्योऽहं इक्ष्वाकुभिः इक्ष्वाकुवंश्यैः सर्वैः नरेन्द्रैः परिपालितमत एव सुखार्हमखिलं जगत् राज्यं श्रेयसा सुखेन अधुनापि योक्तुं कामयत इति योक्तुकामः अस्मि 'तुं काममनसोरपि' इति मकारलोपः योक्तुमिच्छामीत्यर्थः ॥ ५ ॥

६ ] ति० टी०—पूर्वैर्मन्वादिभिः पन्थानं प्रजापालनमार्गम् अनिद्रेण स्वसुखनिरपेक्षेण । यथाशक्तीति विनयप्रदर्शनम् ॥६॥

रा० टी०—रामेणावश्यं प्रजाः पालनीया इत्यत्र हेतुं प्रतिपादयन्नाह—मयेत्यादिभिः । पूर्वैः मनुप्रभृतिभिराचरितं पन्थानमनुगच्छता अनुसरता मयापि प्रजाः नित्यं यथाशक्ति शक्तिमनतिक्रम्याभिरक्षिताः ॥ ६ ॥

गो० टी०—ननु भवत्कृतं पालनमेवास्माकं श्रेय इत्यत्राह—मयापीति । पूर्वैः राजभिः आचरितं क्षुण्णं पन्थानं

१ स्वनेति गो. पाठः । २ योक्तुकामोऽस्मीति गो. पाठः ।

इदं शरीरं कृत्स्नस्य लोकस्य चरता हितम् । पाण्डुरस्यातपत्रस्यच्छायायां जरितं मया ॥ ७ ॥
प्राप्य वर्षसहस्राणि बहून्यायूंषि जीवतः । जीर्णस्यास्य शरीरस्य विश्रान्तिमभिरोचये ॥ ८ ॥
राजप्रभावजुष्टां च[1] दुर्वहामजितेन्द्रियैः । परिश्रान्तोऽस्मि लोकस्य गुर्वीं धर्मधुरं वहन् ॥ ९ ॥
सोऽहं विश्राममिच्छामि पुत्रं कृत्वा प्रजाहिते । संनिकृष्टानिमान्सर्वाननुमान्य द्विजर्षभान् ॥ १० ॥
अनुजातो हि मां सर्वैर्गुणैः श्रेष्ठो ममात्मजः । पुरंदरसमो वीर्ये रामः परपुरंजयः ॥ ११ ॥
तं चन्द्रमिव पुष्येण युक्तं धर्मभृतां वरम् । यौवराज्ये नियोक्तास्मि प्रीतः[2] पुरुषपुंगवम् ॥ १२ ॥

---

मर्यादामनुगच्छता अनुसरता नित्यं अनिद्रेण जागरूकेण मयापि प्रजाः यथाशक्त्यभिरक्षिताः यथाशक्तीति विनयोक्तिः ॥ ६ ॥

७ ] ति० टी०—जरितं प्रापितजरं कृतम् । न कदापि प्रजापालनविरोधेन विषयासक्तिः कृतेति भावः ॥ ७ ॥

रा० टी०—इदानीं स्वकर्तृकप्रजापालनेच्छा नास्तीत्यत्र हेतुं वदन्नाह—इदमित्यादिश्लोकचतुष्टयेन । कृत्स्नस्य लोकस्य हितं चरता मया पाण्डुरस्य श्वेतस्य आतपत्रस्य छत्रस्य छायायामिदं शरीरं जरितं प्रतीयमानजरां प्रापितम्, एतेनेदानीं राज्यश्रीभोगाकाङ्क्षा नास्तीति व्यञ्जितम् ॥ ७ ॥

गो० टी०—तर्हीदानीमपि तथैव रक्ष्यतामित्यत्राह—इदमिति । कृत्स्नस्य लोकस्य जनस्य हितं चरता कुर्वता मया इदं शरीरं भवतां प्रत्यक्षं हीति भावः । पाण्डुरस्यातपत्रस्य श्वेतस्य छत्रस्य छायायां जरितं संजातजरं कृतं जरापर्यन्तमेकच्छत्रतया पराक्रमनिधिर्भूत्वा मया नियमेन लोकहितमाचरितमित्यर्थः ॥ ७ ॥

८ ] ति० टी०—वर्षसहस्राणि षष्टिवर्षसहस्राणि बहून्यायूंषि वत्सरशतरूपानेकपुरुषायूंषि । विश्रान्तिं प्रजाचिन्तारहित्यरूपिणीम् ॥ ८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेण बोधयन्नाह—प्राप्येति । बहूनि षष्टिं वर्षसहस्राणि आयूंषि प्राप्य जीवतः इह लोके वर्तमानस्य अत एव जीर्णस्य प्रतीयमानजीर्णताविशिष्टस्य अस्य शरीरस्य विश्रान्तिमभिरोचये इच्छामि ॥ ८ ॥

गो० टी०—तर्हि संप्रति किं कर्तव्यमित्यत्राह—प्राप्य वर्षसहस्राणीति । बहूनि वर्षसहस्राणि षष्टिवर्षसहस्रपरिमितान्यायूंषि प्राप्य जीवतः क्रमेण जीर्णस्यास्य शरीरस्य विश्रान्तिं राज्यभाराद्विरतिमभिरोचये इच्छामि एतेन ययातिवद्विषयचापलेन न राज्याद्विरम्यत इति दर्शितम् ॥ ८ ॥

९ ] ति० टी०—राजप्रभावाः शौर्यादयस्तद्युक्तैर्जुष्टाम् । वहन्निति हेतौ शता ॥ ९ ॥

रा० टी०—राजेति । राज्ञां मनुप्रभृतीनां ये प्रभावाः सर्वदिग्विजयकारकशौर्यादयस्तैर्जुष्टामत एवाजितेन्द्रियैर्दुर्वहां लोकस्य गुर्वीं धर्मधुरं धर्मपूर्वकरक्षणभारं वहन् सन् परिश्रान्तोऽस्मि हिहेतौ ॥ ९ ॥

गो० टी०—इतःपरं राज्यवहनाशक्तौ निमित्तमाह—राजेति । राजप्रभावैः शौर्यादिभिः जुष्टां सेवितुमर्हाम् अजितेन्द्रियैः विषयपरैः दुर्वहां तादृशप्रभावरहितैर्वोढुमशक्यां गुर्वीं बहुसाधननिर्वाह्यां लोकस्य धर्मधुरं धर्मस्थापनरूपभारं वहन्नहं परिश्रान्तोऽस्मि ॥ ९ ॥

१० ] ति० टी०—प्रजाहिते पुत्रं कृत्वा तं नियुज्य । अनुमान्य कृतानुमतिकान्कृत्वा ॥ १० ॥

रा० टी०—स इति । सन्निकृष्टानात्महितकारकान् ॥ १० ॥

गो० टी०—विवक्षितमर्थं दर्शयति—स इति । सः एवं श्रान्तोऽहं प्रजाहिते प्रजारक्षणविषये पुत्रं कृत्वा नियम्य सन्निकृष्टान् अन्तरङ्गभूतान् इमान् सर्वान् द्विजर्षभान् ब्राह्मणश्रेष्ठान् अनुमान्य कृतानुमतिकान् कृत्वा मानयतेर्ण्यन्ताल्ल्यप् विश्रमं श्रान्तिनिवृत्तिमिच्छामि ॥ १० ॥

११ ] ति० टी०—राज्यार्हत्वं पुत्रस्य दर्शयति—अनुजात इति । मत्संबन्धि सर्वगुणविशिष्टो जात इत्यर्थः । इत्थंभूताख्यानविषयेऽनुः ‘ कर्मप्रवचनीय—’ इति मामिति द्वितीया । स्ववृत्तिगुणाधिकगुणवत्तामप्याह—पुरंदरेति ॥ ११ ॥

रा० टी०—रामस्य राज्ययोग्यत्वं प्रतिपादयन्नाह—अन्विति । ज्येष्ठो ममात्मजः सर्वैर्गुणैर्मामनुजातः । “ अनुर्लक्षणे ” इतिकर्मप्रवचनीयत्वाद्द्वितीया । अत्राप्युपमानोपमेयभाव इषुवत्सविता गच्छतीतिवद्बोध्यः ॥ ११ ॥

गो० टी०—कस्ते पुत्रो यौवराज्ये नियोज्योऽभिमतस्तत्राह—अनुजात इति । वीर्ये विषये पुरंदरसमः इन्द्रतुल्यः । तौल्यमेवाह—परेषां शत्रूणां पुराणि जयति स्वाधीनीकरोतीति परपुरंजयः असंज्ञायामपि जेः खजार्षः । रामः रामनामकः मम ज्येष्ठ आत्मजः सर्वैर्गुणैः शौर्यादिभिः मामनुजातः “ अनुर्लक्षणे ” इत्यनुः कर्मप्रवचनीयः तद्योगान्मामिति द्वितीया मद्गुणान् सर्वाननुप्राप्य जात इत्यर्थः । ननु मत्तश्च गुणवत्तरः अपरिमेयैश्च लोके लोकोत्तरैर्गुणैरिति पूर्वमुक्तं कथमिदानीमनुजातो हि मां सर्वैर्गुणैरित्युच्यते पुरंदरसम इति च उच्यते ‘ अन्या मध्यस्थचिन्ता हि विमर्दाभ्यधिकोदया ’ इतिन्यायेन पौरमुखेन रामस्य सर्वाभ्यधिकगुणतां वक्तुमेवमुक्तमिति ध्येयम् अत एव वक्ष्यति ‘ बहवो नृप कल्याणगुणाः पुत्रस्य सन्ति ते ’ इति ॥ ११ ॥

१२ ] ति० टी०—पुष्येण युक्तं चन्द्रमिव सर्वकार्यसिद्धिदम् यौवराज्ये तत्पदे प्रतिनियोक्तास्मीति लुट् पुंगवं श्रेष्ठम् १२

---

१ हीति गो. पाठः । २ प्रीत इति गो. रा. पाठः ।

अनुरूपः स वो नाथो लक्ष्मीवाँल्लक्ष्मणाग्रजः । त्रैलोक्यमपि नाथेन येन स्यान्नाथवत्तरम् ॥ १३ ॥
अनेन श्रेयसा सद्यः संयोक्ष्ये[1]ऽहमिमां महीम् । गतक्लेशो भविष्यामि सुते तस्मिन्निवेश्य वै ॥ १४ ॥
यदिदं मेऽनुरूपार्थं मया साधु सुमन्त्रितम् । भवन्तो मेऽनुमन्यन्तां कथं वा करवाण्यहम् ॥ १५ ॥

रा० टी०–तमिति । पुष्येण युक्तं चन्द्रमिव पुष्यनक्षत्रयुक्तचन्द्रसदृशकार्यसाधकमित्यर्थः । किंच चन्द्रमिव प्रकाशमानं युक्तं निखिलशक्तिविशिष्टं पुष्येण नक्षत्रेण यौवराज्ये नियोक्तास्मीत्यर्थः ॥ १२ ॥

गो० टी०–तमिति । तं स्वगुणतुल्यगुणं धर्मभृतां धार्मिकाणां वरं पुरुषपुंगवं पुष्येण नक्षत्रेण युक्तं चन्द्रमिव स्थितं तद्वदत्युज्वलं, यद्वा पुष्यनक्षत्रेभिषेककरणात् पुष्येण चन्द्रमिवेत्युक्तं यौवराज्ये नियोक्तास्मि, यद्वा चन्द्रमिव स्थितं तं श्वः पुष्येण यौवराज्ये नियोक्तास्मीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०–स वो युष्माकं राजानुरूपो योग्यः । येन राज्ञा न केवलं यूयमेव नाथवन्तः, अपि तु त्रैलोक्यमपि नाथवत्तरम् एवंप्रभावो राम इति भावः ॥ १३ ॥

रा० टी०–अन्विति । येन नाथेनैव त्रैलोक्यमूर्ध्वमध्याधोलोको नाथवत्तरमस्ति स एव अनुरूपः नाथत्वयोग्यो रामो वो नाथः स्यात् । अपिवैशब्दावेवार्थौ ॥ १३ ॥

गो० टी०–दशरथवचनं वाल्मीकिस्तत्त्वज्ञतया श्लाघते–अनुरूप इति । स रामः अनुरूपः अनुगुणः नाथः–लोकस्येति शेषः । अनुरूपत्वे हेतुर्लक्ष्मीवानिति अपरिच्छिन्नतेजस्क इत्यर्थः । तत्रापि हेतुर्लक्ष्मणाग्रज इति लक्ष्मणो लक्ष्मिवर्धन इत्युक्तम् । यद्वा अनुरूपत्वे हेतुर्लक्ष्मणाग्रज इति लक्ष्मण इव सर्वत्र स्वाश्रिते प्रेमशालीत्यर्थः । अथवा अनुरूप इत्यादि नित्यानपायिन्या लक्ष्म्या विशिष्टः परिजनपर्यन्तो रामः सर्वस्य निरुपाधिकः शेषी दशरथस्तु राज्यपालनोपाधिकशेषी । वैइति श्रुत्यादिप्रसिद्धिं द्योतयति 'दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः' इत्याद्युक्तेः । तस्य निरुपाधिकशेषित्वे निमित्तमाह–त्रैलोक्यमिति । त्रयो लोका एव त्रैलोक्यं चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । त्रैलोक्यमपि येन नाथेन नाथवत्तरम् अतिशयेन नाथवत् रामस्य रक्षकत्वावलोकने कियन्मात्रं त्रैलोक्यमिति भातीत्यर्थः । अथवा अनेन श्लोकेन रामस्य परत्वमुच्यते सः रामः अनुरूपो नाथः सहजशेषी जगतः अन्ये तु कर्मानुगुणतयौपाधिकाः अनुकूलं रूपं यस्य सोऽनुरूपः समः समविभक्ताङ्गः चन्द्रकान्ताननमित्याद्युक्तनिरुपमसौन्दर्यशालिदिव्यमङ्गलविग्रह इत्यर्थः । अनुकूलं स्वरूपं यस्यासावनुरूपः शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कतयाऽभ्यस्यमानानन्दरूप इत्यर्थः । आनन्दो ब्रह्मेति श्रुतम् । अनुगतं रूपं यस्यासावनुरूपः सर्वव्यापीत्यर्थः । अनुरूपः अनुप्रविष्टचराचरादिकशरीरः सर्वशरीरीत्यर्थः । अनुरूपः अनुस्यूतरूपः परव्यूहविभवान्तर्याम्यर्चावतारूपेण नानावताररशालीत्यर्थः । अनुरूपः अः रुद्रस्य रूपं शरीरं तद्विलक्षणशरीरः । 'वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु' इत्याद्युक्तरूपविलक्षणरूपः पुण्डरीकाक्षत्वादियुक्तः । उस्वरूपभिन्न इति त्रिमूर्तिसाम्यं च निरस्यते । वीनां पक्षिणां नाथो विनाथः हंसः तत्संबन्धी वैनाथः अण्यादिवृद्धिः । हंसवाहनः चतुर्मुखः तत्सहितः स वैनाथः नाभिपद्मस्थलस्थितचतुर्मुख इत्यर्थः । वैनाथो गरुडवाहनो वा नाथत्वे हेतुर्लक्ष्मीवानिति नित्ययोगे मतुप् 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' 'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा । वेदान्तास्तत्त्वचिन्तां मुरभिदुरसि यत्पादचिह्नैस्तरन्ति' पत्नीविशिष्टत्ववत् परिजनविशिष्टत्वमाह–लक्ष्मणाग्रज इति । लक्ष्मणशब्दः कैङ्कर्यपरमात्रोपलक्षणार्थः अग्रज इति तन्निरूप्यत्वोक्त्या आश्रितपारतन्त्र्यमुक्तम् । ननु कथमयमनुरूपो नाथः ब्रह्मरुद्रादयोऽपि हि सन्ति नाथा इत्यत्राह–त्रैलोक्यमपीति । कृतकमकृतकं कृतकाकृतकमित्युक्तं समस्तं जगदित्यर्थः । येन नाथेन नाथवदित्यनेनेन्द्रादिव्यावृत्तिः तरपा ब्रह्मरुद्रादिव्यावृत्तिः तन्नाथत्वस्यैतन्मूलत्वात् 'युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः । पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥ महादेवः सर्वमेधे महात्मा हुत्वात्मानं देवदेवो बभूव' इत्यादिस्मृतयस्तत्र मानं त्रैलोक्यं नाथवत्तरं रक्ष्यापेक्षया रक्षकत्वराधिक्येत्यर्थः (?) ॥ १३ ॥

१४ ] ति० टी०–श्रेयसा प्रशस्ततरेण रामेण महीं संयोक्ष्ये, राज्याभिषेकद्वारेणेत्यर्थः । एवं सति तस्मिन्सुते तत्पालनभारं निवेश्य गतक्लेशो भविष्यामि ॥ १४ ॥

रा० टी०–अनेनेति । अत एव श्रेयसा सर्वमङ्गलहेतुना अनेन रामेण इमां महीं संयोक्ष्ये ॥ १४ ॥

गो० टी०–अनेनेति । इमां मया चिरकालधृतां महीं तस्मिन् ज्येष्ठे सुते निवेश्य महीपालनभारं निक्षिप्येत्यर्थः । अनेन तन्निवेशरूपेण श्रेयसा च महीमेवं सद्यः संयोज्य गतक्लेशः गतराज्यभरणक्लेशो भविष्यामि रामाभिषेकस्य द्वे फले मह्याः श्रेयो मम विश्रान्तिश्चेति भावः ॥ १४ ॥

१५ ] ति० टी०–म इदमभिषेकरूपं कार्यं यद्यदि मया साधु सुमन्त्रितं भवतामनुरूपार्थमनुकूलप्रयोजनावहं च तदा भवन्तो मे ममानुमन्यन्तामनुमतिं प्रयच्छन्तु । हर्षयुक्तत्वादङ्कुरस्मच्छब्दपौनरुक्त्यमदोषाय । इतोऽतिरिक्तं वा कथं केन प्रकारेण किं करवाणि तद्वदन्त्विति शेषः ॥ १५ ॥

रा० टी०–यदिति । मे मम अनुरूपः योग्यः अर्थो यस्मिन् तत् इदं रामाभिषेचनं यत् यदि मया साधु सुमन्त्रितं

१ संयोज्यैवमिति गो. पाठः ।

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् । अन्या मध्यस्थचिन्ता तु विमर्दाभ्यधिकोदया ॥ १६ ॥
इति ब्रुवन्तं मुदिताः प्रत्यनन्दन्नृपा नृपम् । वृष्टिमन्तं महामेघं नर्दन्त इव बर्हिणः ॥ १७ ॥
स्निग्धोऽनुनादः संजज्ञे ततो हर्षसमीरितः । जनौघोद्घुष्टसंनादो मेदिनीं कम्पयन्निव ॥ १८ ॥
तस्य धर्मार्थविदुषो भावमाज्ञाय सर्वशः । ब्राह्मणा बलमुख्याश्च पौरजानपदैः सह ॥ १९ ॥
समेत्य ते मन्त्रयितुं समतागतबुद्धयः । ऊचुश्च मनसा ज्ञात्वा वृद्धं दशरथं नृपम् ॥ २० ॥
अनेकवर्षसाहस्रो वृद्धस्त्वमसि पार्थिव । स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥ २१ ॥

तदा भवन्तः अनुमन्यन्तामनुमतिं कुर्वन्तु । कथं केन प्रकारेणे अहं करवाणीत्यपि वदन्त्विति शेषः । वाशब्द इत्यर्थे ॥ १५ ॥

गो० टी०—यदीति । इदं रामाभिषेकरूपं कार्यं मे राज्यभरणश्रान्तस्य वृद्धस्य मम यथानुरूपार्थंसूचितप्रयोजनकं चेत् मया वा साधु समर्थितं यदि सम्यग् विचार्यारब्धं चेदित्यर्थः तदा भवन्तः मे मह्यमनुमन्यन्तामनुमतिं कुर्वन्तु इदं मे अननुकूलार्थं चेत्कथं वान्यत्करवाणि ॥ १५ ॥

१६ ] ति० टी०—ननु त्वदधिकः को हिताहितविचारसमर्थोऽस्ति आह—यद्यपीति । एषा चिन्ता यद्यपि मम प्रीतिस्तद्विषया तथाप्यन्यद्धितं यद्यस्ति तदा विचिन्त्यताम् । यतो मध्यस्थानां रागद्वेषहीनानां चिन्ता तु विचारस्तु तद्गतां चिन्तापेक्षयान्या विलक्षणा । तदेवाह—विमर्देन पूर्वापरपक्षसंघर्षेणाभ्यधिकोदयाधिकार्थप्रादुर्भाववती ॥ १६ ॥

रा० टी०—यद्यपीति । यद्यपि एषा रामाभिषेकविषया मम प्रीतिरस्ति तथापि अन्यत् अतो भिन्नं हितं चेद्भवद्भिर्विचिन्त्यताम् । तत्र हेतुः मध्यस्थचिन्ता मध्यस्थानां निर्णायकत्वेन स्थापितानां चिन्ता विचारः अन्या एकनिष्ठविचारतो विलक्षणा । तत्र हेतुः विमर्देन पूर्वपक्षोत्तरपक्षाभ्यां गृहीतत्वेन अभ्यधिकः उदयो यया सा । तुशब्द एवार्थे चेदित्यध्याहृतम् ॥ १६ ॥

गो० टी०—यत्ते प्रियं तत् क्रियतामित्यत्राह—यद्यपीति । एषा रामाभिषेकविषया प्रीतिर्यद्यप्यस्ति तथाप्यन्यद्धितमस्ति चेच्चिन्त्यताम् । ननु कस्त्वत्तोऽधिकदर्शीत्यत्राह—अन्येति । मध्यस्थानां रागद्वेषरहितानां चिन्ता विचारः अन्या अन्यादृशी स्वमात्रचिन्तातो विलक्षणा । तदेव वैलक्षण्यमाह—विमर्दाभ्यधिकोदयेति । विमर्देन पूर्वापरपक्षसंघर्षणेन हेतुना अभ्यधिकोदया अधिकार्थप्रादुर्भावा हि ॥ १६ ॥

१७ ] ति० टी०—वृष्टिमन्तं महामेघं दृष्ट्वा नर्दन्तो बर्हिण इव ह्लादिता नृपा नृपं प्रत्यनन्दन्प्रशंसापूर्वकमङ्गीचक्रुः ॥ १७ ॥

रा० टी०—इतीति । वृष्टिमन्तं महामेघं दृष्ट्वा बर्हिणो मयूरा इव नर्दन्तः प्रत्यनन्दन् ॥ १७ ॥

गो० टी०—इतीति । इति पूर्वोक्तप्रकारेण ब्रुवन्तं नृपं दशरथं नृपाः परिवृता राजानः वृष्टिमन्तं वर्षुकं महामेघं नर्दन्तः केकां कुर्वन्तः बर्हिण इव मयूरा इव ह्लादिताः सन्तः प्रत्यनन्दन् प्राशंसन् ॥ १७ ॥

१८ ] ति० टी०—अनुनादः सामन्तकृतहर्षजवाक्यप्रतिध्वनिः संजज्ञे सभायामिति शेषः । जनौघानामुद्घुष्टेन शब्देन सम्यक्संभवन्नादः प्रतिध्वनिः पृथिवीं कम्पयन्निव संजज्ञे बहिरिति शेषः । 'विमानम्' इति पाठे राजस्थानमित्यर्थः ॥ १८ ॥

रा० टी०—तत्रत्यराजप्रमोदमुक्त्वा तत्रस्थजनप्रमोदं वर्णयन्नाह—स्निग्ध इति । स्निग्धः स्नेहसूचकः अनुनादः प्रतिध्वनिजनकः हर्षसमीरितः सकलहर्षहेतुः जनौघैरुद्घुष्टः उच्चारितः सन्नादः शोभनशब्दः विमानमतिपूज्यसभामण्डपं कम्पयन्निव तत्र तस्यां सभायां संजज्ञे ' मेदिनीम् ' इति भट्टसंमतः पाठः ॥ १८ ॥

गो० टी०—स्निग्ध इति । तत्र सभायां स्निग्धः स्नेहाभिव्यञ्जकः अनुनादी प्रतिध्वनिकारी जनौघोद्घुष्टः जनसमूहोत्पादितः संनादः समीचीनशब्दः विमानं तदास्थानमण्डपविमानं कम्पयन्निव संजज्ञे न केवलं राजान एव सर्वेऽपि जनाः तच्छ्रुत्वा संतुष्टा इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—भावं धर्मविषयमभिप्रायम् बलं सेना तपोबलं वा चमूपाः ॥ १९ ॥

रा० टी०—तस्येति । जनमुख्याः नृपतयः 'बलमुख्याश्च' इति भट्टसंमतः पाठः ॥ १९ ॥

गो० टी०—तस्येत्यादिश्लोकद्वयमेकान्वयम् । ब्राह्मणाः वसिष्ठाद्याः जनमुख्याः राजानश्च पौरैर्नागरिकैः जानपदैश्च समेत्य संभुज्य मन्त्रयित्वा युक्तायुक्तं विचार्य धर्मार्थविदुषः स्वस्य वार्द्धके युवराजस्थापनं धर्मः प्रजानामर्थसाधनं चेति जानतः तस्य दशरथस्य भावं वचनमूलतात्पर्यं सर्वशः सर्वप्रकारेण देशकालेङ्गितादिभिः आज्ञाय आ समन्तात् ज्ञात्वा समतां साम्यं गताः बुद्धयो येषां ते तथोक्ताः ऐकमत्यं प्राप्ताः सन्तः मनसा च ज्ञात्वा प्रत्येकं स्वस्वहृदयेन निश्चित्य वृद्धं नृपं वक्ष्यमाणवचनाहं दशरथमूचुः ॥ १९ ॥ २० ॥

२० ] ति० टी०—समतामेकरूपतां गताः प्राप्ता बुद्धयो येषां ते मन्त्रयितुं प्रवृत्ता इति शेषः । मन्त्रणोत्तरं ज्ञात्वा पुनः पुनः पर्यालोचनेन निश्चित्य ॥ २० ॥

रा० टी०—समेत्येति । मन्त्रयित्वा कर्तव्यं निश्चित्यैव । तुशब्द एवार्थे समतामेकविषयत्वं गताः प्राप्ता बुद्धयो येषां ते वृद्धं समूहम् । ' ते मन्त्रयितुं ' इति भट्टसंमतः पाठः ॥ २० ॥

२१ ] ति० टी०—अनेकेत्यादिपदं बहुव्रीहिः । साहस्रो

१ हितं चे. पाठः । २ नादीनि गो. पाठः । ३ ततेति गो. पाठः । ४ विमानमिति गो. रा. पाठः । ५ जनेति गो. रा. पाठः । ६ [illegible]

इच्छामो हि महाबाहुं रघुवीरं महाबलम् । गजेन महता यान्तं रामं छत्रावृताननम् ॥ २२ ॥
इति तद्वचनं श्रुत्वा राजा तेषां मनःप्रियम् । अजानन्निव जिज्ञासुरिदं वचनमब्रवीत् ॥ २३ ॥

स्वार्थिकोऽण् । युवराजानमिति समासान्तविधेरनित्यत्वाट्टजभावः ॥ २१ ॥

रा० टी०—तद्वचनमेवाह—अनेकेति । हे पार्थिव ! अनेकानि बहूनि वर्षसहस्राणि यस्य सः बहुवर्षसहस्राणि राज्यकर्तेत्यर्थः । वृद्धः सकलसंपत्तिविशिष्टस्त्वमसि स त्वं पार्थिवं पृथिवीपालनयोग्यं रामं युवराजानमभिषिञ्चस्व युवराजत्वेनाभिषेकं कारयेत्यर्थः । सहस्रशब्दः स्वार्थिकाण्णन्तः युवराजानमित्यत्र समासान्तविधेरनित्यत्वाट्टजभावः संज्ञापूर्वकविधेरनित्यत्वात्परस्मैपदाभावः किंच स्वेति भिन्नं पदमात्मीयेत्यर्थः । स्वश्चासौ पार्थिवश्चेति कर्मधारयो वा ॥ २१ ॥

गो० टी०—वृद्धं नृपमिति कविना सूचितमर्थं दर्शयति—अनेकेति । हे पार्थिव ! त्वं अनेकवर्षसाहस्रः सहस्राण्येव साहस्राणि स्वार्थे अण् अनेकानि वर्षसाहस्राणि यस्य स तथा वृद्धोऽसीतिविशेषणमहिम्ना अतिवृद्धोऽसीति गम्यते सः तादृशवृद्धस्त्वं पार्थिवं पृथिवीशासनार्हं युवराजानं युवराजं समासान्तस्यानित्यत्वान्न "राजाहः सखि–" इत्यादिना टच् । अभिषिञ्चस्व यथा रामो युवराजो भवति तथाभिषिञ्चेत्यर्थः॥ २१ ॥

२२ ] ति० टी०—इच्छामः कृताभिषेकं द्रष्टुमिति शेषः॥२२॥

रा० टी०—इच्छाम इति । छत्रावृताननं युवराजत्वेनाभिषिक्तमित्यर्थः । द्रष्टुमिति शेषः ॥ २२ ॥

गो० टी०—ननु रक्षके मयि विद्यमाने किमर्थं रामाभिषेकोऽपेक्ष्यत इत्याशङ्कायां नहि वयं रक्षणार्थं तमपेक्षामहे किंतु सौन्दर्यविशेषानुभवार्थमित्याह—इच्छाम इति । इच्छाम इतिबहुवचनेन सर्वेषामिच्छावैषम्याभाव उक्तः महाबाहुमिति आयताश्च सुवृत्ताश्चेत्युक्तरीत्या सहजबाहुसौन्दर्यं तत्कालाङ्कुशाकर्षणादिव्यापारविशेषश्चोच्यते इच्छाम इत्यादि इच्छामः अभिषेकपट्टबन्धादियुक्ततया स्थितं द्रष्टुमिच्छामः इच्छामात्रमस्माकं कार्यनिर्वहणं भवदधीनम् इच्छामः अस्माकमिच्छा वर्तते श्रेयांसि बहुविघ्नानीत्येवंविधश्रेयोऽस्माकं लभ्यते किम् इच्छामः अभिषेकः सिध्यतु वा न वा इच्छा निष्प्रतिबन्धा सुन्दरवस्तुदर्शने इच्छा प्रवर्तते खलु इच्छामः सर्वप्रकारेण रक्षकत्वाद्वाचा प्रार्थयितुमशक्ता मनसा इच्छामः भवदभिप्रायज्ञानेन इदानीमिच्छाम इति वदामः केषांचिदस्ति न केषांचिदिति न किंतु सर्वे इच्छामः हि सर्वलोकप्रसिद्धं खलु जनौघोद्घुष्टसंनादो विमानं कम्पयन्निवेति सर्वजनकोलाहलेन तव गृहं विच्छिद्यबन्धं खलु अकामयत मेदिनी त्वयि निर्वाहके सत्येव भूमिः स्वयंवरं कृतवती खलु त्वयि करग्रहं कुर्वेति रामकामना न युक्तेति ध्वन्यते । कामुकीनां न मर्यादा खलु लोकपालोपमं विष्णुसदृशमत एव दत्तवती भूमिः । मेदिनी मधुकैटभवसाविसमभ्यञ्जोपहतसर्वगन्धा इति रामसौगन्ध्येन वासयितुमकामयत कर्पूरचन्दनादिकमिव स्वस्यैव बकोटौ कृतवती नार्थं सौगन्ध्यासौगन्ध्ययोः स्वस्यैव शेषिणो भोग्यतया तद्विप्रवासनानिवर्तनेन स्वशेषरक्षकं महाबाहुं बाहुबलस्यालक्ष्या खल्वियं शक्तस्त्रैलोक्यमप्येक इति न केवलं कोसलराज्यं लङ्काराज्यमपि रक्षितुं शक्तिरस्ति महाबाहुं आयताश्चेति आजानुबाहुरिति च महापुरुषलक्षणदर्शनेन न ज्ञायते किं विभूतिद्वयनिर्वाहकबाहुः खलु महाबाहुं बाहुच्छायामवष्टभ्येति छायास्मद्रक्षणे न पर्याप्ता किं ररक्ष धर्मेण बलेन चैवेति धर्मबलमप्यस्तीत्याहुः रघुवीरं दीनान् दानेन राघव इति प्रसिद्धः खलु आनृशंस्यं परो धर्म इति परेषामप्युपदेशपर्यन्तं खलु रक्षणं रघुवीरं रघ्वपेक्षयास्यैव धार्मिकता ज्ञायते खलु रघुं प्रति क्षुधार्तस्य मरणे तव पापं न भवतीत्युक्ते तूष्णीं स्थितवान् अयं तु अप्यहं जीवितं जह्यामिति सत्रूकवान् महाबलं मनोबलयुक्तं नहि प्रतिज्ञां संश्रुत्य न त्यजेयमेतद्व्रतं ममेति वक्ष्यति । गजेन महता यान्तं गजेन त्वया दत्तकिरीटपट्टबन्धादियुक्तः शत्रुंजयेनागच्छति चेत्तदा ज्ञायते गजेन न रथादिना मत्तमातङ्गगामिनमिति तद्गमनोपमानगतिमता महता अत्युन्नतेन शर्वशक्तिमता अयान्तं महावीथीमध्ये प्रतिगृहाङ्गणमागतमायान्तम् एकः स्वादु न भुञ्जीतेति पुत्रकलत्रादिभिः सहानुभवरसमास्वादयामः रामं सौन्दर्यगुणैः सकलमनोरञ्जकं छत्रावृताननं दृष्टिदोषपरिहारायान्तरङ्गेण छत्रेणावृतमुखं वृत्त्यादृत्यैकदेशतया साकल्येन मुखदर्शनाभिलाषमुत्पादयन्तं । अन्तरङ्गसुहृद्विर्वातातपपरिम्लानताशङ्कया भूचक्रच्छत्रेणाच्छादितमुखपङ्कजं छत्रावृताननं 'एकच्छत्रां महीं भुङ्क्ते' इतिलक्षणशास्त्रकथितसमष्टत्वविशालोत्तमाङ्गत्वव्यञ्जकेन निरङ्कुशप्रशासनवशीकृतनिखिलभूपालवलयतानिरूपकेण छत्रेण पाण्डुरेण परभागभावमापन्नेन नितरां प्रकाशितेन्दीवरसदृशमुखं विशदीकृतमुखं रघुवीरमिति गजस्कन्धावस्थानसूचितो वीर्यविशेष उच्यते महाबलं मत्तमातङ्गमपि तृणीकृत्य गमनसमर्थं महागजेन शत्रुंजयेनायान्तं गच्छन्तमित्यनुभवसाक्षिकः सुषमाविशेषः सूच्यते रामं स्वसौन्दर्येण गजमलंकुर्वाणमिव स्थितं छत्रावृताननं वदनप्रभामण्डलेनेव छत्रावरणेन जनितसौन्दर्यम् एतैरभिषेकानन्तरभाविभिर्विशेषणैरभिषेकः कर्तव्य इति व्यञ्जनावृत्त्या प्रार्थ्यते ॥ २२ ॥

२३ ] ति० टी०—अजानन्निव तदभिषेकस्य सर्वमनःप्रियत्वं जानन्नप्यजानन्निव प्रजामुखात्स्पष्टं जिज्ञासुः ॥ २३ ॥

रा० टी०—इतीति । मनःप्रियं स्वेप्सितं तद्वचनमेवाह—श्रुत्वेति । हे राजानः! मे वचनं श्रुत्वैव श्रवणोत्तरं विचारमकृत्वैव यत् यूयं राघवं रामं पतिं राजानमिच्छथ तदिदं किं किमर्थमर्यं मे संशयः अतो यूयं तत्त्वतो ब्रूत हेतुं वदतेत्यर्थः ॥ २३ ॥ २४ ॥

गो० टी०—इतीति । इति पूर्वोक्तप्रकारेण तद्वचनं

श्रुत्वैतद्वचनं यन्मे राघवं पतिमिच्छथ । राजानः संशयोऽयं मे तदिदं ब्रूत तत्त्वतः ॥ २४ ॥
कथं नु मयि धर्मेण पृथिवीमनुशासति । भवन्तो द्रष्टुमिच्छन्ति युवराजं महाबलम् ॥ २५ ॥
ते तमूचुर्महात्मानः पौरजानपदैः सह । बहवो नृप कल्याणगुणाः सन्ति सुतस्य ते ॥ २६ ॥
गुणान्गुणवतो देव देवकल्पस्य धीमतः । प्रियानानन्दनान्कृत्स्नान्प्रवक्ष्यामोऽद्य ताञ्छृणु ॥२७॥
दिव्यैर्गुणैः शक्रसमो रामः सत्यपराक्रमः । इक्ष्वाकुभ्योऽपि सर्वेभ्यो ह्यतिरिक्तो विशांपते ॥२८॥

तेषां पौरादीनां वचनं श्रुत्वा तद्वचनभङ्ग्यैव तेषां मनःप्रियं मनःसंतोषं जानन्नप्यजानन्निव जिज्ञासुः तन्मुखेनैव ज्ञातुमिच्छुः इदं वक्ष्यमाणं वचनमब्रवीत् ॥ २३ ॥

२४ ] ति० टी०—हे राजानः ! मे वचनं श्रुत्वा तन्निर्बन्धादेव केवलं रामं पतिमिच्छथ, न वस्तुत इति संशयः ॥२४॥

गो० टी०—श्रुत्वेति । हे राजानः ! मे वचनं श्रुत्वैव न तु पूर्वापरं पर्यालोच्य राघवं रामं पतिं राजानमिच्छथेति यत् अयं मे संशयः संशयहेतुः विधेयापेक्षया पुँल्लिङ्गता । संशयप्रकारमाह—किमिदमिति । इदं राघवाभिषेकप्रार्थनं किं किंनिमित्तकमिति तत्त्वतो ब्रूत अत्र निमित्तं याथातथ्येन कथयतेत्यर्थः॥२४॥

२५ ] ति० टी०—संशयबीजमाह—कथं न्विति । युवराजम् तेन युवत्वात्तत्र नानाविधाधर्माणामभिसंभव इति भावः ॥ २५ ॥

रा० टी०—संशयं प्रकटयन्नाह—कथमिति । महाबलं रामं युवराजमेव भवन्तः कथमिच्छन्ति अत्र हेतुं वदन्त्वित्यर्थः॥२५॥

गो० टी०—पुनः संशयं विशिनष्टि—कथमिति । मयि धर्मेण पृथिवीमनुशासति भवन्तः ममात्मजमतिमुग्धं युवराजं द्रष्टुं कथमिच्छन्ति मयि चिरं स्वसुखनिरभिलाषतया राज्यपरिपालनजागरूके तिष्ठति ममापत्यं पतिमभिलषथ को वा मेऽपराध इति भावः ॥ २५ ॥

२६ ] ति० टी०—अस्मिन्नधर्मलेशसंभावनापीत्याशयेनोत्तरयन्ति—त इति । ते नृपाः कल्याणगुणाः प्रजाकल्याणजनका गुणाः ॥ २६ ॥

रा० टी०—ते इति । हे नृपते ! तव पुत्रस्य बहवोऽसंख्येया कल्याणगुणाः सन्ति नृपोचिताः कल्याणगुणा इति वा ॥ २६ ॥

गो० टी०—न ते कश्चिदपराधः किंतु तव पुत्रस्य गुणानामपराध इत्याहुः—त इति । ते राजानः पौरजानपदैः सह पण्डितपामराविशेषेण सर्वे ऐकमत्यं प्राप्येत्यर्थः । महात्मानं महाबुद्धिं तं गुणग्राहिणं दशरथमूचुः हे नृपेति संबोधनेन तारतम्यज्ञतोक्ता ते पुत्रस्य बहवः कल्याणा गुणाः सन्ति तव तु नृपरिपालनमेको गुण इति भावः । रामप्रशंसया तस्यासूया मा भूदिति ते पुत्रस्येत्युक्तं तदतिशयः सर्वोऽपि त्वत्संबन्धकृत इति भावः । गुणा इति बहुवचनेनैव बहुत्वे सिद्धेऽपि बहव इत्युक्त्या असंख्येयगुणत्वमुक्तं पुत्रस्य गुणा इत्यनेन जन्मसिद्धत्वोक्त्या गुणानां स्वाभाविकत्वमुक्तं कल्याणाः अखिलहेयप्रत्यनीकाः आश्रयसंबन्धेन शुभीभूता वा गुणाः सत्यज्ञानप्रभृतय उत स्वद्गततया शुभीभूतं याता इत्यभियुक्तोक्तेः अत्र स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगण इति यामुनाचार्यवचनमनुसंधेयम् ॥ २६ ॥

२७ ] ति० टी०—देवकल्पस्य देवतुल्यस्य रामस्य प्रियाञ्छत्रूणामप्यानन्दनाननिष्टनिवारणपूर्वकेष्टप्रापकत्वेनानन्दजनकान् ॥ २७ ॥

रा० टी०—ननु के ते गुणा इत्यत आह—गुणानिति । देव हे राजन् ! गुणवतः प्राकृतविलक्षणगुणविशिष्टस्य देवकल्पस्य देवोपलक्षितसर्वसामर्थ्यदातुः धीमतः समाधिकरहितबुद्धिविशिष्टस्य रामस्य प्रियान् सर्वप्रीतिविषयीभूतान् आनन्दनान् सर्वानन्ददातॄन् कृत्स्नान् अस्मज्ज्ञानविषयीभूतनिःशेषान् गुणान् अद्य प्रवक्ष्यामः तान् त्वं शृणु ॥ २७ ॥

गो० टी०—के ते गुणा इत्याकाङ्क्षायां तान् वक्तुं प्रतिजानीते—गुणानिति । हे देव हे राजन् ! गुणवतः प्रशस्तबहुगुणकस्य देवकल्पस्य देवतुल्यस्य धीमतः रामस्य प्रियान् इष्टान् आनन्दनान् प्रीतिजनकान् तान् प्रसिद्धान् कृत्स्नान् गुणान् अद्य प्राप्तकाले शृणु प्रवक्ष्यामः गुणवतो गुणानित्यनेन गुणानामनारोपितत्वेन स्वाभाविकत्वमुक्तं देवकल्पस्येत्यनेन गुणानां संभावितत्वं धीमत इत्यनेन गुणानां मध्ये ज्ञानस्य प्राधान्यमुक्तं ब्राह्मणा आगता वसिष्ठोऽप्यागत इत्यत्र वसिष्ठस्येव प्रियानित्यनेन कल्याणत्वमानन्दनानित्यनेन निरतिशयत्वं कृत्स्नानित्यनेनासंख्येयत्वं च विवक्षितम् । एतावत्पर्यन्तं किमर्थं नोक्तमित्यपेक्षायां भवत्प्रश्नकाल एवास्मदुक्तेरवसर इत्यद्येत्यनेन सूचयन्ति—प्रवक्ष्याम इति प्रवचनोक्त्या भगवद्गुणोपदेशेऽधिकारितारतम्यं नास्ति अजानता जानद्भिः श्रोतव्यमित्येवेति सूचितं शृण्वित्यनेन रामगुणश्रवणे निरतिशयानन्दमग्नो भविष्यसि कथंचिन्मनः संस्तभ्य श्रोतव्यमित्युक्तम् ॥ २७ ॥

२८ ] ति० टी०—दिव्यैरमानुषैः इक्ष्वाकुभ्यस्तद्वंश्येभ्यः अतिरिक्तोऽधिकः ॥ २८ ॥

रा० टी०—गुणानेवाह—दिव्यैरित्यादिभिः । अत्र प्रकरणेऽप्युपमानोपमेयभावः इयुवत्सविता गच्छतीतिवद्बोध्यः ॥ २८ ॥

गो० टी०—दिव्यैरिति । दिव्यैः अमानुषैः गुणैः शौर्यवीर्यादिभिः शक्रसमः इन्द्रसमः सत्यपराक्रमः अमोघविक्रमः इक्ष्वाकुभ्यः इक्ष्वाकुवंश्येभ्यः सर्वेभ्योऽतिरिक्तः समधिकः 'अ-

१ किमिदमिति गो. पाठः । २ महात्मजमिति गो. पाठः ।

रामः सत्पुरुषो लोके सत्यः सत्यपरायणः । साक्षाद्रामाद्विनिर्वृत्तो धर्मश्चापि श्रिया सह ॥ २९ ॥
प्रजासुखत्वे चन्द्रस्य वसुधायाः क्षमागुणैः । बुद्ध्या बृहस्पतेस्तुल्यो वीर्ये साक्षाच्छचीपतेः ॥ ३० ॥
धर्मज्ञः सत्यसंधश्च शीलवाननसूयकः । शान्तः सान्त्वयिता श्लक्ष्णः कृतज्ञो विजितेन्द्रियः ३१
मृदुश्च स्थिरचित्तश्च सदा भव्योऽनसूयकः । प्रियवादी च भूतानां सत्यवादी च राघवः ॥ ३२ ॥
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता । तेनास्येहातुला कीर्तिर्यशस्तेजश्च वर्धते ॥ ३३ ॥

---

तिरिक्तः समधिकः' इत्यमरः । शौर्यादिभिरिति शेषः । राज्ञो मनःप्रीणनाय संबोधयन्ति विशांपत इति विशां प्राजानां पते ॥ २८ ॥

२९ ] ति० टी०—साक्षाद्रामाद्विनिर्वृत्तः रामेणैव प्रतिष्ठापित इत्यर्थः श्रियार्थेन ॥ २९ ॥

रा० टी०—राम इति । लोके अतलादिभूरादिवैकुण्ठादिषु सत्पुरुषो राम एव । च शब्द एवार्थे अत एव पौरुषे चाप्रतिद्वन्द्वः शरैनमित्यादिसङ्गच्छते ॥ २९ ॥

गो० टी०—राम इति । लोके राम एव सत्पुरुषः रिपूणामपि वत्सल इत्यर्थः । सत्यधर्मावेव परायणं परमा गतिर्यस्य सः सत्यधर्मपरायणः सत्यधर्मैकनिरत इत्यर्थः । किंच धर्मः श्रिया तत्फलभूतया संपदा सह रामात्साक्षादव्यवधानेन निर्वृत्तः निष्पन्नः धर्मार्थयोरितरनिरपेक्षतया निर्वाहक इत्यर्थः २९

३० ] ति० टी०—सुखत्व इत्यादेस्तुल्य इत्यनेनान्वयः । प्रत्येकगुणेष्वेकैकस्योपमानत्वदर्शनेन रामनिष्ठगुणानामन्यत्रैकत्र वासासंभवो दर्शितः ॥ ३० ॥

रा० टी०—प्रजेति । चन्द्रस्येत्यादेस्तुल्य इत्यत्रान्वयः ३० ॥

गो० टी०—रामनिष्ठगुणसमुदायस्यैकत्रासंभवादेकैकगुणयोगेन चन्द्रादीन् दृष्टान्तयन्ति—प्रजेति । प्रजासुखत्वे प्रजानां सुखकरत्वे चन्द्रस्य तुल्यः क्षमागुणविषये वसुधायाः भूमेः तुल्यः बुद्ध्या बुद्ध्यसाधारणधर्मेण बृहस्पतेस्तुल्यः वीर्ये विषये शचीपतेः साक्षात्तुल्यः 'साक्षात्प्रत्यक्षतुल्ययोः' इत्यमरः ॥ ३० ॥

३१ ] ति० टी०—संधा प्रतिज्ञा अनसूयकोऽन्यविषयामयारहितः सान्त्वयित्वा दुःखितानां दुःखशमयिता श्लक्ष्णः प्रियवचनः ॥ ३१ ॥

रा० टी०—धर्मज्ञ इति । अनसूयकः किंचिद्विषयकासूयानाश्रयः उत्तरपद्यघटकीभूतानसूयकपदार्थस्तु सर्वकर्तृकवास्तवासूयाया अविषय इत्यर्थः । अत एवोभयोर्न पौनरुक्त्यम् । वस्तुतस्त्वनसूयकपदार्थः बालकाण्डे प्रथमसर्गे व्याख्यातः ॥ ३१ ॥ ३२ ॥

गो० टी०—धर्मज्ञ इति । धर्मं सामान्यविशेषरूपमशेषं जानातीति धर्मज्ञः सत्या अमोघा संधा प्रतिज्ञा यस्यासौ सत्यसंधः 'संधा प्रतिज्ञा मर्यादा' इत्यमरः । शीलवान् शीलं हि नाम महतो मन्दैः सह नीरन्ध्रेण संश्लेषः तद्वान् अनसूयकः गुणेषु दोषाविष्करणमसूया तद्रहितः बहुव्रीहौ कप् । क्षान्तः क्षमावान् क्षमा अत्राश्रितापराधसहिष्णुत्वं क्षमेरुदित्वात्पक्षे नेट् न केवलं सहिष्णुरपराधिषु सान्त्वयिता कुपितान् दुःखितांश्च प्रति सान्त्ववादी श्लक्ष्णः प्रियंवदः 'समौ श्लक्ष्णप्रियंवदौ' इत्यमरः । कृतज्ञः स्वल्पमपि सकृत्कृतमुपकारं बहुतया जानन्नित्यर्थः । विजितेन्द्रियः विषयचापलरहितः ॥ ३१ ॥

३२ ] ति० टी० मृदुः सुकरोपासनः स्थिरचित्तत्वमतिसंकटेऽप्यङ्गीकृतापरित्यागः भव्यो दृश्यः अनसूयकोऽन्यनिष्ठासूयाया अविषयः । भूतानां प्राणिनाम् ॥ ३२ ॥

गो० टी०— मृदुरिति । मृदुत्वं समाश्रितजनविश्लेषभीरुत्वं चित्तस्थैर्यं नाम अतिसंकटेऽप्यङ्गीकृतविषयपरित्यागराहित्यं सदा भव्यः कुशलः आश्रिताधीनो वा ॥ ३२ ॥

गो० टी०—प्रियवादीति । 'सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्' इत्युक्तरीत्या प्रियवादित्वेऽपि सत्यवादीत्यर्थः । प्रियवादी च चकारोऽवधारणार्थः । प्रियवाद्येव न तु सत्यमप्यप्रियं वदतीत्यर्थः । 'न ब्रूयात्सत्यमप्रियम्' इति स्मरणात् । भूतानां भवनमात्रोपाधिकानां सर्वेषां जनानां सत्यवादी सत्यं ब्रूयादितिविहितसत्यवचनः चकारेण प्रियमप्यसत्यं न वदतीत्यवधार्यते । यद्वा सत्यमिति परलोकहितमुच्यते सत्येन लोकान् जयतीतिप्रयोगानुसारात् प्रियवचनस्य निषिद्धसाधारणत्वाददृष्टविरोधिप्रियं न वदतीत्यर्थः । राघवः रघुराक्षससंवादादिषु प्रियसत्यवचनं प्रसिद्धमिति कुलागतो धर्म इत्यर्थः । एतादृशज्ञानवत्त्वं पुस्तकनिरीक्षणादिना पण्डितंमन्यतया वा न भवतीत्याह—बहुश्रुतानामिति । बहुभ्य आचार्येभ्यो बहुभिः शास्त्रैः बहुधा बहुप्रकारेण श्रुतमेषामस्तीति तेषां वृद्धानां शीलवयोवृद्धानां ब्राह्मणानामुक्तलक्षणेषु क्षत्रियेषु सत्स्वपि ब्राह्मणानेव ज्ञानार्थमुपास्त इत्यर्थः । प्रियवादीत्यादि प्रियवादी ग्रीष्मघर्मसंतप्तस्थले प्रवर्षी बलाहक इव सुशीतलं वचनं वक्तीत्यर्थः । किमीदृशवचनं दिव्यान्तःपुरस्य मातापित्रादीनां वसिष्ठादीनां वा नेत्याह भूतानां सत्तायोगिसकलपदार्थानां च प्रियवादी । किं सर्वत्र प्रियमेव वदति नेत्याह सत्यवादी भूतहिताद्दृष्टार्थवचन इत्यर्थः प्रियहितवादीति भावः । किमिदं विरुद्धं द्वयमघटितघटनासामर्थ्यादित्यपेक्षायां न तथा किंतु कुलप्रभावादित्यादि राघव इति एवंविधगुणः किं सगर्वो वर्तते नेत्याह बह्विति संभावितगुणैरतृप्तः सन् पुनरप्यतिशयाय ज्ञानिनां प्राङ्गणं गत्वा तिष्ठतीत्यर्थः । यत्किंचिच्छ्रवणमात्रेण तृप्तानां ज्ञानादिवृद्धानां 'सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः' इत्युक्तरीत्या बहुभ्यः सारग्रहणं कृतवानित्यर्थः । ब्राह्मणानां सा विद्या या विमुक्तय इत्युक्तब्रह्मविद्यानिष्ठानां ननु 'विद्यान्या शिल्पनैपुणम्' इत्युक्तान्यविद्यानिष्ठानाम् उपासिता तद्गृहं गत्वानुवर्तयिता न तु स्वगृहे तानानीय श्रोता ॥ ३३ ॥

३३ ] ति० टी०—तेनोक्तगुणसमूहेन कीर्तिः शौर्यादिजा, यशो दानादिजा प्रसिद्धिः, तेजः शौर्यम् ॥ ३३ ॥

देवासुरमनुष्याणां सर्वास्त्रेषु विशारदः । सम्यग्विद्याव्रतस्नातो यथावत्साङ्गवेदवित् ॥ ३४ ॥
गान्धर्वे च भुवि श्रेष्ठो बभूव भरताग्रजः । कल्याणाभिजनः साधुरदीनात्मा महामतिः ॥ ३५ ॥
द्विजैरभिविनीतश्च श्रेष्ठैर्धर्मार्थनैपुणैः । यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा ॥ ३६ ॥
गत्वा सौमित्रिसहितो नाविजित्य निवर्तते । संग्रामात्पुनरागत्य कुञ्जरेण रथेन वा ॥ ३७ ॥
पौरान्स्वजनवन्नित्यं कुशलं परिपृच्छति । पुत्रेष्वग्निषु दारेषु प्रेष्यशिष्यगणेषु च ॥ ३८ ॥
निखिलेनानुपूर्व्या च पिता पुत्रानिवौरसान् । शुश्रूषन्ते च वः शिष्याः कच्चिद्वर्मसु[1] दंशिताः[2] ॥ ३९ ॥
इति वः पुरुषव्याघ्रः सदा रामोऽभिभाषते । व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥ ४० ॥

रा० टी०—बह्विति । बहुश्रुतादित्रयाणां उपासिता सत्कारकारी तेन उपासनेन ॥ ३३ ॥

गो० टी०—वृद्धोपासनसिद्धान् गुणानाह—तेनेति । तेन समृद्धोपासनेन कीर्तिः औदार्यादिगुणनिमित्ता प्रथा यशः-पराक्रमादिनिबन्धना प्रथा यद्वा कीर्तिः प्रथा यशस्तत्कारणबलादानादिकं तेजः पराभिभवनसामर्थ्यम् ॥ ३४ ॥

३४ ] ति० टी०—देवासुरेत्यादि निर्धारणे षष्ठी ॥ ३४ ॥

रा० टी०—देवेति । देवादीनां सर्वास्त्रेषु देवादिज्ञानविषयीभूतनिखिलास्त्रोपलक्षितशस्त्रास्त्रादिषु विशारदो निपुणः ॥ ३४ ॥

गो० टी०—सम्यगिति । विद्याव्रतस्नातः ' वेदमधीत्य स्नायात् ' इतिस्मृतिप्रक्रियया निखिलवेदाध्ययनव्रताचरणानन्तरभाविस्नानकर्मयुक्तः सम्यक् गुरुकुलवासाच्छङ्गसहिततया साङ्गवेदवित् ' शिक्षा व्याकरणं छन्दो निरुक्तं ज्योतिषं तथा । कल्पश्चेति व्याहृतानि वेदाङ्गानि मनीषिभिः ' इत्युक्ताङ्गसहितवेदार्थज्ञः यथावत् यथासंप्रदायम् ॥ ३५ ॥

३५ ] ति० टी०—गान्धर्वे संगीतशास्त्रे कल्याणानामभिजनो वासस्थानम् । अदीनः क्षोभहेतावप्यक्षुभित आत्मा चित्तं यस्य ॥ ३५ ॥

रा० टी०—गान्धर्व इति । गान्धर्वे गानप्रकारबोधकसंगीतशास्त्रज्ञाने भुवि वैकुण्ठादिभूमिषु श्रेष्ठः कल्याणः अतिशयकल्याणविशिष्टः आभी अतिप्रकाशवान् जनः तत्सखादिर्यस्य स बभूव ॥ ३५ ॥

गो० टी०—गान्धर्वे च संगीतशास्त्रेऽपि सामगानोपयुक्तत्वादिति भावः कल्याणाभिजनः परिशुद्धोभयवंशः साधुस्वयं परिशुद्धः अदीनात्मा क्षोभहेतुष्वप्यक्षोभ्यान्तःकरणः ॥ ३६ ॥

३६–३८ ] ति० टी०—अभिविनीतः शिक्षितः धर्मेऽर्थे च नैपुणं नैपुण्यं येषां तैः । ग्रामेति लुप्तषष्ठीकं पृथक्पदम् ग्रामस्य नगरस्य वा रक्षार्थं संग्रामं यदा व्रजतीत्यर्थः ॥ ३६–३८ ॥

रा० टी०—द्विजैरिति । धर्मार्थनैपुणैः श्रेष्ठैः द्विजैः ब्राह्मणैरित्यर्थः । अभिविनीतः सर्वकार्यविषयकशिक्षां प्राप्तः सौमित्रिसहितो रामः ग्रामार्थे विवादास्पदीभूतग्रामादिप्राप्त्यर्थं यदा संग्रामं व्रजति तदैव नगरस्य विवादकारणीभूतराजपुरस्य समीपं गत्वा प्राप्य अविजित्य स्वविजयमलब्ध्वा न निवर्तते राजपुरस्य समीपं प्राप्येत्युक्त्या विवादकारणीभूतराजानां रामसंग्रामस्थितौ सामर्थ्याभावः सूचितः तेन रामस्य प्रतापातिशयः सूचितः । नैपुणशब्दः स्वार्थाण्णन्तः वाशब्द एवार्थे सार्धश्लोक एकान्वयी ॥ ३६ ॥

गो० टी०—द्विजैरिति । धर्मार्थनैपुणैः धर्मार्थप्रतिपादनकुशलैः स्वार्थे अण्प्रत्ययः श्रेष्ठैः अभिजनविद्यावृत्तयुक्तैः अभिविनीतः सर्वतः सुशिक्षितः ॥ ३७ ॥

गो० टी०—यदेति । ग्रामार्थ इत्यत्र ग्रामेत्यविभक्तिकनिर्देशः ग्रामस्य नगरस्य वार्थे प्रयोजने निमित्ते नाविजित्य निवर्तत इत्यभिधानात् रामस्य सुबाहुमारीचविषये जेतृत्ववदन्यत्रापि शत्रुविषये जेतृत्वमभूदित्यवगम्यते ॥ ३८ ॥

रा० टी०—संग्रामादिति । स्वजनवत् स्वसखादिवत् नित्यं परिपृच्छति ॥ ३७ ॥

गो० टी०—संग्रामादिति । स्फुटम् ॥ ३९ ॥

रा० टी०—पुत्रेष्विति । पुत्रादिषु आनुपूर्व्या ज्येष्ठादिक्रमेण निखिलेन कार्त्स्न्येन औरसान् पुत्रान् पितेव कुशलं परिपृच्छतीत्यनुकृष्यते तत्र प्रेष्याः भृत्याः ॥ ३८ ॥

गो० टी०—कुशलप्रश्नप्रकारमाह—पुत्रेष्विति । प्रेष्यः भृत्यः निखिलेन कार्त्स्न्येन आनुपूर्व्यात्प्रधानक्रमेण पृच्छतीत्यनुषज्यते ॥ ४० ॥

३९ ] ति० टी०—पिता औरसान्पुत्रानिव पौरान्कुशलं पृच्छतीत्यन्वयः । शुश्रूषन्ते च वः शिष्या इति ब्राह्मणान्प्रति प्रश्नः । वर्मसु दंशिता अवहिता भृत्या वः सेवन्त इति क्षत्रियान्प्रति प्रश्नः । कच्चिदिति प्रश्ने । क्वचित् ' धर्मेषु दंशिताः ' इति पाठः ॥ ३९ ॥

रा० टी०—प्रश्नान्तरमाह—शुश्रूषन्ते इति । धर्मेषु दंशिताः अनवधानतारहिताः वः शिष्याः वो युष्मान् कच्चित् शुश्रूषन्ते इति एवं प्रकारेण पुरुषव्याघ्रो रामः सदा यथोचितसमये अभिभाषते पृच्छतीत्यर्थः ॥ ३९ ॥

गो० टी०—शुश्रूषन्त इति । दंशिताः सन्नद्धाः 'संनद्धो वर्मितः सज्जो दंशितः ' इत्यमरः ॥ ४१ ॥

४० ] ति० टी०—व्यसनं दुःखम् ॥ ४० ॥

१ कर्मस्विति गो. धर्मेष्विति रा. पाठः । २ नः इति गो. पाठः ।

उत्सवेषु च सर्वेषु पितेव परितुष्यति । सत्यवादी महेष्वासो वृद्धसेवी जितेन्द्रियः ॥ ४१ ॥
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मनाश्रितः । सम्यग्योक्ता श्रेयसां च न विगृह्यकथारुचिः ॥ ४२ ॥
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा । सुभ्रूरायतताम्राक्षः साक्षाद्विष्णुरिव स्वयम् ॥ ४३ ॥
रामो लोकाभिरामोऽयं शौर्यवीर्यपराक्रमैः । प्रजापालनसंयुक्तो न रागोपहतेन्द्रियः ॥ ४४ ॥
शक्तस्त्रैलोक्यमप्येष भोक्तुं किं नु महीमिमाम् । नास्य क्रोधः प्रसादश्च निरर्थोऽस्ति कदाचन ॥ ४५ ॥
हन्त्येष नियमाद्वध्यानवध्येषु न कुप्यति । युनक्त्यर्थैः प्रहृष्टश्च तमसौ यत्र तुष्यति ॥ ४६ ॥

---

रा० टी०–व्यसनेष्विति । मनुष्याणां भृत्यादिवर्गाणां व्यसनेषु प्राप्तेषु सत्सु भृशं दुःखितो भवति सर्वेषु उत्सवेषु च पितेव परितुष्यति ॥ ४० ॥

गो० टी०–सत्पुरुषसंभावितगुणानभिधाय रामस्य साधारणगुणानाह–व्यसनेष्विति । मनुष्याणां दिव्यान्तःपुरस्थितमातृप्रभृतीनां न भवति किंतु मनुष्याणां आढ्यदरिद्रद्विजादितारतम्यानादरेण मनुष्यजात्याक्रान्तानां व्यसनेषु अल्पानल्पविचारमन्तरेण व्यसनपदार्थेषु भृशं व्यसनवतो यादृशं तादृशं न किंतु पङ्कमग्नगज इव स्वमाहात्म्यानुगुणं यावत्सत्ताकं च दुःखितो भवति नतु दिनक्रमेण विस्मरति इदं दुःखं मत्परिपालनवैगुण्येन खल्वागतमिति नितरां दुःखितो भवति हीरेषा तु ममातुलेति वक्ष्यति उत्सवेषु पुत्रजननादिषु सर्वेषु पुत्रीजननाद्यनादरविरहेण द्वारि चूतकिसलयमालाबन्धनमुपधीकृत्य प्रवृत्तेष्वित्यर्थः । पितेव पुत्रादीनां पुत्राद्युत्सवेषु यः पितुः परितोषो जायते स द्विविधः पामराणामर्थलाभलौकिकसहायनिमित्तः पण्डितानां स्वोत्तारकत्वनिमित्तश्च, एवमुभयविधपरितोषो रामस्याप्यस्ति 'प्रनृत्यन्ति पितामहाः' 'यद्येकोऽपि गयां व्रजेत्' इतिवत् 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। बहुजन्मसहस्रान्ते दिष्ट्या यस्तु प्रपद्यते' इतिप्रत्याशासंभवात् अत्र परिशब्दो वीप्सायां वर्तते । अत्रापि भृशमित्यनुवर्तते ॥४२॥

४१ ] ति० टी०–यथा पुत्रसुखेन पितानन्दवान्भवति तथा प्रजासुखेन राम इति भावः ॥ ४१ ॥

रा० टी०–सत्येति । सत्यवादी सत्यमेव वदति तच्छीलः स्मितपूर्वाभिभाषी स्मितपूर्वमभिभाषते तच्छीलः सर्वात्मना सर्वप्रयत्नेन धर्ममाश्रितः ॥ ४१ ॥

गो० टी०–सत्यवादीति । अतिसंकटावस्थायामपि सत्यवचनशीलः सर्वात्मना धर्मं श्रितः अतिदुर्घटदशायामपि धर्मं न त्यजतीत्यर्थः ॥ ४३ ॥

४२–४३ ] ति० टी०–न विगृह्यकथारुचिर्विग्रहो यथा-कलहस्तं कृत्वा जल्पवितण्डादिकथारुचिर्यथा प्राकृतस्तथा नेत्यर्थः । 'न विगर्ह्यकथारुचिः' इतिपाठे निन्द्यकथारुचिर्नेत्यर्थः ॥ ४२–४३ ॥

रा० टी०–सम्यगिति । श्रेयसां कल्याणानां सम्यग्योक्ता प्रापक इत्यर्थः । विगृह्यकथारुचिः विगृह्यकथायां विरोधपूर्वकजल्पादौ रुचिर्न उत्तरोत्तरयुक्तौ वाचस्पतिः बृहस्पतिरेव वक्ता 'न विगर्ह्यकथारुचिः' इति पाठे निन्द्यकथारुचिरित्यर्थं इति भट्टः ॥ ४२ ॥

गो० टी०–सम्यगिति । श्रेयसां सम्यग्योक्ता संपादकः न विगृह्य कथारुचिः 'न विगृह्यकथां कुर्यात्' इति निषिद्धयोर्जल्पवितण्डयोर्निवृत्तरागः । निवृत्तरागत्वं किमवक्तृत्वान्नेत्याह–उत्तरेति ॥ ४४ ॥

रा० टी०–सुभ्रूरिति । शोभने भ्रुवौ यस्य सः आयतताम्राक्षः आयते विस्तृते ताम्रे अरुणे अक्षिणी यस्य सः ताम्रशब्दस्य कमलपरत्वे आयतकमलपत्रसदृशनेत्रवानित्यर्थः । अयं लोकाभिरामो राम इव शौर्यवीर्यपराक्रमैरुपलक्षितः साक्षात्स्वयं विष्णुः ॥ ४३ ॥

गो० टी०–उक्तकल्याणगुणानुरूपाकारसौभाग्यमाह–सुभ्रूरिति । शूरस्य भावः शौर्यं तच्च मरणनिर्भयत्वं 'शूरो मरणनिर्भयात्' इतिवचनात् वीर्यं स्वयमविकृतः सन् परान् विविधमीरयति विद्रावयतीति वीरः तस्य भावो वीर्यं दुष्प्रवेशचक्रव्यूहादिविशिष्टसैन्ययुक्तान् देवासुरानपि येनोत्साहेनाक्रामति स पराक्रमः ॥ ४९ ॥

४४–४५ ] ति० टी०–शौर्यं युद्धे निर्भयप्रवेशसामर्थ्यम् वीर्यं स्वस्याविकार एव परस्य विकारापादनम् पराक्रमो युद्धे शत्रुसंचारः रागो विषयेच्छा ॥ ४४–४६ ॥

रा० टी०–प्रजेति । प्रजापालनसंयुक्तोऽपि रागोपहतेन्द्रियः रागेण अत्यनुरागेण उपहतानि पराभूतानि इन्द्रियाणि यस्य स न. अत एव एष रामः त्रैलोक्यं भोक्तुं पालयितुं शक्तः समर्थः इमां महीं भोक्तुं समर्थश्चेत्किमु वक्तव्यम् ॥ ४४ ॥

गो० टी०–प्रजेति । रामो राज्यमुपासित्वेत्युक्तरीत्या प्रजापालनतत्त्वज्ञः[1] न रागोपहतेन्द्रियः इन्द्रियचापलरहित इति न समासः भोक्तुं पालयितुम् ॥ ४६ ॥

रा० टी०–नेति । निरर्थः निष्प्रयोजनः अस्य रामस्य क्रोधः प्रसादश्च कदाचन नास्ति एष रामः नियमाद्वध्यान् हन्ति अवध्येषु अवध्येभ्यः न कुप्यति 'नावध्ये खलु' इति भूषणपाठः ॥ ४९ ॥

गो० टी०–नेति । नियमात् नियमेन वध्यान् शास्त्रतो वध्यान् हन्त्येव अवध्ये शास्त्रतः अवध्ये विषये ॥ ४७ ॥

४६ ] ति०टी०–क्रोधप्रसादसार्थक्यमेवोपपादयति–हन्तीत्यादि । यत्र यस्मिन्विषये संतोषस्तमर्थैः पूरयतीत्यर्थः ॥ ४६ ॥

---

१ तत्त्वज्ञ इति गो. पाठः । २ वध्ये न चेति गो. पाठः ।

दान्तैः सर्वप्रजाकान्तैः प्रीतिसंजननैर्नृणाम् । गुणैर्विरोचते रामो दीप्तः सूर्य इवांशुभिः ॥ ४७ ॥
तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् । लोकपालोपमं नाथमकामयत मेदिनी ॥ ४८ ॥
वत्सः श्रेयसि जातस्ते दिष्ट्यासौ तव राघवः । दिष्ट्या पुत्रगुणैर्युक्तो मारीच इव कश्यपः ॥ ४९ ॥
बलमारोग्यमायुश्च रामस्य विदितात्मनः । देवासुरमनुष्येषु सगन्धर्वोरगेषु च ॥ ५० ॥
आशंसते जनः सर्वो राष्ट्रे पुरवरे तथा । आभ्यन्तरश्च बाह्यश्च पौरजानपदो जनः ॥ ५१ ॥
स्त्रियो वृद्धास्तरुण्यश्च सायं प्रातः समाहिताः । सर्वा देवान्नमस्यन्ति रामस्यार्थे मनस्विनः ॥
तेषां तद्याचितं देव त्वत्प्रसादात्समृद्ध्यताम् । ॥ ५२ ॥

रा०टी०—युनक्तीति । असौ रामः यत्र यस्मिन् जने तुष्यति तं जनं प्रहृष्टः सन् अर्थैस्तदीप्सितवस्तुभिर्युनक्ति संयोजयति । अर्धं पृथक्—दान्तैरिति । सर्वप्रजाकान्तैः निखिलजनेच्छाविषयीभूतैः अत एव नृणां प्रीतिसंजननैः प्रीत्युत्पादकैः दान्तैः यथोचितदण्डकारणीभूतैः गुणैः अंशुभिर्दीप्तः सूर्य इव रामो विरोचते शोभते 'शान्तैः' इति पाठान्तरम् ॥ ४६ ॥

गो० टी०—युनक्तीति । यत्र यस्मिन् पुरुषे तुष्यति तं तुष्टोऽसौ अर्थैरभिलषितपदार्थैः युनक्ति योजयति ॥ ४८ ॥

४७ ] ति० टी०—दान्तैः स्वमनोदमनैः ॥ ४७ ॥

गो० टी०—शान्तैरिति । शान्तैः शमप्रधानैः सर्वप्रजानां कान्तैः काम्यमानैः सर्वजनभोग्यैरित्यर्थः । अत एव प्रीतिसंजननैः 'दान्तः' इतिपाठे यमनियमादिरूपतपःक्लेशसहः 'तपःक्लेशसहो दान्तः' इत्यमरः । दीप्तः ग्रीष्मादिकालिकः ॥ ४९ ॥

४८ ] ति० टी०—मेदिनी तत्स्थो जनः ॥ ४८ ॥

रा० टी०—तमिति । एवंगुणसंपन्नं रामं मेदिनी पृथ्वी नाथं स्वपतिमकामयत ऐच्छत् ॥ ४७ ॥

गो० टी०—तमिति । मेदिनी मेदिनीस्थजनता ॥ ५० ॥

४९ ] ति० टी०—असौ ते वत्सो दिष्ट्यास्मद्भाग्येन श्रेयसि प्रजारक्षणरूपे समर्थो जातः । किं चासौ राघवस्तव दिष्ट्या भाग्येन मरीचिप्रजापतेः पुत्रः कश्यप इव पुत्रगुणैर्युक्तो जात इत्यर्थः ॥ ४९ ॥

रा० टी०—वत्स इति । ते वत्सः श्रेयसि सर्वकल्याणार्थं तव दिष्ट्या भाग्यवशेन जातः प्रादुर्भूतः दिष्ट्या भाग्यवशेनैव असौ राघवः मारीचः मरीचिपुत्रः कश्यप इव पुत्रगुणैर्युक्तः आसीदिति शेषः ॥ ४८ ॥

गो० टी०—वत्स इति । तव दिष्ट्या भाग्येन श्रेयसि श्रेयोनिमित्तं वत्सः पुत्रो जातः पुत्रगुणैर्युक्तः पुन्नाम्नो नरकात्त्रायत इति व्युत्पत्तिसिद्धपितृतारकगुणैर्युक्तः मारीचः मरीचेः पुत्रः काश्यपः कश्यपगोत्रः ॥ ५१ ॥

[illegible]०—५१ ] ति० टी०—देवासुरादिषु राष्ट्रे पुरवरे च वर्तमान[illegible] [illegible]ऽपि जनो रामस्य बलाद्याशंसते । आभ्यन्तरः सेवक[illegible] ५०—५१ ॥

रा० टी०—बलमिति । देवादिषु विद्यमानः सर्वो जनः विदितात्मनो रामस्य बलादि आशंसते कथयति । सार्धश्लोक एकान्वयी ॥ ४९ ॥

गो० टी०—बलमितिश्लोकद्वयमेकान्वयम् । देवासुरमनुष्येषु सर्वो जनः राष्ट्रे इतरराष्ट्रे पुरवरे इतरपुरवरे च वर्तमानो जनः आभ्यन्तरः अन्तःपुरचारी जनः पौरजानपदः स्वपुरस्वजनपदस्थो जनश्च विदितात्मनः प्रसिद्धशीलस्य रामस्य बलादिकमाशंसते प्रार्थयते । मनुष्यशब्दोऽत्र देवादिसाहचर्याद्विवचनः ॥ ५२ ॥ ५३ ॥

रा० टी०—आभ्यन्तर इति । पौरजानपदः पुरभवो जनपदभवश्च आभ्यन्तरः सेवकः बाह्यः तद्भिन्नश्च जनवृद्धास्तरुण्यश्च स्त्रियः रामस्यार्थे सर्वान् देवान् नमस्यन्ति अतस्तेषां सेवकादीनामायाचितं प्रार्थितं त्वत्प्रसादात् त्वत्कृपया समृध्यतां संपद्यताम् अत एव हे देव हे राजोत्तम ! सर्वशत्रुनिबर्हणं रामं यौवराज्यस्थं पश्यामः द्रष्टा स्मः । "वर्तमानसामीप्ये" इति भविष्यति लट् तेषामित्यत्र "पुमान्स्त्रिया—" इत्येकशेषः । एतेन रामे सर्वेषां परमानुरागः सूचितः ॥ ५१—५३ ॥

५२ ] ति० टी०—रामस्यार्थे रामस्य बलादिप्रयोजनार्थे याचितमभिप्रार्थितं रामाभिषेकरूपं समृद्ध्यतां संपद्यताम् ॥ ५२ ॥

गो० टी०—स्त्रिय इति । स्त्रियः अतिगम्भीरतया स्वहृदयं व्यक्तमनाविष्कुर्वत्यः वृद्धाः करणपाटवरहिताः अत्यलसतया सर्वत्रानादरं कुर्वत्यस्तरुण्यः यौवनमदान्धतया विवेकशून्याः सायंप्रातरित्युपलक्षणं त्रिसंध्यमित्यर्थः । तेन मङ्गलाशासनकालनियमोक्तिः । समाहिताः सावधानाः अनेन रामगुणगृहीततया स्वारसिकप्रेमकत्वेन समनस्कत्वमुक्तम् सर्वान् देवानिति प्रेमकलुषिततया न्यूनाधिकविभागमन्तरेण लौकिकवैदिकविभागमन्तरेण च नमस्यन्तीति रामरक्ष्यानेव देवान् रामरक्षकान् मन्यन्त इति प्रेमान्ध्यकाष्ठा दर्शिता । रामस्यार्थे रामस्य बलारोग्यादिप्रयोजनसिद्ध्यैव स्वप्रयोजनं नान्तरीयकमिति तस्यैव प्रयोजनत्वाश्रिय यशस्विनः देवतान्तरनमस्कारस्य रामप्रयोजनपर्यवसितत्वात् रामप्रेमपारवश्येन कृतत्वाच्च स्वरूपविरुद्धदेवतान्तरभजनरूपमयशो नास्तीत्यर्थः ॥ ५४ ॥

[१] शान्तैरिति गो. पाठः । २ विलम्बे इति गो. पाठः । ३ राघवेति गो. पाठः । ४ काश्यप इति गो. पाठः । ५ सर्वानिति गो. रा. पाठः
६ बह्वि[illegible] इति गो. पाठः । ७ आयाचितमिति गो. स. पाठः ।

राममिन्दीवरश्यामं सर्वशत्रुनिबर्हणम् । पश्यामो यौवराज्यस्थं तव राजोत्तमात्मजम् ॥ ५३ ॥
तं देवदेवोपममात्मजं ते सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं मुदाभिषेक्तुं वरद त्वमर्हसि ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वितीयः सर्गः ॥ २ ॥

## तृतीयः सर्गः ।

दशरथेन रामयौवराज्याभिषेकं प्रत्यावेदितो वसिष्ठस्तत्संभारसंपादनार्थं सुमन्त्रमादिदेश । संदिष्टसुमन्त्रेण प्रापितं रामं दशरथो यौवराज्याभिषेकनिश्चयं निवेद्य प्राप्तकालं किंचिदुपदिदेश । रामसखाः कौसल्यां रामयौवराज्यप्राप्तिं न्यवेदयन् । पित्रोपदिष्टमवधार्यान्ते पितरं प्रणम्य रामः स्वावासं जगाम ।

तेषामञ्जलिपद्मानि प्रगृहीतानि सर्वशः । प्रतिगृह्याब्रवीद्राजा तेभ्यः प्रियहितं वचः ॥ १ ॥
अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम । यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥ २ ॥
इति प्रत्यर्चितान्राजा ब्राह्मणानिदमब्रवीत् । वसिष्ठं वामदेवं च तेषामेवोपशृण्वताम् ॥ ३ ॥
चैत्रः श्रीमानयं मासः पुण्यः पुष्पितकाननः । यौवराज्याय रामस्य सर्वमेवोपकल्प्यताम् ॥ ४ ॥

गो० टी०–तेषामिति । अयाचितं रामाभिषेकरूपाभिमतार्थप्रार्थनं समृद्ध्यतां सफलं भवतु ॥ ५९ ॥

५३ ] ति० टी०–राजोत्तमेति संबोधनम् ॥ ५३ ॥

गो० टी०–राममिति । इन्दीवरश्याममिति समुदायशोभोक्ता सर्वशत्रुनिबर्हणमिति स्वसौन्दर्यातिशयदर्शनमग्नचित्तत्वरूपकामादिशत्रुनिबर्हणमित्यर्थः । पश्यामः द्रक्ष्यामः “ वर्तमानसामीप्ये वर्तमानवद्वा ” इति भविष्यदर्थे लट् ॥ ५६ ॥

५४ ] ति० टी०–देवदेवो विष्णुस्तत्सदृशमत एव सर्वलोकहिते निविष्टमुदारैर्गुणैर्जुष्टं युक्तमुदारैर्महद्भिश्च परिगृहीतम् ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येअयोध्याकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०–तमिति । देवदेवोपमं देवदेवो विष्णुरुपमा उपमेयं यस्य तं सर्वस्य लोकस्य हिते निविष्टं संस्थितमुदारजुष्टं महद्भिः सेवितं ते आत्मजं रामं नोऽस्माकं हिताय क्षिप्रमभिषेक्तुं त्वमर्हसि ॥ ५४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्वितीयः सर्गः ॥ २ ॥

गो० टी०–तमिति । देवेति संबुद्धिः देवदेवः विष्णुः तत्सदृशमिति वा निविष्टं दत्तावधानमित्यर्थः । उदारजुष्टं औदार्ययुक्तं भावप्रधानो निर्देशः उदारैर्जुष्टं सेवितमिति वा ॥ ६७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्वितीयः सर्गः ॥ २ ॥

१–२ ] ति० टी०–अञ्जलिपद्मान्यञ्जलिरूपाणि पद्मानि । पद्माकारानञ्जलीनिति यावत् । प्रगृहीतानि प्रकर्षेण शिरसि बद्धानि प्रतिगृह्य वीक्षणवचनप्रत्यञ्जलिभिर्यथायोगं तासां प्रतिग्रहः ॥ १–२ ॥

रा० टी०–तेषामिति । प्रगृहीतानि प्रकर्षेण गृहीतानि बध्वा शिरोदेशे आनीतानीत्यर्थः । तेषां जनानामञ्जलिपद्मानि अञ्जलयः पद्मानीव तानि प्रतिगृह्य ज्ञात्वा तेभ्यः प्रियहितं वचो राजाऽब्रवीत् ॥ १ ॥

गो० टी०–एवं निश्चिताभिषेकस्य संभारसंभरणप्रवृत्तिस्तृतीये–तेषामिति । प्रगृहीतानि प्रकर्षेण गृहीतानि शिरसि बद्धानीत्यर्थः । अञ्जलिरूपाणि पद्मानि अञ्जलिपद्मानि अञ्जलीनां पद्ममुकुलाकारत्वादत्रत्यपद्मशब्दः पद्ममुकुलपरः प्रतिगृह्य वीक्षणवचनप्रत्यञ्जलिभिर्यथायोगमञ्जलीनां प्रतिग्रहः ॥ १ ॥

रा० टी०–तद्वचनाकारमाह–अहो इति । यत् यस्माद्धेतोः ज्येष्ठं प्रियं पुत्रं रामं यौवराज्यस्थमिच्छथ तस्माद्धेतोः मम प्रभावः अतुलः अत एव अहं परमप्रीतोऽस्मि ॥ २ ॥

गो० टी०–अहो इति । अहोस्मीति संधिरार्षः ॥ २ ॥

३–४ ] ति० टी०–इति प्रत्यर्चितान्पौरजानपदान्कृत्वा ब्राह्मणानिदमब्रवीत् । तेषां पौरादीनां शृण्वताम् पुर इत्यर्थः । चकारसंग्राह्यमपेक्ष्य ब्राह्मणानिति बहुवचनम् ॥ ३–४ ॥

रा० टी०–इतीति । तान् पौरजानपदान् इति अनेन प्रकारेण प्रत्यर्च्य तेषामुपशृण्वतां सतामेव वसिष्ठं वामदेवं चकारेणान्यानपि ब्राह्मणानिदमब्रवीत् । ‘ प्रत्यर्चितान् ’ इति भट्टपाठः ॥ ३ ॥

गो० टी०–इतीति । राजा दशरथ इति पूर्वोक्तरीत्या तान् प्रार्थनापरान् ब्राह्मणान् अभ्यर्च्य मधुरवचनैः संमान्य तेषामेवोपशृण्वतां तेषु उपशृण्वत्सु सत्स्वेव वसिष्ठं वामदेवं चेदमब्रवीत् ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–चैत्र इति । पुष्पितकाननः

राज्ञस्तूपरते वाक्ये जनघोषो महानभूत् । शनैस्तस्मिन्प्रशान्ते च जनघोषे जनाधिपः ॥ ५ ॥
वसिष्ठं मुनिशार्दूलं राजा वचनमब्रवीत् । अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ॥ ६ ॥
तदद्य भगवन्सर्वमाज्ञापयितुमर्हसि । तच्छ्रुत्वा भूमिपालस्य वसिष्ठो मुनिसत्तमः ॥ ७ ॥
आदिदेशाग्रतो राज्ञः स्थितान्युक्तान्कृताञ्जलीन् । सुवर्णादीनि रत्नानि बलीन्सर्वौषधीरपि ॥ ८ ॥
शुक्लमाल्यानि लाजांश्च पृथक्च मधुसर्पिषी । अहतानि च वासांसि रथं सर्वायुधान्यपि ॥ ९ ॥
चतुरङ्गबलं चैव गजं च शुभलक्षणम् । चामरव्यजने चोभे ध्वजं छत्रं च पाण्डुरम् ॥ १० ॥
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् । हिरण्यशृङ्गमृषभं समग्रं व्याघ्रचर्म च ॥ ११ ॥

---

पुष्पविशिष्टकाननविशिष्टः अत एव श्रीमान् अतिशोभाविशिष्टः पुण्यः अयं चैत्रो मासः अस्तीति शेषः अतः रामस्य यौवराज्याय सर्वं सामग्रीजातमुपकल्प्यताम् ॥ ४ ॥

गो० टी०—अभिषेकविषयनिरतिशयादरेण तदुचितकालं प्रशंसति—चैत्र इति । चैत्रः यथेतरेभ्यः प्रधानभूतो रामः तथा मासान्तरेभ्योऽयं मासः श्रीमान् यथा सर्वसुखावहत्वाद्रामः सर्वेषां राजा तथा सर्वसुखकरत्वादसौ सर्वमासानां राजा अयं मासः अभिषेकमनोरथसमय एव सन्निहितः अयं मासः अवतारहेतुरेवाभिषेकहेतुः पुण्यः रमणीयः पुण्यवर्धनो वा पुष्पितकाननः अस्मत्प्रयत्नालंकृतनगरवैलक्षण्येन स्वयमेवालकृतवनः, यद्वा रामस्य कनककिरीटधारणसमये स्वयं कुसुममुकुटधारी वनप्रदेशो जातः ॥ ४ ॥

५ ] ति० टी०—जनघोषो रामाभिषेकसंभारोपकल्पनाज्ञाश्रवणजः ॥ ५ ॥

रा० टी०—राज्ञ इति । राज्ञः वाक्ये उपरते निवृत्ते सति महान् जनघोषः अभूत् । अर्धं पृथक्—शनैरिति । तस्मिन् जनघोषे शनैः प्रशान्ते सति राजा सर्वविषयकानुरागवान् जनाधिपो दशरथः ॥ ५ ॥

गो० टी०—राज्ञ इति । वसिष्ठशब्दो वामदेवस्याप्युपलक्षणपरः वसिष्ठं वामदेवमिति द्वयोः प्रस्तुतत्वात् एवं व्यादिश्य विप्रौ ताविस्युपरिवक्ष्यमाणत्वाच्च प्राधान्याद्वसिष्ठस्योपादानं जनघोषः चिरप्रार्थितरामाभिषेकविषयोऽस्मन्मनोरथः फलित इत्येवंरूपः ॥ ५ ॥

६–७ ] ति० टी०—वसिष्ठमिति वामदेवोपलक्षणम् अग्र एवं व्यादिश्य विप्रौ त्विस्युक्तेः । परिच्छद उपकरणम् ॥६–७॥

रा० टी०—मुनिशार्दूलं मुनिश्रेष्ठं वसिष्ठमब्रवीत् । तद्वचनाकारमाह—अभिषेकायेति।रामस्य अभिषेकाय अभिषेकं सपरिच्छदमुपकरणसहितं यत् कर्म तत्सर्वमद्य आज्ञापयितुमर्हसि॥६॥

गो० टी०—अभिषेकायेति । सपरिच्छदं सोपकरणम्॥६॥

रा० टी०—तदितिभूमिपालस्य तद्वाक्यं श्रुत्वा मुनिसत्तमो वसिष्ठः राज्ञः अग्रतः स्थितान् युक्तान् आज्ञापितसंपादने नियुक्तान्कृताञ्जलीन्मन्त्रिणः आदिदेश आज्ञापयामास ॥ ७ ॥

गो० टी०—तदिति । युक्तान् राजकार्यनियुक्तान् सुमन्त्रादीन् अधिकारिण इति यावत् ॥ ७ ॥

८ ] ति० टी०—युक्तान्सावधानान् मन्त्रिण इति शेषः । बलीन्पूजाद्रव्याणि विघ्नशामकबल्यर्थानि ॥ ८ ॥

रा० टी०—तदिति । तदाज्ञापनप्रकारमाह—सुवर्णेति । सुवर्णादिनि सुवर्णप्रभृतीनि रत्नानि बलीन्पूजनद्रव्याणि सर्वौषधीः अभिषेकोचितौषधिजातानि ॥ ८ ॥

गो० टी०—सुवर्णादीनीति । बलीन् उपहारान् "करोपहारयोः पुंसि बलिः" इत्यमरः । ओषधयः व्रीहिमुद्गादयः शुक्लमाल्यांश्चेति लिङ्गव्यत्यय आर्षः पृथक् पृथक् पात्रगृहीते मधुसर्पिषी क्षौद्रघृते अहतानि 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् । अहतं तद्विजानीयाद्दैवे पित्र्ये च कर्मणि' इत्युक्तजलप्रक्षालनादिगुणयुक्तानि । चामरव्यजने चामररूपव्यजने शातकुम्भानां सौवर्णानां हिरण्यशृङ्गं हिरण्यालंकृतशृङ्गं समग्रं संपूर्णावयवमुपस्थापयत प्रापयत अभ्यगारमग्निहोत्रगृहमन्यत्र गन्धपुष्पादिकमेष्टव्यंअपेक्षणीयम् ॥ ८–१२ ॥

९ ] ति० टी०—पृथकपृथकपात्रगृहीते अहतानि सदशानि तदानीमेव तन्तुवाययन्त्रादुद्धृतानि ॥ ९ ॥

रा० टी०—शुक्लमाल्यानि श्वेतपुष्पाणि लाजांश्च पृथक् अमिश्रे मधुसर्पिषी अहतानि सदशानि तत्क्षणं तन्तुवाययन्त्रादुद्धृतानीत्यर्थः । वासांसि च रथादीनि च ॥ ९ ॥

१० ] ति० टी०—चामरव्यजने चमरपुच्छनिर्मिते व्यजने ॥ १० ॥

रा० टी०—चतुरङ्गबलं रथाद्यङ्गसहितसैन्यं शुभलक्षणं गजं च उभे चामरव्यजने चमरीपुच्छनिर्मितव्यजनविशेषौ किंच चामरं च व्यजनं च ते अत्र चामरस्य द्वित्वविशिष्टत्वेऽप्येकवचनं जात्यभिप्रायेण ॥ १० ॥

११ ] ति० टी०—शातकुम्भानां सौवर्णानाम् अग्निवर्चसामित्यनेन सुवर्णस्यात्युत्तमत्वं ध्वनितम् । समग्रं नखादिसहितमखण्डम् ॥ ११ ॥

रा० टी०—शतमिति। शातकुम्भानां सौवर्णानामग्निवर्चसां पावकतेजस्कानां कुम्भानां घटानां शतं हिरण्यशृङ्गं हिरण्यालंकृत-

---

१ द्विजेति क. पाठः ।

यच्चान्यत्किंचिदेष्टव्यं तत्सर्वमुपकल्प्यताम् । उपस्थापयत प्रातरग्न्यगारे महीपतेः ॥ १२ ॥
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च । चन्दनस्रग्भिरर्च्यन्तां धूपैश्च घ्राणहारिभिः ॥ १३ ॥
प्रशस्तमन्नं गुणवद्दधिक्षीरोपसेचनम् । द्विजानां शतसाहस्रं यत्प्रकाममलं भवेत् ॥ १४ ॥
सत्कृत्य द्विजमुख्यानां श्वः प्रभाते प्रदीयताम् । घृतं दधि च लाजाश्च दक्षिणाश्चापि पुष्कलाः॥ १५ ॥
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् । ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च॥१६॥
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् । सर्वे च तालापचरा गणिकाश्च स्वलंकृताः ॥ १७ ॥
कक्ष्यां द्वितीयामासाद्य तिष्ठन्तु नृपवेश्मनः । देवायतनचैत्येषु सान्नभक्ष्याः सदक्षिणाः ॥ १८ ॥
उपस्थापयितव्याः स्युर्माल्ययोग्याः पृथक्पृथक् । दीर्घासिबद्धगोधाश्च संनद्धा मृष्टवाससः ॥ १९ ॥

शृङ्गविशिष्टम् ऋषभं वृषभं समग्रखण्डम् नखादिसहितमित्यर्थः । व्याघ्रचर्म च 'ऋषभः स्वरभेदे स्यादष्टवर्गौषधे वृषे' इति विश्वः ॥ ११ ॥

१२ ] ति० टी०—अन्यदनुक्तमपि लोकप्रसिद्धं गन्धपुष्पादि एष्टव्यमवश्यापेक्षितं तदित्यर्थः । अग्न्यगारेऽग्निहोत्रगृहे उपस्थापयत प्रापयत ॥ १२ ॥

रा० टी०—यदिति । एष्टव्यं नेयमन्यद्यत्किंचित्प्रसिद्धं चन्दनादि तदपि उपकल्प्यतां संपाद्यताम् । तदवधिं बोधयन्नाह—महीपतेः अभ्यागारे प्रातः उपस्थापयत सामग्रीजातमिति शेषः ॥ १२ ॥

१३ ] ति० टी०—अन्तःपुरं राजवेश्म घ्राणहारिभिरतिसुगन्धैः ॥ १३ ॥

रा० टी०—अन्तरिति । अन्तःपुरस्य राजगृहस्य नगरस्य च द्वाराणि घ्राणहारिभिः अतिसुगन्धविशिष्टैरित्यर्थः । चन्दनस्रग्भिः चन्दनैः स्रग्भिश्च धूपैश्च अर्च्यन्ताम् ॥ १३ ॥

गो० टी०—अन्तःपुरेति । अन्तःपुरस्य राजगृहस्य सर्वस्य नगरस्य द्वाराणि सर्वाणि नगरद्वाराणीत्यर्थः । घ्राणहारिभिः घ्राणद्वारा पुरुषाकर्षकैः ॥ १३ ॥

१४–१६ ] ति० टी०—प्रशस्तं दृश्यं गुणवद्युक्तसंस्कारं दध्ना क्षीरेण चोपसेचनं संस्कारो यस्य तत् । द्विजानां शतसाहस्रं प्रति यत्प्रकाममभिमतमलं पर्याप्तं च भवेत्तत्संपाद्य द्विजमुख्यानां तेभ्यः सत्कृत्य प्रातर्दीयताम् ॥ १४–१६ ॥

रा० टी०—प्रशस्तमिति । द्विजानां शतसाहस्रं प्रतीयते प्रकामं यथेच्छमलं पूर्णं भवेत् तत् दधिक्षीरोपसेचनं दधिक्षीराभ्यामुपसेचनं संस्कारो यस्य तत् प्रशस्तं गुणवत् आलस्याद्यपहारकमन्नं श्वः । अनागतदिवसे प्रभाते प्रातःकाले द्विजमुख्यानां द्विजमुख्येभ्यः सत्कृत्य प्रदीयतां घृतादयः पुष्कला विपुला दक्षिणाश्च प्रदीयन्ताम् । श्लोकद्वयमेकान्वयि ॥१४॥१५॥

गो० टी०—प्रशस्तमिति । सहस्रमेव साहस्रं शतसाहस्रशब्दोऽपरिमितवचनः विषयसप्तमी अलं पर्याप्तम् 'अलंभूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः । शतसाहस्रविषये प्रकाममत्यर्थं पर्याप्तं प्राशस्त्यादिगुणविशिष्टं यदन्नं भवेत्तत्संपाद्यतामित्यर्थः ॥ १४ ॥

रा० टी०—सूर्ये इति । श्वः अव्यवहितागामिदिवसे सूर्ये अभ्युदितमात्रे सति स्वस्तिवाचनं भविता अतः ब्राह्मणाः निमन्त्र्यन्ताम् आसनानि च कल्प्यन्ताम् ॥ १६ ॥

गो० टी०—सत्कृत्येति । द्विजमुख्यानां द्विजमुख्येभ्यः सत्कृत्य दीयतां तदन्नमिति शेषः । पुष्कलाः संपूर्णाः ॥ १५ ॥

गो० टी०—सूर्ये इत्यादि । सूर्ये अभ्युदितमात्रे सूर्योदयानन्तरमेव श्वः परेद्युः स्वस्तिवाचनं भविता तदर्थं ब्राह्मणाश्च निमन्त्र्यन्तामाहूयन्ताम् आसनानि तेषामिति शेषः आबध्यन्तां प्रतिगृहमिति शेषः ॥ १६ ॥

१७ ] ति० टी०—तालापचरास्तालजीविनः ॥ १७ ॥

रा० टी०—आबध्यन्तामिति । पताकाः आबध्यन्ताम् । अर्धं पृथक्—सर्वे इति । सर्वे तालावचराः तालैः अवचरन्ति जीवन्ति तच्छीलिनः संगीतनिपुणा इत्यर्थः । स्वलंकृताः गणिकाश्च नृपवेश्मनः द्वितीयां कक्षामासाद्य प्राप्य तिष्ठन्तु ॥ १७ ॥

गो० टी०—सर्वे इति । तालैरवचरन्ति जीवन्तीति तालावचराः नर्तकादयः कक्ष्यां द्वितीयामिति अन्तःकक्ष्यायामभिषेकप्रवृत्तेस्तत्र च ब्राह्मणैर्वस्तव्यत्वादिति भावः ॥ १७ ॥

१८ ] ति० टी०—कक्ष्यां द्वितीयामन्तःकक्ष्यायामभिषेकस्थाने ब्राह्मणानामेव वासादिति भावः । चैत्या रथ्यावृक्षाः अन्नमोदनं भक्ष्यं च तत्सहिताः दक्षिणा तत्सहिताः ॥ १८ ॥

रा० टी०—देवेति । देवायतनचैत्येषु देवायतनेषु देवालयेषु चैत्येषु चतुष्पथेषु च माल्ययोग्याः माल्योपलक्षितपूजनार्हाः देवताः सान्नभक्ष्याः अन्नभक्ष्यसहिताः सदक्षिणा दक्षिणासहिताः कृत्वा पृथक् पृथक् उपस्थापयितव्याः स्युः । तत्रान्नमोदनं भक्ष्यमपूपादि ॥ १८ ॥

गो० टी०—देवायतनचैत्येषु देवगृहेषु चतुष्पथेषु चेत्यर्थः । अन्नैर्भक्ष्यैः सह वर्तन्त इति सान्नभक्ष्याः अन्नमोदकहस्ता इति यावत् । माल्यप्रदानयोग्याः माल्ययोग्याः मध्यमपदलोपिसमासः । माल्यार्थसाधनानि पृथक्पृथगिति देवायतनचैत्ययोरिति शेषः । ब्राह्मणैर्देवताः पूजनीया इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—माल्ययोग्या मालामर्हति माल्यमर्चनं

१ एतच्छ्लोकगतार्धयोर्व्यत्यासेन गो. रा. पाठः । २ अग्न्यागारे इति रा. पाठः । ३ तालावचरा इति गो. रा. पाठः । ४ कक्षामिति रा. पाठः । ५ बद्धा योधाश्चेति गो. रा. पाठः ।

महाराजाङ्गनं शूराः प्रविशन्तु महोदयम् । एवं व्यादिश्य विप्रौ तु क्रियास्तत्र विनिष्ठितौ ॥२०॥
चक्रतुश्चैव यच्छेषं पार्थिवाय निवेद्य च । कृतमित्येव चाब्रूतामभिगम्य जगत्पतिम् ॥ २१ ॥
यथोक्तवचनं प्रीतौ हर्षयुक्तौ द्विजोत्तमौ । ततः सुमन्त्रं द्युतिमान्राजा वचनमब्रवीत् ॥ २२ ॥
रामः कृतात्मा भवता शीघ्रमानीयतामिति । स तथेति प्रतिज्ञाय सुमन्त्रो राजशासनात् ॥ २३ ॥
रामं तत्रानयांचक्रे रथेन रथिनां वरम् । अथ तत्र सहासीनास्तदा दशरथं नृपम् ॥ २४ ॥
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च भूमिपाः। म्लेच्छाश्चार्याश्च ये चान्ये वनशैलान्तवासिनः २५॥
उपासांचक्रिरे सर्वे तं देवा वासवं यथा । तेषां मध्ये स राजर्षिर्मरुतामिव वासवः ॥ २६ ॥

तद्योग्या गन्धपुष्पादयः । देवायतनचैत्ययोः पृथक्पृथगुपस्थापयितव्याः तत्तद्देवतापूजापूर्वकं तत्र तत्र ब्राह्मणतर्पणं कार्यमिति तात्पर्यम् दीर्घा असयो येषां ते बद्धगोधाचर्माणश्चेति द्वन्द्वः । 'दीर्घासिबद्धा योधाः' इति पाठे बद्धदीर्घासयो योधा इत्यर्थः । मृष्टवासस इत्युपलक्षणमलंकाराणाम् ॥ १९ ॥

रा० टी०—दीर्घेति । दीर्घासिबद्धाः दीर्घासयो महाखड्गास्तैर्बद्धाः संयुक्ताः संनद्धाः धृतकवचाः मृष्टवाससः स्वच्छवस्त्रयुक्ताः सर्वे योधाः महोदयं महाराजाङ्गणं प्रविशन्तु ॥ १९ ॥

गो० टी०—दीर्घासिबद्धा इति । दीर्घासिबद्धाः बद्धदीर्घासयः प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति निष्ठायाः परनिपातः महानुदयो रामाभिषेकरूपाभ्युदयो यस्मिन् तं महोदयम् ॥ १९ ॥

२० ] ति० टी०—महोदयं महोत्सवविशिष्टमङ्गनम् विप्रौ वसिष्ठवामदेवौ व्यादिश्य अधिकारिण इति शेषः । तत्र नृपवेश्मनि स्थितौ क्रियाः पुरोहितकर्तव्याश्चक्रतुरित्युत्तरेणान्वयः ॥ २० ॥

रा० टी०—एवमिति । तत्र राजभवने सुनिष्ठितौ विप्रौ तौ वसिष्ठवामदेवौ एवं क्रियाः व्यादिश्य आज्ञाप्य शेषमाज्ञापनादुर्वरितं स्वकर्तव्यं यत् कर्म तत् पार्थिवाय निवेद्य पृष्ट्वा चक्रतुः ॥ २० ॥

गो० टी०—एवमिति । विप्रौ वसिष्ठवामदेवौ क्रियाः पुरोहितकर्तव्याः तत्र राजगृहे व्यादिश्य आज्ञाप्यान्यच्छेषं दासीपरिजनाद्यानयनं तदपि पार्थिवाय राज्ञे निवेद्य चक्रतुः ॥ २० ॥

२१-२२ ] ति० टी०—यच्चैव शेषं राजोक्तादन्यदवश्यकर्तव्यं तदपि पार्थिवाय निवेद्य चक्रतुः । ततो जगत्पतिमभिगम्य यथोक्तवचनमुक्तवचनमनतिक्रम्य सर्वं कृतं सिद्धं जातमित्यब्रूताम् । प्रीतिर्मानस आनन्दः तदुन्नायको मुखविकासादिर्हर्षः ॥ २१ ॥ २२ ॥

रा० टी०—कृतमिति । जगत्पतिं राजानमभिगम्य यथोक्तवचनं भवदुक्तवचनमनतिक्रम्य कृतं सर्वं निष्पादितमिति हर्षयुक्तौ द्विजोत्तमौ अब्रूताम् । अत्र विप्राविति द्विवचननिर्देशेन राजाज्ञापनसमये वामदेवोऽपि तत्र स्थित इति सूचितम् तत्र वसिष्ठमात्राज्ञापनं तु तत्प्राधान्यद्योतनाय ॥ २१ ॥

गो० टी०—कृतमिति । अथ जगत्पतिं राजानमभिगम्य यथोक्तवचनमुक्तवचनमनतिक्रम्य कृतमिति प्रीतौ हर्षयुक्तौ प्रीतिर्मनोगतो हर्षः, मानसप्रीतिजन्यरोमाञ्चादिशरीरविकारो हर्षः, तद्युक्तौ पूर्वश्लोके निवेद्येत्यनेन शेषसंपादनविषयनिवेदनमुक्तं, अब्रूतामिति पूर्वोक्तसकलसिद्धिविषयमिति न पुनरुक्तिः ॥ २१ ॥

रा० टी०—तत इति । ततः वसिष्ठवामदेवोक्तिश्रवणानन्तरं द्युतिमान् राजा भवता कृतात्मा कृते सुकृते आत्मा बुद्धिर्यस्य स रामः शीघ्रमानीयतामिति वचनं सुमन्त्रमब्रवीत् ॥२२॥

गो० टी०—तत इति । कृतात्मा सुशिक्षितबुद्धिः शीघ्रागमनहेतुरयम् 'आत्मा जीवे धृतौ बुद्धौ' इत्यमरः॥ २२ ॥ २३ ॥

२३ ] ति० टी०—कृतात्मा धर्मे कृतबुद्धिः प्रतिज्ञायोक्त्वा २३

रा० टी०—स इति । सुमन्त्रस्तथेति प्रतिज्ञाय राजशासनात् तत्र रामं रथेन आनयाञ्चक्रे आनिनाय ॥ २३ ॥

२४ ] ति० टी०—तत्र प्रासादे प्रासादस्थो ददर्शेति वक्ष्यमाणत्वात् ॥ २४ ॥

रा० टी०—अथेति । तत्र दशरथाधिष्ठितदेशे समासीनाः प्राच्यादयो भूमिपाः खण्डमण्डलेश्वराः आर्या दिशाधीशत्वादिप्राप्त्या श्रेष्ठाः म्लेच्छाः ये वनशैलान्तवासिनः वनशैलसमीपे वसनशीलाः ते च सर्वे वासवमिन्द्रं देवा इव तं दशरथं नृपमुपासाञ्चक्रिरे सिषेविरे 'अन्तं स्वरूपे नाशे ना न स्त्री शेषेऽन्तिके त्रिषु' इति मेदिनी । अर्धचतुष्टयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०—अथेति । अथ सुमन्त्रनिर्गमनानन्तरं तत्र प्रासादे समासीनाः सम्यगुपविष्टाः प्राच्या इत्यादौ द्युप्रागित्यादिना यदादयः शैषिका भवार्थाः । म्लेच्छाचार्याः म्लेच्छप्रभवः अन्तशब्दः प्रदेशवाची प्राच्येत्यादिना शैलान्तवासिन इत्यन्तेन मूलभृत्यश्रेणिसुहृद्द्विषदाटविकमितिषड्विधबलोपास्यत्वं सार्वभौमचिह्नमुक्तम् ॥ २४—२६ ॥

२५-२६ ] ति० टी०—आर्या मध्यदेशवासिनः ॥२५॥२६॥

रा० टी०—तेषामिति । मरुतां देवानां मध्ये प्रासादस्थो वासव इन्द्र इव तेषां प्राच्यादीनां मध्ये प्रासादस्थो राजर्षिर्दशरथः आयान्तमात्मजं रामं ददर्श ॥ २६ ॥

१ अङ्गणं सर्वे इति गो. रा. पाठः । २ ताविति गो. रा. पाठः । ३ द्विजर्षभाविति गो. पाठः । ४ इव वासवमिति गो. पाठः ।

प्रासादस्थो दशरथो ददर्शायान्तमात्मजम् । गन्धर्वराजप्रतिमं लोके विख्यातपौरुषम् ॥ २७ ॥
दीर्घबाहुं महासत्त्वं मत्तमातङ्गगामिनम् । चन्द्रकान्ताननं राममतीवप्रियदर्शनम् ॥ २८ ॥
रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणम् । घर्माभितप्ताः पर्जन्यं ह्लादयन्तमिव प्रजाः ॥ २९ ॥
न ततर्प समायान्तं पश्यमानो नराधिपः । अवतार्य सुमन्त्रस्तु राघवं स्यन्दनोत्तमात् ॥ ३० ॥
पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात् । स तं कैलासशृङ्गाभं प्रासादं रघुनन्दनः ॥ ३१ ॥
आरुरोह नृपं द्रष्टुं सहसा तेन राघवः । स प्राञ्जलिरभिप्रेत्य प्रणतः पितुरन्तिके ॥ ३२ ॥
नाम स्वं श्रावयन्रामो ववन्दे चरणौ पितुः । तं दृष्ट्वा प्रणतं पार्श्वे कृताञ्जलिपुटं नृपः ॥ ३३ ॥

२७ ] ति० टी०—गन्धर्वराजप्रतिमत्वं सौन्दर्यवत्त्वेन च विख्यातपौरुषत्वेन वीरत्वम् ॥ २७ ॥

रा० टी०—राममेव विशेषयन्नाह—गन्धर्वेत्यादिभिः । गन्धर्वराजप्रतिमं गन्धर्वराजः प्रतिमा सौन्दर्यादिना सदृशो यस्य स तं लोके सर्वभुवने विख्यातं पौरुष यस्य तं दीर्घौ बाहू यस्य तं महत् सत्त्वं बलं यस्य तं मत्तमातङ्गगामिनं मत्तगजगमनसदृशगमनशीलं चन्द्रकान्ताननं चन्द्रादप्यधिकं कान्तं मनोहरमाननं यस्य तमत एव अतीवप्रियं दर्शनं यस्य तं रूपाणि च औदार्याणि च ते एव गुणाः तैः क्रमेण दृष्टिचित्तापहारिणं घर्माभितप्ताः प्रजाः ह्लादयन्तं पर्जन्यं सजलमेघमिव समायान्तं रामं पश्यमानः पश्यन् नराधिपो राजा न ततर्प । अर्धषट्कमेकान्वयि ॥ २७–२९ ॥

गो० टी०—गन्धर्वराजेत्यादि । गन्धर्वराजप्रतिमं भोगस्रोतः प्रावण्यवेषसौन्दर्येषु गन्धर्वराजौपम्यं न केवलं भोगधारारसिकत्वेन वीररसानभिज्ञत्वमित्याह—लोके विख्यातपौरुषं, पौरुषोपयुक्तसंहननवत्वमाह दीर्घबाहुमिति, न केवलं शिरीषपुष्पसुकुमारबाहुत्वेनान्तःसाराहित्यमित्याह—महासत्त्वमिति । तदनुगुणगतिविशेषमाह—मत्तमातङ्गगामिनमिति, सगर्वसलीलगमनं मदालसगमनं वा विवक्षितं चन्द्रकान्ताननं चन्द्राननमित्युक्तेऽप्याह्लादकत्वादिसिद्धेर्निरतिशयाह्लादकत्वं द्योतयितुं कान्तशब्दः चन्द्रात्कान्ताननमिति विग्रहः अनेनावयवशोभावत्त्वमुक्तं, रामं विग्रहगुणैः स्वरूपगुणैश्च रमयन्तं, समुदायशोभावत्त्वमाह—अतीवप्रियदर्शनमिति, निरन्तरदर्शनेऽपि प्रतिक्षणं नवनवीभूतदर्शनं रूपौदार्यगुणैः रूपं विग्रहः औदार्यं अनुभवितृभ्योऽनुभवदानम् " य आत्मदा बलदा " इतिश्रुतेः गुण्यते सदानुसधीयत इति गुणः 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियाप्रधानतन्तुषु ' इति निघण्टुः । तेन सदानुसंधीयमानं सौशील्यमुच्यते अहो महानयमस्मादृशेषु क्षुद्रेष्वप्यतिसंश्लेषेण वर्तत इति सर्वदानुसंधीयमानत्वात् पुंसामिति कठिनचित्तानामपि किमुत स्त्रीणामिति भावः । यद्वा पुंशब्देन स्त्रीपुंससाधारणमात्ममात्रमुच्यते 'पुमानेको व्यवस्थितः' इति विष्णुपुराणे प्रयोगात् तेन सुरनरतिर्यगादिभेदभिन्नानां स्त्रीपुनपुंसकभेदभिन्नानां सर्वेषां दृष्टिचित्तापहार उक्तः वक्ष्यति रामविरहे स्थावरजङ्गमवस्तुमात्रं परिम्लानमिति । यद्वा पुंसामपि रामं पश्यतां स्त्रीभूत्वाहममुमनुभवेयमित्यभिलाषो भवति यथाहुः ' पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्त्या जघनं घनम् । याः स्त्रियो दृष्टवत्यस्ताः पुंभावं मनसा ययुः ' इति । पश्यमान इति निर्निमेषदर्शनमुक्तं न ततर्पेति प्रतिक्षणमनुभवेऽपि नवनवप्रेमास्पदतया न तृप्तिरभूदित्यर्थः २७–२९

२८ ] ति० टी०—वीरानुगुणं दीर्घबाहुत्वं महासत्त्वं महाबलवत्त्वं च तदनुमापकं मत्तेत्यादि तेन सगर्वसलीलगमनमुक्तम् । चन्द्रकान्ताननमिति वाचकमात्रलुप्तोपमा अत एवातीव प्रियदर्शनं रामं जनान्रमयन्तम् ॥ २८ ॥

२९ ] ति० टी०—रूपौदार्यगुणैः क्रमादृष्टिचित्तहरम् । ग्रीष्मतप्ताः प्रजा ह्लादयन्तं पर्जन्यमिव स्थितम् ॥ २९ ॥

३०–३१ ] ति० टी०—पश्यमान इत्यार्षम् । न ततर्पेत्यनेनानुक्षणं नवनवप्रेमास्पदत्वम् ॥ ३० ॥ ३१ ॥

रा० टी०—अवतार्येति । सुमन्त्रस्तु स्यन्दनोत्तमादवतार्य उत्तार्य पितुः समीपं गच्छन्तं रामं प्राञ्जलिः सन् पृष्ठतः अन्वगात् अन्वगच्छत् ॥ ३० ॥

रा० टी०—स इति । कैलासशृङ्गाभं तं प्रासादं नरपुंगवो राघवः स रामः नृपं द्रष्टुं तेन सुमन्त्रेण सह आरुरोह । सहेति तृतीययाध्याहृतम् ॥ ३१ ॥

गो०टी०—अवतार्येति । अवतारणं हस्तप्रदानादिना ३०-३१

३२ ] ति० टी०—सहसा वेगेन तेन सुमन्त्रेण सहेति शेषः । सप्राञ्जलिः साञ्जलिः अभिप्रेत्य प्राप्य प्रणतः कृतसाष्टाङ्गनमस्कारः ॥ ३२ ॥

रा० टी०—स इति । पितुः अन्तिके समीपे अभिप्रेत्य प्राप्य प्राञ्जलिः प्रणतः रामः स्वं नाम श्रावयन् सन् पितुश्चरणौ ववन्दे ॥ ३२ ॥

गो० टी०—स प्राञ्जलिरिति । अभिप्रेत्य प्राप्य प्रणतः ' दण्डवत् प्रणमेद्भूमावुपेत्य गुरुमन्वहम् ' इत्युक्तप्रक्रियया दण्डवत् प्रणत इत्यर्थः । स्वं नाम श्रावयन् ' शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य च ' इतिवचनाद्रामवर्माहमस्मि भो इति श्रावयन्नित्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—स्वं नाम श्रावयन्रामवर्माहमस्मीत्येवम् । प्रणम्य पार्श्वेऽवस्थानं पुत्रधर्मः ॥ ३३ ॥

१ पुंगव इति गो. रा. पाठः । २ सह सुतेनेति गो. पाठः ।

गृह्याञ्जलौ समाकृष्य सस्वजे प्रियमात्मजम् । तस्मै चाभ्युद्यतं सम्यङ्मणिकाञ्चनभूषितम्॥ ३४ ॥
दिदेश राजा रुचिरं रामाय परमासनम् । तथासनवरं प्राप्य व्यदीपयत राघवः ॥ ३५ ॥
स्वयैव प्रभया मेरुमुदये विमलो रविः । तेन विभ्राजिता तत्र सा सभापि व्यरोचत ॥ ३६ ॥
विमलग्रहनक्षत्रा शारदी द्यौरिवेन्दुना । तं पश्यमानो नृपतिस्तुतोष प्रियमात्मजम् ॥ ३७ ॥
अलंकृतमिवात्मानमादर्शतलसंस्थितम् । स तं सुस्थितमाभाष्य पुत्रं पुत्रवतां वरः ॥ ३८ ॥
उवाचेदं वचो राजा देवेन्द्रमिव कश्यपः । ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृशः सुतः ॥ ३९ ॥
उत्पन्नस्त्वं गुणज्येष्ठो मम रामात्मजः प्रियः । त्वया यतः प्रजाश्चेमाः स्वगुणैरनुरञ्जिताः ॥ ४० ॥

---

रा० टी०–तमिति । नृपो दशरथः पार्श्वे स्वसमीपे प्रियमात्मजं दृष्ट्वा समाकृष्य स्वसंमुखं प्रापय्य अञ्जलौ गृह्य गृहीत्वा सस्वजे ॥ ३३ ॥

३४ ] ति० टी०–अञ्जलावञ्जलिप्रदेशे रामं स्वयमेव गृह्य गृहीत्वा समाकृष्य स्वसंमुखमानीय । अभ्युद्यतमुपस्थापितम् ॥ ३४ ॥

रा० टी०–तस्मै इति । सम्यगभ्युद्यतं भृत्यैः प्रापितं मणिकाञ्चनभूषितं परमरुचिरं रमणीयमासनं तस्मै रामाय राजा दिदेश ददौ उपवेष्टुमाज्ञापयामासेत्यर्थः ॥ ३४ ॥

गो० टी०–अञ्जलौ गृह्य अञ्जलिं प्रगृह्य सक्थिनि कर्णे वा गृहीत्वेतिमहाभाष्यकारवचनात् अञ्जलाविति कर्मणि सप्तमी ॥ ३३ ॥

गो० टी०–तस्मै इति । अभ्युदितमुन्नतम् ॥ ३४ ॥

३५ ] ति० टी०–परमुत्कृष्टं व्यदीपयताशोभयत । अत्रासनं कर्म ॥ ३५ ॥

रा० टी०–तदिति । तत् पित्रा दत्तं वरमासनं प्राप्य स्वयैव प्रभया दीप्त्या उदये विमलो रविः मेरुमिव राघवो रामः व्यदीपयत प्राकाशयत् ॥ ३५ ॥

गो० टी०–तदिति । आसनवरं प्राप्य तदासनं स्वयैव प्रभया व्यदीपयत् विमलो रविरुदयमेरुं प्राप्येव सूर्यस्य प्रधानमेरुप्राप्तेः साक्षादभावात् अत्र मेरुशब्देनास्ताद्रिसमीपवर्ती सावर्णिमेरुरुच्यते उदयश्चोत्तरवर्षस्थितसिद्धपुरवासिजनापेक्षया । इयमुदयास्तमयव्यवस्था सूर्यसिद्धान्ते आर्यभट्टे च प्रसिद्धा । ' भूवृत्तपादे पूर्वस्यां यवकोटीति विश्रुता । भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा ॥ याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकेति च कीर्तिता ॥ उदक् सिद्धपुरीनाम कुरुवर्षे प्रतिष्ठिता । उदयो यो लङ्कायां सोऽस्तमयः सवितुरेव सिद्धपुरे । मध्याह्ने यवकोट्यां रोमकविषयेऽर्धरात्रं स्यात् । भारतादिषु वर्षेषु तद्वदेव परिभ्रमन् । मध्योदयार्धरात्रांस्तु कालान् कुर्यात्प्रदक्षिणम् ' इति ॥ ३५ ॥

३६ ] ति० टी०–स्वयैव प्रभयेति दीपने करणम् । उदयकाले रविर्मेरुमिव सा वसिष्ठदशरथादिभ्राजिता सभापि न केवलमासनमेवेत्यर्थः । व्यरोचत विशेषेण चकाशे ॥ ३६ ॥

रा० टी०–तेनेति । तत्र तस्मिन् समये तेन रामेण विभ्राजिता प्रकाशिता सा सभा विमलग्रहनक्षत्रा मलनिवर्तकग्रहादिसहिता इन्दुना विभ्राजिता शारदी शारत्कालिका द्यौरिव व्यरोचत ॥ ३६ ॥

गो० टी०–तेनेति । विभ्राजता प्रकाशमानेन विमलग्रहनक्षत्रेतिदृष्टान्तबलेन दशरथवसिष्ठादिभिरीषत्प्रकाशितत्वमवगम्यते ॥ ३६ ॥

३७ ] ति० टी०–ग्रहनक्षत्रादियुक्तमप्याकाशमिन्दुनेव ३७

रा० टी०–तमिति । आदर्शतलसंस्थितं दर्पणादौ प्रतिबिम्बितमलंकृतमात्मानमिव तं प्रियमात्मजं रामं पश्यमानः पश्यन् नृपतिस्तुतोष ॥ ३७ ॥

गो० टी०–तमिति । पश्यमानः पश्यन् आदर्शतलसंस्थितमित्यनेन रामस्य मुखनासिकाचरणादिसर्वावयवेन पितृसरूपत्वमावेदितम् ॥ ३७ ॥

३८ ] ति० टी०–आदर्शतलप्रतिबिम्बितमलंकृतमात्मानं पश्यन्निव तं पश्यंस्तुतोष तेन पितृसदृशावयवत्वं सूचितं रामस्य । आभाष्य रामेति संबोध्य ॥ ३८ ॥

रा० टी०–स इति । देवेन्द्रं कश्यप इव पुत्रवतां वरः श्रेष्ठः स राजा सुस्थितं पुत्रं तं राममाभाष्य संबोध्य इदं वच उवाच ३८

गो० टी०–स इति । सस्मितामिति क्रियाविशेषणं आभाष्य रामेति संबोध्य ॥ ३८ ॥

३९ ] ति० टी०–तदाह यदुवाच–ज्येष्ठायामिति ॥ ३९ ॥

रा० टी०–तद्वचनाकारमाह–ज्येष्ठायामिति । यतः मे ज्येष्ठायां सदृश्यां पत्न्यां गुणज्येष्ठः गुणैः श्रेष्ठः सदृशः मत्तुल्यरूपः ममात्मजः औरस इत्यर्थः । प्रियः सुतस्त्वमुत्पन्नः प्रादुर्भूतोऽसि यतश्च त्वया इमाः प्रजाः स्वगुणैः अनुरञ्जिताः तस्मात् पुष्ययोगेन पुष्यस्य योगः संबन्धो यस्मिन् तेन तस्मिन् काले इत्यर्थः । यौवराज्यमस्मत्तो युवराजत्वमवाप्नुहि प्राप्नुहि । तृतीया स्वत्राधिकरणस्य करणत्वविवक्षया । अर्थद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

गो० टी०–रामस्यैव राज्याभिषेकार्हतामभिव्यञ्जयन्नाह–ज्येष्ठायामिति । आत्मजः सुत औरसः सुतः ॥ ३९ ॥

४० ] ति० टी०–गुणैर्ज्येष्ठोऽत एव मम प्रियः यतस्त्वयेत्यन्वयः ॥ ४० ॥

---

१ तदेति गो. रा. पाठः । २ सभीति गो. पाठः ।

तस्मात्त्वं पुष्ययोगेन यौवराज्यमवाप्नुहि । कामतस्त्वं प्रकृत्यैव निर्णीतो गुणवानिति ॥ ४१ ॥
गुणवत्यपि तु स्नेहात्पुत्र वक्ष्यामि ते हितम् । भूयो विनयमास्थाय भव नित्यं जितेन्द्रियः ॥ ४२ ॥
कामक्रोधसमुत्थानि त्यजस्व व्यसनानि च । परोक्षया वर्तमानो वृत्त्या प्रत्यक्षया तथा ॥ ४३ ॥
अमात्यप्रभृतीः सर्वाः प्रजाश्चैवानुरञ्जय । कोष्ठागारायुधागारैः कृत्वा संनिचयान्बहून् ॥ ४४ ॥
ईष्टानुरक्तप्रकृतिर्यः पालयति मेदिनीम् । तस्य नन्दन्ति मित्राणि लब्ध्वामृतमिवामराः ॥ ४५ ॥

गो० टी०—यत इति। पुष्ययोगेनेति "प्रकृत्यादिभ्य उपसंख्यानम्" इति तृतीया पुष्येण चन्द्रमसो योगः पुष्ययोगः तदुपलक्षितकाल इत्यर्थः । पुष्यनक्षत्रयुक्ते दिवस इत्यर्थः ॥४०॥

४१ ] ति० टी०—पुष्ययोगेन चन्द्रस्य पुष्ययोगोपलक्षितकाले । अधिकरणस्य करणत्वविवक्षया तृतीया । प्रकृत्या स्वभावेन कामतः प्रकामम् अत्यर्थमिति यावत् ॥ ४१ ॥

रा० टी०—कामत इति । प्रकृत्या स्वभावेनैव कामतः अत्यन्तं गुणवान् सर्वसद्गुणसंपन्नः इति हेतोः विनीतः पित्रादिषु नित्यं नतस्त्वमसि । एतेन त्वं नोपदेष्टव्योऽसीति सूचितम् । नन्नु तर्हि नोपदिशेत्यत आह—गुणवतीति । गुणवति निखिलसद्गुणविशिष्टेऽपि त्वयि स्नेहात् पित्रुचितानुरागादेव ते हितं कर्तव्यं किंचित् वक्ष्यामि ॥ ४१ ॥

गो० टी०—कामत इति । कामतः प्रकामं गुणवति त्वयीति शेषः यद्यपि भवान् सर्वगुणसंपन्नः तथापि पुत्रस्नेहाद्भवते किंचिदुपदिशामीत्यर्थः ॥ ४१ ॥

४२ ] ति० टी०—गुणवति सत्यपि । स्नेहात्तु स्नेहादेव । विनीत एव सन्भूयोऽधिकं विनयमास्थाय ॥ ४२ ॥

रा० टी०—तद्वचनाकारमाह—भूय इति । भूयोऽधिकं विनयं विनीततामास्थाय जितेन्द्रियो नित्यं भव अत एव कामक्रोधसमुत्थानि व्यसनानि स्त्रीद्यूतादीनि त्यजस्व । तथाहि 'स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः। अर्थसंदूषणं चेति राज्ञां व्यसनसप्तकम्' इति । वचनान्तरमपि 'मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः' इति । अन्यच्च 'पैशून्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः' इति ॥ ४२ ॥

गो० टी०—भूय इति । भूयो विनयं सातिशयविनयं कामक्रोधसमुत्थानि व्यसनानि 'स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थसंदूषणं चेति राज्ञां व्यसनसप्तकम्' इत्युक्तानि व्यसनानि अर्थसंदूषणं पित्रादिसंचितार्थस्य नाशनं, यद्वा 'मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः' इत्येतानि कामजानि 'पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाक्दण्डयोश्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः' इत्युक्तानि क्रोधजानि च व्यसनानि ॥ ४२ ॥

४३ ] ति० टी०—कामजानि स्त्रीद्यूतमृगयामधुसेवनादीनि । क्रोधजानि वाक्पारुष्योग्रदण्डस्वार्थदूषणानि व्यसनानि त्यजेथाः । तत्रार्थदूषणं पित्रादिसंचितार्थस्य नाशनम् । परोक्षयाचारमुखतः परोक्षानुभवसिद्धया वृत्त्या स्वपरराष्ट्रवृत्तान्तविचारेण प्रत्यक्षया सदा सभायां स्थित्वा स्वप्रत्यक्षया वृत्त्या प्रजान्यायादिविचारेण युक्तो भव ॥ ४३ ॥

रा० टी०—परोक्षयेति । परोक्षया चारादिद्वारा सकलदेशवृत्तान्तविचारशीलया प्रत्यक्षया सभादौ प्रत्यक्षीभूतजनवृत्तान्तविचारशीलया च वृत्त्या कोष्ठागारायुधागारैः कोष्ठाद्यागारेषु सन्निचयान् रत्नस्वर्णरजतवस्त्राभरणादीन् बहून् अधिकान् कृत्वा अमात्यप्रभृतीः सर्वाः प्रजाः अनुरञ्जय प्रमोदय तत्र कोष्ठागाराणि धान्यगृहाणि आयुधागाराणि शस्त्रास्त्रगृहाणि । अर्धत्रयमेकान्वयि ॥ ४३ ॥ ४४ ॥

गो० टी०—परोक्षयेति । अप्रत्यक्षया वृत्त्या तक्षप्रभृतिकर्मान्तिकानां परोक्षो भूत्वाधिकृतमुखेन यत्कार्याणि संविधत्ते सा परोक्षवृत्तिः अव्यवधानेनामात्यादीन् यया वृत्त्यानुगृह्णाति सा प्रत्यक्षवृत्तिः ताभ्यां वर्तमानः सन् अमात्यप्रभृतीः सर्वाः प्रकृतीश्चानुरञ्जयेति संबन्धः, यद्वा परोक्षया चारमुखतः परोक्षानुभवसिद्धया वृत्त्या स्वपरराष्ट्रवृत्तान्तविचारेण सह वर्तमानो भव तथा प्रत्यक्षया नित्यं यथाकालमास्थानमास्थाय स्वानुभवसिद्धयथोक्तवृत्तान्तविचारो भव अमात्यप्रभृतीः सर्वाः प्रकृतीः अमात्यसेनानीपुररक्षिणः पौरजानपदाः सर्वप्रजाश्चानुरञ्जय ॥ ४३ ॥

४४ ] ति० टी०—तेनामात्यप्रभृतीरमात्यसेनापतिपुरराष्ट्रादिकपौरजानपदसर्वप्रजा अनुरञ्जय च । अयुतनियुतादिसंख्यखर्वादिपरिच्छिन्नधान्यग्राहीणि कोष्ठरूपाण्यगाराणि आयुधागाराणि शस्त्रगृहाणि तैः सह । सम्यङ्निचीयन्तेऽस्मिन्निति संनिचया रत्नहेमाभरणरजतवस्त्रादिकोशगृहाणि बहूनि विपुलानि कृत्वा संपूर्य प्रजा अनुरञ्जयेति पूर्वेणान्वयः ॥ ४४ ॥

गो० टी०—कोष्ठागारेत्यादिश्लोकद्वयमेकान्वयम् । कोष्ठागाराणि अयुतनियुतादिसंख्यधान्यराशिग्राहीणि कोष्ठरूपतया निर्मितान्यगाराणि आयुधागाराणि समग्रनिजबलापेक्षिताष्टादशविधायुधप्रतिष्ठागाराणि तैः सह सन्निचयान् निचीयन्ते एष्विति निचयाः नवरत्नहेमरजतवस्त्राभरणादिसंपूर्णास्तत्तत्कोशाः तान् । तुष्टानुरक्तप्रकृतिरिति उक्तनिचयबलादिति शेषः मित्राणि सामन्ताः आत्मानं मनः ॥ ४४ ॥ ४५ ॥

४५ ] ति० टी०—इष्टाः स्वस्यानुरक्ताः स्वस्मिन्प्रकृतयः प्रजा यस्य तस्य मित्राण्यमृतं लब्ध्वामरा इव तं लब्ध्वा नन्दन्ति ॥ ४५ ॥

१ विनीत इति गो. रा. पाठः । २ त्यजेथा इति गो. पाठः । ३ तुष्टेति गो. पाठः ।

तस्मात्पुत्र त्वमात्मानं नियम्यैवं समाचर । तच्छ्रुत्वा सुहृदस्तस्य रामस्य प्रियकारिणः ॥ ४६ ॥
त्वरिताः शीघ्रमागत्य कौसल्यायै न्यवेदयन् । सा हिरण्यं च गाश्चैव रत्नानि विविधानि च ॥ ४७ ॥
व्यादिदेश प्रियाख्येभ्यः कौसल्या प्रमदोत्तमा । अथाभिवाद्य राजानं रथमारुह्य राघवः ॥
ययौ स्वं द्युतिमद्वेश्म जनौघैः प्रतिपूजितः ॥ ४८ ॥
ते चापि पौरा नृपतेर्वचस्तच्छ्रुत्वा तदा लाभमिवेष्टमाशु ।
नरेन्द्रमामन्त्र्य गृहाणि गत्वा देवान्समानर्चुरभिप्रहृष्टाः ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

दुःस्वप्नदर्शनादभिषेकभयमाशङ्कमानो दशरथस्तदैव राममानाय्य भरतागमनात्प्रागेवाभिषेकः संपाद्य इति निवेद्य सीतया सममाचरितव्यां व्रतचर्यामादिदेश । दशरथाभ्यनुज्ञातो रामः कौसल्यान्तःपुरं प्रविश्य तयाशीर्भिरभिवर्धितः सन्पूर्वं तत्रागतया सीतया समं स्वावासं प्राप ।

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः । मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयम् ॥ १ ॥
श्व एव पुष्यो भविता श्वोऽभिषेच्यस्तु मे सुतः । रामो राजीवपत्राक्षो युवराज इति प्रभुः ॥ २ ॥

रा० टी०—प्रजानुरञ्जने प्रयोजनमाह—इष्टेति । इष्टाः स्वेप्सिताः अनुरक्ताः स्वविषयकानुरागयुक्ताः प्रकृतयः प्रजा यस्य सः यो मेदिनीं पृथ्वीं पालयति तस्य मित्राणि अमृतं लब्ध्वा अमराः देवा इव नन्दन्ति 'तुष्टानुरक्तः' इति भूषणपाठ ॥ ४५ ॥

४६-४७] ति० टी०—तदभिषेकप्रयोजनं पितुरुपदेशम् ॥ ४६-४७ ॥

रा० टी०—तस्मादिति । तस्मादुक्तहेतोः हे पुत्र ! आत्मानं मनो नियम्य एवं मदुक्तं समाचर । अर्धं पृथक्-तदिति । रामस्य प्रियकारिणः सुहृदः तत् राजवचनं श्रुत्वा त्वरिताः सन्तः आगत्य कौशल्यायै शीघ्रं न्यवेदयन् ॥ ४६ ॥

गो० टी०—तदिति । तत् रामाभिषेकप्रस्तावनम् ॥ ४६ ॥

रा० टी०—सेति । सा श्रुतरामाभिषेकवार्ता प्रमदोत्तमा कौशल्या प्रियाख्येभ्यः अभिषेकवार्ताकथयितृभ्यः हिरण्यादीनि व्यादिदेश प्रददौ ॥ ४७ ॥

गो० टी०—सेति । प्रियाख्येभ्यः प्रियं रामाभिषेकमाचक्षत इति प्रियाख्याः "चक्षिङःख्याञ्" इति ख्याञादेशः ॥ ४७ ॥

४८ ] ति० टी०—प्रियाख्येभ्यो रामाभिषेकरूपप्रियवक्तृभ्यः ॥ ४८ ॥

रा० टी०—अथेति । अथ राजोपदेशश्रवणानन्तरं राजानमभिवाद्य प्रणम्य रथमारुह्य जनौघैः जनसमूहैः प्रतिपूजितः राघवो रामः द्युतिमत् अतिप्रकाशयुक्तं स्वं वेश्म ययौ ॥ ४८ ॥

गो० टी०—अथेति ॥ ४८ ॥

४९ ] ति० टी०—इष्टं लाभमिव स्वेष्टवस्तुप्राप्तिरूपमिव आनर्चुः रामाभिषेकनिर्विघ्नतायै ॥ ४९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०—ते इति । तदा राजोक्तिकाले आलाभमासमन्ताद्भावेन लाभः रामाभिषेकप्राप्तिर्यस्मिन् तदेव इष्टमभिलषितं नृपतेः तद्वचः श्रुत्वा आशु शीघ्रं नरेन्द्रमामन्त्र्य प्रशस्य गृहाणि गत्वा अभिप्रहृष्टाः ते पौराः जनाः देवान् समानर्चुः रामाभिषेककामनया पूजयामासुः ॥ ४९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे तृतीयः सर्गः ॥ ३ ॥

गो० टी०—त इति । आनर्चुः रामाभिषेकविघ्नवारणाय ॥ ४९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने तृतीयः सर्गः ॥ ३ ॥

१ ] ति० टी०—निश्चयज्ञस्तत्तत्कार्योद्देशकालनियमज्ञः निश्चयं रामाभिषेककालविषयम् ॥ १ ॥

२ ] ति० टी०—तदाह श्व—एवेति । युवराज इति प्रभुरिति निश्चयमिति पूर्वेणान्वयः । उभाभ्यां प्रजान्यायदर्शनदण्डादिष्वयमेवाधिकारीति सूचितम् ॥ २ ॥

रा० टी०—पौरगमनानन्तरकालिकं राजवृत्तान्तमाह—गतेष्वित्यादिभिः । पौरेषु गतेषु सत्सु निश्चयज्ञः स्वकीयनिश्चयस्य बोधकः प्रभुः स राजा मन्त्रिभिः सह भूयो मन्त्रयित्वा ततः मन्त्रणाहेतोः श्व एव पुष्यो भविता अतः राजीवपत्राक्षो मे सुतो रामः श्व एव युवराजोऽभिषेच्य इति निश्चयं नियोगं चक्रे । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—एवं पूर्वविचारितमपि राममाहूयोक्तमपि रामाभिषेकं पुनर्मन्त्रिभिः कालविशेषनिर्णयपूर्वकं राममाहूय सविशेषमुपदिशति चतुर्थे—गतेष्वित्यादिना । श्लोकद्वयमेकान्वयम् । अभिषेच्य इति निश्चयं चक्र इति संबन्धः ॥ १ ॥ २ ॥

१ तत्सर्व इति गो पाठः ।

अथान्तर्गृहमाविश्य राजा दशरथस्तदा । सूतमामन्त्रयामास रामं पुनरिहानय ॥ ३ ॥
प्रतिगृह्य तु तद्वाक्यं सूतः पुनरुपाययौ । रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥ ४ ॥
द्वाःस्थैरावेदितं तस्य रामायागमनं पुनः । श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥ ५ ॥
प्रवेश्य चैनं त्वरितो रामो वचनमब्रवीत् । यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥ ६ ॥
तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति । श्रुत्वा प्रमाणं तत्र[1] त्वं गमनायेतराय वा ॥ ७ ॥
इति सूतवचः श्रुत्वा रामोऽपि त्वरयान्वितः । प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥ ८ ॥
तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः । प्रवेशयामास गृहं विवक्षुः प्रियमुत्तमम् ॥ ९ ॥
प्रविशन्नेव च श्रीमान्राघवो भवनं पितुः । ददर्श पितरं दूरात्प्रणिपत्य कृताञ्जलिः ॥ १० ॥
प्रणमन्तं तमुत्थाप्य संपरिष्वज्य भूमिपः । प्रदिश्य चासनं चास्मै[2] रामं च पुनरब्रवीत् ॥ ११ ॥

३ ] ति० टी०—आमन्त्रयामासानयेत्याज्ञापयामास ॥ ३ ॥

रा० टी०—अथेति । अथ अभिषेककालनिश्चयानन्तरमन्तर्गृहमाविश्य राममिह पुनरानयेति सूतमामन्त्रयामास आज्ञापयामास ॥ ३ ॥

गो० टी०—अथेति । अन्तर्गृहमाविश्येत्यनेन मन्त्रिणामपि विसर्जनं सिद्धम् । आमन्त्रयामास नियोजयामासेत्यर्थः । आनयेत्यत्र इतिकरणं द्रष्टव्यम् ॥ ३ ॥

४ ] ति० टी०—पूर्वागमनापेक्षया पूर्वानयनापेक्षया पुनस्त्वम् ॥ ४ ॥

रा० टी०—प्रतीति । तद्वाक्यं प्रतिगृह्य श्रुत्वा सूतो राममानयितुमानेतुं रामस्य भवनं पुनरुपाययौ ॥ ४ ॥

गो० टी०—प्रतिगृह्येति । आनयितुम् आनेतुमित्यर्थः इडार्षः ॥ ४ ॥

५–६ ] ति० टी०—आवेदितं विज्ञापितम् प्राप्तं पुनरागतम् शङ्कान्वितो राज्ञ आपच्छङ्कान्वितः ॥ ५ ॥ ६ ॥

रा० टी०—द्वाःस्थैरिति । तस्य सूतस्य पुनरागमनं द्वाःस्थैः रामायावेदितं बोधितम् । रामस्तु तं सूतं पुनः प्राप्तं श्रुत्वा शङ्कान्वित इवाभवत् । अपिस्त्वर्थे एव इवार्थे ॥ ५ ॥

गो० टी०—द्वाःस्थैरिति । तस्य सुमन्त्रस्य पुनरागमनं रामाय द्वाःस्थैरावेदितं रामश्चापि प्राप्तमागतं सुमन्त्रं श्रुत्वैव शङ्कान्वितोऽभवत् । किमभिषेकविघ्नः कश्चिदासीत् उतान्यः कश्चिदुपप्लवोऽभूदिति शङ्का ॥ ५ ॥

रा० टी०—प्रवेश्येति । एनं सूतं प्रवेश्य स्वसमीपं प्रापय्य भूयस्ते तव आगमनकृत्यमागमनेन साध्यं यत्तदशेषतो ब्रूहि इति वचनं रामोऽब्रवीत् ॥ ६ ॥

गो० टी०—प्रवेश्येति । भूयः पुनः ते यदागमनकृत्यं तद्ब्रूहीति संबन्धः ॥ ६ ॥

७–८ ] ति० टी०—ततो रामोक्तिश्रवणानन्तरम् । श्रुत्वा राजोक्तार्थानुवादिनीं मदुक्तिम् । तत्र राजसंनिधौ । इतरायागमनाय असर्वनामत्वमार्षम् । प्रमाणं निर्णेता ॥ ७ ॥ ८ ॥

रा० टी०—तमिति । ततो रामवचनश्रवणानन्तरं तं रामं सूत उवाच । तद्वचनाकारमाह—राजा त्वां द्रष्टुमिच्छति श्रुत्वा मद्वचनमवधार्य तत्र राजसन्निधौ गमनाय इतराय इताय प्राप्ताय जनाय दो दानं तस्मै च प्रमाणं निश्चयं कुर्विति शेष ॥ ७ ॥

गो० टी०—तमिति । सूतः श्रुत्वा रामवाक्यमिति शेषः । ततः रामवाक्यश्रवणानन्तरं रामउवाच कथमिति हे राम ! राजा त्वां द्रष्टुमिच्छति अत्र दशरथसमीपे गमनाय इतराय आगमनाय च त्वं प्रमाणं कर्ता शीघ्रं गच्छेत्यर्थः । इतरशब्दस्य सर्वनामकार्याभाव आर्षः ॥ ७ ॥

रा० टी०—इतीति । सूतवचः श्रुत्वा त्वरयान्वितो रामोऽपि नरेश्वरं पुनर्द्रष्टुं राजभवनं प्रययौ ॥ ८ ॥

गो० टी०—इतीति ॥ ८ ॥

९ ] ति० टी०—प्रियं स्वप्रियम् ॥ ९ ॥

रा० टी०—तमिति । रामं समनुप्राप्तं श्रुत्वा उत्तमं प्रियं विवक्षुः वक्तुमिच्छुः नृपः गृहं प्रवेशयामास ॥ ९ ॥

गो० टी०—तमिति ॥ ९ ॥

१०] ति० टी०—दूरात्प्रणिपातः किं वदिष्यतीतिभीत्या १०

रा० टी०—प्रविशन्निति । पितुः भवनं प्रविशन्नेव दूरात् प्रणिपत्य नमस्कृत्य कृताञ्जलिः राघवः पितरं ददर्श ॥ १० ॥

गो० टी०—प्रविशन्निति । राघवः पितुर्भवनं प्रविशन्नेव दूरात्प्रणिपत्य कृताञ्जलिः सन् पितरं ददर्श दूरात्प्रणिपातो विनयातिशयात् ॥ १० ॥

११ ] ति० टी०—प्रणमन्तं समुत्थाप्य तं परिष्वज्येत्यन्वयः । प्रदिश्य हस्तेन दर्शयित्वा चाद्भुतसाध्युक्त्वा अस्मै रामाय चासनमन्त्राय रामं च रामं तु ॥ ११ ॥

रा० टी०—प्रणमन्तमिति । भूमिपो राजा प्रणमन्तं तं राममुत्थाप्य संपरिष्वज्य च अस्मै रामाय आसनं प्रदिश्य च अब्रवीत् ॥ ११ ॥

गो० टी०—प्रणमन्तमिति । समीपे पुनः प्रणमन्तमित्यर्थः ॥ ११ ॥

१ अत्रेति गो. पाठः । २ चास्मै रुचिरमिति गो. पाठः ।

राम वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा यथेप्सिताः । अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ॥ १२ ॥
जातमिष्टमपत्यं मे त्वमद्यानुपमं भुवि । दत्तमिष्टमधीतं च मया पुरुषसत्तम ॥ १३ ॥
अनुभूतानि चेष्टानि मया वीरसुखान्यपि । देवर्षिपितृविप्राणामनृणोऽस्मि तथात्मनः ॥ १४ ॥
न किंचिन्मम कर्तव्यं तवान्यत्राभिषेचनात् । अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्तुमर्हसि ॥ १५ ॥
अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् । अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥ १६ ॥
अपि चाद्याशुभान्राम स्वप्नान्पश्यामि राघव । सनिर्घाता दिवोल्काश्च पतन्ति हि महास्वनाः ॥ १७ ॥

---

१२ ] ति० टी०—यथेप्सितास्तथा भुक्ताः । 'विधिहीनम सृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥' इत्युक्तेरन्नवदादिविशेषणम् । यथा यथावत् । इष्टं देवानां पूजनं कृतम् ॥ १२ ॥

रा० टी०—तद्वचनाकारमाह—रामेति । हे राम ! अहं दीर्घायुः चिरकालादिह लोके स्थितः अत एव वृद्धः वयसाधिकोऽस्मि अत एव ईप्सिताः वाञ्छाविषयीभूताः भोगाः भोग्याः यथा यथावद्भुक्ताः । अन्नवद्भिः अन्नप्रचुरैः भूरिदक्षिणैः पर्याप्तदक्षिणाविशिष्टैः क्रतुशतैः यथा यथावदिष्टं पूजितं यागपूजनीयदैवतमिति शेषः ॥ १२ ॥

गो० टी०—रामेति । वृद्धोऽस्मीत्यनन्तरं दीर्घायुरिति वृद्धत्वविवरणं, यद्वा ज्ञानवृद्धत्वव्यावृत्तये दीर्घायुरिति । 'विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् । श्रद्धाविरहितं यज्ञं तामसं परिचक्षते' इत्यन्नादिहीनस्य यज्ञस्य निन्दनादन्नवद्भिरित्यादिविशेषणं क्रतुशतैः ज्योतिष्टोमाद्यश्वमेधपर्यन्तयागभेदैः इष्टं यजनं कृतम् ॥ १२ ॥

१३ ] ति० टी०—इष्टं वस्तु दत्तम् ॥ १३ ॥

रा० टी०—जातमिति । अनुपममनुपमारहितमिष्टमीप्सितं त्वमपत्यं मे जातं प्रादुर्भूतम् इष्टं देयत्वेन ईप्सितं वस्तु दत्तमधीतं च ॥ १३ ॥

गो० टी०—जातमिति । इष्टमपत्यमभिमतमपत्यं इष्टं दत्तमभिमतं वस्तु दत्तम् ॥ १३ ॥

१४ ] ति० टी०—यागाध्ययनपुत्रदानोपभोगैः पञ्चभिर्देवर्षिपितृविप्राणामात्मनश्चेत्येवं पञ्चानामनृणोऽस्मि । आत्मा सेन्द्रियग्रामो जीवस्तस्य तत्तत्सुखाधिकारिणस्तद्दाने ऋणित्वमर्थसिद्धम् तेन सर्वऋणाद्विनिर्मुक्तोऽस्मीति भावः । ऋष्यृणे विप्रर्णस्य देवर्णे जीवर्णस्यान्तर्भावं कृत्वा ऋणानि त्रीण्यपाकृत्येति स्मृतिवादः ॥ १४ ॥

रा० टी०—अन्विति । इष्टानि अभिलषितानि सुखानि अनुभूतानि साक्षादुपलब्धानि अत एव देवादीनामात्मनश्च अनृणः ऋणरहितोऽस्मि तत्र देवऋणरहितत्वं यागैः ऋषिऋणरहितत्वमध्ययनेन पितृऋणरहितत्वमपत्यप्रादुर्भावेन विप्रऋणरहितत्वं दानेन आत्मऋणरहितत्वं विहितसुखानुभवेनेति विवेकः । नच "जायमानो ब्राह्मणस्त्रिभिः ऋणैर्ऋणवाजायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः" इत्यादिना ऋणत्रयस्यैव वेदे प्रसिद्धत्वादधिकयोरवैदिकत्वापत्तिरिति वाच्यं तयोरपि स्मृत्यादिसिद्धत्वेन प्रसिद्धवैदिकऋणैरुपलक्षणीयत्वेनेदानीन्तनपठितातिरिक्तेषु पाठसंभवेन चादोषात् अत एव दानरहितात्मसुखसंपादनरहितयोर्निन्दोक्तिः संगच्छते ॥ १४ ॥

गो० टी०—देवर्षीति । देवानामनृणः क्रतुशतैः ऋषीणामनृणोऽध्ययनेन पितॄणामनृणोऽपत्योत्पादनेन विप्राणामनृणो दत्तेन आत्मनोऽनृणः सुखानुभवेन यद्यपि ब्रह्मचर्यादिऋणत्रयं श्रुतिसिद्धम् "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाजायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति । तथापि ऋणपञ्चकमिति मतान्तरम्, यद्वा ऋणत्रयव्यपदेशः प्राधान्यादितरयोरुपलक्षणत्वाद्वा । नतु देवादीनां पञ्चानां कथमुत्तमर्णत्वम् अत्राहुः । देवानामिन्द्रियाधिष्ठातॄणां जितेन्द्रियताकारकत्वेनोपकारकत्वात् ऋषीणां वागुपकारकत्वात् पितॄणां तनूपकारकत्वात् विप्राणां कर्माधीनसर्वसंस्कारसाधनैनोघनाशकत्वात् आत्मनः शरीरेन्द्रियसंघातरूपस्य ज्ञानप्रकाशहेतुत्वेनोपकारकत्वाच्च तदप्रत्युपकारः पुरुषस्य ऋणमेव । अन्यत्र चोक्तम् 'अनिषिद्धसुखत्यागी पशुरेव न संशयः' इति ॥ १४ ॥

१५-१६ ] ति० टी०—यद्ब्रूयां तन्मे वचः कर्तुमर्हसि अविलम्बेनेति शेषः ॥ १५ ॥ १६ ॥

रा० टी०—ननु किमेतत्प्रतिपादनेनेत्यत आह—नेति । तवाभिषेचनादन्यत्रान्यस्मिन्कर्मणि न कर्तव्यं यतितव्यमभिषेचनमेव कर्तव्यमित्यर्थः अतस्त्वां यदहं ब्रूयां तत्कर्तुं समर्थयितुमर्हसि ॥ १५ ॥

गो० टी०—न किंचिदिति ॥ १५ ॥

रा० टी०—अद्येति । अद्यास्मिन्काले सर्वाः प्रकृतयः प्रजाः त्वां नराधिपमिच्छन्ति अतस्त्वां राजानं युवराजमभिषेक्ष्यामि ॥ १६ ॥

गो० टी०—अद्येति । स्पष्टम् ॥ १६ ॥

१७ ] ति० टी०—अविलम्बकरणे हेत्वन्तरमाह—अपि चेति । अशुभानशुभसूचकान् । सनिर्घाता अशनिपातसहिताः दिवोल्का दिव उल्काः संधिरार्षः । दिवा दिवसे इत्यन्ये उल्का ज्वालाः पतन्ति ॥ १७ ॥

रा० टी०—ननु राज्यपालनसमर्थे त्वयि सति किमर्थम-

---

१ ममेति गो. पाठः । २ नामेति रा. पाठः । ३ दारुणानिति गो. पाठः । ४ दिवोल्का च पततीह महास्वनेति गो. पाठः ।

अवष्टब्धं च मे राम नक्षत्रं दारुणग्रहैः[1] । आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥ १८ ॥
प्रायेण च[2] निमित्तानामीदृशानां समुद्भवे । राजा हि मृत्युमाप्नोति घोरां चापदमृच्छति ॥ १९ ॥
तद्यावदेव मे चेतो न विमुह्यति[3] राघव । तावदेवाभिषिञ्चस्व चला हि प्राणिनां मतिः ॥ २० ॥
अद्य चन्द्रोऽभ्युपगमत्पुष्यात्पूर्वं पुनर्वसुम्[4] । श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥ २१ ॥
तत्र पुष्येऽभिषिञ्चस्व मनस्त्वरयतीव माम् । श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परंतप ॥ २२ ॥
तस्मात्त्वयाद्यप्रभृति निशेयं नियतात्मना । सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥ २३ ॥

---

भिषेकोद्योग इत्यत आह—अपीति । अद्यास्मिन्काले अशुभान् मत्कर्तृकराज्यपालनरूपशुभनिवर्तकान् स्वप्नान् पश्यामि एतेन मत्कर्तृकपालनयोग्यः कालो नास्तीति सूचितम् । ननु दुःस्वप्नदर्शनजनितदोषनिवारणयत्नः आरब्धव्य इत्यत आह—सनिर्घाताः वज्रपातसहिताः महास्वनाः दिवा दिने उल्काः अग्निज्वालविशेषाः पतन्ति एतेनैतन्निवारणे यत्नो नास्तीति सूचितम् ॥ १७ ॥

गो० टी०—अपि चेति । अशुभान् अशुभसूचकान् दारुणान् भयंकरान् नीलवर्णस्त्रीपरिष्वङ्गादीन् उल्का निर्गतज्वाला निर्घातः अमेघाशनिः ॥ १७ ॥

१८ ] ति० टी०—नक्षत्रं जन्मर्क्षम् अवष्टब्धमाक्रान्तम् ॥ १८ ॥

रा० टी०—अथेति । हे राम ! मे नक्षत्रं मत्प्रादुर्भावकालिकमृक्षं सूर्याङ्गारकराहुभिः अवष्टब्धं समाक्रान्तमिति दैवज्ञाः ज्योतिर्विदः आवेदयन्ति । च शब्द इत्यर्थे ॥ १८ ॥

गो० टी०—अवष्टब्धमिति । नक्षत्रं जन्मनक्षत्रमवष्टब्धमाक्रान्तम् अत्रेतिकरणं द्रष्टव्यं दैवज्ञाः ज्यौतिषिकाः 'सांवत्सरी ज्यौतिषिको दैवज्ञगणकावपि' इत्यमरः । सूर्याङ्गारकराहुभिर्ग्रहैरवष्टब्धमित्यावेदयन्तीति संबन्धः ॥ १८ ॥

१९ ] ति० टी०—घोरामापदमृच्छति पूर्वम् ततो मृत्युं चाप्नोतीत्यर्थः ॥ १९ ॥

रा० टी०—ननु किमनेनेत्यत आह—प्रायेणेति । ईदृशानां निमित्तानां समुद्भवे प्राप्ते सति प्रायेण राजा मृत्युमाप्नोति घोरामापदं वा ऋच्छति 'घोरां च' इतिपाठे पूर्वमापदमृच्छति ततो मृत्युं च प्राप्नोतीत्यर्थः । प्रायेणेत्यनेन प्राकृतविलक्षणानामेतद्दोषास्पर्शित्वं सूचितमत एव न च कालवशाद्गत इत्यनेन न विरोधः । दोषास्पर्शित्वेऽपि पालनस्यायोग्योगकर्तृत्वेन तस्य मर्यादापालकत्वं सूचितम् ॥ १९ ॥

गो० टी०—दुर्निमित्तफलमाह—प्रायेणेति । ऋच्छति ऋच्छति वेत्यर्थः ॥ १९ ॥

२० ] ति० टी०—तत्तस्माद्यावन्मे चेतो न विमुह्यति त्वदभिषेकविमुखं न भवति तावत्ततः पूर्वमेवाभिषिञ्चस्व कृताभिषेकमात्मानं कुरु । ननु ते चेतसः का मदभिषेकवैमुख्यचिन्ता तत्राह—चला हीति । त्वद्विमातृतत्पुत्रोपजापस्य संभावितत्वात्तदेव वक्ष्यति—विप्रोषितश्च भरत इत्यादिना ॥ २० ॥

रा० टी०—तदिति । तत् अभिषेकायोद्युक्तं मे चेतो यावन्न विमुह्यति कस्यचिद्विरुद्धप्रार्थनया विमोहं न प्राप्नोति तावदेव अभिषिञ्चस्व । ननु मद्विरुद्धाः केचनापि जना न सन्तीत्यत आह—प्राणिनां जनानां मतिर्निश्चयः चला चञ्चला ॥ २० ॥

गो० टी०—तदिति । चेतः त्वामभिषेक्ष्यामीति बुद्धिः न विमुञ्चति मामिति शेषः । कुतो बुद्धिविमोचनप्रसक्तिरित्यत्राह—चला हीति मात्रन्तरादिप्रार्थनादिभिरिति भावः ॥ २० ॥

२१ ] ति० टी०—पुष्ययोगं चन्द्रस्य नियतं शुद्धगणितनिश्चितम् अभिषेके प्रशस्तं वा, दैवचिन्तका ज्योतिर्विदो वक्ष्यन्ते वदन्तीत्यर्थे आर्षम् ॥ २१ ॥

रा० टी०—अभिषेककालं बोधयन्नाह—अद्येति । अद्यास्मिन्काले चन्द्रः पुष्यात्पूर्वं विद्यमाने पुनर्वसु अभ्युपगमत् प्राप्नोत् अतः श्वोऽव्यवहितागामिदिवसे पुष्ययोगं नियतं दैवचिन्तकाः ज्योतिर्विदो वक्ष्यन्ते कथयन्ति लृडुपात्तभविष्यत्त्वस्याविवक्षा आगमशास्त्रस्यानित्यत्वादिड्विरहः ॥ २१ ॥

गो० टी०—अद्येति । पुष्ययोगं पुष्येण चन्द्रस्य योगे नियतमभिषेकनियतं प्रशस्तमित्यर्थः । दैवचिन्तकाः ग्रहचारज्ञा वक्ष्यन्ते वदन्ति ॥ २१ ॥

२२ ] ति० टी०—अभिषिञ्चस्वाभिषिक्तो भव । मे मनश्चित्तं मां त्वरयतीव त्वदभिषेकार्थमिति शेषः ॥ २२ ॥

रा० टी०—तत्रेति । तत्र तस्मिन्पुष्ये अभिषिञ्चस्व राममिति शेषः । इति मनो मम मानसं त्वरयति अतस्त्वां श्वो यौवराज्येऽभिषेक्ष्यामि ॥ २२ ॥

गो० टी०—तत इति । अभिषिञ्चस्व अभिषिक्तो भव । त्वरयतीवेतीवशब्द एवकारार्थः ॥ २२ ॥

२३ ] ति० टी०—अद्यप्रभृति प्रदोषमारभ्य अनेनाद्धि भोजनरूपः प्राग्दिननियमो दर्शितः ॥ २३ ॥

रा० टी०—तस्मादिति । तस्मात् श्वोऽभिषेकस्य निश्चयाद्धेतोः अद्यप्रभृति इत आरभ्य वध्वा सह नियतात्मना दर्भप्रस्तरशायिना कुशास्तृतभूमिशयनशीलेन इयं निशा उपवस्तव्या " उपान्वध्याङ्वसः " इति कर्मणि तव्यत् ॥ २३ ॥

गो० टी०—तस्मादिति । अद्यप्रभृति एतदहरारभ्य निशा उपवस्तव्या "वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः" इति भोजननिवृत्त्यर्थस्य वसेरकर्मकत्वादत्र सकर्मकत्वमार्षं निशायामुपवस्तव्यमित्यर्थः । दर्भप्रस्तरो दर्भास्तरणम् ॥ २३ ॥

---

१ दारुणैर्ग्रहैरिति गो. पाठः । २ हीति गो. पाठः । ३ विमुञ्चतीति गो. पाठः । ४ पुनर्वसु इति गो. रा. पाठः ।

सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समंततः । भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि ॥ २४ ॥
विप्रोषितश्च भरतो यावदेव पुरादितः । तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥ २५ ॥
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः । ज्येष्ठानुवर्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥ २६ ॥
किं नु चित्तं मनुष्याणामनित्यमिति मे मतम् । सतां च धर्मनित्यानां कृतशोभि च राघव ॥ २७ ॥
इत्युक्तः सोऽभ्यनुज्ञातः श्वो भाविन्यभिषेचने । व्रजेति रामः पितरमभिभाष्याभ्ययाद्गृहम् ॥ २८ ॥

---

२४ ] ति० टी०—रक्षणे हेतुर्भवतीत्यादि । एवंविधानि शुभोदर्काणि । बहुविघ्नानीति बहुव्रीहिः ॥ २४ ॥

रा० टी०—सुहृद इति । अप्रमत्ताः सुहृदः समन्ततस्त्वां रक्षन्तु हि यतः एवंविधानि अत्युत्सवप्रापकानि कार्याणि बहुविघ्नानि बहवो विघ्ना निवारका येषु तानि भवन्ति ॥ २४ ॥

गो० टी०—सुहृद इति । एवंविधानि अभिषेकादिमहाश्रेयोरूपाणि ॥ २४ ॥

२५ ] ति० टी०—इतः पुरादस्मात्पुराद्यावद्विप्रोषित एव तिष्ठति तावदेव विप्रोषितस्य तस्यागमनात्पूर्वमेव प्राप्तकालो योग्यः अन्यथा भरतः प्रतिबध्नीयादिति भावः ॥ २५ ॥

रा० टी०—ननु भरतागमने सति अभिषेकेण भवितव्यमित्यत आह—विप्रोषित इति । इतः अस्मात् पुरात् यावत्कालं भरतो विप्रोषितो मातुलकुले स्थितस्तावदेव ते अभिषेकः प्राप्तकालो मम मतः संमतः एतेन भरतागमने सति अभिषेको न भविष्यतीति सूचितम् तेन कैकयीविवाहसमये राज्यशुल्कं केकयराजाय प्रतिश्रुतमिति वृत्तं रामाय कथयाम्रासेति व्यक्तम् ॥ २५ ॥

गो० टी०—केकयराजाय राज्यशुल्कं दत्त्वा कैकेयीविवाहं कृतवान् तं वृत्तान्तं हृदि कृत्वाह—विप्रोषित इति । अयं वृत्तान्तः सप्तोत्तरशततमे सर्गे 'पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् । मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम्' इति स्पष्टीभविष्यति प्राप्तकाल इत्यत्रेतिकरणं द्रष्टव्यम् ॥ २५ ॥

२६ ] ति० टी०—ननु भरते एषा शङ्का न युक्तेत्यत आह—काममिति । काममिति यद्यपीत्यर्थे ॥ २६ ॥

रा० टी०—ननु स्वप्रतिज्ञापूरीकरणाय भरत एवाहूयाभिषिच्यतामित्यत आह—काममिति । ज्येष्ठानुवर्ती ज्येष्ठानुवर्तनशीलः धर्मात्मा नित्यं धर्ममनस्कः सानुक्रोशः सदयः जितेन्द्रियः वशीकृतोभयकरणः ते भ्राता भरतः सतां महात्मनां वृत्ते ज्येष्ठ एवाभिषेक्तव्य इत्याकारकवृत्तान्ते काममत्यन्तं खलु निश्चयेन स्थितः एतेन एतदभिप्रायेणैव भरतो मातुलकुले बहुदिनं स्थित इति सूचितं तेन मयि तत्र स्थिते हठाद्राज्याभिलाषिणमिव मां मत्वा पितृप्रतिज्ञाभङ्गभिया रामो नात्मानमभिषेक्ष्यतीति भरताभिप्रायः सूचितः तेन कन्याशुल्कस्य साभिलषितत्वे एव राज्यशुल्कप्रदानप्रतिज्ञेति व्यञ्जितं तेन रामाभिषेकश्रवणानन्तरं मातुलकुलादयोध्यां नागन्तास्मीति पितुः प्रतिज्ञाय भरतो गत इति व्यञ्जितम् ॥ २६ ॥

गो० टी०—काममिति । वृत्ते आचारे ॥ २६ ॥

२७ ] ति० टी०—किं न्विति तथापीत्यर्थे । मनुष्याणां चित्तं स्नेहादिमदप्यनित्यं विकारनिमित्ते सति विक्रियतैवेत्यर्थः । यतः सतां धर्मनित्यानामपि चित्तं तत्तन्निमित्तकृतेन रागद्वेषादिना शोभते युज्यते तथा न तु सर्वथा स्वतो नियतकिंचित्स्वभावमित्यर्थः ॥ २७ ॥

रा० टी०—ननु सर्वेषां जनानां खण्डमण्डलेश्वराणां च त्वदाज्ञानुवर्तित्वात् विघ्नशङ्काया अभावेन कालान्तरेऽभिषेको भवितेति किं द्रुतप्रवर्त्यत इत्यत आह—किं न्विति । मनुष्याणां चित्तमनित्यं प्रतिक्षणं परिणामि अतः किं नु चित्तं कुत्सितमित्यर्थः । इति मे मतं निश्चयः धर्मनित्यानां धर्मपालकानां सतां चित्तं तु कृतशोभि कृतेन कर्तव्यकर्मणः सिद्ध्यैव शोभते तच्छीलम् एतेनावश्यकमङ्गलकृत्ये विलम्बो न कार्य इति व्यञ्जितम् ॥ २७ ॥

गो० टी०—अत्यन्तधर्मिष्ठानामपि चेतश्चञ्चलत्वात् मित्रभेदादि नान्यथा भवतीत्याह—किं त्विति । किंतु तथापीत्यर्थः । यद्यपि कामं खलु सतां वृत्त इत्याद्युक्तगुणविशिष्टतया स न शङ्कास्पदीभूतः तथापि मनुष्याणां मनुष्यत्वसाधारण्येन शङ्कितं चित्तमनित्यं चञ्चलमिति मे मतिः मम निश्चय इत्यर्थः । सामान्यप्रयुक्तदोषो विशेषे न संक्रमत इत्याह—सतां त्विति । तुशब्दः पक्षव्यावृत्त्यर्थः धर्मनित्यानां धर्मैकनिरतानां कृतशोभि कृतेन परस्परोपकारेण शोभते नतु भेदं प्राप्नोति राघवः रघुवंशोत्पन्नस्त्वं स्ववंशप्रभावं न जानासि किम् । अन्ये त्वेवं व्याचक्षते धर्मनित्यानां धर्मनिरतानां चित्तं कृतशोभि कृतेन परकृतमित्रभेदादिना शोभितं शीलमस्यास्तीति कृतशोभीति अपरे त्वाहुः सतां चित्तं कृतेन कार्येण शोभते नतु करिष्यमाणेन कृतं कार्यमनुमोदते नतु करिष्यमाणमिति भाव इति ॥ २७ ॥

२८ ] ति० टी०—अभिषेचनेऽभिषेचनविषये । इत्युक्तो व्रजेत्यभ्यनुज्ञात इति संबन्धः । अभिभाष्यामन्त्र्य ॥ २८ ॥

रा० टी०—इतीति । श्वोभाविन्यभिषेचने इति अनेन प्रकारेण उक्तः सम्यक् शिक्षितः व्रज मदुपदिष्टव्रतसिद्धये स्वगृहं गच्छेत्यभ्यनुज्ञातः स रामः पितरमभिभाष्य प्रणामवाक्यपूर्वं गृहमयात् अगच्छत् ॥ २८ ॥

गो० टी०—इतीति । अभिषेचने विषये इत्युक्तः स रामः व्रजेत्यनुज्ञात इति संबन्धः ॥ २८ ॥

---

१ किं त्विति गो. पाठः । २ मतिरिति गो. पाठः । ३ त्विति गो. पाठः । ४ अभिनाद्येति गो. पाठः ।

प्रविश्य चात्मनो वेश्म राज्ञादिष्टेऽभिषेचने । तत्क्षणादेव निष्क्रम्य मातुरन्तःपुरं ययौ ॥ २९ ॥
तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् । वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥ ३० ॥
प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा । सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥ ३१ ॥
तस्मिन्कालेऽपि कौसल्या तस्थावामीलितेक्षणा । सुमित्रयान्वास्यमाना सीतया लक्ष्मणेन च ॥ ३२ ॥
श्रुत्वा पुष्ये च पुत्रस्य यौवराज्येऽभिषेचनम् । प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥ ३३ ॥
तथा सनियमामेव सोऽभिगम्याभिवाद्य च । उवाच वचनं रामो हर्षयंस्तामिदं वरम् ॥ ३४ ॥
अम्ब पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि । भविता श्वोऽभिषेको मे यथा मे शासनं पितुः ॥ ३५ ॥
सीतयाप्युपवस्तव्या रजनीयं मया सह । एवमुक्तमुपाध्यायैः स हि मामुक्तवान्पिता ॥ ३६ ॥

---

२९ ] ति० टी०—राज्ञादिष्टे आज्ञप्तेऽभिषेचने सीतायै तदपेक्षितराजोपदिष्टसभार्योपवासानुष्ठाननिवेदनाय स्वगृहं प्रविश्य तत्र सीतामदृष्ट्वा तत्क्षणादेव मातुरन्तःपुरं ययौ ॥ २९ ॥

रा० टी०—प्रविश्येति । अभिषेचने राज्ञा दिष्टे सति आत्मनो वेश्म गृहं प्रविश्य तत्क्षणादेव निष्क्रम्य स्वभवनाद् बहिरागत्य मातुरन्तःपुरं ययौ ॥ २९ ॥

गो० टी०—प्रविश्य चेति । राज्ञोदिष्टेऽभिषेचन इति निमित्तसप्तमी राज्ञोदिष्टमभिषेकं कथयितुमित्यर्थः ॥ २९ ॥

३० ] ति० टी०—प्रवणां देवताराधनतत्पराम् । आयाचतीमिति च्छेदः । श्रियं रामाय राज्यलक्ष्मीम् ॥ ३० ॥

रा० टी०—तत्रेति । तत्र तस्मिन् समये प्रवणां देवाराधने संलग्नचित्तामत एव वाग्यतां निवृत्तवाचं श्रियं प्रजासंपत्तिमायाचन्तीं देवेभ्यः प्रार्थयन्तीं क्षौमवासिनीं मातरं देवतागारे ददर्श ॥ ३० ॥

गो० टी०—प्रवणां स्वासाधारणदेवतासक्तचित्तां क्षौमवासिनीं व्रतोपयुक्तक्षौमवस्त्रधरां वाग्यतां यतवाचं मौनवतीमित्यर्थः । श्रियं संपदमायाचतीं प्रार्थयन्तीं रामायेति शेषः ॥ ३० ॥

३१ ] ति० टी०—आनायिता कौसल्ययेति शेषः ॥ ३१ ॥

रा० टी०—प्रागिति । रामाभिषेचनं श्रुत्वा सुमित्रा तत्र प्रागेवागता लक्ष्मणश्चागतः सीता च आनायिता सुमित्रालक्ष्मणाभ्यां प्रापिता ॥ ३१ ॥

गो० टी०—प्रागिति । प्राक् रामागमनात् पूर्वमेव सुमित्रा प्रियं रामाभिषेचनं श्रुत्वा आगता लक्ष्मणश्च तदा सुमित्रागमनकाले आगतः सीता तु परतन्त्रत्वात्स्वयं नागता किंतु दासीभिरानायिता ॥ ३१ ॥

३२ ] ति० टी०—तस्मिन्कालेऽपि रामागमनविशिष्टे कालेऽप्यामीलितेक्षणा ध्यानवशाद् अन्वास्यमानोपास्यमाना ॥ ३२ ॥

३३ ] ति० टी०—'पुष्येण' इति पाठे तद्युक्तकालस्याधिकरणस्यापि करणत्वविवक्षा बोध्या ॥ ३३ ॥

रा० टी०—तस्मिन्निति । तस्मिन् रामागमनाधिकरणीभूते काले सुमित्रादिभिरन्वास्यमाना उपास्यमाना पुत्रस्य यौवराज्याभिषेचनं श्रुत्वैव प्राणायामेन जनार्दनं महाजनैः प्रार्थितं पुरुषं ध्यायमाना ध्यायन्ती अत एव आमीलितेक्षणा आमीलितनयना कौशल्या तस्थौ । श्लोकद्वयमेकान्वयि अपिरेवार्थे ॥ ३२ ॥ ३३ ॥

गो० टी०—तस्मिन्निति । तस्मिन् रामागमनकाले पुत्रस्य पुष्येण यौवराज्याभिषेचनं श्रुत्वा सुमित्रादिभिरन्वास्यमाना प्राणायामेन प्राणायामपूर्वकं पुरुषं पुरुषसूक्तप्रतिपाद्यपुरुषशब्दवाच्यं जनार्दनं नारायणं ध्यायमाना ध्यायन्ती आमीलितेक्षणा तस्थौ ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०—वरं श्रेष्ठम्, अत एव हर्षयन् ॥ ३४ ॥

रा० टी०—तथेति । तथा उक्तप्रकारेण सम्यक् नियमो यस्याः तां मातरमभिगम्य प्राप्य अभिवाद्य च हर्षयन् रामः इदं वरं वचनमुवाच ॥ ३४ ॥

गो० टी०—तथेति । तथा पूर्वोक्तरीत्या सनियमां समीचीननियमाम् ॥ ३४ ॥

३५ ] ति० टी०—यथा मे पितुः स्वसंबन्धेन राज्ञो दशरथस्यात्युत्कृष्टत्वध्वननम्, शासनमाज्ञा तथा श्वो मे मेऽभिषेको भवितेति संबन्धः ॥ ३५ ॥

रा० टी०—तद्वचनाकारमाह—अम्बेति । हे अम्ब ! प्रजापालनकर्मणि पित्राहं नियुक्तोऽस्मि अत एव श्वो मेऽभिषेको भविता इति मे पितुः यथा यथावदनुशासनमाज्ञास्तीति शेषः ॥ ३५ ॥

गो० टी०—अम्बेति । मे पितुः शासनं यथा तथाभिषेकः श्वो भवितेति संबन्धः ॥ ३५ ॥

३६ ] ति० टी०—स हीति हिरप्यर्थे । स पितापि मामेवमुक्तवानित्यर्थः ॥ ३६ ॥

रा० टी०—सीतयेति । मया सह सीतयापि इयं रजनी उपवस्तव्या एवमुपाध्यायैरुक्तं वचः स पिता मामुक्तवान् ॥ ३६ ॥

गो० टी०—सीतयेति । सीतया मयापि सह तुल्यतया इयं रजनी एकाग्निरात्रिः उपवस्तव्या अस्यां रजन्यामुपवस्तव्यमित्यर्थः । किं त्वयैवोच्यते नेत्याह- एवमिति ॥ ३६ ॥

---

१ राज्ञोद्दिष्टे इति गो. पाठः । २ तत्क्षणेन चेति गो. पाठः । ३ राज्याभिषेचनमिति गो. पाठः । ४ तथेति गो. पाठः । ५ ऋत्विगुपाध्यायैरिति गो. पाठः । ६ सहेति गो. पाठः ।

यानि यान्यत्र योग्यानि श्वो भाविन्यभिषेचने । तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ॥ ३७ ॥
एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकाङ्क्षितम् । हर्षबाष्पाकुलं वाक्यमिदं राममभाषत ॥ ३८ ॥
वत्स राम चिरं जीव हतास्ते परिपन्थिनः । ज्ञातीन्मे त्वं श्रिया युक्तः सुमित्रायाश्च नन्दय ॥ ३९ ॥
कल्याणे बत नक्षत्रे मया जातोऽसि पुत्रक । येन त्वया दशरथो गुणैराराधितः पिता ॥ ४० ॥
अमोघं बत मे क्षान्तं पुरुषे पुष्करेक्षणे । येयमिक्ष्वाकुराज्यश्रीः पुत्र त्वां संश्रयिष्यति ॥ ४१ ॥
इत्येवमुक्तो मात्रा तु रामो भ्रातरमब्रवीत् । प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥ ४२ ॥
लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुंधराम् । द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥ ४३ ॥
सौमित्रे भुङ्क्ष्व भोगांस्त्वमिष्टान्राज्यफलानि च । जीवितं चापि राज्यं च त्वदर्थमभिकामये ॥ ४४ ॥

---

३७ ] ति० टी०—मङ्गलानि महार्हगन्धमाल्याभरणादिरूपाणि मङ्गलस्नानादीनि च ॥ ३७ ॥

रा० टी०—यानीति । मे वैदेह्याश्च यानि यानि मङ्गलानि अभिषेचने योग्यानि तानि तानि कारय ॥ ३७ ॥

गो० टी०—यानीति । मङ्गलानि मङ्गलकर्माणि ॥ ३७ ॥

३८ ] ति० टी०—चिरकालाभिकाङ्क्षितमेतदभिषेकरूपम् । हर्षजबाष्पेणाकुलमव्यक्तमधुरम् ॥ ३८ ॥

रा०टी०—एतदिति । चिरकालाभिकाङ्क्षितमेतद्वाक्यं श्रुत्वा कौसल्या हर्षबाष्पाकुलमानन्दाश्रुव्याप्तं वाक्यमभाषत ॥ ३८ ॥

गो० टी०—एतदिति । हर्षबाष्पकलं वाक्यं हर्षबाष्पेण कलमव्यक्तमधुरं वाक्यमीषद्वाक्यम् ॥ ३८ ॥

३९ ] ति० टी०—हताः भवन्त्विति शेषः । मे मम सुमित्रायाश्च ज्ञातीन्बन्धूनभिनन्दय ॥ ३९ ॥

रा० टी०—तद्भाषणाकारमाह—वत्सेति । त्वं चिरं जीव ते परिपन्थिनः त्वद्विषयकविरुद्धबुद्धयो हताः भवन्त्विति शेषः। अतः श्रिया युक्तस्त्वं सुमित्रायाः शोभनमित्रवत्या मे ज्ञातीन्बन्धून्नन्दय अधिकं प्रमोदय । चो हेतौ ॥ ३९ ॥

गो० टी०—वत्सेति । हताः भवन्त्विति शेषः । ज्ञातीन् बन्धून् ॥ ३९ ॥

४० ] ति० टी०—कल्याणे नक्षत्रे शुभयुक्ते काले जातो जनितः । येन शुभकालजननेन ॥ ४० ॥

रा० टी०—कल्याण इति । येन त्वया गुणैः पिता दशरथः आराधितः स त्वं कल्याणे शुभप्रदे नक्षत्रे मया जातः प्रादुर्भावितोऽसि ॥ ४० ॥

गो० टी०—कल्याण इति । कल्याणे अतिशोभने नक्षत्रे मयि जातोऽसि बतेति संतोषे 'खेदानुकम्पासंतोषविस्मयामन्त्रणे बत' इत्यमरः । 'मया' इतिपाठे मया हेतुनेत्यर्थः । येन येन कारणेन ॥ ४० ॥

४१ ] ति० टी०—पुष्करनेत्रे पुरुषे विष्णौ यन्मे क्षान्तं कष्टं परित्यज्य तत्प्रीतिमात्रफलकं व्रतोपवासादि कृतं तदमोघं सफलं जातम् । बतेति हर्षे । साफल्ये हेतुर्येयमित्यादि । इत्यमाषतेत्यन्वयः ॥ ४१ ॥

रा० टी०—अमोघमिति । पुष्करेक्षणे कमलनयने पुरुषे परमात्मनि तत्प्रसादार्थमित्यर्थः । यन्मे क्षान्तं तदुपलक्षिततपःकृतं तदमोघं सफलमत एव या इयमिक्ष्वाकुराज्यश्रीः सा त्वां संश्रयिष्यति ॥ ४१ ॥

गो० टी०—अमोघमिति । पुष्करेक्षणे पुण्डरीकाक्षे पुरुषे नारायणे विषये मे क्षान्तं व्रतोपवासादिक्लेशसहनममोघं सफलम् । साफल्ये हेतुमाह—येयमिति । सा संश्रयिष्यतीति शेषः ॥ ४१ ॥

४२ ] ति० टी०—स्मयन्निव ईषद्धसन्निवेत्यर्थः ॥ ४२ ॥

रा० टी०—इतीति । एवमुक्तो रामः प्राञ्जलिं बद्धमुकुलकरं प्रह्वं प्रणतं प्राक् समासीनं भ्रातरं वीक्ष्य स्मयन्नेवाब्रवीत् । इव एवार्थे ॥ ४२ ॥

गो० टी०—इतीति । स्मयन्निव समन्दस्मित इत्यर्थः । संतोषातिशयेनाब्रवीदिति भावः ॥ ४२ ॥

४३ ] ति० टी०—स्वनिविष्टं राज्यं सौभ्रात्रेण साधारणं करोति—लक्ष्मणेति ॥ ४३ ॥

रा० टी०—तद्वचनाकारमाह—लक्ष्मणेति । यतः इयं श्रीः राज्यलक्ष्मीः द्वितीयं मेऽन्तरात्मानमन्तरङ्गशरीरं त्वामुपस्थिता प्राप्ता अतः मया सार्धं वसुंधरां प्रशाधि किंच मया सार्धं विद्यमानस्त्वं वसुंधरां मेऽन्तरात्मानं मानसं च प्रशाधि मे मनो स्वस्थं चेत् सिद्धयेत्यर्थः ॥ ४३ ॥

गो० टी०—लक्ष्मणेति । द्वितीयमन्तरात्मानं द्वितीयं प्राणम् ॥ ४३ ॥

४४ ] ति० टी०—राज्यफलरूपानिष्टान्मनोऽनुकूलान्भोगान्विषयान् यद्वा राज्यफलानि धर्मार्थौ तौ च प्राप्नुहि । त्वदर्थं न स्वप्रयोजनाय ॥ ४४ ॥

रा० टी०—सौमित्रे इति । हे सौमित्रे ! इष्टान् समभिलषितान् भोगान् भोग्यपदार्थान् भुङ्क्ष्व राज्यफलानि अतिदानादिजनितयशआदीनि च भुङ्क्ष्व प्राप्नुहीत्यर्थः । तत्र हेतुः जीवितं पालनं राज्यं राजसुखभोगं च त्वदर्थमभिकामये वाञ्छामि ॥ ४४ ॥

---

१ बाष्पकलमिति गो. पाठः । २ इष्टमिति गो. पाठः । ३ प्राक्समासीनमिति रा. पाठः । ४ च हीति गो. पाठः ।

इत्युक्त्वा लक्ष्मणं रामो मातरावभिवाद्य च । अभ्यनुज्ञाप्य सीतां च ययौ स्वं च निवेशनम् ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः ।

दशरथोक्तो वसिष्ठो रामनिवेशनं प्राप्य ससीतं रामं वेदव्रताचरणं निवेद्य दशरथान्तिकं ययौ । दशरथः सभ्याश्च वसिष्ठमभि-तस्थुः । वसिष्ठेन कृताभ्यनुज्ञो दशरथः समाजनं विसृज्यान्तःपुरं प्रविवेश ।

संदिश्य रामं नृपतिः श्वोभाविन्यभिषेचने । पुरोहितं समाहूय वसिष्ठमिदमब्रवीत् ॥ १ ॥
गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन । श्रेयसे राज्यलाभाय वध्वा सह यतव्रत ॥ २ ॥
तथेति च स राजानमुक्त्वा वेदविदां वरः । स्वयं वसिष्ठो भगवान्ययौ रामनिवेशनम् ॥ ३ ॥
उपवासयितुं वीर मन्त्रविन्मन्त्रकोविदम् । ब्राह्मं रथवरं युक्तमास्थाय सुधृतव्रतः ॥ ४ ॥
स रामभवनं प्राप्य पाण्डुराभ्रघनप्रभम् । तिस्रः कक्ष्या रथेनैव विवेश मुनिसत्तमः ॥ ५ ॥
तमागतमृषिं रामस्त्वरन्निव ससंभ्रमम् । मानयिष्यन्समानार्हं निश्चक्राम निवेशनात् ॥ ६ ॥

---

गो० टी०—सौमित्र इति । भोगान् भोग्यपदार्थान् इ-ष्टान् अभिमतान् राज्यफलानि अनर्घ्यरत्नवस्त्राभरणादीनि ॥४४॥

४५ ] ति० टी०—सीतां च स्वं चाभ्यनुज्ञाप्य सीतायै स्वस्मै च मातृभ्यामनुज्ञां दापयित्वा निवेशनं स्वगृहं ययौ । चस्त्वर्थे ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्थः सर्गः ॥ ४ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण लक्ष्मणमुक्त्वा मातरौ कौसल्यासुमित्रे अभिवाद्य प्रणम्य च सीतामभ्यनु-ज्ञाप्य भर्तार्थमाज्ञाप्य च स्वं निवेशनं ययौ ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणा-वयोध्याकाण्डे चतुर्थः सर्गः ॥ ४ ॥

गो० टी०—इतीति । सीतां चाभ्यनुज्ञाप्य मातृभ्यामिति शेषः ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बरा-ख्यानेऽयोध्याकाण्डव्याख्याने चतुर्थः सर्गः ॥ ४

१ ] ति० टी०—संदिश्य राममुपवासादि कुर्वित्युक्त्वा ॥१॥

रा० टी०—रामाज्ञानन्तरकालिकराजवृत्तान्तमाह—संदि-श्येति । अभिषेचने अभिषेकार्थं रामं संदिश्य यथाविध्युप-वासं कुर्वित्याज्ञाप्य पुरोहितं वसिष्ठं समाहूय नृपतिरब्रवीत् ॥१॥

गो० टी०—अथोपवासस्य पुरोहितसंकल्पमन्त्रादिसाध्य-त्वात्पुरोहितं संदिशति पञ्चमे—संदिश्येति । व्रतोपवासा-दिकं कुर्वित्याज्ञाप्य ॥ १ ॥

२–३ ] ति० टी०—गच्छेति । उपवाससंकल्पादेः पुरो-हितसाध्यत्वादिति भावः। श्रेयसे विघ्ननिवृत्तिरूपश्रेयोर्थम्॥२॥३॥

४ ] ति० टी०—ब्राह्मं ब्राह्मणारोहणयोग्यम् । युक्तमश्वैः य-याविति पूर्वेणान्वयः ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—गच्छेति । हे तपोधन ! गच्छ रामसमीपमिति शेषः। गमनप्रयोजनमाह—वध्वा सह यत-व्रतं काकुत्स्थं रामं श्रेयसे प्रजाकल्याणजनकाय राज्यलाभाय उपवासं यथामन्त्रमुपोषणं कारय। "हृक्रोः—" इति कर्मत्वम्॥२॥

गो० टी०—गच्छेति । काकुत्स्थमुपवासं कारय "हृक्रो-रन्यतरस्याम्" इति विकल्पेन काकुत्स्थशब्दस्य कर्मसंज्ञा ॥ २ ॥

रा० टी०—तथेति । स धृतव्रतः मन्त्रवित् मन्त्रबोधननिपुण इत्यर्थः। वेदविदां वरो वसिष्ठः तथेत्युक्त्वा युक्तं शोभनाश्वैः संयुक्तं ब्राह्मं ब्राह्मणारोहणयोग्यं रथवरमास्थाय वीरं मन्त्रकोविदं राम-मुपवासयितुं रामनिवेशनं ययौ। श्लोकद्वयमेकान्वयि॥३॥४॥

गो० टी०—तथेतीति । ब्राह्मं ब्राह्मणवहनयोग्यं युक्तं वा-जिभिर्युक्तमास्थाय ययाविति पूर्वेण संबन्धः ॥ ३ ॥ ४ ॥

५ ] ति०टी०—पाण्डुराभ्रघननिबिडप्रभम्। कक्ष्या द्वाराणि॥५॥

रा० टी०—स इति । स मुनिसत्तमो वसिष्ठः पाण्डुरा-भ्रघनप्रभं पाण्डुरमेघवत् निबिडदीप्तिविशिष्टं रामभवनं प्राप्य तिस्रः कक्षाः द्वारः रथेनैव विवेश ॥ ५ ॥

गो० टी०—स इति । पाण्डुराभ्रघनप्रभं पाण्डुराभ्रमूर्तसदृश-प्रभम् "घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे" इत्यमरः ॥ ५ ॥

६ ] ति० टी०—त्वरन्निव त्वरयेव । ससंभ्रमं सादरम्॥६॥

रा० टी०—तमिति । ससंभ्रममादरसहितं मानार्हं संमा-

---

१ जगाम स्वमिति गो. पाठः । २ चेदमिति गो. पाठः । ३ श्रीयशोराज्येति गो. पाठः । ४ व्रतमिति गो. रा. पाठः । ५ राममिति गो. पाठः । ६ मन्त्रवदिति गो. पाठः । ७ कोविद इति गो. पाठः । ८ दृढेति गो. पाठः । ९ कक्ष्येति रा. पाठः । १० संभ्रम इति गो. पाठः ।

अभ्येत्य त्वरमाणोऽथ रथाभ्याशं मनीषिणः । ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥ ७ ॥
स चैनं प्रश्रितं दृष्ट्वा संभाष्याभिप्रसाद्य च । प्रियार्हं हर्षयन्रामामित्युवाच पुरोहितः ॥ ८ ॥
प्रसन्नस्ते पिता राम यत्त्वं राज्यमवाप्स्यसि । उपवासं भवानद्य करोतु सह सीतया ॥ ९ ॥
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः । पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥ १० ॥
इत्युक्त्वा स तदा राममुपवासं यतव्रतः । मन्त्रवत्कारयामास वैदेह्या सहितं शुचिः ॥ ११ ॥
ततो यथावद्रामेण स राज्ञो गुरुरर्चितः । अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥ १२ ॥
सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः । सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥ १३ ॥
हृष्टनारीनरयुतं रामवेश्म तदा बभौ । यथा मत्तद्विजगणं प्रफुल्लनलिनं सरः ॥ १४ ॥
स राजभवनप्रख्यात्तस्माद्रामनिवेशनात् । निर्गत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥ १५ ॥
वृन्दवृन्दैरयोध्यायां राजमार्गाः समन्ततः । बभूवुरभिसंबाधाः कुतूहलजनैर्वृताः ॥ १६ ॥

मनयोग्यं तमागतमृषिं वसिष्ठं मानयिष्यन् संमानं करिष्यन् त्वरन्नेव स रामः निवेशनात्स्वभवनान्निश्चक्राम ॥ ६ ॥

गो० टी०—तमिति । त्वरन्निव इवशब्दो वाक्यालंकारे मानयिष्यन् माननाद्धेतोः "लक्षणहेत्वोः क्रियायाः" इति हेत्वर्थे शतृप्रत्ययः ॥ ६ ॥

७ ] ति० टी०—परिगृह्य हस्तेन हस्ते धृत्वा ॥ ७ ॥

रा० टी०—अभीति । त्वरमाणो रामः मनीषिणो वसिष्ठस्य रथाभ्यासं रथसमीपमभ्येत्य प्राप्य ततः तस्माद्रथात्स्वयं परिगृह्य अवतारयामास 'योग्यायामन्तिकेऽभ्यासोऽधिवासौ स्थानसत्क्रिये' इति नानार्थः ॥ ७ ॥

गो० टी०—अभ्येत्येति । रथाभ्याशं रथसमीपम् ॥ ७ ॥

८-९ ] ति० टी०—संभाष्य वत्सेत्यादि संबोध्य । अभिप्रसाद्य स्तुतिभिरिति शेषः । प्रियार्हं प्रियोक्त्यर्हम् ॥ ८ ॥ ९ ॥

रा० टी०—स इति । स पुरोहितः प्रियार्हं प्रियोक्तियोग्यं प्रश्रितं नतञ्चैनं रामं दृष्ट्वा हर्षयन्सन् संभाष्य यथोचितं संबोध्य अभिप्रसाद्य प्रशस्य च उवाच ॥ ८ ॥

गो० टी०—स इति । प्रश्रितं विनीतम् 'विनीतप्रश्रितौ समौ' इत्यमरः । संभाष्य कुशलप्रश्नं कृत्वा 'सभाज्य' इतिपाठे कुशलप्रश्नाधीनप्रीतिं जनयित्वेत्यर्थः । सभाजप्रीतिसेवनयोरित्यस्माद्धातोरार्षो ल्यप् । प्रियार्हं प्रियकथनार्हम् ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—प्रसन्न इति । हे राम ! ते पिता यद्यस्मात्प्रसन्नोऽस्तीति शेषः । अतः त्वं राज्यमवाप्स्यसि प्राप्स्यसि अत एव सीतया सह भवान् अद्य उपवासं करोतु ॥ ९ ॥

गो० टी०—प्रसन्न इति ॥ ९–११ ॥

१० ] ति० टी०—अभिषेक्ता लुट् ॥ १० ॥

रा० टी०—प्रातरिति । नराधिपो दशरथः प्रातर्यौवराज्ये ययातिं नहुष इव प्रीत्या त्वामभिषेक्ता ॥ १० ॥

११ ] ति० टी०—रामकुपवासं तत्संकल्पं कारयामासेति "दुहो—" इति द्विकर्मकत्वम् ॥ ११ ॥

रा० टी०—इतीति । वैदेह्या सहितं यतव्रतं राममित्युक्त्वा शुचिर्वसिष्ठः मन्त्रवत् यथामन्त्रमित्यर्थः उपवासं कारयामास ११

१२ ] ति० टी०—राज्ञो दशरथस्य ॥ १२ ॥

रा० टी०—तत इति । रामेण यथावदर्चितः राज्ञो गुरुर्वसिष्ठः काकुत्स्थं राममभ्यनुज्ञाप्य यथाविध्युपदिश्य ततः तस्माद्रामनिवेशनाद्ययौ ॥ १२ ॥

गो० टी०—तत इति । काकुत्स्थमभ्यनुज्ञाप्य अनुयान्तं रामं निवर्तस्वेत्युक्त्वा ययौ निर्ययौ ॥ १२ ॥

१३-१४ ] ति० टी०—प्रियंवदैः सुहृद्भिः सभाजितः पूजितः विवेश स्ववेश्म । तान्सुहृदः ॥ १३ ॥ १४ ॥

रा० टी०—सुहृद्भिरिति । प्रियंवदैः सुहृद्भिः सहासीनः सभाजितः तैः पूजितश्च रामः सर्वशस्तान् सुहृदोऽनुज्ञाप्य अथ विवेश स्वभवनमिति शेषः ॥ १३ ॥

गो० टी०—सुहृद्भिरित्यादि ॥ १३ ॥

रा० टी०—हृष्टेति । मत्तद्विजगणं मत्ता द्विजगणाः पक्षिसमूहाः यस्मिन् तत् प्रफुल्लानि नलिनानि कमलानि यस्मिन् तत् सर इव हृष्टनारीनरयुतं तद्रामवेश्म आबभौ ॥ १४ ॥

गो० टी०—हृष्टेति ॥ १४ ॥

१५ ] ति० टी०—राजभवनं मूलराजभवनम् । प्रख्यं सदृशम् ॥ १५ ॥

रा० टी०—रामप्रवेशमुक्त्वा गुरुवृत्तान्तमाह—स इति । राजभवनप्रख्यात् राजभवनसदृशात् रामनिवेशनान्निर्गत्य जनसंवृतं जनैः संयुक्तं मार्गं स वसिष्ठो ददृशे ॥ १५ ॥

गो० टी०—स इति ॥ १५ ॥

१६ ] ति० टी०—वृन्दानां वृन्दैः । अभिसंबाधाः संमर्दयुक्ताः । कुतूहलजनै रामाभिषेकदर्शनजकौतुकसंपन्नैर्जनैः ॥ १६ ॥

रा० टी०—वृन्देति । वृन्दवृन्दैः वृन्दानां समूहाः स्थितानां वृन्दैः समूहविशिष्टैः कुतूहलजनैः अभिषेकसामग्रीदर्शनजनितौत्सुक्यविशिष्टप्राणिभिः वृताः आच्छादिताः समन्ततः

१ चेति गो.पाठः । २ यौवराज्यमिति गो.पाठः । ३ यतव्रतमिति गो.रा.पाठः । ४ मुनिरिति गो.स.पाठः । ५ मार्गे इति रा.पाठः । ६ मान्तिक इति भाति ।

जनवृन्दोर्मिसंघर्षहर्षस्वनवृतस्तदा । बभूव राजमार्गस्य सागरस्येव निःस्वनः ॥ १७ ॥
सिक्तसंमृष्टरथ्या हि तथा च वनमालिनी । आसीदयोध्या तदहः समुच्छ्रितगृहध्वजा ॥ १८ ॥
तदा ह्ययोध्यानिलयः सस्त्रीबालाकुलो जनः । रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षन्नुदयं रवेः ॥ १९ ॥
प्रजालंकारभूतं च जनस्यानन्दवर्धनम् । उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् ॥ २० ॥
एवं तज्जनसंबाधं राजमार्गं पुरोहितः । व्यूहन्निव जनौघं तं शनै राजकुलं ययौ ॥ २१ ॥
सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य च । समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥ २२ ॥
तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः । पप्रच्छ स्वमतं तस्मै कृतमित्यभिवेदयत् ॥ २३ ॥

---

चतुर्दिक्षु विद्यमानाः अयोध्यायां राजमार्गाः अतिसंबाधाः गन्तॄणां परस्परमतिसंमर्दजनकाः बभूवुः ॥ १६ ॥

गो० टी०—वृन्दवृन्दैरिति । वृन्दानुबद्धानि वृन्दानि येषां ते वृन्दवृन्दाः तैः कुतूहलजनैः वृताः राजमार्गा अभिसंबाधा निबिडा बभूवुरिति योजना 'वृन्दवृन्दम्' इतिपाठे वृन्दवृन्दं यथा भवति तथा स्थितैरिति शेषः ॥ १६ ॥

१७ ] ति० टी०—जनवृन्दान्येवोर्मयस्तेषां संघर्षोऽन्योन्यसंघर्षणं तेन हर्षेण जातो यः स्वनस्तद्वृतः ॥ १७ ॥

रा० टी०—जनेति । जनवृन्दान्येवोर्मयस्तेषां संघर्षेण परस्परमतिसंबन्धेन जातो हर्षनिःस्वनः हर्षजनितशब्दः तद्वृतो राजमार्गस्य स्वनः सागरस्य समुद्रस्य निःस्वन इव बभूव ॥१७॥

गो० टी०—जनवृन्देति । जनवृन्दान्येव ऊर्मयः तेषां संघर्षः अन्योन्यघट्टनं हर्षः आनन्दोद्रेकः ताभ्यां जनितः स्वनोऽस्यास्तीति स्वनवान् तस्य एतेन सागरोपमा समर्थिता ॥१७॥

१८ ] ति० टी०—सिक्ताः सुगन्धिजलसिक्ताः संमृष्टाः शोधिता रथ्या यस्याम् । तदहस्तस्मिन्नहनि । तथा च तथैव । वनमालिनी तोरणमालावती । समुच्छ्रिता गृहेषु ध्वजा यस्यां सा ॥ १८ ॥

रा० टी०—सिक्तेति । सिक्ताः प्राप्तसुगन्धविशिष्टजलाभिषेकाः संमृष्टाः अधिकं संमार्जिताः रथ्याः मार्गाः यस्यां सा वनमालिनी संरचितमालासमूहविशिष्टा समुच्छ्रिताः सम्यगुन्नताः गृहध्वजाः यस्यां सा अयोध्या तदहस्तस्मिन् दिने आसीत्॥१८

गो० टी०—सिक्तेति । तदहः तस्मिन्नहनि वनमालिनी अलंकारार्थं विरचितक्रमुककदल्यादिवनपङ्क्तियुक्तेति यावत् ॥ १८ ॥

१९ ] ति० टी०—स्त्रीबालैः सहितश्चासावाकुलः संतोषात्संभ्रान्तचित्तः । 'सस्त्रीबालाबलः' इति पाठेऽबला वृद्धाः स्त्रीबालवृद्धसहितो जन इत्यर्थः । रामाभिषेकमाकाङ्क्षन्द्रष्टुमिच्छन् रवेरुदयमाकाङ्क्षन् अभूदिति शेषः ॥ १९ ॥

रा० टी०—तदेति । अयोध्यानिलयः अयोध्यानिवासी सस्त्रीबालाकुलः स्त्रीसहितबालैराकुलः व्याप्तो जनः रामाभिषेकमाकाङ्क्षन् रवेरुदयमाकाङ्क्षन् बभूवेति शेषः । 'सस्त्रीबालाबलः' इति पाठे अबलाः वृद्धाः स्त्रीबालवृद्धसहितो जन इत्यर्थः । इति भट्टः ॥ १९ ॥

गो० टी०—तदेति । सस्त्रीबालाबलः अबलाः बलरहिताः वृद्धा इति यावत् रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षदुदयं रवेरिति रामाभिषेकार्थं उदयमाकाङ्क्षदित्यर्थः । श्वो रामाभिषेक इति वार्ता यदा समजनि तदाप्रभृति रामाभिषेकादरातिशयेन आहारनिद्रादिव्यापारान्विहाय परदिवससूर्योदयमाकाङ्क्षदिति भावः ॥ १९ ॥

२० ] ति० टी०—महोत्सवं रामाभिषेकसंभूतम् ॥ २० ॥

रा० टी०—प्रजेति । प्रजाः अलंकारभूताः अत्यलंकारं प्राप्ताः यस्मिन् तम् जनस्य सहृदयस्यानन्दवर्धनं तमयोध्यामहोत्सवं द्रष्टुं जनः देशान्तरस्थोऽपि प्राणी उत्सुकोऽत्यभिलाषी अभूत् ॥ २० ॥

गो० टी०—प्रजालंकारभूतमिति । प्रजालंकारभूतं प्रजालंकरणहेतुभूतं प्रजालंकारप्रचुरमिति वा ॥ २० ॥

२१ ] ति० टी०—व्यूहन्निव राजमार्गं व्याप्य स्थितानेकतः कुर्वन्निव ॥ २१ ॥

रा० टी०—एवमिति । एवं जनसंबाधं तं राजमार्गं प्राप्त इति शेषः । पुरोहितो वसिष्ठः तं राजमार्गस्थं जनौघं व्यूहन् यत्नतः व्यूहरचनया संस्थापयन्निव राजकुलं ययौ ॥ २१ ॥

गो० टी०—एवमिति । राजमार्गं पश्यन्निति शेषः । तं जनौघं व्यूहन्निव रामाभिषेकजनितानन्दनिर्भरं जनौघं तत्र तत्र समूहीकुर्वन्निव शनैः राजकुलं राजगृहं ययौ ॥ २१ ॥ २२ ॥

२२ ] ति० टी०—सिताभ्रसदृशहिमगिरिशिखरसदृशम्॥२२॥

रा० टी०—सितेति । सिताभ्रशिखरप्रख्यं सिताभ्रसदृशानि शिखराणि यस्य सः हिमगिरिरित्यर्थः तत्प्रख्यं तच्छिखरसदृशं प्रासादमधिरुह्य शक्रेण शक्रस्य समीपं बृहस्पतिरिव नरेन्द्रेण नरेन्द्रस्य समीपं समी सर्वत्र तुल्यदर्शनो वसिष्ठः इयाय प्राप ॥ २२ ॥

२३ ] ति० टी०—राजासनं हित्वा प्रत्युत्थायेत्यर्थः । स्वमतं स्वानुमतं कृत्यं पप्रच्छ स च यदाज्ञप्तं तत्कृतमिति न्यवेदयत् ॥ २३ ॥

---

१ वत इति गो. रा. पाठः । २ तदहरिति गो. पाठः । ३ नगरीति गो. पाठः । ४ बालाबल इति गो. पाठः । ५ आकांक्षदिति गो. पाठः । ६ तमिति गो. पाठः । ७ शुभ्राभ्रेति गो. पाठः। ८ स इति गो. पाठः । ९ स च तस्मै तदिति गो पाठः। १० अभ्यवेदयदिति गो. रा. पाठः ।

तेन चैव तदा तुल्यं सहासीनाः सभासदः । आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥ २४ ॥
गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् । विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥ २५ ॥
तदग्र्यवेषप्रमदाजनाकुलं महेन्द्रवेश्मप्रतिमं निवेशनम् ।
व्यदीपयंश्चारु विवेश पार्थिवः शशीव तारागणसंकुलं नभः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येऽयोध्याकाण्डे पञ्चमः सर्गः ॥ ५ ॥

## षष्ठः सर्गः ।

वसिष्ठनियोगाद्रामः सीतया समं स्नानोपासनकुशसंस्तरशयनादिनियमं जग्राह । अन्येद्युश्च प्रातः प्रबोधितः संध्योपासनादीनि न्यवर्तयद्ब्राह्मणाश्च पुण्याहवाचनं विदधुः । पौराः पुरमलंकृत्य दशरथं प्राशंसन् । रामाभिषेकदिदृक्षागतजनैरयोध्या पूर्णाभवत् ।

गते पुरोहिते रामः स्नातो नियतमानसः । सह पत्न्या विशालाक्ष्या नारायणमुपागमत् ॥ १ ॥
प्रगृह्य शिरसा पात्रीं हविषो विधिवत्ततः । महते दैवतायाज्यं जुहाव ज्वलितानले ॥ २ ॥

रा० टी०—तमिति । नृपो दशरथः तं वसिष्ठमागतमभिप्रेक्ष्य अवलोक्य राजासनं हित्वा अभ्युत्थानं कृत्वेत्यर्थः । स्वमतं स्वेप्सितं रामोपवासकरणमित्यर्थः । पप्रच्छ तस्मै प्रश्नं कुर्वते राज्ञे कृतं भवदुक्तं मया संपादितमित्यभ्यवेदयत् अकथयत् । वसिष्ठ इति शेषः ॥ २३ ॥

गो० टी०—तमिति । नृपो दशरथः राजासनं स्वाधिष्ठितं सिंहासनं हित्वा प्रत्युत्थायेत्यर्थः । पप्रच्छ किं रामस्योपवासः कारित इतीति शेषः । सः वसिष्ठस्तस्मै दशरथाय तद् उपवासकरणम् ॥ २३ ॥

२४ ] ति० टी०—तुल्यं तुल्यकालम् ॥ २४ ॥

रा० टी०—तेनेति । तेन राज्ञा सहासीनाः सभासदः तदा राज्ञोत्थानसमये तेन तुल्यं पुरोहितं वसिष्ठं पूजयन्तः सन्तः आसनेभ्यः समुत्तस्थुः ॥ २४ ॥

गो० टी०—तेनेति । तदा दशरथसमुत्थानकाले तुल्यं युगपत् ॥ २४ ॥ २५ ॥

२५ ] ति० टी०—अभ्यनुज्ञातः सर्वस्य कर्तव्यस्य कृतत्वाद्विश्रम्यतामित्युक्तः ॥ २५ ॥

रा० टी०—गुरुणेति । गुरुणा अभ्यनुज्ञातो राजा मनुजौघं जनसमूहं विसृज्य त्यक्त्वा गिरिगुहां सिंह इव अन्तःपुरं विवेश ॥ २५ ॥

२६ ] ति० टी०—अग्र्य उत्तमः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चमः सर्गः ॥ ५ ॥

रा० टी०—तदिति । अग्र्यमत्युत्तमं रूपं येषां ते एव प्रमदाजनाः तैः आकुलं व्याप्तं महेन्द्रवेश्मप्रतिममिन्द्रभवनतुल्यं तच्चारु निवेशनं स्वभवनं तारागणसंकुलं नभः आकाशं शशीव विदीपयन् विशेषेण प्रकाशयन् सन् पार्थिवो विवेश ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०—तदिति । विदीपयन् तेजोविशेषेण द्योतयन् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

१ ] ति० टी०—आदरात्पुनरभिषेकसामग्रीवर्णनम् । उपागमदुपासाञ्चक्रे । नारं जीवसमूहोऽयनमन्तर्यामितया स्थानं यस्य तेनान्तर्यामिणमित्यर्थः ॥ १ ॥

रा० टी०—गत इति । पुरोहिते वसिष्ठे गते सति स्नातो नियतमानसः एकाग्रचित्तः रामः विशालाक्ष्या पत्न्या सह नारायणं स्वमर्यादापुरुषोत्तमत्वमुपागमत् अस्मरत् । नारायणशब्दार्थस्तु नारेण नीत्यैव अयते भावप्रधानो निर्देशः ॥ १ ॥

गो० टी०—अथ रामस्याभिषेकसन्नाहं दर्शयति षष्ठे—गत इत्यादि । पुरोहिते गत इत्यसन्निधानकृतराजसगुणनिमित्तकनास्तिक्यव्यावृत्तिः, स्नात इति कायशुद्धिः, नियतमानस इति मनःशुद्धिः, सहपत्न्येतिश्रीरङ्गविग्रहानुभवसागरतरणस्य सहायोक्तिः “पत्नुर्नौ यज्ञसंयोगे” इति दीक्षानियमस्य पत्नीसहायत्वोक्तिश्च तृतीयया आराधनकाले सीताया उपकरणसमर्पणपरता व्यज्यते विशालाक्ष्येति रामविग्रहानुभवादपि श्रीरङ्गविग्रहस्य निरतिशयप्रियास्पदत्वेन निर्निमेषानुभव उक्तः विशालाक्ष्या नारायणमिति सीतानेत्रवागुराकृष्टतया सीताया अप्राधान्यं नारायणस्य स्वामीप्सिततमत्वेन प्राधान्यं चोक्तम् । अत्र नारायण इति श्रीरङ्गनायक उच्यते उत्तरत्र तस्यैव विशेषणाय दानोक्तेः ॥ १ ॥

२ ] ति० टी०—शिरसा पात्रीं प्रगृह्य नमस्कारपूर्वमित्यर्थः महते दैवताय नारायणाय ॥ २ ॥

रा० टी०—तन्मर्यादापुरुषोत्तमत्वं प्रकटयितुं तत्कर्तृकवेदबोधितकर्माचरणं बोधयन्नाह—प्रगृह्येत्यादिभिः । शिरसा तदुपलक्षितनमस्कारेण हविषः पात्रीं प्रगृह्य नमस्कारपूर्वकं

१ रूपमिति गो. रा. पाठः । २ गणकुलमिति गो. पाठः । ३ विदीपयन्निति गो. रा. पाठः । ४ तदेति गो. पाठः । ५ ज्वलिते हुतं गो. रा. पाठः ।

शेषं च हविषस्तस्य प्राश्याशास्यात्मनः प्रियम् । ध्यायन्नारायणं देवं स्वास्तीर्णे कुशसंस्तरे ॥ ३ ॥
वाग्यतः सह वैदेह्या भूत्वा नियतमानसः । श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः ॥ ४ ॥
एकयामावशिष्टायां रात्र्यां प्रतिविबुध्य सः । अलंकारविधिं सम्यक्कारयामास वेश्मनः ॥ ५ ॥
तत्र शृण्वन्सुखा वाचः सूतमागधवन्दिनाम् । पूर्वां संध्यामुपासीनो जजाप सुसमाहितः ॥ ६ ॥
तुष्टाव प्रणतश्चैव शिरसा मधुसूदनम् । विमलक्षौमसंवीतो वाचयामास स द्विजान् ॥ ७ ॥

हविःपात्रं गृहीत्वेत्यर्थः । ततः तस्याः पात्र्याः आज्यं प्रगृह्य ज्वलितेऽनले महते यागदेवताख्याय दैवताय देवतायै विधिवज्जुहाव । प्रगृह्येत्युभयान्वयि ॥ २ ॥

गो० टी०—प्रगृह्येति । शिरसा पात्रीं प्रगृह्येति "उपरि हि देवेभ्यो धारयति" इति श्रुतिरुपबृंहिता । महते दैवताय निरतिशयमहिमवते दैवताय "तं देवतानां परमं च दैवतम्" इति श्रुतेः नारायणायेत्यर्थः । नारायणमुपागमदित्युपक्रमात् ध्यायन्नारायणं देवमित्युत्तरश्लोकेश्च । तेन महते दैवतायेति महादेववाचित्वभ्रान्तिर्निरस्ता नच व्यस्तस्य विभिन्नविभक्त्यन्तस्यैकपदत्वमेका वा शक्तिरस्ति महादेवशब्दस्याखण्डस्य शिवे शक्तावपि खण्डपदद्वयस्य प्रस्तुतपरदेवतावरुद्धस्याप्रस्तुतान्यदेवतावाचकत्वकल्पनमन्धतामिस्रनिपातकदुरितादृष्टं विना न शक्यते ॥ २ ॥

३ ] ति० टी०—आशास्य प्रार्थ्य आत्मनः प्रियं राज्याभिषेकाविघ्नरूपं वस्तुतो रावणवधफलकवनगमनरूपमाशास्य संकल्प्येत्यर्थः । वैदेह्या सहेत्यत्राप्यपकृष्टव्यम् । नहि चतुर्दशभुवनाधिपतेरेतद्यौवराज्यं प्रियं भवति । सकलतदैश्वर्यमप्यप्रियत्वादात्मन इत्यस्य वैफल्यं चाथ व्याख्याने प्राप्नोतीति दिक् । कुशसंस्तरे कुशमये शयनीये ॥ ३ ॥

रा० टी०—शेषमिति । तस्य हुतस्य हविषः शेषमाशास्य प्रशस्य प्राश्य भुक्त्वा प्रियं स्वप्रीतिविषयीभूतमत एव देवं प्रमोदप्रापकं नारायणं स्वमर्यादापुरुषोत्तमत्वं ध्यायन् स्मरन् सन् श्रीमति सकलैश्वर्यविशिष्टे आयतने विधिनिर्मितयागगृहे विष्णोः स्वास्तीर्णे विष्णुकर्तृकशोभनविस्तारविशिष्टे कुशसंस्तरे कुशासने नियतमानसः नरवरात्मजो रघुनाथः वैदेह्या सह वाग्यतो भूत्वा शिश्ये विष्णोः स्वास्तीर्णे इत्यनेन विष्णुपूज्यत्वं रघुनाथस्य द्योतितम् विष्णोरिति संबन्धसामान्ये षष्ठी द्वयोरेकत्रान्वयः । विष्णोरायतने शिश्ये इत्यर्थस्तु न युक्तः गर्भमन्दिरे शयनस्य निषेधात् गौणग्रहणे तु स एव दोषः ॥ ३ ॥ ४ ॥

गो० टी०—शेषमिति । आत्मनः प्रियमाशास्य श्रीरङ्गार्पितहविःशेषं स्वस्यात्यन्तप्रियत्वेनानुसंधाय नारायणं श्रीरङ्गनायकं ध्यायन् कुशसंस्तरे कुशमये शयनीये 'शयनीये समस्तन्तौ संस्तरः परिकीर्तितः' इति निघण्टुः । वैदेह्या सहेति उभयोरप्येकशय्यायां जितेन्द्रियत्वं ध्वनितम् । श्रीमति श्रियमार्न प्रणवाकाररमित्यानुक्त्वेदत्रयसारभूतप्रणवाकारे "ऋचः सामानि यजूंषि सा-हि श्रीरमृता सताम्" इति श्रुतेः विष्णोरायतने श्रीरङ्गधाम्नि शिश्ये शयनं कृतवान् नरवरात्मजः स्वस्य साक्षाद्भगवदवतारत्वेऽपि श्रीरङ्गविग्रहार्चोपसर्जनभावः स्वावताराद्यमतत्क्षत्रियधर्मानुगुणः ॥ ३ ॥ ४ ॥

४–५ ] ति० टी०—नियतमीश्वरमात्रविषयम् । विष्णोरायतने निजभवनवर्तिनि देवपूजालये ॥ ४ ॥ ५ ॥

रा० टी०—एकेति । एकयामावशिष्टायां यामत्रयव्यतीतायामित्यर्थः । रात्र्यां प्रतिबुध्य स्वीकृतनिद्रां परित्यज्य स रघुनाथः वेश्मनः सभामण्डपस्य अलंकारविधिं यथोक्तमलंकारं सम्यगेव कारयामास दीपप्रज्वलनादि कर्तुमाज्ञापयामासेत्यर्थः । तुशब्द एवार्थे ॥ ५ ॥

गो० टी०—एकयामावशिष्टायामिति । अलंकारविधिं अलंकारविधानम् 'विधिर्विधाने दैवेऽपि' इत्यमरः ॥ ५ ॥

६ ] ति० टी०—सूताः पौराणिकाः मागधा वंशावलीकीर्तकाः बन्दिनः स्तुतिपाठकाः । पूर्वां संध्यामुपासीनस्तदुपासनं कुर्वञ्जजाप गायत्रीजपस्यैव तदुपासनरूपत्वात् ॥ ६ ॥

रा० टी०—तत इति । ततः अलंकारकरणाज्ञापनानन्तरं सूतमागधबन्दिनां सूताः पौराणिकाः मागधाः वंशप्रशंसकाः बन्दिनः सत्यशोवकारः तेषां सुखा वाचः शृण्वन् पूर्वां संध्यामुपासीनश्च सन् यतमानसो रामः जजाप गायत्र्यादिजपं चकारेत्यर्थः । विनापि चं समुच्चयः ॥ ६ ॥

गो० टी०—तत्रेति । सूताः सूतकुलोत्पन्नाः पुण्यश्लोकदेवताकीर्तकाः मागधाः मगधदेशोत्पन्नाः वंशावलिकीर्तकाः बन्दिनः स्तुतिपाठकाः संध्यां संध्याधिदेवतां सूर्यमुपासीनः ध्यायन् यतमानसः नियतमनस्कः अनन्यचित्त इति यावत् जजाप गायत्रीमिति शेषः ॥ ६ ॥

७ ] ति० टी०—वाचयामास स्वस्तिवाचनं पुण्याहं च ॥ ७ ॥

रा० टी०—तुष्टावेति । विमलक्षौमसंवीतः मलसंबन्धरहितपट्टविशेषवस्त्रधारी शिरसा प्रणत एव स-रामः द्विजान् तुष्टाव मधुसूदनं मधुसूदनशब्दं वाचयामास च द्विजैरुच्चारयामासेत्यर्थः । मधुसूदनशब्दार्थस्तु मधौ चैत्रे सः प्रादुर्भावो यस्य सः उच्यते स्वस्वकल्याणार्थं सर्वैरुच्यते इति उत् अनिति, प्रजादीनपि पालयति इति अनः त्रयाणां कर्मधारयः किंच मधुं मधुनामानं दैत्यं सूते कर्णमलद्वारोत्पादयतीति मधुसूर्विष्णुः तेन उच्यते नित्यमुत्पादितोऽस्तावितिति मधुसूदः स एवानः सर्वरक्षकः

१ कृत्स्नमिति गो. पाठः । २ तत इति रा. पाठः । ३ यतमानस इति गो. रा. पाठः । ४ चेति गो. पाठः ।

तेषां पुण्याहघोषोऽथ गम्भीरमधुरस्तथा । अयोध्यां पूरयामास तूर्यघोषानुनादितः ॥ ८ ॥
कृतोपवासं तु तदा वैदेह्या सह राघवम् । अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः ॥ ९ ॥
ततः पौरजनः सर्वः श्रुत्वा रामाभिषेचनम् । प्रभातां रजनीं दृष्ट्वा चक्रे शोभयितुं पुरीम् ॥ १० ॥
सिताभ्रशिखराभेषु देवतायतनेषु च । चतुष्पथेषु रथ्यासु चैत्येष्वट्टालकेषु च ॥ ११ ॥
नानापण्यसमृद्धेषु वणिजामापणेषु च । कुटुम्बिनां समृद्धेषु श्रीमत्सु भवनेषु च ॥ १२ ॥
सभासु चैव सर्वासु वृक्षेष्वालक्षितेषु च । ध्वजाः समुच्छ्रिताः साधु पताकाश्चाभवंस्तथा ॥ १३ ॥
नटनर्तकसंघानां गायकानां च गायताम् । मनःकर्णसुखा वाचः शुश्रावे जनता ततः ॥ १४ ॥
रामाभिषेकयुक्ताश्च कथाश्चक्रुर्मिथो जनाः । रामाभिषेके संप्राप्ते चत्वरेषु गृहेषु च ॥ १५ ॥

एतेन स्वनामोच्चारणविषयकप्रीत्यतिशयो रघुनाथस्य सूचितः । दूरान्वयीदमिति तु न भ्रमितव्यं पाठक्रमादार्थक्रमस्य बलीयस्त्वादाकाङ्क्षितत्वाच्चेति दिक् । युक्तश्चायमेवार्थः अन्यथा अभेदवादिनामप्यस्यैव मधुसूदनत्वेन स्वकर्मकस्तवनस्य निषिद्धत्वेन विरुद्धत्वापत्तिरिति दिक् ॥ ७ ॥

गो० टी०—तुष्टावेति । संध्योपासनानन्तरं मधुसूदनं सूर्यान्तर्वर्तिनं नारायणं तुष्टाव "मित्रस्य—" इत्यादिनेति शेषः । शिरसा प्रणतः दण्डवत्प्रणतः विमलक्षौमसंवीत इत्यनेन नूतनवस्त्रपरिवृत्त्या प्रातर्गौणस्नानमुक्तं वाचयामास स्वस्तिवाचनं कारयामासेत्यर्थः ॥ ७ ॥

८–९ ] ति० टी०—तूर्यघोषानुनादितस्तूर्यघोषेण संजातानुनादः ॥ ८ ॥ ९ ॥

रा० टी०—तेषामिति । तदा मधूसूदनशब्दोच्चारणकाले तेषां द्विजानां तूर्यघोषानुनादितः तूर्यघोषानुनादविशिष्टः पुण्याहघोषोत्थगम्भीरमधुरः पुण्यं पवित्रत्वं न जहातीति पुण्याहः सार्वकालिकपवित्रतासंपादकधर्मविशिष्ट इत्यर्थः । स एव घोषः मधुसूदनशब्दशब्दः तेनोत्थः संजातः गम्भीरमधुरः गम्भीरेण गाम्भीर्येण सहितो मधुरो माधुर्यं गाम्भीर्यमाधुर्ये इत्यर्थः । अयोध्यां पूरयामास गम्भीरमधुरशब्दौ भावप्रधानौ ॥ ८ ॥

गो० टी०—तेषामिति । तूर्यघोषानुनादितः तूर्यघोषानुध्वनिनादयुक्तः ॥ ८ ॥

रा० टी०—कृतेति । अयोध्यानिलयः अयोध्यानिवासी ॥ ९ ॥

गो० टी०—कृतोपवासमिति । प्रमुदितः संतुष्टः अभूत् ॥ ९ ॥

१० ] ति० टी०—शोभयितुमलंकर्तुं चक्रे बुद्धिमिति शेषः ॥ १० ॥

रा० टी०—तत इति । पुरीमयोध्यां शोभयितुं स्वस्वबुद्ध्यनुसारेणालंकर्तुं चक्रे प्रयत्नमिति शेषः । शोभायुतामित्याचारिपाठः ॥ १० ॥

गो० टी०—तत इति । पुरीं शोभयितुं चक्रे पुरशोभोत्पादनार्थं संमार्जनलेपनवितानमालिकाबन्धनकर्मादिकमकरोदित्यर्थः ॥ १० ॥

११–१२ ] ति० टी०—अट्टालकाः प्राकारोपरितनयुद्धस्थानानीति केचित् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—आलक्षितेषु सर्वतो लक्षितेषु अत्युच्चेष्विति यावत् । ध्वजाः सचिह्नाः पताकाश्चिह्नरहिता इत्याहुः ॥ १३ ॥

रा० टी०—अलंकृतिमेव विशदयन्नाह—सितेत्यादिभिः । सिताः शुक्ला ये अभ्रा मेघाः तद्वद् यानि शिखराणि तेषामाभा येषु किंच सिताभ्रयुक्तानि यानि शिखराणि तैराभान्ति तेषु चैत्येषु चैत्यं चैतन्यमस्ति एषु अर्शआद्यजन्तः इदं देवतायतनादिविशेषणम् । एतेन रामधाम्नः चैतन्यं व्यक्तं तत्र प्रमाणम् 'यत्र गुल्मलतावृक्षा नित्यशो भान्ति चिन्मयाः' इत्यादि चैत्येषु बौद्धालयेष्विति गोविन्दाचारिव्याख्यानं तु न नास्तिको नानृतक इत्यादिना बालकाण्डोक्तेन विरोधात् त्यक्तव्यमिति दिक् ॥

रा० टी०—नानेति । पण्यं व्यवहर्तव्यं वस्तु आट्टालकेषु प्राकारोपरिकल्पितयुद्धस्थानेषु सभास्विति आलक्षितेषु दूरतोऽप्यवलोकितेष्वित्यर्थः । तेन तेषामत्युन्नतत्वं व्यक्तं ध्वजाः चिह्नसहिताः पताकाः तद्रहिता इति न पौनरुक्त्यम् ॥ १२ ॥ १३ ॥

गो० टी०—सिताभ्रशिखराभेष्वित्यादि । चैत्येषु बौद्धालयेषु अट्टालकेषु प्राकारोपरि युद्धार्थं परिकल्पितचतुस्तम्भमण्डपेष्विति यावत् । आलक्षितेषु आसमन्ताल्लक्षितेषु समुन्नतत्वात् दूरादप्यक्षिगोचरेष्वित्यर्थः । ध्वजाः सचिह्नाः पताकाः चिह्नरहिताः समुच्छ्रिताः बद्धाः ॥ ११–१३ ॥

१४–१५ ] ति० टी०—नटाः सूत्रधाराः जनता जनसमूहः । ततस्तत्रायोध्यायाम् ॥ १४ ॥ १५ ॥

रा० टी०—नटेति । नटा आश्चर्यनानोल्लङ्घनादि कर्मकर्तारः ' नर्तका नृत्यनृत्तादिकर्मकर्तारः ' गायका गानकुशलाः तेषां वाचः जनता जनानां समूहः ततस्तत्रायोध्यायामित्यर्थः । शुश्राव सप्तम्यन्तात्तसिल् ' शुश्रुवुश्च ततस्ततः ' इति गोविन्दाचारिपाठः ॥ १४ ॥

गो० टी०—नटेति । नटाः नाटकाः अभिनयकर्तारः, नर्तकाः केवलाङ्गहारकृतः मनःकर्णसुखाः ' संभवे मधुरं वाक्यम् ' इत्युक्तरीत्या श्रवणमात्रेण सुखकराः पश्चान्मनसश्चाह्लादका इत्यर्थः । शुश्रुवुः जना इति शेषः ॥ १४ ॥

रा० टी०—रामेति । रामाभिषेकयुक्ताः रामाभिषेकोपयोगिनीः जनाः अयोध्यानिवासिनः चत्वरेषु चतुष्पथेषु ॥ १५ ॥

१ तदेति गो.रा. पाठः । २ आट्टालकेष्विति रा. पाठः । ३ चित्रा इति गो.पाठः । ४ तदेति गो.रा. पाठः । ५ शुश्रुवुश्च ततस्तत इति गो. पाठः ।

बाला अपि क्रीडमाना गृहद्वारेषु संघशः । रामाभिषवसंयुक्ताश्चक्रुरेवं कथा मिथः ॥ १६ ॥
कृतपुष्पोपहारश्च धूपगन्धाधिवासितः । राजमार्गः कृतः श्रीमान्पौरै रामाभिषेचने ॥ १७ ॥
प्रकाशीकरणार्थं च निशागमनशङ्कया । दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः ॥ १८ ॥
अलंकारं पुरस्यैवं कृत्वा तत्पुरवासिनः । आकाङ्क्षमाणा रामस्य यौवराज्याभिषेचनम् ॥ १९ ॥
समेत्य संघशः सर्वे चत्वरेषु सभासु च । कथयन्तो मिथस्तत्र प्रशशंसुर्जनाधिपम् ॥ २० ॥
अहो महात्मा राजायमिक्ष्वाकुकुलनन्दनः । ज्ञात्वा वृद्धं स्वमात्मानं रामं राज्येऽभिषेक्ष्यति॥ २१ ॥
सर्वे ह्यनुगृहीताः स्म यन्नो रामो महीपतिः । चिराय भविता गोप्ता दृष्टलोकपरावरः ॥ २२ ॥
अनुद्धतमना विद्वान्धर्मात्मा भ्रातृवत्सलः । यथा च भ्रातृषु स्निग्धस्तथास्मास्वपि राघवः ॥ २३ ॥
चिरं जीवतु धर्मात्मा राजा दशरथोऽनघः । यत्प्रसादेनाभिषिक्तं रामं द्रक्ष्यामहे वयम् ॥ २४ ॥

---

गो० टी०—रामेति । मिथः अन्योन्यं ‘ मिथोऽन्योन्यम् ’ इत्यमरः । चत्वरेषु अङ्गणेषु गृहेषु स्त्रीभिः बहिरङ्गणेषु जनैश्च कथाश्चक्रुरिति रामभक्तावकृत्रिमत्वमुक्तम् ॥ १९ ॥ १६ ॥

१६–१७ ] ति० टी०—रामाभिषवो रामाभिषेकः १६–१७

रा० टी०—अज्ञानामपि तत्कथासु रुचिरिति बोधयितुमाह—बाला इति । गृहद्वारेषु गृहाणि च द्वाराणि चेति द्वन्द्वः । एतेन तत्कथायाः सर्वमनोहरत्वं व्यक्तम् ॥ १६ ॥

रा० टी०—प्रासङ्गिकं कथाप्रचारं संवर्ण्य प्रकृतां पुरालंकृतिमाह—कृतेत्यादिद्वाभ्याम् । श्रीमान् स्वतो नित्यसंपत्तिविशिष्टो राजमार्गः पौरैः कृतपुष्पोपहारः कृतः पुष्पोपहारः पुष्पबलिर्यस्मिन् धूपगन्धाधिवासितः उपलक्षणतया धूपादिगन्धव्याप्तश्च कृतः ॥ १७ ॥

गो० टी०—कृतपुष्पोपहार इति । कृतपुष्पोपहारः कृतपुष्पबलिः ॥ १७ ॥

१८–२१ ] ति० टी०—अभिषेकानन्तरं गजस्कन्धाधिरूढस्य नगरालंकारदर्शनार्थंनिर्गमनात्पूर्वं यदि निशा न याति तदा तदलंकारप्रदर्शनार्थं स्वयं रामं द्रष्टुं च दीपवृक्षान्वृक्षवन्नानाशाखान्दीपस्तम्भान् । अनुरथ्यासु रथ्यापार्श्वयोः ॥१८–२१॥

रा० टी०—प्रकाशेति । निशागमनशङ्कया राज्याभिषेक-णे इति शेषः । दीपवृक्षान् दीपस्थापनयोग्यशाखाविशिष्टतरून् अनुरथ्यासु अनुगता रथ्याः मार्गा यासु राजमार्गेष्वित्यर्थः । एतेनाभिषेकानन्तरमनेन मार्गेण रामागमनं भविष्यति तं द्रक्ष्यामीति हेतुर्व्यक्तः ॥ १८ ॥

गो० टी०—प्रकाशकरणार्थमिति । प्रकाशकरणार्थं वितानक्रमुककदल्यादिसमग्रताजनिततिमिरतिरोहितवस्तुप्रकाशनार्थं, यद्वा निशागमनशङ्कया प्रकाशकरणार्थं दीपवृक्षान् वृक्षाकारदीपस्तम्भान् अभिषेकानन्तरं गजस्कन्धाधिरूढतयाभिषेकालंकारप्रदर्शनार्थं निर्गमनात्पूर्वं यदि कार्यवशान्निशा स्यात्तदा रामालंकारप्रदर्शनार्थं दीपवृक्षान् अनुरथ्यासु रथ्यासु रथ्यासु विभक्तेर्लुगभाव आर्षः । निशागमनशङ्कया रामस्य प्रकाशकरणार्थमनुरथ्यासु सर्वशः सर्वप्रकारान् दीपवृक्षान् चक्रुश्च तथाशब्दश्चार्थः ॥ १८ ॥

रा० टी०—उपसंहरन्नाह—अलंकारमिति । आकाङ्क्षमाणाः प्रशशंसुरिति । द्वयोरेकत्रान्वयः ॥ १९ ॥ २० ॥

गो० टी०—अलंकारमित्यादिश्लोकद्वयम् ॥ १९ ॥ २० ॥

रा० टी०—प्रशंसास्वरूपं बोधयन्नाह—अहो इत्यादिभिः । अयं राजा अहो महात्मा अतिधैर्यवान् तत्र हेतुः वृद्धमैश्वर्यादिभिरतिप्रवृद्धं स्वमात्मानं स्वस्वरूपं ज्ञात्वापि राममभिषेक्ष्यति सामर्थ्यसत्त्वे अत्यन्तं प्रवृद्धैश्वर्यादेः पुत्राधीनीकरणमपि दुर्लभमिति भावः ॥ २१ ॥

गो० टी०—प्रशंसामेवाह—अहो इत्यादि । सर्वेऽप्यनुगृहीताः स्म देवेनेति शेषः । नः अस्मान् गोप्ता भवितेति संबन्धः । दृष्टलोकपरावरः दृष्टे ये लोके परावरे उत्कृष्टापकृष्टवस्तुनी येन स तथोक्तः ॥ २१–२४ ॥

२२–२४ ] ति० टी०—अनुगृहीता ईश्वरेण । दृष्टलोकपरावरः भावप्रधानो निर्देशः । यथावदवगततज्जनप्राशस्त्याप्राशस्त्यः ॥ २२–२४ ॥

रा० टी०—स्वभाग्यवत्तां सूचयन्त आहुः—सर्वे इति । सर्वे वयमनुगृहीताः परमात्मानुग्रहं प्राप्ताः स्म तत्र हेतुः दृष्टलोकपरावरः दृष्टो विष्ण्वादीन् बोधितः लोकानां भुवनानां परः पालनं येन सः किं च दृष्टः उपदिष्टः लोकपरः भुवनानां पालको येन सः दृष्टलोकपरः अत एव न वरः श्रेष्ठो यस्मात् सः अवरः सर्वश्रेष्ठ इत्यर्थः । स एव स इति कर्मधारयः । किंच दृष्टा लोकाः भुवनानि परावराः उत्तमाधमा येन सः महीपतिः रामः यद्यस्मान्नो गोप्ता चिराय बहुकालं भविता ॥ २२ ॥

रा० टी०—राज्यार्हत्वसंपादनाय रामस्य गुणान्तराण्याह—अनुद्धतेति । अनुद्धतमनाः न उद्धोर्थिवचनात् हतं निवृत्तं मनो यस्य सः भावक्तिबन्ताद्धदो निष्पन्न इदिति ॥ २३ ॥

रा० टी०—स्वेप्सितप्रापको राजा आशीर्भिर्योजित इत्याह—चिरमिति । अनघः आश्रिताघनिवर्तकः ॥ २४ ॥

---

१ सर्वश इति रा. पाठः । २ रामाभिषेकसंयुक्ता इति गो. रा. पाठः । ३ एवमिति गो. रा. पाठः । ४ प्रकाशकरणार्थमिति गो. रा. पाठः । ५ यो वृद्धमिति गो. पाठः । ६ स्वेति रा. पाठः ।

एवंविधं कथयतां पौराणां शुश्रुवुः परे । दिग्भ्यो [1]विश्रुतवृत्तान्ताः प्राप्ता जानपदा जनाः २५
ते तु दिग्भ्यः पुरीं प्राप्ता द्रष्टुं रामाभिषेचनम् । रामस्य पूरयामासुः पुरीं जानपदा जनाः ॥ २६ ॥
जनौघैस्तैर्विसर्पद्भिः शुश्रुवे तत्र निःस्वनः । पर्वसूदीर्णवेगस्य सागरस्येव निस्वनः ॥ २७ ॥
ततस्तदिन्द्रक्षयसंनिभं पुरं दिदृक्षुभिर्जानपदैरुपाहितै[3]ः ।
समन्ततः सस्वनमाकुलं बभौ समुद्रयादोभिरिवार्णवोदकम् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येऽयोध्याकाण्डे षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।

यदृच्छातः प्रासादोपरिभुवमारूढा मन्थरानाम्नी कैकेय्याः कुब्जा ज्ञातिदासी तमुत्सवं ब्राह्मणेभ्यो बहुधनं वितरन्तीं कौसल्यां च प्रेक्ष्य किंनिमित्तकोऽयमारम्भ इति रामधात्रीं पप्रच्छ तया संज्ञापिता च रामाभिषेकमसहमाना कैकेयीमेत्य दशरथं विनिन्द्याभिषेकं विहन्तुं कैकेयीं प्रैरयत्तथापि रामाभिषेक एव स्वाभीष्ट इति मोदमाना कैकेयी तन्निवेदनपारितोषिकतया किंचिदाभरणं कुब्जायै ददौ ।

ज्ञातिदासी यतो जाता कैकेय्या[4] तु सहोषिता । प्रासादं चन्द्रसंकाशमारुरोह यदृच्छया ॥ १ ॥

२५ ] ति० टी०—शुश्रुवुः कथा इति शेषः । विश्रुतवृत्तान्ताः श्रुतरामाभिषेकवृत्तान्ताः ॥ २५ ॥

रा० टी०—एवमिति । एवंविधमेतत्प्रकारकं वचः कथयतां पौराणां वचः विश्रुतवृत्तान्ताः विश्रुतो वृत्तान्तः राज्याभिषेकवृत्तं यैस्ते अत एव दिग्भ्यः प्राप्ता आगताः जानपदा जनास्तदा तस्मिन्काले शुश्रुवुः । वच इति विशेष्यमध्याहृतं तच्चोभयान्वयि ॥ २५ ॥

गो० टी०—एवंविधमिति । श्रुतवृत्तान्ताः श्रुतरामाभिषेकवार्ताः अत एव दिग्भ्यः प्राप्ताः जानपदाजनाः एवंविधं कथयतां पौराणां शुश्रुवुः एवंविधं वाक्यजातमित्यर्थसिद्धम् ॥ २५ ॥

२६ ] ति० टी०—ते जानपदाः । रामस्य पुरीमित्यन्वयः २६

रा० टी०—ते इति । ते रामस्य पुरीमयोध्यां पूरयामासुः २६

गो० टी०—ते त्विति । पूर्वदिने सकलजनसंनिधौ रामाभिषेकस्य प्रतिश्रुतत्वाद्रामस्य पुरमिति निर्दिष्टवानृषिः ॥ २६ ॥

२७ ] ति० टी०—विसर्पद्भिः प्रवेशार्थम् ॥ २७ ॥

रा० टी०—जनौघैरिति । तैरयोध्यां प्राप्तैः विसर्पद्भिः गच्छद्भिर्जनौघैर्जनित इति शेषः । तत्रायोध्यायामुदीर्णवेगस्य उदीर्णः प्रवृद्धो वेगो यस्य स तस्य ॥ २७ ॥

गो० टी०—जनौघैरिति । विसर्पद्भिः नानादेशेभ्य आगच्छद्भिः उत्पादित इति शेषः । उदीर्णवेगस्य उज्जृम्भितवेगस्य ॥ २७ ॥

२८ ] ति० टी०—इन्द्रक्षय इन्द्रनिवासोऽमरावती । आहितैः आगतैरित्यर्थः । 'हि गतौ' इत्यस्य रूपम् । समुद्रयादोभिः समुद्रतुल्यैर्महद्भिर्यादोभिरित्यर्थः ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षष्ठः सर्गः ॥ ६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तत इति । ततः जनैः पूर्णत्वाद्धेतोः इन्द्रक्षयसंनिभमिन्द्रनिवासामरावतीसदृशम् किंच इन्द्रक्षयानुयोगिकसादृश्यप्रतियोगि किंच इन्द्रक्षयस्य अमरावत्याः संनिभः सम्यक्प्रकाशो यस्मात्तच्छ्रुतिप्रसिद्धं पुरं साकेतं दिदृक्षुभिः उपाहितैः प्राप्तैः आकुलं व्याप्तमत एव सस्वनं पुरं बभौ शुशुभे । तत्र दृष्टान्तः समुद्रयादोभिः समुद्रजलजन्तुभिः अर्णवोदकमिव पुरमित्युभयान्वयि ' निवेशः शरणं क्षयः ' इत्यमरः । उपाहितैरित्यत्र क्तान्तो गत्यर्थो हिः यादोभिर्नदीभिरित्यर्थेऽपि समुद्रोपादानवैयर्थ्यमेवेति दिक् ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०—तत इति । इन्द्रक्षयः इन्द्रगृहम् 'निवेशः शरणं क्षयः ' इत्यमरः । अयोध्यापुरस्यामरावतीसादृश्ये वक्तव्ये तत्सारभूतेन्द्रभवनदृष्टान्तीकरणादयोध्याया अतिरमणीयता द्योत्यते जानपदैः समन्ततः आकुलमिति संबन्धः समुद्रयादोभिः समुद्रान्तर्वर्तितिमितिमिङ्गिलादिजन्तुभिः ' यादांसि जलजन्तवः ' इत्यमरः । कर्णावतंसादिपदवदविच्छेदप्रदर्शनाय समुद्रशब्दः, यद्वा समुद्रयादोभिः समुद्रगामिनीभिर्नदीभिः " यादो नपुंसकम् " इति यादःशब्दस्य नदीवाचकत्वेऽपि नपुंसकत्वं पाणिनीयलिङ्गानुशासनोक्तम् उदकशब्देन सस्वनत्वमुक्तम् ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षष्ठः सर्गः ॥ ६ ॥

१ ] ति० टी०—अथ सीताया लङ्कापुरप्रवेशं विना रावणवधस्याशक्यतया तत्सिद्धये देवैः प्रेरितायाः कृतकुब्जावेषाया मन्थराया रामाभिषेकविघ्नप्रवृत्तिं तद्गर्भितं कैकेयीवृत्तान्तं च वक्तुमुपक्रमते—ज्ञातीत्यादि । 'ज्ञातिदासी यतो मित्यत्र' इति पाठे

१ जनैरिति गो. रा. पाठः । २ व्यपीति गो. पाठः । ३ गतैरिति गो. पाठः । ४ कैकेय्यास्त्विति गो. पाठः ।

सिक्तराजपथां कृत्स्नां प्रकीर्णकमलोत्पलाम्[1] । अयोध्यां मन्थरा तस्मात्प्रासादादन्ववैक्षत[2] ॥ २ ॥
पताकाभिर्वरार्हाभिर्ध्वजैश्च समलंकृताम् । सिक्तां[3] चन्दनतोयैश्च शिरःस्नातजनैर्युताम्[4] ॥ ३ ॥

यतः कैकेय्या ज्ञातेर्मातृकुलस्य दासी यतश्च कैकेय्या नित्यं सहोषिता अतो जनकोलाहलं श्रुत्वा कैकेय्यै तदर्थं निवेदयितुं यदृच्छया स्वयमेव न त्वन्यप्रेरणया प्रासादमारुरोहेत्यन्वयः । यत्तु अतः 'कुब्जा क्षिप्रममर्षिता' इत्यनेन द्वादशश्लोकस्थपदेनान्वयः, स्वीयाभ्युदयस्य सर्वेष्टत्वाद्रामाभ्युदयजदुःखेन तद्विघटकोऽमर्ष इति कतकः तन्न, रामाभ्युदयस्याग्रे धात्रीमुखेन श्रवणस्य वक्ष्यमाणतया तस्यैव चामर्षहेतुत्वस्य च वक्ष्यमाणतयात्रत्यस्य तत्रान्वयानौचित्यात् । 'यतो जाता' इति पाठे यतो यत्र कुत्रचिज्जाता अविज्ञातवेश्ममातापितृकेत्यर्थः । एवं च कैकेयीज्ञातिदासीत्वमपि कार्यार्थमुदरभरणव्याजेन स्वीकृतमनया इति बोध्यम् । इदं तु युक्तम्—'मन्थरा नाम कार्यार्थमप्सरा प्रेषिता सुरैः । दासी काचन कैकेय्यै दत्ता केकयभूभृता ॥' इति पाद्मोक्तेः । कार्यार्थं रावणवधरूपकार्यार्थं दासी स्वयमागत्य केकयराजस्य जातेति शेषः । 'नित्यम्' इति पाठेऽपि जातेति शेषपूरणेनैव व्याख्योचिता पाद्मैकवाक्यत्वात् । चन्द्रसंकाशं सुधाधवलितत्वात् ॥ १ ॥

रा० टी०—वनप्रवेशवर्णनमुपक्रममाण आह—ज्ञातीति । अजाता आय विष्णवे तेन सहोद्वाहार्थमित्यर्थः जायते कुशध्वजभार्यायां प्रादुर्भवतीत्यजा प्रतिज्ञातरावणवधवेदवत्यपरावस्थाकमाण्डवीत्यर्थः । तया सह अतति सततं गच्छतीत्यजाता मन्थरेत्यर्थः । यतः कैकेय्याः ज्ञातिदासी ज्ञातिर्ज्ञानं तद्युक्ता दासी अतिज्ञानवत्यनुचरी किंच ज्ञातिः क्षत्रियजातिः सैव दासी अतः सहोषिता मन्थरेत्यर्थः । चन्द्रसंकाशमुन्नतत्वस्वच्छत्वादिना चन्द्रवत्प्रकाशमानं प्रासादं यदृच्छयैवारुरोह । अजातेत्यनेन वेदवत्यभिप्रायाभिज्ञत्वं तद्धिताचरणकर्त्रीत्वं च मन्थराया व्यक्तम् । तुशब्द एवार्थे ॥ १ ॥

गो० टी०—अथ रावणवधकाङ्क्षिभिर्देवैराविष्टमन्थरावाक्याद्रामाभिषेकविघ्नः प्रतिपाद्यते—ज्ञातिदासीति । पूर्वसर्गे गते पुरोहित इत्यादिना तूर्यघोषानुनादित इत्यन्तेन पूर्वदिवसे अभिषेकाङ्गभूतव्रतोपवासादिकमाचरतो रामस्य वृत्तान्तमभिधाय कृतोपवासं तु तदेत्यारभ्य सर्गपर्यन्तेन रामाभिषेकश्रवणजनितानन्दनिर्भराणां पौराणां जानपदानां च जनानां रामाभिषेकदिवसप्राक्तनवृत्तान्तमभिधाय वाचः क्रमवर्तित्वादृषिः पूर्वदिवसप्रवृत्तकैकेयीवृत्तान्तं वक्तुमुपक्रमते—ज्ञातिदासीत्यादिना । कैकेय्याः ज्ञातिदासी कैकेयीबन्धुदासी 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः । यतो जाता यत्र कुत्रचिज्जाता अविज्ञातदेशमातापितृकेत्यर्थः । अतः कैकेय्या ज्ञातिदासीत्वमपि स्वोदरप्रपूरणार्थं कृतमित्यवगन्तव्यम् । सहोषिता सहावस्थिता मन्थरायाः कैकेय्या सहावस्थानमपि हास्यहेतुभूतकुब्जात्वनिबन्धनम् । यदृच्छया स्वैरतया 'यदृच्छा स्वैरिता' इत्यमरः । यद्वा यतो जाता यतः कुतश्चिज्जाता तादृशीनामयोध्यायां जननासंभवात्, यद्वा तन्नामजातिनिरूपणायोग्यतया तथा निर्देशः आचार्यास्तु देवैरेवं स्वकार्यार्थं कैकेयीं भेदयितुं प्रेषितेति देवरहस्यस्य गोप्यतया तथा निर्देश इत्याहुः ॥१॥

२ ] ति० टी०—प्रकीर्णानि कमलान्युत्पलानि च यस्याम् । तस्मात्सर्वोत्कृष्टात्प्रासादात् प्रासादे स्थित्वेत्यर्थः ल्यब्लोपे पञ्चमी ॥ २ ॥

रा० टी०—आरोहणोत्तरकालिकं वृत्तमाह—सिक्तेति । प्रकीर्णानि कमलोत्पलानि यस्यां तामन्ववैक्षत अपश्यत् ॥ २ ॥

गो० टी०—सिक्तराजपथामिति । प्रासादादन्ववैक्षत पूर्वश्लोके आरोहणस्योक्तत्वात् प्रासादादित्यस्यान्ववैक्षतेत्यनेन संबन्धः "अधिकरणे चोपसंख्यानम्" इत्यधिकरणे ल्यब्लोपे पञ्चमी प्रासादे स्थित्वा प्रैक्षतेत्यर्थः ॥ २ ॥

३ ] ति० टी०—वरार्हाभिः श्रेष्ठयोग्याभिः । राजयोग्याभिरिति यावत् । एतदुत्तरम्—'कृतां छन्नपथैश्चापि स्वच्छन्दकपथैर्वृताम्' इत्यर्धं पठन्ति । छन्नपथैर्निर्जनप्रदेशमार्गैः कृतामलंकृताम् । स्वच्छन्दकपथैरुत्सवादिषु जनभूयस्त्वेन प्रवेशनिर्गमार्थं प्राकारादिभङ्गेन कृतैर्मार्गैरिति व्याचक्षते च केचित् । चन्दनयुक्ततोयैः सिक्ताम् । शिरःस्नातजनैः कृताभ्यङ्गस्नानैः ॥ ३ ॥

रा० टी०—पताकाभिरिति । वरार्हाभिः वराः सर्वश्रेष्ठाः अत एव अर्हाः अयोध्यायोग्याः कर्मधारयः किंच वरोऽर्हः पूजा यासाम् किंच वरैः सर्वश्रेष्ठैर्ब्रह्मादिभिः अर्हाः प्रशंसिता इत्यर्थः । एतेन तत्पताकानां प्राकृतविलक्षणत्वं सूचितं छन्दपथैः छन्दा निःशङ्कगमनयोग्याः पन्थानो मार्गा येषु तैः वीथीभिरित्यर्थः । शिरःस्नातजनैः मूर्धाभिषिक्तै राजभिरित्यर्थः । किंच शिरसि स्नानं विधिनाभिषेको यैः किंच छन्दः स्वाधीनः पथो गमनं येषां परमहंसैरित्यर्थः । त एव जनाः तैः वसिष्ठादिभिरित्यर्थः । समलंकृतामित्येतदग्रे 'वृतां छन्दपथैश्चापि स्वच्छन्दकपथैर्वृताम् । सिक्तां चन्दनतोयैश्च शिरःस्नातजनैर्युताम्' इति श्लोको भट्टसंमतः ॥ ३ ॥

गो०टी०—पताकाभिरित्यादि । वरार्हाभिः श्रेष्ठाभिरित्यर्थः छन्दपथैर्वृतां स्वच्छन्दगमनयोग्योपवीथीभिरावृतां शिरःस्नातैः शिरसा स्नातै रामोपायनार्थं माल्यमोदकहस्तैः शुक्लदेवगृहद्वारामिति शुक्लानि सुधाधवलितानि देवगृहद्वाराणि यस्यां ब्रह्मघोषाभिनादितां ब्रह्मघोषैः वेदपारायणघोषैः अभिनादिताम् 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । रामाभिषेकस्य तिरश्चामप्यानन्दावहत्वात् प्रहृष्टवरहस्त्यश्वां संप्रणर्दितगोवृषामित्युक्तं गोवृषाः गोपुंगवाः प्रहृष्टमुदितैः प्रहृष्टाः संजातरोमाञ्चादिगात्रवि-

१ रम्यामिति गो. रा. पाठः । २ कलमोत्करामिति गो. पाठः । ३ वृतां छन्दपथैश्चापीति गो. रा. पाठः । ४ वृतामिति गो. रा पाठः ।

माल्यमोदकहस्तैश्च द्विजेन्द्रैरभिनादिताम् । शुक्लदेवगृहद्वारां सर्ववादित्रनादिताम् ॥ ४ ॥
संप्रहृष्टजनाकीर्णां ब्रह्मघोषनिनादिताम् । प्रहृष्टवरहस्त्यश्वां संप्रणर्दितगोवृषाम् ॥ ५ ॥
हृष्टप्रमुदितैः पौरैरुच्छ्रितध्वजमालिनीम् । अयोध्यां मन्थरा दृष्ट्वा परं विस्मयमागता ॥ ६ ॥
सा हर्षोत्फुल्लनयनां पाण्डुरक्षौमवासिनीम् । अविदूरे स्थितां दृष्ट्वा धात्रीं पप्रच्छ मन्थरा ॥ ७ ॥
उत्तमेनाभिसंयुक्ता हर्षेणार्थपरा सती । राममाता धनं किं नु जनेभ्यः संप्रयच्छति ॥ ८ ॥
अतिमात्रं प्रहर्षः किं जनस्यास्य च शंस मे । कारयिष्यति किं वापि संप्रहृष्टो महीपतिः ॥ ९ ॥
विदीर्यमाणा हर्षेण धात्री तु परया मुदा । आचचक्षेऽथ कुब्जायै भूयसीं राघवे श्रियम् ॥ १० ॥
श्वः पुष्येण जितक्रोधं यौवराज्येन चानघम् । राजा दशरथो राममभिषेक्ता हि राघवम् ॥ ११ ॥

---

काराः मुदिताः मानससंतोषयुक्ताः तैः उच्छ्रितेत्यत्र प्रकृतोत्सवकृतध्वजसंबन्ध उच्यते । ध्वजैश्च समलंकृतामित्यत्र नित्यबद्धध्वजत्वमुक्तम् ॥ ३-६ ॥

४ ] ति० टी०—माल्यमोदकहस्तैर्दानप्राप्तमाल्यमोदकहस्तैः, रामोपायनमाल्यमोदकरूपमङ्गलद्रव्यहस्तैरित्यर्थो वा । सुधाचन्दनादिलेपेन शुक्लानि देवगृहद्वाराणि यस्याम् ॥ ४ ॥

रा० टी०—माल्येति । माल्यमोदकहस्तैः रामोपायनयोग्यदानप्राप्तानन्तरमाल्यमोदकयुक्तकरैर्द्विजेन्द्रैरभिनादितां शुक्लदेवगृहद्वारां शुक्लानि स्फटिकमण्यादिरचितत्वेन श्वेतानि देवानां गृहद्वाराणि यस्यां तां सर्ववादित्रनिस्वनां सर्वेषां प्राकृताप्राकृतानां वादित्राणां निःस्वनः शब्दो यस्यां ताम् ॥ ४ ॥

५ ] ति० टी०—ब्रह्मघोषो वेदघोषः । प्रहृष्टेत्यादिना तिरश्चामपि रामाभिषेकाद्धर्ष इति सूचितम् ॥ ५ ॥

रा० टी०—समिति । ब्रह्मघोषो वेदध्वनिः प्रहृष्टं वरं प्राकृतविलक्षणत्वेन सर्वश्रेष्ठं हस्त्यश्वं यस्यां ताम् ॥ ५ ॥

६ ] ति० टी०—हृष्टैर्जातरोमाञ्चादिभिर्मुदितैरानन्दयुक्तैः पौरैरुपलक्षिताम् ॥ ६ ॥

रा० टी०—प्रहृष्टेति । प्रहृष्टमुदितैः पौरैः पुरोद्भवैः उच्छ्रितः रामेण सह नेतुं गृहीतः ध्वजमाली मालाविशिष्टो ध्वजो यस्यां तां मन्थरा दृष्ट्वा परं विस्मयमागता प्राप्ता ॥ ६ ॥

७ ] ति० टी०—अविदूरे स्वाधिरूढहर्म्यात्यासन्नहर्म्ये । धात्रीम् रामस्येति शेषः । अत एव हर्षोत्फुल्लनयनत्वादि तस्याः वक्ष्यति च हर्षेण विदीर्यमाणेत्यादि ॥ ७ ॥

रा० टी०—विस्मयप्राप्त्यौत्तरकालिकं वृत्तमाह—सेति । मन्थरा धात्रीं पप्रच्छ ॥ ७ ॥

गो० टी०—प्रहर्षोत्फुल्लनयनामिति । धात्रीमुपमातरम् 'धात्री स्यादुपमाता' इत्यमरः । प्रहर्षोत्फुल्लनयनामित्यादिविशेषणादियं रामोपमाता ॥ ७ ॥

८ ] ति० टी०—अर्थपरा स्वेष्टार्थपरा स्वेष्टार्थकामेवेति शेषः । किं नु कस्मात् ॥ ८ ॥

रा० टी०—प्रश्नाकारमाह—उत्तमेनेति । उत्तमेन महता हर्षेण अभिसंयुक्ता अर्थपरा अर्थैर्धनैः परा पूर्णा राममाता जनेभ्यो धनं किं नु किमर्थं संप्रयच्छति ददाति ॥ ८ ॥

गो० टी०—उत्तमेनेति । अर्थपरा सती अर्थपरा सत्यपि उत्तमेन हर्षेणाभिसंयुक्ता धनं प्रयच्छति किं, यद्वा अर्थपरा उत्तरोत्तरार्थाभिवृद्ध्यै धनं प्रयच्छति नामग्रहणस्यासह्यत्वाद्राममातेत्युक्तिः ॥ ८ ॥

९ ] ति० टी०—किं कुतो जनस्य प्रहर्षः अभिषेकप्राग्दिनीयसायंकाले मन्थरायास्तद्दर्शनेन राजा संप्रहृष्ट इत्युक्तिः ॥९॥

रा० टी०—अतीति । अस्यायोध्यास्थस्य जनस्य अतिमात्रः परममहान् प्रहर्षः किं किंनिमित्तः महीपतिः किं कारयिष्यति शंस पृष्टं कथय ॥ ९ ॥

गो० टी०—अतिमात्रेति । जनस्यायमत्यन्तप्रहर्षश्च किं किमर्थं किंनिमित्तं वा महीपतिः किं कर्म कारयिष्यति ॥ ९ ॥

१० ] ति० टी०—विदीर्यमाणान्तर्गतानन्दौत्कट्याद्देहपोषमुखविकासादिना तस्या आनन्दस्य बहिःप्रसारणाद्विदीर्यमाणत्वोत्प्रेक्षा । राघवे राज्ञा न्यस्यमानां भूयसीं श्रियं राज्यलक्ष्मीम् ॥ १० ॥

रा० टी०—विदीर्येति । हर्षेण विदीर्यमाणा हर्षपूर्णेत्यर्थः । धात्री राघवे राघवनिमित्तं भूयसीमत्यधिकां श्रियं राज्याभिषेकसामग्रीमित्यर्थः । चचक्षे ॥ १० ॥

गो० टी०—विदीर्यमाणेति । हर्षेण विदीर्यमाणा अन्तर्गतहर्षौत्कट्याद्देहपोषमुखविकासादिना बहिः प्रसरणात् विदीर्यमाणेवोपलक्षिता परया मुदा आचचक्षे स्वनिर्भरानन्दसंदोहपरिवाहस्य पात्रभूता काचिल्लब्धेति परमानन्दयुक्ता सती प्रतिकूलायै तस्यै अकथनीयमप्यकथयदिति भावः । राघवे श्रियं राघवे न्यस्यमानां राज्यलक्ष्मीम् ॥ १० ॥

११ ] ति० टी०—अनघं काव्यकारणेर्ष्यादिरहितम् ॥११॥

रा० टी०—तदाकारमाह—श्व इति । पुष्येण युक्ते श्व आगामिदिवसे अनघं स्वाश्रिताघनिवर्तकं यौवराज्येनाभिषेचयिता ॥ ११ ॥

गो० टी०—श्व इति । पुष्येण युक्ते श्वः उत्तरदिने जित-

---

१ निःस्वनामिति गो. रा. पाठः । २ अभीति गो. पाठः । ३ प्रहृष्टमुदितैरिति गो.पाठः । ४ प्रहर्षेति गो. पाठः । ५ अतिमात्रप्रहर्षोऽयं किं जनस्येति गो.. अतिमात्रप्रहर्ष इति रा. पाठः । ६ रामकमिति गो. रा. पाठः । ७ अभिषेचयिताऽनघमिति गो. रा. पाठः ।

धात्र्यास्तु वचनं श्रुत्वा कुब्जा क्षिप्रममर्षिता । कैलासशिखराकारात्प्रासादादवरोहत ॥ १२ ॥
सा दह्यमाना क्रोधेन[1] मन्थरा पापदर्शिनी । शयानामेवं कैकेयीमिदं वचनमब्रवीत् ॥ १३ ॥
उत्तिष्ठ मूढे किं शेषे भयं त्वामभिवर्तते । उपप्लुतमघौघेन नात्मानमवबुध्यसे[3] ॥ १४ ॥
अनिष्टे सुभगाकारे सौभाग्येन विकत्थसे । चलं हि तव सौभाग्यं नद्याः स्रोत इवोष्णगे ॥ १५ ॥
एवमुक्ता तु कैकेयी रुष्टया परुषं वचः । कुब्जया पापदर्शिन्या विषादमगमत्परम् ॥ १६ ॥
कैकेयी त्वब्रवीत्कुब्जां कच्चित्क्षेमं न मन्थरे । विषण्णवदनां हि त्वां लक्षये भृशदुःखिताम् ॥ १७ ॥
मन्थरा तु वचः श्रुत्वा कैकेय्या मधुराक्षरम् । उवाच क्रोधसंयुक्ता वाक्यं वाक्यविशारदा ॥ १८ ॥
सा विषण्णतरा भूत्वा कुब्जा तस्यां[5] हितैषिणी । विषादयन्ती प्रोवाच भेदयन्ती च राघवम् ॥ १९ ॥

क्रोधमनघमित्यभिषेकोपयुक्तगुणजातोपलक्षणं यौवराज्येनाभिषेचयिता यौवराज्यार्थमभिषेचयितेत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—अवरोहतावारुहत् ॥ १२ ॥

रा० टी०—धात्र्या इति । कुब्जा मन्थरा अवरोहत आगमशास्त्रस्यानित्यत्वादडभावः ॥ १२ ॥

गो० टी०—धात्र्या इति । अवरोहत अवारुहत् ॥१२॥१३॥

१३ ] ति० टी०—क्रोधेन दह्यमाना सेव पापदर्शिनी रामाभिषेके कैकेय्यै भरतविषयपापप्रदर्शिका ॥ १३ ॥

रा० टी०—सेति । पापदर्शिनी पापकर्मण उपदेष्ट्री किंच पापं राक्षसकृतोपद्रवं पश्यति तच्छीला इदमब्रवीत् ॥ १३ ॥

१४ ] ति० टी०—अघौघेन दुःखसमूहेनोपप्लुतं पीडितम् । कारणकार्ययोः पौर्वापर्यविपर्ययरूपातिशयोक्तिः । 'अघं दुरितदुःखयोः' इति कोशः ॥ १४ ॥

रा० टी०—तद्वचनमेवाह—उत्तिष्ठेति । मूढे कार्याकार्यविवेकरहिते ! अघौघेन पापसमूहकर्मफलेन उपप्लुतं युक्तम् ॥१४॥

गो० टी०—उत्तिष्ठेति । उपप्लुतमुपहतम् अघौघेन अघं दुःखम् 'अंहोदुःखव्यसनेष्वघम्' इत्यमरः । 'ओघो वृन्देऽम्भसां रये' इत्यमरः ॥ १४ ॥

१५ ] ति० टी०—सुभगाकारे त्वद्विषये सौभाग्यद्योतकाकारवत्याकारेणैव तव सौभाग्यदे वस्तुतोऽनिष्टेऽप्रियकर्तरि किं सौभाग्येन विकत्थसे मय्येवानुरक्तो मे स्वामी मदाज्ञावशंवद इत्यादिप्रकारेण वृथा श्लाघसे । उष्णगे ग्रीष्मगे रवौ सति नद्याः स्रोत इव सौभाग्यं चलं रामाभिषेकात्क्षीणप्रायमित्याशयः ॥ १५ ॥

रा० टी०—अनिष्टे इति । अनिष्टे राजेच्छाया अविषयीभूते राजप्रीत्यविषयीभूत इत्यर्थः । अत एव सुभगाकारे सुभगस्य शोभनैश्वर्यस्य आकारः प्रक्षेपो यस्याः किंच सुभगस्य नकारः राजकर्तृकनिष्पादः यस्यै तत्संबोधनम् । सौभाग्येन युक्तमात्मानमिति शेषः । विकत्थसे वस्तुतस्तव सौभाग्यं नास्तीत्यर्थः । तदेव विशदयति उष्णगे ग्रीष्मर्तुगे सूर्ये नद्याः स्रोत इव तव सौभाग्यं चलं नाशोन्मुखमित्यर्थः ॥ १५ ॥

गो० टी०—अनिष्ट इति । वस्तुतः राज्ञोऽनिष्टे सुभगाकारे आपाततः सौभाग्यवतीव भासमाने असुभगाकार इति वा छेदः सौभाग्येन हेतुना विकत्थसे ममैव सौभाग्यमस्तीत्यात्मानं श्लाघसे इयमुक्तिः पूर्वकालिकात्मश्लाघापरेत्यवगन्तव्या । इदानीं मत्सौभाग्यस्य का हानिरित्यत्राह—चलं हीति । उष्णं गच्छतीत्युष्णगः ग्रीष्मकालः तस्मिन् नद्याः स्रोत इव चलं क्षीणमित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—पापदर्शिन्या पापं दर्शयन्त्या विषादमगमत्त्वस्मिन्राजवैरस्योद्भावनात् ॥ १६ ॥

रा० टी०—एवमिति । परं विषादमनिष्टवचनं श्रुत्वातिखेदमगमत् ॥ १६ ॥

गो० टी०—एवमिति । परुषं वच उक्ता 'अप्रधाने दुहादीनाम्' इत्यप्रधाने कर्मकारके निष्ठा ॥ १६ ॥

१७–१८ ] ति० टी०—कच्चित्क्षेमम् न मत्यमिति शेषः१७

रा० टी०—कैकेयीति । क्षेमं कुशलमिहास्तीति शेषः ॥१७॥

गो० टी०—कैकेयीति । कच्चित् क्षेमं मत्यमिति शेषः ॥१७॥

रा० टी०—मन्थरेति । वाक्यविशारदा वचननिपुणा ॥१८॥

गो० टी०—मन्थरेति । क्रोधसंयुक्ता रामाभिषेकाविचारणादिति भावः ॥ १८ ॥

१९ ] ति० टी०—विषण्णतरा भूत्वा तदाकारेव भूत्वा । अप्सरस्त्वे सर्वज्ञत्वाद्वास्तवविषादाभावात् विषादयन्ती राज्यश्रियोऽन्यगामित्वरूपानिष्टप्रकाशनेन कैकेय्या विषादं जनयन्ती भेदयन्ती राघवं प्रति पुत्रत्वप्रयुक्तं तस्याः स्नेहं नाशयन्ती॥१९॥

रा० टी०—सेति । हितैषिणी प्रातिभासिकहितविषयकेच्छावती हितप्रक्षेपणशीला वा आद्ये इच्छार्थक इष द्वितीये तु गत्यर्थकः तच्छब्देन देवतापरामर्शो वा विषादयन्ती विषादमुत्पादयन्ती राघवं रघुकुलोद्भवदशरथादिनिष्ठकैकयीविषयकस्नेहं भेदयन्ती विदारयन्ती ॥ १९ ॥

गो० टी०—सेति । विषादयन्ती भेदयन्तीति शतृद्वयं हेत्वर्थं राज्यश्रियो ज्ञातिगामित्वानिष्टप्रकाशनेन विषादहेतवे सामान्यतः पुत्रत्वप्रयुक्तरामविषयस्नेहभेदनहेतवे चेत्यर्थः ॥ १९ ॥

१ कोपेनेति गो.पाठः । २ पत्येति गो.पाठः । ३ किमात्मानं न बुध्यसे इति गो पाठः । ४ उक्त्वेति रा.पाठः । ५ तस्या इति गो.रा.पाठः । ६ अवारोहदितियुक्तं भाति ।

अक्षयं सुमहद्देवि प्रवृत्तं त्वद्विनाशनम् । रामं दशरथो राजा यौवराज्येऽभिषेक्ष्यति ॥ २० ॥
साऽस्म्यगाधे भये मग्ना दुःखशोकसमन्विता । दह्यमानानलेनेव त्वद्धितार्थमिहागता ॥ २१ ॥
तव दुःखेन कैकेयि मम दुःखं महद्भवेत् । त्वद्वृद्धौ मम वृद्धिश्च भवेदिह न संशयः ॥ २२ ॥
नराधिपकुले जाता महिषी त्वं महीपतेः । उग्रत्वं राजधर्माणां कथं देवि न बुध्यसे ॥ २३ ॥
धर्मवादी शठो भर्ता श्लक्ष्णवादी च दारुणः । शुद्धभावेन जानीषे तेनैवमतिसंधिता ॥ २४ ॥
उपस्थितः प्रयुञ्जानस्त्वयि सान्त्वमनर्थकम् । अर्थेनैवाद्य ते भर्ता कौसल्यां योजयिष्यति ॥ २५ ॥
अपवाह्य तु दुष्टात्मा भरतं तव बन्धुषु । काल्ये स्थापयिता रामं राज्ये निहतकण्टके ॥ २६ ॥

---

२० ] ति० टी०—अक्षयम् क्षयः प्रतीकारः, अशक्यप्रतीकारमित्यर्थः । त्वद्विनाशनं त्वत्सौभाग्यनाशकारणं प्रवृत्तम् । तदेवाह—राममिति ॥ २० ॥

रा० टी०—तद्वचनमेवाह—अक्षयमिति । अक्षयं विनाशरहितं त्वद्विनाशनं त्वत्कर्मको ध्वंसः प्रवृत्तं तत्र हेतुरभिषेक्ष्यतीति ॥ २० ॥

गो० टी०—अक्षय्यमिति । अक्षय्यमशक्यप्रतीकारं त्वद्विनाशनं त्वद्विनाशः भावे ल्युट् ॥ २० ॥

२१ ] ति० टी०—शत्रो राज्यलाभाद्दुःखम् । स्वेष्टस्य तदलाभाच्छोकः शत्रुराज्यलाभ एव ततो भयम् त्वद्धितार्थं त्वद्धितबोधनार्थम् ॥ २१ ॥

रा० टी०—सेति । सा दृष्टत्वद्विनाशकरामाभिषेकहेतुभूतसामग्रीसंपादनादिः ॥ २१ ॥

गो० टी०—सेति । दुःखशोकसमन्विता अनभिमतरामाभिषेकश्रवणजनितव्यसनजं दुःखमभिमतभरताभिषेकराहित्यजः शोकः ताभ्यां समन्विता ॥ २१ ॥

२२ ] ति० टी०—ननु दास्यास्तव कुतो भयम्, अत आह—तवेत्यादि ॥ २२ ॥

रा० टी०—तवेति । मम दुःखं महत् त्वद्दुःखादधिकं भवेत् स्वदुःखात् मित्रदुःखदर्शनजनितदुःखस्याधिक्यादिति भावः ॥ २२ ॥

गो० टी०—ननु मम दुःखादिहेतौ सति कुतस्ते दुःखप्रसक्तिरित्यत्राह—तवेति ॥ २२ ॥

२३ ] ति० टी०—किं मे दुःखं तत्राह—नराधिपेति । एतद्विशेषणद्वयमग्रेऽपि राजमातृत्वाप्रच्युतये यत्नावश्यकत्वद्योतनाय । ननु रामराज्येऽपि महिषीत्वं मे दुष्परिहरमित्यत आह—उग्रत्वमिति । सापत्नो हि स राज्यलाभे त्वां त्वत्पुत्रं च नाशयिष्यतीति भावः ॥ २३ ॥

रा० टी०—नराधिपेति । राजधर्माणां राजाचरितकर्मणामुग्रत्वं क्रूरत्वं त्वं कथं न बुध्यसे एतेन दशरथस्य क्रूरकर्मकर्तृत्वं बोधितम् ॥ २३ ॥

गो० टी०—ननु रामाभिषेकमात्रं कथं मे दुःखहेतुरित्यत्राह—नराधिपेति । उग्रत्वं क्रौर्यम् ॥ २३ ॥

२४ ] ति० टी०—ननु राज्ञो रामस्य चात्यन्तं मदनुरक्तत्वात्स मत्पुत्रस्यैव राज्यलाभोऽत आह—धर्मवादीति । वाङ्मात्रेण धार्मिकः श्लक्ष्णवादी च सस्मितमधुरभाषी अन्ततस्तु शठोऽसूयावान् अत एव दारुणः क्रूरहृदय आन्तरक्रौर्यगोपनायैव सस्मितमृदुमधुरभाषी । एवंभूतं तं शुद्धभावेनोपलक्षितं जानीषे । सर्वथा तेनैवमुक्तरीत्यातिसंधिता वञ्चिता असीति शेषः ॥ २४ ॥

रा० टी०—ननु इक्ष्वाकुवंशप्रभूतः परमधर्मात्मा मम भर्ता क्रूरकर्मा कथं स्यादित्यत आह—धर्मेति । भर्ता तव पतिः धर्मवादी सन् शठः अधर्माचरण इत्यर्थः । श्लक्ष्णवादी मृदुभाषणशीलः सन् दारुणः कठोरहृदयः एवं एतद्धर्मविशिष्टं तं त्वं शुद्धभावेन अधर्मसंसर्गशून्यधर्मविशिष्टत्वेन जानीषे तेन तस्यां विवेकाभावः सूचितः । ननु त्वया कथमेवं विज्ञातमित्यत आह तेन राज्ञा अहं अतिसंधिता वञ्चिता वञ्चनं च अधर्माचरणादि ज्ञाप्यमेवेति भावः ॥ २४ ॥

गो० टी०—ननु मत्प्रियः कथमनिष्टं करिष्यतीत्यत्राह—धर्मवादीति । धर्मवादीव भासमानः वस्तुतः शठः गूढविप्रियकृत् श्लक्ष्णवादी कण्ठादुपरि प्रियवचनशीलः दारुणः क्रूरकर्मकारी एवंभूतमेनं शुद्धस्वभावेनोपलक्षितं जानीषे तथा न मन्तव्यं यतस्तेनैवमतिसंधिता वञ्चिता ॥ २४ ॥

२५ ] ति० टी०—उपस्थितः कौसल्यार्थसाधने हृदयेन सावधानस्त्वत्समीपे स्थितो वा । 'उपस्थितम्' इति पाठे तत्कालोचितसान्त्वमित्यर्थः । अनर्थकं फलरहितम् । सान्त्वं प्रियवचनं त्वयि प्रयुञ्जानः अर्थेन राज्यरूपेण कौसल्यामेव योजयिष्यतीत्यन्वयः ॥ २५ ॥

रा० टी०—उपेति । सान्त्वं शान्तिमुपस्थितः प्राप्तस्ते भर्ता त्वयि अनर्थकमर्थाभावमथ प्रयुञ्जन् सन् अर्थेन कौसल्यामेव योजयिष्यति ॥ २५ ॥

गो० टी०—शठत्वमेवाह—उपस्थितमिति । उपस्थितं तत्कालोचिततया भाषितमनर्थकं स्वदर्थनाशनं त्वयि सान्त्वमनुसरणं प्रयुञ्जानः कौसल्यामर्थेन योजयिष्यति ॥ २५ ॥

२६ ] ति० टी०—कौसल्यार्थप्रापणार्थमेव तेनोपायान्तरमप्यनुष्ठितमित्याह—अपवाह्येति । उद्वास्येत्यर्थः । काल्ये-

---

१ अक्षय्यमिति गो. पाठः । २ अत्रेति गो. पाठः । ३ उपस्थितमिति गो. पाठः । ४ अर्थेन वाद्येति गो. पाठः ।

शत्रुः पतिप्रवादेन मात्रेव हितकाम्यया । आशीविष इवाङ्केन बाले परिधृतस्त्वया ॥ २७ ॥
यथा हि कुर्याच्छत्रुर्वा सर्पो वा प्रत्युपेक्षितः । राज्ञा दशरथेनाद्य सपुत्रा त्वं तथा कृता ॥ २८ ॥
पापेनानृतसान्त्वेन बाले नित्यं सुखोचिता । रामं स्थापयता राज्ये सानुबन्धा हता ह्यसि ॥ २९ ॥
सा प्राप्तकालं कैकेयि क्षिप्रं कुरु हितं तव । त्रायस्व पुत्रमात्मानं मां च विस्मयदर्शने ॥ ३० ॥
मन्थराया वचः श्रुत्वा शयनात्सा शुभानना । उत्तस्थौ हर्षसंपूर्णा चन्द्रलेखेव शारदी ॥ ३१ ॥
अतीव सा तु संतुष्टा कैकेयी विस्मयान्विता । दिव्यमाभरणं तस्यै कुब्जायै प्रददौ शुभम् ॥ ३२ ॥
दत्त्वा त्वाभरणं तस्यै कुब्जायै प्रमदोत्तमा । कैकेयी मन्थरां हृष्टा पुनरेवाब्रवीदिदम् ॥ ३३ ॥

---

ऽन्यत्रोपसंक्रमणकालार्हे । 'कौल्ये' इति पाठः कुलक्रमागत इत्यर्थे आर्षः ॥ २६ ॥

रा० टी०—अनर्थमेव बोधयन्ती आह—अपेति । दुष्टो निषिद्ध आत्मा प्रयत्नो यस्य । अपवाह्य संप्रेष्य काल्ये प्रातरेव ॥ २६ ॥

गो० टी०—अतिसंधानप्रकारमाह—अपवाह्येति । अपवाह्य उद्वास्य कालमर्हतीति काल्यम् अर्हार्थे यत् श्वः प्रातरित्यर्थः ॥ २६ ॥

२७ ] ति० टी०—आत्मनो हितेच्छया त्वया मात्रेव भोजनदानादिना पोषित आशीविष इव क्रूरः शत्रुः पतिप्रवादेन प्रतिव्यपदेशेन त्वयाङ्केन परिधृत इत्यन्वयः ॥ २७ ॥

रा० टी०—शत्रुरिति । पतिप्रवादेन पतिनाम्ना शत्रुः शातयिता विषदन्तसहित इत्यर्थः आशीविषः क्रूरसर्प इव अङ्केन स्वोत्सङ्गेन हितकाम्यया मात्रेव पोषणपरया त्वया परिहृतः स्वीकृतः पोषित इत्यर्थः । 'परिधृतः' इति पाठेऽपि स एवार्थः । एतेनास्मात्पत्युस्ते कल्याणं नास्तीति ध्वनितम् ॥ २७ ॥

गो० टी०—शत्रुरिति । हे बाले ! मुग्धे आगाम्यनर्थानभिज्ञे इतियावत् पतिप्रवादेन पतिव्यपदेशेन शत्रुः छन्नहृदयः शात्रवः पतिः त्वया ऋजुप्रकृतिकया मात्रेव सर्पशिशुं पोषयित्र्येव हितकाम्यया हितप्रापणेच्छया आशीविष इव छन्नविषः सर्प इव अङ्केन उत्सङ्गेन परिहृतः परिधृत इत्यर्थः । यद्वा अङ्केन परिहृतः अङ्कान्न परिहृतः किंत्वङ्क एव धृत्वोपलालितः यथा सर्पपोषयित्री बाला सर्पस्यान्तर्विषमज्ञात्वा केवलं हितकाम्ययाङ्के सर्पमुपलालयति तथा त्वमपि बाला भर्तुः कुटिलहृदयमजानती विश्वस्य तमङ्के उपलालयसीत्यर्थः । यथाङ्कोपलालित आशीविषः कदाचिद्धितपरामपि पोषयित्रीं दशेत् एवं ते भर्तापि विश्वस्तां त्वामर्थहीनां कारयेत् अतः स आशीविष इव मातुसरणीयस्त्वयेति भावः ॥ २७ ॥

२८ ] ति० टी०— तदुदाहरणेन च तेऽनर्थः संवृत्त इत्याह—यथेति । प्रत्युपेक्षित उपेक्षितनाशः ॥ २८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—यथेति । शत्रुः शातयिता प्रत्युपेक्षित एव सर्पः यथा कुर्यात्तथैवाद्यैव त्वं कृता हिवाशब्दौ एवार्थौ । किंच प्रत्युपेक्षितः सर्पः शत्रुश्च यथा कुर्यात्तथैव ॥ २८ ॥

गो० टी०—एवं गम्यमर्थं विशदयति—यथेति ॥ २८ ॥

२९ ] ति० टी०—कथं कृतेत्यत्राह—पापेनेति । अनुबन्धः पुत्रादिपरिकरः ॥ २९ ॥

रा० टी०—पापेनेति । पापेन पापसंपादककर्मकारिणा अनृतशान्तेन अनृतं मिथ्याभूतं शान्तं शान्तिर्यस्य क्रूरहृदयेनेत्यर्थः । सानुबन्धा पुत्रादिपरिकरसहिता हता विपत्तिप्राप्त्या हिंसितेवेत्यर्थः ॥ २९ ॥

गो० टी०—पापेनेति । सानुबन्धा पुत्रमित्रादिपरिकरसहिता ॥ २९ ॥

३० ] ति० टी०—सा त्वं प्राप्तकालं प्राप्तानुष्ठानकालं यत्तव हितं तत्कुरु । विस्मयदर्शनेऽतिदुःखजनकवार्ताश्रवणेऽपि स्वेष्टाद्भुतवार्ताश्रवणेनैव विस्मयसूचकदर्शने । एवं विस्मयं हित्वा स्वेष्टं विभावयेति तात्पर्यम् ॥ ३० ॥

रा० टी०—इदानीं कृतयत्नेन तव कल्याणं भवितेति बोधयन्त्याह—सेति । तव स्वस्य विस्मयदर्शने विगतः स्मयः रूपादिगर्वः येन तदेव दर्शनं यस्याः तत्संबोधनम् किंच विस्मयमाश्चर्यकारकमिह लोके दर्शनं यस्याः परमसुन्दरीत्यर्थः ॥ ३० ॥

गो० टी०—सेति । विस्मयदर्शने आश्चर्यावहज्ञानयुक्ते तत्तत्कालोचितकर्तव्यनिरूपणचतुर इत्यर्थः । यद्वा अनेन हितकरणहेतुदशरथवशीकरणसाधनसौन्दर्यं सूच्यते ॥ ३० ॥

३१ ] ति० टी०—एवं मन्थरयानर्थत्वेन प्रकाशिते रामाभिषेके महाकुलप्रसूता निसर्गकल्याणगुणा सर्वथा तं स्वेष्टार्थमेव मन्यते स्मेत्याह—मन्थराया इत्यादि ॥ ३१ ॥

रा०टी०—वचनश्रवणोत्तरकालिकं कैकयीवृत्तमाह—मन्थराया इति । शारदी चन्द्रलेखेव आश्विनपूर्णिमाचन्द्रसदृशीत्यर्थः ॥ ३१ ॥

गो० टी०—एवं दैवावेशवशाद्विपरीतवाक्यया मन्थरयोक्तापि कैकेयी महाकुलप्रसूततया सत्प्रकृतिः सती रामाभिषेकं हितं मन्यमानाह—मन्थराया इति ॥ ३१–३२ ॥

३२–३३ ] ति० टी०—विस्मयोऽत्यद्भुतस्वेष्टश्रवणात् कौसल्यावदेवेति भावः ॥ ३२ ॥ ३३ ॥

रा० टी०—अतीवेति । एकं द्रव्यमाभरणदानेन तत्कोपः

---

१ अङ्केनेति गो. पाठः । २ परिहृत इति गो. पाठः । ३ नित्यसुखोचिते इति गो. रा.पाठः । ४ शयनेति गो. पाठः । ५ एकमिति गो. रा. पाठः ।
६ हृष्टेति गो. रा. पाठः ।

इदं तु मन्थरे मह्यमाख्यातं परमं प्रियम् । एतन्मे प्रियमाख्यातं किं वा भूयः करोमि ते ॥ ३४ ॥
रामे वा भरते वाहं विशेषं नोपलक्षये । तस्मात्तुष्टास्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥ ३५ ॥
न मे परं किंचिदितो वैरं पुनः प्रियं प्रियार्हे सुवचं वचोऽमृतम् ।
तथा ह्यवोचस्त्वमतः प्रियोत्तरं वरं परं ते प्रददामि तं वृणु ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तमः सर्गः ॥ ७ ॥

## अष्टमः सर्गः ।

रामस्य यौवराज्यं भरतानर्थहेतुरिति प्रतिपादयन्तीं मन्थरां कैकेयी रामगुणान्प्रशशंस तदभिषेकस्यैव च स्वाभीष्टत्वं समर्थयाम्बभूव । पुनश्च मन्थरा बहून्हेतूनुपन्यस्य रामाभिषेकस्यानर्थहेतुत्वप्रतिपादनेन तद्विघाते कैकेयीं प्रैरयत् ।

मन्थरा त्वभ्यसूय्यैनामुत्सृज्याभरणं [6]हि तत् । उवाचेदं ततो वाक्यं कोपदुःखसमन्विता ॥ १ ॥

भ्राम्यतु इति हेतुर्ध्वनितः तेनाभिषेकविरोधिवचो नोच्चारयत्विति हेतुः सूचितः ॥ ३२ ॥

रा० टी०–दत्त्वेति । प्रमदोत्तमा प्राकृतप्रमदाविलक्षणा इदमब्रवीत् ॥ ३३ ॥

३४ ] ति० टी०–प्रियमाख्यातमित्यस्य पुनरुक्तिर्वक्त्र्या हर्षातिशयवत्त्वान्न दोषावहा । भूयोऽभ्यधिकं किं प्रीतिदानं करोमि त्वच्छ्रावितप्रियसमाभ्यधिकप्रियवस्त्वभावादित्यर्थः ॥ ३४॥

रा० टी०–तद्वचनमेवाह–इदमिति । परमं प्रियमेवाख्यातं कथितम् । तुरेवार्थे एतन्मे प्रियमाख्यातुस्ते तव किं करोमि तद्वदेत्यर्थः । एतत्प्रतिदानयोग्यं वस्तु अहं न पश्यामीति भावः । उत्तरार्धादौ 'एतन्मे प्रियमाख्यातम्' इति भट्टपाठः । प्रियमाख्यातमित्यस्य पुनरुक्तिः वक्त्र्याः हर्षातिशयद्योतकत्वान्न दोषावहेति तद्व्याख्या ॥ ३४ ॥

गो० टी०–इदं त्विति । एतत्प्रियमाख्यातुः आख्यात्र्यास्ते किं वा करोमीति संबन्धः 'एतन्मे प्रियमाख्यातम्' इतिपाठे आख्यातमेतत्प्रियमुद्दिश्य ते भूयः किंवा करोमीति संबन्धः ३४

३५ ] ति० टी०–ननु सापत्नश्रेयःश्रुतिः कथं ते प्रियमित्यत्राह–रामे वेति । विशेषं पुत्रत्वप्रयुक्तस्नेहविशेषम् ॥ ३५॥

रा० टी०–रामे इति । विशेषमैश्वर्यप्राप्तौ भेदं नोपलक्षये अभिषेक्ष्यति अभिषेक्ता विशेषकालाविवक्षयापि लृट् ॥ ३५ ॥

गो० टी०–ननु सपत्नीपुत्रे कथं तवैतादृशी प्रीतिरित्यत्राह–राम इति ॥ ३५ ॥

३६ ] ति० टी०–प्रियार्हे प्रियदानार्हे । इत उक्ताद्रामाभिषेकाद्वरमधिकं प्रियं वचोऽमृतं परमन्यत् , न सुवचम् तादृशं हि त्वमवोचः । यतोऽधिकं प्रियं न सुवचमतः प्रियोत्तरं प्रियाख्यानोत्तरं पारितोषिकरूपं परं श्रेष्ठं वरं वृणु ते तव तं वरं प्रददामि । मया तु स्वबुद्ध्यैतत्प्रियाख्यानपारितोषिकयोग्यं वस्तु न दृश्यते, अतस्त्वं यद्वरयिष्यसे तद्दास्यामीत्यर्थः ॥३६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा० टी०–नेति । हे प्रियार्हे प्रियवस्तुप्राप्तियोग्ये ! अमृतं मधुरं किंच मृतिनिवर्तकमेतच्छ्रवणमात्रेण आसन्नमरणोऽपि हर्षातिशयप्राप्त्या जीवितो भवतीति भावः अत एव वरं सर्वश्रेष्ठमत एव प्रियं सर्वप्रीतिविषयीभूतं वचस्त्वमवोचः इतोऽस्मात्परं भिन्नं किंचित्प्रियं सुवचं न वचनविषयं वस्तु नास्तीति भावः अतोऽपि तथा मत्प्रीतिविषयीभूतवस्तुसदृशं प्रियोत्तरमतिप्रियमत एव ते परं त्वत्तृप्तिकारकं कंचिद्वरं त्वं वृणु तमहं प्रददामि कंचिदित्यध्याहृतम् । इतोऽनन्तरं त्वयेति वचःशब्दानन्तरं वरमिति च ददामीत्येतदनन्तरं ते इति च गोविन्दाचार्यपाठः ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तमः सर्गः ॥ ७ ॥

गो० टी०–नेति । हे प्रियार्हे प्रियदानार्हे ! मे इतः परं रामाभिषेककथनादन्यत्किंचित् प्रियं अभिमतं परं वचस्त्वया पुनर्न सुवचं वक्तुं न शक्यं हि यस्मात् कारणात् त्वं तथा सर्वप्रियेभ्योऽधिकं प्रियं रामाभिषेकरूपमवोचः उक्तवती अतः प्रियोत्तरं प्रीतिविषयेषु श्रेष्ठम् 'उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः' इत्यमरः । परमन्यं वरं वरणीयं वस्तुविशेषं ते तुभ्यं प्रददामि तं वृणीष्वेति योजना ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तमः सर्गः ॥ ७ ॥

---

१ ] ति० टी०–अथ 'चलं चित्तं मनुष्याणाम्' इति न्यायेन द्विर्विमन्थरया हितवदुपदेशात्कल्याणमतेरपि कैकेय्याश्चित्तं चलितमित्याह–मन्थरा त्विति । अभ्यसूय्यासूयाविषयां कृत्वा । हिताश्रवणात्कोपः एतदहितं जायते इति दुःखम् तत्समन्वितेव ॥ १ ॥

रा० टी०–कैकयीवचनश्रवणोत्तरकालिकं मन्थरावृत्तमाह–मन्थरेत्यादिभिः । एनां कैकयीमभ्यसूय प्रणिन्द्य तत् कैकयीदत्तम् ॥ १ ॥

गो० टी०–अथ कुमतिजनसंसर्गवशेन महतामपि कदाचि-

---

१ आख्यासीति गो.पाठः । २ आख्यातु रति गो.रा.पाठः । ३ त्वयेति गो.पाठः । ४ परमिति गो.पाठः । ५ अभ्यसूयेति गो.रा.पाठः । ६ चेति गो. पाठः ।

हर्षं किमर्थमस्थाने कृतवत्यसि बालिशे । शोकसागरमध्यस्थं नात्मानमवबुध्यसे ॥ २ ॥
मनसा प्रसहामि त्वां देवि दुःखार्दिता सती । यच्छोचितव्ये हृष्टासि प्राप्य त्वं व्यसनं महत् ॥ ३ ॥
शोचामि दुर्मतित्वं ते का हि प्राज्ञा प्रहर्षयेत् । अरेः सपत्नीपुत्रस्य वृद्धिं मृत्योरिवागताम् ॥ ४ ॥
भरतादेव रामस्य राज्यसाधारणाद्भयम् । तद्विचिन्त्य विषण्णास्मि भयं भीताद्धि जायते ॥ ५ ॥
लक्ष्मणो हि महाबाहू रामं सर्वात्मना गतः । शत्रुघ्नश्चापि भरतं काकुत्स्थं लक्ष्मणो यथा ॥ ६ ॥
प्रत्यासन्नक्रमेणापि भरतस्यैव भामिनि । राज्यक्रमो विसृष्टस्तु तयोस्तावद्यवीयसोः ॥ ७ ॥

चित्तचलनं स्यादित्यमुमर्थं द्योतयन्नाह—मन्थरेत्यादि । अभ्यसूय असूयां कृत्वा एनां प्रतीति शेषः । कोपदुःखसमन्वितम् हितं न शृणोतीति कोपः आगमिष्यत्यनर्थं इति दुःखम् ॥ १ ॥

२ ] ति० टी०—अस्थाने तदनुचितकाले बालिशे मूर्खे ! शोककाले हर्षोदयात् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—हर्षमिति । अस्थाने हर्षानुचितकाले ॥ २ ॥

गो० टी०—हर्षमिति । हे बालिशे अज्ञे ! अस्थाने अनुचितकाले हर्षं कृतवत्यसि किमिदम् अत्र कारणं न जानामि । अस्थानकृतत्वमाह—शोकेति ॥ २ ॥

३ ] ति० टी०—मनसेति । अत इत्यादिः । दुःखार्दिता सती तावकदुःखेन पीडिता सती प्रसहामीत्यन्वयः । व्यसनं विपदम् ॥ ३ ॥

रा० टी०—अयं हर्षस्त्वया त्याज्य इत्यत्र हेतुं बोधयन्ती आह—मनसेति । व्यसनं दुराग्रहम् ॥ ३ ॥

गो० टी०—मनसेति । इदं रामाभिषेकरूपं महद्व्यसनं प्राप्य तेनैव हेतुना शोचितव्ये विषये हृष्टासीति यत् अतोऽहं दुःखार्दिता सती त्वां मनसा प्रहसामि यथोन्मत्तप्रभुदर्शने ॥ ३ ॥

४ ] ति० टी०—मतेर्दुष्टत्वमनर्थकरैः प्रियताविषयत्वम् । प्रहर्षयेत्प्रहृष्येत् । अरित्वे हेतुः सपत्नीपुत्रत्वम् । मृत्योर्वृद्धिमिव तस्य वृद्धिं दृष्ट्वेति शेषः ॥ ४ ॥

रा० टी०—शोचामीति । ते दुर्मतित्वं दुष्टबुद्धित्वमहं शोचामि । ननु मदनुसारिणी भूत्वा त्वमपि मे हर्षप्रयोजिका भवेत्यत आह—मृत्योः मृत्युसदृशस्य अरेः सपत्नीपुत्रस्य वृद्धिमागतां ज्ञातवतीं त्वां का प्राज्ञा बुद्धिमती प्रहर्षयेत् संतोषयेत् न कापीत्यर्थः एतेन तस्याः भ्रान्तिमतीत्वं बोधितम् ॥४॥

गो० टी०—एवं बालिशात्वमन्वयमुखेन दर्शयित्वा व्यतिरेकमुखेनापि दर्शयति—शोचामीति । ते दुर्मतित्वं दुष्टबुद्धित्वं शोचामि । मतेर्दुष्टत्वमनर्थविषयप्रीतिजनकत्वं मृत्योरिव सपत्नीपुत्रस्यागतां वृद्धिं का हि प्राज्ञा का वा प्रशस्तबुद्धिः प्रहर्षयेत् प्रहर्षसाधनं कुर्यात् "तत्करोति—" इति णिच् हर्षं इति करणे घञ्प्रत्ययः लालयेदिति वार्थः ॥ ४ ॥

५ ] ति० टी०—मृत्योरिवेति व्युत्पादयति—भरतादिति । रामस्य भरतादेव भयमस्ति । तत्र हेतुः—राज्यसाधारणाद्राज्यरूपसाधारणभोग्याद्धेतोः तद्भरतहेतुकं रामभयं हि यतो भीताद्भयं जायते यो यस्माद्भीतस्तस्मात्पदस्थात्तस्य भयं भवत्येव एवं च राज्यस्य निष्कण्टकत्वाय स्वभयहेतुं भरतं राज्यं प्राप्य रामः सर्वथा नाशयिष्यतीति भावः ॥ ५ ॥

रा० टी०—भरतादिति । राज्यसाधारणात् राज्ये राज्यकरणे साधारणात् साधारणयोग्यताविशिष्टात् भरतात् रामस्य भयमेव तद्विचिन्त्य निश्चित्य अहं विषण्णाऽस्मि । ननु रामकर्तृकभये तव विषण्णात्वं कथमित्यत आह—भीताद्भयविशिष्टाद्भयं भयहेतौ भीतिर्जायत एव यो हि यस्माद्बिभेति स तस्मिन् भयोत्पत्तियत्नं करोत्येवेति भावः । हिरेवार्थे ॥ ५ ॥

गो० टी०—उक्तां व्यसनमहत्तां दर्शयति—भरतादिति । राज्यं साधारणं यस्य तस्माद्भरतादेव रामस्य यद्भयं तद्विचिन्त्य विषण्णास्मि । रामस्य भयमस्तु भरतस्य किमित्यत आह—भयमिति । यः यस्माद्भीतः स तस्य भयमवश्यमुत्पादयति व्याघ्रसर्पादिविषये तथा दर्शनादिति भावः ॥ ५ ॥

६ ] ति० टी०—ननु भरतादेवेत्यवधारणमयुक्तमत आह—लक्ष्मणो हीति । सर्वात्मना गतो मनोवाक्कायव्यापारैः रामैकैक्यं गतोऽतो न ततो भीप्रसङ्गः । शत्रुघ्नस्यापि भरतशेषतया न ततः पृथग्भीप्रसङ्गः तन्नाशेनैव तन्नाशादिति भावः ॥ ६ ॥

रा० टी०—ननु लक्ष्मणशत्रुघ्नाभ्यामपि रामभीतिं कुतो न ब्रूषे इत्यत आह—लक्ष्मण इति । लक्ष्मणः सर्वात्मना सर्वप्रयत्नेन रामं गतः अनुसृत इत्यर्थः । एतेन लक्ष्मणात्तस्य न भीतिरिति ध्वनितम् । शत्रुघ्नस्तु सर्वात्मना भरतं गतः एतेन रामस्य शत्रुघ्नहेतुकभीतिमत्त्वेऽपि तद्भीतेः भरतहेतुकभीतावन्तर्भावान्न न्यूनतेति सूचितम् ॥ ६ ॥

गो० टी०—यद्यपि लक्ष्मणशत्रुघ्नयोरपि राज्यं साधारणं तथापि तयोः परतन्त्रत्वान्न भयप्रसक्तिरित्याह—लक्ष्मण इति । सर्वात्मना सर्वप्रकारेण मनोवाक्कायैरित्यर्थः । अतो रामस्य न लक्ष्मणाद्भयमिति भावः । शत्रुघ्नस्य भरतपरतन्त्रत्वेन न ततः पृथग्भयमित्यर्थः ॥ ६ ॥

७ ] ति० टी०—भरतादेवेत्यवधारणे हेत्वन्तरमाह—प्रत्यासन्नेति । प्रत्यासन्नो यः क्रम उत्पत्तिक्रमस्तेनापि हेतुना भरतस्यैव राज्यक्रमस्तदाक्रमणं प्रसक्तम् । तयोस्तु यवीयस्त्वात्स विसृष्टो दूरस्थ इत्यर्थः ॥ ७ ॥

१ इदमिति गो. पाठः । २ प्रहसामीति गो. रा. पाठः । ३ इदमिति गो. पाठः । ४ महेष्वास इति गो. पाठः । ५ विप्रकृष्ट इति गो. पाठः । ६ कनीयसोरिति गो. पाठः ।

विदुषः क्षत्रचारित्रे प्राज्ञस्य प्राप्तकारिणः । भयात्प्रवेपे रामस्य चिन्तयन्ती तवात्मजम् ॥ ८ ॥
सुभगा किल कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते । यौवराज्येन महता श्वः पुष्येण द्विजोत्तमैः ॥ ९ ॥
प्राप्तां वसुमतीं प्रीतिं प्रतीतां हतविद्विषम् । उपस्थास्यसि कौसल्यां दासीवत्त्वं कृताञ्जलिः॥ १० ॥
एवं चै त्वं सहास्माभिस्तस्याः प्रेष्या भविष्यसि । पुत्रश्च तव रामस्य प्रेष्यैत्वं हि गमिष्यति ॥ ११ ॥
हृष्टाः खलु भविष्यन्ति रामस्य परमाः स्त्रियः । अप्रहृष्टा भविष्यन्ति स्नुषास्ते भरतक्षये ॥ १२ ॥

---

रा० टी०—लक्ष्मणशत्रुघ्नाभ्यां भीत्यभावे हेत्वन्तरमाह—प्रत्यासन्नेति । प्रत्यासन्नस्य जन्मनो यः क्रमः तेनापि भरतस्यैव राज्यक्रमः राज्यस्याधिकारः यवीयसोः कनिष्ठयोः तयोर्लक्ष्मणशत्रुघ्नयोः राज्यक्रमस्तु विसृष्टः भरतस्य ज्येष्ठत्वात्तदधिकारेण दूरीकृतः एतेन ताभ्यां न रामभीतिरिति सूचितम् । तेन यथा भरतराज्याधिकारेण तयो राज्याधिकारो दूरीकृतः तथा रामराज्याधिकारेण भरतराज्याधिकारोऽपि दूरीकृत इत्यंशे तस्या अज्ञानं सूचितम् तेन परमात्मेच्छायाः प्राबल्यं ध्वनितम् ॥ ७ ॥

गो० टी०—भरतादेवेत्यत्र हेत्वन्तरमाह—प्रत्यासन्नेति । प्रत्यासन्नेन सन्निकृष्टेन क्रमेण पुनर्वसुपुष्यनक्षत्रजननक्रमेण भरतस्यैव राज्यं प्राप्तमिति शेषः । कनीयसोः कनिष्ठयोः राज्यक्रमः राज्यप्राप्तिक्रमस्तु विप्रकृष्टः व्यवहितः । सत्यपि पारतन्त्र्ये राज्यविषये सर्वेषामभिलाषस्तुल्यः यथा भरतस्येति शङ्कायां प्रथमं रामस्य राज्यं प्राप्तं ततो भरतस्य ततो लक्ष्मणशत्रुघ्नयोः तथा च प्रथमो द्वितीयं जिघांसति अतो रामाद्भयं भरतस्यैवेति भावः ॥ ७ ॥

८ ] ति० टी०—पुना रामाद्भयमुपसंहरति—विदुष इति । विदुषः सर्वशास्त्रज्ञस्य विशिष्य क्षत्रचारित्रे बलसंपाद्ये संधिविग्रहादिप्रयोगे च प्राज्ञस्य प्राप्तकारिणः अविलम्बेन कालोचितकर्तव्यार्थकारिणो रामस्य त्वदात्मजं प्रति भाव्यनर्थं चिन्तयन्ती तन्निमित्ताद्भयात्प्रवेपे कम्पे ॥ ८ ॥

रा० टी०—ननु महात्मनां वसिष्ठादीनां विद्यमानत्वात् यथाधिकारमेव भविष्यतीति तव विचारेण किमित्यत आह—विदुष इति । तवात्मजं त्वत्पुत्रसाधुतां चिन्तयन्त्यहं विदुषः सर्वज्ञस्य अत एव क्षत्रचारित्रे संधिविग्रहादिप्रयोगादिषु प्राज्ञस्य विज्ञातुः अत एव प्राप्तकारिणः उपस्थितेष्टवस्तुनो झटिति करणशीलस्य रामस्य भयात् भीत्युत्पादककृतेः प्रवेपे प्रकम्पे ॥ ८ ॥

गो० टी०—एवं राज्यक्रमो भरतस्य संनिहितोऽस्तु तथापि रामे प्रथमप्राप्तिमति विद्यमाने का भरतस्य राज्यशङ्केत्यत्राह—विदुष इति । विदुषः स्वत एव विवेकशालिनः विशिष्य क्षत्रचारित्रे राजनीतौ प्राज्ञस्य प्राप्तकारिणः अविलम्बेन कालोचितकर्तव्यकार्यकारिणः रामस्य भयाद्भाव्यनर्थकरणभयात् तवात्मजं कञ्चकैतुष्यादिरहितं चिन्तयन्ती प्रवेपे । षष्ठी चात्र संबन्धसामान्ये ॥ ८ ॥

९ ] ति० टी०—एवं पुत्रानर्थं प्रदर्श्य तस्या अप्यनर्थं दर्शयितुं कौसल्यार्थमाह—सुभगेति । यौवराज्येनेति हेतौ तृतीया । पुष्येण पुष्ये ॥ ९ ॥

रा० टी०—ननु कविशेषणविशिष्टरामसंनिधौ त्वया साधुतयैव वर्तितव्यमतो न भीत्यवसरो न वा राज्यप्राप्तौ दोष इत्यत आह—सुभगेति । पुष्येण युक्ते श्वः अव्यवहितागामिदिवसे महता सर्वश्रेष्ठेन यौवराज्येन युवराजत्वेन यस्याः पुत्रो द्विजोत्तमैरभिषेक्ष्यते सा कौसल्या सुभगा ॥ ९ ॥

गो० टी०—कैकेय्या ईर्ष्योत्पादनार्थं कौसल्यासौभाग्यं दर्शयति—सुभगेत्यादिना । सुभगा भाग्यशीला यौवराज्येनेति हेतौ तृतीया ॥ ९ ॥

१० ] ति० टी०—वसुमतीं प्राप्तां तत्प्राप्तिनिमित्तां प्रीतिं च प्राप्ताम् । हता युष्मदादिसपत्नीरूपा विद्विषो यया ताम् एव प्रतीतां प्रसिद्धाम् उपस्थास्यसि गत्वा सेविष्यसे ॥ १० ॥

रा० टी०—नन्विष्टमेवैतदित्यत आह—प्राप्तामिति । वसुमतीं प्राप्तामत एव हतविद्विषं विनष्टप्रायसपत्न्यादिरिपुमत एव प्रीतिं प्राप्तां प्रतीतां राजविश्वस्तां कौसल्यां त्वं दासीवदुपस्थास्यसि ॥ १० ॥

गो० टी०—रामतो भरतस्येव कौसल्यातोऽस्या अनर्थं दर्शयति—प्राप्तामिति । रामाभिषेकेण सुमहतीं श्रियं प्राप्तां प्रतीतां ख्याताम् ' प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ' इत्यमरः । हतद्विषमधरीकृतसपत्नीकां तां कौसल्यामुपस्थास्यसि सेविष्यसे ॥ १० ॥

११ ] ति० टी०—अयमनर्थो ममापीत्याह—एवं चेति ११

रा० टी०—एवमिति । एवं च यदि त्वं तस्याः कौसल्यायाः प्रेष्या दासी भविष्यसि तदा तव पुत्रोऽपि अस्माभिः सह रामस्य प्रेष्यत्वं दासत्वं गमिष्यति प्राप्स्यति ॥ ११ ॥

गो० टी०—न केवलं तवैकस्या दास्यं किंतु त्वद्बन्धुजनस्यापीत्याह—एवमिति । तव दास्यं प्राप्तं चेदित्यर्थः ॥ ११ ॥

१२ ] ति० टी०—परमाः स्त्रिय इति बहुवचनेन सीतासख्यः । भरतक्षये भरतप्रभावनाशे ॥ १२ ॥

रा० टी०—हृष्टा इति । रामस्य स्त्रियः सीतासखुत्तमादरार्थम् । किंच स्त्रीशब्दः स्त्रीत्वजातिविशिष्टपरः नतु पाणिगृहीतीपरः तेन बहुत्वं युक्तमेव, किंच रामस्य स्त्रियः सीतायाः परमाः प्राकृतविलक्षणाः संपत्तयः प्रहृष्टा भविष्यन्ति । आसां-

---

१ चलितेति गो. पाठः । २ सुमहतीमिति गो. पाठः । ३ चेदिति गो. पाठः । ४ प्रेष्यभावमिति गो. पाठः ।

तां दृष्ट्वा परमप्रीतां ब्रुवन्तीं मन्थरां ततः । रामस्यैव गुणान्देवी कैकेयी प्रशशंस ह ॥ १३ ॥
धर्मज्ञो गुणवान्दान्तः कृतज्ञः सत्यवाञ्छुचिः । रामो राजसुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥ १४ ॥

मशाब्दस्यानित्यत्वादादाङ्विरहः । अत एव रामस्य एकपत्नीव्रतत्वं संगच्छते रामस्य भार्यान्तराभावादेव सीताविरहकालभवयागे सीताप्रतिकृतिकरणं संगच्छते अत एव तदुत्तरत्र 'न सीतायाः परां भार्यां वव्रे स रघुनन्दनः । यज्ञे यज्ञे च पत्न्यर्थं काञ्चनी जानकी भवेत्' इति संगच्छते अत एव 'मोघं हि धर्मश्चरितो मयायं तथैकपत्नीत्वमिदं निरर्थकम् । या त्वां न पश्यामि कृशा विवर्णा हीना त्वया संगमने निराशा ' इति सुन्दरकाण्डे अष्टाविंशतितमे सर्गे सीताविलापपद्ये एकपत्नीत्वोक्तिः संगच्छते स्वपतिनिरूपितपत्न्यन्तरसंबन्धात्यन्ताभाववत्त्वमिति तदर्थः । एतदुत्तरपद्यस्य ' पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च । स्त्रीभिश्च मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः ' इत्यस्य तु अयमर्थः यदि मां त्यक्त्वा गमिष्यसि तर्हि बहुभिः स्त्रीभिश्च ते विहारः सेत्स्यति एतेन तवैकपत्नीव्रतत्वं भज्येत इति बोधितम् तेन स्वत्यागपूर्वकगमनासंभवो ध्वनितः तेन तन्मूलकबहुस्त्रीकरणकविहारस्यासंभवः सूचितः तेन स्वविषयकरामपरप्रेम्णो विश्वासनीत्वं व्यञ्जितम् । एतदनुरोधेन ' भुजैः परमनारीणामभिमृष्टमनेकधा ' इत्यस्य तु अनेकधा अनेकप्रकारकाणां नारीणां सीतातिरिक्तस्त्रीणां भुजैः यत् अभिमृष्टं स्पृष्टमभतमित्यर्थः । सामान्ये नपुंसकम् । अत एव परं सर्वोत्कृष्टमत एव ' शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा ' इति वक्ष्यमाणेनावगतार्थता वक्ष्यमाणानुरोधादेवात्र नारीशब्देन सीतातिरिक्तस्त्रीग्रहणं युक्तमित्यध्याहृतम् । ' मातरश्चैव सर्वा मे कुमाराः स्त्रीगणानि च । अग्रतो भरतं कृत्वा गच्छन्त्वग्रे समाधिना ' इत्युत्तरकाण्डाश्वमेधोपक्रमपद्यघटकीभूतस्त्रीशब्दः पाणिगृहीत्यतिरिक्तपरः । मातरश्चेत्युक्तिस्तु ब्राह्मणवसिष्ठन्यायेन विशिष्टबोधनाय ॥ १२ ॥

गो० टी०—दृष्ट्वा इति । राममहिष्या एकत्वेऽपि रामस्य परमाः स्त्रिय इतिबहुवचननिर्देशः परिचारिकाभिप्रायेण भरतक्षये भरतस्य दारिद्र्यरूपक्षये सति । नन्वत्र स्त्रीशब्दो भार्यापर एव स्नुषास्ते भरतक्षये इति स्नुषाशब्दसाहचर्यात् अत एवं सुन्दरकाण्डे सीतयोच्यते ' पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च । स्त्रीभिश्च मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः ' इति । युद्धकाण्डे च दर्भशयनवर्णने ' भुजैः परमनारीणामभिमृष्टमनेकधा ' इत्युक्तं नहि भुजैर्भुजाभिमर्शो भार्याभ्योऽन्यत्र संभवति उत्तरकाण्डे चाश्वमेधोपक्रमे ' मातरश्चैव सर्वा मे कुमाराः स्त्रीगणानि च । अग्रतो भरतं कृत्वा गच्छन्त्वग्रे समाधिना ' इति दर्शितम् । अत्र स्त्रीगणकुमारव्यपदेशो विना सीतातिरिक्तभार्यासद्भावं न संभवति किंच श्रुतार्थापत्तिरपि रामस्य सीतातिरिक्तधर्मदारसद्भावे प्रमाणं नष्टपत्नीकस्य यज्ञानुष्ठानं संभवति भोगदारान्तरासंभवेन रामस्यैकदारव्रतत्वं भृगुशापपालनं च । सीताप्रतिकृतिकरणं तु सीता स्नेहबहुमानार्थम् । अत्रोच्यते रामस्यैकदारव्रतत्वं सर्वसिद्धं तच्च पत्न्यन्तरसंभवे न संगच्छते नच यज्ञकरणानुपपत्तिः सीताप्रतिकृतिकरणेन तदुपपत्तेः अत एवोत्तरकाण्डे वक्ष्यति ' काञ्चनीं मम पत्नीं च दीक्षार्हां यज्ञकर्मणि । अग्रतो भरतः कृत्वा गच्छत्वग्रे महामतिः' इति सीताप्रतिकृतेर्दीक्षार्हत्वं पत्नीत्वं च, पुनश्चोत्तरत्र ' न सीतायाः परां भार्यां वव्रे स रघुनन्दनः । यज्ञे यज्ञे च पत्न्यर्थं काञ्चनी जानकी भवेत् ' इति नहि वचनविरोधे न्यायः प्रवर्तते अनेन वचनेन प्रत्यक्षश्रुत्यविरुद्धेन विदूरभार्योऽननुकूलभार्यश्च भार्याप्रतिकृतिं कृत्वा श्रौतस्मार्तकर्माणि कुर्यादिति विधिरुन्नीयते स्मृतिश्च तथाविधा पठ्यते यथा हेमाद्रौ 'दूरभार्योऽननुकूलभार्यश्च दर्भपिञ्जूलैर्भार्याप्रतिनिधिं विधाय पार्वणं कुर्यात् ' इति । पत्नीकर्तव्यानि कर्माण्यध्वर्युर्यजमानो वा कुर्यात् यथा तस्यामसमर्थायां पत्नीविनाशाभावान्नाग्नेर्विनाशः यत्तु येनकेनचिदुक्तं सीताप्रतिकृतिकरणं सीतास्नेहबहुमानार्थमिति तत्तुच्छं संत्यक्तभार्यायां स्नेहबहुमानकरणस्यावद्यावहत्वात् मातरश्चैव सर्वा मे कुमाराः स्त्रीगणानिच इत्यत्र मे मातरः भरतादीनां कुमाराः स्त्रियश्चेत्यर्थः । दारान्तरसंभवेऽपि तेषां धर्मार्थत्वेन प्रजार्थत्वाभावेन रामस्य कुमाराभावात्तत्सहचरितस्त्रीगणाश्च भरतादीनामेवेति सुव्यक्तम् । एवं च रामस्य परमाः स्त्रियः, परमनारीणां, स्त्रीभिश्च मन्ये, इत्यादिषु भोगप्रसंजनेन धर्मदारपरत्वासंभवात् साधारणादिपरिग्रहशङ्कानवकाशाच्चान्यपरत्वमवसेयं परमाः स्त्रिय इति परिचारिकान्तर्भावेन स्त्रीभिश्च मन्य इति स्वविनाशे स्त्र्यन्तरसंभावनया परनारीणामित्यस्य कविवचनत्वेन श्रीभूम्याद्यभिमर्शविषयत्वाच्चेति दिक् ॥ १२ ॥

१३ ] ति० टी०—एवं द्विःकृतोपतापापि कैकेयी निसर्गपुण्यस्वभावान्न चचालेत्याह—तामित्यादि । परमप्रीतां परं रामेऽप्रीतामित्यर्थः । देवी पुण्यस्वभावा ॥ १३ ॥

रा० टी०—तामिति । ततः मन्थरोक्तिश्रवणानन्तरमपरमतृप्तिकारकं वचनं ब्रुवन्तीं मन्थरां दृष्ट्वा कैकेयी रामस्यैव गुणान् प्रशशंस गुणप्रशंसया रामे अस्याः प्रीतिरुत्पद्येतेत्यनिष्टभाषणतो निवर्तेतेत्यभिप्रायः सूचितः ॥ १३ ॥

गो० टी०—रामस्यैवंविधगुणत्वे हि त्वदुक्ता दोषाः स्युस्तदेव नास्तीति मूले कुठारं निदधाति तामित्यादिना । तामिति । अप्रीतामिति पदच्छेदः क्षोभहेतौ नितरां विद्यमानेऽप्यक्षोभ्यमनस्कत्वाद्देवीति तामृषिः श्लाघते ॥ १३ ॥

१४ ] ति० टी०—मन्थरोक्तयुक्तीः प्रतिक्षिपति—धर्मज्ञ इति । दान्तः शिक्षितः कृतज्ञ इत्यनेन बाल्ये स्वकृतपालनाद्युपकारस्मरणेन स्वानिष्टशङ्कानिरासः ज्येष्ठ इत्यनेन तस्यैव राज्ययोग्यतेति साधारण्यं परिहृतम् ॥ १४ ॥

१ गुरुभिरिति गो० पाठः । २ सत्यवागिति गो० पाठः । ३ राज इति गो० पाठः ।

भ्रातॄन्भृत्यांश्च दीर्घायुः पितृवत्पालयिष्यति । संतप्यसे कथं कुब्जे श्रुत्वा रामाभिषेचनम् ॥ १५ ॥
भरतश्चापि रामस्य ध्रुवं वर्षशतात्परम् । पितृपैतामहं राज्यमवाप्स्यति नरर्षभः[1] ॥ १६ ॥
सा त्वमभ्युदये प्राप्ते दह्यमानेव[2] मन्थरे । भविष्यति च कल्याणे [3]किमिदं परितप्यसे ॥ १७ ॥
यथा वै[4] भरतो मान्यस्तथा भूयोऽपि राघवः । कौसल्यातोऽतिरिक्तं च मम[5] शुश्रूषते बहु ॥ १८ ॥
राज्यं यदि हि रामस्य भरतस्यापि तत्तदा[6] । मन्यते हि यथात्मानं तथा भ्रातॄंस्तु राघवः ॥ १९ ॥
कैकेय्या वचनं श्रुत्वा मन्थरा भृशदुःखिता । दीर्घमुष्णं विनिःश्वस्य कैकेयीमिदमब्रवीत् ॥ २० ॥

---

रा० टी०—तदाकारमाह—धर्मज्ञ इत्यादिभिः । रामः यतो धर्मज्ञत्वादिविशिष्टः ज्येष्ठो राजसुतश्च अतो यौवराज्यमर्हति ॥ १४ ॥

गो० टी०—मन्थरोक्तराज्यसाधारण्यं निवर्तयति—धर्मज्ञ इति । दान्तः दमितः 'दान्तस्तु दमिते' इत्यमरः शिक्षित इत्यर्थः । कृतज्ञः सत्पुत्रसमाचारज्ञ इत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—भरतानर्थोऽपि नेत्याह—भ्रातॄनिति । कथम् व्यर्थमेवेत्यर्थः ॥ १५ ॥

रा० टी०—ननु तत्त्वे उक्तदोषप्रसक्तिरित्यत आह—भ्रातॄनिति । दीर्घायुः रामः भ्रात्रादीन् पितृवत्पालयिष्यति अतः कथं संतप्यसे ॥ १५ ॥

गो० टी०—अथ भरतानर्थशङ्कां परिहरति—भ्रातॄनिति १५

१६ ] ति० टी०—पितृवद्भ्रातॄनविभागेन पालयतो रामस्य वर्षशतात्परमपि यदा विभागेच्छा तदा भरतो राज्यमवाप्स्यति । ध्रुवापिशब्दाभ्यां लक्ष्मणशत्रुघ्नयोरपि राज्यप्राप्तिर्ध्रुवेति सूचितम् ॥ १६ ॥

रा० टी०—ननु भरतस्य राज्यानधिकारित्वेऽपि भ्रातृत्वात् किंचित्तेनापि प्राप्तव्यमतस्तदागमने सति रामाभिषेकेण भवितव्यमन्यथा किंचिदपि न प्राप्स्यतीत्यत आह—भरत इति । वर्षशतात् बहुक्षणैर्व्याप्तं पितृपैतामहं राज्यं नरर्षभो रामोऽवाप्स्यति भरतस्तु ध्रुवमचलं रामस्य परं तृप्तिमवाप्स्यति एतेन रामप्रीतेर्दुर्लभत्वं व्यञ्जितम् । किंच रामस्य राज्यं भरत एव प्राप्स्यति रामाभिषेकानन्तरपालनाधिकारं रामो भरतायैव दातेत्यर्थः । एतेन भरतो रामस्यातिप्रीतिविषय इति ध्वनितम् । यद्वा अप्राप्यवस्तुप्राप्त्यर्थं यत्नो न कर्तव्य इति भरतराज्यप्राप्त्यर्थं न यतितव्यमिति बोधयन्ती आह—भरत इति । रामस्य योग्यं पितृपैतामहं राज्यं नरर्षभो भरतः वर्षशतात्परमपि अ न वाप्स्यति अवाप्स्यति । भाग़ुरिमतेनाकारलोपः । वर्षशतात्परमग्रे भरतः प्राप्स्यतीत्यर्थस्तु न युक्तः सर्वप्रमाणाविषयत्वेनासंमतत्वादिति दिक् ॥ १६ ॥

गो० टी०—राज्यं च भरतस्य क्रमाद्भविष्यतीत्याह—भरत इति । वर्षशतात्परं रामराज्यात्परमित्यर्थः । दशवर्षसहस्राणि रामो राज्यं पालयिष्यतीति कैकेयी न जानाति अतो लोकरीत्या वदतीति ज्ञेयम् । अवाप्स्येति लुट् स्वानन्तरं भरतस्य राज्यलाभाय संप्रति तस्मै यौवराज्यं दास्यतीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—अभ्युदये रामाभिषेकरूप उत्सवे । कल्याणे भरताभिषेकरूपे कियता कालेन भविष्यति ॥ १७ ॥

रा० टी०—सेति । प्राप्ते प्रकृष्टेन आप्तं प्राप्तिर्यस्य तस्मिन् उचिते इत्यर्थः । अभ्युदये रामाभिषेकजनितोत्सवे वर्तमाने सति भविष्यति भरतागमनजनिते आगामिनि उत्सवे तदर्थमित्यर्थः । त्वं किमर्थं परितप्यसे ॥ १७ ॥

गो० टी०—सेति । प्राप्ते उचिते अभ्युदये रामाभिषेकरूपे शोभने वर्तमाने प्रत्यासन्ने सति कल्याणे भरताभिषेकरूपे भविष्यति च किमर्थं परितप्यस इति संबन्धः ॥ १७ ॥

१८ ] ति०—टी०—मान्यः प्रार्थनीयश्रेयस्कः तथा तद्वत् । यदा भूयोऽप्यभ्यधिकमपि । तत्र हेतुः कौसल्यात इति । अतिरिक्तमधिकम् ॥ १८ ॥

रा० टी०—रामाभिषेको ममापि हर्षप्रद इत्यत्र हेतुं वदन्ती आह—यथेति । तथा तेन प्रकारेण भूयस्ततोऽधिकमपि राघवो रामो मान्यः तत्रापि हेतुं वदन्ती आह—अतिरिक्तमधिकं रामः मामनुशुश्रूषते ॥ १८ ॥

गो० टी०—एवं पुत्रानर्थशङ्कां परिहृत्य स्वानर्थशङ्कां परिहरति—यथेति । मान्यः बहुमान्यः भूयः भृशम् । अत्र हेतुमाह—कौसल्यात इति । अतिरिक्तमभ्यधिकं यथा भवति तथा ॥ १८ ॥

१९ ] ति० टी०—संप्रत्यपि भरतस्य राज्यमस्त्येवेत्याह—राज्यमिति ॥ १९ ॥

रा० टी०—रामाभिषेके विषादो न कार्य इत्यत्र हेत्वन्तरं वदन्ती आह—राज्यमिति । तत् राज्यं तत्रापि हेतुः मन्यते जानाति आत्मानं शरीरं राघवो रामः ॥ १९ ॥

गो० टी०—मा भूद्वर्षशतात्परं भरतस्य राज्यलाभस्तथापि राज्यलाभसौख्यमस्तीत्याह—राज्यमित्यादिना ॥ १९ ॥ २० ॥

२० ] ति० टी०—एवं राज्यापहारं परिहृतवतीं कैकेयीं मन्थरा तृतीयपर्यायेण पुनर्भेदयति—कैकेय्या इति ॥ २० ॥

रा० टी०—कैकेय्या इति । दीर्घं चिरकालमुष्णं यथा स्यात्तथा ॥ २० ॥

---

१ अवाप्स्य पुरुषर्षभ इति गो. पाठः । २ वर्तमाने चेति गो. रा. पाठः । ३ किमर्थमिति गो. पाठः । ४ मे इति गो. पाठः । ५ सोऽनुशुश्रूषते हि मामिति गो. रा. पाठः । ६ तथेति गो. पाठः ।

अनर्थदर्शिनी मौर्ख्यान्नात्मानमवबुध्यसे । शोकव्यसनविस्तीर्णे मज्जन्ती दुःखसागरे ॥ २१ ॥
भविता राघवो राजा राघवस्य च यः सुतः । राजवंशात्तु भरतः कैकेयि परिहास्यते ॥ २२ ॥
नहि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि । स्थाप्यमानेषु सर्वेषु सुमहाननयो भवेत् ॥ २३ ॥
तस्माज्ज्येष्ठे हि कैकेयि राज्यतन्त्राणि पार्थिवाः । स्थापयन्त्यनवद्याङ्गि गुणवत्स्वितरेष्वपि ॥ २४ ॥
असावत्यन्तनिर्भग्नस्तव पुत्रो भविष्यति । अनाथवत्सुखेभ्यश्च राजवंशाच्च वत्सले ॥ २५ ॥
साहं त्वदर्थे संप्राप्ता त्वं तु मां नावबुध्यसे । सपत्निवृद्धौ या मे त्वं प्रदेयं दातुमर्हसि ॥ २६ ॥
ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम् । देशान्तरं नाययिता लोकान्तरमथापि वा ॥ २७ ॥

---

२१ ] ति० टी०—अनर्थदर्शिनी अर्थस्यैवानर्थत्वेन दर्शनशीला । शोक इष्टवियोगजः अनिष्टाप्तिजं दुःखं व्यसनं ताभ्यां विस्तीर्णे व्याप्ते । सकलदुःखसमष्टिर्दुःखसागरस्तत्र मज्जन्ती त्वमात्मानं नावबुद्ध्यस इत्यर्थः ॥ २१ ॥

रा० टी०—तद्वचनमेवाह—अनर्थेति । अनर्थदर्शिनी विरुद्धार्थदर्शनशीला अनर्थे अर्थमानिनीत्यर्थः । शोकव्यसनविस्तीर्णे शोकस्य हेतुभूतं यद्व्यसनं दुराग्रहस्तेन विस्तीर्णे दुःखसागरे मज्जन्तमात्मानं नावबुध्यसे जानासि ॥ २१ ॥

गो०टी०—अनर्थदर्शिनीति । अनर्थदर्शिनी अनर्थमेवार्थत्वेन दर्शनशीलेत्यर्थः । यद्वा अर्थादर्शिनी प्रयोजनानभिज्ञेत्यर्थः । मौर्ख्यात् अविमृश्यकारित्वात् शोकव्यसनविस्तीर्णे विलापहेतुः शोकः व्यसनं विपत् 'व्यसनं विपदि भ्रंशे' इत्यमरः । यद्वा शोकः इष्टवियोगजं दुःखं भरतस्य राज्यभ्रंशेन वनप्रापणजं दुःखमिति यावत् विपत् स्वस्य सुखाद्भ्रंशः दुःखसागरे सपत्नीसेवारूपे मज्जन्ती तथाभूतमात्मानं नावबुध्यसे ॥ २१ ॥

२२ ] ति० टी०—कुत एवं वारंवारं कथयसीत्यत्राह—भवितेति । परिहास्यते हीनो भविष्यति भरततत्सुतादे राज्यहान्यैवं दुःखं कथयामीति भावः ॥ २२ ॥

रा० टी०—भरतराज्यप्राप्त्यर्थमिदानीमेव यतितव्यमिति बोधयितुमाह—भवितेति । राघवस्य रामस्य अनु पश्चात् यः सुतः स भविता अतः राजवंशात् राज्ञां परंपरातः राजपङ्क्त्या इत्यर्थः । भरतः परिहास्यते अपसार्यते राजभिः सहासनं न प्राप्स्यतीत्यर्थः ॥ २२ ॥

गो० टी०—वर्षशतात्परमित्युक्तभरतराज्यप्राप्तिं निराकरोति—भवितेति । राघवस्यानु राघवानन्तरं तस्य यः सुतः स राजा भविष्यति परिहास्यते निर्वास्यते गत्यर्थाद्धसेर्णिजन्तात् कर्मणि लृट् ॥ २२ ॥

२३ ] ति० टी०—तत्र हेतुमाह—नहीति । सर्वेषां राज्यस्थितौ बाधकमाह—स्थाप्यमानेष्विति । अनयोऽन्याय ईर्ष्यया परस्परप्रजापीडनरूपः ॥ २३ ॥

रा० टी०—रामराज्यकाले भरतोऽपि कस्यचिद्देशस्य राजा भवितेत्याशा न कर्तव्येति सूचयितुमाह—नहीति । अनयो नीतिविरोधः ॥ २३ ॥

गो० टी०—उक्तेऽर्थे हेतुमाह—नहीति । भामिनि कोपने 'कोपना सैव भामिनी' इत्यमरः । अनयः नीतिविरोधः ॥२३॥

२४ ] ति० टी०—राज्यतन्त्राणि राज्यनिर्वहणक्षमाधिकारप्राधान्यानि सर्वनिरूपितप्राधान्याश्रयत्वमेकस्यैवेति भावः । ज्येष्ठस्यागुणवत्त्वे तु गुणवत्कनीयःस्वपि ॥ २४ ॥

रा० टी०—तस्मादिति । स्थापयन्ति तदायत्ततां प्रापयन्तीत्यर्थः । गुणवत्सु राजोचितगुणविशिष्टेषु इतरेषु कनिष्ठेष्वपि ज्येष्ठस्य तादृशगुणवत्त्वाभावे इति शेषः । राज्यतन्त्राणि राज्यपालनादियोग्यव्यापारान् 'तन्त्रं स्वराष्ट्रव्यापारः' इति वैजयन्ती ॥ २४ ॥

गो० टी०—तस्मादिति । राज्यतन्त्राणि राज्यपरिपालनादिव्यापारान् 'तन्त्रं स्वराष्ट्रव्यापारः' इति वैजयन्ती ॥ २४ ॥

२५ ] ति० टी०—यदे ... तो—असाविति । निर्भग्नो हीनः सुखेभ्यो राजवंशाच्च निर्भग्नो भविष्यतीत्यन्वयः । वत्सले सर्वत्र दयाशीले ॥ २५ ॥

रा० टी०—उपसंहरन्नाह—असाविति । अत्यन्तनिर्भग्नः नितरामपसारितः ॥ २५ ॥

गो० टी०—एवं राज्यभ्रंशमुक्त्वा राज्यालाभेऽपि राज्यसुखं भरतस्यास्तीति कैकेय्योक्तं परिहरति—असाविति । अत्यन्तनिर्भग्नः सुतरां प्रच्यावितः वत्सले पुत्रवत्सले ! ॥ २५ ॥

२६ ] ति० टी०—त्वदर्थे त्वत्पुत्रराज्यभ्रंशे प्राप्ते तत्परिहारकथनार्थम् । सपत्निवृद्धावित्यार्षो ह्रस्वः । प्रदेयं पारितोषिकमतो मां त्वमलुब्धा स्वहिते इति न बुद्ध्यसे इत्यर्थः ॥२६॥

रा० टी०—सेति । सपत्निवृद्धौ इत्यत्र ह्रस्व आर्षः । प्रदेयं पारितोषिकं मे मह्यं दातुमिच्छसि एतेन तया कैकेय्या विवेकाभावः सूचितः ॥ २६ ॥

गो० टी०—ज्येष्ठे वर्तमाने भरतस्य राज्ययोग्यताभावात् किं कुर्म इत्यत्राह—सेति । त्वदर्थे त्वत्पुत्रराज्यभ्रंशपरिहारकथनार्थमित्यर्थः । सपत्निवृद्धाविति । ङ्यापोरिति ह्रस्वः । या त्वं सपत्निवृद्धौ प्रदेयं पारितोषिकं दातुमिच्छसि सा त्वं नावबुध्यस इत्यन्वयः ॥ २६ ॥

२७ ] ति० टी०—नाययिता लुट् । लोकान्तरमिति हनिष्यतीति यावत् ॥ २७ ॥

---

१ मज्जन्तमिति रा. पाठः । २ अन्विति गो. रा. पाठः । ३ इच्छसीति गो. रा. पाठः । ४ वा नयितेति गो. पाठः ।

बाल एव तु मातुल्यं भरतो नायितस्त्वया । संनिकर्षाच्च सौहार्दं जायते स्थावरेष्विव ॥ २८ ॥
भरतानुवशात्सोऽपि शत्रुघ्नस्तत्समं गतः । लक्ष्मणो हि यथा रामं तथायं भरतं गतः ॥ २९ ॥
श्रूयते हि द्रुमः कश्चिच्छेत्तव्यो वनजीवनैः । संनिकर्षादिषीकाभिर्मोचितः परमाद्भयात् ॥ ३० ॥
गोप्ता हि रामं सौमित्रिर्लक्ष्मणं चापि राघवः । अश्विनोरिव सौभ्रात्रं तयोर्लोकेषु विश्रुतम् ॥ ३१ ॥
तस्मान्न लक्ष्मणे रामः पापं किंचित्करिष्यति । रामस्तु भरते पापं कुर्यादेवं न संशयः ॥ ३२ ॥
तस्माद्राजगृहादेव वनं गच्छतु राघवः । एतद्धि रोचते मह्यं भृशं चापि हितं तव ॥ ३३ ॥

---

रा० टी०—ध्रुवमिति । अकण्टकं निर्विघ्नं यथा स्यात्तथा नाययिता प्रापयिता लोकान्तरं मनुष्यलोकातिरिक्तलोकं हन्तेति यावत् ॥ २७ ॥

गो० टी०—असावत्यन्तनिर्भग्न इत्युक्तं विवृणोति—ध्रुवमित्यादिना ॥ २७ ॥

२८ ] ति० टी०—यस्तु रामे राज्ञः पक्षपातः स भरतासंनिधानतः । तच्च त्वयैव कृतमित्याह—बाल एवेति । मातुल्यं मातुलगृहम् । ननु किं तावतात आह—संनिकर्षादिति । स्थावरेषु तृणगुल्मलतावृक्षादिषु तत्र सौहार्दमन्योन्याश्लेषरूपम् । एवं च भरतस्थितौ विभज्य समं राज्यलाभः स्यादिति भावः २८

रा० टी०—बाल इति । मातुल्यं मातुलवेश्म नायितः प्रापितः संनिकर्षात् समीपवासात् सौहार्दमन्योन्यालिङ्गनेनानुमीयमानम् । एतेन यदि भरत इह स्यात्तर्हि तस्याऽपि कस्यचिद्देशस्याधिपत्यं स्यादेवेति सूचितम् ॥ २८ ॥

गो० टी०—रामकर्तृकं भाव्यनिष्टं प्रदर्श्य कैकेयीकृतमप्यनर्थं दर्शयति—बाल इति । मातुल्यं मातुलसंबन्धिगृहमित्यर्थः नायितो हि प्रापितः खलु अनेन का हानिरित्याशङ्क्य हानिमेव दर्शयति—संनिकर्षादिति । स्थावरेष्वपि वृक्षगुल्मादिस्थावरेष्वपि संनिकर्षाच्च अत्यन्तसमीपावस्थानाच्च सौहार्दं जायते अन्योन्यसंश्लेषरूपः सुहृद्भावो जायते राज्ञो रामभरतादिषु किमुत, तादृशसंनिकर्षस्त्वया विघटित इति भावः ॥ २८ ॥

२९ ] ति० टी०—शत्रुघ्नस्थितौ वा भरतकार्यस्य न नाशः स्यात् सोऽपि दैववशाद्गत इत्याह—भरतानुवशादिति । 'शत्रुघ्नोऽपि समं गतः' इति पाठेऽनुवशादनुरोधवशादित्यर्थः । आद्योऽपिरत्रैव योज्यः । अनुवशादपि अपिना दैववशाच्चेत्यर्थः । गतः एकहृदयतयेति शेषः ॥ २९ ॥

रा० टी०—शत्रुघ्नस्यापि दुःखमेव भवितेति बोधयन्ती आह—भरतानुगत इति । सः शत्रुघ्नोऽपि भरतानुगतः भरतानुसारी सन् तत्समं रामकर्तृकद्रोहविषयत्वेन भरतसाम्यं गतः प्राप्तः । समशब्दो भावप्रधानः । ननु लक्ष्मणस्य रामप्रीतिविषयत्वात् कथं तद्भ्रातुः शत्रुघ्नस्य भरतसाम्यमत आह—यथा असौ शत्रुघ्नो भरतं गतः भरतानुसारी भरतादन्यं न कंचन वेत्तीत्यर्थः । तथा लक्ष्मणोऽपि राममनुगतः रामादन्यं न कंचन वेत्तीत्यर्थः । एतेन शत्रुघ्नस्य भरतानुसारित्वेन रामद्रोहविषयत्वे लक्ष्मणद्रोहविषयत्वमपि स्यादिति व्यक्तम् ॥ २९ ॥

गो० टी०—भरतस्यासंनिधानेऽपि शत्रुघ्नसंनिधाने भरते प्रीतिः स्यात्तदपि नास्तीत्याह—भरतस्यापीति । अनुवशः विधेयः समं भरतेन सह अनुवशत्वमुपपादयति—लक्ष्मणो हीति । हि यस्मात् रामं लक्ष्मण इवासौ शत्रुघ्नो भरतं गतःआश्रितः २९

३० ] ति० टी०—कस्यचित्संनिकर्षात्कस्यचिदनर्थनिवृत्तिर्लोकदृष्टेत्यत आह—श्रूयते हीति । छेत्तव्यः प्राप्तच्छेदनकालः । इषीकाभिः कण्टकबहुलगुल्मैः संनिकर्षात्परितः परिवारणरूपात् भयाच्छेदनरूपात् । स्वस्य सदान्तःपुरवर्तित्वेन श्रूयते हीत्युक्तिः ॥ ३० ॥

रा० टी०—लक्ष्मणसाहाय्यात् भरतकर्तृकापकृतिप्रसक्तिः रामे न भवितेति बोधयितुमन्यसंनिकर्षादन्यस्यानर्थनिवृत्तिर्लोके दृष्टेत्याह—श्रूयत इति । वनजीविभिः वनावयवीभूतच्छिन्नवृक्षक्रयजीविकावद्भिः जनैः छेत्तव्यः कश्चन द्रुमः इषीकाभिः बहुकण्टकविशिष्टगुल्मैः संनिकर्षात्स्वसामीप्यात्सर्वत आवरणादित्यर्थः । परमाद्भयाद् उन्मूलनोच्छेदनरूपभीतेः मोचितः इति श्रूयते । हिशब्द इत्यर्थे ॥ ३० ॥

गो० टी०—स्थावरेष्वपीत्युक्तमुपपादयति—श्रूयते हीति । वनजीविभिः वनोद्भूतकाष्ठजीविभिः छेत्तव्यः प्राप्तच्छेदनकालः कश्चिद्द्रुमः तस्माच्छेदनरूपात्परमाद्भयादिषीकाभिः इषीकाकण्टकबहुलगुल्मैः संनिकर्षात् परितः परिवारणरूपात् मोचित इति श्रूयते हि जनपरंपरयेति शेषः । स्वयं नित्यान्तःपुरवर्तित्वेन तत्साक्षात्काराभावात् श्रूयत इत्युक्तिः ॥ ३० ॥

३१ ] ति० टी०—नन्वेष दोषो लक्ष्मणस्यापि समानोऽत आह—गोप्ताहीति ॥ ३१ ॥

रा० टी०—लौकिकदृष्टान्तेन लक्ष्मणसाहाय्याद् रामानर्थनिवृत्तिमुक्त्वा तुल्ययुक्तेः परस्परसाहाय्यात्परस्परानर्थाप्रसक्तिर्भवितेति बोधयन्ती आह—गोप्तेति । राघवो रामः ॥ ३१ ॥

गो० टी०—गोप्तेत्यादि । पापं वधम् ॥ ३१ ॥ ३२ ॥

३२ ] ति० टी०—पापं वधम् ॥ ३२ ॥

रा० टी०—तस्मादिति । तस्मात्संनिकर्षहेतोः रामो भरते तु कुर्यादेव तत्संनिकर्षाभावादिति भावः ॥ ३२ ॥

३३ ] ति० टी०—तस्माद्वधसंभावनासत्त्वात् राजगृहात्राजगृहाख्यान्मातुलनगरात् । एतदेव मह्यं रोचते । त्वदिष्टत्वात्

---

१ हितेति गो. रा. पाठः । २ कर्षीति गो. रा. पाठः । ३ भरतस्याप्यनुवशः शत्रुघ्नोऽपि समागत इति गो. भरतानुमतः सोऽपीति रा. पाठः । ४ गोप्तेति गो. रा. पाठः । ५ जीविभिरिति गो. रा. पाठः । ६ ह्यपीति गो. पाठः । ७ ते इत इति गो. रा. पाठः ।

एवं ते ज्ञातिपक्षस्य श्रेयश्चैव भविष्यति । यदि चेद्भरतो धर्मात्पित्र्यं राज्यमवाप्स्यति ॥ ३४ ॥
स ते सुखोचितो बालो रामस्य सहजो रिपुः । समृद्धार्थस्य नष्टार्थो जीविष्यति कथं वशे ॥ ३५ ॥
अभिद्रुतमिवारण्ये सिंहेन गजयूथपम् । प्रच्छाद्यमानं रामेण भरतं त्रातुमर्हसि ॥ ३६ ॥
दर्पान्निराकृता पूर्वं त्वया सौभाग्यवत्तया । राममाता सपत्नी ते कथं वैरं न यापयेत् ॥ ३७ ॥
यदा च राम: पृथिवीमवाप्स्यते प्रभूतरत्नाकरशैलसंयुताम् ।
तदा गमिष्यस्यशुभं पराभवं सहैव दीना भरतेन भामिनि ॥ ३८ ॥
यदा हि राम: पृथिवीमवाप्स्यते ध्रुवं प्रणष्टो भरतो भविष्यति ।
अतो हि संचिन्तय राज्यमात्मजे परस्य चैवास्य विवासकारणम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टमःसर्गः ॥ ८ ॥

---

एकपुत्रायाः पुत्रमरणापेक्षया वने पुत्रजीवनं सम्यक् । तदेवाह-भृशं तत्र हितमेतत् 'जीवन्भद्राणि पश्यति' इति न्यायात् ॥३३॥

रा० टी०—ननु भरतभयनिवृत्त्यर्थमिदानीं किं कर्तव्यमित्यत आह—तस्मादिति । राजगृहात्केकयाधिपभवनात् अन्यथा रामस्तं घातयितेति तात्पर्यम् ॥ ३३ ॥

गो० टी०—तस्मादिति । तस्मात् पापकरणाद्धेतो राजगृहात् केकयराजगृहात् न त्विहागत्य मर्तव्यमिति भावः॥३३॥

३४ ] ति० टी०—एवमेवं सति मातुलगृहादेव वनगमने सति ते ज्ञातिपक्षस्यास्मदादेः श्रेयश्च भविष्यत्येव श्रेयो जीवनरूपं कल्याणम्, चात्सुखम् । भरताद्वनस्थादपि भयशङ्कयास्मदादिपीडायाः कर्तुमशक्यत्वादिति भावः । यदि चेदिति यदि वेत्यर्थः । धर्मात्पितृदीयमानत्वरूपात् तदा वा ज्ञातिपक्षस्य श्रेय इत्यर्थः । यद्वा एवमेव ते पक्षस्य श्रेयो भविष्यति । एवमेवेत्येतदुपपादयति—यदि चेति ॥ ३४ ॥

रा० टी०—एवमिति । एवं भरते वनं गते सति चेत्कस्मिंश्चित्समये यदि भरतो धर्मात् राज्यमवाप्स्यति तदा ज्ञातिपक्षस्यास्मदादेः श्रेयो भविष्यत्येव एतेन वनगमने दशरथस्य तस्मिन्नपि कृपा भवितेति हेतुर्ध्वनितः ॥ ३४ ॥

गो० टी०—एवमिति । धर्मात् पित्रनुमतिरूपात् भरतो राज्यं यद्यवाप्स्यति एवं चेत्ते ज्ञातिपक्षस्य बन्धुवर्गस्य श्रेयश्चापि भविष्यति ॥ ३४ ॥

३५] ति० टी०—अन्यथा दुःखमेवेत्याह—स ते इति । समृद्धार्थस्य रामस्य वशे स्थितो नष्टार्थः कथं जीविष्यतीत्यर्थः ॥३५॥

रा० टी०—अन्यथा दुःखमेवेत्याह—स इति । समृद्धार्थस्य प्राप्तराज्यश्रियो रामस्य सहजो भ्राता सुखोचितः राज्यानन्दयोग्यः नष्टार्थः विगतराज्यः रामस्य रिपुरयं राज्याभिलाषीति रामद्रोहविषयीभूतः रामस्य वशे स्थितः ते बालः स भरतः कथं जीविष्यति । रामस्येति योग्यतया स्थलत्रयान्वयि ॥ ३५ ॥

गो० टी०—राज्यानवाप्तावनिष्टमाह—स इति । सहजो रिपुः सपत्नीपुत्रत्वात्सहजः शत्रुः ते स बालः भरतः रामस्य वशे कथं जीविष्यति ॥ ३५ ॥

३६ ] ति० टी०—तस्मादरण्ये सिंहेनाभिद्रुतं गजयूथपमिव राज्याप्राप्त्या प्रबलेन रामेण प्रच्छाद्यमानमभिभूयमानं भरतं तदभिषेकनिरोधेन त्रातुमर्हसि ॥ ३६ ॥

रा० टी०—अभीति । अभिद्रुतं पलायितं प्रच्छाद्यमानं पराभूयमानम् ॥ ३६ ॥

गो० टी०—एवमनर्थपौष्कल्ये तत्परिहाराय कर्तव्यमाह—अभिद्रुतमिति । प्रच्छाद्यमानमभिभूयमानम् ॥ ३६ ॥

३७] ति० टी०—अन्यथा तवाप्यनर्थ इत्याह—दर्पादिति । सौभाग्यवत्ता पतिवात्सल्यम् । वैरयापनं वैरशुद्धिं, त्वयि दास्यसंपादनेन कथं न कुर्यादित्यर्थः । 'पातयेत्' इतिपाठेऽप्ययमेवार्थः ॥ ३७ ॥

रा० टी०—दर्पादिति । दर्पोत्पत्त्यतिप्रीतिहेतुकगर्वान्निराकृता अनादृता सौभाग्यवत्तया पुत्रो राज्यप्राप्त्येदानीमतिभाग्यवतीत्वेनोपलक्षिता राममाता वैरं द्रोहफलं यापयेत्प्रापयेत् । 'पातयेत्' इतिपाठेऽपि स एवार्थः ॥ ३७ ॥

गो० टी०—दर्पादिति । कथं वैरं न यातयेत् वैरयातनं वैरशुद्धिः तां त्वयि दास्यापादनेन संपादयेदित्यर्थः ॥ ३७ ॥

३८ ] ति० टी०—अशुभं पराभवं दास्यम् ॥ ३८ ॥

रा० टी०—इदानीन्तनाभिषेकभङ्गप्रयत्नाभावे सपुत्रायास्ते विनाशोऽवश्यं भवितेत्याह—यदेति । भरतेन सहैव अशुभं पराभवं गमिष्यसि प्राप्स्यसि ॥ ३८ ॥

गो० टी०—उपसंहरति—यदेत्यादिना ॥ ३८ ॥

३९ ] ति० टी०—एवं यतः सपुत्रायास्तेऽनर्थः अत एवात्मजे राज्यं राज्यप्राप्तिकारणं चिन्तय 'शत्रुशेषो न स्थाप्यः' इति न्यायेन परस्यास्य रामस्य चालक्ष्मणसीतयोर्विवासकारणं च चिन्तय ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टमः सर्गः ॥ ८ ॥

---

१ यातयेदिति गो. पाठः । २ द्वीति गो. रा. पाठः । ३ अवाप्स्यतीति गो. रा. पाठः । ४ पत्तनामिति गो. रा. पाठः । ५ अवाप्स्यतीति गो. पाठः । ६ चैवास्येति गो. चाप्येवेति रा. पाठः ।

# नवमः सर्गः ।

मन्थरादुर्बोधनेन विकृतहृदया कैकेयी रामनिर्वासनपूर्वकं भरताभिषेचनं प्रतिज्ञाय मन्थरां प्रत्येव तत्सिद्ध्युपायं पप्रच्छ। मन्थरा दैवासुरसंग्राममुपन्यस्य तत्समये दशरथात्संपादितवरयो रामप्रवासनभरताभिमिषेचनसंसिद्धिं प्रदर्श्य तद्वरणे कैकेयीं चोदयामास। कैकेय्यपि मन्थरामभिप्रशस्याभरणान्युन्मुच्य क्रोधागारक्षितिमधिशिश्ये।

एवमुक्ता तु कैकेयी क्रोधेन ज्वलितानना। दीर्घमुष्णं विनिःश्वस्य मन्थरामिदमब्रवीत् ॥ १ ॥
अद्य राममितः क्षिप्रं वनं प्रस्थापयाम्यहम्। यौवराज्येन भरतं क्षिप्रमद्याभिषेचये ॥ २ ॥
इदं त्विदानीं संपश्य केनोपायेन साधये। भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥ ३ ॥
एवमुक्ता तु सा देव्या मन्थरा पापदर्शिनी। रामार्थमुपहिंसन्ती कैकेयीमिदमब्रवीत् ॥ ४ ॥
हन्तेदानीं प्रपश्य त्वं कैकेयि श्रूयतां वचः। यथा ते भरतो राज्यं पुत्रः प्राप्स्यति केवलम् ॥ ५ ॥

रा० टी०—ननु रामस्य मद्धेतुकभयाभावाद्रामहेतुकभीतिर्ममापि न स्यादिति कथं मम पराभवो भवितेत्याह—यदेति। भरतः ध्रुवं प्रनष्टो भविष्यति एतेन भरतपराभवमूलकस्तव पराभव इति सूचितम्। अतः आत्मजे भरते राज्यं परस्य तत्प्रतिपक्षभूतरामस्य विवासकारणं चाद्यैव संचिन्तय ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टमः सर्गः ॥ ८ ॥

गो० टी०—कैकेय्यनर्थमुक्त्वा भरतानर्थमाह—यदा हीति। राज्यं राज्यकारणं परस्य रामस्य ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टमः सर्गः ॥ ८ ॥

१ ] ति० टी०—एवं त्रिवारोपदेशेन दुष्टेऽसत्य एवार्थे उपादेयत्वसत्यत्वनिश्चयात्स्वकार्याय देवैश्च क्षुभितचित्तायास्तदुपायप्रश्नमाह—एवमिति ॥ १ ॥

रा० टी०—मन्थरावचनश्रवणोत्तरकालिकं केकयीवृत्तमाह—एवमित्यादिभिः। उष्णं यथा स्यात्तथा दीर्घं विनिःश्वस्य मन्थरया कोपेनैव एवमुक्त्वा ज्वलितानना प्रकाशितवदना प्रसन्नवदनेत्यर्थः कैकेयी मन्थरामिदमब्रवीत्। प्रसन्नवदना इत्यनेन रामोऽवश्यं देवकार्यार्थं प्रवत्स्यतीति तदनुकूलमेव इयं प्रार्थयते इति हेतुः सूचितः तेन ब्रह्मादिप्रार्थनया देवकार्यार्थं रामप्रादुर्भूतिरिति कैकेय्या स्वहृतमिति ध्वनितम्। तुशब्द एवार्थे ॥ १ ॥

गो० टी०—अथ रामगुणज्ञापि कैकेयी कार्यपरैर्देवैः क्षुब्धहृदया सती मन्थरावचनमनुमोदितवतीत्याह—एवमित्यादि। कोपेन हास्यप्राप्तिश्रवणजकोपेन ॥ १ ॥ २ ॥

२ ] ति० टी०—प्रस्थापयामि प्रस्थापनोद्यमं करोमि। एवमभिषेचये इत्यपि ॥ २ ॥

रा० टी०—तद्वचनमेवाह—अद्येति। इतोऽयोध्यायाः क्षिप्रं शीघ्रमभिषेचये इव। एव इवार्थे ॥ २ ॥

३ ] ति० टी०—अथ तदुपायं पृच्छति—इदं त्विति। उत्तरार्धार्थं केनोपायेन साधये इदमिदानीं संपश्य विचारय उत्साहमात्रेण नेदं साध्यमिति भावः ॥ ३ ॥

रा० टी०—तद्बुद्धिपरीक्षार्थं तामेव पृच्छति—इदमिति। कथंचन केनापि प्रकारेण भरतो राज्यमिदानीं प्राप्नुयात् पालयेदित्यर्थः रामो नेदानीमिदमहं केनोपायेन साधये इति त्वं संपश्य मनसि निश्चित्य कथयेत्यर्थः। केनापि प्रकारेणेत्युक्त्या राज्याभिषेकं प्रत्याग्रहो न कर्तव्य इति बोधितम् तेनाभिषेकानर्हत्वं भरतस्य सूचितम्। केनोपायेन साधये इत्यनेन भरतो राज्यं न ग्रहीष्यतीति हेतुर्ध्वनितः। एकस्तुशब्द इत्यर्थे द्वितीयोऽप्यर्थे ॥ ३ ॥

गो० टी०—मन्थराया अतिकुशलबुद्धियोगं दृष्ट्वा तामेवोपायं पृच्छति—इदमिति। इदं प्रस्तुतकार्योपयोगि साधनं संपश्य संचिन्तय ॥ ३ ॥

४ ] ति० टी०—रामार्थं लोकदृष्ट्या रामहितमभिषेकरूपमर्थम् ॥ ४ ॥

रा० टी०—एवमिति। रामार्थं राज्याभिषेकमुपहिंसन्ती निवर्तयन्तीत्यर्थः मन्थराब्रवीत् ॥ ४ ॥

गो० टी०—एवमिति। रामार्थं रामाभिषेकरूपप्रयोजनम् ॥ ४ ॥

५ ] ति० टी०—त्वं प्रपश्य मत्सामर्थ्यमिति शेषः। ‘प्रवक्ष्यामि’ इति पाठान्तरम्। श्रूयताम् मद्वच इति शेषः। चस्त्वर्थे। केवलं भरतो न तु राम इत्यर्थः। यद्वाहं वक्ष्याम्येवोपायं त्वमपि प्रपश्य विचारय ॥ ५ ॥

रा० टी०—हन्तेति। हन्तेति हर्षार्थकमव्ययम्। प्रवक्ष्यामि कथयिष्यामि ‘प्रपश्य त्वं’ इति भट्टसंमतः मत्सामर्थ्यमिति शेष इति तद्व्याख्या ॥ ५ ॥

गो० टी०—हन्तेति। हन्तशब्दो हर्षे वर्तते स्वाभिमतरामविवासनपूर्वकभरताभिषेकोपायप्रश्ननिबन्धनोऽत्र हर्षः वरस्मरणहेतुको वा। मे मत्तः केवलं राज्यं कृत्स्नं राज्यम् ‘निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः’ इत्यमरः ॥ ५ ॥

१ क्रोधेनेति गो. रा. पाठः। २ चेति गो. रा. पाठः। ३ एवेति गो. रा. पाठः। ४ मन्थरे इति गो. पाठः। ५ तयेति गो. पाठः। ६ प्रवक्ष्यामीति गो. रा. पाठः। ७ च मे इति गो. पाठः।

किं न स्मरसि कैकेयि स्मरन्ती वा निगूहसे । यदुच्यमानमात्मार्थं मत्तस्त्वं श्रोतुमिच्छसि ॥ ६ ॥
मयोच्यमानं यदि ते श्रोतुं छन्दो विलासिनि । श्रूयतामभिधास्यामि श्रुत्वा [1]चैतद्विधीयताम् ॥ ७ ॥
श्रुत्वैवं वचनं तस्या मन्थरायास्तु कैकयी । किंचिदुत्थाय शयनात्स्वास्तीर्णादिदमब्रवीत् ॥ ८ ॥
कथयस्व[2] ममोपायं केनोपायेन मन्थरे । भरतः प्राप्नुयाद्राज्यं न तु रामः कथंचन ॥ ९ ॥
एवमुक्ता तदा[3] देव्या मन्थरा पापदर्शिनी । रामार्थमुपहिंसन्ती [4]कैकेयीमिदमब्रवीत् ॥ १० ॥
पुरा[5] देवासुरे[6] युद्धे सह राजर्षिभिः पतिः । आगच्छत्त्वामुपादाय देवराजस्य साह्यकृत् ॥ ११ ॥
दिशमास्थाय [7]कैकेयि दक्षिणां दण्डकान्प्रति । वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः ॥ १२ ॥
स शम्बर इति ख्यातः शतमायो महासुरः । ददौ शक्रस्य संग्रामं देवसंघैरनिन्दितः[8] ॥ १३ ॥
तस्मिन्महति संग्रामे पुरुषान्क्षतविक्षतान् । रात्रौ प्रसुप्तान्घ्नन्ति स्म तरसापास्य[9] राक्षसाः ॥ १४ ॥

---

६ ] ति० टी०—ननु मम न प्रतिभाति तदुपाय इति तत्राह—किं नेति । स्मृत्वा वा संमतये मन्मुखाच्छ्रवणाय निगूहसे । यद्यत आत्मार्थमात्मप्रयोजनोपायमुच्यमानम् । वर्तमानसामीप्ये लट् । त्वयानेकश उक्तमपि मत्तः श्रोतुमिच्छसि ॥ ६ ॥

रा० टी०—किमिति । आत्मार्थमात्मनः स्वस्य अर्थः प्रयोजनं यस्मात्तदुपायमित्यर्थः । त्वं किं न स्मरसि निगूहसे गोपयसि वा यत् यस्मात् इच्छसि वाञ्छसि । आत्मार्थमित्युभयान्वयि ॥ ६ ॥

गो० टी०—किमिति । हे कैकेयि ! त्वमुच्यमानं त्वया बहुशः कथ्यमानमात्मार्थमात्मप्रयोजनं मत्तः श्रोतुमिच्छसीति यत् अतस्तन्न स्मरसि किं, स्मरन्ती वा निगूहसे किमिति योजना ॥ ६ ॥

७ ] ति० टी०—छन्द इच्छा । विधीयतां क्रियताम् । विमृश्योक्तं चेत्क्रियताम् ॥ ७ ॥

रा० टी०—मयेति । हे विलासिनि ! यदि श्रोतुं छन्द इच्छा तदा विधीयतां क्रियतामेव । च एवार्थे ॥ ७ ॥

गो० टी०—मयेति । छन्दः अभिलाषः ' छन्दः पद्येऽभिलाषे च ' इत्यमरः ॥ ७ ॥

८–१० ] ति० टी०—श्रवणेऽनुष्ठाने चोत्साहं दर्शयति—उत्थायेत्यादि ॥ ८–१० ॥

रा० टी०—श्रुत्वेति । स्वास्तीर्णाच्छयनात्किंचिदुत्थाय अब्रवीत् । किंचिदुत्थायेत्यनेन तदादरः कृत इति ध्वनितम् स्वास्तीर्णादित्यनेन शय्याया निर्दोषत्वं सूचितम् तेनोत्थाने शय्यादोषो न हेतुरिति व्यक्तम् ॥ ८ ॥

गो० टी०—श्रुत्वेति । किंचिदुत्थानमादरातिशयात् उत्थानहेतुर्न शय्यादोष इत्याशयेनाह—स्वास्तीर्णादिति ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—कथयस्वेति । कथंचनापि इदानीं राज्यं प्राप्नुयात् । तुरिदानीमित्यर्थे ॥ ९ ॥

रा० टी०—एवमिति । अयं श्लोकः पूर्वत्रापि पठितः परंतु तत्र तु सेति अत्र तदेति भेदः ॥ १० ॥

गो० टी०—कथयेति । कथय त्वं ममोपायमित्यस्य विवरणं केनेत्यादि ॥ ९ ॥ १० ॥

११ ] ति० टी०—देवासुरे देवासुरसंबन्धिनि उपादाय गृहीत्वा । साह्यं सहायत्वम् ॥ ११ ॥

१२ ] ति० टी०—दक्षिणां दिशमास्थाय स्थितान्दण्डकाजनपदान्प्रति तत्संबन्धि वैजयन्तमिति पुरं ख्यातं यत्र तिमिध्वजो नाम राजाभवत् ॥ १२ ॥

रा० टी०—तद्वचनमेवाह—तवेति । दैवासुरे देवासुरसंबन्धिनि उपादाय गृहीत्वा देवराजस्य इन्द्रस्य साह्यकृत्साहाय्यकर्ता तव पतिः दक्षिणां दिशमास्थाय आश्रित्य दण्डकान्प्रति दण्डकसंबन्धि वैजयन्तमितिख्यातं पुरमगच्छत् । यत्र यस्मिन्पुरे तिमिध्वजः शम्बर इति नामभ्यां ख्यातः देवसंघैरनिर्जितः स महासुरः शक्रस्य संग्रामं ददौ । एतेन देवगणपराभूत्यनन्तरं भाविस्वपराभूतिमालक्ष्य इन्द्रेण दशरथ आहूत इति ध्वनितम् । श्लोकत्रयमेकान्वयि ॥ ११–१३ ॥

गो० टी०—वरं स्मारयितुं पूर्वकथामाह—तवेत्यादि । श्लोकद्वयमेकान्वयम् । हे कैकेयि ! दैवासुरे देवासुरसंबन्धिनि युद्धे तव पतिः देवराजस्य साह्यकृत् साहाय्यकृत्सन् राजर्षिभिः स्वाश्रितैः सह त्वां चोपादाय दण्डकान्प्रति, दक्षिणां दिशमास्थाय प्राप्य यत्र तिमिध्वजो वर्तते तद्वैजयन्ताख्यं पुरमगच्छदिति संबन्धः ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—स एव लोके शम्बर इति ख्यातः । देवसंघैः सहितस्य शक्रस्य ॥ १३ ॥

गो० टी०—कस्तिमिध्वजः स कीदृशः स कमपराधं कृतवानित्यत्राह—स इति । देवसंघैः अनिर्जितः देवसंघान्पराभूय शक्राय युद्धं ददावित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—क्षतैरस्त्रशस्त्रवेधैर्विक्षतान्विशेषेण विद्धान् रात्रौ प्रसुप्तान्दिनकृतयुद्धश्रान्त्या । अपास्यास्तरणादाकृष्य १४॥

रा० टी०—तस्मिन्निति । तस्मिन् देवासुरकर्तृके क्षतविक्षतान् क्षताश्च विक्षताश्चेति द्वन्द्वः लघुव्रणविशिष्टान्बृहद्व्रणविशि-

---

१ चापि विमृश्यतामिति गो. पाठः । २ त्वमिति गो. पाठः । ३ तयेति गो. पाठः । ४ कुब्जा वचनमब्रवीदिति गो. पाठः । ५ तवेति गो. रा. पाठः । ६ दैवासुरे इति गो. रा. पाठः ७ वै देवीति गो. पाठः । ८ अनिर्जित इति गो. रा. पाठः । ९ ऽऽस्नावेति गो. पाठः ।

तत्राकरोन्महायुद्धं राजा दशरथस्तदा । असुरैश्च महाबाहुः शस्त्रैश्च शकलीकृतः ॥ १५ ॥
अपवाह्य त्वया देवि संग्रामान्नष्टचेतनः । तत्रापि विक्षतः शस्त्रैः पतिस्ते रक्षितस्त्वया ॥ १६ ॥
तुष्टेन तेन दत्तौ ते द्वौ वरौ शुभदर्शने । स त्वयोक्तः पतिर्देवि यदिच्छेयं तदा वरम् ॥ १७ ॥
गृह्णीयां तु तदा भर्तस्तथेत्युक्तं महात्मना । अनभिज्ञा ह्यहं देवि त्वयैव कथितं पुरा ॥ १८ ॥
कथैषा तव तु स्नेहान्मनसा धार्यते मया । रामाभिषेकसंभारान्निगृह्य विनिवर्तय ॥ १९ ॥
तौ च याचस्व भर्तारं भरतस्याभिषेचनम् । प्रव्राजनं च रामस्य वर्षाणि च चतुर्दश ॥ २० ॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् । प्रजाभावगतस्नेहः स्थिरः पुत्रो भविष्यति ॥ २१ ॥

---

घ्नंश्चेत्यर्थः । अपास्य तत्तदास्तरणादाकृष्य राक्षसाः राक्षसकर्मवत्वेन तत्त्वं प्राप्ताः असुरसायाह्याय्यार्थमागताः राक्षसजातयो वा घ्नन्ति स्म ॥ १४ ॥

गो० टी०—तस्मिन्निति । क्षताः बाणशूलादिभिः संजातव्रणाः विक्षताः खड्गपरशुपट्टिशादिभिर्विविधं प्रहृताः तान् रात्रौ प्रसुप्तान् घ्नन्ति स्मेत्यभिधानात् पुरुषाणां क्षतविक्षतत्वं दिवायुद्धकृतमित्यवगम्यते । राक्षसाः असुराः ॥ १४ ॥

१५ ] ति० टी०—तत्र तद्रात्र्यां शकलीकृतः सर्वाङ्गेषु विक्षतः ॥ १५ ॥

रा० टी०—तत्रेति । तदा असुरकर्तृकहननकाले तत्र संग्रामभूमौ शकलीकृतः अनेकविधशस्त्रास्त्रकरणकव्रणविशिष्टः ॥ १५ ॥

गो० टी०—तत्रेति । तत्र प्रसुप्तप्रदेशे तदा रात्रौ ॥ १५ ॥

१६ ] ति० टी०—त्वया सारथ्यं कुर्वाणयापवाह्य संग्रामादन्यत्र नीत्वा तत्रापि तादृशापत्कालेऽपि शस्त्रैर्विक्षतोऽत एव नष्टचेतनो मूर्च्छितस्ते पतिस्त्वया रक्षित इत्यन्वयः । केचित्तु संग्रामादपवाह्य मूर्च्छितस्ते पतिस्त्वया रक्षितः, तत्रापि दूरपातिभिरसुरीयैः शस्त्रैर्विक्षतस्ततोऽप्यन्यत्रापवाह्य रक्षितः एवं द्विःप्राणरक्षणतोषेण वरद्वयदानमित्याहुः ॥ १६ ॥

रा० टी०—अपेति । संग्रामादपवाह्य निष्कृष्य संस्थापित इति शेषः ॥ १६ ॥

गो० टी०—अपवाह्येति । हे देवि ! नष्टचेतनः मूर्च्छितः ते पतिः त्वया सारथ्यं कुर्वाणया संग्रामादपवाह्य अन्यत्र नीत्वा रक्षितः शीतोपचारैराप्यायितः तत्र यत्रापवाहितस्तस्मिन्स्थले शस्त्रैर्विक्षतः पुनर्युद्धे शस्त्रैः विक्षतः सन् त्वया रक्षितः ततोऽपवाह्य रक्षित इति योजना ॥ १६ ॥

१७ ] ति० टी०—तेन राज्ञा । यथदेच्छेयं भर्तस्तदा वरं गृह्णीयां तु इत्यन्वयः ॥ १७

रा० टी०—तुष्टेनेति । ते तुभ्यं द्वौ वरौ दत्तौ गृहाणेत्युक्तमित्यर्थः । हे भर्तः यदा इच्छेयं तदा वरं गृह्णीयामिति तुरित्यर्थः । उक्तः प्रार्थितः तदा महात्मना पत्या तथा इत्युक्तम् । ननु त्वया कथं विज्ञातमित्यत आह पुरा पूर्वम् 'इति तत्तेन' इति आचारिपाठः । श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—तुष्टेनेत्यर्धमेकं वाक्यम् । द्विधा रक्षणात् द्वौ वरौ दत्ताविति भावः ॥ १७ ॥

गो० टी०—स इति । इच्छेयमित्यर्हार्थे लिङ् । तेन दशरथेन तत् वरं तथा इच्छया ददानीत्युक्तम् ॥ १८ ॥

१८ ] ति० टी०—तदा महात्मना राज्ञा तथेत्युक्तम् । अनभिज्ञा अस्याः कथाया इति शेषः ॥ १८ ॥

गो० टी०—कथमिदं त्वया ज्ञातमित्यत्राह—अनभिज्ञेति १९

१९ ] ति० टी०—निगृह्य भर्तारं वरबलेन निगृह्याभिषेकसंभारान्निवर्तय अभिषेकरूपफलादिति शेषः ॥ १९ ॥

रा० टी०—कथेति । निगृह्य स्वाधीनीकृत्य अहं दास्यामीति प्रतिज्ञां कारयित्वेत्यर्थः, पतिमिति शेषः॥ १९॥

गो० टी०—रामाभिषेके इत्यादि । सार्धश्लोक एकान्वयः । निगृह्य बलात्कृत्य भर्तारमिति शेषः, रामप्रव्राजनभरताभिषेचनरूपौ तौ वरौ याचस्व ॥ २० ॥

२० ] ति० टी०—निवृत्तिप्रकारमाह—ताविति । तेन च दानेऽनुमते ताभ्यां क्रमेण भरताभिषेचनरामप्रव्राजने स्यातामिति शेषः ॥ २० ॥

रा० टी०—तदुपायमाह—ताविति । तौ पूर्वदत्तौ वरौ 'याचस्व भर्तारम्' इति भट्टपाठः ॥ २० ॥

२१ ] ति० टी०—चतुर्दशसंख्याफलमाह—चतुर्दशेति । प्रजानां भावेऽन्तःकरणे गतः प्राप्तः स्नेहो यस्य तादृशस्ते पुत्र स्थिरो राज्ये भविष्यति ॥ २१ ॥

रा० टी०—चतुर्दशवर्षपर्यन्तं प्रव्राजने हेतुमाह—चतुर्दशेति । प्रजाभावगतस्नेहः प्रजाभावेन प्रजाकर्मकपालनान्तया गतः प्राप्तः स्नेहः प्रजाकर्तृकप्रीतिर्यम् । स्थिरः परैः चालयितुमशक्यः ॥ २१ ॥

गो० टी०—चतुर्दशसंख्या किमर्थेत्यत्राह—चतुर्दशेति । प्रजाभावगतस्नेहः प्रजानां भावमभिप्रायं गतः प्राप्तः स्नेहो यस्य स तथोक्तः स्थिरः अप्रकम्प्यः ॥ २१ ॥

---

१ महदिति गो. पाठः । २ यदेच्छेयं तदा वराविति गो. पाठः । ३ इति तत्तेनेति गो. पाठः । ४ कथितेति गो. रा. पाठः । ५ एवांवधार्यते इति रा. पाठः । ६ चेति गो. पाठः । ७ वरौ याचेति गो. रा. पाठः । ८ स्थिति गो. पाठः । ९ त्वं वर्षाणीति गो. रा. पाठः ।

क्रोधागारं प्रविशाद्य क्रुद्धेवाश्वपतेः सुते । शेष्वानन्तर्हितायां त्वं भूमौ मलिनवासिनी ॥ २२ ॥
मा स्मैनं प्रत्युदीक्षेथा मा चैनमभिभाषथाः । रुदन्ती पार्थिवं दृष्ट्वा जगत्यां शोकलालसा ॥ २३ ॥
दयिता त्वं सदा भर्तुरत्र मे नास्ति संशयः । त्वत्कृते च महाराजो विशेदपि हुताशनम् ॥ २४ ॥
न त्वां क्रोधयितुं शक्तो न क्रुद्धां प्रत्युदीक्षितुम् । तव प्रियार्थं राजा तु प्राणानपि परित्यजेत् ॥ २५ ॥
न ह्यतिक्रमितुं शक्तस्तव वाक्यं महीपतिः । मन्दस्वभावे बुध्यस्व सौभाग्यबलमात्मनः ॥ २६ ॥
मणिमुक्तासुवर्णानि रत्नानि विविधानि च । दद्याद्दशरथो राजा मा स्म तेषु मनः कृथाः ॥ २७ ॥
यौ तौ देवासुरे युद्धे वरौ दशरथो ददौ । तौ स्मारय महाभागे सोऽर्थो न त्वा क्रमेदति ॥ २८ ॥
यदा तु ते वरं दद्यात्स्वयमुत्थाप्य राघवः । व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरम् ॥ २९ ॥

---

२२ ] ति० टी०—वरदानप्रवर्तनोपायमाह—क्रोधागारमिति । क्रोधवतीनां शयनस्थानं क्रोधागारम् । क्रुद्धेव इवशब्द एवार्थे । क्रुद्धैव सत्युक्तं क्रोधहेतुं शतशोऽन्यथा तत्सान्त्वनेऽप्यविस्मरन्ती । तदेव विवृणोति—शेष्वेति । अनास्तृतायां भूमौ शेष्वेत्यर्थः मलिनवासिनी मलिनवस्त्रधरा सती ॥ २२ ॥

रा० टी०—क्रोधेति । अश्वपतेः अश्वपत्यभिधराजस्य क्रुद्धा क्रोधविशिष्टा इव त्वं क्रोधागारं क्रोधानां प्रणयादिकोपविशिष्टानामागारं तत्स्थातव्यं गृहमनन्तर्हितायामात्मनोऽव्यवहितायामास्तरणरहितायामित्यर्थः ॥ २२ ॥

गो० टी०—एवमुपायमुपदिश्य उपायप्रवर्तनप्रकारमाह—क्रोधेति । प्रणयकलहादिना क्रुद्धाः स्त्रियो यत्र वसन्ति तत् क्रोधागारमनन्तर्हितायामनास्तृतायाम् ॥ २२ ॥

२३ ] ति० टी०—रुदन्तीत्यस्य भवेति शेषः । तं दृष्ट्वेति पूर्वार्धान्वयि ॥ २३ ॥

रा० टी०—मेति । एनं राजानम् । जगत्यां भूमौ शयानेति शेषः । प्रत्युदीक्षेथाः पश्येः शोकलालसा शोकव्याप्तेवेत्यर्थः ॥ २३ ॥

गो० टी०—मा स्मेति । तं दृष्ट्वा रुदन्ती शोकलालसा च सती एनं मा प्रत्युदीक्षेथाः मा चैनमभिभाषथा इत्यन्वयः । जगत्यां भूमौ शयानेति शेषः ॥ २३ ॥

२४-२५ ] ति० टी०—एवं सति सर्वथा कार्यसिद्धिर्भवत्येवेत्याह—दयितेति । त्वत्कृते त्वत्प्रीणननिमित्तम् ॥ २४ ॥ २५ ॥

रा० टी०—नन्वेवंकृते कदाचिद्राजा मय्यं कुप्येत् इत्यत आह—दयितेति । त्वत्कृते त्वदर्थम् ॥ २४ ॥

रा० टी०—नेति । प्रत्युदीक्षितुं द्रष्टुम् ॥ २५ ॥

गो० टी०—एवंकरणे झटिति कार्यसिद्धिर्भविष्यतीत्याह—दयितेति । अत्र दयितात्वविषये त्वत्कृते त्वत्प्रीतिनिमित्तम् ॥ २४ ॥ २५ ॥

२६ ] ति० टी०—नन्वुक्तमपि वाक्यं राजा चेन्न शृणुयात्तदा महती हानिः स्यात्तत्राह—नहीति । स्वसौभाग्यवैभवविस्मरणमूलिका ते एषा मदाशङ्केति भावः ॥ २६ ॥

रा० टी०—नहीति । आत्मनः, स्वस्य सौभाग्यबलम् सौभाग्यवत्ताहेतुकप्राबल्यम् मन्दः तोषकः स्वभावो यस्यास्तत्संबोधनम् ॥ २६ ॥

गो० टी०—नेति । मन्दस्वभावे अलसस्वभावे सौभाग्यबलं सौन्दर्यबलम् ॥ २६ ॥

२७ ] ति० टी०—वरदानातिरिक्तमनुनयं मा स्वीकुर्वित्याह—मणीत्यादि ॥ २७ ॥

रा० टी०—विविधान्यप्रदेयैः राजा त्वां लोभयिष्यति ते न ग्रहीतव्या इति बोधयन्ती आह—मणीति ॥ २७ ॥

गो० टी०—वरदानव्यतिरिक्तं मण्यादिकं च न स्वीकुर्वित्याह—मणीति । मणयः रत्नानि मुक्ताश्चेत्येकवद्भावः मणिमुक्तं रत्नानि श्रेष्ठवस्तूनि 'रत्नं स्वजातौ श्रेष्ठेऽपि' इत्यमरः ॥ २७ ॥

२८ ] ति० टी०—सर्वानुनयानङ्गीकारे तर्हि दासेन मया किं कर्तव्यमिति राजप्रश्न उत्तरमुपदिशति—याविति । सोऽर्थो रामविवासनभरताभिषेकरूपोऽर्थः । त्वा त्वामित्यर्थः । 'मा त्वा' इति पाठे मातिक्रमेत् तमर्थं मा विस्मरेत्यर्थः । 'नातिक्रामेदति' इति पाठे सर्वथा सिद्ध्यत्येव राज्ञः सत्यप्रतिज्ञत्वादित्याशय इति कतकः ॥ २८ ॥

रा० टी०—याविति । यौ वरौ ते तुभ्यमददात्तौ स्मारय राज्ञे इति शेषः । सः याचितोऽर्थः त्वां मा नातिक्रमेत्प्राप्स्यत्येवेत्यर्थः ॥ २८ ॥

गो० टी०—यौ ताविति । यत्तच्छब्दप्रयोगः प्रसिद्ध्यतिशयद्योतनार्थः तौ स्मारय दातव्यत्वेनेति शेषः । सोऽर्थः रामविवासनभरताभिषेकरूपार्थः मातिक्रमेत्सर्वथा सिद्ध्यत्येवेत्यर्थः राज्ञः सत्यप्रतिज्ञत्वादिति भावः ॥ २८ ॥

२९ ] ति० टी०—राघवो दशरथः उत्थाप्य त्वामिति शेषः । ते तुभ्यम् । तदा त्वं महाराजं व्यवस्थाप्य शपथैः सत्ये स्थापयित्वा ॥ २९ ॥

रा० टी०—यदेति । राघवो दशरथः व्यवस्थाप्य सत्यः प्रतिज्ञत्वादिना प्रशस्येत्यर्थः वृणुयाः याचस्व ॥ २९ ॥

गो० टी०—यदेति । राघवः दशरथः व्यवस्थाप्य सत्ये स्थापयित्वा ॥ २९ ॥ ३० ॥

---

१ प्रविश्येति गो. रा. पाठः । २ वै इति रा. पाठः । ३ चापि तमिति गो. पाठः । ४ स इति गो. पाठः । ५ हीति गो. पाठः । ६ मुक्तं सुवर्णानीति गो. रत्नं सुवर्णं चेति रा. पाठः । ७ ते इति रा. पाठः । ८ दैवासुरे इति गो. पाठः । ९ अददादिति गो. रा. पाठः । १० मा त्वामतिक्रमेदिति गो.रा.पाठः ।

रामप्रव्रजनं दूरं नव वर्षाणि पञ्च च । भरतः क्रियतां राजा पृथिव्यां पार्थिवर्षभ ॥ ३० ॥
चतुर्दश हि वर्षाणि रामे प्रव्राजिते वनम् । रूढश्च कृतमूलश्च शेषं स्थास्यति ते सुतः ॥ ३१ ॥
रामप्रव्राजनं चैव देवि याचस्व तं वरम् । एवं सेत्स्यन्ति पुत्रस्य सर्वार्थास्तव कामिनि ॥ ३२ ॥
एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति । भरतश्च गतामित्रस्तव राजा भविष्यति ॥ ३३ ॥
येन कालेन रामश्च वनात्प्रत्यागमिष्यति । अन्तर्बहिश्च पुत्रस्ते कृतमूलो भविष्यति ॥ ३४ ॥
संगृहीतमनुष्यश्च सुहृद्भिः सार्धमात्मवान् । प्राप्तकालं नु मन्येऽहं राजानं वीतसाध्वसा ॥ ३५ ॥
रामाभिषेकसंकल्पान्निगृह्य विनिवर्तय । अनर्थमर्थरूपेण ग्राहिता सा ततस्तया ॥ ३६ ॥
हृष्टा प्रतीता कैकेयी मन्थरामिदमब्रवीत् । सा हि वाक्येन कुब्जायाः किशोरीवोत्पथं गता ॥ ३७ ॥

३० ] ति० टी०—वरमभिनयति—रामेति ॥ ३० ॥

रा० टी०—वरमेवाह—राममिति । भरतः राजा इव रक्षक इत्यर्थः पुरोहितोऽयं राजा इतिवदत्र राजशब्दप्रयोगः ॥३०॥

३१ ] ति० टी०—सर्वथा प्रव्राजनस्यातिघोरतया लोकविरुद्धत्वं मत्वाह—चतुर्दशेति । यथा चतुर्दशवर्षं पालितः प्ररूढशाखः कृतमूलो दृढमूलो वृक्षो दुरुन्मूलो भवति, एवं भरतस्तावता कालेन रूढो दृढराज्यः कृतमूलो वशीकृतमूलबलश्चतुर्दशोत्तरशेषायुःकालं स्थास्यत्येव न तु पुनरागतेनापि रामेण शक्योन्मूलनो भविष्यति न च रामस्य राज्यप्रत्याशेति तात्पर्यम् ॥ ३१ ॥

रा० टी०—चतुर्दशवर्षपर्यन्तं प्रव्राजने फलमाह—चतुर्दशेति । प्रव्राजिते गते सति रूढः राज्यं प्राप्तः कृतमूलः कृतं निष्पादितं मूलं राज्यकरणकारणीभूतप्रजावशत्वं येन सः शेषं चतुर्दशवर्षादूर्ध्वं स्थास्यति निश्चलतयेति शेषः ॥ ३१ ॥

गो० टी०—चतुर्दशेति । रूढः प्रसिद्धः अभिवृद्धो वा कृतमूलः स्ववशीकृतमूलबल इत्यर्थः । शेषं चतुर्दशवर्षव्यतिरिक्तं पुरुषायुषशेषम् ॥ ३१ ॥

३२ ] ति० टी०—तं राजानम् ॥ ३२ ॥

रा० टी०—अवश्यं वरौ ग्रहीतव्यौ इति बोधयितुमाह—रामेति ॥ ३२ ॥

गो० टी०—रामप्रव्राजनमिति । रामप्रव्राजनं चेति चकारेण भरताभिषेकः समुच्चीयते ॥ ३२ ॥

३३ ] ति० टी०—रामः अराम इति च्छेदः । अप्रियः प्रजानां भविष्यतीत्यर्थः ॥ ३३ ॥

रा० टी०—भाविरामवृत्तं बोधयन्ती आह—एवमिति । अरामः प्रजाभिरामदातृभिन्नः राजा इव । एकश्चशब्द इवार्थे॥३३॥

गो० टी०—एवमिति । रामोऽराम इत्यत्र अराम इति पदच्छेदः अरामो भविष्यति इदानीमेव प्रकृतिस्नेहपात्रं न भविष्यतीत्यर्थः । यद्वा रामो भविष्यति एक एव भविष्यतीत्यर्थः ॥३३॥

३४ ] ति० टी०—अन्तर्बहिश्च प्रकृतीनामिति शेषः । चिरसंयोगाद्दूरस्थे स्नेहानां वृद्धिश्चिरविप्रयोगतश्च रामे स्नेहनाश इति भावः ॥ ३४ ॥

रा० टी०—वासौत्तरकालिकं भरतवृत्तमाह—येनेति । संगृहीतमनुष्यः स्वाधीनीकृतसेनः सुहृद्भिः साकमात्मवान् जितेन्द्रियः तत्सुहृदोऽपि जितेन्द्रिया इत्यर्थः अत एव अन्तरयोध्यामध्ये बहिः राज्ये कृतमूलः कृतं निष्पादितं मूलं राज्यकारणीभूतप्रजानुरागनिष्पादकपालनादि येन पुत्रो भविष्यति अतः प्राप्तकालं प्राप्तः कालः रामोऽभिषेक्तव्यः इत्युपदेशो यं तं राजानं दशरथं रामाभिषेकसंकल्पात् निगृह्य आग्रहं कृत्वा विनिवर्तय इति विगतसाध्वसा निवृत्तभया अहं मन्ये निश्चिनोमि । तुरित्यर्थे ॥ ३४ ॥ ३५ ॥

गो० टी०—येनेति । कृतमूलः रूढमूलः कृतमूल इत्यस्यैव विवरणं संगृहीतेत्यर्धं संगृहीतमनुष्यश्चेत्यत्र भविष्यतीत्यनुषज्यते संगृहीताः अनुरञ्जिताः मनुष्याः पौरजानपदाः येन स तथोक्तः तत्र हेतुरात्मवानिति ॥ ३४ ॥

३५–३६ ] ति० टी०—कृतमूलत्वमेव विवृणोति—संगृहीतेति । सम्यक्पालनेनानुरञ्जितमनुष्य इत्यर्थः । सुहृद्भिः साकं कृतमूलो भविष्यतीति पूर्वेणान्वयः । अभिषेकतो निवर्तनं प्राप्तकालं मन्य इत्यर्थः अभिषेकनिवर्तनस्यायमेव काल इति भावः । तस्माद्राजानं तदभिषेकान्निवर्तयेत्यन्वयः ॥ ३५ ॥ ३६ ॥

गो० टी०—प्राप्तकालमिति । प्राप्तकालमभिमतप्रार्थनोचितकालं वीतसाध्वसा विगतभया अस्मिं कालं प्राप्तकालं मन्ये तेन विनिवर्तयेति संबन्धः ॥ ३५ ॥

रा० टी०—अनर्थमिति । सा केकयी तया मन्थरया ततः उक्तस्ववाक्यादनर्थं विरुद्धार्थमर्थरूपेण ग्राहिता बोधिता आसेति शेषः । अर्धं पृथक् ॥ ३६ ॥

गो० टी०—अनर्थमिति । अनर्थं विरुद्धार्थमर्थरूपेण अनुकूलार्थरूपेण ग्राहिता बोधिता तथैव प्रतीता ज्ञातवती अत एव हृष्टा सेति प्रतीतेत्यस्योपपादनमेतत् किशोरीवडवा उत्पथममार्गं परमदर्शना पुरेति शेषः ॥ ३६ ॥ ३७ ॥

३७ ] ति० टी०—प्रतीताङ्गीकृततदर्था कैकेयी केकयराजकन्या किशोरी बालवत्सा वडवा सा यथा स्वकिशोरार्थं उत्पथं

१ रामं प्रव्राजयारण्ये इति गो. रा. पाठः । २ पृथिव्याः पार्थिवर्षभः इति गो. रा. पाठः । ३ सिध्यन्तीति गो. पाठः । ४ भामिनीति गो. पाठः । ५ हतामित्र इति गो. पाठः । ६ तेन कालेनेति गो. पाठः । ७ सार्धमिति गो. पाठः । ८ त्विति गो. रा. पाठः । ९ ते मन्ये इति गो. पाठः । १० संप्रत्ययितेति गो. पाठः । ११ आयुष्कालमिति भाति युक्तम् ।

कैकेयी विस्मयं प्राप्य[1] परं परमदर्शना । प्रज्ञां[2] ते नावजानामि श्रेष्ठे[3] श्रेष्ठाभिधायिनि[4] ॥ ३८ ॥
पृथिव्यामसि कुब्जानामुत्तमा बुद्धिनिश्चये । त्वमेव तु ममार्थेषु नित्ययुक्ता[5] हितैषिणी ॥ ३९ ॥
नाहं समवबुध्येयं कुब्जे राज्ञश्चिकीर्षितम् । सन्ति दुःसंस्थिताः कुब्जे[6] वक्राः परमपापिकाः ॥ ४० ॥
त्वं पद्ममिव वातेन संनता प्रियदर्शना । उरस्तेऽभिनिविष्टं वै यावत्स्कन्धात्समुन्नतम् ॥ ४१ ॥

गच्छति कशाहस्तेनारूढापि तथेयं राजाधीनापि भरतार्थं इन्मार्गं गतेत्यर्थः ॥ ३७ ॥

रा० टी०—हृष्टेति । उत्पथं विरुद्धमार्गं गता प्राप्तेनापि कुब्जायाः वाक्येन हृष्टा हर्षं प्राप्ता प्रतीता रामप्रव्रजनविषयकप्रतीतिमती कैकेयीकं सुखमेव एकं कैकं कैकस्य इयः प्राप्तिर्यस्यां सा कैकेय्या सैव कैकेयी किशोरी नित्यकिशोरत्वविशिष्टा परमदर्शना अतिशयज्ञानवती । दृशिर्ज्ञानसामान्ये । सा कैकेयी केकयराजकन्या कुब्जाया वाक्येन राज्याभिषेकबोधककुब्जावचनेन विस्मयमिदं राज्याभिषेकं महाराजाधिराजो मह्यं किमर्थं न बोधितवान् इत्याश्चर्यं प्राप्य मन्थरामिदं वचो अब्रवीत् । अर्धत्रयमेकान्वयि ॥ ३७ ॥

३८ ] ति० टी०—परं विस्मयं प्राप्ता परमदर्शनात्यन्तविशेषदर्शनवती, यद्वा परमत्यर्थमदर्शनाविरुद्धदर्शना मन्थरामिदमब्रवीदित्यन्वयः । अत्र कैकेयी तन्नामिका । हे श्रेष्ठाभिधायिनि! हितोपदेशकुशले इति यावत् । अत एव ते प्रज्ञां नावजानामीत्यर्थः । 'कुब्जे त्वां नाभिजानामि' इति पाठे श्रेष्ठाभिधायिनीत्वादिविशिष्टां नाज्ञासिषमित्यर्थः ॥ ३८ ॥

रा० टी०—तद्वचनमेवाह-कुब्ज इति । श्रेष्ठमत्युत्तमममिदधाति वदति तच्छीला तत्संबोधनम् । श्रेष्ठां त्वामहं नाभिजानामि त्वच्छ्रेष्ठात्वं न ज्ञातमित्यर्थः ॥ ३८ ॥

गो० टी०—कुब्ज इति । नाभिजानामीति एतावत्कालमिति शेषः । पृथिव्यामिति । पृथिव्यां यावत्यः कुब्जाः सन्ति तासां सर्वासां मध्ये त्वमुत्तमा बुद्धिनिश्चये विषये अनेन कुब्जानां प्रायेण बुद्धितैक्ष्ण्यमस्तीति द्योतितम् ॥ ३८ ॥

३९ ] ति० टी०—कुब्जानां कुब्जत्वविशिष्टराजदासीनां मध्ये बुद्धिनिश्चये बुद्धिविषयकार्याकार्यनिश्चय उत्तमा ईदृश्य एव दास्यो राजपत्नीनामिष्टाः सुरूपास्तु सापत्न्यस्फूर्तेः । श्रेष्ठत्वमभिधाय श्रेष्ठाभिधायिनीत्वमुपपादयति—त्वमेवेति । हितैषिणीच्छापूर्वं हितवक्त्री ॥ ३९ ॥

रा० टी०—इदानीं तज्ज्ञातमिति बोधयितुं तद्गुणमाह—पृथिव्यामिति । बुद्ध्या विचारेण यो निश्चय इदमित्थमेवेति ज्ञानं तस्मिन् कुब्जानां मध्ये उत्तमा त्वमेवासि ॥ ३९ ॥

गो० टी०—त्वमेवेति । समवबुद्ध्येयमिति "शकि लिङ्" ॥ ३९ ॥

४० ] ति० टी०—समवबुद्ध्येयम् त्वत्कृतबोधनाभावे इति शेषः । चिकीर्षितं रामाभिषेकाय भरतस्य विवासनादि कैकेय्या एवं मतिकारणं क्वचित्पठ्यते—' न हि तद्बुबुधे पापं शापदोषेण मोहिता । केकयेषु हि सा बाल्ये ब्राह्मणं रूक्षरूपिणम् ॥ असूयितवती बाला तेन शप्ता महात्मना । यस्मादसूयसे विप्रं त्वं रूपमददर्पिता ॥ तस्मादसूयां त्वमपि लोके प्राप्स्यसि कुत्सिताम् । इति शापसमाच्छन्ना मन्थरावशमागता ॥' इति । असूयामसूयाविषयताम् । अथ कुब्जां कुब्जान्तरवैलक्षण्येन स्तौति—सन्तीत्यादि । त्वद्व्यतिरिक्ता इति शेषः । दुःसंस्थिता दुःसंस्थावयवसंनिवेशाः अत एव परमपापिका परमपापदर्शनाः ॥ ४० ॥

रा० टी०—मत्तोऽपि त्वमधिकबुद्धिमतीति बोधयितुमाह—नेति । समवबुद्ध्येयं जानीयां ज्ञातुं समर्था स्यामित्यर्थः । "शकि लिङ् च" इति लिङ् । तत्र हेतुः अवक्राः कौटिल्यरहिताः किंच अवे प्रजापालने कृतिर्येषामत एव परं केवलमपापिकाः न पापि कर्म येषां ते अपि मन्त्रिण इति शेषः । दुःसंस्थिताः अविज्ञाताभिप्रायाः सन्ति एतेन राज्ञो मन्त्र्यधीनत्वं व्यक्तं ते नास्मिन्विषये राज्ञो नापराध इति सूचितम् तेन त्वद्बोधनमन्तरा इदं मदज्ञानविषयीभूतं न स्यादिति व्यञ्जितम् । तेन त्वत्सदृशी मत्प्रिया अन्या नास्तीति बोधितम् ॥ ४० ॥

गो० टी०—सन्तीति । दुःसंस्थिताः दुःसंनिवेशाः ॥ ४० ॥

४१ ] ति० टी०—नैवं त्वमित्याह—त्वमिति । वातेन संनतं पद्ममिव त्वं संनतापि प्रियदर्शना ते उरो वक्षोऽभिनिविष्टं स्थगुना व्याप्तमत एव यावत्स्कन्धात्स्कन्धपर्यन्तमुन्नतमुरः । 'यावत्संस्थानमुन्नतम्' इति पाठे स्तनावधि समस्थानरूपसर्वसाधारणसंस्थानं यावत्समुन्नतम् । एतेन स्थगुमत्कुब्जत्वं प्रतिपादितम् ॥ ४१ ॥

रा० टी०—तस्याः कोपमपाकर्तुं तां वर्णयति—त्वमिति । वातेन पद्ममिव त्वं संनता प्रतीयसे एतेन तस्याः सूक्ष्माङ्गीत्वसुकुमारीत्वातिशयौ ध्वनितौ । यावत्स्कन्धात्स्कन्धपर्यन्तमुन्नतमुरः अभिनिविष्टमभिनिवेशितं ब्रह्मणेति शेषः ॥ ४१ ॥

गो० टी०—उर इति । ते उरः अभिनिविष्टमभिनिवेशवत्सत् स्कन्धाभ्यां स्पर्धमानं सत् यावत् स्कन्धात्स्कन्धपर्यन्तं समुन्नतमित्युत्प्रेक्षा अधस्तात् उरसोऽधस्तात् स्थितं घनाभं शोभननाभि योगविभागादच् उदरं उरसः सजातीयस्य उन्नतिं दृष्ट्वा लज्जितमिव शातं कृशम् ॥ ४१ ॥

१ प्राप्तेति गो. पाठः । २ कुब्जे त्वां नाभीति गो. रा. पाठः । ३ श्रेष्ठामिति गो. रा. पाठः । ४ धायिनीमिति गो. पाठः । ५ नित्ययुक्तेति गो. पाठः । ६ कुब्जा इति गो. पाठः ।

अधस्ताच्चोदरं शान्तं सुनाभमिव लज्जितम् । [1]प्रतिपूर्णं च जघनं सुपीनौ च पयोधरौ ॥ ४२ ॥
विमलेन्दुसमं वक्त्रमहो राजसि मन्थरे । जघनं तव [3]निर्मृष्टं रशनादामभूषितम् ॥ ४३ ॥
जङ्घे भृशमुपन्यस्ते पादौ च व्यायतावुभौ । त्वमायताभ्यां सक्थिभ्यां मन्थरे क्षौमवासिनि ॥ ४४ ॥
अग्रतो मम गच्छन्ती राजसेऽतीव शोभने । आसन्याः शम्बरे मायाः सहस्रमसुराधिपे ॥ ४५ ॥
हृदये ते निविष्टास्ता भूयश्चान्याः सहस्रशः । तदेव स्थगु यद्दीर्घं रथघोणमिवायतम् ॥ ४६ ॥
मतयः क्षत्रविद्याश्च मायाश्चात्र वसन्ति ते । अत्र [10]तेऽहं प्रमोक्ष्यामि मालां कुब्जे हिरण्मयीम् ॥ ४७ ॥
अभिषिक्ते च भरते राघवे च वनं गते । जात्येन च सुवर्णेन सुनिष्टप्तेन सुन्दरि ॥ ४८ ॥

४२ ] ति० टी०—अधस्ताद्वक्षसोऽधस्ताच्छोभननाभिमदुदरं लज्जितमिव शान्तम्, उरस उन्नतिं दृष्ट्वा लज्जितमिव कृशमित्यर्थः । प्रतिपूर्णं विस्तीर्णम् ॥ ४२ ॥

रा० टी०—अधस्तादिति । अधस्तादुन्नतोरस्थलादधोभागे विद्यमानं सुनाभं शोभननाभिविशिष्टमुदरं लज्जितमुरस्सम्नतिदर्शनजनितगर्वध्वंसहेतुकलज्जाविशिष्टमिव शान्तं जघनं प्रतिपूर्णं विस्तारविशिष्टं सुपीनौ अतिस्थूलौ । 'परिपूर्णम्' इतिपाठान्तरम् ॥ ४२ ॥

गो० टी०—परिपूर्णमिति । परिपूर्णं पृथुलम् ॥ ४२ ॥

४३ ] ति० टी०—हर्षातिशयाद्वर्णितमपि जघनं पुनर्वर्णयति—जघनमिति । निर्मृष्टं रोमादिकश्मलहीनम् । 'निर्घुष्टम्' इति पाठे रशनास्थक्षुद्रघण्टाभिः शब्दायमानम् ॥ ४३ ॥

रा० टी०—विमलेति । विमलेन्दुना समं तापशामकत्वादिना सादृश्यविशिष्टम् । धर्मान्तरवैशिष्ट्यबोधनाय जघनं पुनर्वर्णयति निर्मृष्टमत्यन्तशुद्धं लोमादिरहितमित्यर्थः रशनायाः क्षुद्रघण्टिकायाः यद्दाम उपरि पतितं रज्जुः तेन भूषितम् । किंच रशना क्षुद्रघण्टिका, रज्जुः दाम वनमालैकदेशः, ताभ्यां भूषितम् ॥ ४३ ॥

गो० टी०—जघनमिति । उपन्यस्ते संश्लिष्टे सुसंनिवेशे वा आयतौ दीर्घौ ॥ ४३ ।

४४ ] ति० टी०—उपन्यस्ते जान्वोरिति शेषः । यद्वा लोकैः स्तुते सुन्दरत्वेन । सक्थिनी पृष्ठफलके इति कतकः ॥ ४४ ॥

रा० टी०—जङ्घे इति । उपन्यस्ते जानुपरिविन्यस्ते जङ्घे उभौ पादौ च व्यायतौ दीर्घौ । अर्धं पृथक्—त्वमिति । आयताभ्यां दीर्घाभ्यां सक्थिभ्यामूरुभ्यामतीव राजसे अर्धद्वयमेकान्वयि 'राजहंसीव राजसे' इति क्वचित्पाठ इति भट्टाः ॥ ४४ ॥

गो० टी०—त्वमिति । सक्थिभ्यामूरुभ्याम् 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । उपलक्षणे तृतीया ॥ ४४ ॥

४५ ] ति० टी०—'राजहंसीव राजसे' इति क्वचित्पाठः । स्थगु स्तोकमुत्प्रेक्षते—आसन्निति ॥ ४५ ॥

रा० टी०—तत्स्थगुमतिवक्ष्मत्वेनोत्प्रेक्षन्ती आह—आसन्निति । असुराधिपे शम्बरे याः सहस्रमासन् ताः अन्या शम्बरासुरज्ञाताश्च ते हृदये निविष्टाः प्रविष्टाः तत् मायैव आयतं दीर्घं रथघोणं रथचक्रपिण्डीव दीर्घं स्थगु तदितिजात्यभिप्रायेणैकत्वं सर्वनाम्नाश्च्देशविधेयान्यतरलिङ्गतेत्यनुशासनात्क्लीबत्वम् । सार्धश्लोक एकान्वयी ॥ ४५ ॥ ४६ ॥

गो० टी०—आसन्निति । अन्याः लौकिक्यः मायाः ॥ ४५ ॥

४६ ] ति० टी०—यास्तास्तव हृदये निविष्टा मायास्तदेवेदं यद्दीर्घं स्थग्वित्यन्वयः । रथघोणं रथचक्रपिण्डिका तद्वदायतं विस्तीर्णम् ॥ ४६ ॥

गो० टी०—तवेति । स्थगु उरो निसृतोन्नतविकृतावयवविशेषः । रथघोणं नासिकाकाररथावयवविशेषः । 'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता' इत्युक्तविषयविभागेन मतेर्बाहुल्यम् । क्षत्रविद्याः राजनीतयः, मायाः विचित्रकुत्सितशक्तयः । अत्र स्थगुनि ॥ ४६ ॥ ४७ ॥

४७ ] ति० टी०—अतोऽत्र मत्यादिकं वसति यत एवमतोऽत्र मालां प्रमोक्ष्यामि । मतयो मतिस्मृतिबुद्धयः 'स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया' इति । क्षत्रविद्या राजनीतिः मायाः प्रसिद्धाः अत्र स्थगुनि हृदिस्थविकृतोन्नतमांसास्थिपिण्डे ॥ ४७ ॥

रा० टी०—मतय इति । अत्र स्थगुनि यतो मतिप्रभृतयो वसन्ति अतः अत्र अस्मिन्काले मालां प्रमोक्ष्यामि प्रक्षेप्स्यामि ४७.

४८ ] ति० टी०—जात्येनोत्तमेन सुनिष्टप्तेन संद्रुतेन सुवर्णेन निर्मितां हिरण्मयीं मालामिति संबन्धः ॥ ४८ ॥

रा० टी०—अभिषिक्त इति । अभिषिक्ते अभिषेकं प्राप्ते इव च इवार्थे । जात्येन जातावुत्तमजातौ भवं जात्यं तेन सुनिष्टप्तेन अत्यन्तध्मातेन द्रुतेनेत्यर्थः । ते तव स्थगु लेपयिष्यामि । सार्धश्लोक एकान्वयी ॥ ४८ ॥

गो० टी०—जात्येनेति । उत्तमस्वर्णजातौ भवं जात्यं दिगादित्वाद्यत् सुनिष्टप्तेन सुद्रुतेन सुवर्णेन लेपयिष्यामि सुवर्णकञ्चुकेनालङ्करिष्यामीत्यर्थः । यद्वा चन्दनसंघृष्टसुवर्णेन सह लेपयिष्यामीत्यर्थः । प्रतीता संतुष्टा ॥ ४८ ॥

१ शान्तमिति गो. पाठः । २ परिपूर्णमिति गो. पाठः । ३ निर्घुष्टमिति गो. पाठः । ४ शोभितमिति गो. पाठः । ५ चाप्यायताविति गो. पाठः । ६ वासिनी इति गो. रा. पाठः । ७ राजहंसीव राजसे इति गो. पाठः । ८ सर्वास्त्वयीति गो. पाठः । ९ तवेदमिति गो. पाठः । १० ते प्रतिमोक्ष्यामीति गो. पाठः । ११ मन्थरे इति गो. पाठः ।

लब्धार्था च प्रतीता च लेपयिष्यामि ते स्थगु । मुखे च तिलकं चित्रं जातरूपमयं शुभम् ॥ ४९ ॥
कारयिष्यामि ते कुब्जे शुभान्याभरणानि च । परिधाय शुभे वस्त्रे देवतेव चरिष्यसि ॥ ५० ॥
चन्द्रमाह्वयमानेन मुखेनाप्रतिमानना । गमिष्यसि गतिं मुख्यां गर्वयन्ती द्विषेज्जने ॥ ५१ ॥
तवापि कुब्जाः कुब्जायाः सर्वाभरणभूषिताः । पादौ परिचरिष्यन्ति यथैव त्वं सदा मम ॥ ५२ ॥
इति प्रशस्यमाना सा कैकेयीमिदमब्रवीत् । शयानां शयने शुभ्रे वेद्यामग्निशिखामिव ॥ ५३ ॥
गतोदके सेतुबन्धो न कल्याणि विधीयते । उत्तिष्ठ कुरु कल्याणं राजानमनुदर्शय ॥ ५४ ॥
तथा प्रोत्साहिता देवी गत्वा मन्थरया सह । क्रोधागारं विशालाक्षी सौभाग्यमदगर्विता ॥ ५५ ॥
अनेकशतसाहस्रं मुक्ताहारं वराङ्गना । अवमुच्य वरार्हाणि शुभान्याभरणानि च ॥ ५६ ॥
तैदा हेमोपमा तत्र कुब्जावाक्यवशंगता । संविश्य भूमौ कैकेयी मन्थरामिदमब्रवीत् ॥ ५७ ॥

---

४९–५० ] ति० टी०—लब्धार्था लब्धोक्तार्था अत एव प्रतीता संतुष्टा लेपयिष्यामि उत्तमचन्दनेनेति शेषः । यद्वा जात्याद्भुतस्वस्वर्णकृतभूषणेन ते स्थगु लेपयिष्यामि गुप्तं करिष्यामीत्यर्थः ॥ ४९ ॥ ५० ॥

रा० टी०—मुख इति । चित्रं आश्चर्यकारकं जातरूपं सुवर्णं तन्मयं तिलकं मुखे ललाटे इत्यर्थः कारयिष्यामि अत एवाभरणानि वस्त्रे च परिधाय देवतेव चरिष्यसि । सार्धश्लोक एकान्वयी ॥ ४९ ॥ ५० ॥

गो० टी०—मुखे चेति । जातरूपमयं सुवर्णमयं चित्रं नानारत्नखचिततया नानावर्णं तिलकं तिलकाकारं भूषणम् ॥ ४९ ॥ ५० ॥

५१–५३ ] ति० टी०—आह्वयमानेन स्पर्धमानेन द्विषज्जने गर्वयन्ती गर्वं कुर्वन्ती मुख्यां गतिं श्रैष्ठ्यम् ॥ ५१–५३ ॥

रा० टी०—चन्द्रमिति । चन्द्रमाह्वयमानेन स्पर्धमानेन मुखेन अप्रतिमानना अप्रतिमं मुखसादृश्यरहितमाननं यस्याः सा, किंच अप्रतिमा सादृश्यरहिता आनना आनयति जीवयतीति ल्युः आसमन्ताद्भावेनाननं जीवनं यस्या इति ल्युट् वा द्विषज्जने स्वशत्रुतामापन्नजन्तौ गर्वयन्ती गर्वं कुर्वती मुख्यामत्युत्तमां गतिं सर्वाग्रणीत्वं गमिष्यसि प्राप्स्यसि ॥ ५१ ॥

रा० टी०—तवेति । कुब्जाः परिचरिष्यन्ति निषेविष्यन्ते इत्यर्थः एतेन तत्र बहवो बुद्धिमत्यः कुब्जाः सन्तीति व्यक्तम् ॥ ५२ ॥

रा० टी०—इतीति । शुभवेद्यां विद्यमाने शयने शय्यायां शयानां कैकयीमिदमब्रवीत् ॥ ५३ ॥

गो० टी०—चन्द्रमिति । आह्वयमानेन स्पर्धमानेन "स्पर्धायामाङः" इत्यात्मनेपदं मुखेन हेतुना अप्रतिमानना अप्रतिद्वन्द्वमुखी द्विषज्जनं मत्सपत्नीजनं प्रति गर्वयन्ती गर्वं कुर्वन्ती गर्वशब्दात्तत्करोतीतिण्यन्तात् शत्रादि स्वार्थे णिजित्येके । मुख्यां तृणीकृतसर्वजनां गतिं पादन्यासविशेषं गमिष्यसि करिष्यसि ओदनपाकं पचतीतिवन्निर्देशः ॥ ५१–५३ ॥

५४–५५ ] ति० टी०—एवं वृथावार्ताभिः कालात्ययो न कार्य इत्याह—गतेत्यादि । रामाभिषेके वृत्ते वरग्रहणादि व्यर्थमिति भावः । राजानमनुदर्शय क्रोधागारे आत्मानमिति शेषः ॥ ५४ ॥ ५५ ॥

रा० टी०—तद्वचनमेवाह—गतेति । हे कल्याणि गतोदके गतं शुष्कमुदकं यस्य तस्मिन्नद्यादौ सेतुबन्धो न विधीयते अत उत्तिष्ठ कल्याणं सज्जनानामित्यर्थः । राजानमनुदर्शय तद्दृष्टिपथं गच्छेत्यर्थः ॥ ५४ ॥

गो० टी०—गतोदक इति । हे कल्याणि ! कुरु मदुक्तप्रकारमिति शेषः । राजानमनुदर्शय क्रोधागारमिति शेषः । यद्वा अनुदर्शय प्रतीक्षस्वेत्यर्थः ॥ ५४ ॥

रा० टी०—तथेति । प्रोत्साहिता अत्युत्साहं प्रापिता देवी कैकेयी सौभाग्यस्य अहोभाग्यमस्माकं यस्या देवसंतापहारका रामादयः पुत्राः इति स्वातिशयभाग्यवत्ताया मदेन गर्विता किंच सौभाग्यैः शोभनभाग्यवद्भिर्मन्यते अतिश्रेष्ठात्वेन ज्ञायते असाविति सौभाग्यमत् सा एव अगर्वितेति कर्मधारयः मन्थरया सह विवेश मन्थरयेत्युभयान्वयि ॥ ५५ ॥

गो० टी०—तथा प्रोत्साहितेत्यादिश्लोकत्रयमेकान्वयम् । अनेकशतसाहस्रं बहुमूल्यमिति यावत् "शतमानविंशतिक–" इत्यादिना क्रीतार्थेऽण् ॥ ५५–५७ ॥

५६ ] ति० टी०—अनेकशतसाहस्रं तावत्स्वर्णमूल्यम् वरार्हाणि बहुमूल्यानि ॥ ५६ ॥

रा० टी०—अनेकेति । अनेकशतसाहस्रमनेकशतसहस्रमुद्रालभ्यं बहुमूल्यकमिति यावत् । अवमुच्य निस्सार्य वरार्हाणि वरैः श्रेष्ठैः अर्हाणि प्रशंसनीयानि ॥ ५६ ॥

५७ ] ति० टी०—हेमोपमा स्वर्णवर्णा कैकेयी ॥ ५७ ॥

रा० टी०—तदेति । कुब्जावाक्यवशंगता तत्त्वविचारेण तदधीनतां प्राप्ता कैकेयी इदमब्रवीत् ॥ ५७ ॥

---

१ द्विषज्जनमिति गो. पाठः । २ कल्याणीति गो. पाठः । ३ तत इति गो. पाठः । ४ कुर्वतीति साध्विति भाति ।

इह वा मां मृतां कुब्जे नृपायावेदयिष्यसि । वनं तु राघवे प्राप्ते भरतः प्राप्स्यते क्षितिम् ॥ ५८ ॥
सुवर्णेन न मे ह्यर्थो न रत्नैर्न च भोजनैः । एष मे जीवितस्यान्तो रामो यद्यभिषिच्यते ॥ ५९ ॥

अथो पुनस्तां महिषीं महीक्षितो वचोभिरत्यर्थमहापराक्रमैः ।
उवाच कुब्जा भरतस्य मातरं हितं वचो राममुपेत्य चाहितम् ॥ ६० ॥
प्रपत्स्यते राज्यमिदं हि राघवो यदि ध्रुवं त्वं ससुता च तप्स्यसे ।
ततो हि कल्याणि यतस्व तत्तथा यथा सुतस्ते भरतोऽभिषेक्ष्यते ॥ ६१ ॥
तथातिविद्धा महिषीति कुब्जया समाहता वागिषुभिर्मुहुर्मुहुः ।
विधाय हस्तौ हृदयेऽतिविस्मिता शशंस कुब्जां कुपिता पुनः पुनः ॥ ६२ ॥
यमस्य वा मां विषयं गतामितो निशम्य कुब्जे प्रतिवेदयिष्यसि ।
वनं गते वा सुचिराय राघवे समृद्धकामो भरतो भविष्यति ॥ ६३ ॥
अहं हि नैवास्तरणानि न स्रजो न चन्दनं नाञ्जनपानभोजनम् ।
न किंचिदिच्छामि न चेह जीवनं न चेदितो गच्छति राघवो वनम् ॥ ६४ ॥

---

५८-५९] ति० टी०—इह कोपागारे। मदभीष्टासिद्धौ मदुपेक्षकाय राज्ञे दशरथाय मां मृतामावेदयिष्यसि । तुर्वार्थे । राघवे वनं प्राप्ते भरतः क्षितिं प्राप्स्यते वा न तु पक्षान्तरमस्तीति भावः ॥ ५८ ॥ ५९ ॥

रा० टी०—तद्वचनमेवाह–इहेति । राघवे रामे वनं प्राप्ते सति भरतः क्षितिं प्राप्स्यते इह अस्मिन्विषये वा पक्षान्तरे सति मां मृतामेव आवेदयिष्यसि इह लोकेऽहं न वत्स्यामीति भावः। तुरेवार्थे। यद्वा इह अस्मिन् कोपागारे मृतां प्राणवियोगानुकूलव्यापारवतीं मां यदि नृपायावेदयिष्यसि भरतराज्यप्राप्तिमन्तरेयं न जीविष्यतीति कथयिष्यसि चेदित्यर्थः। तदा राघवे वनं प्राप्ते सति भरतः क्षितिं प्राप्स्यते । वाशब्दो यद्यर्थे तुस्तदार्थे ॥ ५८ ॥

गो० टी०—इहेति । नृपाय मदुपेक्षकाय ॥ ५८ ॥ ५९ ॥

रा० टी०—अस्मिन्विषये स्वनिश्चयबोधनार्थमाह–नेति । जीवितस्य प्रकटस्थितेः अन्तोऽवसानम् ॥ ५९ ॥

६०-६१ ] ति० टी०—महापराक्रमैरतिक्रूरैः । भरतस्येत्याद्यस्याऽहितान्यप्यपि । राममुपेत्य तं प्राप्य। अहितम् रामविषये लोकदृष्ट्याऽहितमिति यावत् ॥ ६० ॥ ६१ ॥

रा० टी०—द्विर्बद्धं सुबद्धं भवतीति न्यायेन रामराज्ये तदनिष्टं बोधयन्ती पुनराह–अथो इति । महीक्षितो दशरथस्य महिषीं, अवचोभिः न वचः कस्यचित्प्रार्थना येषु तैः प्रार्थयितुमशक्यैरित्यर्थः । अत्यर्थमहापराक्रमैः अत्यर्थाय देवादिपरार्थसिद्धये ये महापराक्रमास्तैर्देवाद्यर्थसाधकप्रकारादिभिरित्यर्थः सूचकम् तद्बोधकमित्यर्थः । राममुपेत्य उद्दिश्य हितमहितमिव तत्त्वेन प्रतीयमानं वच उवाच । चशब्द इवार्थे ॥ ६० ॥ ६१ ॥

गो० टी०—कैकेयीनिश्चयं द्रढयति–अथो इति । राममुपेत्य राममुद्दिश्य ॥ ६० ॥ ६१ ॥

६२ ] ति० टी०—कुब्जया मुहुर्मुहुरिति वागिषुभिः पूर्वोक्तैर्वचनरूपैर्बाणैः समाहता ताडितातिविद्धा चातिविस्मिता। राजा मामेवं प्रतारितवानितीति शेषः शशंसोवाच ॥ ६२ ॥

रा० टी०—तथेति । वागिषुभिः समाहता ताडिता अत एव अतिविद्धा अतिव्रणमिव प्राप्ता कुब्जां प्रति कुपिता इदमेव पुनः पुनः किमर्थं वदतीति कोपं प्राप्ता कैकेयी कुब्जां शशंस ॥ ६२ ॥

गो० टी०—तथेति । अतिविद्धा अतिदुःखिता निधाय हस्तौ हृदय इति विस्मयाभिनयः अतिविस्मिता अतिखिन्ना कथं मदनिष्टं करिष्यतीति कुपिता रामाभिषेकप्रवर्तकं भर्तारमुद्दिश्य कुपितेत्यर्थः ॥ ६२ ॥ ६३ ॥

६३ ] ति० टी०—निशम्य दृष्ट्वा प्रतिवेदयिष्यसि दशरथायेति शेषः ॥ ६३ ॥

रा० टी०—तच्छंसनमेवाह–यमस्येति । विषयं देशमितोऽयोध्यातः निशम्य दृष्ट्वा प्रतिवेदयिष्यसि राज्ञे कथयिष्यसि अथ रामेऽभिषिक्ते सतीति शेषः। वाथवा भरतः परमात्मप्रकाशध्याननिरतो मुनिसदृशः समृद्धकामो भविष्यति ॥ ६३ ॥

६४] ति०टी०—नाञ्जनपानभोजनमिति समाहारद्वन्द्वः॥६४॥

रा० टी०—अहमिति । राघवो रामः इतः मद्भवनस्थहेतोः न गच्छति न गन्ता तदा आस्तरणादीनि नैवेच्छामि ॥ ६४ ॥

गो० टी०—अहमिति । इतो गच्छतीति वर्तमानसामीप्ये लट् ॥ ६४ ॥

---

१ प्राप्स्यतीति गो. पाठः । २ भूषणैरिति गो. पाठः । ३ अत इति गो. पाठः । ४ खिति गो.रा. पाठः । ५ निधायेति गो. रा. पाठः । ६ निशाम्येति गो. पाठः । ७ जीवितमिति गो. पाठः ।

अथैवमुक्त्वा वचनं सुदारुणं निधाय सर्वाभरणानि भामिनी ।
असंस्कृतामास्तरणेन मेदिनीं तदाधिशिश्ये पतितेव किंनरी ॥ ६५ ॥
उदीर्णसंरम्भतमोवृताननां तदावमुक्तोत्तममाल्यभूषणा ।
नरेन्द्रपत्नी विमना बभूव सा तमोवृता द्यौरिव मग्नतारका ॥ ६६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः ।

सुमन्त्रादीन्रामाभिषेकसामग्रीसंपादने नियोज्य यावत्प्रियाख्यायकी दशरथः कैकेयीगृहमुपयाति तावत्तां तत्राद्दष्ट्वा प्रतीहारीं पप्रच्छ तया च क्रोधागारशयने सुप्तेत्यावेदितस्तत्प्राप्योत्थाप्य कैकेयीमुपलालनपूर्वकं समाश्वासयत् ।

विदर्शिता यदा देवी कुब्जया पापया भृशम् । तदा शेते स्म सा भूमौ दिग्धविद्धेव किंनरी ॥ १ ॥
निश्चित्य मनसा कृत्यं सा सम्यगिति भामिनी । मन्थरायै शनैः सर्वमाचचक्षे विचक्षणा ॥ २ ॥

६५ ] ति० टी०—अथ क्रोधागारप्रवेशानन्तरम् निधाय त्यक्त्वा पुण्यक्षयाद्भूमौ पतिता ॥ ६९ ॥

रा० टी०—अथेति । आस्तरणेन असंस्कृतां मेदिनीमधिशिश्ये 'अधिशीङ्स्थासां कर्म' इति मेदिन्याः कर्मत्वम् ॥६९॥

गो० टी०—अथेति । मेदिनीमधिशिश्ये "अधिशीङ्स्थासां कर्म" इतिसप्तम्यर्थे द्वितीया ॥ ६९ ॥

६६ ] ति० टी०—उदीर्ण उत्कटः संरम्भः कोप एव तमस्तेन वृतं व्याप्तमाननं यस्याः । अवमुक्तानि त्यक्तान्युत्तममाल्यभूषणानि यया सा विमना दुर्मनाः मग्नतारका अस्तमिततारका द्यौराकाशम् ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

रा० टी०—उदीर्णेति । दीर्णं नित्यं विध्वस्तं संरम्भतमः उद्वेगहेतुभूताज्ञानं यस्याः सा एव वृताननेति कर्मधारयः । अवमुक्तोत्तममाल्यभूषणा अवमुक्तानि प्रक्षिप्तानि उत्तममाल्यभूषणानि यया सा तमोवृता मेघाच्छादिता मग्नतारका द्यौरिव विमना इव बभूव । उशब्द एवार्थे ॥ ६६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे नवमः सर्गः ॥ ९ ॥

गो० टी०—उदीर्णेति । उदीर्णः उत्कटः संरम्भः कोपः एव तमः तेन वृतानना विमला पूर्वं विमला तमोवृता नीलाभ्रयुक्तमोवृता मग्नतारका अस्तमिततारका ॥ ६६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने नवमः सर्गः ॥ ९ ॥

१ ] ति० टी०—अथोक्तानुवादपूर्वं राज्ञः कैकेयीदर्शनमाह—विदर्शिता विपरीतं बोधिता । दिग्धविद्धेव विषदिग्धबाणविद्धेव किंनरी कामरूपप्रधानो जातिविशेषः ॥ १ ॥

रा० टी०—उत्तरवृत्तं सप्रसङ्गं बोधयितुं पूर्ववृत्तमनुवदन्नाह—विदर्शितेति । अपापया पापिनीसदृशया कुब्जया देवी कैकेयी यदा विदर्शिता विशेषकार्यविषयकबोधं प्रापिता तदा भूमौ शेते स्म तत्र दृष्टान्तः दिग्धविद्धा दिग्धेन कार्यविशेषवत्त्वया विद्धा व्याप्ता किंनरीव भूमिशयनमात्रसाध्यकार्यविशेषवशेन भूमिशयितकिंनरीसदृशीत्यर्थः । किंच दिग्धं वनगमनहेतुकरावणादिवधजनितरामकीर्तिवृद्धिं वेत्तीति दिग्धवित् इति कैकेयीविशेषणम् । हा इति विदर्शितान्वयि कष्टेन बोधितेत्यर्थः । किंच दिग्धविदं रामकीर्तिवृद्धिज्ञानं दधाति सा, किंच दिशः तदुपलक्षितभुवनानि दधाति स्वकार्यत्वेन मनसि स्थापयति पुष्णाति वा दिग्धो ब्रह्मा विष्णुर्वा तदन्यतरस्य यां वित् आख्यानं तत्कर्तृकप्रार्थनेत्यर्थः तां दधाति स्वीकरोतीति, किंचोक्तदिशा दिग्धशब्दस्य ब्रह्मविष्णुपरत्वेनोभयकर्तृकप्रार्थनास्वीकर्त्रीत्यर्थः । एषु पक्षेषु किंनरीति तत्सौन्दर्यधर्मबोधिकोपमा ॥ १ ॥

गो० टी०—अथ पूर्वोक्तं कैकेयीकोपमविचाल्यत्वसूचनायानुवदन् राज्ञः कैकेयीदर्शनायुनयौ दर्शयति—विदर्शितेति । विदर्शिता विपरीतं बोधिता दिग्धविद्धा विषलिप्तबाणेन प्रहृता 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः ॥ १ ॥

२ ] ति० टी०—मन्थरोपदिष्टं निश्चित्य युक्तमेतदिति विचार्य यत्त्वयोक्तं तत्सर्वं सम्यगिति मन्थरायै आविष्कृतस्वाच्छनैराचचक्षे ॥ २ ॥

रा० टी०—निश्चित्येति । अकृत्यं कर्तव्यरामराज्याभिषेकस्याभावः निष्पत्तिरिति यावत् सम्यक् स्वप्रतिज्ञापालनाय अवश्यं रामो वनं गन्ता तच्छोभनमेतन्निवारणमिति निश्चित्य विचक्षणातिनिपुणा केकयी सर्वं मन्थरोक्तयुक्तस्वकृत्यं शनैः आचचक्षे त्वदुक्तमहं करिष्यामीति कथयामासेत्यर्थः । शनैराचचक्षे इत्यनेन मया इयमेवं बोधितेति कस्मैचिदपि या न वक्तव्य-

१ एतदिति गो. पाठः । २ असंवृतामिति गो. रा. पाठः । ३ तथेति रा. पाठः । ४ तथोते गो. पाठः । ५ विमलेति गो. पाठ. ।

सा दीना निश्चयं कृत्वा मन्थरावाक्यमोहिता । नागकन्येव निःश्वस्य दीर्घमुष्णं च भामिनी ॥ ३ ॥
मुहूर्तं चिन्तयामास मार्गमात्मसुखावहम् । सा सुहृच्चार्थकामा च तं निशम्य विनिश्चयम् ॥ ४ ॥
बभूव परमप्रीता सिद्धिं प्राप्येव मन्थरा । अथ सा रुषिता देवी सम्यक्कृत्वा विनिश्चयम् ॥ ५ ॥
संविवेशाबला भूमौ निवेश्य भ्रुकुटिं मुखे । ततश्चित्राणि माल्यानि दिव्यान्याभरणानि च ॥ ६ ॥
अपविद्धानि कैकेय्या तानि भूमिं प्रपेदिरे । तया तान्यपविद्धानि माल्यान्याभरणानि च ॥ ७ ॥
अशोभयन्त वसुधां नक्षत्राणि यथा नभः । क्रोधागारे च पतिता सा बभौ मलिनाम्बरा ॥ ८ ॥
एकवेणीं दृढां बद्ध्वा गतसत्त्वेव किंनरी । आज्ञाप्य तु महाराजो राघवस्याभिषेचनम् ॥ ९ ॥

---

मन्यथा लक्ष्मणस्तुभ्यं कोपिष्यतीति कैकय्याः शिक्षा सूचिता ॥ २ ॥

गो० टी०—निश्चित्येति । सा कैकेयी कृत्यं कर्तव्यं पुरोकरीत्या मनसा निश्चित्य सर्वं त्वदुक्तं सम्यगिति मन्थरायै आचचक्षेति संबन्धः ॥ २ ॥

३ ] ति० टी०—तदेव प्रपञ्चयति—सा दीनेत्यादि ॥ ३ ॥

रा० टी०—सेति । वाक्यं कैकयीवचनम् मोहिता अस्या उक्तिः सदसद्वेति विचारवती अत एव दीना पार्श्विकानिष्टसंभावनया खिन्ना भामिनी सा मन्थरा निश्चयं लक्ष्मणोऽवश्यं कोपिष्यतीति बुद्धिं कृत्वा अत एव नागकन्येव दीर्घं बहुकालमुष्णं विनिःश्वस्य आत्मसुखावहं मार्गमुपायं मुहूर्तं चिन्तयामास । सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०—सा दीनेत्यर्धत्रयमेकं वाक्यम् । दीना अत्र स्वोद्योगः फलिष्यति न्वेतिशङ्कया दीना मार्गमुपायम् । एतदर्धत्रयं निश्चित्येतिपूर्वश्लोकात्पूर्वमेव निवेशनीयमर्थसंगतिस्वारस्यात् ॥ ३ ॥

४ ] ति० टी०—मार्गं मन्थरोक्तमात्मसुखावहमिति चिन्तयामास सा मन्थरा सुहृत्कैकेय्याः तस्या एवार्थकामा च कैकेय्यास्तं निश्चयं निशम्य ज्ञात्वा ॥ ४ ॥

रा० टी०—सेति । तं कैकयीहृदयस्थं विनिश्चयं वनगमनं रामाभीप्सितमिति तदितरकोपस्याकिंचित्करत्वमिति बुद्धिं निशम्य युक्त्या ज्ञात्वा स्वयमपि तथैव निश्चितेत्यर्थः । सिद्धिं स्वचिकीर्षितनिष्पत्तिं प्राप्येव परमप्रीता बभूव । अर्धद्वयमेकान्वयि ॥ ४ ॥

गो० टी०—सेति । तं निश्चयं इह वा मां मृतामित्यादिना पूर्वसर्गान्तोक्तनिश्चयं निशम्य श्रुत्वा सिद्धिं निश्चयफलं प्राप्येव प्रीता ॥ ४ ॥

५ ] ति० टी०—सिद्धिं रसरसायनादिसिद्धिम् । 'निधिम्' इति पाठे धनं प्राप्येव परमप्रीता बभूव वस्तु देवकार्यार्थं स्वयं भूलोकमागता दासी च जाता तद्विषयां सिद्धिं प्राप्येवेत्यर्थः । रामागमनस्य संभावनामात्रविषयत्वादिवेति ॥ ५ ॥

रा० टी०—अथेति । आवका अः विष्णुः आः ब्रह्मा च ईः बलं यस्या मत्कर्मकप्रार्थनाकर्तृत्वयोः कार्यमहं साधयिष्यामीति ब्रह्मविष्णुबलसंपादिकेत्यर्थः । अरुषिता देवी केकयी आवि रामकर्तृकदेवादिरक्षणहेतुकवनगमने निश्चयं कृत्वा भ्रुकुटिं मुखे संनिवेश्य एकाग्रदृष्टिं कृत्वेत्यर्थः भूमौ संविवेश अर्धत्रयमेकान्वयि । आवीत्याङ्पूर्वकगमनार्थकवाधातुप्रकृतिकभावक्विबन्तप्रकृतिकसप्तम्येकवचनम् ॥ ५ ॥

गो० टी०—अथेति । पुनः संवेशनाभिधानं रोषसूचकभ्रुकुटीकरणमाल्यभूषणापवेधादिविशेषप्रदर्शनार्थं भ्रुकुटीं क्रोधजनिताकारविशेषम् ॥ ५ ॥

६ ] ति० टी०—मुखे भ्रुकुटिनिवेशः क्रोधातिशयेन ॥ ६ ॥

रा० टी०—तत इति । ततः भूमिसंवेशनानन्तरं यानि माल्यादीन्यपविद्धानि परित्यक्तानि तानि भूमिं प्रपेदिरे प्रापुः ॥ ६ ॥

गो० टी०—पूर्वं त्यक्तभूषणादीनामौदासीन्येन भूमौ विक्षेपं दर्शयति—तत इति । यान्यप्यविद्धानि तानि भूमिं प्रपेदिरे न तु मञ्जूषिकां, क्रोधातिशयसूचनाय भूमावुत्सर्जनम् ॥ ६ ॥

७-८ ] ति० टी०—यानि कैकेय्यापविद्धान्युत्सृष्टानि तानि भूमिमित्यन्वयः । यान्यपविद्धानि तानीत्यन्वयः ॥ ७ ॥ ८ ॥

रा० टी०—तयेति । तया केकय्या नक्षत्राणि नभ इव अशोभयन्त ॥ ७ ॥

गो० टी०—व्याकीर्णत्वद्योतनाय तानि वर्णयति—तयेत्यादिना ॥ ७ ॥

रा० टी०—क्रोधेति । एकवेणीं वेण्यन्तराग्युन्मुच्येत्यर्थः । अर्धद्वयमेकान्वयि ॥ ८ ॥

गो० टी०—क्रोधागार इति । गतसत्त्वा क्षीणबला विगतासुरिति वार्थः 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः ॥ ८ ॥

९ ] ति० टी०—एकवेणीं पुरोभागीयवेणीद्वयमुन्मुच्य पृष्ठैकवेणीम् । गतसत्त्वा क्षीणबला । कैकेयीवृत्तान्तं प्रदोषकालिकमुपवर्ण्य राजवृत्तान्तमाह—आज्ञाप्येति ॥ ९ ॥

रा० टी०—केकयीवृत्तं समाप्य राजवृत्तमाह—आज्ञाप्येति । अभिषेचनम् अभिषेकस्य कर्तारं वसिष्ठमित्यर्थः । आज्ञाप्य तत्र नियुज्येत्यर्थः । उपस्थानं वसिष्ठसमीपस्थितियोग्यं जनमित्यर्थः अनुज्ञाप्य वसिष्ठाज्ञापितकर्मणि नियुज्येत्यर्थः । निवेशनं स्वगृहं प्रविवेश अभिषेचनोपस्थानशब्दौ कर्तृल्युडन्तौ । अर्धद्वयमेकान्वयि ॥ ९ ॥

---

१ दुर्निश्चयमिति गो. पाठः । २ अमर्षितेति गो. पाठः । ३ भ्रुकुटीमिति गो. पाठः । ४ निपतितेति गो. पाठः । ५ दृढमिति गो. पाठः ।

उपस्थानमनुज्ञाप्य प्रविवेश निवेशनम् । अद्य रामाभिषेको वै प्रसिद्ध इति जज्ञिवान् ॥ १० ॥
प्रियार्हां प्रियमाख्यातुं विवेशान्तःपुरं वशी । स कैकेय्या गृहं श्रेष्ठं प्रविवेश महायशाः ॥ ११ ॥
पाण्डुराभ्रमिवाकाशं राहुयुक्तं निशाकरः । शुकबर्हिसमायुक्तं क्रौञ्चहंसरुतायुतम् ॥ १२ ॥
वादित्ररवसंघुष्टं कुब्जावामनिकायुतम् । लतागृहैश्चित्रगृहैश्चम्पकाशोकशोभितैः ॥ १३ ॥
दान्तराजतसौवर्णवेदिकाभिः समायुतम् । नित्यपुष्पफलैर्वृक्षैर्वापीभिरुपशोभितम् ॥ १४ ॥
दान्तराजतसौवर्णैः संवृतं परमासनैः । विविधैरन्नपानैश्च भक्ष्यैश्च विविधैरपि ॥ १५ ॥
उपपन्नं महार्हैश्च भूषणैस्त्रिदिवोपमम् । स प्रविश्य महाराजः स्वमन्तःपुरमृद्धिमत् ॥ १६ ॥
न ददर्श स्त्रियं राजा कैकेयीं शयनोत्तमे । स कामबलसंयुक्तो रत्यर्थी मनुजाधिपः ॥ १७ ॥

---

गो० टी०—आज्ञाप्येति । आज्ञाप्य सुमन्त्रादीन्नियम्य अभिषेचनमभिषेचनसाधनं प्रति उपस्थानमास्थानं सद इत्यर्थः। अनुज्ञाप्य अनुज्ञां कारयित्वा यद्वा पञ्चमसर्गे गुरुणा त्वभ्यनुज्ञात इत्युक्तत्वाद्वसिष्ठ एवोपस्थानशब्देनोच्यते ॥ ९ ॥

१० ] ति० टी०—उपस्थानं कृताज्ञापनाविषयस्य मन्त्रिपुरोहितादेः स्वस्वगृहं प्रति गमनमनुज्ञाप्य स्वनिवेशनं प्रविवेश, यद्वोपस्थानं सदः सभा तामनुज्ञाप्य स्वगृहगमने तदनुज्ञां गृहीत्वा अद्यैव रामाभिषेकः प्रसिद्धो निश्चित इति इतः पूर्वं कैकेय्या न श्रुतिगोचर इति जज्ञिवाञ्ज्ञातवान् ॥ १० ॥

रा० टी०—प्रवेशप्रयोजनं बोधयन्नाह—अद्येति । जज्ञिवान् ज्ञातवान् अतः प्रियार्हां प्रियाभिः स्त्रीभिः अर्हां पूज्यां कौशल्यामित्यर्थः । आख्यातुं बोधयितुमन्तःपुरं सर्वपत्नीगृहविशिष्टगृहं विवेश ॥ १० ॥

गो० टी०—अद्येति । रामाभिषेकः अद्य वै इदानीमेव प्रसिद्ध इति जज्ञिवान् । इतः पूर्वं कैकेय्याः श्रोतुमवकाशो नास्तीति ज्ञातवानित्यर्थः । सर्वमस्य वशे वर्तत इति वशी स्वतन्त्रः अतः स्वयमेव प्रियार्हां कैकेयीं प्रति प्रियमाख्यातुमन्तःपुरं विवेश ॥ १० ॥

११ ] ति० टी०—अतस्तत्प्रियमाख्यातुं तामन्तः पुरं प्रविवेश । वशी स्त्रीव्यतिरिक्तविषये इति बोध्यम् ॥ ११ ॥

रा० टी०—स इति । श्रेष्ठं कविभिरत्यन्तं प्रशस्यमित्यर्थः। केकय्याः गृहं प्रविवेश एतेन केकयीगृहं कौशल्यागृहगमनमार्गे एवेति व्यक्तम् । अर्धं पृथक् ॥ ११ ॥

गो० टी०—स इति । स्वबाधककैकेयीवचनकर्तव्यत्वाद्राहुयुक्तमित्युक्तम् ॥ ११ ॥

१२ ] ति० टी०—अत्र गृहस्य दुष्टकैकेयीयुक्ततया सुधावलतया च राहुयुक्तपाण्डुराभ्राकाशसादृश्यम् । रुतायुतं रुतयुक्तम् ॥ १२ ॥

रा० टी०—भवनमेव वर्णयति—शुकेत्यादिभिः । क्रौञ्चहंसानां रुतैः शब्दैरायुतं व्याप्तं वामनिका अतिह्रस्वाः ॥ १२ ॥

गो० टी०—अथ दशरथस्य कैकेयीवचनकर्तव्यत्वाय रामाभिषेकविघ्नमियं करिष्यतीति बुद्ध्यनुत्पादाय च रतिभावोद्दीपनान्यन्तःपुरे दर्शयति—शुकेत्यादि । वादित्ररवसंघुष्टं वीणादिचतुर्विधवाद्यरवानुनादितम् 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ' इत्यमरः । कुब्जादीनां प्रियानुकूल्यहेतुत्वाद्रतिवृद्धिहेतुत्वं लतागृहैः चित्रगृहैश्चोपलक्षितम् । दान्ताः दन्तनिर्मिताः । नित्यपुष्पफलैरिति दोहदविशेषादिति ज्ञेयम् विविधैरिति भक्ष्यैः अपूपादिभिः । भूषितैः स्त्रीजनैरिति शेषः । अत एव त्रिदिवोपमम् ॥ १२–१६ ॥

१३ ] ति० टी०—ह्रस्वा वामनिकाः । कुब्जाभिर्वामनिकाभिश्च ताभिर्युतम् । सुरूपदासीनां सापत्न्यसंभावनयान्तःपुरेऽवासात् । चित्रगृहैश्चित्रयुक्तगृहैः ॥ १३ ॥

रा० टी०—लतेति । चम्पकाशोकशोभितैर्लतागृहैश्चित्रगृहैश्च शोभितमिति शेषः ॥ १३ ॥

१४–१६ ] ति० टी०—गजदन्तरजतस्वर्णनिर्मितवेदिकाभिः । वृक्षाणां नित्यपुष्पफलत्वं च देवराजसाहाय्यकरणेन तत्प्रसादात् ॥ १४–१६ ॥

रा० टी०—दान्तेति । दान्तादय एव वेदिकास्ताभिः समायुतम् सामान्ये नपुंसकम् ॥ १४ ॥

रा० टी०—दान्तेति । भक्ष्यैश्च संवृतम् ॥ १५ ॥

रा० टी०—उपपन्नमिति । भूषणैरुपपन्नमत एव त्रिदिवोपमं स्वमन्तःपुरं महाराजो राजा प्रविश्य शयनोत्तमे कैकेयीं न ददर्श । सार्धश्लोक एकान्वयी ॥ १६ ॥

१७ ] ति० टी०—कामबलसंयुक्तः कामबलं तदुद्रेकस्तत्संयुक्तः अत एव रत्यर्थी ॥ १७ ॥

रा० टी०—स इति । कामबलेन अभिषेकविषयकातीच्छया संयुक्तः अत एव रत्यर्थी राज्ञीप्रीतिप्रयोजनो मनुजाधिपः भार्यामपश्यन् विषसाद अत एव पप्रच्छ ॥ १७ ॥

गो० टी०—स इति । कामबलसंयुक्तः उद्दीपनदर्शनादुचि-

---

१ बर्हिणसंघुष्टमिति गो. पाठः । २ वापिभिश्चोपशोभितमिति गो. पाठः । ३ भूषितैरिति गो. पाठः । ४ तदिति गो. पाठः । ५ प्रियामिति गो. पाठः । ६ रत्यर्थमिति गो. पाठः ।

अपश्यन्दयितां भार्यां पप्रच्छ विषसाद च । नहि तस्य पुरा देवी तां वेलामत्यवर्तत ॥ १८ ॥
न च राजा गृहं शून्यं प्रविवेश कदाचन । ततो गृहगतो राजा कैकेयीं पर्यपृच्छत ॥ १९ ॥
यथापुरमविज्ञाय स्वार्थलिप्सुमपण्डिताम् । प्रतिहारी त्वथोवाच संत्रस्ता तु कृताञ्जलिः ॥ २० ॥
देव देवी भृशं क्रुद्धा क्रोधागारमभिद्रुता । प्रतीहार्या वचः श्रुत्वा राजा परमदुर्मनाः ॥ २१ ॥
विषसाद पुनर्भूयो लुलितव्याकुलेन्द्रियः । तत्र तां पतितां भूमौ शयानामतथोचिताम् ॥ २२ ॥
प्रतप्त इव दुःखेन सोऽपश्यज्जगतीपतिः । स वृद्धस्तरुणीं भार्यां प्राणेभ्योऽपि गरीयसीम् ॥ २३ ॥
अपापः पापसंकल्पां ददर्श धरणीतले । लतामिव विनिष्कृत्तां पतितां देवतामिव ॥ २४ ॥
किंनरीमिव निर्धूतां च्युतामप्सरसं यथा । मायामिव परिभ्रष्टां हरिणीमिव संयताम् ॥ २५ ॥

---

तकालत्वाचेति भावः अत एव रत्यर्थं पप्रच्छ क्व गतासीत्येवं, प्रत्युत्तराभावाद्विषसाद च ॥ १७ ॥

१८ ] ति० टी०—अपश्यन्रत्यर्थमान्विष्यापश्यन् । विषादहेतुमाह—नहीति । तां वेलां कामवशास्त्वशयनागमवेलां नात्यवर्तत नातिक्रान्तवती अथ च तामतिक्रान्तेति विषादः ॥ १८ ॥

रा० टी०—विषादे हेतुं वदन्नाह—नहीति । देवी केकयी तस्य राज्ञो वेलामागमनसमयं नात्यवर्तत तदागमनसमये तत्रैव अतिष्ठदित्यर्थः अत एव शून्यं केकयीरहितं गृहं कदाचन न प्रविवेश प्रवेशसमये सदैव तत्र तामपश्यदित्यर्थः ततो हेतोः पर्यपृच्छत् ॥ १८ ॥ १९ ॥

गो० टी०—विषादहेतुमाह—नहीति । तां वेलां रतिवेलाम् ॥ १८

१९ ] ति० टी०—शून्यं कैकेयीरहितम् ॥ १९ ॥

गो० टी०—तत इति । कैकेयीं स्वार्थे लिप्सुं स्वप्रयोजनपरामविज्ञाय यथापुरं यथापूर्वं पर्यपृच्छत प्रतिहारीमिति शेषः । पूर्वमदर्शनकाले यथा पृच्छति तथापृच्छदित्यर्थः ॥ १९ ॥ २० ॥

२० ] ति० टी०—अपण्डितां कार्याकार्यविवेकरहितां स्वार्थलिप्सुं भरताभिषेकेच्छावतीमविज्ञाय यथापुरं यथापूर्वं पूर्वमदर्शनकाले यथापृच्छत तथापृच्छतेत्यन्वयः । प्रतिहारी दौवारिकी ॥ २० ॥

रा० टी०—यथेति । स्वार्थलिप्सुं देवकार्यनिष्पादनजनितस्वयशोरूपप्रयोजनवतीमत एव अपण्डितामेतिविज्ञां केकयीं यथापुरमविज्ञाय संत्रस्ता प्रतीहारी उवाच ॥ २० ॥

२१ ] ति० टी०—अभिद्रुता । इत्युवाचेति संबन्धः ॥ २१ ॥

रा० टी०—तद्वचनाकारमाह—देवेति । देव हे राजन् ! क्रुद्धेव देवी केकयी क्रोधागारमभिद्रुता प्राप्ता । अर्धं पृथक् । प्रतीहार्या इति । लुलितेन केकयीचञ्चलतया स्वाभिप्रायमनुक्त्वा गमनेनेत्यर्थः व्याकुलितानीन्द्रियाणि यस्य अत एव परमदुर्मना राजा विषसाद इतस्ततश्चचाल ॥ २१ ॥

गो० टी०—प्रतिहार्या इति । भूयः अतिशयेन अदर्शनविषादादपि क्रोधागारप्रवेशश्रवणादतिशयेन विषसाद लुलितव्याकुलेन्द्रियः लुलितानि घूर्णितानि व्याकुलानि स्वस्वविषयग्रहणासमर्थानि इन्द्रियाणि यस्य स तथोक्तः ॥ २१ ॥

२२ ] ति० टी०—अदर्शनमात्रेण विषण्णस्य क्रोधादिश्रवणाद्भूयोऽधिको विषादः, इष्टादर्शनजविषादेन चक्षुरादेर्लुलितत्वमतिचञ्चलत्वम्, चित्तस्य किंनिमित्तः क्रोध इति शङ्कया व्याकुलत्वम् । तत्र क्रोधागारे अतथोचितां तथाशयनानुचिताम् ॥ २२ ॥

रा० टी०—तत्रेति । तत्र प्रचलनसमये भूमौ पतितां शयानां केकयीं जगतीपतिरपश्यत् ॥ २२ ॥

गो० टी०—तत्रेति । अतथोचितां भूमिशयनानर्हाम् ॥ २२ ॥

२३ ] ति० टी०—इवशब्द एवार्थे ॥ २३ ॥

रा० टी०—भङ्ग्यन्तरेण पुनस्तदेवाह—स इति । पापाय पापिराक्षसविनाशाय संकल्पो यस्यास्तामपापो राजा धरणीतले ददर्श ॥ २३ ॥

गो० टी०—रामाभिषेकसंरम्भे सपत्नीमातुः क्रोधस्तन्निमित्त इति कुतो राजा न ज्ञातवानित्यत्राह—स इति । अकुटिलत्वाद्व्यामोहाच्च न ज्ञातवानिति भावः ॥ २३ ॥

२४ ] ति० टी०—पापसंकल्पां रामाभिषेकविघातादिमनोरथाम् । विनिष्कृत्तां छिन्नाम् ॥ २४ ॥

रा० टी०—लतामिति । निर्धूतां पतितां किंनरीमिव दिग्धेन विषलिप्तबाणेन मृगयुना व्याधेन विद्धां करेणुमिव वनितां केकयीमभिसंत्रस्तचेतनः अभितः किमर्थमेवमियं पतितेति सर्वत्र विचारेण संत्रस्ता चेतना बुद्धिर्यस्य कामी रामाभिषेकविषयकेच्छावान् राजा इदमुवाच । सार्धश्लोकत्रयमेकान्वयि ॥ २४–२७ ॥

गो० टी—तद्दर्शनस्य दुःसहत्वमाह—लतामिवेति । पतितां भूगतां निर्धूतां धूलकम्पने व्याकुलितामिति यावत् । च्युतां दिव इति शेषः ॥ २४ ॥

२५ ] ति० टी०—निर्धूतां पुण्यक्षये स्वर्लोकात्पतितां च्युतां स्वर्गात् परिभ्रष्टां परमोहनाय प्रयुक्तां मध्य एव स्थितां मायामिव स्थितां संयतां वागुराबद्धाम् ॥ २५ ॥

गो० टी०—मायामिति । 'वामीमिव परिभ्रष्टाम्' इत्यपि पाठः । वामीं वडवाम् 'वाम्यश्ववडवा' इत्यमरः । संयतां वागुरया बद्धां दिग्धेन विषलिप्तबाणेन 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः ।

---

१ यथेति रा. पाठः । २ प्रतिहार्या इति गो. पाठः । ३ अपृच्छदिति युक्तम् । ४ दुर्बोधोऽयमर्थः ।

करेणुमिव दिग्धेन विद्धां मृगयुना वने । महागज इवारण्ये स्नेहात्परमदुःखिताम् ॥ २६ ॥
परिमृज्य च पाणिभ्यामभिसंत्रस्तचेतनः । कामी कमलपत्राक्षीमुवाच वनितामिदम् ॥ २७ ॥
न तेऽहमभिजानामि क्रोधमात्मनि संश्रितम् । देवि केनाभियुक्तासि केन वासि विमानिता ॥ २८ ॥
यदिदं मम दुःखाय शेषे कल्याणि पांसुषु । भूमौ शेषे किमर्थं त्वं मयि कल्याणचेतसि ॥ २९ ॥
भूतोपहतचित्तेव मम चित्तप्रमाथिनि । सन्ति मे कुशला वैद्यास्त्वभितुष्टाश्च सर्वशः ॥ ३० ॥
सुखितां त्वां करिष्यन्ति व्याधिमाचक्ष्व भामिनि । कस्य वापि प्रियं कार्यं केन वा विप्रियं कृतम् ॥ ३१ ॥
कः प्रियं लभतामद्य को वा सुमहदप्रियम् । मा रौत्सीर्मा च कार्षीस्त्वं देवि संपरिशोषणम् ॥ ३२ ॥
अवध्यो वध्यतां को वा वध्यः को वा विमुच्यताम् । दरिद्रः को भवेदाढ्यो द्रव्यवान्वाप्यकिंचनः ॥ ३३ ॥

---

मृगयुना व्याधेन सम्यग्भूगतत्वाश्चर्यावहत्वदयनीयत्वदर्शनीयत्वावि-लुलितवर्णत्वानिश्चेष्टत्वसंतापवहत्वानि क्रमाछृताद्यौपम्येन लभ्यन्ते ॥ २६ ॥

२६ ] ति० टी०—मृगयुना व्याधेन दिग्धेन विषलिप्तेन बाणेन विद्धां करेणुमिव स्थितां ददर्शेति पूर्वेणान्वयः । अरण्ये महागजः पूर्वोक्तां करेणुमिव स्थिताम् ॥ २६ ॥

२७ ] ति० टी०—पाणिभ्यां परिमृज्य पृष्ट्वा किं वक्ष्यति किं करिष्यतीति शङ्कया त्रस्तबुद्धिरुवाच ॥ २७ ॥

गो० टी०—महागज इति । अभिसंत्रस्तचेतनः अभितः सम्यक् त्रस्ता चेतना बुद्धिर्यस्य किमर्थेच्छुः उत रोगग्रस्ता उत क्रुद्धेति त्रासः । कमलपत्राक्षीमिति कामित्वद्योतनम् ॥२६ ॥२७॥

२८ ] ति० टी०—आत्मनि मयि संश्रितं ते क्रोधं क्रोधकारणं नाभिजानामि । अभियुक्ता कृतपराभवा । विमानो निन्दा ॥ २८ ॥

रा० टी०—तद्वचनमेवाह—नेति । ते आत्मनि चित्ते संश्रितं क्रोधं न अभिजानामि । क्रोधकारणं पृच्छति अभियुक्ता पराभूतिं प्राप्ता विमानिता निन्दिता ॥ २८ ॥

गो० टी०—नेति । आत्मनि त्वयि मयि वा अभिशप्ता परुषिता ॥ २८ ॥

२९ ] ति० टी०—यद्यत इदमेवंप्रकारेण कल्याणि ! मम दुःखाय पांसुषु शेषे । किं च कल्याणचेतसि अनपकारिणि मयि जीवति सति किमर्थं भूमौ शेषे ॥ २९ ॥

रा० टी०—यदिति । हे कल्याणि ! पांसुषु धूलिषु यत्त्वं शेषे तत् इदं शयनं मम दुःखाय भवति अतः कल्याणचेतसि मयि सति हे मम चित्तप्रमाथिनि ! भूतोपहतचित्ता इव त्वं भूमौ किमर्थं शेषे । चित्तस्य सावधानत्वे एवमाचरणं ते न स्यादिति भावः । सार्धश्लोक एकान्वयी ॥ २९ ॥

गो० टी०—यदिति । पांसुषु शेष इति यत् इदं मम दुःखायेति संबन्धः । भूतोपहतचित्तेव पिशाचग्रस्तचित्तेव ॥२९॥३०॥

३० ] ति० टी०—भूतोपहतचित्तेव ग्रहाविष्टेव । कुशलाः सर्वव्याधिनिवारणकुशलाः अभितुष्टाः मत्कृतसत्कारैरिति शेषः ॥ ३० ॥

रा० टी०—भूतग्रहादिजनितरोगाणां निवृत्तिर्वैद्यप्रयत्नसाध्येति बोधयन्नाह—सन्तीति । सर्वशः सर्वप्रकारैरित्यर्थः । आचक्ष्व कथय । अर्धद्वयमेकान्वयि ॥ ३० ॥

गो० टी०—रोगपक्षं परिहरति—सन्तीत्यादि । अभितुष्टाः दानमानादिभिः ॥ ३१ ॥

३१ ] ति० टी०—व्याधिमाचक्ष्व व्याधिकृतं चेच्छयनमिति शेषः । प्रियं कार्यं कर्तव्यमिति मनसि वर्तते इति शेषः । विप्रियं कृतं तव कस्याप्रियं कर्तव्यत्वेन तव मनसि वर्तत इति भावः ॥ ३१ ॥

रा० टी०—आधिमाशङ्क्य तत्कारणं पृच्छति—कस्येति । कस्य केनापि जनेन प्रियं प्रीतिविषयीभूतं कर्म कार्यं कृतं किम् । वाशब्दः किमर्थकः एतेन तत्प्रत्युपकारकरणसामर्थ्याभावप्रयुक्ता मानसी व्यथा चेदुच्यतामिति स्वाभिप्रायो निवेदित इति ध्वनितम् । "कृत्यानां कर्तरि वा" इति षष्ठी विप्रियं प्रीतिविषयीभूतकर्मध्वंसकं कर्म केनापि कृतं किम् । एतेन तत्कृतकर्मफलदानासामर्थ्यमूलिका ते मानसी व्यथा चेदुच्यतामिति बोधितम् । अपिरुभयान्वयी ॥ ३१ ॥

गो० टी०—क्रोधपक्षे परिहारमाह—कस्य वेति । कस्येति तृतीयार्थे षष्ठी केन वा तेऽप्रियं कृतमित्यर्थः । प्रियाप्रियकारिणोः फलमाह—कः प्रियमिति । मा रोदीरिति मा रोदीः रोदनं मा कार्षीः । संपरिशोषणं कायक्लेशम् ॥ ३२—३४ ॥

३२ ] ति० टी०—पक्षद्वयनिमित्तोऽपि क्रोधो मास्त्वित्याह—कः प्रियमिति । त्वत्प्रियः दरिद्र इति शेषः । अप्रियं लभताम्, त्वद्विप्रियकारीति शेषः । मा रौत्सीः आत्मनोऽभिप्रायं रुद्धं गुप्तं मा कार्षीरित्यर्थः । संपरिशोषणम् कायस्येति शेषः ॥३२॥

रा० टी०—ननु किं कथनेनेत्यत आह—क इति । महत् स्वत्प्रयत्नासाध्यमिदं प्रियाप्रियोभयान्वयि मा रौत्सीः स्वाभिप्रायावरोधं मा कार्षीरित्यर्थः । हे देवि ! संपरिशोषणं स्वाभिप्रायाविष्करणाभावमूलं क्रोधादिसंपरिशोषणं मा कार्षीः ॥ ३२ ॥

३३] ति० टी०—तदेव प्रपञ्चयति—अवध्य इत्यादि ॥३३॥

रा० टी०—अवध्य इति । अवध्यः त्वत्कर्तृकनाशाशक्यः आढ्यो द्रव्यवान् अकिंचनो दरिद्रः ॥ ३३ ॥

अहं च हि मदीयाश्च सर्वे तव वशानुगाः । न ते कंचिदभिप्रायं व्याहन्तुमहमुत्सहे ॥ ३४ ॥
आत्मनो जीवितेनापि ब्रूहि यन्मनसि स्थितम् । बलमात्मनि जानन्ती न मां शङ्कितुमर्हसि ॥ ३५ ॥
करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे । यावदावर्तते चक्रं तावती मे वसुंधरा ॥ ३६ ॥
द्राविडाः सिन्धुसौवीराः सौराष्ट्रा दक्षिणापथाः । वङ्गाङ्गमगधा मत्स्याः समृद्धाः काशिकोसलाः ॥ ३७ ॥
तत्र जातं बहु द्रव्यं धनधान्यमजाविकम् । ततो वृणीष्व कैकेयि यद्यत्त्वं मनसेच्छसि ॥ ३८ ॥
किमायासेन ते भीरु उत्तिष्ठोत्तिष्ठ शोभने । तत्त्वं मे ब्रूहि कैकेयि यतस्ते भयमागतम् ॥
तत्ते व्यपनयिष्यामि नीहारमिव रश्मिवान् ॥ ॥ ३९ ॥
तथोक्ता सा समाश्वस्ता वक्तुकामा तदप्रियम् । परिपीडयितुं भूयो भर्तारमुपचक्रमे ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे दशमः सर्गः ॥ १० ॥

---

३४–३५ ] ति० टी०–आत्मनो जीवितेन हेतुनापि ते कंचिदभिप्रायं तद्विषयं व्याहन्तुं नोत्सहे अतो मनसि यत्स्थितं यद्विषयेच्छास्ति तद्ब्रूहि । आत्मनि स्वस्मिन्बलं मत्प्रेमरूपं जानन्त्ययं मदुक्तं करिष्यति न वेति मां शङ्कितुं नार्हसि ॥ ३४ ॥ ३५ ॥

रा० टी०–अहमिति । वशानुगाः वशं वशतामनुगच्छन्ति प्राप्नुवन्ति ते अहं तेऽभिप्रायमीप्सितं व्याहन्तुं निवर्तयितुं जीवितेनात्मना देहेन नैवोत्सहे । अतो ब्रूहि आत्मनि तवात्मभूते मयि । श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०–अर्थेच्छापक्षं परिहरति–अहमिति । मम जीवनेनापि हेतुना त्वत्प्रियं व्याहन्तुं नोत्सहे त्वत्प्रियार्थं जीवितमपि परित्यजामीत्यर्थः । आत्मनि बलं त्वयि विद्यमानं वाल्लभ्यं बलम् ॥ ३५—३७ ॥

३६ ] ति० टी०–सुकृतेनापि स्वपुण्येनापि ते तव शपे शपथं ददामि । यदि त्वदुक्तं न कुर्यां तर्हि सर्वं सुकृतं मे नश्येति शपथं ददामीत्यर्थः । अथात्मनि दुष्करसंपादनसामर्थ्यं दर्शयति–यावदिति । चक्रं सूर्यमण्डलमावर्तते प्रकाशयति तावती सर्वापि वसुंधरा मे मदधीना ॥ ३६ ॥

रा० टी०–करिष्यामीति । सुकृतेन शोभनं कृतं मनोव्यापारो यस्मिन् तेन कर्तृणा तव प्रीतिं प्रसादं करिष्यामि संपादयिष्यामि ते शपे अस्मिन्विषये तव शपथं करोमि । अर्थं पृथक् । संपादने स्वसामर्थ्यं बोधयन्नाह–यावदिति । चक्रं रविमण्डलं यावदावर्तते प्रकाशयति तावती वसुंधरा मे मत्संबन्धिनी अत एव द्राविडादयो देशा मे अत एव तत्र तत्तद्देशेषु बहुद्रव्यमपि मे ततो हेतोः हे कैकेयि त्वं वृणीष्व । सार्धश्लोकद्वयमेकान्वयि ॥ ३६–३८ ॥

३७ ] ति० टी०–द्राविडसिन्ध्वादयो देशाः सर्वे मदधीना एव ॥ ३७ ॥

गो० टी०–चक्रं सूर्यस्य रथचक्रमाशा वा । प्राचीना इत्यादि । प्राचीनादिदेशाः ये सन्तीति शेषः । तत्र तेषु देशेषु धनधान्यं यदस्तीति शेषः । ततः तत्र ॥ ३८—४० ॥

३८–३९ ] ति०टी०–अतः–तत्रेत्यादि । तत्र जातं द्रव्यमपि मदधीनमेव । रश्मिवान्सूर्यः ॥ ३८ ॥ ३९ ॥

रा० टी०–किमिति । आयासेन ईदृक्चेष्टाजनितप्रयासेन किम्, प्रयासस्य न प्रयोजनमित्यर्थः । तत्र हेतुः यतो यस्मात्ते भयमागतं तदहं व्यपनयिष्यामि नाशयिष्यामि इत्यर्थः । तत्र दृष्टान्तः नीहारं रश्मिवान् भास्कर इव । सार्धश्लोक एकान्वयी ॥ ३९ ॥

गो० टी०–किमिति । आयासेन भूशयनायासेन तत् भयनिमित्तम् रश्मिवान् सूर्यः ॥ ४१ ॥ ४२ ॥

४० ] ति० टी०–भूयः परिपीडयितुं निजभूशयनादिना पूर्वं पीडितमेवाप्रियवचनादिना पुनः पीडयितुमित्यर्थः ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे दशमः सर्गः ॥ १० ॥

रा० टी०–तथेति । भूयोऽत्यन्तं तथोक्ता अत एव समाश्वस्ता अत एव वक्तुकामा सा कैकयी तदप्रियं केनाहितं रावसमित्यर्थः । परिपीडयितुं हिंसयितुं भर्तारं वक्तुमिति शेषः । उपचक्रमे ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे दशमः सर्गः ॥ १० ॥

गो० टी०–तथेति । परिपीडयितुं प्रतिज्ञाकरणेन निर्बन्धयितुम् ॥ ४३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने दशमः सर्गः ॥ १० ॥

---

१ चेदेति गो. रा. पाठः । २ किंचिदिति । गो. रा. पाठः । ३ मनसेच्छसीति गो. पाठः । ४ प्राचीना इति गो. पाठः । ५ अर्धमिदं रा. नास्ति । ६ जानतीति युक्तमिति भाति । ७ दुर्बोधमिदम् ।

## एकादशः सर्गः ।

कैकेय्या स्वाभीष्टदाने प्रचोदितो दशरथस्तत्प्रतिजज्ञे । कैकय्यपि च तत्र देवान्साक्षीकृत्य देवासुरसंग्रामवृत्तं संस्मार्य तत्र प्रतिज्ञातौ वरौ रामनिर्वासनभरताभिषेचनरूपेण वव्रे ।

तं मन्मथशरैर्विद्धं कामवेगवशानुगम् । उवाच पृथिवीपालं कैकेयी दारुणं वचः ॥ १ ॥
नास्मि विप्रकृता देव केनचिन्नावमानिता । अभिप्रायस्तु मे कश्चित्तमिच्छामि त्वया कृतम् ॥ २ ॥
प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि । अथ ते[1] व्याहरिष्यामि [2]यथाभिप्रार्थितं मया ॥ ३ ॥
तामुवाच [3]महाराजः कैकेयीमीषद[4]उत्स्मयः । कामी हस्तेन संगृह्य मूर्धजेषु [5]भुवि स्थिताम् ॥ ४ ॥
अवलिप्ते न जानासि त्वत्तः [6]प्रियतरो मम । मनुजो मनुजव्याघ्राद्रामादन्यो न विद्यते ॥ ५ ॥
तेनाजय्येन मुख्येन राघवेण महात्मना । शपे ते जीवनार्हेण ब्रूहि यन्[7]मनसेप्सितम् ॥ ६ ॥

१ ] ति० टी०—तामिति ॥ १ ॥

रा० टी०—तमिति । मन्मथशरैः मदं संसारदैन्यं मथ्नन्ति निवर्तयन्तीति मन्मथा वशिष्ठादयः तेषां शरैः शत्रुनिवर्तकशरसदृशाविद्यानिवर्तकवचनैर्विद्धं व्याप्तमत एव कामवेगवशानुगं कामवेगः वशो येषां ते अनुगा अनुचरा यस्य तं पृथिवीपालं दशरथं दारुणं दारुणवस्तुस्वीकारकं वच उवाच श्लेषणार्थकमदधातुप्रकृतिकभावक्विबन्तं मदिति शरशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः । किं च मन्मथशरैर्विद्धमिति वचोविशेषणम् तथाहि मन्मथं शृणातीति मन्मथशरः शिवः उपलक्षणतया ब्रह्मविष्णुमहेश्वरा इत्यर्थः विद्धं प्रार्थितमित्यर्थः विद्धमिति विधानार्थकविधधातुप्रकृतिकनिष्ठान्तमागमशासनस्यानित्यत्वादिडभावः ॥ १ ॥

गो० टी०—अथ व्यवस्थाप्य महाराजं त्वमिमं वृणुया वरमिति मन्थरयोपदिष्टमनुतिष्ठति—तमित्यादिना ॥ १ ॥

२ ] ति० टी०—विप्रकृता प्रियया पराभूता । अवमानः शब्देन तिरस्कारः । मे ममाभिप्रायोऽभिप्रार्थनीयोऽस्ति त्वदेकसंपाद्यस्तं त्वया कृतं संपादितमिच्छामि ॥ २ ॥

रा० टी०—तद्वचनमेवाह—नेति । अभिप्रायः इच्छाविषयीभूतस्तं त्वया कृतं संपादितमिच्छामि ॥ २ ॥

गो० टी०—नास्मीति । विप्रकृता रोगग्रस्ता नार्थकामास्मीत्यपि द्रष्टव्यम् । निग्रहानुग्रहपक्षं मनसि कृत्वाह—अभिप्रायस्त्विति । अभिप्रायः अभिप्रेतोऽर्थः अस्तीति शेषः । त्वया कृतं त्वया प्रतिश्रुतं तमिच्छामीति संबन्धः ॥ २ ॥

३ ] ति० टी०—यदि त्वं कर्तुमिच्छसि मदभिप्रेतं तदा तद्विषयावश्यकर्तव्यतारूपां प्रतिज्ञां प्रतिजानीष्व कुरु । अथानन्तरं मयाभिप्रेतं स्वप्रार्थितं यथा यत्प्रकारवत्तथा वक्ष्यामीत्यर्थः ॥ ३ ॥

रा० टी०—प्रतिज्ञामिति । प्रतिज्ञामवश्यमहं करिष्यामीति शब्दोच्चारणपूर्वकनिश्चयं प्रतिजानीष्व कुरु अथ अनन्तरं मयाभिप्रार्थितमीप्सितं यथा यथावद्व्याहरिष्यामि कथयिष्यामि ॥३॥

गो० टी०—प्रतिज्ञामिति । प्रतिज्ञां प्रतिजानीष्व शपथं कुर्वित्यर्थः ॥ ३ ॥

४ ] ति० टी०—आज्ञाकारिणि मयि शपथाकाङ्क्षा दृष्टेत्युत्स्मयः । मूर्धजेषु संगृह्य शिरोऽङ्के कृत्वेति यावत् ॥ ४ ॥

रा० टी०—तामिति । ईषदुत्स्मयः ईषद्धासविशिष्टः कामी रामाभिषेकेच्छावान्, ईषदिति संगृह्यान्वयि वा ॥ ४ ॥

गो० टी०—तामिति । ईषदुत्स्मितः भवदाज्ञाकारिणि मयि किं शपथेनेति किंचिदुद्गतस्मितः, यद्वा अभिप्रेतकरणमीषत्करमित्युत्स्मितः, यद्वा शङ्कितरोगाद्यभावात् हस्तेन मूर्धजेषु संगृह्येति शिरोऽङ्के कृत्वेति भावः । स्वाभिमुखीकरणाय वेणीमवलम्ब्येति वार्थः ॥ ४ ॥

५ ] ति० टी०—स्त्रीणां मध्ये त्वत्तः पुंसां मध्ये रामादन्य इति योज्यम्, यद्वा रामादन्यस्त्वत्तोऽधिकः प्रियतरो नेत्यर्थः रामेऽस्या द्वेषमजानत एवमुक्तिः ' राम एव त्वत्तोऽधिकः प्रिय इत्याशयः ॥ ५ ॥

रा० टी०—तद्वचनमेवाह—अवेति । अवलिप्ते स्वरूपादिविषयकगर्वविशिष्टे त्वत्तः प्रियतमा अन्या स्त्री न रामादन्यो मनुजः पुरुषः प्रियतमो न, प्रियतमाशब्दो लिङ्गविपरिणामेन उत्तरत्रापि संबध्यते एवमन्यशब्दस्तद्विपरिणामेन पूर्वत्र संबध्यते । 'प्रियतर' इति भट्टपाठः ॥ ५ ॥

गो० टी०—अवलिप्त इति । अवलिप्ते सौभाग्यगर्विते! मम त्वत्तः प्रियतमा स्त्रीणां मध्ये त्वत्तः प्रियतमा नास्ति, रामादन्यो मनुजः प्रियतमो न विद्यते इति जानासीति संबन्धः ॥५॥

६ ] ति० टी०—तदाह—तेनेति । त्वत्तोऽपि प्रियतरेणेत्यर्थः । अत एव मुख्येन अजय्येनारीणामशक्यजयेन जीवनार्हेण मज्जीवनसाधनीभूतेन अनेन परमप्रियत्वं दर्शयति—शपे शपथेन त्वदभिप्रेतकर्तव्यताविषयं स्वाभिप्रायं ज्ञापये ते तुभ्यम् ॥ ६ ॥

रा० टी०—तेनेति । अजय्येन जेतुमशक्येन जीवनार्हेण जीवनः प्राणः तस्यापि अर्हः पूज्यः तेन प्राणेभ्योऽप्यधिकेने-

१ तदिति गो. पाठः । २ यदिति गो. पाठः । ३ महातेजा इति गो. पाठः । ४ उत्स्मित इति गो. पाठः । ५ शुचिस्मितामिति गो. पाठः । ६ प्रियतमेति गो. रा. पाठः । ७ मनसेच्छसीति गो. रा. पाठः ।

यं मुहूर्तमपश्यंस्तु न जीवे[1] तमहं ध्रुवम् । तेन रामेण [2]कैकेयि शपे ते वचनक्रियाम् ॥ ७ ॥
आत्मना चात्मजैश्चान्यैर्वृणे[3] यं मनुजर्षभम् । तेन रामेण [2]कैकेयि शपे ते वचनक्रियाम् ॥ ८ ॥
भद्रे हृदयमप्येतदनुमृश्योद्धरस्व [4]मे । एतत्समीक्ष्य कैकेयि ब्रूहि यत्साधु मन्यसे ॥ ९ ॥
बलमात्मनि पश्यन्ती न [5]विशङ्कितुमर्हसि । करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे ॥ १० ॥
सा तदर्थमना देवी तमभिप्रायमागतम् । निर्माध्यस्थ्याच्च हर्षाच्च बभाषे दुर्वचं[6] वचः ॥ ११ ॥
तेन वाक्येन संहृष्टा तमभिप्रायमात्मनः[7] । व्याजहार महाघोरमभ्यागतमिवान्तकम् ॥ १२ ॥

---

त्यर्थः । रामेण सह अहं ते शपे रामोऽपि त्वदीप्सितमवश्यं साधयिष्यतीति भावः ॥ ६ ॥

गो० टी०–तेनेति । जीवनार्हेण जीवनादपि पूज्येन ॥ ६ ॥

७ ] ति० टी०–भाव्यर्थं सूचयन्परमप्रियत्वमेव दर्शयति–यमिति । अनेन तद्विषयकदुष्टप्रार्थना न कार्येति सूचयति । वचनक्रियां त्वद्वचनकरणं प्रति ॥ ७ ॥

रा० टी०–रामे स्वाधिकप्रीतिं बोधयितुं पुनःपुनः शपते–अयमिति द्वाभ्याम् । अपश्यन् विरुद्धरूपेणावलोकयन् तेन रामेण सह ते वचनक्रियां त्वद्वचनकर्तव्यतां प्रतीति शेषः॥ ७ ॥

गो० टी०-अस्यैव विवरणम्-यमिति । ते वचनक्रियां तव वचनकरणं प्रतीति शेषः ॥ ७ ॥

८ ] ति० टी०–आत्मना स्वेनान्यैरात्मजैः पुत्रैरपि यं वृणेऽसमं जाने सर्वतोऽधिकं प्रियं जाने इति यावत् ॥ ८ ॥

रा० टी०–आत्मनेति । आत्मना देहेन अन्यैर्मित्रादिभिः यं वृणे सेवे इत्यर्थः । तेन सह शपे एतेन रामस्त्वयाप्यत्यन्तं सेव्य इति बोधितम् ॥ ८ ॥

गो० टी०–आत्मनेति । आत्मना स्वदेहेन आत्मजैः भरतादिभिः अन्यैश्च प्रियबन्धुभिश्च मूल्यभूतैरेतैर्यं रामं वृणे सर्वान्परित्यज्यापि राममेव परिगृह्णामीति भावः ॥ ८ ॥

९ ] ति० टी०–'यन्मनसा ध्यायति तद्वाचा वदति' इत्युक्तेर्वागिव हृदयमपि त्वद्वचनानुष्ठानप्रवणमनुमृश्य विचार्य स्वाभीष्टकथनेन मामस्माद्दुःखादुद्धर । एतद्रामस्य प्रियतमत्वं समीक्ष्य यत्साधु मन्यसे तद्ब्रूहि त्वमेव युक्तं विचार्य वद मम तु त्वद्वचनमात्रं कर्तव्यमेवेत्याशयः ॥ ९ ॥

रा० टी०–भद्र इति । हे भद्रे ! एतत् हृदयं ममाभिप्रायमनुमृश्य विचार्य मामुद्धरस्व रामानुकूलस्वाभिप्रायाविष्करणेन मत्संदेहं निवर्तयेत्यर्थः । एतद्रामाभिप्रेताविरुद्धं समीक्ष्य विचार्य यत्साधु मन्यसे तद् ब्रूहि ॥ ९ ॥

गो० टी०–भद्र इति । हे भद्रे ! मे हृदयं एतत् एतादृशमनुमृश्य शपथवचनानुसारित्वेन निर्धार्य उद्धरस्व उज्जीवय । एतत् वाङ्मनसयोरैकरूप्यं समीक्ष्य सम्यगालोच्य यत्साधु युक्तं मन्यसे तद्ब्रूहि त्वदभीष्टकरणमेव मज्जीवनं अन्यथा न जीवामीत्यर्थः ॥ ९ ॥

१० ] ति० टी०–अत्र शङ्का न कार्येत्याह–बलमिति । बलं मत्प्रेमरूपं तथा त्वयि मे प्रेमास्ति येन त्वदुक्तं न कुर्यामित्यसंभावितम् सर्वथा तव प्रीतिं प्रीतिविषयं करिष्यामि यद्यन्यथेदं तदा मे धर्मो न फलदो भवेदिति भावः ॥ १० ॥

रा० टी०–बलमिति । सुकृतेन शोभनक्रियाविशिष्टकायव्यापारेणैव ॥ १० ॥

गो० टी०–बलमिति । आत्मनि बलं त्वयि विद्यमानं दृष्टिचित्तापहारिसौभाग्यबलम् ॥ १० ॥

११ ] ति० टी०–तदर्थमनास्तस्मिन्निजाभिमतेऽर्थे मनो यस्याः सा तदभिप्रायं स्वाभिमतार्थसंपादनाभिप्रायमागतं प्राप्तविषयं ज्ञात्वा निर्माध्यस्थ्यान्माध्यस्थ्याभावमवलम्ब्य ल्यब्लोपेऽव्ययीभावात्पञ्चमी स्वपुत्रपक्षपातेनेति यावत् । हर्षाद्राज्ञः स्ववशत्वदर्शनजात् । दुर्वचं शत्रुभिरपि वक्तुमशक्यम् ॥ ११ ॥

रा० टी०–सेति । तदर्थमनाः तेषां देवानामर्थे मनो यस्याः सा तं रामस्त्वया सेव्य इत्याकारकमभिप्रायमागतं निवेदितवन्तं राजानं निर्माध्यस्थ्यात् नितरां माध्यस्थ्यस्य मध्यस्थधर्मस्य अत् प्राप्तिर्यस्मिन् तद्दुर्वचमन्यैर्वक्तुमशक्यं वचो बभाषे । आगतमित्यत्रान्तर्भावितणिजर्थः कर्तरि निष्ठा ॥ ११ ॥

गो० टी०–सेति । तदर्थमनाः मन्थरोपदिष्टरामविवासनपूर्वकभरताभिषेकरूपार्थमनाः अभिप्रायमागतं स्वाभिमतशपथं प्राप्तं निर्माध्यस्थ्यात् निर्गतमध्यस्थभावात् पक्षपातादित्यर्थः११

१२ ] ति० टी०–तेन वाक्येन त्रिवाचा रामशपथपूर्वकस्ववचनक्रियावाक्येन । अभ्यागतमन्तकमिव घोरं राज्ञः प्राणहरं तमात्मनोऽभिप्रायं व्याजहार व्याहर्तुं निश्चितवती ॥ १२ ॥

रा० टी०–तद्वचनप्रभावं वर्णयन्नाह–तेनेति । आत्मना जीवस्वभावस्य व्या आच्छादकेन अतिचातुर्यविशिष्टेनेत्यर्थः । तेन वाक्येन अभ्यागतं स्वप्रतापेन सर्वत्र पूर्णमभिप्रायं यद्वाभिप्रायविशिष्टमन्तकं देवानां बन्धकं तं रावणं जहार अघानेव, केकयीवचनश्रवणमात्रेण रक्षसां संतापो जात इति तात्पर्यम् । अत एव बभाषे इत्यनेन न पौनरुक्त्यम् । संवरणार्थकव्येञ्धातुप्रकृतिककर्तृक्विबन्तप्रकृतिकतृतीयान्तं व्येति ॥ १२ ॥

गो० टी०–उक्तमर्थं सविशेषमाह–तेनेति । तेन वाक्येन शपथपूर्वकं त्वदभिमतं करिष्यामीत्युक्तदशरथवचनेन ॥ १२ ॥

---

१ जीवेयमिति गो. रा. पाठः । २ वै वेवीति रा. पाठः । ३ वेति गो. पाठः । ४ मामिति रा. पाठः । ५ मां विशङ्कितुमिति गो. रा. पाठः ६ दुःसहमिति गो. पाठः । ७ मागतमिति गो. पाठः ।

यथाक्रमेण शपसे वरं मम ददासि च । तच्छृण्वन्तु त्रयस्त्रिंशद्देवाः सेन्द्रपुरोगमाः ॥ १३ ॥
चन्द्रादित्यौ नभश्चैव ग्रहा रात्र्यहनी दिशः । जगच्च पृथिवी चेयं[3] सगन्धर्वाः सराक्षसाः ॥ १४ ॥
निशाचराणि भूतानि गृहेषु गृहदेवताः । यानि चान्यानि भूतानि जानीयुर्भाषितं तव ॥ १५ ॥
सत्यसंधो महातेजा धर्मज्ञः सत्यवाक्शुचिः । वरं मम ददात्येष सर्वे शृण्वन्तु दैवताः ॥ १६ ॥
इति देवी महेष्वासं परिगृह्याभिशस्य च । ततः परमुवाचेदं वरदं काममोहितम् ॥ १७ ॥
स्मर राजन्पुरा वृत्तं तस्मिन्देवासुरे रणे । तत्र त्वां च्यावयच्छत्रुस्तव जीवितमन्तरा ॥ १८ ॥
तत्र चापि मया देव यत्त्वं समभिरक्षितः । जाग्रत्या यतमानायास्ततो मे प्रददौ वरौ ॥ १९ ॥
तौ दत्तौ च वरौ देव निक्षेपौ मृगयाम्यहम् । तवैव पृथिवीपाल सकाशे रघुनन्दन ॥ २० ॥

१३ ] ति० टी०—राजप्रतिज्ञाया दुष्करार्थविषयत्वेन वैपरीत्यमाशङ्क्य तां प्रतिज्ञामशेषसाक्षीकरणेन स्थिरयति—यथाक्रमेणेति । अतिप्रियपुत्रसुकृतादिक्रमेण शपासि शपथं करोषि तत्पूर्वकं वरं च मम ददासि दातुं निश्चितवानसि तत्तव वाक्यम् ॥ १३ ॥

रा० टी०—तद्वचनमेवाह—यथेत्यादिभिः । यथा येन क्रमेण शपसे शपथं करोषि वरं ददासि च तेन क्रमेण तत्तव भाषितं देवाः देवताविशेषाः चन्द्रादयश्च निशाचरादयश्च शृण्वन्तु तव भाषितं जानीयुश्च । श्लोकत्रयमेकान्वयि ॥ १३–१५ ॥

गो० टी०—दशरथवाक्यं दृढीकर्तुं नरस्य धर्माधर्मसाक्षिभूता देवताः श्रावयति—यथाक्रमेणेति । क्रमेण प्रियपुत्रसुकृतक्रमेण यथा शपसि वरं ददासि च तथा तच्छृण्वन्त्विति संबन्धः ॥ १३ ॥

१४–१५ ] ति० टी०—जगत्परोक्षस्वर्गादिभुवनदेवता । पृथिवी प्रत्यक्षभुवनदेवता ॥ १४ ॥ १५ ॥

गो० टी०—चन्द्रादित्याविति । ग्रहाः नवग्रहाः जगत् लोकः ' लोको विष्टपं भुवनं जगत् ' इत्यमरः । लोकश्चात्र स्वर्ग एव ॥ १४—१६ ॥

१६ ] ति० टी०—सर्वे दैवता देवाः ' दैवतानि वा पुंसि ' इति कोशः ॥ १६ ॥

रा० टी०—देवान् साक्षित्वेन संस्थाप्य तदधिपतीन् संस्थापयन्ती आह—सत्येति । सत्यवाक् सत्यवक्ता अत एव सत्यसंधः सत्यप्रतिज्ञः राजा मम वरं ददाति अतः सर्वे दैवताः देवतानामिमे नियन्तारो दैवताः ब्रह्मादयः शृण्वन्तु अत एव न पौनरुक्त्यम् ॥ १६ ॥

१७ ] ति० टी०—परिगृह्य परिवर्तनानिवर्त्य अभिशस्य सत्यसंध इत्यादिना स्वकार्यस्थैर्याय स्तुत्वा च ॥ १७ ॥

रा० टी०—इतीति । महेष्वासं महाचापविशिष्टं राजानमिति अनेन प्रकारेण परिगृह्य वशीकृत्य प्रशस्य च ततः परिग्रहणादिहेतोः काममत्यन्तमोहितं कृतानेकवितर्कं वरदं राजानं परमन्यदिदमुवाच ॥ १७ ॥

गो० टी०—इतीति । परिगृह्य धर्मपाशेन संयम्य अभिशस्य सर्वा देवताः साक्षित्वेन शृण्वन्त्वित्युद्घुष्य ॥ १७ ॥

१८ ] ति० टी०—तद्वाक्यमाह—स्मरेत्यादि । तत्र रात्रियुद्धे शत्रुः शम्बरस्तव जीवितमन्तरा प्राणं विना त्वां च्यावयत्प्रच्युतवीर्यमकरोत् अडभाव आर्षः ॥ १८ ॥

रा० टी०—तद्वचनमेवाह—स्मरेति । तत्र रात्रौ तस्मिन्प्रसिद्धे देवासुरे रणे शत्रुः शम्बरः तव जीवितमन्तरा विना त्वां च्यावयत् वीर्यहीनमकरोत् आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ १८ ॥

गो० टी०—स्मरेति । पूर्ववृत्तमेवाह—तत्रेति । तत्र रात्रियुद्धे अन्तरा मध्ये तव जीवितमच्यावयदचालयत् शस्त्रप्रहारादिना मूर्च्छां प्रापितवानित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—जाग्रत्या मया यद्यतस्त्वं समभिरक्षितस्ततः स्वजीवनाय यतमानाया मम भवान्वरौ प्रददौ ॥ १९ ॥

रा० टी०—तत्रेति । तत्र तस्यामवस्थायां जाग्रत्या मया यत् यस्माद्धेतोस्त्वं समभिरक्षितस्तस्माद्धेतोः यतमानाया मे वरौ प्रददौ भवानिति शेषः संबन्धसामान्यविवक्षया षष्ठी ॥ १९ ॥

गो० टी०—तत्रेति । यतमानायाः सारथ्ये यत्नं कुर्वाणायाः ॥ १९ ॥

२० ] ति० टी०—तौ वरौ तवैव सकाशे निक्षेपभूतौ त्वय्येव स्थापिताविदानीं त्वया दत्तौ स्वीकर्तुं मृगयाम्यन्वेषयामि ॥ २० ॥

रा० टी०—ताविति । तव सकाशे त्वत्समीपे निक्षेपौ न्यासभूतत्वेन स्थापितौ तौ दत्तौ वरौ मृगयामि अन्वेषयामि वाञ्छामीत्यर्थः ॥ २० ॥

गो० टी०—तौ त्विति । हे पृथिवीपाल ! तव सकाश एव निक्षेपौ निक्षेपत्वेन स्थापितौ तौ तु वरौ तावेव वरौ मृगयामि अन्वेषयामि इच्छामीत्यर्थः ॥ २० ॥

१ शपसीति गो. पाठः । २ साक्षीति गो. पाठः । ३ चैव सगन्धर्वा सराक्षसेति गो. पाठः । ४ सुसमाहित इति गो. पाठः । ५ तन्मे······ देवता इति गो. पाठः । ६ देवासुरे इति गो. पाठः । ७ चाच्यावयदिति गो. पाठः । ८ प्रददा इति गो. पाठः । ९ त्विति गो. पाठः । १० सत्यसंगरेति गो. पाठः ।

तत्प्रतिश्रुत्य धर्मेण न चेद्दास्यसि मे वरम् । अद्यैव हि प्रहास्यामि जीवितं त्वद्विमानिता ॥ २१ ॥
वाङ्मात्रेण तदा राजा कैकेय्या स्ववशं कृतः । प्रचस्कन्द विनाशाय पाशं मृग इवात्मनः ॥ २२ ॥
ततः परमुवाचेदं वरदं काममोहितम् । वरौ देयौ त्वया देव तदा दत्तौ महीपते ॥ २३ ॥
तौ तावदहमद्यैव वक्ष्यामि शृणु मे वचः । अभिषेकसमारम्भो राघवस्योपकल्पितः ॥ २४ ॥
अनेनैवाभिषेकेण भरतो मेऽभिषिच्यताम् । यो द्वितीयो वरो देव दत्तः प्रीतेन मे त्वया ॥ २५ ॥
तदा देवासुरे युद्धे तस्य कालोऽयमागतः । नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ॥ २६ ॥
चीराजिनधरो धीरो रामो भवतु तापसः । भरतो भजतामद्य यौवराज्यमकण्टकम् ॥ २७ ॥
एष मे परमः कामो दत्तमेवं वरं वृणे । अद्य चैव हि पश्येयं प्रयान्तं राघवं वने ॥ २८ ॥

२१ ] ति० टी०—धर्मेण प्रतिश्रुत्य धर्मशपथपूर्वकं दानप्रतिज्ञां कृत्वा ॥ २१ ॥

रा० टी०—तदिति । प्रतिश्रुत्य दास्यामीति प्रतिज्ञाय प्रहास्यामि त्यक्ष्यामि त्वद्विमानिता त्वत्कर्तृकावमानं प्राप्ता ॥२१॥

गो० टी०—तदिति । वरमिति जात्यैकवचनम् ॥ २१ ॥

२२-२३ ] ति० टी०—कैकेय्या स्वसौन्दर्यनिमित्तकाममोहेन स्ववशे कृतो राजा वाङ्मात्रेण पूर्वकालिकवरदानप्रतिवचनमात्रेण स्वविनाशाय मृग इव तत्प्रतिवचनदानरूपं पाशं प्रचस्कन्द प्रगतवान् । प्रकृत्यादित्वात्प्रातिपदिकार्थेऽपि तृतीया वाङ्मात्रेणेति ॥ २२ ॥ २३ ॥

रा० टी०—वाङ्मात्रेणेति । तदा स्वोक्तिकाले वाङ्मात्रेण विना सूर्येण मृगो नित्यं मृगविशिष्टश्चन्द्र इव कैकय्या स्ववशीकृतो राजा शाय देवानां मङ्गलाय आत्मानं स्वस्य पाशं पस्य प्रजापालनस्य अंशं व्याप्तिं प्रचस्कन्द जग्राह, स्नेहस्यापि त्यागेन प्रजापालनं कर्तव्यमिति बुद्धिं चकारेत्यर्थः । सूर्ये चन्द्रवशीकरणत्वं तु चन्द्रप्रकाशनिवर्तकत्वेन, किं च विना चन्द्रेण मृग इव वशीकृत इत्यर्थः प्रसिद्धं च मृगवशीकरणत्वं चन्द्रे एतेन केकय्यभिप्रायो राज्ञा ज्ञात इति ध्वनितम् तथा च मान्त्रिकाकोशः ‘ विः पक्षी गरुडः सूर्यो जलधिः सोम उच्यते ’ इति ॥ २२ ॥

गो० टी०—वाङ्मात्रेणेति । वाङ्मात्रेण पूर्वदत्तवरस्मारकवचनमात्रेण कैकेय्या स्ववशे कृतः राजा वाङ्मात्रेण मृगशब्दानुकारिणा लुब्धककथितेन आत्मनो विनाशाय पाशं मृग इव वागुरां मृग इव धर्मपाशं प्रचस्कन्द गतवान् स्कन्दिर् गतिशोषणयोरिति धातुः । वरप्रदानमङ्गीचकारेत्यर्थः । यद्वा वागुरां प्राप्तो मृग इव प्रचस्कन्द शोषणं प्राप्त इत्यर्थः ॥ २२ ॥

रा० टी०—वरयोर्देयत्वेन पुनः प्रार्थयन्ती आह—तत इति । काममत्यन्तं मोहितं तर्कितवन्तं राजानमुवाच । तद्वचनमेवाह—तदा देवासुरयुद्धे त्वया दत्तौ वरौ देयौ ॥ २३ ॥

गो० टी०—तत इत्यादि ॥ २३ ॥

२४ ] ति० टी०—वक्ष्यामि मम दातव्यौ वराविमाविति विभज्य वक्ष्यामि । तद्व्च आह—अभिषेकेति ॥ २४ ॥

रा० टी०—ननु कौ वरौ याचसे इत्यत आह—ताविति । मे वचः शृणु राघवस्य रामस्याभिषेकसमारम्भः त्वया कल्पितः अनेन अभिषेकेणाभिषेकसामग्र्या भरतोऽभिषिच्यतां रामाभिषेको निवर्त्यतामिति तात्पर्यम् इत्येको वरो बोध्यः । सार्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०—ताविति । तौ वरौ वक्ष्यामि तौ वरौ विभज्य प्रदातुं प्रकारं वक्ष्यामीत्यर्थः ॥ २४ ॥

गो० टी०—अभिषेकसमारम्भ इति । अभिषेकसमारम्भः अभिषेकसामग्री य इति शेषः । अभिषेकेण अभिषेकसामग्र्या ॥ २५ ॥ २६ ॥

२५-२७ ] ति० टी०—यः कल्पितोऽनेनेति योजना २५-२७

रा० टी०—य इति । तस्य द्वितीयस्यापि काल आगतः ॥२५॥

रा० टी०—द्वितीयं वरमेवाह—नवेति । रामस्तापसो भवतु अर्धद्वयमेकान्वयि ॥ २६ ॥

गो० टी०—नवेति । चीरं वल्कलम् ॥ २७ ॥

रा० टी०—उपसंहरन्ती आह—भरत इति । अकण्टकं विघ्नरहितं कामः इच्छा ॥ २७ ॥

गो० टी०—विलम्बव्यावृत्त्यर्थमाह—भरत इत्यादिना । दत्तमेव ननु नूतनं किंचिदर्थये ॥ २८ ॥ २९ ॥

२८ ] ति० टी०—दत्तमेव वृणे न त्वपूर्वम् न ह्युत्तमर्णेनाधमर्णात्स्वार्थग्रहणे तस्य पीडा भवतीति न कश्चिद्दोषः । अद्य चैवेत्यनेन कालविलम्बो निराकृतः ॥ २८ ॥

रा० टी०—अद्येति । प्रयान्तं गच्छन्तं राघवं रामम् । अर्थं पृथक् ॥ २८ ॥

१ स्ववशे इति गो. स्ववशीकृत इति रा. पाठः । २ यौ मे इति गो. पाठः । ३ अभिषेच्यतामिति गो. पाठः । ४ दैवासुरे इति गो. पाठः । ५ एवमिति रा. पाठः । ६ वनमिति गो. पाठः ।

स राजराजो भव सत्यसंगरः कुलं च शीलं च हि जन्म रक्ष च ।
परत्र वासे हि वदन्त्यनुत्तमं तपोधनाः सत्यवचो हितं नृणाम् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः ।

दशरथस्तु रामगुणान्प्रशस्य तस्य वननिर्वासने दोषाभावं दर्शयित्वा इष्टवरयाचननिर्बन्धात्कैकेयीं शिथिलयितुं प्रायतत सा तु शैब्यादीन्दृष्टान्तीकृत्य तादृग्भवान्वरदानेनैव पौरुषमागिति स्वनिर्बन्धं द्विर्बबन्ध । स तु परुषोक्तिभिस्तां विगर्ह्य निर्बन्धं त्याजयितुं पादपतनेनाऽपि प्रायतत ।

ततः श्रुत्वा महाराजः कैकेय्या दारुणं वचः । चिन्तामभिसमापेदे मुहूर्तं प्रतताप च ॥ १ ॥
किं नु मेऽयं[1] दिवास्वप्नश्चित्तमोहोऽपि वा मम । अनुभूतोपसर्गो वा मनसो वाप्युपद्रवः ॥ २ ॥

---

२९ ] ति० टी०—सत्यसंगरः सत्यवचाः संपूर्वाद्गिरतेः कथनार्थात्कर्मण्यप् । तेनैव हेतुना कुलादिकं रक्ष जन्मान्तरभावि । तदेवाह—परत्रेति ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकादशः सर्गः ॥ ११ ॥

रा० टी०—राजानं प्रोत्साहयन्ती आह—स इति । सः रघुकुलोद्भवः सत्यसंगरः सत्यवाक् भव तेन कुलादित्रयं रक्ष । तत्र हेतुः परत्र सर्वोत्कृष्टे वासे अनुत्तमं परमोत्तमं निमित्तं सत्यवचो वदन्ति अत एव नृणां हितम् ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्ड एकादशः सर्गः ॥ ११ ॥

गो० टी०—सत्यस्यावश्यकर्तव्यत्वमाह—स इति । राजराजः स त्वं सत्यसंगरः सत्यप्रतिज्ञः भव तेन सत्यसंगरत्वेन कुलादित्रयं रक्ष । सत्यस्य रक्षकत्वमुपपादयति—परत्रेति । नृणां हितं सत्यवचः परत्रवासे स्वर्गलोकादिवासे अनुत्तमं अत्यन्तोत्तमसाधनं वदन्ति ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने श्रीमदयोध्याकाण्डव्याख्यान एकादशः सर्गः ॥ ११ ॥

१ ] ति० टी०—दारुणं वज्रपाततुल्यम् । श्रुतार्थस्य वास्तवत्वासंभावनया भ्रम इत्येव निश्चित्य किंदोषजोऽयं भ्रम इति चिन्तां प्रपेदे । युक्त्या भ्रमत्वज्ञानेऽपि तदधिष्ठानापरोक्ष्यं यावदविभ्रमादेस्तत्कार्यभयादिकारितया दृढत्वात्प्रतताप च ॥ १ ॥

रा० टी०—तत इति । ततः कैकेय्युक्त्यनन्तरं दारुणं रामवियोगप्रारम्भमङ्गलकार्याभावोभयबोधकत्वेन भयजनकं कैकेय्या वचः श्रुत्वा चिन्तामभिसमापेदे प्राप अत एव प्रतताप । ननु संतापबोधकवचनश्राविकात्वेन कैकेय्याः पातिव्रत्यभङ्ग इति तु न भ्रमितव्यं रावणादिवधद्वारा एतद्वचःप्रख्यामहेतुभूतत्वेनास्य निम्बाद्यौषधतुल्यत्वेनाबोधात् ॥ १ ॥

गो० टी०—अथ सत्यपाशबद्धस्य राज्ञः शोकं वर्णयति—तत इति । प्रतताप मुमूर्छेति यावत् ॥ १ ॥

२ ] ति० टी०—अथ भ्रमत्वनिश्चयाय त्यक्ततापो भ्रमहेतुं चिन्तयति । स्वप्नार्थस्य स्वक्रियाकरणासामर्थ्याद्भ्रमविषयत्वम्, स्वप्नदृष्टोऽयमर्थो मिथ्यैव न कदापि भवतीति भावः । स्वप्नोऽपि कदाचित्संवादीत्यतो दिवेति, दिवास्वप्नो न कदापि संवादीति भावः । अपि वा अथवा । मम जाग्रत्यपि दुरदृष्टजचित्तमोहो वैचित्यापरपर्यायो वस्तुतत्त्वज्ञानासामर्थ्यमनु पश्चाज्जातः सभास्थितिपर्यन्तमसत्त्वाद्भूतोपसर्गो वा ग्रहावेशजचित्तवैकल्यं वा । यत्त्वनुभूतोपसर्गोऽनुभूतनाशः सुषुप्तिरित्यर्थ इति तन्न, सुषुप्तौ ज्ञानाभावात् । मनस उपद्रवो वा आधिव्याधिजनितोपप्लवो वा ॥ २ ॥

रा० टी०—चिन्तास्वरूपमाह—किमिति । कैकेय्या अपि रामविषयकातिप्रीतिमतीत्वादियमुक्तिर्न संभवतीति स्वप्नोऽयमित्युक्तं तस्यापि जाग्रत्यसंभवेन चित्तमोह इत्युक्तम् । चित्तमोहो नामोन्मादिजनितचित्तभ्रमः मोहकारणीभूतस्योन्मादेरभावादुक्तम् अनुभूतोपसर्ग इति । अनुभूतानां जन्मान्तरे साक्षात्कृतानामुपसर्गः प्रारब्धवशात्स्मरणमिति तदर्थः रामनित्यपरिकरत्वेन प्रारब्धादेरभावादुक्तं मनस उपद्रव इति, स्वभावसिद्धमनसोऽनुभावनमित्यर्थः ॥ २ ॥

गो० टी०—चिन्तां विवृणोति—किं न्विति । किंन्विति सामान्याकारेण चिन्ता स्वदुःखावहस्य रामाभिषेकविघ्नस्य सत्स्वभावया कैकेय्या कथनासंभवादिदं पारमार्थिकं न भवति स्वप्नो यदि वा अथवेदानीं निद्राया असंभवाच्चित्तमोहः भ्रमो वा इदानीं भ्रमकारणाभावादनुभूतोपसर्गो वा जन्मान्तरानुभूतानामर्थानामुपसर्गः भावना वा स्मरणमिति यावत् जन्मान्तरेऽप्येवंविधावस्थाया असंभावितत्वादाह—मनस उपद्रवो वा रोगजविकारो वा उन्माद इति यावत् । प्रतताप चेत्येतदनुवदति—इतीति ॥ २ ॥

---

१ व इति गो. पाठः ।

इति संचिन्त्य तद्राजा नाध्यगच्छत्तदा सुखम् । प्रतिलभ्य ततः संज्ञां कैकेयीवाक्यतापितः ॥ ३ ॥
व्यथितो विक्लवश्चैव व्याघ्रीं दृष्ट्वा यथा मृगः । असंवृतायामासीनो जगत्यां दीर्घमुच्छ्वसन् ॥ ४ ॥
मण्डले पन्नगो रुद्धो मन्त्रैरिव महाविषः । अहो धिगिति सामर्षो वाचमुक्त्वा नराधिपः ॥ ५ ॥
मोहमापेदिवान्भूयः शोकोपहतचेतनः । चिरेण तु नृपः संज्ञां प्रतिलभ्य सुदुःखितः ॥ ६ ॥
कैकेयीमब्रवीत्क्रुद्धो नि[4]र्दहन्निव तेजसा । नृशंसे दुष्टचारित्रे कुलस्यास्य विनाशिनि ॥ ७ ॥
किं कृतं तव रामेण पापे पापं मयापि वा । सदा ते जननीतुल्यां वृत्तिं वहति राघवः ॥ ८ ॥
तस्यैवं[5] त्वमनर्थाय किंनिमित्तमिहोद्यता । त्वं मयात्मविनाशाय भवनं स्वं निवेशिता ॥ ९ ॥
अविज्ञानान्नृपसुता व्याला तीक्ष्णविषा यथा । जीवलोको यदा सर्वो रामस्याह गुणस्तवम् ॥ १० ॥
अपराधं कमुद्दिश्य त्यक्ष्यामीष्टमहं सुतम् । कौसल्यां च सुमित्रां च त्यजेयमपि वा श्रियम् ॥ ११ ॥

---

३ ] ति० टी०—राजा इति संचिन्त्य तद्भ्रमकारणं नाध्यगच्छत् । अतस्तदाऽसुखं मूर्च्छाकरं महद्दुःखं चाध्यगच्छत् । ततः संज्ञां स्मृतिं लब्ध्वा कैकेयीवाक्यस्मरणतापितः ॥ ३ ॥

रा० टी०—इतीति । ततः चिन्तनात् संज्ञां तादृशानां मनसामनवस्थितत्वाभावेन तात्त्विकयेषा केकयपुत्रिरिति विचारेण वियोगनिश्चयं प्रतिलभ्य केकयीवाक्यतापितः प्राप्तमनोव्यथः अत एव व्यथितः दुःखहेतुकचालितहस्तादिः राजा उच्छ्वसन् सन् सुखं नाध्यगच्छत् प्राप्नोत् । द्वयोरेकत्रान्वयः ॥ ३ ॥ ४ ॥

गो० टी०—प्रतिलभ्येत्यादि । श्लोकत्रयमेकान्वयम् । व्यथितः दुःखितः विक्लवः विह्वलः 'विक्लवो विह्वलः' इत्यमरः । मण्डले अहितुण्डिकयन्त्रमण्डले ॥ ३–६ ॥

४ ] ति० टी०—अतएव व्यथितत्वादिगुणविशिष्टः विक्लवो दीनः ॥ ४ ॥

५–६ ] ति० टी०—मण्डले यन्त्रमण्डले मन्त्रकृते अहो धिगिति वाचमुक्त्वा भूयः पुनर्मोहमापेदिवान् ॥ ५ ॥ ६ ॥

रा० टी०—मण्डल इति । मण्डले अभिमन्त्रितदेशविशेषे पन्नगः सर्पः भूयोऽधिको यः शोकः तेन उपहता चेतना बुद्धिर्यस्य सः मोहं कर्तव्याविवेकराहित्यं आपेदिवान् प्राप । सार्धश्लोक एकान्वयी ॥ ५ ॥

रा० टी०—चिरेणेति । संज्ञां केकयीबोधनयुक्तिम् । क्रुद्धः संभावितरामवियोगहेतुककोपविशिष्टः तेजसा शरीरप्रभाविशेषेण । अर्धद्वयमेकान्वयि एवमुत्तरत्रापि ॥ ६ ॥

७ ] ति० टी०—तेजसा दुःखजेन निर्दहन्निव ज्वलन्निव अनेन मृगदुःखशमनस्य व्याघ्रीदण्डेनेव कैकेयीदण्डेन स्वदुःखशमनस्याशक्यता ध्वन्यते । नृशंसे क्रूरे दुष्टचारित्रे दुष्टव्यापारे ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—नृशंसे इति । नृशंसे क्रूरात्वेन प्रतीयमाने पापे पापविशिष्टस्त्रीकर्मसदृशकर्मकारिणि आचारक्लिष्टन्तः अत एव अस्य मम कुलस्य विनाशिनि विनाशनशीले कुलविनाशनमभिषेकोत्साहविनाशनद्वारा बोध्यम् । किं कृतमकार्यमिति शेषः ॥ ७ ॥

गो० टी०—नृशंस इति । किं पापं कृतमित्यन्वयः । पापम् अपराधः ॥ ७ ॥

८ ] ति० टी०—पापमनिष्टम् । पापे पापमते ते त्वयि वृत्तिं शुश्रूषाम् वहति करोति ॥ ८ ॥

रा० टी०—यदेति । यदा यस्मिन्काले जननीतुल्यां मातृसेवासदृशीं ते वृत्तिं सेवां राघवो रामो वहति करोति तस्मिन्नेव काले तस्य रामस्य अनर्थाय त्वमुद्यता कृतप्रयत्ना इह अस्मिन्विषये किं निमित्तम् ॥ ८ ॥

गो० टी०—यदेति । वृत्तिं शुश्रूषां तस्यैव तदेवेत्यपि बोध्यं तस्यैव न तु तत्सुतादेः तदैव न तु कालान्तरे शुश्रूषाभावदशायाम् ॥ ८ ॥

९ ] ति० टी०—तस्यानर्थचिन्तानर्हस्य । एवमनर्थाय किं निमित्तं केन निमित्तेन । अयं स्वकृत एवानर्थ इत्याह—त्वमिति ॥ ९ ॥

रा० टी०—त्वमिति । आत्मविनाशाय स्वविध्वंसाय स चाभिषेकप्रतिज्ञाविध्वंसद्वारा बोध्यः । व्याली सर्पस्त्री ॥ ९ ॥

गो० टी०—त्वमिति । नृपसुतेत्यत्रेतिकरणं द्रष्टव्यम् ९–११

१० ] ति० टी०—अविज्ञानादिष्टसाधनत्वभ्रान्त्या यदा यतः ॥ १० ॥

रा० टी०—रामाभिषेको दुर्निवार इति बोधयन्नाह—जीवेति । इष्टं इच्छाविषयीभूतं सर्वपूज्यं वा ॥ १० ॥

११ ] ति० टी०—उद्दिश्य व्याजीकृत्य त्यक्ष्यामि श्रियं राज्यम् ॥ ११ ॥

रा० टी०—कौसल्यामिति । जीवितं जीवनं पितृवत्सलं पितृभक्तम् एतेन रामानुरागस्य परा काष्ठा सूचिता ॥ ११ ॥

---

१ अभ्यगच्छदिति गो. पाठः । २ चिरादिति गो. पाठः । ३ ताडित इति गो. पाठः । ४ प्रदहन्निति गो. पाठः । ५ त्वमर्थेति गो. पाठः ।

जीवितं चात्मना[1] रामं नत्वेव पितृवत्सलम् । परा भवति मे प्रीतिर्दृष्ट्वा तनयमग्रजम् ॥ १२ ॥
अपश्यतस्तु मे रामं नष्टं[2] भवति चेतनम् । तिष्ठेल्लोको विना सूर्यं सस्यं वा सलिलं विना ॥ १३ ॥
न तु रामं विना देहे तिष्ठेत्तु मम जीवितम् । तदलं त्यज्यतामेष निश्चयः पापनिश्चये ॥ १४ ॥
अपि ते चरणौ मूर्ध्ना स्पृशाम्येष प्रसीद मे । किमर्थं[3] चिन्तितं[4] पापे त्वया परमदारुणम् ॥ १५ ॥
अथ जिज्ञाससे मां त्वं भरतस्य प्रियाप्रिये । आस्तु[5] यत्तत्त्वया पूर्वं व्याहृतं राघवं प्रति ॥ १६ ॥
स मे ज्येष्ठसुतः[6] श्रीमान्धर्मज्येष्ठ इतीव मे । तत्त्वया प्रियवादिन्या सेवार्थं कथितं भवेत् ॥ १७ ॥
तच्छ्रुत्वा शोकसंतप्ता संतापयसि मां भृशम् । आविष्टासि गृहे[7] शून्ये सा त्वं परवशंगता ॥ १८ ॥

१२ ] ति० टी०—आत्मना स्वव्यापारेण जीवितं तत्साधनं रामं नत्वेव त्यजेयम् । परा उत्कृष्टा ॥ १२ ॥

रा० टी०—परेति । परा अत्युत्कृष्टा अग्रजं रामं राममपश्यतो मे तु चेतनं चैतन्यं नष्टं भवति ॥ १२ ॥

१३ ] ति० टी०—चेतनं चैतन्यम् ॥ १३ ॥

रा० टी०—तिष्ठेदिति । लोको भुवनं सस्यमारोपितशाल्यादि ॥ १३ ॥

१४ ] ति० टी०—यतो मद्विनाशे वैधव्यप्राप्तिस्तत्तस्मादेष निश्चयो रामविवासनरूपस्त्यज्यताम् ॥ १४ ॥

रा० टी०—तदिति । तत्तस्मात् मम जीवनहेतोः एषः रामाभिषेकनिवारणविषयको निश्चयो बुद्धिः एषः प्रणयसूचकबद्धयुगलकरः ॥ १४ ॥

गो० टी०—तदलमिति । एष निश्चयः रामविवासनरूपनिश्चयः । अपि ते चरणाविति । अपिः प्रश्नार्थकः ॥१४॥१५॥

१५ ] ति० टी०—अपि ते चरणाविति धर्मशास्त्रतोऽत्यनुचितमपि कामशास्त्रमर्यादया त्वत्प्रीत्यर्थमिति शेषः ॥ १५ ॥

रा० टी०—किमिति । परमदारुणमतिक्रूरम् । अर्धं पृथक् १५

१६ ] ति० टी०—अथेत्यादि । अथ भरतस्य प्रियाप्रियविषये मां त्वं जिज्ञाससे भरतो राज्ञः प्रियो न वेति तदास्तु । राघवं भरतं प्रति यत्त्वया व्याहृतं तत्सर्वं भरतस्य, रामविवासनं त्वयोग्यमेवेति शेषः । त्वयापि पूर्वं तस्य बहुशो गुणानां कथनादित्याशयः ॥ १६ ॥

रा० टी०—पक्षान्तरं प्रकल्प्याह—अथेति । भरतस्य प्रियाप्रिये भरतकर्मकमनिष्टे प्रीत्यप्रीती भरतः राज्ञः प्रियः अप्रियो वेत्यर्थः जिज्ञाससे ज्ञातुमिच्छसि चेत्तर्हि राघवं भरतं प्रति यत् पूर्वं त्वया व्याहृतं भरतोऽभिषिच्यतामित्यनेनोक्तं तदस्तु भरत एवाभिषिच्यतामित्यर्थः एतेन रामविवासनमनुचितमनर्थकं चेति बोधितम् ॥ १६ ॥

गो० टी०—अथेत्यादि । श्लोकत्रयमेकान्वयम् । अथेति प्रश्ने त्वं भरतस्य प्रियाप्रिये विषये मां जिज्ञाससे ज्ञातुमिच्छसि तदिदानीमपि भरतोऽभिषिच्यतामिति यत्तदस्तु तदनुरूपचितं त्वया पूर्वं राघवं प्रति स मे ज्येष्ठः सुत इत्यादि यद्व्याहृतं तत् प्रियवादिन्या त्वया सेवार्थं मम मनोरञ्जनार्थं रामकृतशुश्रूषार्थं वा कथितं भवेत्, रामविवासनोक्तिस्तेन विरुद्धेत्यर्थः । परीक्षार्थमपि भरतोऽभिषिच्यतामित्येव वक्तुमुचितं ननु रामो विवास्यतामित्येतत् पूर्वापरविरोधादिति भावः । रामविवासनोक्तिश्च भरते प्रीतिपरीक्षार्थमेवास्त्वित्यत आह—तदिति । तत् रामाभिषेचनं श्रुत्वा शोकसंतप्ता सती मां भृशमतिनिर्बन्धेन संतापयसि किंच परवशं परबोधनवशं गता सती शून्यं गृहं क्रोधागारमाविष्टासि प्रविष्टासि इदं सर्वं परीक्षार्थत्वेन संगच्छत इति भावः । 'शून्यैर्ग्रहैः' इतिपाठे शून्यैर्ग्रहैराविष्टा पिशाचादिभिराविष्टेत्यर्थः ॥ १६–१८ ॥

१७ ] ति० टी०—इतीवेत्येतत्प्रकारं यत्त्वया कथितं पूर्वं तन्मच्चित्तावर्जनेन सेवार्थमेव मया स्वसेवाकरणार्थमेव भवेदिति वितर्कः संप्रत्यन्यथोक्तेरिति भावः ॥ १७ ॥

रा० टी०—ननु अभिषेकोचितज्येष्ठपुत्ररामस्येह सत्त्वे कथमभिषेकानुचितकनिष्ठभरतस्याभिषेकः स्यादित्यत आह—स इति । मे ज्येष्ठसुतो रामः यस्माद्धर्मज्येष्ठः सर्वधर्मवच्छ्रेष्ठः तत्तस्माद्धेतोः प्रियवादिन्या त्वया सेवार्थं स्वसेवाकारणार्थमेव कथितं कथितो भवेत् तवायत्त एव तिष्ठेदित्यर्थः एतेन रामस्याभिषिक्तत्वेऽपि तस्य त्वदायत्ततया तवेप्सितसिद्धिर्भविष्यत्येवेति ध्वनितम् । कथितमिति सामान्ये नपुंसकम् ॥ १७ ॥

१८ ] ति० टी०—यतस्तद्रामाभिषेचनं श्रुत्वा इदानीं शोकसंतप्तासि मां च वरनिर्बन्धेन ततो निवारयन्ती भृशं तापयसि, अतो मया स्वसेवाकरणाय मद्वञ्चनार्थं एव ते राम साधुत्ववाद इत्याशयः । अथवा एवंविधचिन्तापि महाकुलजायां त्वयि असंभावितैव, किं तर्हीदं तत्राह—शून्ये गृहे भूतादिभिराविष्टासि तत्तुल्येन वाक्येन त्वदावेशितदुष्टमतिरसि अतः परवशंगता एवं वदसीत्यर्थः ॥ १८ ॥

रा० टी०—तदिति । तत् रामाभिषेकप्रयतनं श्रुत्वा भृशमत्यन्तं शोकसंतप्ता त्वं मां संतापयसि तत्र हेतुमाह—परेषां प्रार्थनाकर्तृदेवादीनां वशं गता प्राप्ता त्वं शून्ये गृहे आविष्टा प्रविष्टासि ॥ १८ ॥

१ आत्मन इति गो. रा. पाठः । २ नष्टा ... ... चेतनेति गो. पाठः । ३ किमिदमिति गो. पाठः । ४ चिन्त्यते इति रा. पाठः । ५ अस्त्विति गो. रा. पाठः । ६ ज्येष्ठः सुत इति गो. पाठः । ७ गृहं शून्यमिति गो. पाठः ।

इक्ष्वाकूणां कुले देवि संप्राप्तः सुमहानयम् । अनयो नयसंपन्ने यत्र ते विकृता मतिः ॥ १९ ॥
नहि किंचिदयुक्तं वा विप्रियं वा पुरा मम । अकरोस्त्वं विशालाक्षि तेन न श्रद्दधामि ते ॥ २० ॥
ननु ते राघवस्तुल्यो भरतेन महात्मना । बहुशो हि स्म बाले त्वं कथाः कथयसे मम ॥ २१ ॥
तस्य धर्मात्मनो देवि वने वासं यशस्विनः । कथं रोचयसे भीरु नव वर्षाणि पञ्च च ॥ २२ ॥
अत्यन्तसुकुमारस्य तस्य धर्मे कृतात्मनः । कथं रोचयसे वासमरण्ये भृशदारुणे ॥ २३ ॥
रोचयस्यभिरामस्य रामस्य शुभलोचने । तव शुश्रूषमाणस्य किमर्थं विप्रवासनम् ॥ २४ ॥
रामो हि भरताद्भूयस्तव शुश्रूषते सदा । विशेषं त्वयि तस्मात्तु भरतस्य न लक्षये ॥ २५ ॥
शुश्रूषां गौरवं चैव प्रमाणं वचनक्रियाम् । कस्तु भूयस्तरं कुर्यादन्यत्र पुरुषर्षभात् ॥ २६ ॥

---

१९ ] ति० टी०–तदेवाह–इक्ष्वाकूणामिति । यत इक्ष्वाकुकुले महानयमनयो ज्येष्ठाभिषेकानिवृत्तिरूपः संप्राप्तः । हे नयसंपन्ने यत्रानये ते तव विकृता मतिः कारणमिति शेषः । अतस्त्वं ग्रहाविष्टेति भावः ॥ १९ ॥

रा० टी०–इक्ष्वाकूणामिति । नयसंपन्ने नीतियुक्ते विकृता त्यक्तस्वभावा अकर्तव्यं कर्तव्यत्वेन स्वीचकारेत्यर्थः ॥ १९ ॥

गो० टी०–कुलानर्थकरं चेदं वचनमित्याह–इक्ष्वाकूणामिति । नयसंपन्ने एतावत्कालं नीतिशालिनि यत्र इक्ष्वाकुकुलमध्ये ते मतिरेवमिदानीं विकृता विपरीता जाता तत्र कुले अयं संनिहितः सुमहाननयः अनर्थः संप्राप्तः, ननु सत्प्रकृतेर्विपरीतबुद्धिः कुलस्यानर्थहेतुरिति भावः ॥ १९ ॥

२० ] ति० टी०–नन्वनाविष्टैवाहं वदामि नेत्याह–नहीति । न श्रद्धामि अस्यानयस्यानाविष्टत्वबुद्धिकृतत्वमिति शेषः ॥ २० ॥

रा० टी०–ननु देवापराधः किमर्थं कल्प्यत इत्यत आह–नेति । अयुक्तं युक्तिविरुद्धं विप्रियं प्रीतिविषयीभूतभिन्नं कर्मेति शेषः एतेनैतद्विरुद्धाचरणे तव स्वातन्त्र्यं नास्तीति ध्वनितम् ॥ २० ॥

गो० टी०–पूर्वापरपर्यालोचनया त्वद्वचनं न श्रद्धेयं चेत्याह–नहीति । अयुक्तमहितमिति यावत् न श्रद्धामि इदमहितं विप्रियकरणमिति शेषः ॥ २० ॥

२१ ] ति० टी०–तदेवोपपादयति–नन्विति । नन्वित्यामन्त्रणे । एतत्कथयसे वर्तमानसामीप्ये लट् अनेन यामात्पूर्वं तथा कथनं ध्वन्यते ॥ २१ ॥

रा० टी०–तत्रैव हेत्वन्तरमाह–नन्विति । राघवो रामः भरतेन ते तव तुष्टौ तुल्यः । ननु ध्रुवमेतत्, किंच भरतेन महात्मना भरतस्येनः पूज्यो भरतेनः स एव महात्मेति कर्मधारयः तेन रामेणेत्यर्थः । राघवो भरतः भरतादप्यधिका त्वत्प्रीतिः रामे आसीदित्यर्थः । तत्र हेतुः कथाः रामप्रीतिसंबन्धिनीर्वार्ताः कथयसे स्म ॥ २१ ॥

गो०टी०–त्वत्प्रीतिविरुद्धं चेदं वचनमित्याह–नन्वित्यादि । ते राघवः भरतेन तुल्यो ननु तुल्यः खलु । अत्र त्वद्वचनमेव प्रमाणमित्याह–बहुश इति । बहुश इत्यनेनाहृदयत्वव्यावृत्तिः सुबाले इत्यकुटिलत्वव्यावृत्तिः ॥ २१ ॥

२२–२४] ति० टी०–तस्य भरततुल्यप्रियस्य ॥ २२–२४ ॥

रा० टी०–इयं तवोक्तिर्न संभवतीत्याह–तस्येति । धर्मात्मनः निखिलधर्मप्रवर्तकस्य रामस्य ॥ २२ ॥

गो० टी०–तस्येति । धर्मात्मन इत्यनेन वनवासहेतुभूताकृत्यराहित्यसूचकम् । भीरु इति तव च धर्मभीरुत्वं क्व गतमिति भावः ॥ २२ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अत्यन्तेत्यादिश्लोकद्वयेन ॥ २३ ॥ २४ ॥

गो०टी०–रामसौकुमार्यानुचितं चेदमित्याह–अत्यन्तेति २३

गो० टी०–शुश्रूषादर्शनेनापि रामो न विवासनार्ह इत्याह–रोचयसीति । तव शुश्रूषमाणस्येत्यत्र "न लोकाव्यय–" इत्यादिना निषिद्धापि षष्ठ्यार्षी बोध्या ॥ २४ ॥

२५ ] ति० टी०–शुश्रुषते सेवते तस्माद्रामाद्रामक्रियमाणगौरवाद्भरतस्य त्वयि विशेषमधिकं गौरवं न लक्षये ॥ २५ ॥

रा० टी०–रामे तव प्रीतिः सहेतुकेति बोधयन्नाह–राम इति । भूयोऽधिकं शुश्रूषते सेवते तस्मात् रामकर्तृकाधिकशुश्रूषणात् त्वयि त्वद्बुद्धावित्यर्थः । भरतस्य विशेषमधिकत्वं रामादिति शेषः ॥ २५ ॥

गो० टी०–शुश्रूषमाणस्येत्येतदुपपादयति–रामो हीति २५

२६ ] ति० टी०–शुश्रूषां सेवाम् गौरवं बहुमानम् प्रमाणं प्रतिपत्तिः प्रामाण्यबुद्धिरित्यन्ये वचनक्रिया उक्तकरणम् पुरुषर्षभाद्रामात् ॥ २६ ॥

रा० टी०–रामकर्तृकाधिकशुश्रूषणं द्रढयन्नाह–शुश्रूषामिति । शुश्रूषां सेवां गौरवं महत्त्वं प्रमाणमाप्तत्वं वचनक्रियामाज्ञापितसंपादनं पुरुषर्षभात् रामात् ॥ २६ ॥

गो० टी०–न केवलं शुश्रूषैवैवं वचनकारणमपि तु प्रमाणादिकमपीत्याह–शुश्रूषामिति । गौरवं प्रतिपत्तिः प्रमाणं पूजा वचनक्रिया उक्तकरणम् ॥ २६ ॥

---

१ श्रद्दधाम्यहमिति गो. पाठः । २ स्विति गो. पाठः । ३ धृतात्मन इति गो. पाठः । ४ ते इति गो. पाठः । ५ मनुजेति गो. पाठः ।

बहूनां स्त्रीसहस्राणां बहूनां चोपजीविनाम् । परिवादोऽपवादो वा राघवे नोपपद्यते ॥ २७ ॥
सान्त्वयन्सर्वभूतानि रामः शुद्धेन चेतसा । गृह्णाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ॥ २८ ॥
सत्त्वेन लोकाञ्जयति द्विजान्दानेन राघवः । गुरूञ्छुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ २९ ॥
सत्यं दानं तपस्त्यागो मित्रता शौचमार्जवम् । विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ॥ ३० ॥
तस्मिन्नार्जवसंपन्ने देवि देवोपमे कथम् । पापमाशंससे रामे महर्षिसमतेजसि ॥ ३१ ॥
न स्मराम्यप्रियं वाक्यं लोकस्य प्रियवादिनः । स कथं त्वत्कृते रामं वक्ष्यामि प्रियमप्रियम् ॥ ३२ ॥
क्षमा यस्मिंस्तपस्त्यागः सत्यं धर्मः कृतज्ञता । अप्यहिंसा च भूतानां तमृते का गतिर्मम ॥ ३३ ॥

२७ ] ति० टी०—बहूनां स्त्रीसहस्राणां मध्ये एकयापि कृतः परिवादोऽकार्यकरणनिमित्तं समूलमयशः उपजीविनां मध्ये एकेनापि कथितोऽपवादः असूयाकल्पितं निर्मूलमयशो राघवे नोपपद्यते न विद्यते ॥ २७ ॥

रा० टी०—रामविवासने कारणाभावं विशदयन्नाह—बहूनामित्यादिचतुर्भिः । अयं भावः प्रायः स्त्रियः उपजीविनश्च परिवादापवादौ कुर्वन्ति तत्कर्तृकौ तौ राघवे रामे नोपपद्येते न प्राप्नुतः क्वापि न श्रुताविति यावत् । उपजीविनो नाम तत्पोष्यत्वसमानाधिकरणतत्समीपवासकर्तारः । समूलकाऽकीर्तिः परिवादः निर्मूलकाऽकीर्तिरपवादः ॥ २७ ॥

गो० टी०—परिवादादिकमपि रामविवासकारणं नास्तीत्याह—बहूनामिति । स्त्रीसहस्राणामुपजीविनां च संबन्धी परिवादो नोपपद्यते । बहूनामिति विशेषणेन तन्मध्ये एकया एकेन वा स्त्रीपुरुषाविशेषेण परिवादस्तत्संबन्धी परिभवविषयवादः अपवादः निन्दा वा राघवे नोपपद्यते न दृश्यते ॥ २७ ॥

२८ ] ति० टी०—कुतस्तत्राह—सान्त्वयन्निति । प्रियैरिष्टसंपादनैर्गृह्णाति वशीकरोति ॥ २८ ॥

रा० टी०—सान्त्वयन्निति । शुद्धेन कपटरहितेन विषयवासिनो देशवासकर्तॄन् ॥ २८ ॥

गो० टी०—अविवासननिमित्तभूतान् भूयोगुणान् दर्शयति—सान्त्वयन्नित्यादि । अनेन वाङ्मनःकायैर्जनरञ्जकत्वमुक्तं प्रियैः अभीष्टप्रदानैः गृह्णाति संगृह्णाति ॥ २८ ॥

२९ ] ति० टी०—जयति जयोऽत्र स्वाधीनत्वकरणम् २९॥

रा० टी०—सत्येनेति । सत्येन मृषासंसर्गशून्यवचनेन लोकाञ्शिष्टजनान् जयति न्यूनीकरोति एतादृशः सत्यवक्ता कोऽपि नास्तीत्यर्थः । दानेन द्विजान् जयति वयं न गृह्णीम इति द्विजकर्तृकोक्तिमन्तरा दानप्रवाहं न निवर्तयतीत्यर्थः । शुश्रूषया सेवया गुरून् जयति अतितृप्ता वयमित्युक्तिमन्तरा पादपीडनादेर्न निवर्तते इत्यर्थः । शात्रवान् शत्रुसंबन्धियुद्धोत्साहादीन् धनुषा धनुःप्रदर्शनमात्रेण जयति निवर्तयति ॥ २९ ॥

गो० टी०—सत्येनेति । सत्येन भूतहितेन लोकान् स्वर्गादिवैकुण्ठपर्यन्तान् जयति स्वाधीनान् करोति दीनान् दरिद्रान् दानेन धनप्रदानेन जयति वशीकरोति । गुरून् शुश्रूषया जयति स्वहितोपदेशप्रवणान् करोति । शात्रवान् शत्रून् धनुषा धनुःप्रदर्शनमात्रेण नतु बाणप्रयोगेण युधि युद्धे नतु कपटवृत्त्या जयति निरस्यतीत्यर्थः । वीर इति सर्वत्र संबध्यते दयावीरस्त्यागवीरो विद्यावीरः पराक्रमवीर इत्येवं चोलमहीपतिः कदाचित्सन्निहितं मध्यमवीथिभट्टारकं प्रति आत्मानं मानुषं मन्य इति वदन् रामः कथं जटायुषो मोक्षं दत्तवानिति पप्रच्छ सोऽपि सत्येन लोकान् जयतीत्युक्त्वा महतीं बहुमतिमवाप्तवानित्यैतिह्यमत्र श्रेयम् ॥ २९ ॥

३० ] ति० टी०—सत्यं सत्यवचः दानं पारलौकिकम् त्याग ऐहिकप्रयोजनं दानम् मित्रता सत्त्व शौचं बाह्यान्तरशुद्धिः आर्जवं वञ्चनाराहित्यम् ॥ ३० ॥

रा० टी०—रामगुणा न कादाचित्का इति बोधयन्नाह—सत्यमिति । सत्यादयो राघवे रामे ध्रुवाणि नित्यानि ॥ ३० ॥

गो० टी०—सत्यादीनि च न कादाचित्कानीत्याह—सत्यमिति । तपःप्रभृतिगुणषट्कं पूर्वश्लोकेऽर्थसिद्धमनूद्यते दानं परलोकप्रयोजनं तपः शास्त्रविहितभोजननिवृत्त्यादिरूपम् त्यागः ऐहिकप्रयोजनः प्रीत्यर्थः मित्रता सर्वसुहृत्त्वं शौचं स्नानजन्यशुद्धिः आर्जवं परचित्तानुवर्तित्वं विद्या तत्त्वज्ञानं गुरुशुश्रूषा गुरोः शुश्रूषा पादसंवाहनादिपरिचर्या ॥ ३० ॥

३१ ] ति० टी०—पापं वनवासरूपं स्वस्य पापजनकमाशंससे प्रार्थयसे । शमदमादिसंपत्त्या महर्षिसमतेजस्त्वम् ३१॥

रा० टी०—तस्मिन्निति । देवोपमे देवानुयोगिकसादृश्यप्रतियोगिनि रामे पापमभिषेकध्वंसकारणभूतादृष्टमाशंसे वाचयसि अदृष्टवशादभिषेकनिवृत्तिर्जातेति प्रकल्प्य जना वदिष्यन्तीति तात्पर्यम् । एतेन रामस्य नादृष्टतन्त्रत्वमिति बोधितम् ॥ ३१ ॥

गो० टी०—तस्मिन्निति । आर्जवसंपन्न इति दानादिसंपत्तेरप्युपलक्षणं पापं विवासनरूपमाशंससे प्रार्थयसि ॥ ३१ ॥

३२–३३ ] ति० टी०—लोकस्य लोकं प्रति [illegible]रवादिनः स्वस्य कं प्रत्यप्युक्तमप्रियं वाक्यं न स्मरामि । सो[illegible] त्वत्कृते त्वदुक्तक्रियासंपादननिमित्तं प्रियं राममप्रियं कथं [illegible]क्ष्यामीति संबन्धः । प्रियवादिनो रामस्य तत्कर्तृकं तद्विषयकं चेत्यर्थ इति कश्चित् ॥ ३२ ॥ ३३ ॥

१ सत्येनेति गो. रा. पाठः । २ दीनानिति गो. पाठः । ३ दम इति गो. पाठः ।

मम वृद्धस्य कैकेयि गतान्तस्य तपस्विनः । दीनं लालप्यमानस्य कारुण्यं कर्तुमर्हसि ॥ ३४ ॥
पृथिव्यां सागरान्तायां यत्किंचिदधिगम्यते । तत्सर्वं तव दास्यामि मा च त्वं मृत्युमाविश ॥ ३५ ॥
अञ्जलिं कुर्मि कैकेयि पादौ चापि स्पृशामि ते । शरणं भव रामस्य माधर्मो मामिह स्पृशेत् ॥ ३६ ॥
इति दुःखाभिसंतप्तं विलपन्तमचेतनम् । घूर्णमानं महाराजं शोकेन समभिप्लुतम् ॥ ३७ ॥
पारं शोकार्णवस्याशु प्रलपन्तं पुनः पुनः । प्रत्युवाचाथ कैकेयी रौद्रा रौद्रतरं वचः ॥ ३८ ॥
यदि दत्त्वा वरौ राजन्पुनः प्रत्यनुतप्यसे । धार्मिकत्वं कथं वीर पृथिव्यां कथयिष्यसि ॥ ३९ ॥
यदा समेता बहवस्त्वया राजर्षयः सह । कथयिष्यन्ति धर्मज्ञ तत्र किं प्रतिवक्ष्यसि ॥ ४० ॥

---

रा० टी०—नेति । योऽहं प्रियवादिनो रामस्य अप्रियं प्रीतिविषयीभूतवचनविरुद्धं लोकस्य वाक्यं लोककर्तृकवचनं न स्मरामि न श्रुतमित्यर्थः सोऽहमप्रियं कथं वक्ष्यामि ॥ ३२ ॥

गो० टी०—नेति । लोकस्य जनमात्रस्य प्रियवादिनः प्रियवदनशीलस्य किमुतास्माकमिति भावः रामस्य संबन्धि अप्रियं विवासनविषयं वाक्यं न स्मरामि स्मर्तुमपि न शक्नोमीत्यर्थः । सः तदस्मर्ता अहं त्वत्कृते परुषोक्तिमत् कृते रामं सर्वस्य रमयितारं प्रियं रमयितृत्वाभावेऽपि पुत्रत्वेन प्रियं प्रति कथमप्रियं वक्ष्यामि ॥ ३२ ॥

रा० टी०—इदानीं रामवियोगे मत्प्रवृत्तिर्न संभवतीति बोधयन्नाह—क्षमेति । गतिः प्रवृत्तिः का न काचिदित्यर्थः ॥ ३३ ॥

गो० टी०—क्षमेति । यस्मिन् क्षमादयो वर्तन्ते तमृते मम का गतिः को वा रक्षकः, तादृशं रक्षकं कथं त्यक्ष्यामीति भावः ३३

३४ ] ति० टी०—गतान्तस्य प्राप्तचरमकालस्य तपस्विनः शोचनीयावस्थस्य दीनस्य कारुण्यं दयाम् ॥ ३४ ॥

रा० टी०—ममेति । वृद्धस्य वृत्तं रामसंबन्ध्यतिरिक्तवृत्तिं जहाति त्यजति इति वृद्धस्तस्य अत एव गतान्तस्य निवृत्तकालस्य कालभीतेरपि रहितस्येत्यर्थः तपस्विनः रामविषयकविचारशीलस्य अत एव दीनं रामवियोगभीतिहेतुकदीनताविशिष्टवचनं लालप्यमानस्य पुनः पुनः कथयतो मम कारुण्यं दयां कर्तुं त्वमर्हसि रामवियोगोद्योगं न कुर्विति तात्पर्यम् ॥ ३४ ॥

गो० टी०—ममेति । गतान्तस्य गतः प्राप्तः अन्तश्चरमकालो येन तस्य वृद्धत्वेऽपि प्राप्तचरमकालस्येत्यर्थः तपस्विनः शोचनीयावस्थस्य लालप्यमानस्य पुनः पुनः कथनशीलस्य मम मयीत्यर्थः. संबन्धसामान्ये षष्ठी ॥ ३४ ॥

३५ ] ति० टी०—मृत्युं मन्मृत्युसंपादकमिष्टाभिनिवेशम् ३५॥

रा० टी०—रामातिरिक्तमन्यत्सर्वं तवेप्सितं दास्यामीति बोधयन्नाह—पृथिव्यामिति । मृत्युं शोकं त्वं मा आविश भरतादिभिर्निन्दितायास्तवापि अतिशोको भविष्यतीति तात्पर्यम् ॥ ३५ ॥

गो० टी०—पृथिव्यामिति । सागरान्तायामित्यनेन कृत्स्नामिति कथ्यते यत्किंचिदुत्तममधिगम्यते लभ्यते तत्सर्वं तव तुभ्यं दास्यामि मृत्युः रामविषयकोपः ॥ ३५ ॥

३६ ] ति० टी०—कुर्मि करोमि । शरणं रक्षिका । अधर्मो ज्येष्ठातिक्रमेण कनीयसोऽभिषेककृतो निरपराधस्य त्यागकृतश्च ॥ ३६ ॥

रा० टी०—अञ्जलिमिति । कुर्मि करोमि शरणं रक्षित्री अधर्मः रामाभिषेकप्रतिज्ञानिवृत्तिजनितोऽदृष्टविशेषः ॥ ३६ ॥

गो० टी०—अञ्जलिमिति । कुर्मि करोमि अञ्जलिपूर्वकं पादवन्दनं करोमीत्यर्थः । शरणं रक्षितृ अधर्मः प्रतिज्ञाभङ्गरूपः रामाभिषेकमनुजानीहीत्यर्थः ॥ ३६ ॥

३७ ] ति० टी०—अचेतनं मूर्च्छांप्राप्तम् घूर्णमानं घूर्णमानशरीरम् ॥ ३७ ॥

३८ ] ति० टी०—पारं निस्तारम् प्रलपन्तं प्रार्थयन्तम् रौद्रतरं दारुणतरम् ॥ ३८ ॥

रा० टी०—इतीति । दुःखाभिसंतप्तं रामवियोगशङ्काजनितक्लेशविशिष्टं घूर्णमानं किं कर्तव्यमिति मनसा भ्रमन्तं शोकार्णवस्य पारमुत्तरणं प्रलपन्तं याचमानं महाराजं रौद्रा भयंकरवचनोच्चारणकर्त्रीत्वेन भयंकरा कैकेयी रौद्रतरं रामवियोगसूचकत्वेन भयंकरं वचः प्रत्युवाच । द्वयोरेकत्रान्वयः ॥ ३७ ॥ ३८ ॥

गो० टी०—इतीत्यादि । श्लोकद्वयमेकान्वयम् । अचेतनं मूर्च्छितं घूर्णमानं इतस्ततो विवर्तमानं शोकेन भाविरामविरहस्मरणदुःखेन समभिप्लुतं सम्यगभिव्याप्तं पारमन्तं रामाभिषेकमिति यावत् । अथ कृत्स्नमिति वचोविशेषणं रौद्रा भयङ्करविकारा रामाभिषेकनिवर्तनविषये यद्यद्वक्तव्यं तत्सर्वमुवाचेत्यर्थः ॥ ३७ ॥ ३८ ॥

३९ ] ति० टी०—प्रत्यनुतप्यसे उक्तकरणाभावत्या कथयिष्यसि । लोकैरिति शेषः । स्वार्थण्यन्ताद्धेतुमण्णौ रूपम् ३९॥

रा० टी०—तद्वचनमेवाह—यदीति । धार्मिकत्वं धर्मं कथयिष्यसि उपदेक्ष्यसि धर्मरहितपुरुषकर्तृकोपदेशस्य हास्यास्पदत्वादिति भावः ॥ ३९ ॥

गो० टी०—यदीति । धार्मिकत्वं स्वीयमिति शेषः ॥ ३९॥

४० ] ति० टी०—यदा बहवो मिलिता राजर्षयस्त्वया सह मद्विषयवरदानादिविषयगोष्ठीं करिष्यन्ति तत्र तत्प्रश्ने किं प्रतिवक्ष्यसि किमुत्तरयिष्यसि ॥ ४०

रा० टी०—यदेति । त्वया सह समेताः राजर्षयः यदा

---

१ त्वां मधुराभिक्षेरिति गो. पाठः । २ परमिति रा. पाठः । ३ प्रार्थयन्तमिति गो. पाठः । ४ धर्मज्ञा इति गो. पाठः ।

यस्याः प्रसादे जीवामि या च मामभ्यपालयत् । तस्याः कृता मया मिथ्या कैकेय्या इति वक्ष्यसि ॥ ४१ ॥
किल्बिषं त्वं नरेन्द्राणां करिष्यसि नराधिप । यो दत्त्वा वरमद्यैव पुनरन्यानि भाषसे ॥ ४२ ॥
शैब्यः श्येनकपोतीये स्वमांसं पक्षिणे ददौ । अलर्कश्चक्षुषी दत्त्वा जगाम गतिमुत्तमाम् ॥ ४३ ॥
सागरः समयं कृत्वा न वेलामतिवर्तते । समयं मानृतं कार्षीः पूर्ववृत्तमनुस्मरन् ॥ ४४ ॥
स त्वं धर्मं परित्यज्य रामं राज्येऽभिषिच्य च । सह कौसल्यया नित्यं रन्तुमिच्छसि दुर्मते ॥ ४५ ॥

कथयिष्यन्ति प्रतिज्ञातौ वरौ केकय्यै त्वया किं न दत्तौ इति प्रक्ष्यन्ति तत्र तदा किं प्रतिवक्ष्यसि किमुत्तरं दास्यसीत्यर्थः ॥ ४० ॥

गो० टी०—यदेति । कथयिष्यन्ति उपकारिण्याः कैकेय्याः किंप्रत्युपकृतमिति कदाचिद्धर्मप्रसङ्गे वक्ष्यन्ति तत्र तदा किं प्रतिवक्ष्यसि कीदृशं प्रत्युत्तरं दास्यसि ॥ ४० ॥

४१ ] ति० टी०—न किमप्युत्तरं शक्यमित्याह—यस्या इति । प्रसादे शम्बरमायानिवर्तनलक्षणानुग्रहे सति । 'प्रयत्ने'[1] इति पाठे रथापनयनादिप्रयत्ने इत्यर्थः । या मामभ्यपालयच्छीतोपचारादिना ररक्ष । मया मिथ्या कृता प्रतिज्ञेति शेषः । इति वक्ष्यसि किमिति सोपहासं वाक्यम् ॥ ४१ ॥

रा० टी०—उचितोत्तरस्याभावादनुचितमेवोत्तरं दास्यसीत्याह—यस्या इति । यस्याः प्रयत्नेऽहं जीवामि या सदैव मां प्रसादयतीत्यर्थः या अभ्यपालयत् सारथ्यकरणेन शत्रुभ्यः अरक्षत्तस्याः केकय्याः न्यासभूतवरदानाय कृता प्रतिज्ञा मिथ्या कृता मयेति वक्ष्यसि एवं सद्भिर्न वक्तव्यमिति तात्पर्यं तेन त्वया वरौ दातव्यावेवेति व्यञ्जितम् ॥ ४१ ॥

गो० टी०—यस्या इति । प्रसादे सति जीवामि प्रसादेन जीवामीत्यर्थः । प्रसादमेवाह—या चेति । या च मां मूर्च्छितदशायां रणादन्यत्रापनीयाभ्यपालयत् शिशिरोपचारादिना ररक्षेत्यर्थः तस्याः मया मिथ्या असत्यं कृतमिति[2] वक्ष्यसि किमिति काकुः, तस्मादद्य प्रतिज्ञां निर्वहेति भावः ॥ ४१ ॥

४२ ] ति० टी०—नरेन्द्राणां स्ववंश्यानां किल्बिषमयशोरूपं मालिन्यं करिष्यसि । तत्र हेतुः—य इत्यादि । यद्वंशस्थ ईदृशः पापी तद्वंश्यः सर्वोऽपीदृश एवेति वदिष्यन्ति लोका इति भावः ॥ ४२ ॥

रा० टी०—त्वत्कर्तृकाधर्माचरणे लोकानां महदनुवर्तित्वाद्राजान्तराण्यपि तथैव करिष्यन्तीति बोधयन्ती आह—किल्बिषमिति । अन्यानि वरदानवचनविरुद्धानि ॥ ४२ ॥

गो० टी०—किल्बिषत्वमिति[3] । किल्बिषत्वमपयशोरूपमालिन्यं नरेन्द्राणामित्यनेन सजातीयेष्वेकेन कृतमपयशः सर्वानपि स्पृशति सर्वे राजान एवंविधा इति । अन्यानि वरदानविरुद्धानि ॥ ४२ ॥

४३ ] ति० टी०—प्रतिज्ञाया अपालनस्याधर्मत्वं बोधयन्ती पूर्वेषां दुष्करप्रतिज्ञापालनं दर्शयति—शैब्य इति । अत्रेयं कथा—इन्द्राग्नी श्येनकपोतरूपौ शैब्यस्यौदार्यजिज्ञासया भक्ष्यभक्षकभावापन्नौ शैब्यसमीपं गतौ । ततः कपोतोऽभयार्थी शैब्याङ्कं प्रविवेश तस्मै च सोऽभयं ददौ ततः श्येनेन मद्भक्ष्यं देवविहितं त्यज' इत्युक्ते 'नाहं तं त्यजेयम्, अपितु तत्प्रतिनिधिभूतं स्वमांसमेव ददामि' इत्युक्त्वा सर्वं स्वमांसं श्येनाय दत्तवानिति । अलर्कश्च राजर्षिर्ब्राह्मणायान्धाय वरं प्रतिश्रुत्य तेन राजचक्षुषा स्वचक्षुः संधानरूपे वरे वृते स्वचक्षुषी दत्तवानिति ॥ ४३ ॥

रा० टी०—प्रतिज्ञापालने श्रद्धोत्पत्त्यै शिष्टाचारं प्रमाणयन्ती आह—शैब्य इत्यादिश्लोकद्वयेन । श्येनकपोतीये श्येनकपोतयोर्विवादे पक्षिणे श्येनाय स्वमांसं शैब्यो राजा ददौ दत्त्वा उत्तमां गतिं जगाम । अलर्कश्चक्षुषी ददौ ब्राह्मणायेति शेषः । उत्तमां गतिं जगाम । इत्थं पुराणप्रसिद्धिः शैब्यौदार्यपरीक्षणाय इन्द्राग्नी श्येनकपोतौ भूत्वा भक्ष्यभक्षकभावं प्राप्तौ शैब्यसमीपमागतौ तत्राऽभयकामः कपोतः शैब्याङ्कमाविवेश स च तस्मै अभयमददात् । ततो देवविहितं मद्भक्ष्यं देहीति श्येनेनोक्तः शैब्योऽहमेनं न दास्यामि मांसान्तरं भक्ष्यं मत्तो गृहाणेत्युवाच । तत्रैतत्प्रतिनिधीभूतं स्वशरीरमांसमेव मह्यं देहीति श्येनेनोक्तः शैब्यः सकलं स्वशरीरमांसं ददौ तेन सोऽतुलां कीर्तिं लेभे इति । राजर्षिरलर्कश्चान्धब्राह्मणाय वरं दास्यामीति प्रतिज्ञाय स्वचक्षुर्मह्यं देहीति तेन याचिते स्वचक्षुर्दत्तवानिति ॥ ४३ ॥

गो० टी०—दुष्करस्यापि प्रतिज्ञातस्य कर्तव्यत्वं पूर्वचक्रवर्त्यनुष्ठानेन दर्शयति—शैब्य इति । शैब्यो राजा श्येनकपोतीये श्येनकपोतयोर्विरोधे प्राप्ते पक्षिणे श्येनाय स्वमांसं कपोतमांसप्रतिनिधित्वेन ददौ इत्थं किल पौराणिकी गाथा—इन्द्राग्नी श्येनकपोतौ भूत्वा शैब्यौदार्यं परीक्षितुं भक्षकभक्ष्यभावमापन्नौ शैब्यसमीपमागतौ । तत्र कपोतोऽभयार्थी शैब्याङ्कमाविवेश । तस्मै च सोऽभयं ददौ । ततः श्येनेन मद्भक्षणं देवविहितं त्यजेत्युक्ते नाहं त्यजेयमपि तु तत्प्रतिनिधिमांसमेव ददामीत्युक्ते तर्हि स्वन्मांसमेव मे प्रयच्छ नान्यदित्युक्ते स्वमांसमपि सर्वं दत्तवानिति । अलर्कश्च राजर्षिर्ब्राह्मणायान्धाय वरं प्रतिश्रुत्य तेन राजचक्षुषा स्वचक्षुःप्रतिसंधाने अर्थिते स्वचक्षुषी दत्त्वा उत्तमां गतिं जगाम । किंच सागरः समुद्रो देवैः प्रार्थितो वेलानतिक्रमाय तेभ्यः प्रतिश्रुत्याद्यापि वेलां नातिवर्तते तस्मात्त्वमपि पूर्वं[4] शैब्यादिवृत्तान्तमनुस्मरन्समयं प्रतिज्ञां अनृतं मिथ्याभूतं मा कार्षीः ॥ ४३ ॥ ४४ ॥

४४—४५ ] ति० टी०—सागरः समुद्रो वेलानतिक्रमाय देवैः प्रार्थितस्तेभ्यस्तत्प्रतिश्रुत्य न वेलामतिवर्तते एवं पूर्वेषां शैब्यादीनां वृत्तं स्मरन्समयं प्रतिज्ञामनृतां मा कार्षीः ॥ ४४ ॥ ४५ ॥

१ प्रयत्ने इति रा० पाठः । २ कृतमिति गो० पाठः । ३ किल्बिषत्वमिति गो० पाठः । ४ पूर्वमिति गो० पाठः ।

भवत्वधर्मो धर्मो वा सत्यं वा यदि वानृतम् । यत्त्वया संश्रुतं मह्यं तस्य नास्ति व्यतिक्रमः ॥ ४६ ॥
अहं हि विषमद्यैव पीत्वा बहु तवाग्रतः । पश्यतस्ते मरिष्यामि रामो यद्यभिषिच्यते ॥ ४७ ॥
एकाहमपि पश्येयं यद्यहं राममातरम् । अञ्जलिं प्रतिगृह्णन्तीं श्रेयो ननु मृतिर्मम ॥ ४८ ॥
भरतेनात्मना चाहं शपे ते मनुजाधिप । यथा नान्येन तुष्येयमृते रामविवासनात् ॥ ४९ ॥
एतावदुक्त्वा वचनं कैकेयी विरराम ह । विलपन्तं च राजानं न प्रतिव्याजहार सा ॥ ५० ॥
श्रुत्वा तु राजा कैकेय्या वाक्यं परमशोभनम् । रामस्य च वने वासमैश्वर्यं भरतस्य च ॥ ५१ ॥
नाभ्यभाषत कैकेयीं मुहूर्तं व्याकुलेन्द्रियः । प्रैक्षतानिमिषो देवीं प्रियामप्रियवादिनीम् ॥ ५२ ॥
तां हि वज्रसमां वाचमाकर्ण्य हृदयाप्रियाम् । दुःखशोकमयीं श्रुत्वा राजा न सुखितोऽभवत् ॥ ५३ ॥

रा० टी०—सागर इति । सागरः समुद्रः समयं देवप्रार्थनया वेलानतिवर्तनाय प्रतिज्ञां कृत्वा वेलां नातिवर्तते अधिकं न गच्छतीत्यर्थः । अतः पूर्ववृत्तपूर्वेषां वृत्तान्तमनुस्मरन् सन् अनृतं मा कार्षीः ॥ ४४ ॥

रा० टी०—स इति । दुर्मते दुःस्थिता भाविवियोगजशोकेन विवेकरहिता मतिर्यस्य तत्संबोधनम् । स त्वं रन्तुमिच्छसि किमिति शेषः । एतेन त्यक्तधर्मणां विहारादिर्न सिध्यतीति सूचितम् ॥ ४५ ॥

गो० टी०—एवं न्यायमुक्त्वा तदननुमोदमानं प्रत्याह—स त्वमिति ॥ ४५ ॥

४६ ] ति० टी०—सिद्धान्तमाह—भवत्विति । मदुक्तो रामविवासनपूर्वको भरताभिषेको धर्मो वाधर्मो वा भवतु । नन्वियं रत्यर्थं मिथ्यैव मे प्रतिज्ञा तत्काले मिथ्यावचनस्य धर्माननुमतत्वादिति चेत्तत्राह—यदिति । त्वया यन्मह्यं सत्यमनृतं वा संश्रुतं प्रतिज्ञातं तस्य व्यतिक्रमोऽकरणं नास्ति ॥४६॥

रा० टी०—ननु रामाभिषेकप्रतिज्ञात्यागेऽपि अधर्मः स्यादित्यत । आह—भवत्विति । तस्य मदर्थप्रतिज्ञातस्य व्यतिक्रमः अन्यथाभावो नास्ति न कार्य इत्यर्थः ॥ ४६ ॥

गो० टी०—स्वसिद्धान्तमाह—भवत्विति । मदुक्तो रामविवासनपूर्वको भरताभिषेकः धर्मो वाऽधर्मो वा भवतु रामं प्रव्राजयारण्यमित्यादि मदुक्तं वचनं सत्यं समीचीनं वा अनृतं असमीचीनं वा भवतु त्वया यन्मह्यं संश्रुतं शपथपूर्वकं दास्यामीति प्रतिज्ञातं तस्य व्यतिक्रमोऽन्यथाभावो नास्तीति योजना ॥ ४६ ॥

४७ ] ति० टी०—विपक्षे । बाधकमाह—अहमित्यादि । पश्यतः पश्यन्तं त्वामनादृत्य ॥ ४७ ॥

रा० टी०—व्यतिक्रमे दोषमाह—अहमिति । बहु अधिकम् ॥ ४७ ॥

गो० टी०—व्यतिक्रमे किं करिष्यसीत्यत्राह—अहमिति ४७

४८ ] ति० टी०—अञ्जलिं प्रतिगृह्णन्तीं राजमातृत्वेन सर्वलोकानामिति शेषः । नन्विति निश्चये । 'न कियां समुपाददे' इति पाठेऽपि मरिष्यामीत्येव फलति ॥ ४८ ॥

रा० टी०—एकेति । एकाहं एकदिनमपि अञ्जलिं पुत्राभिषेकहेतुकबद्धयुगलकरसूचितप्रजाप्रणतिं प्रतिगृह्णन्तीं राममातरं कौसल्याम् ॥ ४८ ॥

गो० टी०—कौसल्यातोऽप्यधिकं भोगं तव दास्यामीत्यत्र तत्प्राधान्यं न सहे इत्याह—एकाहमिति । अञ्जलिं प्रतिगृह्णन्तीं राजमातृत्वेन सर्वेषामिति शेषः । श्रेयः तदा तदपेक्षयेति शेषः ॥ ४८—५० ॥

४९–५० ] ति० टी०—ते तव समीपे आत्मना प्राणभूतेन भरतेन शपे तच्छपथपूर्वकं कथयामि । रामविवासनादृतेऽन्येन रत्नादिना न तुष्ये इति ॥ ४९ ॥ ५० ॥

रा० टी०—भरतेनेति । ते तवाग्रे भरतेन आत्मना स्वेन यथावत् शपे भरतस्य स्वस्य च शपथं करोमीत्यर्थः । अन्येन धनादिना न तुष्येयम् ॥ ४९ ॥

रा० टी०—एतावदिति । विरराम निवृत्ते अत एव विलपन्तं विविधवचनमुच्चारयन्तं राजानं न प्रतिव्याजहार प्रत्युत्तरयाञ्चकार ॥ ५० ॥

५१ ] ति० टी०—अशोभनं परं रामवनवासभरतैश्वर्यविषयं वाक्यं श्रुत्वेत्यन्वयः ॥ ५१ ॥

रा० टी०—श्रुत्वेति । राजा तु रामस्य वने वासं वनवासबोधकमित्यर्थः । भरतस्य ऐश्वर्यसंबन्धीत्यर्थः । अशोभनमभिषेकनिवृत्तिहेतुत्वेन शोभारहितं कैकय्या वाक्यं श्रुत्वा परमन्यत् किंचिन्नाभ्यभाषत । भाषणरहितत्वेऽपि किमकरोदित्यत आह—अनिमिषः सन् प्रैक्षत अपश्यत् । श्लोकद्वयमेकान्वयि ॥ ५१ ॥ ५२ ॥

गो० टी०—श्रुत्वेति । वनवासैश्वर्यरूपं वृतं वरमिति संबन्धः ॥ ५१ ॥

५२–५३ ] ति० टी०—प्रैक्षत कोपादिति शेषः॥५२॥५३॥

गो० टी०—नाभ्यभाषतेति। प्रैक्षतानिमिष इति निरन्तरचिन्तावशात् कोपाद्वा निर्निमेषप्रेक्षणम् ॥ ५२ ॥

रा० टी०—तामिति । हृदये न प्रीयते इति हृदयाप्रियाम् तत्र हेतुः दुःखशोकमयीं संभावितवियोगहेतुकदुःखजनकशोकप्रचुरां सुखितः सुखविशिष्टो नाभवत् ॥ ५३ ॥

१ विवासनमिति रा. पाठः । २ कृतमिति गो. पाठः । ३ घोरमिति गो. पाठः ।

स देव्या व्यवसायं च घोरं च शपथं कृतम् । ध्यात्वा रामेऽतिनिःश्वस्यच्छिन्नस्तरुरिवापतत् ॥५४॥
नष्टचित्तो यथोन्मत्तो विपरीतो यथातुरः । हृततेजा यथा सर्पो बभूव जगतीपतिः ॥ ५५ ॥
दीनयातुरया वाचा इति होवाच कैकयीम् । अनर्थमिममर्थाभं केन त्वमुपदेशिता ॥ ५६ ॥
भूतोपहतचित्तेव ब्रुवन्ती मां न लज्जसे । शीलव्यसनमेतत्ते नाभिजानाम्यहं पुरा ॥ ५७ ॥
बालायास्तत्त्विदानीं ते लक्षये विपरीतवत् । कुतो वा ते भयं जातं या त्वमेवंविधं वरम् ॥ ५८ ॥
राष्ट्रे भरतमासीनं वृणीषे राघवं वने । विरमैतेन भावेन त्वमेतेनानृतेन च ॥ ५९ ॥
यदि भर्तुः प्रियं कार्यं लोकस्य भरतस्य च । नृशंसे पापसंकल्पे क्षुद्रे दुष्कृतकारिणि ॥ ६० ॥

गो० टी०—तामिति । दुःखशोकमयीमिति अनुचितभरताभिषेकात् दुःखं रामविवासनाच्छोकः ॥ ५३ ॥

५४ ] ति० टी०—व्यवसायं रामविवासनविषयं निश्चयम् । घोरं शपथं भरतशपथरूपं स्वकृतरामसुकृतादिशपथं वा ॥५४॥

रा० टी०—स इति । देव्या कैकय्याः व्यवसायं विवासनविषयकनिश्चयं घोरं कृतं शपथं च ध्यात्वा स्मृत्वा ॥ ५४ ॥

गो० टी०—स इति । शपथं कृतं स्वेनेति शेषः । निश्वस्येति अशक्यप्रतीकारत्वादिति भावः ॥ ५४ ॥

५५ ] ति० टी०—विपरीतः संनिपातादिना विपरीतप्रकृतिः आतुरो व्याधिग्रस्तः । हृततेजाः मन्त्रेणेति शेषः ॥ ५५ ॥

रा० टी०—राज्ञो वृत्तान्तरमाह—नष्टेति । नष्टचित्तः त्यक्तपूर्वचैतन्यवद्व्रियमाणः अत एव आतुरो व्याध्यादिग्रस्त इव विपरीतः परिणतक्रियः ॥ ५५ ॥

गो० टी०—नष्टचित्त इति । नष्टचित्तः कलुषितहृदयः उन्मत्तः उन्मादी विपरीतः सन्निपातादिना विपरीतप्रकृतिः आतुरः व्याधितः 'व्याधितोऽपटुरातुरः' इत्यमरः । हृततेजाः मन्त्रापहृतवीर्यः ॥ ५५ ॥

५६ ] ति० टी०—उपदेशितोपदिष्टा ॥ ५६ ॥

रा० टी०—दीनयेति । राजा दशरथः दीनया वाचा इत्युवाच । तद्वचनमेवाह—अर्थाभम् अर्थत्वेन प्रतीयमानम् ॥ ५६ ॥

गो० टी०—दीनयेति ॥ ५६ ॥

गो० टी०—अनर्थमित्यादि । उपदर्शिता बोधिता शीलव्यसनं सद्वृत्तभंशम् 'व्यसनं विपदि भ्रंश' इत्यमरः । नाभिजानामि किंतु शीलमेवाभिजानामि ॥ ५७ ॥

५७ ] ति० टी०—मां न लज्जसे पतिसमक्षमीदृशलोकव्यवहारस्य लोकविगीतत्वात् । शीलव्यसनं सद्वृत्तस्य विशेषेणासनं त्यागः अत एवेदानीं भूतोपघातोत्प्रेक्षा ॥ ५७ ॥

रा० टी०—भूतेति । भूतैर्दुर्ग्रहादिहेतुकप्रेतादिभिरुपहतमभ्यवाहृतं चित्तं यस्याः सा ते तव शीलव्यसनं कुलाङ्गनोचितशीलत्यागं पुरा नाभिजानामि अभ्यजानाम् यावत्तु ऐति वद् ॥ ५७ ॥

५८ ] ति० टी०—बालाया इति बालाया अपीत्यर्थकं पूर्वान्वयि । तत्तु शीलं तु इदानीं प्रौढत्वावस्थायामपि विपरीतवद्विपरीताहं दुःशीलाहं लक्षये । कुतो निमित्तात्केन निमित्तेन रामादीदृशं भयं जातमित्यर्थः ॥ ५८ ॥

रा० टी०—बालाया इति । तत्पूर्ववृत्तकुलाङ्गनोचितशीलं विपरीतवत् अन्यथैव लक्षये इवेन वस्तुतो नान्यथाभाव इति बोधितम् तेनैवं कथने ते भीतिः कारणमिति ध्वनितम् । अर्धं पृथक् । भीतौ निमित्तं पृच्छति—कुत इति । ते तव कुतः स्वतः परबोधनाद्वेति भावः । भयग्रौव्यमाह—राष्ट्रे आसीनं भरतं राघवं रामं वने चरन्तमिति शेषः एवंविधं वरं वृणीषे अर्धद्वयमेकान्वयि ॥ ५८ ॥

गो० टी०—तत्र हेतुमाह—बालाया इति । इदानीं प्रौढतायां तत् शीलं विपरीतवत् विपरीतत्ववत् भावप्रधाननिर्देशः स्वार्थे वतिर्वा ॥ ५८ ॥

गो० टी०—कुत इति । कुतो निमित्तादेवंविधमित्यस्यैव विवरणम् ॥ ५९ ॥

५९ ] ति० टी०—वरमाह—राष्ट्रे इति । राष्ट्रे भरतमासीनं वने राघवमासीनं वृणीषे एतेन निर्धूतपातिव्रत्यलक्षणेन भावेनोपलक्षिता । किं च एतेनाशक्यवरद्वारकेणानृतेन ममानृततासंपादकेन कर्मणोपलक्षिता त्वमेवंवराद्विरम ॥ ५९ ॥

रा० टी०—विरमेति । यदि भर्त्रादीनां प्रियं कार्यं तदा एतेन भावेन रामविवासनभरताभिषेकाभिप्रायेण अभिप्रायात् एतेन स्वतः परतो वा जातेन अनृतेन मिथ्याभूतरामहेतुकभयेन तादृशभयात् विरम निवर्तस्व ॥ ५९ ॥

गो० टी०—राष्ट्र इति । वने राघवमिति आसीनमित्यनुषङ्गः । एतेन भावेन भरताभिषेकरूपेण विरम मा प्रवर्तिष्ठाः अनृतेन अनृतपदवाच्येन एतेन वा रामविवासनरूपेण भावेन वा विरमेति संबन्धः ॥ ६० ॥

६० ] ति० टी०—यदि भर्तुर्मम लोकस्य भरतस्य च प्रियं कार्यं कर्तव्यं तदा विरमेति संबन्धः ॥ ६० ॥

रा० टी०—नृशंसे इति । नृशंसे क्रूरचेष्टिते पापसंकल्पे पापहेतुभूताभिषेकप्रतिज्ञाहापनहेतुभूतसंकल्पविशिष्टे क्षुद्रे विचाररहिते दुष्कृतकारिणि दुष्कृतमस्मिन् समये अस्माभिरकर्तव्यं शोकादिकमित्यर्थः तत्कारिणि दुर्वं दुःखकारणी

१ तु गिरा राजेति गो. रा. पाठः । २ उपदर्शितेति गो. पाठः । ३ वेति गो. पाठः ।

किं नु दुःखमलीकं वा मयि रामे च पश्यसि । न कथंचिदृते रामाद्भरतो राज्यमावसेत् ॥ ६१ ॥
रामादपि हितं मन्ये धर्मतो बलवत्तरम् । कथं वक्ष्यसि रामस्य वनं गच्छेति भाषिते ॥ ६२ ॥
मुखवर्णं विवर्णं तु यथैवेन्दुमुपप्लुतम् । तां तु मे सुकृतां बुद्धिं सुहृद्भिः सह निश्चिताम् ॥ ६३ ॥
कथं द्रक्ष्याम्यपावृत्तां परैरिव हतां चमूम् । किं मां वक्ष्यन्ति राजानो नानादिग्भ्यः समागताः ॥ ६४ ॥
बालो बतायमैक्ष्वाकश्चिरं राज्यमकारयत् । यदा हि बहवो वृद्धा गुणवन्तो बहुश्रुताः ॥ ६५ ॥
परिप्रक्ष्यन्ति काकुत्स्थं वक्ष्यामीह कथं तदा । कैकेय्या क्लिश्यमानेन पुत्रः प्रव्राजितो मया ॥ ६६ ॥

---

खमलीकमपराधं मयि रामे वा किं किमर्थं पश्यसि आरोपयसीत्यर्थः ॥ ६० ॥

गो० टी०—नृशंस इति । नृशंसे निर्दये ! तत्र हेतुः पापसंकल्प इति रामविवासनरूपपापसंकल्पे ! तत्रापि हेतुः क्षुद्र इति अल्पमतिके तत्रापि हेतुः दुष्कृतकारिणीति जन्मान्तरे पापकारिणीत्यर्थः । दुःखं दुःखनिमित्तमलीकमप्रियम् 'अलीकं त्वप्रियेऽनृते' इत्यमरः ॥ ६१ ॥ ६२ ॥

६१ ] ति० टी०—दुःखं तत्साधनम् । अलीकमपराधं अयं तव क्लेशः सर्वो वृथैव त्वदिष्टस्य भरताभिषेकस्यासिद्धेरित्याह—नेति । रामं विना राज्यं नावसेत् अनेन चतुर्णामपि यथाभागं राज्यमनुमन्यस्व, यद्वास्तु भरत एव राजा रामस्तु वृद्धस्य मम समीपे तिष्ठत्विति मन्यस्व नान्यथा त्वदिष्टसिद्धिरित्युपदेशः ॥ ६१ ॥

रा० टी०—ननु स्वसुतराज्यार्थं कल्पयामीत्यत आह—नेति । रामात् ऋते विना भरतो राज्यं कथंचिन्नावसेत् । अर्थं पृथक् ॥ ६१ ॥

६२ ] ति० टी०—अत्र हेतुः—रामादपीति । हि यतस्तं भरतं रामादपि धर्मतो बलवत्तरमतिशयेन धर्मवन्तं मन्ये । भाषिते मयोक्ते सत्यपि त्वं कथं वक्ष्यसि तव तस्यातिप्रियत्वादिति भावः ॥ ६२ ॥

रा० टी०—रामादिति । बलवत्तरम् अतिबलवन्तं भरतं धर्मतः रामोपासनधर्माद्धेतोः रामादपि हितं प्रियं मन्ये इति भाषिते कथितेऽपि मयेति शेषः । त्वं वनं गच्छ इति रामस्य रामं कथं वक्ष्यसि तवापि रामविषयकप्रीतेराधिक्यात् वक्ष्यसीति भावः । कर्मणः संबन्धसामान्यत्वेन विवक्षणात् रामस्येति षष्ठी ॥ ६२ ॥

गो० टी०—कथमिति । वनं गच्छेति मया भाषिते सति विवर्णं विपरीतवर्णत्वमापादितं रामस्य मुखवर्णं उपप्लुतं राहुग्रस्तमिव कथं द्रक्ष्यामीति संबन्धः ॥ ६३ ॥

६३ ] ति० टी०—उपप्लुतमिन्दुं यथा तमिव विवर्णं मुखवर्णमहं कथं द्रक्ष्यामीति संबन्धः । किं च सुकृतां सम्यक्कर्तव्यतां तां बुद्धिं रामाभिषेकविषयाम् । तत्र हेतुः—सुहृद्भिः सह निश्चिताम् ॥ ६३ ॥

रा० टी०—मुखेति । उपप्लुतं राहुणा ग्रस्तमिन्दुं यथा ग्रस्तमिव विवर्णं स्वप्रतिज्ञाच्युतिहेतुकविकृतवर्णविशिष्टं मुखवर्णं स्वमुखकान्तिं कथं द्रक्ष्यामि दर्पणादिना कथमालोकयिष्यामीत्यर्थः । सुकृतां स्वातिविचारसंपन्नां सुहृद्भिः सहापि निश्चितां सुविचारितां परैः शत्रुभिर्हतामभिभूतामत एव अपावृत्तां पलायितां चमूमिव मे बुद्धिं मां च राजानः किं वक्ष्यन्ति एतस्य बुद्धिः अयं च नष्टप्रायाविति वदिष्यन्तीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ ६३ ॥ ६४ ॥

गो० टी०—तामिति । तां बुद्धिस्थां सुकृतां मन्त्रिभिः सह सुष्ठु निश्चितामथ सुहृद्भिः सह निश्चितां बुद्धिमपावृत्ताम् परोत्तरीकृतां कथं द्रक्ष्यामि अनुभविष्यामि ॥ ६४ ॥

६४ ] ति० टी०—अपावृत्तां पराभूताम् । नानादिग्भ्यः समागता राजानः ॥ ६४ ॥

गो० टी०—किमिति । बतेति खेदे ऐक्ष्वाकः रामः राज्यमकारयत् किमकरोत् इति मां किं वक्ष्यन्तीति संबन्धः, यद्वा बालः अज्ञः दशरथः घुणाक्षरलिपिन्यायेन दैवाच्चिरं राज्यमकरोदिति मां वक्ष्यन्ति किमिति ॥ ६५ ॥

६५ ] ति० टी०—अयं बाल ऐक्ष्वाकः किं कथं राज्यमकारयदपालयदिति मां वक्ष्यन्तीति योजना । बतेति खेदः ॥ ६५ ॥

रा० टी०—बाल इति । ऐक्ष्वाकः इक्ष्वाकुकुले प्रादुर्भूतः अयमस्मद्बुद्धिस्थो बालः चिरं बहुकालिकं राज्यमकारयत् दशरथो राज्याधिकारे स्वबालमस्थापयदित्यर्थः । इति बहु अत्यन्तं श्रुताः श्रुतवन्तः गुणवन्तः बहवो वृद्धाः यदा काकुत्स्थं रामं परिप्रक्ष्यन्ति दूरदेशादागत्य रामः क्वास्तीति प्रश्नं करिष्यन्तीत्यर्थः । तदा कैकय्या क्लिश्यमानेन मया पुत्रो रामः प्रव्राजितो वनं प्रेषित इति कथं वक्ष्यामि । इवतत्पदाविति अर्थकौ श्लोकद्वयमेकान्वयि ॥ ६५ ॥ ६६ ॥

गो० टी०—यदेति । यदा श्वः प्रातः वृद्धाः काकुत्स्थं प्रक्ष्यन्ति क्व गतो रामः कुतो नाभिषिक्त इति प्रक्ष्यन्ति तदाहं किं वक्ष्यामि प्रत्युत्तरम् ॥ ६६ ॥

६६ ] ति० टी०—परिप्रक्ष्यन्ति क्व राम इति प्रातरिति शेषः । कैकेय्या वरार्थं क्लिश्यमानेन क्लेश्यमानेन तां प्रति कृतप्रतिज्ञायाः सत्यत्वरक्षणाय प्रव्राजित इत्युत्तरं लोको न प्रतीयतीत्याह—कैकेय्येति । पूर्वदत्तेनेदानीं रामप्रव्राजनपरतया तथा प्रकटीकृतेन वरेणेति शेषः ॥ ६६ ॥

---

१ ग्रस्तमिति गो. पाठः । २ तमिति गो. पाठः । ३ हीति गो. पाठः । ४ श्वेति गो. पाठः । ५ किमकारिति गो. पाठः ।

यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति । किं मां वक्ष्यति कौसल्या राघवे वनमास्थिते ॥ ६७ ॥
किं चैनां प्रतिवक्ष्यामि कृत्वा विप्रियमीदृशम् । यदा यदा च कौसल्या दासीव च सखीव च ॥ ६८ ॥
भार्यावद्भगिनीवच्च मातृवच्चोपतिष्ठति । सततं प्रियकामा मे प्रियपुत्रा प्रियंवदा ॥ ६९ ॥
न मया सत्कृता देवी सत्कारार्हा कृते तव । इदानीं तत्तपति मां यन्मया सुकृतं त्वयि ॥ ७० ॥
अपथ्यव्यञ्जनोपेतं भुक्तमन्नमिवातुरम् । विप्रकारं च रामस्य संप्रयाणं वनस्य च ॥ ७१ ॥

गो० टी०—कैकेयीवरप्रदाननिमित्तं प्रव्राजित इत्युच्यतामित्यत्राह—कैकेय्येति । कैकेय्या क्लिश्यमानेन पूर्वंदत्तौ वरौ भरताभिषेकरामविवासनरूपेण दातव्यावित्युक्तवत्या कैकेय्या पीड्यमानेन मया प्रव्राजित इत्येतत्सत्यं यदि ब्रवीमि तदा तत् राममभिषेक्ष्यामीति वचनमसत्यं भविष्यति तद्बाधा न संभवति पूर्वप्रवृत्तत्वादिति भावः ॥ ६७ ॥

६७ ] ति० टी०—यदि यद्यपि । तत्तथापि । एतदसत्यं भविष्यति तस्यां कामहतस्तद्वचसा प्रव्राजितवानिति लोको वदिष्यतीति भावः ॥ ६७ ॥

रा० टी०—यदिति । एतमप्रव्राजनं यदि सत्यं ब्रवीमि तर्हि तत् अभिषेकप्रतिज्ञानमसत्यं भविष्यति एतेन द्वयोरप्यशक्यत्वं बोधितम् प्रव्राजनपक्षे दोषान्तरमप्याह—कौशल्या मां किं वक्ष्यति ईदृशं कर्तुमनर्हमित्यर्थः । विप्रियं विरुद्धं कर्म कृत्वा एनां कौशल्यां किं प्रतिवक्ष्यामि किमर्थं पुत्रः प्रव्राजित इति तया पृष्टः किमुत्तरं दास्यामीत्यर्थः सार्धश्लोकः संमिलितान्वयी ॥ ६७ ॥

गो० टी०—किमिति । किं मां वक्ष्यति मत्पुत्रेण ते किमपराद्धमित्येवं वक्ष्यतीति भावः । किं प्रतिवक्ष्यामि न किमपीत्यर्थः ॥ ६८ ॥

६८–७० ] ति० टी०—किं चैनामिति । मया मत्पुत्रेण वा ते किमपराद्धमिति यदा वक्ष्यति तदैनां प्रति निरुत्तर एवेत्यर्थः । यदा यदा च यतो यतश्चेत्यर्थः । दासीवद्रतिव्यवहारे, सखीवद्रहस्यकथने, भार्यावद्धर्माचरणे, भगिनीवद्धिताशंसने, मातृवद्भोजनदाने उपतिष्ठति सेवते । केचित्तु—दासीवद्गृहकार्यकरणे, सखीवत्क्रीडायाम्, भार्यावदुक्ते एव, भगिनीवज्ज्ञानयोगाद्युपाने, मातृवत्तत्त्वकथने इत्याहुः । अत उत्तरमशक्यदानमिति बोध्यम् । प्रियः पुत्रो यस्यां मम सा उक्तप्रकारैः सत्कारार्हापि तव कृते त्वद्वैमनस्यपरिहाराय न सत्कृता तदिदानीं रामविवासनवरे त्वयोक्ते सति यत्त्वयि मया सुकृतं शोभनं कर्म त्वदनुसरणरूपं कृतं तन्मां तपति पीडयति ॥ ६८–७० ॥

रा० टी०—कौशल्याया अप्रियं कर्म कर्तुं नोचितमिति बोधयितुं तद्गुणान् वर्णयन्नाह—यदेति । दासीवत् शुश्रूषासमये स्वमहिषीत्वं तिरोभूय दासीसदृशीत्यर्थः । सखीव खेलनादिसमये सखीसदृशीत्यर्थः । भार्यावत् धर्माचरणादिसमये साधारणस्त्रीसदृशी त्यक्तस्वमहिषीत्वाभिमानेत्यर्थः । भगिनीवत् मद्विवाहान्तरसमये भगिन्युत्साहसदृशोत्साहविशिष्टेत्यर्थः । मातृवत् भोजनादिसमये मातृनिष्ठपुत्रकर्तृकभोजनविषयकप्रीतिसदृशप्रीतिमतीत्यर्थः । कौशल्या यदा यदोपतिष्ठति प्राप्नोति तदा तदा तव कृते त्वत्प्रियेत्यर्थः । सत्कारार्हा देवी मया न सत्कृता तत् सत्काराकरणमिदानीं मां तपति पीडयति । त्वयि त्वद्विषये यन्मया सुकृतं संपादितमतिप्रेम तदपि अपथ्यव्यञ्जनोपेतं अपथ्यं पथ्यविरुद्धं यद्यञ्जनं दध्यादि तेनोपेतं संस्कृतं भुक्तमन्नमातुरं ज्वरादिग्रस्तमिव मां तपति । अर्धषट्कमेकान्वयि ॥ ६८–७० ॥

गो० टी०—यदेत्यादिश्लोकद्वयमेकान्वयम् । यदा यदा उपतिष्ठति तत्तदुचितकृत्येनोपास्ते तदा तदा सत्कारार्हा तव कृते न सत्कृता तव विप्रियं भविष्यतीति सा न सत्कृतेत्यर्थः । परिचर्याकाले दासीवत्परिचरति न महिषीत्वं पुरस्करोति द्यूतक्रीडादिसमये सखीव व्यवहरति धर्मानुष्ठानसमये भार्यावत् भार्यया यथा वर्तितव्यं तथा वर्तते नतु महिषीत्वाभिमानेन जोषमास्त इत्यर्थः । भार्यान्तरविवाहसमये भगिनीवत् सोदरीव उपलालयति शरीरपोषणादिदशायां मातृवद्धितपरा तिष्ठतीति भावः ॥ ६९ ॥ ७० ॥

गो० टी—इदानीमिति । इदानीं[1] त्वदौर्जन्यदर्शनकाले त्वयि विषये मया यत्सुकृतं सुष्ठूपचरितं तदपथ्यं व्यञ्जनोपेतं दध्याद्युपस्कृतमन्नमातुरं व्याधितमिव मां तपति तापयति अन्तर्भावितण्यर्थोऽयं त्वय्युपचाराकरणे संप्रति मम ताप एव न भवेत् एतादृशवाञ्छ्याभावादिति भावः ॥ ७१ ॥

७१ ] ति० टी०—किमिव आतुरं रुग्णमपथ्यव्यञ्जनोपेतं भुक्तमन्नं यथा तपति पीडयति रामस्य विप्रकारमभिषेकनिवृत्तिं वनस्य तदुद्देश्यकं संप्रयाणं च प्रेक्ष्येत्यन्वयः ॥ ७१ ॥

रा० टी०—विप्रकारमिति । विप्रकारमभिषेकनिवृत्तिं वनस्य संप्रयाणं वनकर्मकगमनं प्रेक्ष्य अवलोक्य भीता अयं भ्रष्टप्रतिज्ञः किं किं करिष्यतीति भयं प्राप्ता सती मे कथं विश्वसिष्यति कथमपि विश्वासं न करिष्यतीत्यर्थः । अर्धद्वयमेकान्वयि ॥ ७१ ॥

गो० टी०—विप्रकारमिति । विप्रकारमभिषेकतिरस्कारमित्यर्थः । वनस्येति कर्मणि षष्ठी भीता मत्पुत्रस्य विप्रकारः कियतेति भीता मे माम् ॥ ७२ ॥

१ हीति गो. पाठः ।

सुमित्रा प्रेक्ष्य वै भीता कथं मे विश्वसिष्यति । कृपणं बत वैदेही श्रोष्यति द्वयमप्रियम् ॥ ७२ ॥
मां च पञ्चत्वमापन्नं रामं च वनमाश्रितम् । वैदेही बत मे प्राणाञ्छोचन्ती क्षपयिष्यति ॥ ७३ ॥
हीना हिमवतः पार्श्वे किंनरेणेव किंनरी । नहि राममहं दृष्ट्वा प्रवसन्तं महावने ॥ ७४ ॥
चिरं जीवितुमाशंसे रुदन्तीं चापि मैथिलीम् । सा नूनं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ७५ ॥
[ नहि प्रव्राजिते रामे देवि जीवितुमुत्सहे ]
सतीं त्वामहमत्यन्तं व्यवस्याम्यसतीं सतीम् । रूपिणीं विषसंयुक्तां पीत्वेव मदिरां नरः ॥ ७६ ॥
अनृतैर्बत मां सान्त्वैः सान्त्वयन्ती स्म भाषसे । गीतशब्देन संरुध्य लुब्धो मृगमिवावधीः ॥ ७७ ॥
अनार्य इति मामार्याः पुत्रविक्रायकं ध्रुवम् । विकरिष्यन्ति रथ्यासु सुरापं ब्राह्मणं यथा ॥ ७८ ॥
अहो दुःखमहो कृच्छ्रं यत्र वाचः क्षमे तव । दुःखमेवंविधं प्राप्तं पुरा कृतमिवाशुभम् ॥ ७९ ॥

---

७२ ] ति० टी०—राज्ञो न किंचिदकर्तव्यमस्तीति विचार्य स्वश्वशुरविषये विश्वासं मम न करिष्यति । कृपणं कष्टम् ॥ ७२ ॥

रा० टी०—कृपणमिति । वनमाश्रितं रामं पञ्चत्वमिह-लोकपरित्यागेन पञ्चत्वधर्मसदृशधर्ममापन्नं प्राप्तं मामिति द्वयमप्रियं कृपणं कष्टं यथा स्यात्तथा वैदेही श्रोष्यति ॥ ७२ ॥

गो० टी०—कृपणमिति । श्रोष्यतीति यत् तत् कृपणं कष्टं बतेति योजना ॥ ७२-७६ ॥

७३ ] ति० टी०—अप्रियद्वयमेवाह—मां चेति । मे मदर्थम् उपलक्षणमेतत् रामार्थं च शोचन्ती स्वस्य प्राणान्क्षपयिष्यति ॥ ७३ ॥

रा० टी०—तेनानर्थान्तरं भविष्यतीत्याह—वैदेहीति । क्षपयिष्यति क्षीणा भविष्यति । तत्र दृष्टान्तः किंनरेण स्वश्वशुरेण हीना किंनरी इव । यदि च तत्र पत्युर्वियोगः प्रसिद्धः तदा वियोगांशे क्षीणांशे च दृष्टान्तो बोध्यः ॥ ७३ ॥

७४ ] ति० टी०—किंनरेण श्वशुरभूतेन भर्तृभूतेन च । तव मरणं कुतस्तत्राह—नहीति ॥ ७४ ॥

७५ ] ति० टी०—नूनं ध्रुवम् ॥ ७५ ॥

रा० टी०—नन्वेतल्लोकत्यागस्तव कथमित्यत आह—नहीति । महावने प्रविशन्तं[1] रामं रुदन्तीं मैथिलीं च दृष्ट्वा चिरं जीवितुमिह लोके स्थातुं नाशंसे इच्छामि अतः सा प्रव्राजितमत्पुत्रा अत एव विधवा पतिरहिता त्वं राज्यं कारयिष्यसि पुत्रेणेति शेषः ॥ ७४ ॥ ७५ ॥

७६ ] ति० टी०—असतीमेव सतीं पतिमारिकात्वेनासतीं त्वतीमिव सतीं सर्वदा विद्यमानां सतीमापाततः सतीं व्यवस्यामि निश्चिनोमि रूपिणीं दृष्टिप्रियां मदिरां पीत्वा पश्चाद्विकारेण विषसंयुक्तां यथा जानाति तथेत्यर्थः ॥ ७६ ॥

रा० टी०—सतीमिति । असतीं पत्यनिष्टकर्मकर्त्रीत्वेन सतीमिवां सतीं स्वसमीपे सर्वदा विद्यमानां रूपिणीं प्रशस्तरूपविशिष्टां त्वामत्यन्तं यथा स्यात्तथा सतीं साध्वीं व्यवस्यामि निरचिनवं वर्तमानसामीप्य इति भूते लट् । तत्र दृष्टान्तः मदिरां पीत्वा विद्यमानो नरः विषसंयुक्तां मदिरामिव मत्ततापगमसमये यथा मदिरामतिमादिकात्वेन जानातीत्यर्थः ॥ ७६ ॥

गो० टी०—सतीमिति । पूर्वं सतीत्वेन ज्ञातां त्वामिदानीमनेन व्यापारेण असतीं सतीमसतीत्वेन स्थितां व्यवस्यामि । कथमिव रूपिणीं दृष्टिप्रियां विषसंयुक्तां मदिरां मद्यविशेषं पीत्वा नरः पानानन्तरं तामसतीं दुष्टामध्यवस्यति तथा कार्यकाले त्वामसतीमध्यवस्यामीत्यर्थः ॥ ७७ ॥

७७ ] ति० टी०— यच्च त्वमनृतैः सान्त्वैरिष्टवचनैः सान्त्वयन्ती यन्मां भाषसे तद्गीतशब्देन मृगं संरुध्य लुब्ध इव मामवधीः ॥ ७७ ॥

रा० टी०—अनृतैरिति । अनृतैः मिथ्यात्वेन प्रतीयमानैः सान्त्वैः सान्त्वनवचनैः सान्त्वयन्ती त्वं यत् भाषसे स्म तेन लुब्धो व्याधः गीतशब्देन संरुध्य मृगीमिव मामवधीः ॥ ७७ ॥

गो० टी०—अनृतैरिति । अनृतैः सान्त्वैरिष्टवचनैः मां सान्त्वयन्ती सती भाषसे स्म अतः गीतशब्देन मृगवशीकरणहेतुगानशब्देन संरुध्य मृगं लुब्धः व्याध इव मामवधीः ॥७८॥

७८ ] ति० टी०—पुत्रविक्रायकं पुत्रेण मूल्येन स्त्रीशुल्कक्रेतारम् । अनार्यः पापीति रथ्यासु विकरिष्यन्ति विगर्हिष्यन्ति ॥ ७८ ॥

रा० टी०—अनार्य इति । पुत्रविक्रायकं रत्यादिशुल्कमूल्येन पुत्रविक्रयकर्तारं मामार्याः श्रेष्ठाः अनार्यः अयं तुच्छः इति विकरिष्यन्ति निन्दिष्यन्तीत्यर्थः ॥ ७८ ॥

गो० टी०—अनार्य इति । पुत्रविक्रायिकं[4] पुत्रमूल्येन स्त्रीशुल्कक्रेतारं मामार्याः सन्तः अयमनार्यः पुत्रविक्रयपापकृदिति विकरिष्यन्ति ॥ ७९ ॥

७९ ] ति० टी०—दुःखं कष्टम् कृच्छ्रं कष्टम् अहो कष्टमहो कष्टमिति यावत् । यत्र वरविषये रामविवासनवरविषयास्तव वाचः क्षमे यतोऽतः पुराकृतमशुभमिव तत्फलमिव । इवशब्द एवार्थे । एवंविधमपरिहार्यत्वेनावश्यानुभाव्यं दुःखं प्राप्तमिति सम्बन्धः ॥ ७९ ॥

---

१ प्रविशन्तमिति गो.रा.पाठः। २ अर्थमिदमाधिकं गो.पाठे। ३ बहिति गो.पाठः। ४ क्रायिकमिति गो.पाठः। ५ चिमिति गो.पाठः। ६ स्वतीमिति पुस्तके नास्ति।

चिरं खलु मया पापे त्वं पापेनाभिरक्षिता । अज्ञानादुपसंपन्ना रज्जुरुद्बन्धनी[1] यथा ॥ ८० ॥
रममाणस्त्वया सार्धं मृत्युं त्वां नाभिलक्षये । बालो रहसि हस्तेन कृष्णसर्पमिवास्पृशम् ॥ ८१ ॥
[2]तं तु मां जीवलोकोऽयं नूनमाक्रोष्टुमर्हति । मया ह्यपितृकः पुत्रः स महात्मा दुरात्मना ॥ ८२ ॥
बालिशो बत कामात्मा राजा दशरथो भृशम् । स्त्रीकृते यः प्रियं पुत्रं वनं प्रस्थापयिष्यति ॥ ८३ ॥
[3]व्रतैश्च ब्रह्मचर्यैश्च गुरुभिश्चोपकर्शितः । भोगकाले महत्कृच्छ्रं पुनरेव प्रपत्स्यते ॥ ८४ ॥
नालं द्वितीयं वचनं पुत्रो मां प्रतिभाषितुम् । स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ८५ ॥
यदि मे राघवः कुर्याद्वनं गच्छेति चोदितः । प्रतिकूलं प्रियं मे स्यान्न तु वत्सः करिष्यति ॥ ८६ ॥

रा० टी०—अहो इति । यत्र यस्मिन्काले तव वाचः ईदृशवचनानि क्षमे सहे तदा अहो कृच्छ्रं कृतः प्रकटितान् प्राणादीन् श्राति पचति संतापयतीत्यर्थः । तत् अहो आश्चर्यभूतं दुःखं प्राप्तं एतेन तव वचनान्यसह्यानीति बोधितम् । एवंविधं व्यासदुःखं पुराकृतं पूर्वोपार्जितमशुभं निषिद्धकर्मफलमिव भातीति शेषः । अनिवर्त्यत्वेनाशुभफलकर्मसादृश्यम् नित्यरामानुचराणां पुराकृतकर्माभावेनेवेत्युक्तम् ॥ ७९ ॥

गो० टी०—एतादृशदुःखस्याननुभूतत्वाद्विषादातिशयेन विस्मयते—अहो इति । कृच्छ्रं कष्टम् 'स्यात् कष्टं कृच्छ्रम्' इत्यमरः । एतादृशदुःखकृच्छ्रे कदाचिदपि मया न प्राप्ते इत्यर्थः । किंच यस्मिन् वरप्रदानविषये तव वाचः क्षमे एवंविधं दुःखं पुराकृतमशुभमिवाशुभफलमिव प्राप्तम् ॥ ८० ॥

८० ] ति० टी०—पापेन मयोपसंपन्ना कण्ठसंलग्ना सौख्याय कृतं स्वरक्षणं स्वनाशाय परिणतमित्याशयः ॥ ८० ॥

रा० टी०—चिरमिति । पापेन भ्रष्टप्रतिज्ञत्वरूपाधर्मविशिष्टेन मया चिरं बहुकालमभिरक्षिता त्वम् उद्बन्धनी प्राणापहरणफलिका कण्ठे निबद्धा रज्जुरिवोपसन्ना मम कण्ठे लग्ना ८०॥

गो० टी०—सौख्यार्थं कृतं स्वरक्षणं स्वनाशाय परिणतमिति क्षिपति—चिरमित्यादिना ॥ ८१ ॥

८१ ] ति० टी०—बाल इवेति योजना ॥ ८१ ॥

रा० टी०—रममाण इति । अभिलक्षये अभ्यलक्षयम् "वर्तमानसामीप्ये" इति भूते लट् । तत्र दृष्टान्तः रहसि एकान्ते बालः कृष्णसर्पमिव त्वामस्पृशम् अहमिति शेषः ॥८१॥

गो० टी०—रममाण इति । नाभिलक्षये किंत्वस्पृशमिति योजना ॥ ८२ ॥

८२ ] ति० टी०—तं त्वय्यनुरक्तम् । जीवतापि मया स महात्मा पुत्रोऽपितृकः पितृप्रयुक्तराज्यरहितः कृतो यतोऽत आक्रोष्टुं निन्दितुम् ॥ ८२ ॥

रा० टी०—तमिति । येन दुरात्मना मया पुत्रः अपितृकः पितृरहितो भविष्यति तं मामयं जीवलोकः आक्रोष्टुं निन्दितुमर्हति ॥ ८२ ॥

गो० टी०—मयेति । अपितृकः पितृकृतरक्षणादिरहित इत्यर्थः । आसीदिति शेषः । तं तथाविधं मामाक्रोष्टुमाक्रोशं कर्तुम् । आक्रोशप्रकारमाह—बालिश इति । बालशः मूर्खः 'मूर्खवैधेयबालिशाः' इत्यमरः ॥ ८३ ॥ ८४ ॥

८३ ] ति० टी०—निन्दाप्रकारमाह—बालिश इति । प्रस्थापयिष्यतीत्युपलक्षणं त्रिकालनिन्दायाः ॥ ८३ ॥

रा० टी०—निन्दास्वरूपं बोधयन्नाह—बालिश इति । यः स्त्रीकृते स्त्रीसुखाय प्रियं पुत्रं वनं प्रस्थापयिष्यति प्रास्थापयत् स कामात्मा दशरथो बालिशः मूर्खः लङ्प्राप्तभविष्यत्कालस्याविवक्षा 'मूर्खवैधेयबालिशाः' इत्यमरः ॥ ८३ ॥

८४ ] ति० टी०—उपकर्शितः कार्श्यं प्रापितः । कृच्छ्रं जटाभ्युपेततया वने वासक्लेशम् ॥ ८४ ॥

रा० टी०—व्रतैरिति । गुरुभिः बहुभिः ब्रह्मचर्यैः ब्रह्मणो वेदस्य चर्या बोधनं येषु तैर्वेदबोधितैरेवेत्यर्थः । व्रतैः नियमितभोजनादिभिः उपकर्शितः कृशत्वं प्राप्तो रामः भोगकाले एव महत्कृच्छ्रं कष्टं पुनः पुनः प्रपत्स्यते प्राप्स्यते एव । चकारद्वयमेवार्थकम् तृतीयः पुनः पुनरर्थकः ॥ ८४ ॥

गो० टी०—व्रतैरिति । व्रतैः काण्डव्रतैः ब्रह्मचर्यैः मधुमांसवर्जनादिब्रह्मचारिधर्मैः गुरुभिः गुरुकृतशिक्षादिभिः भोगकाले गार्हस्थ्यावस्थायाम् ॥ ८५ ॥

८५ ] ति० टी०—द्वितीयं वचनं परिहासरूपं वचनम् । अलं समर्थः अहमिव धर्मयन्त्रितत्वात् ॥ ८५ ॥

रा० टी०—नेति । द्वितीयं मद्वचनविरोधिवचनान्तरं मां प्रतिभाषितुं पुत्रो रामः नालं धर्मात्मशिरोमणित्वान्न समर्थः । अतो वनं प्रव्रजेत्युक्तो मया ज्ञापितः स रामः बाढमङ्गीकृतमेतदित्येव वक्ष्यति ॥ ८५ ॥

गो० टी०—नालमिति । सः पुत्रः वनं प्रव्रजेत्युक्तः सन् द्वितीयं वचनं परिहारवचनं मां प्रति भाषितुं नालं किंतु बाढमित्येव वक्ष्यति बाढमित्यङ्गीकारोक्तिः ॥ ८६ ॥

८६ ] ति० टी०—यदि मे राघवः प्रतिकूलं कुर्यात्तन्मे प्रियं स्यादिति संबन्धः ॥ ८६ ॥

रा० टी०—यदीति । वनं गच्छेति चोदितो मया प्रेरितो राघवो रामः प्रतिकूलं मदुक्तविपरीतं यदि कुर्यान्न गच्छेदित्यर्थः । तदा मे प्रियं स्यात् परंतु वत्सो रामः प्रतिकूलं न करिष्यति प्रतिकूलमित्युभयान्वयि ॥ ८६ ॥

१ उद्बन्धिनीति गो. पाठः । २ अनयोरर्धयोर्व्यत्यस्तपाठः गो. पुस्तके । ३ व्रतैश्चेति गो. रा. पाठः ।

[ शुद्धभावो हि भावं मे न तु ज्ञास्यति राघवः । स वनं प्रव्रजेत्युक्तो बाढमित्येव वक्ष्यति ॥ ]
राघवे हि वनं प्राप्ते सर्वलोकस्य धिक्कृतम् । मृत्युरक्षमणीयं मां नयिष्यति यमक्षयम् ॥ ८७ ॥
मृते मयि गते रामे वनं मनुजपुंगवे । इष्टे मम जने शेषे किं पापं प्रतिपत्स्यसे ॥ ८८ ॥
कौसल्या मां च रामं च पुत्रौ च यदि हास्यति । दुःखान्यसहती देवी मामेवानुर्गमिष्यति ॥ ८९ ॥
कौसल्यां च सुमित्रां च मां च पुत्रैस्त्रिभिः सह । प्रक्षिप्य नरके सा त्वं कैकेयी सुखिता भव ॥ ९० ॥
मया रामेण च त्यक्तं शाश्वतं सत्कृतं गुणैः । इक्ष्वाकुकुलमक्षोभ्यमाकुलं पालयिष्यसि ॥ ९१ ॥
प्रियं चेद्भरतस्यैतद्रामप्रव्राजनं भवेत् । मा स्म मे भरतः कार्षीत्प्रेतकृत्यं गतायुषः ॥ ९२ ॥
[ हन्तानार्ये ममामित्रे सकामा भव कैकयि ]
मृते मयि गते रामे वनं पुरुषपुंगवे । सेदानीं विधवा राज्यं सपुत्रा कारयिष्यसि ॥ ९३ ॥

गो॰ टी॰—यदीति । मे मया वनं गच्छेति चोदितो रामः प्रतिकूलं वनं प्रत्यगमनं यदि कुर्यात्तदा मे प्रियं स्यात् वत्सस्तु तन्न करिष्यति ॥ ८७ ॥

गो॰ टी॰—शुद्धभाव इति । शुद्धभावः शुद्धहृदयः मे भावं हृदयं न ज्ञास्यति मां शुद्धतया जानन् मम वचनहृदयं न ज्ञास्यतीति भावः अतः बाढमित्येव वक्ष्यतीति संबन्धः ॥ ८८ ॥

८७ ] ति॰ टी॰—ततः किमत आह—राघवे हीति । अक्षमणीयं दुःसहवृत्तमत एव सर्वलोकस्य धिक्कृतम् ॥ ८७ ॥

रा॰ टी॰—राघव इति । राघवे रामे वनं प्राप्ते सति सर्वलोकस्य धिक्कृतम् अत एव अक्षमणीयं मां मृत्युः मृतेः उः कालः परमात्मा यमक्षयं यमस्य कालस्य क्षयः अभावो यस्मिन् तं साकेतलोकं नयिष्यति नेष्यति प्रापयिष्यति 'उगौरीपतिरुः कालः सेतुरब्धिः परायणम्' इति मात्रिका । अत एव न च कालवशानुग इत्यनेन न विरोधः । स्मृतौ कालशब्दः प्राकृतकालपरः ॥ ८७ ॥

गो॰ टी॰—राघव इति । सर्वलोकस्य सर्वजनस्य 'लोकस्तु भुवने जने' इत्यमरः । धिक्कृतं धिक्करणमक्षमणीयं क्षन्तुमशक्यं किंतु मृत्युर्मां यमक्षयं यमगृहं नयिष्यति ॥ ८९ ॥

८८ ] ति॰ टी॰—शेषेऽवशिष्टे ममेष्टे कौसल्यादिरूपे जने किं पापं मनोवागगोचरं दुःखसाधनं प्रतिपत्स्यसे करिष्यसि ॥ ८८ ॥

रा॰ टी॰—मृते इति । मयि मृते मृत इवाचरति मृतति स तस्मिन् लोकान्तरं प्राप्ते सतीत्यर्थः । शेषे ममेष्टे कौसल्यादौ किं पापं पापजनकीभूतं कर्म प्रतिपत्स्यते कौशल्यादयो मन्थरादेर्वधं करिष्यन्तीति तात्पर्यम् ॥ ८८ ॥

गो॰ टी॰—मृत इति । शेषे कौसल्यादौ किं पापं कर्म न्याय्यं प्रतिपत्स्यसे चिन्तयिष्यसि ॥ ९० ॥

८९ ] ति॰ टी॰—यदि कौसल्या मां रामं च हास्यति ताभ्यां हीना भविष्यति चात्सुमित्रा यदि पुत्रौ च चाद्रामं मां च एतैर्हि हीना भविष्यति तदा दुःखान्यसहती देवी कौसल्या सुमित्रा च मामेवानुमरिष्यति लक्ष्मणस्य रामेण सह नियतं गमनाच्छत्रुघ्नस्य भरतानुयायित्वेऽप्यतीव त्वदनुरञ्जनं कुर्वतो रामस्येव तस्यापि त्वया क्रूरतया निराकरणात्पुत्रौ हास्यतीत्युक्तम् तेन तस्याः क्रौर्यातिशयो व्यङ्ग्यः । राज्ञः शोकातिशयवत्त्वाद्विसंष्ठुलवाक्यप्रयोगो न दोषाय ॥ ८९ ॥

रा॰ टी॰—वस्तुतस्तु कौशल्या नेदृशं कर्म करिष्यतीत्याह—कौशल्येति । कौशल्या मां रामं च पुत्रौ पुत्रप्रायौ लक्ष्मणशत्रुघ्नौ च यदि हास्यति इह न द्रक्ष्यतीत्यर्थः । तदा दुःखान्यसहती सती मामेवानुगमिष्यति प्राप्स्यतीत्यर्थः । एतेन लक्ष्मणो रामेण सहैव गन्तेति भरतो रामप्रतिकूलश्चेत् शत्रुघ्नोऽपि तं त्यक्त्वा राममेव गन्तेति च व्यञ्जितम् ॥ ८९ ॥

गो॰ टी॰—कौसल्यामिति । पुत्रौ लक्ष्मणशत्रुघ्नौ देवी सुमित्रा ॥ ९१ ॥

९० ] ति॰ टी॰—पुत्राणां नरकवासो राज्यहान्या राज्ञ्या राज्ञश्च शोकरूपपापमृत्युमरणादित्याहुः ॥ ९० ॥

रा॰ टी॰—कौशल्यामिति । त्रिभिः पुत्रैः सह कौशल्यादीन् नरके नरकप्रायदुःखे किंच नराणामयोध्याप्रजानां कः अभिषेकनिवृत्तिः कथं जातेति कोलाहलशब्दो यस्मात्तस्मिन् शोके प्रक्षिप्य सुखिता भव ॥ ९० ॥

गो॰ टी॰—कौसल्यामिति । अत्र नरकशब्देन दुःखं लक्ष्यते ॥ ९२ ॥

९१ ] ति॰ टी॰—मया रामेणेत्यादिर्व्यङ्ग्योक्तिः । आकुलं क्षुभितम् ॥ ९१ ॥

रा॰ टी॰—मयेति । शाश्वतं बहुकालिकं गुणैर्गुणवद्भिः सत्कृतमिक्ष्वाकुकुलमाकुलं रामादिवियोगेन व्याकुलं यथा स्यात्तथा पालयिष्यसि पालनमपि न भविष्यतीति तात्पर्यम् ॥ ९१ ॥

गो॰ टी॰—मयेति । आकुलं क्षुभितं पालयिष्यसि ॥ ९३-९६ ॥

९२–९३ ] ति॰ टी॰—रामप्रव्रजनस्य भरतसंमतत्वे स मे पुत्र एव नेत्याशयेनाह—प्रियं चेदित्यादि ॥ ९२ ॥ ९३ ॥

रा॰ टी॰—प्रियमिति । रामप्रव्राजनं चेत् यदि भरतस्य प्रियं भवेत् तदा गतायुषः गतः वनं प्रस्थितः आयुः परप्रीति

१ शोकेऽक्षमणीयो गो. पाठे । २ पत्स्यते इति रा. पाठः । ३ कौसल्यामिति गो. पाठः । ४ मरिष्यतीति गो. पाठः । ५ कैकेयि इति गो. रा. पाठः । ६ कर्मेत्यधिकं गो. पाठे ।

त्वं राजपुत्रि दैवेन न्यवसो मम वेश्मनि । अकीर्तिश्चातुला लोके ध्रुवः परिभवश्च मे ॥
सर्वभूतेषु चावज्ञा यथा पापकृतस्तथा ॥ ॥ ९४ ॥
कथं रथैर्विभुर्यात्वा गजाश्वैश्च मुहुर्मुहुः । पद्भ्यां रामो महारण्ये वत्सो मे विचरिष्यति ॥ ९५ ॥
यस्य चाहारसमये सूदाः कुण्डलधारिणः । अहंपूर्वाः पचन्ति स्म प्रसन्नाः पानभोजनम् ॥ ९६ ॥
स कथं नु कषायाणि तिक्तानि कटुकानि च । भक्षयन्वन्यमाहारं सुतो मे वर्तयिष्यति ॥ ९७ ॥
महार्हवस्त्रसंवीतो भूत्वा चिरसुखोचितः । काषायपरिधानस्तु कथं रामो भविष्यति ॥ ९८ ॥
कस्येदं दारुणं वाक्यमेवंविधमपीरितम् । रामस्यारण्यगमनं भरतस्याभिषेचनम् ॥ ९९ ॥
धिगस्तु योषितो नाम शठाः स्वार्थपरायणाः । न ब्रवीमि स्त्रियः सर्वा भरतस्यैव मातरम् ॥ १०० ॥

---

विषयीभूतपुत्रः यस्य तस्य मे प्रेतकृत्यं प्रेतस्य लोकान्तरं प्राप्तस्य यत् कृत्यं लोकाचारीत्यर्थः तत् भरतो मा कार्षीत् ॥ ९२ ॥

रा० टी०—मृते इति । मृते मृतवत् लोकान्तरं प्राप्ते मयि सा प्रव्राजितमत्पुत्रा त्वं राज्यं कारयिष्यसि ॥ ९३ ॥

९४ ] ति० टी०—राजपुत्रि ! दैवेन मामकदुरदृष्टवशेन मम वेश्मनि न्यवसः । 'राजपुत्रीवादेन' इतिपाठे राजपुत्रीव्यपदेशमात्रेणेत्यर्थः । मेऽकीर्तिः परोक्षापयशोऽत्राकीर्तिः महाजनसमक्षं धिक्कारः परिभवः सर्वभूतेष्ववज्ञा क्षुद्रत्वेन प्रतिपत्तिः यतो न्यवसोऽत एतत्सर्वं भविष्यतीति शेषः ॥ ९४ ॥

रा० टी०—त्वमिति । दैवेन देवदेवेन अन्तर्यामिणा प्रेरिता त्वं मम वेश्मनि न्यवसः अत एव अकीर्तिः पापकृतः सर्वभूतेषु अवज्ञा अनादर इव मे परिभवश्च भविष्यति परमात्मकृत्यस्य दुश्चलत्वमस्तीति तात्पर्यम् । सार्धश्लोक एकान्वयी॥९४॥

गो० टी०—त्वमित्याद्यर्धत्रयमेकान्वयम् । अकीर्त्यादित्रयरूपा त्वं राजपुत्रीवादेन राजपुत्रीव्यपदेशेन मम वेश्मनि न्यवसः परिभवः । महाजनसमक्षं धिक्कारः, अवज्ञा क्षुद्रत्वेन प्रतिपत्तिः ॥ ९७ ॥ ९८ ॥

९५ ] ति० टी०—कथमिति ॥ ९५ ॥

रा० टी०—कथमिति । विभुः समर्थो रामः रथादिभिः मुहुर्मुहुः प्रतिक्षणं यात्वा गन्तव्यदेशं गत्वा महारण्ये पद्भ्यां कथं विचरिष्यति ॥ ९५ ॥

९६ ] ति० टी०—यस्य चेति ॥ ९६ ॥

रा० टी०—यस्येति । यस्य रामस्य आहारसमये भोजनकाले कुण्डलधारिणः सूदाः पाककर्तारः अहं पूर्वं येषां ते त्वत्तः पूर्वमहं पक्ष्यामीत्यन्योन्यं कथयन्तः सन्त इत्यर्थः । पानभोजनं पचन्ति स रामः कषायादीनि फलानि वन्यमाहारं मूलादि च भक्षयन् कथं वर्तयिष्यति वर्तिष्यते । श्लोकद्वयमेकान्वयि ॥ ९६ ॥ ९७ ॥

गो० टी०—यस्येति । सूदाः पाचकाः अहंपूर्वाः अहमहमिकावन्तः प्रसन्नं 'आयुः सत्त्वबलारोग्यसुखप्रीतिविवर्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः' इत्युक्तप्रकारेण श्रेष्ठम् ॥ ९९ ॥

९७ ] ति० टी०—स कथमिति । कषायादीनि कन्दमूलानीत्यध्याहारः । तद्रूपं वन्यमाहारं वर्तयिष्यति जीविष्यति९७

गो० टी०—स इति । कषायादित्रयरूपं वन्यमाहारं भक्षयन् कथं नु वर्तयिष्यति केन प्रकारेण जीविष्यति ॥ १०० ॥

९८ ] ति० टी०—महार्हेति ॥ ९८ ॥

रा० टी०—महार्हेति । महार्हवस्त्रैः महैः सर्वपूज्यैः ब्रह्मादिभिः अर्हाणि प्रशंसनीयानि यानि वस्त्राणि तैः संवीतः भूषितः भूत्वा चिरसुखोचितः सार्वकालिकानन्दयोग्यो रामः काषायपरिधानः ब्रह्मचर्योचितवस्त्रधारी कथं भविष्यति ॥९८॥

गो० टी०—महार्हेति । महार्हेण अतिश्लाघ्येन वस्त्रेण संवीतः संवृतः चिरसुखोषितः चिरकालं सुखास्तरणोषितः काषायपरिधानः कषायेण रक्तं काषायं काषायं परिधानं वस्त्रं यस्य स तथोक्तः ॥ १०१ ॥

९९ ] ति० टी०—कस्येति । इदमेवंविधं दारुणमेतदुत्तरार्धरूपं रामस्यारण्यगमनमित्यादिवाक्यं वाक्यश्रवणं कस्यापीरितमनिर्वचनीयस्य मम दुष्कर्मणः फलमित्यर्थः ॥ ९९ ॥

रा० टी०—कस्येति । रामस्य अरण्यगमनं भरतस्य अभिषेचनमेवंविधं दारुणं वाक्यं कस्य प्रेरणया हेतोर्वा ईरितं कथितं तद्वदेति तात्पर्यम् ॥ ९९ ॥

गो० टी०—कस्येति । रामस्यारण्यगमनं भरतस्याभिषेचनमित्येवंविधमेतद्वाक्यं कस्य केनोपदिष्टमित्यर्थः । यद्वा कस्य सन्नामिति शेषः ॥ १०२ ॥

१०० ] ति० टी०—कैकेयीदौर्जन्यं दृष्ट्वा राजा शोकेन स्त्रीमात्रं निन्दति—धिगिति । निन्द्यत्वमस्त्वित्यर्थः । पुनः स्वाभाविकविवेकेनाह—नेति । कौसल्यादीनां निन्द्यानर्हत्वादिति भावः ॥ १०० ॥

रा० टी०—धिगिति । भरतस्य मातरमेव न ब्रवीमि सर्वाः ब्रवीमि इत्यर्थः । ननु कीदृशीः किं ब्रवीषीत्यत आह—स्वार्थपरायणाः शठाः नाम प्रसिद्धा याः योषितः ताः धिगस्तु ॥ १०० ॥

---

१ राजपुत्रीवादेनेति गो. पाठः । २ लितिति गो. पाठः । ३ प्रव्रजसमिति गो. पाठः । ४ लितिति रा. पाठः । ५ वस्त्रैरिति रा. पाठः । ६ संवीत इति गो. रा.पाठः । ७ उषितं इति गो.पाठः । ८ भगो निवत्स्यतीति गो.पाठः । ९ पद्भ्यामिति गो.पाठः । १० अचिन्तितामिति गो.पाठः । ११ पराः सदेति गो.पाठः ।

अनर्थभावेऽर्थपरे नृशंसे ममानुतापाय [1]निवेशितासि ।
किमप्रियं पश्यसि मन्निमित्तं हितानुकारिण्यथवापि रामे ॥ १०१ ॥
परित्यजेयुः पितरोऽपि[2] पुत्रान्भार्याः पतींश्चापि कृतानुरागाः ।
कृत्स्नं हि सर्वं कुपितं जगत्स्याद्दृष्ट्वैव रामं व्यसने निमग्नम् ॥ १०२ ॥
अहं पुनर्देवकुमाररूपमलंकृतं तं सुतमाव्रजन्तम् ।
नन्दामि पश्यन्निव दर्शनेन भवामि दृष्ट्वैव पुनर्युवेव ॥ १०३ ॥
विना [3]हि सूर्येण भवेत्प्रवृत्तिरवर्षता वज्रधरेण वापि ।
रामं तु गच्छन्तमितः समीक्ष्य जीवेन्न कश्चित्त्विति चेतना मे ॥ १०४ ॥
विनाशकामामहिताममित्रामावासयं मृत्युमिवात्मनस्त्वाम् ।
चिरं बताङ्केन धृतासि सर्पी महाविषा तेन हतोऽस्मि मोहात् ॥ १०५ ॥

गो० टी०--धिगिति । शठाः गूढविप्रियकारिण्यः । कौसल्यादिषु तदसंभवादाह--न ब्रवीमीति ॥ १०३ ॥

१०१ ] ति० टी०--अनर्थे जगदनर्थसाधने भावो यस्याः अर्थपरे स्वार्थसाधनपरे ममानुतापाय मदनुतापार्थं निवेशितासि निवेशितदुर्भावासि ईश्वरेणेति शेषः । मन्निमित्तमिति बहुव्रीहिः रामे वा जगद्धितानुकारिणि किमप्रियं तत्साधनं पश्यसीत्यर्थः ॥ १०१ ॥

रा० टी०--अनर्थेति । अनर्थभावे ! अनर्थः पत्यर्थविरुद्धकारी भावोऽभिप्रायो यस्यास्तत्संबोधनम् अत एव अर्थपरे स्वार्थमात्रसाधिके अत एव नृशंसे क्रूरताविशिष्टे हे हितानुकारिणि ! मम पत्युः अनुतापाय क्लेशाय त्वं निवेशितासि मया स्वगृहे इति शेषः । मन्निमित्तं मद्धेतुकं किं प्रियं स्वप्रीतिविरुद्धं पश्यसि रामे वा किं पश्यसि तद्वदेत्यर्थः ॥ १०१ ॥

गो० टी०--अनर्थभाव इति । मन्निमित्तं मत्कारणकं रामे रामनिमित्तकं वा ॥ १०४ ॥

१०२ ] ति० टी०--राममरण्यवासरूपे व्यसने निमग्नं दृष्ट्वा कृत्स्नं जगत्कुपितं स्याद्विपरीतं स्यात् । कोपप्रकारमाह--कृतानुरागाः पितरः पुत्रांस्तादृशान् विभक्तिविपरिणामेनात्रापि तत्संबन्धात् बालानपि त्यजेयुः रामेण सह गमनार्थम् । अपिना तादृशाः पुत्रास्तादृशान्वृद्धांस्तादृश्यो भार्यास्तादृशान्पतीन् अपिना तादृशाः पतयस्तादृशीर्भार्या अपि त्यजेयुः एतेन जगदनर्थसाधनभाववत्त्वोपपादिता ॥ १०२ ॥

रा० टी०--परीति । कृतानुरागाः रामविषयकानुरागविशिष्टाः पितरः पुत्रान् भार्याः पतींश्च सर्वमन्यच्च परित्यजेयुः तं रामं व्यसने दुःखे निमग्नं दृष्ट्वैव कृत्स्नं जगत् कुपितं स्यात्१०२

गो० टी०--परित्यजेयुरिति । कृत्स्नं जगत् गच्छतीति व्युत्पत्त्या जगच्छब्देन जीववर्ग उच्यते सर्वशब्देन स्थावरजातमुच्यते कुपितं त्वां प्रतीति शेषः ॥ १०५ ॥

१०३ ] ति० टी०--स्वस्य रामं विना जीवनव्यतिरेकं दर्शयिष्यंस्तदन्वये स्वजीवनान्वयं दर्शयति--अहमिति । आव्रजन्तं मत्समीपे आगच्छन्तम् । अस्य श्रुत्वेति शेषः । आगच्छन्तं श्रुत्वा दर्शनेन चक्षुषा पश्यन्निव नन्दामि श्रवणमात्रेण दर्शनजन्यं सुखमुक्तम् । दृष्ट्वैव दृष्ट्वा तु पुनश्चिरवृद्धोऽपि पुनर्युवेव हृष्टपुष्टान्तर्बहिःपरिकरो भवामि ॥ १०३ ॥

रा० टी०--अहमिति । देवकुमाररूपमाव्रजन्तं मत्समीपे आगच्छन्तं सुतं रामं दर्शनेन चक्षुषा पश्यन् नन्दाम्येव एवेन इतरस्मृतिव्यवच्छेदः । इव एवार्थे । दृष्ट्वा अवलोक्य तु पुनर्युवा इव भवामि उत्साहस्याधिक्यं भवतीति तात्पर्यम् । इवेन तदवस्थाया नित्यात्वं सूचितम् ॥ १०३ ॥

गो० टी०--अहमिति । अहं पुनः अहं तु मत्स्वभावा लौकिकेभ्यो भिन्नः देवकुमाररूपं निसर्गसुन्दरमलंकृतमलंकारैरतिशयितशोभं चन्द्रकान्ताननमित्यस्य हृदि विपरिवर्तमानत्वात्तमित्युक्तं सुतं सौन्दर्याद्यभावेऽपि सुतत्वप्रयुक्तप्रेमास्पदम् आव्रजन्तं मत्तमातङ्गगामिनमित्युक्तरीत्या गमनकालिकसंभ्रमविशेषशालिनं दर्शनेन मानसज्ञानेन पश्यन्नपि नन्दामि दृष्ट्वा पुनः साक्षात्कृत्य तु युवेव भवामि युववद्धृष्टपुष्टाङ्गो भवामि ॥ १०६ ॥

१०४ ] ति० टी०--हिरपीत्यर्थे । सूर्येण विनापि लोकस्य प्रवृत्तिर्व्यवहारः स्यात् वज्रधरेणावर्षतापि प्रवृत्तिर्लोकस्य जीवनं स्यात् वा इत्यथवा इन्द्रेण स्वरूपसत्तां विनापि प्रवृत्तिर्भवेत् रामं तु विना न कस्यापि जीवनमिति मे मतिः अन्तर्यामिणं विना कस्यापि व्यवहारस्यासिद्धेः । एवं च स्वाजीवनं कैमुतिकन्यायसिद्धमिति भावः ॥ १०४ ॥

रा० टी०--विनेति । सूर्येण विना प्रवृत्तिः लोकस्थितिर्भवेत् अवर्षता वज्रधरेण प्रवृत्तिर्भवेत् इतोऽयोध्यातः गच्छन्तं रामं समीक्ष्य दृष्ट्वा तु कश्चित् अयोध्यावासी न जीवेत् स्वस्थतया तिष्ठेत् इति मे चेतना निश्चयः ॥ १०४ ॥

गो० टी०--विनेति । प्रवृत्तिः संचारः चेतना बुद्धिः वज्रधरपक्षे प्रवृत्तिशब्देन जीवनविषयप्रवृत्तिरुच्यते ॥ १०७ ॥

१०५ ] ति० टी०--किं च त्वामात्मनो मृत्युमिव स्वगृहेऽहमावासयम् । किं च त्वं महाविषा सर्पी मयाङ्केन मोहात्त्वेनाज्ञानाद्धृतासि तेनाङ्कधारणेनाहं हतोऽस्मि ॥ १०६ ॥

१ निविष्टभावे इति गो.पाठः । २ [illegible] ति गो.पाठः । ४ चेति गो. पाठः । ५ अपीति गो. पाठः । ६ कश्चिदितीति रा. पाठः ।

मया च रामेण सैलक्ष्मणेन प्रशास्तु हीनो भरतस्त्वया सह ।
पुरं च राष्ट्रं च निहत्य बान्धवान्ममाहितानां च भवाभिभाँषिणी ॥ १०६ ॥
नृशंसवृत्ते व्यसनप्रहारिणि प्रसह्य वाक्यं यदिहाद्य भाषसे ।
न नाम ते तेनँ मुखात्पतन्त्यधो विशीर्यमाणा दशनाः सहस्रधा ॥ १०७ ॥
न किंचिदाहाहितमप्रियं वचो न वेत्ति रामः परुषाणि भाषितुम् ।
कथं तुं रामे ह्यभिरामवादिनि ब्रवीषि दोषान्गुणनित्यसंमते ॥ १०८ ॥
प्रताम्य वा प्रज्वल वा प्रणश्य वा सहस्रशो वा स्फुँटितां महीं व्रज ।
न ते करिष्यामि वचः सुदारुणं सँमाहितं केकयराजपाँसने ॥ १०९ ॥

रा० टी०—स्वज्ञानेनैवाहं पराभूत इत्याह–विनाशेति । विनाशकामामिक्ष्वाकुकुलनाशविषयकेच्छावतीमत एवाहितां हिताचरणरहितामत एवामित्रां स्वामात्मनः मृत्युमिव अवासयं स्ववेश्मनीति शेषः । अत एव महाविषा सर्पीव त्वमङ्केन मया धृतासि तेन हेतुना हतोऽस्मि अहमिति शेषः ॥ १०५ ॥

गो० टी०—विनाशकामामिति । मोहादावासयं गृह इति शेषः । सर्पी सर्पजातिः जातिलक्षणो ङीष् त्वं मोहादङ्केन धृतासि । तेनाङ्कधारणेन ॥ १०८ ॥

१०६ ] ति० टी०—पुरं च राष्ट्रं चेत्यस्य प्रशास्त्वित्यनेन सहान्वयः । त्वं च बान्धवान्पतिपुत्रादीन्निहत्य ममाहितानां शत्रूणामभिभाषणशीला भव वार्ताकरणयोग्यबान्धवाभावादिति भावः । 'अभिहर्षिणी' इतिपाठे तेषां हर्षदा भव ॥ १०६ ॥

रा० टी०—मयेति । मदादिना हीनो भरतः त्वया सह प्रशास्तु लोकमिति शेषः तेन पुरादिकं निहत्य विध्वस्य ममाहितानां शत्रूणामभिहर्षिणी अतिहर्षणशीला भव ॥ १०६ ॥

गो० टी०—मयेति । सलक्ष्मणेन रामेण मया च हीनो भरतस्त्वया सह पुरं राष्ट्रं बान्धवांश्च निहत्य प्रशास्तु पुरादिहननरूपं प्रशासनं करोतु । ममाहितानां शत्रूणां च अभिहर्षिणी भवेति संबन्धः ॥ १०९ ॥

१०७ ] ति० टी०—व्यसनप्रहारिणि वार्धकरूपापदि पुत्रवियोगरूपप्रहारकारिणि ! प्रसह्य पतिपत्नीभावं तिरस्कृत्येह देशेऽद्य काले यद्भाषसे क्रूरमतस्ते मुखादवश्यपाता दन्ताः केन नाम हेतुना सहस्रधा विशीर्यमाणाः सन्तो न पतन्तीति न जाने इति शेषः ॥ १०७ ॥

रा० टी०—नृशंसेति । व्यसनप्रहारिणि व्यसनेन पुत्रवियोगजनितदुःखदानेन प्रहरति तच्छीला तत्संबोधनं वाक्यं मद्वचनं प्रसह्य अनादृत्य यदिह अस्मिन् समये भाषसे तेन भाषणेन ते तव मुखात् सहस्रधा विशीर्यमाणाः दशनाः दन्ताः अध पृथिव्यां न पतन्ति नाम आश्चर्यमेतत् ॥ १०७ ॥

गो० टी०—नृशंसवृत्त इति । नृशंसवृत्ते क्रूरव्यापारे व्यसनप्रहारिणि क्षते प्रहारन्यायेन विपदि प्रहरणशीले ! रामविरहासहनं विपत् तत्र प्रहारः पुनः पुनश्चोदनं त्वमिह देशे अथास्मिन्काले प्रसह्य पतिस्वातन्त्र्यं तिरस्कृत्य यद्वाक्यं भाषसे तत्र ते मुखात् दशनाः सहस्रधा विशीर्णाः सन्तः केन नाम हेतुना न पतन्तीति संबन्धः ॥ ११० ॥

१०८ ] ति० टी०—अप्रियवचोऽकथने हेतुः–न वेत्तीत्यादि । दोषाञ्जटाचीरधारणवनवासादीनात्मनो दोषजनकान् । गुणैर्नित्यं सर्वेषां संमते ॥ १०८ ॥

रा० टी०—नेति । यो रामः परुषाणि अक्षराणि भाषितुं न वेत्ति जानीते अतः किंचिदहितमप्रियं च वचो न आह तस्मिन् अभिरामवादिनि गुणनित्यसंमते गुणैः गुणविशिष्टैः नित्यं संमते पूजिते रामे दोषान् कथं ब्रवीषि दोषकथनं विना तदनिष्टाचरणं लोके न दृष्टमिति तात्पर्यम् ॥ १०८ ॥

गो० टी०—न किंचिदिति । रामः अहितमप्रियं च किंचिद्वचो नाह परुषाणि भाषितुं न वेत्ति ज्ञानपूर्वकत्वात् भाषणस्य कुतस्तत्प्रसक्तिरिति भावः । न केवलं परुषावेदनं प्रत्युताभिरामवादिनि सर्वप्रियभाषिणि गुणैर्नित्यं संमते रामे कथं तु दोषान् प्रव्राजनहेतून् ब्रवीषि ॥ १११ ॥

१०९ ] ति० टी०—प्रताम्य ग्लायस्व प्रज्वल अग्निप्रवेशेन प्रणश्य विषेण कुद्दालप्रहारैः सहस्रशः स्फुटितां कृतगर्तां वा महीं व्रज अथापि ते वचो न करिष्य इति संबन्धः ॥ १०९ ॥

रा० टी०—प्रताम्येति । प्रताम्य ग्लानिं कुरु प्रज्वल अग्न्यादिना भस्मीभव प्रणश्य उद्बन्धनादिना ध्वंसं प्राप्नुहि स्फुटिता प्रस्तरादिप्रहारैः स्फुटितशिराः महीं व्रज ॥ १०९ ॥

गो० टी०—प्रताम्येति । प्रताम्य ग्लानिं भज ताम्यतेर्लोण्मध्यमपुरुषैकवचनम् । प्रज्वल कुपिता भव प्रणश्य नष्टा भव सहस्रशः स्फुटिता सती महीं व्रज वा भूगोः पत वेत्यर्थः । केकयराजानां पांसनि दूषणि ! ॥ ११२ ॥

१ चेति गो. पाठः । २ हर्षिणीति गो. रा. पाठः । ३ केनेति गो. पाठः । ४ न्विति गो. पाठः । ५ स्फुटितेति गो. स. पाठः । ६ ममेति गो. रा. पाठः । ७ पांसनीति गो. रा. पाठः ।

क्षुरोपमां नित्यमसत्प्रियंवदां प्रदुष्टभावां स्वकुलोपघातिनीम् ।
न जीवितुं त्वां विषहेऽमनोरमां दिधक्षमाणां हृदयं सबन्धनम् ॥ ११० ॥
न जीवितं मेऽस्ति कुतः पुनः सुखं विनात्मजेनात्मवतां कुतो रतिः ।
ममाहितं देवि न कर्तुमर्हसि स्पृशामि पादावपि ते प्रसीद मे ॥ १११ ॥
स भूमिपालो विलपन्ननाथवत्स्त्रिया गृहीतो हृदयेऽतिमात्रया ।
पपात देव्याश्चरणौ प्रसारितावुभावसंप्राप्य यथातुरस्तथा ॥ ११२ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वादशः सर्गः ॥ १२ ॥

## त्रयोदशः सर्गः ।

कैकेय्या पुनश्च वरदाननिर्बन्धेन पीडितो दशरथः सकरुणमात्मशोचनपूर्वकं तां जगर्ह । तथैवास्तं गते सवितर्यां प्रभातं यावत् कैकेयीं रामराज्यमयाचत तदनङ्गीकाराच्चातितमदुःखावेगान्मूर्छितः क्षितावपतत्प्रतिबुद्धश्च वैतालिकारचितप्राबोधिकमङ्गलवाद्यादीन्यवारयत् ।

अतदर्हं महाराजं शयानमतथोचितम् । ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ॥ १ ॥

११० ] ति० टी०—असत्प्रियंवदां मिथ्याप्रियभाषिणीम् प्रदुष्टभावां दुष्टान्तःकरणामत एवामनोरमां संबन्धनं सप्राणं हृदयं दिधक्षमाणां त्वां जीवितुं जीवयितुं न विषहे नोत्सहे तव नाशमेवाशासे इत्यर्थः । "प्राणबन्धनं हि सोम्य मनः" इति च्छान्दोग्यश्रुतिः ॥ ११० ॥

रा० टी०—क्षुर इति । क्षुरोपमां क्षुरवत् स्वसंबद्धच्छेदनकर्त्रीम् । तत्र हेतुः असत्प्रियंवदामसती एव प्रियंवदेति कर्मधारयः प्रदुष्टभावां निषिद्धाभिप्रायविशिष्टामत एव स्वकुलोपघातिनीं मनोरमां रूपलावण्यमात्रेण रमणशीलां सबन्धनं प्राणसहितं हृदयं दिधक्षमाणां त्वां जीवितुं न विषहे उत्साहं न करोमि ११०

गो० टी०—क्षुरोपमामिति । क्षुरोपमां तद्वत् क्रूरा मसत्प्रियंवदां मिथ्याप्रियवादिनीं प्रदुष्टभावां प्रकर्षेण दुष्टहृदयाम् अमनोरमामिति पदच्छेदः सबन्धनं समूलं प्राणरूपमूलसहितं "प्राणबन्धनं हि सौम्य मनः" इति श्रुतेः । 'सदिन्धनम्' इति पाठे हृदयमेव सदिन्धनं दिधक्षमाणां दग्धुमिच्छन्तीं त्वां जीवितुं जीवयितुं न विषहे नोत्सहे ॥ ११३ ॥

१११ ] ति० टी०—दण्डवाक्यमुक्त्वा पुनस्तामाह—नेति । आत्मवतामात्मज्ञानाम् । अत्रापिः पूरणीयः । यदेवमतो ममेत्यादिः ॥ १११ ॥

रा० टी०—नेति । आत्मजेन विना आत्मवतो जानतो मे मम जीवितं नास्ति सुखं कुतः रतिः तत्कारणीभूतप्रीतिश्च कुतः अतः मम अहितं कर्तुं त्वं नार्हसि ॥ १११ ॥

गो० टी०—नेति । रतिस्त्वद्विषयेति शेषः । यदेवमत आह—ममाहितमिति । आत्मवतः जीवत इत्यर्थः ॥ ११४ ॥

११२] ति० टी०—अतिमात्रयातिक्रान्तसौन्दर्यपरिच्छेदया अतिक्रान्तमर्यादया । हृदये मर्मणि गृहीतः । प्रसारिताविल्यनेन पत्यावप्यधमर्णदृष्टिर्द्योत्यते असंप्राप्येत्यनेन पिस्पृक्षोरपि चित्तमूर्छाजनितवैवश्यं द्योतितम् । तदेवाह—यथातुर इति । आतुरो यथा किंचित्स्प्रष्टुकामोऽस्पृष्ट्वैव मध्ये मूर्च्छया पतति तथेत्यर्थः ॥ ११२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वादशः सर्गः ॥ १२ ॥

रा० टी०—स इति । अतिमात्रया दृढनिश्चयवत्या स्त्रिया केकय्या हृदये गृहीतः स भूमिपालः अनाथवत् विकपन् सन् प्रसारितौ देव्या उभौ चरणौ असंप्राप्य आतुरो यथा तथा पपात चरणौ ग्रहीतुं प्रचलितोऽपि मध्ये एव अपतदित्यर्थः । एतेन विह्वलतातिशयः सूचितः ॥ ११२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्वादशः सर्गः ॥ १२ ॥

गो० टी०—स इति । अतिमात्रया अमर्यादया स्त्रियहृदये गृहीतः तदधीनहृदय इत्यर्थः । भूमिपालोऽपि तां निग्रहीतुमसमर्थ इत्यर्थः अनाथवद्विलपन् त्वां जीवयितुं नोत्सहे ते पादौ स्पृशामि प्रसीदेत्यनवस्थितवचनानि भाषमाणः प्रसारिताविल्यनेनानादर उक्तः असंस्पृश्येत्यनेन पिस्पृक्षायामेव मूर्च्छा जातेति गम्यते ॥ ११६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्वादशः सर्गः ॥ १२ ॥

१ ] ति० टी०—अथ सत्यपाशबद्धतया प्रणामवाक्येन च न ते वचः करिष्यामीति वचसि सारशौभावं निश्चित्य पुनरप्याह—अतदर्हं श्रीप्रणामानर्हम् । अतथोचितं भूशयनानर्हम् ॥ १ ॥

१ आत्मवत इति गो. रा. पाठः । २ संस्पृश्येति गो. पाठः ।

अनर्थरूपासिद्धार्था ह्यभीता भयदर्शिनी । पुनराकारयामास तमेव वरमङ्गना ॥ २ ॥
त्वं कत्थसे महाराज सत्यवादी दृढव्रतः । मम चेदं वरं कस्माद्विधारयितुमिच्छसि ॥ ३ ॥
एवमुक्तस्तु कैकेय्या राजा दशरथस्तदा । प्रत्युवाच ततः क्रुद्धो मुहूर्तं विह्वलन्निव ॥ ४ ॥
मृते मयि गते रामे वनं मनुजपुंगवे । हैन्तानार्ये ममामित्रे सकामा सुखिनी भव ॥ ५ ॥
स्वर्गेऽपि खलु रामस्य कुशलं दैवतैरहम् । प्रत्यादेशादभिहितं धारयिष्ये कथं बत ॥ ६ ॥
कैकेय्याः प्रियकामेन रामः प्रव्राजितो वनैम् । यदि सत्यं ब्रवीम्येतत्तदसत्यं भविष्यति ॥ ७ ॥

२ ] ति० टी०—अनर्थरूपा कुलस्येति शेषः । असिद्धोऽर्थः प्रयोजनं यस्याः अभीता जनापवादादभीता भयदर्शिनी रामाद्भरतस्येति शेषः । तमेव वरं पूर्वदत्तमेव वरमुद्दिश्य राजानमाकारयामास संबोधयामास ॥ २ ॥

रा० टी०—दशरथोक्त्याद्यनुभवानन्तरकालिकं कैकयीवृत्तान्तमाह—अतदर्हमिति । अतदर्हं शोकयोग्यतारहितं देवलोकात्परिच्युतं ययातिमिव शयानं भूमौ पतितमतथोचितं तादृशशयनानर्हं महाराजं दशरथमनर्थरूपा राजेप्सितार्थविरुद्धार्थनिरूपणकर्त्री सिद्धार्था साधितदेवप्रयोजना अभीता वास्तवयशोरूपपत्यर्थसाधिकात्वरूपधर्मविशिष्टात्वेन धर्मच्युतिभीतिरहिता, किंच अभीता वास्तवयशोरूपपत्यर्थप्रापिका इणो रूपम् । अभयदर्शिनी रामनिष्ठसर्वहेतुकभयाभावदर्शनशीला केकयी तं याचितं वरं पुनः आकारयामास राज्ञा संपादयामास । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—न ते करिष्यामि वच इत्युक्त्वापि धर्मपाशबद्धतया पश्चात्तमः पुनस्तां सान्त्वयति त्रयोदशे—अतदर्हमित्यादि श्लोकद्वयमेकान्वयम् । अतदर्हं तादृशदुःखानर्हमतथोचितमधःशयनाद्यनुचितमनर्थरूपा पापरूपा असिद्धार्था अनिष्पन्नप्रयोजना अभीता लोकापवादभीतिरहिता भयदर्शिनी दशरथस्येति शेषः । यद्वा अभयदर्शिनी दशरथस्य भयमपश्यन्तीत्यर्थः । तमेव वरं पूर्वदत्तमेव वरमुद्दिश्य महाराजमाकारयामास संबोधयामास ' यद्वा दातव्यत्वेन ग्राहयामासेत्यर्थः । वस्तुतस्त्वेकवचनस्वारस्यात् वरं श्रेष्ठं दशरथं स्वाभिमतकथनायाह्वयामासेत्यर्थः ॥ १ ॥ २ ॥

३–५ ] ति० टी०—कत्थसे श्लाघसे । पूर्वार्धान्ते इतिरध्याहार्यः । विधारयितुम् ऋणत्वेनेति शेषः ॥ ३–५ ॥

रा० टी०—तत्संपादनप्रकारमाह—त्वमिति । हे महाराज ! सत्यवादी अत एव दृढव्रतः त्वं कथ्यसे जनैरिति शेषः । अतो मम वरं विधारयितुं स्वान्तरेव संस्थापयितुं दूरीकर्तुं वा कस्माद्धेतोरिच्छसि अनुचितमेतदिति तात्पर्यम् ॥ ३ ॥

गो० टी०—त्वमिति । विधारयितुं ऋणत्वेन धारयितुं व्यावर्तयितुं वा विशेषेण धारयितुमादातुमिति वार्थः ॥ ३ ॥

रा० टी०—एवमिति । एवमुक्तो राजा क्रुद्ध इव विह्वलन् सन् प्रत्युवाच ॥ ४ ॥

रा० टी०—तदाकारमाह—मृत इति । हे अनार्ये आर्यविरुद्धे ! हे अमित्रे ! मयि मृते लोकान्तरं प्राप्ते सति सुखिनी सुखविशिष्टा भव ॥ ५ ॥

गो० टी०—विह्वलन्मूर्च्छन् ॥ ४ ॥ ५ ॥

६ ] ति० टी०—रामप्रवासदुःखेन मृत्वा स्वर्गं गतस्यापि मे सुखं नास्तीत्याह—स्वर्गे इति । रामस्य कुशलं दैवतैः पृष्टोऽहं किमुत्तरं वदिष्य इति शेषः । वनं प्रत्यादिष्ट इत्युत्तरं देयं चेत्प्रत्यादेशात्तद्रूपादुत्तरादूर्ध्वं यद्देवैरभिहितं भविष्यति ज्येष्ठं श्रेष्ठगुणैर्युक्तं कथं प्रत्याख्यातवानसीत्येवंरूपं वाक्यं तत्कथं धारयिष्ये हृदय इति शेषः अतस्तदप्रत्याख्यानमेव वरमिति भावः ॥ ६ ॥

रा० टी०—स्वर्गे इति । स्वर्गे साकेतेऽपि दैवतैर्देवताभिमानिदेवैरभिहितं कथितं रामस्य कुशलं धारयिष्ये प्रत्यादेशात्प्रत्यादेशं प्राप्तं प्रसङ्गाद्देवैः कथितं तव कुशलं कथं धारयिष्ये तव कुशलं न श्रोष्यामीत्यर्थः ॥ ६ ॥

गो० टी०—स्वर्गे इति । रामस्य कुशलं प्रति दैवतैः प्रत्यादेशादभिहितं धिक्कारपूर्वमभिहितं वाक्यं कथं धारयिष्ये सहिष्ये मूढः स्त्रीहेतोः कथं गुणवत्पुत्रं त्यक्तवानसीत्यभिहितं श्रुत्वा कथमात्मानं धारयिष्ये तथाच रामप्रवासने इह परत्र च मम सौख्यं नास्तीत्यर्थः ॥ ६ ॥

७ ] ति० टी०—ननु सत्यवशात्प्रत्यादिष्ट इत्युत्तरं तत्राह—कैकेय्या इति । प्रियकामेन प्रियेण वरेण । एतत्सत्यं यदि यद्यपि ब्रवीमि तत्तथाप्येतन्मे वाक्यमसत्यं भविष्यति, असत्यं मंस्यन्तीत्यर्थः । कामुकतया प्रत्याख्यात इत्येव मंस्यन्त इत्याशयः ॥ ७ ॥

रा० टी०—कैकेय्या इति । कैकेय्याः प्रियकामेन केकयीनिष्ठप्रीतिविषयीभूतवरद्वयदानेच्छावता मया यदि रामो वनं प्रव्राजितः । एतत् सत्यं ब्रवीमि तदा तदभिषेकप्रतिज्ञानमसत्यं भविष्यति एतेन अन्यतरासत्यत्वं दुष्परिहर्तव्यमिति सूचितम् ॥ ७ ॥

गो० टी०—ननु सत्यप्रतिज्ञत्वनिर्वाहार्थं रामः प्रव्राजित इति वक्तव्यमित्यत्राह—कैकेय्या इति । मयेत्यनन्तरमितिकरणं द्रष्टव्यं तदसत्यं भविष्यति श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परन्तपेति रामोद्देशेनोक्तं वाक्यमसत्यं भविष्यतीत्यर्थः ॥ ७ ॥

१ इममिति गो. पाठः । २ हन्त नार्येति गो. पाठः । ३ मयेति गो. पाठः । ४ मंस्यन्ते इति साधु भाति ।

अपुत्रेण मया पुत्रः श्रमेण महता महान् । रामो लब्धो महातेजाः स कथं त्यज्यते मया ॥ ८ ॥
शूरश्च कृतविद्यश्च जितक्रोधः क्षमापरः । कथं कमलपत्राक्षो मया रामो विवास्यते ॥ ९ ॥
कथमिन्दीवरश्यामं दीर्घबाहुं महाबलम् । अभिराममहं रामं स्थापयिष्यामि दण्डकान् ॥ १० ॥
सुखानामुचितस्यैव दुःखैरनुचितस्य च । दुःखं नामानुपश्येयं कथं रामस्य धीमतः ॥ ११ ॥
यदि दुःखमकृत्वा तु मम संक्रमणं भवेत् । अदुःखार्हस्य रामस्य ततः सुखमवाप्नुयाम् ॥ १२ ॥
नृशंसे पापसंकल्पे रामं सत्यपराक्रमम् । किं विप्रियेण कैकेयि प्रियं योजयसे मम ॥ १३ ॥
अकीर्तिरतुला लोके ध्रुवं परिभविष्यति । तथा विलपतस्तस्य परिभ्रमितचेतसः ॥ १४ ॥
अस्तमभ्यागमत्सूर्यो रजनी चाभ्यवर्तत । सा त्रियामा तदार्तस्य चन्द्रमण्डलमण्डिता ॥ १५ ॥
राज्ञो विलपमानस्य न व्यभासत शर्वरी । सदैवोष्णं विनिःश्वस्य वृद्धो दशरथो नृपः ॥ १६ ॥

---

८-९ ] ति० टी०—त्यज्यते त्यक्ष्यते ॥ ८ ॥ ९ ॥

रा० टी०—अपुत्रेणेति । अपुत्रेण पुत्ररहितेन मया महता श्रमेण लब्धो महातेजाः पुत्रः स रामः मया कथं त्यज्यते त्यक्तुं न शक्नोमीत्यर्थः ॥ ८ ॥

रा० टी०—त्यागानर्हत्वमेव बोधयन्नाह—शूर इति । शूरत्वादिगुणविशिष्टः रामः कथं विवास्यते ॥ ९ ॥

गो० टी०—अपरित्यागे हेत्वन्तराणि दर्शयति—अपुत्रेणेत्यादि ॥ ८-१० ॥

१० ] ति० टी०—स्थापयिष्यामि प्रस्थापयिष्यामि ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—कथमिति । इन्दीवरश्यामत्वादिगुणविशिष्टं रामं दण्डकान् कथं स्थापयिष्यामि प्रस्थापयिष्यामि ॥ १० ॥

११ ] ति० टी०—दुःखैरिति षष्ठ्यर्थे तृतीया । दुःखं वनगमनरूपं दुःखसाधनम् ॥ ११ ॥

रा० टी०—सुखानामिति । सुखानामेव उचितस्य योग्यस्य दुःखैः दुःखानामनुचितस्य रामस्य दुःखं कथमनुपश्येयम् ॥ ११ ॥

गो०टी०—सुखानामिति । दुःखैरिति षष्ठ्यर्थे तृतीया ॥ ११ ॥

१२ ] ति० टी०—सर्वथा रामस्यादुःखकरणमेव मे श्रेय इत्याह—यदीति । अदुःखार्हस्य रामस्य दुःखमकृत्वा यदि मम संक्रमणं स्वर्गं प्रति गमनं भवेत्तदा स्वर्गे सुखमाप्नुयामित्यन्वयः । मरणे वराप्रदानजन्यदोषोऽपि न, जीवतो हि सा प्रतिज्ञेति भावः ॥ १२ ॥

रा० टी०—स्वसुखोपायं चिन्तयन्नाह—यदीति । अदुःखार्हस्य रामस्य दुःखं दुःखहेतुभूतवनप्रव्राजनरूपवरमकृत्वा असंपाद्य भरतस्येत्यर्थः यदि मम संक्रमणं लोकान्तरगमनं भवेत् तदा सुखमवाप्नुयामहमिति शेषः । द्रुतं लोकान्तरं प्राप्ते इहस्थया अनया संभाषणं न स्यात् तर्हीयं भिया स्वेप्सितं रामसन्निधौ न कथयिष्यतीति रामो वनं न, गमिष्यतीति तात्पर्यम् ॥ १२ ॥

गो० टी०—यदीति । अदुःखार्हस्य रामस्य दुःखमकृत्वा मम संक्रमणं यदि भवेत् ततस्तदा सुखमवाप्नुयां संक्रमणं तृणजलौकान्यायेन देहाद्देहान्तरप्राप्तिः पञ्चत्वमिति यावत् ॥ १२ ॥

१३ ] ति० टी०—मम प्रियं रामं विप्रियेण किं योजयसे इत्यन्वयः ॥ १३ ॥

रा० टी०—नृशंसे इति । सत्यपराक्रमं मम प्रियं रामं विप्रियेण वियोगेन किं किमर्थं योजयसे ॥ १३ ॥

गो० टी०—नृशंस इति । मम प्रियं रामं विप्रियेणानभिमतदण्डकारण्यगमनेन किं किमर्थं योजयसे ॥ १३ ॥

१४ ] ति० टी०—अकीर्तिः स्त्रीजित इत्यकीर्तिर्जन्मसंपादितां कीर्तिं परिभविष्यतीत्यर्थः ॥ १४ ॥

रा० टी०—रामप्रव्राजने अनर्थान्तरमपि भविष्यतीत्याह—अकीर्तिरिति । अकीर्तिः त्वद्वरप्रदानमूलकाभिषेकानिष्पत्तिहेतुकप्रतिज्ञाहानिजनितदुर्यशः परिभाविष्यति दूरीकरिष्यति कीर्तिमिति शेषः । परिभविष्यतीत्यस्य यदि भविष्यतीत्येवार्थस्तदा न शेषकल्पना । परीति लोके इत्यस्य विशेषणं वा संपूर्णेत्यर्थः । विच्प्रत्ययान्तमेतत् । अर्धं पृथक् । दशरथोक्तिं समाप्य वृत्तान्तरमाह—तथेति । तथा वर्णितप्रकारेण विलपतः परिभ्रमितचेतसः तस्य राज्ञः सूर्यः अस्तमभ्यागमत् अत एव रजनी रात्रिः अभ्यवर्तत प्राप्नोत् अर्धद्वयमेकान्वयि । "षष्ठी चानादरे" इत्यनुशासनविहिता तस्येत्यत्र षष्ठी ॥ १४ ॥

गो० टी०—अकीर्तिरित्यर्धम् । भविष्यतीति शेषः ॥ १४ ॥

गो० टी०—तथेति । तस्य विलपतः तस्मिन् विलपति सतीत्यर्थः ॥ १५ ॥

१५-१६ ] ति० टी०—यत्संबन्धिप्रदोषे स्वनिवेशप्रवेशात्पूर्वं सूर्योऽस्तमगमत्, रजनी चाभ्यवर्तत सा त्रियामा चन्द्रमण्डलमण्डिताप्यार्तस्य दुःखवती विलपमानस्य च न व्यभासत न प्रकाशेन सुखदाभूत् विलापेनैव रात्रिकालो व्यतीत इति भावः । यतः सा शर्वरी हिंसिका तस्येति शेषः शृणातीति योगात् ॥ १५ ॥ १६ ॥

---

१ चातुरिति गो. पाठः । २ प्रेषयिष्यामीति गो. पाठः । ३ कथेति गो. पाठः । ४ ध्रुवः परिभवश्च मे इति गो. पाठः । ५ तथेति गो. पाठः । ६ तथेति गो. रा. पाठः ।

विललापार्तवद्दुःखं गगनासक्तलोचनः । न प्रभातं त्वयेच्छामि निशे नक्षत्रभूषिते ॥ १७ ॥
क्रियतां मे दया भद्रे मयायं रचितोऽञ्जलिः । अथवा गम्यतां शीघ्रं नाहमिच्छामि निर्घृणाम् ॥ १८ ॥
नृशंसां केकयीं द्रष्टुं यत्कृते व्यसनं मम । एवमुक्त्वा ततो राजा कैकेयीं संयताञ्जलिः ॥ १९ ॥
प्रसादयामास पुनः कैकेयीं राजधर्मवित् । साधुवृत्तस्य दीनस्य त्वद्गतस्य गतायुषः ॥ २० ॥
प्रसादः क्रियतां भद्रे देवि राज्ञो विशेषतः । शून्ये न खलु सुश्रोणि मयेदं समुदाहृतम् ॥ २१ ॥
कुरु साधुप्रसादं मे बाले सहृदया ह्यसि । प्रसीद देवि रामो मे त्वद्दत्तं राज्यमव्ययम् ॥ २२ ॥

रा० टी०—सेति । चन्द्रमण्डलमण्डिता त्रियामा शर्वरी रात्रिः विलपमानस्य राज्ञो दशरथस्य न व्यभासत न प्राकाशयत् अन्तर्भावितणिजर्थः । संबन्धसामान्यविवक्षया राज्ञ इत्यत्र षष्ठी ॥ १६ ॥

गो० टी०—सा त्रियामेति । अत्रियामा यामत्रयवत्त्वं विहायातिदीर्घेत्यर्थः ॥ १६ ॥

रा० टी०—तथेति । तथा तेन प्रकारेण वृद्धः त्यक्तलोकवृत्तान्तः दशरथः उष्णं विनिःश्वस्य गगनासक्तलोचनः ऊर्ध्वदृष्टिः सन् आर्तवद्विललाप ॥ १६ ॥

गो० टी०—तथेति । आर्तवत् महारोगादिना पीडित इव दुःखं विललाप शृण्वतां यथा दुःखं भवति तथा विललापेत्यर्थः ॥ १७ ॥

१७ ] ति० टी०—आर्तवद्रोगपीडितवत्, यद्वा स्वार्थे वतिः शृण्वतां दुःखं यथा भवति तथा विललाप, यद्वा दुःखं प्राप्येति शेषः । अथ दुःखवशाद्रात्र्या अन्युष्टिं प्रार्थयते—न प्रभातमिति । 'त्वया' इति पाठे त्वया गतया जायमानं प्रातः कालमित्यर्थः । 'तव' इति पाठे त्वत्संबन्धिप्रातःकाल मित्यर्थः ॥ १७ ॥

रा० टी०—तद्विलपनमेवाह—नेति । हे नक्षत्रभूषिते निशे तव प्रभातं नेच्छामि प्रभातकालभाविरामवियोगभिया न वाञ्छामीत्यर्थः । हे भद्रे ! मे दया क्रियतामेतेन प्रभातत्वविशिष्टा न भवेति तत्प्रार्थना व्यञ्जिता ॥ १७ ॥

गो० टी०—नेति । प्रभातं प्रभातत्वं भावे निष्ठा अत्र प्रकरणे भर्त्सनप्रसादनाभ्यां पुनः पुनः क्रियमाणाभ्यां धर्ममपि त्यक्तुं न शक्नोमि न पुत्रमपीति गम्यते ॥ १८ ॥

१८–१९ ] ति० टी०—मे मह्यम् । भद्रे निशे ! एवं हि तस्याः कल्याणदत्वम्, प्रभाते रामविवासनभयमिति भावः । गम्यतां त्रियामया त्वया रात्र्यपगमे प्रजासंनिधानेनैतद्दर्शनाभाव इति भावः । यद्वा प्रभाते रामगमनेन झटिति मरणे सत्यस्या अदर्शनमिति भावः । नाहमिच्छामि द्रष्टुमित्यन्वयः ॥ १९ ॥

रा० टी०—अथवेति । अथवा शीघ्रं गम्यताम् । तत्र हेतुः निर्घृणां दयारहितां यत्कृते मम व्यसनं दुःखं तां केकयीं द्रष्टुमहं नेच्छामि एतेन निशाविरामे पुंजनबाहुल्यात् तद्दर्शनं न स्यादिति हेतुर्व्यक्तः । अर्धद्वयमेकान्वयि ॥ १८ ॥

रा० टी०—एवमिति । राजा केकयीमनेन प्रकारेण उक्त्वा संयताञ्जलिः आसेति शेषः । अर्धं पृथक् ॥ १९ ॥

गो० टी०—अथवेति । निर्घृणां निर्दयां प्रत्युत नृशंसां क्रूराम् ॥ १९ ॥ २० ॥

२० ] ति० टी०—त्वद्गतस्य सत्यवशत्वात्त्वद्वशंगतस्येत्यर्थः गतायुषोऽल्पावशिष्टायुषः ॥ २० ॥

रा० टी०—प्रसादयामासेति । राजधर्मवित् सामादिविज्ञाता राजा कैकेयीं पुनः प्रसादयामास । अर्धं पृथक् । तत्प्रसादनमेवाह—साधुवृत्तस्य कपटरहितवृत्तिविशिष्टस्य त्वद्गतस्य तव वशे प्राप्तस्येत्यर्थः । गतायुषः गता अवक्तव्यवचनेन निवृत्ता आयुः त्वद्विषयिणी प्रीतिर्यस्य तस्य विशेषतः सर्वराजतोऽधिकस्य राज्ञो मम प्रसादः क्रियताम् विशेषत इत्यत्र षष्ठ्यन्तात्तसिः । प्रसादान्वयित्वे तु प्रथमान्ताद्बोध्यः । अर्धद्वयमेकान्वयि ॥ २० ॥

गो० टी०—साधुवृत्तस्येति । त्वद्गतस्य त्वदेकशरणस्येत्यर्थः । गतायुषः अल्पावशेषमतीतायुष इत्यर्थः ॥ २१ ॥

२१ ] ति० टी०—राज्ञो विशेषतो राजत्वाद्विशेषेण प्रसाद उचितः इदं पूर्वोक्तकटुकवाक्यम् । शून्येन दुःखवशाद्वक्तव्यावक्तव्यविवेकरहितेन । यद्वा इदं रामाभिषेचनं शून्य एकान्ते निर्जने नोक्तम् किंतु सभायामतः प्रसादं कुरु सभ्योपहासो यथा न भवति तथेत्यर्थः ॥ २१ ॥

रा० टी०—मद्दुर्वचनजनितो विषादस्त्वया न कार्य इति बोधयन्नाह—शून्येनेति । हे सुश्रोणि ! शून्येन जनरहितत्वेन हेतुना इदं दुर्वचनं मया समुदाहृतं कथितम् । एकान्ते क्रूराभासमप्युपदेशवचनं कोपकारणं लोके न दृष्टमिति तात्पर्यम् । तेन त्वया कोपो न कार्य इति व्यञ्जितम् । अर्धं पृथक् ॥ २१ ॥

गो० टी०—शून्य इति । शून्ये निर्जने प्रदेशे इदं रामाभिषेचनं न समुदाहृतं खलु किंतु सर्वजनसंनिधौ समुदाहृतमित्यर्थः । यद्वा शून्येन दीनेन मयेत्यर्थः ॥ २२–२४ ॥

२२ ] ति० टी०—सहृदया मद्दुःखनशून्यहृदया । तदेवाह—प्रसीदेति । त्वया वरबलाद्गृहीतमेव राज्यं मत्प्रीतये रामाय देहीत्याशयः ॥ २२ ॥

रा० टी०—कुर्विति । हे बाले ! यतस्त्वं सहृदया रसज्ञा असि अतः मे प्रसादं प्रसन्नतां कुरु संपादय त्वं च प्रसीद । तेन किमत आह—त्वद्दत्तं राज्यं रामो लभतां तेन त्वं परं यशः अवाप्स्यसि । सार्धश्लोक एकान्वयी ॥ २२ ॥

१ तवेति रा. पाठः । २ भूषणे इति गो. पाठः । ३ मंहदिति गो. पाठः । ४ चेदमब्रवीदिति गो. पाठः । ५ विलपत इति साधु भाति ।

लभतामसितापाङ्गे यशः परमवाप्स्यसि । मम रामस्य लोकस्य गुरूणां भरतस्य च ॥
प्रियमेतद्गुरुश्रोणि कुरु चारुमुखेक्षणे ॥ ॥ २३ ॥

विशुद्धभावस्य हि दुष्टभावा दीनस्य ताम्राश्रुकलस्य राज्ञः ।
श्रुत्वा विचित्रं करुणं विलापं भर्तुर्नृशंसा न चकार वाक्यम् ॥ २४ ॥
ततः स राजा पुनरेव मूर्च्छितः प्रियामतुष्टां प्रतिकूलभाषिणीम् ।
समीक्ष्य पुत्रस्य विवासनं प्रति क्षितौ विसंज्ञो निपपात दुःखितः ॥ २५ ॥
इतीव राज्ञो व्यथितस्य सा निशा जगाम घोरं श्वसतो मनस्विनः ।
विबोध्यमानः प्रतिबोधनं तदा निवारयामास स राजसत्तमः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः ।

प्रभाते कैकेय्यन्यदृष्टान्तैः सत्यवचस्त्वं प्रशस्य स्वाभिमताकरणे प्राणविमोक्षणं च प्रतिज्ञाय सद्योरामप्रवासने दशरथं प्राचोदय त्तेन दुःशब्दैर्निन्दितापि स्वाशयं निर्बबन्ध । प्रियं रामं द्रष्टुमिच्छामीति दशरथस्तां न्यवेदयत्ततः प्रभातायां शर्वर्यां गृहीतसंभारः शिष्यपरिवृतो वसिष्ठः पुरीं प्राविशत्पूर्वमेव प्राप्तः सुमन्त्रो दशरथं संस्तुत्य रामाभिषेकमस्मारयत्तेनोद्दीपितशोकस्य राज्ञः करुणावचनं संश्रुत्य किंचिदपाक्रमत्ततो दशरथप्रेरणया राममानेतुमन्तःपुरान्निर्ययौ ।

पुत्रशोकार्दितं पापा विसंज्ञं पतितं भुवि । [4]विचेष्टमानमुत्प्रेक्ष्य ऐक्ष्वाकमिदमब्रवीत् ॥ १ ॥

२३ ] ति० टी०—गुरूणां वसिष्ठादीनाम् । 'गुरुश्रोणि' इति पाठे 'उरु' इति पाठान्तरे च उर्वी महती श्रोणिर्यस्यास्तात्दृशि २३॥

रा० टी०—ममेति । मदादेः प्रियमेतद् रामाभिषेचनं कुरु संपादय ॥ २३ ॥

२४ ] ति० टी०—रोदनेनाक्ष्णोस्ताम्रत्वात्ताम्रस्य अश्रुकलस्याश्रुपूर्णस्य । हिरण्यर्थे ॥ २४ ॥

गो० टी०—विशुद्धभावस्येति । ताम्रेक्षणस्य दुःखातिशयेनेति शेषः । अश्रुकलस्य अश्रुपूर्णस्य कण्ठः कामधेनुः विचित्रं प्रसादनभर्त्सनसहितत्वात् ॥ २६ ॥ २६ ॥

रा० टी०—राजवाक्यश्रवणानन्तरं कैकयीवृत्तान्तमाह—विशुद्धेति । दुष्टभावा तत्सदृशी अत एव नृशंसा तत्तुल्या केकयी विशुद्धभावस्य कापट्यरहिताभिप्रायविशिष्टस्य ताम्राश्रुकलस्य अतिविलापेन ताम्रप्रायनेत्राभ्यामश्रुकला यस्य तस्य भर्तुर्विलापं श्रुत्वा भर्तुर्वाक्यं वचनं न चकार । एतेन राजयशोऽक्षयभिलाषिणीत्वं तस्याः सूचितम् । भर्तुरित्युभयान्वयि ॥२४॥

२५ ] ति० टी०—तद्राज्ञः प्राक्तदा प्रियामतुष्टामेवंविधविनयवाक्येनापि संतोषमप्राप्ताम् । विवासनं प्रति याच्यमानं वरं समीक्ष्य दुःखितः । चिरपरिचितप्रेमत्वात्तां चिकर्तुमशक्नुवन्प्रवासनकर्म पुत्रं च त्यक्तुमशक्नुवन्कर्तव्यमूढतया दुःखितो विसंज्ञो मूर्छितः क्षितौ पपात ॥ २५ ॥

रा० टी०—तत इति । ततः स्ववचनानङ्गीकारानन्तरं पुत्रस्य विवासनं प्रति विवासनहेतोः प्रतिकूलभाषिणीं प्रियां समीक्ष्य पुनरपि मूर्छितः अत एव विसंज्ञो राजा क्षितौ निपपात ॥ २५ ॥

२६ ] ति० टी०—दीर्घं घोरमुष्णं च श्वसतः सा निशा जगाम । प्रतिबोधनं तत्साधनमङ्गलगीतादिकम् दुःखवशादिति भावः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०—इतीवेति । इतीव अतीव व्यथितस्य श्वसतः उच्छ्वासं प्राप्नुवतः राज्ञः घोरं यथा स्यात्तथा निशा जगाम अत एव तदा वन्द्यादिप्रबोधनसमये तैः प्रबोध्यमानोऽपि राजसत्तमः प्रतिबोधनं प्रतिबोधकवन्द्यादिवचनं निवारयामास तेन क्लेशाधिक्यं सूचितम् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०—इतीति । प्रतिबोधनं मङ्गलपटहवीणादिकं प्रतिबोधनसाधनं, यद्वा वैतालिकैः क्रियमाणं प्रतिबोधनम् ॥२७॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

१ ] ति० टी०—एवंदशां प्राप्तेऽपि राजनि कैकेयी मन्निमित्ततो राजा म्रियते चेन्म्रियतां दृढः, न तु मयोक्तमन्यथा कार्यमिति निश्चित्याह—पुत्रेत्यादि । पापा कैकेयी विचेष्टमानं मरणकाल इव विकलमुत्प्रेक्ष्य सम्यग्दृष्ट्वापीत्यर्थः ॥ १ ॥

१ भवान्ब्रवीति गो. पाठः । २ ताम्रेक्षणस्याश्रुकलस्येति गो. पाठः । ३ अतुष्टामिति गो. पाठः । ४ विवेष्टमानमुदीक्ष्य सैक्ष्वाकमिति गो. पाठः ।

पापं कृत्वेवै किमिदं मम संश्रुत्य संश्रवम् । शेषे क्षितितले सन्नः स्थित्यां स्थातुं त्वमर्हसि ॥ २ ॥
आहुः सत्यं हि परमं धर्मं धर्मविदो जनाः । सत्यमाश्रित्य चै मया त्वं धैर्मं प्रतिचोदितः ॥ ३ ॥
संश्रुत्य शैब्यः श्येनाय स्वां तनुं जगतीपतिः । प्रदाय पक्षिणे रौंजा जगाम गतिमुत्तमाम् ॥ ४ ॥
तथा ह्यलर्कस्तेजस्वी ब्राह्मणे वेदपारगे । याचमाने स्वके नेत्रे उद्धृत्याविमना ददौ ॥ ५ ॥
सरितां तु पतिः स्वल्पां मर्यादां सत्यमन्वितः । सत्यानुरोधात्समये वेलां स्वां नातिवर्तते ॥ ६ ॥
सत्यमेकपदं ब्रह्म सत्ये धर्मः प्रतिष्ठितः । सत्यमेवाक्षया वेदाः सैत्येनावाप्यते परम् ॥ ७ ॥

रा० टी०–राजवृत्तमुक्त्वा कैकयीवृत्तान्तमाह–पुत्रेति । पुत्रशोकार्दितं संभावितपुत्रवियोगहेतुकशोकविशिष्टमत एव विसंज्ञं कर्तव्यविषयकविवेकराहितमत एव भुवि पतितमत एव विचेष्टमानं विविधचेष्टां कुर्वन्तमैक्ष्वाकमुत्प्रेक्ष्य अवलोक्य पापा पत्यनिष्टकारिणीत्वेन प्रतिभासमाना कैकयी इदमब्रवीत् ॥ १ ॥

गो० टी०–अथ रामविवासननिर्धारणं दर्शयति चतुर्दशे–पुत्रेत्यादि ॥ १ ॥

२ ] ति० टी०–मम संश्रवं वरदानरूपं संश्रुत्य प्रतिश्रुत्याङ्गीकृत्य पापं कृत्वेव सन्नः पीडितः सञ्छेषे इदं किम्, इदं नोचितमित्यर्थः अतः स्थित्यां सत्यपालनरूपायां सतां मर्यादायाम् ॥ २ ॥

रा० टी०–तद्वचनमेवाह–पापमिति । संश्रवं दास्यामीति पूर्वप्रतिज्ञाविषयीभूतं वरद्वयमित्यर्थः । संश्रुत्य तद्दास्यामीतीदानीं प्रतिज्ञाय इदं दानं पापमनिष्टमिव कृत्वा मत्वेत्यर्थः । सन्नः पीडितस्त्वं क्षितितले किं किमर्थं शेषे । ननु किं कर्तव्यमित्यत आह–स्थित्यां सत्यपालनरूपेक्ष्वाकुकुलोचितमर्यादायां स्थातुमर्हसि । 'मर्यादा धारणा स्थितिः' इत्यमरः ॥ २ ॥

गो० टी०–पापमिति । संश्रवं दास्यामीति प्रतिज्ञां संश्रुत्य कृत्वेत्यर्थः । पाकं पचतीतिवन्निर्देशः । पापं प्रतिज्ञाताकरणरूपं पापं कृत्वैव क्षितितले सन्नः अवसन्नः सन् शेषे किमिदं स्थित्यां मर्यादायां सत्यपरिपालनरूपायाम् ' मर्यादा धारणा स्थितिः ' इत्यमरः । स्थातुमर्हसि ॥ २ ॥

३ ] ति० टी०–सत्यरूपं धर्ममाश्रित्योद्दिश्य त्वं च त्वं तु मया प्रतिचोदितो वरदानविषये प्रेरितः तव सत्यं रक्षितुमेषा मे प्रेरणा, अन्यथा प्रतिज्ञातान्तरदानं विनैव मरणे तवाधर्मः स्यादिति भावः ॥ ३ ॥

रा० टी०–सत्यस्याङ्गीकारे हेतुं वदन्ती आह–आहुरित्यादिभिः । धर्मविदः निखिलधर्मवेदितारः धर्मविषयकसंशयरहिता इत्यर्थः जनाः सत्यं परमं धर्ममाहुः अतः सत्यमाश्रित्य ग्रहीतव्यत्वेन स्वीकृत्य मया त्वं धर्मं प्रति चोदितः कथितः ॥ ३ ॥

गो० टी०–इदमेव युक्तमिति दर्शयति–आहुरित्यादिना । सत्यरूपं धर्ममाश्रित्य हि मया प्रचोदितः ॥ ३ ॥

४–५ ] ति० टी०–यद्यपि सत्यपालने प्राणसंशयस्तथापि तमङ्गीकृत्य सत्यरक्षणमेव ज्याय इत्याह–संश्रुत्येत्यादि ॥ ४-५ ॥

रा० टी०–समिति । जगतीपतिः राजा स्वां तनुं श्येनभक्ष्यकपोतशरीरप्रतिनिधिभूतत्वेन प्रकल्पितामित्यर्थः ॥ ४ ॥

गो० टी०–प्राणसंकटे कथं सत्यं पालनीयमित्यत्राह–संश्रुत्येत्यादिना ॥ ४ ॥

रा० टी०–तथेति । अविमना वैमनस्यरहितः ॥ ५ ॥

गो० टी०–तथेति । याचमाने ब्राह्मणे अविमनाः सुप्रसन्नमनाः सन् नेत्रे ददौ तस्मा इति शेषः ॥ ५ ॥

६ ] ति० टी०–सरितां पतिः सत्यमन्वितः सत्यं प्राप्तः सत्यानुरोधात्सत्यत्यागभयात्स्वल्पां मर्यादां सुलङ्घ्यामपि वेलां समये चन्द्रोदयरूपे वृद्धिसमयेऽपि नातिवर्तते ॥ ६ ॥

रा० टी०–सरितामिति । सत्यमन्वितः प्राप्तः सरितां पतिः समुद्रः मर्यादां स्वकृतनियमविशिष्टां स्वां वेलां समये स्ववृद्धिकारणीभूतचन्द्रोदयकालेऽपि सत्यानुरोधात् स्वनिष्ठसत्यस्मरणान्नातिवर्तते उल्लङ्घते ॥ ६ ॥

गो० टी०–सरितामिति । सरितां पतिः समुद्रः मर्यादां सत्यमन्वितः वेलां नातिवर्तेत इति मर्यादारूपं सत्यं प्राप्तः सन् सत्यानुरोधात् स्वकृतसत्यानुवर्तनात् समये संकल्पितकाले स्वां वेलां स्वल्पामपि नातिवर्तेत इति संबन्धः ॥ ६ ॥

७ ] ति० टी०–प्रणवरूपैकपदवाच्यत्वाद्वाच्यवाचकयोरभेदाद्यत्प्रणवरूपं ब्रह्म श्राव्ये तत्सत्यवाक्यमेव । अक्षया वेदाः अक्षयं तज्ज्ञानफलम् सत्येनैव परं पदं ब्रह्मस्वरूपं प्राप्यते चित्तशुद्धिद्वारेति भावः ॥ ७ ॥

रा० टी०–सत्यस्य सर्वकारणत्वं प्रदर्शयन्ती आह–सत्यमिति । सत्यमेव एकपदमेकं सर्ववेदकारणत्वेन प्रथमं पदं सु यन्तं तदेव तदिति कर्मधारयः । ब्रह्म रामशब्दतादात्म्यापन्नप्रणव इत्यर्थः प्रणवोऽपि सत्यप्रतिपादक इत्यर्थः अत एव धर्मः सत्ये एव प्रतिष्ठितः तन्मूलक इत्यर्थः अत एव वेदा अपि सत्यं तत्प्रतिपादका इत्यर्थः अत एव सत्येन सत्यावलम्बेन परम् " सा काष्ठा सा परा गतिः " इति श्रुतिप्रतिपादितं राम इत्यर्थः । अवाप्यते प्राप्यते ॥ ७ ॥

गो० टी०–सत्यमिति । सत्यमेव एकपदं ब्रह्म एकं मुख्यम् 'एके मुख्यान्यकेवलाः' इत्यमरः । पद्यत इति पदं परम-

१ प्रत्वेति गो. पाठः । २ हीति गो. पाठः । ३ च धर्मप्रचोदित इति गो. पाठः । ४ राजर्षिरिति गो. पाठः । ५ सत्येनैवाप्यते इति गो. पाठः ।

सत्यं समनुवर्तस्व यदि धर्मे धृता मतिः । स वरः सफलो मेऽस्तु वरदो ह्यसि सत्तम ॥ ८ ॥
धर्मस्यैवाभिकामार्थं मम चैवाभिचोदनात् । प्रव्राजय सुतं रामं त्रिः खलु त्वां ब्रवीम्यहम् ॥ ९ ॥
समयं च ममार्येमं यदि त्वं न करिष्यसि । अग्रतस्ते परित्यक्ता परित्यक्ष्यामि जीवितम् ॥ १० ॥
एवं प्रचोदितो राजा कैकेय्या निर्विशङ्कया । नाशकत्पाशमुन्मोक्तुं बलिरिन्द्रकृतं यथा ॥ ११ ॥
उद्भ्रान्तहृदयश्चापि विवर्णवदनोऽभवत् । स धुर्यो वै परिस्पन्दन्युगचक्रान्तरं यथा ॥ १२ ॥
विकलाभ्यां च नेत्राभ्यामपश्यन्निव भूमिपः । कृच्छ्राद्धैर्येण संस्तभ्य कैकेयीमिदमब्रवीत् ॥ १३ ॥
यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः । संत्यजामि स्वजं चैव तव पुत्रं सह त्वया ॥ १४ ॥

---

प्राप्यं ब्रह्मेत्यर्थः । यद्वा एकं पदं प्रणवरूपं वाचकं यस्य तत्तथा " ॐमित्येकाक्षरं ब्रह्म " इतिस्मृतेः । सत्ये धर्मः प्रतिष्ठितः सत्यमेव धर्मस्य परा काष्ठेत्यर्थः । अक्षया वेदाश्च सत्यमेव प्राधान्येन प्रतिपादयन्तीत्यर्थः । परं प्रयोजनं सत्येनैवाप्यते ॥७॥

८ ] ति० टी०—तस्मात्सत्यमिति ॥ ८ ॥

रा० टी०—सत्यमिति । यदि धर्मे मतिः धृता निश्चिता तर्हि सत्यं समनुवर्तस्व न त्यजेत्यर्थः । अतः स भवत्प्रतिज्ञातः सफलः अस्तु दीयतामित्यर्थः ॥ ८ ॥

गो० टी०—सत्यमिति । अत्रादौ तस्मादित्युपस्कार्यम् धृता स्थिरा । वरदः सर्वेषां सर्ववरप्रदः ॥ ८ ॥

९ ] ति० टी०—धर्मस्य परलोकासिद्धिफलकस्य अभिकामार्थं प्रार्थनीयफलसिद्ध्यर्थं क्रियमाणान्ममाभिचोदनात्प्रेरणाच्च त्वं सुतं रामं प्रव्राजय । एवं त्वां त्रिर्ब्रवीमि अतो नाहमस्माद्वरग्रहणान्निवर्तयितुं शक्येति भावः ॥ ९ ॥

रा० टी०—धर्मस्येति । धर्मस्य अभिकामार्थं प्रवृत्तिकामनया एव मम अभिचोदनात् प्रार्थनातः रामं प्रव्राजय इति त्रिः त्रिवारं ब्रवीमि ॥ ९ ॥

गो० टी०—धर्मस्येति । अभिकामार्थं प्रीत्यर्थं धर्माभिवृद्ध्यर्थमिति यावत् । मम प्रियाया इति शेषः । समनस्कत्वज्ञापनाय त्रिरित्युक्तम् ॥ ९ ॥

१० ] ति० टी०—विपक्षे स्त्रीवधदोषश्चाधिकस्ते इत्याह—समयं चेति । मद्वरविषयमर्थं परित्यक्ता त्वयोपेक्षिता तेऽग्रतो जीवितं त्यक्ष्यामि ॥ १० ॥

रा० टी०—समयमिति । हे आर्य ! समयं प्रतिज्ञाकालोत्तरोचितं न करिष्यसि वरं न दास्यसीत्यर्थः । तर्हि परित्यक्ता प्रतीयमानकटुभाषणेन त्वया दूरीकृता अहं जीवितं परित्यक्ष्यामि ॥ १० ॥

गो० टी०—समयमिति । समयं रामविवासनम् । परित्यक्ता उपेक्षिता ॥ १० ॥

११ ] ति० टी०—एवं न्यायोपेतप्रकारेण पाशं सत्यपाशबन्धनम् इन्द्रकृतमिन्द्रप्रेरितोपेन्द्रकृतं पदत्रयमितदेयप्रतिश्रवरूपं पाशम् ॥ ११ ॥

रा० टी०—एवमिति । निर्विशङ्कया वास्तवपत्युपकारप्रार्थनया दोषशङ्कारहितया कैकय्या प्रचोदितः प्रार्थितो राजा पाशं प्रातीतिकभयोत्पादकत्वेन पाशसदृशं वचनमुन्मोक्तुं परिहर्तुं नाशकत् । तत्र दृष्टान्तः इन्द्रकृतम् इन्द्रप्रार्थनया वामनयाचितमित्यर्थः ॥ ११ ॥

गो० टी०—एवमिति । एवं त्रिर्ब्रवीमीत्येवं पाशं सत्यपाशमुन्मोक्तुं मोचयितुं बलिः महाबलिः इन्द्रकृतं इन्द्रद्वारोपेन्द्रकृतं पाशं पदत्रयदानप्रतिज्ञारूपं, पदत्रयादानानिगलं वा ॥ ११ ॥

१२ ] ति० टी०—युगचक्रयोरन्तरं मध्यं प्राप्य परिस्पन्दंस्तिर्यक्चेष्टमानो धुर्य इव उद्भ्रान्तहृदयत्वादिविशिष्टोऽभवत् ॥१२॥

रा० टी०—उदिति । स राजा उद्भ्रान्तहृदयः संचलितचित्तः अभवत् । तत्र दृष्टान्तः युगचक्रान्तरं युगचक्रयोर्मध्यं प्राप्येति शेषः । परिस्पन्दन् निःसरणार्थं चेष्टां कुर्वन् धुर्यः अनड्वानिव ॥ १२ ॥

गो० टी०—उद्भ्रान्तहृदय इति । स राजा युगचक्रयोरन्तरं परिस्पन्दन् गच्छन् धुर्यो यथा अनड्वानिव उद्भ्रान्तहृदयो विवर्णवदनश्चाभवत् ॥ १२ ॥

१३ ] ति० टी०—संस्तभ्य विकलं चित्तमिति शेषः ॥१३॥

रा० टी०—विकलाभ्यामिति । विकलाभ्यां दर्शनकलारहिताभ्यामपश्यन्निव संस्तभ्य चित्तं स्थिरीकृत्य इदमब्रवीत् ॥ १३ ॥

गो० टी०—विह्वलाभ्यामिति । विह्वलाभ्यां क्षुब्धाभ्यामपश्यन्निव अन्ध इव स्थितः भूमिपः कृच्छ्रात् लब्धेन धैर्येण संस्तभ्य दुःखातिशयजनितक्षोभं निरुध्येत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—ईदृश्याः सपुत्रायास्त्याग एवोचित इत्याशयेनाह—यस्ते इति । मन्त्रकृतः "गृभ्णामि—" इति मन्त्रेण संस्कृतः । संत्यजामि तत्प्रयुक्तं व्यवहारं त्यजामि स्वजं स्वस्माज्जातं तव पुत्रं च त्वया सह त्यजामि ॥ १४ ॥

रा० टी०—तदाकारमाह—य इति । अग्नौ विधिस्थापितवह्निसन्निधौ मन्त्रकृतः " गृभ्णामि " इतिमन्त्रेण संस्कृत मया धृतः यस्ते पाणिः तं त्वया सह स्वजं तव पुत्रं च संत्यजामि इतःप्रभृति इह लोके न स्प्रक्ष्यामीत्यर्थः ॥ १४ ॥

गो० टी०—य इति । हे पापे ! अग्नौ अग्निसमीपे सामीप्ये सप्तमी मन्त्रकृतः मन्त्रसंस्कृतः यः पाणिर्मया धृतस्तं त्यजामि तत्प्रयुक्तव्यवहारं त्यजामीत्यर्थः । अत एव स्वजं स्वस्मात् जातमपि तव पुत्रं त्वया सह त्यजामि ॥ १४ ॥

---

१ इवेति गो. पाठः । २ अभ्यचोदनादिति गो. पाठः । ३ अवेति गो. पाठः । ४ विह्वलाभ्यामिति गो. पाठः । ५ तमिति गो. पाठः ।

प्रयाता रजनी देवि सूर्यस्योदयनं प्रति । अभिषेकाय हि जनस्त्वरयिष्यति मां ध्रुवम् ॥ १५ ॥
रामाभिषेकसंभारैस्तदर्थमुपकल्पितैः । रामः कारयितव्यो मे मृतस्य सलिलक्रियाम् ॥ १६ ॥
सपुत्रया त्वया नैव कर्तव्या सलिलक्रिया । व्याहन्तास्यशुभाचारे यदि रामाभिषेचनम् ॥ १७ ॥
न शँक्तोऽद्यास्म्यहं द्रष्टुं दृष्ट्वा पूर्वं तथामुँखम् । हतहर्षं तँथानन्दं पुनर्जनमवाङ्मुखम् ॥ १८ ॥
तां तथा ब्रुवतस्तस्य भूमिपस्य महात्मनः । प्रभाता शर्वरी पुण्या चन्द्रनक्षत्रमाँलिनी ॥ १९ ॥
ततः पापसमाचारा कैकेयी पार्थिवं पुनः । उवाच परुषं वाक्यं वाक्यज्ञा रोषमूर्छिता ॥ २० ॥
किमिदं भाषसे राजन्वाक्यं गररुजोपमम् । आनाययितुमक्लिष्टं पुत्रं राममिहार्हसि ॥ २१ ॥

१५-१६ ] ति० टी०–किं च रामाभिषेको मयाशक्यनिवारण इत्याह–प्रयातेत्यादि । उदयनं प्रत्युदयं प्रतिलभ्य । तदर्थमभिषेकार्थं कल्पितै रामाभिषेकसंभारैरभिषेकं कर्तुं गुरुजनो मां त्वरयिष्यति अतो गुरुजनानुरोधेन मया रामः कारयितव्यः कृताभिषेकः कारयितव्यः । एवंसति रुष्टया मत्सलिलक्रिया न कार्येत्याह–मृतस्येत्यादि । मा कुर्विति शेषः ॥ १५ ॥ १६ ॥

रा० टी०–रामाभिषेकनिवृत्तिर्न स्यादिति बोधयन्नाह–प्रयातेति । हे देवि ! रजनी प्रयाता व्यतीता अत एव सूर्यस्य उदयनं प्रति प्रतिलभ्य रामाभिषेकसंभारैः सहितः जनः अभिषेकाय मां त्वरयिष्यति एतेन रामाभिषेको भविष्यत्येवेति ध्वनितम् । तत्कर्तृकाभिषेकनिवर्तननिवारणाय तां भर्त्सयन्नाह–हे अशुभाचारे ! यदि रामाभिषेचनं व्याहन्तासि विध्वंसितासि तदा तदर्थमभिषेकार्थमुपकल्पितैः अधिकृतैर्गुरुभिः मृतस्य मृतवल्लोकान्तरं प्राप्तस्य मे सलिलक्रियां वेदबोधितलोकान्तरप्राप्तिहेतुकसलिलक्रियोपलक्षितकर्मविशेषमुद्दिश्य रामः कारयितव्य अधिकर्तव्यः सपुत्रया त्वया नैव कर्तव्या । श्लोकत्रयं संमिलितान्वयि ॥ १५–१७ ॥

गो० टी०–प्रयातेति । उदयनं प्रति उदयं प्रतिलभ्य त्वरयिष्यतीति संबन्धः ॥ १५ ॥

गो० टी०–रामाभिषेकसम्भारैरिति । तदर्थं रामाभिषेकार्थमुपकल्पितैः रामाभिषेकसम्भारैः रामाभिषेकसामग्रीभिः सह गुरुजनस्त्वरयिष्यतीति पूर्वेण संबन्धः । यद्वा अभिषेकसामग्र्येव सलिलक्रियासामग्री भवत्वित्यर्थः ॥ १६ ॥

१७ ] ति० टी०–क्रोधातिशयेनोक्तमेवार्थं पुनराह–सपुत्रयेति । इति कतकतीर्थौ मम तु प्रतिभाति–सूर्योदयं प्रतिलभ्याभिषेकं कर्तुं त्वरयिष्यति, अतः स एव मया कर्तव्य इत्याशयार्थः, त्वं तु त्याज्यैवेति भावः । ननु मयि जीवन्त्यां कथं रामाभिषेको भविष्यति तत्राह–यदि गुरूनप्यवज्ञाय रामाभिषेचनं व्याहन्तासि तद्विघातं करिष्यसि तदाभिषेकार्थं कल्पितै रामाभिषेकसंभारैर्मृतस्य मे सलिलक्रियां मया रामः कारयितव्यः । क्रोधादाह–सपुत्रयेति ॥ १७ ॥

गो० टी०–त्वयेति । व्याहन्तासीति लुण्मध्यमपुरुषैकवचनम् ॥ १७ ॥

१८ ] ति० टी०–ननु किमनेनात्मवैधव्यव्यवसायेन । पुत्रादप्यात्मनः प्रियत्वात् “आत्मनः कामाय सर्वं प्रियं भवति” इति श्रुतेरत आह–न शक्त इति । तथामुखं तादृशमुखवन्तमूर्ध्वविकसितमुखं दृष्ट्वा पुनरिदानीमवाङ्मुखं म्लानं द्रष्टुं न शक्नोमि । एवं च तादृशजीवनापेक्षया मरणं मे श्रेय इति सर्वथा मया मर्तव्यमिति भावः ॥ १८ ॥

रा० टी०–अभिषेकनिवृत्तौ इह लोके स्वस्थितेरयोग्यतां बोधयन्नाह–नेति । तथासुखं वर्णिताभिषेकहेतुकसुखविशिष्टं जनं पूर्वं दृष्ट्वा हतहर्षं विध्वस्तहर्षकारणकमत एव निरानन्दमानन्दरहितमत एव अवाङ्मुखं जनं द्रष्टुं न शक्तोऽस्मि । जनमित्युभयान्वयि ॥ १८ ॥

गो० टी०–न चेति । तथासुखं तादृशसुखयुक्तं जनं दृष्ट्वा पुनः हतहर्षं हतहर्षविकारं निरानन्दमत एवावाङ्मुखं जनं द्रष्टुं न शक्नोमि ॥ १८ ॥

१९ ] ति० टी०–तां कैकेयीम् । पुण्या प्रभाता पुण्यसाधनप्रभातकालावच्छिन्ना जातेत्यर्थः । यद्वा निरन्तररामचिन्तासमेतत्वात्पुण्या शर्वरी तथा जातेत्यर्थः ॥ १९ ॥

रा० टी०– तामिति । तां केकयीं तथा तेन प्रकारेण ब्रुवतः भूमिपस्य शर्वरी रात्रिः प्रभाता प्रभातत्वं प्राप्ता ॥ १९ ॥

गो० टी०–तामिति । तस्य ब्रुवतः तस्मिन् ब्रुवतीत्यर्थः । पुण्येत्युक्तिः अनन्तरं रामदर्शनसंभवात् ॥ १९ ॥

२० ] ति० टी०–रोषमूर्च्छिता क्रोधव्याप्ता । परुषं मदीयमृणं दत्त्वा इत उत्तिष्ठेत्येवंरूपम् ॥ २० ॥

रा० टी०–तत इति । पापसमाचारा पापत्वेन प्रतीयमानः समाचारो यस्याः, रोषमूर्च्छिता रोषः कोपः मूर्छितो यया क्रोधरहितेत्यर्थः । परुषं वाक्यमुवाच ॥ २० ॥

गो० टी०–तत इति । रोषमूर्च्छिता क्रोधेन व्याप्ता ॥ २० ॥

२१ ] ति० टी०–गरो विषं रुजा शलादि तद्वदुःखदं किं भाषसे व्यर्थमेवेति भावः । ‘वाक्यमङ्गरुजोपमम्’ इतिपाठेऽङ्गेति राजामन्त्रणम् । इहानाययितुम् मदृणदानं विना इतो बहिर्गमनमशक्यमिति तात्पर्यम् ॥ २१ ॥

रा० टी०–तद्वचनमेवाह–किमिति । गररुजोपमं हेयत्वेन विषरोगसदृशं किं भाषसे न वक्तव्यमित्यर्थः । उचित-

१ अभिषेकं गुरुजन इति गो पाठः । २ च शक्नोम्यहमिति गो. पाठः । ३ सुखमिति गो. रा. पाठः । ४ निरानन्दमिति गो. रा. पाठः । ५ मालिनीति गो. पाठः ।

स्थाप्य राज्ये मम सुतं कृत्वा रामं वनेचरम् । निःसपत्नां च मां कृत्वा कृतकृत्या भविष्यसि॥ २२ ॥
स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तमः । राजा प्रचोदितोऽभीक्ष्णं कैकेय्या वाक्यमब्रवीत्॥ २३ ॥
धर्मबन्धेन बद्धोऽस्मि नष्टा च मम चेतना । ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम्॥ २४ ॥
ततः प्रभातां रजनीमुदिते च दिवाकरे । पुण्ये नक्षत्रयोगे च मुहूर्ते च समागते ॥ २५ ॥
वसिष्ठो गुणसंपन्नः शिष्यैः परिवृतस्तथा । उपगृह्याशु संभारान्प्रविवेश पुरोत्तमम् ॥ २६ ॥
सिक्तसंमार्जितपथां पताकोत्तमभूषिताम् । [ विचित्रकुसुमाकीर्णां नानास्रग्भिर्विराजिताम् ]
संहृष्टमनुजोपेतां समृद्धविपणापणाम् ॥ २७ ॥
महोत्सवसमायुक्तां राघवार्थे समुत्सुकाम् । चन्दनागुरुधूपैश्च सर्वतः परिधूपिताम् ॥ २८ ॥
तां पुरीं समतिक्रम्य पुरंदरपुरोपमाम् । ददर्शान्तःपुरं श्रीमान्नानाध्वजगणायुतम् ॥ २९ ॥
पौरजानपदाकीर्णं ब्राह्मणैरुपशोभितम् । यष्टिमद्भिः सुसंपूर्णं सदश्वैः परमार्चितैः ॥ ३० ॥
तदन्तःपुरमासाद्य व्यतिचक्राम तं जनम् । वसिष्ठः परमप्रीतः परमर्षिभिरावृतः ॥ ३१ ॥

माह—अक्लिष्टं त्रैकालिकबाधारहितं राममानाययितुमिह प्रापयितु मर्हसि ॥ २१ ॥

गो० टी०—किमिदमिति । गरुजोपमं विषजनितव्याधिसदृशम् ' अङ्गरुजोपमम् ' इतिपाठे सर्वाङ्गव्यासमहाव्याधिसदृशमित्यर्थः। अङ्गेति संबोधनं वा। अक्लिष्टं अक्लेशं यथा भवति तथा आनाययितुमिति संबन्धः॥ २१ ॥ २२ ॥

२२ ] ति० टी०—कृतकृत्यः कृतशौचादिकृत्यः । " कृत्ये " इत्यावश्यके कृत्यप्रत्ययः ॥ २२ ॥

रा० टी०—ननु किं प्रयोजनमानयने इत्यत आह—स्थाप्येति। राज्ये राज्यपालने मम सुतं स्थाप्य स्थापयित्वा नियुज्येत्यर्थः । निःसपत्नाम् एतत्प्रतिबन्धकीभूतशत्रुरहिताम् ॥ २२ ॥

२३ ] ति० टी०—तुन्नो व्यथां प्रापितः । 'तुन्नः' इतिपाठे प्रेरितः तीक्ष्णप्रतोदप्रेरितो हयो यथाऽऽरोहाधीनः तथा तद्वाक्यप्रेरितो राजा तदधीनो भूत्वाहेत्यर्थः ॥ २३ ॥

रा० टी०—स इति । प्रतोदेन कशया तुन्नःताडितः'तुन्नः' इति पाठेऽप्ययमेवार्थः । हयोत्तम इव केकय्या प्रचोदितो राजा वाक्यमब्रवीत् ॥ २३ ॥

गो० टी०—स इति । तुन्नः व्यथितः प्रतोदेन तोत्रेण अभीक्ष्णं पुनःपुनः ' शश्वदभीक्ष्णमसकृत्समाः ' इत्यमरः ॥ २३ ॥

२४ ] ति० टी०—तदाह—धर्मेति । एवं च ममाचेतनत्वात्त्वमेव स्वाभीष्टं यथा सिध्यति तथा कुरु अहं न किमपि वच्मीति भावः। सर्वथा चेतनाभावात्प्रायामं द्रष्टुं परमिच्छामि तथथा संपद्यते तथा कुरु एतावद्धा मदिष्टं कुर्विति भावः ॥२४॥

रा० टी०—तद्वचनमेवाह—धर्मेति । धर्मबन्धेन स्वकुलोचितसत्यप्रतिज्ञत्वधर्मरूपबन्धनेन बद्धः संयतोऽस्मि अतः मम चेतना बुद्धिः नष्टा कर्तव्यनिश्चयरहिता अतः धार्मिकं रामं द्रष्टुमिच्छामि उचितमेव स करिष्यतीति तात्पर्यम् ॥ २४ ॥

गो० टी०—धर्मबन्धेनेति । धर्मबन्धेन धर्मपाशेन बद्धोऽस्मीत्यनेन रामविवासनं मनागनुज्ञातम् । द्रष्टुमिच्छामि गमनात्पूर्वमिति शेषः ॥ २४ ॥

२५ ] ति० टी०—प्रभातां रजनीं दृष्ट्वा सरय्वां कृतस्नानादिनित्यक्रिय इति शेषः। वसिष्ठः पुरोत्तमं प्रविवेशेति उत्तरश्लोकेनान्वयः। कवेरपि वर्णनीयमयीभावेन शोकाविष्टत्वान्न्यूनपदादिकमदोषः ॥ २५ ॥

२६ ] ति० टी०—संभारान्कुशादीन् ॥ २६ ॥

रा० टी०—तत इति । ततः प्रातरभिषेकनियोगाद्धेतोः प्रभातां रजनीं दृष्ट्वेति शेषः । पुण्ये ज्योतिरुक्तदोषरहिते नक्षत्रयोगे पुण्ये मुहूर्ते च समागते सति गुणसंपन्नः सकलसद्गुणविशिष्टो वशिष्ठः संभारान् अभिषेकसामग्रीः उपगृह्य प्रविवेश । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०—तत इत्यादिपरमद्विजैरित्यन्तमेकं वाक्यम् । प्रभातां रजनीं प्रभातायां रजन्यां समाहिते संनिहिते सति प्रविवेश । पुरोत्तममित्यनेन वसिष्ठो नगरबाह्यसरय्वां स्नानाद्यनुष्ठानं कृत्वा पुरीं प्रविष्टवानित्यवगम्यते । समृद्धविपणापणां समृद्धाः विपणाः विक्रेय्याः येषां ते समृद्धविपणाः आपणाः निषद्याः यस्यां तां समुत्सुकां समुत्सुकजनाम् ॥ २५—३० ॥

२७ ] ति० टी०—संमार्जनं मार्जन्या धूलिनिराकरणम् । समृद्धा विपणाः क्रेयपदार्था येषु तादृशा आपणा यस्यां सा ॥२७॥

२८-२९] ति० टी०—समुत्सुकां समुत्सुकजनाम्॥२८—२९

३०-३१ ] ति० टी०—यष्टिमद्भिरिति ब्राह्मणविशेषणम् 'धारयेद्वैणवीं यष्टिम्' इति स्नातकधर्मप्रकरणोक्तेः । यद्वा यष्टिमद्भिरित्यस्य तद्वै राजसेवकैरित्यर्थः ॥ ३० ॥ ३१ ॥

रा० टी०—पुरीं वर्णयन्नाह—सिक्तेत्यादिश्लोकचतुष्टयेन । सिक्तसंमार्जितपथां सेकसंमार्जनविशिष्टपथविशिष्टां समृद्धःअत्य-

१ तुन्न इति गो. पाठः । २ कैकेयीमिदमिति गो. पाठः । ३ समाहिते इति गो. पाठः । ४ तदेति गो. पाठः । ५ अर्धमेतदधिकं गो. पाठे । ६ कीर्णामिति गो. पाठः । ७ पुरोपममिति रा. पाठः । ८ श्रेष्ठमिति गो. पाठः । ९ द्विजेति गो. रा. पाठः । १० यज्वभिर्द्विजैरिति गो. पाठः । ११ सदस्यैरिति गो. पाठः । १२ परमद्विजैरिति गो. पाठः । १३ परमः प्रीत इति गो. पाठः । १४ परमर्षिर्विवेश चेति गो. परमर्षिर्विवेश हेति रा. पाठः ।

स त्वपश्यद्विनिष्क्रान्तं सुमन्त्रं नाम सारथिम् । द्वारे मनुजसिंहस्य सचिवं प्रियदर्शनम् ॥ ३२ ॥
तमुवाच महातेजाः सूतपुत्रं विशारदम् । वसिष्ठः क्षिप्रमाचक्ष्व नृपतेर्मामिहागतम् ॥ ३३ ॥
इमे गङ्गोदकघटाः सागरेभ्यश्च काञ्चनाः । औदुम्बरं भद्रपीठमभिषेकार्थमाहृतम् ॥ ३४ ॥
सर्वबीजानि गन्धाश्च रत्नानि विविधानि च । क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ३५ ॥
अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः । चतुरश्वो रथः श्रीमान्निस्त्रिंशो धनुरुत्तमम् ॥ ३६ ॥
वाहनं नरसंयुक्तं छत्रं च शशिसंनिभम् । श्वेते च वालव्यजने भृङ्गारं च हिरण्मयम् ॥ ३७ ॥
हेमदामपिनद्धश्च ककुद्मान्पाण्डुरो वृषः । केसरी च चतुर्दंष्ट्रो हरिश्रेष्ठो महाबलः ॥ ३८ ॥
सिंहासनं व्याघ्रतनुः समिधश्च हुताशनः । सर्वे वादित्रसंघाश्च वेश्याश्चालंकृताः स्त्रियः ॥ ३९ ॥

---

चिकः विपणः क्रेयपदार्थो यस्मिन् स आपणो यस्यां, सन्तुस्त-कामस्तुत्सवयुक्तां पुरन्दरपुरोपमां तां पुरीं समतिक्रम्य लङ्घयित्वा पौरादिभिः आकीर्णं व्याप्तं सदश्वैश्च सुसंपूर्णमन्तःपुरं ददर्श । श्लोकचतुष्टयमेकान्वयि ॥ २७–३० ॥

रा० टी०–तदिति । तत् वर्णितमन्तःपुरमासाद्य प्राप्य तमन्तःपुरद्वारे स्थितं जनं परमर्षिर्वसिष्ठः व्यतिचक्राम विवेश च ततोऽप्यग्रे अगच्छदित्यर्थः ॥ ३१ ॥

गो० टी०–तदिति । तं जनं पौरादिजनं व्यतिचक्रामेत्यनेनान्तःपुरद्वारवेदिकां प्राप्त इति गम्यते । विवेश वेदिकायामिति शेषः ॥ ३१ ॥

३२ ] ति० टी०–विनिष्क्रान्तमन्तःपुरात् । द्वारेऽन्तःपुरद्वारे ॥ ३२ ॥

रा० टी०–स इति । मनुजसिंहस्य राज्ञः द्वारे अन्तःपुरद्वारि विनिष्क्रान्तमन्तःपुरादागच्छन्तं सचिवं सारथिमेतद्धर्मद्वयाक्रान्तमित्यर्थः । सुमन्त्रं स वसिष्ठोऽपश्यत् ॥ ३२ ॥

गो० टी०–स इति । विनिष्क्रान्तं स्वगृहादिति शेषः । द्वारे अन्तःपुरद्वारे प्रियदर्शनमित्यनेनाभिषेकार्थमात्मानमलंकृत्यागत इत्युक्तम् ॥ ३२ ॥

३३ ] ति० टी०–वसिष्ठः सूतपुत्रमुवाच । किमुवाचेत्याह–क्षिप्रमित्यादि ॥ ३३ ॥

रा० टी०–तमिति । वसिष्ठः तं सुमन्त्रमुवाच । तदाकारमाह–मामिहागतं प्राप्तं नृपतेराचक्ष्व कथय ॥ ३३ ॥

गो० टी०–तमिति । क्षिप्रमाचक्ष्वेति वसिष्ठः प्रोवाचेति संबन्धः ॥ ३३ ॥

३४ ] ति० टी०–काञ्चनाः सौवर्णाः । गङ्गोदकघटास्तदुदकपूर्णा घटाः । सागरेभ्यश्च तज्जलपूर्णा घटा आहृता इति शेषः । औदुम्बरं भद्रपीठम् 'औदुम्बर्यासन्दी तस्यै प्रादेशमात्राः पादाः' इति बहवृचब्राह्मणप्रसिद्धम् ॥ ३४ ॥

रा० टी०–इमे इति । गङ्गोदकघटाः गङ्गाजलविशिष्टघटाः सागरेभ्यः समाहृता इति शेषः औदुम्बरमुदुम्बरनिर्मितं भद्रपीठं भद्रसूचकचिह्नचिह्नितपीठविशेषश्च आहृतम् । लिङ्गवचनविपरिणामेन पूर्वत्राप्यन्वयः ॥ ३४ ॥

गो० टी०–इम इत्यादि । काञ्चनाः काञ्चनमयाः गङ्गोदकघटाः गङ्गोदकपूर्णघटाः । अत्र आहृतमित्येतद्वचनव्यत्ययेन संबध्यते । इमे इति छेदमपि सागरेभ्य आहृता इमे उदकघटा इत्यध्याहारेण योज्यम् । क्षौद्रं मधु चतुरश्वो रथः श्रीमान् निस्त्रिंशो धनुरुत्तमामिति । अत्र तुइतिगायत्र्याश्चतुर्थाक्षरम् । निस्त्रिंशः खड्गः भृङ्गारः कनकालुका केसरी प्रशस्तकेसरः हरिश्रेष्ठः अश्वोत्तमः व्याघ्रतनुः व्याघ्रचर्मेत्यर्थः । नैगमा वणिजः 'नैगमो वणिजो वणिक्' इत्यमरः ॥ ३४–४१ ॥

३५ ] ति० टी०–क्षौद्रं मधु । सुमनसः पुष्पाणि ॥ ३५ ॥

रा० टी०–सर्वेति । सर्वबीजानि अभिषेकोचितनिखिलबीजविशेषाः सुमनसः विहितपुष्पाणि ॥ ३५ ॥

३६ ] ति० टी०–कन्याः कुमार्यः । निस्त्रिंशः खड्गः ॥ ३६ ॥

रा० टी०–रुचिराः रमणीयाः दोषरहिता इत्यर्थः । अष्टौ कन्या वरवारणः हस्तिश्रेष्ठः चतुरश्वः अश्वचतुष्टयविशिष्टो रथः निस्त्रिंशः खड्गविशेषः ॥ ३६ ॥

३७ ] ति० टी०–नरसंयुक्तं वाहनं शिबिका । भृङ्गारं कनकालुका स्वर्णकरकपात्रम् ॥ ३७ ॥

रा० टी०–नरसंयुक्तं वाहनं शिबिकेत्यर्थः । वालव्यजने वालौ केशविशेषावेव व्यजने चामरद्वयमित्यर्थः । किंच वालः केशविशेषः चामरद्वयमित्यर्थः । जात्यभिप्रायेणैकवचनम् । स च व्यजनं चेति द्वन्द्वः । अत एव मुख्याभिषेकसामग्रीभूतत्वामरादुक्तेर्न न्यूनता भृङ्गारं भूषणादि ॥ ३७ ॥

३८ ] ति० टी०–चतुर्दंष्ट्रत्वादेव हरिश्रेष्ठः । यद्वा हरिश्रेष्ठ उत्तमाश्वः ॥ ३८ ॥

रा० टी०–हेम्नः सुवर्णस्य दाम माला तेन पिनद्धो युक्तः वृष उक्षा केसरी सिंहः किंच केसरी प्रशस्तसटाविशिष्टः चतुर्दंष्ट्रः दंष्ट्राचतुष्टयविशिष्टः हरिश्रेष्ठः अश्वमुख्यः ॥ ३८ ॥

३९ ] ति० टी०–व्याघ्रतनुर्व्याघ्रचर्म ॥ ३९ ॥

---

१ तु राजेति गो. पाठः । २ भृङ्गारुश्च हिरण्मय इति गो. पाठः । ३ समिद्ध इति गो. पाठः । ४ सर्ववादित्रेति गो. पाठः ।

आचार्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः । पौरजानपदश्रेष्ठा नैगमाश्च गणैः सह ॥ ४० ॥
एते चान्ये च बहवः प्रीयमाणाः प्रियंवदाः । अभिषेकाय रामस्य सह तिष्ठन्ति पार्थिवैः ॥ ४१ ॥
त्वरयस्व महाराजं यथा समुदितेऽहनि । पुष्ये[१] नक्षत्रयोगे च रामो राज्यमवाप्नुयात् ॥ ४२ ॥
इति तस्य वचः श्रुत्वा सूतपुत्रो महाबलः[२] । स्तुवन्नृपतिशार्दूलं प्रविवेश निवेशनम् ॥ ४३ ॥
तं तु पूर्वोदितं वृद्धं द्वारस्था राजसंमताः[३] । न शेकुरभिसंरोद्धुं राज्ञः प्रियचिकीर्षवः ॥ ४४ ॥
स समीपस्थितो राज्ञस्तामवस्थामजज्ञिवान् । वाग्भिः परमतुष्टाभिरभिष्टोतुं प्रचक्रमे ॥ ४५ ॥
ततः सूतो यथापूर्वं[४] पार्थिवस्य निवेशने । सुमन्त्रः प्राञ्जलिर्भूत्वा तुष्टाव जगतीपतिम् ॥ ४६ ॥
यथा नन्दति तेजस्वी सागरो भास्करोदये । प्रीतः प्रीतेन मनसा तथा नन्दय[५] नस्ततः ॥ ४७ ॥
इन्द्रमस्यां तु वेलायामभितुष्टाव मातलिः । सोऽजयद्दानवान्सर्वांस्तथा त्वां बोधयाम्यहम् ॥ ४८ ॥

रा० टी०—व्याघ्रतनुः व्याघ्रस्य चर्म वादित्रसङ्घा वाद्यसमूहाः वेश्यानां पृथगुपादानं स्त्रीभ्यो वैलक्षण्यद्योतनाय ॥ ३९ ॥

४० ] ति० टी०—नैगमा वणिजो गणैः स्वस्वगणैः ॥४०॥

रा० टी०—गणैः स्वस्वानुचरसमूहैः नैगमाः वणिजः ॥४०॥

४१ ] ति० टी०—प्रीयमाणाः प्रीतियुक्ताः । पार्थिवैः सहेत्यन्वयः ॥ ४१ ॥

रा० टी०—प्रीयमाणाः मन्त्रिभिस्तर्पिताः पार्थिवै राजभिः सह तिष्ठन्ति तानपि आचक्ष्वेति तात्पर्यम् । श्लोकाष्टकमेकान्वयि ॥ ४१ ॥

४२–४३ ] ति० टी०—समुदिते मुहूर्तगुणैः । यथा रामो राज्यमवाप्नुयात्तथा राजानं त्वरयस्वेति संबन्धः ॥ ४२ ॥ ४३ ॥

रा० टी०—त्वरयस्वेति । समुदिते अभिषेकोक्तगुणविशिष्टे अहनि अस्मिन्दिने रामो राज्यं यथा अवाप्नुयात् तथा महाराजं त्वरयस्व ॥ ४२ ॥

रा० टी०—इतीति । सूतपुत्रः सुमन्त्रः नृपतिशार्दूलं स्तुवन् तद्भाग्यवत्तां प्रशंसन् निवेशनमन्तःपुरं प्रविवेश ॥ ४३ ॥

गो० टी०—त्वरयस्व महाराजमिति । समुदिते सम्यग्व्यक्ते ॥ ४२ ॥ ४३ ॥

४४ ] ति० टी०—पूर्वोदितमयं कदापि न निवारणीय इति पूर्वमेव राज्ञा ज्ञापितम् । एवमाज्ञायां हेतुर्वृद्धमिति ॥ ४४ ॥

रा० टी०—तमिति । वृद्धं ज्ञानवयोभ्यामधिकं पूर्वोदितं त्वया यथेच्छं सर्वदैवेहागन्तव्यं त्वद्गमननिवारणं कदाचिन्न भविष्यतीति पूर्वं राज्ञा प्रबोधितं तं सुमन्त्रं संरोद्धुं राज्ञः प्रियचिकीर्षवः न शेकुः ॥ ४४ ॥

गो० टी०—तं त्विति । पूर्वोदितमयं सर्वदा अनिवार्य इति राज्ञा पूर्वमुक्तम् ॥ ४४ ॥

४५–४६ ] ति० टी०—तामवस्थां कैकेयीकृतां घोरामवस्थामजज्ञिवान् अज्ञातवान्यतोऽतो वाग्भिरित्यादि । परमतुष्टाभिस्तोषकताभिः स्तोत्रनिकाभिश्चेति यावत् ॥ ४५ ॥ ४६ ॥

रा० टी०—स इति । तां कैकयीवचनश्रवणहेतुकचञ्चलतारूपामवस्थामजज्ञिवान् अज्ञाता स सुमन्त्रः परमतुष्टाभिः अतिसंतोषहेतुभिः वाग्भिरभिष्टोतुं प्रचक्रमे निश्चयं जगाम॥४५॥

गो० टी०—स इति । अजज्ञिवान् अज्ञातवान् ॥ ४५ ॥

रा० टी०—तत इति । ततः स्तवननिश्चयानन्तरं निवेशने अन्तःपुरे स्थित इति शेषः । तुष्टाव ॥ ४६ ॥

गो० टी०—तत इति । यथाकालं प्रातःकालार्हम् ॥४६॥

४७ ] ति० टी०—भास्करोदये तत्काले प्रत्यूर्मिप्रतिफलितरवितेजसा तेजस्वी सागरो यथा स्नातुकामानन्दति नन्दयति तथा नोऽस्मान्प्रीतेन तुष्टेन मनसा प्रीतोऽस्मद्विषयकप्रीत्याश्रयः सन्नन्दय । यत्तु भास्करश्चन्द्र इति, तत्प्रसिद्धिविरुद्धम् । तथा 'आनन्दघनः' इतिपाठे आनन्दघनः आनन्दपूर्णस्त्वं नन्द नन्दय प्रजा इति शेषः । नन्दानन्देति च तन्त्रेण बोध्यम् ॥ ४७ ॥

रा० टी०—स्तवनप्रकारमाह—यथेत्यादिभिः । सागरः समुद्रः भास्करोदये यथा आनन्दति आनन्दयति तत्पूजनादिकामान् इति शेषः । तथा नोऽस्मानानन्दय प्रसिद्धा च भास्करोदयसमये समुद्रवृद्धिः ततः आनन्दनस्य समयाद्धेतोः केचित्त्वत्र योगरूढ्या भास्करशब्देन चन्द्रमसमाहुः वस्तुतस्तु अभास्करेति छेदः भास्करसदृश इत्यर्थः । स चन्द्र एवेति केचित् ॥ ४७ ॥

गो० टी०—यथानन्दतीत्यादि । भास्करोदयेऽपि समुद्रवृद्धिरस्त्येव, यद्वा भासः करोतीति व्युत्पत्त्या भास्करश्चन्द्रः ॥४७॥४८॥

४८ ] ति० टी०—अस्यां वेलायामुदयवेलायाम् । तया स्तुत्या चोत्साहयुक्तः सन्यथा दानवान्सोऽजयत्तथा रिपुजयफलकं बोधनं ते करोमीत्यर्थः ॥ ४८ ॥

रा० टी०—इन्द्रमिति । मातलिः इन्द्रसारथिः सः मातलिना स्तुत इन्द्रः दानवान् अजयत् तथा त्वां बोधयामि स्तौमि त्वमपि स्वविरुद्धान् जयेत्यर्थः ॥ ४८ ॥

१ पुष्ये इति गो. पाठः । २ महात्मन इति गो. पाठः । ३ संमतमिति गो. पाठः । ४ यथाकालमिति गो. पाठः । ५ आनन्द घनः स्वत

वेदाः सहाङ्गा विद्याश्च यथा ह्यात्मभुवं [1]प्रभुम् । ब्रह्माणं बोधयन्त्यद्य तथा त्वां बोधयाम्यहम् ॥ ४९ ॥
आदित्यः सह चन्द्रेण यथाभूतधरां शुभाम् । बोधयत्यद्य पृथिवीं तथा त्वां बोधयाम्यहम् ॥ ५० ॥
उत्तिष्ठ [2]सुमहाराज कृतकौतुकमङ्गलः । विराजमानो वपुषा मेरोरिव दिवाकरः ॥ ५१ ॥
[ [3]सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि । वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते ॥
गता भगवती रात्रिः [4]कृतं कृत्यमिदं तव । बुध्यस्व नृपशार्दूल कुरु कार्यमनन्तरम् ]
उदतिष्ठत रामस्य समग्रमभिषेचनम् । पौरजानप[5]दाश्चापि नै[6]गमश्च कृताञ्जलिः ॥ ५२ ॥
[7]अयं वसिष्ठो भगवान्ब्राह्मणैः सह तिष्ठति । क्षिप्रमाज्ञाप्यतां राजन्राघवस्याभिषेचनम् ॥ ५३ ॥
यथा ह्यपालाः पशवो यथा सेना [8]ह्यनायका । यथा चन्द्रं विना रात्रिर्यथा गावो विना वृषम् ॥ ५४ ॥
एवं हि [9]भविता राष्ट्रं यत्र राजा न दृश्यते । [10]एवं तस्य वचः श्रुत्वा सान्त्वपूर्वमिवार्थवत् ॥ ५५ ॥

---

४९ ] ति० टी०—अङ्गैः सहिता वेदा विद्याश्च मीमांसादयो यथा ब्रह्माणं सृष्ट्यै बोधयन्ति एवं त्वां बोधयामि । 'वेदेभ्य एव भूरादीन्पदार्थाञ्ज्ञात्वा वेधास्तान्सृजति ' इति श्रुतिस्मृतिप्रसिद्धम् ॥ ४९ ॥

रा० टी०—वेदा इति । सहाङ्गा व्याकरणादिसहिताः विद्या धनुर्वेदादयः आत्मभुवं कर्मातन्त्रमित्यर्थः । तथा त्वां बोधयामि एतदुपमालंकारेण राज्ञः सर्वविषयकज्ञानवत्त्वं सूचितम् ॥ ४९ ॥

गो० टी०—वेदा इति । सहाङ्गविद्याः अङ्गभूतशिक्षादिविद्यासहिताः ब्रह्माणं बोधयन्ति सृष्ट्युपयोगितत्तदर्थबोधं जनयन्ति । तथाह मनुः—' नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ' इति ॥ ४९ ॥

५० ] ति० टी०—यथा चन्द्रसहितो रविरुदयास्तमयाभ्यां पृथिवीं तत्स्थं जनं बोधयति तद्वत् ॥ ५० ॥

रा० टी०—आदित्य इति । भूतधरां भूतानि धरति ब्रह्मादिद्वारा स्थापयति तां पृथिवीं पृथिवीप्रादुर्भूतां स्वमण्डलवर्तिसीतां चन्द्रेण सहादित्यो यथा बोधयति स्तौति तथाहं त्वां बोधयामि एतेन सूर्याचन्द्रमसोः रामोपासकत्वं व्यक्तम् । अत एव सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितमित्यादि सङ्गच्छते ॥ ५० ॥

गो० टी०—आदित्य इति । भूतधरां सर्वप्राणिधरां पृथिवीं बोधयति विशेषणद्वारा पृथ्वीबोधनम् अद्य बोधयामीत्यन्वयः ५०

५१ ] ति० टी०—कृतकौतुकमङ्गलः कृतानि कौतुकेऽभिषेकोत्सवे मङ्गलानि विचित्रवस्त्राभरणधारणादिरूपाणि येन । 'कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः' अत एव वपुषा विराजमानस्त्वं मेरोर्दिवाकर इवोत्तिष्ठ ॥ ५१ ॥

रा० टी०—उत्तिष्ठेति । कृतकौतुकमङ्गलः कृतानि संपादितानि कौतुकमङ्गलानि अभिषेकोत्सवहेतुभूतमङ्गलोपस्कराणि येन स त्वं मेरोर्दिवाकर इव उत्तिष्ठ । 'कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः ' इति कोशः ॥ ५१ ॥

रा० टी०—सोमेति । सोमादयस्ते विजयं प्रदिशन्तु ददतु: ५२

रा० टी०—गतेति । भगवती उत्सवैश्वर्यस्याधिक्याद्विशिष्टा शिवं मङ्गलमूलमहो दिनमुपस्थितम् अतः प्रतिबुध्यस्व तत्र हेतुः इदं सामग्रीसंपत्त्यनन्तरकालिकं कर्तव्यं तव कृतकृत्यं त्वत्प्रयत्नसाध्यम् ॥ ५३ ॥

गो० टी०—उत्तिष्ठेति । कृतकौतुकमङ्गलः कृतं कौतुकहेतुभूतं मङ्गलाचरणं येन स तथोक्तः सर्वानन्दोत्पादनाय कृतदेहालंकार इत्यर्थः । यद्वा कौतुकमुत्सवः कृतोत्सवार्थमङ्गलानुष्ठान इत्यर्थः । मेरोर्दिवाकर इव दिवाकरस्य प्रधानमेरोरुत्थानं मेरुसंबद्धरथाक्षद्वारेति ज्ञेयम् ॥ ५१ ॥ ५२ ॥

५२–५४ ] ति० टी०—कर्तव्यं यद्यदाज्ञप्तं तत्सर्वं कृतमित्याह—उदतिष्ठतेति । उदतिष्ठत उत्थितं संपन्नमभूदित्यर्थः । अभिषेचनं तदुपकरणम् । नैगमो वणिग्वर्गः ॥ ५२–५४ ॥

रा० टी०—उदिति । समग्रं निःशेषम् अभिषेचनमभिषेकसामग्री पौरादिश्चोदतिष्ठत प्राप्नोत् ॥ ५४ ॥

गो० टी०—गतेति । सर्वानन्दकररामाभिषेकमहोत्सवोपयुक्तत्वाद्रात्रिर्भगवतीति स्तूयते ॥ ५३ ॥

रा० टी०—अयमिति । भगवान् अतिसमर्थः अतः अभिषेचनमाज्ञाप्यताम् ॥ ५५ ॥

रा० टी०—त्वदोत्थानमन्तरा सर्वं निरर्थकमित्याह—यथेति । अपालाः पालकरहिताः यत्र यस्मिन्काले राजा न दृश्यते तस्मिन्काले राष्ट्रमेवं भविता भवति लुङ्पात्तकालस्याविवक्षा ॥ ५६ ॥

गो० टी०—उदतिष्ठतेति । " उदोनूर्ध्वकर्मणि " इत्यात्मने पदम् उपस्थितमित्यर्थः । अभिषेचनमभिषेकसाधनम् 'उपतिष्ठति ' इति पाठान्तरम् ॥ ५४—५७ ॥

५५ ] ति० टी०—भविता लुट् । तस्माच्छीघ्रमुत्तिष्ठेति भावः । इवशब्द एवार्थे ॥ ५५ ॥

---

१ सहाङ्गविद्या इति गो. पाठः । २ विभुमिति गो. पाठः । ३ आर्श्विति गो. रा. पाठः । ४ श्लोकद्वयमेतदधिकं गो. रा. पाठे । ५ अद्य शिवमुपस्थितम् । प्रतिबुध्यस्व राजर्षे कृतकृत्यमिदं तवेति रा. पाठः । ६ पदैरिति गो. पदश्चेति रा. पाठः । ७ नैगमैरिति गो. पाठः । ८ स्वयमिति गो. पाठः । ९ अनायकाः इति रा. पाठः । १० भवतेति गो. पाठः । ११ इतीति गो. पाठः ।

अभ्यकीर्यत शोकेन भूय एव महीपतिः । ततस्तु राजा तं सूतं सन्नहर्षः सुतं प्रति ॥ ५६ ॥
शोकरक्तेक्षणः श्रीमानुद्वीक्ष्योवाच धार्मिकः । वाक्यैस्तु खलु मर्माणि मम भूयो निकृन्तसि ॥ ५७ ॥
सुमन्त्रः करुणं श्रुत्वा दृष्ट्वा दीनं च पार्थिवम् । प्रगृहीताञ्जलिः किंचित्तस्माद्देशादपाक्रमत् ॥ ५८ ॥
यदा वक्तुं स्वयं दैन्यान्न शशाक महीपतिः । तदा सुमन्त्रं मन्त्रज्ञा कैकेयी प्रत्युवाच ह ॥ ५९ ॥
सुमन्त्र राजा रजनीं रामहर्षसमुत्सुकः । प्रजागरपरिश्रान्तो निद्रावशमुपागतः ॥ ६० ॥
तद्गच्छ त्वरितं सूत राजपुत्रं यशस्विनम् । राममानय भद्रं ते नात्र कार्या विचारणा ॥ ६१ ॥
अश्रुत्वा राजवचनं कथं गच्छामि भामिनि । तच्छ्रुत्वा मन्त्रिणो वाक्यं राजा मन्त्रिणमब्रवीत् ॥ ६२ ॥
सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् । स मन्यमानः कल्याणं हृदयेन ननन्द ह ॥ ६३ ॥
निर्जगाम च स प्रीत्या त्वरितो राजशासनात् । सुमन्त्रश्चिन्तयामास त्वरितं चोदितस्तया ॥ ६४ ॥

---

रा० टी०—एवमिति । अर्थवदर्थविशिष्टं सान्त्वपूर्वमिव सान्त्वनपूर्वकसदृशं वचः श्रुत्वा भूयोऽपि शोकेन अभ्यकीर्यत व्याप्नोत् । प्रार्थनावचनस्य सान्त्वनस्वाभावेन इवेत्युक्तम् ॥५७॥

गो० टी०—इतीति । सान्त्वपूर्वं सामपूर्वम् 'साम सान्त्वम्' इत्यमरः । अर्थवदितिनिर्देशः प्रातःकालप्रबोधस्य सर्वविजयहेतुत्वात् ॥ ५८ ॥

५६ ] ति० टी०—अभ्यकीर्यत व्याप्तोऽभवत् सन्नहर्षो नष्टहर्षः ॥ ५६ ॥

रा० टी०—तत इति । ततः कैकयीवचःश्रवणात्सन्नहर्षः संभावितरामवियोगजनितनिवृत्तानन्दः अत एव सूतं प्रति शोकरक्तेक्षणः राजा सूतमुद्वीक्ष्य उवाच ॥ ५८ ॥

गो० टी०—ततः स राजेत्यादि । सूतं प्रति सन्नहर्षः नष्टहर्षः भूयो निकृन्तसि कैकेयीवाक्यकृत्तानि मर्माणि भूयोऽप्यनुचितकालस्तुतिभिर्निकृन्तसीत्यर्थः । अत्र इतिशब्दोऽध्याहार्यः ॥ ५९ ॥

५७ ] ति० टी०—शोकरक्तेक्षणः शोकजरोदनेन रक्तनेत्रः भूयः कैकेयीवाक्यैः कृत्तानि मर्माणि पुनरधिकं स्तुतिवाक्यैरित्यर्थः अनुचितकालप्रयुज्यमानत्वादिति भावः ॥ ५७ ॥

रा० टी०—तद्वचनमेवाह—वाक्यैरिति । वाक्यैः त्वदुक्ताभिषेकसंबन्धिवचनैः भूयोऽधिकं त्वं मां निकृन्तसि एतेनाभिषेकविघ्नः सूचितः । सुमन्त्र इति । करुणं श्रवणमात्रेण दयोत्पादकं वचनं श्रुत्वा दीनं कर्तव्यविवेकराहित्येन दीनतां प्राप्तं दृष्ट्वा तस्माद्राजाधिष्ठितादेशात्किंचिदपाक्रमत् किंचिदित्यनेन स्वाभिप्रायं राजा कथयतु इत्यभिप्रायः सूचितः ॥ ५९ ॥

५८] ति० टी०—अपाक्रमद्बद्धाञ्जलिः सम्भीतोऽपाक्रमत् ५८

गो० टी०—करुणं दीनवाक्यम् ॥ ६० ॥

५९ ] ति० टी०—दैन्यं सत्यपाशबन्धनजम् । मन्त्रज्ञा स्वकार्ये वक्तव्यज्ञा ॥ ५९ ॥

रा० टी०—यदेति । दैन्याद्धेतोः ॥ ६० ॥

गो० टी०—यदेति । मन्त्रज्ञा राजनीत्यनुसारेण स्वकार्योचितविचारज्ञेत्यर्थः ॥ ६१ ॥

६०—६२ ] ति० टी०—अत एव मिथ्याप्याह—रामहर्षेति रामाभिषेकहर्षेत्यर्थः ॥ ६०—६२ ॥

रा० टी०—तत्प्रतिवचनमेवाह—सुमन्त्रेति । हे सुमन्त्र ! प्रजागरपरिश्रान्तो राजा अनिद्रावशं निद्रासदृशमोहपारतन्त्र्यमुपागतः प्राप्तः ॥ ६१ ॥

गो० टी०—सुमन्त्रेति । रजनीमिति अत्यन्तसंयोगे द्वितीया । प्रजागरो निद्राक्षयः । विचारणेत्यनन्तरमितिशब्दोऽध्याहर्तव्यः इति प्रत्युवाचेत्यन्वयः ॥ ६२ ॥ ६३ ॥

रा० टी०—तदिति । तत्तस्माद्धेतोः यशस्विनं नित्ययशोविशिष्टं रामं त्वमानय ॥ ६२ ॥

रा० टी०—कैकयीवचनश्रवणानन्तरकालिकं सुमन्त्रोत्तरमाह—अश्रुत्वेति । हे भामिनि ! प्रातीतिककोपविशिष्टे राजवचनमश्रुत्वा अहं कथं गच्छामि एतेन राज्ञः शोककारणं सुमन्त्रेण ज्ञातमिति ध्वनितम् । तत्कैकयीवचनप्रत्याख्यानरूपं वाक्यं श्रुत्वा राजा अब्रवीत् ॥ ६३ ॥

६३ ] ति० टी०—कल्याणं मन्यमानः कदाचिद्रामं दृष्ट्वा तस्मिन्प्रीतिं करिष्यतीति मन्यमानः, यद्वा अस्मिन्नवसरे रामदर्शनमेव कल्याणं मन्यमानः मृतिसमयत्वात् । यद्वा देवानामृषीणां च कल्याणं मन्यमानः अत एव हृदयेन ननन्द न तु बहिस्तच्चिह्नमिति भावः ॥ ६३ ॥

रा० टी०—सुमन्त्रेति । हे सुमन्त्र ! रामं शीघ्रमानय सः सुमन्त्रः कल्याणं मन्यमानः राजवचनश्रवणेनेति शेषः ननन्द ॥ ६४ ॥

गो० टी०—स इति । राजशासनादित्युक्तिः राजसंमतमितिज्ञप्त्या ॥ ६४—६६ ॥

६४ ] ति० टी०—निर्गमनकाले पुनस्त्वरितमानेयति तया कैकेय्या प्रेरितश्चिन्तयामास किमित्येषा भूयस्त्वरयतीति चिन्ता ॥ ६४ ॥

---

१ स इति गो. पाठः । २ निद्राया वशमीयिवानिति गो. पाठः । ३ अयं सार्धश्लोको गो॰ पु. नास्ति । ४ संप्रीत्येति गो. पाठः ।

व्यक्तं रामाभिषेकार्थे[1] इहायास्यति[2] धर्मराट् । इति सूतो मतिं कृत्वा हर्षेण महता पुनः ॥ ६५ ॥
निर्जगाम महातेजा राघवस्य दिदृक्षया । सागरह्रदसंकाशात्सुमन्त्रोऽन्तःपुराच्छुभात् ॥ ६६ ॥
[ [6]निष्क्रम्य जनसंबाधं ददर्श द्वारमग्रतः । ]
ततः पुरस्तात्सहसा [7]विनिःसृतो महीपतेर्द्वारगतान्विलोकयन् ।
ददर्श पौरान्विविधान्महाधनानुपस्थितान्द्वारमुपेत्य [9]विष्ठितान् ॥ ६७ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः ।

रामानयनायान्तःपुरान्निर्गच्छन्सुमन्त्रो राजागमनं प्रतीक्षमाणान्वसिष्ठादीन्गृहीतोपायनांश्च महीपतीन् द्वार्यवलोक्य राज्ञे तदागमनं न्यवेदयत्तेन प्रतिप्रेरितश्च राममानेतुं तदन्तःपुरं प्रविवेश ।

ते तु तां रजनीमुष्य ब्राह्मणा वेदपारगाः । उपतस्थुरुपस्थानं सह राजपुरोहिताः ॥ १ ॥
अमात्या बलमुख्याश्च मुख्या ये निगमस्य च । राघवस्याभिषेकार्थे प्रीयमाणाः सुसंगताः ॥ २ ॥

रा० टी०—निर्जगामेति । तया राजवाण्या त्वरितं चोदितः प्रेरितः राजशासनाद्राज्ञः शासनं शिक्षामतति नित्यं प्राप्नोति प्रीत्या त्वरितः सः सुमन्त्रः निर्जगाम चिन्तयामास च तयेत्यस्य कैकयीविशेषणत्वे तु राजशासनादिति पञ्चम्यन्तमेव ॥६५॥

६५ ] ति० टी०—व्यक्तं रामाभिषेकार्थं एवैषा त्वरयति । इह धर्मराड् दशरथ आयास्यत्यायासवान्भवति प्रयासबाहुल्येन प्रायो बहिर्नागमिष्यतीति मतिं कृत्वेत्यन्वयः ॥ ६५ ॥

रा० टी०—तच्चिन्तनं बोधयन्नाह व्यक्तमिति।धर्मराट् दशरथः राजा इह अभिषेकशालायां व्यक्तं यथा स्यात्तथा आयास्यतीति मतिं कृत्वा सागरह्रदसंकाशात् समुद्रान्तरवर्तिह्रदसदृशात् अन्तःपुराद्राघवस्य दिदृक्षया सुमन्त्रः निर्जगाम । श्लोकद्वयमेकान्वयि ॥ ६६ ॥ ६७ ॥

६६ ] ति० टी०—पुरान्तर्वर्तित्वादन्तःपुरस्य सागरान्तर्वर्तिह्रदतुल्यत्वम् ॥ ६६ ॥

गो० टी०—सागरह्रदसंकाशादिति । सागरह्रदः समुद्रान्तर्गतह्रदः पुरान्तर्वर्त्यन्तःपुरस्यात्समुद्रस्थह्रदौपम्यम् । जनसंबाधं जनैर्निबिडम् ॥ ६७ ॥

६७ ] ति० टी०—तत इति । महीपतेर्द्वारगतानधिकारिणो विलोकयन्पौरान्महाजनान्पुरस्तादग्रे ददर्श । ततो निर्गमनोत्तरम् ॥ ६७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

रा० टी०—तत इति । ततः अन्तःपुराद्विनिःसृतः सुमन्त्रः पुरस्तादग्रे महीपतेर्द्वारगतान्द्वारपालान्विलोकयन्सन् द्वारमुपेत्य प्राप्य विष्ठितान्संस्थितान्विविधाननेकप्रकारान्महाधनान्पौरान्ददर्श ॥ ६८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

गो० टी०—तत इति । पुरस्तादग्रे महीपतीन् विलोकयन् पश्चात् पौरान् ददर्श । महाधनान् उपहारपाणीन् उपस्थितान् उपस्थानं सदः कुर्वतः ॥ ६८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

१ ] ति० टी०—अथ कैकेय्या राज्ञा च शुभहृदयतया प्रवर्तितस्य सुमन्त्रस्य यथापूर्वं प्रवृत्तिं वदन्राजाज्ञया राजद्वारि मिलितानां जनानां परस्परसंभाषणप्रकारमाह—ते त्वित्यादि । ते राजप्रेरिताः उष्योषित्वा उपस्थानं राजद्वारम् अधिकरणे ल्युट् ॥ १ ॥

रा० टी०—त इति । सहराजपुरोहिताः वसिष्ठकुलोद्भूतराजपुरोहितसहिताः वेदपारगास्ते अभिषेकब्राह्मणाः तां रजनीमुष्य उषित्वा दिने सूर्ये उदिते सति पुष्ये नक्षत्रे अभ्यागते प्राप्ते सति राघवस्याभिषेकार्थे उपस्थानं राजद्वारमुपतस्थुः अमात्यादयश्चोपतस्थुः तत्र बलमुख्याः सेनाधीशाः निगमस्य वणिक्समूहस्य ये मुख्याः प्रधानाः । श्लोकत्रयमेकान्वयि उपस्थानशब्दोऽधिकरणल्युडन्तः ॥ १–३ ॥

गो० टी०—अथ रामाभिषेकसामग्रीसंनिधानमाह पञ्चदशे—ते त्विति । उष्य उषित्वा उपस्थानं सदः ॥ १ ॥

२ ] ति० टी०—निगमो वणिक्समूहः ॥ २ ॥

गो० टी०—निगमस्य पुरस्य ‘ निगमो निश्चये वेदे पुरे पथि वणिक्पथे ’ इति वैजयन्ती ॥ २ ॥

१ अभिषेकार्थमिति गो. पाठः । २ आयास्यतीति गो. रा. पाठः । ३ निविति गो. पाठः । ४ सूत इति गो. पाठः । ५ भाङ्गुरिति गो. पाठः । ६ अर्धमेतदधिकं गो. पाठे । ७ विनिर्गतो महीपतीनिति गो. पाठः । ८ गत इति गो. पाठः । ९ विष्टिपानिति रा. पाठः । १० त्विति गो. पाठः ।

उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि । लग्ने कर्कटके प्राप्ते जन्म रामस्य च स्थिते ॥ ३ ॥
अभिषेकाय रामस्य द्विजेन्द्रैरुपकल्पितम् । काञ्चना जलकुम्भाश्च भद्रपीठं स्वलंकृतम् ॥ ४ ॥
रथश्च सम्यगास्तीर्णो भास्वता व्याघ्रचर्मणा । गङ्गायमुनयोः पुण्यात्संगमादाहृतं जलम् ॥ ५ ॥
याश्चान्याः सरितः पुण्या ह्रदाः कूपाः सरांसि च । प्राग्वहाश्चोर्ध्ववाहाश्च तिर्यग्वाहाश्च क्षीरिणः ॥ ६ ॥
ताभ्यश्चैवाहृतं तोयं समुद्रेभ्यश्च सर्वशः । क्षौद्रं दधि घृतं लाजा दर्भाः सुमनसः पयः ॥ ७ ॥
अष्टौ च कन्या रुचिरा मत्तश्च वरवारणः । सजलाः क्षीरिभिश्छन्ना घटाः काञ्चनराजताः ॥ ८ ॥
पद्मोत्पलयुता भान्ति पूर्णाः परमवारिणा । चन्द्रांशुविकचप्रख्यं पाण्डुरं रत्नभूषितम् ॥ ९ ॥
सज्जं तिष्ठति रामस्य वालव्यजनमुत्तमम् । चन्द्रमण्डलसंकाशमातपत्रं च पाण्डुरम् ॥ १० ॥

३ ] ति० टी०—अहनि पुष्यनक्षत्रे आगते रामस्य जन्म जन्मनि स्थिते जन्मकालस्थे कर्कटलग्ने च प्राप्ते ॥ ३ ॥

गो० टी०—उदित इति । उपकल्पितम् अभिषेकार्थद्रव्यजातमिति शेषः ॥ ३ ॥

४–५] ति० टी०—भाविने इति शेषः । अभिषेकायाभिषेकार्थमुपकरणम् उपकाल्पितं सिद्धं कृतमित्यर्थः । काञ्चना जलकुम्भा आनीताः अलंकृतं भद्रपीठं स्थापितम् ॥ ४ ॥ ५ ॥

रा० टी०—अभिषेकायेति । रामस्य अभिषेकाय अभिषेकं कर्तुं द्विजेन्द्रैर्जलकुम्भादि उपकल्पितं समीपे प्रापितं सामान्यविवक्षया नपुंसकत्वैकत्वे । काञ्चनाः स्वर्णनिर्मिताः भद्रपीठं मङ्गलचिह्नचिह्नितपीठविशेषः ॥ ४ ॥

गो० टी०—उपकल्पितमेव प्रपञ्चयति—काञ्चना इत्यादि । अत्र भान्तीत्यनुषज्यते ॥ ४ ॥

रा० टी०—रथ इति । भास्वता प्रकाशमानेन व्याघ्रचर्मणा सम्यगास्तीर्णो रथ आहृतः पुण्यात् अतिपवित्रत्वहेतुभूतात्संगमाज्जलं चाहृतम् । अन्याः गङ्गायमुनाभिन्नाः पुण्याः पुण्यविशेषहेतुभूताः सरितो नद्यः इदं नदानामप्युपलक्षकम् । पुण्या इति ह्रदादावप्यन्वेति । प्राग्वाहाः प्राचीदिशःप्रभृताः वाहाः प्रवाहाः यासां ताः पश्चिमवाहिन्यः नर्मदादय इत्यर्थः । ऊर्ध्ववाहाः ऊर्ध्वात् पर्वतादेर्वहन्ति अधःपतन्ति ताः गङ्गोत्तर्यादय इत्यर्थः ॥ ५ ॥

गो० टी०—गङ्गेति । आहृतं वर्तत इति शेषः । याश्चान्या सरित इत्यत्र ताभ्यश्चेत्यनुकृष्याहृतमिति पूर्वेण संबन्धः । ये च ह्रदाः कूपाः यानि सरांसि अत्र तु तेभ्य इत्यध्याहारः । हृतं जलमिति पूर्वेण संबन्धः ॥ ५ ॥

६–७ ] ति० टी०—प्राग्वहा इत्यादेर्नद्य इति शेषः । पर्वतमध्यादिनोर्ध्वप्रवाहवत्प्रदेशवत्य ऊर्ध्ववाहाः तिर्यग्वाहा दक्षिणोत्तरप्रवाहाः क्षीरिणः क्षीरपूर्णाः क्षीरमत्र जलम् क्लीबभाव आर्षः ॥ ६ ॥ ७ ॥

रा० टी०—तिर्यग्वाहाः दक्षिणोत्तराभिमुखवाहिन्यः काशीमङ्गागण्डकीशोणभद्रादयः क्षीरिण्यः दुग्धवाहिन्यश्च याः सन्ति सर्वशस्ताभ्यः सर्वशः समुद्रेभ्यश्च तोयमाहृतम् । सर्वश इत्युभयान्वयि । क्षीरमत्र जलमिति भट्टाः ॥ ६ ॥

गो० टी०—प्राग्वाहा इति । प्राग्वाहाः पूर्वाभिमुखप्रवाहाः गोदावरीकावेर्यादयः । ऊर्ध्ववाहाः ऊर्ध्वोद्गतप्रवाहाः नैमिषारण्यस्थब्रह्मावर्तरुद्रावर्तादिसरोविशेषाः । 'ऊर्ध्ववाहाः प्रत्यग्वाहाः' इत्यप्याहुः ऊर्ध्वाद्वहन्तीत्यूर्ध्ववाहाः निर्झरा इति केचित् । तिर्यग्वाहा दक्षिणोत्तराभिमुखप्रवाहाः गण्डकीशोणभद्रादयः ॥ ६ ॥

रा० टी०—क्षौद्रमिति । दर्भाः कुशाः सुमनसः पुष्पाणि ॥ ७ ॥

गो० टी०—सलाजा इति । क्षीरिभिः अश्वत्थोदुम्बरादिभिः । पूर्वं जलकुम्भमात्रमुक्तम् अत्र तद्विशेष इति न पुनरुक्तिः ॥ ७ ॥

८–१० ] ति० टी०—क्षीरिभिः क्षीरिवृक्षपल्लवैः ॥ ८–१० ॥

रा० टी०—अष्टाविति । क्षीरिभिः क्षीरविशिष्टवृक्षविशेषपल्लवैः छन्ना आच्छादिताः पद्मोत्पलयुताः पद्मोत्पलयोः कमलजातिविशेषत्वान्न पौनरुक्त्यम् ॥ ८ ॥

गो० टी०—क्षौद्रमिति । क्षौद्रं मधु सुमनसः कुसुमानि शुभाचाराः अञ्जनस्रगलंकरणादिमङ्गलवेषयुक्ताः ॥ ८ ॥

रा० टी०—चन्द्रेति । चन्द्रांशुविकचप्रख्यं चन्द्रांशुवद्विकचा विस्तृता प्रख्या दीप्तिर्यस्य तत् रत्नभूषितं विहितानेकविविधरत्नसंयुक्तं सज्जं गन्धादिभिरलंकृतं वालव्यजनं वालौ पुच्छकेशविशेषौ चामरावित्यर्थः । तौ च व्यजनं चैतेषां समाहारः । तत् रामस्य रामाभिषेकार्थं तिष्ठति ॥ ९ ॥

गो० टी०—चन्द्रांशुविकचप्रख्यं विकचचन्द्रांशुसदृशं विकचत्वं विस्तृतत्वं, यद्वा चन्द्रांशव इव विकचा विस्तृता प्रख्या कान्तिर्यस्य तत्तथा काञ्चनं काञ्चनदण्डं सज्जं गन्धपुष्पादिभिरलंकृतम् ॥ ९ ॥

रा० टी०—चन्द्रमण्डलेति । चन्द्रमण्डलसंकाशं चन्द्रमण्डलप्रकाशकमत एव द्युतिकरं सर्वप्रकाशकरं श्रीमदसंख्यैश्वर्यविशिष्टमभिषेकपुरःसरमभिषेकानामभिषेकसामग्रीणां पुरःसरमग्रे स्थितं मुख्यमित्यर्थः आतपत्रं छत्रं तिष्ठति इति शेषः । अभिषेकशब्दः करणघञन्तः ॥ १० ॥

१ कक्ष इति गो. रा. पाठः । २ समाहिता इति गो. पाठः । ३ एतदादिश्लोकद्वयस्य व्यत्यस्तपाठो गो. पुस्तके । ४ वेश्याश्चैव शुभाचाराः सर्वाभरणभूषिताः इति गो. पाठः । ५ काञ्चनमिति गो. पाठः ।

सज्जं द्युतिकरं श्रीमदभिषेकपु[1]रःसरम् । पाण्डुरश्च वृषः सज्जः पाण्डु[2]राश्वश्च संस्थितः ॥ ११ ॥
[ [3]प्रसृतश्च गजः श्रीमानौपवाह्यः प्रतीक्षते । अष्टौ च कन्या माङ्गल्याः सर्वाभरणभूषिताः ॥ ]
वादित्राणि च सर्वाणि बन्दिनश्च तथापरे । इक्ष्वाकूणां यथा राज्ये संभ्रियेताभिषेचनम् ॥ १२ ॥
तथाजातीयमादाय राजपुत्राभिषेचनम् । ते राजवचनात्तत्र समवेता महीपतिम् ॥ १३ ॥
अपश्यन्तोऽब्रुवन्को नु रा[4]ज्ञो नः प्रतिवेदयेत् । न पश्यामश्च राजानमुदितश्च दिवाकरः ॥ १४ ॥
यौवराज्याभिषेकश्च सज्जो रामस्य धीमतः । इति तेषु ब्रुवाणेषु स[5]र्वांस्तांश्च महीपतीन् ॥ १५ ॥
अब्रवीत्तानिदं वा[6]क्यं सुमन्त्रो राजसत्कृतः । रामं राज्ञो नियोगेन त्वरया प्रस्थितो [7]ऽहम् ॥ १६ ॥
पूज्या राज्ञो भवन्तश्च रामस्य तु विशेषतः । अयं पृच्छामि वचनात्सुखमायुष्मतामहम् ॥ १७ ॥
राज्ञः संप्रतिबुद्धस्य [8]चानागमनकारणम् । इत्युक्त्वान्तःपुरद्वारमाजगाम पुराणवित् ॥ १८ ॥

---

गो० टी०—चन्द्रमण्डलेति । अभिषेकपुरस्कृतमभिषेकाय पुरस्कृतम् ॥ १० ॥

११ ] ति० टी०—अभिषेकपुरःसरमभिषेकसामग्रीमुख्यम् ॥ ११ ॥

रा० टी०—पाण्डुर इति । पाण्डुरो वृषः पाण्डुराश्वश्च संस्थितः वादित्राणि बन्दिनश्च संस्थिताः वचनविपरिणामेन संस्थित इत्यत्राप्यन्वेति ॥ ११ ॥

गो० टी०—पाण्डुर इति । प्रसृतः प्रकर्षेण स्रवन्मदः औपवाह्यः राजवाह्यस्त्वौपवाह्यः ' इत्यमरः ॥ ११ ॥

१२ ] ति० टी०—इक्ष्वाकूणां राज्येऽभिषेचनमुद्दिश्य यथा वस्तुजातं संभ्रियेत संभ्रियते ॥ १२ ॥

रा० टी०—इक्ष्वाकूणामिति । इक्ष्वाकूणां राज्ये राज्याभिषेके अभिषेचनमभिषेकसामग्री यथा संभ्रियेत तथाजातीयमिक्ष्वाकुकुलराज्याभिषेकोचितमित्यर्थः । अभिषेचनमभिषेकसामग्रीं राजवचनादादाय गृहीत्वा समवेताः राजद्वारं प्राप्तास्ते राजकीयाः महीपतिमपश्यन्तः सन्तः राज्ञो नः अस्मान् कः प्रतिवेदयेत् कथयेत् इत्यब्रुवन् । श्लोकद्वयमेकान्वयि ॥१२॥१३॥

गो० टी०—अष्टौ चेति । माङ्गल्याः मङ्गलार्हाः वादित्राणि वीणादिचतुर्विधवाद्यानि ॥ १२ ॥

गो० टी०—इक्ष्वाकूणामिति । इक्ष्वाकूणां राज्ये अभिषेचनमुद्दिश्य यथा संभ्रियेत वस्तुजातमिति शेषः तथाजातीयमनर्घरत्नादिवस्तुजातमादाय ते महीपतयः राजवचनात् राजपुत्राभिषेचनमुद्दिश्य तत्र राजभवनद्वारे समवेताः महीपतिमपश्यन्तः राज्ञः को नु नः प्रतिनिवेदयेदित्यब्रुवन्निति योजना ॥ १३ ॥ १४ ॥

१३-१४ ] ति० टी०—तथाजातीयं वस्तुजातं रामाभिषेकमुद्दिश्यादाय गृहीत्वा राजवचनाद्राजद्वारे समवेता मिलिता ब्राह्मणादयो महीपतिमपश्यन्तो नोऽस्मान्राज्ञः कः प्रतिवेदयेदित्यब्रुवन् ॥ १३–१४ ॥

रा० टी०—ननु त्वमेव प्रतिपादयेत्यत आह—नेति । दिवाकर उदितः राजानं च न पश्यामः अतः कं प्रति कथयामीत्यर्थः । धीमतो रामस्य यौवराज्याभिषेकश्च सज्ज इत्यनेन प्रकारेण तान्द्वारप्राप्तान्महीपतीन्ब्रुवाणेषु सत्सु राजसत्कृतः सुमन्त्रः तान् ब्रुवाणानिदं वाक्यमब्रवीत् । अर्धचतुष्टयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—नेति । सज्जः संपन्नसाधन इत्यर्थः ॥१५॥१६॥

१५ ] ति० टी०—यौवराज्याभिषेकस्तत्सामग्री । सर्वाञ्जनान्महीपतींश्चाब्रवीदित्यन्वयः ॥ १६ ॥

१६ ] ति० टी०—रामम् आनेतुमिति शेषः ॥ १६ ॥

रा० टी०—तद्वचनमेवाह—राममिति । यद्यपि राज्ञो नियोगेन राजाज्ञयेत्यर्थः राममानेतुमिति शेषः त्वरयावेगेनाहं प्रस्थितः तथापि राज्ञो रामस्य च भवन्तः पूज्या इति हेतोः आयुष्मतां भवतां वचनात्संप्रतिबुद्धस्य जाग्रतो राज्ञः अनागमनकारणं द्वारगमनाभावहेतुमयमहं सुखं यथा स्यात्तथा पृच्छामि द्वारे समागता ब्राह्मणादयः जाग्रतो भवतः आगमनाभावहेतुं पृच्छन्ति इति राजसन्निधौ गत्वा प्रश्नं कारयिष्यामीत्यर्थः । इति उक्त्वा पुराणवित्सुमन्त्रः अन्तःपुरद्वारमाजगाम । अर्धपञ्चकमेकान्वयि ॥ १६–१८ ॥

गो० टी०—राममिति । रामं प्रस्थितः आनेतुमिति शेषः । यस्मात्पूज्यास्तस्मात् आयुष्मतां युष्माकं वचनात् राज्ञः सुखं पृच्छामि यच्चागमनकारणं दर्शनायानागमनहेतुस्तं च अयमविलम्बेन पृच्छामि । पुराणवित् सामन्तराजानुवर्तनरूपपुरातनवृत्तान्तज्ञः सदा सर्वं सर्वदा अनिवारितम् ॥ १७–१९ ॥

१७ ] ति० टी०—यद्यपि प्रस्थितस्तथापि भवन्तो राज्ञो रामस्य च पूज्या इति कृत्वायुष्मतां युष्माकं वचनात्सर्वे राजानो ब्राह्मणादयश्च महाराजं सुखं सुखशयनं पृच्छन्तीति विज्ञापयामि जाग्रतोऽपि बहिरनागमनकारणं किमिति च पृच्छन्तीति विज्ञापयामि ॥ १७ ॥

१८ ] ति० टी०—पुराणविच्चिरकालकथाभिज्ञः अतिवृद्ध इति यावत् ॥ १८ ॥

---

१ पुरस्कृतमिति गो. पाठः । २ पाण्डुरोऽश्व इति गो. पाठः । ३ अधिकोऽयं श्लोकः गो. पुस्तके । ४ प्राज्ञ इति गो. पाठः । ५ सार्वभौमानिति गो. पाठः । ६ सर्वानिति गो. पाठः । ७ ऽस्म्यहमिति गो. पाठः । ८ यच्चागमनेति गो. पाठः ।

सदा सक्तं च तद्वेश्म सुमन्त्रः प्रविवेश ह । तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ॥ १९ ॥
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत । सोऽत्यासाद्य तु तद्वेश्म तिरस्करणिमन्तरा ॥ २० ॥
आशीर्भिर्गुणयुक्ताभिरभितुष्टाव राघवम् । सोमसूर्यौ च काकुत्स्थ शिववैश्रवणावपि ॥ २१ ॥
वरुणश्चाग्निरिन्द्रश्च विजयं प्रदिशन्तु ते । गता भगवती रात्रिरहः शिवमुपस्थितम् ॥ २२ ॥
बुद्ध्यस्व राजशार्दूल कुरु कार्यमनन्तरम् । ब्राह्मणा बलमुख्याश्च नैगमाश्चागतास्त्विह ॥ २३ ॥
दर्शनं [4]तेऽभिकाङ्क्षन्ते प्रतिबुद्ध्यस्व राघव । स्तुवन्तं तं तदा सूतं सुमन्त्रं मन्त्रकोविदम् ॥ २४ ॥
प्रतिबुद्ध्य ततो राजा इदं वचनमब्रवीत् । राममानय सूतेति यदस्यभिहितो मया ॥ २५ ॥
किमिदं कारणं येन ममाज्ञा प्रतिवाह्यते । न चैव संप्रसुप्तोऽहमानयेहाशु राघवम् ॥ २६ ॥
इति राजा दशरथः सूतं तत्रान्वशात्पुनः । स राजवचनं श्रुत्वा शिरसा प्रतिपूज्य तम् ॥ २७ ॥
निर्जगाम नृपावासान्मन्यमानः प्रियं महत् । प्रपन्नो राजमार्गं च पताकाध्वजशोभितम् ॥ २८ ॥

१९ ] ति० टी०—सदा सक्तमवारितद्वारम् ॥ १९ ॥

रा० टी०—सदेति । सदा सर्वस्मिन् काले आसक्तं स्वसेवितमनिवारितमित्यर्थः । किंच आसक्तं कविभिर्नित्यं वर्णितमित्यर्थः । तद्वेश्म गृहं प्रविवेश प्रविश्य विशांपतेरस्य वंशं तुष्टाव ॥ १९ ॥

गो० टी०—तुष्टावेति । शयनीयं शयनयोग्यं गृहम् ॥२०॥

२० ] ति० टी०—शयनीयं शयनगृहम् । तिरस्करणीं जवनिकाम् अन्तरा कृत्वेति शेषः एतेन तावत्पर्यन्तं गमनं सूचितम् । अत्यासाद्यातिसमीपं गत्वा ॥ २० ॥

रा० टी०—शयनीयमिति । नरेन्द्रस्य शयनीयं शयनगृहमासाद्य प्राप्य व्यतिष्ठत । अर्धं पृथक्—स इति । सः शयनगृहसमीपं प्राप्तः सुमन्त्रः तिरस्करणीं जवनिकाम् 'चिक' इति नाम्ना लोके प्रसिद्धामित्यर्थः । अन्तरा विना तद्वेश्म अत्यासाद्य अतिक्रम्य राघवं दशरथं तुष्टाव । अर्धद्वयमेकान्वयि ॥ २० ॥

गो० टी०—स इति । अत्यासाद्य अतिशयेन प्राप्य अतिसमीपं प्राप्येत्यर्थः । तिरस्करणिमन्तरा जवनिकामात्रं व्यवधानं कृत्वेत्यर्थः । राघवं दशरथं पुनस्तोत्रकरणं सुतस्य विज्ञापनात्पूर्वं स्तुतेः कुलधर्मत्वात् ॥ २१-२४ ॥

२१-२२ ] ति० टी०—राजविज्ञापनस्य स्तुतिपूर्वकत्वात्पुनः स्तुतिप्रवृत्तिः ॥ २१ ॥ २२ ॥

रा० टी०—स्तुतिमेवाह—सोमेति । सोमादयः ते तव विजयं प्रदिशन्तु कथयन्ति ॥ २१ ॥

रा० टी०—गतेति । शिवं कल्याणमूलं बुध्यस्व जागृहि । अनन्तरं कार्यं शःकर्तव्यत्वेन निश्चितं कुरु ॥ २२ ॥

२३-२४ ] ति० टी०—निगमो वाणिज्यं तत्संबन्धिनो नैगमाः ॥ २३ ॥ २४ ॥

रा० टी०—ब्राह्मणा इति । इहागताः ब्राह्मणादयः ते दर्शनमभिकाङ्क्षन्ते ॥ २३ ॥

रा० टी०—स्तुवन्तमिति । स्तुवन्तं सुमन्त्रं राजा प्रतिबुध्य इदं वचनमब्रवीत् ॥ २४ ॥

गो० टी०—स्तुवन्तमित्यादि।प्रतिबुध्य ज्ञात्वेत्यर्थः२५॥२६

२५-२७ ] ति० टी०—प्रतिबुध्य जवनिकान्तर्हितमपि सुमन्त्रं ध्वनिना ज्ञात्वा । 'यदस्यभिहितोऽनया' इति पाठेऽनयेत्युपलक्षणं मया चेत्यर्थः अत एव ममाज्ञेति संगच्छते पूर्वं राज्ञा स्वयमप्युक्तेः । कतकादयस्तु—कैकेय्याज्ञैवाप्रतिषिद्धमनुमतमिति न्यायेन ममाज्ञा । नन्वु निद्रापरवशत्वेन राज्ञोऽनुमतं न वेति मे संदेहस्तत्राह—न चेति । इति व्याचक्षते । तेषाम् 'इति राजा' इतिश्लोके पुनःपदासंगतिः स्पष्टैव पूर्वसर्गान्ते 'अश्रुत्वा राजवचनम्' इत्यादि 'ननन्द च' इत्यन्तश्लोकद्वयस्य सर्वपुस्तकेषूपलम्भाच्च तद्व्याख्यानमसंगतमिति ध्येयम् ॥ २५-२७ ॥

रा० टी०—तद्वचनमेवाह—राममिति । अनया मद्वाण्या राममानय इति त्वं यदभिहितः आज्ञापितोऽसि सा ममाज्ञा त्वया येन कारणेन प्रतिवाह्यते निवर्त्यते तदिदं किं कारणम् २५

रा० टी०—नेति । अहं नैव संप्रसुप्तः ॥ २६ ॥

गो० टी०—कैकेय्युक्तं निद्रापरवशस्य राज्ञोऽनुमतं न वेति न संशयितव्यमित्याह—न चेत्यादिना ॥ २७ ॥ २८ ॥

रा० टी०—इतीति । अन्वशादन्वकथयत् । स सुमन्त्रः तं राजानं शिरसा प्रतिपूज्य नमस्कृत्य प्रियं मन्यमानः निर्जगाम । सार्धश्लोक एकान्वयी ॥ २७ ॥

२८ ] ति० टी०—प्रियं मन्यमानो हार्दाभिप्रायज्ञानात् २८

रा० टी०—प्रपन्न इति । राजमार्गं प्रपन्नः प्राप्तः हृष्टः गात्रहर्षतां प्राप्तः प्रहृष्टः अत्यानन्दमनाः सतः पताकाध्वजशोभितं राजमार्गं विलोकयन् सन् आशु जगाम राजमार्गमित्युभयान्वयि ॥ २८ ॥

१ कृतकृत्यमिदं तवेति गो. पाठः । २ नृपेति को. पाठः । ३ नृपेति गो. पाठः । ४ प्रतीति गो. पाठः । ५ अनयेति को. रा. पाठः । ६ हन्यते इति को. पाठः ।

हृष्टः प्रमुदितः सूतो जगामाशु विलोकयन् । स सूतस्तत्र शुश्राव रामाधिकरणाः कथाः ॥ २९ ॥
अभिषेचनसंयुक्ताः सर्वलोकस्य हृष्टवत् । ततो ददर्श रुचिरं कैलाससदृशप्रभम् ॥ ३० ॥
रामवेश्म सुमन्त्रस्तु शक्रवेश्मसमप्रभम् । महाकपाटपिहितं[2] वितर्दिशतशोभितम् ॥ ३१ ॥
काञ्चनप्रतिमैकाग्रं[1] मणिविद्रुमतोरणम् । शारदाभ्रघनप्रख्यं दीप्तं मेरुगुहासमम्[3] ॥ ३२ ॥
मणिभिर्वरमाल्यानां सुमहद्भिरलंकृतम् । मुक्तामणिभिराकीर्णं चन्दनागुरुभूषितम्[4] ॥ ३३ ॥
गन्धान्मनोज्ञान्विसृजद्दार्दुरं[5] शिखरं यथा । सारसैश्च मयूरैश्च विनदद्भिर्विराजितम् ॥ ३४ ॥
सुकृतेहामृगाकीर्णमुत्कीर्णं[6] भक्तिभिस्तथा । मनश्चक्षुश्च भूतानामाददत्तिग्मतेजसा ॥ ३५ ॥
चन्द्रभास्करसंकाशं कुबेरभवनोपमम् । महेन्द्रधामप्रतिमं नानापक्षिसमाकुलम् ॥ ३६ ॥

गो० टी०–प्रपन्न इति । हृष्टः रोमाञ्चाञ्चितगात्रः प्रमुदितः संजातमानसानन्दः ॥ २९ ॥

२९] ति० टी०–हृष्टः पुलकितगात्रः प्रमुदित आनन्दचित्तः राजमार्गं विलोकयन्निति संबन्धः। रामाधिकरणा रामविषयाः २९

रा० टी०–स इति । तत्र मार्गे अभिषेचनसंयुक्ताः रामाभिषेको द्रुतं स्यादित्यादिवचनसंयुक्ताः रामाधिकरणाः रामनिष्ठसौशील्यादिगुणबोधिकाः इत्यर्थः। सर्वलोकस्य कथाः सर्वलोककर्तृकवर्णनं हृष्टवद्धर्षविशिष्टं यथा स्यात्तथा शुश्राव । एतेन स्वार्थे वतिरार्ष इति भट्टाद्युक्तिर्भिन्न्या ॥ २९ ॥

गो० टी०–स इति । रामाधिकरणाः राममधिकृत्य प्रवृत्ताः हृष्टवत् स्वार्थे वतिः ॥ ३० ॥ ३१ ॥

३०] ति० टी०–हृष्टवद्धृष्टानां जनानाम् स्वार्थे वतिरार्षः३०

रा० टी०–तत इति । कैलाससदृशप्रभं कैलासप्रभासदृशप्रभाविशिष्टं शक्रवेश्मसमप्रभं शक्रवेश्मप्रभासदृशप्रभाविशिष्टं रामवेश्म सुमन्त्रो ददर्श ॥ ३० ॥

३१ ] ति० टी०–प्रातःसमयत्वान्महाकपाटेन पिहितम् स्वल्पद्वारस्यैवोद्घाटितत्वात् वितर्दिर्वेदिका ॥ ३१ ॥

रा० टी०–रामवेश्मैव वर्णयन्नाह–महेत्यादिभिः । महाकपाटपिहितं महाकपाटेन पिहितमाच्छादितं वितर्दिशतशोभितं वितर्दीनां वेदिकानां यच्छतं तेन शोभितम् महाकपाटपिहितमित्यनेन तदन्तर्वर्तिसूक्ष्मकपाट उद्घाटित इति व्यक्तम् ॥ ३१ ॥

गो० टी०–महाकपाटेत्यादि । महाकपाटविहितं निर्मितमहाकपाटं वितर्दिशतशोभितं वेदिकाशतशोभितम् 'स्याद्वितर्दिस्तु वेदिका' इत्यमरः। काञ्चनप्रतिमैकाग्रं काञ्चनप्रतिमाभिः एकाग्रं निरन्तरं,यद्वा काञ्चनप्रतिमाभिः एकानि मुख्यानि अग्राणि शिखराग्राणि यस्मिन् तत्तथोक्तं मणिविद्रुमतोरणं मणिविद्रुमप्रचुरबहिर्द्वारयुक्तम् 'तोरणोऽस्त्री बहिर्द्वारम्' इत्यमरः । शारदाभ्रघनप्रख्यं शारदाभ्रमूर्तिसदृशम् 'घनो मेघे मूर्तिगुणे त्रिषु मूर्तौ निरन्तरे' इत्यमरः। दार्दुरं मलयसंनिकृष्टश्चन्दनोत्पत्तिस्थानभूतः गिरिर्दर्दुरः तत्संबन्धि दार्दुरम् । सुकृतेहामृगाकीर्णं द्वारभित्तिस्तम्भादिषु सुष्ठु रचितैः ईहामृगैः वृकैः आकीर्णम् 'कोकस्त्वीहामृगो वृकः' इत्यमरः । भक्तिभिः सुकीर्णं सुष्ठु रचितं तिग्मतेजसा तीव्रतेजसा 'तिग्मं तीव्रं खरम्' इत्यमरः । अतिशयिततेजसेत्यर्थः। रामवेश्म ददर्श । हेतिपुनर्वचनस्य सामान्योक्तस्य विशेषणविशेषकथनार्थत्वान्न पुनरुक्तिः भगवतो वाल्मीकेरियं हि शैली। उपस्थितैरिति उपादाय उपायनानीति शेषः। समाक्रान्तैः समागतैः उन्मुखैः उत्सुकैः उदग्रमुन्नतं कुब्जकैरातकावृतं किरातानां स्वल्पशरीरकाणां समूहः कैरातकम् 'पृभिरल्पशरीरः स्यात्किरातः स च कथ्यते' इति हलायुधः। उपस्थितैः समाकीर्णमित्यादिकमपि रामवेश्मेत्यनेन संबध्यते ॥३२–४०॥

३२ ] ति० टी०–काञ्चनीभिः प्रतिमाभिर्युक्तमेकं प्रधानमग्रं पुरोभागो यस्य तत् मणिविद्रुमयुक्तं तोरणं बहिर्द्वारं यस्य तच्छारदाभ्रवद्घनप्रख्यं निबिडप्रभम् ॥ ३२ ॥

रा० टी०–काञ्चनप्रतिमैकाग्रं काञ्चन्यः प्रतिमा देवप्रतिकृतयो यस्मिन् तदेकाग्रमेकं मुख्यमतिविलक्षणमित्यर्थः । अग्रमग्रभागो यस्मिन् तदेव तदिति कर्मधारयः । मणिविद्रुमतोरणं मणिविद्रुमनिर्मितं तोरणं बहिर्द्वारं यस्य शारदाभ्रघनप्रख्यं शारदाभ्रवद्घनीभूता प्रख्या प्रभा यस्य मेरुगुहासमं मेरुगुहासदृशम् ॥ ३२ ॥

३३ ] ति० टी०–वरमाल्यानां स्वर्णपुष्पमालानामन्तरालवर्तिभिर्महद्भिर्महादीप्तिमद्भिर्मणिभिरलंकृतम् ॥ ३३ ॥

रा० टी०–वरमाल्यानां सुवर्णनिर्मितपुष्पमालानां सुमहद्भिरतिमूल्यैर्मणिभिः अन्तरालवर्तिमणिविशेषैः अलंकृतं मुक्तामणिभिः विन्यस्तमुक्तामणिसमूहैः आकीर्णं चन्दनागरुभूषितं चन्दनागरुभिः शोभितम् ॥ ३३ ॥

३४ ] ति० टी०–दार्दुरम् दर्दुरो मलयसंनिकृष्टश्चन्दनगिरिः ॥ ३४ ॥

रा० टी०–मनोज्ञानतिमनोहरान्गन्धान्विसृजत्यजद्दार्दुरं दर्दुरस्य मलयसंनिकृष्टचन्दनगिरेरिदं शिखरं यथा सारसैः पक्षिविशेषैः ॥ ३४ ॥

३५–३६ ] ति० टी०–सुकृतैः स्वर्णादिना सुष्ठु निर्मितैरीहामृगैर्वृकैराकीर्णं व्याप्तम् 'कोकस्त्वीहामृगो वृकः' भक्तिभिर्वर्धकीनां सूक्ष्मचित्रशिल्पैरुत्कीर्णं चित्रवत् । तिग्मतेजसातिशयितशोभया, यद्वा प्रतिबिम्बितसूर्यकिरणैः ॥ ३५ ॥ ३६ ॥

१ शिखरेति गो.पाठः। २ विहितमिति गो.पाठः। ३ गुहोपममिति गो.पाठः। ४ अगरुधूपितमिति गो.पाठः। ५ दार्दरमिति गो.पाठः। ६ सुकीर्णमिति गो.पाठः

मेरुशृङ्गसमं सूतो रामवेश्म ददर्श ह । उपस्थितैः समाकीर्णं जनैरञ्जलिकारिभिः ॥ ३७ ॥
उपादाय समाक्रान्तैस्तदा जानपदैर्जनैः । रामाभिषेकसुमुखैरुन्मुखैः समलंकृतम् ॥ ३८ ॥
महामेघसमप्रख्यमुदग्रं सुविरौजितम् । नानारत्नसमाकीर्णं कुब्जकैरपि चावृतम् ॥ ३९ ॥
स वाजियुक्तेन रथेन सारथिः समाकुलं राजकुलं विराजयन् ।
वरूथिना राजगृहाभिपातिना पुरस्य सर्वस्य मनांसि हर्षयन् ॥ ४० ॥
ततः समासाद्य महाधनं महत्प्रहृष्टरोमा स बभूव सारथिः ।
मृगैर्मयूरैश्च समाकुलोल्बणं गृहं वरार्हस्य शचीपतेरिव ॥ ४१ ॥
स तत्र कैलासनिभाः स्वलंकृताः प्रविश्य कक्ष्यास्त्रिदशालयोपमाः ।
प्रियान्वरान्राममते स्थितान्बहूंन्व्यपोह्य शुद्धान्तमुपस्थितो रथी ॥ ४२ ॥
स तत्र शुश्राव च हर्षयुक्ता रामाभिषेकार्थकृतां जनानाम् ।
नरेन्द्रसूनोरभिमङ्गलार्थाः सर्वस्य लोकस्य गिरः प्रहृष्टाः ॥ ४३ ॥
महेन्द्रसद्मप्रतिमं च वेश्म रामस्य रम्यं मृगपक्षिजुष्टम् ।
ददर्श मेरोरिव शृङ्गमुच्चं विभ्राजमानं प्रभया सुमन्त्रः ॥ ४४ ॥

---

रा० टी०—स्वकृताः सुवर्णादिना अतिनिर्मिता ये ईहामृगा वृकास्तैः आकीर्णं व्याप्तम् 'कोकस्त्वीहामृगो वृकः' इति कोशः। भक्तिभिः चित्रादिरचनाविशेषैः उत्कीर्णं पूर्णमत एव मनश्चक्षुश्च आददत् हरत् ॥ ३५ ॥

रा० टी०—चन्द्रभास्करसंकाशं चन्द्रादिप्रकाशकं कुबेरभवनमुपमा उपमेयं यस्य महेन्द्रधाम प्रतिमा उपमा यस्य समाकुलं व्याप्तम् ॥ ३६ ॥

३७ ] ति० टी०—उपस्थितैरागतैः अञ्जलिकारिभिर्नमस्कारार्थम् ॥ ३७ ॥

रा० टी०—अञ्जलिकारिभिर्जनैः समाकीर्णं मेरुशृङ्गसमं रामवेश्म ददर्श मेरुगुहासममित्यनेन गृहान्तर्वर्णनमनेन तु तदुन्नतत्ववर्णनमिति न पौनरुक्त्यम्। सार्धषट्कमेकान्वयि ॥ ३७ ॥

३८ ] ति० टी०—उपादाय उपायनानीति शेषः। आगतैरिति च शेषः। समाक्रान्तैर्द्वारपालनिरुद्धैः उन्मुखैरुत्सुकैः ॥ ३८ ॥

३९ ] ति० टी०—उदग्रं प्रशस्तम्। कुब्जकैर्दासैः ॥ ३९ ॥

४० ] ति० टी०—राजकुलं राजमार्गं विराजयञ्शोभयन्। वरूथो रथगुप्तिस्तद्युतेन रामगृहं समासददिति शेषः ॥ ४० ॥

४१ ] ति० टी०—महाधनं महता धनेन युक्तम्। समाकुलैरितस्ततः प्रसृतैरुल्बणमाधिकशोभावत्। वरार्हस्योत्तमवस्त्वर्हस्य ॥ ४१ ॥

रा० टी०—उपादायेति। सारथिः सारथिधर्मविशिष्टः सारथिः स सुमन्त्रः समाकुलं गजादिभिराकीर्णं राजकुलं राजमार्गं वाजियुक्तेन वरूथिना रक्षकसहितेन राजगृहाभियातिना राजगृहगमनशीलेन रथेन विराजयन् प्रकाशयन् सन् मनांसि हर्षयंश्च सन् उपादाय गृहीत्वा उपायनानीति शेषः। समाक्रान्तैः समागतैः रामाभिषेकसुमुखैः तदभिषेकोत्सवविशिष्टैः उन्मुखैः भवनशोभानिरीक्षणार्थं कृतोर्ध्वमुखैर्जनैः समलंकृतम्। महामेघसमप्रख्यं महामेघस्य सजलजलदस्य समा सदृशी प्रख्या उक्तिर्यस्मिन्। इदमादर्शशीसादिवेश्मवर्णनमतः शारदाभ्रघनप्रख्यमिति पूर्वेण न विरोधः कुब्जकैः हास्यरसप्रपूरणाय निवासितकुब्जजनसमूहैरावृतं महाधनं वरार्हस्य वराणां सर्वश्रेष्ठानां ब्रह्मादीनामित्यर्थः। अर्हः तत्कर्तृकपूजा यस्मिंस्तस्य रामस्य गृहं समासाद्य प्राप्य प्रहृष्टरोमा बभूव अत एव आसरराज। श्लोकचतुष्टयमेकान्वयि ॥ ३८-४१ ॥

गो० टी०—सवाजियुक्तेनेति। वरूथिना रथगुप्तिमता 'रथगुप्तिर्वरूथो ना' इत्यमरः। पुरस्य पुरस्थजनस्य रञ्जयत् अरञ्जयत् ॥ ४१ ॥

गो० टी०—तत इति। समाकुलोल्बणम् इतस्ततः समाकुलैर्जनैरुल्बणमतिशयेनोल्बणं वा। वरार्हस्य श्रेष्ठवस्त्वर्हस्य रामस्येति शेषः ॥ ४२ ॥

४२] ति० टी०—व्यपोह्यातिक्रम्य शुद्धान्तमन्तःपुरम्॥ ४२॥

रा० टी०—स इति। कैलासनिभाः कैलससदृशीः त्रिदशालयोपमाः त्रिदशालय उपमा यासां ताः स्वलंकृताः कक्ष्याः तिस्रो द्वारः प्रविश्य प्रियान् रामप्रीतिविषयीभूतानत एव राममते स्थितानत एव वरान्सर्वश्रेष्ठान्बहून् जनान्व्यपोह्य अतिक्रम्य शुद्धान्तं शाखाशुकूलान्तःपुरं रथी सुमन्त्रः उपस्थितः प्राप्तः। कक्ष्याणां त्रित्वलाभस्तु कपिञ्जलाधिकरणन्यायेन ॥ ४२ ॥

गो० टी०—स इति। अपोह्य अतिक्रम्य शुद्धान्तमन्तःपुरम् ॥ ४३ ॥

४३-४४ ] ति० टी०—रामस्याभिषेकार्थमभिषेकप्रयोजनकं कर्म कुर्वतां जनानां गिरो नरेन्द्रसूनो रामस्याभितो मङ्गलं

---

१ तवेति गो.पाठः। २ विभूषितमिति गो.पाठः। ३ कैरातकावृतमिति गो.पाठः। ४ नराकुलमिति गो. पाठः। ५ विलोकयन्निति गो. पाठः। ६ स्वलंकृतमिति गो. पाठः। ७ बहूनपोह्येति गो. पाठः। ८ कृता इति गो. पाठः। ९ प्रहृष्ट इति गो. पाठः। १० त्विति गो. रा. पाठः।

उपस्थितैरञ्जलिकारिभिश्च सोपायनैर्जानपदैर्जनैश्च ।
कोट्या परार्धैश्च विमुक्तयानैः समाकुलं द्वारपदं ददर्श ॥ ४५ ॥
ततो महामेघमहीधराभं प्रभिन्नमत्यङ्कुशमत्यसह्यम् ।
रामोपवाह्यं रुचिरं ददर्श शत्रुंजयं नागमुदग्रकायम् ॥ ४६ ॥
स्वलंकृतान्साश्वरथान्सकुञ्जरानमात्यमुख्यांश्च ददर्श वल्लभान् ।
व्यपोह्य सूतः सहितान्समन्ततः समृद्धमन्तःपुरमाविवेश ह ॥ ४७ ॥
ततोऽद्रिकूटाचलमेघसंनिभं महाविमानोपमवेश्मसंयुतम् ।
अवार्यमाणः प्रविवेश सारथिः प्रभूतरत्नं मकरो यथार्णवम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

---

तत्प्रतिपादनमर्थो यासां ताः शुश्राव । स तथा लोकस्य च गिरस्तादृशीः शुश्राव ॥ ४३ ॥ ४४ ॥

रा० टी०—स इति । रामाभिषेकार्थकृतां रामाभिषेकाय इदं रामाभिषेकार्थं तत्कुर्वन्ति संपादयन्ति तेषां जनानां प्रहर्षयुक्ताः गिरः शुश्राव नरेन्द्रसूनोः अभिमङ्गलार्थाः अभितः सर्वप्रकारेण मङ्गलमेव अर्थो यासां ताः सर्वस्य उक्तातिरिक्तस्य लोकस्य तत्रत्यजनस्य प्रहृष्टा गिरश्च शुश्राव । शुश्राव गिर इति च आवर्तते किंच सर्वस्य लोकस्य संबन्धिनां रामाभिषेकार्थे कृत् प्रयत्नो येषां तेषां जनानां नरेन्द्रसूनोः रामस्याभिमङ्गलार्थाः सर्वतो मङ्गलप्रापिकाः हर्षयुक्ताः हर्षेण योजिताः अत एव प्रहृष्टाः हर्षकारिकाः गिरः स सूतः शुश्राव ॥ ४३ ॥

गो० टी०—स इति । रामाभिषेकार्थकृताः रामाभिषेकार्थं प्रयुक्ता इत्यर्थः । अभिमङ्गलार्थाः अभितो मङ्गलप्रतिपादनप्रयोजनाः ॥ ४४ ॥

रा० टी०—कक्ष्यात्रयानन्तरमपि तादृशमेव वेश्मास्तीति बोधयन्नाह—महेन्द्रेति । प्रभया स्वकान्त्या विभ्राजमानं वेश्म कक्ष्यात्रयात्परं गृहं ददर्श ॥ ४४ ॥

गो० टी०—महेन्द्रसद्मप्रतिममिति । वेश्म रामावासभूतं गृहराजम् ॥ ४५ ॥

४५ ] ति० टी०—कोट्या तत्संख्यया परार्धैस्तत्संख्ययोपलक्षितैर्जनैः अनेनातिसंमर्दो दर्शितः ॥ ४५ ॥

रा० टी०—तस्मिन्द्वारे अत्याश्चर्यमस्तीति बोधयन्नाह—उपस्थितैरिति । विमुक्तयानैः विमुक्तानि यानानि रथादयः यैस्तैः समाकुलं व्याप्तं द्वारपथं ददर्श एतेन तद्द्वारस्य आश्चर्यभाक्त्वमत्वं ध्वनितं प्रसिद्धं चैतादृशशक्तिमत्वं पुष्पकविमानादौ ॥ ४५ ॥

गो० टी०—उपस्थितैरिति । कोट्या कोटिसंख्यया परार्धैः परार्धसंख्यया च संख्येयैः सर्वान्तसंख्या परार्धः ॥ ४६ ॥

४६ ] ति० टी०—महामेघाधिरूढपर्वतसदृशम् प्रभिन्नं मत्तम् शत्रुंजयं तद्गुणकं तन्नामानं च राम उपवाह्यो यस्य तम् ॥ ४६ ॥

रा० टी०—तत इति । महामेघैः युक्तो यो महीधरः पर्वतः तदाभं तत्सदृशं प्रभिन्नमतिमदमत्यङ्कुशमतिशयितः लोकविलक्षणः अङ्कुशो यस्य अत्यसह्यं सर्वासह्यविलक्षणं रामोपवाह्यं रामः उपवाह्यो येन तं रुचिरं मनोहरमुदग्रकायमुद् उन्नतः अग्रः अग्रभागो यस्य तत्कायं यस्य तं शत्रुंजयं शत्रुजयनामार्थविशिष्टं नागं गजं ददर्श ॥ ४६ ॥

गो० टी०—तत इति । प्रभिन्नं मत्तम् 'प्रभिन्नो गर्जितो मत्तः' इत्यमरः ॥ ४७ ॥

४७ ] ति० टी०—वल्लभान् राज्ञ इति शेषः । व्यपोह्य रथागमनेन मार्गादेकदेशे कृत्वा ॥ ४७ ॥

रा० टी०—स्वलंकृतानिति । सूतः सुमन्त्रः स्वलंकृतान् शोभनालंकारविशिष्टान्साश्वरथानश्वसहितरथविशिष्टान्सकुञ्जरान्कुञ्जरसहितान्वल्लभान्रामप्रियानमात्यमुख्यान्ददर्श समन्ततः सहितान्प्राप्तान्तानमात्यमुख्यान्व्यपोह्य अतिक्रम्य समृद्धमतिसंपत्तिविशिष्टमन्तःपुरमाविवेश ॥ ४७ ॥

गो० टी०—स्वलंकृतानिति । वल्लभान् राजप्रियान् ॥ ४८ ॥

४८ ] ति० टी०—अद्रिकूटेऽद्रिशृङ्गे आरूढोऽचलो यो महामेघस्तत्सदृशमौन्नत्येन । 'तदेन्द्रकूट—' इति पाठे तन्नामा पर्वतविशेषस्तदारूढेत्यादि प्राग्वत् । महाविमानोपमवेश्मभिः संयुतम् महाविमानानां तत्संज्ञकानामुत्तमवेश्मनां संघो यत्र, महाविमानेभ्य उत्तमानां वेश्मनां संघो यत्रेति वा 'विमानो

---

१ द्वारकैरिति गो. पाठः । २ च मर्त्यैरिति गो. पाठः । ३ पथमिति गो. रा. पाठः । ४ अप्रसह्यमिति गो. पाठः । ५ औपवाह्यमिति गो. पाठः । ६ शतसंख्यैरिति गो. पाठः । ७ हेति गो. नास्ति । ८ तदद्रीति गो. पाठः । ९ संनिभमहा इति रा. पाठः । १० संघवदिति गो. पाठः ।

## षोडशः सर्गः ।

सुमन्त्रो रामसमीपमेत्य तं प्रति तदानयनविषयं दशरथनियोगं न्यवेदयन्निर्गतश्च रामः कनकमयं रथमारुह्य छत्रचामरधारिणा लक्ष्मणेन वीज्यमानः करितुरगदलैः परिवार्यमाणश्चानन्दोद्धुरनरनारीभिर्गीयमानं स्वयशः शृण्वन्नेव दशरथं द्रष्टुं निर्ययौ ।

स तदन्तःपुरद्वारं समतीत्य जनाकुलम् । प्रविविक्तां ततः कक्ष्यामाससाद पुराणवित् ॥ १ ॥
प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः । अप्रमादिभिरेकाग्रैः स्वनुरक्तैरधिष्ठिताम् ॥ २ ॥
तत्र काषायिणो वृद्धान्वेत्रपाणीन्स्वलंकृतान् । ददर्श विष्ठितान्द्वारि स्त्र्यध्यक्षान्सुसमाहितान् ॥ ३ ॥
ते समीक्ष्य समायान्तं रामप्रियचिकीर्षवः । सहसोत्पतिताः सर्वे ह्यासनेभ्यः ससंभ्रमाः ॥ ४ ॥
तानुवाच विनीतात्मा सूतपुत्रः प्रदक्षिणः । क्षिप्रमाख्यात रामाय सुमन्त्रो द्वारि तिष्ठति ॥ ५ ॥
ते राममुपसंगम्य भर्तुः प्रियचिकीर्षवः । सहभार्याय रामाय क्षिप्रमेवाचचक्षिरे ॥ ६ ॥

---

त्तमवेश्मसंघवत्' इति पाठान्तरेऽर्थः । 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

रा० टी०—तत इति । अद्रिकूटाचलमेघसंनिभमहाविमानोपमवेश्मसंयुतमद्रिकूटे पर्वतशृङ्गे अचलः चाञ्चल्यरहितः यो मेघः तत्संनिभानि तान्येव महाविमानोपमानि पुष्पकविमानसदृशानि तान्येव वेश्मानि गृहाणि तैः संयुतं प्रभूतरत्नमतिरत्नविशिष्टमन्तःपुरमर्णवं समुद्रं मकर इव अवार्यमाणः सारथिः प्रविवेश ॥ ४८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

गो० टी०—तदिति । अद्रिकूटाचलमेघसन्निभम् अद्रिशिखरेण निश्चलमेघेन च सदृशं महाविमानोत्तमवेश्मसंघवत् महाविमानसहितोत्तमवेश्मसमूहयुक्तम् 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति निघण्टुः ॥ ४९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चदशः सर्गः ॥ १५ ॥

---

१ ] ति० टी०—प्रविविक्तां जनासंबाधाम् ॥ १ ॥

२ ] ति० टी०—प्रासकार्मुकाणां बिभ्रद्भिः तेषां धारकैरित्यर्थः । एकाग्रैरेकाग्रचित्तैः ॥ २ ॥

रा० टी०—स इति । जनाकुलं बहुजनैराकीर्णं तदन्तःपुरद्वारं समतीत्य अतिक्रम्य ततः रामसमीपगमनस्य आवश्यकत्वाद्धेतोः प्रविविक्तां जनबाहुल्यरहितां प्रासकार्मुकबिभ्रद्भिः प्रासानि प्रकटीभूतानि कार्मुकाणि धनूंषि बिभ्रति धारयन्ति तैः कर्मणः संबन्धसामान्यत्वेन विवक्षणात् षष्ठी ततः षष्ठीतिविधिना समासः मृष्टकुण्डलैः मृष्टानि स्वतः शुद्धानि कुण्डलानि येषां तैः अनुरक्तैः रामविषयकात्यनुरागविशिष्टैः अत एव एकाग्रैः नियमितचित्तैः अत एव अप्रमादिभिः अनवधानतार-हितैः युवभिः अधिष्ठितां कक्ष्यां पुराणवित्सुमन्त्रः आससाद प्राप । द्वयोरेकत्रान्वयः ॥ १ ॥ २ ॥

गो० टी०—एवं सुमन्त्रस्य रामोपस्थानमुक्त्वा रामस्य दशरथोपस्थानमाह षोडशे—स तदित्यादि ॥ १ ॥ २ ॥

३-४ ] ति० टी०—काषायिणः कौसुम्भादिकषायरक्तवस्त्रधारिण इत्यर्थः ॥ ३ ॥ ४ ॥

रा० टी०—तत्रेति । काषायिणः कुसुम्भादिरक्तवस्त्रधारिण स्वलंकृतान्स्वावस्थायोग्यालंकारविशिष्टान्स्थितान्स्त्र्यध्यक्षान्स्त्रीसमीपगमनयोग्यानित्यर्थः । वृद्धान् तत्र तस्मिन्समये ददर्श ॥ ३ ॥

रा० टी०—ते इति । ते वृद्धाः आसनेभ्यः उत्पतिता उत्थिताः ॥ ४ ॥

गो० टी०—तत्रेति । काषायिणः काषायवस्त्रधारिणः रामप्रीत्यर्थमलंकारकञ्चुकालंकृतानित्यर्थः । वृद्धान् पञ्चनवतिवयस्कान् ते खल्वन्तःपुरे स्थाप्या भवन्ति वेत्रपाणीन् यथा रामो धनुर्धृत्वा लोकं रक्षति तथा तेऽपि वेत्राणि धृत्वा रामं रक्षन्तीति भावः । स्वलंकृतान् रामश्चक्रवर्तिगृहे कृतमज्जनो भुक्त्वा यदा पुनर्दिव्यान्तःपुरमुपयाति तदा चक्रवर्तिवदन्तरङ्गतया च तमुत्सङ्गे निवेश्य परिष्वज्य मूर्ध्न्याघ्राय विसर्जयन्ति तेन कुङ्कुमपङ्कैः कस्तूरिकादिदिव्याङ्गरागैश्चालंकृतान् स्वलंकृतान् रामसीतालंकारेभ्योऽप्ययमलंकारोऽतिशयित इति भावः ॥ ३ ॥ ४ ॥

५-६ ] ति० टी०—प्रदक्षिणः प्रकर्षेण सेवादौ निपुणः आख्यात कथयत ॥ ५ ॥ ६ ॥

रा० टी०—तानिति । प्रदक्षिणः मन्त्रादिकर्मस्वतिनिपुणः सूतपुत्रः सुमन्त्रः तानुवाच । तद्वचनमेवाह—सुमन्त्रो द्वारि तिष्ठतीति क्षिप्रं शीघ्रमाख्यात यूयं कथयत ॥ ५ ॥

रा० टी०—ते इति । उपसंगम्य प्राप्य आचचक्षिरे कथयामासुः ॥ ६ ॥

गो० टी०—तानिति । प्रकर्षेण दक्षिणः प्रदक्षिणः सेवानिपुण इत्यर्थः । 'दक्षिणे सरलोदारौ' इत्यमरः । तिष्ठतीत्यत्र इतिकरणं द्रष्टव्यं तिष्ठतीत्याख्यातेत्यन्वयः ॥ ५ ॥ ६ ॥

---

१ प्रासिते रा. पाठः । २ स्वनुरक्तैरिति गो. पाठः । ३ तत्रेति गो. रा. पाठः । ४ ह्यासनेभ्य इति गो. पाठः । ५ कार्मुकाणामिति भाति ।

प्रतिवेदितमाज्ञाय सूतमभ्यन्तरं पितुः । तत्रैवानाययामास राघवः प्रियकाम्यया ॥ ७ ॥
तं वैश्रवणसंकाशमुपविष्टं स्वलंकृतम् । ददर्श सूतः पर्यङ्के सौवर्णे सोत्तरच्छदे ॥ ८ ॥
वराहरुधिराभेण शुचिना च सुगन्धिना । अनुलिप्तं परार्ध्येन चन्दनेन परंतपम् ॥ ९ ॥
स्थितया पार्श्वतश्चापि वालव्यजनहस्तया । उपेतं सीतया भूयश्चित्रया शशिनं यथा ॥ १० ॥
तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा । ववन्दे वरदं बन्दी विनयज्ञो विनीतवत् ॥ ११ ॥

७-८ ] ति० टी०-प्रतिवेदितं द्वाःस्थैर्विज्ञापितम् पितुरभ्यन्तरमत्यन्तमन्तरङ्गम् तत्रैव सीतावस्थितिदेश एव । प्रियकाम्यया पितुरिति शेषः ॥ ७ ॥ ८ ॥

रा० टी०-प्रतीति । प्रतिवेदितं निवेदितागमनकं सूतं पितुः अभ्यन्तरमत्यन्तरङ्गमाज्ञाय प्रियकाम्यया तत्प्रसन्नतावाञ्छया तत्रैव आनाययामास ॥ ७ ॥

गो० टी०-प्रतिवेदितमिति । प्रतिवेदितं द्वास्थैः निवेदितं पितुः अभ्यन्तरमन्तरङ्गं तत्रैव यत्र सीतया सह स्थितः तत्रैवेत्यर्थः । राघवप्रियकाम्यया[1] राघवस्य दशरथस्य प्रियेच्छया राम इत्यध्याहारः ॥ ७ ॥

गो० टी०-तमिति । वैश्रवणसंकाशं तद्वदनवधिकैश्वर्यसंपन्नं, यद्वा यथा वैश्रवणो दाता "कामेश्वरो वैश्रवणो ददातु" इति श्रुतेः । तथा परिसरवर्तिनां स्वसौन्दर्यानुभवसर्वस्वं ददातीत्यर्थः । उपविष्टं सह पत्न्या विशालाक्ष्या नारायणमुपागमदित्युक्तरीत्या भगवद्ध्यानपरतयावस्थितं स्वलंकृतं ध्यानानुकूलाअलियुक्तं दिव्यमाल्यालंकृतं वा तं सूतो ददर्श उत्कर्षकाष्ठाभूमिभूतं रामं निकर्षसीमाभूमिभूतो ददर्श कोऽयं भाग्यातिशयः इति भावः । पर्यङ्के तादृशैश्वर्यसामग्र्यनुरूपापूर्वसंस्थानप्रतिमाविशेषविशिष्टपर्यङ्केऽत एव ह्युत्तरत्र 'पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् । तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि' इति वक्ष्यते तत्स्थापयिष्यति । सौवर्णे उपर्युपविष्टसदृशे काञ्चनगिरिः कालमेघमिव रामं भासयतीत्यर्थः । सोत्तरच्छदे पुष्पहाससुकुमाररामदेहानुगुणमृदुतरास्तरणयुक्ते पर्यङ्के विचित्ररीत्या शुकानुभाव्यदिव्यवेषमहो सूतोऽन्वभूदिति सौशील्यातिशयोक्तिः ॥ ८ ॥

रा० टी०-तमिति । सोत्तरच्छदे आस्तरणसहिते सौवर्णे सुवर्णमये पर्यङ्के उपविष्टं तं वराहरुधिराभेण वराहरुधिरसदृशेन अत्यरुणेनेत्यर्थः । अत्यरुणं वराहरुधिरमिति लोके प्रसिद्धं किंच वरमतिश्रेष्ठं न जहाति प्रयत्नमन्तरानुलेपनकर्तॄन् त्यजतीत्यहं रुचिरा अरुणा आभा यस्य तत्रयाणां कर्मधारयः तेन शुचिना अतिपवित्रेण परार्ध्येन बहुमूल्यकेन चन्दनेन अनुलिप्तं परं सर्वतृप्तिकारकं तपमत्यैश्वर्यविशिष्टं वालव्यजनहस्तया पार्श्वतः पार्श्वे स्थितया सीतया उपेतं युक्तं रामं चित्रया तदभिधतारया उपेतं युक्तं शशिनं चन्द्रमसमिव भूयोऽत्यन्तं ददर्श । श्लोकत्रयमेकान्वयि ॥ ८-१० ॥

९ ] ति० टी०-वराहरुधिरवदतिरक्तेन परार्ध्येन श्रेष्ठेन ॥ ९ ॥

१० ] ति० टी०-भूयो वारंवारं ददर्शेत्यन्वयः । तथाभूतस्य दर्शने तृप्त्यभावात् चित्रया सहितं शशिनं यथा लोको भूयो भूयः पश्यति तथेत्यर्थः ॥ १० ॥

गो० टी०-स्रक्चन्दनवनिता इत्युक्तभोग्यवस्तुष्वादौ दिव्यमाल्ययोगमुक्त्वा दिव्यचन्दनयोगं दर्शयति-वराहरुधिराभेणेति । वराहरुधिरमतिरक्तवर्णमिति प्रसिद्धं तत्सदृशेन कुङ्कुममिश्रतयेति भावः । सीताकरकमलानुलिप्ततया तत्कान्तिमिश्रत्वमुच्यते । शुचिना सीताकरस्पर्शपूतेन तत्करस्पर्शकृतशैत्यविशेषं समुच्चिनोति चशब्दः । सुगन्धिना सर्वगन्ध इत्यस्य श्रियोऽप्यविशेषात्तत्करस्पर्शजनितनिरवधिकगन्धेन परार्ध्येन कान्तानुलिप्ततया श्रेष्ठेन चन्दनेन अनुलिप्तं पश्चात् क्तिसम् अनेन सीताङ्गरागकरणानन्तरत्वं गम्यते । परंतपं एतादृशसौन्दर्यानुभवविरोधिनिवर्तकम् । अथाप्राकृतवनितायोगं दर्शयति-स्थितयेति । चापीति निपातः पूर्वोक्तसमुच्चये । पार्श्वतः स्थितया चन्दनानुलिप्तगात्रं कान्तं कृत्वा वालव्यजनं हस्ते कृत्वा पार्श्वे स्थितया सीतया भूयः उपेतं विनयेन पार्श्वतश्चामरमुपवीज्य पुनस्तात्कालिकसुषमाविशेषबलात्कारेण गाढमाश्लिष्टं भूय इत्यत्र विराजमानमिति शेष इत्यप्याहुः । तदानींतनातिशयं दृष्टान्तमुखेन स्पष्टीकरोति-चित्रयेति । चैत्रपौर्णमास्यां चित्राख्यतारकयोपेतमुदितं शशिनमिव स्थितम् चित्रयेत्यनेन तत्कृतातिशय उक्तः उपेतमित्यनेन रक्तवर्णत्वं शशिनमित्यनेन सीतालिङ्गनोत्थचन्दनवक्षस्कत्वमुक्तम् एवंभूतं ददर्शेति दृष्टिसाफल्यमुक्तम् ॥ ९ ॥ १० ॥

११] ति० टी०-बन्दी सुमन्त्रः विनीतवद्विनीतः सन् ॥ ११ ॥

रा० टी०-तमिति । स्वतेजसा स्वनित्यप्रकाशेन उपपन्नं युक्तमत एव आदित्यमपि तपन्तं प्रकाशयन्तं तं रामं विनीतवत् विनीतं विनयवचनं वनति रचयति उच्चारयतीत्यर्थः स बन्दी सुमन्त्रः ववन्दे ॥ ११ ॥

गो० टी०-शिरसो वाचश्च साफल्यमाह-तमिति । ववन्द इति शिरसः साफल्यमुक्तं बन्दीति वाक्साफल्यं वरदं स्वानुभवरूपवरप्रदं विनीतवत् विनीतो यथा साष्टाङ्गं वन्दते तथेत्यर्थः । साधारणतेजसा मत्वन्यकृतेन अन्यसाधारणेन चेत्यर्थः । तपन्तमादित्यमिव तेजसोपपन्नमिति संबन्धः । इन्दीवरश्याममिति स्वभावतः श्यामवर्णस्यादित्यवर्णत्वोक्त्या

१ राघवप्रियेति गो. पाठः ।

प्राञ्जलिः सुमुखं दृष्ट्वा विहारशयनासने । राजपुत्रमुवाचेदं सुमन्त्रो राजसत्कृतः ॥ १२ ॥
कौसल्या सुप्रजा राम पिता त्वां द्रष्टुमिच्छति । महिष्यापि[1] हि कैकेय्या गम्यतां तत्र मा चिरम् ॥ १३ ॥
एवमुक्तस्तु संहृष्टो नरसिंहो महाद्युतिः । ततः संमानयामास सीतामिदमुवाच ह ॥ १४ ॥
देवि देवश्च देवी च समागम्य मदन्तरे । मन्त्रयेते ध्रुवं किंचिदभिषेचनसंहितम् ॥ १५ ॥
लक्षयित्वा ह्यभिप्रायं प्रियकामा सुदक्षिणा । संचोदयति राजानं मदर्थं[2] मसितेक्षणा[3] ॥ १६ ॥
सा प्रहृष्टा महाराजं हितकामानुवर्तिनी । जननी चार्थकामा मे केकयाधिपतेः सुता ॥ १७ ॥
दिष्ट्या खलु महाराजो महिष्या प्रियया सह । सुमन्त्रं प्राहिणोद्दूतमर्थकामकरं मम ॥ १८ ॥

प्रदीपे वर्त्यन्तस्थितनीलव्यक्तिवत् परितः प्रसृतशुक्लभास्वरतेजःपुञ्जवच्च विग्रहकान्त्योर्व्यवस्थितिर्द्योत्यते तं वैश्रवणेत्यारभ्य स्वतेजसेत्यन्तेन ध्येयशुभाश्रयाकारविशेषो व्यज्यते ॥ ११ ॥

१२ ] ति० टी०—सुमुखं प्रसन्नवदनम् विहारशयनस्थानरूप आसने विद्यमानं राजपुत्रमित्यन्वयः । यद्वा विहारशयनासने समाहारद्वन्द्वः । तेषु राज्ञा सत्कृतः सुमन्त्र इत्यन्वयः ॥ १२ ॥

रा० टी०—प्राञ्जलिरिति । विहारशयनाय आसनं तस्मिन् स्थितमिति शेषः राजपुत्रं सुमुखं प्रसन्नवदनं दृष्ट्वा इदमुवाच ॥ १२ ॥

गो० टी०—प्राञ्जलिरिति । विहारशयनासन इति द्वन्द्वैकवद्भावः विहारः गतिः ॥ १२ ॥

१३ ] ति० टी०—सुप्रजाः सुपुत्रेण त्वयेति शेषः ॥ १३ ॥

रा० टी०—तद्वचनमेवाह-कौशल्येति । हे राम ! येन भवता कौशल्या सुप्रजा शोभनपुत्रा तं त्वां कैकेय्या महिष्या सह पिता द्रष्टुमिच्छति अतस्तत्र गम्यतां येन भवतेति शेषः ॥ १३ ॥

गो० टी०—कौसल्येति । सुप्रजाः त्वयेति शेषः, यद्वा कौसल्यायाः सुप्रजः सुपुत्र असिच्प्रत्ययान्तः ॥ १३ ॥

१४ ] ति० टी०—संमानयामास सुमन्त्रवचोऽङ्गीचकारेत्यर्थः ॥ १४ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण उक्तः नरसिंहः पुरुषश्रेष्ठो रामः ततः तं द्वितीयान्तात्तसिः सूतं संमानयामास त्वदुक्तं मया स्वीकृतमिति कथयामासेत्यर्थः च सीतां इदमुवाच । ह्वार्थे ॥ १४ ॥

गो० टी०—एवमिति । संमानयामास सूतमिति शेषः ॥ १४ ॥

१५ ] ति० टी०—देवश्च देवी च मातापितरौ मदन्तरे मदर्थे समागम्य मिलित्वाभिषेचनस्य सम्बन्धितं किंचिद्ध्रुवं निश्चयेन मन्त्रयेते विचारयतः । अत्राभिषेचनसहितं तत्संबद्धम् अभिषेकद्वारकमिति यावत् । किंचिद्वनगमनरूपं तद्विरुद्धं संप्रत्येवास्माभिश्चिन्त्यमानं मन्त्रयेते इत्यप्यर्थो गर्भितो ज्ञेयः ॥ १५ ॥

रा० टी०—तद्वचनमेवाह-देवीति । देवो राजा देवी केकयी समागम्य एकत्र स्थित्वा मदन्तरे मदर्थमभिषेचनसंहितम् अभिषेचनं संहितं विषयतया प्राप्तं यस्मिन् तत्किंचिद्ध्रुवं मन्त्रयेते संमतिं कुरुतः संहितमित्यत्र गत्यर्थकहिधातोर्निष्ठा ॥ १५ ॥

गो० टी०—देवीति । मदन्तरे मदर्थम् 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । अभिषेचनसंहितमभिषेचनसंबन्धि मदर्थं किंचिन्मन्त्रयेते विचारयतः ॥ १५ ॥

१६-१७ ] ति० टी०—तत्र तर्कयति—लक्षयित्वेति । राज्ञोऽभिप्रायं मदभिषेकविषयं लक्षयित्वा सुदक्षिणां समर्था अत एव राज्ञः प्रियकामा अत एव प्रहृष्टा हितवचनेन कामेन च राजानमनुवर्तितुं शीलं यस्यास्तादृशी मे जननी मदर्थकामा महाराजं राजानमिति हर्षवशात्पुनरुक्तिरदोषाय । मदर्थं मदभिषेकार्थं राजानं संचोदयति त्वरयति, भरतासंनिधौ रामाभिषेकस्त्वत्संमतो न वेति राज्ञा पृष्टे सर्वथा मत्संमतस्त्वरया क्रियतां भरतः पश्चाच्छ्रोष्यतीति मन्ये इत्याशयः ॥ १६॥१७॥

१८ ] ति० टी०—कुत एवं ज्ञायते तत्राह—दिष्ट्येति । मम कामविषयमर्थं करोति तादृशं सुमन्त्रं यतो दूतं प्राहिणोदत एवं ज्ञायत इति भावः ॥ १८ ॥

रा० टी०—लक्षयित्वेति । हे मदिरेक्षणे ! अभिप्रायं मदीप्सितं लक्षयित्वा ज्ञात्वा प्रियकामा मत्प्रीतिविषयकेच्छावती सुदक्षिणा अतिनिपुणा केकयी राजानं संचोदयति प्रेरयति ॥ १६ ॥

गो० टी०—महिष्या सहेत्युक्त्योन्नेयमर्थं दर्शयति—लक्षयित्वेति । सुदक्षिणा सुकुशला अत एव राज्ञोऽभिप्रायं लक्षयित्वा सुहृत्वाद्भरतागमनपर्यन्तं न विलम्बः कार्य इति राजाशयं ज्ञात्वा मत्प्रियकामा सती राजानं प्रति मदर्थं मदभिषेकं संचोदयति । एतदानुकूल्यं त्वत्सौभाग्यफलमित्याह—मदिरेक्षण इति ॥ १६ ॥

रा० टी०—सेति । प्रहृष्टा सा केकयी किंच सा प्रहृष्टा आप्रहृष्टाभिः अतिहर्षविशिष्टाभिः सखीभिः सहिता महाराजमनुवर्तिनी हितकामा मत्प्रियाविषयकेच्छावती अत एव मे अर्थकामा मत्प्रयोजनविषयकवाञ्छाविशिष्टा केकयाधिपतेः सुता जननी या केकयी तया प्रियया महिष्या सह महाराजः मम अर्थकामपरं सुमन्त्रं दूतं प्राहिणोत्प्रैषयत् दिष्ट्या भाग्यमेतत् । श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—संदिग्धोक्तिजनितां सीताशङ्कां वारयति—सेति । प्रहृष्टा मयीति शेषः । हितकामा लोकस्येति शेषः महाराजं भर्तारमनुवर्तिनी मे अर्थकामा भवतीति शेषः ॥ १७ ॥ १८ ॥

१ तु सुखं पृष्टेति गो. पाठः । २ सहेति मो. रा. पाठः । ३ मदिरेक्षणे इति गो. रा. पाठः ।

यादृशी परिषत्तत्र तादृशो दूत आगतः । ध्रुवमद्यैव मां राजा यौवराज्येऽभिषेक्ष्यति ॥ १९ ॥
हन्त शीघ्रमितो गत्वा द्रक्ष्यामि च महीपतिम् । सह त्वं परिवारेण सुखमास्स्व रमस्व च ॥ २० ॥
पतिसंमानिता सीता भर्तारमसितेक्षणा । आ द्वारमनुवव्राज मङ्गलान्यभिदध्युषी ॥ २१ ॥
राज्यं द्विजातिभिर्जुष्टं राजसूयाभिषेचनम् । कर्तुमर्हति ते राजा वासवस्येव लोककृत् ॥ २२ ॥
दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम् । कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् ॥ २३ ॥
पूर्वां दिशं वज्रधरो दक्षिणां पातु ते यमः । वरुणः पश्चिमामाशां धनेशस्तूत्तरां दिशम् ॥ २४ ॥

---

१९ ] ति० टी०–तदेव विवृणोति—यादृशी मदर्थंपरा। तत्र राजान्तःपुरे परिषत्सभा ॥ १९ ॥

रा० टी०–यादृशीति । तत्र राजसन्निधौ यादृशी परिषत्समज्या तादृशः अयं दूतः आगतः तेन यथेच्छं कार्यसिद्धिर्भविष्यतीति ध्वनितमतः यो राजा यौवराज्ये मामभिषेक्ष्यति मत्कर्मकाभिषेकानुकूलव्यापारं करोति तं महीपतिमितः गत्वा ध्रुवं द्रक्ष्यामि त्वं तु परिवारेण सखीगणेन सह सुखमास्स्व तिष्ठ रमस्व च । अभिषेक्ष्यतीत्यत्र लृडुपात्तभविष्यत्कालस्याविवक्षा। श्लोकद्वयमेकान्वयि ॥ १९–२० ॥

गो० टी०–यादृशीति । तत्र अन्तःपुरे यादृशी परिषत् परिसरवर्ती जनः तादृशस्तत्तुल्यो दूतः ॥ १९ ॥

२० ] ति० टी०–परिवारेण सखीसमूहेन ॥ २० ॥

गो० टी०–हन्तेति । हन्तेति हर्षे परिवारेण परिचारिकार्संघेन रमस्व इत्तकीर्तनेन रता भव ॥ २० ॥

२१ ] ति० टी०–अभिदध्युषी अभिध्यायन्तीत्यर्थे आर्षमिदम् ॥ २१ ॥

रा० टी०–पतीति । असितेक्षणा पतिसंमानिता सीता मङ्गलानि यात्राकालोचितशुभहेतुवचनादीनि अभिदध्युषी उच्चारणादीनि कुर्वती सती भर्तारं राममाद्वारं द्वारं मर्यादीकृत्य अनुवव्राज अभिदध्युषी इत्यार्षम् ॥ २१ ॥

गो० टी०–अथ सीता रामस्य सौन्दर्यालंकृतिविशेषानालोक्य किंवा भविष्यतीति कलुषितहृदया तस्मै मङ्गलमाशासानानुव्रजति–पतिसंमानितेति । पतिसंमानिता पत्या स्वकण्ठादुन्मुच्य दत्तमुक्तामालिकेत्यर्थः । पादपल्लवस्पर्शपूर्वकं सान्त्वितेति भट्टारकाः । तदर्हत्वज्ञापनाय तद्वैलक्षण्यं दर्शयति–सीतेति । सीता लाङ्गलपद्धतिः तज्जत्वात्सीता अयोनिजाभावेन स्वस्माद्विलक्षणायां तस्यां तादृशी प्रीतिरुचितैवेति भावः । असितेक्षणा रामेण मालायां दत्तायामियमपि लोचनाभ्यां कुवलयमालां दत्तवती भर्तारमाद्वारमनुवव्राज आत्मानमनवरतं हृदये बिभ्रतो रामस्य विरहासहतया स्वगमनयोग्यदेशपर्यन्तमनुजगाम मङ्गलान्यभिदध्युषी अभिध्यायन्ती किमस्य सौन्दर्यस्य हानिर्भविष्यतीति कलुषितहृदया मङ्गलाशासनपूर्वकमनुवव्राज ॥ २१ ॥

२२–२३ ] ति० टी०–द्विजातिभिर्जुष्टं राज्यं यौवराज्याभिषेकं कृत्वा कालान्तरेण राजसूयार्हं महाराज्याभिषेचनं कर्तुमर्हति लोककृदिन्द्रस्येव ॥ २२ ॥ २३ ॥

रा० टी०–एतद्यौवराज्याभिषेकेन मदीयाभिरुचिरिति बोधयन्ती आह–राज्यमिति द्वाभ्याम् । यतो राज्यं द्विजातिभिः ब्राह्मणैः जुष्टं सेवितं राज्ये बहवो ब्राह्मणा वसन्तीत्यर्थः। अतस्ते राजसूयाभिषेचनं कर्तुं राजा अर्हति तत्र दृष्टान्तः वासवस्य इन्द्रस्य लोककृद्ब्रह्मेव एतेन राजसूयनिष्पत्तये सर्वे राजानो जेतव्या इति सर्वान्तःपातित्वाद्राक्षसराजादयोऽपि जेतव्या इति सीताभिप्रायो व्यक्तः ॥ २२ ॥

गो० टी०–मङ्गलाभिध्यानमेव दर्शयति–राज्यमिति । द्विजातिभिः ब्राह्मणैः जुष्टं सेवितं राजसूयाभिषेचनं राजसूययागे योऽभिषेकः अथाभिषिच्यत इत्युच्यमानः तदर्हम् अनेन महाराज्यवत्त्वं गम्यते कर्तुं दातुं लोककृत् ब्रह्मा ॥ २२ ॥

रा० टी०–राजसूयाभिषेके स्वाभिलाषातिशयं बोधयन्ती आह–दीक्षितमिति । दीक्षितं राजसूयदीक्षाविशिष्टमत एव व्रतसंपन्नं यागोचितव्रतं कुर्वन्तं वराजिनधरं विहितचर्मधारिणं शुचिं पावनहेतुं कुरङ्गशृङ्गपाणिं कुरङ्गस्य कृष्णमृगस्य शृङ्गं पाणौ कण्डूयनार्थं हस्ते यस्य तं त्वां पश्यन्ती ध्यायन्ती अहं भजामि एतेन ईदृगवस्थासिद्धये भवद्भिर्यतितव्यमिति प्रार्थना सूचिता ॥ २३ ॥

गो० टी०–दीक्षितमिति । दीक्षितं सकृष्णाजिनं नवनीताभ्यक्तं यजमानवेषं द्रष्टुमिच्छामीत्याह–व्रतसंपन्नम् ऋषिणोपवस्तव्यमित्युक्ते मम सौकुमार्यानुगुणमेवमुक्तमिति मत्वा चतुर्गुणमुपवासं करोति श्रद्धया तदाह–संपन्नमिति । वराजिनधरं वस्त्रधारणादप्यजिनधारणस्योत्कर्ष उच्यते शुचिं कामपि स्त्रियं मा स्पृश धर्मपत्नीत्वेन सीतास्पर्शे न दोष इति श्रुतिनोक्तेऽपि शङ्कया सीतावस्त्रदशास्पर्शेऽपि स्नानं करोति कुरङ्गशृङ्गपाणिं च एकवस्त्रधरो धन्वीत्येतदपेक्षया कण्डूयनार्थं कृष्णविषाणकृतशोभातिशय उच्यते पश्यन्ती त्वां भजाम्यहं भाविफलापेक्षायां कृतायामन्तरालिकफलमर्थसिद्धमेव अतोऽभिषेकान्तरायविरहो न प्रार्थितः यथा सावित्री भर्तारं दर्शयित्वानेनाहमनेकपुत्रा स्यामित्यर्थितवती तेन सिद्धं भर्तुः पूर्णायुःप्रार्थनं तद्वत्पश्यन्तीति हेतौ शतृप्रत्ययः दर्शनार्थमित्यर्थः । दर्शनार्थं हि भगवन्तं भजन्ते अत इयमपि तथैवाह ॥ २३ ॥

२४ ] ति० टी०–लक्षयित्वा इत्यादिभिरष्टभिः श्लोकैरर्थान्तरमपि गर्भितम् । तथाहि—अभिप्रायं मम रावणवधरूपमभिप्रायमन्तर्यामिप्रेरणया लक्षयित्वा । अनेन मत्प्रेरणयैव

अथ सीतामनुज्ञाप्य कृतकौतुकमङ्गलः । निश्चक्राम सुमन्त्रेण सह रामो निवेशनात् ॥ २५ ॥
पर्वतादिव निष्क्रम्य सिंहो गिरिगुहाशयः । लक्ष्मणं द्वारि सोऽपश्यत्प्रह्वाञ्जलिपुटं स्थितम् ॥ २६ ॥
अथ मध्यमकक्ष्यायां समागच्छत्सुहृज्जनैः । स सर्वानर्थिनो दृष्ट्वा समेत्य प्रतिनन्द्य च ॥ २७ ॥
ततः पावकसंकाशमारुरोह रथोत्तमम् । वैयाघ्रं पुरुषव्याघ्रो राजितं राजनन्दनः ॥ २८ ॥
मेघनादमसंबाधं मणिहेमविभूषितम् । मुष्णन्तमिव चक्षूंषि प्रभया ४मेरुवर्चसम् ॥ २९ ॥
करेणुशिशुकल्पैश्च युक्तं परमवाजिभिः । हरियुक्तं सहस्राक्षो रथमिन्द्र इवाशुगम् ॥ ३० ॥

---

तस्या एवं प्रवृत्तिरिति सूचितम् । मम देवानां जगतश्च प्रियकामा राज्ञश्चान्तकाले निरन्तरं मद्ध्यानसंपादनेन प्रियकामा अत एव सुदक्षिणा समर्था, राज्ञ आपाततो विपरीतत्वेऽपि जगतः प्रियत्वेन राज्ञोऽपि पर्यन्तसुखदत्वेन तद्वाक्यकथने समर्था अत एव प्रहृष्टा मम हितकामा तदर्थमवतारग्रहणाद्धितं काम्यं च तदनुवर्तनशीला अत एव मेऽर्थकामा मदवतारप्रयोजनसिद्धिकामा महाराजं राजानं मदर्थं मदवतारप्रयोजनरावणवधफलकवनगमनार्थं त्वरयतीत्यर्थः ॥ १६ ॥ १७ ॥ अर्थकामकरं मत्कामविषयार्थकरं यथा भवति तथा प्राहिणोत् ॥ १८ ॥ तादृशो हृष्टोद्विग्नचित्तः । एतदीयेनैव हृष्टोद्विग्नचित्तत्वेन तत्परिषदस्तत्त्वानुमानम् । यौवराज्ये देवर्षिपरिपालनफलके ॥ १९ ॥ २० ॥ मङ्गलान्यभिदध्युषी प्रस्थानमङ्गलान्यभिध्यायन्ती ॥ २१ ॥ तदेवाह—राज्यमिति । द्विजातिभिराश्रमस्थैर्ऋषिभिर्जुष्टं राज्यं वने राज्यम् तथा राजसूयाभिषेचनं सर्वतो बलवान्सर्वपीडको राजा सूयते कण्ड्यते तत्र तादृशकर्मण्यभिषेकं कर्तुमर्हति । तदेव मनसाभिलषति—दीक्षितमित्यादि । तत्र राजसूये दीक्षितत्वादिधर्मकं त्वां पश्यन्ती अहं त्वां भजिष्ये इत्यर्थः । अनेनाहमपि त्वया सह वनं यास्यामीति सूचितम् । अत्र राजसूयाभिषेचनं कर्तुमर्हतीत्यनेन संकल्पेन दीक्षितमित्यादिसंकल्पेन मदुक्तार्थगर्भितत्वमेषां श्लोकानां सूचितम् । अन्यथा सत्यसंकल्पाया भगवत्या भये कदापि रामेण राजसूयानुष्ठानादीदृशसंकल्पविषयार्थासिद्ध्या तत्त्वं भज्येत । वक्तृश्रोत्रोः सीतारामयोर्वैशिष्ट्यादेवैतादृशार्थावगतिर्बोध्या ॥ २४ ॥

रा० टी०—रामे स्वप्रीत्यतिशयं बोधयन्ती आह—पूर्वामिति । वज्रधरः इन्द्रः आशां दिशम् ॥ २४ ॥

गो० टी०—पूर्वामिति । उत्तरां दिशमित्यनन्तरं इति मङ्गलान्यभिदध्युषीति योज्यं भर्तृविषयत्वेन न वाचोक्तवतीति भावः ॥ २४ ॥

२५ ] ति० टी०—कृतकौतुकमङ्गलोऽद्धृताभिषेकोत्सवार्थमङ्गलः ॥ २५ ॥

रा० टी०—अथेति । कृतकौतुकमङ्गलः रामः सुमन्त्रेण सह निवेशनात्कृहान्निश्चक्राम ॥ २६ ॥

गो० टी०—अथेति । कृतकौतुकमङ्गलः अङ्कुरिताभिषेकार्थमङ्गलः ॥ २५ ॥

२६ ] ति० टी०—प्रह्वाञ्जलिपुटं प्रह्वत्वसूचकाञ्जलिपुटवन्तम् ॥ २६ ॥

रा० टी०—पर्वतादिति । पर्वताद्गिरिगुहाशयः सिंह इव स रामः निष्क्रम्य गृहादिति शेषः । द्वारि स्थितं प्रह्वाञ्जलिपुटं प्रणतिसूचकबद्धयुगलकरं लक्ष्मणमपश्यत् ॥ २६ ॥

गो० टी०—पर्वतादिति । द्वारि प्रथमद्वारि प्रह्वाञ्जलिपुटं अञ्जलिपुटोऽस्यास्तीत्यञ्जलिपुटः मत्वर्थीयोऽच्प्रत्ययः प्रह्वश्चासावञ्जलिपुटश्चेति कर्मधारयः तम् ॥ २६ ॥

२७] ति०टी०—अर्थिनः स्वदर्शनस्वाभिषेकार्थार्थिनः ॥२७॥

२८ ] ति० टी०—वैयाघ्रं व्याघ्रचर्मपरिष्कृतमत एव राजितं शोभावन्तम् ॥ २८ ॥

रा० टी०—अथेति । स रामः अथ लक्ष्मणदर्शनानन्तरं मध्यमकक्ष्यायां समागच्छत् अर्थिनो जनान्दृष्ट्वा समेत्य तत्समीपं प्राप्य प्रतिनन्द्य आश्वास्य च वैयाघ्रं व्याघ्रदन्तनिर्मितत्वेन प्रतीयमानं रथोत्तममारुरोह । श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—अथेत्यादिश्लोकद्वयम् । अर्थिनः रामदर्शनार्थिनः अभिषेकार्थिनो वा वैयाघ्रं व्याघ्रचर्मपरिष्कृतम् “ द्वैपवैयाघ्रादञ् ” इत्यञ् राजतं रजतविकारम् ‘ राजन्तम् ’ इति च पाठः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—मेघनादसदृशनादम् असंबाधं विपुलम् प्रभया रविकिरणसंयुक्तत्वप्रभया । मेरुवर्चसमित्यनेन रथस्य सौवर्णत्वं ध्वन्यते ॥ २९ ॥

रा० टी०—रथं वर्णयन्नाह—मेघेति । मेघनादं मेघस्वनसदृशस्वनविशिष्टमसंबाधं जनसंकुलादिहेतुकबाधारहितं मणिस्तोमविभूषितं मणिसमूहैः शोभितं प्रभया प्राकृतविलक्षणकान्त्या चक्षूंषि मुष्णन्तं हरन्तमिव करेणुशिशुकल्पैः करिशावकसदृशैः परमवाजिभिरश्वैर्युक्तं रथं तूर्णमास्थाय प्रययौ गन्तुं मनश्चक्रे तत्र दृष्टान्तः हरियुक्तं रथं सहस्राक्ष इव । सार्धश्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०—मेघनादमित्यात्यादि । मेघस्येव नादो यस्य स मेघनादस्तम् असंबाधं संबाधरहितमुचितविस्तारमित्यर्थः ॥ २९ ॥

३० ] ति० टी०—करेणुशिशवः कलभा अनेन हृष्टपुष्टो-

प्रययौ तूर्णमास्थाय राघवो ज्वलितः श्रिया । स पर्जन्य इवाकाशे स्वनवानभिनादयन् ॥ ३१ ॥
निकेतान्निर्ययौ श्रीमान्महाभ्रादिव चन्द्रमाः । चित्रचामरपाणिस्तु लक्ष्मणो राघवानुजः ॥ ३२ ॥
जुगोप भ्रातरं भ्राता रथमास्थाय पृष्ठतः । ततो हलहलाशब्दस्तुमुलः समजायत ॥ ३३ ॥
तस्य निष्क्रममाणस्य जनौघस्य समन्ततः । ततो हयवरा मुख्या नागाश्च गिरिसंनिभाः ॥ ३४ ॥
अनुजग्मुस्तथा रामं शतशोऽथ सहस्रशः । अग्रतश्चास्य संनद्धाश्चन्दनागुरुभूषिताः ॥ ३५ ॥
खड्गचापधराः शूरा जग्मुराशंसवो जनाः । ततो वादित्रशब्दाश्च स्तुतिशब्दाश्च बन्दिनाम् ॥ ३६ ॥
सिंहनादाश्च शूराणां ततः शुश्रुविरे पथि । हर्म्यवातायनस्थाभिर्भूषिताभिः समन्ततः ॥ ३७ ॥
कीर्यमाणः सुपुष्पौघैर्ययौ स्त्रीभिररिंदमः । रामं सर्वानवद्याङ्ग्यो रामपिप्रीषया ततः ॥ ३८ ॥

---

मतमहाबलवत्त्वं सूचितम् । इन्द्रः परमैश्वर्यवान्सहस्राक्ष इव नानाविधदेहवत्यांभरणस्थरत्नसमृद्धे रामस्य सहस्राक्षत्वं बोध्यम् ॥ ३० ॥

गो० टी०–करेणुशिशुकल्पैरिति । करेणुशिशुकल्पैः कलभसदृशैः ॥ ३० ॥

३१ ] ति० टी०–ज्वलितो दीपितः, उज्ज्वलित इति वा तदा संधिरार्षः । आकाशे स्वनवान्नादवान्पर्जन्यो मेघ इव रथस्वनेन दिशो नादयन्प्रययावित्यन्वयः ॥ ३१ ॥

रा० टी०–स इति । स्वनवानतिशब्दविशिष्टः श्रीमान्सकलसंपत्तिविशिष्टः स रथः आकाशे पर्जन्यो मेघ इव अभिनादयन्दिश इति शेषः । महेन्द्रात्पर्वतविशेषाच्चन्द्रमा इव निकेतागृहान्निर्ययौ पर्जन्यशब्दस्य इन्द्रपरत्वे तु सशब्देन रामपरामर्शः तदा अभिनादयन् इत्यत्र रथेनेति शेषः। स्वनवानित्यस्य शोभनो नः पालनं तद्वानित्यर्थः ॥ ३१ ॥

गो० टी०–स इति । आकाशे स्वनवान् नादवान् पर्जन्य इव मेघ इव 'पर्जन्यौ रसदब्देन्द्रौ' इत्यमरः । अभिनादयन् रथेन दिश इति शेषः महेन्द्रशब्द उदयाद्रिपरः ॥ ३१ ॥

३२ ] ति० टी०–'चन्द्रचामर–' इति पाठे चन्द्रवच्छ्वेतचामरेत्यर्थः । 'चित्रचामर–' इति पाठे चित्रदण्डयुतचामरेत्यर्थः ॥ ३२ ॥

रा० टी०–चित्रेति । चित्रचामरपाणिर्लक्ष्मणस्तु भ्रातरं जुगोप ॥ ३२ ॥

गो० टी०–छत्रचामरपाणिरिति । एकहस्तेन छत्रमपरहस्तेन चामरं च धारयन्नित्यर्थः । जुगोप आतपादिभ्य इति भावः ॥ ३२ ॥

३३ ] ति० टी०–हलहलेत्यनुकरणम् ॥ ३३ ॥

रा० टी०–तत इति । ततः रथनिर्गमनानन्तरं समन्ततो निष्क्रममाणस्य जनौघस्य हलहलाशब्दः समजायत । हलहलेति जनौघजन्यशब्दानुकरणम् ॥ ३३ ॥

गो० टी०–तत इति । हलहलाशब्दः कलकलाशब्दः तस्य निष्क्रममाणस्य तस्मिन्निष्क्रममाणे सति जनौघस्य हलहलाशब्द इत्यन्वयः ॥ ३३ ॥

३४–३५ ] ति० टी०–तस्य निष्क्रममाणस्य पुरत इति शेषः । तस्मिन्निष्क्रममाणे इति यावत् जनौघस्य हलहलाशब्द इत्यन्वयः ॥ ३४ ॥ ३५ ॥

रा० टी०–तत इति । ततः रामगमनानन्तरं हयवराः अश्वश्रेष्ठाः गिरिसंनिभाः मुख्या नागा हस्तिनश्च शतशः सहस्रशो राममनुजग्मुः ॥ ३४ ॥

गो० टी०–तत इति । हयनागशब्दौ तदारूढपरौ ॥ ३४ ॥

रा० टी०–अग्रत इति । अस्य रामस्य अग्रतः संनद्धाः धृतकवचाः शूराः आशंसवः वंशादिप्रशंसका जनाश्च जग्मुः ॥ ३५ ॥

गो० टी०–अग्रत इति । रूषिताः लिप्ताः आशंसवः रामश्रेय आशंसमानाः ॥ ३५ ॥

३६ ] ति० टी०–आशंसवः भद्रमिति शेषः ॥ ३६ ॥

रा० टी०–तत इति । वादित्रशब्दाः वाद्यध्वनयः शूराणां सिंहनादाः सिंहस्वनसदृशस्वनाः ततः तस्मिन्पथि शुश्रुविरे जनैरिति शेषः ॥ ३६ ॥

गो० टी०–तत इति । ततः तत्र वीथ्यां तदा निर्गमनकाले ३६

३७ ] ति० टी०–तत इत्यावर्तते ततस्ततस्तत्र तत्र देशे शुश्रुविरे । वातायनं बहिरवलोकनयोग्यानि सूक्ष्मद्वाराणि ॥ ३७ ॥

रा० टी०–हर्म्येति । हर्म्यवातायनस्थाभिः हर्म्याणां प्रासादानां वातायनेषु गवाक्षेषु स्थिताभिः स्त्रीभिः पुष्पौघैः कीर्यमाणः अरिंदमो रामो ययौ ॥ ३७ ॥

गो० टी०–हर्म्यवातायनस्थाभिरिति । हर्म्यवातायनस्थाभिः प्रासादगवाक्षस्थाभिः ॥ ३७ ॥

३८ ] ति० टी०–पिप्रीषा प्रीणनेच्छा ॥ ३८ ॥

रा० टी०–राममिति । रामपिप्रीषया रामतृप्तीच्छया अनवद्याङ्ग्यः निन्दारहिताङ्गविशिष्टाः हर्म्यस्थाः क्षितिस्थाश्च सर्वाः स्त्रियः अग्र्यैः अत्युत्कृष्टैर्वचोभिः रामं च ववन्दिरे तुष्टुवुः ॥ ३८ ॥

गो० टी०–राममिति । रामपिप्रीषया रामप्रीणनेच्छया ववन्दिरे तुष्टुवुः वदिअभिवादनस्तुत्योरिति धातुः ॥ ३८ ॥

---

१ नादयन्निति ग. पाठः । २ महेन्द्रादिति गो. रा. पाठः । ३ छत्रेति गो. पाठः । ४ तदेति गो. पाठः । ५ अगरुरूषिता इति गो. अगर्विति

वचोभिरग्र्यैर्हर्म्यस्थाः क्षितिस्थाश्च ववन्दिरे । नूनं नन्दति ते माता कौसल्या मातृनन्दन ॥ ३९ ॥
पश्यन्ती सिद्धयात्रं त्वां पित्र्यं राज्यमुपस्थितम् । सर्वसीमन्तिनीभ्यश्च सीता सीमन्तिनीवरा ॥ ४० ॥
अमन्यन्त हि ता नार्यो रामस्य हृदयप्रियाम् । तया सुचरितं देव्या पुरा नूनं महत्तपः ॥ ४१ ॥
रोहिणीव शशाङ्केन रामसंयोगमाप या । इति प्रासादशृङ्गेषु प्रमदाभिर्नरोत्तमः ॥
शुश्राव राजमार्गस्थः प्रिया वाच उदाहृताः ॥ ॥ ४२ ॥

स राघवस्तत्र तदा प्रलापाञ्शुश्राव लोकस्य समागतस्य ।
आत्माधिकारा विविधाश्च वाचः प्रहृष्टरूपस्य पुरे जनस्य ॥ ४३ ॥
एष श्रियं गच्छति राघवोऽद्य राजप्रसादाद्विपुलां गमिष्यन् ।
एते वयं सर्वसमृद्धकामा येषामयं नो भविता प्रशास्ता ॥ ४४ ॥
लाभो जनस्यास्य यदेष सर्वं प्रपत्स्यते राष्ट्रमिदं चिराय ।
न ह्यप्रियं किंचन जातु कश्चित्पश्येन्न दुःखं मनुजाधिपेऽस्मिन् ॥ ४५ ॥

३९ ] ति० टी०—ववन्दिरेऽस्तुवन् । स्तुतिप्रकारमाह—नूनमिति ॥ ३९ ॥

रा० टी०—ततस्तवनमेवाह—नूनमिति । सिद्धयात्रं सिद्धा यात्रा यात्राफलं यस्य तं पित्र्यं पितृसंबन्धि राज्यमुपस्थितं प्राप्तं त्वां पश्यन्ती ते माता नूनं नन्दति ॥ ३९ ॥

गो० टी—स्तुतिप्रकारमेवाह—नूनमित्यादि । नन्दतीत्यत्रेतिकरणं द्रष्टव्यं तस्य ववन्दिर इति पूर्वेण संबन्धः । सिद्धयात्रं सफलगमनमत एव पित्र्यं राज्यमवस्थितमधिष्ठितम् ॥ ३९ ॥

४० ] ति० टी०—सिद्धयात्रं सफलगमनम् उपस्थितं प्राप्तवन्तम् । सीता सीमन्तिनीषु वरा श्रेष्ठा इत्यमन्यन्तेत्यन्वयः ॥ ४० ॥

रा० टी०—सर्वेति । हितास्तत्र प्राप्ता नार्यः रामस्य हृदयप्रियां सीमन्तिनीं सीतां सर्वसीमन्तिनीभ्यः वराममन्यन्ताकथयन्तेत्यर्थः ॥ ४० ॥

गो० टी०—उत्तरश्लोकार्थहेतुत्वेनाह—सर्वेति । हि यस्मात्कारणात् एवं तस्मात् तया सुचरितमित्युक्तरीत्या प्रमदाभिरुदीरिता इति योजना ॥ ४०—४२ ॥

४१-४२ ] ति० टी०—हि यत एवममन्यन्त अतस्तयेत्यादि । तदुचरिता वाचः शुश्रावेत्यन्वयः ॥ ४१ ॥ ४२ ॥

रा० टी०—सीतारामयोः संयोगहेतुं विचारयन्त्य आहुः—तयेति । महत्तपः सुचरितमत एव रामसंयोगमागताः प्राप्ताः ॥ ४१ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण प्रासादशृङ्गेषु विद्यमानाभिः उदाहृताः प्रियाः वाचः नरोत्तमो रामः शुश्राव । प्रासादशृङ्गशब्दः क्षितेरप्युपलक्षकः अत एव उपक्रमेण न वैरूप्यम् ॥ ४२ ॥

४३ ] ति० टी०—आत्माधिकारा आत्मानमधिकृत्य प्रवृत्ताः ॥ ४३ ॥

रा० टी०—स इति । तत्र मार्गे समागतस्य लोकस्य प्रलापान् रघुवंशसंबन्धिविविधकथाः शुश्राव आत्माधिकाराः आत्मनः स्वस्य रामस्येत्यर्थः । अधिकारो यासु ताः विविधाः अनेकप्रकारा प्रहृष्टरूपस्य प्रहृष्टस्वरूपविशिष्टस्य पुरोजनस्य अयोध्यावासिनः वाचश्च शुश्राव ॥ ४३ ॥

गो० टी०—स इति । कथाप्रपञ्चान् लौकिककथाविस्तारान् आत्माधिकाराः आत्मानमधिकृत्य प्रवृत्ताः पुरः पुरस्य संबन्धिनो जनस्य ॥ ४३ ॥

४४ ] ति० —टी०—श्रियं गमिष्यन्प्राप्स्यन् गच्छति पितृगृहमिति शेषः । सर्वसमृद्धकामाः समृद्धसर्वकामा इत्यर्थः । प्रशास्ता राजा ॥ ४४ ॥

रा० टी०— तद्वचनमेवाह—एष इति । गमिष्यन्गच्छन्नेष राघवः राजप्रसादाद्विपुलामत्युत्कृष्टां श्रियं गच्छति प्राप्स्यति अतः येषां नोऽस्माकं प्रशास्ता अयं रामो भविता ते एते वयं सर्वसमृद्धकामाः भविष्याम इति शेषः ॥ ४४ ॥

गो० टी०—एष इति । श्रियं गमिष्यन् गच्छति श्रियं प्राप्तुं गच्छति ॥ ४४ ॥

४५ ] ति० टी०—सर्वं राष्ट्रमेष प्रपत्स्यत इति यत्, अयमेव लाभः । अस्मिन्रामे मनुजाधिपे सति कश्चित्कश्चिदपि किंचन स्वल्पमप्यप्रियं प्रियाभावं दुःखमनिष्टप्राप्तिं जातु कदापि न पश्येन्न प्राप्नुयात् ॥ ४५ ॥

रा० टी०—लाभ इति । यद्यस्मादेष रामः सर्वं राष्ट्रं राज्यं प्रपत्स्यते प्राप्स्यति तत्तस्मादस्य एतन्नियम्यस्य जनस्य लाभः परमानन्दस्येति शेषः । तत्र हेतुः अस्मिन् रामे मनुजाधिपे राज्ञि सति किंचन अप्रियं द्वेष्यं दुःखं च जातु कदाचिदपि कश्चिन्न पश्येत् ॥ ४५ ॥

गो० टी०—लाभ इति । अस्य जनस्यायमेव लाभः यदेष

१ नन्दना इति गो. पाठः । २ अवस्थितमिति गो. पाठः । ३ सीतां सीमन्तिनीवरामिति गो. रा. पाठः । ४ आगतेति रा पाठः । ५ कथाप्रपञ्चानिति गो. पाठः । ६ पुरः इति गो. रा. पाठः ।

सघोषवद्भिश्च हयैः सनागैः पुरःसरैः स्वस्तिकसूतमागधैः ।
महीयमानः प्रवरैश्च वादकैरभिष्टुतो वैश्रवणो यथा ययौ ॥ ४६ ॥
करेणुमातङ्गरथाश्वसंकुलं महाजनौघैः परिपूर्णचत्वरम् ।
प्रभूतरत्नं बहुपण्यसंचयं ददर्श रामो विमलं महापथम् ॥ ४७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षोडशः सर्गः ॥ १६ ॥

## सप्तदशः सर्गः ।

रथेन व्रजन्रामोऽयोध्यारामणीयकं पश्यन्सुहृदामाशिषः स्तुतीः शृण्वन्सकलजननयनान्याकर्षंश्च दशरथभवनमेत्य परिजनं निवर्त्य स्वयं दशरथान्तिकं प्राप ।

स रामो रथमास्थाय संप्रहृष्टसुहृज्जनः । पताकाध्वजसंपन्नं महार्हागुरुधूपितम् ॥ १ ॥
अपश्यन्नगरं श्रीमान्नानाजनसमन्वितम् । स गृहैरभ्रसंकाशैः पाण्डुरैरुपशोभितम् ॥ २ ॥
राजमार्गं ययौ रामो मध्येनागुरुधूपितम् । चन्दनानां च मुख्यानामगुरूणां च संचयैः ॥ ३ ॥
उत्तमानां च गन्धानां क्षौमकौशाम्बरस्य च । आविद्धाभिश्च मुक्ताभिरुत्तमैः स्फाटिकैरपि ॥ ४ ॥
शोभमानमसंबाधं तं राजपथमुत्तमम् । संवृतं विविधैः पुष्पैर्भक्ष्यैरुच्चावचैरपि ॥ ५ ॥

सर्वं राष्ट्रं प्रपत्स्यते अस्मिन् मनुजाधिपे सति कश्चित् जातु कदाचित् किंचनाप्यप्रियं प्रियाभावं दुःखमनिष्टं च न पश्येत् ॥४५॥

४६-४७ ] ति० टी०—स्वस्तिका जयजयेति वादिनः बन्दिनः, सूता इतरस्तुतिपाठकाः, मागधा वंशपाठकाः, एतैर्वादिकैस्तत्तच्छब्दप्रयोक्तृभिः ॥ ४६ ॥ ४७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०—स इति । पुरःसरैः अग्रगमनकर्तृभिः स्वस्तिकसूतमागधैः स्वस्तिकाः मङ्गलप्रयोगकर्तारः सूताः पौराणिकाः मागधाः वंशप्रशंसकास्तैर्महीयमानः पूज्यमानः प्रवरैः स्तुतिनिपुणैः वादिकैः स्तुतिकर्तृभिरभिष्टुतः रामः घोषवद्भिः नादविशिष्टैः सनागैर्गजसहितैः हयैरश्वैः वैश्रवण इव ययौ ॥४६॥

गो० टी०—सघोषवद्भिरिति । स्वस्तिकसूतमागधैः स्वस्तिका जयजयेतिमङ्गलं प्रयुञ्जानाः बन्दिन इत्यर्थः । सूता ब्राह्मण्यां क्षत्रियाज्जाताः सारथ्ये स्तुतिकर्मणि च नियुक्ताः । 'ब्राह्मण्यां क्षत्रियात्सूतः' इत्यमरः । मागधाः क्षत्रियायां वैश्याज्जाताः राज्ञां प्रबोधनकर्मणि नियुक्ताः 'मागधः क्षत्रियाविशोः' इत्यमरः ॥ ४६ ॥

रा० टी०—करेण्विति । करेण्वादिभिः संकुलं व्याप्तं महाजनौघैः परिपूर्णाः चत्वराः चतुष्पथा यस्य प्रभूतानि रत्नानि यस्मिन् तं बहुपण्यसंचयमनेकविधानां पण्यानामापणद्रव्याणां संचयो यस्मिन् तं विमलं तृणादिरहितं महापथं राजमार्गं ददर्श ॥ ४७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षोडशः सर्गः ॥ १६ ॥

गो० टी०—करेण्विति । रामो महापथं ददर्शेत्यन्वयः ॥४७॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षोडशः सर्गः ॥ १६ ॥

१-२ ] ति० टी०—स राम इति ॥ १ ॥ २ ॥

रा० टी०—स इति । संप्रहृष्टाः सुहृज्जना यस्य स रामो रथमास्थाय पताकाध्वजसंपन्नं पताकादिभिः पूरितं महार्हागरुधूपितं महार्हा बहुमूल्या अगरुधूपा जाता अस्य तत् नानाजनसमन्वितमनेकविधमनुष्यादिभिर्युक्तं नगरमपश्यत् । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०—अथ रामस्य राजसमीपगमनं सप्तदशे—स राम इत्यादि । पताकाध्वजसंपन्नं पताकाः अनामाङ्किताः तदङ्कितानि ध्वजानि ॥ १ ॥

रा० टी०—स इति । अभ्रसंकाशैः पाण्डुरैर्गृहैः उपशोभितम् । अगरुधूपितं राजमार्गं स रामो मध्येन मध्यभागेन ययौ ॥ २ ॥

गो० टी०—स गृहैरिति । मध्येन वीथीमध्येन प्रकृत्यादित्वात्तृतीया ॥ २ ॥

३ ] ति० टी०—मध्येनोभयश्रेणीमध्येन ॥ ३ ॥

४ ] ति० टी०—उत्तमानां गन्धद्रव्याणां संचयैः क्षौमकौशाम्बरस्य च संचयैरित्यन्वयः । क्षौममतसीजम् कौशं पट्टवस्त्रम् आविद्धाभिः कृतच्छिद्राभिः । 'अविद्धाभिः' इति पाठेऽकृतच्छिद्राभिः ॥ ४ ॥

५ ] ति० टी—असंबाधं विस्तीर्णम् संवृतं व्याप्तम् अत्रत्यराजपथमित्यस्य ददर्शेत्यनेनान्वयः ॥ ६ ॥

१ मतङ्गजैरिति गो. पाठः । २ वादकैरिति गो.रा.पाठः । ३ जनौघप्रतिपूर्णेति गो.पाठः । ४ रुचिरामिति गो.पाठः । ५ अगार्रैरिति गो. रा. पाठः । ६ समाकुलमिति गो. पाठः । ७ अविद्धाभिरिति गो. पाठः । ८ बाधैरिति गो. पाठः । ९ पण्यैरिति गो. पाठः ।

दद्दर्श तं राजपथं दिवि देवपतिर्यथा । दध्यक्षतहविर्लाजैर्धूपैरगुरुचन्दनैः ॥ ६ ॥
नानामाल्योपगन्धैश्च सदाभ्यर्चितचत्वरम् । आशीर्वादान्बहूञ्शृण्वन्बैहुभिः समुदीरितान् ॥ ७ ॥
यथार्हं चापि संपूज्य सर्वानेव नरान्ययौ । पितामहैराचरितं तथैव प्रपितामहैः ॥ ८ ॥
अद्योपादाय तं मार्गमभिषिक्तोऽनुपालय । यथा स्म पोषितौः पित्रा यथा सैर्वैः पितामहैः ॥
ततः सुखतरं सैर्वे रामे वेत्स्याम राजनि ॥ ॥ ९ ॥
अलमद्य हि भुक्तेन परमार्थैरलं च नः । यैदि पश्याम निर्यान्तं रामं राज्ये प्रतिष्ठितम् ॥ १० ॥
ततो हि नः प्रियतरं नान्यत्किंचिद्भविष्यति । यथाभिषेको रामस्य राज्येनामिततेजसः ॥ ११ ॥

रा० टी०—चन्दनानामिति । मुख्यानां जात्यादिभिरुत्तमानां चन्दनानामगरूणां च संचयैः उत्तमानां दोषरहितानां गन्धानां गन्धद्रव्याणां क्षौमकौशाम्बरस्य क्षौममतसीनिर्मितं कौशं पट्टनिर्मितं तदेवाम्बरं वस्त्रं तस्य संचयैः शोभमानम् आविद्धाभिः कृतछिद्राभिः मुक्ताभिः क्वचित् ‘ अविद्धाभिः ’ इति पाठः तत्र अप्राप्तच्छिद्राभिरित्यर्थः । स्फाटिकैः स्फटिकाद्यैश्च शोभमानमसंबाधं चोरादिबाधारहितं पुष्पादिभिः संवृतं दध्यादिभिः अर्चिताश्चत्वराः चतुष्पथा यस्मिंस्तमुत्तमं राजपथमाशीर्वादान् शृण्वन् रामः ददर्श । तत्र दृष्टान्तः दिवि स्वर्गे विद्यमानं तं तादृशविशेषणविशिष्टं राजपथं देवपतिरिन्द्रो यथा । अर्धनवकमेकान्वयि ॥ ३–६ ॥

गो० टी०—कीदृशं राजमार्गं ययावित्याकाङ्क्षायामाह—चन्दनानामित्यादिना । क्षौमकौशाम्बरस्य क्षौमं दुकूलम् ‘ क्षौमं दुकूलम् ’ इत्यमरः । कौशाम्बरं कौशेयं अविद्धाभिः अकृतरन्ध्राभिः रत्नाभिरिति यावत् । स्फाटिकैः स्फटिकैः स्वार्थे अण् प्रत्ययः । तं राजपथं सकलभाग्ययुक्तं राजमार्गमित्यर्थः । यद्वा प्रथमस्य राजपथपदस्य ददर्शेत्यनेन संबन्धः द्वितीयस्य वक्ष्यमाणेन ययावित्यनेन संबन्धः ॥ ३–६ ॥

६–७ ] ति० टी०—एवं दृष्टवांस्तं राजपथं ययाविति संबन्धः ॥ ६ ॥ ७ ॥

रा० टी०—यथेति । यथार्हं यथायोग्यं सर्वान्नरान्संपूज्य अवलोकादिना सत्कृत्य ययौ राम इति शेषः । अर्धं पृथक् ॥ ७ ॥

गो० टी०—दध्यक्षतहविरिति । अभ्यर्चितचत्वरं प्रतिपूजिताङ्गणम् ‘ अङ्गणं चत्वराजिरे ’ इत्यमरः । यथार्हमिति वीक्षणभ्रूक्षेपवचनाञ्जलिप्रणामादिभिरित्यर्थः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—यथार्हं दर्शनभ्रूक्षेपवचनादिभिर्यथोचितमित्यर्थः । आचरितमनुष्ठितम् ॥ ८ ॥

रा० टी०—रामप्रतिप्रजोक्तिमाह—पितामहैरिति । पितामहैः पितामहोपलक्षितपितृपितामहैः दशरथाजाभ्यां तथा प्रपितामहैः अजपित्रा आचरितं तं प्रसिद्धं मार्गं नीतिपथमुपादाय गृहीत्वा अभिषिक्तः प्राप्तराज्याभिषेकस्त्वं पालय पितामहानुसारं वदुवचनमादरार्थम् ॥ ८ ॥

गो० टी०—पितामहैरिति । अद्याभिषिक्तस्त्वं पितामहाद्यैराचरितं तं प्रसिद्धं मार्गं मर्यादामनुपालय ॥ ८ ॥

९ ] ति० टी०—अनुपालयेत्यादिर्वृद्धानां वादः ॥ ९ ॥

रा० टी०—तत्पालनफलमाह—यथेति । पित्रा दशरथेन सर्वैः पितामहैरजादिभिः यथा यथावत्पोषिता वयं रामे राजनि सति ततः दशरथादिपालनसुखात्सुखतरमधिकसुखं यथा स्यात्तथा वत्स्यामः सर्वशब्दसमभिव्याहारात्पितामहशब्दः प्रपितामहादीनामपि बोधकः ॥ ९ ॥

गो० टी०—यथेति । रामे राजनि सति सर्वे वयं ततः पूर्वस्मात्सुखतरं यथा भवति तथा वत्स्यामः ॥ ९ ॥

१० ] ति० टी०—यदि राज्ये प्रतिष्ठितं प्राप्तराज्याभिषेकं रामं यथागतं पितुर्गेहान्निर्यान्तं निःसरन्तं पश्यामः, तर्हि नोऽस्माकं भुक्तेनैहिकविषयभोगजसुखेन तथा परमार्थैः परमार्थस्वर्गसाधनैश्च कर्मभिरलं न किंचित्तैः फलम् । सर्वसुखस्यैतेनैव लब्धत्वात् अत्र यद्यन्तर्भावेण विपरीतसंभावनासूचनम् ॥ १० ॥

रा० टी०—अभिषिक्तरामदर्शनजनितसुखस्यातिमहत्त्वं बोधयन्त आहुः—अलमित्यादिश्लोकद्वयेन । राज्ये प्रतिष्ठितं विनिर्यान्तं राजद्वाराद्बहिर्गच्छन्तं रामं यदि पश्याम तर्हि अद्य भुक्तेन ऐहिकभोगेन परमार्थैः मोक्षैश्च अलं न प्रयोजनमित्यर्थः ॥ १० ॥

गो० टी०—अलमिति । भुक्तेन भोजनेन परमार्थैः परमपुरुषार्थसाधनभूतैः जपहोमध्यानादिभिरित्यर्थः । राज्ये प्रतिष्ठितमभिषिक्तं पुनः स्वगृहाय निर्यान्तं यथा यथावत् पश्याम प्रार्थनायां लोट् ॥ १० ॥

११ ] ति० टी०—तदेवाह—ततो हीति । अमिततेजसो रामस्य राज्येन राज्यफलकोऽभिषेको यथा प्रियतरः तथा ततोऽन्यन्न किंचित्प्रियतरं प्रेमास्पदमित्यन्वयः । सद्राजमूलकत्वात्सर्वसुखस्येति भावः ॥ ११ ॥

रा० टी०—ननु पारमार्थिकसुखं कुतो नाभिलष्यते इत्यत आहुः—तत इति । अमिततेजसः इयत्तारहितप्रभावस्य रामस्य राज्येन राज्यार्थमभिषेकः यथा यथावत् प्रियतम इति शेषः । अत एव ततः राज्याभिषेकादन्यत्किंचित्प्रियतरं न

१ पथमिति गो. पाठः । २ अर्चितेति गो. रा. पाठः । ३ सुहृद्भिरिति गो. पाठः । ४ लालिता इति गो. पाठः । ५ पूर्वैरिति गो. पाठः । ६ रामे

एताश्चान्याश्च सुहृदामुदासीनः शुभाः कथाः । आत्मसंपूजनीः शृण्वन्ययौ रामो महापथम् ॥ १२ ॥
नहि तस्मान्मनः कश्चिच्चक्षुषी वा नरोत्तमात् । नरः शक्नोत्यपाक्रष्टुमतिक्रान्तेऽपि राघवे ॥ १३ ॥
यश्च रामं न पश्येत्तु यं च रामो न पश्यति । निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते ॥ १४ ॥
सर्वेषु स हि धर्मात्मा वर्णानां कुरुते दयाम् । चतुर्णां हि वयःस्थानां तेन ते तमनुव्रताः ॥ १५ ॥
चतुष्पथान्देवपथांश्चैत्यांश्चायतनानि च । प्रदक्षिणं परिहरञ्जगाम नृपतेः सुतः ॥ १६ ॥

भविष्यति किंच ततः तस्य रामस्य यथा अभिषेकः प्रियतरः तथा अन्यत्किंचिन्न प्रियतरमित्यस्य लिङ्गविपरिणामेनान्वयः । राज्येनेति तृतीया हेतौ चेति विहिता, फलस्यापि हेतुत्वेन विवक्षेति तत्र सिद्धान्तितत्वात् ॥ ११ ॥

गो० टी०—तत इति । राज्येनाभिषेको राज्यायाभिषेकः स यथा प्रियतरस्तथा ततोऽन्यत्प्रियतरं किंचिन्नास्ति ॥ ११ ॥

१२ ] ति० टी०—उदासीनः स्तुतिजहर्षविकाररहितः ॥ १२ ॥

रा० टी०—एता इति । उदासीनः स्वाभिषेकोत्साहरहितो रामः आत्मसंपूजनीः स्वसत्कारकारिकाः कथाः शृण्वन् महापथं ययौ महानां सर्वपूज्यानामपि आपथोऽतिगमनं यस्मिन् तं राजमार्गमित्यर्थः । एतेन महच्छब्दो न दीपत(?) इत्यस्य नायं विषयः निषेधस्याप्रामाणिकत्वं वा ॥ १२ ॥

गो० टी०—एता इति । उदासीनः स्तुतिश्रवणेन निर्विकारः आत्मसंपूजनीः आत्मसंपूजाजननीः मनोहर्षजननीर्वा महापथं राजमार्गम् ॥ १२ ॥

१३ ] ति० टी०—अतिक्रान्ते दृष्टिपथमिति शेषः । अत्यन्तासक्त्या पुर इव परिस्फुरणात् ॥ १३ ॥

रा० टी०—नेति । नरोत्तमात्परमपुरुषात्तस्माद्रामादपाक्रष्टुं नेतुमतिक्रान्ते गते ॥ १३ ॥

गो० टी०—नहीति । कश्चिदपि नरः मनश्चक्षुषी वा तस्मात् अपाक्रष्टुं निवर्तयितुं न शक्नोति किमुत नारीजन इति भावः । अतिक्रान्ते दूरगतेऽपि किमुत संनिहित इत्याशयः ॥ १३ ॥

१४ ] ति० टी०—एवं लोकानुरागे कविर्हेतुं दर्शयति—यश्चेति । रामं न पश्येदात्मस्वरूपत्वेनान्तर्यामित्वेन वा न पश्येत्, यथास्थितवेषधारिणं वा तद्देशस्थं न पश्येत् रामो यं न पश्येयन्निश्चज्ञानविषयतां न प्राप्नुयात् ज्ञानविषयत्वप्राप्तिरत्र दृष्टेरर्थः । अत्यन्तं तद्विषयज्ञानाय यतमानोऽपि यस्तत्कर्मैरित्यर्थः । यथास्थितवेषधारी वा यं स्वदेशस्थं न पश्येयद्विषयकज्ञानवान्न भवेत्, स सर्वलोकनिन्दास्पदम् स्वात्मा स्वान्तःकरणमप्येनं विगर्हते धिङ्मां भगवज्ज्ञानायोग्यमिति रामज्ञानं विना सर्वोऽपि निन्द्य इति विनोक्तिरलंकारोऽत्र व्यङ्ग्यः । अनेन भगवद्विषयकज्ञानवानेव धन्य इति वस्तु व्यज्यते ॥ १४ ॥

रा० टी०—रामानुरागरहितं निन्दन्त आहुः—य इति । यो जनः राममेव न पश्येत्स्वस्वामित्वेन न जानाति रामो वा यं न पश्यति अयं मामेव स्वस्वामित्वेन जानातीति न जानाति सः सर्वलोकेषु निन्दितः अतः एनं रामानुरागरहितं स्वात्मा स्वमनोऽपि विगर्हते निन्दति ॥ १४ ॥

गो० टी०—यश्चेति । चकारो भिन्नक्रमः रामं च दर्शनकाल एव परिपूर्णामृतसरसि मज्जयन्तमपि यस्तु अतिशयितवैलक्षण्यसंपन्नोऽपि न पश्येत् स्तुतिसंल्लापसत्काराद्यभावेऽपि अचेतनविलक्षणाकारेण चक्षुर्विषयं न करोति अत एव यं रामोऽपि न पश्यति नरस्याभिमुख्ये हि भगवान् कटाक्षयति सः राममदृष्ट्वा तत्कटाक्षाविषयः निन्दितो वसेत् यावत्कालं निन्दितः स्यात् लोके निन्दितः स्यात्तं निन्दितुमनर्हः कोऽपि जनो नास्तीति भावः । लोके विषयप्रवणः कश्चित्सत्यामपि लोकगर्हायां स्वयं संतुष्टो भवति न तथेत्याह—स्वात्माप्येनं विगर्हत इति स्वान्तःकरणमप्येनं विशेषेण गर्हते रामादर्शनाल्लोकगर्हया चेति भावः ॥ १४ ॥

१५ ] ति० टी०—किंच हि यतः स धर्मात्मा चतुर्णां हि चतुर्णामपि वर्णानां सर्वेष्वप्याश्रमेषु वयःस्थानां वयोरूपं स्थानं यस्यास्तां वयोऽनुरूपां दयां कुरुत इत्यर्थः । तेन ते सर्वे लोकास्तं रामं कायवाङ्मनोभिरनुव्रतास्तत्परा इत्यर्थः ॥ १५ ॥

रा० टी०—सर्वेषामिति । यदनुरागमन्तरा जनजन्मवैयर्थ्यं स रामः वयस्थानां वयसि स्थानं स्थितिर्यस्यास्तां तत्तद्वयोनुरूपामित्यर्थः । चतुर्णां वर्णानां सर्वेषां वर्णातिरिक्तानां च दयां तद्विषयककृपां कुरुते तेन हेतुना ते जनाः तं राममनुव्रताः तमेव सेवन्ते इत्यर्थः ॥ १५ ॥

गो० टी०—सर्वेषामिति । स रामः चतुर्णां वर्णानां सर्वेषामपि जनानां सप्तम्यर्थे षष्ठी वयः स्थानं प्रमाणं यस्यास्तां वयोनुरूपां दयां हि यस्मात्कारणात् कुरुते तेन कारणेन ते तमनुव्रता इत्यन्वयः । वयःस्थानां वृद्धानामिति वा सर्वविशेषणम् ॥ १५ ॥

१६ ] ति० टी०—प्रदक्षिणं परिहरन्निति चतुष्पथाद्यपेक्षया स्वस्य दक्षिणभागगमनं परिहरन्नित्यर्थः ॥ १६ ॥

रा० टी०—प्रासङ्गिकं समाप्य प्रकृतमाह—चतुष्पथानिति । चतुष्पथान् चत्वरान्देवपथान्ब्रह्मादीनामयोध्यागमनमार्गान् चैत्यानि ग्रामदेवतास्थानानि आयतनानि पाठशालाः प्रदक्षिणं परिहरन्दक्षिणपार्श्वे परित्यजन्नित्यर्थः नृपतेः सुतो रामो जगाम ॥ १६ ॥

गो० टी०—चतुष्पथानिति । चतुष्पथान् शृङ्गाटकानि देवपथान् देवालयान् चैत्यानि चैत्यवृक्षस्थानानि आयतनानि

१ स वसेल्लोके इति गो. पाठः । २ सर्वेषामिति गो.रा.पाठः । ३ चैत्यान्यायतनानीति गो. रा.पाठः । ४ लभेतेति युक्तं भाति । ५ प्रमाणमिति युक्तं भाति ।

स राजकुलमासाद्य मेघसंघोपमैः शुभैः । प्रासादशृङ्गैर्विविधैः कैलासशिखरोपमैः ॥ १७ ॥
आवारयद्भिर्गगनं विमानैरिव पाण्डुरैः । वर्धमानगृहैश्चापि रत्नजालपरिष्कृतैः ॥ १८ ॥
तत्पृथिव्यां गृहवरं महेन्द्रसदनोपमम् । राजपुत्रः पितुर्वेश्म प्रविवेश श्रिया ज्वलन् ॥ १९ ॥
स कक्ष्या धन्विभिर्गुप्तास्तिस्रोऽतिक्रम्य वाजिभिः। पदातिरपरे कक्ष्ये द्वे जगाम नरोत्तमः ॥ २० ॥
स सर्वाः समतिक्रम्य कक्ष्या दशरथात्मजः । संनिवर्त्य जनं सर्वं शुद्धान्तःपुरमत्यगात् ॥ २१ ॥
तस्मिन्प्रविष्टे पितुरन्तिकं तदा जनः स सर्वो मुदितो नृपात्मजे ।
प्रतीक्षते तस्य पुनः स्म निर्गमं यथोदयं चन्द्रमसः सरित्पतिः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

---

## अष्टादशः सर्गः ।

प्राप्तो रामः पित्रोश्चरणावभिवाद्य करुणवचनादिभिरनुमितपितृशोकस्तत्कारणं जिज्ञासुः संभावनार्हहेतूनुपन्यस्य पितुर्वैक्लव्यकारणं कैकेय्यै पप्रच्छ । मद्यमाश्रुतं वरं त्वदप्रियत्वात्त्वां वक्तुमशक्नुवन्नयं विवशोऽतः शुभमशुभं वा सद्यः कर्तासि चेदहं ते वच्मीति वदन्ती कैकेयीं सद्योऽहं तत्कर्ता शीघ्रं निवेद्यतामिति रामोऽब्रवीत्कैकेय्यपि दैवासुरसंग्रामवृत्तं प्रस्तुत्य पूर्वं पित्रा ते वितीर्णौ वरौ मया त्वद्वन-निर्वासनभरताभिषेकरूपेण वृतावतो भावित्वद्वियोग एव ते पितुर्वैक्लव्यहेतुरित्यवादीत् ।

स ददर्शासने रामो विषण्णं[6] पितरं शुभे । कैकेय्या सहितं[7] दीनं मुखेन परिशुष्यता ॥ १ ॥

---

सभादीनि च परिहरन् अप्रदक्षिणं परिहरन् प्रदक्षिणं यथा भवति तथा जगामेति संबन्धः ॥ १६ ॥

१७ ] ति० टी०–प्रासादशृङ्गैः प्रासादस्थशृङ्गैः ॥ १७ ॥

१८ ] ति० टी०–आवारयद्भिराक्रमद्भिः वर्धमानगृहैः क्रीडागृहैः रत्नसमूहालंकृतैरेतैः परिवृतम् ॥ १८ ॥

१९ ] ति० टी०–पितुर्वेश्म पृथिव्यां सर्वगृहेषु श्रेष्ठं प्रविवेशेत्यन्वयः ॥ १९ ॥

रा० टी०–स इति । मेघसंघोपमैः मेघसमूहसदृशैः शुभैः कल्याणहेतुभिः विविधैः अनेकप्रकारैः कैलासशिखरोपमैः कैलासशिखरसदृशैः प्रासादशृङ्गैः गगनं स्वर्गमावारयद्भिः अतिक्रमद्भिरिव पाण्डुरैः पाण्डुरवर्णविशिष्टैः रत्नजालपरिष्कृतैः निषिद्धपक्षिवारकरत्ननिर्मितजालविशिष्टैः वर्धमानगृहैः क्रीडावेश्मभिश्च सहितं राजकुलं राज्ञो गृहमासाद्य प्राप्य राजपुत्रः स रामः पृथिव्यां विद्यमानं महेन्द्रसदनोपममिन्द्रभवनसदृशं गृहवरं गृहाणि अवान्तरवेश्मानि वराणि श्रेष्ठानि यस्मिंस्तत्पितुर्वेश्म पित्रधिष्ठितगृहं प्रविवेश । अर्धत्रयमेकान्वयि ॥१७–१९॥

गो० टी०–स इत्यादि । राजकुलं राजगृहम् 'कुलं गृहेऽपि' इत्यमरः । वर्धमानगृहैः वर्धमानलक्षणाधिष्ठानसमेतगृहैः पृथिव्यां गृहवरं पृथिव्यामद्वितीयमित्यर्थः । पितुर्वेश्म पितृवासस्थानम् ॥ १७–१९ ॥

२० ] ति० टी०–वाजिभी रथयुक्तैः ॥ २० ॥

रा० टी०–स इति । नरोत्तमः स रामः धन्विभिर्धनु-र्धरैः गुप्ताः रक्षिताः तिस्रः कक्ष्याः द्वारः वाजिभिः अतिक्रम्य अपरे द्वे कक्ष्ये पदातिः सन् जगाम ॥ २० ॥

गो० टी०–स इति । वाजिभिः रथयुक्तैर्वाजिभिः पदातिः पादचारी ॥ २० ॥

२१ ] ति० टी०–सर्वा उक्तपञ्चकक्ष्याः ॥ २१ ॥

रा० टी०–सर्वा इति । दशरथात्मजः सर्वाः कक्ष्याः समतिक्रम्य जनमनुयायिवर्गं संनिवर्त्य शुद्धान्तःपुरमन्वगात्प्राप्नोत् ॥ २१ ॥

गो० टी०–स इति । शुद्धान्तम् अन्तःपुरम् ॥ २१ ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

२२ ] ति० टी०–अन्तिकं समीपदेशम् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

रा० टी०–तस्मिन्निति । तदा तस्मिन्काले तस्मिन् रामे प्रविष्टे सति मुदितः सर्वो जनः तस्य रामस्य निर्गमं राजगृहादागमनं पुनः प्रतीक्षते स्म तत्र दृष्टान्तः चन्द्रमसः उदयं सरित्पतिः समुद्र इव ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तदशः सर्गः ॥ १७ ॥

१ ] ति० टी०–शुभ आसने पर्यङ्के परिशुष्यता दुःखेनोपलक्षितम् ॥ १ ॥

---

१ धन्वेति गो. पाठः । २ शुद्धान्तं पुनरभ्यगादिति गो. पाठः । ३ अन्वगादिति रा. पाठः । ४ तत इति गो. पाठः । ५ वीति गो. पाठः । ६ निषण्णमिति गो. पाठः । ७ कैकेयीसहितमिति गो. कैकय्येति रा. पाठः ।

स पितुश्चरणौ पूर्वमभिवाद्य विनीतवत् । ततो ववन्दे चरणौ कैकेय्याः सुसमाहितः ॥ २ ॥
रामेत्युक्त्वा तु वचनं बाष्पपर्याकुलेक्षणः । शशाक नृपतिर्दीनो नेक्षितुं नाभिभाषितुम् ॥ ३ ॥
तदपूर्वं नरपतेर्दृष्ट्वा रूपं भयावहम् । रामोऽपि भयमापन्नः पदा स्पृष्ट्वेव पन्नगम् ॥ ४ ॥
इन्द्रियैरप्रहृष्टैस्तं शोकसंतापकर्शितम् । निःश्वसन्तं महाराजं व्यथिताकुलचेतसम् ॥ ५ ॥
ऊर्मिमालिनमक्षोभ्यं क्षुभ्यन्तमिव सागरम् । उपप्लुतमिवादित्यमुक्तानृतमृषिं यथा ॥ ६ ॥
अचिन्त्यकल्पं नृपतेस्तं शोकमुपधारयन् । बभूव संरब्धतरः समुद्र इव पर्वणि ॥ ७ ॥
चिन्तयामास चतुरो रामः पितृहिते रतः । किंस्विदद्यैव नृपतिर्न मां प्रत्यभिनन्दति ॥ ८ ॥
अन्यदा मां पिता दृष्ट्वा कुपितोऽपि प्रसीदति । तस्य मामद्य संप्रेक्ष्य किमायासः प्रवर्तते ॥ ९ ॥

रा० टी०—रामवृत्तं बोधयन्नाह—स इति । विषण्णं तं संभावितपुत्रवियोगजनितदुःखाक्रान्तमत एव दीनं कैकेय्या सहितं परिशुष्यता मुखेनोपलक्षितं पितरमासने पर्यङ्के ददर्श॥१॥

गो० टी०—स इति । आसने पर्यङ्के 'मूर्च्छितो न्यपतत्तस्मिन् पर्यङ्के हेमभूषिते' इत्युत्तरत्र वक्ष्यमाणत्वात् । मुखेनेत्युपलक्षणे तृतीया ॥ १ ॥ २ ॥

२ ] ति० टी०—विनीतवत् विनीतः सन्निति यावत् । सुसमाहितस्तस्या अतिस्वेष्टकरत्वेन जगद्धितकरत्वेन च तस्यां प्रसन्नचित्तः ॥ २ ॥

रा० टी०—स इति । सुसमाहितः नित्यमेकाग्रचित्तः स रामः विनीतवद्विनम्रताविशिष्टं यथा स्यात्तथा कैकेय्याः चरणौ ववन्दे ॥ २ ॥

३ ] ति० टी०—नाभिभाषितुम् रामेत्यक्षरद्वयाधिकमिति शेषः ३

रा० टी०—रामप्रणामानन्तरकालिकं राजवृत्तान्तमाह—रामेति । नृपतिस्तु राम इति वचनमुक्त्वा बाष्पपर्याकुलेक्षणः अश्रुव्याप्तनेत्रः सन् ईक्षितुं रामं द्रष्टुं न शशाक अभिभाषितुं प्रत्यभिवादनवाक्यमुच्चारयितुं च न शशाक ॥ ३ ॥

गो० टी०—रामेति । नाभिभाषितुं रामेत्यस्मादधिकमित्यर्थः ॥ ३ ॥

४ ] ति० टी०—रामोऽपि भयमापन्नो दशरथविषादस्य स्वापराधजन्यत्वशङ्कया ॥ ४ ॥

रा० टी०—तदिति । भयावहं द्रष्टॄणां भयप्रापकं नरपतेः तदीक्षणाभावादिविशिष्टमपूर्वरूपं दृष्ट्वा रामोऽपि भयमदृष्टपूर्वराजचेष्टाहेतुभूतनिश्चयाभावहेतुकभीतिमापन्नः प्राप्तः ॥ ४ ॥

गो० टी०—तदिति । अपूर्वम् अदृष्टपूर्वं रामोऽपीत्यपिशब्देन दुःअसहसद्भावेऽप्यक्षुभितो रामो दशरथविषादस्य स्वहेतुकत्वमाशङ्क्य भयमापन्न इत्यवगन्तव्यम् ॥ ४ ॥

५ ] ति० टी०—इन्द्रियैरित्यादिश्लोकद्वये दृष्ट्वा भयमापन्न इत्यनुकृष्यते । अप्रहृष्टैः खिन्नैरुपलक्षितम् व्यथितं खिन्नमाकुलं संभ्रान्तं चेतो यस्य तम् ॥ ५ ॥

६ ] ति० टी०—ऊर्मिमालमुत्तमक्षोभ्यमपि क्षुभ्यन्तं सागरमिव स्थितम् । उपप्लुतं राहुग्रस्तम् । उक्तमनृतं येन तद्वन्निस्तेजस्कम् ॥ ६ ॥

रा० टी०—इन्द्रियैरिति । अप्रहृष्टैः हर्षाभावविशिष्टैरिन्द्रियैः शोकसंतापकर्षितमप्रहृष्टेन्द्रियशाप्यशोकसंतापविशिष्टमत एव निःश्वसन्तमत एव व्यथिताकुलचेतसं व्यथिताकुलं चेतो यस्य तं क्षुभ्यन्तं समयविशेषे प्राप्तक्षोभमक्षोभ्यं क्षोभ्धुमशक्यमूर्मिमालिनं तरङ्गसमूहविशिष्टं सागरमिव समुद्रसदृशमुपप्लुतं राहुणाग्रस्तमादित्यमिव ग्रस्तादित्यसदृशमुक्तानृतं भाषितमिथ्यावचनमृषिं यथा भाषितमिथ्यावचनऋषिसदृशं महाराजं दृष्ट्वेति शेषः । अचिन्त्यकल्पं नृपतेः शोकमुपधारयन्निश्चिन्वन्सन् पर्वणि समुद्र इव संरब्धतरः संक्षुब्धः बभूव राम इति शेषः । श्लोकत्रयमेकान्वयि ॥ ५–७ ॥

गो० टी०—इन्द्रियैरित्यादिश्लोकद्वये दृष्ट्वा भयमापन्न इत्येतदनुकृष्य संबध्यते उपप्लुतं राहुग्रस्तम् उक्तानृतमृषिं यथा ऋषिमिव स्थितं निस्तेजस्कमित्यर्थः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—अचिन्त्यकल्पमत्यन्तमसंभावितम् । उपधारयन्किंहेतुकोऽयं शोक इति चिन्तयन् । संरब्धतरोऽत्यन्तं क्षुभितः यद्यपि पर्वणि समुद्रस्य चन्द्रोदयात्क्षोभस्तथापि क्षोभमात्रे दृष्टान्तः ॥ ७ ॥

गो० टी०—अचिन्त्यकल्पमिति । अचिन्त्यकल्पम् असंभावितमित्यर्थः । उपधारयन् विचारयन् संरब्धतरः संभ्रान्ततरः ॥ ७ ॥

८ ] ति० टी०—किंस्वित्किम् ॥ ८ ॥

रा० टी०—चिन्तयामासेति । चतुरः सर्वविषयकनैपुण्यविशिष्टः चिन्तयामास । तच्चिन्तनमेवाह—अद्य अस्मिन्काले एव न प्रत्यभिनन्दति स्विदेतत्किम् ॥ ८ ॥

गो० टी०—चिन्तयामासेति । किंस्वित् किंवा अद्यैवेत्येवकारव्यवच्छेद्यमाह ॥ ८ ॥

९ ] ति० टी०—अद्यैवेत्येवकारव्यवच्छेद्यमाह—अन्यदेत्यादि । तस्य मद्दर्शनेऽतिप्रीतिमतः । आयासः खेदः ॥ ९ ॥

रा० टी०—अन्यदेति । अन्यदा अन्यस्मिन्काले यं मां दृष्ट्वा

[illegible] पाठः । ३ न श्लोकेति गो. पाठः ।

स दीन इव शोकार्तो विषण्णवदनद्युतिः । कैकेयीमभिवाद्यैव रामो वचनमब्रवीत् ॥ १० ॥
कच्चिन्मया नापराद्धमज्ञानाद्येन मे पिता । कुपितस्तन्ममाचक्ष्व त्वमेवैनं प्रसादय ॥ ११ ॥
अप्रसन्नमनाः किं नु सदा मां प्रति वत्सलः । [1]विषण्णवदनो दीनः [2]सदा मां [3]प्रति भाषते ॥ १२ ॥
शारीरो मानसो वापि कच्चिदेनं न बाधते । संतापो वाभितापो वा दुर्लभं हि सदा सुखम् ॥ १३ ॥
कच्चिन्न किंचिद्भरते कुमारे प्रियदर्शने । शत्रुघ्ने वा महासत्त्वे मातृणां वा ममाशुभम् ॥ १४ ॥
अतोषयन्महाराजमकुर्वन्वा पितुर्वचः । मुहूर्तमपि नेच्छेयं [5]जीवितुं कुपिते नृपे ॥ १५ ॥
यतोमूलं नरः पश्येत्प्रादुर्भावमिहात्मनः । कथं तस्मिन्न वर्तेत प्रत्यक्षे सति दैवते ॥ १६ ॥
कच्चित्ते परुषं किंचिदभिमानात्पिता मम । उक्तो भवत्या [6]रोषेण येनास्य लुलितं मनः ॥ १७ ॥
एतदाचक्ष्व मे देवि तत्त्वेन परिपृच्छतः । किंनिमित्तमपूर्वोऽयं विकारो मनुजाधिपे ॥ १८ ॥

---

प्रसीदति तं मां संप्रेक्ष्य दृष्ट्वा तस्य राज्ञः आयासः खेदः प्रवर्तते किम् । आश्चर्यार्थकः किंशब्दः ॥ ९ ॥

गो० टी०—अन्यदेति । आयासः चित्तक्लेशः इति चिन्तयामासेत्यन्वयः ॥ ९ ॥ १० ॥

१० ] ति० टी०—दीन इव विषण्णवदनद्युतिरिव स रामः शोकार्त इव वचनमब्रवीदिति संबन्धः ॥ १० ॥

रा० टी०—स इति । दीन इव दीनत्वेन प्रतीयमान इत्यर्थः उत्तरयोरपि इवशब्दसंबन्धेन एवमर्थो बोध्यः ॥ १० ॥

११ ] ति० टी०—नापराद्धम् काकुः अपराद्धम् । अज्ञानात्प्रमादात् । प्रसादय मत्कृतापराधशान्त्यै इति शेषः ॥ ११ ॥

रा० टी०—तद्वचनमेवाह—कच्चिदिति । अज्ञानात्पद्विषयिणी एतस्य प्रीतिरप्रीतिर्वा तद्विषयकज्ञानाभावात् अपराद्धं विपरीतकरणेनापकृतं कच्चित् न येनापकारेण मे पिता कुपितः तदाचक्ष्व कथय त्वमेनं प्रसादय एव येनोपायेन प्रसन्नः स्यात्तदुपायं कुर्वित्यर्थः ॥ ११ ॥

गो० टी०—कच्चिदिति । नापराद्धमपराधो न कृतः अज्ञानात् प्रमादात् ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—सदा मां प्रति वत्सलोऽप्यथ किमप्रसन्नमनाः । हि यतो मां न भाषतेऽतोऽप्रसन्नमनस्त्वनिर्णयः ॥ १२ ॥

रा० टी०—अप्रसन्नेति । यः पिता सदा नित्यं मां प्रति वत्सलः मद्विषयकवात्सल्यविशिष्टः सः अप्रसन्नमना अद्य सन्मां न प्रतिभाषते किंतु किमेतत् ॥ १२ ॥

१३ ] ति० टी०—शारीरः शरीरव्याधिजः संतापः मानसो मनोनिजाधिजोऽभितापः न बाधत इत्यत्र काकुः । कुत एतत्तत्राह—दुर्लभं हीति । मनुष्यशरीरस्य पापपुण्यारब्धत्वादिति भावः ॥ १३ ॥

रा० टी०—शारीर इति । शारीरः शरीरसंबन्धिज्वरादिजनितः संतापः पीडा मानसः मनस्थवाञ्छापूर्त्यभावजनितोऽभितापः शोकादिर्वा दुर्लभं प्राकृतैर्दुष्प्रापं सदासुखं नित्यसुखविशिष्टमेनं पितरं कच्चिन्न बाधते ॥ १३ ॥

गो० टी०—शारीर इति । शारीरः संतापो व्याधिः मानसोऽभिताप आधिः । दुर्लभं हीतिपुण्यपापारब्धत्वान्मानुषशरीरस्येति भावः ॥ १३ ॥

१४ ] ति० टी०—भरते शत्रुघ्ने वा मातृणां मम मातृषु वा किंचिदशुभं न पश्यति कच्चिदित्यन्वयः ॥ १४ ॥

रा० टी०—कच्चिदिति । भरतादौ मम मातृणां वा अशुभमपराधो न कच्चित् ॥ १४ ॥

गो० टी०—कच्चिदिति । मातृणामिति निर्धारणे षष्ठी कच्चिदिति प्रश्ने किंचिदशुभं न कच्चिदिति संबन्धः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—कुपितेऽतोषेण वचनाकरणाद्वा ॥ १५ ॥

रा० टी०—पितृसंतोषोऽवश्यं कर्तव्य इति बोधयन्नाह—अतोषयन्निति । अतोषयंस्तुष्टमकुर्वञ्जीवितुं न इच्छेयम् ॥ १५ ॥

१६ ] ति० टी०—यतोमूलम् यन्मूलमित्यर्थे आर्षमेतत् । प्रादुर्भावं जन्म यत्कारणकं पश्येज्जानीयात्तस्मिन्प्रत्यक्षे दैवते सति तस्मिन्कथमानुकूल्येन न वर्तेतेत्यर्थः ॥ १६ ॥

रा० टी०—तत्र हेतुमाह—यत इति । मूलं प्रवृत्तिहेतुभूतमात्मनः स्वस्य प्रादुर्भावं प्राकट्यं यतो यस्मात्पश्येज्जानाति तस्मिन्प्रत्यक्षे दैवते सति कथं न वर्तेत तदानुकूल्येनेति शेषः । एतेन यतो मूलं यन्मूल्यमित्यर्थे आर्षमेतदिति भट्टायुक्तिश्चिन्त्या ॥ १६ ॥

गो० टी०—यत इति । इह जगति नरः आत्मनो देहस्य प्रादुर्भावमुत्पत्तिं यतोमूलं यत्कारणकं पश्येत् प्रत्यक्षे दैवते सति सिद्धे तस्मिन् पितरि कथं न वर्तेत तद्वशे एव वर्तेतेत्यर्थः ॥ १६ ॥

१७-१८ ] ति० टी०—ते संबन्धसामान्ये षष्ठी । त्वयाभिमानाद्गर्वान्मम पिता परुषमुक्तः, अथवा भवत्या कोपेन किंचिन्निमित्तकोपेन परुषमुक्तः । येनास्य मनो लुलितं कलुषितम् । दुःखितोक्तित्वादधिकपदत्वादि न दोषः ॥ १७ ॥ १८ ॥

रा० टी०—कच्चिदिति । अभिमानादयं मद्वश इति गर्वाद्भवत्या मत्पिता परुषमुक्तः रोषेण रोषहेतुभूतेन येन वचनेन अस्य राज्ञो मनो लुलितं त्यक्तस्वभावम् ॥ १७ ॥

गो० टी०—कच्चित्त इति । ते अभिमानात् तव वाङ्-

---

१ त्वं कैकेयीमिति गो. रा. पाठः । २ क्रियणीति गो. पाठः । ३ नहीति गो. रा. पाठः । ४ ममीति गो. पाठः । ५ जीवितमिति रा. पाठः । ६ कोपेनेति गो. रा. पाठः । ७ यत्रास्येति गो. रा. पाठः ।

एवमुक्ता तु कैकेयी राघवेण महात्मना । उवाचेदं सुनिर्लज्जा धृष्टमात्महितं वचः ॥ १९ ॥
न राजा कुपितो राम व्यसनं नास्य किंचन । किंचिन्मनोगतं त्वस्य त्वद्भयान्नानुभाषते ॥ २० ॥
प्रियं त्वामप्रियं वक्तुं वाणी नास्य प्रवर्तते । तदवश्यं त्वया कार्यं यदनेनाश्रुतं मम ॥ २१ ॥
एष मह्यं वरं दत्त्वा पुरा मामभिपूज्य च । स पश्चात्तप्यते राजा यथान्यः प्राकृतस्तथा ॥ २२ ॥
अतिसृज्य ददानीति वरं मम विशांपतिः । स निरर्थं गतजले सेतुं बन्धितुमिच्छति ॥ २३ ॥
धर्ममूलमिदं राम विदितं च सतामपि । तत्सत्यं न त्यजेद्राजा कुपितस्त्वत्कृते यथा ॥ २४ ॥
यदि तद्वक्ष्यते राजा शुभं वा यदि वाऽशुभम् । करिष्यसि ततः सर्वमाख्यास्यामि पुनस्त्वहम् ॥ २५ ॥

भयात् कोपेन वा मम पिता भवत्या किंचित्परुषमुक्तः कश्चित् यत्र येनास्य मनः लुलितं कलुषितम् ॥ १७ ॥

रा० टी०—उपसंहरत्वाह—एतदिति । अपूर्वः पूर्वमनुत्पन्नः अयं विकारः अजायतेति शेषः । अत्र निमित्तं किमत्रे-त्यध्याहृतम् ॥ १८ ॥

गो० टी०—एतदिति । किंनिमित्तमित्याद्याचक्ष्वेति पूर्वोक्तस्य सर्वस्य संग्रहः ॥ १८ ॥

१९ ] ति० टी०—सुनिर्लज्जा पत्युरेवंविधक्लेशकरणलज्जा-रहिता । धृष्टं प्रत्यक्षतो वनं गच्छेस्त्येवंरूपम् ॥ १९ ॥

रा० टी०—एवमिति । सुनिर्लज्जा यशःप्रख्यापनरूपप-त्युपकारार्थं त्यक्तव्रीडा केकयी आत्महितं जीवानामुपकारकमधृष्टं प्रागल्भ्यरहितमिदं वच उवाच ॥ १९ ॥

गो० टी०—एवमिति । एवम् इति धृष्टं प्रत्यक्षतो रामा-निष्टवचनविषयवैक्लव्यरहितम् ॥ १९ ॥

२० ] ति० टी०—मनोगतम् त्वदप्रियकरमिति शेषः॥२०॥

रा० टी०—तद्वचनमेवाह—नेति । व्यसनं व्याध्यादिजनि-तदुःखं मनोगतमभिप्रेतं त्वद्भयात्त्वद्वियोगभिया नानुभाषते कथयति एतेन त्वद्वियोगमन्तरा एतदभिप्रेतसिद्धिर्न भविष्यती-ति बोधितम् ॥ २० ॥

गो० टी०—न राजेति । त्वद्भयादित्यस्य विवरणम्—प्रिय-मिति । आश्रुतं प्रतिज्ञातम् ॥ २० ॥ २१ ॥

२१ ] ति० टी०—तदेवाह—प्रियमिति । आश्रुतं प्रतिज्ञा-तम् । तदप्रियमपि त्वयावश्यं कार्यम् । यदि पितृभक्तोऽसीति शेषः ॥ २१ ॥

रा० टी०—प्रियमिति । अप्रियं प्रियविरुद्धत्वेन प्रतीय-मानं तत्तस्मादेतदभिप्रेतत्वान्मम मह्यं यदाश्रुतं प्रतिज्ञातं तत्त्वया कार्यं कर्तव्यम् ॥ २१ ॥

२२ ] ति० टी०—किं तत्राह—एष इति । अभिपूज्य तेनैव वरदानेन । पश्चात्प्रतिज्ञातवरदानकाले ॥ २२ ॥

रा० टी०—एष इति । पुरा पूर्वं मामभिपूज्य प्रशस्य वरं दत्त्वा स वरदाता एष राजा पश्चात्तप्यते तत्र दृष्टान्तः अन्यः सत्यप्रतिज्ञभिन्नः प्राकृतः प्रकृतिकार्यशरीरको यथा । एतेनोपमा-लङ्कारेणास्य प्राकृतविलक्षणत्वं ध्वनितम् " न जायते म्रियते वा " इत्यादिवाक्येन सर्वेषामात्मनां प्राकृतविलक्षणत्वेन श-रीरे तस्य पर्यवसानं बोध्यम् । अन्य इति विशेषणदानेन प्राकृ-तोऽपि सत्यप्रतिज्ञो न शोचतीति ध्वनितम् ॥ २२ ॥

गो० टी०—तत्किमित्यपेक्षायां सामान्यतो दर्शयति—एष इत्यादिना ॥ २२ ॥

२३ ] ति० टी०—अतिसृज्य प्रतिज्ञाय । गतजले नद्यादौ । दानस्य पूर्वमेव कृतत्वात्तद्विषयव्यवहारपरिहारचिन्ता व्यर्थे-त्यर्थः ॥ २३ ॥

रा० टी०—शोको न कार्य इति बोधयन्ती आह—अतीति । अहं ददामीति अतिसृज्य प्रतिज्ञाय स विशांपतिः राजा विप-रीतमिच्छति चेत्तन्निरर्थं निष्प्रयोजनं सेतुं बन्धितुमिच्छति॥२३॥

गो० टी०—अतिसृज्येति । अतिसृज्य प्रतिज्ञाय गतजले सेतुं बन्धितुमिच्छतीति दानस्य पूर्वमेव कृतत्वादिदानीं तत्प-रिहारव्यापारो व्यर्थ इति भावः ॥ २३ ॥

२४ ] ति० टी०—इदं सत्यं धर्मस्य मूलम् । अपि च सतामपि सत्यं धर्ममूलमित्येतद्विदितम् । त्वत्कृते त्वत्प्रयोज-नान्तरायवशेन मयि कुपितो राजा कोपदोषेण यथा न त्यजेत् तथा कुर्विति शेषः । एतेन पितुरधर्मात्त्राणं पित्राज्ञापरिपालनं च पुत्रस्य महान्धर्म इति सूचितम् ॥ २४ ॥

रा० टी०—धर्मेति । हे राम ! सत्यं धर्ममूलं सर्वधर्मकारण-मिदं सतां विदितं निश्चितं तत्सत्यम् । कुपितो यथा संभावित-त्वद्वियोगहेतुककोपाभासविशिष्टोऽपि राजा त्वत्कृते भवत्परम-यशोनिष्पत्तये न त्यजेत् ॥ २४ ॥

गो० टी०—धर्ममूलमिति । इदं जगद्धर्ममूलम् इदं च सतां विदितं सद्भिर्विदितम् " क्तस्य च वर्तमाने " इति षष्ठी तत्त-स्मात्सत्यं सत्यरूपधर्मं राजा त्वत्कृते त्वत्प्रयोजनाय मयि कुपितः सन् यथा न त्यजेत् तथा कुर्वित्यर्थः ॥ २४ ॥

२५] ति० टी०—दशरथमिव राममपि निर्बध्नाति—यदीति । राजा यद्वक्ष्यते तद्यदि करिष्यसि ततोऽहं सर्वं पुनर्विशिष्या-ख्यास्यामि ॥ २५ ॥

रा० टी०—यदीति । यदि यदा अशुभं निम्बौषधादिवत्प्र-तिभासिकाशुभत्वविशिष्टं यदि वा शुभं प्रातीतिकपारमार्थिक-शुभत्वविशिष्टं राजा वक्ष्यते उक्त्यनुकूलकृतिमान्भवतीत्यर्थः ।

१ तस्येति रा. पाठः । २ अमीति गो. पाठः । ३ उपवर्तन इति गो. रा. पाठः । ४ तन्वेति रा. पाठः । ५ तवेति रा. पाठः ।

यदि त्वभिहितं राज्ञा त्वयि तन्न विपत्स्यते । ततोऽहमभिधास्यामि नह्येष त्वयि वक्ष्यति ॥ २६ ॥
एतत्तु वचनं श्रुत्वा कैकेय्या समुदाहृतम् । उवाच व्यथितो रामस्तां देवीं नृपसंनिधौ ॥ २७ ॥
अहो धिङ् नार्हसे देवि वक्तुं मामीदृशं वचः । अहं हि वचनाद्राज्ञः पतेयमपि पावके ॥ २८ ॥
भक्षयेयं विषं तीक्ष्णं पतेयमपि चार्णवे । नियुक्तो गुरुणा पित्रा नृपेण च हितेन च ॥ २९ ॥
तद्ब्रूहि वचनं देवि राज्ञो यदभिकाङ्क्षितम् । करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥ ३० ॥
तमार्जवसमायुक्तमनार्या सत्यवादिनम् । उवाच रामं कैकेयी वचनं भृशदारुणम् ॥ ३१ ॥
पुरा देवासुरे युद्धे पित्रा ते मम राघव । रक्षितेन वरौ दत्तौ सशल्येन महारणे ॥ ३२ ॥
तत्र मे याचितो राजा भरतस्याभिषेचनम् । गमनं दण्डकारण्ये तव चाद्यैव राघव ॥ ३३ ॥

---

तदैव सर्वं प्रातिभासिकाशुभत्वविशिष्टं प्रातीतिकपारमार्थिकशुभत्वविशिष्टं च त्वं पुनः करिष्यसि अतः सर्वं राजाभिप्रेतमाख्यास्यामि कथयिष्यामि । अत्र वच एव कृतिरर्थ इति न वैयाकरणमतविरोधः। वक्ष्यते करिष्यसीत्यत्र लृडुपात्तभविष्यत्कालस्याविवक्षा ॥ २५ ॥

गो० टी०–तर्हि तद्विशेषतो वक्तव्यमित्यत्राह–यदीति । शुभमशुभं वा तत्प्रतिज्ञातं राजा यद्वक्ष्यति तत् त्वं करिष्यसि यदि तदा राज्ञो विवक्षितमहमेवाख्यास्यामीत्यर्थः ॥ २५ ॥

२६ ] ति० टी०–राज्ञा राजानुमत्या मया यदभिहितं तत्त्वयि न विपत्स्यते व्यर्थं न भविष्यति, तदाहं वक्ष्यामि। राजैव वदतु तत्राह—नहीत्यादि । त्वदप्रियत्वात्त्वत्समक्षं साक्षादिति शेषः ॥ २६ ॥

रा०टी०–रामवचनशुश्रूषयाह–यदीति । यदि राज्ञाऽभिहितं मदनुमितराजाज्ञापितं त्वयि न विपत्स्यते निरर्थं न भवेदित्यर्थः । ततः तदा तन्मदनुमितराजाज्ञापितमहमभिधास्यामि कथयिष्यामि एष तु न वक्ष्यति। प्रसिद्धश्च वचने 'प्रधानविषयाशक्तिः प्रत्ययेनाभिधीयते' इत्यादावभिदधातिः॥ २६ ॥

गो० टी०–राजैव कुतो न वदतीत्यत्राह–यदीति । न विपत्स्यते यदि विफलं न भविष्यति चेदित्यर्थः॥ २६ ॥

२७ ] ति० टी०–रामोऽपि दशरथवदेव घोरत्वं ज्ञात्वापि महापुरुषत्वाद्धीरोदात्तत्वात्सर्वथैव करिष्यामीति प्रतिजानीते—एतदिति । व्यथितो गुरुवचनोल्लङ्घनमनयापि शङ्कितमिति संतप्तः ॥ २७ ॥

रा० टी०–एतदिति । समुदाहृतं कथितं व्यथितः पितृदुःखदर्शनहेतुकसंचलितचित्तः रामः उवाच ॥ २७ ॥

गो० टी०–एतदिति । व्यथितः गुरुवचनं करिष्यति न वेति संदेहस्य विषयोऽस्मीति संतप्त इत्यर्थः ॥ २७ ॥

२८ ] ति० टी०–ईदृशमकरणशङ्कावचनम् । यदि तद्वक्ष्यत इत्यादिकमित्यर्थः ॥ २८ ॥

रा० टी०–तद्वचनमेवाह–अहो इति । हे देवि ! ईदृशमाज्ञापनाङ्गीकारविषयकसंशयबोधकं वचः वक्तुं यदि अर्हसे तर्हि मां धिक् एवं संशयो न कार्य इत्यर्थः। तदेव आह–पावके वह्नौ॥२८॥

गो० टी०–व्यथामेवाह–अहो इत्यादिना ॥ २८ ॥

२९ ] ति० टी०–गुरुणेहामुत्रहितोपदेष्ट्रा ॥ २९ ॥

रा० टी०–भक्षयेयमिति । अर्णवे समुद्रे गुरुणा वशिष्ठेन हितेन हितोपदेशकर्त्रा पित्रा ॥ २९ ॥

गो० टी०–नियुक्त इति । गुरुत्वपितृत्वनृपत्वहितपरत्वानि वचनकरणहेतवः । करिष्ये तदित्यनुकर्षः ॥ २९ ॥

३०–३१ ] ति० टी०–प्रतिजाने कृतसुकृतादिसाक्षितयेति शेषः। तदेव स्थिरयति–रामो द्विरिति । यदुक्तं तदुक्तमेव तद्विरुद्धं न पुनर्वदतीत्यर्थः। तत्तदभावविषयतया द्विराहृतं भाषणं न करोतीति यावत् ॥ ३० ॥ ३१ ॥

रा०टी०–तदिति । प्रतिजाने प्रतिज्ञां करोमि। स्वस्वाभाविकं गुणमाह–रामः रामशब्दतादात्म्यापन्नः द्विः प्रतिज्ञाविपरीतं न अभिभाषते ॥ ३० ॥

रा० टी०–तमिति । आर्जवसमायुक्तं विनयसंपन्नं तं राममनार्या सर्वश्रेष्ठा कैकेयी भृशदारुणं रामवियोगसंपादकत्वेनातिकठिनं वचनमुवाच ॥ ३१ ॥

गो० टी०–तदिति । यत्कार्यमभिकाङ्क्षितं तद्वचनं तद्विषयवचनं ब्रूहि तत्कार्यं करिष्ये प्रतिजाने च प्रतिज्ञां करोमि च । रामो द्विर्नाभिभाषते विना प्रतिज्ञया रामो द्विरुक्तिं न करोतीत्यर्थः ॥ ३०–३२ ॥

३२ ] ति० टी०–पूर्वं सशल्येन पश्चाच्छल्यापाकरणपूर्वं मया रक्षितेन ॥ ३२ ॥

रा० टी०–तद्वचनमेवाह–पुरेति । सशल्येन शत्रुविद्धबाणसहितेन ॥ ३२ ॥

३३ ] ति० टी०–तत्र तयोर्वरयोरेकेन । अद्यैवैतत्क्षण एव ॥ ३३ ॥

रा० टी०–तत्रेति । तत्र देवासुरसंग्रामसमये प्राप्तौ वरौ राजा अद्यैव मया याचितः । तावेवाह भरतस्य अभिषेचनमभिषेचनसदृशं तव दण्डकारण्ये गमनम् । अभिषेचनशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ ३३ ॥

गो० टी०–तत्रेति । तत्र वरप्रदाननिमित्तम् ॥३३॥३४॥

---

१ भक्षयेयमिति गो. रा. पाठः । २ दैवासुरे इति गो. पाठः । ३ मयेति रा. पाठः ।

यदि सत्यप्रतिज्ञं त्वं पितरं कर्तुमिच्छसि । आत्मानं च नरश्रेष्ठ मम वाक्यमिदं शृणु ॥ ३४ ॥
संनिदेशे पितुस्तिष्ठ यथानेन प्रतिश्रुतम् । त्वयारण्यं प्रवेष्टव्यं नव वर्षाणि पञ्च च ॥ ३५ ॥
भरतश्चाभिषिच्येत यदेतदभिषेचनम् । त्वदर्थे विहितं राज्ञा तेन सर्वेण राघव ॥ ३६ ॥
सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिदं[2] त्यक्त्वा जटाचीरधरो भव ॥ ३७ ॥
भरतः कोसलपतेः प्रशास्तु वसुधामिमाम् । नानारत्नसमाकीर्णां सवाजिरथसंकुलाम् ॥ ३८ ॥
एतेन त्वां नरेन्द्रोऽयं कारुण्येन समाप्लुतः । शोकैः संक्लिष्टवदनो न शक्नोति निरीक्षितुम् ॥ ३९ ॥
एतत्कुरु नरेन्द्रस्य वचनं रघुनन्दन । सत्येन महता राम तारयस्व नरेश्वरम् ॥ ४० ॥
इतीव तस्यां परुषं वदन्त्यां न चैव रामः प्रविवेश शोकम् ।
प्रविव्यथे चापि महानुभावो राजा च पुत्रव्यसनाभितप्तः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

पितृसंतोषणान्नान्यदस्ति मे कर्तव्यमतः कौसल्यामापृच्छ्य सीतामनुनीयाथैवाहं वनं प्रवेक्ष्यामीति प्रतिज्ञाय शोकाकुलेक्षणेन लक्ष्मणेनानुगम्यमानो रामः कौसल्यान्तःपुरं प्रविवेश ।

तदप्रियममित्रघ्नो वचनं मरणोपमम् । श्रुत्वा न विव्यथे रामः कैकेयीं चेदमब्रवीत् ॥ १ ॥

---

३४ ] ति० टी०—यदीति । राज्ञा त्वया च मदुक्तकृतेः सशपथं प्रतिज्ञातत्वादिति भावः ॥ ३४ ॥

रा० टी०—यदीति । हे नरश्रेष्ठ! इदं शृणु श्रवणपूर्वकाचरणं कुरु ॥ ३४ ॥

३५ ] ति० टी०—संनिदेशे पितृप्रतिज्ञासंपादने ॥ ३५ ॥

रा० टी०—तद्वाक्यमेवाह—सन्निदेश इति । सन्निदेशे पितृप्रतिज्ञापालने प्रतिश्रुतं प्रतिज्ञातम् । तत्प्रतिज्ञातमेवाह—प्रवेष्टव्यं तत्र स्थातव्यम् ॥ ३५ ॥

गो० टी०—संनिदेश इति । संनिदेशे नियमने ॥ ३५ ॥

३६ ] ति० टी०—अभिषेचनमभिषेकोपकरणम् ॥ ३६ ॥

रा० टी०—भरत इति । विहितं संपादितमभिषेचनमभिषेकद्रव्यं तेन सर्वेण भरतः अभिषिच्येत इव सर्वमेतदायत्तं स्यादित्यर्थः । च इवार्थे ॥ ३६ ॥

गो० टी०—भरत इति । यदेतदभिषेचनम् अभिषेकसाधनं त्वदर्थे विहितं तेन सर्वेण राज्ञा भरतोऽभिषिच्येतेति योजना ॥ ३६—३८ ॥

३७—३८] ति० टी०—अभिषेकं तदुपकरणम् ॥३७॥३८॥

रा० टी०—सप्तेति । सप्तसप्त चतुर्दश वर्षाणीत्यर्थः । जटेत्यादिब्रह्मचर्योचितचिह्नानामुपलक्षणम् ॥ ३७ ॥

रा० टी०—भरत इति । कोशलपतेः नित्यकोशलाधीशस्य तव वसुधां प्रशास्तु पालयतु । वसुधाविशेषणं नानेत्यादि ॥३८॥

३९ ] ति० टी०—एतेन वरद्वयप्रदानेन निमित्तेन ॥ ३९ ॥

रा० टी०—एतेनेति । एतेन संभावितत्वद्वियोगजनितेन कारुण्येन करुणया समाप्लुतः युक्तः अत एव शोकसंक्लिष्टवदनः अयं नरेन्द्रः त्वां निरीक्षितुं न शक्नोति ॥ ३९ ॥

गो०टी०—एतेनेति । एतेन वरद्वयप्रदाननिमित्तेन ३९॥४०॥

४० ] ति० टी०—सत्येन सत्यपरिपालनेन ॥ ४० ॥

रा० टी०—एतदिति । हे रघुनन्दन ! नरेन्द्रस्य वचनं वक्तुमभिप्रेतं कुरु अत एव महता सत्येन युक्तं नरेन्द्रं तारयस्व तत्सत्यप्रतिज्ञत्वं निर्वाहयेत्यर्थः ॥ ४० ॥

४१ ] ति० टी०—शोकं तत्सूचकं विकारं न प्रविव्यथे च मनसेति शेषः । राजा च राजा तु पुत्रव्यसनाभितप्तो भावितद्वियोगव्यसनेनाभितप्तः बभूवेति शेषः ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

रा० टी०—इतीवेति । परुषमपरुषत्वेन प्रतीयमानम् आचारकिंचन्तप्रकृतिककर्तृकिंचन्तम् रामः शोकं नैव प्रविवेश रामस्यापि तत्संमतमिति तात्पर्यम् । महानुभावोऽपि राजा पुत्रव्यसनाभितप्तः संभावितपुत्रवियोगजनितदुःखाक्रान्तः सन् प्रविव्यथे चञ्चलचित्तोऽभवत् ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

गो० टी०—इतीति । इवशब्देन अन्यान्यपि परुषाणि बहून्युक्तानीति मन्यते शोकं मुखवैवर्ण्यादिबाह्यविकारम् प्रविव्यथे चापि रामविकारादर्शनेनाप्यधिकं विव्यथ इत्यर्थः ॥४१॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टादशः सर्गः ॥ १८ ॥

---

१ ] ति० टी०—अथाभिषेकवनवासयोः समचित्ततया धीरोदात्तमहापुरुषत्वं रामस्याह—तदिति । मरणोपमं शोककृता ॥१॥

---

१ वसिति रा. पाठः । २ इममिति गो. रा. पाठः । ३ अजिनेति गो. रा. पाठः । ४ वसेति गो. रा. पाठः । ५ पुरे इति गो. पाठः । ६ कुञ्जरामिति गो. रा. पाठः । ७ शोकसंक्लिष्टेति गो. रा. पाठः । ८ स्विदि गो. पाठः ।

एवमस्तु गमिष्यामि वनं वस्तुमहं त्वितः । जटाचीरधरो राज्ञः प्रतिज्ञामनुपालयन् ॥ २ ॥
इदं तु ज्ञातुमिच्छामि किमर्थं मां महीपतिः । नाभिनन्दति दुर्धर्षो यथापूर्वमरिंदमः ॥ ३ ॥
मन्युर्न च त्वया कार्यो देवि ब्रूमि तवाग्रतः । यास्यामि भव सुप्रीता वनं चीरजटाधरः ॥ ४ ॥
हितेन गुरुणा पित्रा कृतज्ञेन नृपेण च । नियुज्यमानो विस्रब्धः किं न कुर्यामहं प्रियम् ॥ ५ ॥
अलीकं मानसं त्वेकं हृदयं दहते मम । स्वयं यन्नाह मां राजा भरतस्याभिषेचनम् ॥ ६ ॥
अहं हि सीतां राज्यं च प्राणानिष्टान्धनानि च । हृष्टो भ्रात्रे स्वयं दद्यां भरताय प्रचोदितः ॥ ७ ॥
किं पुनर्मनुजेन्द्रेण स्वयं पित्रा प्रचोदितः । तव च प्रियकामार्थं प्रतिज्ञामनुपालयन् ॥ ८ ॥
तथाश्वासय ह्रीमन्तं किं त्विदं यन्महीपतिः । वसुधासक्तनयनो मन्दमश्रूणि मुञ्चति ॥ ९ ॥

रा० टी०—तदिति । अप्रियं पितुरिति शेषः । अत एव मरणोपमं वचनं श्रुत्वा अमित्रघ्नः देवशत्रुसूदनः रामः कैकेयामिदमब्रवीत् ॥ १ ॥

गो० टी०—तदिति । मरणोपममिति लोकदृष्ट्या ॥ १ ॥

२-३] ति० टी०—न द्विर्भाषत इत्युक्तत्वादेवमस्त्वित्येव केवलमाह, यद्वा एवमस्तु भरताभिषेकोऽस्तु ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—एवमिति । वस्तुं वासं कर्तुमितः भवत्याः अभिप्रेतत्वात् ॥ २ ॥

गो० टी०—एवमिति । इतः अस्मान्नगरात् ॥ २ ॥

रा० टी०—इदमिति । अभिनन्दति अभिनन्दयति वचनाद्यैरिति शेषः अन्तर्भावितणिजर्थः ॥ ३ ॥

गो० टी०—इदं त्विति । यद्यप्येतेन कारुण्येन समाप्लुत इत्यभिनन्दने हेतुरुक्तः तथापि मत्स्वभावं जानन् किमर्थं नाभिनन्दतीत्याहेति बोध्यम् । यथापुरं यथापूर्वम् ॥ ३ ॥

४ ] ति० टी०—मन्युर्नेति । राजाभिप्रायज्ञानेच्छया प्रभेनेति शेषः । ब्रूमि ब्रवीमि । एतावज्ज्ञात्वा सर्वथा यास्याम्येव न त्वन्यथा शङ्कितव्यमिति भावः ॥ ४ ॥

रा० टी०—मन्युरिति । अग्रतः अग्रे यतो ब्रूमि ब्रवीमि ततः मन्युः मदुक्तमनङ्गीकृत्यैवान्यत्पृच्छतीत्येवंबुद्ध्या कोपो न कार्यः तत्र हेतुः वनं यास्यामि आगमशासनस्य संज्ञापूर्वकविधेश्चानित्यत्वादीङ्गुणयोरभावः ॥ ४ ॥

गो० टी०—मन्युरिति । मन्युः दैन्यम् ‘मन्युर्दैन्ये क्रतौ क्रुधि’ इत्यमरः । ब्रूमि ब्रवीमि ॥ ४ ॥

५ ] ति० टी०—कृतज्ञेन स्वकृतस्वापत्राणज्ञेन । विस्रब्धो निर्विशङ्कः ॥ ५ ॥

रा० टी०—हितेनेति । हितेन प्रियोपदेशकर्त्रा गुरुणा कृतज्ञेन पित्रा च नियुज्यमानः विस्रब्धः त्वद्वचने कृतविश्वासोऽहं त्वत्प्रीतिविषयीभूतं किमहं न कुर्यां सर्वं करिष्यामीत्यर्थः ॥ ५ ॥

गो० टी०—हितेनेति । हितेन हितपरेण गुरुणेत्यनेन रामस्य तस्मान्मन्त्रविशेषस्वीकारोऽस्तीति गम्यते । कृतज्ञेन स्वकृतवरप्रदानाभिज्ञेन ॥ ५ ॥

६ ] ति० टी०—किं त्विदं मानसं मनसि वर्तमानमलीकं दुःखम् । किं तत्राह—स्वयमित्यादि ॥ ६ ॥

रा० टी०—नन्वेवं चेत्तत्प्रियं कुर्वित्यत आह—अलीकमिति । अलीकं दुःखम् ॥ ६ ॥

गो० टी०—अलीकमिति । अलीकम् अप्रियं मानसं मनसि वर्तमानम् ॥ ६ ॥

७-८ ] ति० टी०—अयमर्थस्त्वद्दुःखावहत्वाद्राज्ञा तव साक्षाद्वक्तुमशक्य इति चेत्तत्राह—अहं हीति । प्रचोदितः त्वयापीति शेषः । प्रतिज्ञाकरणं विनापि त्वदुक्तिमात्रेण राज्यादि दद्याम्, तत्र किं वक्तव्यं त्वत्प्रियार्थं राज्ञा प्रेरितः स्वकृतप्रतिज्ञामनुपालयन् हेतौ शता तत्पालनाद्धेतो राज्यं दद्यामित्यर्थः ॥ ७ ॥ ८ ॥

रा० टी०—ननु कार्यस्य दुष्करत्वेन करणसंशयात्साक्षान्नोक्तमित्यत आह—अहमिति । प्रचोदितः प्रेरितः त्वयेति शेषः । उत्तरोक्तिस्वारस्यात् । तर्हि प्रियकामार्थं प्रीतिकामनया पित्रा प्रचोदितः प्रेरितोऽहं प्रतिज्ञां भवदादिप्रार्थनया स्वकृतनियोगमनुपालयन्सन् भरताय राज्यं किं न दद्याम् । श्लोकद्वयमेकान्वयि । राज्यमात्रं कर्मावर्तते ॥ ७ ॥ ८ ॥

गो० टी०—तवाप्रीतिर्भविष्यतीति नोक्तवानित्याशङ्क्याह—अहं हीति । सीतां धनुर्भङ्गकाल इति भावः ॥ ७ ॥

गो० टी०—किं पुनरिति । पित्रा प्रचोदितस्तव प्रियकामार्थं प्रतिज्ञामनुपालयंश्च दद्यामिति किं पुनः ॥ ८ ॥

९ ] ति० टी०—मद्विषयकनियोगसंकोचेन ह्रीमन्तं राजानमाश्वासय । इदं किं किंहेतुकम् । तदेवाह—यदित्यादि ॥ ९ ॥

रा० टी०—तथेति । यतो महीपतिः वसुधासक्तनयनः अधोदृष्टिरित्यर्थः । अश्रूणि विमुञ्चति त्यजति तं ह्रीमन्तम् अनाज्ञाप्याज्ञापकत्वेन लज्जावन्तं महीपतिमिदं भवदाज्ञासं किंतु नाशक्यमित्यर्थः । इति आश्वासय । तथाशब्दः इत्यर्थे ॥ ९ ॥

गो० टी०—तदिति । इमं राजानं त्वमाश्वासय अश्रूणि मुञ्चतीति यत् इदं किंतु निर्हेतुकमित्यर्थः ॥ ९ ॥ १० ॥

१ अभिनेति गो. पाठः । २ पुरमिति गो. पाठः । ३ दहतीव मे इति गो. पाठः । ४ भ्रात्रे प्रचोदित इति गो. पाठः । ५ तथेति गो. पाठः । ६ ह्रीमं त्वमिति गो. पाठः । ७ किंतु इमिति गो. रा. पाठः ।

गच्छन्तु चैवानयितुं दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादद्यैव नृपशासनात् ॥ १० ॥
दण्डकारण्यमेषोऽहं गच्छाम्येव हि सत्वरः । अविचार्य पितुर्वाक्यं समा वस्तुं चतुर्दश ॥ ११ ॥
सा हृष्टा तस्य तद्वाक्यं श्रुत्वा रामस्य केकयी । प्रस्थानं श्रद्दधाना सा त्वरयामास राघवम् ॥ १२ ॥
एवं भवतु यास्यन्ति दूताः शीघ्रजवैर्हयैः । भरतं मातुलकुलादिहावर्तयितुं नराः ॥ १३ ॥
तव त्वहं क्षमं मन्ये नोत्सुकस्य विलम्बनम् । राम तस्मादितः शीघ्रं वनं त्वं गन्तुमर्हसि ॥ १४ ॥
व्रीडान्वितः स्वयं यच्च नृपस्त्वां नाभिभाषते । नैतत्किंचिन्नरश्रेष्ठ मन्युरेषोऽपनीयताम् ॥ १५ ॥
यावत्त्वं न वनं यातः पुरादस्मादतित्वरन् । पिता तावन्न ते राम स्नास्यते भोक्ष्यतेऽपि वा ॥ १६ ॥
धिक्कष्टमिति निःश्वस्य राजा शोकपरिप्लुतः । मूर्छितो न्यपतत्तस्मिन्पर्यङ्के हेमभूषिते ॥ १७ ॥
रामोऽप्युत्थाप्य राजानं कैकेय्याभिप्रचोदितः । कशयेव हतो वाजी वनं गन्तुं कृतत्वरः ॥ १८ ॥

१० ] ति० टी०–अनिर्वृत्तस्वकार्यो कथमाश्वासयामीत्यत आह–गच्छन्त्वित्यादि ॥ १० ॥

रा० टी०–स्वगमनाभावशङ्कां निवर्तयन्नाह–गच्छन्त्विति । नृपशासनाद्राजाज्ञां संप्राप्य शीघ्रजवैः अतिवेगविशिष्टैः हयैः भरतमानयितुमानेतुं दूता गच्छन्तु । "ल्यब्लोपे कर्मण्यधिकरणे च" इत्यनुशासनविहितात्र पञ्चमी ॥ १० ॥

११ ] ति० टी०–अविचार्य युक्तायुक्तविचारमकृत्वैवेत्यर्थः ॥ ११ ॥

रा० टी०–दण्डकेति । एषः त्वदृष्टिपथं प्राप्तोऽहं पितुर्वाक्यमविचार्य किमर्थमिदमुच्यत इति विचारमकृत्वैव चतुर्दश समाः वर्षाणि वस्तुं वासं कर्तुं सत्वरः सन् दण्डकारण्यं गच्छामि ॥ ११ ॥

गो० टी०–दण्डकेति । पितुर्वाक्यमविचार्य वनं गच्छेति पित्रा नोक्तमिति विचारमकृत्वेत्यर्थः। समाः संवत्सरान्॥११-१२

१२-१३ ] ति० टी०–प्रस्थानं वनगमनम् । श्रद्दधानावश्यमयं प्रस्थानं करिष्यतीति निश्चयवती ॥ १२ ॥ १२ ॥

रा० टी०–सेति । तस्य रामस्य तद्वनप्रस्थानबोधकं वाक्यं श्रुत्वा हृष्टा स्वेप्सितरघुनाथप्रतिज्ञातार्थसिद्धिहेतुकहर्षं प्राप्ता सा कैकेयी प्रस्थानं श्रद्दधाना प्रस्थानविषयकश्रद्धावती सती राघवं त्वरयामास शीघ्रं कथयामासेत्यर्थः कथनरूपधात्वर्थे णिच् ॥ १२ ॥

रा० टी०–तत्कथनमेवाह–एवमिति । आवर्तयितुमानेतुं नराः नीतिज्ञाः दूताः यास्यन्ति ॥ १३ ॥

१४] ति०टी०–उत्सुकस्य वनगमनोत्सुकस्य क्षमं युक्तम् १४

रा० टी०–भरतागमने एतस्य यात्रा न स्यादिति मन्यमाना आह–तवेति । हे राम ! उत्सुकस्य गमनोत्सवविशिष्टस्य तव विलम्बनं क्षमम्युचितं न मन्ये तस्माद्धेतोः इतः शीघ्रं गन्तुमर्हसि ॥ १४ ॥

गो० टी०–अयं यावद्भरतागमनं विलम्बिष्यते चेन्महानयः स्याद्भरतस्य ज्येष्ठभ्रातृभक्तत्वादिति मत्वाह–तव त्विति । उत्सुकस्य भरताभिषेकदर्शनोत्सुकस्य गमनोत्सुकस्य वा ॥ १४॥

१५ ] ति० टी०–राजानभिनन्दनहेतुमाह–व्रीडेति । स्वसत्यस्य पारप्राप्त्यदर्शनजलज्जायुक्तः । चो हेतौ । अतस्त्वां नाभिभाषते एतदनभिभाषणं न किंचिन्नान्यकारणकम् त्वदविलम्बगमनाभाव एवास्य कारणम्, अत एव मन्यू राज्ञो दैन्यं त्वाविलम्बगमनेनापनीयतां त्वयेति शेषः ॥ १५ ॥

रा० टी०–ननु राजा कुतो नाज्ञापयतीत्यत आह–व्रीडेति । यतः नृपो व्रीडान्वितः अतिप्रियपुत्रं प्रवासार्थं कथमाज्ञापयिष्यामीति लज्जायुक्तः अतस्त्वां नाभिभाषते हे नरश्रेष्ठ ! एतदनभिभाषणं किंचिन्न भवेद्गमनप्रतिबन्धकं नेत्यर्थः । अतः एष उपस्थितः मन्युः राक्षसविषयकः ऋषीणां कोपः अपनीयतां निवर्त्यताम् द्रुतं वनगमनेन राक्षसा हन्यन्तामिति तात्पर्यम् ॥ १५ ॥

गो० टी०–व्रीडान्वित इति । नृपो व्रीडान्वितः सन् स्वयं नाभिभाषत इति यत् एतत् न किंचिद्विचारानर्हं व्रीडां विना कारणान्तराभावात् मन्युः स्वयं नाभिभाषत इत्याग्रहः दैन्यं वा ॥ १५ ॥ १६ ॥

१६-१७ ] ति० टी०–इतोऽपि न युक्तो विलम्ब इत्याह–यावदिति । मया दरिद्राधमर्णत्वेन तथा शपथैः प्रतिबन्धादिति भावः ॥ १६ ॥ १७ ॥

रा० टी०–शीघ्रं वनगमने हेत्वन्तरमाह–यावदिति । न स्नास्यते न भोक्ष्यते वनगमनसंशयादिति भावः नकार उभयान्वयी ॥ १६ ॥

रा० टी०–स्नानाद्यभावे हेतुमाह–धिगिति । शोकपरिप्लुतः संभावितवियोगजनितशोकव्याकुलचित्तः न्यपतत् ॥१७॥

गो० टी०–धिगिति । उक्तासत्यवचनं श्रुत्वेति भावः॥१७॥

१८ ] ति० टी०–कृतत्वरोऽभूदिति शेषः ॥ १८ ॥

रा० टी०–राम इति । कशया कस्य स्वर्गवासिनः शं मङ्गलं यया तया केकय्या अभिप्रचोदितः प्रेरितः हतः स्वामितारिहननकर्ता रामः राजानमुत्थाप्य अवाजी वाज्युपलक्षितयानरहितः सन् एव वनं गन्तुं कृतत्वरः आसीदिति शेषः ।

१ इतो गच्छामीति गो. पाठः । २ हीति गो. रा. पाठः । ३ तवेति गो. पाठः । ४ क्षमीति गो. पाठः । ५ नाहत इति गो. पाठः ।

तदप्रियमनार्याया वचनं दारुणोदयम् । श्रुत्वा गतव्यथो रामः कैकेयीं वाक्यमब्रवीत् ॥ १९ ॥
नाहमर्थपरो देवि लोकमावस्तुमुत्सहे । विद्धि मामृषिभिस्तुल्यं विमलं धर्ममास्थितम् ॥ २० ॥
यत्तत्रभवतः किंचिच्छक्यं कर्तुं प्रियं मया । प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ॥ २१ ॥
न ह्यतो धर्मचरणं किंचिदस्ति महत्तरम् । यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २२ ॥
अनुक्तोऽप्यत्रभवता भवत्या वचनादहम् । वने वत्स्यामि विजने वर्षाणीह चतुर्दश ॥ २३ ॥
न नूनं मयि कैकेयी किंचिदाशंससे गुणान् । यद्राजानमवोचस्त्वं ममेश्वरतरा सती ॥ २४ ॥
यावन्मातरमापृच्छे सीतां चानुनयाम्यहम् । ततोऽद्यैव गमिष्यामि दण्डकानां महद्वनम् ॥ २५ ॥

हत इत्यत्र कर्माविवक्षया अकर्मकत्वेन कर्तरि निष्ठा । इव एवार्थे ॥ १८ ॥

गो० टी०–राम इति । कृतत्वरः अभूदिति शेषः १८॥१९॥

१९ ] ति० टी०–दारुणोदयं दारुणार्थकं प्रश्नोत्तरम् ॥१९॥

रा० टी०–तदिति । दारुणोदयं दारुणानां राक्षसानामुत्कर्षेण अयः प्रक्षेपः यस्मिन् तत् राक्षसत्वप्रक्षेपणबोधकमित्यर्थः । अत एव तदप्रियं तेषां राक्षसानां न प्रियं यस्मिंस्तत् अनार्यायाः सर्वश्रेष्ठाया कनिष्ठाया वा केकय्या वचनं श्रुत्वा गतव्यथः नित्यनिवृत्तदुःखः रामः इदमब्रवीत् उदयमित्यत्र असनार्थकाद्धीत्यत्र प्रश्लिष्टादीधातारेच् ॥ १९ ॥

२० ] ति० टी०–लोकमावस्तुं लोके वस्तुं नोत्सहे । अर्थपरो धनपरः । विमलं धर्ममास्थितं तत्त्वज्ञानरूपं धर्ममाश्रितम् । ऋषयोऽत्र तत्त्वज्ञाः एतेन स्वस्य सुखदुःखयोः समता निवृत्तिमार्गस्थता च स्वाभाविकीति ध्वनितम् ॥ २० ॥

रा० टी०–तद्वचनमेवाह–नेति । हे देवि ! अहमर्थपरः इदानीं राज्याभिलाषी न किंतु लोकमावस्तुमावासयितुमुत्सहे इच्छामि । तत्र हेतुः ऋषिभिः तुल्यं तोलितं निर्णीतमिति यावत् विमलं प्रजामलनिवर्तकं धर्ममास्थितं कुर्वन्तमित्यर्थः । मां विद्धि जानीहि अन्तर्भावितणिजर्थो वसतिः ॥ २० ॥

गो० टी०–नेति । लोकमावस्तुम् लोके वस्तुम् "उपान्वध्याङ्वसः" इति कर्मत्वम् । धर्मम् आस्थितम् आश्रितम् अनेन राज्याय भरतागमनं प्रतीक्षते राम इति कैकेयीशङ्का वारिता २०

२१ ] ति० टी०–तत्रभवतः पूज्यस्य पितुः वनगमनं किंयत्किंचिदतोऽधिकमपि प्रियं कर्तुं शक्यम् तत्कृतमेव विद्धीति शेषः ॥ २१ ॥

रा० टी०–यदिति । तत्रभवतः पूज्यस्य पितुः यत्किंचित्प्रियं कर्तुं मया शक्यं तत्प्राणान् पितृप्रियप्रतिबन्धकीभूतप्राणप्रियानपि परित्यज्य सर्वथा सर्वप्रकारेण कृतमेव विद्धीति पूर्वेणान्वयः ॥ २१ ॥

गो० टी०–यदिति । अत्रभवतः पूज्यस्य पितुः कृतमेवेति विद्धीति शेषः ॥ २१ ॥

२२ ] ति० टी०–तथा निश्चये हेतुमाह–न हीति । हि हेतौ । शुश्रूषा पादसंवाहनादिरूपा वचनक्रियाज्ञाकरणम् ॥ २२ ॥

रा० टी०–पितृप्रियस्य अवश्यं कर्तव्यत्वे हेतुमाह–नेति । अतः पितृप्रियाचरणाद्वचनक्रिया आज्ञापिताचरणम् ॥ २२ ॥

गो० टी०–नहीति । शुश्रूषा पादसंवाहनादिः वचनक्रिया वचनकरणम् ॥ २२ ॥ २३ ॥

२३ ] ति० टी०–अत्रभवता पूज्येन पित्रा । भवत्या वचनात्पितृवचनवत्तत्पत्नीवचनस्याप्यवश्यकर्तव्यत्वात् । अनेन सापत्नमातुरप्यनिष्टनिष्ठमपि वचनमेव परिपाल्यम्, किमुत मातापित्रोरिति सूचितम् ॥ २३ ॥

रा० टी०–अनुक्त इति । अत्रभवता पूज्येन पित्रा अनुक्तः साक्षादनाज्ञप्तोऽपि भवत्याः वचनाद्वने वत्स्यामि ॥ २३ ॥

२४ ] ति० टी०–हे कैकेयि ! नूनं मयि किंचित्कमपि गुणं नाशंससे न जानासि । तत्र हेतुः–यदित्यादि । 'गुण्यान्' इति पाठे पितृपत्न्याद्याज्ञापरिपालनादिरूपानित्यर्थः ॥ २४ ॥

रा० टी०–नेति । हे कैकेयि ! मयि विद्यमानान्मुख्यान्सत्यप्रतिज्ञत्वादीन्गुणान्न आशंससे अचकथः वर्तमानसामीप्य इति भूते लट् एतेन तत्कथने एवं दुःखं न स्यादिति सूचितम् । अर्धं पृथक्–यदिति । यतः त्वं ईश्वरतरा अतिपूज्या ततः त्वं यद्राजानमवोचः अचकथः तद्दण्डकानां दण्डकनामकेक्ष्वाकुसुतानां महद्वनं शुक्रशापेन वनत्वं प्राप्तं राष्ट्रमद्यैव गमिष्यामि परंतु यावन्मातरमापृच्छे तदाज्ञां गृह्णामीत्यर्थः, तावदेव विलम्बनमिति शेषः । सार्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०–नेति । गुणमार्जवौदार्यादिगुणं नाशंससे न जानीष इत्यर्थः । ईश्वरतरा अत्यन्तनियन्त्री ॥ २४ ॥

२५ ] ति० टी०–यावदिति । पूर्वार्धे तावत्क्षमां कुर्विति शेषः । ततस्तदनन्तरम् । दण्डकानां तन्नामकक्षत्रियाणाम् तन्नामकजनपदरूपं शापवशाद्वनत्वं प्राप्तम् ॥ २५ ॥

गो० टी०–अद्यैव गन्तव्यमित्युक्तं तत्र यत् किंचिद्विलम्बं याचते–यावदिति । मातरं यावदापृच्छे सीतां चानुनयामि तावदनुज्ञां कुर्विति शेषः । ततः तदनन्तरम् अद्यैव दिने दण्डकानां महद्वनं दण्डो नामेक्ष्वाकुसुतस्तस्य राष्ट्रं शुक्रशापात्पांसुवर्षेण विनाशितं सदरण्यमभूत् तद्राष्ट्रं तन्नाम्ना दण्डकमित्युच्यते "संज्ञायां कन्" इति कन्प्रत्ययः प्रदेशभेदाद्बहुवचनम् ॥ २५ ॥

१ कृतत्वरमिति गो. पाठः । २ अनेनेति गो. पाठः । ३ गुण्यमिति गो. पाठः ।

भरतः पालयेद्राज्यं शुश्रूषेच्च पितुर्यथा । तथा भवत्या कर्तव्यं स हि धर्मः सनातनः ॥ २६ ॥
रामस्य तु वचः श्रुत्वा भृशं दुःखगतः पिता । शोकादशक्नुवन्वक्तुं प्ररुरोद महास्वनम् ॥ २७ ॥
वन्दित्वा चरणौ राज्ञो विसंज्ञस्य पितुस्तदा । कैकेय्याश्चाप्यनार्याया निष्पपात महाद्युतिः ॥ २८ ॥
स रामः पितरं कृत्वा कैकेयीं च प्रदक्षिणम् । निष्क्रम्यान्तःपुरात्तस्मात्स्वं ददर्श सुहृज्जनम् ॥ २९ ॥
तं बाष्पपरिपूर्णाक्षः पृष्ठतोऽनुजगाम ह । लक्ष्मणः परमक्रुद्धः सुमित्रानन्दवर्धनः ॥ ३० ॥
आभिषेचनिकं भाण्डं कृत्वा रामः प्रदक्षिणम् । शनैर्जगाम सापेक्षो दृष्टिं तत्राविचालयन् ॥ ३१ ॥
न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति । लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षयः ॥ ३२ ॥
न वनं गन्तुकामस्य त्यजतश्च वसुंधराम् । सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥ ३३ ॥
प्रतिषिध्य शुभं छत्रं व्यजने च स्वलंकृते । विसर्जयित्वा स्वजनं रथं पौरांस्तथा जनान् ॥ ३४ ॥

---

२६ ] ति० टी०—स हि पितृशुश्रूषारूपः ॥ २६ ॥

रा० टी०—स्वगमनानन्तरकालिकं केकयीकर्तव्यमाह—भरत इति । पितुः पितरं संबन्धसामान्यविवक्षया षष्ठी ॥२६॥

गो० टी०—भरत इति । धर्मः सनातन इत्यत्र धर्मापेक्षया पुंलिङ्गत्वम् ॥ २६ ॥

२७ ] ति० टी०—बाष्पं रोद्धुमशक्नुवन् ॥ २७ ॥

रा०टी०—रामस्येति।शोकाग्निश्रितवियोगजनितदुःखात् २७॥

गो०टी०—स इति।बाष्पमशक्नुवन् निरोद्धुमिति शेषः॥२७॥

२८ ] ति० टी०—अनार्याया लोकदृष्ट्या तादृश्या अपि स्वयं तद्दोषमगणयन्निति शेषः । निष्पपात निश्चक्राम ॥ २८ ॥

रा० टी०—वन्दित्वेति । अनार्यायाः कनिष्ठायाः महाद्युतिः समातिशयरहितप्रकाशविशिष्टः ॥ २८ ॥

गो० टी०—वन्दित्वेति । निष्पपात निर्जगाम ॥२८—३०॥

२९ ] ति० टी०—कैकेयीप्रदक्षिणं सम्यगाचरितं मदिष्टं त्वयेत्यत्यन्तसंतोषाच्छिष्टाचाराचेति बोध्यम् ॥ २९ ॥

रा० टी०—स इति । स्वमात्मीयम् ॥ २९ ॥

३० ] ति० टी०—बाष्पपरिपूर्णाक्षः समीपस्थित्यावगततद्वृत्तान्तत्वात् । परमक्रुद्ध इत्यनेन लक्ष्मणेऽविद्या विक्षेपशक्तिमती दर्शिता, रामे च न सा इति ध्वनितम् ॥ ३० ॥

रा० टी०—तमिति । अक्रुद्धः रामाभिप्रेतत्वेन क्रोधरहितः लक्ष्मणः परं सर्वरक्षकं तं राममनुजगाम ॥ ३० ॥

३१ ] ति० टी०—आभिषेचनिकमभिषेकप्रयोजनकं भाण्डमुपकरणजातम् तद्युक्ताभिषेकशालामिति यावत् । संनिहितगङ्गादिपुण्यतीर्थकत्वात् । तत्राभिषेकशालायाम् । दृष्टिमविचालयन्नप्रवर्तयन्सापेक्षः वनं प्रतीति शेषः। यद्वा लोकसमाधानाय तत्त्वप्रहाय नटवदात्मगोपनाय लोकव्यवहारात्यागाय च सापेक्षः स इव तत्र दृष्टिमविचालयन्नत्यजन् अत एव शनैर्जगाम ॥३१॥

रा० टी०—आभिषेचनिकमिति । आभिषेचनिकमभिषेकप्रयोजनकं भाण्डं सामग्रीं प्रदक्षिणं कृत्वा सापेक्षः वनगमनापेक्षासहितः रामः तत्र अभिषेकशालास्थे जने दृष्टिमविचालयञ्जगाम दृष्टिं अविचालयन् इत्यनेन रघुनाथस्य सौशील्यातिशयगुणो व्यक्तः ॥ ३१ ॥

गो० टी०—आभिषेचनिकमिति । आभिषेचनिकमभिषेकप्रयोजनकं भाण्डमुपकरणजातं प्रदक्षिणकरणं प्रशस्तमाङ्गल्यदेवतायतनचतुष्पथादीन् प्रदक्षिणमावर्तयेदित्यादिधर्मशास्त्रोल्लङ्घनभयात् नतु तदासक्त्या दृष्टिं तत्राविचालयन् स्वयं तत्र निरपेक्ष इत्यर्थः। सापेक्षः भरतस्यानेन नाभिषेकोऽस्त्विति प्रार्थनासहितः शनैर्जगाम तत्र देवतासांनिध्यसंभवादिति भावः॥३१॥

३२ ] ति० टी०—धीरोदात्तत्वाच्च न तद्विघातप्रयुक्तक्रोधदुःखादीत्याह—न चेति । लक्ष्मीं सहजां शोभाम् । कान्तत्वादविनाशिकान्तियुक्तत्वात् । लोककान्तस्य शीतरश्मेरिन्दोः क्षयो यथा लक्ष्मीं नापकर्षति तद्वत् ॥ ३२ ॥

रा० टी०—नेति । राज्यनाशः राज्याभिषेकाभावपूर्वकगमनमस्य रामस्य महतीं समाधिकरहितां लक्ष्मीं शोभां नैवापकर्षति न्यूनयतीत्यर्थः। तत्र हेतुः लोककान्तस्य लोककानां भुवनजनानामन्तस्य कालस्य कान्तत्वात्स्वामित्वात् किंच लोककान्तस्य ब्रह्मादित्रयस्य कान्तत्वान्नियामकत्वात् किंच लोककान्तस्य सकलशोभायाः कान्तत्वाच्छोभात्वेत्सकलशोभाहेतुत्वादित्यर्थः। तत्र दृष्टान्तः शीतरश्मेः चन्द्रमसः क्षयो गमनमिव॥३२॥

गो० टी०—न चेति । लक्ष्मीं मुखविकासं राज्यनाशः राज्यभ्रंशः ॥ ३२ ॥

३३ ] ति० टी०—सर्वलोकातिगस्येव जीवन्मुक्तस्येव ॥ ३३॥

रा० टी०—न वनमिति । सर्वलोकातिगस्य सकलभुवनातिवर्तिनः सकललोकोर्ध्ववर्तिसाकेतलोकस्थस्येत्यर्थः रामस्य चित्तविक्रिया पित्रादिवियोगहेतुकचित्तविकारो नैव लक्ष्यते । इवशब्द एवार्थे ॥ ३३ ॥

गो० टी०—रामस्य मुखवैवर्ण्यादिबाह्यविकाराभावमभिधाय मानसविकाराभावमप्याह—न वनमिति । सर्वलोकातिगस्य तुल्यमानावमानस्य परमयोगीश्वरस्येत्यर्थः ॥ ३३ ॥

३४ ] ति०टी०—छत्रादिप्रतिज्ञाविरोधाद् व्यजने चामरे३४

---

१ स रामस्येति गो. पाठः । २ भृशदुःखेति रा. पाठः । ३ हत इति गो. पाठः । ४ बाष्पमिति गो. पाठः । ५ राम इति गो. पाठः । ६ तथेति गो. पाठः । ७ क्षयेति गो. पाठः ।

धारयन्मनसा दुःखमिन्द्रियाणि निगृह्य च । प्रविवेशात्मवान्वेश्म मातुरप्रियशंसिवान् ॥ ३५ ॥
सर्वोऽप्यभिजनः श्रीमाञ्छ्रीमतः सत्यवादिनः । नालक्षयत रामस्य [1]कंचिदाकारमानने ॥ ३६ ॥
उचितं च महाबाहुर्न जहौ हर्षमात्मवान् । शारदः समुदीर्णांशुश्चन्द्रस्तेज इवात्मजम् ॥ ३७ ॥
वाचा मधुरया रामः सर्वं संमानयञ्जनम् । मातुः समीपं धर्मात्मा प्रविवेश महायशाः ॥ ३८ ॥
तं गुणैः समतां प्राप्तो भ्राता विपुलविक्रमः । सौमित्रिरनुवव्राज धारयन्दुःखमात्मजम् ॥ ३९ ॥
प्रविश्य वेश्मातिभृशं मुदा युतं समीक्ष्य तां चार्थविपत्तिमागताम् ।
न चैव रामोऽत्र जगाम विक्रियां सुहृज्जनस्यात्मविपत्तिशङ्कया ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०–प्रतीति । छत्रादेकं प्रतिषिध्य स्वजनादीन् विसर्जयित्वा विसर्ज्य अदुःखं देवदुःखनिवर्तकयत्नं धारयन् चिन्तयन् इन्द्रियाणि द्रष्टॄणां मनआदीति निगृह्य गृहीत्वैव आत्मवान् जीवादिनियन्ता रामः मातुः कौसल्यायाः वेश्म गृहं प्रविवेश । अप्रियशंसिवान् अप्रियमेतद्गमनमिति परस्परमुचिवान् सर्वोऽप्यभिजनः श्रीमतो रामस्य आनने मुखे आकारं पित्रादिवियोगहेतुकदुःखाभासहेतुकविकृतं नालक्षयतअपश्यत् विकृतेरभावोऽस्तीति भावः । अप्रियशंसिवानित्येतद्गटकीभूताप्रियशब्दात्संबन्धसामान्यविवक्षया षष्ठी ततः षष्ठीति सूत्रेण समासः श्लोकत्रयं संमिलितान्वयि ॥ ३४–३६ ॥

गो० टी०–प्रतिषिध्येत्यादि । व्यजने वालव्यजने ॥ ३४ ॥

३५ ] ति० टी०–मनसा दुःखं धारयन् इन्द्रियाणि निगृह्य मनःस्थदुःखाभिव्यञ्जकचेष्टारहितानि कृत्वा आत्मवान्धीरोदात्तः मनसा दुःखं परमसुखं दुःखलेशेनापि रहितं वनगमनजं धारयन्निन्द्रियाणि निगृह्य तस्य सुखस्य लोकदृष्ट्या राज्यभङ्गजदुःखस्य वा यथा यथाभिव्यक्तिर्न भवति तथा मध्यस्थतया स्थापयित्वात्मवान्साक्षात्कृतनित्यनिर्दुःखस्वतत्त्व इत्यप्यर्थान्तरमत्र व्यङ्ग्यं बोध्यम् । दुःखमित्यस्य कैकेय्या लोकापवादजमित्यर्थं इति कश्चित् । अप्रियशंसिवानप्रियं शंसिष्यन् छान्दसः ॥ ३५ ॥

गो० टी०–धारयन्निति । रामस्य परदुःखासहिष्णुत्वाद्दुःखवत्त्वेन सुहृज्जनदुःखदर्शनजं दुःखमुच्यते अप्रियशंसिवान् अप्रियमभिधातुकामः क्वसुः समासाभ्यासलोप आर्षः ॥ ३५ ॥

३६ ] ति० टी०–अभिजनोऽभितो वर्तमानो जनः श्रीमान्रामाभिषेकप्रसङ्गेन कृतैरलंकारैः शोभावानाकारं विकृताकारं नालक्षयत असत्त्वादेवेत्यर्थः ॥ ३६ ॥

गो० टी०–सर्व इति । आकारं विकृताकारं श्रीमान् रामाभिषेकार्थं कृतालंकारः ॥ ३६ ॥

३७–३९ ] ति० टी०–उचितं सहजसत्त्वगुणोचितं वनगमनजन्योचितं च । आत्मजं हर्षमात्मनि शरीरे जातं स्वभावसिद्धं हर्षमित्यर्थः ॥ ३७–३९ ॥

रा० टी०–उचितमिति । उचितं पुत्रविहिताचरणं हर्षं च न जहौ, तत्र दृष्टान्तः आत्मजं स्वभावसिद्धं तेजश्चन्द्र इव । आत्मशब्दः स्वभाववाची ॥ ३७ ॥

गो० टी०–उचितमिति । उचितं योग्यं सहजमित्यर्थः ॥ ३७ ॥

रा० टी०–वाचेति । धर्मात्मा सकलधर्मप्रवर्तकः ॥ ३८ ॥

गो० टी०–एतादृशदुर्दशायामपि रमयितृत्वरूपं रामशब्दार्थं प्रकटयति–वाचेति ॥ ३८ ॥

रा० टी०–तमिति । गुणैः अनियतस्नेहसौशील्यादिभिः समतां प्राप्तः अतिस्नेहादिमत्त्वेन रामसदृश इत्यर्थः । आत्मजमन्तःकरणे उत्पन्नं दुःखं स्वोहितवियोगजनिताधिं धारयन् प्राप्नुवन् ॥ ३९ ॥

गो० टी०–तमिति । गुणैः सुखदुःखादिभिः समतां प्राप्तः समानदुःख इत्यर्थः ॥ ३९ ॥

४० ] ति० टी०–लोकदृष्ट्यार्थविपत्तिमर्थभ्रंशं वीक्ष्यापि रामो विक्रियां न जगाम, किं तु सुहृज्जनस्य कौसल्यादशरथादिरूपस्यात्मनां प्राणानां विपत्तिशङ्कया चिन्तां जगामेति शेषः ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०–प्रविश्येति । मुदा हर्षेणोपलक्षितो रामः युतं सकलसंपत्तिविशिष्टं वेश्म कौसल्यागृहं प्रविश्य अर्थविपत्तिमर्थस्य परमपुरुषार्थस्य रामसंयोगस्येत्यर्थः । विपत्तिमभावमागतां प्राप्तामिव तां कौसल्यामतिभृशमत्यन्तं समीक्ष्य च अत्र अस्मिन्दर्शनेऽपि विक्रियां चित्तविकाराभासं न जगाम । तत्र हेतुः आत्मविपत्तिशङ्कया आत्मनां शरीरसदृशानां मात्रादीनामित्यर्थः । विपत्तिशङ्कया दुःखसंभावनया । एवशब्द इवार्थे चोऽप्यर्थे ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

गो० टी०–प्रविश्येति । अर्थविपत्तिम् अर्थनाशं सुहृज्जनस्य

१ हीति गो. पाठः । २ किंचिदिति गो. रा. पाठः । ३ आत्मन इति गो. पाठः । ४ धीरात्मेति गो. पाठः । ५ अन्वितमिति गो. पाठः । ६ अत्यन्तेति रा. पाठः ।

## विंशः सर्गः ।

कैकेयीगृहान्निष्क्रामति रामेऽन्तःपुरजना रामगुणान्संस्तुत्य सकरुणं पर्यदेवयन् । प्रातराय वन्दारवे रामाय कौसल्या परिष्वज्याशिषा युयोज । रामेण निवेदितस्वगमनवृत्तान्ता शोकपर्याकुला भूमौ पपातातितरात्मदुःखोद्घाटनपूर्वकं भृशं च विललाप ।

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ । आर्तशब्दो महाञ्जज्ञे स्त्रीणामन्तःपुरे तदा ॥ १ ॥
कृत्येष्वचोदितः पित्रा सर्वस्यान्तःपुरस्य च । गतिश्च शरणं चासीत्स रामोऽद्य प्रवत्स्यति ॥ २ ॥
कौसल्यायां यथा युक्तो जनन्यां वर्तते सदा । तथैव वर्ततेऽस्मासु जन्मप्रभृति राघवः ॥ ३ ॥
न क्रुध्यत्यभिशप्तोऽपि क्रोधनीयानि वर्जयन् । क्रुद्धान्प्रसादयन्सर्वान्स इतोऽद्य प्रवत्स्यति ॥ ४ ॥
अबुद्धिर्बत नो राजा जीवलोकं चरत्ययम् । यो गतिं सर्वभूतानां परित्यजति राघवम् ॥ ५ ॥
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः । पतिमाचुक्रुशुश्चापि सस्वनं चापि चुक्रुशुः ॥ ६ ॥
स हि चान्तःपुरे घोरमार्तशब्दं महीपतिः । पुत्रशोकाभिसंतप्तः श्रुत्वा व्यालीयतासने ॥ ७ ॥

---

आत्मविपत्तिं शङ्कया प्राणनाशशङ्कया विक्रियां न जगाम स्वविक्रियास्फुरणे सुहृज्जनो नश्येदिति शङ्कया स्वाविक्रियां राज्यनाशजां नादर्शयदित्यर्थः ॥ ४० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनविंशः सर्गः ॥ १९ ॥

---

१ ] ति० टी०— तस्मिन्निति ॥ १ ॥

रा० टी०—प्रवेशप्रकारं वर्णयन्नाह—तस्मिन्निति । पुरुषव्याघ्रे पुरुषश्रेष्ठे अनिष्क्रामति प्रविशति सति अन्तःपुरे राज्ञ्यन्तर्गृहे स्त्रीणां महामार्तशब्दो जज्ञे ॥ १ ॥

गो० टी०—तस्मिन्निति । आर्तशब्दः आर्तानां यादृशः शब्दस्तादृश इत्यर्थः ॥ १ ॥

२ ] ति० टी०—यः पित्राऽचोदितोऽपि सर्वस्य जनस्यान्तःपुरस्य च कृत्येषु प्रवर्तत इति शेषः। यो गतिः प्राप्यस्य वस्तुनः प्राप्तिमार्गः शरणं रक्षणम् ॥ २ ॥

रा० टी०—तच्छब्दार्थमाविष्कुर्वन्नाह—कृत्येष्विति । सर्वस्यान्तःपुरस्य कृत्येषु अभिप्रेतकार्येषु यः पित्रा अचोदितः अप्रेरितोऽपि गतिः निर्वाहकर्ता शरणं रक्षकश्चासीत् स रामः प्रवत्स्यति वनं गमिष्यति ॥ २ ॥

गो० टी०—कृत्येष्विति । अन्तःपुरस्य कृत्येषु कर्तव्येषु विषये गतिः कर्तृत्वेन प्राप्यः शरणं रक्षिता 'शरणं गृहरक्षित्रोः' इत्यमरः ॥ २ ॥

३ ] ति० टी०—युक्तः सेवातत्परः ॥ ३ ॥

रा० टी०—कौसल्यायामिति । कौसल्यायां जनन्यां स्वमातरि यथा आयुक्तः एकाग्रचित्तः सन् कार्यकारी वर्तते तथैव अस्मास्वपि ॥ ३ ॥

गो० टी०—कौशल्यायामिति । युक्तः सावधानः वर्तते शुश्रूषते ॥ ३ ॥

४ ] ति० टी०—अभिशप्तोऽप्यन्येन कृतवाक्पारुष्योऽपि न क्रुध्यति । क्रोधनीयान्यन्यस्य क्रोधोत्पादकान्यनुकम्पया वर्जयन् । अनेन क्रोधक्रियाकर्तृत्वकर्मत्वयोः प्रतिषेधः । यत्र कुत्रापि क्रुद्धान्स्वयं प्रसादयन् तिष्ठतीति शेषः ॥ ४ ॥

रा० टी०—नेति । अभिशप्तः दुरुक्तोऽपि क्रोधनीयानि क्रोधकारणीभूतवचनानि वर्जयन् विस्मरन् न क्रुध्यति क्रुद्धानस्मान्महिषीजनान्यः प्रसादयन्सन्वर्तत इति शेषः । स रामोऽद्य प्रवत्स्यति ॥ ४ ॥

गो० टी०—न क्रुध्यतीति । यः अभिशप्तोऽपि परुषमुक्तोऽपि न क्रुध्यति क्रोधनीयानि क्रोधहेतुकर्माणि वर्जयन् क्रुद्धान् केवलमाग्रहेण कुपितान् प्रसादयंश्च वर्तते सः इतः अस्माद्देशात्प्रवत्स्यति हन्तेति शेषः ॥ ४ ॥

५ ] ति० टी०—जीवलोकं सर्वप्रजारूपं चरति भक्षयति नाशयतीति यावत् ॥ ५ ॥

रा० टी०—अबुद्धिरिति । योऽयं राजा जीवलोकं चरति दिग्जिगीषया अगच्छदित्यर्थः । सर्वभूतानां गतिं राघवं रामं परित्यजति च स राजा अबुद्धिः कर्तव्यविषयकनिश्चयरहितो नो न अवश्यकर्तव्यबुद्धिरस्यैव प्रेषयतीत्यर्थः । विनापि चं समुच्चयः ॥ ५ ॥

गो० टी०—अबुद्धिरिति । यः सर्वभूतानां गतिं राघवं परित्यजति स नो राजा अबुद्धिः सन् लोकान् चरति भक्षयति नाशयतीत्यर्थः चरगतिभक्षणयोरिति धातुः ॥ ५ ॥

६ ] ति० टी०—पतिमाचुक्रुशुर्निनिन्दुः । सस्वनं चुक्रुशुः रुरुदुः ॥ ६ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण विवत्सा धेनव इव विद्यमानाः सर्वा महिष्यः सस्वरं शब्दं कुर्वन्तं जनमित्यर्थः आचुक्रुशुः निनिन्दुः पतिं राजानं चुक्रुशुः । हे पते ! भवद्विचारितं नास्मद्बुद्धिविषय इत्युच्चारयामासुरित्यर्थः ॥ ६ ॥

गो० टी०—इतीति । आचुक्रुशुः निन्दति स्म । चुक्रुशुः रुरुदुः ॥ ६ ॥

७ ] ति० टी०—व्यालीयत देहमवगुण्ठ्यावाङ्मुखो विलीन इवाभूदित्यर्थः ॥ ७ ॥

---

१ चश्चापीति गो. पाठः । २ लोकानामिति गो. पाठः । ३ एवेति गो. पाठः । ४ सस्वरमिति गो. रा. पाठः ।

रामस्तु भृशमायस्तो निःश्वसन्निव कुञ्जरः। जगाम सहितो भ्रात्रा मातुरन्तःपुरं वशी ॥ ८ ॥
सोऽपश्यत्पुरुषं तत्र वृद्धं परमपूजितम्। उपविष्टं गृहद्वारि तिष्ठतश्चापरान्बहून् ॥ ९ ॥
दृष्ट्वैव तु तदा रामं ते सर्वे समुपस्थिताः। जयेन जयतां श्रेष्ठं वर्धयन्ति स्म राघवम् ॥ १० ॥
प्रविश्य प्रथमां कक्ष्यां द्वितीयायां ददर्श सः। ब्राह्मणान्वेदसंपन्नान्वृद्धान्राज्ञाभिसत्कृतान् ॥ ११ ॥
प्रणम्य रामस्तान्वृद्धांस्तृतीयायां ददर्श सः। स्त्रियो बालाश्च वृद्धाश्च द्वाररक्षणतत्पराः ॥ १२ ॥
वर्धयित्वा प्रहृष्टास्ताः प्रविश्य च गृहं स्त्रियः। न्यवेदयन्त त्वरितं राममातुः प्रियं तदा ॥ १३ ॥
कौसल्यापि तदा देवी रात्रिं स्थित्वा समाहिता। प्रभाते चाकरोत्पूजां विष्णोः पुत्रहितैषिणी ॥ १४ ॥
सा क्षौमवसना हृष्टा नित्यं व्रतपरायणा। अग्निं जुहोति स्म तदा मन्त्रवत्कृतमङ्गला ॥ १५ ॥
प्रविश्य तु तदा रामो मातुरन्तःपुरं शुभम्। ददर्श मातरं तत्र हावयन्तीं हुताशनम् ॥ १६ ॥

---

रा० टी०—स इति। महीपतिः स दशरथः अन्तःपुरे घोरं श्रवणानर्हमार्तशब्दं कारुण्यसंपादकस्वनं श्रुत्वा आसने व्यालीयत वस्त्रेण स्वशरीरमाच्छाद्यावाङ्मुखोऽतिष्ठदित्यर्थः ॥७॥

गो० टी०—स इति। व्यालीयत लज्जादुःखभरेण शय्यायां विलीनोऽभूदित्यर्थः ॥ ७ ॥

८ ] ति० टी०—आयस्तः स्वजनदुःखतः प्राप्तखेदः कुञ्जर इव निःश्वसन्। 'आयत्तः' इति पाठे आयत्तः पराधीनो यः कुञ्जरः स यथा निःश्वसिति तद्वदित्यर्थः ॥ ८ ॥

रा० टी०—राम इति। रामस्तु भृशमत्यन्तमायस्तः आ-समन्ताद्भावेन यः कामस्य स्वेप्सितस्येत्यर्थः। अः प्राप्तिस्तस्मा-द्भावकिबन्तगत्यर्थकासधातोरूपम इति। अनिःश्वसन् क्रोधा-दिरहित इत्यर्थः। कुञ्जरो गज इव मातुरन्तःपुरं जगाम प्राप ॥८॥

गो० टी०—राम इति। भृशमायस्तः व्यसनेषु मनुष्याणां भृशं भवति दुःखित इत्युक्तगुणवत्तयान्तःपुरार्तस्वनश्रवणेना-तिशयेन संजातदुःखः निःश्वसन्निव कुञ्जरः परदुःखस्यापरिहा-र्यतां मत्वा गुप्तदुःखः सन् कुञ्जर इव निःश्वसन्नित्यर्थः। वशी-स्वायत्तीकृतेन्द्रियः ॥ ८ ॥

९ ] ति० टी०—पुरुषं द्वाराध्यक्षम् ॥ ९ ॥

रा० टी०—स इति। तत्र अन्तःपुरद्वारे उपविष्टं स्थिति-मन्तं परमपूजितमतिसत्कृतं वृद्धं ज्ञानवयोभ्यामधिकं पुरुषं द्वारपालमुख्यं गृहद्वारि तिष्ठतः अपरांश्च द्वारपालानपश्यत्॥९॥

गो० टी०—स इति। पुरुषं द्वारपालाध्यक्षम् ॥ ९ ॥

१०–११ ] ति० टी०—जयेन विजयी भवेति शब्देने-त्यर्थः। 'जयेति' इति पाठे जयेति शब्देनेत्यर्थः ॥१०॥११॥

रा० टी०—दृष्ट्वेति। समुपस्थिताः समीपं प्राप्ताः सर्वे जयतां श्रेष्ठं विजयिमुख्यं रामं जयेन जयशब्देन वर्धयन्ति स्म राघवस्य जयः स्यादित्युच्चारयन्ति स्मेत्यर्थः। 'जय' इति पाठे त्वं जय सर्वोत्कर्षेण वर्तस्व इति वर्धयन्ति उल्ला-सयन्ति स्मेत्यर्थः ॥ १० ॥

रा० टी०—प्रविश्येति। प्रथमां कक्ष्यां द्वारं प्रविश्य अति-क्रम्येत्यर्थः ॥ ११ ॥

गो०टी०—दृष्ट्वेति। जयेन विजयस्वेति जयाशिषा ॥१०-१२॥

१२ ] ति० टी०—स रामस्तृणीकृतराज्यो रामः ॥ १२ ॥

रा० टी०—प्रणम्येति। तान्द्वितीयाकक्ष्यास्थितान् प्रणम्य तृतीयायां स्त्र्यादीन्ददर्श ॥ १२ ॥

१३–१४ ] ति० टी०—वर्धयित्वा। जयशब्देनेत्यर्थः। प्रियं रामागमनम् ॥ १३ ॥ १४ ॥

रा० टी०—वर्धयित्वेति। प्रहृष्टाः रामदर्शनेनातिहर्षं प्राप्ताः ताः द्वाररक्षणतत्पराः स्त्रियः वर्धयित्वा तवाभिषेकदि-कालः प्राप्त इत्युक्त्या राममातुः प्रियमत्यन्तं प्रीतिविषयीभूतं रामागमनमित्यर्थः। न्यवेदयन्त तस्यै एवेति प्रत्यासत्तिन्या-यलभ्यम् ॥ १३ ॥

गो०टी०—वर्धयित्वेति। वर्धयित्वा जयाशिषेति शेषः ॥१३॥

रा० टी०—निवेदनकालं बोधयन्नाह—कौशल्येत्यादि। पुत्रहितैषिणी कौसल्या विष्णोः सूर्यस्य पूजामकरोत्। रामस्य सूर्यमण्डलमध्यस्थत्वेन स्वकुलमूलपुरुषत्वेन चातिस्नेहात्तत्पू-जायां प्रवृत्तिरिति सूचितम् ॥ १४ ॥

गो० टी०—कौसल्येति। रात्रिं रात्रौ "कालाध्वनोरत्य-न्तसंयोगे" इति द्वितीया। समाहिता नियमयुक्ता ॥ १४ ॥

१५ ] ति० टी०—अग्निमग्निहोत्रं मन्त्रवज्जुहोति स्म। ज्येष्ठपत्नीत्वादृत्विजेति शेषः ॥ १५ ॥

रा० टी०—सेति। क्षौमवसना क्षुमाया अतस्याः विकारः क्षौमं तद्वसनं यस्याः सा मन्त्रवत् मन्त्रविशिष्टं यथा स्यात्तथा अग्निं जुहोति स्म ॥ १५ ॥

गो० टी०—सेति। जुहोति हावयति अत एव हावयन्ती-मिति वक्ष्यति ब्राह्मणैरिति शेषः ॥ १५ ॥

१६ ] ति० टी०—तदाह–हावयन्तीमिति ॥ १६ ॥

रा० टी०—प्रविश्येति। शुभं मातुरन्तःपुरं प्रविश्य हावयन्तीं ब्राह्मणैरिति शेषः। मातरं ददर्श एतदनुरोधेन पूर्वत्र जुहोतीत्यस्य हावयन्तीत्यर्थः अत्रैव स्वार्थे णिज्वा ॥ १६ ॥

---

१ सहसोत्थिता इति गो. पाठः। २ त्वरिता इति गो. पाठः। ३ स्थिति गो. पाठः। ४ चेति गो. पाठः।

देवकार्यनिमित्तं च तत्रापश्यत्समुद्यतम् । दध्यक्षतघृतं चैव मोदकान्हविषस्तथा ॥ १७ ॥
लाजान्माल्यानि शुक्लानि पायसं कृसरं तथा । समिधः पूर्णकुम्भांश्च ददर्श रघुनन्दनः ॥ १८ ॥
तां शुक्लक्षौमसंवीतां व्रतयोगेन कर्शिताम् । तर्पयन्तीं ददर्शाद्भिर्देवतां वरवर्णिनीम् ॥ १९ ॥
सा चिरस्यात्मजं दृष्ट्वा मातृनन्दनमागतम् । अभिचक्राम संहृष्टा किशोरं वडवा यथा ॥ २० ॥
स मातरमुपक्रान्तामुपसंगृह्य राघवः । परिष्वक्तश्च बाहुभ्यामवघ्रातश्च मूर्धनि ॥ २१ ॥
तमुवाच दुराधर्षं राघवं सुतमात्मनः । कौसल्या पुत्रवात्सल्यादिदं प्रियहितं वचः ॥ २२ ॥
वृद्धानां धर्मशीलानां राजर्षीणां महात्मनाम् । प्राप्नुह्यायुश्च कीर्तिं च धर्मं चाप्युचितं कुले ॥ २३ ॥
सत्यप्रतिज्ञं पितरं राजानं पश्य राघव । अद्यैव त्वां स धर्मात्मा यौवराज्येऽभिषेक्ष्यति ॥ २४ ॥
दत्तमासनमालभ्य भोजनेन निमन्त्रितः । मातरं राघवः किंचित्प्रसार्याञ्जलिमब्रवीत् ॥ २५ ॥

गो० टी०—प्रविश्येत्यादि । देवकार्यनिमित्तमिति द्रव्यजातमिति शेषः ॥ १६ ॥

१७ ] ति० टी०—हविषो हवींषि ॥ १७ ॥

रा० टी०—देवेति । देवकार्यनिमित्तं देवकार्यार्थं समुद्यतं प्राप्तं दध्यादि ददर्श । श्लोकद्वयमेकान्वयि तत्र हविष इत्यत्र लिङ्गव्यत्यय आर्षः । कृसरं द्विदलमिश्रतण्डुलम् ॥ १७ ॥ १८ ॥

गो० टी०—दधीत्यादि । हविषः हवींषि ॥ १७ ॥

१८ ] ति० टी०—कृसरं तिलमुद्गतण्डुलौदनम् ॥ १८ ॥

गो० टी०—लाजानिति । कृसरं तिलौदनं दध्यक्षतेत्यारभ्य वाक्यान्तरम् अतो न क्रियाद्वयविरोध पूर्वं देवकार्यनिमित्तमिति द्रव्याणि सामान्येनोक्तानि अथ विशेषेणेति विवेकः॥ १८॥

१९ ] ति० टी०—व्रतयोगेन पुत्राभ्युदयकामनया तद्देवोपवासव्रतयोगेनेत्यर्थः । देवतां तर्पयन्तीं वरवर्णिनीं तां ददर्शेत्यन्वयः ॥ १९ ॥

रा० टी०—तामिति । अद्भिर्जलैः देवतां तर्पयन्तीं वरवर्णिनीमुत्तमवर्णविशिष्टां गौराङ्गीमित्यर्थः, ददर्श ॥ १९ ॥

गो० टी०—तामिति । तर्पयन्तीं प्रीणयन्तीम् ॥ १९ ॥

२० ] ति० टी०—अभिचक्रामाभिमुखं जगाम । किशोरोऽश्वबालकः ॥ २० ॥

रा० टी०—सेति । चिरस्य बहुकालमात्मजं दृष्ट्वा संहृष्टा सती अभिचक्राम प्रत्युजगाम । तत्र दृष्टान्तः किशोरमश्वबालं वडवा अश्वत्वजातिविशिष्टा स्त्री वा किंच अवगतः प्रादुर्भूतः रवः हे पुत्रागच्छेत्यादिः शब्दो यस्याः सा यथावदभिचकाम । आगुरिमतेनावाकारलोपः रलयोरैक्याद्रेफस्य लकारः डलयोरैक्याल्लस्य डः ॥ २० ॥

गो० टी०—सेति । अभिचक्राम अभिमुखं जगाम किशोरम् अश्वबालकं वडवा अश्वस्त्री ॥ २० ॥

२१-२२ ] ति० टी०—उपसंगृह्याभिवाद्य स्थितस्तया परिष्वक्त इत्यन्वयः ॥ २१ ॥ २२ ॥

रा० टी०—स इति । उपक्रान्तां स्वसमीपमागतां मातरमुपसंगृह्य कराभ्यां कण्ठे गृहीत्वा यो राघवोऽतिष्ठदिति शेषः । सः बाहुभ्यां परिष्वक्तः मूर्धनि अवघ्रातश्च मात्रेति शेषः ॥ २१॥

रा० टी०—तमिति । प्रियहितं प्रियत्वसमानाधिकरणहितत्वविशिष्टमुवाच ॥ २२ ॥

गो० टी०—स इति । उपसंगृह्य: अभिवाद्य स्थित इति शेषः ॥ २१ ॥ २२ ॥

२३] ति० टी०—कुले उचितं कुलस्योचितमिति यावत् २३

रा० टी०—तद्वचनमेवाह—वृद्धानामिति द्वाभ्याम् । वृद्धानां ज्ञानवयोभ्यामधिकानां राजर्षीणामायुः आयुस्तुल्यमायुः प्राप्नुहि आयुश्शब्दः स्वसदृशे लाक्षणिकः मुख्यस्येहासंभवात् । कीर्तिधर्मयोरप्येषैव गतिः एकचकारस्येवार्थकत्वे तु मुख्यत्वेऽपि न क्षतिः ॥ २३ ॥

गो०टी०—वृद्धानामिति । धर्मं चोपहितं कुले इति पाठः२३

२४] ति० टी०—राजानं पश्य गत्वेति शेषः । कौसल्याया राजगृहगमनादिव्यापारापरिज्ञानादेवमुक्तिः ॥ २४ ॥

रा० टी०—सत्येति । पितरं सत्यप्रतिज्ञं पश्य जानीहि अत एव स राजा त्वामद्यैवाभिषेक्ष्यति किंच यः स धर्मात्मा धर्मेण सहितः आत्मा प्रयत्नो यस्य धर्मनिष्पादकप्रयत्नवानित्यर्थः राजा त्वां यौवराज्येऽभिषेक्ष्यति त्वत्कर्मकयौवराज्यसंपादकाभिषेकानुकूलव्यापारं करोति तं राजानं त्वं सत्यप्रतिज्ञं पश्य जानीहि दृशिर्ज्ञानसामान्ये लृडुपात्तभविष्यत्कालस्याविवक्षा॥२४॥

गो० टी०—सत्यप्रतिज्ञमिति । अभिषेक्ष्यतीत्यत्र हेतुः इदानीमप्यभिषेको नारब्ध इति नाशङ्कनीयमिति भावः । पश्य जानीहि ॥ २४ ॥

२५ ] ति० टी०—अत्रोपविश्य भुक्त्वा राजानं द्रष्टुं गच्छेति भोजनेन फलेन निमन्त्रितो राघवः केवलमासनमालभ्य स्पृष्ट्वा न तूपविष्टो व्रीडया किंचिदञ्जलिं प्रसार्यावाङ्मुख एवाब्रवीत् । ' प्रसाद्याञ्जलिः ' इति पाठे प्रकर्षेण सन्नाञ्जलिः विशीर्णाञ्जलिरित्यर्थ इति कश्चित् । मातुः प्रसादनयोग्याञ्जलिरित्यर्थं उचितः । किंचिदित्यस्य चावाङ्मुख इति शेषः ॥२५॥

१ दध्यक्षतं घृतमिति गो. पाठः । २ देववर्णिनीमिति गो.पाठः । ३ अमीति गो.पाठः । ४ उपाघ्रात इति गो. पाठः । ५ चोपहितमिति गो. पाठः । ६ हि त्वामिति गो. पाठः । ७ व्रीडात्प्राञ्जलिरिति गो. पाठः ।

स स्वभावविनीतश्च गौरवाच्च तैथानतः । प्रस्थितो दण्डकारण्यमाप्रष्टुमुपचक्रमे ॥ २६ ॥
देवि नूनं न जानीषे महद्भयमुपस्थितम् । इदं तव च दुःखाय वैदेह्या लक्ष्मणस्य च ॥ २७ ॥
गमिष्ये दण्डकारण्यं किमनेनासनेन मे । विष्टरासनयोग्यो हि कालोऽयं मामुपस्थितः ॥ २८ ॥
चतुर्दश हि वर्षाणि वत्स्यामि विजने वने । कैन्दमूलफलैर्जीवन्हित्वा मुनिवदामिषम् ॥ २९ ॥
भरताय महाराजो यौवराज्यं प्रयच्छति । मां पुनर्दण्डकारैण्यं विवासयति तापसम् ॥ ३० ॥
स षट् चाष्टौ च वर्षाणि वत्स्यामि विजने वने । आसेवमानो वन्यानि फलमूलैश्च वर्तयन् ॥ ३१ ॥

२६ ] ति० टी०—गौरवाच्च मातृत्वप्रयुक्तगौरवाच्च आनतः सम्प्रस्थितः प्रस्थातुमुपक्रान्त आप्रष्टुमनुज्ञां कारयितुमुपचक्रमे ॥ २६ ॥

रा० टी०—कौसल्योक्तिं संवर्ण्य रामोक्तिं वर्णयितुमुपक्रमते—दत्तमिति । अञ्जलिं प्रसार्य आसनग्रहणार्थं हस्तमुत्थाप्येत्यर्थः दत्तं मात्रा समर्पितमासनमालभ्य प्रसारिताञ्जलिना गृहीत्वा भोजनेन भोजनार्थं निमन्त्रितः मात्रेति शेषः गौरवात्सर्वश्रेष्ठत्वादानतः सर्वैर्नमस्कृतः स्वभावविनीतः स्वभावतो नम्रः दण्डकारण्यं प्रस्थितो राघवः आप्रष्टुं गमनायाज्ञां ग्रहीतुमुपचक्रमे अत एव मातरं किंचिदब्रवीत् । 'प्रसाघ्याञ्जलिः' इति पाठे प्रकर्षेण संनाञ्जलिः विशीर्णाञ्जलिरित्यर्थः इति कश्चित् मातुः प्रसादनयोग्याञ्जलिरित्यर्थः उचित इति भट्टाः 'व्रीडाञ्जलिः' इति भूषणपाठः । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०—दत्तमित्यादिश्लोकद्वयमेकान्वयम् । स राघवः भोजनेन निमन्त्रितः सन् दत्तमासनमालभ्य स्पृष्ट्वा दण्डकारण्यं प्रस्थितोऽहम् आप्रष्टुं गमनं निमन्त्रयितुम् उपचक्रमे उद्योगम् कार्षमिति मातरमब्रवीदिति संबन्धः, यद्वा दत्तमिति भोजनेन निमन्त्रितः भोजनार्थं निमन्त्रितः भोजनार्थं दत्तमासनमालभ्य तिष्ठन् दत्तासने उपवेशनाभावेऽपि स्पर्शमात्रं कार्यमित्यागमात् किंचिद्व्रीडात् एवं ब्रुवन्त्यै मात्रे कथं मया प्रस्थानं कथनीयमिति लज्जया अब्रवीत् । किमर्थमासनमुपलभ्य नोपविष्टवानित्यत्राह—स इति । गौरवात् मातरि बहुमानात् प्रस्थितः प्रस्थातुमुद्यतः आप्रष्टुम् अनुज्ञां कारयितुमुपचक्रमे उपक्रान्तवान् ॥ २५ ॥ २६ ॥

२७ ] ति० टी०—तव च तवैवाप्तत्वात् । लोकदृष्ट्याह—वैदेह्या इत्यादि ॥ २७ ॥

रा० टी०—तद्वचनमेवाह—देवीति । हे देवि ! उपस्थितं प्राप्तं महद्भयं राक्षसहेतुकदण्डकारण्यस्थऋषिमहाभीतिं त्वं जानीषे अतः दण्डकारण्यमहं गमिष्ये अतः इदं मत्कर्तृकदण्डकारण्यगमनं तव वैदेह्याश्च लक्ष्मणस्य च दुःखाय न भवतु इति शेषः । अतः विष्टरासनयोग्यः पञ्चविंशतिसंख्याकदर्भनिर्मितासनविशेषार्हः तादृशासनप्रापक इत्यर्थः अयं कालः मामुपस्थितः प्राप्तः अतः अनेन आसनेन मे किं न किंचिदित्यर्थः । श्लोकद्वयमेकान्वयि । 'पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः' इति स्मृतिः ॥ २७ ॥ २८ ॥

गो० टी०—अब्रवीदित्युक्तमाह—देवीत्यादि । भयं तवेति शेषः इदं वक्ष्यमाणं वचनं दुःखाय तथापि वक्ष्यामीत्यर्थः ॥२७॥

२८ ] ति० टी०—विष्टरस्तपस्विनामासनविशेषः 'पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः' इत्युक्तेः ॥ २८ ॥

गो० टी०—इदंशब्दार्थमाह—गमिष्य इति । अनेन रत्नमयेन । विष्टरेत्यादि विष्टरो नाम पञ्चविंशतिदर्भनिर्मितस्तापसासनविशेषः ' पञ्चाशद्भिर्भवेद्ब्रह्मा तदर्धेन तु विष्टरः ' इति स्मृतेः ॥ २८ ॥

२९–३० ] ति० टी०—मुनिवदामिषं सद्भिर्विशिष्टसंस्कारसंस्कृतं मांसम् । तेन 'इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ' इति वक्ष्यमाणेन न विरोधः तस्य शुद्धमांसपरत्वात् मुनिवदित्युक्त्या आर्द्रीयादिमांसपरत्वाच्च ॥ २९ ॥ ३० ॥

रा० टी०—वनवासावधिं बोधयन्नाह—चतुर्दशेति । विजने विशिष्टजनसहिते वने मुनिवद्वत्स्यामि आमिषं राजभोग्यं वस्तु हित्वा त्यक्त्वा ' आकर्षणेऽपि पुंसि स्यादामिषं पुंनपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च ' इति मेदिनी । ' तां तदा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम् । निषण्णां तां गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥ इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना । एवमास्ते स धर्मात्मा सीतया सह राघवः ' इतिपद्यघटकीभूतमांसशब्दार्थस्तु मांसेन मुनिभोग्यफलादिना छन्दयन् लालयन् । लालनप्रकारमाह—इदमित्यादिना । तथा च मेदिनी 'मांसं स्यादामिषे क्लीबम् ' इति । तत्रामिषशब्दः भोग्यवस्त्वर्थकः पूर्वोदाहृतकोशात् ॥ २९ ॥

गो० टी०—चतुर्दशेति । मुनिवत् वत्स्यामीति संबन्धः । अत्रामिषशब्देन सद्भिः संस्कृतं मांसमुच्यते केवलं मांसस्वीकारस्योत्तरत्र वक्ष्यमाणत्वात् ' इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना ' इति ॥ २९ ॥

रा०टी०—ननु तव स्वातन्त्र्येण गमनमनुचितमित्यत आह—भरतायेति । महाराजः यौवराज्यं युवराजोचितं प्रजापालनमित्यर्थः । तापसमनेकविधतपस्विविशिष्टं दण्डकारण्यं विवासयति प्रेषयतीत्यर्थः ॥ ३० ॥

गो० टी०—कुत एवमित्यत्राह—भरतायेति ॥ ३० ॥

३१ ] ति० टी०—वन्यानि वानप्रस्थयोग्यकर्माण्यासेवमान आचरन्, यद्वा वन्यानि वल्कलानि दधानः । वर्तयञ्जीवयन् ३१॥

१ तदेति गो. पाठः । २ मध्वित्ति गो. पाठः । ३ [illegible] इति गो. पाठः । ४ [illegible] इति [illegible] ।

सा निकृत्तेव सालस्य यष्टिः परशुना वने । पपात सहसा देवी देवतेव दिवश्च्युता ॥ ३२ ॥
तामदुःखोचितां दृष्ट्वा पतितां कदलीमिव । रामस्तूत्थापयामास मातरं गतचेतसम् ॥ ३३ ॥
उपावृत्त्योत्थितां दीनां वडवामिव वाहिताम् । पांसुगुं[1]ण्ठितसर्वाङ्गीं विममर्श च पाणिना ॥ ३४ ॥
सा राघवमुपासीनमसुखार्ता सुखोचिता । उवाच पुरुषव्याघ्रमुपशृण्वति लक्ष्मणे ॥ ३५ ॥
यदि पुत्र न जायेथा मम शोकाय राघव । न स्म दुःखमतो भूयः पश्येयमहमप्रजाः ॥ ३६ ॥
एक एव हि वन्ध्यायाः शोको भवति मानसः । अप्रजास्मीति संतापो नह्यन्यः पुत्र विद्यते ॥ ३७ ॥
न दृष्टपूर्वं कल्याणं सुखं वा पतिपौरुषे । अपि पुत्रे [2]विपश्येयमिति [3]रामास्थितं मया ॥ ३८ ॥

रा० टी०—वक्ष्यमाणकौशल्यापतनहेतुत्वेनोक्तमर्थं पुनराह—स इति । षट् अष्टौ वर्षाणि वन्यानि सुखानि आसेवमानः सोऽहं वत्स्यामि इति रामोक्तं श्रुत्वेति शेषः । परशुना निकृत्ता छिन्ना शालस्य वृक्षविशेषस्य यष्टिरिव दिवश्च्युता देवतेव सा देवी कौशल्या पपात । श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

गो० टी०—स इति । सोऽहमित्यर्थः । लघुत्वप्रदर्शनाय षट् चाष्टौ चेत्युक्तं चतुर्दशेत्युक्ते हि गौरवं गम्यते । वन्यानि वनसंबन्धीनि वानप्रस्थयोग्यकर्माणीति यावत् । आसेवमानः आचरन् वर्तयन् जीवनं कुर्वन् ॥ ३१ ॥

३२–३३ ] ति० टी०—यष्टिः शाखा ॥ ३२ ॥ ३३ ॥

गो० टी०—सेति । सा पुत्रोक्तं श्रुतवती सालस्य वृक्षस्य 'अनोकहः कुटः सालः' इत्यमरः । परशुनेति हठाच्छेदनज्ञापनाय नगरे तथा छेदनाभावात् वन इत्युक्तम् ॥ ३२ ॥

रा० टी०—तामिति । गतचेतसं श्रुतवियोगजनितदुःखेन तिरोहितचैतन्यां मातरमुत्थापयामास ॥ ३३ ॥

गो० टी०—तामिति । गतचेतसं मूर्छिताम् ॥ ३३ ॥

३४ ] ति० टी०—वाहितां पूर्वं वाहितभारां ततः श्रमनिवृत्तय उपावृत्त्य भुवि लुण्ठनं कृत्वोत्थितां वडवामिव ॥ ३४ ॥

रा० टी०—उपेति । वाहितामभिषेकविषयकप्रयत्नकर्त्रीमिव वडवामवगतः प्रादुर्भूतः हे पुत्र ! इत्यादिशब्दो यस्याः तां पांसुगुण्ठितसर्वाङ्गीं धूलीव्याप्तशरीरामुपावृत्त्य कराभ्यां गृहीत्वैव उत्थितामुत्थापितां तां पाणिना विममर्श परिममार्ज अन्तर्भावितणिजर्थस्तिङ्सतिः । इवशब्द एवार्थे ॥ ३४ ॥

गो० टी०—उपावृत्त्येति । उपावृत्त्योत्थितां श्रमनिवृत्त्यर्थ भुवि वेष्टनं कृत्वोत्थितां वाहितां भारवाहनं प्रापिताम् ॥ ३४ ॥

३५ ] ति० टी०—असुखेन सुखनाशेनार्ता । उपासीनं समीपे स्थितम् ॥ ३५ ॥

रा० टी०—सेति । उपासीनं स्वां सेवमानं राघवमसुखार्ता असुखेन सुखविरोधिना दुःखेनेत्यर्थः आर्ता व्याप्ता सा कौशल्यां उवाच ॥ ३५ ॥

गो० टी०—सेति । असुखार्ता दुःखार्ता ॥ ३५ ॥

३६ ] ति० टी०—अप्रजा वन्ध्या । अतो वन्ध्यात्वात् भूयो वन्ध्याधिकं पुत्रवियोगदुःखं न पश्येयम् ॥ ३६ ॥

रा० टी०—तद्वचनमेवाह—यदीति । हे पुत्र ! मम शोकाय शोकमपनेतुं यदि त्वं न जायेथाः अजायथास्तदा एवं दुःखं न पश्येयमपश्यमतः वियोगात्तु भूयोऽधिकं दुःखं पश्येयम् । स्मशब्द एवमर्थे ॥ ३६ ॥

गो० टी०—यदीति । हे पुत्र ! त्वं यदि न जायेथा अतः अजननात् भूयः अतिशयितं दुःखम् इष्टपुत्रविश्लेषजं न पश्येयम् अप्रजाः वन्ध्या ॥ ३६ ॥

३७ ] ति० टी०—वन्ध्यात्वदुःखमितः सुसहमित्याह—एक एवेति । अप्रजास्मीति मानसशोकाभिनयः । समासान्ताभावोऽनित्यत्वात् संधिरार्षत्वात् ॥ ३७ ॥

रा० टी०—पूर्वदुःखस्याल्पत्वे हेतुं वदन्ती आह—एकेति । वन्ध्यायाः पुत्ररहितायाः अहमप्रजा पुत्ररहिताऽस्मीति मानसः एक एव शोको भवति अन्यः पुत्रदुःखादिनिमित्तः संतापो न विद्यते । एतेन पुत्रवियोगे वियोगजनितदुःखं पुत्रदुःखादिश्रवणजनितदुःखं चास्तीति दुःखाधिक्यं सूचितम् ॥ ३७ ॥

गो० टी०—इदमेवोपपादयति—एक इति । अन्यः विश्लेषजः भूलुण्ठनादिः कायिकश्च अप्रजास्मीत्यसिजभाव आर्षः ॥ ३७ ॥

३८ ] ति० टी०—स्वस्य सदा दुःखित्वमिति शोचति—नेति । पत्युः पौरुषमनुरागकृतं रञ्जनं तस्मिन्यत्प्राप्यं कल्याणं प्रशस्तवस्त्राभरणादिजसौभाग्याधिक्यं सुखं वा पतिसंभोगजम् तन्मया न दृष्टपूर्वम् । अपीति लोकोक्तौ । पुत्रे जाते तदुभयसूचककल्याणं पुत्रदर्शनजं सुखं च पश्येयमित्याशया राम मया स्थितं जीवनं स्थापितम् ॥ ३८ ॥

रा० टी०—त्वच्चिकीर्षितस्य सिद्धिर्भवितैवेत्याह—नेति । हे राम ! पतिपौरुषे पतिकर्तृकदिग्विजयादावित्यर्थः यत्कल्याणं श्रोतॄणां कल्याणसंपादकं सुखं न दृष्टं पूर्वं नानुभूतमित्यर्थः तदपि कल्याणं सुखं पुत्रे त्वयि वनस्थे सत्यपीति शेषः । विपश्येयमनुभवितास्मीत्यर्थः इति मया स्थितं निश्चितम् । एतेन त्वत्कर्तृकविजयेऽस्माकं संशयो नास्तीति सूचितम् ॥ ३८ ॥

१ कुण्ठितेति गो. पाठः । २ त्विति गो. पाठः । ३ राम स्थितमिति गो. रा. पाठः ।

सा बहून्यमनोज्ञानि वाक्यानि हृदयच्छिदाम् । अहं श्रोष्ये सपत्नीनामवराणां परा सती ॥ ३९ ॥
अतो दुःखतरं किं नु प्रमदानां भविष्यति । मम शोको विलापश्च यादृशोऽयमनन्तकः ॥ ४० ॥
त्वयि संनिहितेऽप्येवमहमासं निराकृता । किं पुनः प्रोषिते तात ध्रुवं मरणमेव हि[2] ॥ ४१ ॥
अत्यन्तं निगृहीतास्मि भर्तुर्नित्यमसंमता । परिवारेण कैकेय्याः समा वाप्यथवावरा ॥ ४२ ॥
यो हि मां सेवते कश्चिदपि वाप्यनुवर्तते । कैकेय्याः पुत्रमन्वीक्ष्य स जनो नाभिभाषते ॥ ४३ ॥
नित्यक्रोधतया तस्याः कथं नु खरवादिनम् । कैकेय्या वदनं द्रष्टुं पुत्र शक्ष्यामि दुर्गता ॥ ४४ ॥

गो० टी०—नेति । पतिपौरुषे सत्यपि कल्याणं ज्येष्ठपत्नीत्वोचितयामाभरणाद्यैश्वर्यरूपं शुभं सुखं वा भर्तृसंमाननादिजनितसौख्यं वा अपि पुत्र इति अपिसंभावनायां पुत्रे सति तद्बलात् पश्येयमिति मया स्थितमित्यर्थः ॥ ३८ ॥

३९ ] ति० टी०—साहमवराणां कनिष्ठानां सपत्नीनां त्वद्बलादिदानीं परा सती हृदयच्छिदां हृदयविदारिकाणां तासाममनोज्ञानि वाक्यान्येवं जीर्णापि श्रोष्ये ॥ ३९ ॥

रा० टी०—स्वस्कर्तृकविजयकालात्पूर्वं ममातीव दुःखमित्याह—सेति । सा अभिषेकोचितप्रेषितपुत्रा अहममनोज्ञानि अप्रियाणि हृदयच्छिदामस्मत्समृद्धिदर्शनेन विदीर्णहृदयानामवराणामैश्वर्यादितो न्यूनानां सपत्नीनां शत्रुस्त्रीणां बहूनि वाक्यानि अस्मद्भाग्यवत्ताहानिसूचकवचनानि श्रोष्ये श्रोतास्मि ॥ ३९ ॥

गो० टी०—भूतदुःखमुक्त्वा भविष्यदुःखमाह—सेति । सा एवं सुखमलभमाना बहूनीत्युक्तेः पूर्वमपि स्वल्पानि सन्तीति गम्यते । अमनोज्ञानि परुषाणि परुषाणीत्युक्ते मनोज्ञमिश्रत्वमपि प्रतीयेत वाक्यानि न तु सूचकपदानि हृदयच्छिदां भर्तृहृदयवैकल्यकारिणीनाम् अवराणां स्वेनैव तथा वक्तुमुचितानां सपत्नीनां न तु स्वाधीनानां परा सती स्वस्याप्यवरत्वे न किंचिद्दुःखमिति भावः । क्रोधेन सपत्नीनामिति बहुवचनोक्तिः । तत्र हठात्स्वगृहं मा गच्छेत्युक्तिः कोपेन भर्तृसकाशात् निर्याहीत्युक्तिः अपुत्रायाः किमुत्सवेनेत्येवमादीनि सपत्नीवाक्यानि बोध्यानि ॥ ३९ ॥

४० ] ति० टी०—अतः सपत्नीधिक्कारवाक्यश्रवणजात्परं दुःखं स्त्रीणां नास्ति । ममायमनन्तकोऽपारः शोको यादृशस्तादृशो वाचापि वक्तुमशक्य इति शेषः ॥ ४० ॥

रा० टी०—अत इति । अतः एवं दुरुक्तश्रवणाद्दुःखतरं प्रमदानामस्माकं किंनु भविष्यति न भविष्यतीत्यर्थः।अतः यादृशः अयं त्वद्वियोगजनितः शोको विलापश्च तादृशः अनन्तकः त्वद्विजयात्पूर्वकाले अविनाशी भविष्यति । भविष्यतीत्युभयान्वयि ॥ ४० ॥

गो० टी०—अत इति । अतः सपत्नीवाक्यश्रवणजाद्दुःखात् प्रमदानां किं नु दुःखतरं तस्मान्मम शोको विलापश्च यादृशः इयत्तया वक्तुमशक्यः अनन्तकः दुष्पारः ॥ ४० ॥

४१ ] ति० टी०—निराकृता सपत्न्येति शेषः । ध्रुवम् प्राप्तमिति शेषः । शोकग्रस्तत्वान्न्यूनपदता न दोषः ॥ ४१ ॥

रा० टी०—त्वयीति । हे तात ! संनिहितेऽपि त्वयि अहं निराकृता भविष्यत्त्वद्वियोगश्रवणेन विभिन्नचित्ता आसमभवम् । अतः त्वयि प्रोषिते मरणमिव दुःखं स्यादिति किं वक्तव्यम् । एव इवार्थे ॥ ४१ ॥

गो० टी०—उक्तं दुःखं निदर्शयति—त्वयीति । बलवति त्वयि संनिहितेऽपि एवं भवदनुभूतप्रकारेण निराकृता त्वयि प्रोषिते किं पुनः अतो मे मरणं ध्रुवमिति योजना ॥ ४१ ॥

४२ ] ति० टी०—निगृहीता भर्तृकृतनिग्रहप्रकारमाह—परिवारेणेति । कैकेय्या दासीजनेन समा अथवावरा ततोऽपि निकृष्टा कृतास्मीति शेषः । '—प्यधरा वरा' इति पाठे वरा श्रेष्ठाप्यधरा निकृष्टा कृतास्मीत्यर्थः ॥ ४२ ॥

रा० टी०—अत्यन्तेति । भर्तुः परिवारेण परिवारसदृशेन सुमन्त्रेणेत्यर्थः । कैकय्या च असमा श्रेष्ठेत्यर्थः । आवरा तदत्यन्तस्वीकारकर्त्री अहं यतोऽसंमता प्रव्राजने तत्संमतिं न प्राप्ता अतः अत्यन्तनिगृहीता दुःखितास्मीत्यर्थः 'अतन्त्रिता' इति टीकासंमतपाठे संमत्यग्रहणेन अप्रधानीकृतेत्यर्थः । 'तन्त्रं प्रधाने सिद्धान्ते' इति निघण्टुः ॥ ४२ ॥

गो० टी०—अत्यन्तमिति । भर्तुः भर्त्रा निगृहीता अहं अतन्त्रिता अप्रधानीकृतास्मि 'तन्त्रं प्रधाने सिद्धान्ते' इति निघण्टुः । अतः कैकेय्याः परिवारेण दासीजनेन समा कृतास्मि अथवा विचार्यमाणे अवरा न्यूना कृतास्मि ॥ ४२ ॥

४३ ] ति० टी०—स सर्वोऽपीष्टो जनः कदाचिदागतं कैकेय्याः पुत्रमवलोक्य मां नाभिभाषते । इदानीमप्येवमवस्था मम वर्तते, त्वयि गते तु किं वक्तव्यमिति भावः ॥ ४३ ॥

रा० टी०—स्वमहत्त्वं प्रकटयन्ती आह—य इति । कैकय्याः पुत्रं भरतं यः कश्चित्सेवते अनुवर्तते वा स जनः मामन्वीक्ष्य नाभिभाषते मत्संकोचान्मौनीभूय तिष्ठतीत्यर्थः ॥ ४३ ॥

गो० टी०—दुःखान्तरमाह—य इति । त्वयि प्रोषिते यः स्वजनः मां सेवते परिचरति अनुवर्तते प्रियोक्तिं करोति सोऽपि कैकेय्याः पुत्रं भरतमन्वीक्ष्य तद्भयादित्यर्थः नाभिभाषते नाभिभाषेत ॥ ४३ ॥

४४ ] ति० टी०—खरवादिनम् । लुगभाव आर्षः । खरवादि परुषवचनशीलं तस्या वदनं कथं द्रष्टुं शक्ष्यामि । दुर्गता त्वद्वियोगेन दुर्दशामापन्ना ॥ ४४ ॥

रा० टी०—नित्येति । नित्यकः त्वद्वियोगहेतुकमित्य-

१ वरेति गो. पाठः । २ मे इति गो. पाठः । ३ [illegible]

दश सप्त च वर्षाणि जातस्य तव राघव । अतीतानि[1] प्रकाङ्क्षन्त्या मया दुःखपरिक्षयम् ॥ ४५ ॥
तदक्षयं[2] महद्दुःखं नोत्सहे सहितुं चिरात्[3] । विप्रकारं सपत्नीनामेवं जीर्णापि राघव ॥ ४६ ॥
अपश्यन्ती तव मुखं परिपूर्णशशिप्रभम् । कृपणा वर्तयिष्यामि कथं कृपणजीविका[4] ॥ ४७ ॥
उपवासैश्च योगैश्च बहुभिश्च परिश्रमैः । दुःखसंवर्धितो[5] मोघं त्वं हि दुर्गतया मया ॥ ४८ ॥

विक्षेपाद्धेतोः अधतया पोषणानुकूलव्यापाराहित्येनोपलक्षिताहं वदनमिह स्थितिमन्तं केकय्याः खरवादिनं केकयीकर्मक-कठोरवकारं जनं द्रष्टुं बोधयितुं कथं शक्ष्यामि अत एवामो छुगभावे मस्क्लेशकल्पनं दृशिज्ञानसामान्ये वदनमित्यत्र स्थैर्यार्थको वदतिः तेन नेह मम स्थातुं योग्यतेति सूचितम् । 'खरवादवत्' (खरवादि तत्?) इति भूषणपाठः ॥ ४४ ॥

गो० टी०–नित्यक्रोधतयेति । खरवादि परुषवचनशीलं तत्पूर्वानुभूतं दुर्गतत्वातिका ॥ ४४ ॥

४५ ] ति० टी०–जातस्य उपनयनाख्यद्वितीयजन्मनेति शेषः । 'ऊनषोडशवर्षो मे रामो राजीवलोचनः' इति विश्वामित्रमुद्दिश्य दशरथोक्त्या विवाहकाले पञ्चदशवर्षत्वोक्तेः, 'तत्र द्वादशवर्षाणि राघवः सह सीतया । रमयामास धर्मात्मा नारायण इव श्रिया ॥ तस्मिन्काले महाराजः प्रीतो रामस्य सद्गुणैः । ज्येष्ठं राज्येन संयोक्तुमैच्छत्सर्वनृपाज्ञया ॥' इति पाद्मोक्तेश्च । उपनयनं च गर्भैकादशे । 'एकादशे वा राजन्यम्' इति स्मृतेर्दशमे वर्षे इति बोध्यम् । एवमुपनयनोत्तरं सप्तदश वर्षाण्यतीतानि जातस्य तव । अतः परं यौवराज्येन दुःखपरिक्षयं प्रकाङ्क्षन्त्या मया तद्विघाते तस्या वदनं कथं नु द्रष्टव्यमित्यनुकर्षः । वस्तुतस्तु "इग्यणः संप्रसारणम्" इति सूत्रस्थभाष्योक्तरीत्या 'प्रविश पिण्डीम्' इत्यादौ यथा 'प्रविश गृहं पिण्डीं भक्षय' इति वाक्यार्थे प्रविशेति पिण्डीमिति च वाक्यैकदेशस्य प्रयोगः, तथा द्विर्दशेतिवाक्यस्यार्थे वाक्यैकदेशप्रयोगोऽयम् । द्विरावृत्ता दश विंशतिः सप्त चेत्यर्थः । अत्र तात्पर्यग्राहिका विश्वामित्रं प्रति दशरथोक्तिः पाद्मोक्तिश्च तादृशप्रयोगश्च कौसल्यायाः पुत्रवियोगदुःखार्ततया वाल्मीकेश्च वर्णनीयमयीभावेन न दोषायेति ध्येयम् ॥ ४५ ॥

रा० टी०–दशेति । दुःखपरिक्षयं दण्डकारण्यऋषिपीडाध्वंसं प्रकाङ्क्षन्त्या मया जातस्य मत्तः प्रकटीभूतस्य तव दश सप्त दश च दशचेत्येकशेषः विंशतिरित्यर्थः । ते च सप्त च च एकश्च दशसप्तचाः अष्टाविंशतिरित्यर्थः । ते एव वर्षाणि किंच सप्तशब्दस्यैवैकशेषः तेन सप्तशब्देन चतुर्दशलाभः चशब्देनैकत्वलाभः एवं च दशसप्त च वर्षाणीत्यस्य पञ्चविंशतिवर्षाणीत्यर्थः अतीतानि चशब्देनैकत्वलाभस्तु चन्द्रमो वाचकत्वेन यथा चैतस्यायमर्थः तथा बालकाण्डे निरूपितम् ॥ ४५ ॥

गो० टी०–दशेति । तव जातस्य त्वयि जाते सति दश सप्त च वर्षाणि दुःखपरिक्षयं प्रकाङ्क्षन्त्या तव यौवराज्येनेति भावः । मया छद्मासितानि आस्थितानि । ननु ऊनषोडशवर्षो मे रामो राजीवलोचन इति विश्वामित्रं प्रति दशरथवचनात् विवाहानन्तरम् उषित्वा द्वादश समा इक्ष्वाकूणां निवेशने इत्युपरि सीतया वक्ष्यमाणत्वाच्च रामस्याष्टाविंशतिवर्षाणि वर्तन्ते तत्कथं दश सप्त च वर्षाणीत्युच्यते इति चेत् नैष दोषः । अत्र जातस्येत्युक्तिः द्वितीयजन्मापेक्षया 'गर्भैकादशेषु राजन्यम्' इति बहुवचने गर्भनवममारभ्य क्षत्रियस्योपनयनकालत्वोक्तेः । वयसा पञ्चविंशक इति सीतावचनात् वचनान्तरविरोधपरिहारादिकं बालकाण्ड एव कृतम् ऊनषोडशवर्षो मे इत्यत्र ॥ ४५ ॥

४६ ] ति० टी०–दुःखं त्वद्वियोगजम् । अक्षयं तव राज्यनाशात्क्षयसंभावनारहितमपि । अपि च एवं जीर्णा सपत्नीनां विप्रकारं सहितुं सोढुं नोत्सहे ॥ ४६ ॥

रा० टी०–तदिति । अक्षयमन्यैर्विनाशयितुमशक्यं दुःखं राक्षसहेतुककृच्छ्रक्लेशं चिरात् बहुकालं सहितुं क्षन्तुं नोत्सहे एवमनेन प्रकारेण सपत्नीनां शत्रुस्त्रीणां विप्रकारं युवराजत्वोचितः अस्याः पुत्रः प्रव्रजित इति दुर्भाग्यमस्या इति दुरुक्तिं चिरात्सहितुं नोत्सहे एतेनान्यतरक्लेशस्य दुर्निवारत्वं सूचितम् ॥ ४६ ॥

गो० टी०–तदिति । सहितुं सोढुं चिरं नोत्सहे जीर्णापि सपत्नीदुर्वाक्यश्रवणदुःखेन जीर्णापि विप्रकारम् अपकाररूपं दुःखमित्यन्वयः ॥ ४६ ॥

४७ ] ति० टी०–कृपणजीविका शोच्यजीवना ॥ ४७ ॥

रा० टी०–अपश्यन्तीति । कृपणजीविका कृपणा क्षीणा जीविका जीवनप्रवृत्तिर्यस्याः सा ॥ ४७ ॥

गो० टी०–अपश्यन्तीति । कृपणजीविकां दीनजीवनं वर्तयिष्यामि करिष्यामीत्यर्थः । 'आजीवो जीविकावार्ता वृत्तिर्वर्तनजीवने' इत्यमरः ॥ ४७ ॥

४८ ] ति० टी०–दुर्गतया भाग्यहीनया मया बहुपरिश्रमजनकैरुपवासैर्योगैर्देवताध्यानैर्दुःखं यथा तथा मोघं वर्धितोऽसि यदि विप्रवत्स्यसीति शेषः त्वद्दर्शनजफलालाभादिति भावः ॥ ४८ ॥

रा० टी०–उपवासैरिति । दुःखं यथा भवति तथा दुर्गतया विविधचिन्तां प्राप्तया मया उपवासाद्यैः संवर्धितस्त्वममोघं क्रियासाफल्यमित्यर्थः कुर्विति शेषः । एतेनास्मदाशापरिपाकनं तवोचितमेवेति सूचितम् ॥ ४८ ॥

गो० टी०–उपवासैरिति । योगैः देवताध्यानैः परिश्रमैः व्रतैः मोघं निष्फलं यथा भवति तथा दुर्गतया भाग्यरहितयेति यावत् ॥ ४८–६० ॥

१ आसितानीति गो. पाठः । २ अक्षयमहमिति गो. पाठः । ३ चिरमिति गो. पाठः । ४ जीविकामिति गो. पाठः । ५ दुःखं संवर्धित इति रा. पाठः ।

स्थिरं नु हृदयं मन्ये ममेदं यन्न [1]दीर्यते । प्रावृषीव महानद्याः स्पृष्टं कूलं नवाम्भसा ॥ ४९ ॥
ममैव नूनं मरणं न विद्यते न चावकाशोऽस्ति यमक्षये मम ।
यदन्तकोऽद्यैव न मां जिहीर्षति प्रसह्य सिंहो रुदतीं मृगीमिव ॥ ५० ॥
स्थिरं हि नूनं हृदयं ममायसं न भिद्यते यद्भुवि [2]नो विदीर्यते ।
अनेन दुःखेन च देहमर्पितं ध्रुवं ह्यकाले मरणं न विद्यते ॥ ५१ ॥
इदं तु दुःखं यदनर्थकानि मे व्रतानि दानानि च संयमाश्च हि ।
तपश्च तप्तं यदपत्य[3]काम्यया सुनिष्फलं बीजमिवोप्तमूषरे ॥ ५२ ॥
यदि ह्यकाले मरणं [4]यदृच्छया लभेत कश्चिद्गुरुदुःखकर्शितः ।
गताहमद्यैव परेतसंसदं विना त्वया धेनुरिवात्मजेन वै ॥ ५३ ॥
अथापि किं जीवितमद्य मे वृथा त्वया विना चन्द्रनिभाननप्रभ ।
अनुव्रजिष्यामि वनं त्वयैव गौः सुदुर्बला वत्समिवाभिकाङ्क्षया ॥ ५४ ॥

४९] ति० टी०—न दीर्यते त्वद्विप्रयोगश्रवणेऽपीति शेषः ४९

रा० टी०—वियोगस्यासह्यत्वं बोधयन्ती आह—स्थिरमिति । स्थिरं कठिनं प्रावृषि वर्षतौ महानद्याः गङ्गादेः ॥ ४९ ॥

५० ] ति० टी०—ममैवेति । लौकिक्यतिदृढोक्तिजातिरियम् । मरणं न विद्यत एव न जिहीर्षत्येवेत्यन्वयः । अवकाशोऽवस्थितये स्थलम् ॥ ५० ॥

रा० टी०—भवदागमनं विना मम दुःखक्षयो न भविष्यतीत्याह—ममेति । यद्यतः मम यमक्षये यमकर्तृकमत्कर्मकविनाशने अवकाशः यमकर्तृकप्रकाशः यमसामर्थ्यमिति यावन्नास्ति तस्मान्मम मरणं नैव विद्यते अत एव अन्तकः यमः मां नैव जिहीर्षति आनेतुमिच्छति एतेन यदि मरणं स्यात्तर्हि दुःखक्षयः स्यात्तस्याभावाद्दुःखविनाशः त्वदधीन एवेति सूचितम् ॥ ५० ॥

५१ ]ति० टी०—आयसमयसा निर्मितम् । यद्यतो न भिद्यते भुवि पतित्वा नो विदीर्यते । भेदो द्विधा भवनम्, विदारणमनेकच्छिद्ररेखावत्त्वम् । अनेन दुःखेनार्पितं व्याप्तं देहं देहो न भिद्यत इत्याद्यन्वयः अर्धर्चादिर्देहशब्दः हि यतो न भिद्यतेऽतोऽकाले मरणं न विद्यत इति जाने इति शेषः ॥ ५१ ॥

रा० टी०—स्थिरमिति । यद् यतः अकाले अल्पकाले ईश्वराधीनकाले इत्यर्थः मम मरणं न विद्यते अत एव विशेषणविशिष्टं हृदयं न विदीर्यते अतःअनेन भविष्यत्वद्वियोगदुःखेन अर्पितं व्याप्तं देहमस्तीति शेषः देहशब्दः अर्धर्चादिः ॥ ५१ ॥

गो० टी०—स्थिरं हीति । अनेन दुःखेन अर्पितम् आहतं मम हृदयं न भिद्यते इति यत् अतः स्थिरं हि नाशरहितमेव देहं च नावदीर्यत इति यत् अतः आयसम् अयोनिर्मितं यतः तथाहि अकाले अविहितकाले मरणं न विद्यते ध्रुवम् ॥ ५१ ॥

५२ ] ति० टी०—यद्व्रतादीन्यनर्थकानि तदिदं महद्दुःखम् । ऊषरे उप्तमत एव निष्फलं बीजमिव ॥ ५२ ॥

रा० टी०—इदमिति । यद्यतो मे व्रतादीनि अनर्थकानि न अर्थः प्राकृतविषयः फलत्वेन येषु प्राकृतविलक्षणार्थफलकानीत्यर्थः । अपत्यकाम्यया तपश्च सुतप्तमतः इदं दुःखमूषरे उप्तं बीजमिव सुनिष्फलं भविष्यतीति शेषः । शीघ्रमेव विनङ्क्ष्यतीत्यर्थः एतेन क्षिप्रं ते विजयो भविष्यतीति ध्वनितम् ॥ ५२ ॥

गो० टी०—इदं त्विति । इदं वक्ष्यमाणं दुःखं तु पूर्वदुःखेभ्यो विलक्षणम् । तदेवाह यदिति यस्मान्मे अपत्यकारणात् कृतानि व्रतानि दानानि संयमाः ध्यानानि च अनर्थकानि जातानि सामान्ये नपुंसकमिति नपुंसकत्वम् तप्तं तपश्च ऊषरे उप्तं बीजमिव सुनिष्फलमासीत् इदं तु दुःखमित्यन्वयः ॥ ५२ ॥

५३ ] ति० टी०—गुरुदुःखेन कर्शितः पीडितः । परेतसंसदं यमसभाम् अहं गता स्याम् । तत्तु न लभ्यत इति शेषः ॥ ५३ ॥

रा० टी०—यदिति । त्वया विना गुरुदुःखकर्शितः कश्चित्पतिरित्यर्थः । अकाले कालभयशून्यत्वेऽपि यदृच्छया स्वेच्छया मरणं हि मरणमिव लोकान्तरगमनमित्यर्थः लभेत कुर्यादित्यर्थः । तदा परेतसंसदं मृतसभामिव गता प्राप्ता आत्मजेन विना धेनुरिवाहं स्यामिति शेषः । एव इवार्थे एतेन राजकर्तव्यं तया ज्ञातमिति सूचितम् ॥ ५३ ॥

गो० टी०—ध्रुवं ह्यकाले मरणं न विद्यत इत्येतत्सकार्यं दर्शयति—यदि हीति । यदि लभेत तदाहं परेतसंसदं यमसभां गता स्यामित्यन्वयः ॥ ५३ ॥

५४ ] ति० टी०—अथापि मरणाभावेऽपि त्वया विना त्वत्संनिधिं विना किंजीवितं कुत्सितं जीवितं वृथा व्यर्थमतोऽनुव्रजिष्यामि अभिकाङ्क्षया वात्सल्येन ॥ ५४ ॥

रा० टी०—त्वद्वियोगे जीवनं वृथेत्याह—अथेति । त्वया विना मे किंजीवितं जीवनमपि कुत्सितमित्यर्थः । अथातो

१ स्थिति गो. पाठः । २ दीयत इति गो. पाठः । ३ नावदीर्यत इति गो. पाठः । ४ कारणादिति गो. पाठः । ५ स्वेच्छयेति गो. पाठः । ६ कश्चिदिति गो. पाठः ।

भृशमसुखममर्षिता यदा बहु विललाप समीक्ष्य राघवम् ।
व्यसनमुपनिशाम्य सा महत्सुतमिव बद्धमवेक्ष्य किंनरी ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंश सर्गः ।

रामविवासनश्रवणदुःखितां कौसल्यामाश्वासयँल्लक्ष्मणो रामवनगमनं स्वस्यानभिमतमित्युक्त्वा दशरथं विगर्ह्य स्वस्यापि रामानुगमनं निश्चिकाय । कैकेयीवचसोऽधर्म्यत्वेन वनगमनं निषेधन्तीं कौसल्यां रामः पितृवचस्त्वात्तस्य धर्म्यत्वं निश्चित्य स्वगमनमनुमन्तुं प्रस्थानमङ्गलानि च विधातुं कौसल्यां प्रार्थयत ।

तथा तु विपलपन्तीं तां कौसल्यां राममातरम् । उवाच लक्ष्मणो दीनस्तत्कालसदृशं वचः ॥ १ ॥
न रोचते ममाप्येतदार्ये यद्राघवो वनम् । त्यक्त्वा राज्यश्रियं गच्छेत्स्त्रिया वाक्यवशंगतः ॥ २ ॥
विपरीतश्च वृद्धश्च विषयैश्च प्रधर्षितः । नृपः किमिव न ब्रूयाच्चोद्यमानः समन्मथः ॥ ३ ॥

हेतोः वृथा निरर्थकमित्यर्थः । अतस्त्वयैव सह वनमनुव्रजिष्यामि अभिकाङ्क्षया स्वेच्छया ॥ ५४ ॥

गो० टी०—अथेति । अथापि अकालमरणाभावेऽपि किंजीवितं कुत्सितजीवितं वृथा सुदुर्बला अधीरेति यावत् अनुकाङ्क्षया वात्सल्येन ॥ ५४ ॥

५९ ] ति० टी०—भृशमसुखं दुःखममर्षितासहमाना रामवियोगमूलं सपत्न्यादिकृतं महद्व्यसनं दुःखं निशाम्य पर्यालोच्य सत्यपाशबद्धं सुतमवेक्ष्य यथोक्तनिमित्तवती किंनरी विललाप ॥ ६६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामयणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे विंशः सर्गः ॥ २० ॥

रा० टी०—भृशमिति । यदा महद्व्यसनं सुतवियोगजनितमहादुःखमुपनिशाम्य संस्मृत्य अमर्षिता तद्दुःखसहनसामर्थ्यहीना आसेति शेषः । तदा बद्धं पितृनियन्त्रितं राघवं बहु अत्यन्तं समीक्ष्य सा विललाप ॥ ६६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे विंशः सर्गः ॥ २० ॥

गो० टी०—भृशमिति । असुखं दुःखम् अमर्षिता सोढुमशक्ता व्यसनं रामविश्लेषमयं व्यसनम् उपनिशाम्य आलोच्य ॥ ६६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने विंशतितमः सर्गः ॥ २० ॥

१ ] ति० टी०—तत्कालसदृशं रामवियोगहेतुककौसल्यादुःखप्रशान्तिकालोचितम् ॥ १ ॥

रा० टी०—कौसल्याविलापानन्तरकालिकवृत्तान्तमाह—तथेत्यादिभिः । तत्कालसदृशं बोधनकालोचितं वच उवाच ॥ १ ॥

गो० टी०—एवमुपक्रान्तस्य पितृवचनपरिपालनस्य स्थैर्यमस्मिन्सर्गे प्रतिपाद्यते—तथेति । तत्कालसदृशं कौसल्यादुःखकालोचितम् एतेन वक्ष्यमाणलक्ष्मणवचनं केवलं कौसल्याशोकशान्त्यर्थं न तु सहृदयमिति गम्यते ॥ १ ॥

२ ] ति० टी०—आर्ये कौसल्ये ! गच्छेदिति यत्तन्ममापि न रोचते । स्त्रिया इत्यायुत्तरान्वयि ॥ २ ॥

रा० टी०—तद्वचनमेवाह—नेति । आर्ये हे मातः ! स्त्रिया सीतया सह राज्यश्रियं त्यक्त्वा वाक्यवशं गतः ब्रह्मादिविज्ञापनहेतुकस्वप्रतिज्ञावचनाधीनः रामः यद्वनं गच्छेत्तदेतन्ममापि न रोचते एतेनास्मदादिभिः सहैव गन्तव्यमिति सूचितम् । सीतया सहेत्यनेन सीताप्यनुगमिष्यतीति लक्ष्मणनिश्चयो ध्वनितः ॥ २ ॥

गो० टी०—न रोचत इति । ममापि मह्यमपि स्त्रियाः कैकेय्याः ॥ २ ॥

३ ] ति० टी०—अत एव विपरीतः प्राप्तप्रकृतिवैपरीत्यः । चोद्यमानः स्त्रिया । क्रोधवशात्पुनरुक्तिर्न दोषाय । किमिव न ब्रूयात् अनुचितमतमपि ब्रूयादतस्तद्वचो न श्रद्धेयमिति एतेन राजाज्ञाभङ्गः कथं कार्य इति शङ्का समाहिता ॥ ३ ॥

रा० टी०—ननु सर्वसंमतिमलब्ध्वा राजा कथं प्रेषयतीत्यत आह—विपरीत इति । वृद्धः ज्ञानवयोभ्यां संपन्नः अत एव प्रधर्षितः प्रगल्भः अत एव मन्मथः मदं प्रजादैन्यं मथतीति सः अत एव विषयैः राक्षसबाधितऋषिसमीपदेशवासिभिश्चोद्यमानः प्रार्थ्यमानः अत एव विपरीतः पुत्रविषयकस्नेहरहित इव स नृपः किं न ब्रूयाद्ब्रूयादेवेत्यर्थः । अतः येन राज्ञा राघवः वनवासाय निर्वास्यते तस्य अस्य अपराधं दोषं पुत्रवियोगकारकपापविशेषं वा न पश्यामि । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—ननु नाहं कैकेयीवचनाद्गच्छामि किंतु राजवचनादित्याकङ्क्ष्याह—विपरीत इति । विपरीतः विपरीतवयोधर्मा तत्र हेतुः वृद्धत्वं विषयप्रधर्षितत्वं च विषयाः शब्दादयः । ननु परिशुद्धं प्रति शब्दादिविषयाः किं कुर्युरित्यत्राह—समन्मथ इति । चोद्यमानः कैकेय्येति शेषः । इवशब्दो वाक्यालंकारे ॥ ३ ॥

१ स्वेच्छेति गो. पाठः ।

नास्यापराधं पश्यामि नापि दोषं तथाविधम् । येन निर्वास्यते राष्ट्राद्वनवासाय राघवः ॥ ४ ॥
न तं पश्याम्यहं लोके परोक्षमपि यो नरः । स्वमित्रोऽपि निरस्तोऽपि योऽस्य दोषमुदाहरेत् ॥ ५ ॥
देवकल्पमृजुं दान्तं रिपूणामपि वत्सलम् । अवेक्षमाणः को धर्मं त्यजेत्पुत्रमकारणात् ॥ ६ ॥
तदिदं वचनं राज्ञः पुनर्बाल्यमुपेयुषः । पुत्रः को हृदये कुर्याद्राजवृत्तमनुस्मरन् ॥ ७ ॥
यावदेव न जानाति कश्चिदर्थमिमं नरः । तावदेव मया सार्धमात्मस्थं कुरु शासनम् ॥ ८ ॥
मया पार्श्वे सधनुषा तव गुप्तस्य राघव । कः समर्थोऽधिकं कर्तुं कृतान्तस्येव तिष्ठतः ॥ ९ ॥
निर्मनुष्यामिमां सर्वामयोध्यां मनुजर्षभ । करिष्यामि शरैस्तीक्ष्णैर्यदि स्थास्यति विप्रिये ॥ १० ॥

---

४ ] ति० टी०—ननु रामदोषप्रयुक्तं विवासनं स्यात्तत्राह—नास्येति । रामस्येत्यर्थः । अपराधं पितृविषयकं दोषमसमआदेरिव प्रजावधादिपातकम् ॥ ४ ॥

गो०टी०—ननु रामदोषादेवास्तु विवासनं तत्राह-नास्येति । अपराधं राजद्रोहं दोषं महापातकादिकं तथाविधं निर्वासनयोग्यम् ॥ ४ ॥

५ ] ति० टी०—सुतरामभित्रोऽपि शत्रुरपि निरस्तोऽपि महापातकादिवशं गत्वा त्यक्तोऽपि परोक्षमपि रामस्य दोषं यो वदेत्तं न पश्यामि ॥ ५ ॥

रा० टी०—राज्ञः दोषविशेषास्पर्शित्वमुक्त्वा दोषसामान्यास्पर्शित्वमप्याह—न तमिति । निरस्तः युद्धादिना पराजितोऽपि अस्य राज्ञः एतेन सार्वकालिकसर्वदोषासंसर्गित्वं राज्ञः सूचितम् ॥ ५ ॥

गो० टी०—दोषाभावे किं प्रमाणमित्याशङ्क्य न तावच्छब्द इत्याह—नेति । स्वमित्रोऽपि सुतरां शत्रुरपि निरस्तोऽपि केनचिदपराधेन तिरस्कृतोऽपि नरः असुरश्चेद्वदेत्परोक्षमपि प्रत्यक्षे का कथेति भावः दोषं यं कंचिदपि उदाहरेत् वदेत् तं लोके कुत्रापि न पश्यामि ॥ ५ ॥

६ ] ति० टी०—यदेवमतो देवतुल्यं दान्तं गुरुभिः शिक्षितम् एवमुक्तगुणं पुत्रं धर्ममवेक्षमाणः कस्त्यजेदित्यन्वयः । रिपूणां कैकेय्यादीनां विषयेऽपि वत्सलं स्निग्धम् ॥ ६ ॥

रा० टी०—कारणविशेषाभावे रामप्रव्राजनं न संभवतीत्याह—देवेति । देवकल्पं देवादिनिर्माणकारकम् । अकारणात् कारणविशेषाभावात् ॥ ६ ॥

गो० टी०—नाप्यनुमानं प्रत्यक्षं चेत्याह—देवकल्पमिति । देवकल्पम् "ईषदसमाप्तौ—" इत्यादिना कल्पप्प्रत्ययः देवसमानमित्ययमिति यावत् ऋजुं करणत्रयार्जवयुक्तं प्रजाच्छन्दानुवर्तिनं वा दान्तं दमितं गुरुभिः शिक्षितमित्यर्थः । निगृहीतेन्द्रियं वा रिपूणां कैकेय्यादीनामपि वत्सलं धर्मं धर्मस्वरूपं पुत्रं कारणे सत्यपि त्यागानर्हसंबन्धमवेक्षमाणः पश्यन्, यद्वा धर्ममवेक्षमाणः धार्मिकः अकारणात् दोषं विनापि त्यजेत् ॥ ६ ॥

७ ] ति० टी०—बाल्यं बालभावमविमृश्यकारित्वं कामपरवशत्वं चोपेयुषः प्राप्तस्य । राजवृत्तं पूर्वराजाचरितम् ॥ ७ ॥

रा० टी०—रामेणेदं दुष्करं कृतमित्याह—तदिति । बाल्यं स्वदत्तकैकयीवराच्छादनमुपेयुषः प्राप्तस्य राज्ञः इदं परंपराभिहितं वचनं दुष्करकार्यबोधकवाक्यं कः पुत्रः हृदये कुर्यान्न कोऽपीत्यर्थः । बाल्यमिति संवरणार्थकबलधातुप्रकृतिकण्यदन्तम् ॥ ७ ॥

गो० टी०—तदिति । बाल्यं बालभावं कामपारवश्यमित्यर्थः । राजवृत्तं राजनीतिम् ॥ ७ ॥

८ ] ति० टी०—अतो यावदिममर्थं त्वत्प्रवासनरूपं कश्चिदपि न जानाति तावत्ततः पूर्वमेव शासनं राज्यमभिषेकेणात्मस्थमात्माधीनं कुरु । 'शोभनम्' इति पाठे राज्यफलकमभिषेकम् ॥ ८ ॥

रा० टी०—परमात्माभिप्रायस्य दुर्ज्ञेयत्वेन मदुक्तमेतदभिप्रेतं न वेति तदभिप्रेतजिज्ञासया रामं प्रत्याह—यावदिति । कश्चिन्नरः इमं त्वत्प्रव्राजनरूपमर्थं नैव जानाति तावदेव आत्मस्थं स्वमनसि स्थितं शासनमाज्ञामित्यर्थः तेन भवदाज्ञापितसाधकयत्नमहं करिष्यामि इति सूचितम् । यावन्न जानातीत्यनेन ज्ञाते रहस्यवचनश्रवणानर्हजनबाहुल्यं स्यादिति व्यञ्जितम् ॥ ८ ॥

गो० टी०—यावदिति । शास्यत इति शासनं राज्यम् । आत्मस्थं कुरु स्वाधीनं कुर्वित्यर्थः ॥ ८ ॥

९ ] ति० टी०—कथमेवं शक्यं तत्राह—मयेति । अधिकं त्वदाज्ञोल्लङ्घनपूर्वमभिषेकविघ्नम् ॥ ९ ॥

रा० टी०—मयेति । सधनुषा धनुःसहितेन मया गुप्तस्य सेवितस्येत्यर्थः । तव अधिकं तदाज्ञापितात्परं कर्तुं कः समर्थः न कोऽपीत्यर्थः ॥ ९ ॥

गो० टी०—मयेति । तवाधिकं कर्तुं तव पौरुषाधिकं पौरुषं कर्तुमित्यर्थः ॥ ९ ॥

१० ] ति० टी०—विप्रिये तव विपक्षभावे ॥ १० ॥

रा० टी०—स्वसेवाकारमाह—निरिति । हे मनुजर्षभ ! विप्रिये तव विरोधे यदि स्थास्यति सर्वो जन इति शेषः । तदा अयोध्यामयोध्यादेशं निर्मनुष्यां मनुष्योपलक्षितविरोधिजनरहितां करिष्यामि ॥ १० ॥

गो० टी०—निर्मनुष्यामिति । विप्रिये प्रातिकूल्ये ॥ १० ॥

भरतस्याथ पक्ष्यो वा यो वास्य हितमिच्छति । सर्वांस्तांश्च वधिष्यामि मृदुर्हि परिभूयते ॥ ११ ॥
प्रोत्साहितोऽयं कैकेय्या संतुष्टो यदि नः पिता । अमित्रभूतो निःसङ्गं बध्यतां वध्यतामपि ॥ १२ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १३ ॥
बलमेष किमाश्रित्य हेतुं वा पुरुषोत्तम । दातुमिच्छति कैकेय्यै उपस्थितमिदं तव ॥ १४ ॥
त्वया चैव मया चैव कृत्वा वैरमनुत्तमम् । कास्य शक्तिः श्रियं दातुं भरतायारिशासन ॥ १५ ॥
अनुरक्तोऽस्मि भावेन भ्रातरं देवि तत्त्वतः । सत्येन धनुषा चैव दत्तेनेष्टेन ते शपे ॥ १६ ॥
दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति । प्रविष्टं तत्र मां देवि त्वं पूर्वमवधारय ॥ १७ ॥
हरामि वीर्याद्दुःखं ते तमः सूर्य इवोदितः । देवी पश्यतु मे वीर्यं राघवश्चैव पश्यतु ॥ १८ ॥

११ ] ति० टी०—पक्ष्यो मातुलादिः । यो वान्यः कश्चिदस्य हितमिच्छति । मृदुर्हीति अतो मार्दवं न युक्तम् । मार्दवानुचितः काल इति भावः ॥ ११ ॥

रा० टी०—भरतादीनामपि विपरीतत्वेन भयमस्तीत्याह—भरतस्येति । भरतस्य पक्षः मातुलप्रभृतिः यः अन्यो वा यस्य त्वद्विरोधिभरतस्य हितमिच्छति तान्सर्वान्वधिष्यामि । शान्त्या राजकीयकार्यसिद्धिर्न भविष्यतीत्याह—मृदुः शान्तस्वभावः परिभूयते ॥ ११ ॥

गो० टी०—भरतस्येति । पक्ष्यः सहायभूतो वर्गः ॥ ११ ॥

१२ ] ति० टी०—ननु राज्ञा राज्यस्य भरताय दीयमानत्वादपरिहार्योऽयमर्थस्तत्राह—प्रेति । कैकेय्या प्रोत्साहितस्तस्यां संतुष्टो यदि पिता नोऽस्माकममित्रभूतो जायते तदासौ बन्धनं प्राप्यताम्, अथवास्य वध एव क्रियताम् । त्रेताद्वापरयोः संधावयमवतारस्तदा च किंचिदधिकपादेनाधर्मप्रवेश इति तदनुसारेण लक्ष्मणस्यैवमुक्तिः, कैकेय्याश्च परोपदेशेनैवं मतिः, छलेन वालिवधे प्रवृत्तिश्च भगवत इति बोध्यम् ॥ १२ ॥

रा० टी०—स्वातिप्रीतिं दर्शयन्नाह—प्रेति । यदि संतुष्टस्त्वदनिष्टसाधने प्रीतिमानत एव अमित्रभूतः नः पिता तर्हि निःसङ्गं यथा स्यात्तथा बध्यतां बध्यतां बन्धनेन नियुज्यताम् वीप्साद्विर्वचनम् ॥ १२ ॥

गो० टी०—प्रोत्साहित इति । अमित्रभूतो यदि शत्रुपक्षसहायभूतश्चेदित्यर्थः ॥ १२ ॥

१३ ] ति० टी०—नन्वेवं दोषः स्यात्तत्राह—गुरोरिति । एवं च शास्त्रसंमतत्वान्नात्र दोष इति भावः ॥ १३ ॥

रा० टी०—ननु गुरुत्वादेव पिता न वाच्य इत्यत आह—गुरोरिति । अवलिप्तस्य गर्वविशिष्टस्य अत एव कार्याकार्यमजानतः अत उत्पथं शिष्टागृहीतमार्गं प्रतिपन्नस्य प्राप्तस्य गुरोरपि शासनं शिक्षा कार्यं एतेन पितुरपि शासनमुचितमिति ध्वनितम् ॥ १३ ॥

गो० टी०—स्वोक्तार्थे धर्मशास्त्रं प्रमाणयति—गुरोरिति । अवलिप्तस्य गर्वितस्य उत्पथम् अमर्यादाम् ॥ १३ ॥

१४ ] ति० टी०—ननु राज्ञो बलवत्त्वाद्बन्धनाद्यशक्यमत आह—बलमिति । उपस्थितं ज्येष्ठत्वेन न्यायतस्तवैव प्राप्तमिदं राज्यम् । एवं च बलहेत्वोरभावाद्बन्धनादि शक्यमेवेति भावः ॥ १४ ॥

रा० टी०—बलमिति । एषः पिता बलं सैन्यादिहेतुरूपराक्रमं हेतुं योग्यताकारणं वाश्रित्य किं दातुमिच्छति ॥ १४ ॥

गो० टी०—बलमिति । बलं राजत्वप्रयुक्तबलं हेतुं वरदानरूपहेतुं वा ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—बलाभावमेवाह—त्वयेत्यादि ॥ १५ ॥

रा० टी०—त्वयेति । अनुत्तमं निषिद्धमित्यर्थः । अस्य राज्ञः का शक्तिर्न काचिदित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—ननु तवाप्येवं वदतो न विश्वासो ज्ञातित्वाविशेषादत आह—अनुरक्त इति । भाव आन्तरोऽभिप्रायः ॥ १६ ॥

रा०टी०—राममुक्त्वा मातरं संबोध्याह—अन्विति । हे देवि ! भावेन मद्विषयकातिप्रेम्णा विशिष्टं भ्रातरं राममनुरक्तोऽस्मि तद्विषयकातिप्रेमवानस्मीत्यर्थः । अत्रार्थे विश्वासार्थमाह—सत्येन सत्यरूपधर्मेण धनुषा स्वचापेन दत्तेन वापीकूपादिनिर्माणजनितादृष्टेन यागादिजनितादृष्टेन च शपे एतच्छपथं करोमीत्यर्थः । प्रसिद्धश्च क्षत्रियाणां शस्त्राख्यशपथः इति नाप्रसिद्धिः ॥ १६ ॥

गो० टी०—अनुरक्त इति । दत्तेन दानेन इष्टेन देवार्चनादिना ॥ १६–१९ ॥

१७ ] ति० टी०—संप्रत्येवानुरागनिर्णय इत्याह—दीप्तमिति । दीप्तमग्निम् क्रोधमित्यर्थः । अरण्यं वा पित्राज्ञया ॥ १७ ॥

रा० टी०—ननु रामानुरागिणस्तव रामाभिप्रेतविरुद्धाचरणं न युक्तमित्यत आह—दीप्तमिति । अग्न्यादिकं प्रवेक्ष्यति पित्राद्याज्ञादिनेति शेषः । अवधारय निश्चिनु एतेनास्मिन् प्रसङ्गे रामेप्सितत्वं नास्तीति स्वनिश्चयः सूचितः तेन रामेच्छा ईश्वरैरपि दुर्ज्ञेयेति व्यक्तम् ॥ १७ ॥

१८ ] ति० टी०—राघवश्चेति । चात्सर्वो जनश्च ॥ १८ ॥

रा० टी०—हरामीति । वीर्यात्स्वपराक्रमात् ॥ १८ ॥

१ सर्वानेतानिति गो. पाठः । २ स तुष्टो इति गो. पाठः । ३ बध्यतां बध्यतामिति रा. पाठः । ४ पुरुषर्षभेति गो. पाठः । ५ राज्यमिति गो. पाठः । ६ प्रियमिति रा. पाठः ।

हनिष्ये पितरं वृद्धं कैकेय्यासक्तमानसम् । कृपणं च स्थितं बाल्ये वृद्धभावेन गर्हितम् ॥ १९ ॥
एतत्तु वचनं श्रुत्वा लक्ष्मणस्य महात्मनः । उवाच रामं कौसल्या रुदती शोकलालसा ॥ २० ॥
भ्रातुस्ते वदतः पुत्र लक्ष्मणस्य श्रुतं त्वया । यदत्रानन्तरं तत्त्वं कुरुष्व यदि रोचते ॥ २१ ॥
न चाधर्म्यं वचः श्रुत्वा सपत्न्या मम भाषितम् । विहाय शोकसंतप्तां गन्तुमर्हसि मामितः ॥ २२ ॥
धर्मज्ञ इति धर्मिष्ठ धर्मं चरितुमिच्छसि । शुश्रूष मामिहस्थस्त्वं चर धर्ममनुत्तमम् ॥ २३ ॥
शुश्रूषुर्जननीं पुत्र स्वगृहे नियतो वसन् । परेण तपसा युक्तः काश्यपस्त्रिदिवं गतः ॥ २४ ॥
यथैव राजा पूज्यस्ते गौरवेण तथा ह्यहम् । त्वां साहं नानुजानामि न गन्तव्यमितो वनम् ॥ २५ ॥
त्वद्वियोगान्न मे कार्यं जीवितेन सुखेन वा । त्वया सह मम श्रेयस्तृणानामपि भक्षणम् ॥ २६ ॥

---

१९-२० ] ति० टी०—कैकेय्यासक्तमानसमत एव कृपणम् । वृद्धभावेन वृद्धत्वेन गर्हितं यथा भवति तथा बाल्ये कामुकत्वे स्थितम् ॥ १९ ॥ २० ॥

रा० टी०—रामानुकूल्यं पापाचरणेनापि साधयिष्यामीत्याह—हनिष्ये इति । केकय्या सह वृद्धं पितरं हनिष्ये रामप्रतिकूलत्वेन ज्ञातमिति शेषः । एवं तत्त्वेन ज्ञातमसक्तमानसं विषयासक्तिरहितं परमहंसादिमित्यर्थः कृपणं दीनं च बाल्ये स्थितं बालकं चेत्यर्थः वृद्धभावेन वृद्धत्वेन गर्हितमतिवृद्धमित्यर्थः विषयासक्तिरहितादयो न हन्तव्या इति धर्मशास्त्रे प्रसिद्धम् । एतेन रामप्रतिकूलजनविनाशने मम वध्यावध्यविचारो नास्तीति ध्वनितं तेन प्रीतेः परा काष्ठा सूचिता ॥ १९ ॥

रा० टी०—एतदिति । महात्मनः अतिप्रयत्नशीलस्य लक्ष्मणस्य एतद्वचनं श्रुत्वा राममुवाच ॥ २० ॥

२१ ] ति० टी०—अनन्तरं युक्तं कार्यं तत्त्वं कुरुष्व यदि रोचते तर्हि लक्ष्मणवाक्यं कुरुष्वेति शेषः । अनेन कौसल्याया गूढं स्वानभिमतत्वं लक्ष्मणोक्तस्य सूचितम् ॥ २१ ॥

रा० टी०—तद्वचनमेवाह—भ्रातुरिति । पुत्र हे राम ! वदतः कथयतः लक्ष्मणस्य तत्त्वं याथार्थ्यविशिष्टमनन्तरं कापट्यरहितं वचनं त्वया श्रुतमतः अत्र अस्मिन् विषये यद्रोचते तत्कुरुष्व २१॥

गो० टी०—भ्रातुरिति । श्रुतं वाक्यजातमिति शेषः । परमधार्मिकराममातृत्वाबाधकं विहाय यदि रोचते इत्युक्तवती ॥ २० ॥

२२ ] ति० टी०—पुनः रामाभिप्रायनिर्णयाय लक्ष्मणवाक्यमेवोपोद्बलयितुमेतद्वाक्यमपि न येन तव दोषः स्यात्, किंतु मत्सपत्न्या इत्याह—न चेति । अधर्म्यं कनिष्ठस्य राज्यरूपं मम सपत्न्या भाषितं वचः श्रुत्वा मां विहायेतो वनं गन्तुं नार्हसि ॥ २२ ॥

रा० टी०—नेति । मम सपत्न्याः कैकय्या अधर्म्यं राजसाधर्मबोधकं किंच अकाण्डप्रव्राजनवाग्व्यापारबोधकत्वेन धर्मादनपेतं विरुद्धं वचः श्रुत्वा शोकसंतप्तां वियोगहेतुकशोकव्याप्तां मां विहाय त्यक्त्वा इतो गन्तुं नार्हसि, मया सह गन्तुमर्हसीत्यर्थः । अत्र संगृह्य शोकसंतप्तामिति वक्तव्ये विहायेत्युक्त्या स्वगमनाभावनिश्चयः सूचितः ॥ २२ ॥

गो० टी०—पितृवचनपरिपालकस्य रामस्य लक्ष्मणवचनमसह्यमिति ज्ञात्वाह—न चेत्यादिना ॥ २१ ॥

२३ ] ति० टी०—अथ यदि सापत्नमातृवाक्योल्लङ्घनेऽप्य धर्मबुद्ध्या तत्राप्यादरस्तर्हि राज्यं परित्यज्यैवेह तिष्ठेत्याह—धर्मज्ञ इति ॥ २३ ॥

रा० टी०—प्रव्रजनविषयकराजाज्ञाभावनिश्चयहेतुकतन्निगमिषाभावे तत्कर्तव्यमाह—धर्मज्ञ इति । हे धर्मिष्ठ ! धर्मज्ञस्त्वं यदि इहस्थः सन्धर्मं चरितुमिच्छसि तर्हि मां शुश्रूष इदमनुत्तमं धर्मं चर । इतिशब्दः इदमर्थे ॥ २३ ॥

गो० टी०—धर्मज्ञेति । 'एभ्यो माता गरीयसी' इति वचनं हृदि निधायाह—शुश्रूष मामिति ॥ २२ ॥

२४-२५ ] ति० टी०—शुश्रूषुः शुश्रूषां कुर्वन् । पुत्रेति रामसंबोधनम् । त्रिदिवं गतः मातृसेवया प्राजापत्यपदं प्राप्त इति भावः । तथाहि ततोऽपि गौरवेणाहं पूज्येत्यर्थः । 'पितुर्दशगुणं माता गौरवेणातिरिच्यते ' इति स्मृतेः । नानुजानामि वनं गन्तुमिति शेषः । किं च प्रतिषेधामीत्याह—न गन्तव्यमित्यादि ॥ २४ ॥ २५ ॥

रा० टी०—मातृशुश्रूषणरूपधर्मे शिष्टाचारं प्रमाणयन्ती आह—शुश्रूषुरिति । नियतः निरन्तरमित्यर्थः ॥ २४ ॥

गो० टी०—शुश्रूषुरिति । कश्यपपुत्रेष्वेकः स्वगृहे मातृशुश्रूषारूपमहातपसा त्रिदिवं प्राप्तवानिति गम्यते ॥ २३ ॥

रा० टी०—प्रव्राजननिवर्तनं मया नोचितमित्याह—यथेति । गौरवेण गुरुत्वेन यथा अहं पूज्येत्यर्थः तथा राजा पूज्यः अतः इतो वनं त्वया न गन्तव्यमिति न अनुजानामि आज्ञापयामीत्यर्थः । एतेन परस्पराननुकूलाचरणशीलात्वं तस्याः सूचितम् ॥ २५॥

गो० टी०—यथेति । नानुजानामि अनुज्ञां न करोमि २४-२५॥

२६ ] ति० टी०—अथ वनगमनपर्यन्तं तदाज्ञासत्त्वात्त्र सर्वथा स्थातुमशक्यमिति चेत्तत्राप्याह—त्वद्वियोगादिति । त्वद्वियोगात्परं जीवितादिना मे न किंचित्कार्यम् अतस्त्वयेत्यादि । एवं च मामपि सह नयेति भावः ॥ २६ ॥

---

१ श्लोकोऽयं गो. नास्ति । २ हनिष्ये इति रा. पाठः । ३ रुदन्ती इति गो. रा. पाठः । ४ कार्यमिति गो. पाठः । ५ यदीति गो. पाठः । ६ कुरु इति गो. पाठः । ७ नाहमनुजानामीति गो. पाठः । ८ वेति गो. पाठः ।

यदि त्वं यास्यसि वनं त्यक्त्वा मां शोकलालसाम् । अहं प्रायमिहासिष्ये न चै शक्ष्यामि जीवितुम् ॥ २७ ॥
ततस्त्वं प्राप्स्यसे पुत्र निरयं लोकविश्रुतम् । ब्रह्महत्यामिवाधर्मात्समुद्रः सरितां पतिः ॥ २८ ॥
विलपन्तीं तैथा दीनां कौसल्यां जननीं ततः । उवाच रामो धर्मात्मा वचनं धर्मसंहितम् ॥ २९ ॥
नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम । प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ॥ ३० ॥
ऋषिणा च पितुर्वाक्यं कुर्वता वैनचारिणा । गौर्हता जानता धर्मं कण्डुना चै विपश्चिता ॥ ३१ ॥
अस्माकं तुं कुले पूर्वं सगरस्याज्ञया पितुः । खनद्भिः सागरैर्भूमिमवाप्तः सुमहान्वधः ॥ ३२ ॥
जामदग्न्येन रामेण रेणुका जननी स्वयम् । कृत्ता परशुनारण्ये पितुर्वचनकारिणात् ॥ ३३ ॥

रा० टी०—अहं त्वया सहैव नेतव्येति बोधयन्ती आह—त्वदिति । त्वद्वियोगात्त्वद्वियोगं प्राप्य जीवितादिना मे न कार्यम् ॥ २६ ॥

२७ ] ति० टी०—प्रायमनशनदीक्षाम् चो हेतौ यतो जीवितुं न शक्ष्यामि ॥ २७ ॥

रा० टी०—यदीति । शोकलालसां शोकव्याप्तां मां त्यक्त्वा यदि वनं यास्यसि तर्हि अहं प्रायं सुमङ्गलं यथा स्यात्तथा इह न आसिष्ये स्थास्यामीत्यर्थः अत एव जीवितुं जीवयितुं पालयितुमित्यर्थः न शक्ष्यामि एतेन रामगमने दशरथो नेह स्थास्यतीति कौशल्यायाः निश्चयः सूचितः ॥ २७ ॥

गो० टी०—यदीति । प्रायं प्रायोपवेशनम् अनशनदीक्षामिति यावत् ॥ २६ ॥

२८–२९ ] ति० टी०—ततो मातुर्मरणान्तदुःखदानात् । समुद्रो हि कस्मिंश्चित्कल्पे मातुर्दुःखजननरूपाधर्मात्पिप्पलादब्रह्मर्षिकृतां कृत्यां प्राप्य नरकवासतुल्यं दुःखं प्राप्तवानिति क्वचित्पुराणे प्रसिद्धमित्याहुः ॥ २८ ॥ २९ ॥

रा० टी०—तत इति । ततः प्रजापालनविघाताल्लोकविश्रुतं लोकैर्विश्रावितं कथितमित्यर्थः निरयं मङ्गलरहितं वचनं प्राप्स्यसे श्रोष्यसीत्यर्थः । तत्र दृष्टान्तः अधर्मात् पिप्पलादापराधरूपकर्मणः ब्रह्महत्यां पिप्पलादोत्पादितकृत्याबोधकशब्दं समुद्र इव समुद्रकर्तृकब्रह्महत्याया अप्रसिद्धिरिति भूषणकृतः । पिप्पलादस्य कृत्याकर्तृत्वादि तु 'पिप्पलादसमुत्पन्ने कृत्ये लोकभयंकरे । पाषाणं ते मया दत्तमाहारार्थं प्रकल्पितम्' इत्यादिना पुराणेषु प्रसिद्धम् ॥ २८ ॥

रा० टी०—विलपन्तीमिति । धर्मात्मा सकलधर्मप्रवर्तकः राम उवाच ॥ २९ ॥

गो० टी०—तत इति । निरयशब्देन दुःखं लक्ष्यते ब्रह्महत्यामिवाधर्मात्समुद्रः सरितां पतिः अधर्मात् पिप्पलादविषये कृतादपकारात् ब्रह्महत्यामिव ब्राह्मणनिमित्तका हिंसा ब्रह्महत्येति व्युत्पत्त्या पिप्पलादोत्पादितकृत्यया समुद्रस्य प्राप्तं दुःखं ब्रह्महत्येत्युच्यते पिप्पलादेन कृत्योत्पादनं च 'पिप्पलादसमुत्पन्ने कृत्ये लोकभयंकरि । पाषाणं ते मया दत्तमाहारार्थं प्रकल्पितम्' इति प्रसिद्धम् । साक्षात्समुद्रकर्तृकब्रह्महत्याया अश्रवणादेवं व्याख्यातम्, यद्वा शुश्रूषुरित्यत्र काश्यपः पूर्वजन्मनि मातृशुश्रूषां कृत्वा तत्फलत्वेन दिवं गत्वा प्रजापतित्वं च गतवानिति पुराणकथा । उत्तरत्र समुद्रः किल मातृदुःखजननरूपाधर्माद्ब्रह्महत्यां ब्रह्महत्याप्राप्यनरकविशेषान् प्राप्तवानिति पौराणिकी कथा ॥ २७ ॥ २८ ॥

३० ] ति० टी०—तद्वचनस्य कर्तव्यत्वेऽपि युगपदनुष्ठानासंभवात्पितृवचसः प्रथमप्राप्तत्वेन प्राबल्यात्तदतिक्रमो, अशक्य इत्याह—नास्तीति ॥ ३० ॥

रा० टी०—तद्वचनमेवाह—नेति । समतिक्रमितुमुल्लङ्घितुं पितुर्वाक्यमित्यनेन केकय्युक्तं राजसंमतमेवेति रामनिश्चया व्यक्तः ॥ ३० ॥

गो० टी०—नास्तीति । शक्तिः उत्साहः पितृवचनस्य त्वद्वचनापेक्षया प्राथमिकत्वादिति भावः ॥ २९ ॥

३१] ति० टी०—किं च पितुर्वाक्येन गोमातृवधोऽपि पूर्वैर्महात्मभिः कृतः, मया तु दुःखमात्रं मातुः संपाद्यत इति न किंचिदेतदित्याह—ऋषिणेति । अधर्मं जानतापि ऋषिणापि मन्त्रद्रष्ट्रापि पितृवाक्यतो गौर्हता तस्मात्पितृवाक्याकरणे महानधर्म इति सूचितम् ॥ ३१ ॥

रा० टी०—अकार्यमपि पित्राज्ञया कर्तव्यमित्यत्र शिष्टाचारं प्रमाणयन्नाह—ऋषिणेति । ऋषिणा मन्त्रद्रष्ट्रा पितुर्वाक्यं कुर्वता कण्डुना ऋषिविशेषेण गौर्हता ॥ ३१ ॥

गो० टी०—मद्विपरीतकरं कथं करिष्यसीत्यत्राह—ऋषिणेत्यादिना ॥ ३०–३१ ॥

३२ ] ति० टी०—महान्वधो ब्राह्मणसकाशादतिनिन्द्यो वधः । अनेन प्राणत्यागेनापि पितृवाक्यं पालनीयमिति सूचितम् ॥ ३२ ॥

रा० टी०—अस्माकमिति । सागरैः सगरपुत्रैः सुमहानत्युग्रः वधः कपिलहेतुकात्मविघातः ॥ ३२ ॥

३३ ] ति० टी०—परशुना स्वयं स्वहस्तेन छिन्ना । अरण्ये तपोवने । एवं पित्राज्ञया मातृवधोऽपि यदधर्मो न तदा दुःखमात्रं न तथेति किं वक्तव्यम् ॥ ३३ ॥

रा० टी०—जामदग्न्येनेति । कृत्ता छिन्ना ॥ ३३ ॥

१ हीति गो. पाठः । २ तदेति गो. पाठः । ३ व्रतेति गो. पाठः । ४ अपीति गो. पाठः । ५ चेति गो. पाठः । ६ कारिणेति गो. पाठः ।

एतैरन्यैश्च बहुभिर्देवि देवसमैः कृतम् । पितुर्वचनमक्लीबं करिष्यामि पितुर्हितम् ॥ ३४ ॥
न खल्वेतन्मयैकेन क्रियते पितृशासनम् । एतैरपि कृतं देवि ये मया परिकीर्तिताः ॥ ३५ ॥
नाहं धर्ममपूर्वं ते प्रतिकूलं प्रवर्तये । पूर्वैरयमभिप्रेतो गतो मार्गोऽनुगम्यते ॥ ३६ ॥
तदेतत्तु मया कार्यं क्रियते भुवि नान्यथा । पितुर्हि वचनं कुर्वन्न कश्चिन्नाम हीयते ॥ ३७ ॥
तामेवमुक्त्वा जननीं लक्ष्मणं पुनरब्रवीत् । वाक्यं वाक्यविदां श्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ३८ ॥
तव लक्ष्मण जानामि मयि स्नेहमनुत्तमम् । विक्रमं चैव सत्त्वं च तेजश्च सुदुरासदम् ॥ ३९ ॥
मम मातुर्महद्दुःखमतुलं शुभलक्षण । अभिप्रायं न विज्ञाय सत्यस्य च शमस्य च ॥ ४० ॥
धर्मो हि परमो लोके धर्मे सत्यं प्रतिष्ठितम् । धर्मसंश्रितमप्येतत्पितुर्वचनमुत्तमम् ॥ ४१ ॥

---

३४-३५ ] ति० टी०—अक्लीबं कातर्यरहितम् । अतः पितुर्हितं करिष्यामि ॥ ३४ ॥ ३५ ॥

रा० टी०—एतैरिति । देवसमैः देवसदृशैः अनेन तेषामाप्तत्वं बोधितम् पितुर्हितम् । परमयशःप्रापकत्वेनातिप्रियं पितुर्वचनमक्लीबं यथा स्यात्तथा करिष्यामि ॥ ३४ ॥

रा० टी०—नेति । यतः ये कण्डुजामदग्न्यादयः मया परिकीर्तिताः तैरेतैरपि कृतमतः एकेन मया न क्रियते ॥ ३५ ॥

गो० टी०—एतैरिति । अक्लीबम् अकातरम् अक्लिष्टमिति यावत् ॥ ३३ ॥ ३४ ॥

३६ ] ति० टी०—ते प्रतिकूलमपूर्वं पूर्वानाचरितं धर्मं नाहं प्रवर्तये । उक्तस्यैवार्थस्यान्वयेन प्रतिपादनं पूर्वैरिति । अयमभिप्रेतो धर्मजनकत्वेनेष्टः पितृवाक्यपालनरूपः पूर्वैरयं मार्गो गतः प्राप्तः, मयापि तेषामनु पश्चाद्गम्यते ॥ ३६ ॥

रा० टी०—मत्पूर्वजैः स्वीकृतत्वान्मयावश्यं कर्तव्य इत्याह—नाहमिति । यतः पूर्वैः सागरादिभिः अयं मार्गोऽभिप्रेतः दृष्टः अत एव गतः प्रतिकूलं स्वकुलाननुरूपमपूर्वं नवीनं न प्रवर्तये अत एव पूर्वैर्गतो मार्गो मयानुगम्यते ॥ ३६ ॥

गो० टी०—नेति । अपूर्वम् अभिनवम् अभिप्रेतः अङ्गीकृतमित्यर्थः सर्वसंमत इति वार्थः तेन चन्द्रकृततारागमनादिव्यावृत्तिः । ननु दृष्टो धर्मव्यतिक्रमः साहसं च पूर्वेषामिति मातृवधादिकं साहसत्वेन निन्दितमिति चेन्न, साहसस्य पितृनियुक्तव्यतिरिक्तविषयत्वात् व्याख्यातृभिस्तदुदाहरणमज्ञानविजृम्भितम् 'पितुः शतगुणं माता गौरवेणातिरिच्यते' इति तु शुश्रूषामात्रे ननु वचनकरणे पितुरेव नियन्तृत्वात् अत एव 'माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः' इतिवचने नाप्यविरोधः ॥ ३६ ॥

३७ ] ति० टी०—तस्माद्धेतोर्भुवि भूलोके कार्यं कर्तुं योग्यमेव तदेतत्पितृवाक्यं मया क्रियते नान्यथाऽकृत्यं न क्रियत इत्यर्थः । नाम प्रसिद्धम् । कश्चिन्न हीयते मातुः किंचिद्दुःखोत्पादनेऽपि धर्मेणेति शेषः ॥ ३७ ॥

रा० टी०—उपसंहरन्नाह—तदिति । तद्वर्णितहेतोः कार्यं कर्तव्यं पितुर्वचनं पित्रा निर्दिष्टं भुवि कस्मिंश्चित्स्थले अन्यथा न क्रियते तदेव क्रियते इत्यर्थः । हि यतः पितुर्वचनं कुर्वन् पुरुषः न हीयते त्यज्यते धर्मेणेति शेषः नाम प्रसिद्धमेतत् । किंच अमहीयते न पूज्यते न सर्वोऽपि पूज्यते इत्यर्थः ॥ ३७ ॥

गो० टी०—तदिति । तत्तस्मात्कारणात् भुवि कार्यं कर्तव्यम् एतत् पितृवचनं मया त्वन्यथा न क्रियत इति संबन्धः हि यस्मात् पितृवचनं कुर्वन् कश्चिन्न हीयते नाम । नामेति प्रसिद्धौ ॥ ३६ ॥

३८-३९ ] ति० टी०—पुनरनन्तरम् ॥ ३८ ॥ ३९ ॥

रा० टी०—तामिति । सर्वधनुष्मतां श्रेष्ठो रामः लक्ष्मणमब्रवीत् ॥ ३८ ॥

रा० टी०—तद्वचनमेवाह—तवेति । हे लक्ष्मण ! अनुत्तममतिश्रेष्ठं स्नेहादि जानामि ॥ ३९ ॥

गो० टी०—तामिति । पुनः अनन्तरमित्यर्थः ॥३७॥३८॥

४० ] ति० टी०—मम मातुर्यन्महद्दुःखं तत्सत्यशमयोरभिप्रायं तद्विषयमदभिप्रायमज्ञात्वा इत्यतस्तवेदृशं वाक्यं तत्त्वज्ञस्यानुचितमिति भावः ॥ ४० ॥

रा० टी०—ममेति । हे शुभलक्षण ! सत्यस्य सत्यप्रतिज्ञस्य अत एव शमस्य नित्यनियमितोभयकरणस्य पितुरनुक्तं प्राकृतविलक्षणमभिप्रायं प्रतिज्ञापालनादिरूपमभिप्रेतं विज्ञाय मम मातुः महद्दुःखं न एतेन प्रव्रजनप्रतिबन्धकारकं वचनं न वक्तव्यमिति सूचितम् ॥ ४० ॥

गो० टी०—ममेति । सत्यस्य धर्मस्य अभिप्रायं रहस्यमविज्ञाय मम मातुः अतुलं महद्दुःखं जायत इति शेषः । धर्मरहस्यं जानन्नपि त्वं किमर्थमेवं वदसीति भावः ॥ ३९ ॥

४१ ] ति० टी०—तदेवाह—धर्म इति । धर्मः सर्वपुरुषार्थेषूत्तमः श्रेष्ठः । प्रतिष्ठितं प्रशस्तं कारणम् । एतदुत्तमं पितुर्वचनं धर्मसंश्रितमपि वने तपस्यया तपस्विरक्षणेन च धर्मलाभात् अतोऽवश्यं कर्तव्यं तद्वच इति भावः । अत्रोत्तममित्यस्य त्रैलोक्यपालकत्वेनोत्तममिति व्यङ्ग्यम् ॥ ४१ ॥

रा०टी०—धर्मोऽवश्यमाचरणीय इति बोधयन्नाह—धर्म इति । धर्मः प्रजापालनादिः परमः अतिश्रेष्ठः अत एव धर्मे सत्यं धर्मनिमित्तकं सत्यमित्यर्थः प्रतिष्ठितमतिश्रेष्ठमत एव धर्मसंश्रितं

१ देवेति गो. ङ. पाठः । २ तदेवेति गो. पाठः । ३ अविज्ञायेति गो. पाठः । ४ पालयेति गो. पाठः ।

संश्रुत्य च पितुर्वाक्यं मातुर्वा ब्राह्मणस्य वा । न कर्तव्यं वृथा वीर धर्ममाश्रित्य तिष्ठता ॥ ४२ ॥
सोऽहं न शक्ष्यामि पुनर्नियोगमतिवर्तितुम् । पितुर्हि वचनाद्वीरे कैकेय्याहं प्रचोदितः ॥ ४३ ॥
तदेतां विसृजानार्यां क्षत्रधर्माश्रितां मतिम् । धर्ममाश्रय मा तैक्ष्ण्यं मद्बुद्धिरनुगम्यताम् ॥ ४४ ॥
तमेवमुक्त्वा सौहार्दाद्भ्रातरं लक्ष्मणाग्रजः । उवाच भूयः कौसल्यां प्राञ्जलिः शिरसा नतः ॥ ४५ ॥
अनुमन्यस्व मां देवि गमिष्यन्तमितो वनम् । शापितासि मम प्राणैः कुरु स्वस्त्ययनानि मे ॥ ४६ ॥
तीर्णप्रतिज्ञश्च वनात्पुनरेष्याम्यहं पुरीम् । ययातिरिव राजर्षिः पुरा हित्वा पुनर्दिवम् ॥ ४७ ॥

धर्मनिष्पादकमित्यर्थः । अपिना सत्यसंश्रितमेतत्पितुः वचनमुत्तममेतेन इदं पित्राज्ञापितं कर्तव्यमस्माभिरिति सूचितम् ॥४१॥

गो० टी०—धर्मतत्त्वमाह—धर्मो हीति । लोके पुरुषार्थेषु धर्मः परमः प्राथमिकः प्रधानभूतः । ततः किमित्यत्राह—धर्मे सत्यं प्रतिष्ठितमिति धर्मैकपर्यवसायि सत्यमित्यर्थः । उत्तमं मातृवचनापेक्षया उत्कृष्टम् एतत् पितृवचनं च धर्मसंश्रितं धर्मैकफलम् ॥ ४० ॥

४२ ] ति० टी०—पितृवाक्यकरणस्य प्रतिज्ञातत्वादपि तदुल्लङ्घनमनुचितमित्याह—संश्रुत्येति । प्रतिज्ञाय । वृथा मोघम् ॥ ४२ ॥

रा० टी०—वाक्यकरणाभावे दोषमाह—संश्रुत्येति । पित्रादिवाक्यं संश्रुत्य करिष्यामीति प्रतिज्ञाय धर्ममाश्रित्य तिष्ठता पुरुषेण वृथा मिथ्या न कर्तव्यम् किंच न कर्तव्यमिति वचनं वृथा तदाचरितधर्मादिवैयर्थ्यसंपादकमित्यर्थः । एतेन स्वधर्मं रक्षता पुरुषेण पित्राद्याज्ञापनमवश्यमनुष्ठेयमिति सूचितम् ॥४२॥

गो० टी०—एवं सत्यवचनं पितृवचनकरणं च द्वयमपि धर्मनिमित्तमित्युक्तं तत्र सत्यस्य कर्तव्यत्वमाह—संश्रुत्येति । धर्ममाश्रित्य तिष्ठता धर्मरूपफलमिच्छता ॥ ४१ ॥

४३ ] ति० टी०—इदं सपत्न्याः कैकेय्या वचनं न पितुस्तत्राह—सोऽहमित्यादि ॥ ४३ ॥

रा० टी०—स इति । हे धीर! पितुर्वचनात्पित्राज्ञापितत्वहेतोः कैकेय्या प्रचोदितः वनगमनाय प्रेरितः सोऽहं नियोगमाज्ञामतिवर्तितुमुल्लङ्घितुं न शक्ष्यामि ॥ ४३ ॥

गो० टी०—पितृवचनकरणस्य कर्तव्यत्वमाह—सोऽहमिति । प्रतिज्ञातवानहमित्यर्थः । नियोगं आज्ञां पितृवचनत्वाभावं परिहरति—पितुर्हीति । पितृवचनकरणं सत्यं च एकैकमेव धर्ममूलं कार्यं किं पुनर्मिलितमिति भावः ॥ ४३ ॥

४४–४५ ] ति० टी०—अनार्यां मतिं पितरं बद्ध्वा हत्वा वा राज्यं कर्तव्यमित्येवमधर्मविषयां मतिम् । मद्बुद्धिः पितृवाक्यकरणरूपा अनुगम्यतामनुवर्त्यताम् ॥ ४४ ॥ ४५ ॥

रा० टी०—तदिति । तद्वर्णितहेतोः अनार्यां क्षुद्रां क्षत्रधर्माश्रितां क्षत्रधर्मैः राज्यधर्मनिष्णातैः आश्रितामासेवितामेनां पित्राज्ञापनहापिकां मतिं विसृज त्यज अत एव तैक्ष्ण्यं प्रमापनहेतुभूतकैकेय्यादिषु तीक्ष्णत्वं धर्मं माश्रय न स्वीकुरु अत एव मद्बुद्धिः मत्स्वीकृतो निश्चयः अनुगम्यतां क्रियतामित्यर्थः । अयं निरनुबन्धको माशब्दः अत एव “ माङि लुङ् ” इत्यस्य न प्रवृत्तिः ॥ ४४ ॥

रा० टी०—तमिति । कौसल्यां भूय उवाच ॥ ४५ ॥

गो० टी०—एवं सत्यरहस्यमुक्त्वा शमस्य तत्त्वमाह—तदिति । अनार्यां दुष्टां पितरमपि हत्वा राज्यं कुर्यामित्येवंरूपां क्षत्रधर्माश्रितां केवलक्रूरधर्माश्रितां रौद्रप्राज्ञसहितक्षत्रधर्माश्रितामिति वार्थः । क्षत्रधर्मस्य तथात्वं प्रतिपादितं महाभारते राजधर्मे—‘क्षत्रधर्मो महारौद्रः शठकृत्य इति स्मृतः’ इति । तादृशीं मतिं विसृज किंतु धर्ममप्याश्रय मा तैक्ष्ण्यम्, इतः परमपि क्रौर्यं माश्रय मद्बुद्धिः मम बुद्धिः अनुगम्यतामनुवर्त्यतां लोकायतमतं केवलनीतिर्नाश्रयणीया किंतु धर्माश्रिता नीतिरित्यर्थः । अस्मिन् हि शास्त्रे धर्मस्थापनमुच्यते, स्थापनं च धर्ममन्तरेण केवलनीतिरेवार्थसाधनमिति लोकायतमतनिरासेन प्रवर्तनं, तेन तत्र तत्र लक्ष्मणमुखेन लोकायतं प्रवर्तिते उपन्यस्ते तन्निरासेन रामेण धर्मः स्थाप्यत इति रहस्यम् ॥ ४३–४५ ॥

४६ ] ति० टी०—शापितासि शपथं प्रापितासि । गमनविरोधं मा कुर्विति शेषः ॥ ४६ ॥

रा० टी०—तद्वचनमेवाह—अन्विति । इतः उक्तहेतोः वनं गमिष्यन्तं मामनुमन्यस्व आज्ञापयेत्यर्थः । ननु वियोगकारिणीभूतमत्कर्तृका प्रव्रजनप्रेरणा कथं स्यादित्यत आह—शा नित्यमङ्गलस्वरूपा त्वं प्राणैः प्राणप्रियलक्ष्मणादिभिः सह मम मया शापिता नित्यं प्राप्ता नित्यसंबन्धविशिष्टासीत्यर्थः एतेन सर्वेषां नित्यत्वं सूचितम् तेन नित्येषु ध्वंसप्रतियोगित्वाभावेन विनाशामकिंचित्करत्वाद्वियोगेऽपि शोको न कार्य इति ध्वनितम् ॥ ४६ ॥

४७ ] ति० टी०—दिवं हित्वा भूमौ पतितः पुनर्दिवं यथा गतस्तथेत्यर्थः ॥ ४७ ॥

रा० टी०—तीर्णेति । तीर्णा समापिता प्रतिज्ञा येन सोऽहं पुनरेष्यामि । पुनरागमनमात्रे दृष्टान्तः ययातिरिवेति ययातिः स्वर्गाद्भूमौ पतितः पुनः स्वर्गं जगामेति प्रसिद्धम् ॥ ४७ ॥

गो० टी०—किं ते मद्वचनं न कर्तव्यमित्याशङ्क्य प्रथमप्रवृत्तपितृवचनकरणानन्तरं क्रियत इत्याह—तीर्णप्रतिज्ञ इति । ययातिः स्वर्गाद्भ्रष्टः पुनः स्वर्गं गत इति महाभारते प्रसिद्धम् ४६॥४७

१ पितुरिति गो. पाठः । २ धीरेति रा. पाठः । ३ एनामिति गो. रा. पाठः ।

शोकः संधार्यतां मातर्हृदये साधु मा शुचः । वनवासादिहैष्यामि[1] पुनः कृत्वा पितुर्वचः ॥ ४८ ॥
त्वया मया च वैदेह्या लक्ष्मणेन सुमित्रया । पितुर्नियोगे स्थातव्यमेष धर्मः सनातनः ॥ ४९ ॥
अम्ब संभृत्य संभारान्दुःखं हृदि निगृह्य[2] च । वनवासकृता बुद्धिर्मम धर्म्यानुवर्त्यताम् ॥ ५० ॥
एतद्वचस्तस्य निशम्य माता सुधर्म्यमव्यग्रमविक्लवं च ।
मृतेव संज्ञां प्रतिलभ्य देवी समीक्ष्य रामं पुनरित्युवाच ॥ ५१ ॥
यथैव ते पुत्र पिता तथाहं गुरुः स्वधर्मेण सुहृत्तया च ।
न त्वानुजानामि न मां विहाय सुदुःखितामर्हसि पुत्र[3] गन्तुम् ॥ ५२ ॥
किं जीवितेनेह[4] विना त्वया मे लोकेन वा किं स्वधयामृतेन ।
श्रेयो मुहूर्तं तव संनिधानं ममैव कृत्स्नादपि जीवलोकात् ॥ ५३ ॥
नरैरिवोल्काभिरपोह्यमानो महागजो ध्वान्तमभिप्रविष्टः[5] ।
भूयः प्रजज्वाल विलापमेवं[6] निशम्य रामः करुणं जनन्याः ॥ ५४ ॥

---

४८ ] ति० टी०—पुनरेष्यामीत्यन्वयः ॥ ४८ ॥

रा० टी०—शोक इति । हे मातः ! शोकः शोकविशिष्टः पितेति शेषः संधार्यतां बोध्यतामित्यर्थः । ननु शोकाक्रान्तया मया कथं तस्य प्रबोध इत्यत आह—मा शुचः शोकं त्यजेत्यर्थः । तत्र हेतुः एष्यामि आगन्तास्मि अत एव मा शुच इत्यनेन न पौनरुक्त्यम् ॥ ४८ ॥

४९ ] ति० टी०—पितू राज्ञो दशरथस्य ॥ ४९ ॥

रा० टी०—त्वयेति । नियोगे आज्ञापने ॥ ४९ ॥

गो० टी०—न केवलं ममैवायं भारः किंतु युष्माकमपीत्याह—त्वयत्येकादिश्लोकेन ॥ ४८ ॥

५० ] ति० टी०—संभारानभिषेकसंभारान् निगृह्य निवार्य अनुवर्त्यतां त्वयानुमन्यतामित्यर्थः ॥ ५० ॥

रा० टी०—अम्बेति । संभारानभिषेकसामग्रीः अवसंहृत्य संस्थाप्य धर्म्या धर्मादनपेता मम बुद्धिः अनुवर्त्यतां तदनुसारेणैव क्रियतामित्यर्थः ॥ ५० ॥

गो० टी०—अम्बेति । संभारान् पूजाद्रव्याणि ॥ ४९ ॥

५१ ] ति० टी०—सुधर्म्यं धर्मयुक्तम् अव्यग्रं धैर्ययुक्तम् अविक्लवमकातरम् । मृतेव मूर्च्छितेति यावत् ॥ ५१ ॥

रा० टी०—एतदिति । सुधर्म्यमतिधर्मविशिष्टमव्यग्रं व्यग्रताविरोधि अविक्लवं कातर्यरहितं वचो निशम्य श्रुत्वा राममिति उवाच ॥ ५१ ॥

गो० टी०—एतदिति । अव्यग्रम् अनाकुलम् 'व्यग्रो व्यासक्त आकुलः' इत्यमरः । अविक्लवम् अविह्वलं दृढनिश्चयप्रतिपादकमित्यर्थः । मृतेव मूर्च्छितेति यावत् ॥ ५० ॥

५२ ] ति० टी०—स्वधर्मेण पालनादिरूपमातृधर्मेण । सुहृत्तया पितुरिव स्नेहवत्तया ॥ ५२ ॥

रा० टी०—सदृष्टान्तमेवाह—यथेति । यथा ते गुरुः पिता तथा अहमतः स्वधर्मेण स्वस्य आत्मनः पुत्रस्येत्यर्थः धर्मेण सेवादिना सुहृत्तया चोपलक्षितस्त्वं न मां त्वत्कर्तृकनमस्कारकर्मीभूतां सुदुःखितां त्वद्वियोगश्रुतिहेतुकदुःखविशिष्टां मां विहाय त्यक्त्वा गन्तुं नार्हसि इति त्वा त्वामनुजानामि बोधयामि मया सहैव गन्तुं योग्योऽसीति स्वाभिप्रायः सूचितः ॥ ५२ ॥

गो० टी०—यथेति । सुहृत्तया स्नेहेन एवं सुदुःखितामिति संबन्धः ॥ ५१ ॥

५३ ] ति० टी०—लोकेनेतरबन्धुजनेन । स्वधया पितृपूजनेन इदमुपलक्षणं देवपूजादेरपि । अमृतेनामृतत्वसाधनेन तत्त्वज्ञानेनापि किम् कृत्स्नादपि जीवलोकात्कृत्स्नलोकसांनिध्यान्मुहूर्तमपि तव संनिधानमेव श्रेयः ॥ ५३ ॥

रा० टी०—ननु विपिने क्लेशभिया न नेतास्मीत्यत आह—किमिति । लोकेन सुहृज्जनेन स्वधया स्वधादिशब्दवत्या निखिलक्रिययेत्यर्थः । अमृतेन ध्वंसाप्रतियोगिना जीवितेन कृत्स्नान्निखिलाजीवलोकात्सकललोकराज्येनेत्यर्थः । मुहूर्तमपि त्वया विना किं सर्वं व्यर्थमित्यर्थः । तत्र हेतुः तव संनिधानमेव मम श्रेयः ॥ ५३ ॥

गो० टी०—ननु राजनियोगस्त्वयाप्यनुवर्तनीय इति तत्राह—किमिति । लोकेन परलोकेन स्वधया पितृलोकप्राप्तिसिद्ध्या किं प्रयोजनमित्यर्थः अमृतेन स्वर्गलोकप्राप्तिसिद्धेनामृतेन किं प्रयोजनं कृत्स्नादपि जीवलोकात् आनन्दहेतुभूतमहर्लोकाद्युपरितनलोकान्तर्वर्तिजीववर्गात् संनिहितादिति शेषः ॥ ५२ ॥

५४ ] ति० टी०—नरैरुल्काभिरकातैरपोह्यमानस्तुद्यमानो निशि ध्वान्तमभिप्रविष्टो गज इव भूयः प्रजज्वाल । किमिदं यन्मामधर्मे प्रवर्तयितुं विपलतीति क्रोधः ॥ ५४ ॥

रा० टी०—रामजननीवचनं संवर्ण्य तत्समीपवर्तितदभिप्रायानभिज्ञजनकृत्तमाह—नरैरिति । एवं जननीविलापसदृशं जन-

---

१ इहैष्यामीति रा. पाठः । २ अवसंहृत्येति रा. पाठः । ३ गन्तुमेवमिति गो. पाठः । ४ इहेति गो. पाठः । ५ ऽध्वानमन्विति गो. पाठः । ६ एतमिति गो. पाठः ।

स मातरं चैव विसंज्ञकल्पमार्तं च सौमित्रिमभितप्तम् ।
धर्मे स्थितो धर्म्यमुवाच वाक्यं यथा स एवार्हति तत्र वक्तुम् ॥ ५५ ॥
अहं हि ते लक्ष्मण नित्यमेव जानामि भक्तिं च पराक्रमं च ।
मम त्वभिप्रायमसंनिरीक्ष्य मात्रा सहाभ्यर्दसि मा[1] सुदुःखम् ॥ ५६ ॥
धर्मार्थकामाः खलु[2] जीवलोके समीक्षिता धर्मफलोदयेषु ।
ये[3] तत्र सर्वे स्युरसंशयं मे भार्येव वश्या[4]भिमता सपुत्रा[5] ॥ ५७ ॥
यस्मिंस्तु सर्वे स्युरसंनिविष्टा धर्मो यतः स्यात्तदुपक्रमेत ।
द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वि[6]ति न प्रशस्ता ॥ ५८ ॥

---

न्या समीपवर्तिनामिति शेषः । विलापं निशम्य श्रुत्वा उल्कादिभिः अपोह्यमानः निवार्यमाणः अध्वानं मार्गं प्रविष्टो महागज इव भूयः प्रजज्वाल अधिकं शुशुभे गमनाय मतिं चक्रे इत्यर्थः । एतेन जनन्यभिप्रायः रामेण बोधित इति ध्वनितम् ॥ ५४ ॥

गो० टी०—एवं मातृकारुण्येऽपि धर्म एव स्थिरोऽभूदित्याह—नरैरिति । नरैर्गजग्राहिभिः उल्काभिः साधनैः अपोह्यमानः निवार्यमाणोऽपि अध्वानं मार्गमनुप्रविष्टो महागज इव मात्रादिवाक्येन वार्यमाणोऽपि धर्ममनुप्रविष्टो रामः भूयः प्रजज्वाल संरब्धोऽभूत् स्वमार्ग एव स्थितोऽभूदित्यर्थः । अत्र नरैरित्युपमानगतबहुवचनेन पुनः सौमित्रिणापि तथैवोक्तमिति मन्यते अत एव मातरं सौमित्रिं चेत्युक्तम् ॥ ६२ ॥

५५ ] ति० टी०—तत्र रामस्य धर्मे निष्ठां वाल्मीकिः श्लाघते—यथा स एवेति । तत्र तथाविधघोरदशायाम् । अनन्वयालंकारोऽत्र ॥ ६६ ॥

रा० टी०—स इति । विसंज्ञकल्पां विसंज्ञं संज्ञाराहित्यं कल्पयति करोति सा ताम् तच्चेष्टादर्शनमात्रेण अन्या अपि विसंज्ञा भवन्तीत्यर्थः । किंच प्राप्तकिंचित्संज्ञां मातरं सौमित्रिं च यत्स एव वक्तुमर्हति तद्धर्म्यं धर्मादनपेतं वाक्यं धर्मे स्थितः स रामः यथा यथावदुवाच ॥ ६९ ॥

गो० टी०—स इति । तत्र तस्मिन्धर्मसंकटे अतिकृच्छ्रावस्थायां एतादृशधर्मैकनिष्णातपुरुषान्तरस्याभावात् स एवार्हतीति वाल्मीकिः स्तौति ॥ ६४ ॥

५६ ] ति० टी०—ममाभिप्रायं धर्मैकनिष्ठस्वरूपम् । अभ्यर्दयसि पीडयसि । 'अभ्यर्थयसि' इति पाठे प्रेरयसीत्यर्थः । सर्वथान्तर्भावितण्यर्थता । एवं सुतरां दुःखं मा मा कुर्वित्यर्थः ॥ ६६ ॥

रा० टी०—तद्वचनमेवाह—अहमिति । हे लक्ष्मण ! ते नित्यं पराक्रमं भक्तिं च अहं जानामि त्वं तु ममाभिप्रायमसंनिरीक्ष्य अज्ञात्वा सुदुःखं यथा स्यात्तथा मात्रा सह मा माम्र्दसि सहमर्दनं याचसे ॥ ६६ ॥

गो० टी०—अहमिति । अभ्यर्दसि व्यथयसि ॥ ६६ ॥

५७ ] ति० टी०—धर्मफलोदयेषु पूर्वकृतधर्मफलोत्पत्तिकालेषु ये धर्मार्थकामास्त्रयोऽपि लोके समीक्षिता दृष्टा मन्वादिभिर्धर्मफलत्वेन ये त्रयोऽपि दृष्टास्ते सर्वे तत्र धर्मे सति अवश्यं भवेयुरिति मे मतिः न तु तत्र मे कश्चित्संदेह इति भावः । एकतोऽनेककार्यलाभे दृष्टान्तमाह—भार्येवेति । वश्यानुकूला । अतिथिपूजादिधर्मसाधनम्, अभिमताभिप्रिया कामसाधनम् । सपुत्रा परमलोकगमनरूपार्थसाधनं च भवति तद्वत् । तस्माद्धर्म एव मुख्य इति स एव रक्ष्य इति भावः ॥ ६७ ॥

रा० टी०—स्वाभिप्रायमाह—धर्मेति । धर्मफलोदयेषु धर्माणां सदसत्कर्मणां फलोदयेषु फलभोगसमयेषु समीक्षितास्तत्वतो ज्ञाताः तत्र प्रसिद्धे जीवलोके ये धर्मार्थकामाः ते वश्या, स्वाधीनतां प्राप्ता अभिमता सौन्दर्यादिना अत्यन्तमीप्सिता सपुत्रा पुत्रसहिता भार्येव असंशयं यथा स्यात्तथा मे वश्याः स्युः सन्ति एतेन सर्वे स्वस्वसमये मया रक्षणीया इति सूचितम् ॥ ६७ ॥

गो० टी०—धर्मो हि परमो लोक इत्यादिना पूर्वं संग्रहेणोक्तं प्रपञ्चयति—धर्मेति । तातेति सान्त्वसंबोधने किलेति प्रसिद्धौ लोक इति मोक्षव्यावृत्तिः धर्मफलोदयेषु धर्मस्य फलभूतानां सौख्यानामुदयेषु प्राप्तिषु समीक्षिताः उपायत्वेन निश्चिताः ये धर्मार्थकामाः ते सर्वे तत्र धर्मे स्युः धर्म एवानुष्ठिते सौख्यातिशयप्रदानस्वभावाः सर्वे पुरुषार्थाः सिध्यन्तीति भावः । अत्रार्थे मे असंशयं संशयो नास्ति अर्थाभावेऽव्ययीभावः । उक्तार्थे दृष्टान्तमाह—भार्येत्यादि । यथा भार्या वश्या अनुकूला सती धर्मं जनयति अभिमता प्रिया कामं, सपुत्रा सती अर्थं, सुलक्षणसुलग्नप्रभवपुत्रे जाते हि पितुरर्थाः सिध्यन्तीति तथा सर्वपुरुषार्थानां धर्म एव निदानं तथाहि धर्मो हि धर्महेतुरर्थहेतुः काम्यमानस्रक्चन्दनवनितादिहेतुश्च अतो धर्म एव समाश्रयणीय इति भावः । यद्वा लोके धर्मत्रयः फलसाधनत्वेन समीक्षिताः शास्त्रादिभिरवगतास्ते सर्वे तत्र फलोदयेषु स्युः समर्थाः स्युः मे असंशयं मया निश्चितमित्यर्थः यथा उक्तगुणविशिष्टा भार्या फलसाधनं तथेति अस्मिन् पक्षे अध्याहारादिक्लेशो नास्ति उत्तरश्लोकानुरूप्यं च ६६

५८ ] ति० टी०—अनुमेवार्थं प्रकारान्तरेण द्रढयति—यस्मिन्निति । यस्मिन्कर्मणि सर्वे धर्मादयोऽसंनिविष्टा असंबद्धास्त-

---

१ मामिति गो. पाठः । २ किल तात लोके इति गो. पाठः । ३ ते इति गो. पाठः । ४ वश्येति गो. पाठः । ५ सुपुत्रेति गो. रा. पाठः । ६ अपीति गो. पाठः ।

गुरुश्च राजा च पिता च वृद्धः क्रोधात्प्रहर्षा[1]दथवापि कामात् ।
यद्व्यादिशेत्कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥ ५९ ॥
न[2] तेन शक्नोमि पितुः प्रतिज्ञामिमां न[3] कर्तुं सकलां यथावत् ।
स ह्यावयोस्तात गुरुर्नियोगे देव्याश्च भर्ता स गतिश्च[4] धर्मः ॥ ६० ॥
तस्मिन्पुनर्जीवति धर्मराजे विशेषतः स्वे पथि वर्तमाने ।
देवी मया सार्धमितोऽ[5]भिगच्छेत्कथंस्विदन्या विधवेव नारी ॥ ६१ ॥
सा मानुमन्यस्व वनं व्रजन्तं कुरुष्व नः स्वस्त्ययनानि देवि ।
यथा समाप्ते पुनराव्रजेयं यथा हि सत्येन पुनर्ययातिः ॥ ६२ ॥

नोपक्रमेत नारभेतैवेति शेषः । एकैकफलकानेककर्मसंभवेऽपि यतो धर्मः स्यात्तदुपक्रमेत तदेव कुर्यान्नापरम् । कुतस्तत्राह—द्वेष्य इति । अर्थपरो धर्मविरुद्धकेवलार्थपरः । कामात्मता धर्मविरुद्धकामपरता न प्रशस्ता गर्हिता राज्ञ इव ॥ ५८ ॥

रा० टी०—धर्मस्तु सदैव रक्षणीय इति बोधयितुमाह—यस्मिन्निति । यस्मिन्धर्मे सर्वे जनाः असंनिविष्टाः उपदेशमन्तरा प्रवृत्तिरहिताः स धर्मः यतः येनोपायेन स्यात्तेनोपायेन तत्तं धर्ममुपक्रमेत आरभेत । तदिति सामान्ये नपुंसकं धर्महेतुत्वानाक्रान्ता अर्थकामा न सेव्या इति बोधयितुं तत्र दोषमाह—अर्थपरः धर्माकारणीभूतद्रव्यादिसंग्रहीता द्वेष्यो भवति अतः कामात्मता कामपरत्वं न प्रशस्तं तत्रापि द्वेषादेर्दर्शनमस्तीति तात्पर्यम् ॥ ५८ ॥

गो० टी०—एवं धर्मादीनां फलसाधनत्वं निर्णीतं तेष्वविशेषादन्यतमस्याश्रयणीयत्वे प्राप्ते आह—यस्मिन्निति । यस्मिन् कर्मणि आश्रयमाणे सर्वे अर्थादयस्त्रयः असंनिविष्टा न प्रविशन्ति न संभवन्तीति यावत् किंतु यतो धर्मः यस्माद्धर्म एव स्यात्तदारभेत अथवा यस्मिन् कर्मणि सर्वे धर्मार्थकामाः असंनिविष्टाः स्युः अविद्यमानाः भवेयुः तत् कर्म नोपक्रमेत यतः यस्मात्कर्मणः धर्मः स्यात् तदुपक्रमेत । प्रथमयोजनायामर्थकामयोः संनिवेशे को दोष इत्यत्राह—द्वेष्य इति । तस्मादर्थकामौ परित्यज्य केवलधर्मपरो भवेदित्यर्थः ॥ ५७ ॥

५९ ] ति० टी०—यदेवमतो—गुरुश्चेत्यादि । गुरुरुपनेता धनुर्वेदाद्युपदेष्टा च स यत्कार्यं व्यादिशेत्तद्धर्ममवेक्ष्य पितृवचनकरणं धर्म इति ज्ञात्वा को न कुर्यात् ॥ ५९ ॥

रा० टी०—गुरुरिति । गुर्वादिर्यद्व्यादिशेदाज्ञापयेत्तत्कार्यं धर्ममवेक्ष्य कः अनृशंसवृत्तिर्न कुर्यात् कुर्यादेवेत्यर्थः ॥ ५९ ॥

गो० टी०—यतो धर्म एव कर्तव्यः अत आह—गुरुरिति । गुरुः धनुर्वेदादिविद्याद्युपदेष्टा । यदिवेत्येकनिपातो वार्थे अपिर्भिन्नक्रमः । धर्मं सत्यप्रतिज्ञत्वरूपमवेक्ष्य तत्परिपालनायेत्यर्थः । यत्कार्यं व्यादिशेत् निरुजीत तत्कर्म अनृशंसवृत्तिः को न कुर्यात् यो न करोति स केवलं नृशंस इति भावः ॥ ५८ ॥

६० ] ति० टी०—इमां सकलां संपूर्णां न कर्तुं न शक्नोमि । नियोगे प्रभुरिति शेषः । मातुः स्वेन सह गमननिषेधायाह—देव्याश्चेति । भर्तृत्वात्स एवास्या गतिर्न तु पुत्रः । 'सगतिः स धर्मः' इति पाठे तेन सगतिः समानगतिरेषा । सः तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्तेन सहवास एवास्या धर्मः, न तु मया सह वास इत्यर्थः ॥ ६० ॥

रा० टी०—नेति । तेन हेतुना इमां पितुः प्रतिज्ञां यथावत्कर्तुं न शक्नोमि न शक्नोम्येवेत्यर्थः । त्वया जनन्या च तदनुष्ठातव्यमित्याह—हे तात! आवयोः नियोगे आज्ञापने स एव गुरुः जनन्यास्तु स एव गतिर्धर्मश्च तत्सेवाधीनमेव गत्यादीत्यर्थः । तत्र हेतुः यतो भर्ता पतिः ॥ ६० ॥

गो० टी०—स इति । सोऽहमनृशंसोऽहं पितुः प्रतिज्ञां वरदानहेतुकभरताभिषेकमद्विवासनरूपां प्रतिज्ञामकर्तुं न शक्नोमि अवश्यं कुर्यामित्यर्थः । तत्र हेतुमाह—स हीति । आवयोः मम भरतस्य चेत्यर्थः । नियोगे गुरुः प्रभुरित्यर्थः । देव्याः कौसल्यायाः तथा च देव्यापि तद्वचनं नातिक्रमणीयमिति भावः । धर्मः अलौकिकश्रेयःसाधनम् ॥ ५९ ॥

६१ ] ति० टी०—तदेवाह—तस्मिन्निति । स्वे पथीष्टपुत्रं परित्यज्यापि सत्यं रक्षणीयमित्येवंरूपे सत्यमार्गे । अन्येत्यस्य विवरणं विधवेति ॥ ६१ ॥

रा० टी०—तस्मिन्निति । स्वे पथि राजधर्मे वर्तमाने धर्मराजे पितरि जीवति पालयति सति अन्या प्राकृतविलक्षणा देवी माता विधवा स्वामिरहिता नारीव मया सार्धमितः कथमभिगच्छेन्मातुर्गमनं नोचितमिति तात्पर्यम् ॥ ६१ ॥

गो० टी०—देव्याश्चेत्यस्यार्थमुद्धाटयति—तस्मिन्निति । धर्मराजे धर्मप्रवर्तके विशेषतः पूर्वराजापेक्षया विशिष्य स्वे पथि स्वासाधारणे पथि धर्ममार्गे वर्तमाने स्वमर्यादानतिलङ्घिनीत्यर्थः । तस्मिन् गतिभूते भर्तरि जीवति देवी कृताभिषेका महिषी सहधर्मचारिणीति यावत् मया पुत्रेण सह अन्येव या काचित् स्त्रीव कथं स्वित् कथं वा वनमपगच्छेत् अभर्तृकाया एव पुत्रेण सह वनगमनमुचितमिति भावः ॥ ६० ॥

६२] ति० टी०—मा मामित्यर्थः । पुनर्ययातिः स्वर्गमापेति शेषः ॥ ६२ ॥

१ वर्षीति गो. पाठः । २ स वै नेति गो. पाठः । ३ अकर्तुमिति गो. पाठः । ४ स इति गो. पाठः । ५ अनुगच्छेदिति गो. पाठः ।

यशो ह्यहं केवलराज्यकारणान्न पृष्ठतः कर्तुमलं महोदयम् ।
अदीर्घकालेन तु देवि जीविते वृणेऽवरामद्य महीमधर्मतः ॥ ६३ ॥
प्रसादयन्नरवृषभः स मातरं पराक्रमाज्जिगमिषुरेव दण्डकान् ।
अथानुजं भृशमनुशास्य दर्शनं चकार तां हृदि जननीं प्रदक्षिणम् ॥ ६४ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।

रामः स्वनिर्वासने कैकेय्याः कारणत्वं निराकृत्य स्वदैवस्यैव तत्कारणतां प्रतिपाद्य कैकेय्यै संक्रुद्धं लक्ष्मणमसान्त्वयत् ।

अथ तं व्यथया दीनं सविशेषममर्षितम् । सरोषमिव नागेन्द्रं रोषविस्फारितेक्षणम् ॥ १ ॥

रा० टी०—सेति । देवि हे मातः ! सातिपूज्या त्वं मा मामनुमन्यस्व आज्ञापय अत एव नः स्वस्त्ययनानि कुरुष्व । तत्र हेतुः यथा समाप्ते नियमितवनप्रव्रजनवर्षपूर्तौ आव्रजेयमागच्छेयम् । तत्र दृष्टान्तः ययातिर्यथेति ॥ ६२ ॥

गो० टी०—सेति । सा जीवद्भर्तृका त्वं मा मामनुमन्यस्व अनुजानीहि इतः पूर्वं वनगमनं प्रति सीताभिप्रायस्यापरिज्ञातत्वात् दीप्तमग्निमरण्यं वा यदि रामः प्रवेक्ष्यति ॥ प्रविष्टं तत्र मां देवि त्वं पूर्वमुपधारय' इत्युक्त्या लक्ष्मणाभिप्रायस्य ज्ञातत्वाच्च न इत्येतदावयोरित्यस्मिन्नर्थे वर्तते । "अस्मदो द्वयोश्च" इति द्विवचने बहुवचनादेशादेवं व्याख्यातम् एवं च सति 'अनुज्ञातश्च भवता पूर्वमेव यदस्म्यहम्' इति वक्ष्यमाणवचनं चोपपद्यते । स्वस्त्ययनानि शोभनप्राप्तिप्रार्थनानि समाप्ते चतुर्दशवर्षाचरणीये व्रते समाप्ते यथा पुनरागच्छेयं तथा स्वस्त्ययनानि कुरुष्व । पुनरागमने निदर्शनमाह—यथेति । स्वर्गाच्च्युतो ययातिः यथा सत्येन सत्यवचनेन अष्टकादिदौहित्रोक्तसत्यवचनेन पुनः स्वर्गमगच्छत्तथेत्यर्थः । तथोक्तं महाभारते 'आतिष्ठ स्वरथं राजन् विक्रमस्व विहायसम् । वयमप्यत्र यास्यामो यत्र लोको भविष्यति' इत्यादिना ॥ ६१ ॥

६३ ] ति० टी०—केवलराज्यकारणाद्धर्महीनराज्यहेतोः । महोदयं महाफलम् । यशः प्राप्तमपि राज्यं त्यक्त्वा पितृवाक्यपालनं कृतवानित्येवं यशः पृष्ठतः कर्तुं नालम् । जीविते मनुष्यजीवनेऽदीर्घकालेऽल्पकालतया निश्चिते सति तदर्थमवरामवरप्रयोजनिकां महीमधर्मतः परमपुरुषार्थत्यागेन न तु वृणे इति संबन्धः ॥ ६३ ॥

रा० टी०—यश इति । अवरां सर्वलोकापेक्षया न्यूनां महीमदीर्घकाले जीविते प्रकटतया पालने केवलराज्यकारणान्महोदयमभ्युदयप्रापकं यशः अधर्मतः पृष्ठतः कर्तुमहं न वृणे । अन्तर्भावितणिजर्थो जीवतिः ततो भावे निष्ठा ॥ ६३ ॥

गो० टी०—यश इति । केवलराज्यकारणात् धर्मविरहितराज्यहेतोः महोदयं महाफलं यशः पृष्ठतः कर्तुमुपेक्षितुमहं नालं न समर्थोऽस्मि किंच अदीर्घकाले चञ्चले जीविते प्राणधारणे निमित्तसप्तमीयं तद्धि चञ्चलजीवितनिमित्तम् अवरां तुच्छप्रयोजनभूतां महीमधर्मतो न वृणे न स्वीकरोमि ॥ ६३ ॥

६४] ति० टी०—पराक्रमाद्धैर्यात् । दर्शनं स्वसंमतं धर्मरहस्यमनुशास्योपदिश्य तां जननीं प्रदक्षिणं कृत्वा हृदि चकार गन्तुं मनश्चकारेत्यर्थः ॥ ६४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकविंशः सर्गः ॥ २१ ॥

रा० टी०—प्रसादयन्निति । नरवृषभः प्राकृतविलक्षणत्वेन सकलनरश्रेष्ठः पराक्रमात्परेषां मुनिशत्रूणामाक्रमः विध्वंसनं तस्माद्धेतोः दण्डकान् जिगमिषुः स रामः मातरमनुजं च दर्शनं धर्मविषयकज्ञानमनुशास्य जननीं प्रदक्षिणं हृदि हृदये चकार प्रत्यक्षप्रदक्षिणस्य वियोगज्ञापकत्वात् तन्न कृतमिति तात्पर्यम् ॥ ६४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकविंशः सर्गः ॥ २१ ॥

गो० टी०—प्रसादयन्निति । पराक्रमात् राम तस्मादितः शीघ्रं वनं गन्तुं स्वमर्हसीत्युक्तकैकेयीप्रेरणात् अनुजं दर्शनं स्वमतमनुशास्य प्रदर्श्येत्यर्थः । ग्रासिद्धिकर्मकः हृदि प्रदक्षिणं चकार प्रदक्षिणं कर्तुं संकल्पितवानित्यर्थः । लोकप्रसिद्धाश्रयः पुरुषार्थाः तेषु सर्वमूलत्वादितरयोः सापायत्वाच्च धर्म एवाश्रयणीय इति स्थापितं भवति ॥ ६३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने-ऽयोध्याकाण्डव्याख्याने एकविंशः सर्गः ॥ २१ ॥

१ ] ति० टी०—अथ रामः सौमित्रेः कैकेयीविषयं रोषं शमयतीत्याह—अथेति । व्यथया रामस्य राज्यहानिजन्यया । सविशेषं रामेतरजनान्तरापेक्षयेति शेषः । अमर्षितं प्राप्तासहनम् । विस्फारणं विस्तारः ॥ १ ॥

१ अहमिति रा. पाठः । २ सेति गो. रा. पाठः । ३ वसन्तमिति गो. पाठः ।

आसाद्य रामः सौमित्रिं सुहृदं भ्रातरं प्रियम् । उवाचेदं स धैर्येण धारयन्सत्त्वमात्मवान् ॥ २ ॥
निगृह्य रोषं शोकं च धैर्यमाक्रम्य[1] केवलम् । अवमानं निरस्यैनं[2] गृहीत्वा हर्षमुत्तमम् ॥ ३ ॥
उपकॢप्तं यदैतन्मे[3] अभिषेकार्थमुत्तमम्[4] । सर्वं[5] निवर्तय क्षिप्रं कुरु कार्यं निरव्ययम्[6] ॥ ४ ॥
सौमित्रे योऽभिषेकार्थे मम संभारसंभ्रमः । अभिषेकनिवृत्त्यर्थे सोऽस्तु संभारसंभ्रमः ॥ ५ ॥
यस्या मदभिषेकार्थे मानसं परितप्स्यति[7] । माता नः[8] सा यथा न स्यात्सविशङ्का तथा कुरु ॥ ६ ॥
तस्याः शङ्कामयं दुःखं मुहूर्तमपि नोत्सहे । मनसि प्रतिसंजातं सौमित्रेऽहमुपेक्षितुम् ॥ ७ ॥

२ ] ति० टी०—आसाद्याभिमुखीकृत्य धैर्येण सत्त्वं चित्तमविकारितया धारयन्प्रकटयन् ॥ २ ॥

रा० टी०—अथेति । व्यथया भ्रातृवियोगश्रुत्या प्राप्तप्रकृतिविपर्यासेन दीनं क्षीणत्वेन प्रतीयमानं सविशेषं रामातिप्रियत्वेन विशेषसंहितममर्षितं रामवियोगासहनशीलं सरोषं नागेन्द्रमिव अत एव रोषविस्फारितेक्षणं रोषेण विस्फारिते ईक्षणे यस्य तं सुहृदं सरलस्वभावं प्रियं स्वातिप्रीतिविषयीभूतं भ्रातरं सौमित्रिमासाद्य हस्तग्रहेण स्वसमीपं प्रापय्य इदमुवाच । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—अथ रामः सौमित्रेः कैकेयीविषयं रोषमुपशमयति—अथेत्यादिश्लोकद्वयमेकं वाक्यम् । सविशेषमन्तरङ्गजनापेक्षया सातिशयम् अमर्षितं प्राप्तासहनं रोषविस्फारितेक्षणं क्रोधविस्तारितनयनम् आसाद्य अभिमुखीकृत्य सुहृत्त्वादिविशेषणं कोपेऽप्यनुपेक्षणीयत्वाय सत्त्वं सर्वविषयकं स्वं बलं धैर्येण धारयन्नप्रकटयन् आत्मवान् प्रशस्तमनाः वश्यमनस्क इत्यर्थः ॥ १ ॥ २ ॥

३ ] ति० टी०—किमुवाचेत्यत्राह—निगृह्येति । रोषं पित्रादिवधहेतुम् । अवमानं वनप्रवासनरूपं निरस्य शत्रुकृतत्वाभावात् । उत्तमं हर्षं सत्यपालनेन पितुः पुण्यलोकसिद्धिजं हर्षम् ॥ ३ ॥

४ ] ति० टी०—तादृशहर्षसिद्ध्यर्थमेव हे लक्ष्मण ! अभिषेकप्रयोजनकं निवर्तय । कार्यं वनगमनोपयुक्तम् ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—निगृह्येति । रोषादिकं निगृह्य सन्त्यज्येत्यर्थः । धैर्यमाश्रित्य स्वीकृत्य अवमानं प्रव्राजनविषयकसंमतिग्रहणाभावमूलकानादरं निरस्य परिहृत्य उपकॢप्तं प्राप्तं सर्वमेतत्सामग्रीजातं क्षिप्रं निवर्तय निरव्ययं विघ्नरहितं यथा स्यात्तथा कार्यं कर्तव्यं गमनोद्योगमित्यर्थः कुरु । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—निगृह्येत्युपकॢप्तमिति च श्लोकद्वयमेकान्वयम् । रोषं पित्रादिविषयं शोकं मद्विषयम् । रोषशोकयोर्निग्रहे हेतुमाह—धैर्यमाश्रित्येति केवलमिति धैर्यनैरन्तर्यमुच्यते अवमानम् आरब्धाभिषेकत्यागपूर्वकवनगमनं निरस्य निजदौर्बल्यकृतत्वाभावाद्विचार्य उत्तमं हर्षं सत्यपरिपालनेन पितरं तारयिष्यामि इति हर्षमित्यर्थः मेऽभिषेकार्थमुपकॢप्तं संपादितं यत्किंचिदलंकारादिकं तत्सर्वं विसर्जय निरत्ययं निरपायं सत्यपरिपालनोपयुक्तं कार्यं वल्कलधारणादिकं कुरु ॥ ३ ॥ ४ ॥

५ ] ति० टी०—तदेवाह—सौमित्रे इति । संभारसंपादनाय यः संभ्रमस्त्वरा साभिषेकनिवृत्त्यर्थेऽस्तु । वनगमनपरिकरसंपादनायास्त्विति यावत् ॥ ५ ॥

रा० टी०—सौमित्रे य इति । संभारसंभ्रमः सामग्रीसंपादनविषयिणी त्वरा आदरो वा ॥ ५ ॥

गो० टी०—सौमित्र इति । संभारसंभ्रमः संभारसंपादनविषयोत्साहः अभिषेकनिवृत्त्यर्थे अभिषेकनिवृत्तिरूपवनवासार्थे स संभारः संभ्रमोऽस्तु वनवासोचितसाधनसंपादनविषयो भवत्वित्यर्थः ॥ ५ ॥

६ ] ति० टी०—किंच यस्या मदभिषेकार्थे मदभिषेकनिवृत्तौ अर्थशब्दो निवृत्तिवचन इह 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । सविशङ्का कथमयं वने स्थास्यतीति शङ्कया सदुःखा । तथा कुरु । अल्पेनैव कालेन रामं द्रक्ष्यसि, पित्राज्ञाभङ्गश्चातिनिन्द्य इत्यादिवाक्यैरिति शेषः । यद्वा यस्याः कैकेय्या नो माता कैकेयी सशङ्का अयं वनं न गमिष्यतीति शङ्कासहिता ॥ ६ ॥

रा० टी०—यस्या इति । मदभिषेकार्थे अभिषेकरूपे वस्तुनि मानसं वर्तत इति शेषः । सा नः माता कौशल्या सविशङ्का विगतवनवासक्लेशविषयकशङ्काविशिष्टा सती न परितप्यते तथा कुरु ॥ ६ ॥

गो० टी०—यस्या इति । मदभिषेकार्थे मदभिषेकप्रयोजनविषये माता कैकेयी सविशङ्का लक्ष्मणेन संमन्त्र्य राज्यं पुनः किं रामो ग्रहीष्यतीति शङ्कावती ॥ ६ ॥

७ ] ति० टी०—कुत एवं तत्राह—तस्या इति । तस्या मनसि प्रतिसंजातं शङ्कामयं दुःखं मुहूर्तमप्युपेक्षितुं नोत्सहे, 'उदीक्षितुम्' इति पाठे द्रष्टुमित्यर्थः ॥ ७ ॥

रा० टी०—तस्या विशङ्काकरणे हेतुमाह—तस्या इति । शङ्कामयं शङ्काहेतुकमित्यर्थः । मनस्यपि प्रतिसंजातं किं पुनर्बहिःप्रकटितमित्यर्थः । दुःखमुपेक्षितुं तिष्ठत्विदमित्युपेक्षां कर्तुमहं नोत्सहे 'उदीक्षितुम्' इतिपाठे द्रष्टुमित्यर्थ इति भट्टाः ॥ ७ ॥

गो० टी०—तस्या इति । कैकेय्याः शङ्कामयं शङ्कारूपं स्वार्थे मयट् प्राचुर्ये वा ॥ ७ ॥

१ आश्रित्येति गो. पाठः । २ इममिति गो. पाठः । ३ ह्य वार्त्तेर्क्ताक्तदति गो. पाठः । ४ अद्य मे इति गो. पाठः । ५ विसर्जयेति गो. पाठः । ६ निरत्ययमिति गो. पाठः । ७ तप्यते इति गो. रा. पाठः । ८ मे इति गो. पाठः ।

न बुद्धिपूर्वं नाबुद्धं स्मरामीह कदाचन । मातॄणां वा पितुर्वाहं कृतमल्पं च विप्रियम् ॥ ८ ॥
सत्यः सत्याभिसंधश्च नित्यं सत्यपराक्रमः । परलोकभयाद्भीतो निर्भयोऽस्तु पिता मम ॥ ९ ॥
तस्यापि हि भवेदस्मिन्कर्मण्यप्रतिसंहृते । सत्यं नेति मनस्तापस्तस्य तापस्तपेच्च माम् ॥ १० ॥
अभिषेकविधानं तु तस्मात्संहृत्य लक्ष्मण । अन्वगेवाहमिच्छामि वनं गन्तुमितः पुरः ॥ ११ ॥
मम प्रव्राजनादद्य कृतकृत्या नृपात्मजा । सुतं भरतमव्यग्रमभिषेचयतां ततः ॥ १२ ॥
मयि चीराजिनधरे जटामण्डलधारिणि । गतेऽरण्यं च कैकेय्या भविष्यति मनःसुखम् ॥ १३ ॥
बुद्धिः प्रणीता येनेयं मनश्च सुसमाहितम् । तं नु नार्हामि संक्लेष्टुं प्रव्रजिष्यामि मा चिरम् ॥ १४ ॥

---

८ ] ति० टी०—तदेवोपपादयति—न बुद्धीति । अबुद्धम् अज्ञानपूर्वं वा । अल्पं चाल्पमपि विप्रियं विप्रियकरं कदाचन कदापि कृतं न स्मरामीत्यन्वयः । 'समारब्धम्' इति पाठे नारब्धवानस्मीत्यर्थः ॥ ८ ॥

रा० टी०—स्वस्मिन्मात्रादेः स्नेहबोधकं लिङ्गमाह—नेति । बुद्धिपूर्वं विप्रियं न कृतमबुद्धमबुद्धिपूर्वकं वा न कृतमिति अहं स्मरामि ॥ ८ ॥

गो० टी०—नेति । मातॄणां पितुर्वा विषये कदाचन कृतं बुद्धिपूर्वमपि विप्रियं न स्मरामि अबुद्धम् अबुद्धिपूर्वकमपि वि[प्रि]यं न स्मरामि ॥ ८ ॥

९ ] ति० टी०—सत्यः सत्यवचनस्वभावः सत्याभिसंधः स[त्य]प्रतिज्ञः परलोकभयात्परलोकभयहेतोरसत्याद्भीतः पिता नि[र्भ]योऽस्तु मया तत्कृतसत्यपरिपालनात् ॥ ९ ॥

रा० टी०—सत्य इति । सत्यः सत्यवादी अत एव सत्यसं[ध]ः सत्यप्रतिज्ञः अत एव परलोकभयादयं सत्यात्प्रच्युतः इति शङ्कुजनापवादाद्भीतः मम पिता निर्भयः लोकापवादभयरहितो[ऽ]स्तु ॥ ९ ॥

गो० टी०—सत्य इति । सत्यः सत्यवचनः सत्याभिसन्धः सत्यप्रतिज्ञः सत्यपराक्रमः अमोघपराक्रमः परलोकभयात्परलोकसंबन्धिभयहेतोः परलोकहानेरिति यावत् निर्भयोऽस्तु प्रतिज्ञितसत्यत्वादिति भावः ॥ ९ ॥

१० ] ति० टी०—अस्मिन्कर्मण्यभिषेकविषये कर्मणि अप्रतिसंहृतेऽनिवर्तिते मम वचः सत्यं न वृत्तमिति मनस्तापो भवेत् तस्य च मनस्तापो मामपि तपेत् पितृहितमकुर्वतो मम जन्म व्यर्थमिति पीडयेत् ॥ १० ॥

रा० टी०—स निर्भयोऽवश्यं कर्तव्य इत्यत्र हेतुं वदन्नाह—तस्येति । कर्मणि अभिषेकानुकूलव्यापारे अप्रतिसंहृते अनिवर्तिते सति मम वचः सत्यं नेति तस्य पितुर्मनस्तापः भवेत्तस्य तापो मामपि तपेत् ॥ १० ॥

गो० टी०—तस्येति । तस्य दशरथस्यापि अस्मिन्नभिषेककर्मणि अप्रतिसंहृते अनिवर्तिते सति सत्यं नेति मम वरदानविषयसत्यं नेति मनस्तापो भवेत्तस्य तापः मां तपेत्तापयेदित्यर्थः ॥ १० ॥

११ ] ति० टी०—यत एवमतः—अभिषेकेति । संहृत्य त्यक्त्वा अन्वगेव शीघ्रमेव इतः पुरोऽस्मान्नगरात् ॥ ११ ॥

रा० टी०—अभिषेकेति । हे लक्ष्मण ! तस्मादुक्तहेतोः अन्वक् शीघ्रमेव इतः अस्मात्पुरः पुर्याः गन्तुमिच्छामि ॥ ११ ॥

गो० टी०—अभिषेकेति । अन्वक् अनुपदमेव 'अन्वगन्वक्षमनुगेऽनुपदम्' इत्यमरः । इतः अस्मान्नगरात् ॥ ११ ॥

१२ ] ति० टी०—नृपात्मजा कैकेयी । अव्यग्रम-व्याकुलम् ॥ १२ ॥

रा० टी०—ममेति । कृतकृत्या साधितमुनिप्रयोजना नृपात्मजा केकयी अव्यग्रमनवधानतारहितं भरतमभिषेचयताम-भिषेचमिव प्रापयताम् इवार्थान्तर्भावेण प्रापणरूपधात्वर्थे णिच् यद्वा यतः मम प्रव्राजनान्नृपात्मजा केकयी कृतकृत्या अतः अः विष्णुरेव व्यग्रः विशेषेण अग्रः मत्प्रीतिपात्राग्रणीत्वं यस्मिन्स तं भरतमभिषेचयतामभिषेचः अभिषेकः यतः निवर्तितो यया तामुपरमार्थकयमोरूपम् स चान्तर्भावितणिजर्थः । केकयीमद्य दुर्वचनादिना न पीडय । निषेधार्थकमव्ययमिति ॥ १२ ॥

गो० टी०—ममेति । अभिषेचयिता लुट् ॥ १२ ॥

१३ ] ति० टी०—गते गते एव ॥ १३ ॥

रा० टी०—मयीति । मनःसुखं मयशःप्राप्तिहेतुकानन्दः भविष्यति ॥ १३ ॥

गो० टी०—मयीति । स्पष्टम् ॥ १३ ॥

१४ ] ति० टी०—कैकेय्या अत्र नापराधः अन्यप्रेरितत्वात् । तर्हि स एव दण्ड्यस्तत्राह—बुद्धिरिति । येनेश्वरेण विधात्रेयं बुद्धिः कैकेय्याः प्रणीता मन्थराद्वारा दत्ता, मनश्च तद्बुद्धिविषयेऽर्थे सुसमाहितं स्थिरीकृतं तं संक्लेष्टुं मत्कृतमन्यथा जातमिति क्लेशयितुं नार्हामि तस्य मदधिकारित्वान्मद्रूपत्वाद्वेति गूढ आशयः मत्संकल्पकृतमेव तदिति गूढं व्यङ्ग्यम् अशक्यत्वादित्यापाततोऽर्थः । अतो वनं प्रव्रजिष्यामि । चिरं विलम्बो मा मास्त्वित्यर्थः ॥ १४ ॥

रा० टी०—बुद्धिरिति । येन मद्विजयकालेन बुद्धिः विजयविषयकनिश्चयः प्रणिहिता संपादिता अनु पश्चान्मनः केकयीसंकल्पः समाहितं प्रापितं कारितमित्यर्थः तं कालं संक्लेष्टु-

---

१ पुनः इति गो. पाठः । २ अभिषेचयितेति गो. पाठः । ३ प्रणिहिता येन मनश्चान्विति रा. पाठः । ४ त्विति गो. पाठः ।

कृतान्त एव सौमित्रे द्रष्टव्यो मत्प्रवासने । राज्यस्य च वितीर्णस्य पुनरेव निवर्तने ॥ १५ ॥
कैकेय्याः प्रतिपत्तिर्हि कथं स्यान्मम वेदने । यदि तस्या न भावोऽयं कृतान्तविहितो भवेत् ॥ १६ ॥
जानासि हि यथा सौम्य न मातृषु ममान्तरम् । भूतपूर्वं विशेषो वा तस्या मयि सुतेऽपि वा ॥ १७ ॥
सोऽभिषेकनिवृत्त्यर्थैः प्रवासार्थैश्च दुर्वचैः । उग्रैर्वाक्यैरहं तस्या नान्यद्दैवात्समर्थये ॥ १८ ॥
कथं प्रकृतिसंपन्ना राजपुत्री तथागुणा । ब्रूयात्सा प्राकृतेव स्त्री मत्पीडां भर्तृसंनिधौ ॥ १९ ॥

---

मतिवर्तितुमित्यर्थः नैवार्हामि अतः प्रव्रजिष्यामि अतः मा चिरमस्मिन्विषये विलम्बो न कार्यः ॥ १४ ॥

गो० टी०—बुद्धिरिति । येन मया इयं बुद्धिः वनवासबुद्धिः प्रणीता शिक्षिता मनश्च सुसमाहितं स्थिरीकृतं तं मां संक्रुष्टुं क्लेशयितुं नार्हामि अतः प्रव्रजिष्यामि मा चिरं मास्तु विलम्बः ॥ १४ ॥

१५ ] ति० टी०—तत्प्रेरयितारमाह—कृतान्त इत्यादि । मद्विवासने मद्विवासनप्रेरणायाम् एवमभिषेकनिवर्तनप्रेरणायां कृतान्तो दैवमेवेन्द्रादीनां दुःखनिवर्तकादृष्टमेवेति गूढम् । मत्प्रजानां मत्कृतपरिपालनलाभाभावजनकमदृष्टमिति स्फुटं द्रष्टव्यः कारणत्वेन द्रष्टव्यः । यत्तु रामस्य प्राकृतदुरदृष्टं दैवमिति तन्न, भगवतस्तस्याभावात् ॥ १५ ॥

रा० टी०—कैकय्यादिविषये द्वेषाभावाय कालस्यैव प्रवर्तकत्वं बोधयति—कृतान्त इति । कृतान्तः काल एव कारणमिति शेषः । वितीर्णस्य पित्रा दत्तस्य राज्यस्य निवर्तने विलम्बने ॥ १५ ॥

गो० टी०—पूर्वसर्गे धर्मोऽस्तीत्युक्तम् । अधुना प्रसङ्गाद्धर्मातिरिक्तं दैवं किंचिदस्ति फलप्रदमिति दर्शयन् अस्मत्प्रवासे न कैकेयीनिमित्तमतः सा ननिन्दितव्येत्याह—कृतान्त इत्यादिना । कृतान्तः दैवं 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु' इति निघण्टुः । दैवं च प्राक्तनादृष्टमित्येके ईश्वर एवेत्याचार्याः । द्रष्टव्यः कारणत्वेनेति शेषः वितीर्णस्य दत्तस्य ॥ १५ ॥

१६ ] ति० टी०—तदुपपादयति—कैकेय्या इति । प्रतिपत्तिरध्यवसायः । यदि कृतान्तविहितस्तत्प्रेरितोऽयं भावोऽभिप्रायो न भवेत् ॥ १६ ॥

रा० टी०—कालस्यैव प्रवर्तकत्वे हेतुमाह—केकय्या इति । तस्याः केकय्याः भावोऽभिप्रायः यदि कृतान्तविहितः मद्विजयकालप्रेरितो न भवेत्तर्हि मम पीडने मत्कर्मकप्रवासहेतुकपीडाहने प्रतिपत्तिः निश्चयः कथं स्यात् न स्यादित्यर्थः ॥ १६ ॥

गो० टी०—कृतान्त एवेत्येवकारव्यवच्छेद्यमाह—कैकेय्या इति । दैवः देवीसंबन्धी कैकेयीसंबन्धी अयं भावः अयमभिप्रायः कृतान्तविहितो यदि न भवेत् तदा मम पीडने कैकेय्याः प्रतिपत्तिः बुद्धिः कथं स्यात् पीडनमिति लक्ष्मणबुध्या ॥ १६ ॥

१७ ] ति० टी०—ईदृशस्य कैकेय्या भावस्य दैवकारणकत्वसिद्धये तस्याः सहजभावमाह—जानासीत्यादि । अन्तरं वैषम्यम् । भूतपूर्वं तस्या वा मयि सुते भरतेऽपि वा न विशेषो भूतपूर्वः तस्मात्दैवकृतमेव वैषम्यमिति भावः ॥ १७ ॥

रा० टी०—तस्याः स्वतः प्रवर्तिकात्वाभावे हेतुमाह—जानासीति । हे सौम्य ! मातृषु कौशल्यादिषु अन्तरं पूज्यत्वे भेदो मम मत्कृतमित्यर्थः । भूतपूर्वं न तस्याः केकय्या मयि सुते भरते वा विशेषो भूतपूर्वो न इति त्वं यथा यथावज्जानासि ॥ १७ ॥

गो० टी०—जानासीति । हे सौम्य ! मातृषु मे अन्तरं भेदः 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इति निघण्टुः । यथा न भूतपूर्वं तथा जानासि तस्या अपि कैकेय्या अपि मयि वा सुते भरते वा विशेषो यथा न भूतपूर्वः तथा जानासि हि ॥ १७ ॥

१८ ] ति० टी०—तस्मात्—स इति । सोऽहं रामो दुर्वचैः सामान्येनापि न वक्तुं शक्यैः किं पुनर्वाच्यं दशरथपत्न्या केकयकन्यया, तादृशैर्वाक्यै राज्ञः कैकेय्या प्रेरणे दैवादन्यत्कारणं सोऽहं रामो न समर्थय इत्यन्वयः ॥ १८ ॥

रा० टी०—स इति । अभिषेकनिवृत्त्यर्थैः अभिषेकनिवृत्तिरर्थो येषां तैः प्रवासार्थैः प्रवासबोधकैः अत एव उग्रैः अत एव दुर्वचैः वक्तुमनर्हैः तस्याः केकय्या वाक्यैः वचनैः प्रव्राजने दैवारेबोदयकारककालादन्यत्कारणं न समर्थये निश्चिनोमि ॥ १८ ॥

गो० टी०—स इति । सोहम् एवमद्भुततद्वात्सल्योऽहं वाक्यैरिति हेतौ तृतीया दैवादन्यद् बुद्धिभेदकारणं न समर्थये न निश्चिनोमि ॥ १८ ॥

१९ ] ति० टी०—तदेव द्रढयति—कथमिति । प्रकृतिसंपन्ना सत्त्वप्रकृतियुक्ता तथागुणा प्रागनुभूततादृक्कल्याणगुणा तत्रापि भर्तृसंनिधौ मत्पीड्यं मत्पीडाजनकं तदेव । 'मदघम्' इति पाठेऽप्ययमेवार्थः । वाक्यं ब्रूयात् यदि न दैवप्रेरितेति भावः ॥ १९ ॥

रा० टी०—कथमिति । तथागुणा मद्विषयकातिवात्सल्यविशिष्टा प्रकृतिसंपन्ना सुस्वभावसंयुक्ता विक्षेपादिरहितेत्यर्थः । राजपुत्री केकयी भर्तृसंनिधौ मत्पीड्यं पीडाबोधकं प्राकृता स्त्रीव कथं ब्रूयात न ब्रूयादित्यर्थः एतेन मम हितमेव तयोक्तमिति सूचितम् इवेन तस्याः प्राकृतविलक्षणात्वं ध्वनितम् ॥ १९ ॥

गो० टी०—कथमिति । प्रकृतिः साधुस्वभावः 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे' इति निघण्टुः । प्रकृतिसंपन्ना साधुस्वभावसंपन्ना राजपुत्री महाकुलप्रसूता तथागुणा पूर्वानुभूतदयादिसद्गुणा सा कैकेयी प्राकृतेव स्त्री दुष्प्रकृतिका दुष्कुला गुणलेशशून्या क्षुद्रा स्त्रीव भर्तृसंनिधौ न तु यस्य कस्यचित्

---

१ स्त्रेवेति मे. रा. पाठः । २ पीडने इति गो. पाठः । ३ भावो न दैवोऽयमिति गो. पाठः । ४ पीडामिति गो. पाठः ।

यदचिन्त्यं तु तद्दैवं भूतेष्वपि न हन्यते । व्यक्तं मयि च तस्यां च पतितो हि विपर्ययः ॥ २० ॥
कैश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् । यस्य नु ग्रहणं किंचित्कर्मणोऽन्यन्न दृश्यते ॥ २१ ॥
सुखदुःखे भयक्रोधौ लाभालाभौ भवाभवौ । यैस्य किंचित्तथाभूतं ननु दैवस्य कर्म तत् ॥ २२ ॥
ऋषयोऽप्युग्रतपसो दैवेनाभिप्रचोदिताः । उत्सृज्य नियमांस्तीव्रान्भ्रश्यन्ते काममन्युभिः॥ २३ ॥
असंकल्पितमेवेह यदकस्मात्प्रवर्तते । निवर्त्यारब्धमारम्भैर्ननु दैवस्य कर्म तत् ॥ २४ ॥
एतया तत्त्वया बुद्ध्या संस्तभ्यात्मानमात्मना । व्याहतेऽप्यभिषेके मे परितापो न विद्यते ॥ २५ ॥

संनिधौ न तु दूत्यादिमुखेन मत्पीडां मम निरवधिकस्नेहपात्रस्य पीडां नत्वप्रियमात्रं कथं ब्रूयात् व्यक्तं वदेत् न तु सूचयेत्तस्माद्दैवमेवात्र कारणमिति ॥ १९ ॥

२० ] ति० टी०—ननु तद्दैवं क्वास्ति, कीदृक्चेत्यत आह—यदिति । देशकालव्यत्तितया यदचिन्त्यमीदृग्विधमिति चिन्तयितुमशक्यं तद्दैवं यद्भूतेषु भूताधिष्ठातृषु ब्रह्मादिष्वपि न हन्यते न प्रतिहतं भवति हि अतस्तत्कृत एव तस्यां मयि च विपर्ययः पूर्वस्थितवात्सल्यापगमरूपो हस्तगतराज्यभ्रंशरूपश्च पतितः ॥२०॥

रा० टी०—अदृष्टस्य बलवत्त्वं बोधयन्नाह—यदिति । यस्माद्धेतोः दैवमदृष्टमचिन्त्यम् इदानीमिदमिति निश्चेतुं न शक्यमित्यर्थः तत्तस्माद्धेतोः भूतेषु हन्यमानेष्विति शेषः । न हन्यते अत एव मयि तस्यां कैकय्यां च व्यक्तं दैवदृष्टप्रभावः प्रकटित इत्यर्थः तत्प्रभावादेव प्रव्रजने प्रव्राजने च द्वयोर्बुद्धिरासीदिति तात्पर्यम् अत एव विपर्ययः अभिषेकविपरीतः पतितः प्राप्तः ॥ २० ॥

गो० टी०—यदिति । यदचिन्त्यमचिन्त्यप्रभावं दैवं तदेव सर्वेष्वपि भूतेषु न हन्यते सर्वत्राप्यप्रतिहतफलप्रदानस्वभावं वर्तते व्यक्तम् अत्र संशयो नास्ति अत एव हि मयि तस्यां च विपर्ययः वैपरीत्यं मयि हस्तगतराज्यभ्रंशरूपः तस्यां पूर्वस्थितवात्सल्यापगमरूपः पतितः प्राप्तः ॥ २० ॥

२१ ] ति० टी०—ननु शौर्येण दैवं हनिष्यामीति चेत्तत्राह—कश्चेति । यस्य दैवस्य ग्रहणं ज्ञानं ज्ञानजनकं कर्मणः फलादन्यन्न दृश्यते । एवं च नित्यकार्यानुमेयतया प्रागज्ञातत्वाद्योद्धुमशक्यं जाते तु फले विफलं युद्धम् फलेन तस्य नाशाचेति भावः ॥ २१ ॥

रा० टी०—दैवनिवृत्त्यर्थं यत्नो न कर्तव्य इति बोधयन्नाह—कश्चिदिति । यस्य दैवस्य ग्रहणं बोधकं कर्मणः फलभोगादन्यन्न दृश्यते तेन दैवेन सह योद्धुं कश्चित्पुमान्न उत्सहते नञ्म आवृत्त्योभयत्रान्वयः ॥ २१ ॥

गो० टी०—एवं प्रबलमपि दैवं पौरुषेण निवर्त्यतामित्यत्राह—क इति । कियत इति कर्म कार्यं फलरूपकार्यतोऽन्यत्र यस्य ग्रहणं ज्ञानसाधनं न दृश्यते कार्यैकानुमेयं यस्य स्वरूपमित्यर्थः। तेन फलात्पूर्वमज्ञायमानेन दैवेन कः पुमान् योद्धुमुत्सहते कस्तं निवारयितुं समर्थ इत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—सर्वतो दैवमेव प्रबलं पौरुषं तु काकतालीयमित्याह—सुखेत्यादि । भवाभवौ बन्धमोक्षौ एषां मध्ये यस्य यत्तथाभूतमचिन्त्यकारणकं किंचित्कार्यं तन्ननु निश्चयेन दैवस्य कर्म फलम् ॥ २२ ॥

रा० टी०—सुखेति । यस्य जनस्य सुखादयः स्वातन्त्र्येण दृश्यन्ते तथाभूतं तत्सदृशमन्यदपि सुपुष्ट्यादि तत्सर्वं दैवस्य कर्म कृतं भवाभवौ उत्पत्तिविनाशौ एतेन स्वनन्त्रसुखादिगहितानां नादृष्टमिति सूचितम् ॥ २२ ॥

गो० टी०—ननु कर्मणोऽन्यत्रेत्युक्तं किं तत्कर्म तत्राह—सुखदुःखे इति । अत्र भयशब्देन शान्तिरुच्यते भवाभवौ उत्पत्तिविनाशौ यच्च किंचित्तथाभूतमचिन्त्यकारणकं लोके दृश्यते तत्सर्वं दैवस्य कर्म कार्यम् । ननु हीत्यर्थः ॥ २२ ॥

२३ ] ति० टी०—दैवप्राबल्यमेव द्रढयति—ऋषय इति । विश्वामित्रादयः मन्युः क्रोधः बहुवचनं व्यक्तिबहुत्वात् तैर्भ्रश्यन्तेऽभिभूयन्ते ॥ २३ ॥

रा० टी०—दैवप्राबल्यं दृष्टान्तमुखेन द्रढयन्नाह—ऋषय इति । तीव्रानतिप्रयत्नेन संपादितान् ॥ २३ ॥

गो० टी०—दैवप्राबल्यमेव द्रढयति—ऋषय इति । ऋषयः विश्वामित्रादयः नियमान् व्रतोपवासादीन् काममन्युभिरिति व्यक्तिबहुत्वाद् बहुवचनं भ्रश्यन्ते ऋषित्वादिति शेषः ॥ २३ ॥

२४ ] ति० टी०—पुनरपि स्ववनवासस्य दैवजत्वं द्रढयितुं दैवकार्यलक्षणमाह--असंकल्पितमिति । आरम्भैर्यत्नैरारब्धमुपक्रान्तं कार्यं निवर्त्य यदसंकल्पितमेवाचिन्तितमेवाकस्माद्दृष्टहेतुं विना प्रवर्तते तद्दैवस्य कर्म ननु ॥ २४ ॥

रा० टी०—दैवबोधकमसाधारणं लिङ्गमाह--असंकल्पितमिति । आरम्भैः सामग्रीभिः आरब्धं प्रारम्भविषयीभूतं निवर्त्य असंकल्पितं संकल्परहितं यदकस्मात्प्रवर्तते तद्दैवस्य कर्म॥२४॥

गो० टी०—यच्च किंचित्तथाभूतमित्येतद्विशदयति—असंकल्पितमिति । इह अस्मिन् लोके आरब्धमुपक्रान्तम् आरम्भं कार्यं निवर्त्य असंकल्पितमचिन्तितमेव यत्कार्यमकस्मात् झटिति प्रवर्तते तद्दैवस्य कर्म ॥ २४ ॥

२५ ] ति० टी०—उपसंहरति—एतयेति । तत्त्वया यथार्थया बुद्ध्या बुद्धियोगेनात्मनान्तःकरणस्थेनात्मानमन्तःकरण

१ कश्चिदिति रा. पाठः । २ नेति गो. रा. पाठः । ३ अन्यत्रेति गो. पाठः । ४ यच्चेति गो. पाठः । ५ प्रपीडिना इति गो. पाठः । ६ आरम्भमारब्धमिति गो. पाठः ।

तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियाम् ।। २६ ।।
एभिरेव घटैः सर्वैरभिषेचनसंभृतैः । मम लक्ष्मण तापस्ये व्रतस्नानं भविष्यति ।। २७ ।।
अथवा किं मयैतेन राज्यद्रव्यमयेन तु । उद्धृतं मे स्वयं तोयं व्रतादेशं करिष्यति ।। २८ ।।
मा च लक्ष्मण संतापं कार्षीर्लक्ष्म्या विपर्यये । राज्यं वा वनवासो वा वनवासो महोदयः ।। २९ ।।
न लक्ष्मणास्मिन्मम राज्यविघ्ने माता यवीयस्यभिशङ्कितव्या ।
दैवाभिपन्ना न पिता कथंचिज्जानासि दैवं हि तथाप्रभावम् ।। ३० ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वाविंशः सर्गः ।। २२ ।।

---

संस्तभ्य यदि तिष्ठसीति शेषः । तदा मेऽभिषेके व्याहतेऽपि तव परितापो न विद्यते न भवति ॥ २५ ॥

रा० टी०—प्रासङ्गिकादृष्टवर्णनं परिसमाप्य प्रकृतमाह—एतयेति । अभिषेके व्याहतेऽपि तत्त्वया स्वधर्मपालनरूपयाथार्थ्यविषयिण्या बुद्ध्या निश्चयेन आत्मना मनसा सह आत्मानमन्तःकरणं संस्तभ्य स्थिरीकृत्य परितापो न विद्यते न स्थाप्यते अन्तर्भावितणिजर्थो विद्यतिः ॥ २५ ॥

गो० टी०—उपदेशफलमाह—एतयेत्यादिश्लोकद्वयेन । तत्त्वया अबाधितया एतया बुद्ध्या आत्मानमन्तःकरणमात्मना स्वयमेव उपदेशं विनेत्यर्थः संस्तभ्य निश्चलीकृत्य स्थितस्य मे अभिषेके व्याहतेऽपि परितापो न विद्यते तस्मात्तत्त्वस्यैवंरूपत्वात् अनुविधाय अनुसृत्य आभिषेचनिकीमभिषेकप्रयोजनिकां क्रियालङ्करणादि प्रतिसंहारय निवर्तय ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—अथ तत्कालकर्तव्यं नियुङ्क्ते—तस्मादिति । उपदिष्टबुद्धियोगबलादित्यर्थः । अपरितापः परितापहीनः संस्त्वमपि मामनुविधाय मामनुसृत्याभिषेचनिकीं तत्प्रयोजनिकां क्रियामलंकारं प्रतिसंहारय निवर्तय अनेन गूढं लक्ष्मणस्यापि वनगमनं सूचितम् ॥ २६ ॥

रा० टी०—तस्मादिति । तस्मादुक्तहेतोः मामनुविधाय अनुसृत्य अपरितापः परितापरहितः सन् आभिषेचनिकीं क्रियां क्षिप्रं प्रतिसंहारय निवर्तय ॥ २६ ॥

२७ ] ति० टी०—तापस्ये तद्रूपव्रतस्य संकल्पे व्रतस्नानं व्रतसंकल्पायापेक्षितं स्नानं व्रतस्नानं तदेभिर्भविष्यतीति योजना ॥ २७ ॥

रा० टी०—ननु सामग्रीणां का गतिरित्यत आह—एभिरिति । अभिषेचनसंभृतैः अभिषेकार्थमानीतैः एभिर्घटैः मम तापस्ये तपःकर्मणि व्रतस्नानं व्रतोद्देश्यकस्नानं भविष्यति ॥२७॥

गो० टी०—एभिरिति । तापस्ये तापसयोग्ये कर्मणीत्यर्थः । अभिषेचनसंभृतैः अभिषेचनाय संपादितैः ॥ २७ ॥

२८ ] ति० टी०—तापस्यव्रतस्नानेऽप्येभिः क्रियमाणे राज्यलिप्सया स्नानं कृतवानिति कैकेय्याः शङ्का मा भूदिति तन्निषेधति—अथवेति । राज्यद्रव्यमयेन राज्याभिषेकसाधनमङ्गलद्रव्यप्रचुरेण । स्वयं स्वहस्तेनोद्धृतं तोयं मे व्रतादेशं व्रतसंकल्पाधिकारम् ॥ २८ ॥

रा० टी०—एतज्जलेन स्नाने अयं वनं न गमिष्यतीति देवादीनां शङ्कासंभवात् शेषसामग्रीवैयर्थ्यस्यार्थतः सिद्धत्वाच्च पक्षान्तरमाह—अथवेति । स्वयं स्वहस्तेनेत्यर्थः । उद्धृतमानीतं व्रतादेशं व्रतस्नानं करिष्यति विधास्यति ॥ २८ ॥

गो० टी०—घटस्थजलैः तापस्यव्रतस्नाने क्रियमाणेऽपि राज्यलिप्सया स्नानं कृतवानिति कैकेय्याः शङ्का मा भूदिति स्नानं निषेधति—अथवेति । राजद्रव्यमतेन राजद्रव्यत्वेन संमतेन 'राज्यद्रव्यमयेन' इति पाठे राज्यार्थमङ्गलद्रव्यप्रचुरेणेत्यर्थः । व्रतादेशं व्रतनियमम् ॥ २८ ॥

२९ ] ति० टी०—राज्यवनवासयोर्वनवासो महोदयो महाफलः । प्रजानां कृत्याकृत्यचिन्ताव्यग्रराहित्येन सततं तपःप्रवृत्त्या पितृवाक्यपरिपालनेन चेति भावः ॥ २९ ॥

रा० टी०—मेति । हे लक्ष्मण ! लक्ष्म्याः राज्यश्रियः विपर्यये वनवासश्रियः प्राप्तावित्यर्थः संतापं मा कार्षीस्तत्र हेतुः लोके लक्ष्मीद्वयं राज्यं राज्यलक्ष्मीः वनवासो वनवासलक्ष्मीः च तत्रैका प्राप्तैवेति तात्पर्यं प्रत्युत इयं प्राप्तिर्हर्षावहेत्याह—वनवासमहोदयः अतियशःसंपादकत्वेनातिहर्षहेतुरिति तात्पर्यम् ॥२९॥

गो० टी०—मा चेति । राज्यं वा वनवासो वा उभावपि तुल्यौ विचार्यमाणे वनवास एव महोदयः महाफलः राज्यव्यापारक्लेशाभावात् अपूर्वदर्शनसौख्याच्चेति भावः ॥ २९ ॥

३० ] ति० टी०—उपदेशस्य परमप्रयोजनमाह—नेति । न माताभिशङ्कितव्या, न पिताभिशङ्कितव्यः, यतो दैवाभिपन्ना दैवग्रस्ता एवमभिशङ्कृत इति शेषः । यद्वा दैवाभिपन्नत्वं मातापित्रोर्विशेषणम् । त्वं च दैवं तथाप्रभावमिति जानासि, अतो नातिशङ्कनीया ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

रा० टी०—उपसंहरमाह—नेति । हे लक्ष्मण ! अस्मिन् रा-

---

१ संहृतैरिति रा. पाठः । २ राजद्रव्यमतेनेति गो. पाठः । ३ खलु कर्मविघ्ने इति गो. पाठः । ४ अतिशङ्कनीयेति गो. पाठः । ५ हि वदत्यधिकमिति गो. पाठः । ६ चेति गो. पाठः ।

# त्रयोविंशः सर्गः ।

रामवचःश्रवणकुपितो लक्ष्मणः पितृवचसोऽधर्म्यत्वादुपेक्ष्यत्वं प्रतिपाद्य दैवपौरुषयोः पौरुषस्यैव प्राधान्यं दर्शयित्वा तदवलम्बनेनाभिषेकविहन्तॄन्निवार्य स्वाभिषेकं संसाधयितुं रामं प्राचोदयत् । रामस्तु लक्ष्मणं परिसान्त्व्य पितृवचस एवावश्यकर्तव्यत्वं प्रत्यपादयत् ।

इति ब्रुवति रामे तु लक्ष्मणोऽर्वाक्शिरा इव[1] । ध्यात्वा मध्यं जगामाशु सहसा दैन्यहर्षयोः ॥ १ ॥
तथा[2] तु बद्ध्वा भ्रुकुटीं[3] भ्रुवोर्मध्ये नरर्षभः । निशश्वास महासर्पो बिलस्थ इव रोषितः ॥ २ ॥
तस्य दुष्प्रतिवीक्ष्यं[4] तद्भ्रुकुटीसहितं तदा । बभौ क्रुद्धस्य सिंहस्य मुखस्य सदृशं मुखम् ॥ ३ ॥
अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः । तिर्यगूर्ध्वं शरीरे च पातयित्वा शिरोधराम् ॥ ४ ॥

र्यविघ्ने दैवाभिपन्ना दैवविजयादृष्टप्रेरिता यवीयसी कनिष्ठा मम माता कैकयी न अभिशङ्कितव्या किमाचरितमनयेति शङ्कितुमनर्हा, पितापि न शङ्कितव्यः शङ्कितव्येति लिङ्गविपरिणामेन इहाप्यन्वेति त्वत्कर्तृकशङ्कितव्यत्वाभावे हेतुः तथाप्रभावं मदुक्तप्रभावविशिष्टं दैवं त्वं जानासि ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०--महता प्रबन्धेनोक्तं संग्रहेण दर्शयति--नेति ।- यवीयसी कनिष्ठा कानिष्ठ्यं महिषीत्रयापेक्षया न तेऽम्बा मध्यमेत्यत्र मध्यमात्वं सर्वराजपत्न्यपेक्षया दैवाभिपन्ना दैवाविष्टा तथाप्रभावं तादृशप्रभावयुक्तम् अप्रतिहतप्रभावमित्यर्थः ॥२०॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

१ ] ति० टी०--दुःखहर्षयोर्मध्यं जगाम । रामस्य धर्मे धैर्यं दृष्ट्वा हर्षस्तस्य राज्यभ्रंशाद्दुःखमित्येषा मध्यगतिः लक्ष्मणस्य शेषावतारत्वेन तमोगुणप्रधानता, ज्येष्ठस्य विवेकवाक्यश्रवणेन सत्त्वोदयश्चेति भावः । अधःशिरस्त्वेनोक्तार्थस्यार्धाङ्गीकारध्वननम् । इवेन तमसः स्वाभाविकत्वात्तस्य स्थिरता ध्वन्यते ॥ १ ॥

रा० टी०--इतीति । इति उक्तप्रकारेण रामे ब्रुवति सत्येव अवाक्शिरा अधोमुखो लक्ष्मणः आशु शीघ्रं ध्यात्वा रामोक्तितात्पर्यं विचार्य दैन्यहर्षयोः पितृकृताभिषेकप्रतिज्ञाभङ्गेन दैन्यं रामेप्सितराक्षसवधादिसान्निध्येन हर्षः तयोर्मध्यमिव सहसा जगाम इवेन तटस्थजनबोधनायैवमाचरणमिति ध्वन्यते तेन तस्य लोकापवादभीरुत्वं व्यक्तम् एतेनास्यापि रामेप्सितमेवेप्सितमिति सूचितम् ॥ १ ॥

गो० टी०--पूर्वं दैवस्य प्रबलत्वेन राज्यविपर्यये न संतापः कार्यः धर्मस्य सर्वश्रेयःसाधनत्वात् तन्मूलभूते पितृवचनकरणसत्ये अवश्यं कर्तव्ये मातृवचनं च पश्चात्तनत्वात्पश्चात्पालनीयमित्येतावत्सयुक्तिकमुपपादितं तत्र पौरुषमेव बलं बलीयः दैवबलं तु दुर्बलानुसरणीयं धर्मश्चार्थकामविरोधे न कर्तव्य इति पूर्वपक्षं पूर्वं संग्रहेण लक्ष्मणवाक्येनोक्तं पुनस्तन्मुखेन प्रपञ्चयन् संग्रहेण सिद्धान्तं च दर्शयति--इतीत्यादिना । रामे मुहुः ब्रुवति सति लक्ष्मणः स्वानभ्युपगमसूचनायाधःशिराः सन् श्रुत्वा दुःखहर्षयोर्मध्यं धर्मे स्थिरोऽभूदिति हर्षं राज्यं त्यक्ष्यतीति दुःखं च मनसा जगाम न तु वाचा प्रतिपादितवान् । इवशब्देनास्थिरत्वमुच्यते उत्तरक्षणे माध्यस्थ्यत्यागस्य वक्ष्यमाणत्वात् ॥ १ ॥

२ ] ति० टी०--तामेव दर्शयति--तथा त्विति । तथा भयंकरामित्यर्थः । बिलमत्र परबिलम् ॥ २ ॥

रा० टी०--तथेति । तथा नैतत्संमतं रामगमनमिति लोकप्रतीतिकारकत्वप्रकारेण भ्रुकुटीं भ्रुवौ बद्ध्वा भ्रुवोर्मध्ये निशश्वास भ्रूमध्याच्छ्वासोऽगच्छदित्यर्थः । तत्र दृष्टान्तः बिलस्थः बिले निरुद्ध इत्यर्थः रोषितः सर्प इव ॥ २ ॥

गो० टी०--तदेति । तुशब्देन पूर्वावस्थातो विलक्षणावस्था सूच्यते भ्रुवोर्मध्ये ललाटे भ्रुकुटीं कृत्वेत्यर्थः । बिलस्थः पेटिकाबिलस्थः नतु वल्मीकस्थः तदानीं रोषासंभवात् ॥ २ ॥

३ ] ति० टी०--दुष्प्रतिवीक्ष्यं संमुखतया द्रष्टुमशक्यम् । सादृश्यं दुर्दर्शत्वेन ॥ ३ ॥

रा० टी०--तस्येति । दुष्प्रतिवीक्ष्यं कोपबोधकत्वेन वीक्षणानर्हं मुखं बभौ ॥ ३ ॥

गो० टी०--तस्येति । दुष्प्रतिवीक्ष्यमभिमुखतया दुर्निरीक्ष्यं तस्य मुखम् ॥ ३ ॥

४ ] ति० टी०--अग्रहस्तं हस्ताग्रम् । रामेण क्षमापनाय गृहीतमित्यर्थः । तिर्यगित्यादि क्रोधातिशयेन त्रिविधं शिरोधूननं कृत्वेत्यर्थः चादय इत्यपि ॥ ४ ॥

रा० टी०--अग्रेति । हस्ती हस्तं शुण्डादण्डमिव अग्रहस्तं दक्षिणकरमित्यर्थः । शरीरे तिर्यगूर्ध्वं यथा स्यात्तथा विधुन्वन्सन् अपाङ्गा अक्ष्यग्रभागेन भ्रातरं वीक्षमाणश्च सन् शिरोधरां पृथ्वीं पातयित्वा अत्यधोमुखीभूयेत्यर्थः अब्रवीत् । सार्धश्लोक एकान्वयी ॥ ४ ॥

गो० टी०--क्रोधविकारं दर्शयति--अग्रहस्तमित्यादिसार्ध-

१ ऽधःशिरा मुहुरिति गो. पाठः । २ क्रुद्धेति गो. पाठः । ३ इव मनसा दुःखेति गो. पाठः । ४ तदेति गो. पाठः । ५ भ्रुकुटी इति रा. पाठः । ६ वीक्षमिति गो. पाठः ।

अग्राक्ष्णा वीक्षमाणस्तु तिर्यग्भ्रातरमब्रवीत् । अस्थाने संभ्रमो यस्य जातो वै सुमहानयम् ॥ ५ ॥
धर्मदोषप्रसङ्गेन लोकस्यानतिशङ्कया । कथं ह्येतदसंभ्रान्तस्त्वद्विधो वक्तुमर्हति ॥ ६ ॥
यथा ह्येवमशौण्डीरं शौण्डीरः क्षत्रियर्षभः । किं नाम कृपणं दैवमशक्तमभिशंससि ॥ ७ ॥
पापयोस्ते कथं नाम तयोः शङ्का न विद्यते । सन्ति धर्मोपधासक्ता धर्मात्मन्किं न बुध्यसे ॥ ८ ॥

कः । अग्रं हस्तस्य अग्रहस्तः एकदेशसमासः पूर्वापरादिव्यतिरिक्तस्थलेऽपि क्वचिदस्ति अग्रं चासौ हस्तश्च अग्रहस्तः हस्तशब्दो हस्तावयवे उपचर्यत इति वामनः शरीरे उरसि अथ पर्थः । यद्वा शिरोधरां शरीरे तिर्यगूर्ध्वं चकारादधश्च पातत्वा क्रोधातिशयेन विविधं शिरोविधूननं कृत्वेत्यर्थः । अग्राक्ष्णा कटाक्षेण तिर्यग्वीक्षमाणः सन् अब्रवीत् ॥ ४ ॥

५–७ ] ति० टी०–अग्राक्ष्णा कटाक्षेण । तिर्यग्वक्रं भ्रातरं वीक्षमाणः । धर्मदोषो धर्मविरोधस्तत्प्रसङ्गेन तत्परिहारशेषणा, पितृवचनमकुर्वन्कथमस्मान्धर्मेण पालयिष्यतीति या लोकस्यातिशङ्का तदभावसंपादनहेतुना मयापि पितृवचसोऽकरणेऽन्योऽपि पितृवचो न करिष्यतीति लोकनाशशङ्काहेतुना च, यस्य ते सुमहानयं वनगमनं प्रति संभ्रमो जातः सोऽस्थानेऽयुक्तो भ्रान्तिमूल एव । भ्रान्तिमूलत्वमेवाह–कथं हीति । अशौण्डीरमसमर्थं दैवमिति किंचिद्वस्तु प्रबलमिति । एवंजातीयकं यथा यथैव त्वं वदसि एतदेतज्जातीयं त्वद्विधः शौण्डीरो दैवनिराकरणेऽपि समर्थः क्षत्रियर्षभो यद्यसंभ्रान्तः स्यात्कथमेतद्वक्तुमर्हति, न कथमपि । अतः कृपणमसमर्थैकपरिग्राह्यतया शोच्यम् अशक्तं पौरुषसंनिधौ कार्यासमर्थं दैवपदार्थं प्राकृतवत्किमभिशंसस्यभिष्टौषि ॥ ५–७ ॥

रा० टी०–तद्वचनमेवाह–अस्थाने इति । अयस्य अयोध्याभिन्नकर्मकगमनकर्तृत्वाभावविशिष्टस्य तव अयं सुमहान् संभ्रमो गमनत्वरा अस्थाने अप्रसङ्गे अभिषेकस्योपस्थितत्वात् गमनस्यानवसरे इत्यर्थः जातः । अर्थं पृथक् ॥ ५ ॥

गो० टी०–अस्थान इति । धर्मदोषप्रसङ्गेन पितृवचनपरिपालनरूपधर्महानिप्रसक्त्या लोकस्य अनतिशङ्कया अतिशङ्कापरिहाराय मयानङ्गीकृते लोको धर्मं त्यजतीति शङ्कापरिहाराय चेत्यर्थः । एवंविधकार्यद्वयार्थं यस्य प्रसिद्धस्य ते जातोऽयं सुमहान् संभ्रमः वनगमनत्वरा अस्थाने अनवकाशे अयुक्त इत्यर्थः । 'अवकाशे स्थितौ स्थानम्' इत्यमरः ॥ ५ ॥

रा० टी०–लोकादिभीतिरपि त्वयि उचितेति बोधयन्नाह–धर्मेति । त्वद्विधः सत्यप्रतिज्ञत्वेन त्वत्सदृशः असंभ्रान्तः सार्वकालिकसर्वहेतुकभयरहितः अत एव लोकस्य राक्षसादिजनस्य अनतिशङ्कया अतिशङ्काभावेनोपलक्षितो जनः राजा कैकयी च धर्मदोषप्रसङ्गेन धर्माणां शुन्याप्यनुष्ठितसत्कर्मणां यो दोषः राक्षसादिकर्तृकोपद्रव इत्यर्थः । तत्प्रसङ्गेन तच्छ्रवणेनेत्यर्थः । एतद्वनवासगमनाज्ञापनं कथं वक्तुमर्हति एतेनाभिषेकप्रतिज्ञातः पूर्वमेवाज्ञापनं युक्तमिति ध्वनितम् ॥ ६ ॥

गो० टी०–तथात्वमेवोपपादयति–कथमित्यादिना । हे शौण्डीर समर्थ ! दैवमपि निराकर्तुं क्षमेत्यर्थः क्षत्रियर्षभ क्षत्रियश्रेष्ठ ! त्वं शौण्डीरमशूरम् एतत् दैवं यथा समर्थं वदसि एवमसंभ्रान्तस्त्वद्विधः कथं वक्तुमर्हति न कथमपि अशूरः संभ्रान्तः क्षत्रबन्धुरेवासमर्थं दैवमनुसर्तुमर्हतीत्यर्थः।अस्थानइत्यादिश्लोकद्वयस्यैवं वार्थः धर्महानिप्रसक्त्या लोकस्यानतिशङ्कया आनतिः पूजा तद्विषये शङ्कया लोको मामधार्मिष्ठ इति न पूजयेदितिशङ्कयेत्यर्थः । यस्य ते अयुक्तः सुमहान्संभ्रमो भ्रान्तिः जातः धर्महानिर्लोकानत्यभावो वा सर्वातिशायिनस्ते किं करिष्यतीति भावः । भ्रमसद्भावं व्यतिरेकमुखेन द्रढयति–कथमिति ॥ ६ ॥

रा० टी०–यथेति । शौण्डीरः प्रारब्धादिनिरसनसमर्थः क्षत्रियर्षभस्त्वमशौण्डीरं त्वद्विषयकसामर्थ्यहीनमत एव कृपणं दैवमशक्तं सामर्थ्यहीनं यथा भवति तथा किं यथावदभिशंससि एतेन दैवादृष्टवशात्तवाभिषेकनिवृत्तिर्न युक्तेति सूचितम् ॥ ७ ॥

गो० टी०–दैवालम्बनस्य भ्रमत्वमुपपादयति–किमिति । 'कृपणं बुद्धिपौरुषहीनानां जीविका' इति बृहस्पतिरित्युक्तरीत्या दुर्बलैकपरिग्राह्यतया शोच्यम् अशक्तं शक्तिहीनं पौरुषं तिरस्कृत्य कार्यकरणाक्षमम् दैवं किं नाम अभिशंससि अभिष्टौषि अशक्तत्वादेव न कार्यानुमेयो दैवसद्भावः असद्भावादेव तदवलम्बनं ते भ्रम इत्यर्थः । एवं दैवकृतस्यानतिलङ्घनीयत्वं परिहृतं पितृवाक्यपरिपालनरूपधर्मदोषप्रसङ्गं परिहरति–पापयोरिति । पापयोः कैकेयीदशरथयोर्विषये ते शङ्का पापित्वशङ्का कथं नाम न विद्यते पापिनौ तौ त्वयि पापं कर्तुमिच्छतः अतस्तद्वचनाकरणे न धर्महानिरिति भावः ॥ ७ ॥

८ ] ति० टी०–एवं दैवावलम्बनं प्रतिक्षिप्य धर्मदोषप्रसङ्गं परिहरति–पापयोरिति । पापात्मनोस्तयोः कैकेयीदशरथयोर्विषये ते कथं नाम शङ्का पापात्मत्वशङ्का न विद्यते न जायते । ननु धर्मव्यवहारवतोः कथमेषा शङ्का तत्राह–सन्तीति । हे धर्मात्मन्धर्मैकस्वभाव ! धर्मे उपधा छलं तत्रासक्तमानसाः लोकप्रतारणाय येषां तादृशा बहिर्धर्मपरा अन्तःपापासक्ताः सन्ति तान्किं कथं न बुध्यसे ॥ ८ ॥

रा० टी०–ननु रावणोऽतिबलवान् शत्रुरतस्तन्निरसनयत्नो द्रुतं कर्तव्य इत्यत आह–पापयोरिति । पापयोः पापाचरणशीलयोस्तयोः रावणकुम्भकर्णयोः शङ्का कथं विद्यते कथमपि नेत्यर्थः । तत्र हेतुः धर्मोपधासक्ताः धर्मं भवदुपासनारूपं दधाति धारयति स विभीषण इत्यर्थः तत्रासक्ताः तद्विषयकप्रीतिमन्तो न सन्ति तयोः पुरुषा इति शेषः । धर्मात्मन्

१ दैवमिति गो. पाठः । २ शौण्डीर क्षत्रियर्षभेति गो. पाठः । ३ श्लक्ष्णा इति गो. सक्ता इति रा. पाठः ।

तयोः सुचरितं स्वार्थं शाठ्यात्परिजिहीर्षतोः । यदि नैवं व्यवसितं स्याद्धि प्रागेव राघव ॥
तयोः प्रागेव दत्तश्च स्याद्वरः प्रकृतश्च सः ॥ ॥ ९ ॥
लोकविद्विष्टमारब्धं त्वदन्यस्याभिषेचनम् । नोत्सहे सहितुं वीर तत्र मे क्षन्तुमर्हसि ॥ १० ॥
येनैवमागता द्वैधं तव बुद्धिर्महामते । सोऽपि धर्मो मम द्वेष्यो यत्प्रसङ्गाद्विमुह्यसि ॥ ११ ॥

परमधर्मप्रवर्तक ! किं कथं न बुध्यसे स्मरसि एतेन रामोपासकद्रोही ध्रुवं नश्यतीति सूचितम् । 'धर्मोपधाः श्लक्ष्णाः' इति भूषणपाठः तत्र धर्मोपधाः धर्मध्वंसकाः श्लक्ष्णाः स्वरक्षणे चतुराः न सन्तीत्यर्थः ॥ ८ ॥

गो० टी०—ननु धर्मिष्ठयोस्तयोः कथं पापित्वशङ्केत्यत्राह—सन्तीति । धर्मः उपधा व्याजो येषां ते धर्मोपधाः श्लक्ष्णाः धर्माचरणकञ्चुकेन स्वदोषपिधानचतुराः सन्ति लोके इति शेषः । हे धर्मात्मन् धर्मैकप्रवणस्वभाव ! शाठ्याद्गूढविप्रियकारित्वात् स्वार्थमभिषेकरूपमस्मत्प्रयोजनं परिजिहीर्षतोः परिहर्तुमिच्छतोः तयोः कैकयीदशरथयोः सुचरितं सुष्ठु मन्त्रितं किं न बुध्यसे ॥ ८ ॥

९ ] ति० टी०—तयोर्धर्मोपधत्वं दर्शयति—तयोरिति । स्वार्थं स्वकार्यसिद्ध्यर्थम् सुचरितं त्वाम् शाठ्यान्मृषाकल्पितधर्मव्यवहारात् परिजिहीर्षतोस्त्यक्तुमिच्छतोस्तयोः कृत्यं किं न बुध्यसे इत्यनुकर्षः । अमुमर्थमर्थापत्त्या साधयति—यदीति । यदि तयोरेवं शाठ्येन त्वदर्थप्रच्यावनं व्यवसितमभिप्रेतं न स्यात्तदाभिषेकारम्भं कृत्वा तद्विघ्नकरणं न स्यादिति शेषः । हि यस्मात्प्रागेन पूर्वकाल एव तयोर्दातृप्रतिग्रहीतृभावेन संबद्धः स वरः प्रकृतः प्रसक्तप्रसक्तस्तथ्यः स्यात्तदा प्रागेवाभिषेकारम्भात्पूर्वमेव दत्तः स्यात् त्वदभिषेकारम्भं विनैव भरताभिषेकत्वद्वनवासौ कृतौ स्याताम् । तस्माद्वरप्रदानकथा मिथ्यैवेति भावः ॥ ९ ॥

रा० टी०—तयोरिति । शाठ्यादेतोः स्वार्थं स्वैश्वर्यं जिहीर्षतोः त्यक्तुमिच्छतोः तयोः रावणकुम्भकर्णयोः यदि सुचरितं स्यात्तर्हि प्राक् पूर्वमेव एवं मुनिदुःखदानप्रकारेण व्यवसितं निश्चितं न स्यात् ॥ ९ ॥

रा० टी०—ननु प्राप्तवरत्वात्कथं तयोर्विनाश इत्यत आह—तयोरिति । दत्तः ब्रह्मणा ग्राहितः तयोः रावणकुम्भकर्णयोर्वरः प्रकृतः अतिशयेन छिन्नः छेदनार्थककृतो रूपम् । तत्र हेतुः यतः लोकविद्विष्टं भवजनद्वेषः आरब्धमत एव अन्यस्य रावणाद्भिन्नस्य विभीषणस्येत्यर्थः । त्वत्तः अभिषेचनं लङ्काराज्याभिषेकः स्याद्भविष्यतीत्यर्थः । एतेन भक्तापराधिनः कल्याणं न भवतीति सूचितम् ॥ १० ॥

गो० टी०—विपर्ययेऽनिष्टं प्रसञ्जयति—यदीति । हे राघव ! प्रागेव अभिषेकात्पूर्वमेव एवमुक्तप्रकारेण तयोः कैकेयीदशरथयोः व्यवसितं निश्चयः यदि न स्यात् तदा प्रकृतः पूर्वमेव प्रसक्तः स वरश्च प्रागेव दत्तः स्यात् । किंचेति चार्थः अयं भावः भरतायावश्यं राज्यं देयं रामस्य ज्येष्ठत्वेन तद्विषयोऽभिषेक आरभ्यते तदानीं त्वया वरद्वयं प्रष्टव्यं तद्व्याजेन रामो विवास्यते भरतोऽभिषिच्येत इतिकैकेयीदशरथाभ्यां संकेतितमन्यथा सा वरद्वयं किमेतावत्पर्यन्तं न याचेत अयाचितमपि तत् नीतिज्ञो राजा वा कुतो न पूर्वमेव परिहरेदिति ॥ ९ ॥

१० ] ति० टी०—यद्यपि दत्तोऽपि वरो राज्ञा विस्मृत इति तेन मदभिषेकारम्भः कृत इत्यादिसमाधानं शक्यं तथापीदृशवरदानस्य लोकविद्विष्टत्वेनानौचित्यादनुचितकर्तृत्वेन राजा त्याज्य एवेत्याह—लोकेति । ज्येष्ठे श्रेष्ठगुणे जाग्रति कनिष्ठविषयकत्वात्तदभिषेचनस्य लोकविद्विष्टत्वं प्रत्यक्षव्यवहारविरोधाच्छास्त्रविरोधाच्चेति भावः । मे अपराधमिति शेषः । त्वद्विषये प्रतिवचनदानरूपं ममापराधं क्षन्तुमर्हसि॥१०॥

रा० टी०—नेति । हे वीर ! येन अनवसरकैकयीवचनेन हेतुना तव बुद्धिः एवमनवसरगमनेन द्वैधं द्वौ रावणकुम्भकर्णौ धयति विध्वंसयतीत्यर्थः स तस्य भावः तदागता प्राप्ता तं हेतुं कैकयीवचनमित्यर्थः सहितुं नोत्सहे । ननु माता कथमेवमुच्यते इत्यत आह—तत्र मातृवचनासहनविषये क्षन्तुमर्हसि तदसहनं मम दुर्निवारमिति तात्पर्यम् ॥ ११ ॥

गो० टी०—अस्तु तथा ततः किमित्यत्राह—लोकविद्विष्टमिति । लोकविद्विष्टं ज्येष्ठं परित्यज्य कनिष्ठस्याभिषेचनात् लोकविद्वेषविषयमित्यारम्भक्रियाविशेषणं मे तत्र असहनविषये क्षन्तुमर्हसि ॥ १० ॥

११ ] ति० टी०—प्रतिवचनमेवाह—येनेत्यादि । यत्प्रसङ्गाद्यस्य पितृवचनस्य प्रसङ्गाद्धर्मत्वप्रसक्तकल्पनाद्धेतोर्विमुह्यसि तदकरणे प्रत्यवायः स्यादिति मोहं प्राप्तोऽसि । येन च मोहेन तव बुद्धिरेवं द्वैधमागता पूर्वं राज्यग्रहणविषयत्वमधुना तत्त्यागविषयत्वरूपं प्रकारद्वयं प्राप्ता स धर्मोऽपि मम द्वेष्यः धर्माभासत्वादिति भावः ॥ ११ ॥

रा० टी०—स इति । यत्प्रसङ्गाद्यदनुष्ठानादित्यर्थः । विमुह्यसि सर्वोन्विवित्तान् करोषि स धर्मः अनवसरे प्रतिज्ञापालनमित्यर्थः मम द्वेष्यः मत्प्रीतिविषयीभूतो न भवतीत्यर्थः । अन्तर्भावितणिजर्थो मुह्यतिः । अर्थं पृथक् । वनगमननिवारणमपि कर्तुं न शक्यते इति बोधयन्नाह—कथमिति । कर्मणा धर्मक्रिययोपलक्षितः शक्तः समर्थस्त्वं कैकेयीवशवर्तिनः तत्त्वेन प्रतीयमानस्य पितुः वाक्यं अधर्मिष्ठमत एव विगर्हितं कथं करिष्यसि त्वत्कर्तृकापितृवचनाकरणे इदं पितृवाक्यमधर्मिष्ठमिति जना वदिष्यन्तीति तात्पर्यम्, यद्वा विगर्हि-

१ स हीति गो॰ पाठः ।

कथं त्वं कर्मणा शक्तः कैकेयीवशवर्तिनः । करिष्यसि पितुर्वाक्यमधर्मिष्ठं विगर्हितम् ॥ १२ ॥
यदीयं किल्बिषाद्भेदः कृतोऽप्येवं न गृह्यते । जायते तत्र मे दुःखं धर्मसङ्गश्च गर्हितः ॥ १३ ॥
तवायं धर्मसंयोगो लोकस्यास्य विगर्हितः । मनसापि कथं कामं कुर्यात्त्वां कामवृत्तयोः ॥
तयोस्त्वहितयोर्नित्यं शत्र्वोः पित्रभिधानयोः ॥ ॥ १४ ॥
यद्यपि प्रतिपत्तिस्ते दैवी चापि तयोर्मतम् । तथाप्युपेक्षणीयं ते न मे तदपि रोचते ॥ १५ ॥
विक्लवो वीर्यहीनो यः स दैवमनुवर्तते । वीराः संभावितात्मानो न दैवं पर्युपासते ॥ १६ ॥

तमसमयोद्भवत्वेन लोकापवादसहितमपि धर्मिष्ठं ब्रुनिरक्षारूपस्वधर्मबोधकत्वेन धर्मसहितं वाक्यं कथं न करिष्यसि करिष्यस्येवेत्यर्थः ॥ १२ ॥

गो० टी०—यथाकथंचित् पितृवचनं कर्तव्यमेवेति मन्वानं रामं प्रत्याह—येनेति । इयं ते बुद्धिः येन पितृवचनपरिपालनरूपधर्मेण द्वैधं भेदमागता प्राप्ता नाभिषिच्ये वनं प्रवेक्ष्यामीति यस्य प्रसङ्गात्प्रस्तावात् मुह्यसि अकरणे प्रत्यवायः स्यादिति मोहं प्राप्नोषि स धर्मो मम द्वेष्यः ॥ ११ ॥

१२ ] ति० टी०—तस्य धर्माभासत्वमेवाह—कथमिति । कर्मणाचिन्त्यवैभवस्वक्रियाशक्त्या कर्तुमकर्तुमन्यथा कर्तुं च शक्तः समर्थस्त्वं कैकेयीवशवर्तिनः स्त्रीजितस्य अत एव गर्हितं लोकनिन्द्यमधर्मिष्ठं च वचः करिष्यसि ॥ १२ ॥

गो० टी०—मोहं विशदयति—कथमिति । कर्मणा पौरुषकर्मणा शक्तः प्रतीकारसमर्थ इत्यर्थः । त्वं कैकेयीवशवर्तित्वादेवाधर्मिष्ठं विगर्हितं च वाक्यं कथं केन प्रकारेण मोहं विना करिष्यसि ॥ १२ ॥

१३ ] ति० टी०—एवं स्पष्टेऽप्यधर्मे तवाधर्मबुद्धिर्न जायत इति मे दुःखमित्याह—यदिति । अयं भेदोऽभिषेकविघटनात्मा किल्बिषान्मृषावरप्रकल्पनात्कृतोऽपि यद्यतस्त्वयैवं मृषावरप्रकल्पितत्वेन न गृह्यते, अतो मे तत्र तद्विषये दुःखं जायते । कपटकृतमप्यधर्ममसौ साधुतया गृह्णातीति मम व्यथेति भावः । किंचैवंविधधर्मसङ्ग एवंविधधर्मासक्तिर्निन्द्या ॥ १३ ॥

रा० टी०—ननु तर्हि गमनसंमतिं कुर्वित्यत आह—यदिति । किल्बिषात्पितृवचनाकरणे दोषोद्भावनाद्धेतोः अयं भेदः स्थितिनिराकरणं कृतोऽपि मयेति शेषः । न गृह्यते स्वीकर्तुं न शक्यते इत्यर्थः । तत्र हेतुः तत्र गमने च मे दुःखं जायते वियोगशङ्कयेति भावः । अत एव धर्मसङ्गः धर्मासक्तिरपि गर्हितः मया मनसि निन्दितः, एतेनाहमपि सहैव नेतव्य इति ध्वनितम् ॥ १३ ॥

गो० टी०—त्वन्मोहादेव मे दुःखमित्याह—यदीति । अयं भेदः अभिषेकविघातात्मा विपर्यासः किल्बिषात् मृषावरकल्पनात् कृतोऽपि एवं किल्बिषकल्पित इति यदि न गृह्यते तदाग्रहणनिमित्ते मे दुःखं जायते धर्मसङ्गश्च एतादृशधर्मसङ्गश्च विगर्हितः ॥ १३ ॥

१४ ] ति० टी०—तदेवाह—तवेत्यादिना । अयं वनवासरूपो दोषस्य दोषत्वाग्रहमेव शोचति । त्वां त्वां विना तत्कृते कर्मणि दैवकृतत्वबुद्धिं त्वां विनान्यः कामवृत्तयोरहितयोर्नित्यं पितृनामकशत्र्वोः कामं मनोरथं मनसापि कथं कुर्यात् अनुष्ठानं तु दूरत इति भावः ॥ १४ ॥

रा० टी०—स्थापयितुं गमयितुं वा मया न शक्यमिति बोधयन्नाह—तवेति । अयं भवता आरब्धः धर्मसंयोगः धर्महेतुकवनसंबन्धः अस्य अयोध्यास्थस्य लोकस्य जनस्य विगर्हितः वियोगस्यासह्यत्वेन अनीप्सित इत्यर्थः । अनेन गमनसंमतेरशक्यत्वं सूचितम् पित्रभिधानयोः मातापित्रोरित्यर्थः । अहितयोः अनीप्सिततत्पाल्यमुन्यादिद्रोहकर्तृत्वेन तदहिताचरणविशिष्टयोरित्यर्थः अत एव शत्र्वोः कामवृत्तयोः स्वच्छन्दचारिणोः तयोः रावणकुम्भकर्णयोः कामं कस्य स्वच्छन्दवर्तिहेतुकसुखस्य भ्रमं निवारणं त्वां विना अन्यः मनसापि कथं कुर्यान्न कुर्यादित्यर्थः । विनेति अन्य इति चाध्याहृतम् एतेन निवारणमप्यशक्यमिति ध्वनितम् । सार्धश्लोक एकान्वयी ॥१४॥१५॥

गो० टी०—तस्मान्मनसापि तन्न कर्तव्यमित्याह—मनसेत्यादिना ॥ १४ ॥

१५ ] ति० टी०—वरस्य वास्तवं दैवकृतत्वमभ्युपेत्याप्याह—यद्यपीति । तयोः पित्रोः प्रतिपत्तिस्त्वदभिषेकविघटनविषया बुद्धिरपि दैवी च दैव्येवेति यद्यपि ते मतं तथापि ते त्वया स्वमतमप्येतदुपेक्षणीयं यन्नस्तदपीदृशं विरुद्धकारि दैवमपि न रोचते । एवं च प्रियभ्रातुर्ममासंमतत्वादिदं त्वया त्याज्यमिति भावः ॥ १५ ॥

रा० टी०—यद्यपीति । यद्यपि ते प्रतिपत्तिर्गमननिश्चयः दैवी देवादृष्टप्रार्थिता तयोः रावणकुम्भकर्णयोः मतम् उपद्रवविषयिणी मतिश्च दैवं देवादृष्टप्रेरितं द्वयमपि दुर्निवारमिति तात्पर्यम् तथापि यत्ते उपेक्षणीयमभिषेकत्यागः तन्मे नैव रोचते । दैवीशब्दः लिङ्गविपरिणामेनान्यत्राप्यन्वेति ॥ १६ ॥

गो० टी०—मम विवासनं दैवकृतं न तु कैकेयीकृतमिति पूर्वं रामोक्तमनद्य परिहरति—यद्यपीत्यादिना । तयोः पित्रोः प्रतिपत्तिः अभिषेकविघटनविषया बुद्धिः दैवी चापि दैवकृतैवेति ते मतं यद्यपि तथापि ते त्वया तद् उपेक्षणीयं तदपि दैवमपि मम न रोचते ॥ १५ ॥

१६ ] ति० टी०—किं च त्वादृशस्य दैवालम्बनवादोऽप्ययुक्त इत्याह—विक्लव इति । लोकाप्रसिद्ध इत्यर्थः । संभावितात्मानः सर्वलोकश्लाघ्यशौर्यादिमन्तः ॥ १६ ॥

१ यद्ययमिति गो. पाठः । २ अर्धमिदं गो. नास्ति । ३ कुर्यास्त्वमिति गो. पाठः ।

दैवं पुरुषकारेण ⁴यः समर्थः प्रबाधितुम् । न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥ १७ ॥
द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च । दैवमानुषयोरद्य व्यक्ता व्यक्तिर्भविष्यति ॥ १८ ॥
अद्य ¹मे पौरुषहतं दैवं द्रक्ष्यन्ति वै जनाः । ²यैर्दैवादाहतं तेऽद्य दृष्टं राज्याभिषेचनम् ॥ १९ ॥
अत्यङ्कुशमिवोद्दामं गजं मद³जलोद्धतम् । प्रधावितमहं दैवं पौरुषेण निवर्तये ॥ २० ॥
लोकपालाः समस्तास्ते नाद्य रामाभिषेचनम् । न च कृत्स्नास्त्रयो लोका विहन्युः किं पुनः पिता ॥ २१ ॥

रा० टी०—दैवानुसरणं तवानुचितमिति बोधयन्नाह—विक्लव इति । यो वीर्यहीनः दैवान्यथाकरणे असमर्थः अत एव विक्लवः कातरः प्राकृतो जन इत्यर्थः । सः दैवमनुवर्तते अनुसरति संभावितात्मानः संभावितः नित्यं परिशीलितः आत्मा स्वस्वरूपं यैस्ते अत एव वीरा ईश्वरा इत्यर्थः दैवं न पर्युपासते अनुसरन्तीत्यर्थः एतेन यदीश्वरा दैवं नानुसरन्ति तर्हि ईश्वरेश्वरो नानुसरतीति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः ॥ १७ ॥

गो० टी०—उपेक्षणीयतायां हेतुमाह—विक्लव इति । विक्लवः कातरः वीर्यहीन इत्यस्य प्रतियोगितयोक्तं वीरा इति विक्लव इत्यस्य प्रतियोगितयोक्तं संभावितात्मान इति संभावितः सम्यक् प्रापितः दृढ इति यावत् आत्मा मनो येषां ते तथा धीरा इत्यर्थः नोपासते नाश्रयन्ति ॥ १६ ॥

१७ ] ति० टी०—समर्थस्त्वादृशः विपन्नार्थो हतप्रयोजनः सः त्वादृशः ॥ १७ ॥

रा० टी०—दैवमिति । यः पुरुषकारेण स्वपौरुषेण दैवं प्रबाधितुं समर्थः स पुरुषः परमपुरुषः ईश्वरेश्वर इत्यर्थः दैवेन विपन्नार्थः विध्वंसितप्रयोजनः सन्नावसीदति खेदं प्राप्नोति एतेन दैवादृष्टानुसारेणाभिषेकनिवर्तनं न योग्यमिति ध्वनितम् तेनादृष्टमेवान्यथा कुतो न कृतमिति जिज्ञासा सूचिता ॥ १८ ॥

गो० टी०—कुतो नाश्रयन्तीत्यपेक्षायां पौरुषवतो दैवेन प्रयोजनहान्यभावादित्याह—दैवमिति । पुरुषकारेण पुरुषबलेन दैवं बाधितुमतिक्रम्य वर्तितुं यः समर्थः स दैवेन विपन्नार्थः विहतप्रयोजनः सन् नावसीदति न क्लिश्यति ॥ १७ ॥

१८ ] ति० टी०—ननु दैवबाधनसामर्थ्यं न कस्यापि इति चेत्तत्राह—द्रक्ष्यन्तीति । पौरुषं बलं द्रक्ष्यन्ति लोका इति शेषः । व्यक्तिः प्रबलदुर्बलत्वविवेकः । अद्य मत्पौरुषेणेति शेषः ॥ १८ ॥

रा० टी०—त्वत्कर्तृकगमने इदमाश्चर्यं भविष्यतीत्याह—द्रक्ष्यन्तीति । पुरुषस्य पुरुषे त्वयि दैवस्य पौरुषमयैव द्रक्ष्यन्तीति जनाः इति शेषः । ननु ततः किमित्यत आह—दैवमानुषयोः देवदेवमनुष्ययोः अव्यक्तिः अविभागः व्यक्ता प्रकटिता भविष्यति तेन परमपुरुषोपासना निवर्तिष्यते इति तात्पर्यम् ॥ १९ ॥

गो० टी०—पुरुषकारापेक्षया दैवस्य दुर्बलत्वे प्रत्यक्षं प्रमाणयति—द्रक्ष्यन्तीति । पौरुषं सामर्थ्यं व्यक्तिः प्रबलदुर्बलविवेकः व्यक्ता स्फुटा भविष्यति ॥ १८ ॥

१९ ] ति० टी०—तदेवाह—अद्येति । यैर्दैवादाहतं राज्याभिषेचनं ते दृष्टं ते जना अद्य मत्पौरुषहतं दैवं द्रक्ष्यन्ति 'यद्दैवात्' इति पाठे यस्माद्दैवादाहतम् । येन दैवेनाहतमिति यावत् । दृष्टं यैर्जनैर्दृष्टं ते जनास्तद्दैवं मत्पौरुषहतं द्रक्ष्यन्तीत्यर्थः ॥ १९ ॥

रा० टी०—यदि मत्प्रार्थनया भवद्गमननिवृत्तिः स्यात्तर्हि उचितं स्यादित्याह—अद्येति । यैः जनैः दैवाद्दैवादृष्टादाहतं निवृत्तं ते राज्याभिषेचनं दृष्टं ते जना अद्यैव मत्पौरुषहतं मत्पौरुषेण मत्कर्तृकभवत्कर्मकमत्प्रार्थनया हतं निवृत्तं दैवं द्रक्ष्यन्ति तेन ममापि कीर्तिः स्यादिति सूचितम् । 'यद्दैवात्' इति पाठे यैरित्यध्याहर्तव्यम् यदित्यभिषेचनविशेषणम् ॥ २० ॥

गो० टी०—तदेव स्पष्टमाह—अद्येति । यद्दैवात् यस्माद्दैवात् आहतं विघ्नितं ते राज्याभिषेचनं दृष्टं तद्दैवं मत्पौरुषहतं द्रक्ष्यन्ति ॥ १९ ॥

२० ] ति० टी०—अत्यङ्कुशमतिक्रान्ताङ्कुशव्यापारम् । उद्दाममुत्कृष्टदामं निःशृङ्खलमिति यावत् । प्रधावितमभिमुखं धावितं पौरुषेण स्वगतबलेन निवर्तये ॥ २० ॥

रा० टी०—ननु सुखप्रापकदैवादृष्टनाशे तेषां दुःखनिवृत्तिर्न स्यादतो मद्गमनं स्यादेवेत्यत आह—अतीति । अत्यङ्कुशमङ्कुशव्यापारानियम्यमुद्दामं बन्धनरहितमित्यर्थः । मदबलोद्धतं मदबलहेतुकौद्धत्यविशिष्टं प्रधावितं धावनक्रियाविशिष्टं गजमिव दुर्निवारं दैवं रावणकुम्भकर्णोदयकारकादृष्टं पौरुषेण निवर्तये त्वदाज्ञामात्रेण रावणादीनहमेव निहनिष्यामीति तात्पर्यं तेन देवादिदुःखध्वंसो भविष्यत्येवेति सूचितम् ॥ २१ ॥

गो० टी०—अत्यङ्कुशमिति । अत्यङ्कुशमतिक्रान्ताङ्कुशव्यापारमुद्दामं छिन्ननिगलं मदबलोद्धतं मदबलाभ्यां गर्वितं प्रधावितं दुर्निवारं स्वच्छन्दगमनं गजमिव दुर्निवारत्वेन त्वदभिमतं दैवं पौरुषेण निवर्तये ॥ २० ॥

२१ ] ति० टी०—दैवनिवर्तनं स्वबलस्येषत्करमित्याह—लोकेत्यादि ॥ २१ ॥

रा० टी०—ननु गमननिरोधे देवाः प्रार्थयिष्यन्तीत्यत आह—लोकेति । हे राम ! ते अभिषेचनं लोकपालादयो न विहन्युः गमनप्रार्थनया न निवर्तयिष्यन्तीत्यर्थः । गमनप्रयोजनस्य सिद्धत्वनिश्चयो भविष्यतीति तात्पर्यम् पिता किं किमर्थमित्यर्थः ॥ २२ ॥

गो० टी०—लोकपाला इति । ते प्रसिद्धाः हे राम ! ते तवाभिषेचनमिति वा न विहन्युः न विहन्तुं शक्ताः कृत्स्ना अन्यूनाः ॥ २१ ॥

१ मत्पौरुषेति गो. रा. पाठः । २ यद्दैवादिति गो. पाठः । ३ बलोद्धतमिति गो. रा. पाठः । ४ दामानमिति यु.॥ भाति ।

यैर्विवासस्त्वयारण्ये मिथो राजन्समर्थितः । अरण्ये ते विवत्स्यन्ति चतुर्दश समास्तथा ॥ २२ ॥
अहं तदाशां धक्ष्यामि पितुस्तस्याश्च या तव । अभिषेकविघातेन पुत्रराज्याय वर्तते ॥ २३ ॥
मद्बलेन विरुद्धाय न स्याद्दैवबलं तथा । प्रभविष्यति दुःखाय यथोग्रं पौरुषं मम ॥ २४ ॥
ऊर्ध्वं वर्षसहस्रान्ते प्रजापाल्यमनन्तरम् । आर्यपुत्राः करिष्यन्ति वनवासं गते त्वयि ॥ २५ ॥
पूर्वराजर्षिवृत्त्या हि वनवासोऽभिधीयते । प्रजा निक्षिप्य पुत्रेषु पुत्रवत्परिपालने ॥ २६ ॥
स चेद्राजन्यनेकाग्रे राज्यविभ्रमशङ्कया । नैवमिच्छसि धर्मात्मन्राज्यं राम त्वमात्मनि ॥ २७ ॥
प्रतिजाने च ते वीर मा भूवं वीरलोकभाक् । राज्यं च तव रक्षेयमहं वेलेव सागरम् ॥ २८ ॥

२२ ] ति० टी०—मिथः परस्परैकवाक्यतया स्वपौरुषेण । राजत्वं सिद्धवत्कृत्याह—राजन्निति ॥ २२ ॥

रा० टी०—यैरिति । राजन् हे नित्यराजत्वविशिष्ट ! यैर्देवादिदुःखैर्हेतुभिः चतुर्दशसमा अरण्ये ते वासो मिथः परस्परं समर्थितः ते अरण्ये विवत्स्यन्ति नङ्क्ष्यन्तीत्यर्थः ॥ २३ ॥

गो० टी०—यैरिति । राजत्वं सिद्धवत्कृत्याह—राजन्निति । मिथः रहसि 'मिथोऽन्योन्यरहस्ययोः' इति वैजयन्ती । तथा त्वां प्रत्युक्तप्रकारेण ॥ २२ ॥

२३ ] ति० टी०—तदाशां तामाशाम् । तां काम् या तवाभिषेकविघातेन पुत्रराज्याय पुत्रराज्यप्रापणार्थं वर्तते तामित्यर्थः ॥ २३ ॥

रा० टी०—अहमिति । या सर्वाक्रमणाविषयिणी रावणाशा तस्याः केकय्याः तव पितुश्च तवाभिषेकविघाते मातापितृकर्तृकतत्त्वकर्मकाभिषेकविध्वंसे तदर्थं वर्तते अत एव पुत्रराज्याय पुत्रस्य तव राज्याय राज्यं प्रापयितुं न वर्तते तां तदाशां तस्य रावणस्यातितृष्णां धक्ष्यामि निवर्तयिष्यामीत्यर्थः । 'आशा दिगतितृष्णयोः' इति वैजयन्ती ॥ २४ ॥

गो० टी०—अहमिति । तत्तस्मात् या तवाभिषेकविघातेन द्वारेण पुत्रराज्याय वर्तते प्रवर्तते तस्याः पितुश्च आशामतितृष्णाम् 'आशा दिगतितृष्णयोः' इति वैजयन्ती ॥ २३ ॥

२४ ] ति०टी०—मद्बलेन त्वत्पक्षभूतेन मया विरुद्धाय जनाय यथा ममोग्रं पौरुषं दुःखाय प्रभविष्यति तथा दैवबलं न स्यात् तन्निरासनसमर्थमिति शेषः ॥ २४ ॥

रा० टी०—मदिति । मद्बलेन साकं विरुद्धाय विरोधं कर्तुं न स्यात्तथा विरोधाय स्याच्चेत्तर्हि मम उग्रं पौरुषं दुःखाय दैवबलनिवृत्तये यथा यथावत्प्रभविष्यति ॥ २५ ॥

गो० टी०—मद्बलेनेति । मद्बलेन विरुद्धाय जनाय ममोग्रं पौरुषं दुःखाय यथा प्रभविष्यति तथा दैवबलं न स्यात् सुखाय न भवेत् ॥ २४ ॥

२५ ] ति० टी०—अथ वनवासोचितं कालं स्वयमेवाह—ऊर्ध्वमिति । एतद्विवरणं वर्षसहस्रान्त इति । तस्मिन्नतीते त्वयि वनवासं गतेऽनन्तरमार्यपुत्रा आर्यस्य तव पुत्राः प्रजापाल्यं प्रजापालनरूपं राज्यं करिष्यन्ति तदानीमप्यन्येषां नावकाश इति भावः ॥ २५ ॥

रा० टी०—ऊर्ध्वमिति । वर्षसहस्रान्ते यथेप्सितराज्यकरणानन्तरमित्यर्थः । त्वयि वनवासं गते मर्यादापालनार्थं प्राप्ते सति आर्यपुत्राः आर्यस्य सर्वश्रेष्ठस्य तव पुत्राः प्रजापाल्यं प्रजारक्षणमनन्तरं निरन्तरं यथा स्यात्तथा करिष्यन्ति ॥२६॥

गो० टी०—न कदाचिदपि भरतस्य राज्यप्राप्तिरस्तीत्याह—ऊर्ध्वमिति । ऊर्ध्वमित्यस्य विवरणं वर्षसहस्रान्त इति प्रजापाल्यं प्रजापालनं स्वार्थे यत्प्रत्ययः ऊर्ध्वं वर्षसहस्रान्ते त्वयि वनं गते सति वानप्रस्थाश्रमस्थे सति अनन्तरं प्रजापाल्यम् आर्यस्य ते पुत्राः करिष्यन्ति ॥ २५ ॥

२६ ] ति० टी०—इदमेव युक्तमित्याह—पूर्वेति । हि यतः पुत्रवत्परिपालनानिमित्तं पुत्रेषु प्रजा निक्षिप्य पश्चाद्वनवासः पूर्वराजर्षिवृत्त्या तदाचारेणाभिधीयते । 'विधीयते' इत्येव क्वचित्पाठः ॥ २६ ॥

रा० टी०—ननु वनगमनेन कथं मर्यादापालनं स्यादित्यत आह—पूर्वेति । पुत्रवत्परिपालने परिपालनार्थं प्रजाः पुत्रेषु निःक्षिप्य पूर्वराजर्षिवृत्त्या राजर्षीणामाचरणेन हेतुना वनवासः अभिधीयते मया प्रार्थ्यते ॥ २७ ॥

गो० टी०—मदुक्त एव वनवासः पूर्वसंमत इत्याह—पूर्वेति । पुत्रेषु प्रजाः पुत्रवत्परिपालने परिपालननिमित्तं निक्षिप्य पूर्वराजर्षिवृत्त्या तदाचारेण वनवासो विधीयते ॥ २६ ॥

२७] ति० टी०—राजनि दशरथेऽनेकाग्रे कामवशात्मुक्तवानप्रस्थधर्मावधानैकाग्रताराहित्येन चलचित्ततया प्रतिकूले सति राज्यविभ्रमशङ्कया तद्वचोविरोधेन राज्यग्रहणे सकललोकक्षोभेण स्वस्मिन्राज्यस्य विभ्रमशङ्कया चलनशङ्कया स्थैर्यशङ्कया न वनवासधर्मः त्वया चेदङ्गीक्रियत इति शेषः । किंच हे राम ! एवं श्रेष्ठत्वाद्धर्मतः प्राप्तं राज्यं तयैव शङ्कया यथात्मनि नेच्छसि तदा तां शङ्कां त्यजेति शेषः । 'राज्यकामस्त्वम्' इति पाठे एवं प्राप्तं राज्यभोक्तृत्वं राज्यरूपभोग्यसंबन्धं वा यदि नेच्छसीत्यादि प्राग्वत् ॥ २७ ॥

२८ ] ति० टी०—तत्र हेतुः—प्रतिजाने इत्यादि । अहं वेला सागरमिव तव राज्यं च त्वां च रक्षेयम् अन्यथा वीरलोकभाङ्मा भूवमिति ते तवाग्रे प्रतिजाने ॥ २८ ॥

रा० टी०—स इति । राज्यविभ्रमशङ्कया राक्षसादिकर्तृ-

१ छेत्स्यामीति गो. पाठः । २ पूर्वमिति गो. पाठः ।

मङ्गलैरभिषिञ्चस्व तत्र त्वं व्यापृतो भव । अहमेको महीपालानलं वारयितुं बलात् ॥ २९ ॥
न शोभार्थाविमौ बाहू न धनुर्भूषणाय मे । नासिराबन्धनार्थाय न शराः स्तम्भहेतवः ॥ ३० ॥
अमित्रमथनार्थाय सर्वमेतच्चतुष्टयम् । न चाहं कामयेऽत्यर्थं यः स्याच्छत्रुर्मतो मम ॥ ३१ ॥
असिना तीक्ष्णधारेण विद्युच्चलितवर्चसा । प्रगृहीतेन वै शत्रुं वज्रिणं वा न कल्पये ॥ ३२ ॥
खड्गनिष्पेषनिष्पिष्टैर्गहना दुश्चरा च मे । हस्त्यश्वरथिहस्तोरुशिरोभिर्भविता मही ॥ ३३ ॥
खड्गधाराहता मेऽद्य दीप्यमाना इवाग्नयः । पतिष्यन्ति द्विपो भूमौ मेघा इव सविद्युतः ॥ ३४ ॥

कप्रजादौस्थ्यसंदेहेन राजनि दशरथे अनेकाग्रे अनवस्थिते सति आत्मनि स्वमनसि राज्यं नैव इच्छसि चेत्तर्हि हे वीर ! तव राज्यमहं रक्षेयमन्यथा वीरभाक् वीरशब्दवाच्यो मा भूवमिति अहं प्रतिजाने प्रतिज्ञां करोमि।श्लोकद्वयमेकान्वयि२८-२९॥

गो० टी०—स चेत्यादिश्लोकद्वयमेकान्वयम्। हे राम ! स राजनि दशरथे एकमनेकाग्रे चलचित्ते अव्यवस्थितचित्ते सति राज्यविभ्रमशङ्कया राज्यस्य विविधचलनशङ्कया आत्मनि राज्यं नेच्छसि चेदहं तव राज्यं च रक्षेयं कथमिव वेला सागरमिव नोचेद्वीरलोकभाक् मा भूवम ते तुभ्यं प्रतिजाने च॥२७॥२८॥

२९ ] ति० टी०—तस्मात्त्वं मङ्गलैरभिषेकसाधनैरात्मानमभिषिञ्चस्व वसिष्ठादिभिरिति शेषः । तत्राभिषेकव्यापारे व्यापृतो व्यापृतचित्तो भव । तत्प्रतिबन्धकानहं वारयिष्यामीत्याह—अहमिति । अलं समर्थः॥ २९ ॥

रा० टी०—राक्षसानुयायिराजान्तरकृतोपद्रवशङ्कापि न कर्तव्येति बोधयन्नाह—मङ्गलैरिति । मङ्गलैर्मङ्गलद्रव्यैः त्वमभिषिञ्चस्व स्वाभिषेकं कारय अतः तत्र तस्मिन् अभिषेके त्वं व्यापृतो व्यापारवान्भव एकः सहायान्तररहितोऽहं बलात्पौरुषान्महीपालान्राक्षसानुयायिराजान्वारयितुं नियमयितुमलं समर्थः॥ ३० ॥

गो० टी०—मङ्गलैरिति । मङ्गलैः मङ्गलद्रव्ययुक्तैः जलैः अभिषिञ्चस्व आत्मानं वसिष्ठादिभिरिति शेषः । तत्र अभिषेककर्मणि व्यापृतो भव व्यासक्तचित्तो भवेत्यर्थः अलं पर्याप्तं वारयितुं निवारयितुम् ॥ २९ ॥

३० ] ति० टी०—तदेव दर्शयति—नेति । आबन्धनार्थाय काष्ठानां परस्परं बन्धनहेतुच्छिद्रादिकरणाय स्तम्भः कस्यचित्काष्ठादेरधःपतनप्रतिबन्धः ॥ ३० ॥

रा० टी०—ननु तव श्रमः स्यादित्यत आह—नेति । इमौ क्षत्रियशरीरसंबन्धिनौ बाहू शोभार्थौ शोभाप्रयोजनकौ न धनुः भूषणाय न असिः खड्गः आबन्धनार्थाय कुल्यादिनिर्मापककाष्ठादिच्छेदनाय न शराः बाणाः स्तम्भहेतवः समूहीभूय स्तम्भनिर्मापका न ॥ ३१ ॥

गो० टी०—न शोभार्थावित्यादि सार्धश्लोकमेकं वाक्यम्। नेति । आबन्धनार्थाय अपाततः वीरभूषणतया कट्यां बन्धनरूपप्रयोजनायेत्यर्थः । स्तम्भहेतवः केवलं लक्ष्यभूतस्तम्भहेतवः तूण्यां स्थापनहेतव इति वा ॥ ३० ॥

३१-३२] ति० टी०—न चेत्यादि सार्धश्लोक एकं वाक्यम् । योऽत्यर्थं मम मतः संमतः शत्रुः स्यात्तं यं कंचिच्छत्रुं वज्रिणं वा इन्द्ररूपं वा प्रगृहीतेन तीक्ष्णधारत्वादिविशिष्टेनासिना न कल्पये न खण्डशः कल्पये, एवमहं न कामये च एवं कामनामपि न करोमि सर्वथा खण्डयाम्येवेति भावः ॥ ३१ ॥ ३२ ॥

रा० टी०—ननु किमर्थमित्यत आह—अमित्रेति । चतुष्टयं बाह्वादि। अर्थं पृथक्—न चेति। यः शत्रुः मम मतः मज्ज्ञानविषयीभूतः स्यात्तं कं साधारणं वज्रिणमिन्द्रं वा प्रगृहीतेन उत्थापितेन विद्युच्चलितवर्चसा विद्युच्चलितमिव चलितं वर्चस्तेजो यस्य तेन असिना न कल्पये छिनद्मि इत्यहं न कामये इच्छामि। सार्धश्लोक एकान्वयी ॥ ३२ ॥ ३३ ॥

गो० टी०—न चाहमित्यादिसार्धश्लोकः। यः मम अत्यर्थं शत्रुः शातयिता मतः स्यात् परीक्षकैरिति शेषः ! तमहं न कामये तस्य स्थितिं न सह इत्यर्थः किंत्वसिना वज्रिणमपि शत्रुं न कल्पये न स्थापयामि हन्मीत्यर्थः । तीक्ष्णधारेण तीक्ष्णाग्रेण विद्युच्चलितवर्चसा विद्युदिव चलितं निर्गतं वर्चः स्फुलिङ्गरूपं यस्य तेन ॥ ३१ ॥

३३ ] ति० टी०—खड्गनिष्पेषनिष्पिष्टैः खड्गकृताघातेन खण्डितैर्मही गहना निरन्तरत्वात् । अत एव दुश्चरा हस्त्यादीनां हस्तादिभिः क्रमात्संबन्धः । भवितेति लुट् ॥ ३३ ॥

रा० टी०—शत्रूनवश्यं हनिष्यामीति स्पष्टं बोधयन्नाह—खड्गेति । मे खड्गस्य यो निष्पेषः छेदनानुकूलो व्यापारः तेन निष्पिष्टैः छिन्नैः हस्त्यादिहस्तादिभिः गहना व्याप्ता अत एव दुश्चरा संचारायोग्या मही भविता ॥ ३४ ॥

गो० टी०—खड्गेति । खड्गकृतमर्दनेन चूर्णीकृतैर्गहना काननमिव निरन्तरा अत एव दुश्चरा संचारायोग्या च भविता भविष्यति ॥ ३२ ॥

३४ ] ति० टी०—हता विच्छिन्ना अग्नय इव दीप्यमाना रक्तधारया अत एव सविद्युतो मेघा इव ॥ ३४ ॥

रा० टी०—तदेव द्रढयन् भङ्ग्यन्तरेणाह—खड्गेति । अग्नय इव दीप्यमानाः रुधिरसहितदेहा इत्यर्थः द्विपः शत्रवः तत्र दृष्टान्तः सविद्युतः विद्युत्सहिताः ॥ ३५ ॥

गो० टी०—खड्गधारेति । मे खड्गधारया खड्गकोट्या हताः अत एव सविस्फुलिङ्गत्वाद्दीप्यमानाः ज्वलिताः अद्रय इव

१ दमनार्थं मे इति गो. पाठः । २ कमिति रा. पाठः । ३ नरेति गो. पाठः । ४ अद्रय इति गो. पाठः । ५ द्विपा इति गो. पाठः ।

बद्धगोधाङ्गुलित्राणे प्रगृहीतशरासने । कथं पुरुषमानी स्यात्पुरुषाणां मयि स्थिते ॥ ३५ ॥
बहुभिश्चैकमत्यस्यन्नेकेन च बहूञ्जनान् । विनियोक्ष्याम्यहं बाणान्नृवाजिगजमर्मसु ॥ ३६ ॥
अद्य मेऽस्त्रप्रभावस्य प्रभावः प्रभविष्यति । राज्ञश्चाप्रभुतां कर्तुं प्रभुत्वं च तव प्रभो ॥ ३७ ॥
अद्य चन्दनसारस्य केयूरामोक्षणस्य च । वसूनां च विमोक्षस्य सुहृदां पालनस्य च ॥ ३८ ॥
अनुरूपाविमौ बाहू राम कर्म करिष्यतः । अभिषेचनविघ्नस्य कर्तॄणां ते निवारणे ॥ ३९ ॥
ब्रवीहि कोऽद्यैव मया वियुज्यतां तवासुहृत्प्राणयशःसुहृज्जनैः ।
तथा तवेयं वसुधा वशा भवेत्तथैव मां शाधि तवास्मि किंकरः ॥ ॥ ४० ॥

---

सविद्युतो मेघा इव च स्थिताः द्विपाः शत्रुगणाः भूमौ पतिष्यन्ति ॥ ३३ ॥

३५ ] ति० टी०—उक्तधर्मविशिष्टे मयि स्थिते सति पुरुषाणां मध्ये कश्चिदपि कथं पुरुषमानी आत्मानं पुरुषं मन्यमानः शूराभिमानी कथं स्यादित्यर्थः ॥ ३५ ॥

रा० टी०—बद्धेति । बद्धं गोधायै ज्याघातनिवारणाय अङ्गुलित्राणं येन तस्मिन् बद्धकवचे इत्यर्थः । मयि स्थिते सति पुरुषाणां मध्ये पुरुषमानी अहं पुरुषः परमयोद्धेत्यर्थः इति मानी अभिमानी कथं स्यान्न स्यादित्यर्थः । तेन परमपुरुषानुगृहीतस्य मे पराभवो नैव भविष्यतीति स्वनिश्चयः सूचितः 'गोधा ज्याघातवारणे' इत्यमरः ॥ ३६ ॥

गो० टी०—बद्धेति । गोधा ज्याघातवारणम् 'गोधातलं ज्याघातवारणे' इत्यमरः । गोधारूपाङ्गुलिरक्षककवचवति मयि स्थिते सति पुरुषाणां मध्ये कश्चित्कथं पुरुषमानी शूरमानी स्यात् सर्वे स्त्रीप्राया भविष्यन्तीत्यर्थः ॥ १४ ॥

३६ ] ति० टी०—अत्यस्यन्पातयन् बहुभिर्बाणैः एकेन बाणेन विनियोक्ष्यामि त्यक्ष्यामि ॥ ३६ ॥

रा० टी०—नन्वेकस्त्वं बहून् रिपून्कथं हनिष्यसीत्यत आह—बहुभिरिति । बहुभिः बाणैः एकं मुख्यं शूरमित्यर्थं । अत्यस्यन्प्रक्षिपन्नेकेन बाणेन बहून् असंख्यानित्यर्थः । अत्यस्यन् नादिमर्मसु बाणान्विनियोक्ष्यामि ॥ ३७ ॥

गो० टी०—बहुभिरिति । अहं बहुभिर्बाणैरेकं शूरमत्यस्यन् प्रकर्षेण क्षिपन् 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरः । एकेन बाणेन बहून् क्षुद्रान् अत्यस्यन् अनेन प्रकारेण नृवाजिगजानां मर्मसु मर्मस्थलेषु बाणान्विनियोक्ष्यामि विसर्जयिष्यामि अतः कथमेको बहून् हनिष्यतीति न चिन्तनीयमिति भावः ॥ २९ ॥

३७ ] ति० टी०—अस्त्रप्रभावस्यास्त्रसामर्थ्यस्य प्रभावः प्रतापः राज्ञो दशरथस्य प्रभविष्यत्युज्जृम्भितो भविष्यति ॥ ३७ ॥

रा० टी०—अद्येति । अद्य परकृताभिषेकविघ्नकाले राज्ञः राक्षसराजादेः अप्रभुतामसामर्थ्यं कर्तुं प्रकटयितुं तव प्रभुत्वं समाधिकरहितसामर्थ्यं च प्रकटयितुमस्त्रप्रभावस्य मदस्त्रसामर्थ्यस्य प्रभावः प्रतापः प्रभविष्यति विरुद्धराजनिराकरणेन प्रकटीभविष्यति एतेन लक्ष्मणस्य रामातिप्रेयत्वं व्यक्तम् राज्ञ इत्यत्र जात्यभिप्रायेणैकवचनम् अत एव अभिषेचनविघ्नस्य कर्तॄणामिति वक्ष्यमाणस्य न वैरूप्यम् ॥ ३८ ॥

गो० टी०—अद्येति । अस्त्रप्रभावस्य अस्त्रमाहात्म्यस्य प्रभावः प्रतापः 'प्रतापमाहात्म्ययोः प्रभावः स्यात्' इति वैजयन्ती ॥ ३६ ॥

३८–३९ ] ति०टी०—चन्दनसारस्य चन्दनसारानुलेपनस्य केयूरामोक्षणस्याङ्गदधारणस्य, वसूनां मोक्षणस्य दानस्य, सुहृज्जनपालनस्यानुरूपावर्हौ मे बाहू इमौ पीनप्रलम्बौ तेऽभिषेचनविघ्नस्य कर्तॄणां निवारणे कर्म स्वानुरूपं कर्म करिष्यतः ॥ ३८ ॥ ३९ ॥

रा० टी०—अद्येति । हे राम ! अभिषेचनविघ्नस्य कर्तॄणां निवारणे कर्म व्यापारं करिष्यतो मे बाहू चन्दनसारस्य उत्तमचन्दनानुलेपनस्य केयूरामोक्षणस्य केयूरस्य अङ्गदस्य-मोक्षणस्य धारणस्य वसूनां द्रव्याणां विमोक्षस्य दानस्य सुहृदां पालनस्य च अनुरूपौ योग्यौ भविष्यत इति शेषः । एतेन रामसेवाकरणमन्तरा सर्वं कर्म निरर्थकमिति सूचितम् । श्लोकद्वयमेकान्वयि । 'केयूरमङ्गदम्' इत्यमरः ॥ ३९ ॥ ४० ॥

गो० टी०—अद्येत्यादिश्लोकद्वयमेकं वाक्यम् । चन्दनसारस्य चन्दनपङ्कस्य केयूरामोक्षणस्य अङ्गदधारणस्य 'केयूरमङ्गदम्' इत्यमरः । वसूनां धनानां विमोक्षस्य त्यागस्य सुहृदां पालनस्य शत्रुभ्यो रक्षणस्य च अनुरूपौ राजपुत्रत्वेन योग्यावपि इमौ बाहू हे राम ! तत्सर्वं विहाय ते अभिषेचनविघ्नस्य कर्तॄणां निवारणे विषये कर्म करिष्यतः ॥ ३७ ॥ ३८ ॥

४० ] ति० टी०—ब्रवीहीत्यार्षं इट् । वियुज्यतां वियोज्यताम् ॥ ४० ॥

रा० टी०—ब्रवीहीति । तव असुहृत् अरिः कः इति त्वं ब्रवीहि ब्रूहि ईडागमस्त्वार्षः । ननु किमर्थं पृच्छसीत्यत आह—अद्यैव प्राणयशःसुहृज्जनैः मया वियुज्यताम् स इति शेषः । यथा येन प्रकारेण वसुधा तव वशा भवेत् तथा मां शाधि शिक्षय ॥ ४१ ॥

गो० टी०—त्वदाज्ञास्त्वेकावश्यं भाविनीत्याह—ब्रवीहीति । ब्रवीहि ब्रूहि वियुज्यतां मया वियोज्यताम् ॥ १९ ॥

विसृज्य बाष्पं परिसान्त्व्य चासकृत्स लक्ष्मणं राघववंशवर्धनः ।
उवाच पित्रोर्वचने व्यवस्थितं निबोध मामेष हि सौम्य सत्पथः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

## चतुर्विंशः सर्गः ।

रामं पित्राज्ञानुवर्तने दृढमनस्कं दृष्ट्वा कौसल्या मामपि साकं नयेत्यवादीत् । भर्तृशुश्रूषणमेव सभर्तृकायाः कर्तव्यमिति कथयतो रामस्य वनगमनं सा यथाकथंचिदनुमेने ।

तं समीक्ष्य व्यवसितं पितुर्निर्देशपालने । कौसल्या बाष्पसंरुद्धा वचो धर्मिष्ठमब्रवीत् ॥ १ ॥
अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः । मयि जातो दशरथात्कथमुञ्छेन वर्तयेत् ॥ २ ॥
यस्य भृत्याश्च दासाश्च मृष्टान्यन्नानि भुञ्जते । कथं स भोक्ष्यते रामो वने मूलफलान्ययम् ॥ ३ ॥
क एतच्छ्रद्दधेच्छ्रुत्वा कस्य वा न भवेद्भयम् । गुणवान्दयितो राज्ञः काकुत्स्थो यद्विवास्यते ॥ ४ ॥

४१ ] ति० टी०—एवंवादिनं लक्ष्मणं रामो नायमेतस्य काल इत्याह—विमृज्येति । बाष्पं लक्ष्मणनयनजं विमृज्य परिमृज्य । 'विसृज्य' इति पाठेऽन्तर्भावितण्यर्थतया विसर्जयित्वा । चक्षुषी परिमृज्येति यावदिति कतकः । पित्रोर्वचने व्यवस्थितं प्रतिष्ठितं मां निबोध । हे सौम्य ! एष हि सत्पथः 'जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥' इति न्यायादिति भावः । निबोधेत्यस्य नितरामतिशयेनावतरणकालिकवृत्तान्तस्मरणपूर्वकं जानीहि । एष हि एष एव सत्पथः सतां रक्षकः पन्था इत्यप्यर्थोऽत्र गूढः ॥४१॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

रा० टी०—लक्ष्मणवचनश्रवणानन्तरकालिकं रामवृत्तमाह—विमृज्येति । बाष्पमश्रूणि विमृज्य लक्ष्मणनेत्राद्दूरीकृत्य लक्ष्मणमसकृद्बहुवारं परिसान्त्व्य राघववंशवर्धनः स रामः लक्ष्मणमुवाच । तद्वचनमेवाह—पित्रोःवचने व्यवस्थितमेव मां निबोध एतेन भीतिनिवृत्तिर्बोधिता । तत्र हेतुः हे सौम्य ! एष पितृवचनपालनं सत्पथः समीचीनो मार्गः 'जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इति स्मृतिः ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रयोविंशः सर्गः ॥ २३ ॥

गो० टी०—एवं विस्तरेण पूर्वपक्षमुपन्यस्तवन्तं लक्ष्मणं मतिपूर्वं विस्तृतं सिद्धान्तं संग्रहेणाह—विमृज्येति । बाष्पं रामासंमतिजं राघववंशवर्धनः रघोः संबन्धी राघवः राघवश्चासौ वंशश्चेति विशेषणसमासः सत्पथे पित्र्ये वचने व्यवस्थितं निश्चलं मां निबोध जानीहि सर्वथाहं पितृवचनं न त्यजामीत्यर्थः । 'जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इतिस्मरणादिति भावः॥४०॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रयोविंशः सर्गः ॥ २३ ॥

१ ] ति० टी०—व्यवसितं निश्चितमतिम् निर्देशं आज्ञा बाष्पसंरुद्धा बाष्पसंरुद्धवाक् । धर्मिष्ठं रामम् ॥ १ ॥

रा० टी०—कौसल्यावृत्तान्तमाह—तमिति । निर्देशपालनं आज्ञापितकरणे व्यवसितं कृतनिश्चयं तं रामं समीक्ष्य ज्ञात्वा कौशल्या वचः अब्रवीत् ॥ १ ॥

गो० टी०—अथ धर्मस्य रामनिश्चयस्यानुमोदनं कौसल्या करोति—तं समीक्ष्येत्यादिना । तं रामं समीक्ष्य निश्चित्यावहितं सावधानं निर्देशो नियोगः ॥ १ ॥

२ ] ति० टी०—उञ्छः क्षेत्रपतितकणशो ग्रहणम् । वर्तयेजीवेत् भवानिति शेषः ॥ २ ॥

रा० टी०—तद्वचनमेवाह—अदृष्टेति । मयि जातः प्रकटीभूतो रामो भवान् उञ्छेन क्षेत्रादिपतितकणिशग्रहणेन कथं वर्तयेत् वर्तेत ॥ २ ॥

गो० टी०—अदृष्टदुःख इति । उञ्छो नाम दैवात्प्रकीर्णानां व्रीह्यादिधान्यानामङ्गुल्या एकैकशो ग्रहणं कणिशग्रहणं तु शिलमेव इदं फलमूलाद्याहरणं लक्षयति वर्तयेत् जीवेत् ॥ २ ॥

३ ] ति० टी०—भृत्या भर्तव्याः । अयमुपस्कृतमांसादिभोजनशीलः ॥ ३ ॥

रा० टी०—यस्येति । यस्य भृत्यादयः मृष्टानि स्वच्छानि भुञ्जते ॥ ३ ॥

गो० टी०—यस्येति । भृत्याः भटाः दासाः दास्यकराः मृष्टानि श्लाघ्यानि ॥ ३ ॥

४ ] ति० टी०—विवास्यत इति यदेतच्छ्रुत्वा कः श्रद्दधेत्सत्यं मन्वीत सत्यमिति वा ज्ञात्वा कस्य स्वपित्रादिभ्यो भयं न भवेत् ॥ ४ ॥

रा० टी०—क इति । काकुत्स्थो रामः यद्विवास्यते तच्छ्रुत्वा कः श्रद्दधेत्समीचीनं मन्येत भयं रामगमने कथमत्रस्थानां जीवनमिति कस्यायोध्याजनस्य भीतिर्न भवेत् ॥ ४ ॥

गो० टी०—क इति । विवास्यत इति यत् एतत् कः श्रद्-

१ पित्र्ये इति गो. पाठः । २ लवहितमिति गो. पाठः । ३ निर्देश इति गो. पाठः । ४ राजेति गो. राज्ञेति रा. पाठः । ५ विसर्ज्येति युक्तं भाति ।

नूनं तु बलवांल्लोके कृतान्तः सर्वमादिशन् । लोके रामाभिरामस्त्वं वनं यत्र गमिष्यसि ॥ ५ ॥
अयं तु मामात्मभवस्तवादर्शनमारुतः । विलापदुःखसमिधो रुदिताश्रुहुताहुतिः ॥ ६ ॥
चिन्ताबाष्पमहाधूमस्तवागमनचिन्तजः[1] । कर्शयित्वाधिकं पुत्र निःश्वासायाससंभवः ॥ ७ ॥
त्वया विहीनामिह मां शोकाग्निरतुलो महान् । प्रधक्ष्यति यथा कैक्ष्यं[2] चित्रभानुर्हिमात्यये ॥ ८ ॥
कथं हि धेनुः स्वं वत्सं गच्छन्तमनुगच्छति[3] । अहं त्वानुगमिष्यामि यत्र वत्स गमिष्यसि ॥ ९ ॥
यथा[4] निगदितं मात्रा तद्वाक्यं पुरुषर्षभः । श्रुत्वा रामोऽब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १० ॥
कैकेय्या वञ्चितो राजा मयि चारण्यमाश्रिते । भवत्या च परित्यक्तो न नूनं वर्तयिष्यति ॥ ११ ॥

धद्गुणवत्पुत्रविवासनस्य असंभावितत्वात् अश्रद्धेयत्वे वा कस्य भयं न भवेत् ममाप्येवं विवासनं भविष्यतीति ॥ ४ ॥

५ ] ति० टी०—सर्वमादिशन्सुखदुःखेन योजयन् । कृतान्तो दैवं बलवानिति नूनमहं मन्ये । यत्र यस्माद्धे राम ! अभिरामस्त्वं लोके कर्मलोके स्थितो वनं गमिष्यसि ॥ ५ ॥

रा० टी०—नूनमिति । हे राम ! अभिरामस्त्वं यत्र यदर्थं वनं गमिष्यसि स कृतान्तः धर्मध्वंसकर्ता रावणः सर्वमादिशन्स्वाज्ञाविषयीभूतं कुर्वन् सन् लोके इह पृथिव्यां बलवान् इति अहं लोके जाने एतेन सावधानतया वर्तितव्यमिति सूचितम् इह पृथिव्यामित्यनेन तत्राग्रे वस्तुतो न बलवानिति सूचितम् ॥ ५ ॥

गो० टी०—नूनमिति । सर्वं सुखदुःखादिकमादिशन् प्रदिशन् कृतान्तः दैवम् यत्र दैवे निमित्ते ॥ ५ ॥

६–८ ] ति० टी०—आत्मभव आत्मजः स्वमनःसंभूतः तवादर्शनमेव वर्धकत्वान्मारुतो यस्य सः विलापदुःखैः समिधः समिन्धनं यस्य सः घञर्थे कः रुदिताश्रूण्येव हुता आहुतयो यस्मिन्सः चिन्ताहेतुकबाष्पमेव महाधूमो यस्य स तवागमनचिन्तजः चिन्तज इति बाहुलकाद्ध्रस्वः तव या गमनचिन्ता तया जनितः । 'अदर्शनचिन्तजः' इति पाठेऽप्यदर्शनजातचिन्ताजनित इत्यर्थः । परे त्वदर्शनस्य मारुतत्वेन निरूपणात्स चिन्त्य इत्याहुः । निःश्वासरूपायासेन संधुक्षणात्संभवो वृद्धिर्यस्य सः । त्वया विहीनां मामधिकं कर्शयित्वा कृशां कृत्वातुलो युक्तगुणः शोकाग्निर्मां धक्ष्यति । हिमात्यये ग्रीष्मे चित्रभानुर्वह्निः सूर्यो वा ॥ ६–८ ॥

रा० टी०—इदानीं त्वद्वियोगजनितं दुःखं दुःसहमिति बोधयन्ती आह—अयमित्यादिभिः । आत्मभवः मनसि प्रादुर्भूतः अदर्शनं दर्शनाभावः मारुतो वायुर्यस्य सः विलापदुःखं समिधः इन्धनं यस्य सः रुदिताश्रुहुताहुतिः रुदिताश्रूणि रोदनजन्यनेत्रजलानि हुता प्रक्षिप्ता आहुतिर्यस्य सः चिन्ताबाष्पः चिन्तनोष्मा महाधूमो यस्य सः आगमनचिन्तजः अतिदुःखसंपादकदूरदेशगमनोत्तरं कथमयमागमिष्यतीति चिन्तनजनितः निःश्वासायासेन संभवो वृद्धिर्यस्य अत एव अतुल इयत्तां कर्तुमशक्यः अत एव महान् शोकाग्निः त्वया विहीनां मां मां राज्यलक्ष्मीं च अधिकं यथा स्यात्तथा कर्शयित्वा क्लेशतां प्रापय्य प्रधक्ष्यति अत एव मामित्यनयोर्न पौनरुक्त्यं हिमात्यये हिमध्वंससमये चित्रभानुर्वह्निः सूर्यो वा कक्षं यथा चिन्तज इति बाहुलकाद्ध्रस्व इति भट्टाः 'अदर्शनचिन्तजः' इति पाठेऽपि अदर्शनजातचिन्ताजनित इत्यर्थः । परे त्वदर्शनस्य मारुतत्वेन निरूपणात्स चिन्त्य इत्याहुरिति भट्टाः वस्तुतस्त्वेवं पाठे आदर्शनमिति छेदः आदर्शनं नित्यदर्शनं कदा स्यादिति चिन्ताजनित इत्यर्थः । श्लोकत्रयमेकान्वयि ॥ ६–८ ॥

गो० टी०—अयं त्वित्यादिश्लोकत्रयमेकं वाक्यम् । अत्र विश्लेषजनितशोकस्याग्निसमाधिरुच्यते आत्मभवः देहजः अदर्शनमारुतः शोकाग्नेरदर्शनजत्वात् तस्य मारुतत्वनिरूपणं विलापदुःखं प्रलापजं दुःखं तदेव समिधा यस्य तस्य तद्वर्धकत्वात् आपं चैव हलन्तानामिति समिच्छब्दाट्टाप् । रुदिताश्रूणि रोदनजाश्रूणि तान्येव हुता क्षिप्ता आहुतिर्यस्य चिन्ताबाष्पं चिन्तोष्मा स एव महाधूमो, यस्य तवादर्शनेन हेतुना चित्तज इति हेतुमात्रोक्तिः । 'आगमनचित्तजः' इति पाठान्तरं निःश्वास एवायासः पुरुषप्रयत्नः समिदादिजन्याग्नेः पुरुषप्रयत्नजत्वात्तथा निरूपणम् त्वया जलस्थानीयेन विहीनां मां शोक एवाग्निः शोकाग्निः वैतानिकाग्निः कर्शयित्वा शुष्कीकृत्य हिमात्यये शिशिरतौ कक्षं गुल्मं चित्रभानुः वन्योऽग्निरिव मां प्रधक्ष्यति भस्मीकरिष्यति ॥ ६–८ ॥

९ ] ति० टी०—कथमिति यथेत्यर्थः क्वचित्तथैव पाठः ॥ ९ ॥

रा० टी०—शोकाभावे उपायं वदन्ती आह—कथमिति । कथंशब्दो यथार्थकः क्वचित्तथैव पाठ इति भट्टाः । त्वा त्वामनुगमिष्यामि 'नानुगच्छन्ति' इति पाठे तु कथमो न यथार्थत्वम् । तत्रोत्तरार्धादौ तस्मादिति पूरणीयम् ॥ ९ ॥

गो० टी०—कथं हीति । उत्तरार्धादौ तथेत्युपस्कार्यम् ॥ ९ ॥

१० ] ति० टी०—यथा निगदितं येन प्रकारेण निगदितं तद्वाक्यं श्रुत्वा आत्मानुगमनं श्रुत्वेति यावत् ॥ १० ॥

रा० टी०—मातृवचनश्रवणानन्तरकालिकवृत्तमाह—यथेति । मात्रा निगदितं कथितं यथा यथावच्छ्रुत्वा भृशदुःखितां निश्चितवियोगजनितदुःखाक्रान्तां मातरमब्रवीत् ॥ १० ॥

गो० टी०—तथेति । तथा निगदितमिति स्ववाचोऽप्यविषयत्वं दर्शयति मुनिः ॥ १० ॥

११ ] ति० टी०—वञ्चितो वञ्चनया मद्वियोजनादुःखं प्रापितो न वर्तयिष्यति न जीविष्यति ॥ ११ ॥

१ चित्तज इति गो. पाठः । २ कक्षमिति गो. रा. पाठः । ३ नानुगच्छतीति गो. पाठः । ४ तथेति गो. पाठः ।

भर्तुः पुनः परित्यागो नृशंसः केवलं स्त्रियाः । स भवत्या न कर्तव्यो मनसापि विगर्हितः ॥ १२ ॥
यावज्जीवति काकुत्स्थः पिता मे जगतीपतिः । शुश्रूषा क्रियतां तावत्स हि धर्मः सनातनः ॥ १३ ॥
एवमुक्ता तु रामेण कौसल्या शुभदर्शना । तथेत्युवाच सुप्रीता राममक्लि[1]ष्टकारिणम् ॥ १४ ॥
एवमुक्तस्तु वचनं रामो धर्मभृतां वरः । भूयस्तामब्रवीद्वाक्यं मातरं भृशदुःखिताम् ॥ १५ ॥
मया चैव भवत्या च कर्तव्यं वचनं पितुः । राजा भर्ता गुरुः श्रेष्ठः सर्वेषामीश्वरः प्रभुः ॥ १६ ॥
इमानि तु महारण्ये विहृत्य नव पञ्च च । वर्षाणि परमप्री[3]त्या स्थास्यामि वचने तव ॥ १७ ॥
एवमुक्ता [2]प्रियं पुत्रं बाष्पपूर्णानना तदा । उवाच परमार्ता तु कौसल्या [4]सुतवत्सला ॥ १८ ॥
आसां राम सपत्नीनां वस्तुं मध्ये न मे क्षमम् । नय मामपि काकुत्स्थ वनं वन्यां मृगीमिव ॥ १९ ॥

---

रा० टी०–तद्वचनमेवाह–कैकेय्येति । अवञ्चितः वञ्चनकर्तृत्वाभाववान् कैकेय्या सहितो राजा मयि अरण्यमाश्रिते गते सति भवत्या परित्यक्तः मद्वियोगहेतुत्वबुद्ध्या प्रीतिविषयत्वाभाववान् यदि स्यादिति शेषः । तदा न वर्तयिष्यति प्रजापालनं न करिष्यतीत्यर्थः । एतेन प्रीतिरेव कर्तव्येति सूचितम् ॥ ११ ॥

गो० टी०–कैकेय्येति । न वर्तयिष्यति न जीविष्यतीत्यर्थः ॥ ११ ॥

१२ ] ति० टी०–केवलं नृशंसः क्रौर्यमेव न तु तेनेहामुत्र सुखमित्यर्थः । मनसापि न कर्तव्यो न चिन्तनीयः यतो विगर्हितो महापापहेतुः तेनानिन्दितः ॥ १२ ॥

रा० टी०–तत्र हेतुं वदन्नाह–भर्तुरिति । भर्तुः परित्यागः केवलं नृशंसः क्रूरत्वैव अतो विगर्हितो निन्दितः स त्यागो भवत्या मनसापि न कर्तव्यः नृशंसशब्दो भावप्रधानः ॥ १२ ॥

गो० टी०–भर्तुरिति । नृशंसः नृशंसत्वम् सिद्ध्यतीति शेषः मनसापि न कर्तव्यः न चिन्तनीय इत्यर्थः ॥ १२ ॥

१३-१४ ] ति० टी०–भतः–यावदिति । ॥ १३॥१४ ॥

रा० टी०–यावदिति । ककुत्स्थवंशोद्भवः पिता यावज्जीवति इह प्रजाः पालयति तावच्छुश्रूषा क्रियताम् एतेन तेन सह त्वया न गन्तव्यमिति ध्वनितं तेन पितुर्लोकान्तरगमनावश्यकत्वं बोधितं तेन पुत्रसेवार्थं कौसल्या इहैव तिष्ठतु इति राजेच्छा सूचिता तेन रामस्य पित्रभिप्रेतसाधकत्वं ध्वनितम् ॥ १३ ॥

गो०टी०–यावदिति।सः शुश्रूषाकर्मापेक्षया पुंलिङ्गत्वम्१३

रा० टी०–एवमिति । अक्लिष्टकारिणं क्लेशकारिप्रातियोगिकभेदविशिष्टं रामं तथा इत्युवाच ॥ १४ ॥

गो० टी०–एवमिति । शुभदर्शना धर्म्यबुद्धिरित्यर्थः ॥१४॥

१५ ] ति० टी०–एवं वचनमुक्तो भर्तृशुश्रूषाङ्गीकारवचनमुक्तः भावितः ॥ १५ ॥

रा० टी०–मातृसंतोषपरीक्षणहेतुकं रामवचनं वर्णयन्नाह–एवमुक्त इति । भृशदुःखितां निश्चितवियोगस्मृतिजनितदुःखाक्रान्तां भूयः अब्रवीत् ॥ १५ ॥

गो० टी०–दार्ढ्यार्थं पुनराहेत्याह–एवमित्यादिना ॥१५॥

१६ ] ति० टी०–उभयोस्तद्वचनावश्यकर्तव्यत्वे हेतुर्भर्ता गुरुरिति च यथायोगम् ॥ १६ ॥

रा० टी०–तद्वचनमेवाह–मयेत्यादिभिः । पितुः वचनं मया भवत्या च कर्तव्यमेव तत्र हेतुः राजा भूपतिः भर्ता सविधि भवत्याः पाणिग्रहीता गुरुः तत्त्वोपदेष्टा श्रेष्ठो महात्मा प्रभुः सकलसामर्थ्यविशिष्टः सर्वेषामीश्वरः पूज्य इत्यर्थः ॥१६॥

गो० टी०–मयेति । उत्तरार्धादौ स इत्युपस्कार्यम् प्राथमिकपितृवचनपरिपालनानन्तरम् ॥ १६ ॥

१७ ] ति० टी०–पितृवाक्यकरणानन्तरं त्वच्छुश्रूषापि कार्येत्याह–इमानीति । विहृत्येत्यनेन वनवासस्य मृगयावज्जीलात्वं दर्शितम् । वचने स्थास्यामि वचनमनुष्ठास्यामि ॥ १७ ॥

रा० टी०–इमानीति । इमानि पित्राज्ञप्तानि नवपञ्चवर्षाणि विहृत्य विहारं कृत्वा तव वचने आज्ञापिते स्थास्यामि तत्करिष्यामीत्यर्थः । विहृत्येत्यनेन वनगमनस्य स्वप्रीतिविषयीभूतत्वं बोधितं तेन भवत्या विषादो न कर्तव्य इति ध्वनितम् ॥ १७ ॥

गो० टी०–तव वचनं करिष्यामीत्याह–इमानीति । इमानीत्यल्पत्वज्ञापनाय विहृत्येत्यनेन क्लेशराहित्यमुक्तम् ॥१७-१८॥

१८ ] ति० टी०–एवमुक्ता पुत्रेणेति शेषः ॥ १८ ॥

रा० टी०–एवमिति । एवमनेन प्रकारेणोक्ता पुत्रेणेति शेषः सुतवत्सला सुतविषयकातिवात्सल्यविशिष्टा अत एव परमार्ता अत एव बाष्पपूर्णानना कौशल्या उवाच एतेन वियोगदुःखस्य दुर्निवारत्वं सूचितम् ॥ १८ ॥

१९ ] ति० टी०–अङ्गीकृतभर्तृसेवापि सपत्नीदुःखस्मरणात्पुना रामानुगमनमभिलषति–आसामित्यादि । वन्यां वने भवाम् १९

रा० टी०–तद्वचनमेवाह–आसामिति । आसां त्वद्वियोगहेतुभूतानां सपत्नीनां मध्ये वस्तुं क्षममुचितं न अतः हे काकुत्स्थ ! पितुः अपेक्षया संतोषहेतुना यदि ते गमने बुद्धिनिश्चयः तर्हि मामपि वनं नय प्रापय तत्र दृष्टान्तः वन्यां मृगीमिव एतेन रामवियोगजन्यं दुःखं सर्वासां भवतीति सूचितं तेन तद्दुःखासहिष्णुत्वं व्यक्तम् । सार्धश्लोक एकान्वयी ॥ १९ ॥

---

१ क्लिष्टेति गो. पाठः । २ प्रिय इति रा. पाठः । ३ प्रीत इति गो. पाठः । ४ पुत्रेति गो. पाठः ।

यदि ते गमने बुद्धिः कृता पितुरपेक्षया । तां तथा रुदतीं रामोऽरुदन्वचनमब्रवीत् ॥ २० ॥
जीवन्त्या हि स्त्रिया भर्ता दैवतं प्रभुरेव च । भवत्या मम चैवाद्य राजा प्रभवति प्रभुः ॥ २१ ॥
न ह्यनाथा वयं राज्ञा लोकनाथेन धीमता । भरतश्चापि धर्मात्मा सर्वभूतप्रियंवदः ॥ २२ ॥
भवतीमनुवर्तेत स हि धर्मरतः सदा । यथा मयि तु निष्क्रान्ते पुत्रशोकेन पार्थिवः ॥ २३ ॥
श्रमं नावाप्नुयात्किंचिदप्रमत्ता तथा कुरु । दारुणश्चाप्ययं शोको यथैनं न विनाशयेत् ॥ २४ ॥
राज्ञो वृद्धस्य सततं हितं चर समाहिता । व्रतोपवासनिरता या नारी परमोत्तमा ॥ २५ ॥
भर्तारं नानुवर्तेत सा च पापगतिर्भवेत् । भर्तुः शुश्रूषया नारी लभते स्वर्गमुत्तमम् ॥ २६ ॥
अपि या निर्नमस्कारा निवृत्ता देवपूजनात् । शुश्रूषामेव कुर्वीत भर्तुः प्रियहिते रता ॥ २७ ॥

गो० टी०—एवमनुमतरामवनगमनस्वनगरवर्तनापि पुनः सपत्नीस्मरणादनुगमनमर्थयते—आस्मामिति । वन्यां मृगीमिव यथा वन्या मृगा वने संतुष्टा वर्तन्ते तथाहमपि वर्ते न भवन्तं क्लेशयिष्यामीति भावः । पितुरपेक्षया पितुरिच्छया ॥ १९ ॥

२० ] ति० टी०—यदि ते इत्यादर्धं पूर्वान्वयि । तां तथा रुदतीं दृष्ट्वापि स्वयमरुदन्वचोऽब्रवीत् । रोदने कातर्यप्रकटनेन मातुः पुनरप्यनुगमनप्रत्याशाप्रसङ्गात् ॥ २० ॥

रा० टी०—तामिति । अरुदन् रोदननिवृत्तिं कुर्वन् मन्नित्यर्थः रामः अब्रवीत् । अर्धं पृथक् ॥ २० ॥

गो० टी०—तामिति । रुदन् व्यसनेषु मनुष्याणां भृशं भवति दुःखित इत्युक्तगुणविशिष्टोऽपि रामो मातृव्यसनं दृष्ट्वा पितृवचनपरिपालनरूपधर्मविघ्नभयाद्धैर्येण स्थितवान् इदानीं वनगमनानुमतिं लब्ध्वा स्वस्नेहप्रदर्शनेन मातृव्यसनं निवर्तयितुं रुदितवानित्यत्रगम्यते ॥ २० ॥ २१ ॥

२१ ] ति० टी०—प्रभवति दण्डादौ समर्थो भवति ॥ २१॥

रा० टी०—तद्वचनमेवाह—जीवन्त्या इति । स्त्रियाः भर्तैव दैवतं देवता प्रभुः सामर्थ्यं च भावप्रधानो निर्देशः किंच प्रभुः सर्वार्थसंपादनसमर्थः अत एव जीवन्त्याः बहून् जीवयन्त्याः भवत्याः मम च राजैव प्रभुः नियोगे समर्थः एतेन राजनियोगाभाववत्यास्तव गमनमनुचितमिति बोधितम् ॥ २१ ॥

२२ ] ति० टी०—धीमतेति । सनाथा इति शेषः । अथ सपत्नीमध्यवासो दुष्कर इत्यत्र परिहारमाह—भरत इति॥२२॥

रा० टी०—ननु त्वां विना अहं कथं स्थास्यामीत्यत आह—नहीति । लोकनाथेन सकलजननियन्त्रा राज्ञा वयं भरतश्च अपिना भवत्यादयः अनाथाः न एतेन राजकर्तृकगमननियोगाभावाद्दुष्करापि स्थितिः कर्तव्यैवेति ध्वनितम् ॥ २२ ॥

गो० टी०—नहीति । राज्ञा सनाथा इति शेषः राज्ञा सनाथा वयं नह्यनाथा इत्यर्थः सपत्नीमध्यवासदोषं परिहरति—भरतश्चापीति ॥ २२ ॥ २३ ॥

२३–२४] ति० टी०—भवतीमिति। अतः कैकेयीकोपोऽकिंचित्कर इति भावः । यथा मयि निष्क्रान्ते श्रमं नाप्नुयात्तथा कुरु यथा चैनं राजानं शोको न विनाशयेत्तथा च कुरु॥ २३ ॥ २४॥

रा० टी०—त्वादृशः सेवको नास्तीत्यपि नाशङ्क्यमिति बोधयन्नाह—भवतीमिति । स भरतः अनुवर्तेत सेविष्यते इत्यर्थः । अर्धं पृथक्—यथेति। निष्क्रान्ते वनं गते सति श्रमं खेदं किंचिदल्पमपि अप्रमत्ता अनवधानतारहिता । अर्धद्वयमेकान्वयि ॥ २३ ॥

रा० टी०—दारुण इति । अयं मद्वियोगजनितः शोकः एनं पितरं न विनाशयेल्लोकान्तरगमनहेतुकादर्शनतां न प्रापयेत्तथा तेन प्रकारेण वृद्धस्य ज्ञानवयोभ्यामधिकस्य राज्ञः हितं प्रियं सततं चर कुरु ॥ २४ ॥

गो० टी—दारुण इति। हितं चरेत्यत्र तथेति शेषः ॥२४॥

२५–२६ ] ति० टी०—द्विजस्य गायत्रीजपवत्स्त्रिया भर्तृशुश्रूषैव परं नित्या नान्यत्किंचित्प्रत्युत तद्विरोध्यन्यदाचर्यमाणं प्रत्यवायजनकमपीत्याह—व्रतेत्यादि । नित्याकरणजप्रत्यवायानर्थं साङ्गाप्यनित्यधर्मकृतिः परिहर्तुं न शक्नोतीति भावः॥२५॥२६

रा० टी०—हिताचरणाभावे दोषमाह—व्रतेति । परमोत्तमा उत्कर्षगुणजात्यादिमत्त्वेन सर्वोत्कृष्टा अत एव व्रतोपवासनिरतापि या नारी भर्तारं नानुवर्तेत सेवेत सा पापगतिः पापानां पापविशिष्टानां गतिरिव गतिर्यस्याः सा भवेद्भर्तुः शुश्रूषया तु नारी साधारणस्त्री अपि उत्तमं स्वर्गं लभते । सार्धश्लोक एकान्वयी ॥ २५ ॥ २६ ॥

गो० टी०—पतिशुश्रूषणमेव पत्न्याः परमो धर्म इत्यन्वयव्यतिरेकाभ्यां श्लोकद्वयेन दर्शयति—व्रतेति । पापस्य गतिः फलमिव फलं यस्याः सा तथा निर्नमस्कारापि भर्तृभिन्नद्विजातिविषयनमस्काररहितापि ॥ २५ ॥ २६ ॥

२७ ] ति० टी०—नित्यानुष्ठाने सत्यनित्याकरणेऽपि न परलोकनाश इत्याह—अपि येति । निर्नमस्कारा भर्तृव्यतिरिक्तदेवादेर्नमस्काराद्युपचाररहिता । देवपूजनाद्विष्ण्वादिदेवपूजनात् । सापि स्वर्गं लभते इति प्राक्तनेनान्वयः । एतमेवार्थं नियमविधिद्वारेण द्रढयति—शुश्रूषामेवेति । तत्प्रीतिजनकं कर्मैवेत्यर्थः। तदेवाह—प्रियहिते रतेति।।हितपदेन पश्चादुक्तेनैतद्धनयति । आपाततोऽप्रियमपि हितं कुर्यादापाततः प्रियमप्यहितं त्यजेदिति॥२७॥

रा० टी०—स्त्रिया देवपूजनादिप्रवृत्तिरपि नावश्यकीति

१ स्त्रिति गो. पाठः ।

एष धर्मः स्त्रिया नित्यो वेदे लोके श्रुतः स्मृतः । अग्निकार्येषु च सदा सुमनोभिश्च देवताः ॥ २८ ॥
पूज्यास्ते मत्कृते देवि ब्राह्मणाश्चैव सत्कृताः । एवं कालं प्रतीक्षस्व ममागमनकाङ्क्षिणी ॥ २९ ॥
नियता नियताहारा भर्तृशुश्रूषणे रता । प्राप्स्यसे परमं कामं मयि पर्यागते सति ॥ ३० ॥
यदि धर्मभृतां श्रेष्ठो धारयिष्यति जीवितम् । एवमुक्ता तु रामेण बाष्पपर्याकुलेक्षणा ॥ ३१ ॥
कौसल्या पुत्रशोकार्ता रामं वचनमब्रवीत् । गमने सुकृतां बुद्धिं न ते शक्नोमि पुत्रक ॥ ३२ ॥
विनिवर्तयितुं वीर नूनं कालो दुरत्ययः । गच्छ पुत्र त्वमेकाग्रो भद्रं तेऽस्तु सदा विभो ॥ ३३ ॥
पुनस्त्वयि निवृत्ते तु भविष्यामि गतक्लमा । प्रत्यागते महाभागे कृतार्थे चरितव्रते ।
पितुरानृण्यतां प्राप्ते स्वपिष्ये परमं सुखम् ॥ ॥ ३४ ॥
कृतान्तस्य गतिः पुत्र दुर्विभाव्या सदा भुवि । यस्त्वां संचोदयति मे वच आविध्य राघव ॥ ३५ ॥

बोधयन्नाह–अपीति । देवपूजनान्निवृत्ता अज्ञानादिना देवाद्याराधनरहिता अत एव निर्नमस्कारा नमस्कारादिक्रियारहिता या नारी भर्तुः प्रियहिते रता सती शुश्रूषामेव कुर्वीत सापि उत्तमं स्वर्गं लभते इति पूर्वेणान्वयः ॥ २७ ॥

गो० टी०–उपसंहरति–शुश्रूषामिति । लोके पुरा दृष्टः पुरातनलोकाचारसिद्ध इत्यर्थः वेदे श्रुतः वेदावगत इत्यर्थः स्मृतः स्मृत्यवगतश्चेत्यर्थः ॥ २७ ॥

२८ ] ति० टी०–तत्र मानमाह–एष भर्तृसेवारूपो धर्मः स्त्रिया नित्य इति वेदे श्रुतः लोके स्मृतः । तर्हि किं कर्मान्तरं सर्वथा त्याज्यं नेत्याह–अग्नीत्यादि । भर्तृसंमतेष्वग्निकार्येषु च तेष्वेव । च एवकारार्थः ॥ २८ ॥

रा० टी०–तत्र हेतुं वदन्नाह–एष इति । एषः पतिशुश्रूषणरूपो धर्मः वेदे लोके च नित्यः श्रुतः अत एव स्मृतः समये स्मृतिविषयीभूतो जातः । अर्धं पृथक् कालक्षेपणार्थं स्वागमनहेतुत्वेन प्रकल्पितां क्रियामाह–अग्नीति । अग्निकार्येषु द्वादशसु सर्वेषु इत्यर्थः । सुमनोभिः पुष्पैः देवताः पूज्याः सुमता ब्राह्मणाश्च पूज्याः एतेन स्वपूजैव परोक्षेण निर्दिष्टा इति व्यक्तम् । अर्धद्वयमेकान्वयि ॥ २८ ॥

गो० टी०–तूष्णीमवस्थाने एनां दुःखमाक्रमिष्यतीति धिया दुःखविच्छेदनार्थं कालक्षेपसाधनं विधत्ते–अग्नीति । अग्निकार्येषु शान्तिकपौष्टिकहोमेषु सुमनोभिश्चेत्यत्र चकारेण चन्दनताम्बूलादीनि समुच्चीयन्ते अग्निकार्येषु क्रियमाणेषु सुमनःप्रभृतिभिर्देवता ब्राह्मणाश्च पूज्या इत्यर्थः ॥ २८ ॥

२९ ] ति० टी०–एवं भर्तृसेवातत्परतया । कालं ममागमनकालम् ॥ २९ ॥

रा० टी०–एवमिति । एवमुक्तपूजनादिना नियता यतचित्ता भर्तृशुश्रूषणे रता सती कालं प्रतीक्षस्व अत एव मयि पर्यागते सति धर्मभृतां श्रेष्ठः पिता यदि जीवितं सर्वेषां जीवनं धारयिष्यति पालयिष्यतीत्यर्थः । तर्हि परमं कामं स्वेप्सितं प्राप्स्यसे पक्षे विशेष्यमात्रे पर्यवसानं सूचितम् । अर्धचतुष्टयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०–एवमिति । नियता स्नानादिनियमयुक्ता नियताहारा मधुमांसादिवर्जनेन शुद्धाहारा ॥ २९ ॥

३० ] ति० टी०–काममैहिकविषयसुखम् ॥ ३० ॥

गो० टी०–प्राप्स्यस इति । भर्तृजीवनपुत्रागमनयोः सतोरेव हि परमकामप्राप्तिसंभव इति भावः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०–तस्य पुत्रमात्रासाध्यत्वादाह–यदीति । अनेन दशरथमरणस्य संनिहितत्वं सूचितम् ॥ ३१ ॥

रा०टी०–एवमिति । राममब्रवीत् । अर्धद्वयमेकान्वयि ॥ ३१ ॥

३२ ] ति० टी०–सुकृतां सुकृतनिश्चयाम् ॥ ३२ ॥

रा० टी०–तद्वचनमेवाह–गमन इति । हे पुत्रक हे वीर ! गमने सुकृतामतिनिविष्टां ते बुद्धिं निवर्तयितुं न शक्नोमि तत्र हेतुः कालः विजयसमयः दुरत्ययः ॥ ३२ ॥

गो० टी०–गमन इति । सुकृतां सुदृढामित्यर्थः ॥ ३२ ॥

३३ ] ति० टी०–काल इष्टवियोगादिजनकः ॥ ३३ ॥

रा० टी०–गच्छेति । हे पुत्र ! हे विभो ! एकाग्रो नियतचित्तः त्वं गच्छ ते तुभ्यं सदा भद्रं कल्याणमस्तु अहं तु त्वयि निवृत्ते वनादागते सति गतक्लमा त्यक्तग्लानिर्भविष्यामि भवितास्मि । अर्धद्वयमेकान्वयि ॥ ३३ ॥

गो० टी०–गच्छेति । गतक्लमा गतक्लेशा ॥ ३३ ॥

३४ ] ति० टी०–आनृण्यताम् । स्वार्थे ष्यञ् ॥ ३४ ॥

रा० टी०–प्रत्यागते इति । चरितव्रते चरितमाचरितं व्रतं येन तस्मिन्कृतः संपादितः अर्थः प्रतिज्ञाविषयीभूतं वस्तु येन तस्मिन्नत एव पितुः आनृण्यतां प्राप्ते प्रत्यागते इह प्राप्ते महाभागे महाभां राज्यलक्ष्मीमागच्छति प्राप्नोति तस्मिन् त्वयि सति परमं सुखं स्वपिष्ये ॥ ३४ ॥

गो० टी०–प्रत्यागत इति । महाभागे महाभागधेये आनृण्यतामनृणतां स्वार्थे ष्यञ् ॥ ३४ ॥

३५ ] ति० टी०–मे वच आविद्धयाच्छिद्य त्वां संचोदयति । वनायेति शेषः इति यत्, अतः कृतान्तस्य गतिर्दुर्विभाव्या ॥ ३५ ॥

रा० टी०–कृतान्तस्येति । यद्यस्माद्धेतोः कृतान्तस्य राक्षसानामित्यर्थः गतिर्गमनं दुर्विभाव्या दुर्लक्ष्या तस्माद्धेतोः

१ सुव्रता इति गो. पाठः । २ प्राप्स्यते इति रा. पाठः ३ त्वयि लप्स्ये परमिति गो. पाठः । ४ यस्त्वामिति रा. पाठः । ५ आच्छिद्येति गो. पाठः ।

गच्छेदानीं महाबाहो क्षेमेण पुनरागतः । नन्दयिष्यसि मां पुत्र साम्ना श्लक्ष्णेन चारुणा ॥ ३६ ॥
अपीदानीं स कालः स्याद्वनात्प्रत्यागतं पुनः । यत्त्वां पुत्रक पश्येयं जटावल्कलधारिणम् ॥ ३७ ॥
तथाहि रामं वनवासनिश्चितं ददर्श देवी परमेण चेतसा ।
उवाच रामं शुभलक्षणं वचो बभूव च स्वस्त्ययनाभिकाङ्क्षिणी ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।

कौसल्यया सविस्तरं कृतप्रयाणमङ्गलाशासनो रामस्तच्चरणावभिवाद्य सीतां द्रष्टुं तदावासं जगाम ।

सा विनीय तमायासमुपस्पृश्य जलं शुचि । चकार माता रामस्य मङ्गलानि मनस्विनी ॥ १ ॥
न शक्यते वारयितुं गच्छेदानीं रघूत्तम । शीघ्रं च विनिवर्तस्व वर्तस्व च सतां क्रमे ॥ २ ॥
यं पालयसि धर्मं त्वं प्रीत्या च नियमेन च । स वै राघवशार्दूल धर्मस्त्वामभिरक्षतु ॥ ३ ॥

आविध्य स्वस्त्यादिविधानं कृत्वा मे वचः त्वां संचोदयति गमनाय प्रेरयति । 'आच्छिद्य' इति पाठे तु स्वस्त्यादिकरणेन विघ्नान् छित्वेत्यर्थः ॥ ३५ ॥

गो० टी०—कृतान्तस्येति । आच्छिद्य छित्वा अन्यथा कृत्वेत्यर्थः ॥ ३५ ॥

३६ ] ति० टी०—श्लक्ष्णेन निर्मलेन चारुणा मनोहरेण साम्ना सान्त्वेन वचनेन । 'शुक्लेन' इति पाठान्तरम् ॥ ३६ ॥

रा० टी०—गच्छेति । हे महाबाहो ! इदानीं क्षेमेण मत्कृतमङ्गलवचनहेतुककल्याणेन सहितस्त्वं गच्छ । हे पुत्र ! आगतः वनादिह प्राप्तः त्वं श्लक्ष्णेन रमणीयार्थेन चारुणा रमणीयवर्णविशिष्टेन साम्ना शान्तिकारकेण वाक्येनेति शेषः मां नन्दयिष्यसि ॥ ३६ ॥

गो० टी०—गच्छेति । साम्ना सान्त्वरूपेण ॥ ३६ ॥

३७] ति० टी०—अदर्शनासहिष्णुत्वात्प्रत्यागमनकाल इदानीमेव भवेदिति प्रार्थयते—अपीति । येन कालेन प्रत्यागतं प्रत्यागमनं भवेत्स इत्यर्थः । अपीदानीमिति लोकोक्त्योवाच ॥ ३७ ॥

रा० टी०—अपीति । यथस्मिन् काले वनात्प्रत्यागतं त्वां पश्येयं स कालः इदानीं समीपे एवेत्यर्थः स्यात् भवेत् वियोगकालस्याधिक्यं न प्रतिभासेतेति तात्पर्यम् ॥ ३७ ॥

गो० टी०—क्षणमात्रमप्यदर्शनासहिष्णुत्वात् प्रत्यागमनकाल इदानीमेव संभवेदिति प्रार्थयते—अपीति । यत् येन चतुर्दशवर्षान्तेन कालेन वनात्प्रत्यागतं त्वां पुनः पश्येयं स काल इदानीमेवापि स्यात् अपिशब्दः संभावनायाम् 'अपिः संभावनाप्रश्नगर्हाशङ्कासमुच्चये' इति वैजयन्ती । यत् यत्रेति वार्थः ॥ ३७ ॥

३८ ] ति० टी०—परमेणादरवता । धर्मशीलत्वादेवर्विरक्षणोद्यतत्वाच भगवत्संकल्पेनैव तथा ज्ञानं तस्या इति बोध्यम् । स्वस्त्ययनं मङ्गलमभिकाङ्क्षितुं शीलमस्त्यस्याः सा ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

रा० टी०—तदेति । वनवासनिश्चितं वनवासविषयकनिश्चयवन्तं शुभलक्षणं रामं परमेण सूक्ष्मेण चेतसा विचारेण ददर्श स्वस्त्ययनाभिकाङ्क्षिणी स्वस्त्ययनं कर्तुंकामा बभूव अत एव शुभलक्षणं शुभसूचकं वच उवाच ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

गो० टी०—तथेति । वनवासनिश्चितं निश्चितवनवासम् परमेण चेतसा आदरेणेति यावत् स्वस्त्ययनं मङ्गलमभिकाङ्क्षितुं शीलमस्या अस्तीति तथा ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

१ ] ति० टी०—मङ्गलकरणमेवाह—सेति । आयासं तज्जनकं शोकम् उपस्पृश्याचम्य मङ्गलानि मङ्गलवचनानि ॥ १ ॥

रा० टी०—तद्वचनमेवाह—सेति । सा कौशल्या तं निश्चितवियोगजनितमायासं दुःखं विनीय विचारेण दूरीकृत्य मङ्गलानि चकार ॥ १ ॥

गो० टी०—तान्येव स्वस्त्ययनानि दर्शयति—सेत्यादि । आयासं क्लेशमपनीय त्यक्त्वा जलमुपस्पृश्याचम्येत्यर्थः । 'उपस्पर्शस्त्वाचमनम्' इत्यमरः । रोदनस्याशुचिताहेतुत्वात् देवताप्रार्थनस्य शुचिना कर्तव्यत्वादुपस्पर्शनमुक्तम् अत एव शुचिरित्युच्यते मङ्गलानि मङ्गलाशासनानि ॥ १ ॥

२–३ ] ति० टी०—सतां क्रमे सतां मार्गे ॥ २–३ ॥

रा० टी०—नेति । हे रघूत्तम ! इदानीं वारयितुं गमनमिति शेषः न शक्यते अतः गच्छ अतः सतां महात्मनां क्रमे मार्गे महात्माचरितप्रतिज्ञापालने वर्तस्व शीघ्रं विनिवर्तस्व च वनादिति शेषः ॥ २ ॥

गो० टी०—नेति । शीघ्रं विनिवर्तस्व चतुर्दशवर्षान्त इति शेषः । सतां क्रमे अभिषेचने ॥ २ ॥

१ वाक्येनेति गो. पाठः । २ तदेति रा. पाठः । ३ अपनीयेति गो. पाठः । ४ शक्यसे इति गो. पाठः ।

येभ्यः प्रणमसे पुत्र [1]देवेष्वायतनेषु च । ते च त्वामभिरक्षन्तु वने सह महर्षिभिः ॥ ४ ॥
यानि दत्तानि तेऽस्त्राणि विश्वामित्रेण धीमता । तानि त्वामभिरक्षन्तु गुणैः समुदितं सदा ॥ ५ ॥
पितृशुश्रूषया पुत्र मातृशुश्रूषया तथा । सत्येन च महाबाहो चिरं जीवाभिरक्षितः ॥ ६ ॥
समित्कुशपवित्राणि वेद्यश्चायतनानि च । स्थण्डिलानि [2]च विप्राणां शैला वृक्षाः क्षुपा ह्रदाः ॥
पतङ्गाः पन्नगाः सिंहास्त्वां रक्षन्तु नरोत्तम ॥ ॥ ७ ॥
स्वस्ति साध्याश्च विश्वे च मरुतश्च महर्षिभिः । स्वस्ति धाता विधाता च स्वस्ति पूषा भगोऽर्यमा ॥ ८ ॥
लोकपालाश्च ते सर्वे वासवप्रमुखास्तथा । ऋतवः षट् च ते सर्वे मासाः संवत्सराः क्षपाः ॥ ९ ॥
दिनानि च मुहूर्ताश्च स्वस्ति कुर्वन्तु ते सदा । [3]श्रुतिः स्मृतिश्च धर्मश्च पातु त्वां पुत्र सर्वतः ॥ १० ॥
स्कन्दश्च भगवान्देवः सोमश्च सबृहस्पतिः । सप्तर्षयो नारदश्च ते त्वां रक्षन्तु सर्वतः ॥ ११ ॥
[4]ते चापि सर्वतः सिद्धा दिशश्च सदिगीश्वराः । स्तुता मया वने तस्मिन्पान्तु त्वां पुत्र नित्यशः ॥ १२ ॥
शैलाः सर्वे समुद्राश्च राजा वरुण एव च । द्यौरन्तरिक्षं पृथिवी वायुश्च सचराचरः ॥ १३ ॥

रा० टी०—यमिति । राघवशार्दूल रघुवंशिश्रेष्ठ ! अभिरक्षतु विघ्नान् विनाशयतु इत्यर्थः ॥ ३ ॥

गो० टी०—यमिति । पालयसि अप्रच्युतमनुतिष्ठसि धृत्या प्रीत्या नियमेन समग्रतया स वै प्रसिद्धो धर्मः राघवशार्दूल रघुकुलश्रेष्ठ ! अभिरक्षतु अभितो रक्षतु पुनर्धर्मपदप्रयोगात् स एव रक्षत्विस्युच्यते ॥ ३ ॥

४ ] ति० टी०—देवेष्वायतनेषु देवालयेषु । प्रणमसे च । चादृक्षितुमिच्छसि च । ते च देवाः चादृषयः ॥ ४ ॥

रा० टी०—येभ्य इति । हे पुत्र ! देवेषु कान्तिमत्सु आयतनेषु गृहेषु येभ्यः प्रणमसे ते देवाः महर्षिभिः सह सहितं त्वां वने अभिरक्षन्तु ‘ चैत्येषु ’ इति भूषणपाठः । महर्षिभिः सह देवा अभिरक्षन्त्वित्यन्वयो वा ॥ ४ ॥

गो० टी०—येभ्य इति । चैत्येषु चतुष्पथेषु आयतनेषु देवतागृहेषु ते देवा इति सिद्धम् ॥ ४ ॥

५ ] ति० टी०—गुणैः सद्गुणैः ॥ ५ ॥

रा० टी०—यानीति । सदा नित्यं गुणैः समुदितं प्रकाशितम् ॥ ५ ॥

गो० टी०—यानीति । समुदितं श्रेष्ठम् ॥ ५ ॥ ६ ॥

६ ] ति० टी०—मातृशुश्रूषयेति । मातात्र कैकेयी ॥ ६ ॥

रा० टी०—पित्रिति । शुश्रूषया सेवया सत्येन चाभिरक्षितस्त्वं चिरं जीव पालय प्रजा इति शेषः । अन्तर्भावितणिजर्थः ॥ ६ ॥

७ ] ति० टी०—समिदादिपदेन तदधिष्ठात्र्यो देवता उपलक्ष्यन्ते । क्षुपा ह्रस्वशाखास्तरवः शिफायुक्तवृक्षाः क्षुपा इत्यन्ये । ह्रदा इति जलाशयमात्रोपलक्षणम् । त्वां रक्षन्त्वित्यग्रिमेण संबन्धः । पतङ्गाः पक्षिणः ॥ ७ ॥

रा० टी०—समिदिति । समिदादयः तत्तदन्तर्यामिण इत्यर्थः । तत्र क्षुपाः ह्रस्वशाखावन्तो वृक्षविशेषाः ‘ ह्रस्वशाखाशिफः क्षुपः ’ इत्यमरः पतङ्गाः पक्षिणः पन्नगाः सर्पाः त्वां रक्षन्तु । सार्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०—समिदित्यादिसार्धश्लोक एकान्वयः । वन्याः समित्कुशादयः प्रमादकृतप्रत्यवायसहिष्णवः सन्तो वने चरन्तं भवन्तं रक्षन्त्विति वाक्यार्थः पवित्राणि दर्भग्रन्थयः वेद्यः अग्निधिष्ण्यानि स्थण्डिलानि देवपूजास्थलानि तेषामलंकारभेदात् संस्थानभेदाच्च वैचित्र्यं वृक्षग्रहणं लतादेरप्युपलक्षणं क्षुपाः ह्रस्वशाखाशिफायुक्ताः वृक्षविशेषाः ‘ ह्रस्वशाखाशिफः क्षुपः ’ इत्यमरः । वृक्षविशेषणं वा ह्रस्वशाखावृक्षेष्वेव प्रायशो देवताः संनिदधत इत्यैतिह्यात् । पतङ्गाः पक्षिणः ॥ ७ ॥

८–१३ ] ति० टी०—स्वस्ति इत्यस्य कुर्वन्त्वित्यग्रिमेण संबन्धः । धाता विराट् । विधाता सृष्टिविधायकः ॥ ८–११ ॥

रा० टी०—स्वस्तीति । महर्षिभिः सह स्वस्ति कुर्वन्तु इति शेषः ॥ ८ ॥

रा०टी०—स्वस्तीति । धाता दक्षादिः विधाता ब्रह्मा करोतु कुर्वन्तु इति शेषः ॥ ९ ॥

रा० टी०—ऋतव इति । ऋतवो वसन्तादयः मासाः चैत्रादयः संवत्सराः प्रभवादयः क्षपाः रात्रयः मुहूर्ताः गिरिशादयः ॥ १० ॥

गो० टी०—स्वस्तीत्यादि । कुर्वन्त्वित्यनुषङ्गः स्वस्ति धातेत्यादौ करोत्वित्यध्याहारः साध्याः देवताविशेषाः विश्वे विश्वेदेवाः मरुतः वायवः धातृविधातृशब्दौ देवताविशेषवाचकौ पूषादिशब्दाः द्वादशसंख्याकादित्यावान्तरभेदवाचकाः मुहूर्तः दिनस्य त्रिंशो भागः ॥ ८ ॥ ९ ॥

रा० टी०—धृतिरिति । धृतिर्धैर्यं स्मृतिःस्मरणं धर्मः

१ चैत्येष्विति गो. पाठः । २ विचित्राणीति गो. पाठः । ३ धृतिरिति गो. रा. पाठः ४ । ॰श्चाः इति गो. पाठः । ५ नद्यः सर्वास्तथैव चेति गो. पाठः ।

नक्षत्राणि च सर्वाणि ग्रहाश्च सह दैवतैः । अहोरात्रे तथा संध्ये पान्तु त्वां वनमाश्रितम् ॥ १४ ॥
ऋतवश्चापि षट् चान्ये मासाः संवत्सरास्तथा । कलाश्च काष्ठाश्च तथा तव शर्म दिशन्तु ते ॥ १५ ॥
महावनेऽपि चरतो मुनिवेषस्य धीमतः । तथा देवाश्च दैत्याश्च भवन्तु सुखदाः सदा ॥ १६ ॥
राक्षसानां पिशाचानां रौद्राणां क्रूरकर्मणाम् । क्रव्यादानां च सर्वेषां मा भूत्पुत्रक ते भयम् ॥ १७ ॥
प्लवगा वृश्चिका दंशा मशकाश्चैव कानने । सरीसृपाश्च कीटाश्च मा भूवन्गहने तव ॥ १८ ॥
महाद्विपाश्च सिंहाश्च व्याघ्रा ऋक्षाश्च दंष्ट्रिणः । महिषाः शृङ्गिणो रौद्रा न ते द्रुह्यन्तु पुत्रक ॥ १९ ॥
नृमांसभोजना रौद्रा ये चान्ये सर्वजातियाः । मा च त्वां हिंसिषुः पुत्र मया संपूजितास्त्विह ॥ २० ॥
आगमास्ते शिवाः सन्तु सिध्यन्तु च पराक्रमाः । सर्वसंपत्तयो राम स्वस्तिमान्गच्छ पुत्रक ॥ २१ ॥

---

श्रुतिस्मृतिविहितः स्कन्दः कार्तिकेयः सोमः उमासहितः देवो महादेवः ॥ ११ ॥

गो० टी०—स्मृतिर्धृतिश्च धर्मश्च पातु त्वां पुत्र सर्वतः । स्मृतिः ध्यानं धृतिः ऐकाग्र्यं निष्पन्नयोग इतियावत् धर्मः श्रुतिस्मृत्युदितः यं पालयसीत्यत्र पितृवाक्यपरिपालनज एवोक्त इति न पुनरुक्तिः ॥ १० ॥

रा० टी०—सप्तर्षय इति । हे पुत्र ! मया स्तुताः सप्तर्ष्यादयः नित्यशः पान्तु । सार्धश्लोक एकान्वयी ॥ १२ ॥

गो० टी०—स्कन्द इति । स्कन्दः सनत्कुमारः तं स्कन्द इत्याचक्षत इति दहरविद्यायां तथाभिधानात् कुमारो वा ॥११॥

गो० टी०—याश्चापीति । सर्वतः सिद्धाः प्रसिद्धाः ॥१२॥

रा० टी०—शैला इति । शैलाः अद्रयः वनमाश्रितं त्वां पान्तु । अर्धचतुष्टयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—शैला इति । शैलाः कुलपर्वताः समुद्रसन्निधानात् शैला वृक्षा इत्यत्र क्षुद्रपर्वताः राजा कुबेरः ग्रहाः कुजादयः सहदेवताः तदभिमानिदेवतासहिताः अहोरात्रे तदभिमानिदेवते अतो न पुनरुक्तिः ॥ १३–१४ ॥

१४–१६ ] ति० टी०—नक्षत्राणि रेवत्यादिनक्षत्राधिष्ठात्र्यो देवताः ग्रहाः सूर्यादयः ग्रहदेवतास्तत्तदधिदेवताः । पुनरुक्तिरत्र पुत्रप्रेमपारवश्यान्न दोषाय । पाठान्तरेऽप्ययमेवार्थः ॥१४–१६॥

रा० टी०—ऋतव इति । षट् षट्संख्याका ऋतवः ऋत्ववयवीभूताधिकमासे दिनाभिमानिदेवताः मासा अधिकचैत्रादिमासदेवताः संवत्सराः त्रयोदशमासात्मकवर्षाभिमानिदेवताः किंच अन्ये सौरत्वादिभेदेन पूर्वतो भिन्नाः ऋत्वादयः कलादयश्च महावने विचरतः तव शर्म कल्याणं दिशन्तु ददतु । सार्धश्लोक एकान्वयी ॥ १५ ॥ १६ ॥

गो० टी०—ऋतव इति । ऋतुमासादिशब्दास्तदधिदेवतापराः केचिदाहुः अस्मिन् प्रकरणे प्रायशः पुनरुक्तयः पुत्ररक्षणविषयप्रेमपारवश्यकृता इति शर्म सुखम् 'शर्मशातसुखानि च' इत्यमरः ॥ १५ ॥

रा० टी०—तवेति । आदित्याः देवताः दैत्याश्च तव सुखदा भवन्तु । अर्धं पृथक्—राक्षसानामिति । राक्षसादीनां भयं ते माभूत् । अर्धद्वयमेकान्वयि ॥ १७ ॥

गो० टी०—महावन इति । आदित्याः देवताः ॥ १६ ॥

१७ ] ति० टी०—सर्वक्रव्यादसंबन्धिभयं पुत्रक ! ते मा भूदित्यन्वयः ॥ १७ ॥

गो० टी०—राक्षसानामिति । राक्षसादिसंबन्धिभयम् संबन्धसामान्ये षष्ठी तेभ्यो भयमित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—प्लवगा वानराः दंशा वनमक्षिकाः गहने तव मा भूवन्मा सन्तु ॥ १८ ॥

रा० टी०—प्लवगा इति । गहने निबिडे कानने वने प्लवगा प्लवेन उत्प्लुत्यागच्छन्ति ते मण्डूकजातिविशेषादय इत्यर्थः । वृश्चिकादयश्च तव समीपे मा भूवन् । सार्धश्लोक एकान्वयी ॥ १८ ॥ १९ ॥

गो० टी०—प्लवगा इति । प्लवगाः वानराः दंशाः वनमक्षिकाः 'दंशस्तु वनमक्षिका' इत्यमरः । सरीसृपाः गिरिसर्पाः गहने वने मा भूवन् हिंसका मा भूवनित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—ऋक्षा भल्लूकाः । ते तुभ्यम् ॥ १९ ॥

रा० टी०—महिषा इति । महिषादयो न द्रुह्यन्तु । अर्धं पृथक्—नृमांसेति । अन्ये उक्तातिरिक्ताः सर्वजातयः क्रूरा इति शेषः मया संपूजिताः प्रार्थिताः ॥ २० ॥

गो० टी०—महाद्विपा इति । ऋक्षाः भल्लूकाः न ते द्रुह्यन्तु "क्रुधद्रुह—" इत्यादिना चतुर्थी ॥ १९ ॥

२० ] ति० टी०—सर्वजातियाः सर्वजातीयाः । 'सर्वजातयः' इति पाठे क्रूरजन्तव इति फलितार्थः ॥ २० ॥

गो० टी०—नृमांसभोजना इति । सत्त्वजातयः सत्त्वस्य जातिर्जन्म येषु ते सत्त्वजातयः क्रूरजन्तव इत्यर्थः ॥ २० ॥

२१ ] ति० टी०—आगमा मार्गाः ते त्वदिति त्वदागमनयोग्या भवन्त्वित्यभिप्रायेणैवमुक्तिः । सर्वसंपत्तयो वनवासापेक्षिताः फलमूलादिरूपाः सन्त्विति शेषः ॥ २१ ॥

रा० टी०—आगमा इति । आगमाः आगमनानुकूलव्यापाराः शिवाः मङ्गलविशिष्टा विजयपूर्वका इत्यर्थः सन्तु पराक्रमाः सिध्यन्तु सफला भवन्तु ॥ २१ ॥

१ देवता इति गो. पाठः । २ चैव षट् पुण्या इति गो. पाठः । ३ तथादित्याश्चेति गो. रा. पाठः । ४ सत्त्वजातय इति गो. सर्वजातय इति रा. पाठः । ५ संपत्त्ये इति गो. पाठः

स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यः पुनः पुनः। सर्वेभ्यश्चैव देवेभ्यो ये च ते परिपन्थिनः ॥ २२ ॥
शुक्रः सोमश्च सूर्यश्च धनदोऽथ यमस्तथा । पान्तु त्वामर्चिता राम दण्डकारण्यवासिनम् ॥ २३ ॥
अग्निर्वायुस्तथा धूमो मन्त्राश्चर्षिमुखच्युताः । उपस्पर्शनकाले तु पान्तु त्वां रघुनन्दन ॥ २४ ॥
सर्वलोकप्रभुर्ब्रह्मा भूतकर्तॄ तथर्षयः । ये च शेषाः सुरास्ते तु रक्षन्तु वनवासिनम् ॥ २५ ॥
इति माल्यैः सुरगणान्गन्धैश्चापि यशस्विनी । स्तुतिभिश्चानुरूपाभिरानर्चायतलोचना ॥ २६ ॥
ज्वलनं समुपादाय ब्राह्मणेन महात्मना । हावयामास विधिना राममङ्गलकारणात् ॥ २७ ॥
घृतं श्वेतानि माल्यानि समिधश्चैव सर्षपान् । उपसंपादयामास कौसल्या परमाङ्गना ॥ २८ ॥
उपाध्यायः स विधिना हुत्वा शान्तिमनामयम् । हुतहव्यावशेषेण बाह्यं बलिमकल्पयत् ॥ २९ ॥
मधुदध्यक्षतघृतैः स्वस्तिवाच्यं द्विजांस्ततः । वाचयामास रामस्य वने स्वस्त्ययनक्रियाम् ॥ ३० ॥
ततस्तस्मै द्विजेन्द्राय राममाता यशस्विनी । दक्षिणां प्रददौ काम्यां राघवं चेदमब्रवीत् ॥ ३१ ॥

रा० टी०–सर्वसंपत्तय इति । सर्वसंपत्तयः अपेक्षितसामग्र्यः प्राप्नुवन्तु इति शेषः अन्तरिक्षादिभ्यः ये ते परिपन्थिनः शत्रवस्तेभ्यश्च स्वस्ति अस्तु । सार्धश्लोक एकान्वयी ॥ २२ ॥

गो० टी०–आगमा इति । आगम्यन्त इति आगमाः मार्गाः सर्वसंपत्तये वन्यफलमूलादिसंपत्तये ॥ २१ ॥

२२–२३] ति० टी०–पार्थिवेभ्यः पृथिवीभवसत्त्वेभ्यः । देवेभ्यो ये च ते परिपन्थिनस्तेभ्यश्च स्वस्त्यस्त्विति योजना २२॥२३

गो० टी०–स्वस्तीति । अन्तरिक्षेभ्यः अन्तरिक्षचारिभ्यः पार्थिवेभ्यः पृथिवीवर्तिभ्यः एकाकात् परिपन्थिन शत्रवः ॥ २२ ॥

रा०टी०–शुक्र इति । शुक्रादयः पान्तु अर्धद्वयमेकान्वयि २३

गो० टी०–गुरुरित्यादि । पृथक् पृथक् मिलिताश्च रक्षन्त्वित्यर्थः इति न पुनरुक्तिः ॥ २३ ॥

२४ ] ति० टी०–ऋषिमुखाच्युता निर्गताः । त्वया गृहीताश्चेति शेषः ॥ २४ ॥

रा० टी०–अग्निरिति । उपस्पर्शनकाले अस्पृश्यस्पर्शनसमये अग्न्यादयः ऋषिमुखच्युताः महात्मोपदिष्टाः मन्त्राश्च त्वां पान्तु ॥ २४ ॥

गो० टी०–अग्निरिति । ऋषिमुखाच्युताः निर्गताः त्वया गृहीताश्चेति शेषः ॥ २४ ॥

२५–२७ ] ति० टी०–भूतकर्तॄ ब्रह्म । जगत्कारणं ब्रह्मेत्यर्थः ॥ २५–२७ ॥

रा० टी०–सर्वेति । ब्रह्मा साकेतलोकस्थः अतः पूर्वोक्तविधातेत्यनेन न पौनरुक्त्यं शिष्यते इति शेषाः नित्या इत्यर्थः सुराः साकेतलोकस्था इत्यर्थः ॥ २६ ॥

गो० टी०–सर्वलोकप्रभुरिति । भूतभर्ता नारायणः ॥२५॥

रा० टी०–इतीति । अनुरूपाभिः स्वयोग्याभिः ॥ २६ ॥

गो० टी०–इतीति । इतीत्यत्र मत्वेति शेषः ॥ २६ ॥ २७॥

रा० टी०–ज्वलनमिति । ज्वलनमग्निं समुपादाय ग्राहयित्वा मङ्गलकारणान्मङ्गलहेतोः ब्राह्मणेन हावयामास ॥ २७॥

२८ ] ति० टी०–उपसंपादयामास । होमायेति शेषः॥२८॥

रा० टी०–हावनप्रकारमाह–घृतमिति । घृतादीनुपसंपादयामास ब्राह्मणसमीपं प्रापयामास ॥ २८ ॥

गो० टी०–घृतमिति । उपसंपादयामास होमायेति शेषः ॥ २८ ॥

२९ ] ति० टी०–अनामयमारोग्यम् उद्दिश्येति शेषः । बाह्यं बलिं होमस्थानाद्बहिर्भूतं लोकपालादिबलिम् ॥ २९ ॥

रा० टी०–उपाध्याय इति । शान्तिमभिभवकारकविघ्नराहित्यमनामयं रोगराहित्यं च उद्दिश्येति शेषः हुत्वा बाह्यं होमस्थानाद्बहिर्भागयोग्यं बलिं विहितलोकपालादिपूजामकल्पयत् ॥ २९ ॥

गो० टी०–उपाध्याय इति । शान्तिं सर्वोपद्रवशान्तिम् अनामयम् आरोग्यं च उद्दिश्येति शेषः। हुतहव्यावशेषेण हुतद्रव्यशेषेण बाह्यं होमस्थानाद्बहिर्भवम् ॥ २९ ॥

३० ] ति० टी०–स्वस्तिवाच्यं स्वस्तिवाचनमुद्दिश्य मध्वादिभिरुपलक्षितान्द्विजान्कृत्वा रामस्य वने स्वस्त्यस्त्वित्येवंरूपां वने स्वस्त्ययनक्रियां वाचयामासेत्यन्वयः ॥ ३० ॥

रा० टी०–मध्विति । मध्वादिभिः सहितान्स्वस्तिवाच्यद्विजान् स्वस्तिवचनार्हब्राह्मणान् वने स्वस्त्ययनक्रियां वनविषयकस्वस्तिबोधकवाक्यमित्यर्थः । वाचयामास "जल्पतिप्रभृतीनाम्" इति कर्मत्वम् ॥ ३० ॥

गो० टी०–मध्विति । मध्वादिद्रव्यदक्षिणाभिर्दत्ताभिः द्विजान् स्वस्तिवाच्य पुण्याहं वाचयित्वेत्यर्थः स्वस्त्ययनक्रियाः स्वस्त्ययनक्रियाप्रतिपादकमन्त्रानित्यर्थः ॥ ३० ॥

३१ ] ति० टी०–काम्यामिच्छाविषयाम् ॥ ३१ ॥

१ गुरुरिति गो. पाठः । २ मुखाच्युता इति गो. पाठः । ३ भूतभर्तेति ? कृत्वा कर्तेति रा. पाठः । ४ अनुकूलाभिरिति गो. पाठः । ५ वाच्येति गो. रा. पाठः । ६ क्रिया इति गो. पाठः ।

यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ३२ ॥
यन्मङ्गलं सुपर्णस्य विनताकल्पयत्पुरा । अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ३३ ॥
अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् । अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ३४ ॥
[1]त्रिविक्रमान्प्रक्रमतो विष्णोरतुलतेजसः । यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ ३५ ॥
ऋषयः सागरा द्वीपा वेदा लोका दिशश्च ते[4] । मङ्गलानि महाबाहो दिशन्तु शुभमङ्गलम्[5] ॥ ३६ ॥
इति पुत्रस्य शेषांश्च[6] कृत्वा शिरसि भामिनी । गन्धैश्चापि समालभ्य राममायतलोचना ॥ ३७ ॥
औषधीं च[7] सुसिद्धार्थां[8] विशल्यकरणीं शुभाम् । चकार रक्षां कौसल्या मन्त्रैरभिजजाप च ॥ ३८ ॥
उवाचापि प्रहृष्टेव सा दुःखवशवर्तिनी । वाङ्मात्रेण न भावेन वाचा संसज्जमानया ॥ ३९ ॥
आनम्य मूर्ध्नि चाघ्राय परिष्वज्य यशस्विनी । अवदत्पुत्रमिष्टार्थो गच्छ राम यथासुखम् ॥ ४० ॥

रा० टी०–तत इति । तस्मै हवनकर्त्रे काम्यां तदीप्सितां दक्षिणां प्रददौ राघवं राममब्रवीच्च ॥ ३१ ॥

गो० टी०–तत इति । काम्यामभीष्टाम् ॥ ३१ ॥

३२ ] ति० टी०–वृत्रनाशे तद्रूपनिमित्ते ॥ ३२ ॥

रा० टी०–तद्वचनमेवाह–यदिति । यथादृशं मङ्गलं विजय इत्यर्थः वृत्रनाशे वृत्रासुरवधसमये सर्वदेवनमस्कृते सहस्राक्षे इन्द्रे समभवत्तादृशं मङ्गलं ते भवतु ॥ ३२ ॥

गो० टी०–यन्मङ्गलमिति । वृत्रनाशे वृत्रनाशनिमित्ते ॥ ३२–३४ ॥

३३–३४ ] ति० टी०–प्रार्थयानस्य आर्षत्वान्मुगभावः । अनेन भावि महद्युद्धं तत्र जयश्च सूचितः ॥ ३३ ॥ ३४ ॥

रा० टी०–यदिति । सुपर्णस्य गरुडस्य विनता गरुडमाता प्रार्थयानस्य प्रार्थयमानस्य आगमशास्त्रस्यानित्यत्वान्मुगभावः ॥ ३३ ॥

रा० टी०–अमृतेति । अमृतस्य उत्पादनमुत्पत्तिर्यस्मिन्समये तस्मिन्समये वज्रधरस्य इन्द्रस्य यन्मङ्गलमदितिः प्रादात्तन्मङ्गलं ते भवतु ॥ ३४ ॥

३५ ] ति० टी०–विक्रमः पादविक्षेपः ॥ ३५ ॥

रा० टी०–त्रीनिति । त्रिविक्रमान्वारत्रयपादविक्षेपान्प्रक्रमतः कुर्वतः तन्मङ्गलं ते भवतु ॥ ३५ ॥

गो० टी०–त्रीनिति । विक्रमान् पादविक्षेपान् ॥ ३५ ॥

३६ ] ति० टी०–शुभमङ्गलं मङ्गलानामपि मङ्गलम् ॥ ३६ ॥

रा० टी०–ऋषय इति । ऋष्यादयः दिशन्तु ददतु ॥ ३६ ॥

गो० टी०–ऋतव इति । शुभमङ्गलाः मङ्गलानामपि मङ्गलाः मङ्गलद्रव्याणामप्यतिशयदायका इत्यर्थः ॥ ३६ ॥

३७ ] ति० टी०–इति उक्त्वेति शेषः । पुत्रस्य शिरसि शेषा अक्षताः शेषा इत्यक्षतनामेति कतकः । समालम्भो विलेपनम् ॥ ३७ ॥

३८ ] ति० टी०–सिद्धार्थां दृष्टवीर्यां विशल्यकरणीमित्यन्वर्थनामिकामौषधीं गुलकीकृत्य शुभां रक्षां चकार रक्षाहेतुत्वेन हस्ते बबन्धेत्यर्थः तां मन्त्रैरतिशयितां कर्तुं जजाप च ॥ ३८ ॥

रा० टी०–इतीति । दुःखवशवर्तिनी वियोगजनितदुःखाक्रान्तापि वाचा प्रहृष्टा वचनमात्र्यप्रहृष्टात्वविशिष्टैव कौसल्या इति अनेन प्रकारेणैव शेषानक्षतान्पुत्रस्य शिरसि शिरएकदेशे मस्तके इत्यर्थः कृत्वा अक्षतैरलंकृत्येत्यर्थः गन्धैः अनेकविधचन्दनैः रामं समालभ्य विलिप्य सुसिद्धार्थां सुसिद्धः परीक्षितः अर्थो यस्याः तां रिपुबाणभेदनकर्त्रीमित्यन्वर्थसंज्ञावतीमित्यर्थः विशल्यकरणीमौषधिं रक्षामुद्दिश्य मन्त्रैः चकार हस्ते बबन्धेत्यर्थः अत एव जजाप मनसि उच्चारयामास मन्त्रानिति शेषः । इव उश्चैवार्थे । शेषा इत्यक्षतनामेति भट्टोदाहृतकतकः । अर्धपञ्चकमेकान्वयि ॥ ३७–३९ ॥

गो० टी०–इतीति । शेषान् अक्षतानि गन्धैश्च समालभ्य विलिप्य 'समालम्भो विलेपनम्' इत्यमरः । सिद्धार्थां दृष्टफलां विशल्यकरणीं च अन्तर्गतशल्यनिर्गमनकारिणीं च ओषधीं मूलिकां मन्त्रैरभिमन्त्र्य रक्षां चकार रक्षाहेतुत्वेन हस्ते बबन्धेत्यर्थः पुनर्जजाप च ॥ ३७ ॥ ३८ ॥

३९ ] ति० टी०–उवाचापि मन्त्रानिति शेषः । जपोत्तरं स्पष्टमपि मन्त्रानुच्चारयामासेत्यर्थः । एतच्च तन्मन्त्रार्थानुसंधानेन रामस्य हृत्प्रसादार्थम् । प्रहृष्टेवेति हर्षापारमार्थ्यद्योती इवशब्दः । तदेवाह–वाङ्मात्रेणेति । संसज्जमानयान्तरखेदगद्गदया ॥ ३९ ॥

रा० टी०–वागिति । संसज्जमानया अत्यासक्तिबोधिकया वाचोपलक्षिता कौसल्या पुत्रमानम्य आघ्राणादि कृत्वा च हे राम ! इष्टार्थः इष्टः अभीप्सितः अर्थः देवप्रयोजनं यस्य सः त्वं यथासुखं गच्छ इति भावेनातिप्रेम्णा वदद्वाङ्मात्रेण नावदच्चापि निषेधोऽर्थतः सिद्धस्तथापि स्पष्टप्रतिपत्त्यर्थमिदम् । सार्धश्लोक एकान्वयी ॥ ४० ॥

गो० टी०–उवाचेति । अतिप्रहृष्टेव दुःखवशवर्तिन्यपि पुत्रमुखोल्लासार्थमतिसंतुष्टेव भावयन्तीत्यर्थः । असंसज्जमानया स्खलन्त्येत्यर्थः ॥ ३९ ॥

४० ] ति० टी०–आनम्येति उच्चत्वात्पुत्रस्य गद्गा

१ त्रीनिति गो. पाठः । २ अमितेति गो. पाठः । [३] गो. भूतानीति गो. पाठः । ४ ते इति गो. पाठः । ५ मङ्गला इति गो. पाठः । ६ शेषांश्चेति गो. पाठः । ७ चापीति गो. पाठः । ८ सिद्धार्थो इति गो. पाठः ।

अरोगं सर्वसिद्धार्थमयोध्यां पुनरागतम् । पश्यामि त्वां सुखं वत्स संधितं राजवर्त्मसु ॥ ४१ ॥
[ प्रणष्टदुःखसंकल्पा हर्षविद्योतितानना । द्रक्ष्यामि त्वां वनात्प्राप्तं पूर्णचन्द्रमिवोदितम् ॥
भद्रासनगतं राम वनवासादिहागतम् । द्रक्ष्यामि च पुनस्त्वां तु तीर्णवन्तं पितुर्वचः ॥ ]
मङ्गलैरुपसंपन्नो वनवासादिहागतः । वध्वाश्च मम नित्यं त्वं कामान्संवर्ध याहि भोः ॥ ४२ ॥
मयार्चिता देवगणाः शिवादयो महर्षयो भूतगणाः सुरोरगाः ।
अभिप्रयातस्य वनं चिराय ते हितानि काङ्क्षन्तु दिशश्च राघव ॥ ४३ ॥
अतीव चाश्रुप्रतिपूर्णलोचना समाप्य च स्वस्त्ययनं यथाविधि ।
प्रदक्षिणं चापि चकार राघवं पुनः पुनश्चापि निरीक्ष्य सस्वजे ॥ ४४ ॥
तया हि देव्या च कृतप्रदक्षिणो निपीड्य मातुश्चरणौ पुनः पुनः ।
जगाम सीतानिलयं महायशाः स राघवः प्रज्वलितस्तया श्रिया ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

वाल्मीकेरपि वर्णनीयमयीभावादुवाचेत्युक्तावपि पुनरवददित्युक्तिर्न दोषाय ॥ ४० ॥

गो० टी०—केन प्रकारेणोवाचेत्यत्राह—आनम्येति । आनम्य आनमय्य सिद्धार्थः सिद्धप्रयोजनः गच्छेत्यत्रेतिकरणं द्रष्टव्यम् ॥ ४० ॥

४१ ] ति० टी०—संधितं राजवर्त्मसु प्राप्तराज्यमिति यावत् ॥ ४१ ॥

रा० टी०—अरोगमिति । हे वत्स ! अरोगं नित्यं रोगरहितं सर्वसिद्धार्थं प्राप्तसकलेप्सितमयोध्यामागतं प्राप्तं राजवर्त्मसु संधितमास्थावन्तं त्वां सुखं यथा स्यात्तथा पश्यामि । सार्धश्लोक एकान्वयी ॥ ४१ ॥

गो० टी०—अरोगमिति । सर्वसिद्धार्थं सिद्धसर्वप्रयोजनं पश्यामि द्रक्ष्यामि ॥ ४१ ॥

गो० टी०—प्रणष्टदुष्टसंकल्पेति । प्रणष्टदुःखसंकल्पा- संकल्पः मानसं कर्म वने रामस्य किं भविष्यतीतिचिन्तात्मक इत्यर्थः ॥ ४२ ॥ ४३ ॥

४२-४३ ] ति० टी०—मङ्गलै राजोचितवस्त्राभरणैः वध्वाः सीतायाः संवर्ध संवर्धय । याहि भोः गच्छ भोः । भो इति निपात आमन्त्रणे ॥ ४२ ॥ ४३ ॥

रा० टी०—मङ्गलैरिति । उपसंपन्नः सम्यक् प्राप्तः त्वं याहि अत एव वनवासादिह अयोध्यायामागतः प्राप्तः त्वं मम वध्वाः कामान्संवर्ध अनुदात्तेत्त्वप्रयुक्तात्मनेपदस्यानित्यत्वात्परस्मैपदम् । अर्धद्वयमेकान्वयि ॥ ४२ ॥

रा० टी०—मयेति । हे राघव ! मया अर्चिताः पूजिताः देवगणादयः वनमभिप्रयातस्य ते हितानि काङ्क्षन्तु ॥ ४३ ॥

गो० टी०—मङ्गलैरिति । वध्वाः स्नुषायाः सीतायाः कामान् काम्यमानवस्त्राभरणादीनि ॥ ४४ ॥ ४५ ॥

४४ ] ति० टी०—मात्रा प्रदक्षिणकरणं रक्षार्थम् ॥ ४४ ॥

रा० टी०—अतीवेति । अश्रुप्रतिपूर्णलोचना सा कौशल्या स्वस्त्ययनं यथाविधि समाप्य राघवं रामं प्रदक्षिणं चकार पुनः पुनः निरीक्ष्य सस्वजे च मातृप्रदक्षिणकरणेन पुत्राभीष्टसिद्धिरिति धर्मशास्त्रे प्रसिद्धम् ॥ ४४ ॥

गो० टी०—तदा कौशल्योक्तस्य वाचामगोचरत्वादाह—इतीवेत्यादि । इतीव एवंविधमित्यर्थः प्रदक्षिणमनुकूलं रक्षामिति यावत् ॥ ४६ ॥

४५ ] ति० टी०—निपीड्य नमस्कृत्य । तया श्रिया मातृकृतमङ्गलजशोभया ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०—तयेति । देव्या कौशल्यया कृतप्रदक्षिणः स राघवो रामः मातुश्चरणौ पुनः पुनः निपीड्य तया मातृसेवाजनितया श्रिया शोभया प्रज्वलितः सन् सीतानिलयं जानकीगृहं जगाम ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

गो० टी०—तथेति । निपीड्य निपीडनपूर्वकमभिवाद्येत्यर्थः स्वया स्वतः सिद्धया ॥ ४७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

१ सुस्थितं राजवर्त्मनीति गो. पाठः । २ श्लोकावेतौ गो. अधिकौ । ३ महत्सुरेति गो. पाठः । ४ इतीति गो. पाठः । ५ चैवेति गो. पाठः । ६ निपीड्येति गो. पाठः । ७ तथा स्वेति गो. पाठः । ८ स इति गो. पाठः ।

# षड्विंशः सर्गः ।

अश्रुताभिषेकविघातातो मोदमाना सीता देवताः समभ्यर्च्य यावद्रामागमनं प्रतीक्षते तावद्धताभिषेकत्वाद्दुर्मनस्कं हतकान्ति लज्जावनतमुखं प्राप्तं रामं दृष्ट्वा कुतस्त्वामभिषेकसंभारैश्वर्यादि नोपतिष्ठते कुतश्चेदं दौर्मनस्यमिति सीतया पृष्टो रामो नाभिषेकः किंतु चतुर्दशवत्सरं वनवासः सेव्य इति पित्राज्ञप्तोऽहं वनं प्रविशामि त्वं मे मातुः पितरं यथापूर्वं सेवस्व मासूयेथा भरतशत्रुघ्नौ भ्रातृपुत्रनिर्विशेषं चोपावर्तस्वेति सीतां प्रायूयुजत् ।

अभिवाद्य तु कौसल्यां रामः संप्रस्थितो वनम् । कृतस्वस्त्ययनो मात्रा धर्मिष्ठे वर्त्मनि स्थितः ॥ १ ॥
विराजयन्राजसुतो राजमार्गं नरैर्वृतम् । हृदयान्याममन्थेव जनस्य गुणवत्तया ॥ २ ॥
वैदेही चापि तत्सर्वं न शुश्राव तपस्विनी । तदेव हृदि तस्याश्च यौवराज्याभिषेचनम् ॥ ३ ॥
देवकार्यं स्म सा कृत्वा कृतज्ञा हृष्टचेतना । अभिज्ञा राजधर्माणां राजपुत्री प्रतीक्षति ॥ ४ ॥
प्रविवेशाथ रामस्तु स्ववेश्म सुविभूषितम् । प्रहृष्टजनसंपूर्णं ह्रिया किंचिदवाङ्मुखः ॥ ५ ॥
अथ सीता समुत्पत्य वेपमाना च तं पतिम् । अपश्यच्छोकसंतप्तं चिन्ताव्याकुलितेन्द्रियम् ॥ ६ ॥
तां दृष्ट्वा स हि धर्मात्मा न शशाक मनोगतम् । तं शोकं राघवः सोढुं ततो विवृततां गतः ॥ ७ ॥

१ ] ति० टी०—धर्मिष्ठेऽतिशयेन धर्मवति ॥ १ ॥

रा० टी०—कौशल्यावृत्तमुक्त्वा रामवृत्तान्तं वर्णयन्नाह—अभिवाद्येत्यादिभिः । धर्मिष्ठे वर्त्मनि मार्गे स्थितः रामः कौशल्यामभिवाद्य प्रणम्य वनं संप्रस्थितः आसीदिति शेषः ॥१॥

गो० टी०—एवं मातरमनुमान्य सीतामनुमानयितुं निर्गच्छति—अभिवाद्येत्यादि । श्लोकद्वयमेकं वाक्यम् । वनं संप्रस्थितः वनं गन्तुं प्रवृत्तः धर्मिष्ठे अतिशयितधर्मे आममन्थेव विलोडयामासेत्यर्थः । गुणवत्तया पूर्वभाषी प्रियवादी चेत्याद्युक्तगुणविशिष्टतया ॥ १ ॥ २ ॥

२] ति०टी०—आममन्थ क्षोभयति स्म । तत्र हेतुर्गुणवत्ता ॥२॥

रा० टी०—मार्गवृत्तान्तं वर्णयन्नाह—विराजयन्निति । राजसुतः नित्यराजसुतत्वाक्रान्तः रामः नरैः रामदर्शनाकाङ्क्षिजनैः वृतं राजमार्गं विराजयन् प्रकाशयन् सन् गुणवत्तया समाधिकरहितगुणविशिष्टत्वेन हेतुना जनस्य हृदयानि आममन्थेव ॥ २ ॥

३] ति० टी०—तत्सर्वं वनगमनवृत्तान्तम् । तस्याश्च तस्यास्तु हृदि तदेव यौवराज्याभिषेचनं स्थितमभूदिति शेषः ॥ ३ ॥

रा० टी०—वैदेहीगृहगमनमुपक्रमन्नाह—वैदेहीति । तपस्विनी सर्वविषयकानित्यज्ञानविशिष्टा वैदेही तत्सर्वं तद्वृत्तगमनं शुश्राव तद्वनगमनमेव तस्याः हृदि आसीदिति शेषः अत एव राज्याभिषेचनं हृदि नासीत् ॥ ३ ॥

गो० टी०—वैदेहीति । तत्सर्वमभिषेकविघातादिकं तपस्विनी रामाभिषेकार्थव्रतोपवासादिनियमविशिष्टा यौवराज्याभिषेचनम् वर्तत इति शेषः ॥ ३ ॥

४ ] ति० टी०—देवकार्यं देवपूजाम् । देवकार्यकरणे हेतुः कृतज्ञत्वं राजधर्माभिज्ञत्वं च । देवैरेवं राज्यप्रदानोपकृतत्वेन कृतज्ञतया तत्पूजा ॥ ४ ॥

रा० टी०—देवेति । कृतज्ञा देवादिप्रार्थनावेदित्री हृष्टचेतना राजधर्माणामभिज्ञा तत्त्वज्ञात्री सा वैदेही देवकार्यं सर्वाराधनं कृत्वा राजपुत्रं प्रतीक्षते स्म ॥ ४ ॥

गो० टी०—देवकार्यमिति । देवकार्यं देवपूजाम् कृतज्ञा अभिषिक्तभर्तृविषये पट्टमहिषीभिः गन्धपुष्पादिना कृतपादार्चनादिसमाचारज्ञेत्यर्थः हृष्टचेतना हृष्टमनस्का राजधर्माणामभिज्ञा अभिषिक्तराजासाधारणलक्षणानि श्वेतच्छत्रचामरपुरस्कृतभद्रासनादीनि ज्ञातवती प्रतीक्षते स्म उक्तलक्षणविशिष्टो भर्ता कदा समागमिष्यतीत्यपेक्षया स्थितवतीत्यर्थः ॥ ४ ॥

५ ] ति० टी०—ह्रिया सीतायै कथमिदमन्याय्यं स्वमातापितृकृतं कथयामीति लज्जयावाङ्मुख इव ॥ ५ ॥

रा० टी०—प्रेति । सुविभूषितं प्रहृष्टजनसंपूर्णं प्राप्तानन्दसखीजनविशिष्टं स्ववेश्म स्वकीयं गृहं किंचिद्ध्रिया पित्राथाज्ञापनमन्तरा इमां कथं सह नेष्यामीति लज्जया अवाङ्मुखः न वाक् वचनं यस्मिन्तन्मुखं यस्य स रामः प्रविवेश ॥ ५ ॥

गो० टी०—प्रविवेशेति । ह्रिया गृहालंकारजनप्रहर्षजया ॥५॥

६ ] ति० टी०—वेपमाना भर्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात्कम्पमाना ॥ ६ ॥

रा० टी०—अथेति । अथ रामकर्तृकवचनोच्चारणाभावहेतोः वेपमाना सीता समुत्पत्य सम्यगुत्थाय चिन्ताव्याकुलितेन्द्रियं चिन्तया इमां कथं सह नयामीति विचारेण व्याकुलितानि इन्द्रियाणि यस्य तमत एव शोकसंतप्तमुक्तविचारहेतुकशोकाक्रान्तं पतिमपश्यत् एतेन सीतावियोगासहिष्णुत्वं राघवस्य सूचितम्॥६॥

गो० टी०—अथेति । समुत्पत्य स्वासनादुत्थाय वेपमाना भर्तुर्विगतहर्षत्वावाङ्मुखत्वादिदर्शनात्कम्पमानेत्यर्थः ॥ ६ ॥

७ ] ति० टी०—सोढुं गूढं कर्तुम् । शोकमन्येषां प्राकृतानां शोकजनकं वस्तु शोकरूपकार्याजनकं कर्तुं न शशाक ततस्तदनन्तरं स शोकस्तच्छोकजनकं वस्तु विवृततां प्रकटकार्यत्वं गतः, यद्वा स रामो विवृताभिप्रायं गतः । शुद्धसत्त्व-

१ चेति गो. रा. पाठः । २ स्वयमिति गो. पाठः । ३ पुत्रं प्रतीक्षते इति गो. रा. पाठः । ४ स्वमिति गो. पाठः । ५ स हेति गो. पाठः ।

विवर्णवदनं दृष्ट्वा तं प्रस्विन्नममर्षणम् । आह दुःखाभिसंतप्ता किमिदानीमिदं प्रभो ॥ ८ ॥
अद्य बार्हस्पतः श्रीमान्युक्तः पुष्येण राघव । प्रोच्यते ब्राह्मणैः प्राज्ञैः केन त्वमसि दुर्मनाः ॥ ९ ॥
न ते शतशलाकेन जलफेननिभेन च । आवृतं वदनं वल्गुच्छत्रेणाभिविराजते ॥ १० ॥
व्यजनाभ्यां च मुख्याभ्यां शतपत्रनिभेक्षणम् । चन्द्रहंसप्रकाशाभ्यां वीज्यते न तवाननम् ॥ ११ ॥
वाग्मिनो बन्दिनश्चापि प्रहृष्टास्त्वां नरर्षभ । स्तुवन्तो नाद्य दृश्यन्ते मङ्गलैः सूतमागधाः ॥ १२ ॥
न ते क्षौद्रं च दधि च ब्राह्मणा वेदपारगाः । मूर्ध्नि मूर्धाभिषिक्तस्य दधति स्म विधानतः ॥ १३ ॥
न त्वां प्रकृतयः सर्वाः श्रेणीमुख्याश्च भूषिताः । अनुव्रजितुमिच्छन्ति पौरजानपदास्तदा ॥ १४ ॥

---

भावोऽपि मायाख्यप्रकृत्यवतारसीतासांनिध्याद्रुद्धावक्षेपश्चकिरिव जात इत्यर्थः । अनेन हि नाट्येन प्रियाया अग्रे न किंचित्पुंसो गोप्यमिति लोकव्यवहारो दर्शितः ॥ ७ ॥

रा० टी०—तामिति । धर्मात्मा परमधर्मप्रवर्तको राघवो रामः तां सीतां दृष्ट्वा तं सीतानयनयुक्त्यभावमूलकसंभावितसीतावियोगजनितं शोकं सोढुं न शशाक ततस्तस्माद्धेतोः विवृततां प्रातीतिकवर्णविशेषविशिष्टत्वं गतः प्राप्तः आसीदिति शेषः ॥७॥

गो० टी०—तामिति । ततः सोढुमशक्तत्वादेव विवृततां व्यक्तदुःखताम् एतावत्पर्यन्तं शोकलेशहीनस्य रामस्येदानीं शोकाविर्भावः सीताया भाविदुःखस्मरणेनेति बोध्यम् ॥ ७ ॥

८ ] ति० टी०—प्रस्विन्नं प्राप्तदुःखजस्वेदम् अमर्षणं शोकधारणाक्षममिव । यत्तु सीताया दुःखेन कथमेष कालं नेष्यतीति धिया दुःखित इति विवर्णवदनत्वादिकमिति तदनुचितं, भगवति कथमपि दुःखासंबन्धात्तादृशधियोऽप्यभावाच । 'व्यसनेषु मनुष्याणां भृशं भवति दुःखितः' इत्यादावपि दुःखित इवेत्येवार्थ इति ममाभाति ॥ ८ ॥

रा० टी०—रामाभिप्रायविज्ञानहेतुकं सीताप्रश्नं वर्णयन्नाह—विवर्णेति । अमर्षणं वियोगदुःखासहिष्णुं तं रामं दृष्ट्वा दुःखाभिसंतप्ता चेष्टालक्षिततद्दुःखजनितदुःखेनाभिसंतप्ता सीता आह । तद्वचनमेवाह हे प्रभो ! इदानीमिदं वैवर्ण्यादिकं किं कथम् ॥ ८ ॥

गो० टी०—विवर्णवदनमिति । प्रस्विन्नं हस्तगतराज्यस्यान्यगामित्वं स्ववनप्रव्राजनं च कथमस्यै निवेदयिष्यामीति शोकेन प्रस्वेदः अमर्षणं संजातदुःखं नियन्तुमशक्तम् इदानीं हर्षकाले इदं दौस्थ्यम् ॥ ८ ॥

९ ] ति० टी०—बार्हस्पतो बृहस्पतिदेवताकः युक्तः चन्द्रेणेति शेषः । युक्तस्तेन पुष्येणाभिषेक इति ब्राह्मणैः प्रोच्यते इत्यन्वयः तज्जन्यसंतोषं विहाय दुर्मनाः केनासि ॥ ९ ॥

रा० टी०—अद्येति । हे राघव ! अद्येदानीं बार्हस्पतः बृहस्पतिदेवताकः श्रीमान् कर्मारम्भकर्तॄणां सकलसमृद्धिप्रापकः अत एव युक्तः अभिषेकयोग्यः पुष्यः प्राज्ञैर्ब्राह्मणैः प्रोच्यते कथ्यते हर्षकालोऽयमिति तात्पर्यम् त्वं तु केन हेतुना दुर्मना असि ॥ ९ ॥

गो० टी०—अद्येति । बार्हस्पतः बृहस्पतिदैवत्यः उक्तः अभिषेकार्हत्वेन विहितः 'युक्तः' इतिपाठे अभिषेकार्हः श्रीमान् कर्मारम्भवतां श्रीकरः पुष्यः पुष्यनक्षत्रम् अद्येतिब्राह्मणैः प्रोच्यते तु प्रोच्यते खल्वित्यर्थः । अन्विति छित्वा अनुप्रोच्यत इति वा संबन्धः ॥ ९ ॥

१० ]ति० टी०—शतं शलाका यस्मिंश्छत्रे तेन छत्रेणावृतः सन्नभिविराजत इति योजना । वल्गु सुन्दरम् ॥ १० ॥

रा० टी०—नेति । शतशलाकेन शलाकाशतविशिष्टेन जलफेननिभेन जलवृत्तिफेनसदृशेन सादृश्यं च श्वेतत्वेन छत्रेण आवृतं वल्गु सुन्दरं वदनं न विराजते अत्र हेतुं वदेति तात्पर्यम् एवमुत्तरेष्वपि तात्पर्यं बोध्यम् ॥ १० ॥

गो० टी०—नेति । शतं शलाका यस्य तेन स्थलस्थत्वेन मालिन्यं व्यावर्तयितुं जलपदम् वल्गु सुन्दरम् आवृतं सत् विराजत इति संबन्धः ॥ १० ॥

११-१२ ] ति० टी०—व्यजनाभ्यां वालव्यजनाभ्याम् । शतपत्रं पद्मं तत्समेक्षणम् ॥ ११ ॥ १२ ॥

रा०टी०—व्यजनाभ्यामिति । चन्द्रहंसप्रकाशाभ्यां मुख्याभ्यां च चक्रवर्तिमात्रवृत्तिभ्यां व्यजनाभ्यां चामराभ्यामित्यर्थः शतपत्रनिभे कमलसदृशे ईक्षणे नेत्रे यस्मिंस्तत्तवाननं न वीज्यते ११

गो० टी०—व्यजनाभ्यामिति । व्यजनाभ्यां वालव्यजनाभ्यां शतपत्रं पद्मम् ॥ ११ ॥

रा० टी०—वाग्मिन इति । वाग्मिनः चतुराः ॥ १२ ॥

गो० टी०—वाग्मिन इति । बन्दिनः स्तुतिपाठकाः । 'बन्दिनः स्तुतिपाठकाः' इत्यमरः मङ्गलैः मङ्गलवचनैः सूताः पुरावृत्तकथाशंसिनः मागधाः वंशशंसकाः ॥ १२ ॥

१३ ] ति० टी०—क्षौद्रं च दधि च तीर्थोदकमिश्रितमिति शेषः । मूर्धाभिषिक्तस्य शिरःस्नातस्य ॥ १३ ॥

रा० टी०—नेति । क्षौद्रं मधुमूर्धाभिषिक्तस्य कृतशिरःस्नानस्य तव मूर्ध्नि विधानतो न दधति स्म ॥ १३ ॥

गो० टी०—नेति । क्षौद्रं मधु मूर्ध्नि न दधति स्म नाभिषिञ्चन्ति स्मेत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—श्रेणीमुख्याः परिषन्मुख्याः, सर्वत्र तत्कृत इति शेषः ॥ १४ ॥

---

१ पुष्योऽन्विति गो. रा. पाठः । २ अपीति रा. पाठः । ३ नात्रेति गो.पाठः । ४ दधतीति गो. पाठः । ५ तथेति गो. रा.पाठः । ६ नेष्यतीति युक्तं भाति ।

चतुर्भिर्वेगसंपन्नैर्हयैः काञ्चनभूषणैः । मुख्यः पुष्परथो युक्तः किं न गच्छति तेऽग्रतः ॥ १५ ॥
न हस्ती चाग्रतः श्रीमान्सर्वलक्षणपूजितः । प्रयाणे लक्ष्यते वीर कृष्णमेघगिरिप्रभः ॥ १६ ॥
न च काञ्चनचित्रं ते पश्यामि प्रियदर्शन । भद्रासनं पुरस्कृत्य यान्तं वीर पुरःसरम् ॥ १७ ॥
अभिषेको यदा सज्जः किमिदानीमिदं तव । अपूर्वो मुखवर्णश्च न प्रहर्षश्च लक्ष्यते ॥ १८ ॥
इतीव विलपन्तीं तां प्रोवाच रघुनन्दनः । सीते तत्रभवांस्तातः प्रव्राजयति मां वनम् ॥ १९ ॥
कुले महति संभूते धर्मज्ञे धर्मचारिणि । शृणु जानकि येनेदं क्रमेणाद्यागतं मम ॥ २० ॥
राज्ञा सत्यप्रतिज्ञेन पित्रा दशरथेन वै । कैकेय्यै मम मात्रे तु पुरा दत्तौ महावरौ ॥ २१ ॥
तयाद्य मम सज्जेऽस्मिन्नभिषेके नृपोद्यते । प्रचोदितः स समयो धर्मेण प्रतिनिर्जितः ॥ २२ ॥

---

रा० टी०—न त्वामिति । श्रेणीमुख्याः परिषत्प्रधानाः पौरजानपदाः प्रकृतयः प्रजाः ॥ १४ ॥

गो० टी०—नेति । प्रकृतयः अमात्यादयः श्रेणीमुख्याः वीथीप्रधानाः ॥ १४ ॥

१५ ] ति० टी०—पुष्परथो लीलागमनप्रयोजनो रथः न तु युद्धार्ह इत्यर्थः । तादृग्रथो निर्जिगमिषो राज्ञोऽग्रे भवति तस्मिन्सत्यामिच्छायामारोहति नो चेदग्रतो गच्छति ॥ १५ ॥

रा० टी०—चतुर्भिरिति । वेगसंपन्नैः अतिवेगविशिष्टैः हयैर्युक्तः मुख्यः श्रेष्ठः पुष्परथः प्रचुरपुष्पभूषितरथविशेषः किं न गच्छति ॥ १५ ॥

गो० टी०—चतुर्भिरिति । पुष्यरथः उत्सवाय कल्पितो रथ इत्यर्थः । 'असौ पुष्यरथश्चक्रयानं न समराय यत्' इत्यमरः । स हि राज्ञामग्रतो नीयते केवलं संभ्रमाय ॥ १५ ॥

१६ ] ति० टी०—हस्ती कृष्णमेघप्रभो गिरिप्रभश्च ॥ १६ ॥

रा० टी०—नेति । सर्वलक्षणपूजितः सर्वसल्लक्षणसंपन्नः कृष्णमेघगिरिप्रभः कृष्णमेघकृष्णगिर्युभयसदृशः श्रीमान् सर्वसंपत्तिहेतुः हस्ती प्रयाणे न लक्ष्यते ॥ १६ ॥

गो० टी०—नेति । कृष्णमेघगिरिप्रभः कृष्णमेघयुक्तगिरिप्रभः उभयोरुपमानत्वे वैषम्यापात्तिः ॥ १६ ॥

१७ ] ति० टी०—भद्रासनं पुरस्कृत्य पूजायुक्तं यथा भवति तथा गृहीत्वा यान्तं ते पुरःसरमग्रगं सेवकं न पश्यामि ॥ १७ ॥

रा० टी०—नचेति । काञ्चनचित्रं स्वर्णमयचित्रविशिष्टं भद्रासनं कल्याणहेतुभूतासनविशेषं पुरस्कृत्य हस्ताग्रे धृत्वा यान्तं पुरस्सरं भृत्यविशेषं न पश्यामि ॥ १७ ॥

गो० टी०—न च काञ्चनचित्रमिति । वीरपुरस्कृतं भद्रासनं पुरस्कृत्य ते यातं गमनं न पश्यामीत्यन्वयः ॥ १७ ॥

१८ ] ति० टी०—यदाभिषेकः सज्ज इदानीं तस्मिन्नेवैतस्मिन्वर्तमानकाल उक्तराजचिह्नाभावो मुखवर्णश्चापूर्वः कदाप्यनड्भूतो हर्षकाले हर्षाभावश्चेतीदं किमित्यर्थः ॥ १८ ॥

रा० टी०—अभिषेक इति । तवाभिषेको यथा यथावदिदानीमसज्जः न सज्जते प्रसङ्गं न प्राप्नोतीत्यर्थः । इदं यथावत्प्रसङ्गाप्रापणं किं किमर्थमित्यर्थः ॥ १८ ॥

गो० टी०—अभिषेक इति । यथा अभिषेकः सज्जः सन्नद्धः इदानीं तथैवेत्यर्थः तवापूर्वो मुखवर्णो दृश्यते प्रहर्षश्च न लक्ष्यते किमिदमिति संबन्धः ॥ १८ ॥

१९ ] ति० टी०—विलपन्तीं दुःखेन भाषमाणाम् । तत्रभवान्पूज्यः । तातो दशरथः।अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ॥१९॥

रा० टी०—इतीवेति । इतीव अनेन प्रकारेण विलपन्तीं विविधपृच्छन्तीं तां सीतां रघुनन्दनः प्रोवाच । तद्वचनमेवाह—हे सीते ! तत्रभवान् पूज्यस्तातः पिता मां वनं प्रव्राजयति । अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ इति हलायुधे स्पष्टम् ॥ १९ ॥

गो० टी०—इतीति । विलपन्तीं विविधं लपन्तीं तत्रभवान् पूज्यः 'तत्रभवानत्रभवानितिशब्दो वृद्धैः प्रयुज्यते पूज्ये' इति हलायुधः । प्रव्राजयतीत्यनन्तरमितीति शेषः ॥ १९ ॥

२०-२१] ति० टी०—उत्कटाप्रियश्रवणेन सीताया अत्यन्तमोहो मा भूदिति विविधगुणकीर्तनेन संबोधयति--कुले इत्यादि। येन क्रमेण हेतुनेदं प्रव्राजनमागतं तच्छृणु ॥ २० ॥ २१ ॥

रा० टी०—प्रव्राजनमेव सकारणमाह—कुले इत्यादिभिः । येन हेतुना अद्य मम आगतमिहागमनं तत्क्रमेण शृणु । गतं तिरश्चीनमनूरुसारथेरितिवत् षष्ठी ॥ २० ॥

रा० टी०—राज्ञेति । महावरौ वरे महत्त्वं स्वनिवार्यत्वेन ॥ २१ ॥

गो० टी०—महतो प्रियस्य श्रवणे सीतायाः किं भविष्यतीति भयात् चित्तदार्ढ्यार्थं विविधगुणकीर्तनेन संबोधयति—कुल इत्यादि । इदं प्रव्राजनम् येन क्रमेण येन मार्गेण ॥ २० ॥ २१ ॥

२२ ] ति० टी०—नृपेणोद्यते प्रस्ताविते ममाभिषेके सज्जे सति तयाद्य स समयः प्राचीनो वरसंकेतः प्रचोदितः प्रवर्तितः । तेन प्रवर्तनेन राजा धर्मेण धर्ममार्गेण प्रतिनिर्जितः स्ववशः कृतः ॥ २२ ॥

रा० टी०—तयेति । नृपस्य उद्यतः उद्योगो यस्मिन् तस्मिन्नभिषेके सज्जे प्रसक्ते सति स समयः समयेन त्वयाचितमवश्यं दास्यामीति शपथेन सहितः धर्मेण प्रतिनिर्जितः धर्मवशीभूतः-अतिधर्मनिष्ठ इत्यर्थः मम पिता तया लब्धव-

---

१ भूषितैरिति गो. पाठः । २ पुष्यरथ इति गो. रा. पाठः । ३ तवेति गो. पाठः । ४ यातमिति गो. पाठः । ५ कृतमिति गो. पाठः । ६ यथेति गो. रा. पाठः । ७ अभ्यागतमिति गो. पाठः ।

चतुर्दश हि वर्षाणि वस्तव्यं दण्डके मया । पित्रा मे भरतश्चापि यौवराज्ये नियोजितः ॥ २३ ॥
सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् । भरतस्य समीपे [1]ते नाहं कत्थ्यः कदाचन ॥ २४ ॥
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् । तस्मान्न ते गुणाः कत्थ्या भरतस्याग्रतो मम ॥ २५ ॥
[2]अहं ते नानुवक्तव्यो विशेषेण कदाचन । अनुकूलतया शक्यं समीपे [3]तस्य वर्तितुम् ॥ २६ ॥
तस्मै दत्तं नृपतिना यौवराज्यं सनातनम् । स प्रसाद्यस्त्वया सीते नृपतिश्च विशेषतः ॥ २७ ॥
अहं चापि प्रतिज्ञां तां गुरोः समनुपालयन् । वनमद्यैव यास्यामि [4]स्थिरीभव [5]मनस्विनि ॥ २८ ॥
याते च मयि कल्याणि वनं मुनिनिषेवितम् । व्रतोपवासपरया भवितव्यं त्वयानघे ॥ २९ ॥

रया केकय्या प्रचोदितः प्रार्थित इत्यर्थः । आसीदिति शेषः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः ॥ २२ ॥

गो० टी०—तयेति । अथ नृपोयते ममाभिषेक सज्जे सति प्रचोदितः पूर्वदत्तं वरद्वयं देहीति प्रकर्षेण प्रेरितः ससमयः त्वदपेक्षितं करिष्यामीति कृतशपथ इत्यर्थः । 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । धर्मेण प्रतिनिर्जितः कर्तृभूतधर्मेण स्वायत्तीकृत इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०—अस्तु प्रकृते किं तत्राह—चतुर्दशेत्यादि । पित्रा वरनिर्जितपितृनियोगेनाद्यवरपालनरूपेण भरतश्च द्वितीयवरपालनरूपपितृनियोगेन यौवराज्ये नियोजितः मयेति शेषः । ज्येष्ठाज्ञां विना तस्य तल्लाभासंभवात् ॥ २३ ॥

रा० टी०—तत्प्रार्थनमेवाह—चतुर्दशेति । यौवराज्ये यौवराज्यसदृशे पालने इत्यर्थः ॥ २३ ॥

गो० टी०—ततः किमित्यत्राह—चतुर्दशेति । मया पितृचोदितेनेत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—अथ सीताया गृहेऽवस्थितौ सुखजनकबुद्धिरुपदिश्यते—भरतस्येत्यादिना । न कत्थ्यो न श्लाघनीयः ॥ २४ ॥

रा० टी०—स इति । विजनं सज्जनसहितं वनं प्रस्थितः सः पित्राज्ञप्तोऽहं त्वां द्रष्टुमागतः तेन मत्प्रव्रजनेन हेतुना भरतस्य समीपे कदाचन समयेऽहं कथ्यः श्लाघनीयः मद्गुणवर्णनं कर्तव्यमित्यर्थः । तेन मद्वियोगजनितातिदुःखं भरतस्य न भविष्यतीति सूचितं तेन रामगुणानां सर्वतापशामकत्वं व्यञ्जितम् ॥ २४ ॥

गो० टी०—सीताहृदयं ज्ञातुं बुद्ध्युपदेशव्यपदेशेन प्रणयरोषमुत्पादयन्नाह—भरतस्येति । त्वया न कथ्यः न श्लाघनीयः त्वत्प्रणामागमनदशायामिति शेषः ॥ २४ ॥ २५ ॥

२५ ] ति० टी०—ते प्रसिद्धा मम गुणाः ॥ २५ ॥

रा० टी०—ननु प्राप्ताधिकारत्वाद्भरतोऽपि प्रशंसनीय इत्यत आह—ऋद्धीति । मम ऋद्धियुक्ताः मत्प्रसादप्राप्तैश्वर्याः पुरुषाः परस्तवं स्वकीयातिस्तुतिं न सहन्ते तस्माद्धेतोर्भरतस्य गुणाः अग्रतः भरतसमीपे न कत्थ्याः न श्लाघनीयाः ॥ २५ ॥

२६ ] ति० टी०—'अहं ते नानुवक्तव्यो विशेषेण कदाचन' इति प्राचीनः पाठः कतकेन दर्शितः । अहमस्मत्स्वरूपं ते त्वया विशेषेण विशिष्य कदाचन कदापि नानुवक्तव्यः सखीभिर्वार्ताप्रसङ्ग इति शेषः । भरतस्याग्रत इत्यनुकर्षः । तत्र हेतुः—अनुकूलतयेति । मत्स्वरूपवर्णनं च तस्य प्रतिकूलमिति भावः । 'नापि त्वं तेन भर्तव्या विशेषेण कदाचन' इत्याधुनिकपाठस्तु न तथा चमत्कारी विशेषेण न भर्तव्या किंतु बन्धुसाधारण्येनेत्यर्थेऽनुकूलतयेत्युत्तरार्धस्य तथोपयोगाभावात् ॥ २६ ॥

रा० टी०—अहमिति । तेन पूर्वोक्तहेतुना कदाचन भरतागमनसमये अहं विशेषेण सर्वविशिष्टत्वेन रूपेण अनुवक्तव्यः कथनीयः तस्य प्रतिकूलं नाचरणीयमित्याह—तस्य भरतस्य समीपे अनुकूलतया वर्तितुं शक्यं त्वयेति शेषः । 'अहं ते नानुवक्तव्यो विशेषेण कदाचन' इति प्राचीनः पाठः कतकेन दर्शित इति भट्टाः ॥ २६ ॥

गो० टी०—नेति । तेन भरतेन विशेषेण भर्तव्या बन्धुसाधारण्येन भरणीयेत्यर्थः अशनादिभरणं लक्ष्मणशत्रुघ्नभार्याभ्यां विशेषेण न काङ्क्षणीयमिति भावः । अनुकूलतया स्वजनसाधारणतया शक्यं योग्यम् ॥ २६ ॥

२७–२८ ] ति० टी०—तदनुकूलाचरणं किमर्थमत आह—तस्मा इति । नृपतिना दशरथेन स त्वया विशेषतः प्रसाद्यः । चो हेतौ यतो नृपतिः ॥ २७ ॥ २८ ॥

रा० टी०—अनुकूलवर्तने हेतुं वदन्नाह—तस्मै इति । तस्मै भरताय यौवराज्यं यौवराज्यसदृशं सः यौवराज्यसदृशप्रदाता २७॥

गो० टी०—तदनुकूलाचरणं किमर्थमित्यत आह—तस्मा इति । नृपतिना दशरथेन ॥ २७ ॥

रा० टी०—अहमिति । स्थिरीभव मद्वियोगहेतुकानवस्थितिं न प्राप्नुहीत्यर्थः ॥ २८ ॥

गो० टी०—अहमिति । गुरोः दशरथस्य स्थिरा भव मयि स्थिरानुरागा भवेत्यर्थः । तत्र हेतुः मनस्विनीति दृढमनस्केत्यर्थः ॥ २८ ॥ २९ ॥

२९ ] ति० टी०—याते गते ॥ २९ ॥

रा० टी०—यात इति । याते गते सति ॥ २९ ॥

१ त्विति गो. पाठः । २ नापि त्वं तेन भर्तव्येति गो. पाठः । ३ त्वस्येति गो. पाठः । ४ स्थिरेति गो. पाठः । ५ मनस्विनी इति गो. पाठः ।

कल्यमुत्थाय देवानां कृत्वा पूजां यथाविधि । वन्दितव्यो दशरथः पिता मम जनेश्वरः ॥ ३० ॥
माता च मम कौसल्या वृद्धा संतापकर्शिता । धर्ममेवाग्रतः कृत्वा त्वत्तः संमानमर्हति ॥ ३१ ॥
वन्दितव्याश्च ते नित्यं याः शेषा मम मातरः । स्नेहप्रणयसंभोगैः समा हि मम मातरः ॥ ३२ ॥
भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशेषतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम ॥ ३३ ॥
विप्रियं च न कर्तव्यं भरतस्य कदाचन । स हि राजा च वैदेहि देशस्य च कुलस्य च ॥ ३४ ॥
आराधिता हि शीलेन प्रयत्नैश्चोपसेविताः । राजानः संप्रसीदन्ति प्रकुप्यन्ति विपर्यये ॥ ३५ ॥
औरस्यानपि पुत्रान्हि त्यजन्त्यहितकारिणः । समर्थान्संप्रगृह्णन्ति जनानपि नराधिपाः ॥ ३६ ॥
सा त्वं वसेह कल्याणि राज्ञः समनुवर्तिनी । भरतस्य रता धर्मे सत्यव्रतपरायणा ॥ ३७ ॥
अहं गमिष्यामि महावनं प्रिये त्वया हि वस्तव्यमिहैव भामिनि ।
यथा व्यलीकं कुरुषे न कस्यचित्तथा त्वया कार्यमिदं वचो मम ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षड्विंशः सर्गः ॥ २६ ॥

---

३० ] ति० टी०—कल्यमुषसि ॥ ३० ॥

रा० टी०—कल्यमिति । कल्यं प्रातः नरेश्वरो राजा ॥ ३० ॥

गो० टी०—काल्यमिति । काल्यम् अहर्मुखे 'प्रत्यूषोऽहर्मुखं काल्यम्' इत्यमरः ॥ ३० ॥

३१ ] ति० टी०—त्वयि गते त्वन्मातुर्नमस्कारेण किं फलं सति तु स्वप्रातिकूल्याकरणे तत्फलमिति चेत्तत्राह—धर्ममेवाग्रतः कृत्वा धर्म एव तत्फलं मुख्यं बुद्धौ कृत्वा तत्संमानः कार्य इति भावः ॥ ३१ ॥

रा० टी०—मातेति । वृद्धा ज्ञानवयोभ्यामधिका संतापकर्षिता मद्वियोगहेतुकसंतापं प्राप्ता धर्ममेवाग्रतः कृत्वा अनुसृत्येत्यर्थः सन्मानं सत्कृतिम् ॥ ३१ ॥

गो० टी०—मातेति । धर्ममेवाग्रतः कृत्वा स्थिताया इति शेषः ॥ ३१ ॥

३२ ] ति० टी०—स्नेहेन मातृत्वप्रयुक्तेन । प्रणयेन प्रकृष्टः स्नेहः प्रणयः । संभोगः सेवा अन्नपानादिविशेषप्रदानम् ॥ ३२ ॥

रा० टी०—वन्दितव्या इति । शेषाः कौसल्यातिरिक्ताः वन्दितव्याः । तत्र हेतुः मम स्नेहप्रणयसंभोगैः स्नेहः अतिप्रीतिः प्रणयोऽतिसौहार्दं भोगः पालनं तैः समाः कौसल्यासदृश्यः 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च । भोगे राजधने सौख्ये पालनाभ्यवहारयोः' इति वैजयन्ती ॥ ३२ ॥

गो० टी०—वन्दितव्या इति । स्नेहः प्रीतिः प्रणयः सौहृदम् 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च' इति वैजयन्ती । भोगः पालनम् 'भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः' इति वैजयन्ती । मयि स्नेहादित्रयमविशेषेण कुर्वन्ति अतस्तास्तुल्यतया वन्द्या इति भावः ॥ ३२ ॥

३३–३४ ] ति० टी०—भ्रात्रा पुत्रेण च समौ प्राणैः प्राणेभ्यः प्रियतरौ ॥ ३३ ॥ ३४ ॥

रा० टी०—भ्रात्रिति । मम प्राणैः प्रियतरौ भरतशत्रुघ्नौ भ्रातृपुत्रसमौ त्वया द्रष्टव्यौ ॥ ३३ ॥

गो० टी०—भ्रातृपुत्रसमाविति । भ्रातृपुत्रसमौ भ्रात्रा पुत्रेण च समौ प्राणैः प्राणेभ्यः ॥ ३३ ॥

रा० टी०—विप्रियमिति । विप्रियं विरुद्धं नैव कर्तव्यम् । तत्र हेतुः राजा च पालकत्वेन राजसदृशः । च इवार्थे ॥ ३४ ॥

गो० टी०—विप्रियमिति । राजत्वेऽप्यप्रभुत्वमनियन्तृत्वं कस्यचित्संभवतीति तद्व्यावृत्त्यर्थं प्रभुरित्युक्तम् । देशपतेरकुलपतित्वदर्शनादाह—देशस्य च कुलस्य चेति ॥ ३४ ॥

३५ ] ति० टी०—विपर्यये शीलादिविपर्यये ॥ ३५ ॥

रा० टी०—जानकीसमीपवर्तिजनान्शिक्षयन्नाह—आराधिता इति । शीलेन तदनुकूलस्वाचरणेन आराधिताः स्वेप्सितधर्मपालकत्वसिद्धिं प्राप्ताः प्रयत्नैः तदपेक्षितसाधकव्यापारैः उपसेविताः तद्व्यापारजनितसुखं प्राप्ताः राजानः संप्रसीदन्ति ॥ ३५ ॥

गो० टी०—आराधिता इति । शीलेन अकुटिलतया प्रयत्नैः आलस्यत्यागादिभिः विपर्यये शीलाद्यभावे ॥ ३५ ॥

३६–३७ ] ति० टी०—जनान्प्राकृतान् संबन्धलेशहीनानिति यावत् ॥ ३६ ॥ ३७ ॥

रा० टी०—राजधर्ममाह—औरसानिति । अहितकारिणः पुत्रानपि त्यजन्ति जनान् संबन्धशून्यजन्तूनपि समर्थाननुकूलकारिणः संप्रगृह्णन्ति स्वीकुर्वन्ति ॥ ३६ ॥

गो० टी०—औरसानिति । जनान् अबन्धून् ॥ ३६ ॥

रा० टी०—सेति । धर्मे प्रजापालने रता प्रीता भरतस्य समनुवर्तिनी अनुकूला त्वमिहायोध्यायां राज्ञो दशरथस्य समीपे वसे ॥ ३६ ॥

गो० टी०—सा त्वमिति । सत्यव्रतम् अमोघव्रतम् ॥ ३७ ॥

३८ ] ति० टी०—यथा कस्यचिन्मद्वचसो व्यलीकं व्य-

---

१ काल्यमिति गो. पाठः । २ नरेश्वर इति गो. रा. पाठः । ३ कर्षितेति रा. पाठः । ४ सन्मानमिति रा. पाठः । ५ ता इति रा. पाठः । ६ प्रभुश्चेवेति गो. पाठः । ७ औरसानिति गो. रा. पाठः ।

## सप्तविंशः सर्गः ।

रामेण पित्रादिसेवार्थमनुशिष्टा सीता कृतप्रणयकोपापि तद्वचसो जनापहास्यत्वं प्रदर्श्य त्वन्निर्वासनेन सिद्धमेव मन्निर्वासनमपि चासौ हस्ते मे वियोगोऽस्तौ मां सहैव नयेति तं प्रार्थयामास ।

एवमुक्ता तु वैदेही प्रियार्हा प्रियवादिनी । प्रणयादेव संक्रुद्धा भर्तारमिदमब्रवीत् ॥ १ ॥
किमिदं भाषसे राम वाक्यं लघुतया ध्रुवम् । त्वया यदपहास्यं मे श्रुत्वा नरवरोत्तम ॥ २ ॥
वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप । अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम् ॥ ३ ॥
आर्यपुत्र पिता माता भ्राता पुत्रस्तथा स्नुषा । स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥ ४ ॥

---

र्लीकत्वमनृतत्वं न कुरुषे तथेदमपि मे वचः कार्यम् अनुष्ठेयमित्यर्थः । वचसोऽनृतत्वकरणं चाननुष्ठाने भवति ॥ ३८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०—ननु त्वया सहैव गमिष्यामीत्यत आह—अहमिति। हे प्रिये ! अहं महावनं गमिष्यामि वने मद्धत्वं त्वद्गमनायोग्यत्वेन अतस्त्वया इहैव वस्तव्यम् । इह वासे हेत्वन्तरमपीत्याह—यथा येन प्रकारेण व्यलीकमप्रियं कस्यचिन्मत्पित्रादेः न कुरुषे तथैव त्वया कार्यम् सदैवेति शेषः । इदं मम वचः उक्तिः एतेन त्वद्गमने मत्पित्रादीनां दुःखाधिक्यं भविष्यतीति सूचितं तेन स्वकर्तृकगमनमनुचितमिति सूचितम् ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षड्विंशः सर्गः ॥ २६ ॥

गो० टी०—अहमिति । व्यलीकम् अप्रियं कस्यचिदपि जनस्य यथा व्यलीकं न कुरुषे तथा त्वया वर्तितव्यम् इदं मम वचश्च कार्यम् अत्रैव स्थातव्यमिति मम वचश्च कार्यमिति यद्वा यथा कस्यचिदपि व्यलीकं न कुरुषे तथा इदमपि मम वचस्त्वया कार्यमित्यर्थः ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

---

१] ति० टी०—एवं रामेण गृहवासे नियुक्ता ममापि वनवास एव धर्मतो न्यायप्राप्त इति सीताह—एवमित्यादि । प्रणयात्स्नेहादेव संक्रुद्धा कथं मम पृथक्स्थितिमादिशतीत्यमर्षवती ॥१॥

रा० टी०—रामवचनश्रवणानन्तरकालिकं जानकीवृत्तं वर्णयितुमाह—एवमिति । प्रणयात्स्नेहादेव हेतो संक्रुद्धा स्नेहकारणफलककोपवती वैदेही इदमब्रवीत् ॥ १ ॥

गो० टी०—एवं रामायणपुरुषेषु रामकर्तव्यं सामान्यधर्मानुष्ठानं दर्शितम् अथ सीतानुष्ठेयं पातिव्रत्यधर्मं संक्षेपेणोपदिशति—एवमुक्तेत्यादि । अप्रियवादिन्यपि प्रियार्हा प्रियभाषणार्हा तदुपरि प्रियवादिनी तथाप्येवमुक्ता अप्रियमुक्ता प्रणयादेव सौहृदादेव न तु वैरात् संक्रुद्धा ॥ १ ॥

२ ] ति० टी०—स एवामर्षो दर्श्यते—किमिति । लघुतया मयि लघुत्वाज्ञानेनेदं किं भाषसे । किं च हे नरवरोत्तम ! त्वया यदुक्तं तच्छ्रुत्वा मे ममापहास्यमतिशयितो हासो जायते ॥ २ ॥

रा० टी०—तद्वचनमेवाह—किमिति । हे नरवरोत्तम राम ! यत् श्रुत्वा त्वया वक्त्रा सह मे अपहास्यमपहासास्पदं मे लघुतया विशिष्टं मल्लघुताफलकमित्यर्थः अत एव अध्रुवमनिश्चितं यद्वाक्यं तदिदं त्वं किं किमर्थं भाषसे एतेनैवं न वक्तव्यमिति सूचितम् ॥ २ ॥

गो० टी०—किमिति । हे राम ! त्वया लघुतया ध्रुवं निश्चितम् अत्यन्तनिःसारमित्यर्थः । 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु' इत्यमरः । लघुत्वमेवाह—यदिति । यद्वाक्यं श्रुत्वा मे स्त्रिया अपि अपहास्यं भवति तद्वाक्यं भाषसे किमिदम् अयमपूर्वप्रकारः इतः पूर्वं न दृष्टचरः नरवरात्मजे[1]त्यनेनास्यासंभावितत्वमुच्यते त्वामिह स्थाप्य वनं गमिष्यामीत्येतद्वचनमेतावत्पर्यन्तमनुसृतायाः प्रणयधारायाः पन्थानं नारोहतीति भावः ॥ २ ॥

३ ] ति० टी०—यत्त्वयेरितं तद्वीराणामनर्हमयशस्यं च अतो न श्रोतव्यं श्रोतुमयोग्यम् ॥ ३ ॥

रा० टी०—वीराणामिति । त्वयेरितमिदानीं कथितं राजपुत्राणामनर्हमयोग्यमत एव अयशस्यं यशोनिवर्तकमित्यर्थः अत एव न श्रोतव्यम् ॥ ३ ॥

४ ] ति० टी०—कुत एवं तत्राह—आर्यपुत्रेत्यादि । पित्रादयः स्वानि पुण्यानि स्वस्य कर्मफलानि भुञ्जानाः स्वं स्वं भाग्यं स्वानुष्ठितं कर्मैवोपासत उपजीवन्ति न पुत्राद्यनुष्ठितम् । तत्र तेषां सहाधिकाराभावात् ॥ ४ ॥

रा० टी०—वचनस्यानर्हत्वं साधयन्ती आह—आर्येत्यादिभिः । हे आर्यपुत्र ! पित्रादयः स्वानि पुण्यानि कर्मफलानि भुञ्जानाः सन्तः स्वं स्वं भाग्यं कर्म उपासते कुर्वते ॥ ४ ॥

गो० टी०—कथं मम वाक्यस्य परिहासास्पदत्वमित्यत्राह—आर्यपुत्रेति । भर्तारं प्रति भार्यायाः संबोधनमार्यपुत्रेति भर्तृसंबन्धि पित्रादयः स्वानि पुण्यानि स्वकृतपुण्यफलानि एतत् पापफलस्याप्युपलक्षणं भुञ्जानाः अनुभवन्तः स्वं स्वं स्वस्यैव फलप्रदं भाग्यं शुभाशुभं कर्म उपासते आचरन्ति 'भाग्यं कर्म शुभाशुभम्' इत्यमरः ॥ ३ ॥

---

१ वरात्मजेति गो० पाठः ।

भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ । अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥ ५ ॥
न पिता नात्मजो वात्मा न माता न सखीजनः । इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥ ६ ॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव । अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥ ७ ॥
ईर्ष्यां रोषं बहिष्कृत्य भुक्तशेषमिवोदकम् । नय मां वीर विस्रब्धः पापं मयि न विद्यते ॥ ८ ॥
प्रासादाग्रे विमानैर्वा वैहायसगतेन वा । सर्वावस्थागता भर्तुः पादच्छाया विशिष्यते ॥ ९ ॥

५ ] ति० टी०–एका नारी तु भर्त्रा सहाधिकाराद्भर्तुर्भाग्यं भर्त्रनुष्ठितं कर्मफलं प्राप्नोति अतस्तव वनवासादेशेनैव त्वत्पितृभ्यां सर्वकर्मणि सहाधिकारादहमपि वने वस्तव्यामित्यादिष्टैव । तथैव ममापि गुरुत्वात्स आदेशोऽउल्लङ्घ्य एवेति भावः ॥ ५ ॥

रा० टी०–भर्तुरिति । हे पुरुषर्षभ ! एका केवलं नारी तु भर्तुः भाग्यं भर्तृकृतकर्मफलं प्राप्नोति भुङ्क्ते अतः भर्तृकृतकर्मफलभोक्त्रीत्वाद्धेतोः अहमपि आदिष्टा त्वत्कर्मकाज्ञापनेनैवाज्ञप्ता इति हेतोः मयापि वने वस्तव्यं मयेत्यध्याहृतम् । एतेन पित्राद्यनाज्ञप्तामिमां कथं नेष्यामीति संकोचस्त्वया न कार्य इति ध्वनितम् एतेन मयापि तदाज्ञा नोल्लङ्घनीयेति सूचितम् ॥५॥

गो० टी०–पूर्वोक्ताः सर्वे स्वकीयकर्मफलान्यनुभवन्ति भर्तुरर्धशरीरभूता भार्या भर्तृकृतभाग्यफलमेवानुभवतीत्याह–भर्तुरिति । भार्यैका भार्यैव तु भर्तुर्भाग्यं प्राप्नोति सहाधिकृतत्वात् यस्मादेवं तस्मादेवाहमपि वने वस्तव्यमित्यादिष्टैव त्वदादेष्टृभिः आवयोः सहधर्मचारित्वात्त्वदादेशेनैव ममाप्यादेशः सिद्ध इति भावः ॥ ५ ॥

६ ] ति० टी०–यदेवमतो न पित्रादिरिह लोके प्रेत्य परलोके च नारीणां गतिः, किंतु एकः पतिरेव सदा गतिः ॥ ६ ॥

रा० टी०–नेति । पित्रादिर्गतिर्न पतिरेव एको मुख्यो गतिः सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गतेति पुंस्त्वम् । आत्मा स्वकीयमात्रयत्नः ॥ ६ ॥

गो० टी०–एवं भर्तृसमानभाग्यत्वं स्वगमनहेतुरुक्तः तदेकगतिकत्वमपि गमनहेतुरित्याह–नेति । प्रेत्य परलोक इत्यर्थः ॥ ६ ॥

७] ति० टी०–अतो–यदि त्वमिति । मृद्नन्ती कुशेत्यनेन पद्धथामेव गमिष्यामीति न च ते दुःखं दास्यामीति च ध्वनितम् ॥ ७ ॥

रा० टी०–यदीति । हे राघव ! यदि त्वमद्यैव दुर्गं वनं प्रस्थितः तदापि कुशादीन्मृद्नन्ती स्वपद्भ्यां मर्दयन्ती अहं ते अग्रतो गमिष्यामि एतेन गमने स्वविलम्बाभावः सूचितः ॥७॥

गो० टी०–फलितार्थमाह–यदीति । अग्रतो गमने हेतुमाह–मृद्नन्ती मर्दयन्ती मृदूकुर्वन्तीत्यर्थः कुशरूपकण्टकान् ॥६॥

८] ति० टी०–स्त्रिया वनगमनसाहसं कथमित्यक्षान्तिरीर्ष्या, तां स्ववाक्योल्लङ्घनेन रोषं च बहिष्कृत्य त्यक्त्वा विस्रब्धो निःशङ्को मां नय । तत्र हेतुगर्भविशेषणम्–वीरेति । स्ववीरत्वस्य लोके ख्यापनाय । अन्यथा कुतस्तत्ख्यातिरिति ध्वनिरत्र । त्यागप्रयोजकं पापं च मयि न विद्यते । ननु भुक्तभोगया त्वया वने किं प्रयोजनमत आह—भुक्तशेषमुदकमिव यथा दुष्प्रापपानीयकान्तारयायिना पीतशेषं कमण्डलुनिष्ठमुदकमवश्यं नेयमेव, तथाहमपि त्वया नेयैव । तरुणत्वादिति गूढहासोक्तिः ॥ ८ ॥

रा० टी०–अज्ञातस्वापराधं क्षमापयन्ती आह–ईर्ष्यामिति । भुक्तशेषमुच्छिष्टं जलमिव ईर्ष्यादिकं बहिष्कृत्य त्यक्त्वा विस्रब्धः मयि कृतविश्वासस्त्वं मां नय । ज्ञातापराधस्य तु न संभव इत्याह–मयि पापमपराधः ॥ ८ ॥

गो० टी०–ईर्ष्येति । परातिशयाक्षमा ईर्ष्या त्वदनुवर्तनेन चरितार्थेयं भविष्यतीत्येवंरूपा अत्रैव सुखमास्वेति मयोक्तापि स्वयमनुगमिष्यामीति ब्रूत इति रोषः तौ भुक्तशेषं शास्त्रनिषिद्धतयोक्तमुदकमिव बहिष्कृत्य निःशेषं निरस्य विस्रब्धः निःशङ्कः सन् मां नय वीरेत्यनेन स्त्रियमेकाकी कान्तारं कथं नयेयमिति शङ्का न कर्तव्येत्युक्तं पापं मयि न विद्यते भवद्वियोगे जीवनहेतुपापं विद्यत इत्यर्थः । पापान्तरस्यात्र प्रसक्त्यभावात् ॥ ७ ॥

९] ति० टी०–अतोऽपि मे वनगमनमेवोचितमित्याह–प्रासादाग्रे । स्थितापेक्षयेति शेषः । विमानैर्वा वैहायसगनेन वा आकाशगमनेन । उपलक्षिताणिमाद्यष्टापेक्षयेति शेषः । सर्वावस्थागता भर्तुः । 'विष्णोरभक्तिकावस्था सर्वावस्थेति गीयते' इत्यभिधानात् । तां गतस्यात एव आ ईषद्भर्तुः । भर्तुरित्यन्तमेकं पदम् । अथवा पृथक्पदे । श्रुत्युक्तधर्माननुष्ठानरूपां तां गतापीति योजना । सकलभर्तृधर्मरहितस्यापि पत्युः पादच्छाया पादसवेनमेवेतरधर्मापेक्षया स्त्रिया विशिष्यतेऽधिकं भवति । श्रुतिस्मृत्योः सर्वपरित्यागेन भर्तृसेवाया एव स्त्रीणां नित्यत्वबोधनादिति भावः ॥ ९ ॥

रा० टी०–त्वया सह गमनमेव मम श्रेय इति बोधयन्ती आह–प्रासादेति । प्रासादाग्रैः उत्तमप्रासादस्थितिभ्यः विमानैर्वैहायसगतेन आकाशगमनाच्च सर्वावस्थागता सर्वावस्थासु आगता विधिप्राप्ता भर्तुः पादच्छाया पादसेवनमित्यर्थः । विशिष्यते अतिश्रेष्ठेत्यर्थः । पूर्वोत्तरयोस्तृतीया पञ्चम्यर्थे ॥ ९ ॥

गो० टी०–प्रासादवासं विहाय किमर्थं वनवासं गच्छसीत्यत्राह–प्रासादाग्रैरिति । पञ्चम्यर्थे तृतीया प्रासादाग्रैः सार्वभौमवासप्रासादाग्रेभ्यः विमानैर्वा स्वर्लोकादिस्थितविमानाग्रे

१ रामेति गो. पाठः । २ मृद्नती इति गो. पाठः । ३ इर्ष्यारोषाविति गो. पाठः । ४ अग्रैरिति गो. रा. पाठः ।

अनुशिष्टास्मि मात्रा च पित्रा च विविधाश्रयम् । नास्मि संप्रति वक्तव्या वर्तितव्यं यथा मया ॥ १० ॥
अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् । नानामृगगणाकीर्णं शार्दूलगणसेवितम् ॥ ११ ॥
सुखं वने निवत्स्यामि यथैव भवने पितुः । अचिन्तयन्ती त्रींल्लोकांश्चिन्तयन्ती पतिव्रतम् ॥ १२ ॥
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी । सह रंस्ये त्वया वीर वनेषु मधुगन्धिषु ॥ १३ ॥
त्वं हि कर्तुं वने शक्तो राम संपरिपालनम् । अन्यस्यापि जनस्येह किं पुनर्मम मानद ॥ १४ ॥
सोहं त्वया गमिष्यामि वनमद्य न संशयः । नाहं शक्या महाभाग निवर्तयितुमुद्यता ॥ १५ ॥
फलमूलाशना नित्यं भविष्यामि न संशयः । न ते दुःखं करिष्यामि निवसन्ती त्वया सदा ॥ १६ ॥
अग्रतस्ते गमिष्यामि भोक्ष्ये भुक्तवति त्वयि । इच्छामि परतः शैलान्पल्वलानि सरांसि च ॥ १७ ॥

भ्यो वा वैहायसगतेन अणिमाद्यष्टैश्वर्यसिद्धिसंपन्नोचितविहायः- संबन्धिगमनाद्वा सर्वावस्थागता दुरवस्थापन्नापीत्यर्थः । यद्वा सर्वावस्थासु गता अनुगता स्थायिनी स्वरूपप्राप्तेति यावत् पादच्छाया पादसेवा विशिष्यते अतिरिच्यते ॥ ८ ॥

१० ] ति० टी०—मद्गुरूपदेशोऽप्येवमेवेत्याह—अनुशिष्टेत्यादि । विविधाश्रयं नानाविधावस्थभर्तृनित्याश्रयमनुशिष्टास्मि अतो भर्तरि मया यथोपदिष्टं वर्तितव्यम्, तथा संप्रति नो वक्तव्यास्मि नोपदेष्टव्यास्मि ॥ १० ॥

रा० टी०—ननु त्वया इदं कथं ज्ञातमित्यत आह—अनुशिष्टेति । विविधाश्रयमनेकदृष्टान्तविशिष्टमनेकवारं वानुशिष्टा शिक्षितास्मि अतः संप्रति इदानीं न वक्तव्या पतिसेवाविषये उपदेष्टव्या भवतेति शेषः अतः यथा यथावद्वर्तितव्यम् तव सेवायामिति शेषः ॥ १० ॥

गो० टी०—उपदेशानुसारादपि मयानुगन्तव्यमित्याह— अनुशिष्टेति । यथा मया भर्तृविषये वर्तितव्यं तथा मात्रा पित्रा च विविधाश्रयं विविधप्रकारमनुशिष्टास्मि संप्रतीदानीं न वक्तव्यास्मि न शिक्षणीयास्मीति यावत् ॥ ९ ॥

११ ] ति० टी०—यदेवमतः—अहमिति । गमिष्यामि त्वद्गमनमन्विति शेषः ॥ ११ ॥

रा० टी०—अहमिति । पुरुषवर्जितं भृत्यादिरहितं यथा स्यात्तथा गमिष्यामि ॥ ११ ॥

गो० टी०—उपदेशफलमाह—अहमित्यादि । दुर्गत्वादिविशेषणविशिष्टमपीत्यर्थः ॥ १० ॥

१२ ] ति० टी०—त्रींल्लोकानचिन्तयन्ती त्रैलोक्यैश्वर्यमप्यगणयन्ती पतिव्रतं पत्या सहवासरूपं व्रतम् चिन्तयन्त्यपेक्षमाणा ॥ १२ ॥

रा० टी०—तत्र क्लेशशङ्कापि न कर्तव्येत्याह—सुखमिति । पितुर्भवने इव निवत्स्यामि त्रीन् लोकांस्तदाधिपत्यमित्यर्थः अचिन्तयन्ती अगणयन्ती पतिव्रतं पतिसेवारूपधर्मं चिन्तयन्ती ध्यायन्ती ॥ १२ ॥

गो० टी०—दुःखावहेयं प्रवृत्तिरित्यत्राह—सुखमिति । त्रीन् लोकान् अचिन्तयन्ती त्रैलोक्यैश्वर्यमप्यगणयन्तीत्यर्थः पतिव्रतं पतिविषयं व्रतं पतिशुश्रूषणमित्यर्थः ॥ ११ ॥

१३ ] ति० टी०—ब्रह्मचारिणी तपश्चरणशीला नियता त्वदुपदिष्टनियमयुक्ता मधुगन्धिषु मकरन्दसुरभिषु ॥ १३ ॥

रा० टी०—शुश्रूषमाणेति । ब्रह्मचारिणी वेदविहितव्रतपरायणा रंस्ये विहरिष्ये मधुगन्धिषु पुष्परसगन्धविशिष्टेषु किंच क्षौद्रगन्धविशिष्टेषु ‘मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः’ इत्यनेकार्थः । एतेन वनगमनविषयकः उत्साहो व्यञ्जितः ॥ १३ ॥

गो० टी०—शुश्रूषमाणेति । नियता नियमयुक्ता ब्रह्मचारिणी नियतेन्द्रियेत्यर्थः । कामभोगवर्जिता वा रंस्ये अपूर्वदर्शनेन संतुष्टा भविष्यामीत्यर्थः । मधुगन्धिषु पुष्परसगन्धिषु ‘मद्ये पुष्परसे मधु’ इति वैजयन्ती ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—अन्यस्यापि जनस्य जीवसमूहस्य ॥१४॥

रा० टी०—त्वमिति । अन्यस्य स्वनिरूपितजीवत्वादिधर्मरहितस्य ॥ १४ ॥

१५ ] ति० टी०—न निवर्तयितुं शक्या न्यायप्राप्तानुगमनत्वात् त्वच्छक्तिरूपत्वादिति गूढोऽभिप्रायः । उद्यता वनं गन्तुमिति शेषः ॥ १५ ॥

रा० टी०—मद्गमननिवृत्तिवार्ता न वक्तव्येति बोधयन्ती आह—सेति । उद्यता वनगमनोद्योगं कुर्वती अहं निवर्तयितुं न शक्या ॥ १५ ॥

गो० टी०—सहेति । उद्यता वनगमनोद्युक्ता ॥ १४ ॥

१६ ] ति० टी०—दुःखं न करिष्यामि विशिष्टान्नपानादीच्छयेति शेषः । त्वया सह शक्तिरूपत्वात्सदा वसन्ती दुःखमयकार्यापि यथा पूर्वं न कदापि दुःखं कृतवती एवमग्रेऽपि न करिष्यामीति भावः ॥ १६ ॥

रा० टी०—ननु त्वदुद्देश्यकभोजनाद्युद्योगेन मम श्रमः स्यादित्यत आह—फलेति । फलमूलाशना स्वार्जितफलमूलभोजना भविष्यामि अतः ते दुःखं श्रमजनितखेदं न करिष्यामि उत्पादयिष्यामि ॥ १६ ॥

गो० टी०—फलमूलाशनेति । दुःखम् अशनपानाभ्यर्थनरूपम् ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—सरांसि चेत्यस्य द्रष्टुमित्यनेनान्वयः॥१७॥

रा० टी०—अग्रत इति । ते गमनविशिष्टस्य तव अग्रतः

१ वृकेति गो. पाठः । २ सहेति गो. पाठः । ३ सह त्वयेति गो. पाठः । ४ सरित इति गो. रा. पाठः । ५ वनानीति गो. पाठः ।

द्रष्टुं सर्वत्र निर्भीता त्वया नाथेन धीमता । हंसकारण्डवाकीर्णाः पद्मिनीः साधुपुष्पिताः ॥ १८ ॥
इच्छेयं सुखिनी द्रष्टुं त्वया वीरेण संगता । अभिषेकं करिष्यामि तासु नित्यमनुव्रता ॥ १९ ॥
सह त्वया विशालाक्ष रंस्ये परमनन्दिनी । एवं वर्षसहस्राणि शतं वापि त्वया सह ॥ २० ॥
व्यतिक्रमं न वेत्स्यामि स्वर्गोऽपि हि न मे मतः । स्वर्गेऽपि च विना वासो भविता यदि राघव ॥
त्वया विना नरव्याघ्र नाहं तदपि रोचये ॥ ॥ २१ ॥

अहं गमिष्यामि वनं सुदुर्गमं मृगायुतं वानरवारणैश्च ।
वने निवत्स्यामि यथा पितुर्गृहे तवैव पादावुपगृह्य संमता ॥ ॥ २२ ॥
अनन्यभावामनुरक्तचेतसं त्वया वियुक्तां मरणाय निश्चिताम् ।
नयस्व मां साधु कुरुष्व याचनां नातो मया ते गुरुता भविष्यति ॥ ॥ २३ ॥

अग्रे गमिष्यामि भुक्तवति कृतभोजने त्वयि सति भोक्ष्ये । अर्धं पृथक्—इच्छामीति । पल्वलानि अल्पसरांसि सरांसि महातडागांस्त्वया सह निर्भीताहं द्रष्टुमिच्छामि । अर्धद्वयमेकान्वयि ॥ १७ ॥

१८ ] ति० टी०—कारण्डवा जलकुक्कुटाः ॥ १८ ॥

१९ ] ति० टी०—अभिषेकं करिष्यामि । तासु पद्मिनीष्विति शेषः ॥ १९ ॥

रा० टी०—हंसेति । हंसाश्च कारण्डवा जलकुक्कुटाश्च तैराकीर्णा व्याप्ताः पद्मिनीः कमलिनीः त्वया सह द्रष्टुमिच्छेयं त्वा त्वामनुव्रताहमभिषेकं स्नानं करिष्यामि पद्मिनीयुक्तजलेष्विति शेषः । सार्धश्लोक एकान्वयी ॥ १८ ॥ १९ ॥

गो० टी०—हंसेति । कारण्डवाः जलकुक्कुटाः ‘ मद्गुः कारण्डवः प्लवः ’ इत्यमरः ॥ १७ ॥ १८ ॥

२० ] ति० टी०—वर्षसहस्राणि शतं वा त्वया सह वसन्ती तेषां व्यतिक्रमं वनवासदुःखं न वेत्स्यामि, किंतु क्षणमिव तावन्तं कालं नेष्यामीति भावः ॥ २० ॥

रा० टी०—सहेति । हे विशालाक्ष ! एवमनेन प्रकारेण त्वया सह अहं रंस्ये एवमेतादृशरमणप्रकारेण व्यतिक्रमं व्यतीतं वर्षसहस्राणां शतमपि न वेत्स्यामि स्वर्गः सुखविशेषः एवमेतत्सुखसदृशः न मतोऽभिमतः । तत्र हेतुमाह—स्वर्ग इति । हे राघव ! अविना सर्वरक्षकेण त्वया विना स्वर्गेऽपि यदि वासो भविता तदा अहं न रोचये इच्छामि किंचित्सुखमिति शेषः । सार्धश्लोकद्वयमेकान्वयि । एवमिति स्थलत्रयान्वयी ॥ २० ॥ २१ ॥

गो० टी०—एवमिति । व्यतिक्रमं व्यतिक्रान्तं वर्षसहस्राणां शतमपि न वेत्स्यामि क्षणमिव नेष्यामि किं पुनः चतुर्दश समा इति भावः । स्वर्गोऽपि नहि मे मतः त्वया विनेति शेषः ॥ १९ ॥

२१ ] ति० टी०—स्वर्गोऽपि न मे मतः । त्वया विनेति शेषः । तदेव विवृणोति—स्वर्गेऽपि चेति ॥ २१ ॥

गो० टी०—एतदेव विवृणोति—स्वर्गेऽपि चेति ॥ २० ॥

२२ ] ति० टी०—मृगैरायुतं मृगैरासमन्तायुतं युक्तम् वानरवारणैश्च युक्तमिति शेषः । संमता तवेति शेषः । त्वदाज्ञावर्तिनीति यावत् ॥ २२ ॥

रा० टी०—उपसंहरन्ती आह—अहमिति । मृगायुतं मृगैर्व्याप्तं वानरवारणैः वानराश्च वारणा हस्तिनश्च तैश्च युक्तमिति शेषः । सुदुर्गमं कातरगमनानर्हं वनं गमिष्यामि वने तस्मिन्कानने तव संमता त्वत्संमतिविषयीभूता अहं पितुर्गृहे इव निवत्स्यामि प्रथमार्धे अन्त्यपादे वर्णैकन्यूनता अपूर्वच्छन्दोद्योतना यद्यपि ‘वारणैर्युतम्’ इति भूषणटीकाङ्कितपुस्तकेषु दृश्यते तथापि तत्पाठस्य टीकास्पृष्टत्वादेवमुक्तम् ‘ उपगृह्य संयता ’ इति भूषणपाठः ॥ २२ ॥

गो० टी०—अहमिति । मृगैः आयुतम् आसमन्तायुतम् मृगैः अयुतं नामिश्रितं मिश्रितमित्यर्थः । युमिश्रणामिश्रणयोरिति धातुः । अत्रेदमवधेयं वने मारीचो मृगो भविष्यति तत्प्रसङ्गेनावयोर्वियोगः स्यात् तत्र को वा पुनर्घटकः कथं त्वं तु मया विना स्थातुं शक्तासीति चिन्तयन्तं रामं प्रति सीता सूचयति—वानरवारणैरित्यादि । तथाहि मृगो मारीचः वानरवारणैः वानरश्रेष्ठैः सुग्रीवादिभिः पुनर्वनग्रहणात् वनेऽपि अशोकवनेऽपि वत्स्यामि पुनस्तवैव पादावुपसंगृह्य संयता नियता भविष्यामीति ॥ २१ ॥

२३ ] ति० टी०—त्वया वियुक्तामित्यादि । त्वद्वियोगे मरणविषयनिश्चितमतिम् । याचनां मामिकां वनानुगमनयाचनां साधु कुरुष्व चरितार्थां संपादय मया क्रियमाणात्ततोऽनुगमनात्ते गुरुता भारो न भविष्यति ॥ २३ ॥

रा० टी०—अनन्येति । अनन्यभावां त्वदतिरिक्तविषयकप्रीतिरहितामत एव अनुरक्तचेतसं त्वद्विषयकपरमानुरागयुक्तचित्तामत एव त्वया वियुक्तां त्वद्वियोगयुक्तां स्वव्यक्तिमालक्ष्येति शेषः । मरणाय निश्चितां मरणाय एतल्लोकत्यागाय निश्चितां मां नयस्व अतः मन्नयनात्ते गुरुता भारः अगुरुता लघुता वा न भविष्यति ॥ २३ ॥

१ त्वाहं नित्यमनुव्रतेति रा. पाठः । २ यतव्रतेति गो. पाठः । ३ सहस्राणामिति गो. रा. पाठः । ४ वाहमिति गो. पाठः । ५ ममेति गो. पाठः । ६ तमपीति गो. पाठः । ७ युतमिति गो. पाठः । ८ संयतेति गो. पाठः ।

तथा ब्रुवाणामपि धर्मवत्सलां न च स्म सीतां नृवरो निनीषति ।
उवाच चैनां बहु सन्निवर्तने वने निवासस्य च दुःखितां प्रति ॥ ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

## अष्टाविंशः सर्गः ।

अतिकष्टप्रदत्वाद्दुःसहत्वं वनवासस्य प्रबोध्य रामः सीतां तस्मान्निवर्तयितुं प्रायतत ।

स एवं ब्रुवतीं सीतां धर्मज्ञां धर्मवत्सलः । न नेतुं कुरुते बुद्धिं वने दुःखानि चिन्तयन् ॥ १ ॥
सान्त्वयित्वा ततस्तां तु बाष्पदूषितलोचनाम् । निवर्तनार्थे धर्मात्मा वाक्यमेतदुवाच ह ॥ २ ॥
सीते महाकुलीनासि धर्मे च निरता सदा । इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ ३ ॥
सीते यथा त्वां वक्ष्यामि तथा कार्यं त्वयाबले । वने दोषा हि बहवो वसतस्तान्निबोध मे ॥ ४ ॥
सीते विमुच्यतामेषा वनवासकृता मतिः । बहुदोषं हि कान्तारं वनमित्यभिधीयते ॥ ५ ॥

गो० टी०—अनन्यभावामिति । अन्वयव्यतिरेकाभ्यां स्वाधुरक्तेत्युच्यते अत एव त्वया वियुक्तां मरणाय निश्चितां त्वया वियुक्तत्वे मरणाय निश्चितामित्यर्थः । मां नयस्व परमार्थेस्तु रावणगृहीतामपि त्वय्येवासक्तचित्ताम् अथ वेण्युद्ग्रथनेन मरणाय निश्चितां हनुमत्प्रेषणादिकमुखेन नयस्व याचनां देवकृतरावणवधाभ्यर्थनं साधु कुरुष्व मया कृतात् अतोऽनुगमनात्ते गुरुता भारः न भविष्यति क्लेशो न भविष्यतीत्यर्थः ॥ २२ ॥

२४ ] ति० टी०—तथा न्याययुक्तं न निनीषतिस्म न नेतुमैच्छत् । अत एवास्या निवर्तने निवर्तनरूपप्रयोजननिमित्तं वनवासस्य दुःखतां दुःखजनकतां प्रति सत्संभवद्बहुहेतुजातमुवाचेत्यर्थः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०—तथेति । तथा तेन प्रकारेण ब्रुवाणां सीतां धर्मवत्सलः धर्मयुक्तवात्सल्यविशिष्टः नृवरो रामः न निनीषति नेतुमिच्छति इति अ न तथापि एनां सन्निवर्तने वनगमनप्रवृत्तिनिवृत्त्यर्थं वने निवासस्य दुःखितां वनवाससंबन्धिदुःखं बहु यथा स्यात्तथा उवाच दुःखिशब्दाद्भावे तल् निषेधार्थकाकारलाभस्तु नृवरो निषीदतीत्यत्र स्यौकारात्परं प्रश्लेषात् ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो० टी०—तथेति । धर्मवत्सलः कान्ताक्लेशासहिष्णुः निनीषति नेतुमिच्छति बाह्वितिक्रियाविशेषणम् सान्निवर्तने सन्निवर्तनानिमित्तम् ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

१–२ ] ति० टी०—स इति । न नेतुं कुरुते बुद्धिं न नेतुं कुरुते इव ॥ १ ॥ २ ॥

रा० टी०—रामवचनमेव सप्रसङ्गं निरूपयन्नाह—स इति । धर्मवत्सलः स रामः वने दुःखानि चिन्तयन्विचारयन् सन् सीतां नेतुं बुद्धिं निश्चयं न कुरुते ॥ १ ॥

रा० टी०—सान्त्वयित्वेति । बाष्पदूषितलोचनामश्रुव्याप्तनेत्रां तां सीतां सान्त्वयित्वा निवर्तनार्थे निवृत्तिरूपप्रयोजनार्थमेतद्वाक्यमुवाच ॥ २ ॥

गो० टी०—वने निवासस्य च दुःखितामित्युक्तं विवृणोति—स एवमित्यादिना ॥ १ ॥ २ ॥

३ ] ति० टी०—महाकुलीनेत्याद्युक्तिः स्ववाक्याङ्गीकारप्रयोजना । इहैव स्थित्वा यथा मे मम मनसः सुखं भवति तथा मदागमनमुद्दिश्य स्वधर्मं चर धर्ममेवाचर ॥ ३ ॥

रा० टी०—तद्वाक्यमेवाह—सीते इति । इह अयोध्यायामेव धर्मं मदाज्ञप्तमतिपत्रादिसेवनं कुरु यथा येन सेवनेन मे मनसः सुखं स्यादिति शेषः ॥ ३ ॥

गो० टी०—सीत इति । मा यथा मनसः सुखं ममसो यथा सुखं भवति तथा मा चरेत्यर्थः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—हि यतो वने बहवो दोषाः क्लेशाः, अतो मदुक्तं कार्यमित्यन्वयः ॥ ४ ॥

रा० टी०—सीते यथेति । वने वसतः पुरुषस्य बहवो दोषाः सन्तीति शेषः तान्दोषान्मे मत्तः निबोध जानीहि अहं वच्मीत्यर्थः ॥ ४ ॥

५ ] ति० टी०—कान्तारं गहनत्वाद्दुष्प्रवेशं वनं बहुदोषमित्यभिधीयत इति योजना । सीते इति कलत्रनामग्रहणमपि दुःखाकुलचित्तत्वनाटनेन न दोषाय ॥ ६ ॥

रा० टी०—सीते विमुच्यतामिति । एषा मत्सन्निधौ बोधिता मतिः वनगमननिश्चयः विमुच्यताम् । तत्र हेतुः कान्तारं

१ वत्सलो इति गो. पाठः । २ धर्मज्ञो इति गो. पाठः । ३ पुन इति गो. पाठः । ४ पर्याकुलेक्षणामिति गो. पाठः । ५ मा यथेति गो. पाठः । ६ वदत इति गो. पाठः ।

हितबुद्ध्या खलु वचो मयैतदभिधीयते । सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ६ ॥
गिरिनिर्झरसंभूता गिरिनिर्दरिवासिनाम् । सिंहानां निनदा दुःखाः श्रोतुं दुःखमतो वनम् ॥ ७ ॥
क्रीडमानाश्च विस्रब्धा मत्ताः शून्ये तथा मृगाः । दृष्ट्वा समभिवर्तन्ते सीते दुःखमतो वनम् ॥ ८ ॥
सग्राहाः सरितश्चैव पङ्कवत्यस्तु दुस्तराः । मत्तैरपि गजैर्नित्यमतो दुःखतरं वनम् ॥ ९ ॥
लताकण्टकसंकीर्णाः कृकवाकूपनादिताः । निरपाश्च सुदुःखाश्च मार्गा दुःखमतो वनम् ॥ १० ॥
सुप्यते पर्णशय्यासु स्वयंभग्नासु भूतले । रात्रिषु श्रमखिन्नेन तस्माद्दुःखमतो वनम् ॥ ११ ॥

---

निबिडं वनं बहुदोषमनेकदोषविशिष्टमिति अभिधीयते कथ्यते अभिज्ञैरिति शेषः ॥ ५ ॥

गो० टी०—सीत इति । बहुदोषम् अहिकण्टकादियुक्तत्वात्कान्तारं महारण्यम् 'महारण्ये दुर्गपथे कान्तारं पुंनपुंसकम्' इत्यमरः ॥ ५ ॥

६ ] ति० टी०—हितबुद्ध्या एतदभिधीयते न तु त्वद्भरणादिप्रयासोपाधिनेत्यर्थः । सदा सर्वकालं सुखं वने नास्ति । सुखं सुखदं न भवति, किंतु दुःखं दुःखदमेवेत्येव जानामि निश्चिनोमि ॥ ६ ॥

रा० टी०—हितेति । सदा नित्यमसुखं सुखविरोधि वनं सदा दुःखं दुखहेतुमेव जानामि एतद्वचः हितबुद्ध्या त्वद्विषयकातिप्रीत्येत्यर्थः । मया अभिधीयते कथ्यते ॥ ६ ॥

गो० टी०—हितबुद्ध्येति । हितबुद्ध्या न तु त्वद्भरणक्लेशेन ॥ ६ ॥

७ ] ति० टी०—गिरिनिर्झरा गिरिनद्यस्तन्निनदैः संभूताः प्रभूताः । गिरिनिर्दरिवासिनां सिंहानां निनदाः श्रोतुं दुःखा अतो वनं दुःखं दुःखजनकम् ॥ ७ ॥

रा० टी०—दुःखान्येवाह—गिरीत्यादिभिः । गिरिनिर्झरसंभूताः पर्वतनदीशब्दप्रवृद्धाः गिरिनिर्दरिवासिनां गिरिदरीनिवसनशीलानां सिंहानां निनदाः शब्दाः श्रोतुं दुःखाः दुःखप्रदाः अतो वनं श्रोतुं प्रवृत्तजनस्येति दुःखं भवतीति शेषः 'गिरिकन्दरवासिनाम्' इति भूषणटीकाङ्कितपुस्तकपाठः ॥ ७ ॥

गो० टी०—महावने विद्यमानान् दोषानाह—गिरिनिर्झरेत्यादि । गिरिनिर्झरसंभूताः गिरिनिर्झरेषु प्रवृद्धाः श्रोतुं दुःखाः दुःखकराः अतो वनं दुःखं दुःखकरम् ॥ ७ ॥

८ ] ति० टी०—विस्रब्धा निःशङ्काः । दृष्ट्वा मनुष्यं दृष्ट्वा समभिवर्तन्ते हन्तुं संमुखमायान्ति ॥ ८ ॥

रा० टी०—क्रीडमाना इति । विस्रब्धाः शङ्कारहिता इत्यर्थः । महामृगाः वनजन्तुविशेषाः दृष्ट्वा मनुष्यमिति शेषः । समनुवर्तन्ते हन्तुं संमुखमायान्तीत्यर्थः ॥ ८ ॥

गो० टी०—क्रीडमाना इति । शून्ये निर्मानुषे प्रदेशे विस्रब्धाः निःशङ्काः सन्तः क्रीडमानाः क्रीडन्तः अत एव मत्ताः महामृगाः सिंहशार्दूलादयः अस्मान् दृष्ट्वा अपूर्वदर्शनात्समभिवर्तन्ते हन्तुमभिमुखमागच्छेयुः ॥ ८ ॥

९ ] ति० टी०—सग्राहकत्वं पङ्कवत्त्वं च दुस्तरत्वे हेतुः । नित्यं गजैरित्यस्य युक्तमिति शेषः ॥ ९ ॥

रा० टी०—सग्राहा इति । सग्राहाः ग्राहसहिताः पङ्कवत्यः अतिकर्दमविशिष्टाः सरितो नद्यः मत्तैरपि गजैः सुदुस्तराः तरितुमशक्याः ॥ ९ ॥

गो० टी०—सग्राहा इति । सग्राहाः सनक्राः पङ्कवत्यः बहुपङ्का मत्तैर्गजैरुपलक्षिताश्च अत एव दुस्तराः सरितः सन्ति अतो दुःखतरं पूर्वोक्तदुःखसंमेलनादतिशयेन दुःखवत् ॥ ९ ॥

१० ] ति० टी०—कृकवाकुर्वनकुक्कुटः सरठ इत्यन्ये । निरपा निर्गतोदकाः । "ऋक्पूः—" इत्यप्समासान्तः ॥ १० ॥

रा० टी०—लतेति । मार्गाः पन्थानः लताकण्टकसंकीर्णाः लताकण्टकैर्व्याप्ताः कृकवाकूपनादिताः कृकवाकुभिः मयूरसरटचरणायुधैः उपनादिताः निरपाः जलरहिताश्च सन्तीति शेषः । "ऋक्पूः—" इत्यप् । अत एव सुदुःखाः अतिदुःखहेतवः ॥ १० ॥

गो० टी०—यत्र न निर्झरादयस्तेनैव मार्गेण गमिष्याम इत्यत्राह—लता इति । लताः पदाकर्षिण्यः कण्टकाः पादवेधकाः कृकवाकवः वनकुक्कुटास्तैरुपनादिताः तन्नादयुक्ता इत्यर्थः । तन्नादा अप्यश्रुतपूर्वत्वात् भयावहा एव निरपाः निर्गतजलाः "ऋक्पूरब्धूः—" इत्यादिना समासान्तः अप्रत्ययः ॥ १० ॥

११ ] ति० टी०—स्वयं भग्नासु स्वयं पतितशीर्णपर्णमयशय्यास्विति यावत् । श्रमखिन्नेन दिवा फलाद्यानयनश्रमखिन्नेन सुप्यते । वनवासिना जनेनेति शेषः । तेन तत्रापि स श्रमस्तदेव शयनं चेति सममेवेति ध्वनितम् ॥ ११ ॥

रा० टी०—सुप्यते इति । स्वयं भग्नासु स्वतःपतितासु पर्णशय्यासु पर्णमयतल्पेषु श्रमखिन्नेन फलाद्याहरणादिजनितश्रमजनितखेदविशिष्टेन पुरुषेण रात्रिषु सुप्यते तस्माद्वनमतो वनपर्यटनशीलस्य दुःखम् ॥ ११ ॥

गो० टी०—सुप्यत इति । भूतले न तु पर्यङ्के तत्रापि पर्णशय्यासु न तु मृदुतूलास्तरणेषु तत्रापि स्वयं भग्नासु जीर्णतया स्वयमेव पतितासु रात्रिषु नत्वहःसु श्रमखिन्नेन फलमूलाद्याहरणश्रमदुःखितेन वनवासिना सुप्यते अतोऽस्माभिरपि तथा स्वपितव्यमिति भावः ॥ ११ ॥

---

१ कन्दरेति गो. पाठः । २ महामृगा इति गो. रा. पाठः । ३ सुदुस्तरा इति रा. पाठः । ४ सुदुर्गाश्चेति गो. पाठः । ५ तरमिति गो. पाठः । ६ स्वप्तव्यमिति युक्तं भाति ।

अहोरात्रं च संतोषः कर्तव्यो नियतात्मना । फलैर्वृक्षावपतितैः सीते दुःखमतो वनम् ॥ १२ ॥
उपवासश्च कर्तव्यो यथा प्राणेन मैथिलि । जटाभारश्च कर्तव्यो वल्कलाम्बरधारणम् ॥ १३ ॥
देवतानां पितॄणां च कर्तव्यं विधिपूर्वकम् । प्राप्तानामतिथीनां च नित्यशः प्रतिपूजनम् ॥ १४ ॥
कार्यस्त्रिरभिषेकश्च काले काले च नित्यशः । चरतां नियमेनैव तस्माद्दुःखतरं वनम् ॥ १५ ॥
उपहारश्च कर्तव्यः कुसुमैः स्वयमाहृतैः । आर्षेणविधिना वेद्यां सीते दुःखमतो वनम् ॥ १६ ॥
यथालब्धेन कर्तव्यः संतोषस्तेन मैथिलि । यथाहारैर्वनचरैः सीते दुःखमतो वनम् ॥ १७ ॥
अतीव वातस्तिमिरं बुभुक्षा चास्ति नित्यशः । भयानि च महान्त्यत्र अतो दुःखतरं वनम् ॥ १८ ॥
सरीसृपाश्च बहवो बहुरूपाश्च भामिनि । चरन्ति पथि ते दर्पात्ततो दुःखतरं वनम् ॥ १९ ॥
नदीनिलयनाः सर्पा नदीकुटिलगामिनः । तिष्ठन्त्यावृत्य पन्थानमतो दुःखतरं वनम् ॥ २० ॥

---

१२ ] ति० टी०—वृक्षावपतितैर्वृक्षेभ्यः स्वयमेव पतितैः । अहोरात्रं प्रातःसायम् ॥ १२ ॥

रा० टी०—अहोरात्रमिति । नियतात्मना यतचित्तेन वृक्षावपतितैः वृक्षेभ्यः पृथिव्यामागतैः ॥ १२ ॥

गो० टी०—अहोरात्रमिति । अहोरात्रं सायंप्रातश्च वृक्षावपतितैः वृक्षात्स्वयं पतितैः फलैः नियतात्मना नियतमनस्केन इतरानभिलाषिणेत्यर्थः । वनवासिना संतोषः भोजनतृप्तिः कर्तव्यः ॥ १२ ॥

१३ ] ति० टी०—यथा प्राणेन यथाबलानुसारेण । केशसंस्काराभावाज्जटाभारकरणम् ॥ १३ ॥

रा० टी०—उपवास इति । यथाप्राणेन यथासामर्थ्यमित्यर्थः। जटाभारः जटायाः भारो धारणम् अभार इति छेदो वा केशसंस्कारस्य निषिद्धत्वेन पोषणाभाव इति तदर्थः ॥ १३ ॥

गो० टी०—उपवास इति।यथाप्राणेन यथाशक्त्या१३।१४

१४ ] ति० टी०—प्रतिपूजनं कार्यं तेन तदर्थसामग्रीसंपादनक्लेशो ध्वनितः ॥ १४ ॥

रा० टी०—देवतानामिति । विधिपूर्वकं ब्रह्मचर्यविहितविधिनेत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—काले काले प्रातःकालादौ नियमेनैव चरतां कालक्षेपं कुर्वतां त्रिरभिषेकः कार्यः त्रिषवणस्नानं कर्तव्यमित्यर्थः ॥ १५ ॥

रा० टी०—कार्य इति। काले काले नियमेनैव चरतां वर्तमानानां जनानां नित्यशः त्रिः त्रिवारमभिषेकः स्नानं कार्यः ॥१५॥

गो० टी०—कार्य इति । त्रिरभिषेकश्च नैककाल इत्याह—काले काल इति प्रातर्मध्याह्नसायाह्नेष्वित्यर्थः । एतच न कतिपयदिनेषु किंतु प्रतिदिनमित्याह—नित्यश इति ॥ १५ ॥

१६ ] ति० टी०—उपहारः पूजा । आर्षो विधिरुञ्छादिवृत्तिः । वेद्यामित्यनेन तत्करणदुःखं ध्वनितम् ॥ १६ ॥

रा० टी०—उपहार इति । स्वयमाहृतैः आनीतैः कुसुमैः पुष्पैः आर्षेण वेदविहितेन विधिना वेद्यां स्वनिर्मितस्थलविशेषे उपहारः पूजा कर्तव्यः ॥ १६ ॥

गो० टी०—उपहार इति । उपहारो बलिः 'उपहारो बलिर्मतः' इति हलायुधः । आर्षेण ऋषिप्रोक्तेन विधिना कल्पेन ॥ १६ ॥

१७ ] ति० टी०—तेन वन्यपदार्थेन । यथाहारैर्यथालब्धाहारैः ॥ १७ ॥

रा० टी०—यथेति । यथालब्धेन यथाकालं प्राप्तेन तेन फलादिना यताहारैः नियमिताहारविशिष्टैः वनचरैः संतोषः कर्तव्यः ॥ १७ ॥

गो० टी०—यथेति । यतालब्धेन यावल्लब्धेन तेन फलादिना आहारेण संतोषः तृप्तिः यताहारैर्नियताहारैः ॥ १७ ॥

१८ ] ति० टी०—तिमिरम् रात्रिष्विति शेषः ॥ १८ ॥

रा० टी०—अतीवेति । तिमिरमन्धकारः अत एव महान्ति विपुलानि भयानि सन्तीति शेषः ॥ १८ ॥

गो० टी०—अतीति । अत्र वने वाताश्चातीव बहुला तिमिरं च रात्रिष्वतीवास्ति बुभुक्षा चातीव भवति भयानि पूर्वोक्तानि ॥ १८ ॥

१९ ] ति० टी०—बहुरूपाः सरीसृपाः सन्ति ते च मार्गमध्ये दर्पाच्चरन्ति ॥ १९ ॥

रा० टी०—भयहेतूनाह—सरीसृपा इति । बहुरूपाः अनेकविधाः बहवः अनेके ते प्रसिद्धाः सरीसृपाः स्थलनिवासिसर्पाः दर्पादस्मन्निहन्ता कश्चन नास्तीति गर्वात्पथि मार्गे चरन्ति ॥ १९ ॥

गो० टी०—सरीसृपा इति । सरीसृपाः गिरिसर्पाः बहुरूपाः पृथुशरीराः ॥ १९ ॥

२० ] ति० टी०—निलयनं वासस्थानम् । नदीवत्कुटिलगतयः ॥ २० ॥

रा० टी०—नदीति । नदीनिलयनाः नदीनिवासिनः अत एव नदीकुटिलगामिनः नदीकौटिल्यसदृशकौटिल्यविशिष्टगमनशीलाः सर्पाः पन्थानमावृत्य परिवृत्य तिष्ठन्ति ॥ २० ॥

गो० टी०—नदीनिलयना इति । नदीकुटिलगामिनः नदीवत्कुटिलगामिनः ॥ २० ॥

---

१ धारिणेति गो. पाठः । २ चरतेति गो. पाठः । ३ काले इति गो. पाठः । ४ यताहारैरिति गो रा. पाठः । ५ नित्यमिति गो. पाठः । ६ वाता इति गो. पाठः । ७ चात्रेति गो. पाठः । ८ तत इति गो. रा. पाठः । ९ पृथिवीमिति गो. पाठः । १० तत इति गो. पाठः ।

पतङ्गा वृश्चिकाः कीटा दंशाश्च मशकैः सह । बाधन्ते नित्यमबले सर्वं[1] दुःखमतो वनम् ॥ २१ ॥
द्रुमाः कण्टकिनश्चैव कुशाः काशाश्च भामिनि । वने व्याकुलशाखाग्रास्तेन दुःखमतो[2] वनम् ॥ २२ ॥
कायक्लेशाश्च बहवो भयानि विविधानि च । अरण्यवासे वसतो दुःखमेव सदा[3] वनम् ॥ २३ ॥
क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः । न भेतव्यं च भेतव्ये दुःखं नित्यमतो वनम् ॥ २४ ॥
तदलं ते वनं गत्वा [4]क्षेमं नहि[5] वनं तव । विमृशन्निव पश्यामि बहुदोषकरं वनम् ॥ २५ ॥
वनं तु नेतुं न कृता मतिर्यदा बभूव रामेण तदा महात्मना ।
न तस्य सीता वचनं चकार [6]तं ततोऽब्रवीद्राममिदं सुदुःखिता ॥ २६ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः ।

ईषदश्रुमुखी सीता रामोक्तवनदोषान्प्रगुणीकृत्य स्वस्यापि पितृगृहे सामुद्रिकोक्तं वनवासं प्रस्ताव्य स्त्रीयां वनगमनोत्कण्ठामधिकृत्य प्रार्थयत तथापि रामस्तत्प्रतिषिध्य वियोगभीरुं तां पर्यसान्त्वयत् ।

एतत्तु वचनं श्रुत्वा सीता रामस्य दुःखिता । प्रसक्ताश्रुमुखी मन्दमिदं वचनमब्रवीत् ॥ १ ॥

२१ ] ति० टी०—अबले इत्यनेन तन्निवारणासामर्थ्यं ध्वनितम् २१

रा० टी०—पतङ्गा इति । पतङ्गाः शलभादयः कीटाः कृमयः दंशाः वनमक्षिकाः 'दंशस्तु वनमक्षिका' इत्यमरः ॥ २१ ॥

गो० टी०—पतङ्गा इति । पतङ्गाः शलभाः दंशाः वनमक्षिकाः 'दंशस्तु वनमक्षिका' इत्यमरः ॥ २१ ॥

२२-२३ ] ति० टी०—व्याकुलशाखाग्रत्वं यथायोगं द्रुमेषु कुशकाशयोश्च बोध्यम् ॥ २२ ॥ २३ ॥

रा० टी०—द्रुमा इति । कण्टकिनः बहुकण्टकविशिष्टाः व्याकुलशाखाग्राः व्याकुलाः व्याप्ताः शाखाग्राः येषां ते कुशादयश्च सन्तीति शेषः । तेन हेतुना अतो वनं प्राप्तस्य जनस्य वनं दुःखं दुःखप्रदम् ॥ २२ ॥

गो० टी०—द्रुमा इति । कुशकाशयोः शाखाः कुशकाशपर्णान्येव ॥ २२ ॥

रा० टी०—कायेति । अरण्यवासे वसतः सविधिवनवासिनः पुरुषस्य विविधानि अनेकहेतुकानि भयानि सन्तीति शेषः । अत एव बहवोऽनेकविधाः कायक्लेशाः सन्ति ॥ २३ ॥

गो० टी०—कायक्लेशा इति । कायक्लेशाः व्रतोपवासादयः अरण्यवासे अरण्यरूपवासस्थाने ॥ २३ ॥

२४ ] ति० टी०—भेतव्ये भेतव्यविषये ॥ २४ ॥

रा० टी०—क्रोधेति । विमोक्तव्यौ अतिशयेन त्यक्तव्यौ मतिर्निश्चयः भेतव्ये भयहेतुभूतोक्तसर्पादौ तत्समीपे इत्यर्थः न भेतव्यं भयं न कार्यम् ॥ २४ ॥

गो० टी०—क्रोधलोभाविति । भेतव्ये भयहेतुविषये प्रागुक्तसर्पादौ न भेतव्यं भयं न कार्यम् ॥ २४ ॥

२५ ] ति० टी०—अलं गत्वा न गन्तव्यमित्यर्थः । विमृशन्दोषान्विचारयन् तान्दोषानिहस्थोऽपि पश्यामीव अतो बहुदोषकरं वनमिति ब्रवीमीति शेषः ॥ २५ ॥

रा० टी०—उपसंहरन्नाह—तदिति । तदुक्तहेतोः वनं ते अलं न गन्तव्यं तत्र हेतुः बहुदोषकरं वनमनेकरचनाविषयीभूतं वनं काननं गत्वा प्राप्य तव क्षमं त्वत्कर्तृकवनवासदुःखकर्मकसहनं विमृशन् विचारयन्नपि न पश्यामि । इवोऽप्यर्थे अलमिति निषेधार्थकम् संभक्त्यर्थकवनधातुप्रकृतिककर्मकान्तमेकं वनमिति ॥ २५ ॥

गो० टी०—तदिति । वनं गत्वालमिति "अलं खल्वोः—" इति निषेधार्थालशुपपदे क्त्वा न गन्तव्यमित्यर्थः ॥ २५ ॥

२६ ] ति० टी०—रामेण यदा वने नेतुं मतिर्न कृता बभूव तदा सीता तस्य वचनं न चकार नाङ्गीचकार ततो हेतोरिदमब्रवीत् ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

रा० टी०—वनमिति । महात्मना रामेण वनं नेतुं मतिर्निश्चयः यदा न कृता बभूव तदा तस्य रामस्य वचनं वननयननिषेधकवाक्यं सीता न चकार तत्याज भवतैवं न वक्तव्यमित्यनुक्त्वा मौनीभूय तस्थावित्यर्थः । तद्वचने विश्वासं चकारेति तात्पर्यम् । ततोऽनन्तरमिदं वचः अब्रवीत् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०—वनमिति । रामेण वनं नेतुं मतिर्यदा न कृता बभूव तदा सीता तस्य वचनं न चकार नाङ्गीचकार इदमुत्तरसर्गे वक्ष्यमाणम् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टाविंशः सर्गः ॥ २८ ॥

१ ] ति० टी०—एतदिति ॥ १ ॥

१ सर्वदुःखतरमिति गो.पाठः । २ दुःखतरमिति गो.पाठः । ३ तत इति गो.पाठः । ४ क्षममिति गो.रा.पाठः । ५ इहेति गो.पाठः । ६ तदिति गो.रा.पाठः ।

ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति । गुणानित्येव तान्विद्धि तव स्नेहपुरस्कृता ॥ २ ॥
मृगाः सिंहा गजाश्चैव शार्दूलाः शरभास्तथा । चमराः सृमराश्चैव ये चान्ये वनचारिणः ॥ ३ ॥
अदृष्टपूर्वरूपत्वात्सर्वे ते तव राघव । रूपं दृष्ट्वाऽपसर्पेयुस्तव सर्वे हि बिभ्यति ॥ ४ ॥
त्वया च सह गन्तव्यं मया गुरुजनाज्ञया । त्वद्वियोगेन मे राम त्यक्तव्यमिह जीवितम् ॥ ५ ॥
नहि मां त्वत्समीपस्थामपि शक्रोऽपि राघव । सुराणामीश्वरः शक्तः प्रधर्षयितुमोजसा ॥ ६ ॥
पतिहीना तु या नारी न सा शक्ष्यति जीवितुम् । काममेवंविधं राम त्वया मम निदर्शितम् ॥ ७ ॥

रा० टी०–उत्तरग्रन्थसङ्गतिप्रदर्शनाय पूर्वसर्गान्ते उक्तमप्यर्थं वदन्नाह–एतदिति । एतद्वियोगबोधकं रामस्य वचनं श्रुत्वा दुःखिता अत एव अश्रुमुखी अश्रुयुक्तमुखविशिष्टा प्रसक्ता पतिविषयकात्यनुरागविशिष्टा सीता इदमब्रवीत् ॥ १ ॥

गो० टी०–एतदिति । पूर्वसर्गान्ते इदमित्युक्तावपि पुनरिदमित्युक्तिर्विशेषणविशेषाभिधानार्था प्रसक्ताश्रुमुखी ईषदश्रुमुखीत्यर्थः ॥ १ ॥

२ ] ति० टी०–वने वस्तव्यतां वासं प्रति त्वया ये दोषाः कीर्तितास्तान्मां प्रति गुणानेव विद्धि । यतोऽहं तव स्नेहेन पुरस्कृता त्वन्निष्ठस्नेहविषया । अनेन त्वत्स्नेहविषयस्य दोषपदार्थो न कोऽपीति भावः । यद्वा यतस्त्वद्विषयकस्नेहेनाग्रगा इत्यर्थः ॥२॥

रा० टी०–तद्वचनमेवाह–ये इति । वस्तव्यतां वासं प्रति ये दोषास्त्वया कीर्तिताः तान्गुणानेव विद्धि इति । यतः तव स्नेहपुरस्कृता त्वद्विषयकस्नेहमात्रदर्शनशीलाहमस्मीति शेषः ॥२॥

गो० टी०–य इति । वस्तव्यतां वासित्वं तान् दोषान् तव स्नेहपुरस्कृतान् गुणानित्येव विद्धि प्रेयसा त्वया सह वर्तमानायाः मम कोकिलालापचन्दनमलयमारुतवत्सुखकरान् जानीहीत्यर्थः । अमुमर्थमुपरितनसर्गे कुशकाशेत्यादिश्लोकैर्विवरिष्यति ॥ २ ॥

३ ] ति० टी०–तदेवाह–मृगा इत्यादि ॥ ३ ॥

४ ] ति० टी०–अदृष्टपूर्वं तावकं रूपं येषां तस्मात् रूपं दृष्ट्वेति । 'स्थाने हृषीकेश तव प्रकीर्त्या' इति न्यायात्तेषामन्यकर्तृकत्वत्स्मरणेन भयं तेषां साक्षात्त्वद्दर्शने भयमित्यर्थासिद्धमिति ध्वनितम् । तव सर्वे हि बिभ्यति । अनेन "यद्भीषोदेति सूर्यः" इत्यर्थो ध्वनितः ॥ ४ ॥

रा० टी०–मृगा इति । तव अदृष्टपूर्वरूपत्वाददृष्टपूर्वं रूपं स्वरूपं यैः तेषां भावः तस्माद्धेतोः ते त्वत्परिगणिताः सर्वे मृगादयः तव रूपं दृष्ट्वा अपसर्पेयुः तत्र हेतुः यतः सर्वे बिभ्यति अपूर्वरूपं दृष्ट्वेति शेषः । तत्र शरभाः अष्टपादवन्तो मृगविशेषाः सृमराः गवयाः । श्लोकद्वयमेकान्वयि ॥३॥४॥

गो० टी०–मृगा इत्यादि । शरभाः अष्टपादमृगाः सृमराः गवयाः भये भयहेतौ अस्मान् दृष्ट्वा अभिमुखमायास्यन्तीत्युक्तवान् रामः इयं त्वपसर्पेयुरिति तत् परिजहार ॥ ३ ॥ ४ ॥

५ ] ति० टी०–गुरुजनाज्ञया 'इयं सीता मम सुता छायेवानुगता सदा' इति सूचितपित्राद्याज्ञयोक्तरीत्या त्वत्पित्राद्याज्ञया त्वद्वियोगेन हेतुना ॥ ५ ॥

रा० टी०–त्वयेति । गुरुजनाज्ञया आर्थिकत्वत्पित्राद्याज्ञया इह जीवितमेतल्लोके स्थितिः ॥ ५ ॥

गो० टी०–त्वयेति । गुरुजनाज्ञया पित्रोराज्ञया त्वया च सह मया गन्तव्यम् "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुत्युक्तप्रक्रियया जायापत्योरेकात्मत्वात् त्वद्विषयादेश एव मद्विषयादेश इत्यर्थः । त्वद्वियोगेन हेतुना मे मया ॥ ५ ॥

६ ] ति० टी०–आद्योऽपिर्लोकोक्तौ ॥ ६ ॥

रा० टी०–नेति । हे राघव ! सुराणां देवानामीश्वरः शक्रः इन्द्रोऽपि प्रधर्षयितुं पराभवितुं न शक्तः ॥ ६ ॥

गो० टी०–न चेति । अपिशब्दो भिन्नक्रमः सुराणामीश्वरोऽपीत्यर्थः ॥ ६ ॥

७ ] ति० टी०–एवंविधं पतिहीनाया जीवनमशक्यमित्येवंरूपं त्वया दर्शितं भरतानुकूलतयात्र वासस्थित्युपदेशेन, अतोऽहं त्वया सह यास्यामि त्वदुपदिष्टभरतानुकूल्येन स्थातुमशक्यत्वादिति भावः । केचित्तु एवंविधं वनवासदुःखं कामं त्वया मम दर्शितं यद्यपि तथापि तादृशवने पतिहीना प्रबलभर्तृहीना न जीवितुं शक्ष्यति न तु मादृशी प्रबलभर्तृकेत्यहं वनं यास्याम्येवेति भाव इत्याहुः ॥ ७ ॥

रा० टी०–पतिहीनेति । पतिहीना पतिवियोगविशिष्टा नारी जीवितुं न शक्ष्यति अतः हे राम ! एवंविधं त्वद्वियोगेऽपि स्थितिकारकं मम काममिच्छाविषयीभूतं वस्तु न निदर्शितम् । नकार उभयान्वयी । किंच एवंविधं सहगमननिवारकवचनं मम कामं कस्य सुखस्य अमो गमनं यस्मात् दुःखदमित्यर्थः निदर्शितं कथितम् । किंच एवंविधमुक्तप्रकारकं मम कामं मदिच्छाविषयीभूतं वस्तु त्वयैव निदर्शितं कौसल्याप्रार्थनासमये उक्तम् ॥ ७ ॥

गो० टी०–पतिहीनेति । या नारी पतिहीना पतिवियुक्ता सा जीवितुं न शक्ष्यतीत्येवंविधं त्वया मम काममत्यर्थं विदर्शितमुपदिष्टम् ॥ ७ ॥

१ पुरस्कृतामिति गो. पाठः । २ पक्षिण इति गो. पाठः । ३ भये इति गो. पाठः । ४ न चेति गो. पाठः । ५ शक्तोतीति गो. पाठः । ६ शक्र इति गो. पाठः । ७ विदर्शितमिति गो. पाठः ।

अथापि च महाप्राज्ञ ब्राह्मणानां मया श्रुतम् । पुरा पितृगृहे सत्यं वस्तव्यं किल मे वने ॥ ८ ॥
लक्षणिभ्यो द्विजातिभ्यः श्रुत्वाहं वचनं गृहे । वनवासकृतोत्साहा नित्यमेव महाबल ॥ ९ ॥
आदेशो वनवासस्य प्राप्तव्यः स मया किल । सा त्वया सह भर्त्राहं यास्यामि प्रिय नान्यथा ॥ १० ॥
कृतादेशा भविष्यामि गमिष्यामि त्वया सह । कालश्चायं समुत्पन्नः सत्यवाग्भवतु द्विजः ॥ ११ ॥
वनवासे हि जानामि दुःखानि बहुधा किल । प्राप्यन्ते नियतं वीर पुरुषैरकृतात्मभिः ॥ १२ ॥
कन्यया च पितुर्गेहे वनवासः श्रुतो मया । भिक्षिण्याः शमवृत्ताया मम मातुरिहाग्रतः ॥ १३ ॥

८] ति० टी०—अथापि वनस्य सदोषत्वेऽपि वने त्वया वस्तव्यं किलेति ब्राह्मणानां सत्यं वचनं पूर्वं पितृगेहे निवसन्त्या मया श्रुतम्, अतोऽवश्यंभावित्वान्मम वनवासस्य न दोषगणनेति भावः ॥ ८ ॥

रा० टी०—स्ववनवासस्यावश्यकत्वं बोधयन्ती आह—अथेति । ब्राह्मणानां सत्यं वच इति शेषः पितृगृहे मया श्रुतम् । किं तदित्यत आह—मे मम वने वस्तव्यं वास इति । च इत्यर्थे ॥ ८ ॥

गो० टी०—अथेतिं । अथ चापि अपि चेत्यर्थः । हे महाप्राज्ञ ! पुरा पितृगृहे वसन्त्या मया ब्राह्मणानां ब्राह्मणेभ्यः ज्योतिर्विद्भ्यः मे मया वने वस्तव्यं किलेति सत्यं वचनं मया श्रुतम् ॥ ८ ॥

९ ] ति० टी०—तदेव पुनर्द्रढयति—लक्षणिभ्य इति । सामुद्रिकलक्षणविद्भ्यः । वचनं वनवाससंपादकलक्षणसत्ताविषयकं वचनम् । नित्यमेवेतः प्रागपि ॥ ९ ॥

रा० टी०—लक्षणिभ्य इति । लक्षणिभ्यः शुभाशुभसूचकलक्षणज्ञातृभ्यो द्विजातिभ्यः वचनं वनवासबोधकवाक्यं श्रुत्वा वनवासकृतोत्साहा नित्यमेवाहमस्मीति शेषः ॥ ९ ॥

गो०टी०—लक्षणिभ्य इति । लक्षणिभ्यः सामुद्रिकलक्षणज्ञेभ्यः लक्षणज्ञानमस्त्येषामिति इनिः ॥ ९ ॥

१० ] ति० टी०—स वनवासस्यादेशो ब्राह्मणोक्तो मया प्राप्तव्यः किल भाविनोऽन्यथाभावाभावात् । तस्मात्त्वया सह यास्यामि । इदमन्यथा न कथमप्यन्यथा न भविष्यतीत्यर्थः । अत्राज्ञापर्यायादेशशब्देन ब्राह्मणोक्तिस्त्वदाज्ञैव तव सर्वान्तर्यामित्वादिति सूचितम् । किं चावतारकरणमसमकालिकोऽयं तवादेशोऽद्यतनरात्रिशेषकालिकश्चादेश इति ध्वनितम् ॥ १० ॥

रा० टी०—आदेश इति । वनवासस्य आदेशः त्वत्कर्तृकाज्ञापनं मया प्राप्तव्यः अतः सा भवदाज्ञप्ताहं त्वया सह यास्यामि अन्यथा न भविष्यतीति शेषः । एतेन ब्राह्मणवचनं त्वया अन्यथा न कर्तव्यमिति सूचितम् ॥ १० ॥

गो० टी०—आदेश इति । सः ब्राह्मणोक्तो वनवासस्यादेशः आदिष्टो वनवास इत्यर्थः । मया प्राप्तव्यः किल ललाटलिखितस्यापरित्याज्यत्वादिति भावः । सा एवमादिष्टाहं त्वया सह यास्यामि नान्यथा केवलं स्वेच्छया न यास्यामीत्यर्थः ॥ १० ॥

११ ति० टी०—तदेवाह—कृतेति । कृतादेशा अनुष्ठिताज्ञा । अन्यथा प्रतिज्ञाताचरणाभावे दोषाभावो ममापि तवेव स्यादिति भावः । अतस्त्वया सह गमिष्यामि । समुत्पन्नः संप्राप्तः पूर्वकल्पितवनवासस्येति शेषः । द्विज इति जात्यभिप्रायेण । अत्र द्विजपदेन रावणोऽपि । तेन यच्छ्वेतद्वीपे तेनोक्तं लक्ष्मीनिमित्तं त्वत्तो मे वधोऽस्त्विति, तत्सत्यं भवत्वित्यपि गूढं सूचितम् ॥ ११ ॥

रा० टी०—मर्यादापालकत्वाद्भवदाज्ञावश्यं भविष्यतीत्याह—कृतेति । कृतादेशा कृत आदेश आज्ञा यस्यै साहं भविष्यामि अत एव त्वया सह गमिष्यामि अत एव द्विजः सत्यवाक् भवतु ॥ ११ ॥

गो० टी०—फलितमाह—कृतादेशेत्यादि । अयं कालः वनवासकालः द्विजः लक्षणवादी जातावेकवचनम् ॥ ११ ॥

१२ ] ति० टी०—इति तात्त्विकमर्थमुक्त्वा पुनर्लोकानुसारेणाह—वनेत्यादि । हिरेवार्थे किलेति निश्चये । वनवासे बहुधा दुःखानि सन्तीति निश्चितं जानाम्येव, तथापि तान्यकृतात्मभिरजितेन्द्रियैः पुरुषैः क्लीसाहित्यवशात्प्राप्यन्ते । अत्र पुरुषप्रकरणाभावेऽपि तदुक्तिस्त्वयापि सा बुद्धिर्वनवासदुःखं दृष्ट्वा न निवर्तनीयेति ध्वनयितुम् ॥ १२ ॥

रा० टी०—वनेति । अकृतात्मभिः अजितेन्द्रियैः दुःखानि प्राप्यन्ते तेनावयोर्दुःखं न भवितेति सूचितं तेन तयोरिन्द्रियानधीनत्वं व्यक्तम् ॥ १२ ॥

गो० टी०—वनवास इति । वनवासे दुःखानि जानामि तानि अकृतात्मभिः अशिक्षितमनस्कैः प्राप्यन्ते न तु मादृशैर्जनैरिति भावः ॥ १२ ॥

१३ ] ति० टी०—ननु लक्षणज्ञानां भ्रमो भवेत्तत्राह—कन्यया चेति । भिक्षिण्याः शमवृत्तायाः शमवदाचारायास्तापस्याः तपोयुक्तत्वेन तस्य भ्रमो न संभवतीति भावः । अत्रत्यमिहस्तुतरश्लोकान्वयि ॥ १३ ॥

रा० टी०—सिंहावलोकन्यायेन प्रमाणान्तरमप्याह—कन्ययेति । शमवृत्तायाः शमदमादिसंपन्नायाः भिक्षिण्याः कन्ययोक्त इति शेषः वनवासो मया श्रुतः शमवृत्ताया इत्यनेन तत्कन्योक्तमन्यथा न भवितेति सूचितम् ॥ १३ ॥

गो० टी०—कन्ययेत्यादिश्लोकद्वयमेकान्वयम् । भिक्षि-

१ पुरेति गो. पाठः । २ तत्रेति गो. पाठः । ३ साध्व्यति गो. पाठः ।

प्रसादितश्च वै पूर्वं त्वं मे[1] बहुतिथं प्रभो । गमनं वनवासस्य काङ्क्षितं हि सह त्वया ॥ १४ ॥
कृतक्षणाहं भद्रं ते गमनं प्रति राघव । वनवासस्य शूरस्य मम चर्या हि रोचते ॥ १५ ॥
शुद्धात्मन्प्रेमभावाद्धि भविष्यामि विकल्मषा । भर्तारमनुगच्छन्ती भर्ता हि [2]परं दैवतम् ॥ १६ ॥
प्रेत्यभावे [3]हि कल्याणः संगमो मे [4]सदा त्वया । श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां [5]यशस्विनाम् ॥ १७ ॥
इहलोके च पितृभिर्या स्त्री यस्य [6]महाबल । अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥ १८ ॥
एवमस्मात्स्वकां नारीं सुवृत्तां हि पतिव्रताम् । नाभिरोचयसे नेतुं त्वं मां केनेह हेतुना ॥ १९ ॥

---

ण्यास्तापस्याः श्रीरामादित्यादिभिः वनवासः श्रुतः भावीति श्रुतः इह गृहे त्वया सह वनवासस्य गमनं लीलार्थं जाह्नवीतीरतपोवनादिगमनं काङ्क्षितं हि त्वं च बहुविधं प्रसादितो वै प्रसादित एवेति संबन्धः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—इहास्मिन्गृहे पूर्वमेव त्वं मे मया बहुतिथं बहुवारं वनवासस्य लीलार्थं वनगमनं प्रति प्रसादितः । अतस्त्वया सह वनगमनं मे काङ्क्षितम् । हि निश्चयेन । इति जानीहीति शेषः ॥ १४ ॥

रा० टी०—प्रसादित इति । वनवासस्य वने वासो यस्य स तस्य मुनिसमूहस्य त्वया सह गमनं वनवासिमुनिकर्मकत्वत्साहित्यविशिष्टमत्कर्तृका गतिः काङ्क्षितमेव अत एव बहुतिथमनेकवारं त्वं प्रसादितः मुनिदर्शनार्थं प्रार्थित इत्यर्थः॥१४॥

१५ ] ति० टी०—हे राघव, ते भद्रम् अहं गमनं प्रति कृतक्षणास्मि कृतानुमतिकास्मि वने वासो यस्य तादृशस्य शूरस्य तव चर्या शुश्रूषा मम रोचते हि। तादृशस्य शूरस्य तव चर्या रक्षोवधादिरूपा मम रोचते मत्संबन्धेनैव शोभते संपद्यते हि यत इति गूढम् ॥ १५ ॥

रा० टी०—कृतक्षणेति । गमनं प्रति त्वया सह वनगमनार्थमहं कृतक्षणा जातोत्सवास्मीति शेषः । साहित्ये कारणमाह—वनवासस्य वनं प्राप्तस्येत्यर्थः शूरस्य तव चर्या अनुचरणं मम रोचते ॥ १५ ॥

गो० टी०—कृतक्षणेति । कृतक्षणा कृतोत्सवा 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः । वनवासस्य वने वासो यस्य इति वनवासः तस्य शूरस्य तव चर्या परिचर्या मम मह्यं रोचते ॥ १५ ॥

१६ ] ति० टी०—प्रेमभावाद्भर्तारमनुगच्छन्ती विकल्मषा भविष्यामीत्यन्वयः । त्वया विनात्र स्थितौ हि लोकः कल्मषं संभावयिष्यतीति भावः ॥ १६ ॥

रा० टी०—शुद्धात्मन्निति । प्रेमभावात् रात्रिंदिवं त्वन्निकटवर्तिनीत्वेन प्रवृद्धस्नेहात् भर्तारं त्वामनुगच्छन्ती अहं विकल्मषा दिवा(?देव)वियोगरूपकल्मषरहिता भविष्यामि । ननु किमर्थं मय्येवमनुरागवाञ्छेत्यत आह—भर्ता त्वमेव मम दैवतं देवता १६

गो० टी०—शुद्धात्मन्निति । शुद्धात्मन् ईर्ष्यादिरहित- प्रेमभावात्प्रेमस्वभावात्, हिः प्रसिद्धौ, भर्तारं त्वामनुगच्छन्ती विकल्मषा विगतकल्मषा भविष्यामि । नन्वत्रैव स्थित्वा कुलदेवतामाराध्य विशुद्धा भवेत्यत्राह—भर्ता हि मम दैवतमिति॥१६॥

१७ ] ति० टी०—प्रेत्यभावे मृत्वा शरीरान्तरपरिग्रहेऽपि परलोकेऽपीति यावत् त्वया सह संगमः कल्याणो दिव्यसुखहेतुः । अत इहसंगमस्य कल्याणत्वं कैमुतिकन्यायसिद्धमिति भावः । प्रेत्यसंगमसत्त्वे मानमाह—ब्राह्मणानां मुखात्पुण्या किल श्रुतिर्यत उक्तार्थप्रतिपादिका श्रूयते ॥ १७ ॥

रा० टी०—नन्वपूर्वो निरवच्छिन्नसंबन्धः किमर्थं प्रार्थ्यते इत्यत आह—प्रेत्येति । प्रकर्षेण ईतिर्जगद्रक्षणं यस्मिन् स प्रेतिः कालःतस्याभावो यस्मिन् साकेतलोके इत्यर्थः। कल्याणः श्रोतृणां कल्याणप्रदः त्वया सह मे सङ्गमः सदा नित्यः इति ब्राह्मणानामुच्चारिता श्रुतिर्वेदः श्रूयते श्रुतिश्च कौषीतक्यादौ प्रसिद्धा अत एव सशरीरः सहानुज इत्यादिवक्ष्यमाणं संगच्छते ॥१७॥

गो० टी०—प्रेत्यभाव इति । प्रेत्यभावेऽपि परलोकेऽपि त्वया सह संगमः कल्याणः शोभनः ॥ १७ ॥

१८ ] ति० टी०—तां श्रुतिं पठति—इहेति । या स्त्री पितृभिः पितृपितामहमात्रादिभिर्यस्याद्भिः स्वधर्मेण स्वस्वजातीयकन्यादानधर्मेण दत्ता सा इहलोके च तस्यैव प्रेत्यभावेऽपि तस्यैव भवतीति ॥ १८ ॥

रा० टी०—प्राकृतस्त्रीणामपि पातिव्रतधर्मस्वीकारे नित्यः पतिसंगमो भवतीत्याह—इहेति । यस्य पुरुषस्य या स्त्री पितृभिर्दत्ता सा स्वधर्मेण पातिव्रतधर्मेण प्रेत्यभावे नित्यलोके तस्य पत्युः नित्यसंयोगं लभत इति शेषः ॥ १८ ॥

गो० टी०—अत्र प्रमाणमाह—श्रुतिर्हीत्यादिसार्धश्लोकेन । पितृभिरिति बहुवचनं पितामहाद्यपेक्षया । श्रुतिमेवाह—इहेति । महामत इत्यनेन न त्वां बोधयामीति सूच्यते । स्वधर्मेण स्वस्ववर्णोक्तब्राह्मादिविवाहविधिना ॥ १८ ॥

१९ ] ति० टी०—एवं श्रुतिन्यायतो नित्यसंबन्धे सतीत्यर्थः अस्मान्नगरात् स्वकां स्वीयाम् सुवृत्तामित्यस्य विवरणं पतिव्रतामिति ॥ १९ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण सुवृत्तां शोभनवृत्तान्तविज्ञापनकर्त्रीं स्वकां स्वकीयां पतिव्रतां नारीं मामस्मात्पुरान्नेतुं केन हेतुना नेच्छसि तं वदेति तात्पर्यम् ॥ १९ ॥

---

१ वै बहुविधमिति गो. वै. इति रा. पाठः । २ ममेति गो. रा. पाठः । ३ ऽपीति गो. पाठः । ४ सहेति गो. पाठः । ५ तपस्विनामिति गो. पाठः । ६ महामते इति गो. पाठः ।

भक्तां पतिव्रतां दीनां मां समां सुखदुःखयोः । नेतुमर्हसि काकुत्स्थ समानसुखदुःखिनीम् ॥ २० ॥
यदि मां दुःखितामेवं वनं नेतुं न चेच्छसि । विषमग्निं जलं वाहमास्थास्ये मृत्युकारणात् ॥ २१ ॥
एवं बहुविधं तं सा याचते गमनं प्रति । नानुमेने महाबाहुस्तां नेतुं विजनं वनम् ॥ २२ ॥
एवमुक्ता तु सा चिन्तां मैथिली समुपागता । स्नापयन्तीव गामुष्णैरश्रुभिर्नयनच्युतैः ॥ २३ ॥
चिन्तयन्तीं तदा तां तु निवर्तयितुमात्मवान् । क्रोधाविष्टां तु वैदेहीं काकुत्स्थो बहु सान्त्वयत् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

## त्रिंशः सर्गः ।

बहुशः सान्त्व्यमानापि सीता रामे रक्षणासामर्थ्यमारोप्य तं जगर्हे तथा वनवासाचरणे स्वस्या दुःखाभावं प्रतिपाद्य मा त्यक्त्वा गते त्वय्यहं विषं पास्यामीति निश्चयं प्रास्तवीत्तेन वशीभूतो रामस्तस्या अनुगमनमङ्गीकृत्य प्रयाणमङ्गलदानादीनि कर्तुं तस्यै संदिदेश ।

सान्त्व्यमाना तु रामेण मैथिली जनकात्मजा । वनवासनिमित्तार्थं भर्तारमिदमब्रवीत् ॥ १ ॥

गो० टी०—एवमिति । एवं पूर्वोक्तश्रुतिरूपप्रबलप्रमाणसद्भावेऽपीत्यर्थः । अस्मान्नगरात् नेतुमित्यनेनान्वयः । यद्वा अस्मात् अद्रिदर्शनाद्धेतोः ॥ १९ ॥

२० ] ति० टी०—सुखदुःखयोः समाम् । अस्यैव विवरणं समानसुखदुःखिनीम् नेतुम् वनमिति शेषः ॥ २० ॥

रा० टी०—भक्तामिति । सुखदुःखयोः सुखं कुबेरादीनां राज्यादिभोगानन्दः दुःखमिव याभ्याम् तयोः रावणकुम्भकर्णयोरित्यर्थः । दीनां विध्वंसिकां भक्तां त्वत्प्रीत्यनुकूलव्यापारवर्तीं समां प्रशस्तकुलादिमत्त्वेन त्वत्सदृशीं पतिव्रतामत एव समानसुखदुःखिनीं मां नेतुमर्हसि । सुखदुःखयोर्दीनामित्यनेन तद्वधेऽहं निमित्तं भवितास्मीति ध्वनितम् । अन्तर्भावितणिजर्थत्वेन दीङः सकर्मकत्वं, तत्कर्माविवक्षया कर्तरि निष्ठा, तदनन्तरं कर्मसमभिव्याहारः । प्रसिद्धश्चायं पन्थाः प्रत्युदाहृतकृतपूर्वीकटमित्यादिना भाष्ये ॥ २० ॥

गो० टी०—भक्तामिति । सुखदुःखयोः समां प्राप्तयोः सुखदुःखयोरेकरूपां समानसुखदुःखिनीं त्वत्समानसुखदुःखाम् ॥ २० ॥

२१ ] ति० टी०—न चेच्छसि नैवेच्छसीत्यर्थः ॥ २१ ॥

रा० टी०—यदीति । मृत्युकारणान्मृत्युसदृशदुःखहेतोः विषादिकमास्थास्ये तत्तद्भक्षणादिविषयकनिश्चयं करिष्ये विषभक्षणादिजनितपीडया वियोगदुःखाल्पता भवितेति तात्पर्यम् ॥ २१ ॥

गो० टी०—यदीति । आस्थास्ये स्वीकरिष्ये ॥ २१ ॥

२२ ] ति० टी०—अननुमतौ हेतुर्विजनत्वं श्वश्रूप्रभृतिरक्षकजनरहितत्वम् ॥ २२ ॥

रा० टी०—एवमिति । सा सीता महाबाहुः रामः नानुमेने अनुमतिं न चकार तेन प्रणयकोपसूचकवचःशुश्रूषा व्यक्ता ॥ २२ ॥

गो० टी०—एवमिति । याचते अयाचत विजनं बन्धुजनरहितम् ॥ २२ ॥

२३ ] ति० टी०—एवमुक्तानमुमतिबोधकवाक्यमुक्ता स्नापयन्तीवेत्युक्त्या तस्या अपि वास्तवदुःखाभावो ध्वनितः रामवाक्यस्य नाट्यतया ज्ञानात् ॥ २३ ॥

रा० टी०—एवमिति । चिन्तां समुपागता प्राप्ता अत एव उष्णैः अश्रुभिः गां पृथ्वीं स्नापयन्ती इव आसेति शेषः ॥ २३ ॥

गो० टी०—एवमिति । गां भुवम् ॥ २३ ॥

२४ ] ति० टी०—सान्त्वयत् सान्त्ववाक्यान्युवाचेत्यर्थः ॥ २४

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०—चिन्तयन्तीमिति । चिन्तयन्तीं सहगमनोपायं विचारयन्तीं क्रोधाविष्टां प्रणयकोपविशिष्टां वैदेहीं निवर्तयितुं कोपं दूरीकर्तुं सान्त्वयन्नासीति शेषः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०—चिन्तयन्तीमिति । ताम्रोष्ठीमित्यनेन सान्त्वादिना स्थापुमशक्यत्वमुच्यते ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

१ ] ति० टी०—वनवासनिमित्तार्थं वनवासनिमित्तानुमतिसिद्ध्यर्थम् ॥ १ ॥

रा० टी०—सीतावृत्तं वर्णयितुमुपक्रमते—सान्त्व्यमानेति । मैथिली मिथिलादेशप्रादुर्भूता जनकात्मजा सीता वनवासो निमित्तं कारणं यस्य तदेव अर्थमनेकार्थविशिष्टमिदं वचनमब्रवीत् ॥ १ ॥

गो० टी०—सान्त्व्यमानेति । जनकात्मजेतिविशेषणं स्वकुलोचिताचारदार्ढ्याय वनवासनिमित्ताय वनवास एव निमित्तं प्रयोजनं तस्मै ॥ १ ॥

१ तथेति गो. पाठः । २ ताम्रोष्ठीं स तदा सीतामिति गो. पाठः । ३ सान्त्वयन्निति रा. पाठः । ४ निमित्तायेति गो. पाठः ।

सा तमुत्तमसंविग्ना सीता विपुलवक्षसम् । प्रणयाच्चाभिमानाच्च परिचिक्षेप राघवम् ॥ २ ॥
किं त्वामन्यत वैदेहः पिता मे मिथिलाधिपः । राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥ ३ ॥
अनृतं बत लोकोऽयमज्ञानाद्यदि वक्ष्यति । तेजो नास्ति परं रामे तपतीव दिवाकरे ॥ ४ ॥
किं हि कृत्वा विषण्णस्त्वं कुतो वा भयमस्ति ते । यत्परित्यक्तुकामस्त्वं मामनन्यपरायणाम् ॥ ५ ॥

२ ] ति० टी०—उत्तमसंविग्ना अतिभीता सैव प्रणयात्स्नेहात् अभिमानोऽत्यन्तमिष्टत्वेन रहसि कोपप्रीत्यादिप्रयुक्तसकलवचनार्ह इत्येवंरूपः परिचिक्षेप सोपहासवचनमुक्तवती ॥ २॥

रा० टी०—वचनस्य विशेषस्वरूपं वर्णयन्नाह—सेति । उत्तमसंविग्ना वियोगहेतुकात्युद्वेगं प्राप्ता अभिमानादहमस्यानन्ययेति मां त्यक्तुमयमसमर्थ इति गर्वात्प्रणयात्प्रकर्षेण नयः रामकर्तृकस्वकर्मकनयनं तस्माद्धेतोः राघवं परिचिक्षेप विलक्षणवचनमुच्चारयामास ॥ २ ॥

गो० टी०—सेति । उत्तमसंविग्ना उत्तममत्यन्तं कम्पमाना विपुलवक्षसं शूरमिति यावत् । शूरमपि कथंचिक्षेपेत्यत्राह—प्रणयादित्यादि । प्रणयात् स्नेहात् अभिमानान्मदीयोऽयमित्यभिमानात् कोपाद्वा प्रणयकोपादिति संपिण्डितोऽर्थः परिचिक्षेप निनिन्द ॥ २ ॥

३ ] ति० टी०—पुरुषविग्रहमाकारेण पुरुषं क्रियया तु स्त्रियमेव त्वां जामातरं प्राप्य मे पिता किममन्यत तव तत्त्वं न ज्ञातवानित्यर्थः यदि जानीयान्मां तुभ्यं न प्रयच्छेदिति शेषः ॥ ३ ॥

रा० टी०—वचनमेवाह—किमिति । पुरुषविग्रहं पुरुषाकृतिं स्त्रियं स्त्र्यन्तराकाङ्क्षारहितत्वेन स्त्रीसदृशं त्वां वैदेहः विदेहकुलोद्भवो मे पिता जामातरं किममन्यत जामातृत्वेन त्वयि निश्चयमकरोत् एवं ज्ञाने तुभ्यं न दद्यादिति तात्पर्यं यद्वा यः त्वया प्रापि स वैदेहः विदेहकुलोत्पन्नः मे पिता पुरुषविग्रहं पुरुषत्वस्य विशेषेण ग्रहो ज्ञानं यस्मिन् परमपुरुषमित्यर्थः तं जामातरं त्वामस्त्रियं स्त्रीरहितं किं कथममन्यत एतेन तव स्त्र्यन्तरमस्तीत्यनुमीयते तेन तदर्थमेव ते वनगमनमिति व्यञ्जितम् । किंच अस्त्रियमस्त्रिणा निखिलास्त्रज्ञेन विश्वामित्रेण सह याति गच्छति तं विश्वामित्रसहचारिणमित्यर्थः जामातरं त्वां पुरुषविग्रहं विशेषपुरुषं किं कथममन्यत तवेदृग्वचनश्रवणेन विशेषपुरुषत्वं न प्रतीयत इति तात्पर्यं तेन पितुर्भ्रमः सूचितः ॥ ३ ॥

गो० टी०—किंत्वेति । मां त्यक्त्वा वनं गतं त्वां यदि मे पिता शृणुयात्तदा त्वां स्त्र्येव काचित्पुरुषवेषं धृत्वा मत्कन्यामुपयेमे इति मन्येतेत्यर्थः हे राम सौन्दर्यमात्रेण परभ्रामक ! वैदेहः विदेहवंश्यः ' कर्मणैव हि संसिद्धिमास्थिता जनकादयः ' इतिकर्मप्रधानतया कदाचिदपि पत्नीविरहमसहमान इत्यर्थः मिथिलाधिपः जनपदस्य सम्यग्रक्षकः मे पिता त्वा मामेकां रक्षितुमशक्त्या मां पत्नीं त्यक्त्वा गतं त्वां प्राप्य ज्ञात्वा गत्यर्था ज्ञानार्थः स्त्रियम् अन्तःस्त्रीस्वभावं पुरुषविग्रहं बहिः पुरुषवेषं जामातरममन्यत किं मन्यते किम् अवश्यमित्थं मन्येतेत्यर्थः । स्त्रियं पुरुषविग्रहमिति[1] पुरुषत्वेऽपि मोहिनीरूपभ्रमकृत्त्वं पूर्वकृतं सूचयतीति प्राहुः ॥ ३ ॥

४ ] ति० टी०—यदि मां विहाय भवान्वनगमनभारं वक्ष्यति प्राप्स्यति वह प्रापणेऽस्य रूपम् । तदा यदिदं लोको वदति रामे यत्तेजस्तत्तपति दिवाकरे नास्तीवेति तदज्ञानादिव गदितमनृतं भविष्यतीति शेषः । बतेति खेदे खेदातिशयव्यञ्जकतया च न्यूनपदत्वादि न दोषः ॥ ४ ॥

रा० टी०—न केवलं मत्पितुरेव भ्रमः एवं त्वद्वचनश्रवणे सर्वेषां भ्रान्तिः प्रकटीभविष्यतीति बोधयन्ती आह—अनृतमिति । यदि मां न नेष्यसीति शेषः तदा दिवाकरे सूर्ये इव तपति त्वयि अज्ञानात्त्वन्निश्चितमन्नयनाभावहेतुविषयकज्ञानाभावाद्धेतोः रामे परं तेजो नास्तीति अनृतं मिथ्या अयं लोको जनः वक्ष्यति वदिता तेन तद्वचनश्रवणे मम खेदो भवितेति सूचितम् । अद्यतनत्वस्याविवक्षा ॥ ४ ॥

गो० टी०—अनृतमिति ।बतेति खेदे अयं लोकः तपति दिवाकर इव रामे परं तेजोऽस्तीति अज्ञानात् यद्वक्ष्यति वदति तदनृतं कुतः नास्ति अनुपलभ्यमानत्वात्तादृशं तेजो नास्त्येवेत्यर्थः । यद्वा अयं लोकः यद्वक्ष्यति यद्वदति रामे परं तेजोऽस्तीत्यर्थसिद्धं तद् अज्ञानात् अतोऽनृतं बत तपति दिवाकर इव रामे परं तेजो नास्ति व्यतिरेकदृष्टान्तः यद्यस्ति दिवाकर इव उपलभ्येत इति भावः । यद्वा अज्ञानात् रामस्वरूपाज्ञानात् लोकोऽयं यद्वदति तदनृतम् किं वदतीत्यत्राह—तेज इति । राम इव तपति दिवाकरे परं तेजो नास्तीति यद्वदति तदनृतमिति पूर्वेणान्वयः ॥ ४ ॥

५ ] ति० टी०—किं हि कृत्वा किं मनसि विचार्येत्यर्थः विषण्णः प्राप्तविषादः ॥ ५ ॥

रा० टी०—ननु गमनाभावहेतुमुक्त्वा त्वयैव लोको बोद्धव्य इत्यत आह—किमिति । किं कारणं कृत्वा मनसि प्रकल्प्य त्वं विषण्णः उदासीनः भयं वा कुतः यद्यस्मात्त्वं परित्यक्तुकाम; एतेन मयापि हेतुर्न ज्ञात इति कथं बोधयितास्मीति ध्वनितम् ॥ ५ ॥

गो० टी०—किमिति । किं हि कृत्वा किमकार्यं कृत्वा विषण्णः ' अप्यकार्यशतं कृत्वा भर्तव्यामनुरब्रवीत् ' इत्युक्तावश्यभरणीयविषये विषादप्राप्तिर्न युक्तेति भावः । ते कालाग्निसदृशक्रोधस्य तव यद्यस्मात्कारणात् मां परित्यक्तुकामोऽसि

१ यद्वीति गो. पाठः ।

द्युमत्सेनसुतं [१]वीरं सत्यवन्तमनुव्रताम् । सावित्रीमिव मां विद्धि त्वमात्मवशवर्तिनीम् ॥ ६ ॥
न त्वहं मनसा [२]त्वन्यं द्रष्टास्मि त्वदृतेऽनघ । त्वया राघव गच्छेयं यथान्या कुल[३]पांसनी ॥ ७ ॥
स्वयं तु भार्यां कौमारीं चिरमध्युषितां सतीम् । शैलूष इव मां राम परेभ्यो दातुमिच्छसि ॥ ८ ॥
यस्य पथ्यंचरामात्थ यस्य चार्थेऽवरुध्यसे । त्वं तस्य भव वश्यश्च विधेयश्च सदानघ ॥ ९ ॥
स मामनादाय वनं न त्वं [४]प्रस्थितुमर्हसि । तपो वा यदि वारण्यं स्वर्गो वा स्यात्त्वया सह ॥ १० ॥
न च मे भविता तत्र कश्चित्पथि परिश्रमः । पृष्ठतस्तव गच्छन्त्या विहारशयनेष्विव ॥ ११ ॥
कुशकाशशरेषीका ये च कण्टकिनो द्रुमाः । तूलाजिनसमस्पर्शा मार्गे [५]मम सह त्वया ॥ १२ ॥

तादृशं कारणं नास्तीत्यर्थः यद्वा किं हि कृत्वा किं मनसि कृत्वा किं विचार्येत्यर्थः यस्मात् विषादात् भयाच्च मां परित्यक्तुकामोऽसि ॥ ९ ॥ ६ ॥

६ ] ति० टी०—द्युमत्सेनसुतं सत्यवन्तमनुव्रतां तत्पत्नीं सावित्रीमिव मां विद्धि ॥ ६ ॥

रा० टी०—नाहं परित्यागार्हेति बोधयन्ती आह—द्युमदिति । द्युमत्सेनसुतं सत्यवन्तं सत्यवत्संज्ञकमनुव्रतां तद्वशवर्तिनीं सावित्रीमिव आत्मवशवर्तिनीं विद्धि जानीहि ॥ ६ ॥

७ ] ति० टी०—यथान्या कुलपांसन्यन्यं पश्यति, एवमहं मनसाप्यन्यं न द्रष्टास्मि अतस्त्वदृते त्वां विना नात्र स्थास्ये अतो हे राघव ! त्वया सह गच्छेयम् ॥ ७ ॥

रा० टी०—नेति । त्वदृते त्वां विना अन्यं भवदुपदिष्टम्-सुखहेतुभूतपदार्थं मनसापि अहमन्या पतिव्रताविलक्षणा कुलपांसनीव न द्रष्टास्मि अतः त्वया सह गच्छेयम् ॥ ७ ॥

गो० टी०—नत्विति । हे राघव ! अन्या कुलपांसिनी यथा कुलपांसिनीव अहं त्वदृते अन्यं मनसापि न द्रष्टास्मि न द्रक्ष्याम्येव अतस्त्वया गच्छेयमिति योजना ॥ ७ ॥

८ ] ति० टी०—एवमप्यननुमतिमेव दृष्ट्वा पुनराक्षिपति—स्वयं त्विति । कौमारीम् अन्यापूर्वेण विवाहितामन्यापूर्वां च चिरमध्युषिताम् अनेन तरुणीत्वमुक्तम् । शैलूष इव जायाजीव इव ॥ ८ ॥

रा० टी०—स्वयमिति । चिरं बहुकालमध्युषितां स्वसमीपवर्तिनीं कौमारीं भार्यां कुमारावस्थायामेव विवाहितामित्यर्थः सतीं मां शैलूषः नर्तनकालिकनट इव परेभ्यः स्वातिरिक्तेभ्यः दातुं तत्सन्निधौ स्थापयितुं किमिच्छसि । तुः किमर्थे । 'प्रसृतोन्मुखे च शैलूषः कथितो नटबिल्वयोः' इति विश्वः ॥ ८ ॥

गो० टी०—दृढपातिव्रत्यप्रदर्शनेऽपि वनगमनासंमतिं ज्ञात्वा क्रुध्यति—स्वयमिति । कौमारीं कुमारावस्थायामेव परिणीतां शैलूष इव जायाजीव इव 'शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः' इत्यमरः परेभ्यः स्वयं दातुमिच्छसि ॥ ८ ॥

९–१० ] ति० टी०—तदेव दर्शयति—यस्य भरतस्य मां पथ्यंचरामिष्टानुवर्तिनीमात्थ संप्रत्येव कथितवानसि पथ्यंचरामित्यत्र ह्रस्वमार्षः । यस्य च भरतस्यार्थे तदभिषेकरूपप्रयोजननिमित्तः अवरुध्यसे निरुद्धाभिषेकोऽसि तस्य त्वमेव वश्य इष्टानुवर्ती विधेयो नियोज्यश्च भव नाहं तदिष्टानुवर्तिनी तद्विधेया चेह वसामीत्याशयः ॥ ९ ॥ १० ॥

रा० टी०—यस्येति । हे राम ! यस्य स्वमात्रादेः पथ्यं हितं त्वमात्थ कथयसि अत एव यस्यार्थे प्रयोजनार्थमवरुध्यसे मामवरोधयसि इह स्थापयसि तस्य वश्यः त्वमेव भव त्वयैव विधेयः तस्यार्थं इति शेषः ॥ ९ ॥

गो० टी०—मातरं शुश्रूषस्वेति यदुक्तं तत्र परिहारमाह—यस्येति । यस्य मातृजनस्य पथ्यं हितमात्थ यस्य चार्थे अवरुध्यसे मां निवारयसे तस्य जनस्य त्वमेव वश्यः अनुकूलः विधेयः प्रेष्यश्च भव अहं तु त्वामनुयास्यामीत्यर्थः यद्वा यस्य मद्रूपजनस्य पथ्यं चात्थ एतावत्पर्यन्तं यस्य चार्थे अवरुध्यसे क्लिश्यसि तस्य जनस्य त्वं वश्यो विधेयश्च भव त्वमेव मद्वचनं शृण्वित्यर्थः अथवा यस्य भरतस्य पथ्यमात्थ यस्य चार्थे यस्याभिषेकरूपप्रयोजननिमित्ते अवरुद्ध्यसे निगृहीतोऽसि तस्य वश्यः इच्छानुसारी विधेयश्च प्रेष्यश्च भवेति संबन्धः ॥ ९ ॥

रा० टी०—स इति । अनादाय अगृहीत्वा प्रस्थितुं नार्हसि तत्र हेतुः तपआदिकं त्वया सहैव स्यात् ॥ १० ॥

गो० टी०—स इति । वश्यो विधेयश्च त्वं तपो वा तपश्चरणं वा अरण्यमरण्यवासो वा स्वर्गो वा स्वर्गगमनं वा त्वया सह भवत्विति शेषः ॥ १० ॥

११ ] ति० टी०—विहारशयनेषु सुप्ताया इवारण्ये गच्छन्त्या न मे परिश्रम इति योजना ॥ ११ ॥

रा० टी०—नेति । पृष्ठतः गच्छन्त्या मे विहारशयनेष्विव श्रमो न भविता ॥ ११ ॥

गो० टी०—न चेति । पथि तव पृष्ठतो गच्छन्त्या मे विहारशयनेष्विव विहारः परिक्रमः उद्यानसंचार इति यावत् 'विहारस्तु परिक्रमः' इत्यमरः ॥ ११ ॥

१२ ] ति० टी०—तूलैरजिनैः प्रियकादिमृगाजिनैश्च समः स्पर्शो येषां तादृशाः भविष्यन्तीति शेषः ॥ १२ ॥

रा० टी०—कुशेति । मार्गे त्वया सह त्वत्साहित्यविशिष्टायाः मम कुशादयः तूलादिसमस्पर्शाः भवितार इति शेषः तत्राजिनं कोमलं मृगविशेषचर्म ॥ १२ ॥

१ वी रेति गो. पाठः । २ ऽप्यन्यमिति गो. पाठः । ३ पांसिनीति गो. पाठः । ४ प्रस्थातुमिति गो. पाठः । ५ मे सह त्वयेति गो. पाठः ।

महावातसमुद्धूतं यन्मामवकरिष्यति । रजो रमण तन्मन्ये परार्ध्यमिव चन्दनम् ॥ १३ ॥
शाद्वलेषु यदा शिश्ये वनान्तर्वनगोचरा । कुथास्तरणयुक्तेषु किं स्यात्सुखतरं ततः ॥ १४ ॥
पत्रं मूलं फलं यत्तु अल्पं वा यदि वा बहु । दास्यसे स्वयमाहृत्य तन्मेऽमृतरसोपमम् ॥ १५ ॥
न मातुर्न पितुस्तत्र स्मरिष्यामि न वेश्मनः । आर्तवान्युपभुञ्जाना पुष्पाणि च फलानि च ॥ १६ ॥
न च तत्र ततः किंचिद्द्रष्टुमर्हसि विप्रियम् । मत्कृते न च ते शोको न भविष्यामि दुर्भरा ॥ १७ ॥
यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना । इति जानन्परां प्रीतिं गच्छ राम मया सह ॥ १८ ॥
अथ मामेवमव्यग्रां वनं नैव नयिष्यसे । विषमद्यैव पास्यामि मा वशं द्विषतां गमम् ॥ १९ ॥

गो० टी०—कुशेति । त्वया सह गच्छन्त्या मम तूलाजिनसमस्पर्शाः तूलं तूलपिण्डः अजिनं कन्दल्याद्यजिनम् 'कदलीकन्दलीचीनचमूरुप्रियका अपि । समूरुश्चेति हरिणा अमी अजिनयोनयः' इत्यभिधानात् भवन्तीति शेषः ॥ १२ ॥

१३ ] ति० टी०—अवकरिष्यति विक्षेप्स्यति व्याप्स्यतीति यावत् परार्ध्यमत्युत्तमम् ॥ १३ ॥

रा० टी०—महेति । महावातसमुद्धूतं महावातनीतं यद्रजः मां त्वत्सहचारिणीमवकरिष्यति आच्छादयिष्यति तत्परार्ध्यमुत्तमं चन्दनमिवाहं मन्ये ॥ १३ ॥

गो० टी०—महावातेति । परार्ध्यं श्रेष्ठं चन्दनं वासितं चन्दनचूर्णमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—वनान्तर्वनमध्ये शिश्ये त्वया सहेति शेषः । कुथाश्चित्रकम्बलास्तद्रूपास्तरणयुक्तेषु मञ्चेषु सुप्ताया मम ततः शाद्वलशयनात्किं सुखतरं स्यात्किमधिकं सुखं स्यान्न किमपीत्यर्थः ॥ १४ ॥

रा० टी०—शाद्वलेष्विति । यदा यस्मिन्काले वनगोचरा वनं प्राप्ताहं वनान्तः वनमध्ये शाद्वलेषु दूर्वादियुक्तभूमिषु शिश्ये तदा कुथास्तरणयुक्तेषु विलक्षणचित्रकम्बलरूपास्तरणविशिष्टेषु पर्यङ्केष्विति शेषः यत्सुखतरमनुभूतमित्यर्थः तत्ततः शाद्वलशयनात्किं साधारणं स्यात् भवितेत्यर्थः ॥ १४ ॥

गो० टी०—शाद्वलेष्विति । शाद्वलेषु बालतृणवत्प्रदेशेषु शिश्ये त्वया सहेति शेषः । कुथाश्चित्रकम्बलाः आस्तरणानि कौसुम्भोत्तरच्छदाः तैर्युक्तेषु तल्पेषु ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—स्वयमाहृत्य दास्यस इत्यनेन स्वस्य तदाहरणप्रयुक्तश्रमाभावः सूचितः ॥ १५ ॥

रा० टी०—पत्रमिति । पत्राद्यन्यतमं यद्दास्यसे तदमृतरसोपमं स्यादिति शेषः ॥ १५ ॥

१६ ] ति० टी०—मातुरित्यादि कर्मणः शेषत्वविवक्षया षष्ठी आर्तवानि तत्तदृतुभवानि ॥ १६ ॥

रा० टी०—नेति । आर्तवानि फलोत्पत्तियोग्यताविशिष्टऋतूत्पन्नानि पुष्पाणि फलानि च भुञ्जानाहं मात्रादिकं न स्मरिष्यामि "अधीगर्थ—" इति षष्ठी ॥ १६ ॥

गो० टी०—नेति । मातुरित्यादौ अधीगर्थदयेशामिति षष्ठी आर्तवानि तत्तदृतुसमुत्पन्नानि ॥ १६ ॥

१७ ] ति० टी०—तत उक्तहेतोः ॥ १७ ॥

रा० टी०—न चेति । ततः मद्गमनाद्विप्रियमनिष्टं द्रष्टुं नार्हसि यतः मत्कृते मदर्थं शोकः शोकहेतुः न भविष्यतीति शेषः । अत एव दुर्भरा त्वत्कर्तृकभरणाशक्या अहं न भविष्यामि ॥ १७ ॥

गो० टी०—न चेति । तत्र वने गतस्त्वं मत्कृतं मन्निमित्तं किंचिद्विप्रियं दुःखं द्रष्टुं नार्हसि ते शोकश्च न भवेत् अतो दुर्भरा दुःखेन भर्तव्या न भविष्यामि ॥ १७ ॥

१८] ति० टी०—त्वत्साहित्येन नरकोऽपि स्वर्गस्त्वद्राहित्येन स्वर्गो नरक इति मम निश्चयं जानन् ॥ १८ ॥

रा० टी०—य इति । यः देशः त्वया सह त्वत्साहित्यविशिष्टः स एव स्वर्गः साकेतलोकः यो देशः त्वया विना त्वत्साहित्याभावविशिष्टः स एव निरयः निर्गतः अयः कल्याणं यस्मात्प्राकृतलोक इत्यर्थः इति परां सर्वविलक्षणां प्रीतिं त्वद्विषयकमत्प्रेम जानन् त्वं मया सह गच्छ ॥ १८ ॥

गो० टी०—किं बहुनोक्तेन निश्चितमेकं संक्षेपतः शृण्वित्याह—य इति । त्वया सह यो वासः सः स्वर्गः मे स्वर्गसमः त्वया विना यो वासः सः निरयः नरकोपमः त्वत्संश्लेषविश्लेषादन्ये न मे सुखदुःखे स्त इति भावः इति एवं परां विश्लेषासहां प्रीतिं जानन् पूर्वमपि बहुशोऽनुभवन् मया सह गच्छ॥१८॥

१९ ] ति० टी०—कैकेयीवन्मथितसिद्धान्तमाह—अथेति । अव्यग्रां वनवासे दोषानगणयन्तीम् द्विषतां भरतादीनाम् ॥१९॥

रा० टी०—अथेति । अथ एवं मत्प्रार्थनानन्तरमपि अव्यग्रामनवधानतारहितचित्तां न नयिष्यसे नेष्यसि तर्हि विषं अतिमादककालकूटविशेषमद्यैव पास्यामि । तत्र हेतुः द्विषतां त्वद्वियोगहेतुकसर्ववस्तुविषयकप्रीत्यभावविशिष्टानां भवन्मात्रादीनामवशमप्रीतिहेतुकक्रान्त्यभावं मा गमं न प्राप्स्यामि द्रष्टुं न शक्ष्यामीत्यर्थः एतेन दुःखादर्शित्वं गुणः सीताया व्यक्तः ॥ १९ ॥

गो० टी०—अथेति । अथेति प्रश्ने एवमुक्तप्रकारेण अव्यग्रां वनगमनविषयभीतिरहिताम् अद्यैव त्वत्सन्निधावेव

१ समुद्धूतमिति गो. रा. पाठः । २ अपेति गो. पाठः । ३ वनान्ते वनगोचरेति गो.पाठः । ४ तल्पेष्विति गो. पाठः । ५ यन्त्वमिति गो. पाठः । ६ दास्यसीति गो. पाठः । ७ गत इति गो. पाठः । ८ नयिष्यसीति गो.पाठः । ९ विशामिति गो. पाठः । १० वशमिति गो. पाठः ।

पश्चादपि हि दुःखेन मम नैवास्ति जीवितम् । उज्झितायास्त्वया नाथ तदैव मरणं वरम् ॥ २० ॥
इमं हि सहितुं शोकं मुहूर्तमपि नोत्सहे । किं पुनर्दशवर्षाणि त्रीणि चैकं च दुःखिता ॥ २१ ॥
इति सा शोकसंतप्ता विलप्य करुणं बहु । चुक्रोश पतिमायस्ता भृशमालिङ्ग्य सस्वरम् ॥ २२ ॥
सा विद्धा बहुभिर्वाक्यैर्दिग्धैरिव गजाङ्गना । चिरसंनियतं बाष्पं मुमोचाग्निमिवारणिः ॥ २३ ॥
तस्याः स्फटिकसंकाशं वारि संतापसंभवम् । नेत्राभ्यां परिसुस्राव पङ्कजाभ्यामिवोदकम् ॥ २४ ॥
तैरसितामलचन्द्राभं मुखमायतलोचनम् । पर्यशुष्यत बाष्पेण जलोद्धृतमिवाम्बुजम् ॥ २५ ॥
तां परिष्वज्य बाहुभ्यां विसंज्ञामिव दुःखिताम् । उवाच वचनं रामः परिविश्वासयंस्तदा ॥ २६ ॥
न देवि तव दुःखेन स्वर्गमप्यभिरोचये । नहि मेऽस्ति भयं किंचित्स्वयंभोरिव सर्वतः ॥ २७ ॥

द्विषतां भरतादीनां वशम् माविशं न प्राप्नुयां विरहो वा द्विषन्तः ॥ १९ ॥

२० ] ति० टी०—पश्चात्त्वद्गमनोत्तरकालम् अतस्तदैव त्वद्वियोगकाल एव ॥ २० ॥

रा० टी०—ननु विषमदस्याल्पकालस्थायित्वाद्विषपानमत्किंचित्करमित्यत आह—पश्चादिति । पश्चाद्विषमदध्वंसानन्तरमपि दुःखेन मम जीवितं मत्कर्तृकत्वन्मात्रादिपालनं सेवनमित्यर्थः नैव स्यादत एव त्वयोज्झितायाः त्यक्ताया मम मरणमिहलोकत्यागेन मरणसदृशं साकेतगमनामित्यर्थः वरं श्रेष्ठमस्ति तेन तत्र तव संयोगो भवितैवेति ध्वनितम् ॥ २० ॥

गो० टी०—पश्चादिति । पश्चादपि त्वद्गमनानन्तरमपि उज्झितायाः त्यक्तायाः तदैव त्वत्सन्निधानकाल एव ॥ २० ॥

२१ ] ति० टी०—किमिति । विगृह्य कथनेन वनवासकालसंख्याया अतिदुस्तरत्वं ध्वनयति ॥ २१ ॥

रा० टी०—ननु चतुर्दशवर्षानन्तरमिह मदागमनस्य निश्चितत्वात्किमयं शोक इत्यत आह—इममिति । दुःखिता त्वद्वियोगहेतुकातिदुःखविशिष्टा ॥ २१ ॥

गो० टी०—विषकृतदुर्मरणादुःखेन मरणं ज्याय इत्याशङ्क्याह—इममिति । आदौ दशवर्षाणि मध्ये त्रीणि वर्षाणि अन्ते एकवर्षं च तुल्यतया भाति विरहिण्या इत्यावेदयितुं विभज्योक्तिः ॥ २१ ॥

२२] ति०टी०—आयस्तायासं प्राप्ता सस्वरं सक्रन्दम् ॥ २२ ॥

रा० टी०—इतीति । आयस्ता अत्यायासं प्राप्ता ॥ २२ ॥

गो० टी०—इतीत्यादि । आयस्ता आयासं प्राप्ता प्रशिथिलगात्रीत्यर्थः सस्वरं सतारध्वनीत्यर्थः ॥ २२ ॥

२३–२४ ] ति० टी०—दिग्धैर्विषलिप्तबाणैः चिरसंनियतं बहुकालं संनिरुद्धम् ॥ २३ ॥ २४ ॥

रा० टी०—सेति । दिग्धैः विषविशेषसंस्कृतबाणैः विद्धा ताडिता गजाङ्गना इव बहुभिः वियोगादिसूचकैर्वाक्यैः विद्धा उक्ता सा सीता चिरसंनियतं बहुकालनिरुद्धं बाष्पमग्निमरणिरिव मुमोच ॥ २३ ॥

गो० टी०—सेति । विद्धा ताडिता वाक्यैः पूर्वं रामोक्तैः दिग्धैः विषलिप्तैः बाणैः चिरसंनियतं वार्ताप्रसङ्गेन चिरात्संनिरुद्धम् अरणिरित्यत्रापि विद्धेत्यनुषञ्जनीयम् ॥ २३ ॥

रा० टी०—तस्या इति । संतापसंभवं वियोगश्रुतिहेतुकसंतापजनितं स्फटिकसंकाशं स्फटिकसूक्ष्मगुटिकावद्भासमानं तस्याः नेत्राभ्यां पङ्कजाभ्यामुदकमिव परिसुस्राव ॥ २४ ॥

गो० टी०—तस्या इति । स्फटिकसंकाशमित्यनेन विकलतावगमात् चिरविगलितधारत्वमवगम्यते उदकं मकरन्दरूपं तद्धयुष्णं निर्मलं च ॥ २४ ॥

२५ ] ति० टी०—सिता पूर्णमासी तत्संबन्ध्यमलो राह्वाद्यनुपरक्तो यश्चन्द्रस्तत्सदृशं जलोद्धृतं जलमुद्धृतं यस्मात् । आहिताग्न्यादिः ॥ २५ ॥

रा० टी०—तादिति । सितामलचन्द्राभं सिते शुक्लपक्षेऽमलोऽन्धकारनिवर्तकः यश्चन्द्रः पूर्णिमाचन्द्र इत्यर्थः । तत्सदृशमायते लोचने यस्मिंस्तन्मुखं जलोद्धृतं जलान्निःसृतमम्बुजमिव पर्यशुष्यत इव । इव उभयान्वयी ॥ २५ ॥

गो० टी०—तदिति । ‘ अमलसङ्काशम् ’ इतिपाठे अमलतया प्रकाशमानं बाष्पेण संतापसंभवेनोष्णेन अम्बुजपक्षे ऊष्मणेत्यर्थः । ‘ बाष्प ऊष्मा ’ इत्यमरः ॥ २५ ॥

२६ ] ति० टी०—परिविश्वासयन्नुज्जीवयन् ॥ २६ ॥

रा० टी०—तामिति । दुःखितां वियोगश्रवणहेतुकदुःखाक्रान्तामत एव विसंज्ञामिव संज्ञारहितासदृशीं तां सीतां परिष्वज्य विश्वासयन् साहित्यगमने विश्वासमुत्पादयन् समुवाच २६

गो० टी०—तामिति । विसंज्ञामित्यनेन मूर्च्छाभावः सूच्यते परिविश्वासयन्सम्यग्विश्वासयन् ॥ २६ ॥

२७ ] ति० टी०—तव दुःखेन त्वद्वियोगदुःखेन प्राप्तमपीति शेषः । स्वयंभोर्ब्रह्मणः स्वव्यतिरिक्तस्ववस्त्वन्तराभावेन पूर्णबलत्वेन च यथा भयाभावस्तद्वदेव ममापि सर्वतो भयाभावः ॥ २७ ॥

रा० टी०—तद्वचनमेवाह—नेति । तव दुःखेन स्वर्गं त्वन्निमित्तदुःखफलकसुखविशेषमपि नाभिरोचये तेन त्वां सह नेष्यामीति सूचितम् । पूर्वोक्तभयादिकमप्यकिंचित्करमित्याह स्वयं

१ तच्चैवामलेति गो. पाठः ।

तव सर्वमभिप्रायमविज्ञाय शुभानने । वासं न रोचयेऽरण्ये शक्तिमानपि रक्षणे ॥ २८ ॥
यत्सृष्टासि मया सार्धं वनवासाय मैथिलि । न विहातुं मया शक्या प्रीतिरात्मवता यथा ॥ २९ ॥
धर्मस्तु गजनासोरु सद्भिराचरितः पुरा । तं चाहमनुवर्तिष्ये[1] यथा सूर्यं सुवर्चला ॥ ३० ॥
न खल्वहं न गच्छेयं वनं जनकनन्दिनि । वचनं तन्नयति मां पितुः सत्योपबृंहितम् ॥ ३१[2] ॥
एष धर्मश्च[3] सुश्रोणि पितुर्मातुश्च वश्यता । आज्ञां चाहं व्यतिक्रम्य नाहं जीवितुमुत्सहे ॥ ३२ ॥
अस्वाधीनं कथं दैवं प्रकारैरभिराध्यते । स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ॥ ३३ ॥

---

भोः स्वयंप्रकाशसर्वावभासकब्रह्मण इव मे भयं नास्ति स्वयं भोरित्यत्र भायातोरौणादिको डुः ॥ २७ ॥

गो० टी०—नेति । तव दुःखेन हेतुना प्राप्यं स्वर्गमपि न रोचये त्वयि दुःखितायां स्वर्गमपि नेच्छामीत्यर्थः स्वयंभोः नारायणस्य न तु चतुर्मुखस्य तस्य मधुकैटभादिभ्यो भयसंभवात् आर्षो डुप्रत्ययः सर्वतः सर्वजन्तुभ्यः ॥ २७ ॥

२८ ] ति० टी०—सर्वं समग्रमान्तरमभिप्रायमविज्ञाय तत एव हेतोस्तव वनवासं न रोचये नाङ्गीकृतवान् इतः प्रागिति शेषः ॥ २८ ॥

रा० टी०—ननु गमननिवारकवाक्यं पूर्वं कथमुक्तमित्यत आह—तवेति । तवाभिप्रायं सहगमनविषयकत्वदिच्छामविज्ञाय तवारण्ये वासं न रोचये । एतेन त्वदभिप्रायविज्ञानार्थमेव पूर्वमुक्तमिति सूचितम् ॥ २८ ॥

गो० टी०—सर्वेति । तव विरहदुःखासहिष्णुरपि निर्भयोऽपि शक्तिमानपि तवान्तराभिप्रायानभिज्ञानादेतावत्पर्यन्तं त्वां वनं नेतुं नेच्छामीति भावः ॥ २८ ॥

२९ ] ति० टी०—यत्सृष्टासि निश्चितासि मया सार्धं वनवासाय गन्तुमिति शेषः, यद्वा सृष्टास्यवतीर्णासि अतस्त्वं मया विहातुं न शक्या आत्मवतात्मज्ञेन यथा प्रीतिर्दया हातुमशक्या ॥ २९ ॥

रा० टी०—यदिति । यद्यस्माद्धेतोः मया सार्धं वनवासाय सृष्टा निश्चयं प्राप्ता किंच सृष्टा प्रकटितासि अतः विहातुं त्यक्तुं मया त्वं न शक्या तत्र दृष्टान्तः आत्मवता परमात्मविषयकविज्ञानविशिष्टेन प्रीतिः तद्विषयकस्नेहो यथा ॥ २९ ॥

गो० टी०—यदिति । सृष्टा दैवेनेति शेषः आत्मवता शीलवता अतिकृच्छ्रावस्थायामप्यक्षुभितमनस्केन वा यच्छब्दयोगात्तदिति पूरणीयम् ॥ २९ ॥

३० ] ति० टी०—सर्वथा त्वां सह नेष्यामीत्याह—धर्मस्त्विति । वानप्रस्थधर्मं इत्यर्थः तं पूर्वाचरितधर्मम् त्वं च यथा सूर्यं सुवर्चलानुवर्तते तथा मामनुवर्तस्व ॥ ३० ॥

रा० टी०—धर्म इति । हे गजनासोरु शुण्डादण्डसदृशोरुविशिष्टे यो धर्मः पुरा सद्भिराचरितः तं पतिव्रतास्त्रीसहचरणधर्ममनुवर्तिष्ये प्रवर्तयिष्यामि अतः सूर्यं सुवर्चला तत्पत्नीव मामनुवर्तस्वेति शेषः ॥ ३० ॥

गो० टी०—इदं पत्न्या सह वनगमनं रागप्राप्तं न भवति अपि तु शिष्टाचारसिद्धमित्याह—धर्म इति । धर्मः वानप्रस्थधर्मः सद्भिः सपत्नीकैः राजर्षिभिः यथा सूर्यं सुवर्चलेतिभिन्नलिङ्गयोरप्यौपम्यमार्षम् यथा सूर्यं सुवर्चला देवी तद्वन्मामनुवर्तस्वेति वार्थः ॥ ३० ॥

३१ ] ति० टी०—मम तु गमनं निश्चितमेवेत्याह—न खल्विति । अहं वनं न गच्छेयमिति न, किं तु सर्वथा गच्छेयमेव यतस्तत्पितुर्वचनं मां नयति ॥ ३१ ॥

रा० टी०—स्वगमनस्यावश्यकत्वं बोधयन्नाह—नेति । सत्योपबृंहितं सत्यसंयुक्तं पितुर्वचनं मां वनं नयति अतो वनं न गच्छेयमिति न गमिष्याम्येवेत्यर्थः ॥ ३१ ॥

गो० टी०—न खल्विति । सत्योपबृंहितं पितुर्वचनं मां वनं नयति खलु तत्तस्मात्कारणादहं न गच्छेयमिति न अपैव गच्छेयमेवेत्यर्थः ॥ ३१ ॥

३२ ] ति० टी०—ननु यदि तव नेच्छा तदा पितृवच उल्लङ्घ्यापि तिष्ठेत्याह—एष धर्म इति । एतत्पदार्थः पितुर्मातुश्च वश्यतेष्टानुवर्तिता अतोऽहं तदाज्ञां व्यतिक्रम्य जीवितुं नोत्सह इति मया निश्चितम् ॥ ३२ ॥

रा० टी०—पितुराज्ञापालनस्यावश्यकत्वं बोधयन्नाह—एष इति । पित्रादिवश्यता धर्मः अत एव व्यतिक्रम्य उल्लङ्घ्य जीवितुं आज्ञाः पालयतुं नोत्सहे ॥ ३२ ॥

गो० टी०—एष इति । पितुर्मातुश्च वश्यतेत्येष एव धर्मः वश्यता विधेयता अहं पितृवचनपरिपालनोद्युक्तोऽहं तं व्यतिक्रम्य मातापितृविधेयत्वरूपधर्मं व्यतिक्रम्य अहं जीवितुं नोत्सह इति संबन्धः ॥ ३२ ॥

३३ ] ति० टी०—अस्वाधीनमप्रत्यक्षत्वात्तादृशं दैवं प्रकारैर्भावनामात्रसाध्याराधनप्रकारैः स्वाधीनं प्रत्यक्षदृश्यमानत्वात् ॥ ३३ ॥

रा० टी०—अस्वाधीनमिति । स्वाधीनं प्रत्यक्षस्वसेवायत्तत्वविशिष्टं मात्रादिकं समतिक्रम्य अस्वाधीनमप्रत्यक्षत्वेन प्रत्यक्षस्वसेवायत्तत्वरहितं दैवं स्वेप्सितदेवताप्रकारैः क्रियाभिः कथमभिराध्यते एतेन गुरूपदिष्टपथैव देवा आराधनीया इति सूचितम् ॥ ३३ ॥

गो० टी०—मा भूत् पितृवचनकरणं दैवमाराध्यास्माभिर-

---

१ अनुवर्तेऽद्यति गो. पाठः । २ त्विति गो. पाठः । ३ अतश्च तमिति गो. पाठः ।

यत्र [1]त्रयं त्रयो लोकाः पवित्रं तत्समं भुवि । नान्यदस्ति शुभापाङ्गे तेनेदमभिराध्यते ॥ ३४ ॥
न सत्यं दानमानौ वा [2]यज्ञो वाप्याप्तदक्षिणः । तथा बलकराः सीते यथा सेवा पितुर्मता [3] ॥ ३५ ॥
स्वर्गो धनं वा धान्यं वा विद्या पुत्राः सुखानि च । गुरुवृत्त्यनुरोधेन न किंचिदपि दुर्लभम् ॥ ३६ ॥
देवगन्धर्वगोलोकान्ब्रह्मलोकांस्तथा[4]परान् । प्राप्नुवन्ति महात्मानो मातापितृपरायणाः ॥ ३७ ॥
स मा पिता यथा शास्ति सत्यधर्मपथे स्थितः । तथा वर्तितुमिच्छामि स हि धर्मः सनातनः ॥ ३८ ॥
मम सन्ना मतिः सीते नेतुं त्वां दण्डकावनम् । वसिष्यामीति सा त्वं मामनुयातुं सुनिश्चिता ॥ ३९ ॥
सा हि [5]दिष्टानवद्याङ्गि वनाय मदिरेक्षणे । अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥ ४० ॥

वव स्थातव्यमित्यत्राह—अस्वाधीनामिति । अस्वाधीनमाराधकानधीनं स्वतन्त्रमिति यावत्, यद्वा अस्वाधीनं प्रत्यक्षतया अनाज्ञापयत् स्वाधीनं प्रत्यक्षतया नियोजयन्तं गुरुम् गुरुं चेत्यर्थः प्रकारैः आराधनप्रकारैः ॥ ३३ ॥

३४ ] ति० टी०—यत्र पित्राद्याराधने सति त्रयं धर्मार्थकामरूपं भवति त्रयो लोकाश्चाराधिता भवन्ति अनेन तदाराधनेन लोकत्रयान्तर्गतसकलदेवताराधनफलं दर्शितम् अतस्तत्समभन्यत्पवित्रं पुण्यजनकम् यद्वा पविर्महाभयरूपः संसारः 'पविर्वज्रं महाभयम्' इत्यभिधानात् । तस्मात्त्रायते तत्तेन संसारतारकमित्यर्थः अन्यत्त्रैलोक्ये नास्ति तेन भुवि स्थितैरिदमाराध्यते ॥ ३४ ॥

रा० टी०—यत्रेति । यत्र मात्राद्याराधने त्रयं धर्मार्थकामाः अस्तीति शेषः अत एव त्रयः ऊर्ध्वाधोमध्यवर्तिनः लोकाः जना यत्र वर्तन्त इति शेषः अतस्तत्समं मात्राद्याराधनसदृशं पवित्रं भुवि कस्मिंश्चिद्देशे अन्यन्नास्ति तेन हेतुना इदं पितृवचनमभिराध्यते परिपाल्यते अर्थशब्देन परमपुरुषार्थभूतमोक्षस्यापि ग्रहणान्न व्याख्याने न्यूनता अत एव त्रयमित्युक्तिः सानुकूला ॥ ३४ ॥

गो० टी०—यदिति । यत् गुर्वादित्रयं तत् त्रयो लोकाः लोकत्रयमपि तदाराधनसाध्यमित्यर्थः भुवि तत्समं पवित्रमन्यन्नास्ति गगनं गगनाकारमितिवत् स्वस्य स्वेनौपम्यसंभवात्त व्याहृत्यर्थमन्यपदं तेन कार्त्स्न्येन इदं गुर्वादित्रयमभिराध्यते॥३४॥

३५ ] ति० टी०—बलकराः परलोकबलकराः तद्धितावहा इति यावत् ॥ ३५ ॥

रा० टी०—नेति । यथा पितुः पित्रादेः सेवा बलकरी प्राबल्यसंपादिका मता निश्चिता तथा सत्यादयः आप्तदक्षिणः आप्ता ब्राह्मणैः आप्ता दक्षिणा यस्मिन् स यज्ञश्च न बलकरः बलकरा इति लिङ्गवचनविपरिणामेनान्यत्राप्यन्वेति । 'हिता' इति पाठान्तरम् ॥ ३५ ॥

गो० टी०—पितृवाक्यस्य सत्यादिवैलक्षण्यमाह—न सत्यमिति । हिताहितकरी पितुः सेवा यथा बलकरी तथा सत्यादयः न बलकराः न परलोकबलकराः न पारत्रिकाभ्युदयसाधका इत्यर्थः ॥ ३५ ॥

३६–३७ ] ति० टी०—गुरुवृत्तिर्गुरुचित्तवृत्तिः ॥३६॥३७॥

रा० टी०—तदेव द्रढयन्नाह—स्वर्ग इति । गुरुवृत्त्यनुरोधेन गुर्वादिसेवानुरूपेण स्वर्गादिकं किंचिदपि दुर्लभं न सेवानुरूपं फलं भवत्येवेत्यर्थः ॥ ३६ ॥

गो० टी०—स्वर्ग इति । स्वर्गादीनि गुरुवृत्त्यनुरोधेन सिध्यन्तीति शेषः गुरूणां मात्रादीनां वृत्तिः शुश्रूषणं तदनुरोधेन तदनुवर्तनेन 'अनुरोधोऽनुवर्तनम्' इत्यमरः । व्यतिरेकेणाप्याह—न किंचिदिति ॥ ३६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—देवेति । मातापितृपरायणाः मात्रादिभक्ताः ॥ ३७ ॥

गो० टी०—देवगन्धर्वेति । क्रमेण ब्रह्मलोकं प्राप्नुवन्तीति भावः नरा इति सर्ववर्णसाधारण्योक्तिः महात्मानः दृढमनस्काः मातेति तच्छुश्रूषणैकरता इत्यर्थः ॥ ३७ ॥

३८ ] ति० टी०—मा माम् ॥ ३८ ॥

रा० टी०—स इति । मा मां शास्ति आज्ञापयति ॥३८॥

गो० टी०—स इति । मा मां सः स्वतन्त्रः वर्तितुमनुष्ठातुं सः वर्तनम् धर्मापेक्षया पुंस्त्वम् ॥ ३८ ॥

३९ ] ति० टी०—यतो वने वसिष्यामीति दृढनिश्चयेन त्वं मामनुयातुं निश्चिता अतस्त्वां दण्डकावनं नेतुं मम या मतिस्तद्विरुद्धा या मतिरासीत्सेदानीं सन्ना विशीर्णा ॥ ३९ ॥

रा० टी०—ममेति । वसिष्यामि वत्स्यामि पत्या सहेति शेषः इति हेतोः मामनुयातुं यतस्त्वं सुनिश्चिता अतस्त्वां नेतुं मम मतिः सन्ना प्राप्ता ॥ ३९ ॥

गो० टी०—ममेति । सन्ना त्वद्भावपरिज्ञानात् क्षीणा सा त्वं मया सह वसिष्यामीति मामनुयातुं सुनिश्चिता तेन इदानीं ज्ञातासीति भावः ॥ ३९ ॥

४० ] ति० टी०—सा त्वं हि यतोऽधुना वनाय वनगमनाय दिष्टा मयानुज्ञाता, अतो मामनुगच्छस्व । सहधर्मचरी भवेत्यनेन वनवाससाध्यस्य स्वधर्मस्य रक्षोवधजस्य त्वया विनासंभव इति सूचितम् ॥ ४० ॥

रा० टी०—सेति । वनाय वनं गन्तुं यतः दिष्टा आज्ञप्ता तस्मान्मामनुगच्छस्व ॥ ४० ॥

गो० टी०—सेति । सृष्टा दैवेनेति शेषः ॥ ४० ॥

१ यत्रायं नभय इति गो. पाठः । २ न यज्ञाश्चाप्तदक्षिणा इति गो. पाठः । ३ हितेति गो. पाठः । ४ नरा इति गो. पाठः । ५ सृष्टेति गो. पाठः ।

सर्वथा सदृशं सीते मम स्वस्य कुलस्य च । व्यवसायमनुक्रान्ता कान्ते त्वमतिशोभनम् ॥ ४१ ॥
आरभस्व शुभश्रोणि वनवासक्षमाः क्रियाः । नेदानीं त्वदृते सीते स्वर्गोऽपि मम रोचते ॥ ४२ ॥
ब्राह्मणेभ्यश्च रत्नानि भिक्षुकेभ्यश्च भोजनम् । देहि चाशंसमानेभ्यः संत्वरस्व च मा चिरम् ॥ ४३ ॥
भूषणानि महार्हाणि वरवस्त्राणि यानि च । रमणीयाश्च ये केचित्क्रीडार्थाश्चाप्युपस्कराः ॥ ४४ ॥
शयनीयानि यानानि मम चान्यानि यानि च । देहि स्वभृत्यवर्गस्य ब्राह्मणानामनन्तरम् ॥ ४५ ॥
अनुकूलं तु सा भर्तुर्ज्ञात्वा गमनमात्मनः । क्षिप्रं प्रमुदिता देवी दातुमेव प्रचक्रमे ॥ ४६ ॥
[ ततः प्रहृष्टा प्रतिपूर्णमानसा यशस्विनी भर्तुरवेक्ष्य भाषितम् ।
धनानि रत्नानि च दातुमङ्गना प्रचक्रमे धर्मभृतां मनस्विनी ॥ ४७ ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ।

श्रुतरामसीतासंवादो लक्ष्मणो धनुर्धरोऽहं तेऽग्रेसरो भवामीति रामं प्रार्थयत रामस्तंन्यषेधीत् पूर्वं कृताङ्गीकारोऽपि किमिति निषेधसीति पृष्टे मातृपालनं त्वया कार्यमिति बहुशः सान्त्व्यमानोऽपि मादृक्सहस्रपालनसमर्थानां मातॄणां कोऽहं पालक इति कमुन्येन तन्न्यषेधीत् रामस्तद्गमनमनुमत्यात्मीयधनदानपात्रीभूतान्सुयज्ञादिऋषीनानाययितुं लक्ष्मणं प्राचोदयत् ।

एवं श्रुत्वा स संवादं लक्ष्मणः पूर्वमागतः । बाष्पपर्याकुलमुखः शोकं सोढुमशक्नुवन् ॥ १ ॥

४१ ] ति० टी०—व्यवसायं भर्त्रनुसरणनिश्चयमनुक्रान्ता प्रकर्षेण प्राप्ता प्रीत्यतिशयात्संबोधनद्वयम् ॥ ४१ ॥

रा० टी०—सर्वथेति । मम कुलस्य स्वस्य स्वकीयस्य कुलस्य त्वत्पितृकुलस्येत्यर्थः सदृशं योग्यं व्यवसायं सहगमनविषयकनिश्चयमनुक्रान्ता प्राप्ता अतोऽतिशोभनमेतत् ॥ ४१ ॥

गो० टी०—सर्वथेति । व्यवसायं भर्त्रनुसरणाध्यवसायमतिक्रान्ता प्रकर्षेण प्राप्ता 'प्रकर्षे लङ्घनेऽप्यति' इत्यमरः ॥४१॥

४२ ] ति० टी०—क्रिया दानादिक्रियाः । इदानीमेवं दृढनिश्चये ॥ ४२ ॥

रा० टी०—आरभस्वेति । वनवासक्षमाः वनवासोचिताः क्रिया आरभस्व ॥ ४२ ॥

गो० टी०—आरभस्वेति । वनवासक्षमाः वनवासहिताः 'क्षमं शक्ते हिते त्रिषु' इत्यमरः । क्रियाः दानादिक्रियाः ॥ ४२ ॥

४३ ] ति० टी०—रत्नान्युत्तमवस्तूनि भोजनमाशंसमानेभ्यो भिक्षुकेभ्यो भोजनं देहि ॥ ४३ ॥

रा० टी०—ब्राह्मणेभ्य इति । आशंसमानेभ्यः मङ्गलमुच्चारयितृभ्यः भिक्षुकेभ्यो ब्राह्मणेभ्यः रत्नानि उत्तमपदार्थान् भोजनं च देहि संत्वरस्व मा चिरं विलम्बं न कुरु ॥ ४३ ॥

गो० टी०—ब्राह्मणेभ्य इति।आशंसमानेभ्यः अर्थयमानेभ्यः ४३

४४ ] ति० टी०—क्रीडार्था उपस्कराः स्वर्णमयपुत्रिकाद्युपकरणानि ॥ ४४ ॥

४५ ] ति० टी०—शयनीयानि मम च चात्स्वस्य अन्यानि यानि च वस्तूनीति शेषः । ब्राह्मणानामनन्तरब्राह्मणदानोत्तरमवशिष्टानि भृत्यवर्गेभ्यो देहीत्यर्थः ॥ ४५ ॥

रा० टी०—भूषणानीति । ब्राह्मणानां ब्राह्मणसंप्रदानकदानानामनन्तरं महार्हाणि अतिपूज्यानि क्रीडार्थाः क्रीडामात्रप्रयोजनकाः उपस्कराः सामग्र्यः मम शयनीयादीनि च स्वभृत्यवर्गेभ्यो देहि । श्लोकद्वयमेकान्वयि ॥ ४४ ॥ ४५ ॥

गो० टी०—भूषणानीति । क्रीडार्थाश्चाप्युपस्कराः जातरूपमयकृत्रिमपुत्रिकालीलापाकभाजनादिविचित्रोपकरणानि ब्राह्मणानामनन्तरं स्वभृत्यवर्गस्य देहीति संबन्धः ॥ ४४ ॥ ४५ ॥

४६ ] ति० टी०—अनुकूलमिष्टं गमनं वनानुगमनम्॥४६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०—अनुकूलमिति । आत्मनो गमनं भर्तुरनुकूलं ज्ञात्वा प्रमुदिता सती क्षिप्रं दातुं प्रचक्रमे ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रिंशः सर्गः ॥ ३० ॥

गो० टी०—अनुकूलमिति । अनुकूलं संमतम् ॥ ४६ ॥

गो०टी०—तत इति।प्रतिपूर्णमानसा निश्चिन्ता इत्यर्थःअवेक्ष्य आलोच्य धर्मभृतां धर्मभृद्भ्यः मनस्विनी निश्चित मनस्का ४७

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

१ ] ति० टी०—संवादम् रामसीतयोरिति शेषः । पूर्वमागतः कौसल्यागृहाद्रामसीतासंवादप्रवृत्तेः पूर्वमेवागतः शोकं स्वस्य वनगमनमङ्गीकरोति न वेति शङ्कया संभावितरामविरहजम् ॥ १ ॥

१ अतोति गो. पाठः । २ उपचक्रमे इति गो. पाठः । ३ श्लोकोऽयमधिको गो. पाठे । ४ स्विति गो. पाठः ।

स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः । सीतामुवाचातियशां राघवं च महाव्रतम् ॥ २ ॥
यदि गन्तुं कृता बुद्धिर्वनं मृगगजायुतम् । अहं त्वानुगमिष्यामि वनमग्रे धनुर्धरः ॥ ३ ॥
मया समेतोऽरण्यानि रम्याणि विचरिष्यसि । पक्षिभिर्भृङ्गयूथैश्च संघुष्टानि समन्ततः ॥ ४ ॥
न देवलोकाक्रमणं नामरत्वमहं वृणे । ऐश्वर्यं चापि लोकानां कामये न त्वया विना ॥ ५ ॥
एवं ब्रुवाणः सौमित्रिर्वनवासाय निश्चितः । रामेण बहुभिः सान्त्वैर्निषिद्धः पुनरब्रवीत् ॥ ६ ॥
अनुज्ञातस्तु भवता पूर्वमेव यदस्म्यहम् । किमिदानीं पुनरपि क्रियते मे निवारणम् ॥ ७ ॥

रा० टी०—सीतारामयोर्वृत्तमुक्त्वा लक्ष्मणवृत्तमुपक्रमन्नाह—एवमिति । पूर्वमागतः पौर्वकालिकागमनविशिष्टः बाष्पपर्याकुलमुखः अश्रुव्याप्तमुखविशिष्टः स लक्ष्मणः एवमनेन प्रकारेण संवादं सीतारामोक्तिप्रत्युक्ती श्रुत्वा शोकं रामवियोगहेतुकसंतापं सोढुमशक्नुवन्सन्नासेति शेषः ॥ १ ॥

गो० टी०—एवं रामेण सीतागमनेऽङ्गीकृते लक्ष्मणस्यानुगमनप्रार्थनमुपक्षिपति—एवमित्यादिना । श्लोकद्वयमेकं वाक्यम् । एवं संवादं पूर्वोक्तं सीतारामयोः संवादं पूर्वमागतः कौसल्यागृहाद्रामेण सह पूर्वमेवागतः शोकमर्धशरीरभूतायाः सीताया अपि वनानुगमनं कृच्छ्रादप्यङ्गीकृतं मम कथं तत्संभविष्यतीति विचारजं शोकं स्वानुवृत्तिरूपप्रयोजनाय सीता पुरुषकारेण रामे शरणागतिं विधत्ते—स भ्रातुरिति । सः रामानुवृत्तिरूपप्रयोजनाय उपायान्तरशून्यः भ्रातुरित्यवर्जनीयसंबन्धकथनाच्छरण्यत्वमुक्तम् चरणौ निपीड्येति शरणागत्युक्तिः गाढमित्यश्लथत्वोक्त्या महाविश्वास उक्तः रघुनन्दनः लक्ष्मणः अतियशाः आनुकूल्यसंकल्पप्रातिकूल्यवर्जनवान् आदौ सीतां पुरुषकारत्वेन परिगृह्योवाच पश्चात्तत्पुरुषकारेण महाव्रतं न त्यजेयं कथंचन एतद्व्रतं मम इत्युक्तगुरुतरव्रतयुक्तं राघवं रघुराक्षससंवादादिप्रसिद्धकुलधर्मशरणागतरक्षणं च उवाच शरणागतेः सर्वफलप्रदत्वेन स्वाभिमतफलं विज्ञापयामास निपीड्येत्यन्तेन द्वयस्य पूर्वखण्डोक्तशरणागतिरनूदिता, राघवमुवाचेत्यनेनोत्तरखण्डोक्तफलप्रार्थनोक्ता, सीतामुवाचेत्युभयत्र पुरुषकारपरिग्रहोक्तिः ॥ १ ॥ २ ॥

२ ] ति० टी०—भ्रातुश्चरणौ गाढं निपीड्य प्रणम्येति यावत् । अतियशामुत्कृष्टकीर्तिमतीं सीतां चक्षुरादिभिः प्रार्थयन् महाव्रतं वनवासलक्षणमहाव्रतकृतनिश्चयं रामं तूवाच वक्ष्यमाणं । स्वाभिमतप्राप्तौ सीताशरणगमनमेव मद्गमनमङ्गीकारयत्येवं मुख्य उपाय इति मत्वा तत्प्रार्थना ॥ २ ॥

रा० टी०—स इति । अतियशाः स रघुनन्दनो लक्ष्मणः भ्रातुः रामस्य चरणौ गाढं दृढं निष्पीड्य सीतां राघवं रामं चोवाच ॥ २ ॥

३–४] ति० टी०—बुद्धिर्युवाभ्यामिति शेषः । त्वा त्वां वनगन्तारम् । अनुगमिष्यामि । अनुः सहार्थे । गमनकाले चाग्रत एव धनुर्धरो गमिष्यामि ॥ ३ ॥ ४ ॥

रा० टी०—तद्वचनमेवाह—यदीति । मृगगजायुतं मृगगजैरायुतं व्याप्तम् एतेन स्वनिष्ठभीत्यभावः सूचितः ॥ ३ ॥

रा० टी०—त्वानुगमने प्रयोजनमाह—मयेति । समेतो युक्तः बहूनि अनेकविधानि ॥ ४ ॥

गो० टी०—कैङ्कर्यप्रार्थनमेवाह—यदीति । यदीत्यनेन रामस्य वनगमनं स्वानभिमतमित्युक्तम् । कैङ्कर्यसाधनमाह—धनुर्धर इति । धनुर्धरत्वे हेतुमाह—मृगेति । अहं त्वा अनु पश्चादग्रे च वनं गमिष्यामि तवाग्रे पश्चाद्वा यत्र दुष्टमृगशङ्का तत्र सावधानो गमिष्यामीत्यर्थः अत एव मया समेत इति वक्ष्यति मया धनुर्धरेण मया त्वदीयं धनुर्वहतेति वार्थः बहूनीत्यनेन सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधकैङ्कर्यप्रार्थनं कृतम् ॥ ३ ॥ ४ ॥

५–६ ] ति० टी०—नन्विहैव भोगान्भुक्त्वा स्थातव्यमित्यत्राह—नेति । आक्रमणमारोहः ॥ ५ ॥ ६ ॥

रा० टी०—रामवियुक्तस्थाने स्वस्थित्ययोग्यतां बोधयन्नाह—नेति । देवलोकाक्रमणं नहुषादिवद्देवलोकगमनं त्वया विना न वृणे स्वीकरोमि अमरत्वं देवत्वं च लोकानां भुवनानामैश्वर्यमाधिपत्यं च न कामये ॥ ५ ॥

रा० टी०—एवमिति । वनवासाय वनवासं कर्तुं निश्चितः एवं ब्रुवाणः सौमित्रिर्लक्ष्मणः बहुभिः अनेकविधैः सान्त्वैः वियोगश्रुतिहेतुकोद्वेगशामकैः वचनैः रामेण निषिद्धो वनगमनान्निवारितोऽपि पुनरब्रवीत् ॥ ६ ॥

गो० टी०—अनन्योपायत्ववदनन्यप्रयोजनत्वमाह—नेति । देवलोकाक्रमणं देवानां सूरयोध्येत्युक्तपरमपदप्राप्तिं त्वया विना न वृणे त्वत्कैङ्कर्यं विना कृतं मोक्षमपि न वाञ्छामीत्यर्थः । अमरत्वं जरामरणमोक्षायेत्युक्तं कैवल्याख्यं मोक्षमपि न वृणे लोकानामैश्वर्यं त्रिलोकाधिपतित्वं ब्रह्मत्वमिति यावत् मोक्षमप्यकामयमानोऽहं कथं कैवल्यादिकं कामयेयेति भावः, यद्वा अवरोहक्रमेण त्रैलोक्यैश्वर्यादिकमपि न कामय इति अतो न पतत्प्रकर्षदोषः देवलोकगमनं देवत्वमिन्द्रत्वं वा न कामय इति वाक्यार्थस्तुच्छः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—पूर्वमेव भवतानुज्ञातः । तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीं क्रियामित्युक्तेः । किं च पूर्वम् अवतरणसमय इत्यप्यर्थः ॥ ७ ॥

१ निष्पीड्येति रा. पाठः । २ यशा इति गो. रा. पाठः । ३ बहूनीति गो. पाठः । ४ मृगेति गो. रा. पाठः । ५ नेति गो. पाठः । ६ इदमिति गो. पाठः । ७ प्रार्थयमान इति शुल्के भाति ।

यदर्थं प्रतिषेधो मे क्रियते गन्तुमिच्छतः । एतदिच्छामि विज्ञातुं संशयो [1]हि ममानघ ॥ ८ ॥
ततोऽब्रवीन्महातेजा रामो लक्ष्मणमग्रतः । स्थितं प्राग्गामिनं [2]धीरं याचमानं कृताञ्जलिम् ॥ ९ ॥
स्निग्धो धर्मरतो [3]धीरः सततं सत्पथे स्थितः । प्रियः प्राणसमो वश्यो विधेय[4]श्च सखा च मे ॥ १० ॥
मयाद्य सह सौमित्रे त्वयि गच्छति तद्वनम् । को भजि[5]ष्यति कौसल्यां सुमित्रां वा यशस्विनीम् ॥ ११ ॥
अभिवर्षति कामैर्यः पर्जन्यः पृथिवीमिव । स कामपाशपर्यस्तो महातेजा महीपतिः ॥ १२ ॥
सा हि राज्यमिदं प्राप्य नृपस्याश्वपतेः सुता । दुःखितानां सपत्नीनां न करिष्यति शोभनम् ॥ १३ ॥

रा० टी०—तद्वचनमेवाह—अन्विति । भवता पूर्वमेवा-नुज्ञातः आनुमानिकगमनकर्मिकाज्ञाविषयीभूतः अत एव यद्ग-मनविषयकयत्नवानहमस्मि इदानीं तु मे मम निवारणं गमन-प्रतिषेधो भवता क्रियते इदं किं न युक्तमित्यर्थः । अनुमान-प्रकारस्तु त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ ममेति सीतां प्रति भवदुक्तेः अहं सहगमनविषयकरामाज्ञापितः मद्विषयका-नुशासनान्तराभावान्नित्यसहचारिराजवर्गवत् ॥ ७ ॥

गो० टी०—अनुज्ञात इति । अनुज्ञातश्च अनुज्ञात एव 'उपक्लृप्तं च यत्किंचिदभिषेकार्थमद्य मे । सर्वं विसर्जय क्षिप्रं कुरु कार्यं निरत्ययम्' इति वचनात् । अन्यत्र च 'तस्मादपरितापः संस्त्वमप्यनुविधाय माम् । प्रतिसंहारय क्षिप्रमाभिषेचनिकीः क्रियाः' इति । अपरत्र च 'भ्रातृपुत्रसमौ चापि द्रष्टव्यौ च विशे-षतः । त्वया भरतशत्रुघ्नौ प्राणैः प्रियतरौ मम' इति भरतशत्रु-घ्नयोरेवानुसरणीयत्वोक्तेरनुज्ञा सिद्धा ॥ ७ ॥

८ ] ति० टी०—एतत्प्रतिषेधप्रयोजनम् । संशयः पूर्वं केनाभिप्रायेणानुमतिः, इदानीं केनाभिप्रायेण प्रतिषेध इति संदेहः ॥ ८ ॥

रा० टी०—ननु प्रयोजनविशेषस्य सत्त्वात्पूर्वं गमनाया-ज्ञापितः इदानीं तदभावान्निवार्यसे इत्यत आह—यदिति । गन्तुमिच्छतः मे यदर्थं प्रतिषेधः गमननिवारणं क्रियते एतद्वि-ज्ञातुमहमिच्छामि तत्र हेतुः यतो मे संशयः गमनप्रतिषेधहेतोः प्राबल्याप्राबल्यविषयकसंदेहः ॥ ८ ॥

गो० टी०—यदर्थमिति । अनुज्ञातत्वेऽपि प्रतिषेधात् किमद्य मयापराद्धमिति संशयः ॥ ८ ॥

९ ] ति० टी०—प्राग्गामिनं वनं प्रति प्रथमगमनाभिप्राय-वन्तम् याचमानम् तत्रानुमतिमिति शेषः ॥ ९ ॥

रा० टी०—तत इति । अग्रतः अग्रे स्थितं प्राग्गामिनं रामगमनात्पूर्वमेव गमनशीलं रामगमननिश्चये सतीति शेषः याचमानं सहगमनं प्रार्थयन्तं धीरं कृताञ्जलिं लक्ष्मणं रामो-ऽब्रवीत् ॥ ९ ॥

गो० टी०—तत इति । स्थितमग्रतः स्थितं प्राग्गामिनं प्रागेव गन्तुमुद्युक्तं वीरं प्राग्गमनोचितवीर्यवन्तं याचमानं गमनाज्ञां याचमानं कृताञ्जलिं याच्ञाव्यञ्जकाञ्जलियुक्तम् ॥९॥

१० ] ति० टी०—वश्यविधेयावसकृद्व्याख्यातौ ॥ १० ॥

रा० टी०—तद्वचनमेवाह—स्निग्ध इति । यद्यपि स्निग्धः मद्विषयकस्नेहवान् अत एव धर्मरतः मत्तोषककर्मनिष्ठः अत एव धीरः कर्मविषयकानवधानतारहितः अत एव सत्पथे वेदो-क्तमार्गे स्थितः अत एव प्राणसमः प्राणप्रतियोगिकसादृश्या-नुयोगी अत एव प्रियः मन्निष्ठप्रीतिविषयीभूतः अत एव अव-श्यः मदतिरिक्तनिरूपितवश्यत्वानाक्रान्तः अत एव विधेयः मया-ऽवश्यं धारणीयः अत एव मे सखा तथापि हे सौमित्रे ! मया सह त्वयि तन्मजिगमिषितं वनं गच्छति सति कौशल्यां सुमित्रां च को भजिष्यति सेविष्यते 'भरिष्यति' इति पाठा-न्तरमिति भट्टाः । श्लोकद्वयमेकान्वयि । चशब्दौ यद्यपितथाप्यर्थौ वाशार्थे ॥ १० ॥ ११ ॥

गो० टी०—स्निग्ध इत्यादिविशेषणानि स्वकार्यकरणार्ह-तानुगुणानि ॥ १० ॥

११ ] ति० टी०—को भजिष्यतीति । 'भरिष्यति' इति पाठान्तरम् । एवं च मातृसेवार्थमेव प्रतिषिद्ध्यते । अलंकार-प्रतिसंहारोक्तिश्च उत्सवार्थधृताधिकालंकारविषया मदनुविधानं च मदिष्टाप्रतिबन्धरूपमिति भावः ॥ ११ ॥

गो० टी०—प्रतिषेधनिमित्तमाह—मयेति । कौसल्यादिभर-णार्थमेव त्वं वारितोऽसि पूर्वानुज्ञा तु तात्कालिकपरिहारा-येति भावः ॥ ११ ॥

१२–१३ ] ति० टी०—कामैरिष्टान्नपानैः । ननु भर्तैवास्या रक्षकस्तत्राह स इति । स कामपाशेन पर्यस्तः कैकेय्यनुरा-गेण बद्ध इत्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०—ननु राजैव पालयितेत्यत आह—अभीति । यो महीपतिः कामैः प्रजेप्सितैः पर्जन्य इव अभिवर्षति प्रजा-निखिलमनोरथान्प्रापयदित्यर्थः स महीपतिः कामपाशपर्यस्तः कामेन स्वेच्छया यः पः पालनं तस्य यः अशो व्याप्तिस्तस्मात्प-र्यस्तो निवृत्तः आस्ते इति शेषः ॥ १२ ॥

गो० टी०—राजैव भरिष्यतीत्यत्राह—अभिवर्षतीति । का-मपाशपर्यस्तः पराभिलाषरूपपाशेन संयत इत्यर्थः ॥ १२ ॥

रा० टी०—ननु प्राप्तराज्याधिकारत्वात्कैकयी पालयितेत्यत आह—सेति । अश्वपतेः अश्वपतिनाम्नो नृपस्य सुता कैकयी शोभनमतिसंपन्नमिदं राज्यं प्राप्यापि दुःखितानां मद्वियोग-जनितप्राप्तदुःखानां सपत्नीनां समीपे न करिष्यति राज्यं न पाल-

१ अयमिति गो. पाठः । २ वीरमिति गो. पाठः । ३ वीर इति गो. पाठः । ४ भ्राता चापीति गो. पाठः । ५ भरिष्यतीति गो. पाठः ।

न भरिष्यति कौसल्यां सुमित्रां च सुदुःखिताम् । भरतो राज्यमासाद्य कैकेय्यां पर्यवस्थितः ॥ १४ ॥
तामार्यां स्वयमेवेह राजानुग्रहणेन वा । सौमित्रे भर कौसल्यामुक्तमर्थममुं चर ॥ १५ ॥
एवं मयि च ते भक्तिर्भविष्यति सुदर्शिता । धर्मज्ञगुरुपूजायां धर्मश्चाप्यतुलो महान् ॥ १६ ॥
एवं कुरुष्व सौमित्रे मत्कृते रघुनन्दन । अस्माभिर्विप्रहीणाया मातुर्नो न भवेत्सुखम् ॥ १७ ॥
एवमुक्तस्तु रामेण लक्ष्मणः श्लक्ष्णया गिरा । प्रत्युवाच तदा रामं वाक्यज्ञो वाक्यकोविदम् ॥ १८ ॥
तवैव तेजसा वीर भरतः पूजयिष्यति । कौसल्यां च सुमित्रां च प्रयतो नास्ति संशयः ॥ १९ ॥
यदि दुःस्थो न रक्षेत भरतो राज्यमुत्तमम् । प्राप्य दुर्मनसा वीर गर्वेण च विशेषतः ॥ २० ॥
तमहं दुर्मतिं क्रूरं वधिष्यामि न संशयः । तत्पक्षानपि तान्सर्वांस्त्रैलोक्यमपि किं तु सा ॥ २१ ॥
कौसल्या बिभृयादार्या सहस्रं मद्विधानपि । यस्याः सहस्रं ग्रामाणां संप्राप्तमुपजीविनाम् ॥ २२ ॥

---

यिष्यतीत्यर्थः तेन केकय्यपि तद्दुःखदुःखिता भवितेति ध्वनितम्। हिरण्यर्थे ॥ १३ ॥

गो० टी०–तर्हि भरतो भरिष्यतीत्यपेक्षायां सोऽपि कैकयीपरवशो न भरिष्यतीत्याशयेनाह–सा हीत्यादि ॥ १३ ॥ १४ ॥

१४ ] ति० टी०–पुत्रत्वाद्भरतो रक्षिष्यतीत्यत्राह–न स्मरिष्यतीति । कैकेय्यां तन्नियोगे सपत्नीतिरस्कारविषयके पर्यवस्थितः प्रतिष्ठितः ॥ १४ ॥

रा० टी०–नतु भरतः पालयितेत्यत आह–नेति । केकय्यां न पर्यवस्थितः केकयीविषयकास्थारहितः केकय्या मद्वियोगहेतुत्वेन तद्विषयकौदासीन्यविशिष्ट इत्यर्थः भरतः कौसल्यां सुमित्रां च राज्यं च आसाद्य प्राप्य स्मरिष्यति मत्कर्मकोत्कण्ठापूर्वकस्मरणमेव करिष्यतीत्यर्थः एतेन भरतस्यापि पालनायोग्यत्वं सूचितम् ॥ १४ ॥

१५ ] ति० टी०–तर्हि मयापि कथं रक्षणं कर्तुं शक्यमत आह–राजानुग्रहणेन वा दशरथानुग्रहसंपादनेनेत्यर्थः ॥ १५ ॥

रा० टी०–तामिति । हे सौमित्रे ! राजानुग्रहणेन युक्तस्त्वम् आर्यां सर्वश्रेष्ठां तां कौशल्यां भर पालय उक्तं मया वर्णितममुमर्थमिह स्थितौ प्रयोजनं चर जानीहि । गत्यर्थानां ज्ञानार्थकत्वप्रसिद्धेः प्रकृते चरो ज्ञानमर्थः ॥ १५ ॥

गो० टी०–मया वा कथं भर्तुं शक्यमित्यत आह–तामिति । राजानुग्रहणेन राजानुमत्या तदभावे स्वयमेव वा भरेत्यर्थः । अस्योत्तरं मा वदेत्याह–उक्तमर्थमिमं चरेति ॥१५॥

१६ ] ति० टी०–मयि भक्तिर्मदाज्ञायाः पालनात् । गुरुः कौसल्यादिः ॥ १६ ॥

रा० टी०–नन्विह स्थितौ मत्कर्तृकत्वत्सेवाभङ्गः स्यादित्यत आह–एवमिति । एवं मदुक्तप्रकारेण ते गुरुपूजायां त्वत्कर्तृकमात्रादिशुश्रूषायां सत्यां सुदर्शिता विधिनोक्ता मम भक्तिः मत्कर्मिका सेवा भविष्यति अत एव अतुलः उपमारहितः महान्धर्मश्च भविष्यति ॥ १६ ॥

गो० टी०–स्वत्कैङ्कर्यपरस्य मे किमनेनेत्यत आह–एवमिति । एवम् एवं च सतीत्यर्थः मम मयीत्यर्थः गुरुपूजा मातृशुश्रूषणम् ॥ १६ ॥

१७–१८ ] ति० टी०–विप्रहीणाया वियुक्तायाः । नोऽस्माकम् ॥ १७ ॥ १८ ॥

रा० टी०–उपसंहरन्नाह–एवं कुरुष्वेति । हे रघुनन्दन ! हे सौमित्रे ! एवं मदुक्तप्रकारेण कुरुष्व मात्रादिसेवामिति शेषः । विपक्षे दोषमाह–विप्रहीणायाः त्यक्तायाः नः अस्माकम् ॥ १७ ॥

गो० टी०–एवमिति । अस्माभिः आवाभ्यां सीतया चेत्यर्थः नः नौ "अस्मदो द्वयोश्च" इति द्विवचनस्य बहुवचनम् ॥ १७ ॥

रा० टी०–एवमुक्त इति । श्लक्ष्णया सरसया प्रत्युवाच कथयामास ॥ १८ ॥

गो० टी०–एवमिति । वाक्यज्ञो वाक्यकोविदमिति उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथेत्युक्तवक्तृत्वविशिष्टं राममपि प्रतिवचनरचनाचातुर्येण तोषयितुं समर्थ इत्यर्थः ॥ १८ ॥

१९ ] ति० टी०–मातृसेवायां भरत एवास्तीत्याह–तवैवेति । अनेन रामोक्तानुपपत्तिपरिहारः । अप्रमेयबलराममातृसेवायां मम महाननर्थ इति मत्वा भरत एव तां पूजयिष्यतीत्यर्थः ॥ १९ ॥

रा० टी०–तद्वचनमेवाह–तवेति । तव तेजसा त्वत्प्रभावेणैव पूजयिष्यति संशयः अस्मिन्विषयसंदेहो नास्ति ॥ १९ ॥

गो० टी०–पूर्वं रामोक्तानुपपत्तिं परिहरति–तवैवेत्यादिना ॥ १९–२१ ॥

२० ] ति० टी०–तदेव कालान्तरभवं भयं दर्शयति–यदीति । दुःस्थो दुर्मार्गस्थो राज्यं प्राप्येत्यन्वयः । दुर्मनसा कैकेय्यनुरोधाद्दुष्टमनसा ॥ २० ॥

२१ ] ति० टी०–त्रैलोक्यमपि तत्पक्षं वधिष्यामीत्यनुकर्षः किं तु सेत्युत्तरश्लोकान्वयि ॥ २१ ॥

२२ ] ति० टी०–किं च स्वात्मभरणे कौसल्यायाः कस्याप्यपेक्षा नेत्याह–किं तु सा कौसल्येत्यादि । कुतस्तस्या एवं

---

१ इममिति गो. पाठः । २ ममेति गो. अपीति रा. पाठः । ३ नात्रेति गो. पाठः । ४ एतदादि श्लोकद्वयं गो. नास्ति ।

तदात्मभरणे चैव मम मातुस्तथैव च । पर्याप्ता मद्विधानां च भरणाय मनस्विनी ॥ २३ ॥
कुरुष्व मामनुचरं वैधर्म्यं नेह विद्यते । कृतार्थोऽहं भविष्यामि तव चार्थः [1]प्रकल्पते ॥ २४ ॥
धनुरादाय [2]सगुणं खनित्रपिटकाधरः । अग्रतस्ते गमिष्यामि पन्थानं तव[3] दर्शयन् ॥ २५ ॥
आहरिष्यामि ते नित्यं मूलानि च फलानि च । वन्यानि [4]च तथान्यानि स्वाहार्हाणि तपस्विनाम् ॥ २६ ॥
भवांस्तु सह वैदेह्या गिरिसानुषु [5]रंस्यसे । अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ २७ ॥

शक्तिस्तत्राह–यस्या इति । यस्या उपजीविनामुपजीविभिः सहस्रं ग्रामाणां प्राप्तं वर्तते ॥ २२ ॥

रा० टी०–ननु भरतमात्रस्थितौ राजान्तरकृतोपद्रवः स्यादित्यत आह–यदिति । यथतः राजादेर्हेतोः दुःस्थः चञ्चलचित्तः सन् भरत उत्तमं राज्यं न रक्षेत् तं वीरगर्वेण अहं वीर इत्यभिमानविशिष्टेन दुर्मनसा दुष्टान्तःकरणेनोपलक्षितं दुर्मतिं दुष्टनिश्चयवन्तमत एव विशेषतः क्रूरं राजादिं तान्प्रसिद्धान्सर्वांस्तत्पक्षान्प्राप्याहं वधिष्यामि । ननु बहुभिः सह विरोधे कथं त्वत्कर्तृकहननमित्यत आह–त्रैलोक्यमपि तत्पक्षं चेदहं वधिष्यामि एतेन स्वपराक्रमस्यातिमहत्त्वं सूचितं तेन रामसेवायाः प्रभावातिशयो ध्वनितः । इकारो वितर्कार्थकमव्ययम् किंतु अपरस्तुच्यत इत्यर्थः । यस्याः उपजीविनामुपजीविभिः भृत्यादिभिरित्यर्थः ग्रामाणां सहस्रं संप्राप्तं सा कौसल्या मद्विधान् सहस्रमपि बिभृयात् । श्लोकत्रयमेकान्वयि ॥ २०–२२ ॥

२३ ] ति० टी०–यदेवं तदिति ॥ २३ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–तदिति । तदुक्तहेतोः आत्मभरणस्वरक्षणे मम मातुः मद्विधानां च भरणाय मनस्विनी कौशल्या पर्याप्ता ॥ २३ ॥

२४ ] ति० टी०–यदेवमतो ममानुचरं कुरुष्व मत्सेवामनुमन्यस्व । इह मत्सेवानुमतौ वैपरीत्यसाधकं न विद्यते त्वदुक्तहेतोरन्यथासिद्धेर्दर्शितत्वात् । तवार्थः फलमूलाद्याहरणरूपस्त्वत्प्रयासं विना प्रकल्प्यते प्रसिद्ध्यति । अहं च तेन कृतार्थो भवामि । अत उभयहितं मदनुगमनमिति भावः ॥२४॥

रा० टी०–कुरुष्वेति । यतः इह सहगमने वैधर्म्यं विरुद्धत्वं न विद्यते अतः मामनुचरं सहगमनकारिणं कुरुष्व अत एव अहं कृतार्थो भविष्यामि तवार्थः त्वत्कर्मकसेवेत्यर्थः प्रकल्पते सेत्स्यति "वर्तमानसामीप्य–" इति भविष्यति लट् ॥ २४॥

गो० टी०–एवं रामोक्तं परिहृत्य प्रस्तुतं स्वाभिमतं कैङ्कर्यं प्रपञ्चयति–कुरुष्वेत्यादि । मां शेषभूतमनुचरं शेषत्वानुगुणकैङ्कर्ययुक्तं कुरुष्व तत्करणमपि तवैव प्रयोजनमित्यात्मनेपदात्लभ्यते वैधर्म्यं नेह विद्यते इहानुचरत्वकरणे वैधर्म्यं सेव्यसेवकधर्मराहित्यं नास्ति तव सेव्यधर्मः पर्याप्तः स्वामित्वात् मम सेवकधर्मश्च पूर्णः स्वाभाविकशेषत्वात्, यद्वा वैधर्म्यं वैपरीत्यसाधकं न विद्यते त्वदुक्तहेतोरन्यथासिद्धेरुक्तत्वादित्याशयः । अनुचरकरणस्य किं प्रयोजनमित्य[illegible]–तवेति । तवार्थः स्वायासं विना फलमूलाद्याहरणं प्रकल्पते सिध्यति अहं च कृतार्थः लब्धत्वत्कैङ्कर्यफलो भविष्यामि, यद्वा मां स्वाभाविकशेषभूतं मामनुचरं स्वरूपानुरूपशेषवृत्तियुक्तं कुरुष्व इहास्मिन् जने मयि वैधर्म्यं शेषत्वविपर्यासो नास्ति अनेन शेषत्वस्य स्वाभाविकत्वं तज्ज्ञानवतः फलं कैङ्कर्यं चेत्युक्तम् । कैङ्कर्याकरणे तव का हानिरित्यत्राह–कृतार्थोऽहं भविष्यामीति अकिंचित्करत्वेतः शेषत्वानुपपत्तेरिति भावः । तव प्राप्यं कैङ्कर्यं निष्कृष्य दर्शयति–तव चेति । चोऽवधारणे तवैवार्थः न तु मम परार्थकैङ्कर्यस्यैव पुरुषार्थत्वादिति भावः । शेषत्वाध्यवसाय उपायः अस्वार्थशेषिकैङ्कर्यमेव फलमित्युपायोपेयनिष्कर्षोऽनेन कृत इति रहस्यं वैधर्म्यं नेह विद्यत इत्युक्तिः ज्येष्ठभ्रातुः पितृसमत्वात् । आवयोः श्रेयश्चास्तीत्याह–कृतार्थ इतीति केचिद्व्याचक्षते ॥२४॥

२५ ] ति० टी०–तदेव दर्शयति–धनुरित्यादिना । श्वापदादिभ्यो रक्षार्थं धनुर्ग्रहः । पिटका फलमूलाद्याहरणयोग्या वंशपेटी ॥ २५ ॥

रा० टी०–सेवामेव दर्शयन्नाह–धनुरिति । सगुणं ज्यासहितं खनित्रपिटकाधरः खनित्रेण कुद्दालादिना सहिता पिटका फलादिस्थापनयोग्यवंशादिनिर्मिता मञ्जूषाविशेषः तां धरति सः अत्र धनुर्ग्रहणं क्रूरजन्तुभर्त्सनार्थम् ॥ २५ ॥

गो० टी०–स्वकृतार्थत्वं प्रपञ्चयति–धनुरिति । धनुरादानं हिंस्रनिवारणाय खनित्रं मूलकन्दखननसाधनं कुद्दालादि पिटका अल्पार्थे क प्रत्ययः फलमूलाद्याहरणयोग्याल्पकण्डोलः 'कण्डोलपिटौ ' इत्यमरः ॥ २३ ॥

२६ ] ति० टी०–स्वाहार्हाणि होमयोग्यानि हविर्भूतानि । स्वाहाराणि ' इति पाठे सुष्ठ्वाहारयोग्यानि ॥ २६ ॥

रा० टी०–आहरिष्यामीति । अन्यानि शाकादीनि स्वाहार्हाणि स्वाहायोग्यानि ' स्वाहाराणि ' इतिपाठे शोभनाहारसाधकानीत्यर्थः ॥ २६ ॥

गो० टी०–एवं मार्गे संभावितं कैङ्कर्यमुक्त्वा स्थाने संभावितमाह–आहरिष्यामीति । अन्यानि शाकप्रियालबीजपूरादीनि स्वाहाराणि सुखेनाहर्तुं भोक्तुं योग्यानि ॥ २५ ॥

२७ ] ति० टी०–स्वपतश्चेत्यनेन रात्रौ स्वस्य निर्निद्रत्वं ध्वनयति ॥ २७ ॥

रा० टी०–सेवान्तरमाह–भवानिति । गिरिसानुषु पर्वतशृङ्गेषु रंस्यते विहरिष्यते सर्वमावश्यकमनुमितं चेत्यर्थः जाग्रतः स्वपतश्चेत्यनेन स्वस्य निद्रावशकर्तृत्वं सूचितम् ॥ २७ ॥

१ प्रकल्पते इति गो.रा.पाठः । २ सशरमिति गो.पाठः । ३ मन्विति गो.पाठः । ४ यानि चान्यानि स्वाहाराणीति गो.पाठः । ५ रस्यते इति गो.रा.पाठः

रामस्त्वनेन वाक्येन सुप्रीतः प्रत्युवाच तम् । व्रजापृच्छस्व सौमित्रे सर्वमेव सुहृज्जनम् ॥ २८ ॥
ये च राज्ञो ददौ दिव्ये महात्मा वरुणः स्वयम् । जनकस्य महायज्ञे धनुषी रौद्रदर्शने ॥ २९ ॥
अभेद्ये कवचे दिव्ये तूणी चाक्षय्यसायकौ । आदित्यविमलाभौ द्वौ खड्गौ हेमपरिष्कृतौ ॥ ३० ॥
सत्कृत्य निहितं सर्वमेतदाचार्यसद्मनि । सर्वमायुधमादाय क्षिप्रमाव्रज लक्ष्मण ॥ ३१ ॥
स सुहृज्जनमामन्त्र्य वनवासाय निश्चितः । इक्ष्वाकुगुरुमागम्य जग्राहायुधमुत्तमम् ॥ ३२ ॥
तद्दिव्यं राजशार्दूलः सत्कृतं माल्यभूषितम् । रामाय दर्शयामास सौमित्रिः सर्वमायुधम् ॥ ३३ ॥
तमुवाचात्मवान्रामः प्रीत्या लक्ष्मणमागतम् । काले त्वमागतः सौम्य काङ्क्षिते मम लक्ष्मण ॥ ३४ ॥
अहं प्रदातुमिच्छामि यदिदं मामकं धनम् । ब्राह्मणेभ्यस्तपस्विभ्यस्त्वया सह परंतप ॥ ३५ ॥
वसन्तीह दृढं भक्त्या गुरुषु द्विजसत्तमाः । तेषामपि च मे भूयः सर्वेषां चोपजीविनाम् ॥ ३६ ॥

---

गो० टी०—एवं सर्वदेशकर्तव्यकैङ्कर्याण्युक्तानि कैङ्कर्यस्य शिष्टविषयस्यैव रस्यत्वाद्विशिष्टविषयत्वमाह—भवांस्त्विति। ग्रतः स्वपतश्चत इत्यनेन सर्वकालसर्वावस्थोचितकैङ्कर्यमुक्तं र्वं करिष्यामीत्यनेन सर्वविधं कैङ्कर्यमुक्तम् तथा च देवीशिष्टस्य शेषिणः सर्वदेशसर्वकालसर्वावस्थासु सर्वविधमपि कूर्यं शेषभूतेन कर्तव्यमिति दर्शितम् ॥ २६ ॥

२८ ] ति० टी०—अनेन वाक्येन स्वपतश्चेत्यन्तेन । व्रज नुव्रज आपृच्छस्व सुहृज्जनानामाज्ञां गृहाण ॥ २८ ॥

रा० टी०—राम इति । अनेन निर्हेतुकप्रीतिबोधकेन क्येन लक्ष्मणोक्त्या सुप्रीतो रामः प्रत्युवाच । तत्प्रतिवचमेवाह—हे सौमित्रे ! त्वं व्रज मया सहेति शेषः अत एव हृज्जनं सुहृदं स्वसौहार्दं जनयति नित्यं प्रकटयति तं मात्रामित्यर्थः आपृच्छ अनुमतिं गृहाण अनुमतिकरणाज्ञापन तत्संमाननं कर्तव्यमिति सूचितं तेन ते न नेतव्या इति धितम् ॥ २८ ॥

गो० टी०—रामस्त्विति । अनेनानुगमनाज्ञा व्यञ्जिता॥२६॥

२९ ] ति० टी०—महायज्ञे तुष्टो वरुणो राज्ञो जनकस्य नुरादिकं ददौ तच जनकेनास्माकं यौतकत्वेन दत्तं तत्सर्वाचार्यसद्मन्याचार्यं सत्कृत्य निहितं तदादाय क्षिप्रमाव्रजाच्छ । अत्रैवमनुवादादेव तत्र जनकाय वरुणकर्तृकधनुरादिनं रामलक्ष्मणाभ्यां च तत्कर्तृकतद्दानं बोध्यम् ॥ २९ ॥ ३० ॥

३१ ] ति० टी०—आयुधमिति जात्या ॥ ३१ ॥

रा० टी०—ये इति । राज्ञो जनकस्य महायज्ञे यद्धनुरादि ाज्ञो जनकस्य वरुणः स्वयं ददौ तत्सर्वमाचार्यसद्मनि निहितं वेवाहसमये जनकाल्लब्धमिति शेषः एतत्सर्वमायुधमादाय गुरोर्गृहीत्वा क्षिप्रं शीघ्रमाव्रज आगच्छ जनकस्येत्युभयान्वयि उत्तरत्र जनकस्येति संबन्धसामान्ये षष्ठी। श्लोकत्रयमेकान्वयि ॥२९-३१॥

गो० टी०—ये चेत्यादि । जनकस्य राज्ञो यज्ञे महात्मा वरुणः स्वयमेव मह्यं यद्धनुरादिकं ददौ आचार्यसद्मनि आचार्यस्य गृहे पूजार्थं निहितं तदेतत्सर्वमायुधमादाय स आपृष्टसुहृज्जनस्त्वं क्षिप्रमाव्रजेत्यन्वयः । अत्र धनुरादिषु सर्वत्र द्विवचनादावयोर्ददाविति सिद्धं बालकाण्डेऽनुक्तोऽप्ययं वृत्तान्तोऽनुवादात्सिद्धः यथासुन्दरकाण्डेऽभिहितं मणिबन्धनम् 'मणिरत्नमिदं दत्तं वैदेह्याः श्वशुरेण मे । वधूकाले तथा बद्धमधिकं मूर्ध्नि शोभते' इति। यथा चायोध्याकाण्डेऽनभिहितोऽपि वायसवृत्तान्तः सुन्दरकाण्डेऽनूद्यते 'स पित्रा च परित्यक्तः सुरैश्च स महर्षिभिः । त्रींलोकान् संपरिक्रम्य तमेव शरणं गतः' इति । आचार्यो वसिष्ठः इक्ष्वाकुगुरुमागम्येत्युत्तरत्रानुवादात् नहीक्ष्वाकुकुलगुरुर्वसिष्ठादन्योस्ति ॥ २७—३१ ॥

३२ ] ति० टी०—स लक्ष्मणः ॥ ३२ ॥

रा० टी०—स इति । इक्ष्वाकुगुरुं वशिष्ठमागम्य प्राप्य स लक्ष्मणः जग्राह ॥ ३२ ॥

३३ ] ति० टी०—राजशार्दूलः क्षत्रियश्रेष्ठः ॥ ३३ ॥

रा० टी०—तदिति । तद्गुरुगृहादानीतं सत्कृतं पूजितमत एव माल्यभूषितमायुधं दर्शयामास ॥ ३३ ॥

३४—३५ ] ति० टी०—मम काङ्क्षिते मदभीष्टप्रयोजननिमित्तसंपादनोचितकाल आगतः ॥ ३४ ॥ ३५ ॥

रा० टी०—तमिति । आत्मवान् जीवादिनियन्ता राम उवाच। तद्वचनमेवाह—मम काङ्क्षिते मदीप्सिते काले आगतः शीघ्रं प्राप्त इत्यर्थः ॥ ३४ ॥

गो० टी०—तमिति । प्रीत्योवाचेत्यन्वयः ॥ ३२ ॥

रा० टी०—अहमिति । मामकं मदुपार्जितमित्यर्थः धनं ब्राह्मणेभ्यः त्वया सह प्रदातुमहमिच्छामि ॥ ३५ ॥

गो० टी०—काङ्क्षितत्वमेवाह—अहमित्यादिना ॥ ३३ ॥

३६ ] ति० टी०—इह मत्समीपे । गुरुषु दृढभक्त्योपेताः। एतेन पूर्णवित्ततया दानपात्रत्वं सूचितम् ॥ ३६ ॥

रा० टी०—वसन्तीति । गुरुषु दृढभक्ता ये द्विजसत्तमा वसन्ति तेषां द्विजसत्तमानां सर्वेषां मे उपजीविनां च ये भूयः श्रेष्ठास्तान्द्विजानामार्यं श्रेष्ठमत एव प्रवरं प्रकर्षेण वरणीयं सुयज्ञं सुयज्ञनामानं वसिष्ठपुत्रं च अपरांस्तद्भिन्नाञ्छिष्टान्सदाचा-

---

१ अभेद्यकवचे इति गो. पाठः । २ अक्षयसायकानिति गो. पाठः । ३ विमलौ चोभाविति गो. पाठः । ४ स त्वमिति गो. पाठः । ५ शार्दूलेति गो. पाठः ।

वसिष्ठपुत्रं तु सुयज्ञमार्यं त्वमानयाशु प्रवरं द्विजानाम् ।
अपि प्रयास्यामि वनं समस्तानभ्यर्च्य शिष्टानपरान्द्विजातीन् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ।

सीतारामाभ्यां वितीर्णरत्नाभरणः सुयज्ञस्तेभ्यो मङ्गलाशिषो युयोज । रामादिष्टो लक्ष्मणोऽगस्त्यपुत्रादिभ्यः कौशेयाभरणादीनि व्यतरत् । भार्याप्रेरितास्त्रिजटो नाम ऋषिः प्राप्य रामं धनं ययाचे । दण्डप्रक्षेपावधि विद्यमानगवीनां दाने रामेण प्रतिज्ञातेऽनेकसहस्रगवीर्विजित्य जग्राह रामस्तमक्षमयद्धर्मबलोपार्जितधनेन सुहृज्जनं च युयोज ।

ततः शासनमाज्ञाय भ्रातुः प्रियंकरं हितम् । गत्वा स प्रविवेशाशु सुयज्ञस्य निवेशनम् ॥ १ ॥
तं विप्रमग्न्यगारस्थं वन्दित्वा लक्ष्मणोऽब्रवीत् । सखेऽभ्यागच्छ पश्य त्वं वेश्म दुष्करकारिणः ॥ २ ॥
ततः संध्यामुपास्थाय गत्वा सौमित्रिणा सह । ऋद्धं स प्राविशल्लक्ष्म्या रम्यं रामनिवेशनम् ॥ ३ ॥
तमागतं वेदविदं प्राञ्जलिः सीतया सह । सुयज्ञमभिचक्राम राघवोऽग्निमिवार्चितम् ॥ ४ ॥

---

रसंपन्नान्द्विजातींश्च अभ्यर्च्य वनं प्रयास्यामीति हेतोः आशु शीघ्रमानय । श्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०—वसन्तीति । यच्छब्दोऽर्थसिद्धः इह नगरे गुरुषु भक्त्या ये दृढं वसन्ति नित्यं गुरुशुश्रूषणं कुर्वन्तीत्यर्थः । तेषामपि मे सर्वेषामुपजीविनां च भूयः अतिशयेन नित्यदेयादधिकतया दातुमिच्छामि तानानयेति शेषः ॥ ३५ ॥

३७ ] ति० टी०—वसिष्ठपुत्रं सुयज्ञमानयेत्यनेन मूलप्रभोर्दशरथस्य वसिष्ठः पुरोहितस्तत्पुत्रस्य तत्पुत्र इति न्यायेन सुयज्ञस्य विशिष्यानयननियोगः । अस्यैव गृह आयुधस्थापनमिति शेषः ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०—वसिष्ठपुत्रमिति । वसिष्ठपुत्रमार्यं द्विजानां प्रवरं सुयज्ञम् अन्यानपि शिष्टानानय सुयज्ञं तांश्चाभ्यर्च्याभिप्रयास्यामीत्यर्थः ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने श्रीमदयोध्याकाण्डव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

---

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—रामवचनश्रवणानन्तरकालिकलक्ष्मणवृत्तं वर्णयन्नाह—तत इति । भ्रातुः रामस्य शुभकरं मङ्गलप्रापकमत एव प्रियं प्रीतिविषयीभूतं भ्रातुः शासनमाज्ञाय ज्ञात्वा ततः रामसमीपात्सुयज्ञस्य निवेशनं गत्वा प्राप्य आशु शीघ्रं प्रविवेश ॥ १ ॥

गो० टी०—एवं निश्चितसीतालक्ष्मणानुयात्रस्य रामस्य यात्रादानं प्रस्तूयते द्वात्रिंशे—तत इत्यादि । आज्ञाय अङ्गीकृत्य शुभतरं ब्राह्मणोपकारत्वात् प्रियमात्मनोऽनुगमनाङ्गीकारफलत्वात् ॥ १ ॥

२ ] ति० टी०—अग्न्यगारमग्निहोत्रशाला । हे सखे रामस्य वेश्मागच्छ दुष्करकारिणो रामस्य प्राप्तराज्यत्यागपूर्वं वनं जिगमिषोः कृत्यं च पश्येति शेषः ॥ २ ॥

रा० टी०—तमिति । अग्न्यागारस्थं यज्ञशालायां स्थितं तं सुयज्ञं वन्दित्वा लक्ष्मणोऽब्रवीत् । तद्वचनमेवाह—हे सखे ! अभ्यागच्छ इह प्राप्नुहि दुष्करकारिणः अन्याशक्यक्रियाकरणशीलस्य रामस्य वेश्म गृहं पश्य रामसमीपं प्राप्नुहीत्यर्थः ॥ २ ॥

गो० टी०—तमिति । अभ्यागारस्थमग्निहोत्रशालास्थं दुष्करकारिणः दुष्करकर्मकारिणः वेश्माभ्यागच्छ कृत्यं च पश्येत्यर्थः ॥ २ ॥

३ ] ति० टी०—संध्यां माध्याह्निकीम् ॥ ३ ॥

रा० टी०—तत इति । ततः लक्ष्मणोक्त्यनन्तरं संध्यां संध्याकृत्यमुपास्थाय समाप्येत्यर्थः लक्ष्म्या सर्वसंपत्त्या जुष्टं सेवितं रामनिवेशनं रामाधिष्ठितगृहं सौमित्रिणा सह गत्वा प्राविशत् सुयज्ञ इति शेषः ॥ ३ ॥

गो० टी०—तत इति । संध्योपासनं माध्याह्निकम् अथवा संध्या नियताग्निहोत्रम् अभ्यागारस्थमित्युक्तेः ॥ ३ ॥

४ ] ति० टी०—अभिचक्राम प्रत्युत्थानादि कृतवान् । अर्चितमग्निमिव होमकाल इति शेषः ॥ ४ ॥

रा० टी०—तमिति । अर्चितं पूजितमग्निं यागपावकमिव आगतं तं सुयज्ञं सीतया सह राघवो रामः अभिचक्राम अभ्युत्थानादिसत्कृतिं चकार ॥ ४ ॥

गो० टी०—तमिति । अर्चितं हुतम् ॥ ४ ॥

---

१ अर्भीति गो. पाठः । २ अवरानिति गो. पाठः । ३ शुभतरंप्रियमिति गो. शुभकरमिति रा. पाठः । पाठः । ४ अभ्यागारस्थमिति गो. रा. पाठः । ५ उपास्याश्चिति गो. पाठः । ६ जुष्टं तदिति गो. जुष्टं स इति रा. पाठः ।

जातरूपमयैर्मुख्यैरङ्गदैः कुण्डलैः शुभैः । सहेमसूत्रैर्मणिभिः केयूरैर्वलयैरपि ॥ ५ ॥
अन्यैश्च रत्नैर्बहुभिः काकुत्स्थः प्रत्यपूजयत् । सुयज्ञं स तदोवाच रामः सीताप्रचोदितः ॥ ६ ॥
हारं च हेमसूत्रं च भार्यायै सौम्य हारय । रशनां चाथ सा सीता दातुमिच्छति ते सखी ॥ ७ ॥
अङ्गदानि च चित्राणि केयूराणि शुभानि च । प्रयच्छति सखी तुभ्यं भार्यायै गच्छती वनम् ॥ ८ ॥
पर्यङ्कमग्र्यास्तरणं नानारत्नविभूषितम् । तमपीच्छति वैदेही प्रतिष्ठापयितुं त्वयि ॥ ९ ॥
नागः शत्रुंजयो नाम मातुलो यं ददौ मम । तं ते निष्कसहस्रेण ददामि द्विजपुंगव ॥ १० ॥
इत्युक्तः स तु रामेण सुयज्ञः प्रतिगृह्य तत् । रामलक्ष्मणसीतानां प्रयुयोजाशिषः शिवाः ॥ ११ ॥
अथ भ्रातरमव्यग्रं प्रियरामः प्रियंवदम् । सौमित्रिं तमुवाचेदं ब्रह्मेव त्रिदशेश्वरम् ॥ १२ ॥

---

५ ] ति० टी०—अङ्गदं बाहुमूलधार्यं भूषणम् । केयूरं तदधोभागस्थम् । सहेमसूत्रैर्मणिभिः स्वर्णसूत्रस्यूतैर्मुक्तादिरत्नमालाभिः ॥ ५ ॥

६ ] ति० टी०—सीताप्रचोदितः सीतया सुयज्ञपत्न्यै सखीत्वादिभ्याभरणदानाय प्रचोदितः ॥ ६ ॥

रा० टी०—जातरूपेति । जातरूपं सुवर्णं तन्मयैः मुख्यैः श्रेष्ठैः अङ्गदैः शुभैः शुभकारकैः कुण्डलैः सहेमसूत्रैः हेमसूत्रसहितैः तत्प्रोतैरित्यर्थः भूषणविशेषैर्वा मण्यादिभिः बहुभिः अनेकविधैः अन्यैः उक्तेभ्यो विलक्षणैः रत्नैश्च काकुत्स्थः ककुत्स्थवंशोद्भवो रामः सुयज्ञं वसिष्ठपुत्रं प्रत्यपूजयत् तदा पूजनकाले सीताप्रचोदितः जानकीप्रेरितो रामः सुयज्ञमुवाच । सुयज्ञमित्युभयान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—जातरूपमयैरित्यादि । जातरूपमयैः स्वर्णमयैः अङ्गदैः कूर्परोपरिधार्यैः बाहुभूषणैः सहेमसूत्रैर्मणिभिः हेमसूत्रप्रोतैर्वैदूर्यपद्मरागमुक्तादिमणिभिः ‘ रत्नं मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ’ इत्यमरः । केयूरैः भुजशिरोव्यापिफणाकारशिखरयुक्तबाहुभूषणैः अथवा अङ्गदकेयूरयोः स्थूलत्वसूक्ष्मत्वाभ्यां भेदः । वलयैः कटकैः ‘ कटको वलयोऽस्त्रियाम् ’ इत्यमरः । रत्नैः भूषणप्रकरणाद्भूषणश्रेष्ठैरित्यर्थः ‘ रत्नं स्वजातिश्रेष्ठेऽपि ’ इत्यमरः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—हेमसूत्रमुरोभूषणविशेषः । हारय सेवकद्वारा प्रापय । रशना काञ्ची । सा मदनुगामिनी सखी । तव भार्याया इति शेषः ॥ ७ ॥

रा० टी०—तद्वचनमेवाह—हारमिति । हेमसूत्रं भूषणविशेषं रशनां क्षुद्रघण्टिकां च ते तव भार्यायै सीता दातुमिच्छति अतः हे सौम्य हे सखे ! हारय हारादिकं स्वभार्यासमीपे प्रापय ॥ ७ ॥

गो० टी०—हारमिति । हेमसूत्रं हेममयं कण्ठसूत्रं रशनां च ते भार्यायै सीता दातुमिच्छति तत्सर्वं हारय दापयेत्यर्थः ॥ ७ ॥

८ ] ति० टी०—तुभ्यं भार्यायै च । गच्छती नुमभाव आर्षः ॥ ८ ॥

रा० टी०—अङ्गदानीति । चित्राणि अनेकचित्रविशिष्टानि अङ्गदादीनि भार्यायै भवद्भार्यां प्रापयितुं तुभ्यं वनं गच्छन्ती सीता प्रयच्छति आगमशास्त्रस्यानित्यत्वान्नुमभावः ॥ ८ ॥

गो० टी०—अङ्गदानीति । भार्यायै भार्याधारणार्थं तुभ्यं प्रतिग्रहीत्रे प्रयच्छति गच्छतीत्यत्र नुमभाव आर्षः ॥ ८ ॥

९ ] ति० टी०—त्वयि त्वद्गृहे प्रतिष्ठापयितुं दानपूर्वकं प्रापयितुम् ॥ ९ ॥

रा० टी०—पर्यङ्कमिति । अग्र्यास्तरणमुत्तमास्तरणविशिष्टं तं पर्यङ्कमपि त्वयि त्वद्गृहे प्रतिष्ठापयितुमतिसर्जनपूर्वकं प्रेषयितुमिच्छति ॥ ९ ॥

गो० टी०—पर्यङ्कमिति । त्वयि प्रतिष्ठापयितुं तुभ्यं दातुमित्यर्थः ॥ ९ ॥

१०-११ ] ति० टी०—शत्रुंजयो नाम तथा प्रसिद्धं यं गजं मातुलो मम ददौ तं गजं ते ददामि । निष्कसहस्रेण स्वनामाङ्कितनिष्कसहस्रदक्षिणया ॥ १० ॥ ११ ॥

रा० टी०—नाग इति । योऽयं शत्रुंजयो नाम नागो हस्ती मम मातुलो मह्यं ददौ तं निष्कसहस्रेण सहस्रसंख्याकस्वर्णमुद्राभिः सह ते तुभ्यं ददामि ॥ १० ॥

गो० टी०—नाग इति । मातुलो ददाविति दशरथीयमनुजयंव्यावृत्तिः ॥ १० ॥

रा० टी०—इतीति । शिवाः मङ्गलहेतुभूताः आशिषः प्रयुयोज ॥ ११ ॥

गो० टी०—इतीति । प्रतिगृह्येत्यनेन न्यासभूतत्वं व्यावर्त्यते ॥ ११ ॥

१२ ] ति० टी०—ब्रह्मा त्रिदशेश्वरमिव । नियोक्तृनियोज्ययोः परापरप्रभुत्वे दृष्टान्तः ॥ १२ ॥

रा० टी०—अथेति । अथ सुयज्ञाशीर्वाददानानन्तरं त्रिदशेश्वरं ब्रह्मेव रामः प्रियंवदं प्रियवक्तारं तं लक्ष्मणमुवाच ॥ १२ ॥

गो० टी०—अथेति । त्रिदिशेश्वरमिन्द्रम् ॥ १२ ॥

---

१ मधुनेति गो. पाठः । २ सखे इति गो. रा. पाठः । ३ विचित्राणीति गो. पाठः । ४ गजेति गो. पाठः । ५ हीति गो. पाठः । ६ प्रियं रामः प्रियंवद इति गो. पाठः ।

आगस्त्यं कौशिकं चैव तावुभौ ब्राह्मणोत्तमौ । अर्चयाहूय सौमित्रे रत्नैः सस्यमिवाम्बुभिः ॥ १३ ॥
तर्पयस्व महाबाहो गोसहस्रेण राघव । सुवर्णरजतैश्चैव मणिभिश्च महाधनैः ॥ १४ ॥
कौसल्यां च य आशीर्भिर्भक्तः पर्युपतिष्ठति । आचार्यस्तैत्तिरीयाणामभिरूपश्च वेदवित् ॥ १५ ॥
तस्य यानं च दासीश्च सौमित्रे संप्रदापय । कौशेयानि च वस्त्राणि यावत्तुष्यति स द्विजः ॥ १६ ॥
सूतश्चित्ररथश्चार्यः सचिवः सुचिरोषितः । तोषयैनं महार्हैश्च रत्नैर्वस्त्रैर्धनैस्तथा ॥ १७ ॥
पशुकाभिश्च सर्वाभिर्गवां दशशतेन च । ये चेमे कठकालापा बहवो दण्डमाणवाः ॥ १८ ॥
नित्यस्वाध्यायशीलत्वान्नान्यत्कुर्वन्ति किंचन । अलसाः स्वादुकामाश्च महतां चापि संमताः ॥ १९ ॥
तेषामशीतियानानि रत्नपूर्णानि दापय । शालिवाहसहस्रं च द्वे शते भद्रकांस्तथा ॥ २० ॥

---

१३–१४ ] ति० टी०—कौशिको विश्वामित्रः आहूयार्चय अनन्तरं रत्नैस्तर्पय ॥ १३ ॥ १४ ॥

रा० टी०—तद्वचनमेवाह—आगस्त्यमिति । आगस्त्यसुतं कौशिकं विश्वामित्रमर्चय सत्कारेणाहूय रत्नादिभिस्तर्पयस्व । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—आगस्त्यमिति । आगस्त्यम् अगस्त्यपुत्रं कौशिकं विश्वामित्रपुत्रं रत्नैः श्रेष्ठवस्तुभिः ॥ १३ ॥

गो० टी०—रत्नैरर्चनं विवृणोति—तर्पयस्वेति ॥ १४ ॥

१५ ] ति० टी०—तैत्तिरीयाणां तैत्तिरीयशाखाध्येतॄणामाचार्यो यो द्विजः कौसल्यामाशीर्भिः पर्युपतिष्ठति सेवते अभिरूपः श्लाघ्यगुणः ॥ १५ ॥

१६ ] ति० टी०—यावद्यावता धनेन तुष्यति तावद्दापय । कौशेयानि कृमिकोशोत्थानि ॥ १६ ॥

रा० टी०—कौशल्यामिति । तैत्तिरीयाणां तित्तिरिशाखाध्येतॄणामचार्यः अत एव वेदविदत एव अभिरूपः दानप्राप्तियोग्यः यो द्विजः कौशल्याभक्तः कौशल्यानिष्ठस्वविषयप्रीत्यनुकूलव्यापारवान् अत एव आशीर्भिः आशीर्वचनैः कौशल्यां पर्युपतिष्ठति स द्विजः यावद्यावद्भिस्तुष्यति तावन्ति यानादीनि तस्य तस्मै संप्रदापय तत्र कौशेयानि कृमिविशेषकोशोद्भवनिर्मितानि 'कौशेयं कृमिकोशोत्थम्' इत्यमरः । कौशल्यामित्युभयान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—कौसल्यामित्यादिश्लोकद्वयमेकान्वयम् । तैत्तिरीयाणां तित्तिरिसंबन्धिशाखाध्येतॄणामाचार्यः अध्यापयिता अभिरूपः बुधः 'प्राप्तरूपसुरूपाभिरूपा बुधमनोज्ञयोः' इति विश्वः । कौशेयानि कृमिकोशोत्थानि 'कौशेयं क्रिमिकोशोत्थम्' इत्यमरः । यावत् यावत्पर्यन्तं तुष्यति तावत्संप्रदापयेति संबन्धः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—चित्ररथनामा सुमन्त्रादन्यः सूतः सुचिरोषितश्चिरकालस्थः ॥ १७ ॥

रा० टी०—सूत इति । सुचिरोषितः बहुकालान्मत्समीपे स्थितः आर्यसचिवः सचिवश्रेष्ठः चित्ररथः चित्ररथसंज्ञः सूतोऽस्तीति शेषः महार्हैः अतिप्रशंसनीयैः वस्त्रादिभिरेनं सूतं तोषय यदि च चित्रं रथो यस्य इति यौगिकार्थमात्रविवक्षा तदा सूतशब्देन सुमन्त्र एव ग्राह्यः ॥ १७ ॥

गो० टी०—सूत इत्यादिसार्धश्लोक एकान्वयः । सूतः सुमन्त्रतुल्यः कश्चिच्चित्ररथनामा सुचिरोषितः चिरकालमस्मद्गृहे स्थितः पशुकाभिः अल्पार्थे कन्प्रत्ययः अजादिभिरित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—पशुका अजादयो यज्ञपशवो माहिष्यादयश्च कठकालापाः कठकालापसंबन्धिशाखाध्यायिनः दण्डमाणवा दण्डप्रधाना माणवा उपकुर्वाणब्रह्मचारिणः ॥ १८ ॥

१९ ] ति० टी०—अन्यद्व्रतोपवासादि अलसा भिक्षादौ स्वादुकामाः सदन्नकामाः । तेषां दानयोग्यत्वायाह—महतामिति "तपो हि स्वाध्यायः" इति श्रुतेर्नित्यतपस्वित्वेन महतां संमताः ॥ १९ ॥

२० ] ति० टी०—यानान्युष्ट्राः शालीन्वहन्तीति तादृशबलीवर्दानां सहस्रम् । भद्रकांस्तदाख्यान्धान्यविशेषांश्चणकमुद्गादिरूपान्व्यञ्जनार्हान्दापय ॥ २० ॥

रा० टी०—पशुकाभिरिति । पशुकाभिः प्रशस्ताः पशवः पशुकाः ताभिः यज्ञयोग्याभिरित्यर्थः सर्वाभिः अजादिव्यक्तिभिः दशशतेन सहस्रेणेत्यर्थः । तोषयेति पूर्वेणान्वयः मे मत्संबन्धिनः बहवोऽनेकविधाः ये कठकालापाः कठकलापशाखाध्यायिनः ये च नित्यस्वाध्यायशीलत्वाद्धेतोः अन्यत्स्वाध्यायातिरिक्तं किंचन न कुर्वन्ति ते दण्डमाणवाः ब्रह्मचारिविहितदण्डधारिणः उपकुर्वाणब्रह्मचारिणः ये च महतां संमताः महद्भिरादृताः स्वादुकामाः सुस्वाद्वन्नादिभक्षणाकाङ्क्षिणः अलसाः तेषां तेभ्यः रत्नपूर्णानि अशीतियानानि शालिवाहसहस्रं सहस्रसंख्याकशालिवहनयोग्यबलीवर्दान् द्वे शते शतद्वयसंख्याकान्भद्रकान्भद्रकसंज्ञकहस्तिनश्च भद्रसंज्ञकधान्यविशेषान्वा कर्षकवर्दान्वा दापय । श्लोकत्रयमेकान्वयि ॥ १८–२० ॥

गो० टी०—ये चेत्यादि उपाकुर्विन्त्यन्तमेकं वाक्यम् । कठेन प्रोक्तमधीयते कठाः कठशब्दात्प्रोक्तार्थे वैशम्पायनान्तेवासित्वाण्णिनिः तस्य कठचरकादिति लुक् ततः तदधीते तद्वेदेत्यण् तस्य प्रोक्ताल्लुक् इतिलुक् कलापिना प्रोक्तमधीयते कालापाः कलापिशब्दात् प्रोक्तार्थे " कलापिनोऽण् " इत्यण् "सब्रह्मचारि

---

१ आगस्त्यमिति गो. रा. पाठः । २ सहस्रैश्च मानदेति गो. पाठः । ३ सुवर्णैरिति गो. पाठः । ४ चार्येति गो. पाठः । ५ चेमे इति गो. पाठः ।

व्यञ्जनार्थं च सौमित्रे गोसहस्रमुपाकुरु । मेखलीनां महासंघः कौसल्यां समुपस्थितः ॥
तेषां सहस्रं सौमित्रे प्रत्येकं संप्रदापय ॥ ॥ २१ ॥
अम्बा यथा नो नन्देच्च कौसल्या मम दक्षिणाम् । तथा द्विजातींस्तान्सर्वाँल्लक्ष्मणार्चय सर्वशः ॥ २२ ॥
ततः पुरुषशार्दूलस्तद्धनं लक्ष्मणः स्वयम् । यथोक्तं ब्राह्मणेन्द्राणामददाद्धनदो यथा ॥ २३ ॥
अथाब्रवीद्बाष्पगलांस्तिष्ठतश्चोपजीविनः । स प्रदाय बहुद्रव्यमेकैकस्योपजीवनम् ॥ २४ ॥
लक्ष्मणस्य च यद्वेश्म गृहं च यदिदं मम । अशून्यं कार्यमेकैकं यावदागमनं मम ॥ २५ ॥
इत्युक्त्वा दुःखितं सर्वं जनं तमुपजीविनम् । उवाचेदं धनाध्यक्षं धनमानीयतां मम ॥ २६ ॥
ततोऽस्य धनमाजह्रुः सर्वे एवोपजीविनः । स राशिः सुमहांस्तत्र दर्शनीयो ह्यदृश्यत ॥ २७ ॥

---

सपीठ–" इत्यादिना टिलोपः ततः "तदधीत" इत्याद्यण् तस्य "प्रोक्ताल्लुक्" कठप्रोक्तशाखाध्यायिनः कलापिप्रोक्तशाखाध्यायिन श्चेत्यर्थः कठाश्च कालापाश्च कठकालापाः दण्डप्रधानाः माणवाः दण्डमाणवा इति काशिकायां सदा पलाशदण्डधारिणो ब्रह्मचारिण इत्यर्थः । किंचन आहारार्थयत्नादिकं केवलं नित्यस्वाध्यायशीलत्वात् किंचिन्न कुर्वन्ति किंत्वालस्याद्वेत्याशयेनाह–अलसा इति । गोसहस्रप्रदानहेतुत्वेनाह–स्वादुकामाश्चेति रसवत्पदार्थकाङ्क्षिण इत्यर्थः । महतां चापि संमताः अतीवसाध्वाचारा इत्यर्थः रत्नपूर्णानि रत्नालंकारपूर्णानि अशीतियानानीत्युक्त्या दण्डमाणवाश्चाशीतिसंख्याका इति गम्यते रत्नवाहानुष्ट्रानिति वा शालिवाहसहस्रं शालिधान्यवाहकबलीवर्दसहस्रं भद्रकान् अल्पार्थे कन्प्रत्ययः कर्षणयोग्याननडुह इत्यर्थः धान्यविशेषानित्यपरे व्यञ्जनार्थं क्षीरं दधि घृतार्थमुपाकुरु ददस्वेत्यर्थः ॥ १८–२० ॥

२१ ] ति० टी०–व्यञ्जनार्थं दधिघृतार्थमुपाकुरु देहि । मेखलीनां ब्रह्मचारिणाम् दीर्घं आर्षः समुपस्थितः विवाहार्थमिति शेषः । सहस्रं गवां निष्काणां वा ॥ २१ ॥

२२–२३ ] ति० टी०–नोऽस्माकमम्बा कौसल्या यथा मम दक्षिणां मया तदाश्रितब्रह्मचारिवर्गस्य दापितां नन्देत्तथा तानर्चयेत्यन्वयः ॥ २२ ॥ २३ ॥

रा० टी०–व्यञ्जनार्थमिति । व्यञ्जनार्थं व्यज्यते संस्क्रियते ओदनादिकमनेनेति व्यञ्जनं दधिघृतादि तदर्थं गोसहस्रं सहस्रसंख्याकगवीः उपाकुरु देहि अग्निहोत्रिभ्यः इति शेषः । अर्धं पृथक्–मेखलीनामिति । मेखलीनां ब्रह्मचारिणां महासंघः बहुसमूहः कौसल्यां समुपस्थितः तत्समीपे प्राप्त इत्यर्थः । तेषां मेखलिनां प्रत्येकं सहस्रं विवाहोपयोगि सहस्रसंख्याकद्रव्यविशेषं संप्रदापय अत एव नोऽस्माकमम्बा कौशल्या मम दक्षिणामवलोकयेति शेषः यथा यथावन्नन्देत । अर्धत्रयमेकान्वयि । मेखलीनामित्यत्र दीर्घ आर्षः ॥ २१ ॥ २२ ॥

गो० टी०–मेखलीनामिति । मेखला मौञ्जी तद्वतां ब्रह्मचारिणामित्यर्थः आर्षो दीर्घः । सहस्रं गोसहस्रं प्रकृतत्वात्तासां ममाम्बेत्यन्वयः दक्षिणां पूर्वोक्तदानाङ्गभूतां सर्वशः वस्त्रधान्यादिसर्वप्रकारैः ॥ २१ ॥ २२ ॥

रा० टी०–उपसंहरन्नाह–तथेति । सर्वान्द्विजातीन्सर्वशः सर्वप्रकारेण अर्चय । अर्धं पृथक्–तत इति । ततः रामाज्ञापनानन्तरं यथोक्तं रामोक्तिमनतिक्रम्य ब्राह्मणेन्द्राणां ब्राह्मणेन्द्रेभ्यः धनद इव अददात् । अर्धद्वयमेकान्वयि ॥ २३ ॥

गो० टी०–तत इति । यथोक्तं रामोक्तमनतिक्रम्य अददात् धनदो यथेति धनदस्य दातृत्वं धनदेन समस्त्याग इति बालरामायण एवोक्तं ब्राह्मणेन्द्राणामिति चतुर्थ्यर्थे षष्ठी ॥ २३ ॥

२४ ] ति० टी०–बाष्पगलान्बाष्पगद्गदान् । उपजीवनं जीवनसाधनम् ॥ २४ ॥

२५–२७ ] ति० टी०–एकैकं प्रत्येकम् । यावन्ममागमनमशून्यं कार्यं पर्यायेणैकशः स्थित्वा पूर्ववद्रक्षणीयमित्यर्थः ॥ २५–२७ ॥

रा० टी०–अथेति । अथ ब्राह्मणसंप्रदानकदानानन्तरं स रामः एकैकस्योपजीविनः उपजीवनमुपजीवनहेतुभूतं बहु द्रव्यं प्रदाय दापयित्वा बाष्पगलानुपजीविनः अब्रवीत् । तद्वचनमेवाह–लक्ष्मणस्य यद्वेश्म गृहं मम च यदिदं गृहं तद्यावन्ममागमनं तावदेकैकं संस्थाप्येति शेषः अशून्यं शून्यं न कार्यम् । असूर्यंपश्या राजदारा इतिवत्समासः । अर्धचतुष्टयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०–अथेति । बाष्पं कलन्ति मुञ्चन्तीति बाष्पकलाः तान् उपजीविनः प्रति एकैकस्योपजीविनो बहुद्रव्यं संप्रदायाब्रवीत् अशून्यं कार्यं यथापूर्वं भवद्भिरुपविश्य रक्षणीयमित्यर्थः । एकैकं पृथक् पृथक् ॥ २४ ॥ २५ ॥

रा० टी०–इतीति । इत्यनेन प्रकारेणोक्त्वा दुःखितं निश्चितवियोगहेतुकदुःखाक्रान्तं तं पूर्वोक्तिकर्मीभूतं सर्वमुपजीविनमिदमुवाच । तद्वचनमेवाह–मम धनाध्यक्षं कोशाधीशाद्धनमानीयताम् "अकथितं च" इति कर्मत्वम् । अर्धद्वयमेकान्वयि ॥ २६ ॥

गो० टी०–इतीति । धनाध्यक्षं कोशगृहाधिकृतम् ॥ २६ ॥

रा० टी०–तत इति । ततः रामाज्ञापनानन्तरमस्य रामस्योपजीविनः धनमाजह्रुः आनिन्युः । अर्धं पृथक् ॥ २७ ॥

---

१ च सा नन्देदिति गो. पाठः । २ स पुरुषव्याघ्र इति गो. पाठः । ३ कलानिति गो. पाठः । ४ संप्रदायेति गो. पाठः । ५ इतीति गो. पाठः । ६ सर्वमिति गो. पाठः ।

ततः स पुरुषव्याघ्रस्तद्धनं सहलक्ष्मणः । द्विजेभ्यो बालवृद्धेभ्यः कृपणेभ्यो ह्यदापयत् ॥ २८ ॥
तत्रासीत्पिङ्गलो गार्ग्यस्त्रिजटो नाम वै द्विजः । क्षतवृत्तिर्वने नित्यं फालकुद्दाललाङ्गली ॥ २९ ॥
तं वृद्धं तरुणी भार्या बालानादाय दारकान् । अब्रवीद्ब्राह्मणं वाक्यं स्त्रीणां भर्ता हि देवता ३० ॥
अपास्य फालं कुद्दालं कुरुष्व वचनं मम । रामं दर्शय धर्मज्ञं यदि किंचिदवाप्स्यसे ॥ ३१ ॥
स भार्याया वचः श्रुत्वा शाटीमाच्छाद्य दुश्छदाम् । स प्रातिष्ठत पन्थानं यत्र रामनिवेशनम् ॥ ३२ ॥
भृग्वङ्गिरःसमं दीप्त्या त्रिजटं जनसंसदि । आपञ्चमायाः कक्ष्याया नैनं कश्चिदवारयत् ॥ ३३ ॥
स राममासाद्य तदा त्रिजटो वाक्यमब्रवीत् । निर्धनो बहुपुत्रोऽस्मि राजपुत्र महाबल ॥ ३४ ॥

---

गो० टी०—तत इति । अस्य रामस्य ॥ २७ ॥

२८ ] ति० टी०—कृपणेभ्यो दीनेभ्यः ॥ २८ ॥

रा० टी०—स इति । दर्शनीयः दर्शनयोग्यः सुमहान् स उपजीव्यानीतः राशिः धनसमूहः अदृश्यत ततः धनदर्शनानन्तरं द्विजेभ्यः तद्धनमदापयत् । सार्धश्लोक एकान्वयी ॥२८॥

गो० टी०—तत इति । बालवृद्धेभ्यः बालेभ्यो वृद्धेभ्यश्चेत्यर्थः ॥ २८ ॥

२९ ] ति० टी०—तत्र गार्ग्यो गर्गगोत्रः । क्षतेन खननेन वृत्तिर्जीविका यस्य क्षीणवृत्तिरिति वा । 'उञ्छवृत्तिः' इति पाठान्तरम् । फालं हलावयवविशेषस्तत्सदृशं मृत्खननार्थं लोहमयमत्र विवक्षितं कुद्दालकं खननसाधनम् लाङ्गलं हलाकारो दण्डः फलापाकर्षणार्थः ॥ २९ ॥

रा० टी०—तत्रेति । तत्र तस्मिन्समये गार्ग्यो गर्गगोत्रः क्षतवृत्तिः क्षतेन पिपीलिकारहिते देशखनने वृत्तिर्जीविका यस्य किंच क्षता त्यक्ता वृत्तिः प्रतिग्रहादिजीविका येन उञ्छवृत्तिरिति यावत् क्वचित् 'उञ्छवृत्तिः' इत्येव पाठः । फालकुद्दाललाङ्गली यागादिहेतुकखननोपकरणीभूतफालादिविशिष्टः पिङ्गलः व्रतोपवासादिना पीतवर्णविशिष्टः त्रिजटो नाम द्विजः वने नित्यमासीत् नित्यमित्यनेन ग्रामगमनव्युदासः ॥ २९ ॥

शि० टी०—तत्रेति । तत्र तस्मिन्काले देशे वा पिङ्गलः पिङ्गलवर्ण इति दारिद्र्यलक्षणोक्तिः पिङ्गलकेशो वा गार्ग्यः गर्गमुनिवंश्यः उञ्छवृत्तिः उञ्छेन एकैकशो धान्यग्रहणेन वृत्तिर्जीवनं यस्य तथा 'क्षतवृत्तिः' इति पाठे क्षतेन खननेन जीवनं यस्येत्यर्थः खननलब्धकन्दमूलादिजीवन इत्यर्थः । फालकुद्दाललाङ्गली फलयते अनेनेति फालः द्वैधीकरणसाधनं कुठारवृक्कुलादिकं कुद्दालः खननसाधनं खनित्रमिति यावत् लाङ्गलं हलाकारः फलाकर्षणसाधनभूतो दण्डविशेषः तद्वान् एवं वनवासी कश्चिद्विप्रो गृहस्थः दैवात्तत्र नगरे तदानीं सङ्गतोऽभूदिति भावः ॥२९॥

३० ] ति० टी०—दारकाः पुत्राः । 'स्त्रीणां भर्ता हि देवता' इति पाठे यद्यपि देवतात्वादाज्ञानर्हस्तथापि प्रीत्या मद्वचनं कुरुष्वेत्यर्थः ॥ ३० ॥

रा० टी०—तमिति । यतः स्त्रीणां देवताव्यवहारनिर्वाहकः भर्तैवातः बालान् अल्पवयस्कान्दारकान्पुत्रानादाय गृहीत्वा तं फालाद्युपस्करविशिष्टं वृद्धं ब्राह्मणं त्रिजटं तरुणी भार्या वाक्यमब्रवीत् 'दारिद्र्येणाभिपीडिता' इति प्रचुरः पाठः ॥ ३० ॥

गो० टी०—तमिति । दारकान् पुत्रकान् ॥ ३० ॥

३१ ] ति० टी०—यदीत्यस्य दर्शयसि तदा लप्स्यसे इति शेषः ॥ ३१ ॥

रा० टी०—तद्वाक्यमेवाह—अपास्येति । अपास्य त्यक्त्वा वचनं प्रार्थनावाक्यं कुरुष्व परिपालय । किं प्रार्थयसीत्यत आह—धर्मज्ञं रामं दर्शय स्ववृत्तं बोधय अत एव यत्किंचिदवाप्स्यसे प्राप्स्यसि । इकारोऽव्ययम् ॥ ३१ ॥

गो० टी०—अपास्येति । कुद्दालमिति लाङ्गलस्याप्युपलक्षणं दर्शयेति भार्यापुत्रसहितमात्मानमित्यर्थः गतिबुद्धीत्यादिना द्विकर्मकत्वम् यदि दर्शयसि तदा किंचिदवाप्स्यसीत्यर्थः किंचिदिति स्वभाग्यहान्यपेक्षयोक्तम् ॥ ३१ ॥

३२ ] ति० टी०—दुश्छदामतिजीर्णत्वादाच्छादनायोग्यां यत्र रामनिवेशनं यस्मिन्पथ्याश्रिते रामवेशनं प्राप्यते तं पन्थानमास्थाय प्रातिष्ठत ॥ ३२ ॥

रा० टी०—स इति । दुश्छदां छिद्रादिविशिष्टात्वेन छादनानर्हां शाटीमाच्छाद्य वसित्वा यत्र यस्मिन्पथि रामनिवेशनं रामकर्तृकप्रवेशः तं पन्थानं स द्विजः प्रातिष्ठत ॥ ३२ ॥

गो० टी०—स इति । दुश्छदाम् अतिजीर्णत्वादाच्छादयितुमशक्यां रामदर्शनार्थमाच्छादनयत्नः यत्र यन्मार्गाभितवीथ्याम् ॥ ३२ ॥

३३-३४ ] ति० टी०—दीप्त्या ब्रह्मवर्चसेन ॥ ३३ ॥ ३४ ॥

रा० टी०—भृग्विति । आपञ्चमायाः कक्षायाः पञ्चमकक्षापर्यन्तं त्रिजटं कश्चिन्न अवारयत् अत एव सः त्रिजटः राममासाद्य प्राप्य वाक्यमब्रवीत् । अर्धत्रयमेकान्वयि ३३॥३४

गो० टी०—भृग्वङ्गिरेति । अङ्गिरेत्यत्र अकारान्तत्वमार्षम् ॥ ३३ ॥

रा० टी०—तद्वाक्यमेवाह—निधन इति । निर्धनत्वादिविशिष्टोऽहमस्मीति मां प्रत्यवेक्षस्व ॥ ३५ ॥

गो० टी०—स इत्यादि । प्रत्यवेक्षस्व कटाक्षयेत्यर्थः ॥ ३५ ॥

---

१ उञ्छवृत्तिरिति गो. पाठः । २ दारिद्र्येणाभिपीडितेति गो. पाठः । ३ अवाप्स्यसीति गो. पाठः । ४ भार्यावचनमिति गो. पाठः । ५ अङ्गिरसममिति गो. पाठः । ६ नैनमिति गो. नचेति रा. पाठः । ७ महायश इति गो. पाठः ।

क्षेतवृत्तिर्वने नित्यं प्रत्यवेक्षस्व मामिति । तमुवाच ततो रामः परिहाससमन्वितम् ॥ ३५ ॥
गवां सहस्रमप्येकं न च विश्राणितं मया । परिक्षिपसि दण्डेन यावत्तावद्वाप्स्यसे ॥ ३६ ॥
स शाटीं परितः कट्यां संभ्रान्तः परिवेष्ट्य ताम् । आविद्ध्य दण्डं चिक्षेप सर्वप्राणेन वेगतः ॥ ३७ ॥
स तीर्त्वा सरयूपारं दण्डस्तस्य कराच्युतः । गोव्रजे बहुसाहस्रे पपातोक्षाणसंनिधौ ॥ ३८ ॥
तं परिष्वज्य धर्मात्मा आ तस्मात्सरयूतटात् । आनयामास ता गावस्त्रिजटस्याश्रमं प्रति ॥ ३९ ॥
उवाच च तदा रामस्तं गार्ग्यमभिसान्त्वयन् । मन्युर्न खलु कर्तव्यः परिहासो ह्ययं मम ॥ ४० ॥

३५ ] ति० टी०—प्रत्यवेक्षस्व मां मयि कृपां कुर्वित्यर्थः । परिहाससमन्वितं क्रीडाप्रयोजनव्यवहारविशेषसमन्वितम् ॥ ३५ ॥

रा० टी०—तमिति । परिहाससमन्वितमन्यकर्तृकपरिहासप्रापकं वचनं ब्राह्मणं राम उवाच । तद्वचनमेवाह—गवामेकमपि सहस्रं मया न विश्राणितं दत्तमदत्ता एवेमाः बहुसहस्रसंख्याकगव्यस्तिष्ठन्तीत्यर्थः ॥ ३६ ॥

गो० टी०—तमिति । परिहाससमन्वितं लीलास्मितसमन्वितं बहुकुटुम्बिनो दरिद्रस्य अस्य कियती धनाशेति जिज्ञासया सस्मित इत्यर्थः ॥ ३५ ॥

३६ ] ति० टी०—'अस्त्येकम्' इति पाठे तावदेव शिष्टमस्तीत्यर्थः । 'अप्येकम्' इति पाठे गवामसंख्यातानां मध्ये एकमपि सहस्रं मया न विश्राणितं दत्तम्, अतोऽत्रैव स्थित्वा दण्डेन यावद्गवाकीर्णं यावन्तं देशं परिक्षिपसि परिगृह्णासि तावत्तावद्देशावस्थिता गा अवाप्स्यसे ब्राह्मणस्य गोग्रहणचापलकौतुकदर्शनार्थमेतद्भगवद्वचनम् ॥ ३६ ॥

रा० टी०—ननु दानाभावेन किमित्यत आह—परीति । दण्डेन यावद्गाः परिक्षिपसि स्प्रक्ष्यसीत्यर्थः तावद्गास्त्वमवाप्स्यसे यावदिति सामान्ये नपुंसकम् अत एवैकवचनान्तत्वस्य नानुपपत्तिः।अर्थं पृथक्।रामोक्तिं संवर्ण्य द्विजवृत्तमाह—स इति । संभ्रान्तः रामेणादृतः स द्विजः कट्यां परितः शाटीं परिवेष्ट्य सर्वप्राणेन कृत्स्नस्वबलेन दण्डमाविध्य भ्रामयित्वा वेगतः चिक्षेप । सार्धश्लोक एकान्वयी ॥ ३७ ॥

गो० टी०—गवामिति । अनेकगोसहस्राणां मध्ये एकमपि सहस्रं न विश्राणितमित्यर्थः यद्वा असङ्ख्यातानां गवां मध्ये एकमपि सहस्रं मया न विश्राणितं न दत्तं तुभ्यमिति शेषः । अपि तु दण्डेन यावत् परिक्षिपसि गवाकीर्णं यावन्तं देशं परिक्षिपसि तावदवाप्स्यसि तावद्देशस्थं गोजातमवाप्स्यसीत्यर्थः एकं गोसहस्रमात्रं न दत्तम् अन्यत्सर्वं दत्तमिति वार्थः बहुसाहस्र इत्यादिवक्ष्यमाणेन विरोधाद् अपिशब्दास्वारस्याच ॥ ३६ ॥

३७ ] ति० टी०—संभ्रान्तस्त्वरितः सर्वप्राणेन सर्वबलेन आविध्य भ्रामयित्वा वेगतो वेगेन ॥ ३७ ॥

गो० टी०—सशाटीमिति । कट्यां परिवेष्टनं बलोत्तम्भनाय आविध्य भ्रामयित्वा सर्वप्राणेन सर्वशक्त्या 'शक्तिः पराक्रमः प्राणः' इत्यमरः ॥ ३७ ॥

३८ ] ति० टी०—स दण्डस्तस्य कराच्च्युतः सरयूपारं तीर्त्वातिक्रम्योक्षाणसंनिधावुक्ष्णां वृषभाणां संनिधिर्यत्र आर्षं आनङ् तादृशे गोव्रजे पपात ॥ ३८ ॥

रा० टी०—स इति । तस्य द्विजस्य करोद्यतः स दण्डः सरयूपारं तीर्त्वा उक्षाणसन्निधौ वृषसमीपवर्तिनि बहुसाहस्रे गोव्रजे पपात । अर्धद्वयमेकान्वयि । उक्षाणेत्यार्षम् किं च अक्ष्णां वृषाणाम् अणाः शब्दास्तैः संनिधीयते स्वसमीपं प्राप्यतेऽसौ तादृशे गोव्रजे पपातेत्यर्थः । भागुरिमतेनेदमिति भूषणोक्तिस्तु दुर्ग्रहा एतादृशनिपातनस्य अजादिगणे अदृष्टत्वात् स्वार्थिकाणादिकल्पनाप्येतन्मार्गिकैव ॥ ३८ ॥

गो० टी०—स इति । उक्षणसन्निधौ उक्षसन्निधौ वष्टिभागुरिरित्यादिरीत्या अकारान्तत्वम् ॥ ३८ ॥

३९ ] ति० टी०—आ तस्मात्सरयूतटात्परपारस्थसरयूमभिव्याप्य या गावः स्थितास्ता आनयामास त्रिजटाश्रमं प्रति नाययामास चेति शेषः ॥ ३९ ॥

रा० टी०—तमिति । धर्मात्मा रामः सरयूतटात्तं ब्राह्मणमावाप्य प्राप्य परिष्वज्य मिलित्वा च ताः त्रिजटदण्डस्पृष्टा गावः त्रिजटस्याश्रमं प्रत्यानयामास प्रापयामास वाक्यार्थस्य कर्मतासंबन्धेनान्वयान्न द्वितीया ॥ ३९ ॥

गो० टी०—तमिति । आतस्मादित्यत्राभिविधिवाचकस्याङः सरयूतटादित्यनेन संबन्धः आनयामास नाययामासेत्यर्थः ॥ ३९ ॥

४० ] ति० टी०—अयं दण्डपरिक्षेपवचनरूपः परिहास एवेत्यर्थः ॥ ४० ॥

रा० टी०—उवाचेति । तदा गोप्रापणकाले गार्ग्यमुवाच । तद्वचनमेवाह—ममायं दण्डस्पर्शाज्ञापनपदार्थः परिहासः अन्यकर्तृकपरिहासकारकः अतः मन्युः कोपः न कर्तव्यः ॥४०॥४१॥

गो० टी०—उवाचेति । परिहासो ह्ययं मम अयं दण्डक्षेपणप्रचोदनापरिहासः विनोदार्थ इत्यर्थः ॥ ४० ॥

१ उञ्छवृत्तिरिति गो. पाठः । २ त्विति गो. पाठः । ३ अवाप्स्यसीति गो. पाठः । ४ त्वरित इति गो. पाठः । ५ वेगित इति गो. पाठः । ६ करोद्यत इति रा.पाठः । ७ उक्षणेति गो. पाठः । ८ आवाप्येति रा.पाठः । ९ गोपैरिति गो.पाठः १० तव इति गो. पाठः ।११ अमर्षित्वेति युक्तं भाति ।

इदं हि तेजस्तव यद्दुरत्ययं तदेव जिज्ञासितुमिच्छता मया ।
इमं भवानर्थमभिप्रचोदितो वृणीष्व किं चेदपरं व्यवस्यसि[1] ॥ ४१ ॥
ब्रवीमि सत्येन न ते[2]ऽस्म यन्त्रणां धनं हि यद्यन्मम विप्रकारणात् ।
भवत्सु सम्यक्प्रतिपादनेन [3]मयार्जितं [4]चैव यशस्करं भवेत् ॥ ४२ ॥
ततः सभार्यस्त्रिजटो महामुनिर्गवामनीकं प्रतिगृह्य मोदितः ।
यशोबलप्रीतिसुखोपबृंहिणीस्तदाशिषः प्रत्यवदन्महात्मनः ॥ ४३ ॥
स चापि रामः प्रतिपूर्णपौरुषो महाधनं धर्मबलैरुपार्जितम् ।
नियोजयामास सुहृज्जने चिराद्यथार्हसंमानवचःप्रचोदितः ॥ ४४ ॥
द्विजः सुहृद्भृत्यजनोऽथवा तदा दरिद्रभिक्षाचरणश्च यो [6]भवेत् ।
न तत्र कश्चिन्न बभूव तर्पितो यथार्हसंमाननदानसंभ्रमैः ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

४१ ] ति० टी०—इदं हीति । इदं दूरपरिक्षेपजनकं तेजः शक्तिस्तव दुरत्ययमपि यत्तदेव जिज्ञासितुं ज्ञातुं स्वार्थे सन्प्रत्ययः इच्छता इममर्थं दण्डप्रक्षेपरूपमर्थं भवान्प्रचोदितोऽसि अपरं गोभ्योऽन्यदपि किंचिद्बहुमूल्यमपि वस्तु वरीतुं व्यवस्यसि चेत्तदपि वृणीष्व ॥ ४१ ॥

रा० टी०—ननु परिहासस्य कोपहेतुत्वे किमर्थं कृत इत्यत आह—इदमिति । दुरत्ययं दुर्निवारं यदिदं तव तेजः तज्जिज्ञासितुं जिज्ञापयिषितुमिच्छता भवत्प्रभावप्राकट्यं वाञ्छता मया इमं दण्डप्रक्षेपणरूपमर्थं भवानभिप्रचोदितः प्रार्थितः अपरं गोभिन्नं किं किंचित् व्यवस्यसि इच्छसि चेद्वृणीष्व स्वीकुरु ॥ ४१ ॥

गो० टी०—परिहासमेव विवृणोति—इदमिति । तेजः बलं दुरत्ययं निरतिशयमित्यर्थः । जिज्ञासितुं ज्ञातुमित्यर्थः । यद्वा जिज्ञासितुं मीमांसितुं मानेर्जिज्ञासायामिति मीमांसार्थे जिज्ञासाशब्दप्रयोगात् । इममर्थं दण्डप्रक्षेपणरूपम् अपरं किंचिद्व्यवस्यति अभिलषति चेत् तद्वृणीष्व ॥ ४१ ॥

४२ ] ति० टी०—इदमुपचारमात्रमिति न मन्तव्यमित्याह—ब्रवीमीति । यन्त्रणा संकोचः हि यतो मम यद्धनं तद्विप्रकारणाद्विप्रप्रयोजनसंपादनार्थम् । कथं तथात्वमत आह—भवत्सु विप्रेषु सम्यग्यथाशास्त्रं प्रतिपादनेन दानेन तत्करणेन हेतुना दानरूपफलार्थं मयार्जितं धनं मे यशस्करं भवेत् न तु भूमिनिक्षेपफलकम् ॥ ४२ ॥

रा० टी०—ब्रवीमीति । ते तव यन्त्रणा याचनविषयकसंकोचो न कार्यः । तत्र हेतुः मम यद्धनं तत्तद्विप्रकारणाद्ब्राह्मणहेतोः इति सत्येन सत्यं ब्रवीमि अतो मयार्जितं धनं भवत्सु सम्यक्प्रतिपादनेन विधिपूर्वकदानेन यशस्करं परमयशःसंपादकं भवेत् एतेन यथेच्छं ग्राह्यमिति सूचितम् ॥ ४२ ॥

गो० टी०—इदं च पूर्ववत्परिहासरूपमित्याह—ब्रवीमीति । यन्त्रणा निरोध इत्यर्थः । मम यद्धनमस्ति तत्सर्वं विप्रकारणात् विप्रार्थमेव आर्जितं भवत्सु भवादृशेषु विप्रेषु सम्यक्करणत्रयपूर्वकं प्रदानेन मम प्रीतियशस्करं भवेत् ॥ ४२ ॥

४३ ] ति० टी०—मोदितः संजातमोदः यशआदीनामुपबृंहिणीर्विवर्धनीर्महात्मनो रामस्य तदाशिषः प्रत्यवदत् ॥ ४३ ॥

रा० टी०—तत इति । अनीकं समूहं यशआद्युपबृंहिणीः वर्धिनीः आशिषः महात्मनो रामस्य तदा तस्मिन्काले प्रत्यवदत् एतेन नान्यत्किंचिदयाचदिति सूचितम् ॥ ४३ ॥

गो० टी०—तत इति । मोदित इत्यनेन गोभ्योऽन्यदनपेक्षितवानित्यवगम्यते उपबृंहणीर्वर्धनीः तदा गमनकाले महात्मनो रामस्य ॥ ४३ ॥

४४ ] ति० टी०—धर्मबलैर्धर्मयुक्तपराक्रमैः चिराद्यथार्हकृतैः संमानवचोभिः सुहृज्जनीयैः प्रचोदितः प्रेरितः प्रेरितदानव्यापारः ॥ ४४ ॥

रा० टी०—स इति । प्रतिपूर्णपौरुषः प्रतिपूर्णः नित्यं संभृतः पौरुषः पुरुषार्थो यस्मिन् यथार्हसंमानवचःप्रचोदितः यथोचितसंमानवचोभिः प्रचोदितः अनेकशः स रामः सुहृज्जने महाधनमचिरात् शीघ्रं नियोजयामास दापयामासेत्यर्थः ॥ ४६ ॥

गो० टी०—स इति । धर्मबलैः धर्मप्रयुक्तपराक्रमैः नियोजयामास प्रतिपादयामास सुहृज्जने विषये यथार्हसंमानवचःप्रचोदितः आहिताग्न्यादित्वान्निष्ठायाः परनिपातः । तत्तदौचित्येनाभिहितसंमानवाक्य इत्यर्थः ॥ ४४ ॥

४५ ] ति० टी०—सुहृद्भृत्यजनस्तद्युक्तः अर्थभावजन्यमेतत् । दरिद्रः सन् भिक्षाचरणकर्ता संभ्रम आदरः ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

---

१ व्यवस्यतीति गो. पाठः । २ ऽस्तीति गो. पाठः । ३ तन्मयार्जितमिति गो. पाठः । ४ प्रीतीति गो. पाठः । ५ मानसो महद्धनमिति गो. पाठः । ६ ऽभवदिति गो. पाठः ।

## त्रयस्त्रिंशः सर्गः ।

ब्राह्मणाय धनादि वितीर्य सीतालक्ष्मणसहितो रामो दशरथं द्रष्टुं तद्गृहं व्रजन्पथि शोकाकुलमानसानां पौराणां बहुविधसंभाषणं श्रुत्वाप्यविकृतमना दशरथगृहं प्राप्य स्वागमनं बोधयितुं सुमन्त्रं चोदयामास ।

दत्त्वा तु सह वैदेह्या ब्राह्मणेभ्यो धनं बहु । जग्मतुः पितरं द्रष्टुं सीतया सह राघवौ ॥ १ ॥
ततो गृहीते [1]प्रेष्याभ्यामशोभेतां तदायुधे । मालादामभिरासैक्ते सीतया समलंकृते ॥ २ ॥
ततः प्रासादहर्म्याणि विमानशिखराणि च । अधिरुह्य जनः श्रीमानुदासीनो व्यलोकयत् ॥ ३ ॥
न हि रथ्याः सुशक्यन्ते गन्तुं बहुजनाकुलाः । आरुह्य तस्मात्प्रासादाद्दीनाः पश्यन्ति राघवम् ॥ ४ ॥
पदातिं सानुजं दृष्ट्वा ससीतं च जनास्तदा । ऊचुर्बहुजना वाचः शोकोपहतचेतसः ॥ ५ ॥
यं यान्तमनुयाति स्म चतुरङ्गबलं महत् । तमेकं सीतया सार्धमनुयाति स्म लक्ष्मणः ॥ ६ ॥

रा० टी०—द्विज इति । तदा तस्मिन्काले द्विजो ब्राह्मणः सुहृद्भृत्यजनो वा दरिद्रभिक्षाचरणः दरिद्रत्वसमानाधिकरणभिक्षावृत्तिविशिष्टो वा यथार्हसंमाननादिभिः यो न तर्पितः तृप्तिं न प्राप्तः स तत्र तस्मिन् जनसमूहे कश्चिन्न बभूव ॥ ४६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

गो० टी०—द्विज इति । द्विजः ब्राह्मणः सुहृत् द्विजत्वाभावेऽपि सुहृत् द्विजत्वसुहृत्त्वाभावेऽपि भृत्यजनः तथात्वाभावेऽपि दरिद्रभिक्षाचरणः भिक्षां चरतीति भिक्षाचरणः "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् कर्मधारयसमासः तत्र तेषु मध्ये कश्चिदपि यथार्हसंमाननदानसंभ्रमैः संभ्रमस्त्वरा 'आरम्भः संभ्रमस्त्वरा' इत्यमरः । न तर्पितो न बभूव त्वरया क्रियमाणैरपि संमानदानैः सर्वेऽपि तर्पिता बभूवुरित्यर्थः ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

१ ] ति० टी०—दत्त्वेति ॥ १ ॥

रा० टी०—दानोत्तरकालिकं रामवृत्तमाह—दत्त्वेति । ब्राह्मणेभ्यो बहु अधिकं धनं दत्त्वा वैदेह्या विदेहतनयया सीतया सह राघवौ रामलक्ष्मणौ पितरं द्रष्टुं जग्मतुः ॥ १ ॥

गो० टी०—पूर्वं पित्रानुज्ञातोऽपि सीतालक्ष्मणयोरनुज्ञापनाय पुनः रामो दशरथसमीपं गच्छति—दत्त्वेत्यादि ॥ १ ॥

२ ] ति० टी०—आयुधे इति जात्यभिप्रायेण सीतयालंकृते पूजार्थचन्दनादिभिः ॥ २ ॥

रा० टी०—तत इति । प्रेष्याभ्यां रामलक्ष्मणभृत्याभ्यां गृहीते मालादामभिः उत्तममालाभिरासक्ते युक्ते सीतया समलंकृते चन्दनादिभिरर्चिते तदायुधे रामलक्ष्मणधनुषी अशोभेताम् ॥ २ ॥

गो० टी०—तत इति । तदायुधे तयोरायुधे धनुषी इति यावत् खड्गादीनामप्युपलक्षणमेतत् मालादामभिः मालानिचयैरित्यर्थः अलंकृते चन्दनादिभिरलंकृते ॥ २ ॥

३ ] ति० टी०—विमानशिखराणि सप्तभूमिकगृहाग्रभागाः । प्रासादस्त्रिभूमिकः हर्म्यं राजगृहम् उदासीनोऽरक्षितृत्वेन निरुत्सुकः व्यलोकयत् राममिति शेषः ॥ ३ ॥

रा० टी०—तत इति । ततः पितृगृहकर्मकरामगमनानन्तरं प्रासादहर्म्याणि प्रासादाः राजदेवायतनानि हर्म्याणि तदितरधन्यायतनानि विमानाः सप्तभूमिकगृहाणि शिखराणि मणिपर्वतशृङ्गाणि अधिरुह्य आरुह्य उदासीनः निश्चितरामवियोगहेतुकौदासीन्यविशिष्टः श्रीमान् जनः व्यलोकयत् राममिति शेषः । 'प्रासादो देवभूभुजाम्' इत्यमरः 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति वैजयन्ती ॥ ३ ॥

गो० टी०—तत इति । प्रासादहर्म्याणि प्रासादो देवतानां भूभुजां चावासः हर्म्याणि धनिनां मन्दिराणि 'हर्म्यादिर्धनिनां वासः प्रासादो देवभूभुजाम्' इत्यमरः । विमानशिखराणि विमानं सप्तभूमिसहितं सद्म 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति वैजयन्ती । उदासीनः निरुत्सुकः निर्विण्ण इति यावत् ॥ ३ ॥

४ ] ति० टी०—यतो बहुजनाकुलत्वाद्रथ्या गन्तुं न सुखेन शक्यन्ते तस्मात्प्रासादमारुह्य प्रासादात्तत्र प्रासादे संस्थाय ॥ ४ ॥

रा० टी०—ननु रामसमीपमेव कुतो न जग्मुरित्यत आह—नेति । यतो रथ्याः मार्गाः बहुजनाकुला अतो गन्तुं न सुशक्यन्ते तस्माद्धेतोः दीनाः सर्वजनाः प्रासादाद्राघवं पश्यन्ति ॥ ४ ॥

गो० टी०—नहीति । तस्मात् रथ्यागमनस्याशक्यत्वात् 'प्रासादान्' इति पाठः प्रसादादितिपाठे ल्यब्लोपे पञ्चमी क्रिया ४ ॥

५-६ ] ति० टी०—दीनत्वे हेतुमाह—पदातिमिति ॥ ५-६ ॥

रा० टी०—पदातिमिति । शोकोपहतचेतसः निश्चितवियोगहेतुकशोकव्याप्तचित्ताः जनाः बहुविधा वाचः ऊचुः ॥ ५ ॥

गो० टी०—दीनत्वे हेतुमाह—पदातिमित्यादिना ॥ ५ ॥

रा० टी०—तद्वचनमेवाह—यमिति । यान्तं गच्छन्तं यं रामं महत् चतुरङ्गबलं साङ्गसैन्यमनुयाति स्म तं सीतया सार्धं यान्तमेकं सीतातिरिक्तजनरहितमेव लक्ष्मणोऽनुयाति गच्छति । द्वितीयः स्म पवार्थे ॥ ६ ॥

१ दुष्प्रेक्ष्ये त्वशोभेतामिति गो. पाठः । २ बद्धे इति गो. पाठः । ३ जपीति गो. रा. पाठः । ४ स्मेति गो. पाठः । ५ प्रासादानिति गो. पाठः । ६ वर्जितच्छत्रं रामं दृष्ट्वा तदा जना इति गो. पाठः । ७ विधा इति गो. रा. पाठः ।

ऐश्वर्यस्य रसज्ञः सन्कामानां चाकरो महान् । नेच्छत्येवानृतं कर्तुं वचनं धर्मगौरवात् ॥ ७ ॥
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि । तामद्य सीतां पश्यन्ति राजमार्गगता जनाः ॥ ८ ॥
अङ्गरागोचितां सीतां रक्तचन्दनसेविनीम् । वर्षमुष्णं च शीतं च [3]नेष्यत्याशु विवर्णताम् ॥ ९ ॥
अद्य नूनं दशरथः सत्त्वमाविश्य भाषते । नहि राजा प्रियं पुत्रं विवासयितुमर्हति ॥ १० ॥
निर्गुणस्यापि पुत्रस्य कथं स्याद्विनिर्वासनम् । किं पुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ॥ ११ ॥
आनृशंस्यमनुक्रोशः श्रुतं शीलं दमः शमः । राघवं शोभयन्त्येते षड्गुणाः पुरुषर्षभम् ॥ १२ ॥
तस्मात्तस्योपघातेन प्रजाः परमपीडिताः । औदकानीव सत्त्वानि ग्रीष्मे सलिलसंक्षयात् ॥ १३ ॥
पीडया पीडितं सर्वं जगदस्य जगत्पतेः । मूलस्येवोपघातेन वृक्षः पुष्पफलोपगः ॥ १४ ॥

गो० टी०—यमिति । एकं मुख्यम् ॥ ६ ॥

७ ] ति० टी०—रसज्ञः सुखज्ञः कामानां भोग्यवस्तूनाम् वचनं पितृवचनम् ॥ ७ ॥

रा० टी०—ऐश्वर्यस्येति । कामानां प्रजेप्सितपदार्थानां महान् व्ययेप्यूनतारहितः आकरः सर्वदा दातेत्यर्थः । रामः धर्मगौरवात्स्वनिष्ठवेद विहितानुष्ठानस्याधिक्याद्धेतोः वचनमानुमानिकपित्राज्ञापनमनृतं मिथ्या कर्तुं नेच्छति ॥ ७ ॥

गो० टी०—ऐश्वर्यस्येति । रसज्ञः संग्रहसुखज्ञः कामिनामर्थकाङ्क्षिणां कामदः अभीष्टधनप्रदः अनृतमनृतवचनं कर्तुं धर्मगौरवात् पितृशुश्रूषणवचनकरणाविधेयत्वादिरूपधर्मविषयकबहुमानात् ॥ ७–९ ॥

८–९ ] ति० टी०—भूतैः प्राणिभिः वनप्रयाणानुमत्यर्थं राजसंनिधौ गमनसमये ॥ ८ ॥ ९ ॥

रा० टी०—येति । आकाशगैः भूतैर्वाय्वादिभिरपि ॥ ८ ॥

रा० टी०—अङ्गेति । अङ्गरागोचितां नित्यं कस्तूर्यालेपनयोग्यां सीतां वर्षादित्रयं विवर्णतां वर्णान्तराक्रान्ततां नेष्यति प्रापयिष्यति ॥ ९ ॥

१० ] ति० टी०—सत्त्वं पिशाचम् राजा स्वस्वभावे वर्तमानो हि यतो न पुत्रं विवासयितुमर्हति ॥ १० ॥

रा० टी०—अद्येति । सत्त्वं महात्मनां धर्मं सत्यप्रतिज्ञत्वमित्यर्थः आविश्य आश्रित्य भाषते रामगमनं वक्ति अन्यथा विवासयितुं वनं प्रेषयितुं नार्हति हिरन्यथार्थे । एतेन सत्त्वं पिशाचमित्यर्थं वर्णयन्तो भट्टादयः चिन्त्यास्तदर्थे संकेताभावादसंभवाच्च ॥ १० ॥

गो० टी०—अद्येति । सत्त्वं जन्तुम् 'सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । पिशाचमिति यावत् आविश्य प्राप्य ॥ १० ॥

११ ] ति० टी०—तदेवाह—निर्गुणस्यापीति । वृत्तेन चरित्रेण तस्मात्पिशाचग्रस्त एवेति भावः ॥ ११ ॥

रा० टी०—तत्र हेतुं वदन्त आहुः—निर्गुणस्येति । वृत्तेनाचरितेन लोको जितः वशीभूत इत्यर्थः ॥ ११ ॥

गो० टी०—निर्गुणस्यापीति । वृत्तेन केवलं चरित्रमात्रेण 'वृत्तं पद्ये चरित्रे च' इत्यमरः । वृत्तेन केवलमित्युक्तिः दानमानादौ विद्यमानेऽपि चरित्रप्राधान्यात् ॥ ११ ॥

१२ ] ति० टी०—आनृशंस्यमहिंसा अनुक्रोशो दया श्रुतमनुष्ठानपर्यवसायि शास्त्राध्ययनम् शीलं सत्स्वभावः दमो बाह्येन्द्रियनिग्रहः शमश्चित्तनिग्रहः ॥ १२ ॥

रा० टी०—आनृशंस्यमिति । आनृशंस्यं सार्वकालिकसर्वप्रकारकहिंसाभावः अनुक्रोशो दयाबाहुल्यं श्रुतं विज्ञापनाश्रवणं शीलमतिसुशीलता दमः यथापराधं दण्डः शमः शान्तिकरणमेते षड्गुणाः पुरुषर्षभं पुरुषश्रेष्ठं राघवं शोभयन्ति ॥ १२ ॥

गो० टी०—आनृशंस्यमिति । आनृशंस्यमहिंसकत्वम् अनुक्रोशो दया 'कृपा दयानुकम्पा स्यादनुक्रोशः' इत्यमरः । दमः इन्द्रियनिग्रहः शमः चित्तप्रशान्तिः 'शमश्चित्तप्रशान्तिः स्याद्दम इन्द्रियनिग्रहः' इति निर्वचनात् ॥ १२ ॥

१३ ] ति० टी०—तस्मात्तस्य षड्गुणवत्त्वात् उपघातः पीडनम् पाठान्तरेऽपि स एवार्थः ॥ १३ ॥

रा० टी०—तस्मादिति । तस्मादुक्तषड्गुणवत्त्वाद्धेतोः तस्य रामाभिषेकस्योपघातेन निवर्तनेन प्रजाः परमपीडिता-अतिदुःखिताऽसन्तीति शेषः तत्र दृष्टान्तः औदकानि उदकनिवासिनः ॥ १३ ॥

गो० टी०—तस्मादिति । तस्मात् षाड्गुण्ययुक्तत्वात् तस्य रामस्य उपघातेन हिंसनेन औदकानि उदकजीवनानि शैषिकोऽण् ॥ १३ ॥

१४ ] ति० टी०—जगत्पालकत्वादपि तस्योपघातेन जगत्पीडितमित्याह—पीडयेति । पुष्पफलोपगः पुष्पफलसहितः मूलस्येवेत्यनेन सर्वजगदधिष्ठानत्वमस्य सूचितम् ॥ १४ ॥

रा० टी०—पीडयेति । पीडया निश्चितरामवियोगजनितदुःखेन जगत्पतेः साक्षाद्ब्रह्मादिद्वारा च निखिलभुवननियन्तुः अस्य रामस्य सर्वं जगत्पीडितं तत्र दृष्टान्तः पुष्पफलोपगः पुष्पफलानि प्राप्तः ॥ १४ ॥

गो० टी०—पीडयेति । अस्य जगत्पतेः रामस्य पीडया विवासनरूपया पुष्पफलैरुपगमो यस्य स पुष्पफलोपगः वृक्ष इव अन्येष्वपि दृश्यत इति डप्रत्ययः ॥ १४ ॥

१ कामिनां चैव कामद इति गो. पाठः । २ पितरमिति गो. पाठः । ३ नेष्यन्तीति गो. पाठः । ४ इच्छतीति गो. पाठः । ५ विप्रवासनमिति गो. पाठः ।

मूलं ह्येष मनुष्याणां धर्मसारो महाद्युतिः । पुष्पं फलं च पत्रं च शाखाश्चास्येतरे जनाः ॥ १५ ॥
ते लक्ष्मण इव क्षिप्रं सपत्न्यः सहबान्धवाः । गच्छन्तमनुगच्छामो येन गच्छति राघवः ॥ १६ ॥
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च । एकदुःखसुखा राममनुगच्छाम धार्मिकम् ॥ १७ ॥
समुद्धृतनिधानानि परिध्वस्ताजिराणि च । उपात्तधनधान्यानि हृतसाराणि सर्वशः ॥ १८ ॥
रजसाभ्यवकीर्णानि परित्यक्तानि दैवतैः । मूषकैः परिधावद्भिरुद्बिलैरावृतानि च ॥ १९ ॥
अपेतोदकधूमानि हीनसंमार्जनानि च । प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि च ॥ २० ॥
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च । अस्मत्त्यक्तानि कैकेयी वेश्मानि प्रतिपद्यताम् ॥ २१ ॥
वनं नगरमेवास्तु येन गच्छति राघवः । अस्माभिश्च परित्यक्तं पुरं संपद्यतां वनम् ॥ २२ ॥
बिलानि दंष्ट्रिणः सर्वे सानूनि मृगपक्षिणः । [1]त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ॥ २३ ॥

१५ ] ति० टी०—मनुष्याणामित्युपलक्षणं प्राणिमात्रस्य वस्तुमात्रस्य च धर्म एवान्तःसारो यस्य सः ॥ १५ ॥

रा० टी०—रामस्य मनुवंशश्रैष्ठ्यमुपपादयन्त आहुः—मूलमिति । धर्मसारः परमधर्मज्ञः महाद्युतिः समाधिकरहिततेजोविशिष्टः एष रामः मनुष्याणां मनुवंशजातानां मूलं तत्प्रभूतत्वकारणमितरे एतद्भिन्नाः जनाः मनुवंशोद्भवाः पुष्पादिकम् एतेन रामसुखेनैव सर्वेषां सुखमिति सूचितम् ॥ १५ ॥

गो० टी०—मूलमिति । मनुष्याणां प्राणिनाम् उपलक्षणमेतत् धर्म एव सारो यस्य स धर्मसारः ॥ १५ ॥

१६ ] ति० टी०—सपत्न्यः पत्नीसहितास्ते रामोपघातमसहन्तो वयं येन मार्गेण ॥ १६ ॥

रा० टी०—ते इति । सपत्न्यः पत्नीसहिताः वयं येन पथा राघवो गच्छति तेन पथा गच्छन्तं राममनुगच्छामः ॥ १६ ॥

गो० टी०—त इति । ते वयं सपत्न्यः सपत्नीकाः समासान्तविधेरनित्यत्वेन "नद्युतश्च" इति कबभावः येन मार्गेण गच्छति तेनेति शेषः ॥ १६ ॥

१७ ] ति०टी०—एकदुःखसुखाः समानदुःखसुखाः ॥ १७ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—उद्यानानीति । एकदुःखसुखाः रामसमानदुःखसुखभोगिनः, किंच दुःखसुखोपलक्षितसमानद्वन्द्वाः वयं राममनुगच्छामः ॥ १७ ॥

गो० टी०—उद्यानानीति । उद्यानानि राजार्होद्यानसदृशक्रीडावनानि एकदुःखसुखाः समानसुखदुःखाः ॥ १७ ॥

१८ ] ति० टी०—समुद्धृतनिधानत्वादिधर्मकाणि गृहाणि कैकेयी प्रतिपद्यतामित्यन्वयः निधानानि निक्षेपाः अजिरमङ्गणं परिध्वस्तं मार्जनादिरहितं येषु धनं गवादि, अनिक्षिप्तभूषणादि चोपात्तं गृहीतं येभ्योऽत एव हृतसाराणि ॥ १८ ॥

१९ ] ति० टी०—उद्बिलैरुद्भिन्नबिलैः ॥ १९ ॥

रा० टी०—इदानीं रामवियोगहेतुत्वात्कैकेयीमाधिक्षिपन्त आहुः—समुद्धृतेत्यादिभिः । समुद्धृतनिधानानि समुद्धृतानि प्रक्षिप्तानि निधानानि संस्थापनयोग्यवस्तूनि येषु परिध्वस्तानि बहुतप्रस्तरादिना विनष्टानि अजिराणि अङ्गणानि येषु उपात्तानि चोरादिभिर्गृहीतानि धनधान्यानि येभ्यः तानि अत एव सर्वशः सर्वप्रकारेण हृतानि साराणि येभ्यः अत एव रजसा धूलीभिः अभ्यवकीर्णानि व्याप्तानि अत एव दैवतैः देवैः परित्यक्तानि अत एव उद्बिलैः बिलेभ्यो निःसृतैः परिधावद्भिः मूषकैः आवृतानि ॥ १८ ॥ १९ ॥

गो० टी०—समुद्धृतनिधानानीत्यादि । समुद्धृतनिधानानि सम्यगुद्धृतनिक्षेपाणि परिध्वस्ताजिराणि भग्नाङ्गणानि 'अङ्गणं चत्वराजिरे' इत्यमरः।उपात्तधनधान्यानि अत्र धनशब्देन गवादिकं निक्षिप्तभूषणनिष्कादिकं चोच्यते साराणि शय्यासनादीनि दैवतैः गृहदैवतैः उद्बिलैः उद्भिन्नबिलैः उदकमुदकसेचनम् हीनसंमार्जनानि संमार्जनहीनानि दुष्कालेन क्षामक्षोभयुक्तकालेन भाजनं भाण्डादि ॥ १८–२१ ॥

२० ] ति० टी०—अपेतोदकत्वादिना मनुष्यराहित्यं सूच्यते ॥ २० ॥

रा० टी०—अत एव अपेताः अभावप्रतियोगिनः उदकधूमा येषु तानि अत एव हीनानि अभावप्रतियोगीनि संमार्जनानि येषु तानि अत एव प्रनष्टाः बल्यादयो येषु तानि ॥ २० ॥

२१ ] ति० टी०—दुष्कालो राजिकदैविकक्षोभकालः ॥ २१ ॥

रा० टी०—अत एव दुष्कालेन प्रलयकालेनेव भग्नानि अत एव भिन्नानि विदीर्णानि यानि भाजनानि तद्वन्ति अस्मत्त्यक्तानि अस्मत्कर्तृकत्यागकर्मीभूतानि वेश्मानि गृहाणि कैकेयी प्रतिपद्यतां प्राप्नोतु । श्लोकचतुष्टयमेकान्वयि ॥ २१ ॥

२२ ] ति० टी०—येन वनेन हेतुना ॥ २२ ॥

रा० टी०—इदानीं रामसहगमनकर्तॄणामेव सुखं भवितेति बोधयन्त आहुः—वनमित्यादिभिः। येन वनेन राघवो गच्छति गमिष्यति तद्वनमेव नगरमस्तु भविष्यतीत्यर्थः अस्माभिः रामसहगमनकारिभिः परित्यक्तं पुरमयोध्या वनं वनत्वं संपद्यतां प्राप्स्यतीत्यर्थः ॥ २२ ॥

गो० टी०—वनमिति । येन वनेन हेतुना ॥ २२ ॥

२३ ] ति०टी०—दंष्ट्रिणः सर्पाः मृगपक्षिणो गिरिस्थाः ॥ २३ ॥

१ त्यजन्तीति गो० पाठः ।

अस्मत्त्यक्तं प्रपद्यन्तु सेव्यमानं त्यजन्तु च । तृणमांसफलादानं देशं व्यालमृगद्विजम् ॥ २४ ॥
प्रपद्यतां हि कैकेयी सपुत्रा सह बान्धवैः । राघवेण वयं सर्वे वने वत्स्याम निर्वृताः ॥ २५ ॥
इत्येवं विविधा वाचो नानाजनसमीरिताः । शुश्राव राघवः श्रुत्वा न विचक्रेऽस्य मानसम् ॥ २६ ॥
स तु वेश्म पुनर्मातुः कैलासशिखरप्रभम् । अभिचक्राम धर्मात्मा मत्तमातङ्गविक्रमः ॥ २७ ॥
विनीतवीरपुरुषं प्रविश्य तु नृपालयम् । ददर्शावस्थितं दीनं सुमन्त्रमविदूरतः ॥ २८ ॥
प्रतीक्षमाणोऽभिजनं तदार्तमनार्तरूपः प्रहसन्निवाथ ।
जगाम रामः पितरं दिदृक्षुः पितुर्निदेशं विधिवच्चिकीर्षुः ॥ २९ ॥
तत्पूर्वमैक्ष्वाकसुतो महात्मा रामो गमिष्यन्नृपमार्तरूपम् ।
व्यतिष्ठत प्रेक्ष्य तदा सुमन्त्रं पितुर्महात्मा प्रतिहारणार्थम् ॥ ३० ॥

---

रा० टी०—वने सिंहादिभीतिरप्यस्माकं न भविष्यतीति बोधयन्त आहुः—बिलानीति । सत्रं दंष्ट्रिणः सर्पादयः अस्मद्भयाद्भीताः सन्तः बिलानि मृगपक्षिणः सानूनि शिखराणि च गजाः सिंहाश्च वनानि त्यजन्तु त्यक्ष्यन्ति ॥ २३ ॥

गो० टी०—बिलानीति । दंष्ट्रिणः सर्पाद्याः अस्मद्भयात् अस्मत्प्रयुक्तभयहेतोः ॥ २३ ॥

२४–२५ ] ति० टी०—अस्मत्त्यक्तम् पुरमिति शेषः सेव्यमानमस्माभिः सेव्यमानं वनमित्यर्थः । कर्तारोऽत्र पूर्वोक्ता दंष्ट्र्यादयः तृणमांसफलानामादानं यस्मात्तम् । व्यालमृगद्विजं तद्वन्तम् अर्शआद्यच् । तादृशं देशमिमं कैकेयी प्रपद्यतामित्यन्वयः॥ २४ ॥ २५ ॥

रा० टी०—ननु भवत्कर्तृकसर्वस्वत्यजन्तुपीडा भविष्यतीत्यत आहुः—अस्मदिति । अस्मत्त्यक्तमस्माभिर्हीनं वनं प्रपद्यन्तु प्रपद्यन्तां दंष्ट्र्यादय इति शेषः तेन तेषामपि स्थितेः सावकाशत्वान्न पीडेति सूचितम् तृणमांसफलादानां तृणादिभक्षणशीलानां देशं निवासस्थानं रामविहीनमेतत्पुरमिति शेषः कैकेयी प्रपद्यतामत एव व्यालमृगद्विजं व्यालादीन् प्रपद्यतां तैरेव सह मैत्र्यादिकं क्रियतामित्यर्थः । वयं सर्वे तु राघवेण सह निर्वृताः परमानन्दं प्राप्ताः सन्तः वने वत्स्याम वत्स्यामः ॥ २४ ॥ २५ ॥

गो० टी०—अस्मत्त्यक्तमिति । अस्माभिस्त्यक्तं पुरं सेव्यमानं वनमित्यर्थसिद्धम् । अत्र कर्तारः पूर्वोक्तदंष्ट्र्यादयः॥२४॥

गो० टी०—तृणेति । तृणमांसफलादानां तृणादाः हरिणादयः, मांसादाः व्याघ्रादयः, फलादाः वायसादयः, व्यालमृगद्विजं व्यालाः क्रूराः मृगद्विजाः यस्मिंस्तादृशं देशम् इदमेव नगरं तादृशं भविष्यतीति भावः निर्वृताः सुखिताः ॥ २५ ॥

२६ ] ति० टी०—न विचक्रे न विकारं प्राप्तम् ॥ २६ ॥

रा० टी०—इतीति । समीरिताः उच्चारिताः विविधा अनेकविधकैकेय्यादिव्यवयविषयकपरिक्षेपयुक्ताः वाचः शुश्राव श्रुत्वापि अस्य रामस्य मानसं मनः न विचक्रे विकारं न प्राप्नोत् तेन रामस्य क्षमातिशयो गुणो व्यक्तः ॥ २६ ॥

गो० टी०—इतीति । श्रुत्वावस्थितस्येति शेषः न विचक्रे न विकारं प्राप ॥ २६–२८ ॥

२७–२८ ] ति० टी०—पुनस्तद्वार्ताश्रवणानन्तरमपि मातुः कैकेय्याः ॥ २७ ॥ २८ ॥

रा० टी०—प्रासङ्गिकप्रजावृत्तं संवर्ण्य प्रकृतरामवृत्तमाह—स इति । धर्मात्मा रामः मातुः कैकेय्याः वेश्म गृहमभिचक्राम जगाम पितुस्तद्वेश्मन्येव स्थितत्वादिति भावः ॥ २७ ॥

रा० टी०—विनीतेति । विनीताः नम्रीभूताः वीरपुरुषाः यं तं सुमन्त्रं ददर्श ॥ २८ ॥

२९ ] ति० टी०—आर्तं खिन्नमभिजनं देशं तत्स्थजनमिति यावत् । प्रतीक्षमाणः पश्यन्नपि निदेशमाज्ञाम् ॥ २९ ॥

रा० टी०—सुमन्त्रदर्शनानन्तरकालिकं गमनं वर्णयन्नाह—प्रतीक्षमाण इति । आर्तं निश्चितवियोगजनितदुःखाक्रान्तमभिजनं प्रतीक्षमाणः पश्यन्ननार्तरूपः सार्वकालिकार्तत्वाभावः विशिष्टरूपविशिष्टः पितुर्निदेशमाज्ञां विधिवच्चिकीर्षुः कर्तुमिच्छू रामः प्रहसन्नेव पितरं जगाम ॥ २९ ॥

गो० टी०—प्रतीक्षमाण इति । निदेशं नियोगम् ॥ २९ ॥

३० ] ति० टी०—तत्पूर्वं सः स्वाकारणार्थागमनकालः पूर्वो यस्यार्तरूपत्ववतस्तादृशं तदारभ्यार्तरूपमिति यावत् । सुमन्त्रं प्रेक्ष्य प्रतिहारणार्थं स्वागमननिवेदनार्थं व्यतिष्ठत द्वार्येवेति शेषः ॥ ३० ॥

रा० टी०—तदिति । आर्तरूपं निश्चितरामवियोगजनितदुःखाक्रान्तस्वरूपं नृपं गमिष्यन् ऐक्ष्वाकुसुतो रामः तत्पूर्वं तस्मात्पितुरपि पूर्वं पौर्वकालिकं सुमन्त्रं प्रेक्ष्य दृष्ट्वा पितुः प्रतिहारणार्थं स्वागमनबोधनार्थं व्यतिष्ठत । एकमहात्मशब्दस्य महतां ब्रह्मादित्रयाणां ब्रह्मा आत्मा प्रवर्तक इत्यर्थः द्वितीयस्य तु मर्यादापालकस्वरूपस्वभावविशिष्ट इत्यर्थ इति न पौनरुक्त्यम् ॥ ३० ॥

गो० टी०—तत्पूर्वमिति । तत्पूर्वं तत्प्रथमं महात्मा महाधैर्यः प्रतिहारणार्थं स्वागमननिवेदनार्थम् ॥ ३० ॥

---

१ प्रपद्यन्तामिति गो. पाठः । २ फलादानामिति गो. रा. पाठः । ३ वने सर्वे सहेति गो. पाठः । ४ रामः श्रुत्वा चेति गो. पाठः । ५ नितुर्दूरादिति गो. पाठः । ६ अपीति गो. पाठः । ७ वनमिति गो. पाठः ।

पितुर्निदेशेन तु धर्मवत्सलो वनप्रवेशे कृतबुद्धिनिश्चयः ।
स राघवः प्रेक्ष्य सुमन्त्रमब्रवीन्निवेदयस्वागमनं नृपाय मे ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

## चतुस्त्रिंशः सर्गः ।

सुमन्त्रावेदितरामागमनो दशरथो दारैः समं तमानेतुं सुमन्त्रं न्ययोजयत् । रामदर्शनमात्रेण मूर्छितं दशरथं दृष्ट्वा राजस्त्रियो भृशं विलेपुः । सीतालक्ष्मणाभ्यां समं वनगमनाभ्यनुज्ञामर्थयमाने रामे स स्वनिग्रहपूर्वकं राज्यस्वीकारमनुमेने । राज्यादिष्वात्मनो निरभिलाषित्वं पितृवचसोऽवश्यकर्तव्यत्वं च विनिवेद्य रामः पितरमसान्त्वयदथो पुत्रवियोगशोकेन मूर्छामाविशति दशरथे सुमन्त्रसहिताः सर्वा अन्तःपुरस्त्रियो मूर्छां प्रपेदिरे ।

ततः कमलपत्राक्षः श्यामो निरुपमो महान् । उवाच रामस्तं सूतं पितुराख्याहि मामिति ॥ १ ॥
स रामप्रेषितः क्षिप्रं संतापकलुषेन्द्रियम् । प्रविश्य नृपतिं सूतो निःश्वसन्तं ददर्श ह ॥ २ ॥
उपरक्तमिवादित्यं भस्मच्छन्नमिवानलम् । तटाकमिव निस्तोयमपश्यज्जगतीपतिम् ॥ ३ ॥
आबोध्य च महाप्राज्ञः परमाकुलचेतनम् । राममेवानुशोचन्तं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥
तं वर्धयित्वा राजानं पूर्वं सूतो जयाशिषा । भयविक्लवया वाचा मन्दया श्लक्ष्णयाब्रवीत् ॥ ५ ॥

३१ ] ति० टी०—तदेव सुमन्त्रमाह—पितुरिति ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०—पितुरिति । पितुर्निदेशेन आज्ञयैव वनप्रवेशे कृतौ बुद्धिनिश्चयौ मतिजनतासंग्रहाभावौ येन सः राघवः मे स्वागमनं नृपाय निवेदय इति सुमन्त्रमब्रवीत् ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

गो० टी०—पितुरिति । अस्यान्ते इतिकरणं द्रष्टव्यम् ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

१-२ ] ति० टी०—'निरुदरः' इति पाठे तनुमध्य इत्यर्थः। श्यामः श्यामवर्णः तरुणश्च । अत्र कवेरपि करुणासमयत्वेन वर्णितस्यैव पुनः पुनः कथनमदोषाय ॥ १ ॥ २ ॥

रा० टी०—उत्तरग्रन्थसंदर्भशुद्धये पुनः सूतं प्रति रामोक्तिमाह—तत इति । निरुपमः सादृश्यप्रतियोगित्वानुयोगित्वानाक्रान्तत्वेनोपमानोपमेयरहितः राम उवाच ॥ १ ॥

रा० टी०—स इति । संतापकलुषेन्द्रियं निश्चितरामवियोगजनितसंतापव्याप्तचित्तं नृपतिं ददर्श ॥ २ ॥

गो० टी०—पूर्वसर्गान्तोक्तमर्थं वक्ष्यमाणसंघट्टनार्थं संग्रहेण दर्शयति—तत इति । विशेषणैर्निर्विकारत्वं सूच्यते निरुदरः तनुमध्य इत्यर्थः ॥ १ ॥ २ ॥

३ ] ति० टी०—उपरक्तं राहुग्रस्तम् । पुनरपश्यदिति वाल्मीकेः प्रयोगो वर्णनीयमयीभावेन तस्यापि शोकग्रस्तत्वात् ॥ ३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—उपेति । उपरक्तं राहुणा ग्रस्तमादित्यमिव निस्तोयं शैवालाद्याच्छादनहेतुकतोयरहितत्वेन प्रतीयमानं तटाकमिवापश्यत् अत एव पूर्वोपमानाभ्यां न वैरूप्यम् एतदुपमालङ्कारेण राज्ञो वास्तवदुःखाभावः सूचितः तेनाप्रकटसाकेते रामसंयोगो भवितेति राजनिश्चयः सूचितः ॥ ३ ॥

गो० टी०—उपरक्तमिति । उपरक्तं राहुग्रस्तं विशेषणान्तरकथनार्थं पुनरपश्यदित्युक्तिः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—आबोध्य महाराज इति संबोध्य राममेवोद्दिश्य शोचन्तम् ॥ ४ ॥

रा० टी०—आबोध्येति । आबोध्य महाराजादिशब्देन राजानं संबोध्याब्रवीत् ॥ ४ ॥

५ ] ति० टी०—वर्धयित्वा संपूज्य । भयविक्लवया रामो वनप्रयाणोत्सुक इतीदं परमनिष्टं कथं राज्ञे वदिष्यामीति भयेन विक्लवया कातरया अश्लक्ष्णयेति छेदः ॥ ५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तमिति । जयाशिषा जयसूचकाशीर्वचनैः पूर्वं पौर्वकालिकं तं राजानं वर्धयित्वा प्रोत्साह्य भयविक्लवया स्वाभाविकराजतेजोहेतुकभीतियुक्तया मन्दया दैन्यविशिष्टया वाचा अब्रवीत् ॥ ५ ॥

गो० टी०—तमिति । भयविक्लवया भयेन कातरया दुःखितोऽयं किं वदेदिति भयमत एव मन्दया ॥ ५ ॥

---

१ निरुदर इति गो. पाठः । २ कलुषेन्द्रिय इति गो. पाठः । ३ आलोक्य स्थिति गो. पाठः । ४ चेतसमिति गो. पाठः । ५ आसवर्धित गो. पाठः । ६ श्लक्ष्णमब्रवीदिति गो. पाठः ।

अयं स पुरुषव्याघ्रो द्वारि तिष्ठति ते सुतः । ब्राह्मणेभ्यो धनं दत्त्वा सर्वं चैवोपजीविनाम् ॥ ६ ॥
स त्वां पश्यतु भद्रं ते रामः सत्यपराक्रमः । सर्वान्सुहृद आपृच्छ्य त्वां हीदानीं दिदृक्षते ॥ ७ ॥
गमिष्यति महारण्यं तं पश्य जगतीपते । वृतं राजगुणैः सर्वैरादित्यमिव रश्मिभिः ॥ ८ ॥
स सत्यवाक्यो धर्मात्मा गाम्भीर्यात्सागरोपमः । आकाश इव निष्पङ्को नरेन्द्रः प्रत्युवाच तम् ॥ ९ ॥
सुमन्त्रानय मे दारान्ये केचिदिह मामकाः । दारैः परिवृतः सर्वैर्द्रष्टुमिच्छामि राघवम् ॥ १० ॥
सोऽन्तःपुरमतीत्यैव स्त्रियस्ता वाक्यमब्रवीत् । आर्यो ह्वयति वो राजा गम्यतां तत्र मा चिरम् ॥ ११ ॥
एवमुक्ताः स्त्रियः सर्वाः सुमन्त्रेण नृपाज्ञया । प्रचक्रमुस्तद्भवनं भर्तुराज्ञाय शासनम् ॥ १२ ॥
अर्धसप्तशतास्तत्र प्रमदास्ताम्रलोचनाः । कौसल्यां परिवार्याथ शनैर्जग्मुर्धृतव्रताः ॥ १३ ॥
आगतेषु च दारेषु समवेक्ष्य महीपतिः । उवाच राजा तं सूतं सुमन्त्रानय मे सुतम् ॥ १४ ॥
स सूतो राममादाय लक्ष्मणं मैथिलीं तथा । जगामाभिमुखस्तूर्णं सकाशं जगतीपतेः ॥ १५ ॥
स राजा पुत्रमायान्तं दृष्ट्वा चारात्कृताञ्जलिम् । उत्पपातासनात्तूर्णमार्तः स्त्रीजनसंवृतः ॥ १६ ॥

---

६–८ ] ति० टी०—उपजीविनां च तेभ्यश्च दत्त्वा सर्वं धनं दत्त्वेत्यनेन सर्वथा तिष्ठासाभावो ध्वन्यते ॥ ६–८ ॥

रा० टी०—तद्वचनमेवाह—अयमिति । उपजीविनामुपजीविभ्यश्च धनं दत्त्वा ते सुतो द्वारि तिष्ठति ॥ ६ ॥

रा० टी०—स इति । स रामः त्वां पश्यतु तत्र हेतुः सर्वान् सुहृदः आपृच्छ्य वनगमनाय संमतिं कृत्वा इदानीं त्वां दिदृक्षते द्रष्टुमिच्छति ॥ ७ ॥

रा० टी०—गमिष्यतीति । यः महारण्यं गमिष्यति तं राजगुणैर्वृतं युक्तं रामं पश्य ॥ ८ ॥

गो० टी०—अयमित्यादि । सर्वं गृहोपकरणादिकम् ६–८

९ ] ति० टी०—स दशरथः निष्पङ्को निष्पापः । 'निष्पन्दः' इति पाठे निश्चल इत्यर्थः ॥ ९ ॥

रा० टी०—स इति । धर्मात्मा परमधर्मप्रवर्तकः निष्पङ्कः पङ्करहितः आकाश इव नरेन्द्रस्तं रामं प्रत्युवाच सविशेषणाकाशोपमया राज्ञः सर्वकालमधर्मसंसर्गाभावः सूचितः ॥ ९ ॥

गो० टी०—स इति । निष्पङ्कः निर्लेपः ॥ ९ ॥ १० ॥

१० ] ति० टी०—इह मद्वेश्मनि ये केचिन्मामका दाराः स्त्रियः सन्ति तान्दारानिहानय ॥ १० ॥

रा० टी०—तद्वचनमेवाह—सुमन्त्रेति । हे सुमन्त्र ! मे दारान् स्त्रियस्त्वमानय । ननु दाराणां किं प्रयोजनमित्यत आह—मामकाः ये केचिद्दारास्तैः सर्वैः परिवृतोऽहं राघवं द्रष्टुमिच्छामि ॥ १० ॥

११ ] ति० टी०—अतीत्यातिवेगेन प्राप्य ह्वयत्याह्वयति वो युष्माकं राजा अवैधव्यदत्वात्, न तु प्रजानां तासां दुःखदत्वात् आगम्यतामिति पदम् ॥ ११ ॥

रा० टी०—राजवचनश्रवणानन्तरकालिकं सुमन्त्रकृत्यमाह—स इति । आर्यः राजा वः युष्मान् ह्वयति आह्वयति अतस्तत्र गम्यताम् ॥ ११ ॥

गो० टी०—सोऽन्तःपुरमिति । ह्वयति आह्वयति ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—प्रचक्रमुर्गच्छन्ति स्म । तद्भवनं तस्य राज्ञो भवनम् ॥ १२ ॥

रा० टी०—एवमिति । शासनमाज्ञापनमाज्ञाय ज्ञात्वा प्रचक्रमुः जग्मुः ॥ १२ ॥

१३ ] ति० टी०—अर्धसप्तशताः एकदेशिसमासः सप्तशतस्यार्धं संख्या यासां ता इत्यर्थः । अर्षआषजन्तः । अत एवाग्रे वक्ष्यति—'त्रयः शतशतार्धा हि' इति । ताम्रलोचनाः रामप्रयाणश्रवणजदुःखजातरोदनेनेति शेषः । कौसल्यां परिवार्येत्यनेन प्राग्लक्ष्मणोक्तं तस्याः सर्वप्रभ्वीत्वं ध्वनितम् ॥ १३ ॥

रा० टी०—अर्धेति । अर्धसप्तशताः सार्धशतत्रयसंख्याकाः ताम्रलोचनाः निश्चितरामवियोगजनितशोकहेतुकरोदनहेतुकात्यन्तारुणीभूतनयनाः प्रमदाः कौसल्यां परिवार्य परिवृत्य तत्र राजसमीपे जग्मुः प्रापुः । अर्धसप्तशतशब्दः एकदेशिसमासप्रकृतिकः अर्षआषजन्तः ॥ १३ ॥

गो० टी०—अर्धसप्तशता इति । अर्धसप्तशताः अर्धं सप्तशतस्येति विग्रहः अर्धं नपुंसकमिति समासः । ताम्रलोचनाः सदा रामविवासननिमित्तरोदनादिति भावः ॥ १३–१६ ॥

१४–१५ ] ति० टी०—समवेक्ष्य दारानिति शेषः ॥ १४ ॥ १५ ॥

रा० टी०—आगतेष्विति । समवेक्ष्य अवलोक्य ॥ १४ ॥

रा० टी०—स इति । आदाय गृहीत्वा सकाशं समीपम् ॥ १५ ॥

१६ ] ति० टी०—आराद्दूरतः उत्पपातालिङ्गनार्थम् ॥ १६ ॥

रा० टी०—स इति । आराद्दूरत एव दृष्ट्वा तूर्णं शीघ्रमासनादुत्पपात उत्तस्थौ ॥ १६ ॥

गो० टी०—स इति । उत्पपात उदतिष्ठत् ॥ १६ ॥

---

१ त्वेति गो. पाठः । २ त्वामिदानीमिति गो. पाठः । ३ वादीति गो. पाठः । ४ धार्मिकमिति गो. पाठः । ५ आर्या इति गो. पाठः । ६ तास्त्विति गो. पाठः । ७ त्वेति गो. पाठः । ८ दूरादिति गो. पाठः ।

सोऽभिदुद्राव वेगेन रामं दृष्ट्वा विशांपतिः । तमसंप्राप्य दुःखार्तः पपात भुवि मूर्छितः ॥ १७ ॥
तं रामोऽभ्यपतत्क्षिप्रं लक्ष्मणश्च महारथः । विसंज्ञमिव दुःखेन सशोकं नृपतिं तथा ॥ १८ ॥
स्त्रीसहस्रनिनादश्च संजज्ञे राजवेश्मनि । हा हा रामेति सहसा भूषणध्वनिमिश्रितः ॥ १९ ॥
तं परिष्वज्य बाहुभ्यां तावुभौ रामलक्ष्मणौ । पर्यङ्के सीतया सार्धं रुदन्तः समवेशयन् ॥ २० ॥
अथ रामो मुहूर्तस्य लब्धसंज्ञं महीपतिम् । उवाच प्राञ्जलिर्बाष्पशोकार्णवपरिप्लुतम् ॥ २१ ॥
आपृच्छे त्वां महाराज सर्वेषामीश्वरोऽसि नः । प्रस्थितं दण्डकारण्यं पश्य त्वं कुशलेन माम् ॥ २२ ॥
लक्ष्मणं चानुजानीहि सीता चान्वेतु मां वनम् । कारणैर्बहुभिस्तथ्यैर्वार्यमाणौ न चेच्छतः ॥ २३ ॥
अनुजानीहि सर्वान्नः शोकमुत्सृज्य मानद । लक्ष्मणं मां च सीतां च प्रजापतिरिवात्मजान् ॥ २४ ॥

---

१७ ] ति० टी०—तमालिलिङ्क्षितं राममप्राप्य मध्य एव दुःखितः पपात ॥ १७ ॥

रा० टी०—सोऽभीति । दुःखार्तः निश्चितवियोगजनितदुःखाक्रान्तः ॥ १७ ॥

गो० टी०—स इति । अभिदुद्राव अभिमुखमाजगाम ॥ १७ ॥

१८ ] ति० टी—अभ्यपतदभ्यागतवान् विसंज्ञमिव विसंज्ञमेव ॥ १८ ॥

रा० टी०—तमिति । तथा तेन प्रकारेण पतितमत एव विसंज्ञं संज्ञारहितमिव तं नृपतिं रामोऽभ्यपतच्छीघ्रमभिमुखमगच्छत् ॥ १८ ॥

गो० टी०—तमिति । अभ्यपतत् उत्थापनार्थमिति भावः इवशब्द एवकारार्थः ॥ १८ ॥

१९ ] ति० टी०—भूषणध्वनिमिश्रित उरःशिरस्ताडनादिना चञ्चलतरवलयभूषणध्वनिमिलितः । 'मूर्छितः' इति पाठेऽपि स एवार्थः व्याप्त इत्यर्थो वा ॥ १९ ॥

रा० टी०—स्त्रीति । हा हा रामेति स्त्रीसहस्रनिनादः संजज्ञे ॥ १९ ॥

गो० टी०—स्त्रीसहस्रनिनाद इति । भूषणध्वनिभिः मूर्छितः व्याप्तः ॥ १९ ॥

२० ] ति० टी०—तौ सीतया सार्धं तं राजानं बाहुभ्यां परिष्वज्य यथा पीडा न भवति तथालिङ्गितमुत्थाप्य पर्यङ्के समवेशयन्स्थापितवन्तः ॥ २० ॥

रा० टी०—तमिति । सीतया सार्धं रामलक्ष्मणौ रुदन्तः रुदन्तं तं राजानं परिष्वज्य आलिङ्ग्य पर्यङ्के समवेशयन् समवेशयेतां समस्थापयेताम् ॥ २० ॥

गो० टी०—तमिति । रामलक्ष्मणौ सीतया सार्धं तं बाहुभ्यां परिष्वज्य पर्यङ्के समवेशयन्नित्यर्थः ॥ २० ॥

२१ ] ति० टी०—मुहूर्तस्य संबन्धसामान्ये षष्ठी मुहूर्तेन लब्धसंज्ञमित्यर्थः ॥ २१ ॥

रा० टी०—अथेति । मुहूर्तस्य मुहूर्तेन लब्धा संज्ञा येन तं शोकार्णवपरिप्लुतं महीपतिं प्राञ्जलिः राम उवाच मुहूर्तस्येति संबन्धसामान्ये षष्ठी ॥ २१ ॥

गो० टी०—अथेति । 'मुहूर्तस्य' इतिपाठे मुहूर्तेनेत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—कुशलेन मां पश्य सौम्येन चक्षुषा मामनुगृहाणेत्यर्थः ॥ २२ ॥

रा० टी०—तद्वचनमेवाह—आपृच्छ इति । यतः नोऽस्माकं सर्वेषां त्वमीश्वरोऽसि अतस्त्वामापृच्छे विज्ञापयामि । विज्ञापनमेवाह दण्डकारण्यं प्रस्थितं मां कुशलेन पश्य कुशलफलकावलोकनं कुरु फलस्य हेतुत्वेन विवक्षणात्तृतीया ॥ २२ ॥

गो० टी०—आपृच्छ इति । कुशलेन चक्षुषेति शेषः हेतौ तृतीया वा ॥ २२ ॥

२३ ] ति० टी०—वनं प्रति प्रस्थितं मां सीता चान्वेतु गच्छत्विति लक्ष्मणं च प्रस्थितमनुजानीहीत्यर्थः । ननु लक्ष्मणसीतयोः कुतो वनवासकष्टप्राप्तिः नह्यसौ वरनिर्बन्धस्तयोरत आह—कारणैरिति । हेतुभिस्तथ्यैर्व्यवहारदशयासत्यैः न चेच्छतः इह स्थातुमिति शेषः ॥ २३ ॥

रा० टी०—लक्ष्मणमिति । अनुजानीहि आज्ञापय वनं गन्तुमिति शेषः सीता च मामन्वेति अनुगच्छति तामप्यनुज्ञापयेत्यर्थः । नन्विमौ वारयेत्यत आह—तथ्यैः प्रलम्भनादिसंसर्गरहितैः बहुभिः अनेकविधैः कारणैः भवदादिसेवादिरूपहेतुभिः वार्यमाणावपि तौ नेच्छत इह स्थितिमिति शेषः ॥ २३ ॥

गो० टी०—लक्ष्मणमिति । सीता चेति तामप्यनुजानीहीति भावः । तौ निवर्तयेत्याशङ्क्याह—कारणैरिति । कारणैः दुःखादिकारणैः तथ्यैः परमार्थैः नचेच्छतः अननुगमनमिति शेषः ॥ २३ ॥

२४ ] ति० टी०—अनुजानीह्यनुज्ञां देहि प्रजापतिर्ब्रह्मा स्वजान्सनकादींस्तपांसि चरितुमनुकाम्ययथानुज्ञां दत्तवांस्तद्वदित्यर्थः ॥ २४ ॥

रा० टी०—उपसंहरन्नाह—अन्विति । हे मानद ! सर्वसंमानदातः ! प्रजापतिर्ब्रह्मा आत्मजान् तपश्चरणोत्सुकसनकादीनिव सर्वान्नोऽस्माननुजानीहि आज्ञापय ॥ २४ ॥

---

१ तथेति गो. पाठः । २ मूर्छित इति गो. पाठः । ३ मुहूर्तेनेति गो. पाठः । ४ भूत्वेति गो. वाक्यमिति रा. पाठः । ५ अन्वेतीति गो. रा. पाठः । ६ प्रथा इति गो. पाठः ।

प्रतीक्षमाणमव्यग्रमनुज्ञां जगतीपतेः । उवाच राजा संप्रेक्ष्य वनवासाय राघवम् ॥ २५ ॥
अहं राघव कैकेय्या वरदानेन मोहितः । अयोध्यायां त्वमेवाद्य भव राजा निगृह्य माम् ॥ २६ ॥
एवमुक्तो नृपतिना रामो धर्मभृतां वरः । प्रत्युवाचाञ्जलिं कृत्वा पितरं वाक्यकोविदः[1] ॥ २७ ॥
भवान्वर्षसहस्राय पृथिव्या नृपते पतिः । अहं त्वरण्ये वत्स्यामि न मे राज्यस्य काङ्क्षिता[2] ॥ २८ ॥
नव पञ्च च वर्षाणि वनवासे विहृत्य ते । पुनः पादौ ग्रहीष्यामि प्रतिज्ञान्ते नराधिप ॥ २९ ॥
रुदन्नार्तः प्रियं पुत्रं सत्यपाशेन संयुतः[3] । कैकेय्या चोद्यमानस्तु मिथो राजा तमब्रवीत् ॥ ३० ॥
श्रेयसे वृद्धये तात पुनरागमनाय च । गच्छस्वारिष्टमव्यग्रः पन्थानमकुतोभयम् ॥ ३१ ॥

गो० टी०—अनुजानीहीति । लक्ष्मणं सीतां मां च सर्वानः अनुजानीहीत्यन्वयः । "त्यदादीनि सर्वैर्नित्यम्" इत्येकशेषः ॥ २४ ॥

२५ ] ति० टी०—वनवासाय जगतीपतेः स्वस्यानुज्ञामनुमतिं प्रतीक्षमाणं प्रार्थयमानम् अव्यग्रं लेशतोऽपि विषादरहितं राघवं प्रेक्ष्योवाच ॥ २६ ॥

रा० टी०—प्रतीति । जगतीपतेः वनवासायाज्ञां प्रतीक्षमाणमव्यग्रं सर्वकालं व्यग्रतारहितं राघवं रामं प्रेक्ष्य उवाच ॥२५॥

गो० टी०—प्रतीक्षमाणमिति । वनवासाय जगतीपतेः स्वस्यानुज्ञां प्रतीक्षमाणमित्यन्वयः ॥ २५ ॥

२६–२७ ] ति० टी०—हे राघव ! यतोऽहं कैकेय्या वरदानेन मोहितो निरुत्तरतया शोकपरवशो जातः, अतो राज्यानर्हः अतो मां निगृह्य बलादयोध्यायां त्वमेव स्वभुजवैभवेन राजा भव प्रवृत्तमभिषेकं समापयेति यावत् ॥ २६ ॥ २७ ॥

रा० टी०—तद्वचनमेवाह—अहमिति । हे राघव ! कैकेय्या सह अहं वरदानेन देवादिप्रार्थितत्वत्कर्तृकवरप्रदानेन मोहितः वैचित्र्यं प्राप्तः देवादिप्रार्थनां संस्मृत्यैव त्वां वनं प्रेषितुमुद्यतोऽस्मीत्यर्थः । अतोऽद्य मां राज्यहेतुभूतविजयसंपत्तिं निगृह्य अयोध्यायां त्वं राजा भव ॥ २६ ॥

रा० टी०—एवमिति । वाक्यकोविदं पितरं रामः प्रत्युवाच ॥ २७ ॥

गो०टी०—अहमिति । मोहितः वञ्चित इत्यर्थः॥२६॥२७॥

२८ ] ति० टी०—भवान्वर्षसहस्राय पतिर्भवतु, अतः परमप्यनेककालं राजा भवेत्यर्थः । त्वया यो वरो दत्तस्तमनृतं कर्तुमहं न योग्यः तव नरकपातप्रसङ्गात् अतोऽहमरण्ये वत्स्यामि मे राज्यस्य काङ्क्षिता इच्छा न ॥ २८ ॥

रा० टी०—तद्वचनमेवाह—भवानिति । हे नृपते ! वर्षसहस्राय पृथिव्याः वर्षसहस्राणां बहुलखण्डानामयः प्राप्तिर्यस्यां सा एव पृथिवीति कर्मधारयः तस्याः यतो भवानेव पतिः अतः राज्यस्य काङ्क्षिता आकाङ्क्षा मे नास्ति अतः अरण्ये अहं वत्स्यामि भवदाज्ञापितावरणपूर्वकं विहरिष्यामीत्यर्थः ॥ २८ ॥

गो० टी०—भवानिति । वर्षसहस्राय अनेकवर्षाणीत्यर्थः मे मत्कृतमनृतवचनम् ॥ २८ ॥

२९ ] ति० टी–प्रतिज्ञान्ते प्रतिज्ञासमाप्तौ ते पादौ ग्रहीष्यामीत्यन्वयः ॥ २९ ॥

रा० टी०—विहारावधिं बोधयन्नाह—नवेति । प्रतिज्ञान्ते अवध्यवसाने ते पादौ पुनः ग्रहीष्यामि पुनरित्यनेन प्रतिज्ञामध्ये एव तव पादौ एकवारं ग्रहीष्यामिति सूचितम् । नचावध्यन्ते राज्ञः प्रकटस्थित्यभावेन तत्पादग्रहणासंभवात् रामस्य मृषा संसर्गित्वापत्तिरिति वाच्यं मातापित्रोरभेदाध्यवसायात् मातृपादग्रहणस्य संभवात् तस्य च पितृपादग्रहणानतिरेकान्मृषासंसर्गित्वस्यासंभवात्, किंच पदयोश्चरणयोः इमौ पादौ पादुकापदार्थौ ग्रहीष्यामि नमस्करिष्यामीत्यर्थः । 'पादम्' इति पाठे तु पदमेव पादं स्वस्तं राजोचितस्थानं त्राणं वेत्यर्थः ग्रहीष्यामि स्वीकरिष्यामि । तथा च मेदिनी—'पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः' ॥ २९ ॥

गो० टी०—नवेति । प्रतिज्ञान्ते प्रतिज्ञावसाने ॥ २९ ॥

३० ] ति० टी०—कैकेय्याद्यैव गमनमनुमन्यस्वेति मिथो रहसि चोद्यमानः ॥ ३० ॥

रा० टी०—रुदन्निति । सत्यपाशेन सत्यस्य यः पः पालनं तस्य यः अशो व्याप्तिः परिपूर्णता तेन संयुतः चोद्यमानः वनायाज्ञापयेति रामेण प्रार्थ्यमानः कैकेय्या सह राजा तं राममब्रवीत् । मिथ एवार्थकम् ॥ ३०॥

गो० टी०—रुदन्निति । मिथः रहसि कैकेय्या चोद्यमानः अद्यैव प्रस्थापयेति प्रेर्यमाणः ॥ ३० ॥

३१ ] ति० टी०—श्रेयसे परलोकहिताय वृद्धये इहलोकेऽभ्युदयाय अरिष्टं पापदुःखभिन्नं पुण्यं सुखं च तेऽस्तु । अव्यग्रः सन्नकुतोभयं पन्थानं गच्छस्वेत्यार्षम् ॥ ३१ ॥

रा० टी०—तद्वचनमेवाह—श्रेयसे इति । तात हे प्रिय हे स्व ममात्मप्रभृते ! श्रेयसे भवलोकनकर्तॄणां कल्याणाय वृद्धये केषांचिद्राज्यादिप्राप्तये पुनः आगमनाय च अकुतोभयं सर्वहेतुकभयाभावविशिष्टमारिष्टमतिशयेन शत्रूणां निवर्तकं पन्थानमव्यग्रः सर्वकालं व्यग्रतारहितस्त्वं गच्छ ॥ ३१ ॥

गो० टी०—श्रेयस इति । श्रेयसे पारलौकिकफलाय वृद्धये ऐहिकफलाय गच्छस्व गच्छ अरिष्टं शुभम् 'अरिष्टेति शुभाशुभे' इत्यमरः । अकुतोभयं कुतश्चिदपि जन्तोर्भयरहितम् ॥ ३१ ॥

१ कोविदमिति रा॰ पाठः । २ कार्यं त्वयानृतमिति गो॰ पाठः । ३ संयत इति गो॰ पाठः ।

नहि सत्यात्मनस्तात धर्माभिमनसस्तव । [1]संनिवर्तयितुं बुद्धिः शक्यते रघुनन्दन ॥ ३२ ॥
अद्य त्विदानीं रजनीं पुत्र मा गच्छ सर्वथा । [2]एकाहं दर्शनेनापि साधु तावच्चराम्यहम् ॥ ३३ ॥
मातरं मां च संपश्यन्वसेमामद्य शर्वरीम् । तर्पितः सर्वकामैस्त्वं श्वः [3]काल्ये साधयिष्यसि ॥ ३४ ॥
दुष्करं क्रियते पुत्र सर्वथा राघव [5]प्रिय । [4]त्वया हि मत्प्रियार्थं तु वनमेवमुपाश्रितम् ॥ ३५ ॥
न चैतन्मे प्रियं पुत्र शपे सत्येन राघव । छन्नया चलितस्त्वस्मि स्त्रिया [6]भस्माग्निकल्पया ॥ ३६ ॥
वञ्चना या तु लब्धा मे तां त्वं निस्तर्तुमिच्छसि । अनया वृत्तसादिन्या कैकेय्याभिप्रचोदितः ॥ ३७ ॥

---

३२] ति०टी०—सत्यात्मनः सत्यप्रतिष्ठितस्वभावस्य धर्माभिमनसो धर्मसंपादनाभिनिविष्टमनसः ॥ ३२ ॥

रा० टी०—नेति । तात हे प्रिय ! धर्माभिमनसः परमधर्मप्रवर्तकस्य अत एव सत्यात्मनः मिथ्यासंसर्गरहितस्वभावविशिष्टस्य तव बुद्धिः वनगमनविषयकनिश्चयः संनिवर्तयितुमपाकर्तुं न शक्यते ॥ ३२ ॥

गो० टी०—नेति । सत्यात्मनः सत्यस्वभावस्य 'आत्मा देहे धृतौ जीवे स्वभावे' इति वैजयन्ती । धर्माभिमनसः धर्माभिनिविष्टमनसः ॥ ३२ ॥

३३ ] ति० टी०—प्रातरेव कैकेय्या प्रस्थितस्य माधायनयदानादिना चतुर्थप्रहरं व्याप्तस्य तुर्ययामे राजानुमत्यर्थमागतस्य राज्ञा तत्कालसमीपमेव प्रवत्स्यमानरजनीसहवासः प्रार्थ्यते—अद्येत्यादि । इदानीमिति समीपलक्षकम् रजनीमावस सर्वथा मा गच्छ । किमर्थं तत्राह—चरामि त्वया सह भोक्ष्यामि ॥ ३३ ॥

रा० टी०—ननु तर्हि गच्छाम इत्यत आह—अद्येति । अद्यास्मिन्दिवसे त्वं मा गच्छ अत्रैव तिष्ठेत्यर्थः । तत्प्रयोजनमाह—एकाहमेकदिनमिदानीं रजनीमेकरात्रिं दर्शनेन तवावलोकनेनापि सर्वथा सर्वप्रकारेण साधु अतिशोभनं चरामि प्राप्नोमि ॥ ३३ ॥

गो० टी०—अद्येति । अद्य अस्मिन् दिने इदानीमासन्नामित्यर्थः साधु सुखं चरामि वसामि ॥ ३३ ॥

३४ ] ति० टी०—साधयिष्यसि गमिष्यसि ॥ ३४ ॥

रा० टी०—शोभनत्वमेवोपपादयन्नाह—मातरमिति । इमां शर्वरीं रात्रिं वस अद्य अस्यां शर्वर्यां सर्वकामैः सर्वैः कामैः इच्छाविषयभूतैः तर्पितः मया तृप्तिं प्राप्तस्त्वं श्वः आगामिनि काल्ये प्रातःकाले साधयिष्यसि सत्यप्रतिज्ञस्त्वं पालयितासि वनं गन्तासीत्यर्थः ॥ ३४ ॥

गो० टी०—मातरमिति । साधयिष्यसि गमिष्यसि काल्ये प्रातःकाले ॥ ३४ ॥

३५ ] ति० टी०—मत्प्रियार्थं मम परलोकहितार्थम् ॥ ३५ ॥

रा० टी०—दुष्करमिति । हे राघव हे पुत्र ! दुष्करम् अन्यैः कर्तुमशक्यं त्वया क्रियते यद्यस्माद्धेतोः मत्प्रियार्थं मत्तृप्तिकामनया प्रियानतिप्रीतिविषयीभूतानस्मदादींस्त्यक्त्वा विजनं वनं यासि ॥ ३५ ॥

गो० टी०—दुष्करमिति । मत्प्रियार्थं मम परलोकप्रियार्थमित्यर्थः अन्यथा उत्तरश्लोकविरोधात् प्रियान् अभिमतवर्गान् ३५॥

३६ ] ति० टी०—तदेव दर्शयति—न चेत्यादि । छन्नया गूढक्रूराभिप्रायया चलितोऽस्मि भ्रंशितोऽस्मि त्वदभिषेकमनोरथात् भस्माग्निकल्पया भस्मच्छन्नाग्नितुल्यया ॥ ३६ ॥

रा० टी०—मत्प्रियार्थमित्युक्त्या प्रतिभासितं वियोगप्रियत्वं स्वस्मिन्निवारयन्नाह—न चेति । हे पुत्र ! यद्यपि एतत्त्वद्वियोगरूपं वस्तु मे प्रियं न तथापि भस्माग्निकल्पया भस्मपिहितवह्नितुल्यया स्त्रिया कैकय्या सहाहं छन्नया चलितः छद् राज्ञां सर्वापराधनिवारकः यो नयो नीतिः तेन आचलितः वनकर्मकगमनानुकूलव्यापारानुकूलप्रेरणावानस्मि । चो यद्यपीत्यर्थे तुस्तथापीत्यर्थे भस्माग्निकल्पयेति विशेषणदानेन कैकय्याः कापट्यसंसर्गाभावः सूचितः ॥ ३६ ॥

गो० टी०—नेति । छन्नया गूढाभिप्रायया चलितः स्वाधीनत्वाच्चलनं प्राप्तः पाठान्तरे तु वञ्चित इत्यर्थः । छन्नाग्निकल्पया भस्मच्छन्नाङ्गारतुल्यया ॥ ३६ ॥

३७ ] ति० टी०—वञ्चना सामान्येन प्रतिश्रुतवरयोर्भरताभिषेकत्वद्विवासनरूपविशेषपर्यवसायित्वरूपा या मे लब्धा यतोऽनया वृत्तसादिन्या कुलोचितचारित्रनाशिन्याभिप्रचोदितोऽस्मि एवमिति शेषः । अतो या वञ्चना मया लब्धा तां निस्तर्तुमिच्छसीति यावत् ॥ ३७ ॥

रा० टी०—ब्रह्मादिकर्तृकरावणवधादिफलकत्वत्पूजनं त्वयैव सफलं भवितुमर्हतीति बोधयन्नाह—वञ्चनेति । वृत्तसादिन्या मनुवंशोचिताचरितनाशिकया अनया कैकय्या सह मे मया लब्धा स्मृता या वञ्चना वो ब्रह्मणः अञ्चना तत्कर्तृकभवत्कर्मकपूजनं तां निस्तर्तुं पूरयितुमित्यर्थः प्रचोदितः ब्रह्मादिप्रार्थितो मे सुतस्त्वं यदिच्छसि तदेतदाश्चर्यतमं न यत्र पितरं मामपास्य नृतकथमपगता नित्यं निवृत्ता अनृतकथा मिथ्याकथनं यस्मात्त्वं कर्तुमिच्छसि तदपि नाश्चर्यतमम् । तत्र हेतुः—यतो ज्येष्ठः गुणैः सर्वश्रेष्ठोऽसि । श्लोकद्वयमेकान्वयि । 'ऊकारो ब्रह्मणि स्थितः' इत्येकाक्षरः ॥ ३७ ॥ ३८ ॥

गो० टी०—वञ्चनेति । या वञ्चना सामान्येन प्रतिश्रुतयोर्वरयोर्भरताभिषेचनत्वद्विवासनरूपविशेषपर्यवसायित्वरूपा-

---

१ विनीति गो. पाठः । २ एकाहद्दर्शनेनेति गो. पाठः । ३ काले इति गो. पाठः । ४ त्वयेति गो. रा. पाठः । ५ मत्प्रियार्थं प्रियांस्त्यक्त्वा यासि विजनं वनमिति गो. रा. पाठः । ६ छन्नाग्निकल्पयेति गो. पाठः ।

न चैतदाश्चर्यतमं यत्त्वं ज्येष्ठः सुतो मम । अपानृतकथं पुत्र पितरं कर्तुमिच्छसि ॥ ३८ ॥
अथ रामस्तदा श्रुत्वा पितुरार्तस्य भाषितम् । लक्ष्मणेन सह भ्रात्रा दीनो वचनमब्रवीत् ॥ ३९ ॥
प्राप्स्यामि यानद्य गुणान्को मे श्वस्तान्प्रदास्यति । अपक्रमणमेवातः सर्वकामैरहं वृणे ॥ ४० ॥
इयं सराष्ट्रा सजना धनधान्यसमाकुला । मया विसृष्टा वसुधा भरताय प्रदीयताम् ॥ ४१ ॥
वनवासकृता बुद्धिर्न च मेऽद्य चलिष्यति । यस्तु युद्धे वरो दत्तः कैकेय्यै वरद त्वया ॥ ४२ ॥
दीयतां निखिलेनैव सत्यस्त्वं भव पार्थिव । अहं निदेशं भवतो यथोक्तमनुपालयन् ॥ ४३ ॥
चतुर्दश समा वत्स्ये वने वनचरैः सह । मा विमर्शो वसुमती भरताय प्रदीयताम् ॥ ४४ ॥
नहि मे काङ्क्षितं राज्यं सुखमात्मनि वा प्रियम् । यथानिदेशं कर्तुं वै तवैव रघुनन्दन ॥ ४५ ॥

मया लब्धा तामपि वञ्चनां हृतसादिन्या कुलोचिताचारनाशिन्या अनया प्रचोदितस्त्वं निस्तर्तुमिच्छसि समापयितुमिच्छसि अहो ते गुण इति भावः ॥ ३७ ॥

३८ ] ति० टी०—एतदाश्चर्यतमं न अपानृतकथमपगतानृतवचनम् एतच्च नाश्चर्यम् यतो ज्येष्ठो गुणैर्वयसा च सुतोऽसि ॥ ३८ ॥

गो० टी०—न चेति । अपानृतकथम् अपगतासत्यवचनम् ॥ ३८ ॥

३९ ] ति० टी०—आर्तस्य पितुर्भाषितं श्रुत्वैकाहदर्शनेनापीत्युक्तरूपं दीनः-कैकेय्याश्च गच्छेति नियोगस्यावश्यानुष्ठेयत्वप्रतिज्ञानात्तावन्मात्रपितृमनोरथपूरणासक्त्याप्राप्तशोकइव ॥३९॥

रा० टी०—अथेति । अदीनः सर्वकालं दीनत्वाभावविशिष्टो रामः अब्रवीत् ॥ ३९ ॥

गो० टी०—अथेति । भाषितम् एकाहदर्शनेनापीत्याद्युक्तं दीनः एकाहमपि पितृदर्शनसौख्यं न लब्धमिति दीनः ॥ ३९ ॥

४०-४१ ] ति० टी०—तर्पितः सर्वकामैरित्यस्योत्तरमाह—प्राप्स्यामीति । गुणान्सुखाभावादीन् । अतः सर्वकामैः सर्वकामप्रतिनिधित्वेनापक्रमणमितो गमनमेव वृण इत्यर्थः यद्वाद्य प्रयाणे सतीमान्गुणान्प्रतिज्ञापालनजधर्मरूपान्प्राप्स्यामि श्वो गमने कस्तान्दास्यति प्रस्तुताधर्म एव अतः सर्वकामैरित्यादि प्राग्वदेव ॥ ४० ॥ ४१ ॥

रा० टी०—तद्वचनमेवाह—प्राप्स्यामीति । अद्य एतत्कालिकगमने यान्गुणान्सत्यप्रतिज्ञत्वादीन्प्राप्स्यामि तान्गुणान् श्वः तत्कालिकगमने को दास्यति दाता एतेनाद्य स्थितौ तन्न्यूनयतीति सूचितमतः सर्वकामैर्विशिष्टोऽहमपक्रमणमितः शीघ्रं गमनमेव वृणे । एतेन रामस्य सत्यप्रियत्वातिशयः सूचितः ॥४०॥

गो० टी०—तर्पितः सर्वकामैरित्यस्योत्तरमाह—प्राप्स्यामीति । गुणान् गुणविशिष्टाभिमतपदार्थान् सर्वकामैरपक्रमणमेव वृणे सर्वकामप्रतिनिधित्वेनापक्रमणमेव वरय इत्यर्थः॥४०॥

रा० टी०—इयमिति । राष्ट्रादिसहिता वसुधा भरताय प्रदीयतां पालने भरतो नियोज्यतामित्यर्थः ॥ ४१ ॥

गो० टी०—इयमिति । विसृष्टा त्यक्ता ॥ ४१ ॥

४२ ] ति० टी०—अथ वनवासकृता तदर्था बुद्धिर्न चलिष्यति अतो गमनानुज्ञामेव कुर्वित्याशयः । अतिदानशूरस्य भवतोऽनुचितमप्येतदित्याह—य इति ॥ ४२ ॥

रा० टी०—वनेति । चलिष्यति अन्यथा भविष्यति त्वयापि कैकेय्यै यो वरो युद्धे दत्तः स वरः दीयतामतः निखिलेन सर्वेण कर्मणा त्वं सत्यो भव निदेशमाज्ञां पालयन्सन्वत्स्ये अतः मा विमर्शः एतद्विरोधी विचारो न कर्तव्य इत्यर्थः । श्लोकत्रयमेकान्वयि ॥ ४२—४४ ॥

गो० टी०—वनवासेत्यर्धमेकं वाक्यम् ॥ ४२ ॥

गो० टी०—य इति । अत्र स इत्यध्याहार्यः निखिलेन सर्वात्मना अतस्त्वं सत्यः सत्यवचनो भव ॥ ४३ ॥

४३ ] ति० टी०—निखिलेनाप्यैव मत्प्रस्थापनात् निदेशं शासनम् ॥ ४३ ॥

गो० टी०—अहमिति । निदेशं शासनम् 'निदेशः शासनम्' इत्यमरः । वनचरैः तपस्विभिः ॥ ४४ ॥

४४ ] ति० टी०—वनचरैस्तपस्विभिः । मा विमर्शो भरताय राज्यदाने मास्तु संदेहः सर्वथा तस्मै वसुमती दीयताम् ॥ ४४ ॥

गो० टी०—भव राजा निगृह्य मामित्यस्योत्तरमाह—मा विमर्शो इति । मा विमर्शः विचारो मा भूत् आत्मनि मनसि सुखं प्रियं वा उद्दिश्य राज्यं न काङ्क्षितमपि तु तव निदेशं तवाज्ञां यथाकर्तुमेव यथावत्कर्तुमेवेत्यर्थः ॥ ४६—४७ ॥

४५ ] ति० टी०—कथमेवमत आह—नहीति । आत्मनि स्वमनसि सुखं स्वीयानां प्रियं चोद्दिश्य राज्यं न काङ्क्षितमपि तु तव निदेशं यथावत्कर्तुमेव काङ्क्षितमिच्छामि ॥ ४६ ॥

रा० टी०—स्वकामपूर्णत्वं बोधयन्नाह—नेति । निदेशमाज्ञाम् ॥ ४६ ॥

१ वस्त्वमिति गो. पाठः । २ चलेति गो. पाठः । ३ तुष्टेनेति गो. पाठः ।

अपगच्छतु ते दुःखं मा भूर्बाष्पपरिप्लुतः । नहि क्षुभ्यति दुर्धर्षः समुद्रः सरितां पतिः ॥ ४६ ॥
नैवाहं राज्यमिच्छामि न सुखं न च मेदिनीम् । नैव सर्वानिमान्कामान्न स्वर्गं नै च जीवितुम् ॥ ४७ ॥
त्वामहं सत्यमिच्छामि नानृतं पुरुषर्षभ । प्रत्यक्षं तव सत्येन सुकृतेन च ते शपे ॥ ४८ ॥
न च शक्यं मया तात स्थातुं क्षणमपि प्रभो । सँ शोकं धारयस्वेमं नहि मेऽस्ति विपर्ययः ॥ ४९ ॥
अर्थितो ह्यस्मि कैकेय्या वनं गच्छेति राघव । मया चोक्तं व्रजामीति तत्सत्यमनुपालये ॥ ५० ॥
मा चोत्कण्ठां कृथा देव वने रंस्यामहे वयम् । प्रशान्तहरिणाकीर्णे नानाशैंकुनिनादिते ॥ ५१ ॥
पिता हि दैवतं तात देवतानामपि स्मृतम् । तस्माद्दैवतमित्येवे करिष्यामि पितुर्वचः ॥ ५२ ॥
चतुर्दशसु वर्षेषु गतेषु नृपसत्तम । पुनर्द्रक्ष्यसि मां प्राप्तं संतापोऽयं विमुच्यताम् ॥ ५३ ॥
येन संस्तम्भनीयोऽयं सर्वो बाष्पकलो जनः । स त्वं पुरुषशार्दूल किमर्थं विक्रियां गतः ॥ ५४ ॥
पुरं च राष्ट्रं च मही च केवला मया विसृष्टा भरताय दीयताम् ।
अहं निदेशं भवतोऽनुपालयन्वनं गमिष्यामि चिराय सेवितुम् ॥ ५५ ॥

४६-४७ ] ति० टी०—क्षुभ्यति मर्यादां त्यजति ॥ ४६ ॥ ४७ ॥

रा० टी०—अपेति । ते दुःखमपगच्छतु पुत्रेप्सितसिद्धिर्जातेति विचारेण त्यजेत्यर्थः । हि यतः सरितां पतिः समुद्रः नैव क्षुभ्यति मर्यादां त्यजति ॥ ४६ ॥

रा० टी०—स्वेप्सितसिद्धिमेव भङ्ग्यन्तरेण बोधयन्नाह—नैवेति । राज्यादि नैवेच्छामि किं तु सत्यं सत्यवन्तं त्वामिच्छामि अनृतमनृतवन्तं नेच्छामि मिथ्यासंसर्गशून्यं त्वामिच्छामीत्यर्थः । तत्प्रतीतिं द्रढयन्नाह—सत्येन सुकृतेन च युक्तस्य तव शपे शपथं करोमि । श्लोकद्वयमेकान्वयि ॥ ४७ ॥ ४८ ॥

४८ ] ति० टी०—अनृतमनृतयुक्तम् एवं सत्यं सत्ययुक्तम् । तव प्रत्यक्षं तव संनिधौ सत्येन सुकृतेन ते त्वया च शपे शपथं करोमीत्यर्थः ॥ ४८ ॥

गो० टी०—त्वामहमिति । अहं त्वां सत्यं सत्ययुक्तमिच्छामि अनृतमनृतयुक्तं नेच्छामि तव प्रत्यक्षं प्रत्यक्षदेवभूतस्य तव संनिधौ सत्येन सुकृतेन च ते तुभ्यं शप इत्यन्वयः । "श्लाघह्नुङ्स्था–" इत्यादिना चतुर्थी ॥ ४८ ॥

४९-५० ] ति० टी०—क्षणमपि इह पुर इति शेषः । स त्वमिमं मद्गमनसंभवं शोकं धारयस्व । विपर्यय इहाथ स्थितिरूपं प्रतिज्ञातार्थविपरीतानुष्ठानम् ॥ ४९ ॥ ५० ॥

रा० टी०—न चेति । स त्वं शोकं धारयस्व निवर्तयस्व अनवस्थानार्थकधृञो रूपम् ॥ ४९ ॥

गो० टी०—न चेति । स्थातुमिह नगर इति शेषः । विपर्ययः संकल्पितवनगमनोद्योगनिवृत्तिः ॥ ४९ ॥

रा० टी०—अर्थित इति । राघव हे राम ! त्वं वनं गच्छेति कैकेय्या अहमर्थितः आज्ञापितोऽस्मि अहं व्रजामीति मया चोक्तं तद्वचनं यथा स्यात्तथानुपालये वनं गच्छामीत्यर्थः ॥ ५० ॥

गो० टी०—न केवलं त्वदाज्ञापरिपालनार्थमेव गच्छामि किंतु मत्प्रतिज्ञापरिपालनार्थमपीत्याह—अर्थित इति ॥ ५० ॥

५१-५३ ] ति० टी०—उत्कण्ठा दर्शनादिविषयोत्कण्ठाजन्यं दुःखम् ॥ ५१-५३ ॥

रा० टी०—मेति । उत्कण्ठामितः प्रभृति चतुर्दशवर्षसंख्याककालिकदर्शनविषयकौत्सुक्यं मा कृथाः ॥ ५१ ॥

गो० टी०— मा चेति । उत्कण्ठाम् उत्कलिकाम् 'उत्कण्ठोत्कलिके समे' इत्यमरः । शोकातुरतया स्मरणमिति यावत् ॥ ५१ ॥

रा० टी०—पितेति । दैवतं देवता तस्माद्धेतोः दैवतं देवता देवतासंबन्ध्येवेतीदं पितुर्वचः करिष्यामि ॥ ५२ ॥

रा० टी०—चतुर्दशस्विति । गतेषु व्यतीतेषु प्राप्तमयोध्यावासिभिः सङ्गतं मां त्वं द्रक्ष्यसि द्रष्टासि एतेन तस्य सर्वलोकेषु कामचारत्वं सूचितम् पुनरित्यनेनावधिमध्येऽप्येकवारं दर्शनं भवितेति ध्वनितम् अतः अयं मद्वियोगहेतुकः संतापः शोको विमुच्यताम् ॥ ५३ ॥

गो० टी०—पितेति । देवतानामपि दैवतमिति स्मृतं किमुत मनुष्याणामिति भावः । दैवतमित्येव पिता परमदैवतमिति मत्वेत्यर्थः ॥ ५२ ॥ ५३ ॥

५४ ] ति० टी०—येन त्वया ॥ ५४ ॥

रा० टी०—तव शोकः सर्वथा न युक्त इति बोधयन्नाह—येनेति । बाष्पकलः वियोगहेतुकशोकजनिताश्रुव्याप्तोऽयं जनः येन त्वया संस्तम्भनीयः बाष्परहितः कर्तव्यः स त्वं विक्रियां चित्तविकारं किमर्थं गतः प्राप्तः ॥ ५४ ॥

गो० टी०—येनेति । संस्तम्भनीयः निवृत्तबाष्पः करणीयः ॥ ५४ ॥

५५ ] ति० टी०—केवला कृत्स्ना चिराय वनं सेवितुं गमिष्यामि ॥ ५५ ॥

१ मैथिलीमिति गो. पाठः । २ नैव जीवितमिति गो. न च जीवितमिति रा. पाठः । ३ नेति गो. पाठः । ४ एनमिति गो. पाठः । ५ संकुलनादिते इति गो. पाठः । ६ नरेति गो. पाठः ।

मया वि[1]सृष्टां भरतो महीमिमां स[2]शैलखण्डां सपुरोपकाननाम् ।
[3]शिवासु सीमास्वनुशास्तु केवलं त्वया यदुक्तं नृपते तथास्तु तत् ॥ ५६ ॥
न मे तथा पार्थिव [4]दीयते मनो महत्सु कामेषु न चात्मनः प्रिये ।
यथा निदेशे तव शिष्टसंमते [5]व्यपैतु दुःखं तव मत्कृतेऽनघ ॥ ५७ ॥
तदद्य नैवानघराज्यमव्ययं न सर्वकामान्[6]वसुधां न मैथिलीम् ।
न [7]चिन्तितं त्वामनृतेन योजयन्वृणीय सत्यं व्रतमस्तु ते तथा ॥ ५८ ॥
फलानि मूलानि च भक्षयन्वने गिरींश्च पश्यन्सरितः सरांसि च ।
वनं प्रविश्यैव विचित्रपादपं सुखी भविष्यामि तवास्तु निर्वृतिः ॥ ५९ ॥
एवं स राजा व्यसनाभिपन्न[8]स्तापेन दुःखेन च [9]पीड्यमानः ।
आलिङ्ग्य पुत्रं सुविनष्टसंज्ञो [10]भूमिं गतो नैव वि[11]चेष्ट किंचित् ॥ ६० ॥

रा० टी०—पुरमिति । विसृष्टा इदानीं त्यक्ता केवला पुरादिरहिता च मही दीयताम् अहं तु वनं गमिष्यामि ॥ ५५ ॥

गो० टी०—सद्यः शोकनिवृत्तये पुनः पुनराह—पुरं चेत्यादि । मया निसृष्टं पुरं च दीयतां मया निसृष्टं राज्यं च दीयतामिति प्रत्येकमन्वयः । सेवितुं न पुनरथैवागन्तुम् ॥ ५५ ॥

५६ ] ति० टी०—शिवासु सीमास्विति स्थित इति शेषः । मया विना तेनात्र पुरे स्थातुमशक्यत्वादिति भावः । केवलमनुशास्तु रक्षणमात्रं करोतु, न तु राजत्वाभिमानो राज्यसुखं वा तस्येति ध्वनितम् अनेन राज्ञोऽजीवनं भरतस्य नन्दिग्रामवासश्च ध्वनितः । शिवासु सीमासु रममाण इत्यापाततोऽर्थः त्वया यदुक्तं कैकेयीं प्रतीति शेषः ॥ ५६ ॥

रा० टी०—मयेति । सशैलखण्डां शैलखण्डसहितां सपुरोपकाननां पुरग्रामादिसहितामिमां महीं शिवासु राजकल्याणकारणीषु सीमासु मनुवंशमर्यादासु स्थितो भरत अनुशास्तु शिवां 'सुसीमाम्' इति पाठे इमे अपि महीविशेषणे ॥ ५६ ॥

गो० टी०—मयेति । शिवामित्यनेन राज्यस्य दुर्भरत्वान्न त्यजामीति गम्यते इदं च स्वेच्छया न करोमि किंतु त्वदनुज्ञयैवेत्याह—त्वया यदिति ॥ ५६ ॥

५७ ] ति० टी०—यथा शिष्टसंमते तव निदेशे मया मनो दीयते, तथा महत्सु कामेषु काम्यवस्तुषु मनः संकल्पात्मकं मे मया न दीयते न च नाप्यात्मनोऽन्तःकरणस्य प्रियेऽतो मत्कृते दुःखं व्यपैतु ॥ ५७ ॥

रा० टी०—राजानं पुनर्बोधयन्नाह—नेति । हे पार्थिव ! शिष्टसंमते तव निदेशे आज्ञायां यथा मनो धीयते संस्थाप्यते तथा महत्सु प्राकृतविलक्षणेषु कामेषु अत्यन्तशोभावत्सु भवनादिष्वित्यर्थः आत्मनः प्रिये स्वसुखादिषु च मनो न धीयते अतो मत्कृते मदर्थं दुःखं व्यपैतु त्यजतु भवानिति शेषः ॥ ५७ ॥

गो० टी०—नेति । धीयते स्थाप्यते ॥ ५७ ॥

५८-५९ ] ति० टी०—त्वामनृतेन योजयन्राज्यादिकं चिन्तितं मद्विषयचिन्तावन्तं त्वामपि न वृणीय न वरिष्यामीति मे सत्यं व्रतं तथा ते व्रतं कैकेयीवरदानसंकल्पः सत्यमस्तु अत्र चिन्तितं त्वामित्यनेन चिन्तया तव मरणेऽपि मया न स्थेयं मरणादपि परलोकनाशकानृतत्वस्यातिकष्टत्वं सूचितम् तेन तव मरणेन मे दुःखं नापि पापं यथा तवानृतत्वकारण इति सूचितम् ॥ ५८ ॥ ५९ ॥

रा० टी०—तदिति । हे अनघ ! चिन्तितं मच्चिन्ताविशिष्टं त्वामनृतेन मृषया योजयन्सन्नव्ययं बाधारहितं राज्यं न सर्वकामान्न मैथिलीं न वृणीयमतस्ते व्रतं संकल्पः सत्यमस्तु ॥५८॥

गो० टी०—तदिति । त्वामनृतेन योजयन् सन् राज्यादिकं न वृणीय तव व्रतं यथा सत्यं तथास्त्वित्यन्वयः ॥ ५८ ॥

रा० टी०—मद्भोजनादिविषयिण्यपि चिन्ता न कर्तव्येति बोधयन्नाह—फलानीति । फलानि मूलान्येव भक्षयन्सुखी भविष्यामि अतः तव निर्वृतिः परमानन्दोऽस्तु ॥ ५९ ॥

गो० टी०—मम दुःखं भविष्यतीति त्वया न क्लेष्टव्यमित्याह—फलानीति । निर्वृतिः सुखम् ॥ ५९ ॥

६० ] ति० टी०—तापस्त्वग्दाहोत्पादकः दुःखमन्तर्व्यथोत्पादकम् ॥ ६० ॥

रा० टी०—एवमिति । व्यसनाभिपन्नः व्यसनं रामकर्मकाभिषेकत्यागः अभिपन्नं प्रापितं येन सः किंच व्यसनं राजकृतान्तत्यागमभिपन्नः प्राप्तः शोकेन दुःखेन तत्कार्येण च पीड्यमानः अत एव विनष्टसंज्ञः कार्याकार्यविवेकरहितः भूमिं गतो किंचिदपि न चिचेष्ट ॥ ६० ॥

गो० टी०—एवमिति । एवम् उक्तवन्तमिति शेषः । त्वग्दाहोत्पादकः शोकः दुःखमन्तर्व्यथोत्पादकम् । न चिचेष्ट न चेष्टते स्म ॥ ६० ॥

१ निसृष्टामिति गो. पाठः । २ सपुरां सकाननामिति गो. पाठः । ३ शिवां सुसीमामिति गो. पाठः । ४ धीयते इति गो. रा. पाठः । ५ व्यपेत्विति रा. पाठः । ६ न सुखमिति गो. पाठः । ७ जीवितमिति गो. पाठः । ८ शोकेनेति गो. पाठः । ९ ताम्यमान इति गो. पाठः । १० मोहमिति गो. पाठः । ११ चिचेष्टेति गो. रा. पाठः ।

देव्यः समस्तां रुरुदुः समेतास्तां वर्जयित्वा नरदेवपत्नीम् ।
रुदन्सुमन्त्रोऽपि जगाम मूर्छां हाहाकृतं तत्र बभूव सर्वम् ॥ ६१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ।

अथेयं संप्राप्तसंरम्भापि शिथिलयेदाग्रहमिति सुमन्त्रः कैकेयी मातुर्दुश्चरितं प्रस्तुत्य कैकेयीं दुर्धरं निनिन्दाथापि क्रोधस्तस्यां नावकाशं प्रपेदे ।

ततो निर्धूय सहसा शिरो निःश्वस्य चासकृत् । पाणिं पाणौ विनिष्पिष्य दन्तान्कटकटाय्य च ॥ १ ॥
लोचने कोपसंरक्ते वर्णं पूर्वोचितं जहत् । कोपाभिभूतः सहसा संतापमशुभं गतः ॥ २ ॥
मनः समीक्षमाणश्च सूतो दशरथस्य चै । कम्पयन्निव कैकेय्या हृदयं वाक्शरैः शितैः ॥ ३ ॥
वाक्यवज्रैरनुपमैर्निर्भिन्दन्निव चाशुभैः । कैकेय्याः सर्वमर्माणि सुमन्त्रः प्रत्यभाषत ॥ ४ ॥

---

६१ ] ति० टी०–समेता मिलिताः तां कैकेयीम् हाहा इति शब्दः कृतो येन तथाभूतं सर्वं परिचारिकादिजनजातम् ॥ ६१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०–राजवृत्तान्तमुक्त्वा कौशल्यादीनां वृत्तान्तं वर्णयन्नाह–देव्य इति । समेताः कौशल्यासमीपं प्राप्ताः समस्ताः देव्यो राजमहिष्यः तां मुख्यां नरदेवपत्नीं कौशल्यां वर्जयित्वा रुरुदुः अत एव सुमन्त्रोऽपि रुदन्सन्मूर्छां जगाम अत एव तत्र तस्मिन्समये सर्वं पुरं हाहाकृतं हाहाशब्दवद्बभूव कौशल्यां वर्जयित्वेत्यनेन तस्याः तात्कालिकशोकाभावः सूचितः तेन रामोपदेशस्य अघटितघटनापटीयस्त्वं व्यक्तम् ॥ ६१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०–देव्य इति । तां रामस्तस्मादितः शीघ्रं वनं गन्तुं त्वमर्हसीत्याद्युक्तक्रौर्ययुक्तां कैकेयीं हाहाकृतं हाहाशब्दस्य कृतं करणं यस्मिंस्तत्तथा सर्वं परिचारकादिजनजातम् ॥ ६१॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

---

१ ] ति० टी०–एवं सपरिकरस्य राज्ञः परमशोके प्राप्ते सुमन्त्रः कैकेयीं प्रत्याह–तत इति । शिरोनिर्धूननादि कोपविकाराभिनयः । कटकटाय्य कटकटशब्दवतः कृत्वा ॥ १ ॥

२ ] ति० टी०–कोपसंरक्ते कृत्वेति शेषः वर्णं मुखकान्तिम् । पूर्वोचितं पूर्वकालस्थितं राजमन्त्रिण उचितं च ॥ २ ॥

३–४ ] ति० टी०–दशरथस्य मनः समीक्षमाणः कैकेयीविषयस्नेहरहितं जानन् ॥ ३ ॥ ४ ॥

रा० टी०–तत इति । ततः सर्वस्यातिशोकवत्त्वाद्धेतोः शिरः असकृन्निर्धूय कराभ्यां संताड्य दन्तान्कटकटय्य कटकटाशब्दविशिष्टान्कृत्वा लोचने कोपसंरक्ते कोपेन अकालप्रार्थनाहेतुकमन्थराविषयकक्रोधेन संरक्ते अत्यरुणे कृत्वा कोपाभिभूतः कोपः अभिभूतः पराभूतो येन सः अशुभं शुभनिवर्तकं संतापं जनानां खेदं गतो निवर्तकः सूतः सुमन्त्रः दशरथस्य मनः अन्तर्वृत्तिं समीक्षमाणः जिज्ञासमानः सन् अत एव पूर्वोचितं पौर्वकालिकयोग्यताविशिष्टं वर्णं स्वनम्रतामित्यर्थः । जहत् त्यजन् सन्नत एव शितैः तीक्ष्णैः वाक्शरैः कैकेय्या हृदयं हृत् हृदयमयते अन्यविषयं प्रापयति तन्मन्थरामित्यर्थः । सामान्ये नपुंसकं कम्पयन्निव आशुभैः जनसंतापनिवर्तकत्वेनातिशुभहेतुभिः अनुपमैः अतिविलक्षणत्वेनोपमारहितैः वाक्यवज्रैः लक्ष्यविदारकत्वेन वज्रसदृशवचनैः कैकेय्याः सर्वमर्माणि संभावितापराधजातानि निर्भिन्दन् विदारयन्निव प्रत्यभाषत अनुकरणीभूतकटकटाशब्दप्रकृतिककरोत्यर्थणिजन्तप्रकृतिकल्यबन्तं कटकटय्येति 'कटकटाय्य' इति पाठे तु कटकटां कटकटाशब्दत्वमयते प्राप्नोतीति कटकटायः तं करोतीति णिचि ल्यपि च साधुः गत इत्यत्रान्तर्भावितणिजर्थः कर्तरि निष्ठा । श्लोकचतुष्टयमेकान्वयि ॥ १–४ ॥

गो० टी०–सुमन्त्रस्य कैकेयीविषयकोपानुभावं दर्शयति–तत इत्यादि । कटकटाय्य कटकटाशब्दयुक्तान् कृत्वा कटकटाशब्दात्तत्करोतीतिण्यन्ताल्ल्यप् । कोपसंरक्ते कृत्वेति शेषः । वर्णं देहकान्तिं पूर्वोचितं पूर्वाभ्यस्तं स्वाभाविकमित्यर्थः । जहत् त्यजन् कोपरक्ताङ्ग इत्यर्थः अशुभं तीव्रमित्यर्थः मनः समीक्ष्यमाणः कैकेयीविषयस्नेहरहितं जानन्नित्यर्थः सूतः सारथिः आशुगैरिव बाणैरिव स्थितैः वाक्यवज्रैः वाक्सारैर्मर्माणि मर्मतुल्यान् दोषान् निर्भिन्दन् प्रकाशयन् ॥ १–४ ॥

---

१ ततः संसरुरुदुरिति गो. पाठः । २ कटकटाय्येति गो. कटकटय्येति रा. पाठः । ३ स इति गो. पाठः ।

यस्यास्तव पतिस्त्यक्तो राजा दशरथः स्वयम् । भर्ता सर्वस्य जगतः स्थावरस्य चरस्य च ॥ ५ ॥
नह्यकार्यतमं किंचित्तव देवीह विद्यते । पतिघ्नीं त्वामहं मन्ये कुलघ्नीमपि चान्ततः ॥ ६ ॥
यन्महेन्द्रमिवाजय्यं दुष्प्रकम्प्यमिवाचलम् । महोदधिमिवाक्षोभ्यं संतापयसि कर्मभिः ॥ ७ ॥
मावमंस्था दशरथं भर्तारं वरदं पतिम् । भर्तुरिच्छा हि नारीणां पुत्रकोट्या विशिष्यते ॥ ८ ॥
यथावयो हिं राज्यानि प्राप्नुवन्ति नृपक्षये । इक्ष्वाकुकुलनाथेऽस्मिंस्तं लोपयितुमिच्छसि ॥ ९ ॥
राजा भवतु ते पुत्रो भरतः शास्तु मेदिनीम् । वयं तत्र गमिष्यामो यत्र रामो गमिष्यति ॥ १० ॥
न चे ते विषये कश्चिद्ब्राह्मणो वस्तुमर्हति । तादृशं त्वममर्यादमद्य कर्म करिष्यसि ॥ ११ ॥
नूनं सर्वे गमिष्यामो मार्गं रामनिषेवितम् । त्यक्ता या बान्धवैः सर्वैर्ब्राह्मणैः साधुभिः सदा ॥ १२ ॥
का प्रीती राज्यलाभेन तव देवि भविष्यति । तादृशं त्वममर्यादं कर्म कर्तुं चिकीर्षसि ॥ १३ ॥

५ ] ति० टी०—यस्यास्तव यया त्वया ॥ ५ ॥

रा० टी०—तत्प्रतिभाषणमेवाह—यस्या इति । स्थावरस्य चरस्य च सर्वस्य जगतो भर्ता पालकः यस्याः तव पतिः राजा दशरथः स्वयं शोभनः अयः शुभावहो विधिर्यस्मिंस्तद्राज्यं त्यक्तः 'अयः शुभावहो विधिः' इत्यमरः कर्तरि निष्ठा तस्याः तव इह रामाभिषेके अकार्यतमं किंचिन्न विद्यते एतेन रामाभिषेकानन्तरं वनयात्रा स्यादिति प्रार्थना सूचिता । सार्धश्लोक एकान्वयी ॥ ५ ॥

गो० टी०—यस्या इत्यादि । यस्यास्तव यया त्वयेत्यर्थः। तवेत्यत्र तस्या इत्युपस्कार्यम् ॥ ५ ॥

६ ] ति० टी०—अतः—नहीति । हे देवि ! तवातिशयेन कर्तुमशक्यं न किंचिद्विद्यते । इह संसारे अन्ततः सर्वान्ते स्वत्कृत्यसाध्यफलविचार इत्यर्थः । पतिघ्नीमिति । रामगमने राजमरणस्यावश्यकत्वादिति भावः । रामस्य विवासनाद्राज्ञो मरणाच्च कुलघ्नीम् ॥ ६ ॥

७ ] ति० टी०—अचलमिव दुष्प्रकम्प्यम् । कर्मभिः क्रूरैः संतापयसि राजानमिति शेषः ॥ ७ ॥

रा० टी०—ननु यदि तव प्रार्थितं वरं स्यात्तर्हि अतिबुद्धिमती मन्थरात्रार्थे संमतिं कुतो न कुर्यादित्यत आह—पतिघ्नीमिति । यतः ययस्याः कर्मभिः वचनैः महेन्द्रमिन्द्रमिवाजय्यं जेतुमशक्यमचलं महापर्वतमिव दुष्प्रकम्प्यं महोदधिं समुद्रमिवाक्षोभ्यं राजानं संतापयसि तस्माद्धेतोः तां त्वां विलक्षणसंमतिदात्रीत्वेन सर्वस्त्रीभ्योऽत्यन्तभिन्नां मन्थरामेव पतिघ्नीं सर्वस्वामिपीडादात्रीमत एव कुलघ्नीं प्रजादिसमूहपीडादात्रीमहं मन्ये प्रसिद्धोऽन्यपर्यायः त्वशब्दः सर्वादौ अत एवास्य वचनस्य वक्ष्यमाणकृताअल्पानुरूपत्वम् । सार्धश्लोक एकान्वयी ॥६॥७॥

गो० टी०—पतिघ्नीमिति । अन्ततः पर्यवसानगत्या पतिहननद्वारा सर्वेषां विनाशकादिति भावः । तत्रैव युक्त्यन्तरमाह—यदिति ॥ ६ ॥ ७ ॥

८ ] ति० टी०—भर्तुरिच्छा भर्तुरिच्छाविषयानुसरणम् ॥८॥

रा० टी०—मेति । दशरथं मावमंस्थाः तदवमानं न कुर्वित्यर्थः । ननु रामेच्छयैव मयेत्थं क्रियते इत्यत आह—पुत्रकोट्याः पुत्रकोटीच्छातः भर्तुः पाणिग्रहीतुः इच्छा विशिष्यते एतेन स्त्रीभिः पत्यनुसारेणैव वर्तितव्यमिति सूचितम् ॥ ८ ॥

गो० टी०—मावमंस्था इत्यादि । भर्तुरिच्छा हि भर्तुरिच्छानुसरणमेव पुत्रकोट्या इति पञ्चमी पुत्रानुसरणं त्यक्त्वापि भर्तुरिच्छानुसर्तव्येति भावः ॥ ८ ॥

९–१० ] ति० टी०—यथावयः वयःक्रममनतिक्रम्य नृपक्षये राजभूतपितृक्षये राज्यानि प्राप्नुवन्ति ज्येष्ठक्रमेणेति यावत् तमिममनादिप्रवृत्तमाचारमिक्ष्वाकुकुलनाथे दशरथे जीवत्येव लोपयितुमिच्छसीति योजना ॥ ९ ॥ १० ॥

रा० टी०—ननु भर्तुः राज्ये स्थितत्वात्किमर्थं पुत्राभिषेकयत्न इत्यत आह—यथेति । यथावयः वृद्धावस्थातिरिक्तावस्थामनतिक्रम्यैव नृपक्षये राज्यासने स्थिता इक्ष्वाकुकुलराजा इति शेषः राज्यानि प्राप्नुवन्ति पालयन्तीत्यर्थः । एतेन वृद्धावस्थायां तपः कुर्वन्तीति सूचितम् । अस्मिन् दशरथे तं तपश्चरणधर्मं लोपयितुं ध्वंसितुमिच्छसि एतेनेदं न युक्तमिति व्यञ्जितम् ॥ ९ ॥

गो० टी०—यथेति । यथावयः वयःक्रममनतिक्रम्य ज्येष्ठानुक्रमेणेत्यर्थः प्राप्नुवन्ति पुत्रा इति शेषः इक्ष्वाकुकुलनाथे वर्तमान इति शेषः । तत्पूर्वोक्तराजधर्मद्वयम् ॥ ९ ॥

रा० टी०—ननु पतिपुत्रानुक्तं त्वद्वचो नाद्रियते इत्यत आह—राजेति । भरतः मेदिनीं शास्तु अत एव राजा भवतु वयं तु तत्र गमिष्यामः ॥ १० ॥

गो० टी०—राजेति । शास्तु शास्तु च ॥ १० ॥

११–१३ ] ति० टी०—विषये देशे तादृशं ब्राह्मणवासानर्हम् अमर्यादमतिक्रमितज्येष्ठराज्यादिव्यवहारं करिष्यसीत्यनेनाद्यापि रामं निवर्तयेति सूचयति ॥ ११–१३ ॥

रा० टी०—अन्येऽपि गन्तार इति बोधयन्नाह—नेति । अमर्यादं प्रारब्धकार्यनिवर्तनरूपमर्यादाविरुद्धं तादृशं प्रारब्धाभिषेकत्याजनपूर्वकप्रव्राजनं कर्म करिष्यसि चेत्तर्हि ते विषये देशे कश्चिद्ब्राह्मणो विज्ञाता वस्तुं नार्हति अर्हिष्यति "वर्तमानसामीप्ये" इति भविष्यति लट् । चश्चेदर्थे ॥ ११ ॥

१ हीति गो. पाठः । २ चिकीर्षसीति गो. पाठः । ३ श्लोकद्वयमिदं गो. रा. नास्ति ।

आश्चर्यमिव पश्यामि यस्यास्ते वृत्तमीदृशम् । आचरन्त्या न विवृता सद्यो भवति मेदिनी ॥ १४ ॥
महाब्रह्मर्षिसृष्टा वा ज्वलन्तो भीमदर्शनाः । धिग्वाग्दण्डा न हिंसन्ति रामप्रव्राजने स्थिताम् ॥ १५ ॥
आम्रं छित्त्वा कुठारेण निम्बं परिचरेत्तु कः । यश्चैनं पयसा सिञ्चेन्नैवास्य मधुरो भवेत् ॥ १६ ॥
आभिजात्यं हि ते मन्ये यथा मातुस्तथैव च । नहि निम्बात्स्रवेत्क्षौद्रं लोके निगदितं वचः ॥ १७ ॥
तव मातुरसद्ग्राहं विद्मः पूर्वं यथा श्रुतम् । पितुस्ते वरदः कश्चिद्ददौ वरमनुत्तमम् ॥ १८ ॥

गो० टी०—नेति । विषये देशे 'नीवृज्जनपदो देशविषयौ' इत्यमरः । ब्राह्मण इति सत्पुरुषमात्रोपलक्षणं तत्र हेतुमाह—तादृशमिति । तादृशं ब्राह्मणनिर्गमनार्हम् अमर्यादज्येष्ठाभिषेकादिमर्यादाशून्यम् ॥ ११ ॥

१४ ] ति० टी०—यस्यास्त ईदृशं घोरं वृत्तमस्ति तया त्वया तदाचरन्त्या हेतुभूतया पृथिवी यन्न विवृता न विदीर्णा तदाश्चर्यमिव पश्यामि ॥ १४ ॥

रा० टी०—आश्चर्यमिति । ईदृशमर्यादं ते वृत्तं वृत्तान्तमाचरन्त्याः आचरयन्त्याः यस्याः मन्थरायाः मेदिनी पृथ्वी सद्यो न विवृता विदीर्णा तस्यास्तेजः आश्चर्यमिव पश्यामि । तेज इत्यध्याहृतम् ॥ १२ ॥

गो० टी०—आश्चर्यमिति । ईदृशममर्यादं वृत्तसमाचारमाचरन्त्या यस्यास्ते मेदिनी न विवृता न विदीर्णा तस्यास्ते इदमविदारणमाश्चर्यमिव पश्यामि ॥ १२ ॥

१५ ] ति० टी०—किं च महाब्रह्मर्षिभिः सृष्टाः प्रयुक्ताः, ज्वलन्तोऽग्निवद्भस्मकरणसमर्थाः, भीमदर्शना भीमं फलं दृश्यते येषु तादृशा धिगिति वाग्रूपा दण्डास्त्वां न हिंसन्ति इदमप्याश्चर्यमित्यनुकर्षः । स्थितां कृतनिश्चयाम् अनेन सर्वे त्वां धिक्कुर्वन्तीति ध्वनयति ॥ १९ ॥

रा० टी०—महेति । महाब्रह्मर्षिसृष्टाः वसिष्ठप्रभृतिप्रयुक्ता वाग्दण्डाः रामप्रव्राजने स्थितां परमहेतुभूतां मन्थरामित्यर्थः यतो न हिंसन्ति अतो धिक् प्रत्यासत्तिन्यायेन वाग्दण्डानेवेत्यर्थः ॥ १३ ॥

गो० टी०—महाब्रह्मर्षीति । महाब्रह्मर्षिभिः वसिष्ठादिभिः जुष्टाः प्रयुक्ताः ज्वलन्तः तीव्राः धिग्वाग्दण्डाः धिगित्येवंरूपाः वाग्दण्डाः रामप्रव्राजने स्थितां स्थिरबुद्धिं त्वां न हिंसन्ति वाशब्द एवकारार्थः 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये' इति विश्वः ॥ १३ ॥

१६ ] ति० टी०—अथान्यापदेशेन राजानं निन्दति—आम्रमिति । परिचरेदालवालादिकरणेन रोपयेत्, आम्रस्थाने तं च पुनः पयसा सिञ्चेत् अस्यैवं निम्बसेवां कुर्वतः प्रीतये स मधुरो न भवेत् अतो वृथैवेदं कैकेय्यनुवर्तनं राज्ञ इत्याशयः ॥ १६ ॥

रा० टी०—इदानीमस्मत्त्यागपूर्वकमन्थरासंमतिग्रहणं त्वदनिष्टकारकमेवेति बोधयन्नाह—आम्रमिति । कुठारेण आम्रं छित्त्वा अतिस्वाद्वास्पदीभूतनिम्बवृद्ध्यादिप्रतिबन्धकीभूतबुद्ध्या भित्त्वा निम्बं परिचरेत् स्वादुलाभबुद्ध्या सेवेत यश्च एनं निम्बं पयसा सिञ्चेत्तस्यास्य परिचरणसेचनयोः कर्तुरपि मधुरो न भवेदेतेन मन्थरासंमतौ इष्टसाधिकात्वबुधिर्न कर्तव्येति सूचितम् ॥ १४ ॥

गो० टी०—अथ कैकेयीदशरथावन्यापदेशेन निन्दति—आम्रमिति । आम्रं मधुरफलदं कुठारेण सद्यः बुद्धिपूर्वकं छित्त्वा निम्बं कटुफलकं यः परिचरेत् आलवालादिकरणेन संरक्षेत् यश्चेत्यपि स एवोच्यते एनं निम्बं पयसा क्षीरेण सिञ्चेत् अस्य आम्रं छित्त्वा निम्बं पयसा सिञ्चतः स इति शेषः स निम्बः मधुरः मधुरफलदः नैव भवेत् अनेन सगुणं रामं वरव्याजेन विवास्य कैकेयीचित्तानुसरणं न युक्तमित्युक्तं तेन च सर्वथा कैकेयी कटुरेवेत्युक्तम् ॥ १४ ॥

१७ ] ति० टी०—इदानीं कैकेय्या मर्मवचनान्यप्याह—आभिजात्यमिति । यथा ते मातुराभिजात्यं प्रशस्तमातापितृजत्वोचितव्यवहाररूपं तथैव ते तव मन्ये कारणानुसारित्वात्कार्यस्येति भावः । तदुपपादयति दृष्टान्तेन—नहीति । निम्बात्क्षौद्रं न स्रवेदिति वचो लोकप्रसिद्धं किलेत्यर्थः ॥ १७ ॥

रा० टी०—इदानीमसत्संग्रहस्तव दुस्त्यज इति बोधयन्नाह—आभिजात्यमिति । यथा येन प्रकारेण ते तव मातुः आभिजात्यं स्वभावः तवापि तत्तथैव इति अहं मन्ये निश्चिनोमि । स्वनिश्चयस्य प्रामाणिकत्वं द्रढयन्नाह—हि यतः निम्बात् क्षौद्रं मधु न भवेत् इति वचः लोके निगदितम् एतेन तन्मातुः असत्संग्रहकर्तृस्वभाववतीत्वं व्यञ्जितम् ॥ १९ ॥

गो० टी०—अभिजातमिति । अभिजातमभिजननं स्वभाव इति यावत् ते मातुर्यादृशी तादृशी तवापि प्रकृतिरित्यर्थः । कारणानुसारिकार्यसंभवे लौकिकवाक्यं निदर्शयति—नहीति । क्षौद्रं मधु स्रवेदित्यत्र इतिकरणं बोध्यम् ॥ १९ ॥

१८ ] ति० टी०—ननु मे मातुः कथमाभिजात्यक्षतिस्तत्राह—तवेति । असद्ग्राहं घोरपापकर्माभिनिवेशं पूर्ववृद्धेभ्यो यथा येन प्रकारेण श्रुतं तथा संप्रति विद्म स्मरामः । तदेवाह—पितुरित्यादि । कश्चिदृषिः ॥ १८ ॥

रा० टी०—तदेवोपपादयन्नाह—तवेति । पूर्वं यथाश्रुतं श्रुतमनतिक्रम्य तव मातुः असद्ग्राहमसत्संग्रहकर्तृस्वभावं विद्मः । श्रुतमेव बोधयन्नाह—वरदो . वरदानसमर्थः कश्चिदनुत्तमं श्रेष्ठं वरं ते तव पितुः पित्रे ददौ ॥ १६ ॥

१ विवृतेति गो. पाठः । २ जुष्टा वेति गो. पाठः । ३ य इति गो. रा. पाठः । ४ अभिजातमिति गो. पाठः । ५ भवेदिति रा. पाठः । ६ विद्मः पूर्वमिति गो. रा. पाठः ।

सर्वभूतरुतं तस्मात्संजज्ञे वसुधाधिपः । तेन तिर्यग्गतानां च भूतानां विदितं वचः ॥ १९ ॥
ततो जृम्भस्य शयने विरुताद्भूरिवर्चसः । पितुस्ते विदितो भावः स तत्र बहुधाहसत् ॥ २० ॥
तत्र ते जननी क्रुद्धा मृत्युपाशमभीप्सती । हासं ते नृपते सौम्य जिज्ञासामीति चाब्रवीत् ॥ २१ ॥
नृपश्चोवाच तां देवीं[1] हासं शंसामि ते यदि । ततो मे मरणं सद्यो भविष्यति न संशयः ॥ २२ ॥
माता ते पितरं देवी पुनः केकयमब्रवीत् । शंस मे जीव वा मा वा न मां त्वं[3] प्रहसिष्यसि ॥ २३ ॥
प्रियया च तथोक्तः स[4] केकयः पृथिवीपतिः । तस्मै तं वरदायार्थं कथयामास तत्त्वतः ॥ २४ ॥

---

गो० टी०—कैकेय्याः पतिप्रीत्वस्वभावो मातृसंबन्धप्रयुक्त इति प्रस्तावं कृत्वा तन्मातुः वृत्तान्तं वक्तुमुपक्रमते—तव मातुरित्यादिना। असद्ग्राहमसदर्थाभिनिवेशं पूर्वं यथा येन प्रकारेण श्रुतं तथा विधः ॥ १६ ॥

१९ ] ति० टी०—तस्माद्वरदानात्सर्वभूतानां व्यक्ताव्यक्तवाचां रुतं शब्दं तद्बोध्यमर्थं संजज्ञे जानीते स्म तेन सर्वभूतरुतज्ञत्वेन तिर्यग्गतानां तिर्यक्स्रोतसां पशुपक्ष्यादीनां वचो विदितं ज्ञातार्थं भवति ॥ १९ ॥

रा० टी०—वरस्वरूपं बोधयन्नाह—सर्वेति । तस्माद्वरदानाद्वसुधाधिपस्तव पिता सर्वभूतरुतं सर्वभूतोच्चारितशब्दं संजज्ञे तच्छ्रवणसामर्थ्यं प्रापेत्यर्थः अत एव तेन राज्ञा तिर्यग्गतानामपि भूतानां वचो विदितं ज्ञातम् ॥ १७ ॥

गो० टी०—पितुरिति । कश्चिद्योगी गन्धर्व इति श्रुतं तस्माद्वरदानात् रुतं शब्दम् ' तिरश्चां वाशितं रुतम् ' इत्यमरः । संजज्ञे सम्यक् ज्ञातवान् तेन सर्वभूतरुतज्ञेन राज्ञा तिर्यग्गतानां तिर्यग्गमनानाम् ॥ १७ ॥

२० ] ति० टी०—ततस्तत एव हेतोः शयने शयानस्य ते पितुर्भूरिवर्चसः सुवर्णकान्तेर्जृम्भस्य जृम्भाख्यस्य पक्षिणो भावोऽभिप्रायो विरुतात्तदीयशब्दाद्विदितः । अथ स ते पिता तत्र शयने शयान एव तद्भावपरिज्ञानजसंतोषेण बहुधा द्वित्रिर्बहुप्रकारेण चाहसत् ॥ २० ॥

रा० टी०—तत इति । ततः शब्दविज्ञातृत्वप्राप्त्यनन्तरं जृम्भस्य पक्षिविशेषस्य विरुताच्छब्दात् जृम्भस्य भावोऽभिप्रायः शयने पर्यङ्के शयानस्येति शेषः भूरिवर्चसस्ते पितुः विदितो ज्ञातः अत एव सः ज्ञाताभिप्रायस्त्वत्पिता तत्र तस्मिन् शयने बहुधा अनेकवारमहसत् एतेन तदभिप्रायस्य हास्यरसोत्पादकत्वं व्यक्तम् ॥ १८ ॥

गो० टी०—तत इति । जृम्भस्य पिपीलिकाविशेषस्य शयने शयनसमीपे पर्यङ्काधःप्रदेश इत्यर्थः । भूरिवर्चस इति पितुर्विशेषणं वरलाभेन अधिकतेजस इत्यर्थः जृम्भविशेषणं वा तदा सुवर्णवर्चस इत्यर्थः । ' सुवर्णे भूः ' इत्यमरः । सः पिता तत्र रुते विषये बहुधा द्वित्रिः अहसत् ॥ १८ ॥

२१ ] ति० टी०—तत्र शयने शयाना ते जननी मामयं हसतीति क्रुद्धा सती मृत्युरूपं पाशमिच्छन्ती हे नृपते ! ते हासं हासकारणं ज्ञातुमिच्छामीति ते पितरमब्रवीत् । ' वरं ते ' इति पाठे ते जननी मामयं हसतीति बुद्ध्या क्रुद्धाभवत् ततो राज्ञा त्वद्विषयोऽयं न हासः, किं तु वरबलान्मे सर्वरुतज्ञानसामर्थ्यमस्ति, अतः किंचिज्जन्तुं विदिततद्भावोऽहासिषमित्युक्ते तद्रुतस्वरूपं तद्दातारं च जिज्ञासामीत्यर्थः ॥ २१ ॥

रा० टी०—तत्रेति । तत्र हसनसमये क्रुद्धा मामयं हसतीति बुद्ध्या कोपविशिष्टा अत एव मृत्युपाशं मृत्युकारणीभूतगलबन्धनयोग्यरज्जुविशेषमभीप्सती इच्छन्ती सती हे नृपते हे सौम्य ! ते हासं जिज्ञासामि किमर्थं हसितवानसीति ज्ञातुमिच्छामीत्यब्रवीत् संज्ञापूर्वकविधेरनित्यत्वात् ज्ञादिशात्मनेप्रवृत्तिः ॥ १९ ॥

गो० टी०—तत्रेति । तत्र हासविषये क्रुद्धा मां परिहसतीति क्रुद्धा हे नृपते ! हासं हासनिमित्तं जिज्ञासामि ज्ञातुमिच्छामि ॥ १९ ॥ २० ॥

२२ ] ति० टी०—हासं तत्कारणम् । ' वरम् ' इति पाठे तद्दातारम् ॥ २२ ॥

रा० टी०—राजवचनं बोधयन्नाह—नृप इति । तां पृच्छन्तीं नृप उवाच । तद्वचनमेवाह—हासं हासस्वरूपं यदि ते तुभ्यं शंसामि तदा मे मरणं सद्यो भविष्यति अत्र अस्मिन्विषये संशयो न एतेन कथने तव मृतिर्भवितेति वरदानसमये वरदात्रोक्तमिति व्यक्तम् ॥ २० ॥

२३ ] ति० टी०—सर्वथा शंस जीव वा मा वा म्रियस्व वा । तस्मिन्नवगते इतः परं कदापि न हसिष्यसि त्वत्कर्तृकमत्कर्मकभाविहासाभावं निश्चेष्यामीत्यर्थः ॥ २३ ॥

रा० टी०—मातेति । देवी राज्ञी ते माता केकयं पुनः अब्रवीत् । तद्वचनमेवाह—जीव वा मा जीव वा त्वं मे मर्म शंस कथय । ननु किमर्थमेवमाग्रहः इत्यत आह—मां त्वं न प्रहसिष्यसि मदुपहासं न करिष्यसि हासकारणकथनादिति शेषः । अयं मां परिहसतीति मयि भ्रमो न भविष्यतीत्यर्थः एतेन पतिकर्तृकमरणोक्तिरपि हासहेतुकेति तया निश्चितमिति ध्वनितम् ॥ २१ ॥

गो० टी०—मातेति । जीव वा मा वेत्यनेन कैकेयीमातुः पतिप्रीत्वसूचकम् ॥ २१ ॥

२४ ] ति० टी०—तस्मै वरदाय ऋषये तमर्थं कथननिर्बन्धरूपं कथयामासेत्यन्वयः ॥ २४ ॥

---

१ देवि इति गो० पाठः । २ तत इति गो० पाठः । ३ अपहसिष्यसीति गो० पाठः । ४ सन्निति गो० पाठः ।

ततः स वरदः साधू राजानं प्रत्यभाषत । म्रियतां ध्वंसतां [1]वेयं मा [2]शंसीस्त्वं महीपते ॥ २५ ॥
स तच्छ्रुत्वा वचस्तस्य प्रसन्नमनसो नृपः । मातरं ते निरस्याशु विजहार कुबेरवत् ॥ २६ ॥
तथा त्वमपि राजानं दुर्जनाचरिते पथि । असद्ग्राहमिमं मोहात्कुरुषे पापदर्शिनी ॥ २७ ॥
सत्यश्चात्र प्रवादोऽयं लौकिकः प्रतिभाति मा । पितॄन्समनुजायन्ते नरा मातरमङ्गनाः ॥ २८ ॥
नैवं भव गृहाणेदं यदाह वसुधाधिपः । भर्तुरिच्छामुपास्येह जनस्यास्य गतिर्भव ॥ २९ ॥
मा त्वं प्रोत्साहिता पापैर्देवराजसमप्रभम् । भर्तारं लोकभर्तारमसद्धर्ममुपादध ॥ ३० ॥
नहि मिथ्याप्रतिज्ञातं करिष्यति तवानघः । श्रीमान्दशरथो राजा देवि राजीवलोचनः ॥ ३१ ॥

रा० टी०—प्रिययेति । प्रियया उक्तः स केकयः वरदाय वरदात्रे तं स्वभार्याग्रहरूपमर्थं तत्त्वतः कथयामास ॥ २२ ॥

गो० टी०—प्रिययेति । वरदाय तत्त्वतः कथयामास अत्यन्तसंकटेऽपि विमृश्यकारी सन् वरदाय कथयामासेत्यर्थः ॥ २२ ॥

२५ ] ति० टी०—ततः साधुः स वरदः प्रत्यभाषत ध्वंसतां वा स्वपित्रादिसमीपं गच्छतु वा । 'मा कथाः' इति पाठेऽस्या वच इति शेषः ॥ २५ ॥

रा० टी०—तत इति । ततः केकयराजवचनश्रवणानन्तरं वरदः साधुः राजानं प्रत्यभाषत । तद्भाषणमेवाह—हे महीपते ! इयं तव पत्नी म्रियतां ध्वंसतां पित्रादिगेहं गच्छतु वा त्वं मा शंसीः न कथय ॥ २३ ॥

गो० टी०—तत इति । ध्वंसतां स्वाधिकारात्प्रच्युता स्यात् ॥ २३ ॥ २४ ॥

२६ ] ति० टी०—निरस्य भद्रे ! त्वमितो गच्छेति ते मातरं परित्यज्य ॥ २६ ॥

रा० टी०—स इति । प्रसन्नमनसः तस्य वरदातुः वचः श्रुत्वा ते मातरं निरस्य नृपः केकयः कुबेरवद्विजहार ॥ २४ ॥

२७ ] ति० टी०—तथा त्वमपि दुर्जनाचरिते पथि स्थितेति शेषः अत इमं राजानं मोहान्मोहसुतपायासद्ग्राहमसत्कार्यग्राहकं कुरुषे ॥ २७ ॥

रा० टी०—तथेति । पापदर्शिनी पापं पापाचरणशीलां मन्थरां पश्यति तदनुमतिं गृह्णाति तच्छीला अत एव दुर्जनाचरिते प्रतिज्ञाहापनरूपे पथि मार्गे प्रवर्तिता त्वं तथा स्वमातरमिव असद्ग्राहं प्रतिज्ञात्यागरूपासत्कर्मग्राहकं राजानं मोहान्मन्थराया अविवेकाद्धेतुभूतात्कुरुषे ॥ २५ ॥

गो० टी०—उक्तमर्थं प्रकृते निगमयति—तथेति । दुर्जनाचरिते पथि स्थितेति शेषः । असद्ग्राहमसदर्थाभिनिवेशम् ॥ २५ ॥

२८ ] ति० टी०—कन्यानां मातृतुल्यत्वं न्यायप्राप्तमित्याह—सत्य इति । मा माम् नराः पुत्ररूपाः समनुजायन्ते पितृस्वभावानुवर्तिनो जायन्ते ॥ २८ ॥

रा० टी०—ननु पितुः स्वभावो मयि कुतो नागत इत्यत आह—सत्य इति । प्रवादः उक्तिः मा मां सत्यः प्रतिभाति । प्रवादस्वरूपमाह—नराः पुरुषाः पितॄन्समनुजायन्ते पितृस्वभावसदृशस्वभाववन्तो भवन्तीत्यर्थः । अङ्गनाः कन्या मातरं समनुजायन्ते ॥ २६ ॥

गो० टी०—सत्य इति । सत्य इति मा मां प्रतिभातीत्यन्वयः "अभितः परितः—" इत्यादिना प्रतियोगे द्वितीया । पितॄन् समनुजायन्ते अत्र इतिकरणं द्रष्टव्यं पितृसमानलक्षणा जायन्त इत्यर्थः । अङ्गनाः पुत्र्यः ॥ २६ ॥

२९ ] ति० टी०—नैवं भव मातृवन्मा भव यद्वसुधाधिप आह तद्गृहाण रामाभिषेकरूपं वचः । 'नेया' इति पाठे विधेया भवेत्यर्थः । भर्तुरिच्छां तद्विषयमुपास्य तदनुवर्तिनी भूत्वास्य जनस्यास्मदादेर्गतिः शरणं भव ॥ २९ ॥

रा० टी०—ननु लोकप्रवादस्य सत्यत्वे किमर्थं तन्निवारणयत्नः क्रियते इत्यत आह—नेति । एवं लोकवत्त्वं न भव तेन तस्याः प्राकृतविलक्षणात्वं ध्वनितम् । ननु तर्हि मया किं कर्तव्यमित्यत आह—वसुधाधिपो राजा यदाह वदति तदिदं गृहाण एतेन राजेदानीं प्रव्रजनं निवारयतु इत्यभिप्रायः सूचितः तेन राजसत्यप्रतिज्ञत्वस्य सुमन्त्रविस्मृतिः सूचिता तेन वियोगदुःखस्याश्रयंशक्तिमत्त्वं व्यक्तम् । ग्रहणफलमाह—उपास्य तदनुसारेण वर्तित्वा इह दुःखे विद्यमानस्य अस्य जनस्य गतिर्भव ॥ २७ ॥

गो० टी०—नेति । 'नैवं भव' इति पाठः 'नेया भव' इतिपाठे नेया नेतुं योग्या विधेया भवेत्यर्थः । वसुधाधिपः यदाह श्व एव पुष्यो भविता श्वोऽभिषिच्यते मे सुत इति यद्वचनमाह इदं गृहाण अस्य जनस्य पौरजानपदस्य गतिः शरणमिति सान्त्वोक्तिः ॥ २७ ॥

३० ] ति० टी०—प्रोत्साहिता प्रेरिता । असद्धर्मं कनिष्ठाभिषेकपूर्वं ज्येष्ठस्य विवासनरूपमुपादध ग्राहय । 'उपावह' इति पाठेऽप्ययमेवार्थः ॥ ३० ॥

रा० टी०—तदेव हृदयमाह—मेति । पापैः मन्थरादिभिः प्रोत्साहिता त्वं भर्तारमसद्धर्ममभिषेकप्रतिज्ञात्यागं मा उपावह प्रापय एतेन प्रतिज्ञातः पूर्वमेव प्रव्राजनं त्वया कर्तव्यमिदानीं तन्नोचितमिति सूचितम् ॥ २८ ॥

गो० टी०—मेति । असद्धर्मं कनिष्ठाभिषेकपूर्वकज्येष्ठविवासनरूपं मोपादधाः मा ग्राहय ॥ २८ ॥

३१ ] ति० टी०—तव मिथ्याप्रतिज्ञातं लीलयोक्तं वरद्वयदानरूपं वचः, अतो राजा न करिष्यति तत् ॥ ३१ ॥

१ चेयमिति रा. पाठः । २ कुथास्त्वमिति गो. पाठः । ३ अथेति गो. पाठः । ४ मेति गो. रा. पाठः । ५ दधा इति गो. वहेति रा. पाठः ।

ज्येष्ठो वदान्यः कर्मण्यः स्वधर्मस्यापि रक्षिता । रक्षिता जीवलोकस्य बली रामोऽभिषिच्यताम् ॥ ३२ ॥
परिवादो हि ते देवि महांल्लोके चरिष्यति । यदि रामो वनं याति विहाय पितरं नृपम् ॥ ३३ ॥
स्वराज्यं राघवः पातु भव त्वं विगतज्वरा । नहि ते राघवादन्यः क्षमः पुरवरे वसन् ॥ ३४ ॥
रामे हि यौवराज्यस्थे राजा दशरथो वनम् । प्रवेक्ष्यति महेष्वासः पूर्ववृत्तमनुस्मरन् ॥ ३५ ॥
इति सान्त्वैश्च तीक्ष्णैश्च कैकेयीं राजसंसदि । भूयः संक्षोभयामास सुमन्त्रस्तु कृताञ्जलिः ॥ ३६ ॥
नैव सा क्षुभ्यते देवी न च स्म परिदूयते । न चास्या मुखवर्णस्य लक्ष्यते विक्रिया तदा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

रा० टी०—ननु त्वमेव राजानं बोधयित्वा प्रव्राजननिवृत्तिं कुरु इत्यत आह—नेति । अनघः अघसंसर्गशून्यो राजा तवाग्रे प्रतिज्ञातं मिथ्या न करिष्यति एतेन मद्बोधनमकिंचित्करमिति सूचितम् ॥ २९ ॥

गो० टी०—एवं क्रियमाणे मम वरस्य का गतिरित्याशङ्क्य प्रकारान्तरेण गतिर्भविष्यतीत्याह—नहीति । प्रतिज्ञातं प्रतिश्रुतं वरद्वयं तन्मिथ्या न करिष्यति राज्यादप्यधिकमूल्यरत्नभूषणसंमानादिभिः सफलं करिष्यतीत्यर्थः ॥ २९ ॥

३२ ] ति० टी०—अतो ज्येष्ठत्वादिगुणको रामोऽभिषिच्यताम् तदभिषेकेऽनुमतिः क्रियताम् । कर्मण्यः कर्माणि साधुः ॥ ३२ ॥

रा० टी०—ननु निवारणे राक्षसध्वंसः कथं भविष्यतीत्यत आह वारणफलमाह—ज्येष्ठ इति । ज्येष्ठः सर्वगुणैः श्रेष्ठः कर्मण्यः निखिलसत्कर्माणि साधुः रक्षिता रामोऽभिषिच्यताम् । एतेनैतद्गुणश्रवणादेव राक्षसध्वंसो भवितेति बोधितम् ॥ ३० ॥

गो० टी०—रामस्य राज्याभिषेकार्हतासाधनगुणानाह—ज्येष्ठ इति । कर्मण्यः कर्मणि साधुः सदाचारपर इत्यर्थः । वदान्यः उदारः स्वधर्मपरिरक्षिता स्वधर्मस्य दुष्टनिग्रहपूर्वकशिष्टपरिपालनरूपक्षत्रियधर्मस्य परिरक्षिता बली रामोऽभिषिच्यतां त्वयेति शेषः अभिषेकानुमतिः क्रियतामित्यर्थः ॥ ३० ॥

३३ ] ति० टी०—विपक्षे बाधकमाह—परिवाद इति । परिवादोऽपवादः चरिष्यति प्रचरिष्यति ॥ ३३ ॥

रा० टी०—ननु प्रतिज्ञाहापनयत्नो निरर्थक इत्यत आह—परीति । एतेन परिहासभीतिश्चेन्निवारयेति ध्वनितम् ॥ ३१ ॥

गो० टी०—परिवाद इति । परिवादः अपवादः दोषवाद इत्यर्थः ॥ ३१ ॥

३४ ] ति० टी०—राघवाद्रामादन्यः पुरवरे वसंस्ते क्षमोऽनुकूलो नहि भवेदित्यर्थः भरतस्त्वत्प्रतिकूल एव भविष्यतीति भावः ॥ ३४ ॥

रा० टी०—स्वेति । राघवो रामः स्वराज्यं पातु त्वं विगतज्वरा भव । ननु पालनं विगतज्वरात्वं च राजैव कर्तेत्यत आह—राघवाद्रामादन्यः राजा भरतो वा इह पुरे वसन् वस्तुं न क्षमः हिते त्वत्प्रियाचरणे च न क्षमो भविता रामगमने सतीति शेषः ॥ ३२ ॥

गो० टी०—स इति । ते पुरवरे हि यस्मात्कारणात् क्षमो राघवादन्यो न वसेत् अतः स राघवः राज्यं पात्विति संबन्धः, यद्वा राघवादन्यः पुरवरं राजतया वसन् भरतः ते न क्षमः न युक्तः कनिष्ठस्त्वया राज्यं स्थापयितुं न युक्त इत्यर्थः, हिते हितकरणे न क्षम इति वा ॥ ३२ ॥

३५ ] ति० टी०—अतः—रामे हीति । पूर्ववृत्तं पूर्वराजाचारम् ॥ ३५ ॥

रा० टी०—स्वविचारितमाह—राम इति । पूर्ववृत्तं स्वकुलमर्यादाम् ॥ ३३ ॥

गो० टी०—राम इति । पूर्ववृत्तमिक्ष्वाकुकुलक्रमागतवृत्तम् ॥ ३३ ॥ ३४ ॥

३६ ] ति० टी०—भूयोऽत्यर्थम् ॥ ३६ ॥

रा० टी०—उपसंहरन्नाह—इतीति । तीक्ष्णैः मातृवृत्तान्तकथनादिभिः भूयः अत्यन्तं क्षोभयामास चालयामास ॥ ३४ ॥

३७ ] ति० टी०—सान्त्वैर्न क्षुभ्यते तीक्ष्णैर्न परिदूयते ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रा० टी०—नैवेति । तदा सुमन्त्रचालनकाले एतेन रामाऽपकारकाणां क्षोभादिविक्रियाराहित्यं व्यञ्जितम् ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

गो० टी०—नेति । मुखवर्णस्य वदनमुखवर्णस्य ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

१ स्वधर्मपरिरक्षितेति गो. पाठः । २ स राज्यमिति गो. पाठः । ३-वसेदिति गो. पाठः । ४ सुमन्त्रः क्षोभयामास भूय एवेति गो. पाठः । ५ संपरीति गो. पाठः ।

## षट्त्रिंशः सर्गः ।

दशरथः सुमन्त्रं महता कोशबलेन राममनुगन्तुं न्ययुङ्क्ताथाप्यसमञ्जं दृष्टान्तीकृत्य कैकेय्यध्यमपि रामं निष्किंचनमेव निर्वासयितुं निर्बबन्ध । अथो सिद्धार्थनामा सचिवो दुश्चरितादसमञ्जात्प्रतिगुणोऽयं गुणाभिरामो रामोऽतो विरमस्वाग्रहाद्योजयस्वैनं यौवराज्येनेति कैकेयीं प्रोवाच । सिद्धार्थोक्ताकरणेऽहमपि राममनुव्रजामीति दशरथः प्रोवाच ।

ततः सुमन्त्रमैक्ष्वाकः पीडितोऽत्र प्रतिज्ञया । सबाष्पमतिनिःश्वस्य जगादेदं पुनर्वचः[1] ॥ १ ॥
सूत रत्नसुसंपूर्णा चतुर्विधबला चमूः । राघवस्यानुयात्रार्थं क्षिप्रं प्रतिविधीयताम् ॥ २ ॥
रूपाजीवाश्च वादिन्यो वणिजश्च महाधनाः । शोभयन्तु कुमारस्य वाहिनीः सुप्रसारिताः ॥ ३ ॥
ये चैनमुपजीवन्ति रमते यैश्च वीर्यतः । तेषां बहुविधं दत्त्वा तानप्यत्र नियोजय ॥ ४ ॥
आयुधानि च मुख्यानि नागराः शकटानि च । अनुगच्छन्तु काकुत्स्थं व्याधाश्चारण्यकोविदाः[2] ॥ ५ ॥
निघ्नन्मृगान्कुञ्जरांश्च पिबंश्चारण्यकं मधु । नदीश्च विविधाः पश्यन्न राज्यं संस्मरिष्यति[3] ॥ ६ ॥
धान्यकोशश्च यः कश्चिद्धनकोशश्च मामकः । तौ राममनुगच्छेतां वसन्तं निर्जने वने ॥ ७ ॥

---

१ ] ति० टी०—एवं सुमन्त्रेण राजप्रतिज्ञाया मिथ्यात्वोक्तावपि राजा तस्या वास्तवत्वं जानन्रामस्य वन एव सुखवासोपायमादिशति—तत इति । कैकेय्यनङ्गीकारानन्तरम् । प्रतिज्ञया कैकेयीमुद्दिश्य कृतया वास्तवया । इदं वक्ष्यमाणम् ॥१॥

रा० टी०—सुमन्त्रवचनश्रवणानन्तरकालिकं राजवृत्तमाह—तत इत्यादिभिः । प्रतिज्ञया राक्षसहननविषयकरामप्रतिश्रवेण स्वकृतरामाभिषेकप्रतिश्रवेण च पीडितः ऐक्ष्वाको दशरथः सबाष्पं बाष्पसहितं यथा स्यात्तथा अतिनिःश्वस्येदं जगाद कथयामास ॥ १ ॥

गो० टी०—तत इत्यादि । ततः कैकेयीसंमत्यभावानन्तरम् अत्र वरदानविषये ॥ १ ॥

२–३ ] ति० टी०—चतुर्विधबला रथादिचतुर्विधबलवती चमूः सेना अनुयात्रार्थं सेवार्थं प्रतिविधीयतां नियुज्यतां प्रस्थाप्यताम् ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—सूतेति । हे सूत ! रत्नसुसंपूर्णा नानारत्नव्याप्ता चतुर्विधबला चतुर्विधानि रथादिचतुष्टयप्रकाराणि बलानि वीर्याणि यस्यां सा चमूः सेना राघवस्य अनुयात्रार्थमनुगमनार्थं क्षिप्रं शीघ्रं प्रतिविधीयतां प्रस्थाप्यताम् २

गो० टी०—सूतेति । अनुयात्रार्थं प्रतिविधीयतां प्रेष्यताम् ॥ २ ॥

रा० टी०—रूपाजीवा इति । वादिन्यः रमणीयवचनशीलाः रूपाजीवा वेश्याः महाधनाः प्रभूतधनवन्तः सुप्रसारिताः पण्याः द्रव्यप्रसारणचतुराश्च वणिजः वणिग्जातयः कुमारस्य रामस्य वाहिनीं सेनां शोभयन्तु । वादिन्य इत्यस्य स्थाने शालिन्य इति भूषणपाठः । 'वारस्त्री गणिकावेश्या रूपाजीवा' इत्यमरः ॥ ३ ॥ २ ॥

गो० टी०—रूपाजीवा इति । रूपाजीवाः वेश्याः 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । वादिन्यः परचित्ताकर्षणचतुरवचनाः सुप्रसारिताः शिबिरदेशे पण्यपदार्थप्रसारणं कुर्वन्तः ॥ ३ ॥

४] ति०टी०—यैर्मल्लैः वीर्यतो वीर्यपरीक्षया रमत इत्यर्थः ॥४॥

रा० टी०—ये इति । एनं राममुपजीवन्ति यैश्च सः वीर्यतः पराक्रमदर्शनादिना रमते तेषां योग्यं बहुविधमनेकप्रकारधनं दत्त्वा तानपि अत्र रामसहगमने नियोजय प्रेषयेत्यर्थः ॥ ४ ॥

गो० टी०—य इति । एनं रामं बहुविधं सुवर्णरत्नवस्त्रादिकम् अत्र वाहिन्याम् ॥ ४ ॥

५ ] ति० टी०—नागरा जनाः । अरण्ये कोविदा अरण्यमर्मज्ञाः ॥ ५ ॥

रा० टी०—आयुधानीति । मुख्यानि राममात्रग्रहणयोग्यानि आयुधानि बाणप्रभृतीनि नागराः नगरवासिनः शकटानि च अरण्यकोविदाः वनविषयकातिज्ञानवन्तो व्याधाश्च काकुत्स्थं राममनुगच्छन्तु ॥ ५ ॥

गो० टी०—आयुधानीति । आयुधानि आयुधधराः नागराः नगरजाः श्रेष्ठिनः शकटानि तैलघृतादिप्रापकाणि व्याधा वने मार्गदर्शिनः ॥ ५ ॥

६–७ ] ति० टी०—राज्यं राज्यस्थितिम् ॥ ६ ॥ ७ ॥

रा० टी०—व्याधप्रेषणे प्रयोजनं वदन्नाह—निघ्नन्निति । हननयोग्यानपि मृगादीन्निघ्नन्निवर्तयन्नारण्यकं वनोद्भवं मधु अनेकविधपुष्परसं पिबन्सन्राज्यं राजसुखं न संस्मरिष्यति एतेन रामो विहारप्रियोऽस्तीति राजनिश्चयः सूचितः । प्रसिद्धश्च निपूर्वकहनः निवर्तनार्थकस्वं शिष्टं निघ्नन्ति कम्पितमित्यादिना वेदभाष्ये तत्र वधो नार्थः शब्दानामनित्यत्वापत्तेः मतान्तरेऽपि शब्दानां प्राणसंबन्धाभावेन प्राणावियोगानुकूलव्यापारार्थस्यासंभवात् ॥ ६ ॥

गो० टी०—निघ्नन्निति । राज्यस्येति अधीगर्थदयेशां कर्मणि इति षष्ठी ॥ ६ ॥

---

१ पुनः पुनरिति गो. रा. पाठः । २ गोचरा इति गो. पाठः । ३ राज्यस्य स्मरिष्यतीति गो. पाठः ।

यजन्पुण्येषु देशेषु विसृजंश्चाप्तदक्षिणाः । ऋषिभिश्चापि[1] संगम्य प्रवत्स्यति सुखं वने ॥ ८ ॥
भरतश्च महाबाहुरयोध्यां पालयिष्यति । सर्वकामैः पुनः श्रीमान्रामः संसाध्यतामिति ॥ ९ ॥
एवं ब्रुवति काकुत्स्थे कैकेय्या भयमागतम् । मुखं चाप्यगमच्छोषं स्वरश्चापि[2]व्यरुध्यत ॥ १० ॥
सा विषण्णा च संत्रस्ता मुखेन परिशुष्यता । राजानमेवाभिमुखी कैकेयी वाक्यमब्रवीत् ॥ ११ ॥
राज्यं गत[3]धनं साधो पीतमण्डां सुरामिव । निरास्वाद्यतमं शून्यं भरतो नाभिपत्स्यते ॥ १२ ॥
कैकेय्यां मुक्तलज्जायां वदन्त्यामतिदारुणम् । राजा दशरथो वाक्यमुवाचायतलोचनाम् ॥ १३ ॥
वहन्तं किं तुदसि मां नियुज्य धुरि माहिते । अनार्ये कृत्यमारब्धं किं न पूर्वमुपारुधः ॥ १४ ॥

रा० टी०—धान्येति । मामको मत्संबन्धी एतेन रामसमीपं तज्जिगमिषा सूचिता ॥ ७ ॥

गो० टी०—धान्यकोश इति । कोशो वासस्थानम् अनुगच्छेतां गोण्युष्ट्रादिमुखेनेति शेषः ॥ ७ ॥

८ ] ति० टी०—आप्तदक्षिणा उक्तदक्षिणाः ॥ ८ ॥

रा० टी०—कोशप्रेषणे प्रयोजनं वदन्नाह—यजन्निति । आप्तदक्षिणाः आचार्याद्युचितस्वर्णादीन् विसृजन् ददत् सन्वने सुखं प्रवत्स्यति ॥ ८ ॥

गो० टी०—यजन्निति । विसृजन् ददिति यावत् दक्षिणाः यज्ञदक्षिणाः ॥ ८ ॥

९ ] ति० टी०—पालयिष्यतीति सोपालम्भोक्तिः संसाध्यतां प्रस्थाप्यताम् ॥ ९ ॥

रा० टी०—नन्विह कः पालयितेत्यत आह—भरत इति । महाबाहुर्भरतः अयोध्यां पालयिष्यति अतः सर्वकामैः इच्छाविषयीभूतकृत्स्नपदार्थैर्युक्तो रामः संसाध्यतां तदीप्सितगमनसिद्धिः संपाद्यतामित्यर्थः ॥ ९ ॥

गो० टी०—भरत इति । अयोध्यां पालयिष्यतीति सोपालम्भोक्तिः सर्वकामैः सह संसाध्यतां प्रस्थाप्यताम् । इतिशब्दः नियोगसमाप्तिवाचकः ॥ ९ ॥ १० ॥

१०–११ ] ति० टी०—स्वरश्च व्यरुध्यत रुद्धो जातः । भयकार्यमेतत् ॥ १० ॥ ११ ॥

रा० टी०—एवमिति । काकुत्स्थे दशरथे एवमनेन प्रकारेण ब्रुवति कथयति सति कैकेय्या भयं क्षुद्रराक्षसवधफलकनिखिलपरिवारगमनहेतुकलोकापवादभीतिमागतं प्राप्तमत एव मुखं तस्याः आननं शोषमगमत् अत एव स्वरोऽपि व्यरुध्यत१०

रा० टी०—सेति । संत्रस्ता सैन्यगमननिवारणफलकस्वविज्ञापनाहेतुकसंदिग्धराजकोपहेतुकोद्वेगविशिष्टा अत एव विषण्णा उदासीनचित्ता अभिमुखी राजसंमुखे स्थिता परिशुष्यता मुखेनोपलक्षिता कैकेयी इदं वाक्यमब्रवीत् ॥ ११ ॥

गो० टी०—सेति । मुखेनेत्युपलक्षणे तृतीया ॥ ११ ॥

१२–१३ ] ति० टी०—मण्डः सुरासारांशः । निरास्वाद्यं निर्गतास्वाद्यतमं शून्यमवस्तुकम् ॥ १२ ॥ १३ ॥

रा० टी०—तद्वचनमेवाह—राज्यमिति । साधो हे प्रजाजनसाधक ! गतजनं गताः जनाः पित्रादयो यस्मात्तत एव शून्यं पित्रादिसामग्रीजातरहितमत एव निरास्वाद्यतममास्वाद्यतमपित्रादिसंमाननादिसुखरहितं राज्यं भरतो न अभिपत्स्यते प्राप्स्यते । तत्र दृष्टान्तः पीतमण्डां पीतसारां सुरां जना इव किंच पीतः मण्डो दधिसारो यस्याः तां सुरां सुदत्तां दधिव्यक्तिमिव एतेन भरतोऽपि सहैव गन्तेति सूचितं तेन भवदादिरहितेनैव रामेण गन्तव्यमिति व्यञ्जितम् ॥ १२ ॥

गो० टी०—राज्यमिति । पीतमण्डां मण्डं दधिभवं मस्त्विति मण्डशब्दो यथा दधिसारवाचकः तद्वदत्रापि मण्डशब्देन सुरासार उच्यते साधो इति सहासोक्तिः निरास्वाद्यतमं निर्गतभोग्यवस्तुयुक्तम् ॥ १२ ॥

रा० टी०—कैकेय्यामिति । कैकेय्यामतिदारुणं वियोगबोधकत्वेनातिदारुणत्वेन प्रतीयमानं वाक्यं वदन्त्यामत एव मुक्तलज्जायां मुक्तानैहिकामुष्मिकानुरागरहितान्परमहंसानपि लज्जयति तस्यां सत्यामायतलोचनां कैकेयीं राजा दशरथ उवाच ॥ १३ ॥

गो० टी०—कैकेय्यामिति । आयतलोचनामिति दैन्योक्तिमूलसौन्दर्योक्तिः ॥ १३ ॥

१४ ] ति० टी०—हे अहिते ! मा मां धुरि दासवद्दूरहेतुकरामविवासनभरताभिषेकरूपभारे नियुज्य तं च भारं वहन्तं मां किं तुदसि व्यथयसि । हे अनार्ये ! यदिदानीमारब्धं कृत्यं सार्वभौमभोगसहितस्य प्रस्थापनप्रतिबन्धरूपं तत्तादृशं गमनं पूर्वमेव वनवासप्रार्थनकाल एव नोपारुधः सर्वं त्यक्त्वा केवलो यात्विति किं न प्रार्थितवत्यसि तत एतन्निरोधे तत्र सामर्थ्यं नास्तीति भावः कुद्धदीनोक्तित्वात्सर्वदोषपरिहारः ॥ १४ ॥

रा० टी०—तद्वाक्यमेवाह—वहन्तमिति । धुरि धरणीभारभूते अनार्ये क्षुद्रे अहिते धर्मविरोधित्वेन शत्रौ राक्षसजाते तद्विनाशार्थं मां राज्यलक्ष्मीं सेनामित्यर्थः वहन्तं प्रेषयन्तं मा मां किं तुदसि खेदयसि । ननु नाहं तुदामि किंतु प्रार्थयामीत्यत आह—आरब्धं मदाज्ञया सर्वजनकर्तृकप्रारम्भकर्मीभूतं कृत्यं कृतिनिष्पाद्यं सेनागमनमित्यर्थापूर्वं मदाज्ञापनात्पूर्वकाले किं किमर्थं न उपारुधः सैन्यादिभिर्न गन्तव्यमिति पूर्वमेव कुतो नोक्तमित्यर्थः ॥ १४ ॥

१ सम्यगम्येति गो. पाठः । २ न्यरुध्यतेति गो. पाठः । ३ गतजनमिति गो. रा. पाठः ।

तस्यैतत्क्रोधसंयुक्तमुक्तं श्रुत्वा वराङ्गना । कैकेयी द्विगुणं क्रुद्धा राजानमिदमब्रवीत् ॥ १५ ॥
तवैव वंशे सगरो ज्येष्ठपुत्रमुपारुधत् । असमञ्ज इति ख्यातं तथायं गन्तुमर्हति ॥ १६ ॥
एवमुक्तो धिगित्येव राजा दशरथोऽब्रवीत् । व्रीडितश्च जनः सर्वः सा च तन्नावबुध्यत ॥ १७ ॥
तत्र वृद्धो महामात्रः सिद्धार्थो नाम नामतः । शुचिर्बहुमतो राज्ञः कैकेयीमिदमब्रवीत् ॥ १८ ॥
असमञ्जो गृहीत्वा तु क्रीडतः पथि दारकान् । सरय्वां[1] प्रक्षिपन्नप्सु रमते तेन दुर्मतिः ॥ १९ ॥
तं दृष्ट्वा नागराः सर्वे क्रुद्धा राजानमब्रुवन् । असमञ्जं वृणीष्वैकमस्मान्वा राष्ट्रवर्धन ॥ २० ॥
तानुवाच ततो राजा किंनिमित्तमिदं भयम् । ताश्चापि राज्ञा संपृष्टा वाक्यं प्रकृतयोऽब्रुवन् ॥ २१ ॥
क्रीडतस्त्वेष नः पुत्रान्बालानुद्भ्रान्तचेतसः[2] । सरय्वां प्रक्षिपन्मौर्ख्यादतुलां प्रीतिमश्नुते ॥ २२ ॥

---

गो० टी०—वहन्तमिति । हे अहिते अहितकारिणि ! धुरि वरदानहेतुकभरताभिषेचनरामविवासनरूपदुर्वहभारे नियुज्य तथा वहन्तं मां वत्सतरमिव किं तुदसि व्यथयसि त्वदाज्ञप्तरामविवासनकारिणं किमर्थं पुनरपि पीडयसीत्यर्थः । किमधुना पीड्यते पूर्वमेव भवता दत्तं खल्वित्यत्राह—अनार्य इति । हे अनार्ये ! आरब्धं कृत्यं सेनाप्रेषणादिकं पूर्वं वरप्रार्थनाकाले किमर्थं नोपारुधः नोपरुद्धवती न प्रार्थितवतीति यावत् वरयाचनाकाले अनुद्घाटितत्वात् सेनाप्रेषणादिकं न निवर्तितव्यमिति भावः ॥ १४ ॥

१५ ] ति० टी०—द्विगुणं क्रुद्धा प्रकारान्तरेण मत्प्रयोजनं नाशयतीत्याशयेन ॥ १५ ॥

रा० टी०—तस्येति । क्रोधसंयुक्तं क्रोधहेतुकत्वेन प्रतीयमानं तस्य राज्ञः उक्तं वचनं श्रुत्वा क्रुद्धा क्रुध् क्रोधं जहाति हापयति सा कैकेयी द्विगुणं द्वौ रामविषयकस्नेहदृढिरामसत्यप्रतिज्ञत्वे गुणौ यस्मिन् तदिदं भोगत्यागविषयककुलाचारप्रमाणबोधनपूर्वकसत्यप्रतिज्ञत्वबोधकं वचनं राजानमब्रवीत् ॥ १५ ॥

गो० टी०—तस्येति । द्विगुणं क्रुद्धा प्रकारान्तरेण मदभिमतं विघटयतीति बहुतरं क्रुद्धेत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—पूर्वमनुक्तमपि केवलत्वं वनगमनत्वादेव सिद्धमिति दृष्टान्तबलेनाह—तवैवेति । उपारुधत् राज्यभोगेभ्य इति शेषः ॥ १६ ॥

रा० टी०—तद्वचनमेवाह—तवेति । तव वंशे पूर्वपरम्परायामेव असमञ्ज इति ख्यातं ज्येष्ठपुत्रमुपारुधत् तद्भोग्यभोगाभ्यवर्तयत् तथा राज्यभोगत्यागप्रकारेण अयं रामो गन्तुमर्हति ॥ १६ ॥

गो० टी०—यद्यपि पूर्वमिदं न वृत तथाप्यर्थसिद्धमित्याशयेनाह—तवैवेति । उपारुधदिति निष्कासनमेवोच्यते गन्तुमर्हतीति निर्देशात् तथायमिति निर्धन एवेत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—एवमुक्तोऽसमञ्जतुल्यतया गमन उक्तः स्वप्रतिश्रुतातिरिक्तप्रलापाद्राज्ञो धिगित्युक्तिः जनः कैकेयीसेवकजनः सर्वस्वामिन्या असंबद्धप्रलापात् नावबुध्यत क्रोधवशादिति भावः ॥ १७ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण केकय्या उक्तः राजा दशरथः धिक् त्वद्दत्तदृष्टान्तमिति शेषः इत्येवाब्रवीद्रामगमननिवृत्तिप्रकारं नाब्रवीदित्यर्थः एतेन राज्ञो लज्जा जातेति व्यक्तमत एव सर्वो जनः व्रीडितः राजव्रीडितत्वदर्शनेन लज्जित आसीदिति शेषः । सा केकयी तं राजकृतदृष्टान्तधिक्कारं नावबुध्यत अगणयत् पत्युक्तसर्वप्रकारवचनस्य सत्यत्वान्न किंचिदब्रवीदित्यर्थः ॥ १७ ॥

गो० टी०—एवमिति । प्रतिज्ञातातिरिक्तेऽपि चापलवतीं निन्दति—धिगिति । सा कैकेयी तं व्रीडितं जनं नावबुध्यत नाजीगणत् ॥ १७ ॥

१८ ] ति० टी०—तद्वद्गमनस्य नात्र प्रसङ्ग इति महामात्र आह—तत्रेति । महामात्रः प्रधानः ॥ १८ ॥

रा० टी०—तत्रेति । तत्र राज्ञस्तूष्णींभावेन स्थितौ सत्यां नामतः सिद्धार्थः सिद्धार्थनामेत्यर्थः कैकेयीमिदं नाम प्रसिद्धमब्रवीत् ॥ १८ ॥

गो० टी०—तत्रेति । महामात्रः प्रधानः शुचिः अकुटिलः १८

१९–२२ ] ति० टी०—सरय्वामप्सु प्रक्षिपन्रमते तेन कारणेन दुर्मतिः सः न तादृशोऽयमिति भावः ॥ १९–२२ ॥

रा० टी०—तद्वचनमेवाह—असमञ्ज इति । पथि मार्गे क्रीडतो दारकान्बालान्प्रक्षिपन्सन्नास्ते इति शेषः तेन प्रक्षेपेण दुर्मतिरसमञ्जो रमते ॥ १९ ॥

गो० टी०—असमञ्ज इति । दारकान् बालकान् तेन प्रक्षेपेण सशब्दबुद्बुदजननेन हसन् रमत इत्यर्थः ॥ १९ ॥

रा० टी०—तमिति । तमसमञ्जकर्तृकबालक्षेपं दृष्ट्वा क्रुद्धनागराः अब्रुवन् । तद्वचनमेवाह—असमञ्जमस्मान्वा वृणीष्व स्वीकुरु द्वयोरत्र स्थितौ निर्वाहो न भवितेति तात्पर्यम् ॥ २० ॥

गो० टी०—तमिति । वृणीष्व अत्र नगरे स्थापय ॥ २० ॥

रा० टी०—तानिति । इदं निर्वाहो न भवितेत्येतद्रूपम् । भयं किंनिमित्तं किंकारणकमिति राजा तान्नागरानुवाच राज्ञा संपृष्टाः ताः प्रकृतयः प्रजाः नागरा इत्यर्थः वाक्यमब्रुवन् ॥ २१ ॥

गो० टी०—तानिति । भयमित्यनन्तरमितिकरणं द्रष्टव्यं ता इति प्रकृतयः प्रजाः ॥ २१ ॥

---

[1] सरय्वा इति गो. पाठः । [2] चेतन इति गो. पाठः ।

स तासां वचनं श्रुत्वा प्रकृतीनां नराधिपः । तं तत्याजाहितं पुत्रं तासां प्रियचिकीर्षया ॥ २३ ॥
तं यानं शीघ्रमारोप्य सभार्यं सपरिच्छदम् । यावज्जीवं विवास्योऽयमिति तानन्वशात्पिता ॥ २४ ॥
सफालपिटकं गृह्य गिरिदुर्गाण्यलोकयत् । दिशः सर्वास्त्वनुचरन्स यथा पापकर्मकृत् ॥ २५ ॥
इत्येनमत्यजद्राजा सगरो वै सुधार्मिकः । रामः किमकरोत्पापं येनैवमुपरुध्यते ॥ २६ ॥
नहि कंचन पश्यामो राघवस्यागुणं वयम् । दुर्लभो ह्यस्य निरयः शशाङ्कस्येव कल्मषम् ॥ २७ ॥
अथवा देवि त्वं कंचिद्दोषं पश्यसि राघवे । तमद्य ब्रूहि तत्त्वेन तदा रामो विवास्यते ॥ २८ ॥
अदुष्टस्य हि संत्यागः सत्पथे निरतस्य च । निर्दहेदपि शक्रस्य द्युतिं धर्मविरोधवान् ॥ २९ ॥
तदलं देवि रामस्य श्रिया विहतया त्वया । लोकतोऽपि हि ते रक्ष्यः परिवादः शुभानने ॥ ३० ॥
श्रुत्वा तु सिद्धार्थवचो राजा श्रान्ततरस्वरः । शोकोपहतया वाचा कैकेयीमिदमब्रवीत् ॥ ३१ ॥

---

रा० टी०—तद्वाक्यमेवाह—क्रीडत इति । एषोऽसमञ्जो बालानल्पवयस्कान्मौर्ख्यात्क्रीडाकर्तॄनत एवोद्भ्रान्तचेतसोऽनवस्थितचित्तान्नोऽस्माकं पुत्रान्सरय्वां प्रक्षिपन्सन्नतुलां प्रीतिं प्रसन्नतामभुते प्राप्नोति ॥ २२ ॥

गो० टी०—क्रीडत इति । उद्भ्रान्तचेतनः भ्रान्तबुद्धिः ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—तं प्रकृतीनामहितं पुत्रं तत्याजेत्यन्वयः ॥ २३ ॥

रा० टी०—स इति । स नराधिपः सगरस्तासां प्रकृतीनां वचनं श्रुत्वा प्रकृतीनामहितं तमसमञ्जं पुत्रं तत्याज ॥ २३ ॥

२४ ] ति० टी०—शीघ्रं यानमारोप्य स्वेच्छया गमने विलम्बकरणसंभवात् सपरिच्छदं वनयोग्यफालपिटकादिपरिच्छदसहितं तान्विवासनाधिकारिणोऽन्वशादुक्तवान् ॥ २४ ॥

रा० टी०—त्यागप्रकारं बोधयन्नाह—तमिति । सपरिच्छदं वनवासयोग्यसामग्रीसहितं तमसमञ्जं यानमारोप्य यावज्जीवमयं विवास्यः वने स्थापनीय इति तान् प्राप्तविवासनाधिकारान्पिता अन्वशादब्रवीत् ॥ २४ ॥

गो० टी०—तमिति । अन्वशात् अनुशिष्टवान् ॥ २४ ॥

२५ ] ति० टी०—यथापापकर्मकृद्यथोक्तपापकर्मकृत्स फालसहितं पिटकं गृहीत्वा कन्दाद्यर्थं सर्वा दिशः सर्वदिक्षु गिरिदुर्गाण्यनुचरन्भ्रममाणः कन्दाद्यलोकयत् । 'सर्वा दिशस्त्वनुचरन्नतिष्ठत्पापकर्मकृत्' इति पाठे गिरिदुर्गाणि वासार्थमेव विलोकयन्सर्वा दिशश्च कन्दाद्यर्थमनुचरन्नातिष्ठत् यावज्जीवं निजापराधादुन इति शेषः ॥ २५ ॥

रा० टी०—सेति । फालं वनस्थोपभोग्यकन्दमूलादिखननसाधकं, पिटका फलादिस्थापनयोग्यमञ्जूषाविशेषः तयोः समाहारद्वन्द्वः तेन सहितं पितृप्रेषितसामग्रीजातमित्यर्थः । गृह्य गृहीत्वा सर्वाः दिशः अनुचरन्सन् सः असमञ्जः गिरिदुर्गाणि अलोकयत् । तत्र दृष्टान्तः यथा पापकर्मकृत् एतदुपमालंकारेण असमञ्जस्य पापकर्मकर्तृत्वाभावः सूचितः तेन स्वविषयकपित्रतिप्रीतिनिरसनार्थं जले बालप्रक्षेप इति सूचितं तेन तस्य विज्ञानि श्रेष्ठत्वं व्यक्तम् ॥ २५ ॥

गो० टी०—सफालेति । फालं कन्दमूलादिखननसाधनं पिटका तद्धारणपात्रम् एकवद्भावः गृह्य गृहीत्वा अलोलयत् कन्दमूलाद्यर्थमखनदित्यर्थः । यथा पापकृत्तथाचरन् अलोलयदित्यन्वयः ॥ २५ ॥

२६ ] ति० टी०—प्रकृते तदप्रसङ्ग इत्याह—रामः किमिति ॥ २६ ॥

रा० टी०—इतीति । सुधार्मिकः सगरः इति अनेन प्रकारेण एनमसमञ्जमत्यजत् एवमसमञ्जोक्तिप्रकारेण रामः किं पापं पापाभासमकरोत् येन हेतुभूतेन उपरुध्यते तद्राज्यभोग इति शेषः ॥ २६ ॥

गो० टी०—इतीति । उपरुध्यते विवास्यते ॥ २६ ॥

२७–२९ ] ति० टी०—अगुणं दोषं व्यसनरूपं निरयः पापं कल्मषं मालिन्यम् ॥ २७–२९ ॥

रा० टी०—ननु त्वमेव विचारयेत्यत आह—नहीति । राघवस्य रामस्य कंचन अगुणं गुणविरोधि दोषकर्मेत्यर्थः वयं न पश्यामः तत्र हेतुः शशाङ्कस्य द्वितीयाचन्द्रस्य कल्मषमिव अस्य निरयः कल्मषं दुर्लभः नैवास्तीत्यर्थः ॥ २७ ॥

रा० टी०—अथवेति । अथवा तत्त्वेन त्वं पश्यसि चेद् ब्रूहि ॥ २८ ॥

रा० टी०—अदुष्टस्येति । अदुष्टस्येति दोषरहितस्य धर्मविरोधवान् धर्मविरोधबोधकः संत्यागः शक्रस्यापि द्युतिं तेजः निर्दहेद्विनाशयेत् ॥ २९ ॥

गो० टी०—नहीति । निरयः निरयहेतुभूतो दोषः ॥ २७–२९ ॥

३०–३१ ] ति० टी०—त्वया विहतया रामस्य श्रिया तेन किंचित्फलमिति शेषः भरतस्य त्वदनुरूपमतित्वाभावात् तदलं वृथाश्रमेण हि यतो लोकतः प्राप्तः परिवादश्च ते रक्ष्यः परिहार्यो भवति एवं च लोकापवादमात्रमस्य फलं, नान्यत्किंचिदिति भावः ॥ ३० ॥ ३१ ॥

---

१ तेषामिति गो. पाठः । २ स्वानिति गो. पाठः । ३ अलोलयदिति गो. पाठः । ४ इत्येनमिति गो. पाठः । ५ ततो रामो विवास्यतामिति गो. पाठः । ६ निरोधनादिति गो. पाठः । ७ स्वन इति गो. पाठः । ८ भ्रमन्निति भाति ।

एतद्वचो नेच्छसि पापरूपे हितं न जानासि ममात्मनोऽथवा ।
आस्थाय मार्गं कृपणं कुचेष्टा चेष्टा हि ते साधुपथादपेता ॥ ३२ ॥
अनुव्रजिष्याम्यहमद्य रामं राज्यं परित्यज्य सुखं धनं च ।
सर्वे च राज्ञा भरतेन च त्वं यथासुखं भुङ्क्ष्व चिराय राज्यम् ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

## सप्तत्रिंशः सर्गः ।

रामः स्वनिःसङ्गत्वमुक्त्वोर्ध्यानुयात्रिकान्प्रतिषिध्य चीराण्यानेतुं परिचारकान्प्रैरयत्तच्छ्रुत्वा कैकेयी स्वयमेव तदसाधयद्गृहीत्वा च रामलक्ष्मणौ चाराणि परिदधतुः कौशेयाभ्यस्ततत्वाच्चीरपरिधाने क्लिश्यन्तीं सीतां रामः कौशेयोपर्येव चीरं प्रग्राहयत्सहेतूपन्यासं वसिष्ठे सीतां चीरपरिधारणान्निषेधयत्यपि रामसाधर्म्याकाङ्क्षिणी सा तदेव परिदधौ ।

महामात्रवचः श्रुत्वा रामो दशरथं तदा । अभ्यभाषत वाक्यं तु विनयज्ञो विनीतवत् ॥ १ ॥
त्यक्तभोगस्य मे राजन्वने वन्येन जीवतः । किं कार्यमनुयात्रेण त्यक्तसङ्गस्य सर्वतः ॥ २ ॥

रा० टी०—ननु किं रामधर्मविरोधकर्त्री त्वं मयि पश्यसि येनैवं वदसीत्यत आह—तदिति । अविहतया नित्ययेत्यर्थः भिया युक्तया त्वया लोकेतोऽपि रामस्य परिवादः परिहासः हिते स्वकर्तृकशुभलोकप्राप्तये अरक्ष्यः परिहर्तव्य इत्यर्थः । एतेन तत्र कृतमित्येव त्वयि विरोधकर्त्रीत्वमिति ध्वनितं तेन रामविवासनं किंचित्तदोषानुमापकं भवितेति सूचितं तेन स न विवासनीय इति प्रार्थना बोधिता ॥ ३० ॥

गो० टी०—तदिति । विहतया भिया अलम् अभिषेकविघातं मा कुर्वित्यर्थः । रक्ष्यः परिहरणीयः परिवादः निन्दा ॥ ३० ॥

रा० टी०—श्रुत्वेति । श्रान्ततरस्वरो राजा शोकोपहतया निश्चितरामवियोगजनितशोकाक्रान्तया वाचा अब्रवीत् ॥ ३१ ॥

गो० टी०—श्रुत्वेति । श्रान्ततरः हीनतरः ॥ ३१ ॥

३२ ] ति० टी०—एतद्वचः सिद्धार्थवचः हि यतः कृपणं मार्गमास्थाय येयं त्वया कुचेष्टारूपा चेष्टा कृता सा साधुपथादपेता ३२

रा० टी०—तद्वचनमेवाह—एतदिति । पापरूपे राक्षसे कृपणं दुःखदं मार्गमास्थाय निश्चित्य एतद्वचः सिद्धार्थवचनं ममात्मनो रामस्य हितं नैव जानासि अत एव नेच्छसि अतस्ते कुचेष्टा कुत्सितव्यापारत्वेन प्रतीयमाना चेष्टा व्यापारः असाधुपथादपेता त्यक्ता शिष्टसंमत एवायं पन्था इत्यर्थः कुचेष्टाशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ ३२ ॥

गो० टी०—एतदिति । एतद्वचः सिद्धार्थवचः कृपणं कुत्सितमित्यर्थः । 'कदर्ये कृपणक्षुद्रे' इत्यमरः । कुचेष्टेत्येतदुपपादयति—चेष्टाहीति ॥ ३२ ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षट्त्रिंशः सर्गः ॥ ३६ ॥

३३ ] ति० टी०—सर्वे चायोध्यावासिनो जनाः राज्ञा भरतेन च । चस्त्वर्थे ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

रा० टी०—इदानीं स्वस्य रामवियोगासहिष्णुत्वं बोधयन्नाह—अन्विति । राज्यादिकं परित्यज्य अद्य अस्मिन् दिने राममनुव्रजिष्यामि सर्वे मन्त्रिणः त्वं च चिराय बहुकालं प्रभूतं राज्यं सुखं यथा स्यात्तथा भुङ्क्ष्व पालय भुजोऽनवन इत्यस्याप्रवृत्तिस्तु संज्ञापूर्वकविधेरनित्यत्वादेतेन भरतं क्षिप्रमानयेति सूचितम् ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

१ ] ति० टी०—रामो धीरोदात्तत्वेन कैकेयीपरितोषायाह—महामात्रेति । महामात्रः सिद्धार्थः विनीतवद्विनीतः सन् ॥ १ ॥

रा० टी०—अमात्यराज्ञोर्वचनश्रवणानन्तरकालिकं रामवृत्तमाह—महेति । महामात्रवचः महान् अमात्रः अमात्यो यस्य तत्तस्य वचो वचनम् किंच महामात्रस्य वचो यस्मिन् तदुभयवचनमित्यर्थः किंच महान् सर्वपूज्यो राजा च अमात्रश्च तयोर्वचः श्रुत्वा विनयज्ञो रामः विनीतवद्विशेषनीतिविशिष्टं वाक्यमभ्यभाषत ॥ १ ॥

गो० टी०—महामात्रेत्यादि । महामात्रवचः सिद्धार्थवचः विनीतवत् विनीत इव अभ्यभाषत सविनयमाहेत्यर्थः ॥ १ ॥

२ ] ति० टी०—अनुयात्रेणानुयात्रावता सैन्येन त्यक्तसङ्गस्य सर्वतः "असङ्गो ह्ययमात्मा" इति श्रुतेः ॥ २ ॥

रा० टी०—तद्वाक्यमेवाह—त्यक्तेति । राजन् हे मद्विषयकपरमानुरागविशिष्ट ! त्यक्तभोगस्य अस्वीकृतराज्यपालनस्य अत एव त्यक्तसङ्गस्य परित्यक्तराज्यभोगासक्तेः अत एव सर्वतः मुन्युपभोग्यफलेन वने वन्येन जीवतो मे अनुयात्रेण सेनायनुगमनेन किं कार्यं प्रयोजनं न किमपीत्यर्थः ॥ २ ॥

गो० टी०—त्यक्तभोगस्येति । अनुयात्रेण अनुगतबलेन भोगत्यागेऽपि सङ्गो वर्तते लौकिकानां सोऽपि नास्तीत्याह—त्यक्तसङ्गस्य सर्वत इति ॥ २ ॥

१ वृते इति गो. पाठः । २ आत्मनो वेति गो. रा. पाठः । ३ सर्वेति गो. पाठः ।

यो हि दत्त्वा [1]द्विपश्रेष्ठं कक्ष्यायां कुरुते मनः । रज्जुस्नेहेन किं तस्य त्यजतः कुञ्जरोत्तमम् ॥ ३ ॥
तथा मम सतां श्रेष्ठ किं ध्वजिन्या जगत्पते । सर्वाण्येवानुजानामि चीराण्येवानयन्तु मे ॥ ४ ॥
खनित्रपिटके चोभे समानयत गच्छत । चतुर्दश वने वासं वर्षाणि वसतो मम ॥ ५ ॥
अथ चीराणि कैकेयी स्वयमाहृत्य राघवम् । उवाच परिधत्स्वेति जनौघे निरपत्रपा ॥ ६ ॥
स चीरे पुरुषव्याघ्रः कैकेय्याः प्रतिगृह्य ते । सूक्ष्मवस्त्रमवक्षिप्य मुनिवस्त्राण्यवस्त ह ॥ ७ ॥
लक्ष्मणश्चापि तत्रैव विहाय वसने शुभे । तापसाच्छादने चैव जग्राह पितुरग्रतः ॥ ८ ॥
अथात्मपरिधानार्थं सीता कौशेयवासिनी । [2]संप्रेक्ष्य चीरं संत्रस्ता पृषती वागुरामिव ॥ ९ ॥

३ ] ति० टी०—असंगतं चेदं ससैन्यस्य वनगमनमित्याह—यो हीति । कक्ष्या गजमध्यबन्धनरज्जुः ॥ ३ ॥

रा० टी०—नन्वनुयात्रमात्रसाहाय्येन किंचित्सुखं भवितेत्यत आह—य इति । द्विपश्रेष्ठं कुञ्जरवरं दत्त्वा कक्ष्यायां गजमध्यबन्धनरज्जौ मनः स्थापयितुं स्नेहं कुरुते कुञ्जरोत्तमं त्यजतस्तस्य पुरुषस्य रज्जुस्नेहेन किं न किंचिदित्यर्थः 'कक्ष्या प्रकोष्ठे हर्म्यादौ काञ्च्यां मध्येभबन्धने' इत्यमरः ॥ ३ ॥

गो० टी०—य इति । कक्ष्यायाम् इभबन्धनरज्जौ 'कक्ष्या प्रकोष्ठे हर्म्यादौ काञ्च्यां मध्येभबन्धने' इत्यमरः ॥ ३ ॥

४ ] ति० टी०—ध्वजिन्या कक्ष्यातुल्यया अनुजानामि मातृप्रीतये भरताय ददामि चीराणि वनोपयुक्तवासांस्यानयन्तु कैकेयीदास्यः ॥ ४ ॥

रा० टी०—तथेति । तथा ध्वजिन्या सेनया किं न किंचित्प्रयोजनमित्यर्थः अतः सर्वाणि सैन्यादीनि अनुजानामि ददामि भरतायेति शेषः । अतः मे मह्यं चीराणि वनवासिधारणयोग्यवस्त्राणि आनयन्तु वस्त्रानयनाधिकारिण इति शेषः ॥ ४ ॥

गो० टी०—तथेति । ध्वजिन्या सेनया सर्वाणि त्वया मह्यं दातुमुद्युक्तानि अनुजानामि प्रददामि भरतायेति शेषः सर्वाणि कार्याणि सम्यक् जानामीति वार्थः । चीराणि वल्कलवस्त्राणि आनयन्तु परिचारका इति शेषः ॥ ४ ॥

५ ] ति० टी०—चतुर्दशवर्षाणि वने वसतो मम फलाद्यानयनसाधने उभे खनित्रपिटके भो कैकेयीदास्यः समानयत गच्छत शीघ्रं तदानयनायेति शेषः ॥ ५ ॥

रा० टी०—खनित्रेति । चतुर्दशवर्षाणि वने वासं वसतः कर्तुमिच्छोः मम उभे खनित्रपिटके खनित्रं वनस्थोपभोग्यमूलादिखननयोग्यकुद्दालविशेषः, पिटका आहृतफलमूलादिस्थापनयोग्यमञ्जूषाविशेषः, तच्च सा च ते समानयत समानाययत यूयमधिकारिजनेनेति शेषः अत एव गच्छत गमयत यूयमधिकारिजनमिति शेषः ॥ ५ ॥

गो० टी०—खनित्रपिटके इति । खनित्रपिटके खनित्रम् अवदारणं पिटकम् अल्पार्थे कन् प्रत्ययः फलमूलाद्याहरणयोग्याल्पकण्डोलः 'कण्डोलपिटौ' इत्यमरः । वासं वसतः वासं कुर्वत इत्यर्थः ॥ ५ ॥ ६ ॥

६ ] ति० टी०—एतत्पर्यन्तं मन्थराप्रेरितं सिद्धं कृत्वा ब्राह्मणशापप्राप्तलोकासूयाविषयत्वसंपादकं कर्म कैकेय्यारभते—अथेति । स च शापोऽध्यात्मरामायणे स्पष्टः ॥ ६ ॥

रा० टी०—अथेति । अथ रामवचनश्रवणानन्तरकाले निरपत्रपा निर्निरन्तरमपः पालनाभावो येषु तान् त्रपते धिक्कारादिना लज्जयति सा किंच निर्गतः अपः पालनाभावो येषां ते निरन्तरं पालनकर्तारः इत्यर्थः तान् त्रपते लज्जयति सा विलक्षणपालनकर्त्रीत्यर्थः कैकेयी जनौघे जनसमूहे पश्यति सति चीराणि स्वयमाहृत्य परिधत्स्वेति राघवमुवाच एतेन तस्याः पत्यभिप्रायाभिज्ञात्वं ध्वनितम् ॥ ६ ॥

७–८ ] ति० टी०—स रामः चीरे अन्तरीयोत्तरीयरूपे अवक्षिप्य परित्यज्य अवस्त धृतवान् 'वस आच्छादाने' ॥७॥८॥

रा० टी०—स इति । स रामः ते वनस्थधारणयोग्य चीरे कैकेय्याः प्रतिगृह्य सूक्ष्मवस्त्रं दुर्ज्ञेयमूल्यकमहावस्त्राणि अवक्षिप्य कैकेयीदत्तचीराणि अवस्त अधारयत् । चीरे द्विवचनम् अधोधार्यत्वोर्ध्वधार्यत्वधर्मद्वयाक्रान्तत्वविवक्षया तद्गतद्वित्वारोपात् उत्तरत्र बहुवचनं तु उद्भूतावयवविवक्षया प्रक्षेपणकर्मीभूतवस्त्रे एकत्वं तु जात्यभिप्रायेण ॥ ७ ॥

रा० टी०—लक्ष्मण इति । वसने ऊर्ध्वाधोदेशधारितमहावस्त्राणि विहाय त्यक्त्वा ॥ ८ ॥

गो० टी०—स इति । स रामः कैकेय्याः सकाशात् मुनिवस्त्राणि परिगृह्य तेषु द्वे चीरे उत्तरीयान्तरीयरूपे सूक्ष्मवस्त्रमवक्षिप्य अवस्त ह आदीधरदित्यर्थः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—अथात्मनः परिधानार्थं तया दत्तं चीरं सीता संप्रेक्ष्य वागुरां संप्रेक्ष्य पृषती मृगीव संत्रस्ता सेवाभूत् ॥ ९ ॥

रा० टी०—अथेति । आत्मपरिधानार्थं स्वधारणप्रयोजनकं चीरं संप्रेक्ष्य आदरादवलोक्य अत एव कैकेय्याः दत्ते ते कुशचीरे प्रगृह्य अगुरां राहृत्साहसंपत्तिं पृषती वन्यस्थमृगीव संत्रस्ता राक्षसान्संत्रासयन्तीव अप्यपत्रपमाणा लज्जां त्यजन्ती इव शुभलक्षणा दुर्मना जनौदासीन्यदर्शनहेतुकदुर्मनस्त्वेन प्रतीयमाना जानकी जनकप्रादुर्भूता अश्रुसंपूर्णनेत्रा धर्मज्ञा धर्मदर्शिनी कौशेयवासिनी गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् । श्लोकत्रयमेकान्वयि ॥ ९–११ ॥

१ गजेति गो० पाठः । २ समीक्ष्येति गो० पाठः ।

सा व्यपत्रपमाणेव प्रगृह्य च सुदुर्मनाः । [1]कैकेय्याः कुशचीरे ते जानकी शुभलक्षणा ॥ १० ॥
अश्रुसंपूर्णनेत्रा च धर्मज्ञा धर्मदर्शिनी । गन्धर्वराजप्रतिमं भर्तारमिदमब्रवीत् ॥ ११ ॥
कथं नु चीरं बध्नन्ति मुनयो वनवासिनः । इति ह्यकुशला सीता सा मुमोह मुहुर्मुहुः ॥ १२ ॥
कृत्वा कण्ठे स्म सा चीरमेकमादाय पाणिना । तस्थौ ह्यकुशला तत्र व्रीडिता जनकात्मजा ॥ १३ ॥
तस्यास्तत्क्षिप्रमा[2]गत्य रामो धर्मभृतां वरः । चीरं बबन्ध सीतायाः कौशेयस्योपरि स्वयम् ॥ १४ ॥
रामं प्रेक्ष्य तु सीताया बध्नन्तं चीरमुत्तमम् । अन्तःपुरचरा नार्यो मुमुचुर्वारि नेत्रजम् ॥ १५ ॥
ऊचुश्च परमा[4]यत्ता रामं ज्वलिततेजसम् । वत्स नैवं नियुक्तेयं वनवासे मनस्विनी ॥ १६ ॥
पितुर्वाक्यानुरोधेन गतस्य विजनं वनम् । तावद्दर्शनम[5]स्या नः सफलं भवतु प्रभो ॥ १७ ॥
लक्ष्मणेन सहायेन वनं गच्छस्व पुत्रक । नेयमर्हति कल्याणी वस्तुं तापसवद्वने ॥ १८ ॥
कुरु नो याचनां पुत्र सीता तिष्ठतु भामिनी । धर्मनित्यः स्वयं स्थातुं नहीदानीं त्वमिच्छसि ॥ १९ ॥

गो० टी०—अथेति । संत्रस्ता अभवादति शेष । पृषती मृगी वागुरां मृगबन्धनीम् 'वागुरा मृगबन्धनी' इत्यमरः ॥९॥

१०] ति० टी०—व्यपत्रपमाणेव लज्जमानेव कैकेय्याः सकाशात्ते कुशचीरे प्रगृह्य भर्तुरीदृश्यवस्थेति सुतरां दुर्मना इव ॥१०॥

११ ] ति० टी०—अत एवाश्रुपूर्णनेत्रा ॥ ११ ॥

गो० टी०—सेति । व्यपत्रपमाणा विशेषेण लज्जमाना कैकेयीकुशचीरे कैकेयीसंबन्धिनी कुशचीरे धर्मज्ञा पातिव्रत्यधर्मज्ञा धर्मदर्शिनी स्वानुष्ठानेन पातिव्रत्यधर्मप्रदर्शिनी बध्नन्तीतीदमब्रवीदिति संबन्धः ॥ १० ॥ ११ ॥

१२ ] ति० टी०—अकुशलापरिचयाच्चीरबन्धनेऽनिपुणा मुमोह बन्धनस्थलनिश्चयं न प्रापेव ॥ १२ ॥

रा० टी०—तद्वचनमेवाह—कथमिति । बध्नन्ति धारयन्ति इति एवमुक्त्वा अकुशला मुनिवस्त्रधारणविषयककौशल्यरहिता सीता मुहुर्मुहुर्मुमोह ॥ १२ ॥

गो० टी०—कथमिति । मुमोह स्तब्धा बभूवेत्यर्थः ॥१२॥

१३ ] ति० टी०—कृत्वा कण्ठे अनेनेदृश्यां राजकुमार्यामस्या ईदृशो व्यवहार इति कैकेय्यां तत्रत्यजनस्यात्यन्तमसूया सूचिता ॥ १३ ॥

रा० टी०—मोहहेतुकवृत्तमाह—कृत्वेति । एकं कण्ठे कण्ठप्रदेशे स्कन्धे इत्यर्थः एकं पाणिना आदाय तस्थौ एकमित्युभयान्वयि ॥ १३ ॥

गो० टी०—तदेव विवृणोति—कृत्वेति ॥ १३–१६ ॥

१४ ] ति० टी०—कौशेयस्योपरीति तस्याः कौशेयत्यागप्रसक्त्यभावात् ॥ १४ ॥

रा० टी०—तस्या इति । आगम्य सीतासमीपं प्राप्य कौशेयस्योपरि चीरं बबन्ध परिधापयामास एतेन तस्याः कौशेयस्यागस्यौचित्याभावः सूचितः ॥ १४ ॥

१५ ] ति० टी०—सीतायाश्चीरं बध्नन्तमुत्तमं रामं संप्रेक्ष्येत्यन्वयः ॥ १५ ॥

रा० टी०—राममिति । सीतायाः उत्तमं चीरं बध्नन्तं परिधापयन्तं रामं प्रेक्ष्य परमायत्ता नार्यः नेत्रजं वारि मुमुचुः ज्वलिततेजसं राममूचुश्च तेन तासां प्रीत्यतिशयो ध्वनितः । सीतायाः इति संबन्धसामान्ये षष्ठी । सार्धश्लोक एकान्वयी ॥ १५ ॥

१६ ] ति० टी०—परमायत्ताः परमखिन्नाः ' यत्तः खेदोपस्करयोः ' एवं त्वद्वदियं नियुक्ता न ॥ १६ ॥

रा० टी०—तद्वचनमेवाह—वत्सेति । इयं मनस्विनी सीता वनवासे वनवासार्थम् एवं भवानिव नियुक्ता न भवत्विति शेषः । एतेन सीतेहैव संस्थापनीयेति सूचितम् । अर्धं पृथक् ॥ १६ ॥

गो० टी०—ऊचुरिति । एवं त्वामिव इयं सीता वनवासे न नियुक्तेति पित्रेति यावत् ॥ १६ ॥

१७–१८ ] ति० टी०—विजनं वनं गतस्य यावदागमनं तावदस्या दर्शनं नोऽस्तु तेन च नो जीवनं सफलं भवतु॥१७॥१८॥

रा० टी०—इह संस्थापने प्रयोजनं वदन्त्य आहुः—पितुरिति । विजनं वनं तस्य तव पत्न्याः अस्याः सीतायाः सफलं परमफलसहितं दर्शनं नोऽस्माकं तावत् त्वद्वनवासपर्यन्तं भवतु ॥ १७ ॥

रा० टी०—अस्या नयनमयुक्तमिति बोधयन्त्य आहुः—लक्ष्मणेनेति । इयं सीता वने वस्तुं नार्हति ॥ १८ ॥

गो० टी०—पितुरिति । तावत् तवागमनपर्यन्तं पितुर्वाक्यानुरोधेन विजनं वनं गतस्य तव दर्शनमस्यां सफलं भवतु त्वामिवैनां द्रक्ष्याम इति भावः ॥ १७–१९ ॥

१९ ] ति० टी०—तिष्ठतु अत्रैवेति शेषः हि यद्यपि धर्मनित्यस्त्वमिदानीं स्वयं स्थातुं नेच्छसि तथापीयं तिष्ठतु ॥१९॥

रा० टी०—कुर्विति । यद्यपि धर्मनित्यः धर्म एव नित्यो निरन्तरं धार्यो यस्य स त्वं स्वयमेकाकी स्थातुं नेच्छसि तथापि नो याचनां कुरु । याचनास्वरूपमाह—भामिनी सीता इदानीमिह तिष्ठतु । हिर्यद्यप्यर्थे । एतेन रामेच्छान्यथा न भवती-

१ कैकेयीति गो. पाठः । २ आगम्येति गो. रा. पाठः । ३ गता इति गो. पाठः । ४ आयस्ता इति गो. पाठः । ५ अस्यामिति गो. पाठः ।

तासामेवंविधा वाचः शृण्वन्दशरथात्मजः । बबन्धैव तथा चीरं सीतया तुल्यशीलया ॥ २० ॥
चीरे गृहीते तु तया सबाष्पो नृपतेर्गुरुः । निवार्य सीतां कैकेयीं वसिष्ठो वाक्यमब्रवीत् ॥ २१ ॥
अतिप्रवृत्ते दुर्मेधे कैकेयि कुलपांसनि । वञ्चयित्वा तु राजानं न प्रमाणेऽवतिष्ठसि ॥ २२ ॥
न गन्तव्यं वनं देव्या सीतया शीलवर्जिते । अनुष्ठास्यति रामस्य सीता प्रकृतमासनम् ॥ २३ ॥
आत्मा हि दाराः सर्वेषां दारसंग्रहवर्तिनाम् । आत्मेयमिति रामस्य पालयिष्यति मेदिनीम् ॥ २४ ॥
अथ यास्यति वैदेही वनं रामेण संगता । वयमत्रानुयास्यामः पुरं चेदं गमिष्यति ॥ २५ ॥
अन्तपालाश्च यास्यन्ति सदारो यत्र राघवः । सहोपजीव्यं राष्ट्रं च पुरं च सपरिच्छदम् ॥ २६ ॥

---

त्यंशस्य तासां विस्मृतिः सूचिता तेन प्रीतेरतिशयो ध्वनितः ॥ १९ ॥

२० ] ति० टी०—तुल्यशीलयाङ्गीकृतनगरस्थित्या सीतया प्रेरितः संश्चीरं बबन्धेत्यन्वयः ॥ २० ॥

रा० टी०—तासामिति । तुल्यशीलया रामसमानशीलयुक्तया सीतया प्रार्थित इति शेषः दशरथात्मजो रामः चीरं बबन्ध बन्धनानुकूलव्यापारं चकार । सीतया प्रार्थित इत्यनेन सह गमने प्रतिबन्धः कैश्चिन्न कार्य इति सीताभिप्रायो व्यक्तः ॥ २० ॥

गो० टी०—तासामिति । सीतयेति षष्ठ्यर्थे तृतीया । बबन्धैवेति । कैकेय्यनुज्ञाभावादिति भावः ॥ २० ॥ २१ ॥

२१ ] ति० टी०—चीरे गृहीते समीक्ष्येति शेषः । 'सबाष्पः' इति पाठे पाठान्तरं तु सम्यगेव ॥ २१ ॥

रा० टी०—चीरे इति । तया सीतया गृहीते चीरे समीक्ष्य सीतां कैकेयीं च निवार्य मत्कथनसमये भवतीभ्यां किंचिन्न वक्तव्यमित्युक्त्वा नृपतेर्गुरुर्वसिष्ठः वाक्यमब्रवीत् ॥ २१ ॥

२२ ] ति० टी०—अतिप्रवृत्ते मर्यादातिक्रमेण प्रवृत्ते यावद्भर्त्तस्तावत्प्रमाणे नावतिष्ठसि कुतः अस्या वनगमनस्य त्वयादत्तत्वादिति भावः । 'सप्रमाणेव—' इति पाठस्तद्व्याख्यानं च न प्रकृतोपयोगीति चिन्त्यम् ॥ २२ ॥

रा० टी०—तद्वाक्यमेवाह—अतीति । अतिप्रवृत्ते अतिप्रवृत्तिहेतुभूते अत एव दुर्मेधे हे कैकेयि कुलपांसिनि कैकेय्याः केकयराजापत्यानि संत्यस्मिन् इति कैकेयि तदेव कुलमिति कर्मधारयः तस्य पांसिनी तत्संबोधनं हे मन्थरे इत्यर्थः राजानं वञ्चयित्वा अकालकवरयाच्ञानुमत्या संवञ्च्य वियमाना त्वं राजानं प्रमाणे प्रामाणिके पथि किं नावतिष्ठसि स्थापयिष्यसि अन्तर्भावितणिजर्थः । तुः किमर्थे ॥ २२ ॥

गो० टी०—अतीति । अतिप्रवृत्ते अतिक्रम्य प्रवर्तमाने प्रमाणे मर्यादायाम् 'प्रमाणं हेतुमर्यादाशास्त्रयत्नप्रमातृषु' इत्यमरः ॥ २२ ॥

२३ ] ति० टी०—अत एव—न गन्तव्यमिति । रामस्य प्रकृतं प्रस्तुतमासनं सीतानुष्ठास्यत्यधिष्ठास्यति राज्यं करिष्यति, यावद्रामागमनमित्यर्थः ॥ २३ ॥

रा० टी०—ननु कः प्रामाणिकः पन्था इत्यत आह—नेति । हे शीलवर्जिते! सीतया वनं न गन्तव्यमिदमेव राजानं बोधयेति तात्पर्यम् । नन्वत्रास्याः किं प्रयोजनमित्यत आह—प्रकृतमुचितकाले राज्ञा प्रापितं रामस्यासनं सीता अनुष्ठास्यति ॥ २३ ॥

गो० टी०—न गन्तव्यमिति । प्रकृतं प्रस्तुतम् आसनं सिंहासनम् अनुष्ठास्यति अधिष्ठास्यति ॥ २३ ॥

२४ ] ति० टी०—ननु स्त्रियाः कथं राज्याधिष्ठानमत आह—आत्मा हीति । दारसंग्रहवर्तिनां गृहस्थानां सर्वेषामात्मा दाराः "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः । अनेन स्त्रीपुरुषोपाध्योः परस्परावयवमेलनं सूचितम् अत एव लोकेऽपि सर्वतस्तयोः परस्परप्रियत्वं दृश्यते ॥ २४ ॥

रा० टी०—तत्र हेतुं वदन्नाह—आत्मेति । दारसंग्रहवर्तिनां गृहस्थानामित्यर्थः । दाराः पत्नी आत्मा अर्धाङ्गमित्यर्थः । इति हेतोः रामस्यात्मा इयं सीता मेदिनीं पृथ्वीं पालयिष्यति ॥ २४ ॥

गो० टी०—आत्मेति । दारसंग्रहवर्तिनां गृहस्थानाम् आत्मेयमिति "अर्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेरिति भावः ॥ २४ ॥ २५ ॥

२५ ] ति० टी०—अथ यास्यति त्वन्निर्बन्धादिति शेषः । वयं मदाद्या ब्राह्मणाः अत्र यत्र रामोऽत्र स्थाता तमेनमनुगमिष्यामः ॥ २५ ॥

रा० टी०—सहयाने दोषमाह—अथेति । रामेण सङ्गता संयुक्ता ॥ २५ ॥

२६ ] ति० टी०—अन्तपालाः शुद्धान्तरक्षकाः राष्ट्रान्तस्थितदण्डनायका इत्यन्ये उपजीव्यं जीवनसाधनं धनं तेन सहितं राष्ट्रं सपरिच्छदं दासीदासादिसहितं पुरं च यास्यति ॥ २६ ॥

रा० टी०—अन्तपाला इति । अन्तपालाः अन्तःपुररक्षकाः सहोपजीव्यः उपजीव्येन धनेन सहितं राष्ट्रं राष्ट्रस्थो जनः पुरमयोध्यां च अत्र पुरशब्दो न भाक्तः पूर्वपद्ये तस्योक्तत्वात् । तेनायोध्यायाः चेतनात्वं व्यक्तम् ॥ २६ ॥

गो० टी०—अन्तपाला इति । अन्तपालाः राष्ट्रान्तपरिपालकाः दण्डनायकाः सहोपजीव्यं जीवाजीवरूपधनसहितं सपरिच्छदं दासदासीशकटादिपरिकरयुक्तम् ॥ २६—२९ ॥

---

१ तथेति गो. पाठः । २ समीक्ष्येति गो. रा. पाठः । ३ पांसिनीति रा. पाठः । ४ चेति. गो.पाठः । ५ ऽवतिष्ठसे इति गो. पाठः । ६ अपीति गो. पाठः ।

भरतश्च सशत्रुघ्नश्चीरवासा वनेचरः । वने वसन्तं काकुत्स्थमनुवत्स्यति पूर्वजम् ॥ २७ ॥
ततः शून्यां गतजनां वसुधां पादपैः सह । त्वमेका शाधि दुर्वृत्ता प्रजानामहिते स्थिता ॥ २८ ॥
नहि तद्भविता राष्ट्रं यत्र रामो न भूपतिः । तद्वनं भविता राष्ट्रं यत्र रामो निवत्स्यति ॥ २९ ॥
नह्यदत्तां महीं पित्रा भरतः शास्तुमिच्छति । त्वयि वा पुत्रवद्वस्तुं यदि जातो महीपतेः ॥ ३० ॥
यद्यपि त्वं क्षितितलाद्गगनं चोत्पतिष्यसि । पितृवंशचरित्रज्ञः सोऽन्यथा न करिष्यति ॥ ३१ ॥
तत्त्वया पुत्रगर्धिन्या पुत्रस्य कृतमप्रियम् । लोके नहि स विद्येत यो न राममनुव्रतः ॥ ३२ ॥
द्रक्ष्यस्यद्यैव कैकेयि पशुव्यालमृगद्विजान् । गच्छतः सह रामेण पादपांश्च तदुन्मुखान् ॥ ३३ ॥
अथोत्तमान्याभरणानि देवि देहि स्नुषायै व्यपनीय चीरम् ।
न चीरमस्याः प्रविधीयतेति न्यवारयत्तद्वसनं वसिष्ठः ॥ ३४ ॥

---

२७ ] ति० टी०—भरतश्च पूर्वजमनुवत्स्यति तत्सदृशाव-स्थयैव स्थास्यति दशरथजातस्य तत्स्वभावताया एवौचित्य-मिति भावः ॥ २७ ॥

रा० टी०—भरत इति । काकुत्स्थं रामं भरत इति कौश-ल्याकैकय्यादीनामप्युपलक्षकम् अत एव तद्विषये न किंचिद्दु-क्तम् । एतेन भरतः पालयितेत्याशा न कर्तव्येति सूचितम् ॥ २७ ॥

२८–२९ ] ति० टी०—पादपैः सहेत्यनेनाटवीभूतामिति द्योत्यते ॥ २८ ॥ २९ ॥

रा० टी०—तत इति । पादपैः वृक्षैः सह एका त्वं शाधि शिक्षय ॥ २८ ॥

रा० टी०—नेति । यत्र यस्मिन् स्थले ॥ २९ ॥

३० ] ति० टी०—सर्वथैव तव भरतराज्यप्रयासो व्यर्थ इत्याह—नहीति । अदत्तां प्रीतिपूर्वमदत्तां किंतु त्वन्निर्बन्धनेन दत्तां त्वयि वा परम्पराप्राप्तधर्मनाशिकायामतः परं पुत्रवद्वस्तुं नार्हति । कुतस्तत्राह—यदीति । महीपतेर्दशरथाज्जातो यदि 'पितॄन्समनुजायन्ते नराः' इति न्यायादित्याशयः । यदीत्य-संदेहे संदिग्धवचनम् 'वेदाश्चेत्प्रमाणम्' इतिवत्, यद्वा कैकेय्या धिक्कारान्तरमिदम् ॥ ३० ॥

रा० टी०—नहीति । पित्रा अदत्तां महीं शास्तुम् त्वयि त्वत्समीपे वस्तुं वा पुत्रवत् पुत्रधर्मज्ञानवान् भरतः नेच्छति तत्र हेतुः यत् यतः महीपतेः निखिलपृथ्वीनियन्तुः जातः अतिधर्मात्मपुत्रत्वादन्याय्यं न कर्तेति भावः यदो ज्ञानार्थकत्वं तु भासनोपसंभाषेतिसूत्रे प्रसिद्धम् द इत्यव्ययम् ॥ ३० ॥

गो० टी०—नेति । अदत्तां प्रीतिपूर्वकमदत्ताम् ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—पितृवंशचरित्रं ज्येष्ठे विद्यमाने कनिष्ठस्य राज्यानर्हत्वरूपं तज्ज्ञः ॥ ३१ ॥

रा० टी०—नन्वतीव बुद्धिमतीत्वात् भरतेन राज्यं कार-यितास्म्येवेत्यत आह—यद्यपीति । सः भरतः अन्यथा विधि-विरुद्धं न करिष्यति ॥ ३१ ॥

३२ ] ति० टी०—पुत्रगर्धिन्या पुत्रराज्याभिलाषवत्या लोके स न विद्येत तत्सत्ता न संभाविता यो रामं नानुव्रतः ॥ ३२ ॥

रा० टी०—ननु मया तु हितानुष्ठानमेव कृतं तद्भरतो जा-नातु न वेत्यत आह—तत्त्वयेति । पुत्रगर्धिन्या पुत्रसदृशभरतहि-ताभिकाङ्क्षायुक्तया तत्त्वया यथार्थवक्त्र्या त्वया पुत्रस्य पुत्रस-दृशस्य भरतस्य अप्रियं कृतम् । तत्र हेतुः यो रामं नानुव्रतः स लोके कस्मिंश्चिद्भुवने नैव विद्यते एतेन रामसेवामन्तरा भरतो राज्यं नाभिकाङ्क्षतीति सूचितम् तेन सीतास्थितिप्रयत्नं कुर्विति व्यञ्जितम् ॥ ३२ ॥

गो० टी०—तदिति । पुत्रगर्द्धिन्या पुत्रविषयस्नेहयु-क्तया ॥ ३२ ॥

३३ ] ति० टी०—तत्र प्रत्यक्षं मानमाह—द्रक्ष्यसीति । पादपांश्चेति किमु वक्तव्यं मनुष्यानिति शेषः ॥ ३३ ॥

रा० टी०—ननु रामेण सह सकलजनगमनं न संभव-तीत्यत आह—द्रक्ष्यसे इति । हे कैकयि केकयीसंबन्धिनि! तस्येदमित्यणि ङीप् । रामेण सह गच्छतः पश्वादीन् तदुन्मुखान् रामसहगमनमतीन् पादपांश्चाद्यैव द्रक्ष्यसे पादपांश्चेत्यनेनायो-ध्यातरूणां चेतनत्वं व्यक्तम् ॥ ३३ ॥

गो० टी०—द्रक्ष्यसीति । पादपांश्च तदुन्मुखानिति वृ-क्षाणां तदुन्मुखत्वं नाम रामविषयस्नेहासक्तत्वं तथोपरिष्टात् स्पष्टीभविष्यति 'अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः' इति ॥ ३३ ॥

३४ ] ति० टी०—एवं वसिष्ठो भाव्यर्थजातमुक्त्वा प्रकृत-मनुष्ठेयमुपदिशति—अथेति । प्रविधीयत इति च्छेदः इकारलोप आर्षः दातुं युज्यत इत्यर्थः । इत्युक्त्वा तद्वसनं परिधानं न्य-वारयत् जानक्या इति शेषः ॥ ३४ ॥

रा० टी०—तात्कालिककर्तव्यमुपदिशन्नाह—अथेति । देवि हे स्वविजयेच्छावति अत उक्तहेतोः चीरं व्यपनीय दूरीकृत्य स्नुषायै सीतायै उत्तमान्याभरणानि देहि । तत्र हेतुः अस्याः चीरं न प्रविधीयते इति अनेन प्रकारेण वसनं चीरं वसिष्ठो न्यवारयत् प्रविधीयतेतीत्यत्र संधिस्तु "मनुने" इत्यत्र योगविभागेन क्वाचित्निपाद्याः असिद्धत्वाभावज्ञापनात् आर्ष-त्वाद्वा ॥ ३४ ॥

---

१ अर्हतीति गो. पाठः । २ द्रक्ष्यसे इति रा. पाठः ।

एकस्य रामस्य वने निवासस्त्वया वृतः केकयराजपुत्रि ।
विभूषितेयं प्रतिकर्मनित्या वसत्वरण्ये सह राघवेण ॥ ३५ ॥
यानैश्च मुख्यैः परिचारकैश्च सुसंवृता गच्छतु राजपुत्री ।
वस्त्रैश्च सर्वैः सहितैर्विधानैर्नेयं वृता ते वरसंप्रदाने ॥ ३६ ॥
तस्मिंस्तथा जल्पति विप्रमुख्ये गुरौ नृपस्याप्रतिमप्रभावे ।
नैव स्म सीता विनिवृत्तभावा प्रियस्य भर्तुः प्रतिकारकामा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

## अष्टात्रिंशः सर्गः ।

चीरं वसानायां वैदेह्यां जनैर्विधीयमानदुःखाक्रोशेनोद्दीपितमन्युर्दशरथः कैकेयीमुपालभत । निर्गच्छन्रामः कौसल्यारक्षणे दशरथं प्रार्थयाम्बभूव ।

तस्यां चीरं वसानायां नाथवत्यामनाथवत् । प्रचुक्रोश जनः सर्वो धिक्त्वां दशरथं त्विति ॥ १ ॥

---

गो० टी०—एव वसिष्ठो भाव्यर्थमुक्त्वा प्रकृतमाह—अथेत्यादि । व्यपनीय निरस्य प्रविधीयत इतीति वक्तव्ये प्रविधीयतेति सन्धिरार्षः ॥ ३४ ॥

३५ ] ति० टी०—दानयोग्यत्वमुपपादयति—एकस्येति । प्रतिकर्म प्रसाधनव्यापारः स नित्यं यस्याः सा अत एव विभूषिता वसत्वरण्ये स्वभर्तृशुश्रूषार्थम् ॥ ३५ ॥

रा० टी०—निवारणे मन्थराया असामर्थ्यं ज्ञात्वा केकयीं प्रत्याह—एकस्येति । हे केकयराजपुत्रि ! एकस्य रामस्यैव वने निवासः त्वया वृतः तेन सीतागमनं निवारयेति सूचितम् । तस्या अपि गमननिवारणे असामर्थ्यं ज्ञात्वा आह—प्रतिकर्म रामसंबन्धिनी सर्वक्रिया तत्र नित्या नित्यसंबन्धवती रामक्रियानिर्वाहिकेत्यर्थः सा इयं सीता राघवेण सह विभूषिता सती अरण्ये वसतु ॥ ३५ ॥

गो० टी०—न प्रविधीयत इत्येतदुपपादयति—एकस्येति । प्रतिकर्मनित्या अलंकारनियता नित्यमलंकरणयोग्येत्यर्थः ॥ ३५ ॥

३६ ] ति० टी०—विधानैरुपकरणैः ॥ ३६ ॥

रा० टी०—यानैरिति । मुख्यैः श्रेष्ठैः यानैः रथादिभिः परिचारकैः भृत्यवर्गैः सर्वैर्वस्त्रैश्च सहितैः हितकारकैः विधानैरुपकरणैश्च संवृता युक्ता राजपुत्री गच्छतु तत्र हेतुः वरसंप्रदाने वरयाचनसमये इयं चीराद्युपकरणसहिता न वृता याचितवतीत्यर्थः वनगमनायेति शेषः । एतेनास्याः अलंकारविशिष्टत्वे न तव क्षतिरिति ध्वनितम् ॥ ३६ ॥

गो० टी०—यानैरिति । विधानैः भृङ्गाराद्युपकरणैः ॥ ३६ ॥

३७ ] ति० टी०—तस्मिन् गुरौ तथा जल्पत्यपि भर्तुः प्रतिकारकामा वेषादिभिस्तदवस्थासदृशावस्थासंपादनकामा सती चीरपरिग्रहाद्विनिवृत्तभावा नैव बभूव स्म ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

रा० टी०—तस्मिन्निति । अप्रतिमप्रभावे तस्मिन् नृपस्य गुरौ जल्पति कथयति सति भर्तुः प्रतिकारकामा भर्तृवल्कादिसदृशवल्कादीच्छावती सीता विनिवृत्तभावा विनिवृत्तचीरधारणाभिप्राया नैवाभवदिति शेषः ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तत्रिंशः सर्गः ॥ ३७ ॥

गो० टी०—तस्मिन्निति । प्रतिकारकामा प्रतिकारं सदृशकरणं कामयमाना भर्तृसदृशतया वनवासकरणमिच्छन्तीत्यर्थः विनिवृत्तभावा चीरपरिधानाद्विनिवृत्तभावा न बभूवेति ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तत्रिंशः सर्गः ॥ ३७ ॥

---

१ ] ति० टी०—तस्यामिति । तद्वदानन्तर्गतायामीदृशमनिष्टव्यवहारमनिवारयंस्तूष्णीं तिष्ठतीति जनाक्रोशः ॥ १ ॥

रा० टी०—सीताचीरधारणसमयभवजनवृत्तमाह—तस्यामिति । नाथवत्यां नित्यं स्वामियुक्तायां तस्यां सीतायां चीरं वसानायां सत्यां त्वां सर्वसंमतिविलक्षणसंमतिदात्रीत्वेन सर्वतो भिन्नां मन्थरां धिगिति सर्वो जनः दशरथमनाथवत् प्रचुक्रोश कथयामास । अयमन्वयपर्यायोऽन्तस्त्वशब्दः ॥ १ ॥

गो० टी०—तस्यामित्यादि । त्वां धिगिति दशरथं चुक्रोशेत्यर्थः ॥ १ ॥

तेन तत्र प्रणादेन दुःखितः स महीपतिः । [ [1]चिच्छेद जीविते श्रद्धां धर्मे यशसि चात्मनः ]
स निःश्वस्योष्णमैक्ष्वाकस्तां भार्यामिदमब्रवीत् । [ [2]कैकेयि कुशचीरेण न सीता गन्तुमर्हति ] ॥ २ ॥
सुकुमारी च बाला च सततं च सुखोचिता । नेयं वनस्य योग्येति सत्यमाह गुरुर्मम ॥ ३ ॥
इयं हि कस्यापि करोति किंचित्तपस्विनी राजवरस्य पुत्री ।
या चीरमासाद्य वनस्य मध्ये जाता विसंज्ञा श्रमणीव काचित् ॥ ४ ॥
चीराण्यपास्याज्जनकस्य कन्या नेयं प्रतिज्ञा मम दत्तपूर्वा ।
यथासुखं गच्छतु राजपुत्री वनं समग्रा सह सर्वरत्नैः ॥ ५ ॥
अजीवनार्हेण मया नृशंसा कृता प्रतिज्ञा नियमेन तावत् ।
त्वया हि बाल्यात्प्रतिपन्नमेतत्तन्मां दहेद्वेणुमिवात्मपुष्पम् ॥ ६ ॥

---

२-३ ] ति० टी०—तेन प्रणादेन जनाक्रोशेन तां भार्यां कैकेयीम् ॥ २ ॥ ३ ॥

रा० टी०—तेनेति । तेन सर्वजनजनितेन प्रणादेन दुःखितः स महीपतिः आत्मनो धर्मे जीविते पालने यशसि च श्रद्धामुत्कटेच्छां चिच्छेद जहौ ॥ २ ॥

रा० टी०—स इति । उष्णं निःश्वस्य हे कैकेयि ! कुशचीरेण युक्ता सीता गन्तुं नार्हति इदं वचनमैक्ष्वाको राजा दशरथस्तां कैकेयीमब्रवीत् ॥ ३ ॥

रा० टी०—तत्र हेतुं वदन्नाह—सुकुमारीति । इयं सीता वनस्य योग्या न इति हेतोर्मम गुरुर्वसिष्ठः सत्यमुचितमाह ॥४॥

गो० टी०—तेनेति । श्रद्धाम् आदरम् ॥ २-४ ॥

४ ] ति० टी०—वनस्य वनगमनयोग्यचीरस्य कस्यापि किंचित्करोति काकुः अपि तु नेत्यर्थः । किंचिद्राज्यप्रतिबन्धादि विसंज्ञा अपरिचिताऽशक्यार्थानुष्ठानप्रसक्तःप्राप्तमोहा श्रमणीव भिक्षुकीव ॥ ४ ॥

रा० टी०—नन्वियमपि राक्षसादिवधादौ साहाय्यं कर्तेत्यत आह—इयमिति । या चीरमासाद्य प्राप्य विसंज्ञा संज्ञारहिता काचिच्छ्रमणीव ब्रह्मचारिणीव जनस्य मध्ये स्थिता सा राजवरस्य जनकस्य पुत्री तपस्विनी नित्यं पातिव्रतरूपतपोयुक्ता इयं सीता कस्यापि किंचिदनिष्टमिति शेषः किं करोति नेत्यर्थः। हिः किमर्थः 'अपकरोति' इति पाठे त्वनिष्टं नाध्याहर्तव्यम् ॥५॥

गो० टी०—इयमिति । तपस्विनी पातिव्रत्यतपोयुक्ता विसंज्ञा मुग्धा श्रमणीव तपस्विनीव श्रमु तपसि खेदे चेति धातुः ॥ ५ ॥

५ ] ति० टी०—अपास्यात्त्यजतु इयं प्रतिज्ञा चीरवासिनी सीता वनं यास्यतीति त्वदीया प्रतिज्ञा न मम दत्तपूर्वा न मया पूर्वमङ्गीकृता वरदानसमये अतो यथासुखं गच्छत्वित्यन्वयः॥५॥

रा० टी०—चीराणीति । अपास्यात् जहातु तत्र हेतुः यतो दत्तपूर्वा वरप्रदानपूर्विका इयं सीता चीरधारणविषयिणी मम प्रतिज्ञा न अतः सर्वरत्नैः सह समग्रा अतिभाग्यवती राजपुत्री यथासुखं सुखमनतिक्रम्य वनं गच्छतु ॥ ६ ॥

गो० टी०—चीराणीति । अपास्यात् त्यजतु इयं प्रतिज्ञा सीतायाश्चीरधारणपूर्वकवनगमनरूपप्रतिज्ञा मम मया तृतीयार्थे षष्ठी समग्रा वस्त्रालङ्कारसंपूर्णा सर्वरत्नैः सर्वश्रेष्ठवस्तुभिः ॥६॥

६ ] ति० टी०—अजीवनार्हेण मुमूर्षुणा अनेन मतिभ्रंशः सूच्यते नृशंसातिक्रूरा प्रतिज्ञा रामवनवासविषया नियमेन शपथपूर्वं सा तावत्कृता यदेतद्धि यतोऽधिकं सीताचीरग्रहणं त्वया प्रतिपन्नमारब्धं तद्बाल्यादज्ञानादेव नात्र ते सामर्थ्यं तस्माद्वेणुमात्मपुष्पमिव त्वत्कृतातिप्रवृत्तिस्त्वां मा दहेन्मा नाशयतु, यद्वा एषा तव प्रवृत्तिस्तव वैधव्यप्राप्तये मां दहेन्नाशयेत् ॥ ६ ॥

रा० टी०—ननु रामचीरधारणे कुतो नैवं दुःखमित्यत आह—अजीवनार्हेणेति । अजीवनार्हेण प्रतिज्ञाभङ्गे जावनायोग्येन मया त्वया करणभूतया नियमेन यदा याचितासि तदा दातास्मीति मत्कर्तृकनियमनेन हेतुभूतेन बाल्यादसमये एवमियं याचिष्यतीत्येतद्विषयकाज्ञानान्नृशंसा अत्युत्साहभङ्गेन सर्वजनघातिका अजीवनार्हेण समर्थपुत्रवत्त्वात्पालनायोग्येन मया तावत्प्रथमं कृता या प्रतिज्ञा त्वयाचितं ददामीति प्रतिश्रवणं तत् ततः प्रतिपन्नं प्राप्तम् एतद्रामचीरधारणजनितदुःखमपि दहेत् दहति शोषयतीत्यर्थः । तत्र दृष्टान्तः आत्मपुष्पं वेणुं वंशमिव एतेन दुःखप्रदत्वेऽपि तच्चीरधारणस्य प्रतिज्ञाविषयीभूतत्वादनिवार्यत्वं सूचितम् । हिरप्यर्थे॥७॥

गो० टी०—अजीवनार्हेणेति । अजीवनार्हेण जीवनानर्हेण आसन्नमरणेनेति यावत् मया नृशंसा क्रूरा प्रतिज्ञा त्वत्प्रार्थितं करिष्यामीति शपथपूर्विका प्रतिज्ञा तावत् प्रथमं कृता त्वया हि दत्तवरद्वयया बाल्यात् बालिशत्वात् एतत् प्रतिज्ञानं नियमेन भरताभिषेकरामविवासनरूपविषयव्यवस्थया प्रतिपन्नं निश्चितं तत् मत्कृतप्रतिज्ञानमात्मपुष्पं वेणुमिव मां दहेदिति योजना ॥ ७ ॥

---

१ अर्धमेतदधिकं गो. रा. पाठे । २ अर्धमेतदधिकं गो. रा. पाठे । ३ अपकरोतीति गो.पाठः । ४ कन्येति गो. पाठः । ५ जनस्येति गो. रा. पाठः । ६ स्थितेऽपि शैः रा. पाठः । ७ मामिति गो. रा. पाठः ।

रामेण यदि ते पापे किंचित्कृतमशोभनम् । अपकारः क इह ते वैदेह्या दर्शितोऽधम ॥ ७ ॥
मृगीवोत्फुल्लनयना मृदुशीला मनस्विनी । अपकारं कमिवं ते करोति जनकात्मजा ॥ ८ ॥
ननु पर्याप्तमेवं ते पापे रामविवासनम् । किमेभिः कृपणैर्भूयः पातकैरपि ते कृतैः ॥ ९ ॥
प्रतिज्ञातं मया तावत्त्वयोक्तं देवि शृण्वता । रामं यदभिषेकाय त्वमिहागतमब्रवीः ॥ १० ॥
तत्त्वेतत्समतिक्रम्य निरयं गन्तुमिच्छसि । मैथिलीमपि या हि त्वमीक्षसे चीरवासिनीम् ॥ ११ ॥
[ इतीव राजा विलपन्महात्मा शोकस्य नान्तं स ददर्श किंचित् ।
भृशातुरत्वाच्च पपात भूमौ तेनैव पुत्रव्यसने निमग्नः ॥ ]
एवं ब्रुवन्तं पितरं रामः संप्रस्थितो वनम् । अवाक्शिरसमासीनमिदं वचनमब्रवीत् ॥ १२ ॥
इयं धार्मिक कौसल्या मम माता यशस्विनी । वृद्धा चाक्षुद्रशीला च न च त्वां देव गर्हते ॥ १३ ॥

७-८ ] ति० टी०—अशोभनमपराधः वैदेह्या ते कोऽपकारश्चीरग्रहणपूर्वकवनवासप्रयोजनको दर्शितः संपादितः॥७॥८॥

रा० टी०—इदानीं राममात्रस्यैव गमने प्रयोजनमिति बोधयन्नाह-रामेणेति । यदि यदा त्वद्वरयाचनानन्तरकाले रामेण हेतुभूतेन अधमे पापे राक्षसे किंचित् राक्षसत्वनिष्ठासिफलकैश्वर्यादित्याजनमशोभनं ते त्वया मया च कृतं प्रमाणतो निश्चितं तदा वैदेह्या कः अपकारः राक्षसापकृतिः दर्शितो निश्चितः न कोऽपीत्यर्थः ॥ ८ ॥

गो० टी०—कोपे रामापराधमभ्युपेत्याह—रामेणेति । अशोभनमपराधः इह विवासे दर्शितः संपादित इति यावत् ॥ ८ ॥

रा० टी०—इहापि कस्यचिदपकारोऽनया न कृत इति बोधयन्नाह—मृगीति । ते तव स्नुषा जनकात्मजा इह अयोध्यायामपकारं कस्यचिदपकृतिं किं करोति न किमपीत्यर्थः । एतेनैतत्सांनिध्ये रामोऽपि न कंचन हन्तीति सूचितम् एतेन तस्या दयालुत्वातिशयः सूचितः तेनैतद्गमनं नोचितमिति सूचितम्॥९॥

गो० टी०—मृगीति । मृगीवोत्फुल्लनयनेत्यनेन मौग्ध्यमुक्तं मृदुशीलेत्यनेन अपराधभीरुत्वमुक्तम् ॥ ९ ॥

९ ] ति० टी०—ते तव एवं रामविवासनं चीरादिवैशिष्ट्येन रामवनगमनं पर्याप्तं सकलनरकानुभवायालं ते त्वया कृतैरेभिरपि कृपणैरनिर्वाच्यदुःखप्रदैः सीताप्रव्राजनादिरूपैः पातकैः किं किमनुभविष्यसि वा न जानामीति शेषः ॥ ९ ॥

रा० टी०—सीताविवासने दोषान्तरं वदन्नाह—नन्विति । एवमनेन प्रकारेण रामविवासनमेव पापे पापिराक्षसार्थं पर्याप्तं परिपूर्णमतः एभिः कृपणैः कार्पण्यहेतुभिः अत एव पातकैः पापसंपादकैः ते कृतैः त्वत्कर्तृकसीताविवासनव्यापारैः किं न किमपीत्यर्थः ॥ १० ॥

गो० टी०—नन्विति । पर्याप्तं यावदात्मभावि नरकानुभावायालम् ॥ १० ॥

१० ] ति० टी०—अभिषेकाय मया कृतनिश्चयं पश्चात्तत्प्रतिबन्धे त्वया कृते मत्प्रेरणयेहागतं रामं प्रति यत्त्वमब्रवीर्जटाचीरधरो वनं गच्छेति तत्त्वयोक्तं शृण्वता मया तावदेव प्रतिज्ञातं तथास्त्वित्यनुमतं न तु सीताप्रव्राजनादि ॥ १० ॥

रा० टी०—प्रतिज्ञातमिति। इहागतं राममभिषेकाय इदानीन्तनाभिषेकं निवर्तयितुं यत्त्वमब्रवीस्तत् त्वयोक्तं शृण्वता मया प्रतिज्ञातमङ्गीकृतम् ॥ ११ ॥

गो० टी०—प्रतिज्ञातमिति । अभिषेकाय इहागत रामं त्वं यदब्रवीः 'सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिमं त्यक्त्वा जटाचीरधरो वस ' इति यदब्रवीः त्वयोक्तं तच्छृण्वता मया तावत् रामविवासनमात्रमेव प्रतिज्ञातं न तु सीताप्रव्राजनमिति भावः ॥ ११ ॥

११ ] ति० टी०—एतत्त्वोक्तं तदातिक्रम्याधिकार्थे प्रवृत्तत्वान्निरयं गन्तुमर्हसि । कोऽत्र मेऽतिक्रमोऽत आह—मैथिलीमिति । ईक्षसे वाञ्छसि "स ऐक्षत बहु स्यां प्रजायेय" इत्यादाविच्छार्थस्येक्षतेर्दर्शनात् ॥ ११ ॥

रा० टी०—तदिति । मैथिलीं चीरवासिनीं सतीं याहि इति यत्त्वमीक्षसे ईक्षापूर्वकं कथयसि तदेतत्पूर्वप्रतिज्ञातं समतिक्रम्य निरयममङ्गलं गन्तुं गमयितुं जनानिति शेषः किमर्थमिच्छसि । अपिः किमर्थमित्यर्थे ॥ १२ ॥

रा० टी०—इतीति । भृशातुरत्वाद्धेतोः इत्यनेन प्रकारेण विलपन् राजा शोकस्य अन्तं निवर्तकं किंचिन्न ददर्श अत एव तेन तादृशेन पुत्रव्यसनेन पुत्रवियोगजनितदुःखेन निमग्नोऽभिभूतो राजा भूमौ पपात ॥ १३ ॥

गो० टी०—तदिति । मया प्रतिज्ञातमतिक्रम्य निरयं नरकं गन्तुमिच्छसि कुतः हि यस्मात् या त्वं मैथिलीमपि चीरवासिनीमीक्षसे वाञ्छसि ॥ १२ ॥ १३ ॥

१२ ] ति० टी०—एवं ब्रुवन्तं सीता यथासुखं गच्छत्विति ब्रुवन्तं संप्रस्थित एवं वादात्तया सह गमने कृतानुमतिकत्वात्तया गन्तुं प्रवृत्तः ॥ १२ ॥

रा० टी०—एवमिति । वनं संप्रस्थितो रामः इदं वचनं पितरमब्रवीत् ॥ १४ ॥

गो० टी०—एवमिति । संप्रस्थितो गन्तुमुद्यतः ॥ १४ ॥

१३ ] ति० टी०—न च गर्हते त्वदाज्ञया मयि वनं गच्छत्यपीति शेषः । सत्यरक्षणं धर्म इति शास्त्रेरिति भावः ॥ १३ ॥

१ अधमेति गो. पाठः । २ तपस्विनीति गो.पाठः । ३ इहेति गो. रा. पाठः । ४ एतदिति गो. पाठः । ५ दृश्यतेऽयधिकः श्लोकः गो. ग. पाठे । ६ व्यसनेन मग्न इति रा. पाठः ।

मया विहीनां वरद प्रपन्नां शोकसागरम् । अदृष्टपूर्वव्यसनां भूयः संमन्तुमर्हसि ॥ १४ ॥
[ पुत्रशोकं यथा नर्च्छेत्त्वया पूज्येन पूजिता । मां हि संचिन्तयन्ती सा त्वयि जीवेत्तपस्विनी ॥ ]
इमां महेन्द्रोपमजातगर्धिनीं तथा विधातुं जननीं ममार्हसि ।
यथा वनस्थे मयि शोककर्शिता न जीवितं न्यस्य यमक्षयं व्रजेत् ॥ १५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

## एकोनचत्वारिंशः सर्गः ।

दशरथेनामन्त्रितः सुमन्त्रो रामप्रापणार्थं रथं सज्जीचकार । धनाधिकृतानीताभरणैः सीतात्मानमलंचक्रे । राज्यभ्रंशितरामो नाव-मन्तव्य इति कौशल्या सीतामन्वशात्तदङ्गीकृत्य सीता स्वैवंनत्यं प्राकाशयत् । रामः कौसल्यामाश्वास्येतरमातॄः क्षमामयाचत् । तास्तूच्चतर भृशं चुक्रुशुः ।

रामस्य तु वचः श्रुत्वा मुनिवेषधरं च तम् । समीक्ष्य सह भार्याभी राजा विगतचेतनः ॥ १ ॥
नैनं दुःखेन संतप्तः प्रत्यवैक्षत राघवम् । न चैनमभिसंप्रेक्ष्य प्रत्यभाषत दुर्मनाः ॥ २ ॥
स मुहूर्तमिवासंज्ञो दुःखितश्च महीपतिः । विललाप महाबाहू राममेवानुचिन्तयन् ॥ ३ ॥
मन्ये खलु मया पूर्वं विवत्सा बहवः कृताः । प्राणिनो हिंसिता वापि तन्मामिदमुपस्थितम् ॥ ४ ॥

रा० टी०–तद्वचनमेवाह–इयमिति । अक्षुद्रशीला महाशीलविशिष्टेत्यर्थः । त्वां न गर्हते मद्वियोगहेतुत्वबुद्ध्या न निन्दति ज्ञाताभिप्रायत्वादिति तात्पर्यम् ॥ १५ ॥

गो० टी०–इयमित्यादि । प्रपन्नां प्राप्तां भूयः अतिशयेन संमन्तुं संमानयितुं ज्येष्ठपत्नीत्वेन पूर्वमेव संमानिता अद्य विशेषेण मयाऽन्ययेति भावः ॥ १२ ॥ १६ ॥

१४ ] ति० टी०–प्रपन्नां प्राप्तां भूयः संमन्तुं प्रधानपत्नीत्वात्क्रियमाणसंमानामपि भूयोऽधिकं संमन्तुमर्हसि संमन्तुं तस्याः समानं कर्तुं मत्प्रार्थनयेति शेषः ॥ १४ ॥

रा०टी०–मयेति । हे वरद ! अदृष्टपूर्वव्यसनां मया विहीनामत एव शोकसागरं प्रपन्नां प्राप्तां निमग्नामित्यर्थः । कौसल्यां भूयोऽधिकं संमन्तुमर्हसि ॥ १६ ॥

गो० टी०–पुत्रशोकमिति । पुत्रशोकं यथा नर्च्छेत्तथा संमन्तुमर्हसीति पूर्वेण संबन्धः, यद्वा उत्तरेणैवान्वयः मां संचिन्तयन्तीयं तपस्विनी अपि जीवेत् यदि जीवेत्तदा त्वया पूजिता सती पुत्रशोकं यथा नर्च्छेत् न गच्छेत्तथा कुर्वित्यर्थः । 'न मच्छोकाद्यथा नश्येत्त्वया पूज्येन पूजिता । मां हि संचिन्तयन्तीयं त्वयि जीवेत्तपस्विनी' इत्यपि पाठः । पूर्वार्धस्य पूर्वेणान्वयः त्वयि विषये जीवेत् मां चिन्तयन्त्यपि त्वदुपलालनेन जीवेदित्यर्थः, यद्वा मां संचिन्तयन्ती मच्छोकाद्यथा न नश्येत्तथा त्वया पूजिता त्वयि जीवेदित्येकं वाक्यम् ॥ १७ ॥

१५ ] ति० टी०–जातगर्धिनीं त्वत्समीपे जातो मद्दर्शनविषयो गर्धोऽभिलाषो यस्यास्तां न्यस्य त्यक्त्वा ॥ १५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०–इमामिति । हे महेन्द्रोपम! जातगर्धिनीं निरन्तरमद्दर्शनविषयकातिशयेच्छावतीं मम जननीं वनस्थे मयि शोककर्शिता सती जीवितं स्वपरिकरपालनं न्यस्य परित्यज्य यमक्षयं कालागम्यमप्रकटसाकेतमित्यर्थः यथा न व्रजेत्तथा विधातु त्वमर्हसि ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०–इमामिति । जातगर्धिनीं पुत्रदर्शनकाङ्क्षिणीमित्यर्थः । न्यस्य त्यक्त्वा ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

१ ] ति० टी०–रामस्येति । विगतचेतनोऽभूदिति शेषः॥१॥

रा० टी०–रामस्येति । वचो वचनं श्रुत्वा मुनिवेषधरं तं रामं समीक्ष्य च भार्याभिः सह राजा विगतचेतनः कर्तव्यविषयकनिश्चयाभाववानासीदिति शेषः ॥ १ ॥

गो० टी०–रामस्येति । विगतचेतनः अभूदिति शेषः ॥ १–२ ॥

२–३ ] ति० टी०–न प्रत्यवैक्षत द्रष्टुं नाशक्नोत् ॥ २ ॥ ३॥

रा० टी०–नेति । एनं राघवं दुःखेन सन्तप्तो राजा न प्रत्यवैक्षत अत्यन्तं नावालोकयत् अभिसंप्रेक्ष्य किंचिदवलोक्यापि न प्रत्यभाषत ॥ २ ॥

रा० टी०–स इति । दुःखितः अतिदुःखाक्रान्तः अत एव असंज्ञः संज्ञारहित इव स महीपतिः मुहूर्तं विललाप विविधमभाषत ॥ ३ ॥

४ ] ति० टी०–विवत्सा इति धेनव इति शेषः ॥ ४ ॥

१ शोकेऽवमर्षिक गो. पाठे । २ तस्मादिति गो. पाठः ।

न त्वेवानागते काले देहाच्च्यवति जीवितम् । कैकेय्या क्लिश्यमानस्य मृत्युर्मम न विद्यते ॥ ५ ॥
योऽहं पावकसंकाशं पश्यामि पुरतः स्थितम् । विहाय वसने सूक्ष्मे तापसाच्छादमात्मजम् ॥ ६ ॥
एकस्याः खलु कैकेय्याः कृतेऽयं खिद्यते जनः । स्वार्थे प्रयतमानायाः संश्रित्य निकृतिं त्विमाम् ॥ ७ ॥
एवमुक्त्वा तु वचनं बाष्पेण [2]विहतेन्द्रियः । रामेति सकृदेवोक्त्वा व्याहर्तुं न शशाक [3]सः ॥ ८ ॥
संज्ञां तु प्रतिलभ्यैव मुहूर्तात्स महीपतिः । नेत्राभ्यामश्रुपूर्णाभ्यां सुमन्त्रमिदमब्रवीत् ॥ ९ ॥
[4]औपवाह्यं रथं युक्त्वा त्वमायाहि हयोत्तमैः । प्रापयैनं महाभागमितो जनपदात्परम् ॥ १० ॥
एवं मन्ये गुणवतां गुणानां फलमुच्यते । पित्रा मात्रा च यत्साधुर्वीरो निर्वास्यते वनम् ॥ ११ ॥

रा० टी०—तद्भाषणमेवाह—मन्ये इत्यादिभिः । विवत्सा वत्सरहिता कृताः बहवो धेनव इति शेषः प्राणिनो मनुष्यादयो वा हिंसिताः किंच बहवः प्राणिनः विवत्साः प्रियापत्यरहिताः कृताः अत एव हिंसिताः पीडिताः तत्तस्माद्धेतोः इदं दुःखं मामुपस्थितम् एतेन तस्मिन्काले वियोगदुःखेन स्वपापसंसर्गित्वाभावादिविस्मृत इति सूचितम् तेन तद्दुःखस्य परा काष्ठा सूचिता ॥ ४ ॥

गो० टी०—मन्य इति । विवत्साः धेनव इति शेषः उपस्थितमित्यत्रेतिकरणं द्रष्टव्यम् इति मन्य इत्यन्वयः ॥ ४ ॥

५ ] ति० टी०—कैकेय्या क्लिश्यमानस्यापि मम यतो मृत्युर्न विद्यते तत्प्राप्तिर्न दृश्यतेऽतः कालेऽनागते देहाज्जीवितं नैव च्यवते इति जाने इति शेषः ॥ ५ ॥

६ ] ति० टी०—आच्छाद्यतेऽनेनेत्याच्छादः तापसानामाच्छादो यस्य तादृशमात्मजं पश्यामि यस्तस्य मे मृत्युर्न विद्यत इत्यन्वयः ॥ ६ ॥

रा० टी०—इदं दुःखं मृते सति कथंचिन्निवर्तेत तत्त्वस्माकं दुर्लभमिति बोधयन्नाह—नेति । अनागते अने सर्वरक्षके परमात्मनि आगते नित्यं प्राप्ते अत एव अकाले कालगतिरहिते जने विद्यमानादेहाज्जीवितं जीवनं नैव भवति अतो हेतोः सूक्ष्मे वसने वाससी विहाय तापसाच्छादं तपस्विजनोचिताच्छादनविशिष्टं पावकसंकाशं पुरतः स्थितमात्मजं कैकेय्या सहितो योऽहं पश्यामि तस्य क्लिश्यमानस्य मम मृत्युर्न विद्यते एतेन रामागमनात्पूर्वं तद्दुःखस्य दुष्परिहरत्वं सूचितम् । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—नेति । काले देहारम्भककर्मविनाशकाले ॥ ५ ॥ ६ ॥

७–८ ] ति० टी०—जनः कैकेयीव्यतिरिक्तः सर्वोऽपि इमां निकृतिं वरलक्षणशाठ्यं संश्रित्येत्यस्य स्थितायाः इति शेषः॥७॥८॥

रा० टी०—अकालविवासने केकय्या नापराध इति बोधयन्नाह—एकस्या इति । इमां प्रसिद्धां निकृतिं शाठ्यं संश्रित्य स्वार्थे अहमतीव राज्ञीप्रियेत्यर्थे प्रयतमानायाः केकय्याः केकयप्रेषितायाः केकयीदास्या इत्यर्थः एकस्याः प्रधानायाः मन्थरायाः कृते कृतिसाध्ये अकालिकरामविवासने अयं सर्वो जनः खिद्यते 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा । साधारणे समानेऽल्पे संख्यायां च प्रवर्तते' इत्यभियुक्तोक्तिः ॥ ७ ॥

रा० टी०—एवमिति । बाष्पेण अश्रुणा पिहितेक्षणः व्याप्तनेत्रः स राजा एवं वचनमुक्त्वा रामेति सकृदेकवारमुक्त्वा व्याहर्तुमन्यत्किंचिद्वक्तुं नैव शशाक ॥ ८ ॥

गो० टी०—एकस्या इति । निकृतिः शाठ्यम् ' कुसृतिनिकृतिः शाठ्यम् ' इत्यमरः । निकृतिं संश्रित्य स्वार्थे प्रयतमानाया इत्यन्वयः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—नेत्राभ्यामुपलक्षितः ॥ ९ ॥

रा० टी०—संज्ञामिति । उपलभ्य प्राप्य अश्रुपूर्णाभ्यां नेत्राभ्यामुपलक्षितो महीपतिः इदमब्रवीत् ॥ ९ ॥

गो० टी०—संज्ञां त्विति । नेत्राभ्यामित्युपलक्षणे तृतीया ॥ ९ ॥

१० ] ति० टी०—औपवाह्यं वाहनमात्रोपयुक्तं युद्धानर्हमित्यर्थः युक्त्वा योजयित्वा । 'योज्या' इति पाठेऽप्येवमेव परं दक्षिणस्यामिति शेषः ॥ १० ॥

रा० टी०—तद्वचनमेवाह—उपवाह्यमिति । हयोत्तमैः उत्तमाश्वैः रथं युक्त्वा योजयित्वा त्वमायाहि इह प्राप्नुहि । तत्प्रयोजनमाह—उपवाह्यं नित्यं रथकरणकवहनकर्मीभूतं महाभागमेनं राममितोऽस्माज्जनपदात्परं जनपदं देशं प्रापय । 'औपवाह्यम्' इति पाठस्तु स्वार्थिकष्यञा साधुः ' योज्य ' इति पाठे तु ल्यबार्षः ॥ १० ॥

गो० टी०—औपवाह्यमिति । औपवाह्यम् उपवहनमात्रयोग्यं युद्धानर्हमित्यर्थः राजयोग्यमिति वार्थः । युक्त्वा योजयित्वा ॥ १० ॥

११ ] ति० टी०—साधुर्वीरो रामः पित्रा मात्रा च वनं निर्वास्यते यत् अतो गुणवतां पुंसां गुणानां फलमेवं निर्वासनरूपमुच्यते शास्त्रेणेति मन्ये इति दुःखातिशयादुक्तिः उत्प्रेक्षालंकारः ॥ ११ ॥

रा० टी०—एवमिति । साधुर्वीरः पुत्रः पित्रादिना यन्निर्वास्यते तद्गुणवतां गुणानां फलमुच्यते ॥ ११ ॥

गो० टी०—एवमिति । गुणवतां पुंसां संबन्धिगुणानां फलं यदुच्यते तदेवमेवंविधं मन्ये अननुरूपं मन्ये । एवं-

१ क्लिश्यते इति गो. पाठः । २ पिहितेति गो. रा. पाठः । ३ हेति गो. पाठः । ४ उपवाह्यमिति रा. पाठः ।

राज्ञो वचनमाज्ञाय सुमन्त्रः शीघ्रविक्रमः । योजयित्वा ययौ तत्र रथमश्वैरलंकृतम् ॥ १२ ॥
तं रथं राजपुत्राय सूतः कनकभूषितम् । आचचक्षेऽञ्जलिं कृत्वा युक्तं परमवाजिभिः ॥ १३ ॥
राजा सत्वरमाहूय व्यापृतं वित्तसंचये । उवाच देशकालज्ञो निश्चितं सर्वतः शुचिः ॥ १४ ॥
वासांसि च वैराहाणि भूषणानि महान्ति च । वर्षाण्येतानि संख्याय वैदेह्याः क्षिप्रमानय ॥ १५ ॥
नरेन्द्रेणैवमुक्तस्तु गत्वा कोशगृहं ततः । प्रायच्छत्सर्वमाहृत्य सीतायै क्षिप्रमेव तत् ॥ १६ ॥
सा सुजाता सुजातानि वैदेही प्रस्थिता वनम् । भूषयामास गात्राणि तैर्विचित्रैर्विभूषणैः ॥ १७ ॥
व्यराजयत वैदेही वेश्म तत्सुविभूषिता । उद्यतोंऽशुमतः काले खं प्रभेव विवस्वतः ॥ १८ ॥
तां भुजाभ्यां परिष्वज्य श्वश्रूर्वचनमब्रवीत् । अनाचरन्तीं कृपणं मूर्ध्न्युपाघ्राय मैथिलीम् ॥ १९ ॥

वक्ष्यदर्थमाह—पित्रेति । यस्मात्साधुर्वीरः पित्रा मात्रा च वनं प्रति निर्वास्यते अतो गुणा नार्जनीया एवेति भावः ॥ ११ ॥

१२ ] ति० टी०—रथं योजयित्वा तत्र रामसंनिधौ ययौ ॥ १२ ॥

रा० टी०—राज्ञ इति । शीघ्रविक्रमः अतित्वरया कार्यसाधकः सुमन्त्रः तत्र रामसन्निधौ ययौ प्राप ॥ १२ ॥

गो० टी०—राज्ञ इति । शीघ्रविक्रमः शीघ्रपदविक्षेपः योजयित्वा ययावित्यत्र आययाविति पदच्छेदः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—आचचक्षे रथ उपस्थित इत्युक्तवान् ॥ १३ ॥

रा० टी०—तमिति । अञ्जलिं प्रणयसूचकं करयुगलकरं कृत्वा परमवाजिभिर्युक्तं रथमाचचक्षे भवत्पित्राज्ञप्तेन मया रथोऽयं प्रापित इत्युवाच ॥ १३ ॥

१४ ] ति० टी०—वित्तसंचये व्यापृतं धनाध्यक्षमित्यर्थः निश्चितं वच उवाचेत्यन्वयः सर्वतः शुचिरिहामुत्रानृणः ॥ १४ ॥

रा० टी०—राजेति । सर्वतः सर्वप्रकारेण शुचिः कापट्यादिसंसर्गरहितः देशकालज्ञो राजा वित्तसंचये धनधान्यसंग्रहे व्यापृतं नियुक्तं कोशाधिकारिणमित्यर्थः सत्वरमाहूय निश्चितं वचः उवाच । 'शुचिम्' इति भूषणपाठः ॥ १४ ॥

गो० टी०—राजेति । वित्तसंचये कोशगृहे व्यापृतम् अध्यक्षत्वेन व्यापृतं धनाध्यक्षमित्यर्थः । निश्चितं यावदवस्थिततत्तद्वस्तुविषयनिश्चितज्ञानवन्तं शुचिं बाह्यान्तरशुद्धियुक्तम् ॥ १४ ॥

१५ ] ति० टी०—एतानि वर्षाणि चतुर्दशवर्षाणि एतैरेतावन्त्येव वनवासो नाधिक इति पुनर्दानाभाव ध्वनितम् ॥ १५ ॥

रा० टी०—तद्वचनमेवाह—वासांसीति । एतानि वनवासे नियमितानि वर्षाणि संख्याय ज्ञात्वा वराहाणि अतिप्रशंसनीयानि वासांसि चतुर्दशवर्षेषु धारणयोग्यवस्त्राणि तादृशानि भूषणानि च वैदेह्याः वैदेह्यर्थं क्षिप्रमानय ॥ १५ ॥

गो० टी०—वासांसीति । वर्षाण्येतानि संख्याय गणयित्वा चतुर्दशवर्षपर्याप्तान्यानयेत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—प्रायच्छत्कोशाध्यक्षः । 'सममेव' इति पाठे वचनसमकालमेवेत्यर्थः ॥ १६ ॥

रा० टी०—नरेन्द्रेणेति । ततः राजसमीपात्कोशगृहं गत्वा तत् राजाज्ञप्तं सर्वमाहृत्य आनीय सीतायै प्रायच्छत् ॥ १६ ॥

गो० टी०—नरेन्द्रेणेति । प्रायच्छत् कोशाध्यक्ष इति शेषः । समं युगपत् तत्सर्वमित्यन्वयः ॥ १६ ॥

१७ ] ति० टी०—सुजाताऽयोनिजा सुजातानि सामुद्रिकोक्तलक्षणवन्ति गात्राणीत्यन्वयः ॥ १७ ॥

रा० टी०—सेति । सुजाता शोभनं सर्वमङ्गलकारकं जातं जन्म यस्याः सा वनं प्रस्थिता वैदेही सुजातानि शोभनलक्षणवन्ति गात्राणि तैः राज्ञा दापितैः विचित्रैर्विभूषणैर्भूषयामास ॥ १७ ॥

गो० टी०—सा सुजातेति । सुजाता सुजन्मा अयोनिजेति यावत् सुजातानि 'समः समविभक्ताङ्गः' इतिवत्सामुद्रिकोक्तलक्षणवत्तया उत्पन्नानि ॥ १७ ॥

१८ ] ति० टी०—उद्यत उदयं प्राप्नुवतः काले प्रातःकाले. अनेन लेशतोऽपि विषादराहित्यं तस्याः सूचितम् ॥ १८ ॥

रा० टी०—व्यराजयतेति । सुविभूषिता शोभनविभूषणविशिष्टा वैदेही तस्याधिष्ठितं वेश्म गृहं व्यराजयत अशोभयत तत्र दृष्टान्तः उद्यतः उदयं प्राप्नुवतः अंशुमतः प्रशस्तकिरणविशिष्टस्य विवस्वतः सूर्यस्य प्रभा कान्तिः काले घनापनाच्छन्नसमये खमाकाशमिव एतेन तस्याः परमोत्साहः सूचितः ॥ १८ ॥

गो०टी०—व्यराजयतेति । अंशुमतः प्रशस्तकिरणस्य १८

१९ ] ति० टी०—कृपणमनाचरन्तीं क्षुद्राचाररहितां तां भर्तृशुश्रूषापरां सीताम् ॥ १९ ॥

रा० टी०—तामिति । कृपणं कार्पण्यमनाचरन्तीमुदारस्वभावामित्यर्थः मां मैथिलीं मूर्ध्न्युपाघ्राय भुजाभ्यां परिष्वज्य श्वश्रूः कौसल्या वचनमब्रवीत् ॥ १९ ॥

गो० टी०—तामिति । श्वश्रूः कौसल्या कृपणं क्षुद्रम् अनाचरन्तीमकुर्वतीम् ॥ १९ ॥

१ कालज्ञमिति गो. पाठः । २ शुचिमिति गो. पाठः । ३ महार्हाणीति गो. पाठः । ४ वराणीति गो. पाठः । ५ सममेवेति गो. पाठः ।

असत्यः सर्वलोकेऽस्मिन्सततं सत्कृताः प्रियैः । भर्तारं नानुमन्यन्ते[1] विनिपातगतं स्त्रियः ॥ २० ॥
एष स्वभावो नारीणामनुभूय पुरा सुखम् । अल्पामप्यापदं प्राप्य दुष्यन्ति प्रजहत्यपि ॥ २१ ॥
असत्यशीला विकृता दुर्गा[2] अहृदयाः सदा । असत्यः[3] पापसंकल्पाः क्षणमात्रविरागिणः[4] ॥ २२ ॥
न कुलं न कृतं विद्या[5] न दत्तं नापि संग्रहः[6] । स्त्रीणां गृह्णाति हृदयमनित्यहृदया हि ताः ॥ २३ ॥
साध्वीनां तु[7] स्थितानां तु शीले सत्ये श्रुते स्थिते[8] । स्त्रीणां पवित्रं परमं पतिरेको विशिष्यते ॥ २४ ॥

२० ] ति० टी०—सततं प्रियैः सत्कृता अपि विनिपातगतं कृच्छ्रगतं भर्तारं याः शुश्रूषितुं नानुमन्यन्ते ताः सर्वलोके परलोक इहलोके चासत्योऽसतीत्वेन गणिताः ॥ २० ॥

रा० टी०—तद्वचनमेवाह—असत्य इति । प्रियैः स्वस्वामिभिः सततं सत्कृताः याः स्त्रियः विनिपातगतं त्यक्तैश्वर्यं भर्तारं नाभिमन्यन्ते असेव्यत्वेन नेच्छन्ति ताः अस्मिन् लोकवेदप्रसिद्धे सर्वलोके असत्यः पापिन्य इत्यर्थः ॥ २० ॥

गो० टी०—असत्य इति । असत्यः कुलटाःविनिपातगतं स्वस्थानात्प्रच्युतिं प्राप्तमित्यर्थः नानुमन्यन्ते न गणयन्ति ॥२०॥

२१ ] ति० टी०—नारीणां प्रकृतत्वादसतीनां यत्पुराऽनापदवस्थायां सुखं भर्तृदत्तमनुभूय तस्याल्पामपि रोगदारिद्र्यादिलक्षणमापदं प्राप्य दृष्ट्वा तं दुष्यन्ति दूषयन्ति नानादूषणयुक्तत्वेन वदन्ति नैतावदेव प्रजहत्यपि ॥ २१ ॥

रा० टी०—एष इति । पुरा अनापत्काले सुखं पत्या सहानन्दमनुभूय भुक्त्वा अल्पामीषदपि आपदं पत्यापत्तिं प्राप्य दृष्ट्वेत्यर्थः दुष्यन्ति नानादुर्गुणैर्दूषयन्ति प्रजहति त्यजन्त्यपि एषः पत्युर्दोषवादः त्यागश्च नारीणां दुष्टस्त्रीणां स्वभावः । कर्तृकर्मणी अध्याहर्तव्ये ॥ २१ ॥

गो० टी०—एष इति । दुष्यन्ति विकृता भवन्तीत्यर्थः । प्रजहति " अदभ्यस्तात् " इत्यदादेशः ॥ २१ ॥

२२ ] ति० टी०—असत्यशीला असत्यवचनशीला विकृता विकृतोपेताक्ष्यादिव्यापाराः दुर्गा दुष्टाभिसरणादिगतिशीलाः अहृदयाः स्वभर्तरि विरसाः असत्यः कुलटाः पापे परपुरुषप्रसङ्गादौ संकल्पो मनोव्यापारो यासां क्षणमात्रविरागिणः क्षणमात्रविरागिण्य इत्यर्थः अल्पनिमित्ततः क्षणमात्रेण त्यक्तानुरागाः अविश्वसनीयस्नेहा इति यावत् । विरागिण इत्यत्र ङीबभाव आर्षः ता असत्य इति विधेयम् ॥ २२ ॥

रा० टी०—स्वभावान्तराणि वर्णयन्नाह—असत्यशीला इति । असत्यं मृषा कथनं शीलं स्वभावो यासां ताः अत एव विकृताः दर्शनमात्रेण विकारोत्पादिकाः अत एव दुर्गाः दुरवगाह्याभिप्रायाः अत एव अहृदया न हृदयं स्वपतिविषयकं मनो यासां ताः अत एव पापसंकल्पाः पापेषु परपुरुषप्रसक्त्यादिषु संकल्पो यासां ताः अत एव क्षणमात्रविरागिणः पुरुषान्तरलावण्यमवलोक्य ततोऽपि तूर्णं विरक्तचित्ताः असत्यः स्त्रियो भवन्तीति शेषः । क्षणमात्रविरागिण इति सामान्ये नपुंसकम् एतेनैवंविधाः स्त्रियः दूरतः परिहर्तव्या इति ध्वनितम् ॥ २२ ॥

गो० टी०—असत्यशीला इति । विरागिणः विरागिण्यः ङीबभाव आर्षः ॥ २२ ॥

२३ ] ति० टी०—कुलं प्रशस्तं, कृतमुपकारः, विद्या गुरूपदिष्टधर्मविद्या, दत्तं भूषणादिदानं, संग्रहो दृष्टेऽपि दोषे स्वीकारः यद्वा संग्रहो बन्धनादि एतत्सर्वमपि स्त्रीणामसतीनां हृदयं न गृह्णाति पापप्रवृत्तेर्न प्रतिबध्नाति नञ्बाहुल्यमप्रतिबन्धदार्ढ्यप्रतिपादनाय 'कामातुराणां न भयं न लज्जा' इति न्यायात् । कुलाद्युचितं कृत्यं पृष्ठे कृत्वा लोकगर्हितकृत्य एव प्रवर्तन्ते कुतः यतोऽनित्यहृदया अव्यवस्थितचित्ताः ॥ २३ ॥

रा० टी०—ननु मामकीं रीतिमवलोक्य ता अपि स्वदुःस्वभावं त्यक्ष्यन्ति इत्यतः स्वभावान्तराण्याह—नेति । कुलं शोभनकुलोत्पत्तिः स्त्रीणां दुष्टस्त्रीणां हृदयं न गृह्णाति पापेभ्यो निवर्तयति एवमन्यदपि योजनीयम् तत्र कृतमुपकारः, विद्या सदुपदेशः, दत्तं द्रव्यादि, समर्पणं संग्रहः, स्वसमीपेत्यन्तस्थापनं तत्र हेतुः यतस्ता अनित्यहृदयाः प्रतिक्षणं ध्वंसप्रतियोगिनिश्चयकारिण्यः एतेन तत्संसर्गो दोषावह एवेति व्यञ्जितम् ॥२३॥

गो० टी०—नेति । कुलमाभिजात्यं, कृतमुपकारं, दत्तं संमानपूर्वकवस्त्राभरणादिदानं, संग्रहम् अग्निसाक्षिकपाणिग्रहणम् अनित्यहृदयाश्चञ्चलहृदयाः असतीनां भर्तुः कुलादिकं न संतोषाय किंतु धनमेवेति भावः एवं कैकेयी व्याजेन निन्दिता॥२३॥

२४ ] ति० टी०—साध्वीनां तु पतिव्रतानां तु शीले सच्चरित्रे सत्ये सत्यवचने श्रुते गुरुजनोपदेशे स्थिते स्वकुलोचितमर्यादावस्थितौ तु । तुरेवार्थे । एष्वेव स्थितानां स्त्रीणां परमं पवित्रमुत्तमं पुण्यसाधनं पतिरेक एव अत एव स्त्रियाः सर्वधर्मसाधनेभ्यो विशिष्यते ॥ २४ ॥

रा० टी०—साध्वीनामिति । शीले स्वधर्मचिन्तने चित्तवृत्तिनिरोधे वा सत्ये मिथ्यारहितवचने श्रुते गुरूपदेशश्रवणे स्थिते स्थिरे स्वकुलमर्यादायामिति शेषः स्थितानां साध्वीनां, पतिव्रतानां स्त्रीणां तु परममुत्तमं पवित्रकारकमेकः पतिः पतिसेवैव पतिसेवामन्तरा सर्वं निरर्थकं भवतीति तात्पर्यम् अतः पतिरेव विशिष्यते सर्वधर्मेभ्य इति शेषः 'श्रुते समे' इति भूषणपाठः ॥ २४ ॥

गो० टी०—स्थूणानिखननन्यायेन पातिव्रत्यदृढीकरणार्थं

१ नाभिमन्यन्त इति रा. पाठः । २ दुर्ग्राह्यहृदया इति गो. पाठः । ३ युवत्य इति गो. पाठः । ४ क्षणमात्रादिति गो. पाठः । ५ विद्यामिति गो. पाठः । ६ संग्रहमिति गो. पाठः । ७ ह्यति गो. पाठः । ८ शमे इति गो. पाठः ।

स त्वया नावमन्तव्यः पुत्रः प्रव्राजितो व[1]नम् । तव [2]देवसमस्त्वेष निर्धनः सधनोऽपि वा ॥ २५ ॥
विज्ञाय वचनं सीता तस्या धर्मार्थसंहितम् । [3]कृत्वाञ्जलिमुवाचेदं श्वश्रूमभिमुखे स्थिता ॥ २६ ॥
करिष्ये सर्वमेवाहमार्या यदनुशास्ति माम् । अभिज्ञास्मि यथा भर्तुर्वर्तितव्यं श्रुतं च मे ॥ २७ ॥
न मामसज्जनेना[6]र्या समानयितुम[7]र्हति । धर्माद्विचलितुं नाहमलं चन्द्रादिव प्रभा ॥ २८ ॥
नातन्त्री [4]विद्यते वीणा नाचक्रो वि[5]द्यते रथः । नापतिः सुखमेधेत या स्यादपि शतात्मजा ॥ २९ ॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य तु दातारं भर्तारं का न पूजयेत् ॥ ३० ॥
साहमेवंगता श्रेष्ठा श्रुतधर्मपरावरा । आर्ये किमवम[8]न्येयं [9]स्त्रिया भर्ता हि दैवतम् ॥ ३१ ॥

मसतीनां स्वभावमुक्त्वा सतीनां स्वभावमाह–साध्वीनामिति । शीले कुलोचितचरित्रे श्रुते गुरुजनकृतोपदेशे शमे शान्तौ च स्थितानां साध्वीनां पतिव्रतानां स्त्रीणां परमं पवित्रं परमं पावनं पतिरेकः पतिरेव विशिष्यते उत्कृष्टो भवति ॥ २४ ॥

२५–२६] ति० टी०–यदेवमतः किमत आह–स इति । देवसमो देवतुल्यः एष पतिः ॥ २५ ॥ २६ ॥

रा० टी०–स इति । वनं प्रव्राजितः अस्माभिः प्रेषितः पुत्रो मत्सुतः स त्वत्पतिः रामः त्वया नावमन्तव्यः केनापि हेतुना तदपमानं न कार्यमित्यर्थः । तत्र हेतुः एष रामः तव देवसमः सर्वप्रमोदः देवशब्दो मोदार्थक दिवुप्रकृतिकघञन्तः समशब्दः सर्वपर्यायः तयोः समानाधिकरणः तत्पुरुषः पञ्चम्यर्थे बहुव्रीहिर्वा ॥ २५ ॥

गो० टी०–स इति । स्पष्टम् ॥ २५ ॥

रा० टी०–विज्ञायेति । धर्मार्थसंहितं धर्म एव अर्थः प्रयोजनं तेन संहितं तस्याः कौशल्यायाः वचनं विज्ञाय सतात्पर्यं ज्ञात्वा सीता इदमुवाच ॥ २६ ॥

गो० टी०–विज्ञायेति । धर्मार्थसंहितं धर्मरूपप्रयोजनसहितम् अभिमुखे अग्र इत्यर्थः ॥ २६ ॥

२७ ] ति० टी०–यथा भर्तुर्भर्तृविषये वर्तितव्यं तथाभिज्ञास्मि किंच तथा श्रुतं मे स्वमातापितृभ्यामिति शेषः ॥२७॥

रा० टी०–तद्वचनमेवाह–करिष्य इति । आर्या सर्वश्रेष्ठा भवती यन्मामनुशास्ति तत्सर्वमहं करिष्ये एव तत्र हेतुः भर्तुः संबन्धिनि यथा वर्तितव्यं तथा मे मया श्रुतं पूर्वमेव मातापितृभ्यामिति शेषः अतोऽहमभिज्ञा भवदादिसेवाविषयकज्ञानवत्यस्मि ॥ २७ ॥

गो० टी०–करिष्य इति । भर्तुः भर्तरि विषये वर्तितव्यं शुश्रूषितव्यं मे मया श्रुतं च मातापितृभ्यामिति शेषः ॥ २७ ॥

२८ ] ति० टी०–असज्जनेनासतीजनेन समानयितुं समानां कर्तुमार्या नार्हति नाहमलं न समर्था ॥ २८ ॥

रा० टी०– दुःसङ्गोऽपि ममाकिंचित्कर इति बोधयितुमाह–नेति । असज्जनेन अल्पसज्जनेन अपरिपक्केनेत्यर्थः मां समानयितुं समानां कर्तुमार्या भवती नार्हति परिपक्वपातिव्रताहमिति तात्पर्यम् अतः धर्माद्धर्मपथाद्विचलितुं दुःसङ्गेनाप्यन्यत्र गन्तुमहं नालं न समर्था तत्र दृष्टान्तः चन्द्रात्प्रभा तत्कान्तिरिव ॥ २८ ॥

गो० टी०–नेति । समानयितुं समानां कर्तुं नालम् अक्षमेत्यर्थः ॥ २८ ॥

२९ ] ति० टी०–विद्यते वादनसमर्था इति गमनसमर्थः इति च शेषः । शतात्मजेति बहुव्रीहिः शतपुत्रा ॥ २९ ॥

रा० टी०–नातन्त्रीति । अतन्त्री तन्त्रीरहिता वीणा न विद्यते यत्नान्तरशतैरपि वादनाश्रया न भवतीत्यर्थः अचक्रः चक्राभ्यां रहितो रथो न विद्यते यत्नान्तरशतैरपि गमनाश्रयो न भवतीत्यर्थः एवं शतात्मजापि या स्त्री अपतिः पतिरहिता स्यात्सा सुखं न एधेत सुखाश्रया न भवतीत्यर्थः एतेन पतिरेव स्त्रीणां सुखहेतुरिति व्यञ्जितम् ॥ २९ ॥

गो० टी०–नातन्त्रीति । तन्त्री वीणाशिरा शतात्मजा पुत्रशतवती ॥ २९ ॥

३० ] ति० टी०–अमितस्यैहिकामुष्मिकसकलसुखस्य कर्मणि षष्ठी ॥ ३० ॥

रा० टी०–तदेव द्रढयन्ती आह–मितमिति । मितं परिमितमत अमितस्य सर्वस्वस्य दातारं का अभिज्ञा न पूजयेत्सर्वापि पूजयेदित्यर्थः ॥ ३० ॥

गो० टी०–मितमिति । मितम् अल्पम् ऐहिकमात्रमित्यर्थः अमितस्य ऐहिकामुष्मिकफलस्य ॥ ३० ॥

३१ ] ति० टी०–एवंगता भर्ता परमपूज्य इति ज्ञानवती । 'श्रेष्ठाश्रुतधर्म–' इति पाठे श्रेष्ठाभ्यः श्वश्रूमातृप्रमुख्याभ्यः श्रुतः परावरः सामान्यविशेषरूपो धर्मो यया 'श्रेष्ठे' इति पाठः क्वचित् । किमवमन्येयं कस्मादवमंस्यामि ॥ ३१ ॥

रा० टी०–सेति । श्रेष्ठा श्रुतधर्मपरावरा श्रेष्ठाभ्यः स्वमात्रादिभ्यः श्रुतः धर्मपरावरः उत्कृष्टापकृष्टरूपधर्मो यया सा अत एव स्त्रियाः भर्तैव दैवतं देवता एवं गता ज्ञानवती अहं किं किमर्थमवमन्येयम् ॥ ३१ ॥

गो० टी०–सेति । एवंगता एवंविधपातिव्रत्यधर्मं प्राप्ता श्रेष्ठा श्रुतधर्मपरावरा श्रेष्ठाभ्यो मात्रादिपतिव्रताभ्यः सम्यक्

१ मन्येति गो. पाठः । २ दैवतमस्त्विति गो. पाठः । ३ कृताञ्जलिरुवाचेति गो. रा. पाठः । ४ वाद्यते इति गो. पाठः । ५ वर्तते इति गो. पाठः । ६ मार्येति गो. पाठः । ७ ईति गो. पाठः । ८ मन्येऽहमिति गो. पाठ । ९ स्त्रीणामिति गो. पाठः ।

सीताया वचनं श्रुत्वा कौसल्या हृदयंगमम् । शुद्धसत्त्वा मुमोचाश्रु सहसा दुःखहर्षजम् ॥ ३२ ॥
तां प्राञ्जलिरभिप्रेक्ष्य मातृमध्येऽतिसत्कृताम् । रामः परमधर्मात्मा मातरं वाक्यमब्रवीत् ॥ ३३ ॥
अम्ब मा दुःखिता भूत्वा पश्येस्त्वं पितरं मम । क्षयोऽपि[3] वनवासस्य क्षिप्रमेव भविष्यति ॥ ३४ ॥
सुप्तायास्ते गमिष्यन्ति नव वर्षाणि पञ्च च । समग्रमिह संप्राप्तं मां द्रक्ष्यसि सुहृद्वृतम् ॥ ३५ ॥
एतावदभिनीतार्थमुक्त्वा स जननीं वचः । त्रयः शतशतार्धा हि ददर्शावेक्ष्य मातरः ॥ ३६ ॥
ताश्चापि स तथैवार्ता मातॄर्दशरथात्मजः । धर्मयुक्तमिदं वाक्यं निजगाद कृताञ्जलिः ॥ ३७ ॥
संवासात्परुषं किंचिदज्ञानादपि यत्कृतम् । तन्मे समुपजानीत सर्वाश्चामन्त्रयामि वः ॥ ३८ ॥

---

श्रुतसामान्यविशेषरूपधर्मोत्कर्षा किमवमन्ये भर्तारमिति सिद्धम् ॥ ३१ ॥

३२ ] ति० टी०—शुद्धसत्त्वा शुद्धचित्ता पुत्रादेर्वनगमनेन दुःखं सीतावाक्यश्रवणेन च हर्षः ॥ ३२ ॥

रा० टी०—सीताया इति । हृदयंगमं मनोहरं वचनं श्रुत्वा शुद्धसत्त्वा विशुद्धान्तःकरणा कौशल्या दुःखहर्षजं दुःखवत्प्रतीयमानो यो हर्षः तज्जन्यमश्रु मुमोच। दुःखत्वेन प्रतीयमानत्वं हर्षस्य नवोढानां पतिसहगमने प्रसिद्धम् ॥ ३२ ॥

गो० टी०—सीताया इति । शुद्धसत्त्वा सत्त्वगुणाढ्या दुःखहर्षजरामारण्यगमनप्रयुक्तं दुःखं दृढपातिव्रत्ययुक्तसीतावचःश्रवणजो हर्षः ॥ ३२ ॥

३३ ] ति० टी०—अभिप्रेक्ष्य दृष्ट्वा अतिसत्कृतां सर्वजनैरिति शेषः ॥ ३३ ॥

रा० टी०—तामिति । मातृमध्येतिसत्कृतां तां मातरमभिप्रेक्ष्य रामो वाक्यमब्रवीत् ॥ ३३ ॥

गो० टी०—तामिति । अभिक्रम्य प्रदक्षिणीकृत्य ॥ ३३ ॥

३४ ] ति० टी०—वनवासस्य वनवासकालस्य ॥ ३४ ॥

रा० टी०—तद्वाक्यमेवाह—अम्बेति । अम्ब हे मातः! दुःखिता भूत्वा मम पितरं त्वं मा पश्येः तत्र हेतुः वनवासस्य वनवाससमयस्य क्षयो ध्वंसः क्षिप्रमेव भविष्यति त्वद्दुःखमवलोक्य सोऽतिदुःखी भविता तन्माभूदिति तात्पर्यम् ॥ ३४ ॥

गो० टी०—अम्बेति । वनवासस्य वनवासकालस्य ॥ ३४ ॥

३५ ] ति० टी०—सुप्तायाः सुप्ताया इव चतुर्दशघटीवद्गमिष्यन्ति समग्रं भ्रातृभार्यासहितं समग्रश्रेयस्कं च पुनरपि सुहृद्भिर्वृतं राजत्वेन ॥ ३५ ॥

रा० टी०—ननु वनवासकालस्य बहुत्वात्कथं द्रुतं नाश इत्यत आह—सुप्ताया इति । सुप्ताया इव ते गमिष्यन्ति गन्तारः अनन्तरं समग्रं समीचीनः अग्रः अग्रगन्ता संदेशहर इत्यर्थः यस्य तं सुहृद्वृतं संप्राप्तं मां द्रक्ष्यसि द्रष्टासि । सुप्ताशब्द आचारक्विबन्तः चशब्दोऽनन्तरार्थकः ॥ ३५ ॥

गो० टी०—सुप्ताया इति । सुप्तायाः एकस्यां रात्रौ संप्रसुप्तायाः इवेत्यर्थः । समग्रं निर्वर्तितपितृवचनं संपूर्णमनोरथं वा ॥ ३५॥

३६ ] ति० टी०—अभिनीतार्थं निर्णीतार्थं त्रयःशतानि त्रीणि शतानि शतार्धं च संख्या यासां ताः त्रेत्रयसादेश आर्षः एवंभूता या मातरः सन्ति ताः अवेक्ष्य विविच्य ददर्शेत्यर्थः तथा मातरश्च तं ददृशुरिति शेषः ॥ ३६ ॥

रा० टी०—एतावदिति । अभिनीतः प्राप्तः अर्थः मातृप्रयोजनं यस्मिन् तदेतावद्वचः जननीमुक्त्वा त्रयः शतशतार्धाः त्रयश्शतेन शतत्रयेण युक्तः शतार्धः पञ्चाशत्परिच्छेदकत्वेन यासु ताः मातरः अवेक्ष्य संविविच्य ददर्श । तथा चोत्पत्तयः शुभा इतिवत्प्रयोगः त्रेत्रय आदेशोऽत एव निर्देशात् ॥ ३६ ॥

गो० टी०—एतावदिति । अभिनीतार्थं क्रोडीकृतसर्वार्थमित्यर्थः । त्रयःशतशतार्धाश्च त्रयः शतं त्रिशतं त्रेत्रयसादेशशतार्धं पञ्चाशत् त्रयःशतशतार्धं प्रमाणं यासां तास्तथोक्ताः मातरः मातॄः द्वितीयार्थे प्रथमा अवेक्ष्य वक्तव्यमालोच्य ददर्शेति संबन्धः ॥ ३६ ॥

३७ ] ति० टी०—तथैव कौसल्यावदेवार्तास्ता मातॄः प्रतीदं जगादेत्यन्वयः ॥ ३७ ॥

रा० टी०—ता इति । स दशरथात्मजो रामः इदं वाक्यं निजगाद ॥ ३७ ॥

गो० टी०—ता इति । तथैवार्ताः कौसल्येव दुःखिताः ॥ ३७ ॥

३८ ] ति० टी०—संवासः सहवासः परुषम् उक्तमिति शेषः अज्ञानादपि यत्कृतं परुषं कर्म समुपजानीत क्षान्तमित्यनुजानीतेत्यर्थः ॥ ३८ ॥

रा० टी०—तद्वाक्यमेवाह—संवासादिति । संवासादत्यन्तसन्निकर्षादज्ञानाद्भवतीनामभिप्रायाविचारणाद्वा परुषं भवत्प्रतीतिविषयीभूतकठोरवचनादि यत्किंचित्कृतं निष्पादितं तन्मे कृतं समुपजानीत क्षमध्वम् एतदर्थं सर्वाः वो युष्मान् आमन्त्रयामि प्रार्थयामि ॥ ३८ ॥

गो० टी०—संवासादिति । संवासात् एकत्र सहवासाः चिरपरिचयादित्यर्थः समनुजानीत क्षान्तमित्यनुज्ञां कुरुतेत्यर्थः आमन्त्रयामि आपृच्छामि ॥ ३८ ॥

---

१ क्रन्येति गो. पाठः । २ भूत्वं पश्य त्वमिति गो. पाठः । ३ हीति गो. पाठः । ४ सा समग्रमिह प्राप्तमिति गो. पाठः । ५ अज्ञानाद्वापीति गो. पाठः । ६ समन्विति गो. पाठः । ७ आत्मनेपदमपेक्षितम् ।

वचनं राघवस्यैतद्धर्मयुक्तं समाहितम् । शुश्रुवुस्ताः स्त्रियः सर्वाः शोकोपहतचेतसः ॥ ३९ ॥
जज्ञेऽथ तासां संनादः क्रौञ्चीनामिव निःस्वनः । मानवेन्द्रस्य भार्याणामेवं वदति राघवे ॥ ४० ॥
मुरजपणवमेघघोषवद्दशरथवेश्म बभूव यत्पुरा ।
विलपितपरिदेवनाकुलं व्यसनगतं तदभूत्सुदुःखितम् ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

सीतारामलक्ष्मणा दशरथं प्रदक्षिणीकृत्याभ्यवादयत । ससीतो रामः कौसल्यां ननाम । लक्ष्मणोऽपि कौसल्यामभिवाद्य सुमित्रामभ्यवादयत । सुमित्रा लक्ष्मणं हितानुबन्धयन्वशात् । तेषु रथमधिरूढेषु सुमन्त्रोऽश्वान्प्राचोदयत् । रथमनुधावन्तः पौरा रथस्याधिक्यात्तमप्राप्यैव न्यवर्तन्त । कौसल्यादिभिः समं रामरथमनुव्रजन्नपि दशरथो गमनाशक्त्या सीदन्नेव कुशलसचिवानुशिष्टो मध्येपथमाधिनस्थौ ।

अथ रामश्च सीता च लक्ष्मणश्च कृताञ्जलिः । उपसंगृह्य राजानं चक्रुर्दीनाः प्रदक्षिणम् ॥ १ ॥
तं चापि समनुज्ञाप्य धर्मज्ञः सह सीतया । राघवः शोकसंमूढो जननीमभ्यवादयत् ॥ २ ॥
अन्वक्षं लक्ष्मणो भ्रातुः कौसल्यामभ्यवादयत् । अपि मातुः सुमित्राया जग्राह चरणौ पुनः ॥ ३ ॥
तं वन्दमानं रुदती माता सौमित्रिमब्रवीत् । हितकामा महाबाहुं मूर्ध्न्युपाघ्राय लक्ष्मणम् ॥ ४ ॥

---

३९ ] ति० टी०—समाहितं धीरम् ॥ ३९ ॥

रा० टी०—वचनमिति । समाहितं समाधानकारकमेतद्वचनं शोकोपहतचेतसः सर्वाः स्त्रियः शुश्रुवुः ॥ ३९ ॥

गो० टी०—वचनमिति । समाहितं समीचीनार्थयुक्तमित्यर्थः ॥ ३९ ॥ ४० ॥

४० ] ति० टी०—अथ रामवचःश्रवणानन्तरं संनादः शोकजः शब्दः ॥ ४० ॥

रा० टी०—जज्ञ इति । संनादो महान् शब्दः मानवेन्द्रस्य दशरथस्य राघवे रामे ॥ ४० ॥

४१ ] ति० टी०—मेघो वाद्यविशेषः मुरजपणवा एव मेघा इति रूपकं वा विलपितं रामगुणकैकेयीदुर्गुणप्रतिपादकं वाक्यं परिदेवनं रोदनं व्यसनगतं प्राप्तेष्टवियोगम् ॥ ४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रा० टी०—मुरजेति । यद्वेश्म गृहं मुरजादिवाद्यविशेषवद्घोषवत्तच्छब्दविशिष्टं पुरा बभूव तत् विलपितपरिदेवनाकुलं विलपितैः कोऽस्मान् रक्षितेत्यादिवाक्यैः यत्परिदेवनं तेनाकुलं व्याप्तं बभूव अत एव व्यसनगतं विविधकर्मकक्षित्याल्नप्रापकमत एव सुदुःखितमतिदुःखप्रदमभूत् श्रोतॄणामिति शेषः ॥ ४१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

गो० टी०—मुरजपणवेति । मुरजपणवा एव मेघास्तेषां घोषास्तद्वत्, यद्वा मुरजादिसहपाठात् मेघोऽपि वाद्यविशेषः मुरजश्च पणवश्च मेघश्च मुरजपणवमेघम् "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" इत्येकवद्भावः तद्घोषवत् विलपितपरिदेवनाकुलं विविधानि लपितानि रामगुणकैकेयीदुर्गुणप्रतिपादकवाक्यानि यस्मिंस्तद्विलपितं परिदेवनं रोदनशब्दः तेनाकुलं व्यसनगतम् आपद्गतमत एव दुःखितमभूत् ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

१ ] ति० टी०—उपसंगृह्य पादपतनपूर्वकं प्रणम्य दीना मातापित्रोः शोकदर्शनाद्दीना इव ॥ १ ॥

रा० टी०—रामादिवृत्तमाह—अथेति । उपसंगृह्य पितृपादस्पर्शनपूर्वकप्रणतिं कृत्वा दीनाः राक्षसक्षयकारकाः रामादयो राजानं प्रदक्षिणं चक्रुः अन्तर्भावितणिजर्थौ दीङ्कर्माविवक्षया कर्तरि निष्ठा ॥ १ ॥

गो० टी०—अथेति । उपसंगृह्य पादग्रहणपूर्वकं प्रणम्य दीनाः हृदयोर्मातापित्रोः शुश्रूषा न लब्धेति दीनाः ॥ १ ॥ २ ॥

२ ] ति० टी०—समनुज्ञाप्य कृतानुमतिकं कृत्वा शोकसंमूढो मातृदुःखदर्शनात्स इव ॥ २ ॥

रा० टी०—तमिति । तं राजानं समनुज्ञाप्य तत्संमतिं लब्ध्वेत्यर्थः शोकसंमूढः शोकः संमूढो येन सः शोकापहर्तेत्यर्थः सीतया सह धर्मज्ञो राघवः जननीमभ्यवादयत्प्राणमत् ॥ २ ॥

३-४ ] ति० टी०—अन्वक्षमनुपदं रामेण कौसल्यावन्दनानन्तरं भ्रातुः जननीमिति शेषः कौसल्यामभ्यवादयत्

---

१ अथेति गो. पाठः ।

सृष्टस्त्वं वनवासाय स्वनुरक्तः सुहृज्जने । रामे प्रमादं मा कार्षीः पुत्र भ्रातरि गच्छति ॥ ५ ॥
व्यसनी वा समृद्धो वा गतिरेष तवानघ । एष लोके सतां धर्मो यज्ज्येष्ठवशगो भवेत् ॥ ६ ॥
इदं हि वृत्तमुचितं कुलस्यास्य सनातनम् । दानं दीक्षा च यज्ञेषु तनुत्यागो मृधेषु हि ॥ ७ ॥
लक्ष्मणं त्वेवमुक्त्वासौ संसिद्धं प्रियराघवम् । सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तम् ॥ ८ ॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् । अयोध्यामटवीं विद्धि गच्छ तात यथासुखम् ॥ ९ ॥
ततः सुमन्त्रः काकुत्स्थं प्राञ्जलिर्वाक्यमब्रवीत् । विनीतो विनयज्ञश्च मातलिर्वासवं यथा ॥ १० ॥

पुनः कौसल्यावन्दनानन्तरं मातुः सुमित्राया अपिनान्यासां च ॥ ३ ॥ ४ ॥

रा० टी०—अन्वक्षमिति । भ्रातुः रामस्य अन्वक्षमनुपदं लक्ष्मणः कौशल्यामभ्यवादयन्मातुः सुमित्रायाः अपि चरणौ जग्राह ॥ ३ ॥

रा० टी०—तमिति । हितकामा पुत्रप्रियमिच्छन्ती रुदती वियोगहेतुकरोदनं कुर्वती माता सुमित्रा तं वन्दमानं सौमित्रिं मूर्ध्न्युपाघ्राय आघ्राणं कृत्वा अब्रवीत् ॥ ४ ॥

गो० टी०—अन्वक्षमिति । अन्वक्षम् अनुपदम् 'अन्वगन्वक्षमनुगेऽनुपदम्' इत्यमरः ॥ ३ ॥ ४ ॥

५ ] ति० टी०—अत्रत्यसुहृज्जने स्वनुरक्तोऽपि त्वं मया वनवासाय सृष्टोऽनुमतः वनं गच्छति भ्रातरि रामे प्रमादमनवधानं मा कार्षीः भ्रातरीत्यनेन सोदरवदेवायं द्रष्टव्य इति सूचितम् ॥ ५ ॥

रा० टी०—तद्वचनमवाह—सृष्ट इति । हे पुत्र ! सुहृज्जने सुहृदं सौहार्दं जनयति उत्पादयति स तस्मिन् गच्छति भ्रातरि रामे स्वनुरक्तः अत्यनुरागविशिष्टः अत एव वनवासाय सृष्टो मया प्रेरितस्त्वं प्रमादं तत्सेवायामनवधानतां मा कार्षीः ॥ ५ ॥

गो० टी०—सृष्ट इति । सृष्टस्त्वं दैवेनेति शेषः । भ्रातरि गच्छति देव्या सह पुष्पितवनदर्शनपारवश्येन गच्छति सतीत्यर्थः । प्रमादम् अनवधानं मा कार्षीः सावधानो भवेत्यर्थः । सृष्ट इति । यथा कौसल्या लोकरक्षणार्थं पुत्रं प्रासूत एवं मया सुहृज्जने रामे स्वनुरक्तस्त्वं वनवासाय सृष्टः वने रामानुवर्तनायोत्पादितः अतो रामे गच्छति प्रमादं मा कार्षीः रामगमनसौन्दर्याकृष्टमनस्कतया रक्षणकर्मण्यनवहितो मा भूरित्यर्थः, यद्वा रामे वनं गच्छति त्वमत्रैव मा तिष्ठेति भावः ॥ ५ ॥

६ ] ति० टी०—कनीयसो ज्येष्ठानुवर्तनं परमो धर्म इत्याह—व्यसनी वेति । राज्याभावेन ॥ ६ ॥

रा० टी०—तत्सेवावश्यं कर्तव्येत्यत्र हेतुं वदन्ती आह—व्यसनीति । हे अनघ ! कपटसंसर्गशून्य व्यसनी त्यक्तैश्वर्यः समृद्धः स्वीकृतैश्वर्यो वा एष राम एव लोके सर्वभुवने तव गतिः तत्र हेतुः यद्यस्माद्धेतोः ज्येष्ठवशगो भवेत् अनुजम् इति शेषः एषः ज्येष्ठवशगत्वभावः सतां धर्मः ॥ ६ ॥

गो० टी०—रामगमने गन्तव्यतायां निमित्तमाह—व्यसनीति । गतित्वे धर्मशास्त्रानुमतिं दर्शयति—एष इति ॥ ६ ॥

७ ] ति० टी०—इदं ज्येष्ठानुवर्तनरूपं धर्मान्तरमपि क्षत्रोचितमाह—दानमित्यादि । मृधेषु युद्धेषु तनुत्यागस्तनावनास्थापूर्वकं युद्धकरणम् ॥ ७ ॥

रा० टी०—वने राक्षसादिहननुकर्भानिनं कार्येति बोधयन्ती आह—इदमिति । उचितं राजकुलयोग्यमिदं वृत्तमस्य रघुमंत्रन्धिनः कुलस्य सनातनं सार्वकालिकम् । तद्वृत्तमेवाह—दानं याचकेप्सितमर्पणं यज्ञेषु दीक्षा च मृधेषु सङ्ग्रामेषु तनुत्यागः शत्रुतनुत्याजनं च ॥ ७ ॥

गो० टी०—ज्येष्ठानुवर्तनादपि परमधर्मं कुलोचितं दर्शयति—इदमिति । मृधेषु युद्धेषु तनुत्यागेनापि रामो रक्षणीय इति भावः ॥ ७ ॥

८ ] ति० टी०—असावेवं स्वपुत्रं लक्ष्मणमुक्त्वा संसिद्धं वनं गन्तुं निश्चितमनस्कं प्रियराघवं प्रियरूपं राघवं गच्छ गच्छेति पुनः पुनरुवाच शकुनसंपत्तय इति भावः तं लक्ष्मणं पुनरुवाचेत्यनुकर्षः ॥ ८ ॥

रा० टी०—लक्ष्मणमिति । एवमनेन प्रकारेण उक्त्वा उपदिश्य संसिद्धं गमनानुकूलव्यापारवन्तं प्रियराघवं सर्वप्रीतिविषयीभूतरामं त्वं गच्छ गच्छ इत्यसौ सुमित्रा तं लक्ष्मणं पुनः पुनरुवाच संसिद्धमित्यत्र गत्यर्थकषिधो निष्ठा पुनः पुनरित्यनेन सुमित्रायाः रामविषयकप्रीत्यतिशयः सूचितः ॥ ८ ॥

गो० टी०—लक्ष्मणमिति । संसिद्धं षिधु गत्यामित्यस्माद्धातोर्निष्ठायां रूपम् गमनोद्युक्तमित्यर्थः । गच्छ गच्छेति वीप्सया सुमित्राया अपि रामानुवर्तने महानादरो द्योत्यते ॥ ८ ॥

९-१० ] ति० टी०—तद्वचनमाह—राममिति । एवं च पितृमातृनगरस्मरणेन मनश्चाञ्चल्यं मा कुर्विति ध्वनितम् रामस्य पितृवत्सेव्यत्वं सीतायां मातृवद्वात्रकरणमटव्या अयोध्यावत्पाल्यत्वं तेन तत्रत्यजन्तूनामनुद्वेगकरणं च ध्वनितम् ॥ ९ ॥ १० ॥

रा० टी०—रामसेवान्तरायकारकपित्रादिस्मरणमपि न कर्तव्यमिति बोधयन्ती आह—राममिति । रामं दशरथं वात्सल्यरसहेतुत्वेन दशरथसदृशं विद्धि जानीहि एवं जनकात्मजां सीतां मां स्वजननीं विद्धि अटवीं वनमयोध्यां सर्वसंपत्संप्रापकत्वेन अयोध्यासदृशं विद्धि अतः यथासुखं सुखमनतिक्रम्य गच्छ रामेण सहेति शेषः यत्त्वस्यार्थान्तरवर्णनाय दशतीति दशः पक्षी स गरुडो रथो यस्येति व्युत्पत्त्या दशरथशब्दस्य

१ चेति गो. पाठः । २ सेति गो. पाठः ।

रथमारोह भद्रं ते राजपुत्र महायशः । क्षिप्रं त्वां प्रापयिष्यामि यत्र मां राम [1]वक्ष्यसे ॥ ११ ॥
चतुर्दश हि [2]वर्षाणि वस्तव्यानि वने त्वया । तान्युपक्रमितव्यानि यानि देव्या प्रचोदितः ॥ १२ ॥
तं रथं सूर्यसंकाशं सीता हृष्टेन चेतसा । आरुरोह वरारोहा कृत्वालंकारमात्मनः ॥ १३ ॥
[3]वनवासं हि संख्याय वासांस्याभरणानि च । भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ १४ ॥
तथैवायुध[4]जातानि भ्रातृभ्यां कवचानि च । रथोपस्थे [5]प्रविन्यस्य सचर्म कठिनं च [6]यत् ॥ १५ ॥
[7]अथो ज्वलनसंकाशं चामीकरविभूषितम् । तमारुरुहतुस्तूर्णं भ्रातरौ रामलक्ष्मणौ ॥ १६ ॥
सीतातृतीयानारूढान्दृष्ट्वा [8]रथमचोदयत् । सुमन्त्रः संमतानश्वान्वायुवेगसमाञ्जवे ॥ १७ ॥

---

विष्णुपरत्वं भूषणे व्याख्यातं तच्चिन्त्यम् दशशब्दस्य गरुड दशरथशब्दस्य विष्णौ शक्त्यभावात् दंशधातोरचि दश इति रूपस्यासिद्धत्वाच्च मूलविभुजादित्वकल्पनं तु निष्प्रामाणिकत्वाद्धेयमत एव ब्रह्मेशानाच्युतेशायत्यादिभिर्न विरोधः एवं तृतीयार्थकल्पनाय रामशब्दः उपरतपरत्वेन व्याख्यातस्तदपि उपायुपपदमन्तरा विरुद्धम्, एवं मां जनकस्य पितुः आत्मजां विद्धि कैकेयीविवासिततया पितृगृहवर्तिनीं विद्धीत्यर्थो व्याख्यातः सोऽपि दुर्लभः जनकजाशब्दस्य कयाचिदपि वृत्त्या स्वरसतः पितृगेहवर्तिनीत्वाबोधनात् तस्माद्यथोक्तमेव न्याय्यमिति दिक् ॥९॥

रा० टी०—तत इति । विनीतो विनम्रः विनयज्ञः सुमन्त्रः वासवमिन्द्रं मातलिरिव तत्सारथिरिव काकुत्स्थं राममब्रवीत्॥१०॥

गो० टी०—वनवासे पितृमातृनगरस्मरणेन मनश्चाञ्चल्यं भविष्यतीति धिया तत्रैव प्रतिनिधिं कल्पयति—राममिति । यथासुखं गच्छेत्यस्य इत्युवाचेति पूर्वेण संबन्धः रामं दशरथं विद्धि पितरमगवच्छेत्यर्थः । जनकात्मजां मां विद्धि मातरं विद्धीत्यर्थः । अटवीमयोध्याम् तद्वत् भोगस्थानं विद्धि गच्छ तात यथासुखम् तदनुवर्तनमेव उचितं सुखमित्यर्थः । यद्वा रामं दशरथं विद्धि दशति मत्स्यकच्छपोरगादीन् दंष्ट्राव्यापारविषयान् करोतीति दशः पक्षी दंशदशन इति धातुः दशनं दंष्ट्राव्यापारः “ पचाद्यच् ” पृषोदरादित्वादनुनासिकलोपः स गरुडः रथो यस्य तम् विष्णुं विद्धीत्यर्थः । जनकात्मजां मां लक्ष्मीं विद्धि अटवीमयोध्याम् अपराजिताख्यां वैकुण्ठनगरीं विद्धि तद्वासस्थानमिति भावः । यद्वा रामं दशरथं च विद्धि उभयोस्तारतम्यं पश्येत्यर्थः, मां जनकात्मजां च विद्धि गुणतः आलोचय मदपेक्षया सीतैव तव हितपरेति भावः । अयोध्याम् अटवीं च विद्धि एतन्नगरापेक्षया वनमेव तव कैङ्कर्यैकान्तस्थानतयोत्कृष्टमित्यर्थः । यद्वा दशरथ रामम् उपरतं विद्धि मां जनकस्य पितुरात्मजां विद्धि कैकेयीविवासिततया पितृगृहवर्तिनीं विद्धीत्यर्थः । अयोध्यामटवीं विद्धि निर्जनेयं भविष्यतीत्यर्थः । एवं तात्पर्यान्तराण्यूह्यानि ॥ ९ ॥ १० ॥

११] ति० टी०—यत्र यद्देशप्रापणे मां वक्ष्यसे नियोजयसि तं देशं क्षिप्रं प्रापयिष्यामि नेह रजन्यां वस्तव्यमिति शेषः॥११॥

रा० टी०—तद्वचनमेवाह—रथमिति । हे राजपुत्र महायशः हे राम ! रथं त्वमारोह । तत्प्रयोजनमाह—यत्र यस्मिन् देशे मां त्वं वक्ष्यसे प्रापणार्थं नियोजयिष्यसि तस्मिन् देशे त्वां क्षिप्रं प्रापयिष्यामि ॥ ११ ॥

गो० टी०—रथमिति । यत्र यस्मिन् प्रदेशविषये ॥ ११ ॥

१२] ति० टी०—कुतस्तत्राह—चतुर्दशेति । यानि चतुर्दश वर्षाणि वने वस्तव्यानि तान्यद्यैवोपक्रमितव्यान्यारम्भणीयानि यतो देव्या कैकेय्याद्यैव वनं गच्छेति प्रेरितोऽसि ॥ १२॥

रा० टी०—चतुर्दशेति । यानि चतुर्दश वर्षाणि वने त्वया वस्तव्यानि देव्या कैकय्या त्वं प्रचोदितः राजाभिप्रायनिरूपणेनाज्ञापितोऽसि तानि वर्षाणि उपक्रमितव्यानि अद्यैवारम्भणीयानि एतेनेतःप्रभृत्यत्र स्थितावाज्ञाभङ्गः स्यादिति सूचितं तेन सुमन्त्रस्य परमधर्मज्ञत्वं व्यक्तम् ॥ १२ ॥

गो० टी०—चतुर्दशेति । वर्षाणीति चतुर्दशवर्षेष्वेकदिवसापनयनमपि महान् लाभ इति धिया त्वरयति तान्युपक्रमितव्यानीति देव्यासि चोदितः अद्यैव गच्छेति कैकेय्या चोदितत्वादित्यर्थः ॥ १२ ॥

१३ ] ति० टी०—हृष्टेन चेतसेत्यनेन ‘अक्लिरा मन उत्साहम्’ इत्युक्तो मुख्यः शकुनो ध्वनितः ॥ १३ ॥

रा० टी०—तमिति । वरारोहा वरः अयोनिजात्वेन सर्वोत्कृष्टः आरोहः प्रादुर्भावो यस्याः सा सीता आत्मनः स्वदेहस्य अलंकारं स्वकीयवस्त्राभरणादिभूषां कृत्वा हृष्टेन चेतसा सूर्यसंकाशं सूर्यस्यापि प्रकाशकं तं रथमारुरोह ॥ १३ ॥

गो० टी०—तमिति—अलंकारं कृत्वा श्वशुरदत्तवस्त्राभरणादिभिरिति शेषः ॥ १३ ॥

१४ ] ति० टी०—अलंकारकरणोपायमुक्तं स्मारयति—वनवासं हीति । यानि ददौ तानि रथोपस्थे विन्यस्येत्यन्वयः अग्रिमश्लोके तथैवेतिपदस्वरसात् ॥ १४ ॥

१५ ] ति० टी०—भ्रातृभ्यां भ्रात्रोरित्यर्थः सचर्म चर्मपिनद्धं पेटकं कठिनं खनित्रं प्रविन्यस्य स्थापयित्वा ॥ १५ ॥

१६ ] ति० टी०—अथो अनन्तरमारुरुहतुः ॥ १६ ॥

१७ ] ति० टी०—संमतान्संमतसर्वलक्षणान् ॥ १७ ॥

---

१ वक्ष्यसीति गो. पाठः । २ असीति गो. पाठः । ३ अस्मात्पूर्वं गो. अथा ( १६ ) इत्यस्य पाठमिच्छति । ४ जालानीति गो. पाठः । ५ प्रतिन्यस्येति गो. पाठः । ६ तदिति गो. पाठः । ७ अथेति रा. पाठः । ८ कृष्टमिति गो. पाठः ।

प्रयाते तु महारण्यं चिररात्राय राघवे । बभूव नगरे मूर्च्छा बलमूर्च्छा जनस्य च ॥ १८ ॥
तत्समाकुलसंभ्रान्तं मत्तसंकुपितद्विपम् । हयसिञ्जितनिर्घोषं पुरमासीन्महास्वनम् ॥ १९ ॥
ततः सबालवृद्धा सा पुरी परमपीडिता । राममेवाभिदुद्राव घर्मार्तः सलिलं यथा ॥ २० ॥
पार्श्वतः पृष्ठतश्चापि लम्बमानास्तदुन्मुखाः । बाष्पपूर्णमुखाः सर्वे तमूचुर्भृशनिःस्वनाः ॥ २१ ॥
संयच्छ वाजिनां रश्मीन्सूत याहि शनैः शनैः । मुखं द्रक्ष्याम रामस्य दुर्दर्शं नो भविष्यति ॥ २२ ॥

रा० टी०–वनेति । वनंवासं वनवासनियमितवर्षपरिधामयोग्यतां संख्याय ज्ञात्वा यत् प्रयत्नवान् श्वशुरो दशरथः वासआदीनि यथा सीतायै ददौ तथा आयुधजातानि शस्त्रास्त्रसमूहान् कवचानि वर्माणि च कठिनं दृढं सचर्म चर्मणा पिनद्धं शस्त्रास्त्रस्थापनयोग्यमञ्जूषाविशेषमित्यर्थः भ्रातृभ्यां रामलक्ष्मणार्थे रथोपस्थे रथैकदेशविशेषे प्रविन्यस्य संस्थाप्य ददौ बोधयामासेत्यर्थः किंच स इति कर्तृविशेषणं चर्मशब्दः खड्गादिघातवारकयन्त्रविशेषपरः । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

रा० टी०–अथेति । अथ स्वोद्देश्यकशस्त्रास्त्रादिस्थापनानन्तरं चामीकरविभूषितं रचितस्वर्णविशेषैः शोभितं ज्वलनसंकाशं वह्नेरपि प्रकाशकं तं संस्थापितशस्त्रास्त्रविशिष्टं रथं रामलक्ष्मणौ तूर्णं शीघ्रमारुरुहतुः ॥ १६ ॥

रा० टी०–सीतेति । सीतातृतीयान् सीता तृतीया येषु तान् सीतारामलक्ष्मणान् रथमारूढान् दृष्ट्वा वायुवेगसमान् वायुवेगसदृशवेगविशिष्टान् संमतान् स्वानुकूलान् अश्वान् जवे अतिवेगचलनयोग्ये रथे स्थितः सुमन्त्रः अचोदयत् ॥ १७ ॥

गो० टी०–एतच्छ्लोकानन्तरमथो ज्वलनेति श्लोकः पठितव्यः । अथो इति । ज्वलनसंकाशम् आयुधपूर्णत्वादिति भावः ॥ १४ ॥

गो० टी०–वनवासं हीति श्लोकस्तथैवेति श्लोकस्सीतातृतीयानिति श्लोकश्चैकं वाक्यम् । श्वशुरो दशरथः सीतायै यानि ददौ तानि च रथोपस्थे प्रतिन्यस्य तथा भ्रातृभ्यां दत्तान्यायुधजालानि कवचानि सचर्म चर्मपिनद्धम् अल्पकण्डोलं कठिनं तत् खनित्रं च रथमध्ये प्रतिन्यस्य सीतातृतीयानारूढान् दृष्ट्वा अश्वानचोदयदिति योजना धृष्टं सधैर्यं संमतान् श्रेष्ठानित्यर्थः यथान्यासमेव वास्तु तदा तं रथमिति श्लोको वनवासमिति श्लोकः तथैवेतिश्लोकश्चैकं वाक्यं सीतात्मनोऽलंकारं कृत्वा यानि श्वशुरो ददौ यानि भ्रातृभ्यामानीतानि आयुधजालानि कवचानि सचर्मकठिनं च तत्सर्वं रथोपस्थे प्रतिन्यस्यारुरोहेत्यन्वयः ॥ १६–१७ ॥

१८ ] ति० टी०–चिररात्रायेत्यव्ययं चिरकालावस्थित्यर्थमित्यर्थः । नगरे विद्यमानस्य सर्वमनुष्यस्य बलस्याश्वगजादेर्मूर्च्छा जनस्य तिर्यग्जन्तुरूपस्य च मूर्च्छा बभूवेत्यर्थः ॥ १८ ॥

रा० टी०–प्रयाते इति । राघवे रामे चिररात्राय बहुकालं वासार्थं महारण्यं प्रयाते सति नगरे अयोध्यायां विद्यमानस्य जनस्य मूर्छा बभूव बलमूर्छा सेनायाः मूर्छा च बभूव चिररात्रायेत्यव्ययम् ॥ १८ ॥

गो० टी०–प्रतियात इति । चिररात्राय चिरकालं नगरे मूर्च्छा बभूव नगरस्थस्त्रीबालादिषु दुःखातिशयेन विसंज्ञता बभूवेत्यर्थः । बलमूर्च्छा अश्वगजादिमोहः जनस्य उत्सवार्थमागतजनपदजनस्य ॥ १८ ॥

१९ ] ति० टी०–तदेव प्रपञ्चयति–तदिति । समाकुलमिति कर्तव्यतामूढं च तत्संभ्रान्तं रामानुगमनाय त्वरायुक्तं मत्ता रामवियोगेन संकुपिता द्विपा यस्मिन्, हयानां दुःखेन सिञ्जितानां शब्दवतां पर्याकुलप्राणिभूषणानां निर्घोषो यस्मिन् ॥ १९ ॥

रा० टी०–तदिति । समाकुलसंभ्रान्तं समाकुलं व्याप्तं संभ्रान्तमुद्वेगो यस्मिंस्तन्मत्तसंकुपितद्विपं मत्तेन सर्वदैन्यावलोकनेन संकुपिताः दैन्यसंपादनहेतुभूता दृष्टादिविषयककोपविशिष्टाः द्विपाः हस्तिनो यस्मिंस्तदत एव हयसिञ्जितनिर्घोषं हयानामश्वानां सिञ्जितैर्वचोभिः नितरां घोषो यस्मिंस्तदत एव महास्वनमतिशब्दविशिष्टं तत्पुरमयोध्या आसीत् ॥ १९ ॥

गो० टी०–तदिति । समाकुलम् अन्तःकरणक्षोभयुक्तं संभ्रान्तं बाह्येन्द्रियक्षोभयुक्तं सर्वेन्द्रियक्षोभवत् पौरजनयुक्तमित्यर्थः । मत्तसंकुपितद्विपं व्यसनातिशयेन संकुपितमत्तद्विपमित्यर्थः । हयशिञ्जितनिर्घोषं परितापातिशयेन तत इतश्चलतां हयानां भूषणरवेण संजातघोषमित्यर्थः । 'भूषणानां तु शिञ्जितम्' इत्यमरः । अत एव महास्वनमासीत् ॥ १९ ॥

२० ] ति० टी०–परमपीडिता रामवियोगदुःखेनेति शेषः ॥ २० ॥

रा० टी०–तत इति । सबालवृद्धा बालवृद्धसहिता परमपीडिता रामवियोगहेतुकातिपीडां प्राप्ता पुरी सा अयोध्या राममेवाभिदुद्राव रामेण सह जगामेत्यर्थः । तत्र दृष्टान्तः घर्मार्तः घर्मपीडितः । पुरी परमपीडितेत्यनेन तस्याश्चेतनात्वं व्यक्तम् ॥ २० ॥

गो० टी०–तत इति । परमपीडिता रामविरहदुःखेनेति शेषः ॥ २० ॥

२१–२२ ] ति० टी०–तं सुमन्त्रम् ॥ २१ ॥ २२ ॥

रा० टी०–पार्श्वत इति । पार्श्वादौ लम्बमानाः गच्छन्तः तदुन्मुखाः रामं पश्यन्त इत्यर्थः भृशनिस्वनाः परस्परं स्वस्वदुःखकथनेनातिशब्दविशिष्टाः सर्वेऽयोध्यावासिनस्तं सुमन्त्रमूचुः ॥ २१ ॥

१ प्रतियाते इति गो. पाठः । २ घर्मार्तैरिति गो. पाठः ।

आयसं हृदयं नूनं राममातुरसंशयम् । यद्देवगर्भप्रतिमे वनं याति न भिद्यते ॥ २३ ॥
कृतकृत्या हि वैदेही छायेवानुगता पतिम् । न जहाति रता धर्मे मेरुमर्कप्रभा यथा ॥ २४ ॥
अहो लक्ष्मण सिद्धार्थः सततं प्रियवादिनम् । भ्रातरं देवसंकाशं यस्त्वं परिचरिष्यसि ॥ २५ ॥
महत्येषा हि ते बुद्धिरेष चाभ्युदयो महान् । एष स्वर्गस्य मार्गश्च यदेनमनुगच्छसि ॥ २६ ॥
एवं वदन्तस्ते सोढुं न शेकुर्बाष्पमागतम् । नरास्तमनुगच्छन्ति प्रियमिक्ष्वाकुनन्दनम् ॥ २७ ॥
अथ राजा वृतः स्त्रीभिर्दीनाभिर्दीनचेतनः । निर्जगाम प्रियं पुत्रं द्रक्ष्यामीति ब्रुवन्गृहात् ॥ २८ ॥
शुश्रुवे चाग्रतः स्त्रीणां रुदतीनां महास्वनः । यथा नादः करेणूनां बद्धे महति कुञ्जरे ॥ २९ ॥
पिता हि राजा काकुत्स्थः श्रीमान्सन्नस्तदा बभौ । परिपूर्णः शशी काले ग्रहेणोपप्लुतो यथा ॥ ३० ॥
स च श्रीमानचिन्त्यात्मा रामो दशरथात्मजः । सूतं संचोदयामास त्वरितं वाह्यतामिति ॥ ३१ ॥
रामो याहीति तं सूतं तिष्ठेति च जनस्तथा । उभयं नाशकत्सूतः कर्तुमध्वनि चोदितः ॥ ३२ ॥

रा० टी०—तद्वचनमेवाह—संयच्छेति । वाजिनामश्वानां रश्मीन् संयच्छ आकर्षय । तत्प्रयोजनमाह—हे सूत ! शनैश्शनैर्याहि गच्छ । तस्यापि प्रयोजनमाह—रामस्य मुखं द्रक्ष्याम द्रक्ष्यामः । तत्र हेतुर्दुर्दर्शं द्रष्टुमशक्यं नोऽस्माकं भविष्यति ॥२२॥

गो० टी०—पार्श्वत इति । लम्बमानाः रथैकदेशमाश्रित्येति शेषः ॥ २१ ॥ २२ ॥

२३ ] ति० टी०—देवगर्भप्रतिमे स्कन्दतुल्ये, यद्वा देवगर्भो देवनिधिर्हिरण्यगर्भस्तत्प्रतिमे याति गच्छति सति ॥ २३ ॥

रा० टी०—आयसमिति । देवगर्भप्रतिमे देवगर्भो देवजन्मा देवताविशेष इत्यर्थः स एव प्रतिमा उपमेयं यस्य तस्मिन् रामे याति गच्छति सति राममातुः यद्धृदयं न भिद्यते तदायसं लोहनिर्मितम् मन्ये इति शेषः ॥ २३ ॥

गो०टी०—आयसमिति । देवगर्भप्रतिमे देवकुमारसदृशे २३

२४ ] ति०टी०—मेरुमित्यादि । नित्यं तत्प्रदक्षिणसंचारात् २४

रा० टी०—कृतेति । धर्मे पातिव्रतरूपकर्मणि रता अत एव पतिमनुगता वैदेही सीता यतः पतिं न जहाति अतः कृतकृत्या साधितस्वनिखिल प्रयोजना । पतिमित्युभयान्वयि देहलीदीपन्यायेन ? हिहेतौ ॥ २४ ॥

गो० टी०—कृतकृत्येति । मेरुमर्कप्रभा यथेति सूर्यस्य प्रादक्षिण्येन मेरुगमनमिति सर्वदा तस्य मेरुसंबन्धोऽस्त्येव २४—२५॥

२५ ] ति० टी०—यस्त्वं भ्रातरं परिचरिष्यसि स त्वं सिद्धार्थः कृतार्थः ॥ २५ ॥

रा० टी०—अहो इति । हे लक्ष्मण ! सततं निरवच्छिन्नं प्रियवादिनं प्रीत्युत्पादकवचनविशिष्टं देवसंकाशं देवानामपि प्रकाशकं भ्रातरं रामं यस्त्वं परिचरिष्यसि तत्परिचर्यां कर्तासि स त्वं सिद्धार्थः निष्पादितनिखिलप्रयोजनः अहो अतिभाग्योदयमेतत् ॥ २५ ॥

२६—२८ ] ति० टी०—तदेवाह—महतीत्यादि । अभ्युदय ऐहिकः ॥ २६—२८ ॥

रा० टी०—सिद्धार्थत्वे हेतुं वदन्नाह—महतीति । यद् यदेनमनुगच्छसि स एषः स्वर्गस्य साम्यातिशयरहितसुखविशेषस्य मार्गः उपाय इत्यर्थः अतः एषः रामसहगमनमेव महानभ्युदयः अत एव एषा रामसहगमनसाधिका ते बुद्धिर्महती ॥ २६ ॥

रा० टी०—एवमिति । प्रियं सर्वप्रीतिविषयीभूतमिक्ष्वाकुनन्दनं तं राममनुगच्छन्तः एवं वदन्तस्ते नराः जनाः आगतं बाष्पं सोढुं न शेकुः ॥ २७ ॥

रा० टी०—अथेति । अथ रामरथनिर्गमनानन्तरं प्रियं पुत्रमहं द्रक्ष्यामि इति ब्रुवन् सन् राजा गृहात् निर्जगाम ॥२८॥

२९ ] ति० टी०—करेणूनां तत्पालकवृद्धिकारिणीनाम्॥२९॥

रा० टी०—शुश्रुव इति । कुञ्जरे बद्धे सति करेणूनां हस्तिनीनां यथा नादः नाद इव रुदन्तीनां स्त्रीणां महास्वनः अग्रतः शुश्रुवे राज्ञेति शेषः ॥ २९ ॥

३० ] ति० टी०—सन्नः खिन्नः ग्रहेण राहुणा ॥ ३० ॥

रा० टी०—पितेति । काले ज्योतिःशास्त्रोक्तसमये ग्रहेण राहुणा उपप्लुत उपद्रुतः शशी चन्द्र इव सन्नः खेदं प्राप्तः राजा तदा निर्गमनसमये बभौ जनैर्ददृशे इत्यर्थः । अबभाविति वा छेदः तत्राकारो निषेधार्थकमव्ययम् ॥ ३० ॥

गो० टी०—पितेति । सन्नः अवसन्नतेजा इत्यर्थः ॥ ३० ॥

३१ ] ति० टी०—अचिन्त्यात्माहंममताभिमानराहित्येन तद्बुद्धिरज्ञेयस्वरूपः एतेन सर्वथा ममताराहित्यं सूचितम् तदेव स्वस्य ध्वनयन्नाह—त्वरितं वाह्यतामिति ॥ ३१ ॥

रा० टी०—स इति । अचिन्त्यात्मा तत्कृपामन्तरा चिन्तनाशक्यस्वरूपो रामस्त्वरितं शीघ्रं वाह्यतामिति संचोदयामास ॥ ३१ ॥

गो० टी०—स इति । अचिन्त्यात्मा इयत्तया परिच्छेत्तुमशक्यधैर्य इत्यर्थः ॥ ३१ ॥

३२ ] ति० टी०—तं सुमन्त्रम् आहेति शेषः । उभयं नाशकत् एवं च नातिमन्दं नातिवेगमवाहयदित्यर्थः ॥ ३२ ॥

रा० टी०—नोदनमेव वर्णयन्नाह—राम इति । याहीति रामः तिष्ठेति जनश्च संचोदयामासेत्यनुकृष्यते अत एव चो-

१ सिद्धिरिति गो. पाठः । २ गच्छन्त इति गो.रा.पाठः । ३ रुदन्तीनामिति गो.रा.पाठः । ४ ऽभवदिति गो.पाठः । ५ स जनस्तदेति गो. पाठः ।

निर्गच्छति महाबाहौ रामे पौरजनाश्रुभिः । पतितैरभ्यवहितं प्रणनाश महीरजः ॥ ३३ ॥
रुदिताश्रुपरिद्यूनं हाहाकृतमचेतनम् । प्रयाणे राघवस्यासीत्पुरं परमपीडितम् ॥ ३४ ॥
सुस्राव नयनैः स्त्रीणामस्रमायाससंभवम् । मीनसंक्षोभचलितैः सलिलं पङ्कजैरिव ॥ ३५ ॥
दृष्ट्वा तु नृपतिः श्रीमानेकचित्तगतं पुरम् । निपपातैव दुःखेन कृत्तमूल इव द्रुमः ॥ ३६ ॥
ततो हलहलाशब्दो जज्ञे रामस्य पृष्ठतः । नराणां प्रेक्ष्य राजानं सीदन्तं भृशदुःखितम् ॥ ३७ ॥
हा रामेति जनाः केचिद्राममातेति चापरे । अन्तःपुरसमृद्धं च क्रोशन्तं पर्यदेवयन् ॥ ३८ ॥
अन्वीक्षमाणो रामस्तु विषण्णं भ्रान्तचेतसम् । राजानं मातरं चैव ददर्शानुगतौ पथि ॥ ३९ ॥
स बद्ध इव पाशेन किशोरो मातरं यथा । धर्मपाशेन [5]संयुक्तः प्रकाशं नाभ्युदैक्षत ॥ ४० ॥

दितः उभयप्रेरितः सन् उभयं वाहनस्थापनं नाशकत् । न च रामाज्ञापनात् जनप्रेरणायाः दौर्बल्याद्बाधसंभवेनोभयं नाशकदिति विरुद्धमिति वाच्यम् राजादीनामपि जनान्तःपातित्वेन तदनुमतिसंभावनया तस्यापि बलवत्त्वेन अतिविचारमन्तरा बाधायोगात् ॥ ३२ ॥

गो० टी०—राम इति । याहि तिष्ठेति उभयत्राचोदयादिति शेषः । उभयं यानं स्थानं चाध्वनि रामजनाभ्यां चोदितः सन् कर्तुं नाशकत् ॥ ३२ ॥

३३ ] ति० टी०—अभ्यवहितं रथनेम्युद्धतम् ॥ ३३ ॥

रा० टी०—निरिति । रामे निर्गच्छति सति पतितैः पौरजनाश्रुभिः अभ्यवहितं रथचलनैरभ्युत्थितं महीरजः प्रणनाश प्रशशाम ॥ ३३ ॥

गो० टी०—निर्गच्छतीति । अभ्यवहितं सिक्तम् ॥ ३३॥

३४ ] ति० टी०—रुदिताश्रुपरिद्यूनमनुत्साहवत् ॥ ३४ ॥

रा० टी०—रुदितेति । राघवस्य प्रयाणे सति रुदिताश्रुपरिद्यूनं रोदनाश्रुप्राप्त्योत्साहाभाववदत एव अचेतनं चेतनाभाववत्पुरमासीत् ॥ ३४ ॥

गो० टी०—रुदिताश्रुपरिद्यूनमिति । हाहाकृतं हाहाकारवत् मत्वर्थीयलोपः । अचेतनं मूढं राघवस्य दशरथस्य पुरं पुरस्थजनाः ॥ ३४ ॥

३५ ] ति० टी०—आयासः खेदः चलितैस्तिर्यग्भूतैः पङ्कजैः वर्षसंभूतोदकैरिति बोध्यम् अपादानस्यैव करणत्वविवक्षा॥३५॥

रा० टी०—सुस्रावेति। आयामसंभवं वियोगजनितदुःखसंभूतमस्रमश्रु स्त्रीणां नयनैर्नेत्रेभ्यः सुस्राव । तत्र दृष्टान्तः मीनसंक्षोभचलितैः मीनानां यः संक्षोभः आकुलतया संचलनं तेन चलितैः पङ्कजैः पङ्कजेभ्यः सलिलमिव ॥ ३५ ॥

गो० टी०—सुस्रावेति । नयनैः नयनेभ्य आयाससंभवं खेदजनितं संक्षोभः उल्लनं सलिलं मकरन्दरूपम् ॥ ३५ ॥

३६] ति०टी०—एकचित्तगतं दुःखेनैकचित्ततां प्राप्तम्॥३६॥

रा० टी०—दृष्ट्वेति । एकचित्तगतं रामवियोगासहिष्णुत्वेन समानचित्ततां प्राप्तं पुरं दृष्ट्वा नृपतिः पपात तत्र दृष्टान्तः कृत्तमूलः कृत्तं छिन्नं मूलं यस्य स द्रुम इव ॥ ३६ ॥

गो०टी०—दृष्ट्वेति। एकचित्तगतम् एकचित्ततां गतम्॥३६॥

३७ ] ति० टी०—सीदन्तं मूर्छन्तम् ॥ ३७ ॥

रा० टी०—तत इति । ततः दशरथपातानन्तरं सीदन्तं राजानं प्रेक्ष्य विद्यमानानां नराणां भृशदुःखितं यथा स्यात्तथा हलहलाशब्दः एककालसर्वजनप्रभूतत्वेन महास्वनविशेषः जज्ञे बभूव । यदि च सीदन्तमित्यस्य मरणं प्राप्तमित्यर्थः तदा भृशदुःखितमिति राजविशेषणम् ॥ ३७ ॥

गो० टी०—तत इति । प्रेक्ष्य स्थितानामिति शेषः ॥३७॥

३८ ] ति० टी०—अन्तःपुरसमृद्धमन्तःपुरसहितं क्रोशन्तमुच्चैःशब्देन रुदन्तं राजानं दृष्ट्वा केचिन्नरा हा रामेति केचिद्धा राममातेति पर्यदेवयन्शुशुचुः उपलक्षणमेतत् केचिद्धा राजन्नित्यपि राममातेत्यार्षम् ॥ ३८ ॥

रा० टी०—हा रामेति । अन्तःपुरसमृद्धमन्तःपुरसहितमित्यर्थः क्रोशन्तं राजानमवलोक्येति शेषः । केचित् हा राम! इति अपरे राममातेति पर्यदेवयन् व्यलपन् ॥ ३८ ॥

गो० टी०—हा रामेति । हा रामेति परिदेवनप्रकारः राममातेत्यत्रापि हेत्यनुषञ्जनीयं सन्धिरार्षः राममातरित्यर्थः । जनाः क्रोशन्तः सन्तः पर्यदेवयन् अरुदन् समृद्धमन्तःपुरमन्तःपुरजनश्च पर्यदेवयदिति विपरिणामेनानुषङ्गः ॥ ३८ ॥

३९ ] ति० टी०—अनु पश्चाद्भाग ईक्षमाणो रामो मातरं राजानं च स्वमनुगतौ ददर्श ॥ ३९ ॥

रा० टी०—अन्वीक्षमाण इति । पथि अनुगतौ प्राप्तौ "पुमान् स्त्रिया" इति एकशेषः ॥ ३९ ॥

गो० टी०—अन्वीक्षमाण इति । अन्वीक्षमाणः आक्रोशानुसारेण पश्चात्सामान्यत ईक्षमाणः ॥ ३९ ॥

४० ] ति० टी०—पाशेन निबद्धः किशोरोऽश्वबालो मातरं यथा न पश्यति, एवं धर्मपाशेन संयुक्तः संबद्ध इव नित्यमुक्तस्वभावत्वादेवमुक्तिः प्रकाशं नाभ्युदैक्षत संकुचितदर्शनव्यापारोऽभूदित्यर्थः ॥ ४० ॥

रा० टी०—स इति । धर्मपाशेन धर्मस्य पः पालनं तस्य अशो व्याप्तिस्तेन संयुक्तः स रामः पाशेन बद्धः किशोरोऽश्वशिशुरिव प्रकाशं यथा स्यात्तथा मातरं नाभ्युदैक्षत तेन रामस्य सुखी

१ आसमिति गो. पाठः । २ हतमूल इति गो. पाठः । ३ पुरमिति गो. पाठः । ४ क्रोशन्त इति गो. पाठः । ५ संक्षिप्त इति गो. पाठः ।

पदातिनौ च यानार्हावदुःखार्हौ सुखोचितौ । दृष्ट्वा संचोदयामास शीघ्रं याहीति सारथिम् ॥ ४१ ॥
नहि तत्पुरुषव्याघ्रो दुःखजं दर्शनं पितुः । मातुश्च सहितुं शक्तस्तोत्रैर्नुन्न इव द्विपः ॥ ४२ ॥
प्रत्यगारमिवायान्ती सवत्सा वत्सकारणात् । बद्धवत्सा यथा धेनू राममाताभ्यधावत ॥ ४३ ॥
तथा रुदन्तीं कौसल्यां रथं तमनुधावतीम् । क्रोशन्तीं राम रामेति हा सीते लक्ष्मणेति च ॥ ४४ ॥
रामलक्ष्मणसीतार्थं स्रवन्तीं वारि नेत्रजम् । असकृत्प्रैक्षत सतां नृत्यन्तीमिव मातरम् ॥ ४५ ॥
तिष्ठेति राजा चुक्रोश याहि याहीति राघवः । सुमन्त्रस्य बभूवात्मा चक्रयोरिव चान्तरा ॥ ४६ ॥
नाश्रौषमिति राजानमुपालब्धोऽपि वक्ष्यसि । चिरं दुःखस्य पापिष्ठमिति रामस्तमब्रवीत् ॥ ४७ ॥

---

त्तातिशयो व्यक्तः 'धर्मपाशेन संक्षिप्तः' इति भूषणपाठः तत्र धर्मपालनव्याप्त्या संप्रेरित इत्यर्थः । व्याप्तेः प्रेरिकात्वं च भिक्षा वासयतीत्यादाविव भाक्तम् ॥ ४० ॥

गो० टी०—स इति । किशोरोऽश्वबालः संक्षिप्तः बद्ध इति यावत् प्रकाशं नाभ्युदैक्षत अपाङ्गेनाभ्युदैक्षतेत्यर्थः ॥ ४० ॥ ४१ ॥

४१ ] ति० टी०—यानार्हत्वादिगुणविशिष्टौ पितरौ दृष्ट्वेत्यन्वयः ॥ ४१ ॥

रा० टी०—पदातिनाविति । यानार्हौ नित्यं यानगमनयोग्यौ सुखोचितौ नित्यं सुखप्राप्तियोग्यौ मातापितरौ पदातिनौ दुःखार्तौ च दृष्ट्वा शीघ्रं याहि रथं प्रापयेति सारथिं संचोदयामास ॥ ४१ ॥

४२ ] ति० टी०—दुःखजं दुःखं जायतेऽस्मात्तादृशम् "अन्यत्रापि दृश्यते" इति डः । 'दुःखदम्' इति पाठान्तरम् लोकदृष्ट्येदम् सहितुम् "तीषसह—" इति वेट् । दुःखितौ पितरौ द्रष्टुं न शक्त इति यावत् तोत्रमङ्कुशस्तत्पीडितो द्विपो यथा स्वपृष्ठवर्तिवस्तुदर्शनाशक्तस्तद्वत् अस्य च कैकेयीवाक्यमेवाङ्कुशः ॥ ४२ ॥

रा० टी०—शीघ्रं यापने हेतुं वदन्नाह—नहीति । दुःखजं दुःखजनकं पितुर्मातुश्च दर्शनं सहितुं नैव शक्तः, तत्र दृष्टान्तः तोत्रैरङ्कुशैर्नुन्नः प्रेरितो द्विप इव ॥ ४२ ॥

गो० टी०—नहीति । सहितुं सोढुं तोत्रार्दितः[1] वैणुकेन पीडितः 'तोत्रं वैणुकम्' इत्यमरः ॥ ४२ ॥

४३–४४ ] ति० टी०—वत्सकारणात्प्रत्यगारं वत्सावस्थितिमद्गृहमुद्दिश्यागच्छन्ती सवत्सा बद्धवत्सा धेनुर्यथा धावति, एवं राममाताधावत । एषु सवत्सेत्याद्यधिककथनं कवेरपि शोकाविष्टत्वान्न दोषाय ॥ ४३ ॥ ४४ ॥

४५ ] ति० टी०—रामलक्ष्मणसीतार्थं तद्वियोगजशोकवशान्नेत्रजं वारि स्रवन्तीं भ्रमन्तीं नृत्यन्तीमिवेतस्ततः परिभ्रमन्तीमसकृत्प्रैक्षत राम इति शेषः ॥ ४५ ॥

रा० टी०—प्रत्यगारमिति । सा राममाता अभ्यधावत रथमिति शेषः तत्र दृष्टान्तः बद्धवत्सा बद्धः गृहे निरुद्धो वत्सो यस्याः सा सवत् प्रयत्नसहिता वत्सकारणात् वत्सार्थं प्रत्यगारं प्रतिदिनमागन्तव्यगृहमायान्ती धावन्ती धेनुर्यथा ॥ ४३ ॥

रा० टी०—तथेति । तेन प्रकारेण रथमनुधावतीमनुधावन्तीं नेत्रजं वारि स्रवन्तीं नृत्यन्तीं गात्रविक्षेपं कुर्वन्तीं तां मातरं कौशल्यां स रामः असकृदेव प्रैक्षत । इव एवार्थे श्लोकद्वयमेकान्वयि ॥ ४४ ॥ ४५ ॥

गो० टी०—प्रत्यगारमिति । बद्धवत्सा वत्सकारणात् अगारं प्रत्यायान्ती धेनुरिव वत्सला[2] राममाता अभ्यधावत् रथमिति शेषः ॥ ४३ ॥

गो० टी०—तथेत्यादि । नृत्यन्तीमिति तद्वदितस्ततः परिभ्रमन्तीमित्यर्थः ॥ ४४ ॥ ४५ ॥

४६ ] ति० टी०—चक्रयोर्युयुत्सुसेनयोरन्तरा स्थित उदासीनः पुरुष इव सुमन्त्रस्यात्मा दोलायितो बभूव ॥ ४६ ॥

रा० टी०—तिष्ठेति । सुमन्त्रस्य आत्मा मनः चक्रयोः युद्धार्थं विष्णुद्वयप्रक्षेपितसुदर्शनयोरन्तरा मध्ये इव बभूव ॥ ४६ ॥

गो० टी०—तिष्ठेति । सुमन्त्रस्य आत्मा मनः चक्रयोरन्तरेव रथपूर्वपश्चाद्भागस्थितयोश्चक्रयोर्मध्यगतः पुरुष इव बभूव दशरथरामवचनाभ्यामतिसंकटं प्राप्त इत्यर्थः ॥ ४६ ॥

४७ ] ति० टी०—ननु राजवचनातिक्रमे दोषः स्यादत आह—नेति । उपालब्धोऽपि मया बहुशस्तिष्ठ तिष्ठेत्युक्तोऽपि मद्वचनं नाकार्षीरिति पुनर्गमनानन्तरं राज्ञोपालब्धोऽपि नाश्रौषमिति वक्ष्यसि दुःखस्य मद्दुःखस्य हेतुभूतं पापिष्ठमतिदुःखजनकत्वात् पापिष्ठं चिरविलम्बनमिति हेतोः शीघ्रं गच्छेति रामस्तमब्रवीत् ॥ ४७ ॥

रा० टी०—मत्कर्तृकनिवारणेऽपि त्वया रथः किमर्थं न स्थापित इति राज्ञा पृष्टेन मया किमुत्तरयितव्यमिति सुमन्त्रशङ्कामुपलभ्य राम आह—नाश्रौषमिति । उपालब्धः राज्ञा भर्त्सनपूर्वकं पृष्टोऽपि त्वं दुःखस्य चिरं विलम्बः पापिष्ठमतिपापानुमापकमित्यर्थः । अतो नाश्रौषं रथनिवारणफलकभवद्वचनकर्मकश्रुत्यनुकूलव्यापारानुकूलकृतिमानासमिति वक्ष्यसि इति तं सुमन्त्रं रामोऽब्रवीत् अत्र नैयायिकमते फलव्यापारौ धात्वर्थौ कृतिः प्रत्ययार्थः वैयाकरणमतेऽपि न क्षतिः तन्मते कृतेर्धात्वर्थत्वात् प्राचीनमतेऽपि व्यापारस्य धात्वर्थत्वेन तस्य च व्यापारो भावना सैवेत्यादिना कृत्यनतिरेकात् तस्या अपि धात्वर्थत्वं सिद्धमेव प्राचीनमते कृतिजन्यत्वेन व्यापारस्य न बोधविषयत्वं नवीनमते तत्त्वेनाप्रतीत्यन्यदेतत् अत्रैवं कल्पने

---

१ तोत्रार्दित इति गो. पाठः । २ वत्सलेति गो. पाठः ।

स रामस्य वचः कुर्वन्ननुज्ञाप्य च तं जनम् । व्रजतोऽपि हयाञ्शीघ्रं चोदयामास सारथिः ॥ ४८ ॥
न्यवर्तत जनो राज्ञो रामं कृत्वा प्रदक्षिणम् । मनसाप्यश्रुवेगेन न न्यवर्तत मानुषम् ॥ ४९ ॥
यमिच्छेत्पुनरायातं नैनं दूरमनुव्रजेत् । इत्यमात्या महाराजमूचुर्दशरथं वचः ॥ ५० ॥
तेषां वचः सर्वगुणोपपन्नं प्रस्विन्नगात्रः प्रविषण्णरूपः ।
निशम्य राजा कृपणः सभार्यो व्यवस्थितस्तं सुतमीक्षमाणः ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

## एकचत्वारिंशः सर्गः ।

पौरशोकानुवासितहृदय आदिकविः सिंहावलोकनन्यायेन तदुद्देशमेव विस्फारयति ।

तस्मिंस्तु पुरुषव्याघ्रे निष्क्रामति कृताञ्जलौ । आर्तशब्दो हि संजज्ञे स्त्रीणामन्तःपुरे महान् ॥ १ ॥

धर्मात्मा सत्यसंधश्च सत्यवाक्यो दृढव्रत इत्यादिना नित्यं सत्यादिधर्मपरायणस्य रामस्य न मिथ्योपदेशकत्वम् । न च कृतेर्निषेधे तज्जन्यव्यापारजनितश्रुतेरपि निषेधापत्त्या मिथ्योपदेशकर्तृत्वं तदवस्थमिति वाच्यं कृतिजन्यव्यापारमन्तराऽपि श्रुतेरनुभवसिद्धत्वात् । तथाच कृतिजन्यव्यापारजनितश्रुतेर्निषेधेऽपि विषयेन्द्रियसंबन्धजनितश्रुतेर्निषेधात् न मिथ्यासंसर्गित्वम् । कृतिजन्यव्यापारजनितश्रुतेर्निषेधो विषयेन्द्रियसंबन्धजनितश्रुतेरपि निषेध इति तु न भ्रमितव्यं श्यामं घटं न पश्येत्युक्तं श्यामेतरघटविषयकदर्शननिषेधस्यानुभवविरुद्धत्वात् चिरं दुःखस्य पापिष्ठमित्युक्तेः स्थितावधिकं दुःखं भवितेति ध्वनितम् ॥ ४७ ॥

गो० टी०—राजवचनातिक्रमणे महान् दोषो भविष्यतीत्याशङ्कायामाह—नाश्रौषमिति । पुनरागमनानन्तरं राज्ञा किमर्थं मद्वाक्येन स्थितोऽसीति निन्दितोऽपि नाश्रौषं त्वद्वचनमिति वक्ष्यसि । किमर्थमेवमसत्यवचनं तत्राह—चिरमिति । दुःखस्य इदानीमनुभूयमानदुःखस्य चिरं विलम्बः पापिष्ठमतिदुःसहम् ॥ ४७ ॥

४८ ] ति० टी०—तं जनमनुव्रजत्पौरजनमनुज्ञाप्य रामेण कृतां पुनः परावृत्त्य गमनानुज्ञां प्रापय्य व्रजतोऽपि स्वतो गच्छतोऽपि पुनः शीघ्रं शीघ्रगत्यर्थम् ॥ ४८ ॥

रा० टी०—स इति । स सुमन्त्रः तं समीपस्थं जनमनुज्ञाप्य तदनुमतिं गृहीत्वा व्रजतः चलतोऽपि हयान् शीघ्रमतिवेगं यथा स्यात्तथा चोदयामास ॥ ४८ ॥

गो० टी०—रामस्येति । तं जनं कौसल्यां परिवेष्ट्यागतमवरोधजनमनुज्ञाप्य रामेणानुज्ञां प्रापय्येत्यर्थः ॥ ४८ ॥

४९ ] ति० टी०—राज्ञो जनो राजसंबन्धी जनः, अवरोधजन उपजीविजनश्च रामं मनसा प्रदक्षिणं कृत्वा न्यवर्तत देहमात्रेणेति शेषः रथस्य शीघ्रगत्वादिति भावः आशुवेगेन मनसा तु न न्यवर्तत, मानुषमितरमनुष्यसमूह आशुवेगेन मनसापि न न्यवर्तत अपिना देहेन च न न्यवर्तत । 'मनसाप्यश्रुवेगैश्च' इति पाठान्तरम् अत्र पाठे मनसोऽनिवृत्तेरश्रुवेगो ज्ञापकः ॥ ४९ ॥

रा० टी०—न्यवर्ततेति । राज्ञो जनः राजकीयः पुरुषः रामं प्रदक्षिणं कृत्वा न्यवर्तत दशरथसमीपं प्रापेत्यर्थः आशुवेगेन मनसा तु राजकीयो जनः मानुषं साधारणजनोऽपि न न्यवर्तत जनस्य नन्वश्चात्रुक्तिः ॥ ४९ ॥

गो० टी०—न्यवर्ततेति । राज्ञो जनः राजसंबन्ध्यवरोधजनः मानुषं मानुषाणां समूहः समूहार्थेऽण्प्रत्ययः मनसा अश्रुवेगैश्च निवृत्तावरोधजनस्य मनसा अश्रुवेगैश्च सह न न्यवर्ततेति संबन्धः ॥ ४९ ॥

५० ] ति० टी०—उत्कटदिदृक्षावत्तो राज्ञस्तु सचिववचनान्निवृत्तिरित्याह—यमिच्छेदिति ॥ ५० ॥

रा० टी०—राजकीयपुरुषस्य राजसमीपगमने प्रयोजनं वदन्नाह—यमिति । पुनरायातं पुनरागमनविशिष्टं यं जनमिच्छेत्तं जनं दूरं नैवानुव्रजेत् इति वचोऽमात्या ऊचुः ॥ ५० ॥

गो० टी०—कालोचितकर्तव्यज्ञाः सचिवाः शास्त्रार्थकथनेन राजानं निवर्तयन्ति—यमिच्छेदिति ॥ ५० ॥

५१ ] ति० टी०—व्यवस्थितोऽवस्थितः ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०—तेषामिति । तेषाममात्यानां वचो निशम्य श्रुत्वा सभार्यो राजा व्यवस्थितः तत्रैवातिष्ठदित्यर्थः ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

गो० टी०—तेषामिति । व्यवस्थितः स्थितवान् ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

१ ] ति० टी०—इदानीं तत्प्रयाणनिमित्तः सर्वप्रजाशोक उच्यते—तस्मिन्निति । मातृवेष्टितपितृदेशेन कृताञ्जलौ निष्क्रामति नगरान्निर्गच्छति सति ॥ १ ॥

रा० टी०—सिंहावलोकनन्यायेन रामनिष्क्रमणकाले जातं वृत्तं वर्णयन्नाह—तस्मिन्निति । पुरुषव्याघ्रे परमपुरुषे रामे निष्क्रामति निर्गच्छति सति महान् आर्तशब्दो दीनः स्वनः संजज्ञे ॥ १ ॥

१ रामस्य स इति गो. पाठः । २ अश्रुवेगैश्चेति गो. पाठः । ३ आयान्तामिति गो. पाठः । ४ नैवेति रा. पाठः । ५ पन्नमिति गो. पाठः । ६ विनिर्गते इति गो. पाठः । ७ ऽथेति गो. पाठः ।

अनाथस्य जनस्यास्य दुर्बलस्य तपस्विनः । यो गतिः शरणं चासीत्स नाथः क्व नु गच्छति ॥ २ ॥
न क्रुध्यत्यभिशस्तोऽपि क्रोधनीयानि वर्जयन् । क्रुद्धान्प्रसादयन्सर्वान्समदुःखः क्व गच्छति ॥ ३ ॥
कौसल्यायां महातेजा यथा मातरि वर्तते । तथा यो वर्ततेऽस्मासु महात्मा क्व नु गच्छति ॥ ४ ॥
कैकेय्या क्लिश्यमानेन राज्ञा संचोदितो वनम् । परित्राता जनस्यास्य जगतः क्व नु गच्छति ॥ ५ ॥
अहो निश्चेतनो राजा जीवलोकस्य संक्षयम् । धर्म्यं सत्यव्रतं रामं वनवासे प्रवत्स्यति ॥ ६ ॥
इति सर्वा महिष्यस्ता विवत्सा इव धेनवः । रुरुदुश्चैव दुःखार्ताः सस्वरं च विचुक्रुशुः ॥ ७ ॥
स तमन्तःपुरे घोरमार्तशब्दं महीपतिः । पुत्रशोकाभिसंतप्तः श्रुत्वा चासीत्सुदुःखितः ॥ ८ ॥
नाग्निहोत्राण्यहूयन्त [ नोपचन्गृहमेधिनः । अकुर्वन्न प्रजाः कार्यं ] सूर्यश्चान्तरधीयत ।
व्यसृजन्कवलान्नागा गावो वत्सान्न पाययन् [ पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ] ॥ ९ ॥

गो० टी०–तस्मिन्नित्यादि । कृताञ्जलौ मातृपरिवेष्टितं पितरमुद्दिश्य कृताञ्जलौ अन्तःपुरे स्त्रीणां दशरथेन समागतानामन्तःपुरवासिनीनां स्त्रीणाम् ॥ १ ॥

२ ] ति० टी०–तदेवाह–अनाथस्येति । तपस्विनः शोच्यस्य गतिः सकलसुखावाप्तिहेतुः शरणं सर्वापद्भ्यो रक्षिता ॥ २ ॥

रा० टी०–शब्दस्वरूपं बोधयन्नाह–अनाथस्येति । अनाथस्य रक्षणरहितस्य रक्षाविषयकौदासीन्यविशिष्टदशरथस्येत्यर्थः दुर्बलस्य रामातिरिक्तबलरहितस्य अस्य जनस्य प्रजासमूहस्य च तपस्विनः नित्यतपोनिरतस्य वशिष्ठादिब्रह्मकुलस्य चेत्यर्थः यो रामः गतिः प्राप्यः शरणं चासीत् स नाथः अस्मन्मनोरथपूरकः क्व गच्छति किंच अनाथस्य दशरथस्य पालनोदासीनत्वेन रामातिरिक्तरक्षकरहितस्य अत एव दुर्बलस्य रामातिरिक्तबलरहितस्य अत एव तपस्विनः स्वरक्षा कथं स्यादिति विचारयतः अस्य जनस्य गतिः रामः क्व गच्छति शेषं पूर्ववत् ॥ २ ॥

गो० टी०–अनाथस्येति । तपस्विनः शोच्यस्य गम्यत इति गतिः प्राप्य इति यावत् । शरणं रक्षिता ' शरणं गृहरक्षित्रोः ' इत्यमरः ॥ २ ॥

३–४ ] ति० टी०–अभिशस्तो मिथ्याभिशंसनं प्रापितः क्रोधनीयानि प्रजाक्रोधकराणि ॥ ३ ॥ ४ ॥

रा० टी०–नेति । अभिशप्तः हास्यादिना केनचिदुक्तोऽपि क्रोधनीयानि क्रोधोत्पादकवचनानि वर्जयन् अशृण्वन्नित्यर्थः क्रोधनीयानीति भावानीयान्तप्रकृतिकार्यआयजन्तं क्रुद्धान् कैश्चिद्धेतुभिः कोपविशिष्टान्प्रसादयन् तत्कोपदूरीकरणपूर्वकतत्प्रीतिमुत्पादयन् समदुःखः किंचिद्धेतुकास्मद्दुःखदर्शनमात्रेण तद्दुःखविशिष्टः सन् यो न क्रुध्यति स रामः क्व गच्छति ॥ ३ ॥

रा० टी०–कौसल्यायामिति । महात्मा रामः ॥ ४ ॥

गो० टी०–नेति । अभिशप्तः मिथ्याभिशंसनं प्रापितः कश्चिदित्यस्य न क्रुध्यतीत्यनेन संबन्धः ॥ ३–६ ॥

५ ] ति० टी०–वनं गन्तुमिति शेषः । अस्य जनस्येत्युक्त्वा किं विशिष्य कथनेन सर्वस्य जगतः परित्रातेति भगवत्स्वरूपज्ञायाः कस्याश्चिद्वचः ॥ ५ ॥

रा० टी०–कैकेय्येति । कैकेय्या सह क्लिश्यमानेन निश्चितवियोगहेतुकक्लेशविशिष्टेन राज्ञा अवनं वनस्थरक्षणं यथा स्यात्तथा संचोदितः प्रेरितः अस्य जनस्य चेतनस्येत्यर्थः जगतो जडस्येत्यर्थः परित्राता रक्षको रामः क्व गच्छति ॥ ५ ॥

६–८ ] ति० टी०–संक्षयमाधारत्वेन गृहभूतं वनवासे तन्निमित्तम् । प्रवत्स्यति प्रवासयति ॥ ६–८ ॥

रा० टी०–अहो इति । जीवलोकस्य चिदचितोः संक्षयं समीचीनमाश्रयं धर्म्यं नित्यं धर्मसंयुक्तमत एव सत्यव्रतं रामं वनवासे यत्प्रवत्स्यति प्रेषयति अतो राजा निश्चेतनः प्रशस्तनिश्चयाभाववान् अहो कष्टमेतत् ॥ ६ ॥

रा० टी०–इतीति । रुरुदुः विचुक्रुशुः हा रामेत्यूचुश्च ॥ ७ ॥

रा० टी०–स इति । स महीपतिः तमार्तशब्दं श्रुत्वा सुदुःखितश्चासीत् ॥ ८ ॥

गो० टी०–अहो इति । निश्चेतनः बुद्धिहीनः प्रवत्स्यति प्रवासयति ॥ ६–८ ॥

९ ] ति० टी०–नाहूयन्ताग्निहोत्रिभिः रामदुःखादिति शेषः । अन्तरधीयत रामव्यसनात्तद्दृश्यतया दिवसशेषे सत्यप्यन्तर्हितोऽभूत् अकाले दुर्दिनमभूदिति भावः । व्यसृजंस्त्यक्तवन्तः नागा गजाः न पाययन्नापाययन् अडभाव आर्षः । दुर्दिनाद्युत्पाता राज्ञो रावणस्य च नाशसूचका इति बोध्यम् ॥ ९ ॥

रा० टी०–नेति । अग्निहोत्राणि न अहूयन्त हवनकरणयोग्यैरिति शेषः । सूर्यः अन्तरधीयत अकालकदुर्दिनादिना तिरोऽभवदित्यर्थः । नाना हस्तिनः कम्बलान् स्वपृष्ठाच्छादनविशेषान् व्यसृजन् । गावः वत्सान् न पायन् अपाययन् आगमशास्त्रस्यानित्यत्वादडविरहः । एतेन सर्वेषां रामवियोगदुःखासहिष्णुत्वं सूचितम् ॥ ९ ॥

गो० टी०–नाग्निहोत्राणीति । नाहूयन्त अग्नीनामन्त-

१ शप्त इति गो. रा. पाठः । २ कच्चिद्गत इति गो. पाठः । ३ संप्रियमिति गो. पाठः । ४ चरणद्वयमेतदधिकं गो. पाठे । ५ कम्बलानिति रा. पाठः । ६ अर्धमेतदधिकं गो. पाठे । ७ भावार्थकानीयर्प्रत्ययान्त इति तात्पर्यम् ।

त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि । दारुणाः सममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः ॥ १० ॥
नक्षत्राणि गतार्चींषि ग्रहाश्च गततेजसः । विशाखाश्च सधूमाश्च नभसि प्रचकाशिरे ॥ ११ ॥
कालिकानिलवेगेन महोदधिरिवोत्थितः । रामे वनं प्रव्राजिते नगरं प्रचचाल तत् ॥ १२ ॥
दिशः पर्याकुलाः सर्वास्तिमिरेणेव संवृताः । न ग्रहो नासिनक्षत्रं प्रचकाशे न किंचन ॥ १३ ॥
अकस्मान्नागरः सर्वो जनो दैन्यमुपागमत् । आहारे वा विहारे वा न कश्चिदकरोन्मनः ॥ १४ ॥
शोकपर्यायसंतप्तः सततं दीर्घमुच्छ्वसन् । अयोध्यायां जनः सर्वश्चुक्रोश जगतीपतिम् ॥ १५ ॥

र्गनाद्धोतॄणां व्यसनाच्चेति भावः । अन्तरधीयत निस्तेजस्कोऽभूदित्यर्थः ॥ ९ ॥

गो० टी०—व्यसृजन्निति । पाययन् अपायन् आगमशास्नस्यानित्यत्वादडभावः ॥ १० ॥

१० ] ति० टी०—त्रिशङ्कुर्दक्षिणदिक्स्थः लोहिताङ्गो भौमः गुरुबुधौ अन्ये सर्वे ग्रहाः शनिशुक्रादयः सोममभ्येत्य रात्रौ वक्रगत्या चन्द्रं प्राप्य दारुणाः क्रूरार्चिषः सन्तो व्यवस्थिताः॥१०॥

रा० टी०—इहस्थानां शोकं संवर्ण्य लोकान्तरस्थानामपि वर्णयन्नाह—त्रिशङ्कुरिति । त्रिशङ्कुः विश्वामित्रनिर्मितस्वर्गविशेषस्थित इक्ष्वाकुवंश्यविशेषः लोहिताङ्गो मङ्गलः बृहस्पतिबुधावपि दारुणाः क्रूराः सर्वे ग्रहाः शनैश्चरादयश्च सोमं चन्द्रसमभ्येत्य रात्रौ वक्रगमनेन प्राप्य अव्यवस्थिताः चञ्चलचित्ता आसन्निति शेषः ॥ १० ॥

गो० टी०—त्रिशङ्कुरिति । त्रिशङ्कुरिक्ष्वाकुकुलकूटस्थः लोहिताङ्गोऽङ्गारकः बृहस्पतिबुधयोर्दारुणत्वं दारुणाङ्गारकसंयोगाद् क्रूरस्थानगतत्वाद्वा त्रिशङ्कोर्ग्रहत्वाभावेऽपि छत्रिणो गच्छन्तीतिवद्व्यपदेशः त्रिशङ्कोः सोमप्राप्तिः ऋजुदेशत्वेन ज्ञेया । ननु पूर्णे चतुर्दशे वर्षे पञ्चम्यां भरताग्रजः इति वक्ष्यमाणरीत्या तत्रैकदाचित्पुष्ययोगसंभावनया च पञ्चम्यामभिषेक इति सिद्धं तस्मिन्नेव च निर्गतः तथा च कर्कटकस्थे चन्द्रे कथं बुधसमागमः तस्य सूर्यसमीपवर्तित्वात् उच्यते प्राप्तिरत्र नैकराशिस्थितिः किंतु क्वचित् प्राप्तिः क्वचिद्दृष्टिरिति न दोषः वक्रगत्या समागम इत्यप्याहुः ॥ ११ ॥

११ ] ति० टी०—गतार्चींषि त्यक्तस्वाभाविककान्तीनि ग्रहा शन्यादयः विशाखा विमार्गस्थाः सधूमाश्च नभसि दृश्यन्ते ॥ ११ ॥

रा० टी०—नक्षत्राणीति । गतार्चींषि अनुद्भूततेजांसि नक्षत्राणि गततेजसः ग्रहादयश्च सधूमाः धूमसदृशाः नभसि प्रचकाशिरे ददृशिरे ॥ ११ ॥

गो० टी०—नक्षत्राणीति । विशाखाः इक्ष्वाकुदेशनक्षत्रं सधूमा इत्यनेन भाविराजविपत् सूच्यते ॥ १२ ॥

१२–१३ ] ति० टी०—कालिका मेघपङ्क्तिरनिलवेगेनाकाश उत्थित उदधिरिव दृश्यते नगरं प्रचचालेत्यनेन भूकम्पः ॥ १२ ॥ १३ ॥

रा० टी०—कालिकेति । कालिका मेघमाला अनिलवेगेनोत्थितो महोदधिः समुद्र इवोत्थिता एतेनाकालवृष्ट्या रामगमनं निवारयामीति तदभिप्रायः सूचितः अत एव तदयोध्यानगरं प्रचचाल रामेण सहागच्छदित्यर्थः । अत्र सत्त्वगुणवतां शोकः सार्वकालिकस्वसहायीभूतदशरथादिशोकदर्शनजनितः, तमोगुणवतां तु निश्चितरावणादिविध्वंसजनित इति विवेकः । किं च अत्र सत्त्वासत्त्वगुणवतां शोकः प्रातिभासिकरामौदासीन्यजनितः तेन रामस्वरूपस्य सर्वचित्तापहारकत्वं व्यक्तम् । 'मेघजाले च कालिका' इत्यमरः ॥ १२ ॥

गो० टी०—कालिकेति । कालिकानिलवेगेन मेघजालयुक्तप्रभञ्जनवेगेन 'मेघजाले च कालिका' इत्यमरः । प्रचचाल व्यसनातिशयात्प्रकम्पितमभूत् ॥ १३ ॥

रा० टी०—दिश इति । तिमिरेण संवृताः सर्वा दिशः तदभिमानिदेवताः पर्याकुला व्याकुलचित्ता आसन्निति शेषः अत एव ग्रहः शन्यादिः किंचन नैव प्रचकाशे नक्षत्रमश्विन्यादि च नैव प्रचकाशे ॥ १३ ॥

गो० टी०—दिश इति । ग्रहः जात्येकवचनं नवग्रहा इत्यर्थः । नक्षत्रम् अश्विन्यादि न किंचित् प्रचकाशे सप्तर्षिध्रुवादिकं न प्रचकास इत्यर्थः ॥ १४ ॥

१४ ] ति० टी०—अकस्माद्दैन्यहेतुकारणाभावेऽपि दैन्यं रामवियोगदैन्यादधिकं दैन्यम् ॥ १४ ॥

रा० टी०—अकस्मादिति । अकस्मादतर्कितरामवियोगाद्दैन्यमुपागमत् अत एवाहारादौ मनो नाकरोत् ॥ १४ ॥

गो० टी०—अकस्मादिति । अकस्मात् रामप्रव्राजनव्यतिरिक्तबन्धुविश्लेषणादिकारणं विनेत्यर्थः ॥ १६ ॥

१५ ] ति० टी०—शोकेन रामवियोगजेन पर्यायसंतप्तः पुनः पुनः संतप्तः प्रतिज्ञापालनरूपधर्मवत्यपि कोप उत्पातः ॥१६॥

रा० टी०—शोकेति । शोकपर्यायसंतप्तः शोकस्य परम्परयातितापं प्राप्तः अयोध्यायां विद्यमानः सर्वो रामप्रेषणाभिप्रायानभिज्ञो जनः जगतीपतिं चुकोप किं च जगतीपतिं प्राप्य मन्थरायै चुकोप अत एव जगतीपतेः कर्मत्वम् ॥ १६ ॥

१ स्विति गो. पाठः । २ नापीति गो. वापीति रा. पाठः । ३ शुशोचेति गो. चुकोपेति रा. पाठः ।

बाष्पपर्याकुलमुखो राजमार्गगतो जनः । न हृष्टो लक्ष्यते कश्चित्सर्वः शोकपरायणः ॥ १६ ॥
न वाति पवनः शीतो न शशी सौम्यदर्शनः । न सूर्यस्तपते लोकं सर्वं पर्याकुलं जगत् ॥ १७ ॥
अनर्थिनः सुताः स्त्रीणां भर्तारो भ्रातरस्तथा । सर्वे सर्वं परित्यज्य राममेवान्वचिन्तयन् ॥ १८ ॥
ये तु रामस्य सुहृदः सर्वे ते मूढचेतसः । शोकभारेण चाक्रान्ताः शयनं [1]नैव भेजिरे ॥ १९ ॥
ततस्त्वयोध्या रहिता महात्मना पुरंदरेणेव मही सपर्वता ।
चचाल घोरं भयशोकदीपिता सनागयोधाश्वगणा ननाद च ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकचत्वारिंशः सर्गः ॥ ४१ ॥

## द्विचत्वारिंशः सर्गः ।

प्रजविना रथेन निर्गते रामे तदन्तरमुल्लिलिङ्क्षिपुर्दशरथो रथरजसोऽप्यदर्शनाद्विगुणितखेदः संमुमूर्छ । पतन्तं तमवष्टब्धुमागतां कैकेयीं निर्भर्त्स्य स्पर्शेऽपि न्यषेधीत् । कौसल्या तमुत्थाप्य न्यवर्तयत् । भृत्यास्तं कौसल्यागृहं निन्युः । रामानुशोचनेन सीदतो राज्ञः पार्श्वोपविष्टायाः कौसल्याया बहुविधो विलापः ।

यावत्तु निर्यतस्तस्य रजोरूपमदृश्यत । नैवेक्ष्वाकुवरस्तावत्संजहारात्मचक्षुषी ॥ १ ॥

---

गो० टी०–शोकेति । शोकपर्यायसंतप्तः शोकपरम्परासंतप्तः ॥ १६–१८ ॥

१६–१७ ] ति० टी०–पूर्वं तु केषांचित्तत्त्वज्ञानां हर्ष आसीत्, संप्रति तु सर्वोऽप्यहृष्टः ॥ १६ ॥ १७ ॥

रा० टी०–बाष्पेति । राजमार्गगतः सर्वो जनः शोकपरायणः आसीदिति शेषः अत एव बाष्पपर्याकुलमुखः आसीदत एव कश्चिद्धृष्टो न लभ्यते ॥ १६ ॥

रा० टी०–नेति । सर्वं जगत् पर्याकुलं व्याकुलचित्तमासीदिति शेषः ॥ १७ ॥

१८–१९ ] ति० टी०–सुता अनर्थिनोऽनपेक्षिणः मातापित्रोरिति शेषः स्त्रीणां भर्तारोऽनर्थिनः भ्रातरः भ्रातृणामनर्थिनः इति शेषः राममेवान्वचिन्तयन् तद्ध्यानेन सर्वो जनः सर्वत्र विरक्तोऽभूदित्याशयः ॥ १८ ॥ १९ ॥

रा० टी०–अनर्थिन इति । सुताः मातापित्रोः अनर्थिनः मातापित्रर्थसाधनरहिताः भर्तारः पतयः स्त्रीणामनर्थिनः भ्रातरो भ्रातृणामनर्थिनः आसन् । मातापित्रोरिति भ्रातृणामिति च आसीदिति शेषः । तत्र हेतुः सर्वं स्वस्वकर्तव्यं परित्यज्य राममेव अन्वचिन्तयन् ॥ १८ ॥

गो० टी०–अनर्थिन इति । सुताः स्त्रीणामनर्थिनः मातृणां स्तन्यं नापेक्षन्त इत्यर्थः । भर्तारः स्त्रीणामनर्थिनः भ्रातरः अनर्थिनः अन्योन्यमिति शेषः । सर्वे अलरक्ताः सर्वे ॥ १९ ॥

रा० टी०–ये इति । शोकभारेण आक्रान्ता व्याप्ता अत एव मूढचेतसः ये सर्वे रामस्य सुहृदः ते तु शयनं निद्रां नैव भेजिरे प्रापुरित्यर्थः ॥ १९ ॥

गो० टी०–ये त्विति । शयनं मूर्छाशयनमित्यर्थः । ये स्थिरत्वेन पूर्वेभ्यो वैलक्षण्यमुच्यते चक्रवर्तिगतिमद्यमेने श्रीकौसल्या मधुकाकालमयकरोत् तथा न भवन्ति सुहृदः तेषामेकोऽपि न किंचित्कार्यार्थं रामस्य सुहृदः पित्रोरपि गोप्यं रामो येभ्यः प्रकाशयति तादृशाः सुशोभनहृदयाः सुहृदः आत्मनं त्यक्त्वा राममेव रक्षन्त इत्यर्थः । सर्वे त इति तेषु कश्चिदप्यन्यादृशो नास्तीति भावः । यदि सुहृदस्तर्हि पादौ संगृह्य रामो निवर्त्यतामित्यत्राह–मूढचेतसः प्रसन्नबुद्धिभिः कर्तव्यं कथं बुद्धिहीनाः कुर्वन्तीति भावः । ज्ञानभ्रंशस्य हेतुमाह–शोकेति । पर्वतेनेव शोकभारेणाक्रान्ताः शयनं न जहुः पर्वताक्रान्ताः कथमुत्तिष्ठेयुरिति भावः । तदा पारवश्यकाले न तु स्वयं स्वबुद्ध्या शयाना उत्तिष्ठन्ति ॥ २० ॥

२० ] ति० टी०–पुरंदरेण रहिता सपर्वता समेरुर्यथा मही चलति तस्य त्रिलोकीपतित्वात् तथा रामेण रहितायोध्या चचाल रक्षकाभावात् ननाद च दुःखाक्रन्देत्यर्थः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

रा० टी०–तत इति । महात्मना रामेण रहिता प्रातीतिकवियोगं प्राप्ता चचाल रामेण सहाप्रकटरूपान्तरेणेति शेषः ननाद च ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

गो० टी०–तत इति । पुरन्दरेणेव महीति त्रैलोक्याधिपतित्वादुक्तम्, यद्वा पुरन्दरेण गोत्रभिदा हेतुना पर्वतसहिता मही यथा चलति तद्वद्रक्षकरामविश्लेषेण गजाश्वसहितायोध्या भयेन चचालेत्यर्थः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

१ ] ति० टी०–निर्यतस्तस्य रामस्य संबन्धि रजसो रूप रथ्याधूलेः स्वरूपं यावत्तेनादृश्यत तावदात्मनश्चक्षुषी न संजहार इदं रामरथोद्धतं रज इति प्रीत्या तत्पश्यन्नेवासीदिति भावः ॥ १ ॥

---

१ न भ्रकुत्स्नेति गो. पाठः । २ पीडितेति गो. पाठः ।

यावद्राजा प्रियं पुत्रं पश्यत्यत्यन्तधार्मिकम् । तावद्व्यवर्धतेवास्य धरण्यां पुत्रदर्शने ॥ २ ॥
न पश्यति रजोऽप्यस्य यदा रामस्य भूमिपः । तदार्तश्च विषण्णश्च पपात धरणीतले ॥ ३ ॥
तस्य दक्षिणमन्वागात्कौसल्या बाहुमङ्गना । परं चास्यान्वगात्पार्श्वं कैकेयी सा सुमध्यमा ॥ ४ ॥
तां नयेन च संपन्नो धर्मेण विनयेन च । उवाच राजा कैकेयीं समीक्ष्य व्यथितेन्द्रियः ॥ ५ ॥
कैकेयि मामकाङ्गानि मा स्प्राक्षीः पापनिश्चये । नहि त्वां द्रष्टुमिच्छामि न भार्या न च बान्धवी ॥ ६ ॥
ये च त्वामनुजीवन्ति नाहं तेषां न ते मम । केवलार्थपरां हि त्वां त्यक्तधर्मां त्यजाम्यहम् ॥ ७ ॥

रा० टी०—राजवृत्तं वर्णयन्नाह—यावदिति । निर्यतो निर्गच्छतो रामरथस्य रजोरूपं धूलीस्वरूपं यावत्कालमदृश्यत तावत्कालमिक्ष्वाकुवरो दशरथः आत्मचक्षुषी नैव संजहार अकर्षयत् ॥ १ ॥

गो० टी०—यावत्त्वित्यादि । निर्यतः निर्गच्छतः तस्य रामस्य संबन्धि रजोरूपं रजःस्वरूपं यावददृश्यत तावन्न संजहार न निवर्तितवान् ॥ १ ॥

२ ] ति० टी०—यावत्प्रियं पुत्रं राजा पश्यति रथधूलिदर्शनद्वारेति शेषः । तावत्पुत्रदर्शने तन्निमित्तं धरण्यां स्थितोऽस्य देहो व्यवर्धतेव उत्थाय स्थित एवाभूदित्यर्थः ॥ २ ॥

रा० टी०—यावद्राजेति । यावत्प्रियं पुत्रं पश्यति रथ रजोवलोकनद्वारेति शेषः तावत्कालं धरण्यां स्थितमस्य शरीरमिति शेषः । पुत्रदर्शने पुत्रदर्शनार्थं व्यवर्धत इव उत्थायोत्थायालोकतेत्यर्थः ॥ २ ॥

गो० टी०—यावद्राजेति । पश्यति रजोद्वारेणेति शेषः पुत्रदर्शने पुत्रदर्शननिमित्तं धरण्यां रजो व्यवर्धत मन्निमित्तकेन पुत्रदर्शनेन राजा कंचित्कालमाप्यायितो भवेदिति मत्वेव रजो व्यवर्धतेत्यर्थः, अथवा अस्य देहो व्यवर्धत पुत्रदर्शनायोत्थाय स्थित इत्यर्थः ॥ २ ॥

३ ] ति० टी०—रजसोऽप्यदर्शने तच्छरीरं पतितमभूदित्याह—नेति । रामस्य रजः रामरथोद्धतं रज इत्यर्थः ॥ ३ ॥

रा० टी०—नेति । अस्य रामरथस्य रजोऽपि यदा न पश्यति नापश्यत् तदा आर्तो दुःखितः अत एव विषण्णः उदासीनो भूमिपः पपात ॥ ३ ॥

गो० टी०—न पश्यतीति । आर्तः पीडितशरीरः विषण्णः दुःखितः ॥ ३ ॥

४ ] ति० टी०—तस्येति । पतितमुत्थाप्य तस्य दक्षिणं बाहुं धृत्वा कौसल्यान्वगात्स्वपुरं प्रति गम्यमानमन्वगात्तथैव ससार कैकेयी त्वस्य वामं पार्श्वमेव केवलमन्वगात् तथात्वं च राज्ञोऽस्यां परमवैरस्यात् ॥ ४ ॥

रा० टी०—तस्येति । दक्षिणं बाहुं कौसल्या अन्वगात्प्राप्नोत् उत्थापनार्थमिति शेषः परं भिन्नं वाममित्यर्थः पार्श्वं बाहुमित्यर्थः कैकेयी अन्वगात् एतेन तत्तद्बाहुसमीपे एव तत्तत्स्थितिरिति फलितम् ॥ ४ ॥

गो० टी०—तस्येति । बाहुमन्वगात् उद्धरणार्थमिति भावः । भरतप्रिया प्रियभरता पार्श्वमित्यनेन कौसल्यावद्बाहुं नावलम्बितवतीति गम्यते ॥ ४ ॥

५ ] ति० टी०—तदेवाह—तामिति ॥ ५ ॥

रा० टी०—तामिति । नयादिना संपन्नो राजा तां कैकेयीमुवाच ॥ ५ ॥

गो० टी०—तामिति । नयेन नीत्या विनयेन सदाचारेण॥५॥

६-७ ] ति० टी०—न च बान्धवी बन्धूनां स्नेहपात्रदास्यादिरूपापि नेत्यर्थः अण्णन्तत्वान्ङीप् ॥ ६ ॥ ७ ॥

रा० टी०—तद्वचनमेवाह—कैकेयीत्यादिभिः । पापनिश्चये पापाय पापिराक्षसविध्वंसाय निश्चयो यस्याः तत्संबोधनं हे कैकेयि! मामकाङ्गानि भार्या परमशोभावती त्वं मा स्प्राक्षीः तत्र हेतुः यतस्त्वं बान्धवी अस्मत्प्रतिज्ञाविषयीभूतत्वादस्मदभिप्रेतत्वेन देवाद्युपकारकत्वेन चाभिषेकप्रतिज्ञायाः पूर्वदिनेषु अभिषेकोत्तरदिनेषु वावश्यं याचनीयस्यापि वरस्य अकालकयाचनेन बन्धुहितकारिणी न अतः त्वां द्रष्टुं नैवेच्छामि त्वां त्वद्भिन्नां स्त्रियं च द्रष्टुं नेच्छामि एतेन त्वद्दर्शनविषयकेच्छाभावः अकालिकवरयाचनरूपापराधेन अन्यदर्शनविषयकेच्छाभावः भ्रष्टप्रतिज्ञं मां कथयिष्यन्तीति लज्जया च प्रादुर्भूत इति सूचितं तेन लोकान्तरगमनेच्छा ममास्तीति व्यञ्जितम् । अयमन्यपर्यायः सर्वादिपठितस्त्वच्छब्दः जात्यभिप्रायेणैकवचनम् । अत एव ये अनुजीवन्ति तेषामहं न पालयितास्मीति शेषः अत एव ते मम न पाल्या इति शेषः । मामकाङ्गानि मा स्प्राक्षीरित्यनेन स्पर्शने त्यागविरोधिस्नेहातिशयो भविष्यतीति बोधितं तेन कौसल्यास्पर्शोऽपि निवारित इति सूचितमत एव कौसल्या न्यवर्तत इति वक्ष्यमाणं सङ्गच्छते तेषामित्यत्र कर्मणः शेषत्वविवक्षया षष्ठी। सार्धश्लोक एकान्वयी॥ ६ ॥

गो० टी०—कैकेयीति । न भार्या न च बान्धवी त्वमिति शेषः । न च बान्धवी पत्नीत्वसंबन्धोऽपि नास्तीत्यर्थः । अण्णन्तत्वान्ङीप् ॥ ६ ॥

रा० टी०—ननु मन्थरोक्त्या भ्रान्तत्वादेवमाचरितं मयेत्यत आह—केवलेति । केवलार्थपरामहमतीव राज्ञी प्रियेति स्वार्थसाधिकामत एव त्यक्तधर्मा त्यक्तः त्याजितः धर्मः प्रारम्भविषयीभूतकार्यसमापनरूपमर्यादा यया तां त्वामेवंविधकूरकर्मकारिकात्वेन सर्वतो विलक्षणां मन्थरामहं त्यजामि त्याजयामि संमतिदानाधिकारतः सा बहिष्कार्येति तात्पर्यम् । अर्धं पृथक् ॥ ७॥

गो० टी०—न केवलं त्वयि संबन्धाभावः त्वत्संबन्धिष्वपि मम संबन्धो नास्तीत्याह—ये चेति । नाहं तेषामिति प्रभुरिति शेषः न ते मम शेषभूता इत्यर्थः ॥ ७ ॥

१ धरण्येति रा. पाठः । २ वाममिति गो. पाठः । ३ भरतप्रियेति गो. पाठः । ४ मा ममाङ्गानि स्प्राक्षीस्त्वं दुष्टचारिणीति गो. पाठः ।

अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत् । अनुजानामि तत्सर्वमस्मिँल्लोके परत्र च ॥ ८ ॥
भरतश्चेत्प्रतीतः स्याद्राज्यं प्राप्यैतदव्ययम् । यन्मे स दद्यात्पित्रर्थं मा मां तद्दत्तमागमत् ॥ ९ ॥
अथ रेणुसमुद्ध्वस्तं समुत्थाप्य नराधिपम् । न्यवर्तत तदा देवी कौसल्या शोककर्शिता ॥ १० ॥
हत्वेव ब्राह्मणं कामात्स्पृष्ट्वाग्निमिव पाणिना । अन्वतप्यत धर्मात्मा पुत्रं संचिन्त्य राघवम् ॥ ११ ॥
निवृत्त्यैव निवृत्त्यैव सीदतो रथवर्त्मसु । राज्ञो नातिबभौ रूपं ग्रस्तस्यांशुमतो यथा ॥ १२ ॥
विललाप स दुःखार्तः प्रियं पुत्रमनुस्मरन् । नगरान्तमनुप्राप्तं बुद्ध्वा पुत्रमथाब्रवीत् ॥ १३ ॥
वाहनानां च मुख्यानां वहतां तं ममात्मजम् । पदानि पथि दृश्यन्ते स महात्मा न दृश्यते ॥ १४ ॥

---

८ ] ति० टी०—न केवलमैहिकव्यवहारस्य त्यागः किंतु पारलौकिकस्यापीत्याह—अगृह्णामिति । यच्च ते पाणिं पर्यगृह्णाम, यच्च त्वामग्निं पर्यणयं प्रदक्षिणमनयम, अग्निहोत्रसंबन्धं वा कार्यम तत्सर्वमस्मिँल्लोके पाणिग्रहणसाध्यक्रीडादि परलोकेऽग्निहोत्रादिसाध्यस्वर्गादि चानुजानामि त्यजामि ॥ ८ ॥

रा० टी०—नन्विमामहं त्यजामि पाणिगृहीतीत्यागस्यानौचित्यात्त्वं तु मां मा त्यजेत्यत आह—अगृह्णामिति । अस्मिँल्लोके ते पाणिं यदहमगृह्णां यच्चाहं त्वामग्निं पर्यणयं प्रदक्षिणं प्रापं तत्सर्वं परत्र भिन्ने लोके अनुजानामि स्मरामि मत्स्मरणेनैव भवतीनां कल्याणं भवितेति तात्पर्यं तेनानौचित्यं न स्यादिति व्यञ्जितं तेनेह स्थातुमशक्तोऽहमिति सूचितम ॥ ८ ॥

गो० टी०—अग्निसाक्षिकमूढा कथं न भार्या स्यामित्यत्राह—अगृह्णामिति । पर्यणयं प्रदक्षिणमनयम अनुजानामि परित्यजामीत्यर्थः । इह लोके परत्र च ऐहिकमामुष्मिकं च सर्वं त्वत्संबन्धेनागतं त्यजेयमित्यर्थः ॥ ८ ॥

९ ] ति० टी०—ननु मम त्यागेऽपि मत्पुत्रादेः कथं त्यागः 'ये च त्वामनुजीवन्ति' इत्यादिनोक्तस्तत्राह—भरत इति । यदि त्वया प्रापितं राज्यं प्राप्य भरतः प्रतीतः स्यात्तुष्टः स्यात्, तर्हि मे मरणानन्तरं स भरतः पित्रर्थं पितृत्वप्रयुक्तश्राद्धार्थं यद्दद्यात्तद्दत्तं मां मा गमत् मा प्राप्नोत्वित्यर्थः । अन्यथा तु तं न त्यजामीत्यर्थः । कतकस्तु—'अनुजानामि' इत्यादिसार्धश्लोक एकं वाक्यं तत्पूर्वार्धे त्यजामीत्यस्यानुकर्षः तत्तृतीयार्धे 'यन्मे स दद्यात्पित्रर्थं मामतद्दत्तमागमत्' इति पाठः स दद्यादिति चावर्तते भरतस्त्वया प्रापितं राज्यं प्राप्य प्रतीतो विवेकवान्सन्यत्प्राप्तं राज्यं तत्स पित्रर्थं पितुर्मम प्रीतिसंपादनाय यदि दद्यात्त्यजेत्, मां चातद्दत्तं न कृतं तस्मै दत्तं दानं राज्यस्य येन तादृशं मां प्रीत्या पूर्ववदागमत्प्राप्नुयाच्चेत्, तदा यत्स मे दद्यादस्मिँल्लोके विहारशय्याभोजनादि परत्र च परलोके पिण्डदानादि तत्सर्वमनुजानाम्यङ्गीकरोमि अन्यथा तं त्यजाम्येवेत्यर्थ इत्याह ॥ ९ ॥

रा० टी०—ननु भरतादीनां शोकातिशयः स्यादित्यत आह—भरत इति । चेद्यदि भरतः प्रतीतः मद्वचनविषयकविश्वासवान्स्यात्तदा अव्ययं विघ्नरहितमेतद्रामराज्यं प्राप्य पाल्यत्वेन स्वीकृत्य पित्रर्थं पितृदेयधनादिकं यन्मे मदुद्देशेन दद्यात्तद्दत्तं भरतसमर्पितं मा मां मया सर्वसंपत्त्या युक्तं मामागमत्प्राप्ता लुङुपात्तभूतस्याविवक्षा ॥ ९ ॥

गो० टी०—भरत इति । प्रतीतः प्रमुदित इत्यर्थः । पित्र्थं यदुदकादिकं दद्यात् तद्दत्तं मां मागमत् नोपतिष्ठेदित्यर्थः ॥ ९ ॥

१० ] ति० टी०—रेणुसमुध्वस्तं भुवि लुण्ठनाद्रजोव्याप्तं न्यवर्तत राज्ञा सहेति शेषः ॥ १० ॥

रा० टी०—अथेति । अथ राजवचनश्रवणानन्तरकाले रेणुसमुध्वस्तं पृथिव्यां पतनेन तद्रजो व्याप्तं नराधिपं समुत्थाप्य शोककर्शिता देवी कौशल्या न्यवर्तत राजस्पर्शान्निवृत्ते अत्र कौशल्यायाः प्राधान्यात्तन्मात्रोक्तिः ॥ १० ॥

गो० टी०—अथेति । न्यवर्तत तेन सहेति शेषः ॥ १० ॥

११ ] ति० टी०—यथा पाणिनाग्निं स्पृष्ट्वा स्वकर्तृकदोषेण तत्पीडयानुतप्तो भवति तथा स्वकृतमेतद्दुःखमित्यनुतापः ॥ ११ ॥

रा० टी०—राज्ञः शोकं वर्णयन्नाह—हत्वेति । कामात्स्वेच्छातः ब्राह्मणं हत्वा संताडयेव पाणिना अग्निं स्पृष्ट्वेव राघवं स्वप्रेषितरामं संचिन्त्य संस्मृत्य धर्मात्मा राजा अन्वतप्यत खेदं प्राप्नोत्प्रसिद्धं च हनस्ताडनार्थकत्वं मालाहत इव द्विप इत्यादौ ॥ ११ ॥

गो० टी०—हत्वेति । तापसं तापसवेषधारिणम् ॥ ११ ॥

१२ ] ति० टी०—निवृत्त्य पुनःपुनरित्यर्थः । रथवर्त्मसु सीदतो रथमार्गदर्शने क्लिश्यतः ग्रस्तस्य राहुणा ॥ १२ ॥

रा० टी०—निवृत्त्येति । निवृत्त्य विचारेण शोकात्पुनः पुनर्बहिरागत्यापि सीदतः पुनः पुनः खेदं प्राप्नुवतो राज्ञः रथवर्त्मसु गतरामरथमार्गेषु विद्यमानं रूपं शरीरं नातिबभौ तत्र दृष्टान्तः ग्रस्तस्य राहुणा स्पृष्टस्य अंशुमतः सूर्यादेः रूपमिव ॥ १२ ॥

गो० टी०—निवृत्त्येति । ग्रस्तस्य राहुग्रस्तस्य ॥ १२–१४ ॥

१३–१४] ति० टी०—आत्मानं नगरान्तं नगरसमीपं प्राप्तं बुद्ध्वा पुत्रं चाप्राप्तं बुद्ध्वाब्रवीदिति कतकः, यद्वा पुत्रं नगरान्तं नगरबाह्यं देशं प्राप्तं मत्वेत्यर्थः ॥ १३ ॥ १४ ॥

---

१ हत्वेमिति गो. पाठः । २ प्रीत्यर्थमिति गो. पाठः । ३ तमिति गो. पाठः । ४ तापसमिति गो. पाठः ।

यः सुखेनोपधानेषु शेते चन्दनरूषितः । वीज्यमानो महार्हाभिः स्त्रीभिर्मम सुतोत्तमः ॥ १५ ॥
स नूनं क्वचिदेवाद्य वृक्षमूलमुपाश्रितः । काष्ठं वा यदि वाश्मानमुपधाय शयिष्यते ॥ १६ ॥
उत्थास्यति च मेदिन्याः कृपणः पांसुगुण्ठितः । विनिःश्वसन्प्रस्रवणात्करेणूनामिवर्षभः ॥ १७ ॥
द्रक्ष्यन्ति नूनं पुरुषा दीर्घबाहुं वनेचराः । राममुत्थाय गच्छन्तं लोकनाथमनाथवत् ॥ १८ ॥
सा नूनं जनकस्येष्टा सुता सुखसदोचिता । कण्टकाक्रमणक्लान्ता वनमद्य गमिष्यति ॥ १९ ॥
अनभिज्ञा वनानां सा नूनं भयमुपैष्यति । श्वपदानर्दितं श्रुत्वा गम्भीरं रोमहर्षणम् ॥ २० ॥
सकामा भव कैकेयि विधवा राज्यमावस । नहि तं पुरुषव्याघ्रं विना जीवितुमुत्सहे ॥ २१ ॥
इत्येवं विलपन्राजा जनौघेनाभिसंवृतः । अपस्नात इवारिष्टं प्रविवेश गृहोत्तमम् ॥ २२ ॥

---

रा० टी०–विललापेति । नगरान्तं नगरमर्यादायाः परं प्राप्तं पुत्रं बुद्ध्वा पुत्रं स्मरन्सन्विललाप रुरोद अथ अब्रवीत् ॥ १३ ॥

रा० टी०–तद्वचनमेवाह–वाहनानामित्यादिभिः । वाहनानामश्वानां मध्ये मुख्यानां ममात्मजं वहतामश्वानां पदानि दृश्यन्ते स तु न दृश्यते ॥ १४ ॥

१५ ] ति० टी०–महार्हाभिरुत्तमरूपालंकारवतीभिः॥ १५॥

१६ ] ति० टी०–क्वचिन्नदीतीरादौ अश्मा पाषाणः॥१६॥

रा० टी०–य इति । चन्दनरूषितः चन्दनैर्भूषितः महार्हाभिः अतिसत्कारकर्त्रीभिः स्त्रीभिः सीताज्ञापिततत्परिचारिकाभिः वीज्यमानः यः सुतोत्तमः उपधानेषु उत्तमोपबर्हणविशिष्टशय्यासु शेते स अथ क्वचिद्वृक्षमूलमुपाश्रितः प्राप्तः काष्ठमश्मानं प्रस्तरं वा उपाधाय शिरोधोभागे कृत्वा शयिष्यते । श्लोकद्वयमेकान्वयि शेते इत्यत्र "वर्तमानसामीप्य–" इति भूते लट् १५–१६

गो० टी०–य इति । वीज्यमानः चामरव्यजनादिभिरिति शेषः स्त्रीभिः परिचारिकाभिः ॥ १५ ॥ १६ ॥

१७–१८ ] ति० टी०–बन्दिस्तुत्यादिराहित्येन कृपण इव प्रस्रवणाद्गिरिप्रस्थादिप्रदेशात् ॥ १७ ॥ १८ ॥

रा० टी०–उत्थास्यतीति । पांसुगुण्ठितः शयनभूमिधूलिव्याप्तशरीरः कृपणः बन्दीगणादिस्तुत्यादिरहितत्वेन कृपण इव प्रतीयमानः रामः विनिःश्वसन्पित्रादिवियोगजनितशोकहेतुकोच्छ्वासं प्राप्नुवन्सन्मेदिन्याः शयनभूमेः उत्थास्यति तत्र दृष्टान्तं प्रस्रवणात्प्रदेशविशेषात्करेणूनामृषभ इव । यदि च प्रस्रवणशब्दार्थः प्रस्रवणं वृक्षपतितकठोरफलादि तदतति प्राप्नोतीत्यर्थः तदा प्रस्रवणादिति रामविशेषणम् । च शब्द इवार्थकः ॥ १७ ॥

गो० टी०–उत्थास्यतीति । प्रस्रवणात् निर्झरात् तत्समीपादित्यर्थः 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमरः ॥ १७ ॥

रा० टी०–द्रक्ष्यन्तीति । लोकनाथं सर्वलोकाधीशमुत्थाय गच्छन्तं राममनाथवन्नाथप्रतियोगिकभेदविशिष्टमिव नाथत्वाभाववन्तमिव वा वनेचराः द्रक्ष्यन्ति ॥ १८ ॥

गो० टी०–द्रक्ष्यन्तीति । अनाथवत् गच्छन्तमित्यन्वयः १८

१९ ] ति० टी०–सुखसदोचिता सुखस्य सदा उचिता तादृश्यपि कण्टकेष्वाक्रमणेन पादविक्षेपेण क्लान्ता पीडिता ॥ १९ ॥

रा० टी०–सेति । सुखसदोचिता सुखसंबन्धिसार्वकालिकौचित्यविशिष्टा किंच सुखसदः सुखप्राप्तेः आसमन्ताद्भावेनोचिता योग्या जनकस्येष्टा प्रिया सुता सा सीता कण्टकाक्रमणक्लान्ता कण्टकेषु यदाक्रमणं पादविक्षेपः तेन क्लान्ता खेदं प्राप्ता सती वनं गमिष्यति ॥ १९ ॥

गो० टी०–सेति । सुखसदोचिता सुखस्य सदोचिता कण्टकेष्वाक्रमणं पदविक्षेपः ॥ १९ ॥

२० ] ति० टी०–श्वापदानां व्याघ्रादीनामासमन्तान्नर्दितम् ॥ २० ॥

रा० टी०–अनभिज्ञेति । वनानामनभिज्ञा वनविषयकविशेषज्ञानाभाववती सा श्वापदानर्दितं व्याघ्रादिबहुशब्दं श्रुत्वा भयमुपैष्यति ॥ २० ॥

गो० टी०–अनभिज्ञेति । श्वापदानर्दितं श्वापदाः व्याघ्रादिहिंस्रपशवस्तेषामानर्दितं शब्दम् ॥ २० ॥ २१ ॥

२१ ] ति० टी०–सकामा भवेति वक्रोक्त्यानपकारिणां दुःखदानात्ते कामपूर्तिर्न कदापीति भावः । विधवात्वे हेतुः–नहीत्यादि ॥ २१ ॥

रा० टी०–भरतागमनात्पूर्वं राजाभावप्रयुक्तसंभावितराज्योपद्रवाभावाय कैकेयीमुपदिशन्नाह–सकामेति । विधवा विशेषेण धं राज्यपोषणं वाति अमात्यादिद्वारा प्रापयति सा राज्यपालनेच्छावतीत्यर्थः, किंच विगतः धवः भीतिहेतुकप्रकम्पो यस्याः निर्भयेत्यर्थः, किंच धुनोति स्वतेजसा रिपून्प्रकम्पयति सा त्वं सकामा कस्य सुखस्य आमः प्रापणं तेन सहिता प्रजासुखप्राप्तिकर्त्रीत्यर्थः भव अत एव राज्यमावस आवासय । ननु भवता पाल्यत एवेति किमनेनोपदेशेनेत्यत आह–पुरुषव्याघ्रं परमपुरुषं तं रामं विना जीवितुं प्रजाः पालयितुं नैवोत्सहे ॥ २१ ॥

२२ ] ति० टी०–अपस्नातो मृतस्नानस्नातः अरिष्टं कश्मलमयम् ॥ २२ ॥

रा० टी०–उपसंहरन्नाह–इतीति । अपस्नातः अपगतं स्नातं स्नानं यस्य अकृतस्नान इत्यर्थः, किंच अपस्नानमपस्नाः स्नानाभाव इत्यर्थः भावे क्विप् तामतति प्राप्नोतीति अपस्नातः पचाद्यच् । किंच पानं पः पानार्थकपाधातोः घञर्थे कः जल-

---

१ कुण्ठित इति गो० पाठः । २ ऽऽक्रान्तेति गो० पाठः । ३ पुरोत्तममिति गो० रा० पाठः ।

शून्यचत्वरवेश्मान्तां संवृतापणवेदिकाम् । क्लान्तदुर्बलदुःखार्तां नात्याकीर्णमहापथाम् ॥ २३ ॥
तामवेक्ष्य पुरीं सर्वां राममेवानुचिन्तयन् । विलपन्प्राविशद्राजा गृहं सूर्य इवाम्बुदम् ॥ २४ ॥
महाह्रदमिवाक्षोभ्यं सुपर्णेन हृतोरगम् । रामेण रहितं वेश्म वैदेह्या लक्ष्मणेन च ॥ २५ ॥
अथ गद्गदशब्दस्तु विलपन्वसुधाधिपः । उवाच मृदु मन्दार्थं वचनं दीनमस्वरम् ॥ २६ ॥
कौसल्याया गृहं शीघ्रं राममातुर्नयन्तु माम् । नह्यन्यत्र ममाश्वासो हृदयस्य भविष्यति ॥ २७ ॥

पानादिरित्यर्थः तस्याभावोऽयः अपे स्नातो निरतः अपस्नातः स्नाधातोर्निरतार्थत्वं तु मन्त्रस्नात इत्यादौ प्रसिद्धम् । तथा च अकृतभोजनादिरित्यर्थः संपन्नः, किंच पानं पः रक्षणार्थकपाधातोः कः तस्याभावोऽपः तत्र स्नातो निरतः अपस्नातः इतःप्रभृति पृथिवीराज्यं न करिष्यामीति प्रतिज्ञातवानिति भावः, किंच अं विष्णुं पाति रक्षतीत्यपः अप्रकटसाकेतस्थो रघुनाथः कर्तरि कः तत्र स्नातः निरत इत्यर्थः अप्रकटसाकेतस्थरघुनाथलालने कृतमना इत्यर्थः । किंच न पीयेते इत्यपौ अश्रुप्रस्वेदौ ताभ्यां स्नातः प्रस्वेदाश्रुक्लिन्नशरीरक इत्यर्थः राजा अरिष्टं रामवियोगिनामतिहिंसकमिव पुरोत्तममयोध्यां प्रविवेश अपस्नातो मृतस्नात इति कोशघटकीभूतापस्नातशब्दस्तु अपोपसर्गपूर्वकस्नाप्रकृतिकनिष्ठान्त इति नात्र तद्विषयता एतेन अपस्नातो मृतस्नात इति भट्टभूषणाद्युक्तिश्चिन्त्या अमाङ्गलिकत्वेन तस्येहासंभवात् ॥ २२ ॥

गो० टी०—इतीति । अपस्नातः मृतस्नातः 'अपस्नातो मृतस्नातः' इत्यमरः । अरिष्टमशुभम् 'अरिष्टे तु शुभाशुभे' इत्यमरः । ननु राममनुगम्य पुनः पुरप्रवेशसमये अपस्नातोऽरिष्टमिति कथमश्लीलमुक्तं सत्यं दशरथो हि तदानीं नूनं भयमुपैष्यतीत्यादिना सीताविपत्तिं शङ्कमानस्तद्द्वारा रामविपत्तिं तन्मुखेन स्वस्यापि विनाशं शङ्कितवान् अत एव सीताद्वारा रामविपत्तिशङ्कया सकामा भव कैकेयीत्युक्तवान् स्वविनाशाभिप्रायेण विधवा राज्यमावसेत्युपदर्शितवांश्च तेनापस्नात इवेत्युक्तिः राजहृदयानुसाराद्युचितैव ॥ २२ ॥

२३–२४ ] ति० टी०—तदेवाह—शून्येति । शून्या निर्मनुष्याश्चत्वरा गृहप्रान्तभागा वेश्मान्ता वेश्ममध्यभागाश्च यस्यां सर्वजनानां रामपृष्ठे गतत्वात् । संवृतापणवेदिकां संवृता आवृताः पण्यस्थापनवेदिका यस्यां सा । 'देवताम्' इति पाठे पिहितापणदेवतागृहामित्यर्थः । क्लान्ता गन्तुमशक्ताः अत एव दुर्बला दुःखार्ता रामवियोगपीडार्ता यस्यां नात्याकीर्णोऽत्यन्तसंमर्दरहितो महापथो यस्यां ताम् ॥ २३ ॥ २४ ॥

रा० टी०—पुरीस्वरूपं बोधयन्नाह—शून्येति । शून्याः जनरहिताः चत्वरवेश्मान्ताः यस्यां सा ताम् । तत्र चत्वराश्चतुष्पथाः वेश्मानि गृहाणि अन्तास्तद्द्वाराणि अत एव संवृतापणवेदिकां संवृताः आच्छादिताः आपणवेदिकाः आपणस्थानानि यस्याः सा तां क्लान्तदुर्बलदुःखार्तां क्लान्ताः हतहर्षाः अत एव दुर्बलाः तत्र हेतुः दुःखार्तां तादृशजनवतीं कर्मधारयादर्शआद्यच् अत एव नात्याकीर्णमहापथां नात्याकीर्णाः जनैर्नातिव्याप्ताः महापथाः राजद्वारमार्गाः यस्याः सा तां सर्वां पुरीमवेक्ष्य राममेवानुचिन्तयन्नत एव विलपन् राजा अम्बुदं मेघमण्डलं सूर्य इव प्राविशत् अभूतोपमैषा यदि च अम्बूनि जलानि मेघेभ्यो ददातीति अम्बुदः समुद्रः तदा तु नाभूतोपमा । श्लोकद्वयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—शून्येत्यादि । शून्यचत्वरवेश्मान्तां निर्जनचतुष्पथगृहद्वारां संवृतापणदेवतां पिहितापणदेवतागृहद्वारां क्लान्तदुर्बलदुःखार्तां चिन्तातिरेकेण क्लान्ता रामविरहेण निःसत्त्वाः दुःखार्ताश्च जनाः यस्यां तथा अनेन संचारक्षमाः सर्वे राममनुगता इति द्योत्यते नात्याकीर्णमहापथां क्वचित् क्वचित् दृश्यमानजनयुक्तमहापथामित्यर्थः अवान्तरमार्गास्तु केवलं निर्जना इति भावः ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—सुपर्णेन हृतोरगं महाह्रदमिवेति रिपूणां निर्भयप्रवेशद्योतकम् ॥ २५ ॥

रा० टी०—पुर्याः रिप्वाक्रमणयोग्यतां बोधयन्नाह—महाह्रदमिति । सुपर्णेन गरुडेन हृतोरगं हृता उरगा यस्मादत एव अक्षोभ्यं क्षोभाकारणं महाह्रदमिव रामादिना रहितं वेश्मालक्ष्यदिति शेषः ॥ २५ ॥

गो० टी०—कीदृशं प्राविशदित्यपेक्षायामाह—महाह्रदमिति। अक्षोभ्यं सोरगतया प्राविशदित्यनुषङ्गः ॥ २५ ॥

२६ ] ति० टी०—मृदु मन्दोच्चारणात् । अत एव मन्दार्थमनुद्धार्थं दीनं शोच्यम् अस्वरं शुद्धकण्ठध्वनिरहितम् ॥२६॥

रा०टी०—अथेति। अथ अतो हेतोः गद्गदशब्दः स्खलद्वाग्विशिष्टशब्दविशिष्टः वसुधाधिपः मन्दार्थं मन्दो गमनं अर्थः प्रयोजनं यस्मिंस्तत् अस्वरं नीचैरुच्चारितत्वेनाल्पकं दीनं वचनं मृदु यथा स्यात्तथा उवाच ॥ २६ ॥

गो० टी०—अथेति । गद्गदः शब्दो यस्य स तथोक्तः मृदु उपांशुः मन्दार्थमल्पार्थं शब्दप्रपञ्चवदित्यर्थः । अस्वरं कण्ठस्वररहितम् ॥ २६ ॥

२७ ] ति० टी०—नयन्तु ये केचिदत्र मनुष्या इति शेषः । अन्यत्र क्वचन्तगृहे आश्वासः खेदापगमः ॥ २७ ॥

रा० टी०—तदेवाह—कौसल्याया इति। राममातुः कौशल्यायाः गृहं शीघ्रं मां नयन्तु द्वारपालका इति शेषः तत्प्रयो-

१ देवतामिति गो. पाठः । २ मनुजाधिप इति गो. पाठः । ३ समाश्वास इति रा. पाठः।

इति ब्रुवन्तं राजानमनयन्द्वारदर्शिनः । कौसल्याया गृहं तत्र न्यवेश्यत विनीतवत् ॥ २८ ॥
ततस्तत्र प्रविष्टस्य कौसल्याया निवेशनम् । अधिरुह्यापि शयनं बभूव लुलितं मनः ॥ २९ ॥
पुत्रद्वयविहीनं च स्नुषया च विवर्जितम् । अपश्यद्भवनं राजा नष्टचन्द्रमिवाम्बरम् ॥ ३० ॥
तच्च दृष्ट्वा महाराजो भुजमुद्यम्य वीर्यवान् । उच्चैःस्वरेण प्राक्रोशद्धा राम विजहासि नौ ॥ ३१ ॥
सुखिता बत तं कालं जीविष्यन्ति नरोत्तमाः । परिष्वजन्तो ये रामं द्रक्ष्यन्ति पुनरागतम् ॥ ३२ ॥
अथ रात्र्यां प्रपन्नायां कालरात्र्यामिवात्मनः । अर्धरात्रे दशरथः कौसल्यामिदमब्रवीत् ॥ ३३ ॥
न[3] त्वां[4] पश्यामि कौसल्ये साधु मां[5] पाणिना स्पृश । रामं मेऽनुगता दृष्टिरद्यापि न निवर्तते ॥ ३४ ॥

---

जनमाह-अन्यत्र हृदयस्य मनसः आश्वासः स्वास्थ्यं न भविष्यति ॥ २७ ॥

गो० टी०-कौसल्याया इति । नयन्तु द्वारदर्शिन इति शेषः अन्यत्र तद्व्यतिरिक्तस्त्रीगृहे ॥ २७ ॥

२८ ] ति० टी०-द्वारदर्शिनो वेत्रिणः कौसल्याया गृहमनयन् तत्र गृहे तैर्विनीतवत्पर्यङ्के न्यवेश्यत राजेति शेषः यद्वा तन्निवेशनोत्तरं राजा विनीतवदधोमुख आसेति शेषः ॥२८॥

रा० टी०-इतीति । द्वारदर्शिनः द्वारपालकाः कौशल्यायाः गृहं विनीतवद्ब्रुवन्तं राजानमनयन् तत्र कौशल्यागृहपर्यङ्के न्यवेश्यत तैः राजेति शेषः ॥ २८ ॥

गो० टी०-इतीति । द्वारदर्शिनः मार्गप्रदर्शकाः द्वारपालकाः न्यवेश्यत निवेशितः विनीतवत् विनीतार्हम् ॥ २८ ॥

२९-३० ] ति० टी०-कौसल्याया निवेशनं प्रविष्टस्य स्वापस्थानभूतं शयनं मञ्चमारुह्यापि लुलितं कलुषं बभूव ॥ २९॥३० ॥

रा० टी०-तत इति । ततः वियोगजनितदुःखस्यातिशयत्वाद्धेतोः कौशल्याया निवेशनं गृहं प्रविष्टस्य शयनं शय्यामधिरुह्य विद्यमानस्यापि तस्य राज्ञो मनः लुलितं चञ्चलं बभूव ॥ २९ ॥

गो० टी०-तत इति । लुलितं कलुषितमिति यावत् ॥२९॥

रा० टी०-पुत्रेति । नष्टचन्द्रं चन्द्ररहितम् अम्बरमाकाशमिव ॥ ३० ॥

गो० टी०-पुत्रेति । नष्टचन्द्रमुपलक्षणमेतत् चन्द्रनक्षत्रताराहीनमित्यर्थः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०-नौ आवां मातापितरावित्यर्थः ॥३१ ॥

रा० टी०-तच्चेति । तद्भवनं दृष्ट्वा हा राम नौ आवां मातापितरौ विजहासि त्यजसि इत्युच्चैः स्वरेण प्राक्रोशत् ॥ ३१ ॥

३२ ] ति० टी०-ये बत तं कालं तावत्कालं रामप्रत्यागतिकालपर्यन्तं जीविष्यन्ति पुनरागतं रामं परिष्वजन्तो रामं द्रक्ष्यन्ति ते सुखिता नरोत्तमाश्च तेन स्वस्याधमत्वाविष्कृतम् ॥ ३२ ॥

रा० टी०-सुखिता इति । ये नरोत्तमाः तं रामप्रापकं कालं जीविष्यन्ति इह तिष्ठन्तीत्यर्थः ते पुनरागतं रामं परिष्वजन्तः अत एव सुखिताः सन्तः द्रक्ष्यन्ति एतेनाहमत्र न स्थास्यामीति सूचितम् ॥ ३२ ॥

गो० टी०-सुखिता इति । तं कालं तस्मिन् काले तावत्कालमिति वा ॥ ३२ ॥

३३ ] ति० टी०-अथ कौसल्यागृहप्रवेशानन्तरमात्मनः कालरात्र्यामिव संहाररात्र्यामिव रात्र्यां प्रपन्नायां मध्यं प्राप्तायाम् ॥ ३३ ॥

रा० टी०-अथेति । आत्मनः कालरात्र्यां संहारकारकनिशीव प्रपन्नायां प्राप्तायां सत्यामर्धरात्रे इदमब्रवीत् ॥ ३३ ॥

गो० टी०-अथेति । कालरात्र्यां संहाररात्र्यां प्रपन्नायां प्राप्तायाम् ॥ ३३ ॥

३४ ] ति० टी०-मा स्पृश स्वसत्ताज्ञापनार्थमिति भावः। कौसल्यादर्शने हेतुमाह-राममिति । काव्यलिङ्गमत्रालंकारः दृष्टेर्दर्शनशक्ते रामविषये समनस्काया विलीनत्वात्पदार्थान्तरं न स्फुरतीति व्यङ्ग्यं परं गुणीभूतम् ॥ ३४ ॥

रा० टी०-तद्वचनमेवाह-न त्वामिति । हे कौशल्ये ! त्वामहं न पश्यामि द्रष्टुमिच्छामि अतो मां पाणिना अस्पृश स्पर्शं मा कुरु दर्शनेच्छाभावे हेतुः अनुगता प्राप्ता । अ इति निषेधार्थकमव्ययं प्रश्लिष्यते ॥ ३४ ॥

गो० टी०-राममिति । राममनुगता दृष्टिः सकृद्गृहीतं पुनः किं निवर्तते मे दृष्टिः षष्टिवर्षसहस्रकृतोपवासादिक निवर्तते अद्यापि न निवर्तते तद्दर्शनाभावेऽपि तन्मातृत्वदर्शनं कर्तुमुचिते कालेऽपि न निवर्तते । न त्वापश्यामि कौसल्ये रामदर्शनं विना कैकेयीमुखदर्शनपापानिवृत्तये त्वन्मुखं द्रष्टुमुत्सुकोऽस्मि तदपि न लब्धं साधु मां पाणिना स्पृश नित्यानुमेयानीन्द्रियाणि कार्यकल्पानि रूपग्रहणाभावात् चक्षुरिन्द्रियगतमित्यवगतं त्वगिन्द्रियमस्ति न वेति संप्रति जानीहि साधु कैकेय्या कृतसंकेतो रामं निर्यापितवान् अथ किंचिदभिनयं करोतीति मन्ये यः अयमज्ञानादेवं कृतवानिति समनस्कतया स्पृश यद्वा मां पाणिना स्पृश राममातृत्वात् तव पाणिस्पर्शनं रामस्पर्शनमिति भावः ॥ ३४ ॥

---

१ तस्येति गो. रा. पाठः। २ चुक्रोश हा राघव जहासि मामिति गो. पाठः।३ एतच्छ्लोकगतार्धयोर्व्यत्यासः गो. पाठे।४ त्वेति गो.पाठः। ५ मेति गो. पाठः।

तं राममेवानुविचिन्तयन्तं समीक्ष्य देवी शयने नरेन्द्रम् ।
उपोपविश्याधिकमार्तरूपा विनिःश्वसन्तं विललाप कृच्छ्रम् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ।

भैक्ष्यचर्यया रामो गृहे वसति चेन्मे वरं कामकारः किंतु भुजङ्गीभूतकैकेय्या निर्वासितो मे रामः कदाऽऽगन्तेति तद्भावभावितहृदया कौसल्याऽशोचन्नृपं बहुशो विलपति।

ततः समीक्ष्य शयने सन्नं शोकेन पार्थिवम् । कौसल्या पुत्रशोकार्ता तमुवाच महीपतिम् ॥ १ ॥
राघवे नरशार्दूले विषं मुक्त्वा हि[2] जिह्मगा । विचरिष्यति कैकेयी निर्मुक्तेव हि पन्नगी ॥ २ ॥
विवास्य रामं सुभगा लब्धकामा समाहिता । त्रासयिष्यति मां भूयो दुष्टाहिरिव वेश्मनि ॥ ३ ॥
अथास्मिन्नगरे रामश्चरन्भैक्षं गृहे वसेत् । कामकारो वरं दातुमपि दासं ममात्मजम् ॥ ४ ॥

३५ ] ति० टी०—विनिःश्वसन्तं राजानमुपोपविश्य शयनसमीप उपविश्य ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रा० टी०—तमिति । राममेवानुविचिन्तयन्तमत एव कृच्छ्रं यथा स्यात्तथाऽधिकं विनिःश्वसन्तं नरेन्द्रं समीक्ष्य आर्तरूपा देवी कौशल्या उपोपविश्य समीपे स्थित्वा विललाप ॥ ३५॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

गो० टी०—तमिति । उपोपविश्य शयनसमीपे उपविश्येत्यर्थः ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

१ ] ति० टी०—सन्नं खिन्नम् ॥ १ ॥

रा० टी०—कौसल्यावचनं वर्णयितुमाह—तत इति । शोकेन सन्नं शोककर्तृकप्राप्तिमन्तं पार्थिवं समीक्ष्य उवाच ॥१॥

गो० टी०—तत इत्यादि ॥ १ ॥

२-३ ] ति० टी०—अहिजिह्मगा सर्पवत्कुटिलगतिः कुटिलचरित्रा । 'जिह्मताम्' इति पाठे जिह्मतां कौटिल्यरूपं विषं मुक्त्वेत्यर्थः निर्मुक्ता त्यक्तकञ्चुका ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—राघवे इत्यादिभिः । हे नरशार्दूल ! जिह्मगा जिह्मं कौटिल्यं गाते स्वस्वामिन्यां प्रापयति सा कैकेयी केकयीदासी मन्थरा विषं मुक्त्वा त्यक्त्वा संदश्येत्यर्थः निर्मुक्ता पन्नगी सर्पिणीव राघवे रघुवंशप्रभूते त्वयि विषं खेदं मुक्त्वा संस्थाप्य विचरिष्यति यथा केनचित्पालिता सर्पिणी स्वपालकं संदश्यानन्तरं तेन त्यक्ता विचरति तथा स्वस्वामिनि दुःखं प्रापय्य संमतिदानाधिकारात्त्यक्ता विचरिष्यतीत्यर्थः ॥ २ ॥

रा० टी०—ननु त्यक्ताधिकाराया मन्थरायाः विचरणेन किमित्यत आह—विवास्येति । रामं विवास्य सुभगा सुभमहो अस्याः केकय्यतिवशेति प्रशंसाजनितातिदीप्तिं गच्छति प्राप्नोति सा अत एव लब्धकामा प्राप्तस्वप्रतिष्ठारूपमनोरथा अत एव समाहिता एकाग्रचित्ता सती मन्थरा मां भूयोऽधिकं त्रासयिष्यति तत्र दृष्टान्तः वेश्मनि गृहे दुष्टाहिरिव यथा कस्मिंश्चित्कार्येऽधिकाराभावेऽपि सर्पस्य स्थितिरेवानर्थकारिणी तथेयमप्यधिकानर्थकारिणी भवितेत्यर्थः तेन गृहान्निःसारयितव्या सेति सूचितम् ॥ ३ ॥

गो० टी०—राघव इति । विजिह्मतां विषं कौटिल्यरूपं विषं राघवे उप्त्वा निक्षिप्य निर्मुक्ता मुक्तकञ्चुका 'निर्मुक्तो मुक्तकञ्चुकः' इत्यमरः अनेन क्रौर्यातिशय उक्तः ॥ २ ॥ ३ ॥

४ ] ति० टी०—भवतु भरतराज्यवरणम्, अथापीहैव नगरे रामो भैक्षं चरन्गृहे वसेदिति यचनया दत्तं स्यात्तं वरं दातुं ममापि कामकार इष्टाचरणम् अप्यात्मजं राममस्या दासमपि दातुं वरं मम कामकार इष्टमेव तद्वियोगशोकाभावात् एवं चैवं वरयाचनं ममातित्रासनार्थमेवेति व्यङ्ग्यम् ॥४॥

रा० टी०—अथेति । अथ मन्थरानिःसारणानन्तरं वरम् अस्मदीप्सितरामाभिषेचनं दातुं निवर्तयितुमस्मिन्नगरे यः कामकारः इच्छावानत एव केकय्या मन्थरया हेतुभूतया दासं देनातिदानेन आसो अतिप्रकाशो यस्य तं ममात्मजं स्थानाद्राज्यासनात्पातयित्वा अभिषेकतो बहिष्कृत्येत्यर्थः प्रविद्धः अस्मद्दुःखदाता अत एव अरामः रामविरोधी सः मन्थराद्यकूलभ्रातिरित्यर्थः भैक्ष्यं भिक्षान्नं यथेष्टतः चरन्भक्षयन्सन् गृहे स्ववेश्मनि अत्रस्तेन तिष्ठेत् । ननु तन्निःसारणे तदुपदिष्टत्स्वामिन्या अभिनिःसारणं स्यादित्यतो दृष्टान्तेन तत्स्वामिन्या निःसारणाभावं बोधयन्नाह—आहिताग्निना रक्षसां भागः धान्यसंलग्नतुषादिरिव यथाग्निहोत्रिणा यतुषादिसंबन्धेन

१ भजन्तीति गो. पाठः । २ विजिह्मतामिति गो. पाठः । ३ अथ स्मेति गो. पाठः ।

पातयित्वा तु कैकेय्या रामं स्थानाद्यथेष्टतः । [1]प्रविद्धो रक्षसां भागः पर्वणीवाहिताग्निना ॥ ५ ॥
[2]नागराजगतिर्वीरो महाबाहुर्धनुर्धरः । वनमाविशते नूनं सभार्यः सहलक्ष्मणः ॥ ६ ॥
वने त्वदृष्टदुःखानां [3]कैकेय्यनुमते त्वया । त्यक्तानां वनवासाय [4]कान्यावस्था भविष्यति ॥ ७ ॥
ते रत्नहीनास्तरुणाः फलकाले विवासिताः । कथं वत्स्यन्ति कृपणाः फलमूलैः कृताशनाः ॥ ८ ॥
अपीदानीं स कालः स्यान्मम शोकक्षयः शिवः । [5]सहभार्यं सहभ्रात्रा पश्येयमिह राघवम् ॥ ९ ॥
[6]श्रुत्वैवोपस्थितौ वीरौ [7]कदायोध्या भविष्यति । यशस्विनी हृष्टजना सूच्छ्रितध्वजमालिनी ॥ १० ॥
कदा प्रेक्ष्य नरव्याघ्रावरण्यात्पुनरागतौ । [8]भविष्यति पुरी हृष्टा समुद्र इव पर्वणि ॥ ११ ॥
कदायोध्यां महाबाहुः पुरीं वीरः प्रवेक्ष्यति । पुरस्कृत्य रथे सीतां वृषभो गोवधूमिव ॥ १२ ॥
कदा प्राणिसहस्राणि राजमार्गे ममात्मजौ । लाजैरवकरिष्यन्ति प्रविशन्तावरिन्दमौ ॥ १३ ॥

---

धान्यस्य राक्षसभागत्वं भवति तत्तुषादिरेव त्यज्यते तथा यत्तत्संबन्धेन राज्ञ्याः केकय्या बुद्धिसंचलनं तत्तदेव त्वयापि त्यज्यतामित्यर्थः । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—अथ स्मेति । अथापि भरते राज्यदानस्यावश्यकत्वेऽपि रामो नगरे भैक्षं चरन् सन् गृहे वसेत् वने विवासनं किमर्थं राज्याभावेऽपि ममात्मजं भरतस्य दासं दातुं कामकारः इच्छा वरं वनवासाच्छ्रेष्ठतमः ॥ ४ ॥

५–६ ] ति० टी०—कैकेय्या कर्त्र्या रामं स्थानात्स्वधानाद्यथेष्टतः स्वेच्छानुसारेण पातयित्वा प्रभ्रश्य पर्वण्याहिताग्निना रक्षसां भागस्तुषादिरूपो विप्रविद्धः प्रक्षिप्तः इतःपरं तद्दर्शनमसंभावितं रक्षोभिर्नाशादिति व्यङ्ग्यम् ॥ ५–६ ॥

गो० टी०—पातयित्वेति । रामं स्वस्थानात् यथेष्टतः स्वेच्छया अमर्यादया पातयित्वा त्वया रामाय प्रदेयो राज्यभागः कैकेय्या प्रदिष्टः कथमिव आहिताग्निना पर्वणि देवेभ्यो देयः हविर्भागः पुरोडाशैकदेशः रक्षसामिव सर्वथानुचितं त्वया कृतमिति भावः ॥ ५ ॥ ६ ॥

रा० टी०—राजकर्तव्यं संप्रार्थ्य शोचन्ती आह—नागराजेत्यादिभिः । धनुर्धरो रामः वनमाविशते ॥ ६ ॥

७ ] ति० टी०—कैकेय्यनुमते स्थितेनेति शेषः कान्यावस्था रक्षोभक्षणातिरिक्ता, न कापि जीवनं सर्वथा न संभावितमिति भावः ॥ ७ ॥

रा० टी०—वने इति । त्वया अन्यया मन्थरया कैकेय्यनुमते संमतौ सति वनवासाय त्यक्तानां रामादीनामन्या वनवासावस्थातो भिन्ना कावस्था दुःखमित्यर्थः भविष्यति इदमेवाधिकं दुःखमित्यर्थः ॥ ७ ॥

गो० टी०—वन इति । वने अदृष्टदुःखानाम् अदृष्टवनदुःखानामित्यर्थः । कैकेय्यानुमते कैकेय्या अनुमते स्थितेनेति शेषः । सवर्णदीर्घ आर्षः त्यक्तानां सीतारामलक्ष्मणानाम् ॥ ७ ॥

८ ] ति० टी०—रत्नहीना उत्तमवस्तुहीनाः तरुणौ च तरुणी च तरुणाः फलकाले युवावस्थत्वेन राज्यभोगकाले ॥ ८ ॥

रा० टी०—ते इति । फलकाले अत्यभ्युदयसमये विवासिताः अत एव रत्नहीना उत्तमवस्त्रभूषणादिरहिताः अत एव कृपणास्तरुणास्ते फलमूलैः कृताशनाः कृतभोजनाः सन्तः कथं वत्स्यन्ति 'रत्नं स्वजातिश्रेष्ठेऽपि' इत्यमरः ॥ ८ ॥

गो० टी०—त इति । रत्नहीनाः श्रेष्ठवस्तुहीनाः 'रत्नं स्वजातौ श्रेष्ठेऽपि' इत्यमरः प्रवरशय्यासनादिहीना इत्यर्थः । तरुणी च तरुणौ च तरुणाः "पुमान् स्त्रिया" इत्येकशेषः । फलकाले फलभोगकाले ॥ ८ ॥

९–११ ] ति० टी०—शोकक्षयः शोकस्य क्षयो यस्मिन्स अपीदानीं स्यात् इदानीमेव स्यात्स काल इत्यर्थः । अपीदानीमिति लोकोक्तौ वा ॥ ९–११ ॥

रा० टी०—अपीति । यस्मिन्काले सभार्यं भार्यासहितं सह भ्रात्रा भ्रात्रा सहितं राघवमिह अयोध्यायां पश्येयं सः शिवः अतिकल्याणसंपादकः शोकक्षयः शोकस्य क्षयो विध्वंसो यस्मिन्स कालः इदानीमस्मिन्दिने अपि स्यात् । संभावनार्थकोऽपिः ॥ ९ ॥

गो० टी०—अपीति । स कालः वनात्प्रत्यागमनकालः अपिः संभावनायाम् इदानीमद्य दिने स्यात् स्यात् किमित्यर्थः । शोकक्षयः शोकक्षयकरः यत् यस्मिन् काले ॥ ९ ॥

रा० टी०—श्रुत्वेति । वीरौ रामलक्ष्मणौ उपस्थितौ प्राप्तौ श्रुत्वेव हृष्टजना हर्षविशिष्टजनविशिष्टा अत एव सूच्छ्रितध्वजमालिनी समुत्थितध्वजसमूहविशिष्टा यशस्विनी अयोध्या कदा भविष्यति ॥ १० ॥

गो० टी०—सुप्त्वेति । उपस्थितौ नगरसमीपमागतौ ॥ १० ॥

रा० टी०—कदेति । नरव्याघ्रौ परमपुरुषौ ॥ ११ ॥

गो० टी०—कदेति । पुरी पौरजनः ॥ ११–१२ ॥

१२–१३ ] ति० टी०—गोरूपां वधूम् ॥ १२ ॥ १३ ॥

रा० टी०—कदायोध्यामिति । वीरो रामः गोवधूं यज्ञपत्नीं वृषभः यज्ञ इव रथे सीतां पुरस्कृत्य अग्रे कृत्वा अयोध्यां कदा प्रवेक्ष्यति 'गौर्नाऽऽदित्ये बलीवर्दे किरणक्रतुभेदयोः' इति कोशः । वृषभशब्दार्थस्तु वृषेण यागकर्तॄणामभीष्टदानेन भा दीप्तिर्यस्य सः किंच गोवधूं सूर्यपत्नीं वृषभः वृषा जलवृष्टिकर्त्री भा किरणो यस्य स सूर्य इव ॥ १२ ॥

---

१ प्रदिष्ट इति गो. पाठः । २ गजेति गो. पाठः । ३ कैकेय्येति गो. पाठः । ४ कान्ववस्थेति गो. पाठः । ५ सभार्यं यदिति गो.रा.पाठः । ६ सुप्त्वैवेति गो. पाठः । ७ अयोध्यां गमिष्यत इति गो. पाठः । ८ नन्दिष्यतीति गो. पाठः ।

प्रविशन्तौ कदायोध्यां द्रक्ष्यामि शुभकुण्डलौ । उदग्रायुधनिस्त्रिंशौ सशृङ्गाविव पर्वतौ ॥ १४ ॥
कदा सुमनसः कन्या द्विजातीनां फलानि च । प्रदिशन्तः[1] पुरीं हृष्टाः करिष्यन्ति प्रदक्षिणम् ॥ १५ ॥
कदा परिणतो बुद्ध्या वयसा चामरप्रभः । अभ्युपैष्यति धर्मात्मा सुवर्ष[2] इव लालयन् ॥ १६ ॥
निःसंशयं मया मन्ये पुरा वीर कदर्यया । पातुकामेषु वत्सेषु मातॄणां शातिताः स्तनाः ॥ १७ ॥
साहं गौरिव सिंहेन विवत्सा वत्सला कृता । कैकेय्या पुरुषव्याघ्र बालवत्सेव गौर्बलात् ॥ १८ ॥
नहि तावद्गुणैर्जुष्टं सर्वशास्त्रविशारदम् । एकपुत्रा विना पुत्रमहं जीवितुमुत्सहे ॥ १९ ॥
नहि मे जीविते किंचित्सामर्थ्यमिह कल्प्यते । अपश्यन्त्याः प्रियं पुत्रं लक्ष्मणं च महाबलम्[3] ॥ २० ॥

रा० टी०—कदा प्राणीति । प्राणिसहस्राणि असंख्येयजनाः ॥ १३ ॥

१४ ] ति० टी०—उदग्रायुधनिस्त्रिंशौ आयुधं धनुरादि निस्त्रिंशः खड्गः ॥ १४ ॥

रा० टी०—प्रविशन्ताविति । उदग्रायुधनिस्त्रिंशौ उदग्राणि अत्युत्कृष्टानि आयुधानि धनुरादीनि निस्त्रिंशाः खड्गाश्च ययोस्तौ अत एव शृङ्गौ शृङ्गसहितौ पर्वताविव अयोध्यां प्रविशन्तौ कदा द्रक्ष्यामि 'तृण्यां खड्गे तु निस्त्रिंशः' इत्यमरः ॥ १४ ॥

गो० टी०—प्रविशन्ताविति । उदग्रायुधनिस्त्रिंशौ आयुधशब्देनात्र धनुरुच्यते निस्त्रिंशः खड्गः 'खड्गे तु निस्त्रिंशः' इत्यमरः ॥ १४ ॥

१५ ] ति० टी०—कन्याद्विजातीनामिति द्वन्द्वः तत्र कन्यानां सुमनसः पुष्पाणि द्विजानां फलानि च प्रदिशन्तः प्रगृह्णन्तो हृष्टा भूत्वा सकलपौरजनोत्सवाय कदा पुरीं प्रदक्षिणं करिष्यन्ति ॥ १५ ॥

रा० टी०—कदेति । सुमनसो देवाः द्विजातीनां कन्याश्च हृष्टाः फलानि प्रदिशन्तः रामं समर्पयन्तश्च सन्तः पुरीमयोध्यां प्रदक्षिणं कदा करिष्यन्ति प्रदिशन्त इत्यादौ "पुमान्स्त्रिया" इत्येकशेषः 'प्रदिशन्त्यः' इति भूषणसंमतपाठे तु सुमनस इत्यत्र लिङ्गविपरिणामेनान्वयः ॥ १५ ॥

गो० टी०—कदेति । द्विजातीनां ब्राह्मणानां कन्याः सुमनसः पुष्पाणि फलानि च प्रदिशन्त्यः सत्यः पुरीं कदा प्रदक्षिणं करिष्यन्ति अयमौत्तराणां मङ्गलाचारः ॥ १५ ॥

१६ ] ति० टी०—बुद्ध्या परिणतो ज्ञानेन वृद्धः वयसा चामरप्रभस्तरुणतर इव देवानां सदा तरुणत्वात् सुवर्ष इव कालिकः कालिकसुदृष्टिरिव जनाँल्लालयन् । 'त्रिवर्ष इव लालयन्' इति पाठे मामिति शेषः 'मां ललन्' इति पाठे प्रतिक्रीडां कुर्वन्नित्यर्थः ॥ १६ ॥

रा० टी०—कदा परिणत इति । बुद्ध्या वयसा च अपरिणतः परिणामरहितः सर्वकालमपरिणतज्ञानवयोविशिष्ट इत्यर्थः । अत एव अमरप्रभः अमरान्देवानपि प्रभाति प्रकाशयति स धर्मात्मा रामः त्रिवर्षः त्रैवार्षिक इव लालयन्नस्माकं लालनाद्बुद्धिमुत्पादयन्कदाभ्युपैष्यति । अन्तर्भावितणिजर्थो भातिः ॥ १६ ॥

गो० टी०—कदेति । बुद्ध्या परिणतः ज्ञानवृद्ध इत्यर्थः । वयसा चामरप्रभः पञ्चविंशतिवर्ष इत्यर्थः । अमरा हि सदा पञ्चविंशतिवर्षाः लालयन् लालनां जनयन् ॥ १६ ॥

१७ ] ति० टी०—कदर्यया क्षुद्राचारया पातुं कामो येषां तेषु पातुकामेषु शातिताः कृत्ताः ॥ १७ ॥

रा० टी०—वियोगदुःखस्यासह्यत्वेन वियोगहेतुविषयकनिश्चयाभावानवगमाद्धेत्वाभासं प्रकल्प्याह—निःसंशयमिति । हे वीर! कदर्यया मया वत्सेषु पातुकामेषु सत्सु मातॄणां तज्जनिकानां स्तनाः निःसंशयं यथा स्यात्तथा शातिताः छिन्नाः इत्यहं मन्ये ॥ १७ ॥

गो० टी०—निःसंशयमिति । कदर्यया क्षुद्रया पातुकामेषु स्तन्यपानकामेषु शातिताः वियोजिता इति यावत् ॥ १७ ॥

१८ ] ति० टी०—वत्सला पुत्रवत्सला सिंहेन गौरिव त्वया विवत्सा कृता उक्तपातकेनेति शेषः । एवं कैकेय्या सिंह्या बालवत्सा गौरिव बलाद्विवत्सा कृता ॥ १८ ॥

रा० टी०—सेति । हे पुरुषव्याघ्र ! वत्सलापुत्रविषयकातिवात्सल्यविशिष्टा बालवत्सा बालवत्सविशिष्टा गौरिव याहं सा सिंहेनेव कैकेय्या केकयीदास्या मन्थरया बलाद्धठाद्विवत्सा प्रियवत्सरहिता गौरिव कृता ॥ १८ ॥

गो० टी०—साहमिति । बालवत्सा साहं सिंहेन गौरिव कैकेय्या बलाद्विवत्सा कृतेति संबन्धः ॥ १८ ॥

१९ ] ति० टी०—अतः—नहीति । गुणैः सर्वकल्याणगुणैः ॥ १९ ॥

रा० टी०—नेति । गुणैः समातिशयरहितसौशील्यवात्सल्यादिभिर्जुष्टं सेवितं पुत्रं विना एकपुत्राहं जीवितुं पालयितुं न उत्सहे ॥ १९ ॥

गो० टी०—नहीति । तावद्गुणैर्जुष्टं यावन्तः कल्याणगुणाः सन्ति तावद्भिर्गुणैर्युक्तमित्यर्थः ॥ १९ ॥

२० ] ति० टी०—कल्प्यते दैवेनेति शेषः 'कल्पते' इति पाठे विषत इत्यर्थः ॥ २० ॥

रा० टी०—ननूत्साहाभावेऽपि यथाकथंचित्पालनं युक्तमेवे-

१ प्रदिशन्त्य इति गो. पाठः । २ धर्मज्ञस्त्रिवर्ष इति गो. त्रिवर्ष इति रा. पाठः । ३ महाबाहुमिति गो. पाठः ।

अयं हि मां दीपयतेऽद्य वह्निस्तनूजशोकप्रभवो महाहितः ।
महीमिमां रश्मिभिरुत्तमप्रभो यथा निदाघे भगवान्दिवाकरः ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

## चतुश्चत्वारिंशः सर्गः ।

श्रीराममहिमानं प्रतिपादयन्ती वचोवितानचतुरा सुमित्रा कौसल्यायाः शोकमपनुदति ।

विलपन्तीं तथा तां तु कौसल्यां प्रमदोत्तमाम् । इदं धर्मे स्थिता धर्म्यं सुमित्रा वाक्यमब्रवीत् ॥ १ ॥
तवार्ये सद्गुणैर्युक्तः स पुत्रः पुरुषोत्तमः । किं ते विलपितेनैवं कृपणं रुदितेन वा ॥ २ ॥
यस्तवार्ये गतः पुत्रस्त्यक्त्वा राज्यं महाबलः । साधु कुर्वन्महात्मानं पितरं सत्यवादिनम् ॥ ३ ॥
शिष्टैराचरिते सम्यक्शश्वत्प्रेत्य फलोदये । रामो धर्मे स्थितः श्रेष्ठो न स शोच्यः कदाचन ॥ ४ ॥
वर्तते चोत्तमां वृत्तिं लक्ष्मणोऽस्मिन्सदानघः । दयावान्सर्वभूतेषु लाभस्तस्य महात्मनः ॥ ५ ॥

---

त्यत आह—नहीति । प्रियं पुत्रमपश्यन्त्याः मे जीविते पालने किंचित्सामर्थ्यं न कल्प्यते केनापि कल्पयितुं न शक्यते इत्यर्थः ॥ २० ॥

गो० टी०—नहीति । कल्प्यते दैवेनेति शेषः । 'कल्पते' इति पाठे विद्यत इत्यर्थः ॥ २० ॥

२१ ] ति० टी०—दीपयते संतापयति ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

रा० टी०—अयमिति । महाहितः अत्यहितकारी तनूजशोकप्रभवः पुत्रशोकजनितः अयं वह्निः मां दीपयते संतापयति तत्र दृष्टान्तः उद्धतप्रभः उद्भूतप्रभावान् भगवानतिशयसामर्थ्यविशिष्टः दिवाकरः सूर्यः निदाघे ग्रीष्मे महीमिव ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०—अयमिति । दीपयते संतापयति उद्धतप्रभः उत्कटकिरणः ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

१ ] ति० टी०—एवं दुःखितां कौसल्यां सुमित्रा समाश्वासयतीत्याह—विलपन्तीमिति । इदं वाक्यमित्यन्वयः ॥ १ ॥

रा० टी०—कौशल्याश्वासनहेतुभूतसुमित्रोक्तिं वर्णयितुमाह—विलपन्तीमिति । धर्मे स्थिता सुमित्रा धर्म्यं धर्मादनपेतमिदं वाक्यमब्रवीत् ॥ १ ॥

गो० टी०—विलपन्तीमित्यादि । इदं वक्ष्यमाणम् ॥ १ ॥

२ ] ति० टी०—कृपणं यथा तथा रुदितेन वा किम् अयुक्तमेवेत्यर्थः । तत्र हेतुः—सद्गुणैर्युक्त इति तादृशस्य च न क्वाप्यपाय इति भावः । पुरुषोत्तम इत्यनेन तस्येश्वरत्वं व्यङ्ग्यम् एवं च सर्वव्यापकत्वेनात्रापि संनिधानाद्विलापादि व्यर्थमिति च व्यङ्ग्यम् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—तवेति । हे आर्ये सर्वश्रेष्ठे ! सद्गुणैः समाधिकरहितासाधारणसौशील्यादिभिर्युक्तः अत एव पुरुषोत्तमः 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः । उत्तमः पुरुषस्त्वन्यः' इत्यादिश्रुतिस्मृतिप्रतिपाद्यपरमपुरुषः स तव पुत्रोऽस्ति अतः एवं दीनतासूचकेन ते विलपितेन विविधकथनेन कृपणं रुदितेन वा किं न किमपीत्यर्थः विलापादि न कर्तव्यमिति तात्पर्यम् एतेन रामस्य निखिलशक्तिमत्त्वं सूचितं तेन तस्य दुःखास्पर्शित्वं ध्वनितं तेन शोको न कार्य इति बोधितम् ॥ २ ॥

गो० टी०—सत्पुरुषाचरितं धर्ममाचरन्तं रामं प्रति संतोषे कर्तव्ये किमर्थो विषादः कृत इति कौसल्यां समाश्वासयति—तवेत्यादिना ॥ २ ॥

३ ] ति० टी०—तदेवाह—य इति । श्लोकद्वयमेकं वाक्यम् साधु सिद्धसंकल्पं कुर्वन्गतः वनमिति शेषः । सत्यवादिनं तत्त्वेन प्रसिद्धम् ॥ ३ ॥

४ ] ति० टी०—शश्वत्सर्वथा नित्यं प्रेत्य फलस्यामुष्मिकसुखस्योदयो यस्मात्तत्र धर्मे स्थितः अतो न शोच्यः ॥ ४ ॥

रा० टी०—ननु यदि रामस्य सर्वशक्तिमत्त्वं स्यात्तर्हीहस्थः सन्नेव निखिलं कार्यं कुर्यात्किं वनगमनेनेत्यत आह—य इति । हे आर्ये ! शिष्टैः अधर्मसंसर्गशून्यैः सम्यक् शश्वदाचरिते अत एव प्रेत्य फलोदये प्रेत्यानां लोकान्तरगतानामपि फलोदयः शुभफलप्राप्तिर्यस्मात्तस्मिन्धर्मे स्थितः अत एव श्रेष्ठः महाबलो यस्तव पुत्रो रामः सः महात्मानं पितरं सत्यवादिनं कुर्वन्नेव साधु यथा स्यात्तथा राज्यं त्यक्त्वा गतः वनमिति शेषः अतः कदाचन न शोच्यः । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—य इत्यादिश्लोकद्वयमेकं वाक्यम् । शिष्टैरिति । प्रेत्य फलोदये आमुष्मिकफलकारणे ॥ ३ ॥ ४ ॥

५ ] ति० टी०—सुसहायसंपत्तेश्च न शोच्य इत्याह—वर्तते चेति । उत्तमां वृत्तिं पितृतुल्यशुश्रूषाव्यापारं वर्तते वर्तयते करोतीति यावत् लाभः सुखमेव ॥ ५ ॥

---

१ समुत्थित इति गो. पाठः । २ उद्धतप्रभ इति गो. पाठः ।

अरण्यवासे यद्दुःखं जानन्त्येव सुखोचिता । अनुगच्छति वैदेही धर्मात्मानं तवात्मजम् ॥ ६ ॥
कीर्तिभूतां पताकां यो लोके भ्रामयति प्रभुः । धर्मः सत्यव्रतपरः किं न प्राप्तस्तवात्मजः ॥ ७ ॥
व्यक्तं रामस्य विज्ञाय शौचं माहात्म्यमुत्तमम् । न गात्रमंशुभिः सूर्यः संतापयितुमर्हति ॥ ८ ॥
शिवः सर्वेषु कालेषु काननेभ्यो विनिःसृतः । राघवं युक्तशीतोष्णः सेविष्यति सुखोऽनिलः ॥ ९ ॥
शयानमनघं रात्रौ पितेवाभिपरिष्वजन् । धर्मघ्नः संस्पृशञ्शीतश्चन्द्रमा ह्लादयिष्यति ॥ १० ॥
ददौ चास्त्राणि दिव्यानि यस्मै ब्रह्मा महौजसे । दानवेन्द्रं हतं दृष्ट्वा तिमिध्वजसुतं रणे ॥ ११ ॥
स शूरः पुरुषव्याघ्रः स्वबाहुबलमाश्रितः । असंत्रस्तो ह्यरण्येऽसौ वेश्मनीव निर्वत्स्यते ॥ १२ ॥

रा० टी०–वर्तत इति । सदानघः सर्वकालमघशून्यः सर्वभूतेषु दयावांल्लक्ष्मणः अस्मिन्रामे उत्तमां सानुकूलां वृत्तिं सेवामित्यर्थः वर्तते वर्तयति करोतीत्यर्थः । दयावानित्यादिविशेषणोक्तिः ‘ समानशीलव्यसनेषु मैत्री ’ इत्याद्युक्त्या राममैत्रीयोग्यताबोधनाय ॥ ५ ॥

गो० टी०–पितृवचनपरिपालके रामे शोको न कार्य इत्युक्त्वा लक्ष्मणसीतयोरपि स्वस्वधर्मनिष्ठत्वात् तद्विषयेऽपि शोको न कार्यः अपि तु प्राप्तलाभत्वात् संतोष एव कार्य इत्याह–वर्तत इत्यादिना । अत्र व इति गायत्र्याः पञ्चमाक्षरम् । वर्तते करोति वृत्तिं शुश्रूषाम् अस्मिन् रामे तस्य लक्ष्मणस्य ॥ ५ ॥

६ ] ति० टी०–एवं वैदेह्यप्यनुगच्छति तेन लाभ एव तस्य अनेन सर्वभूतदयावत्त्वेन लक्ष्मणस्य सर्वभूताधारभूधारकशेषावतारत्वं धर्मानुगत्या च जानक्याः श्रीत्वं ध्वनितं तेन रामस्य भगवत्त्वं ध्वनितम् ॥ ६ ॥

रा० टी०–सीतयापि शोको न कार्य इति बोधयन्ती आह–अरण्येति । सुखोचिता वैदेही अरण्यवासे यद्दुःखं तज्जानन्ती अयोध्यास्थापनफलकरामवर्णितवनदुःखजातविषयकज्ञानं प्राप्नुवत्येव तवात्मजमनुगच्छति एतेन रामानुगमनस्य ..न वनवासक्लेशो न तद्धृदयारूढो भवितेति सूचितम् । अत एव अनभिज्ञा वनानां सेति पूर्वोक्तेर्न विरोधः ॥ ६ ॥

गो० टी०–अरण्येति । अरण्यवासे यद्दुःखं तद्दुःखं जानती वै जानन्त्येव तवात्मजमनुगच्छति स्त्रीणां भर्ता हि दैवतमित्युक्तरीत्यानुगच्छतीत्यर्थः ॥ ६ ॥

७ ] ति० टी०–तदेवाह–कीर्तीति । यः कीर्त्यात्मना संभृतां पताकां ध्वजं लोके त्रैलोक्येऽपि भ्रामयति प्रवर्तयति प्रभुः सर्वभूतपालको दयया स तवात्मजः साक्षाद्धर्मस्तद्रूपो यतः सत्यव्रतपरः अतः किं न प्राप्तः किं तच्छ्रेयो यन्न प्राप्तः अनेन तदेव व्यङ्ग्यं दृढीकृतम् सर्वश्रेयःस्थानत्वस्य भगवद्व्यतिरिक्तेऽभावात् ॥ ७ ॥

रा० टी०–प्रस्तुत वनगमनं श्रेयस्साधनमिति बोधयन्ती आह–कीर्तीति । कीर्तिभूतां यशोरूपां पताकां लोके त्रिलोक्यां यो भ्रामयति स धर्मः सर्वधर्मप्रवर्तकस्तवात्मजो रामः किं श्रेयो न प्राप्तः सर्वं प्राप्त इत्यर्थः ॥ ७ ॥

गो० टी०–कीर्तीति । कीर्तिभूतां पताकां कीर्तिरूपं ध्वजं भ्रामयति संचारयति सर्वभूतविदितप्रख्यातिक इत्यर्थः तवात्मजः किं श्रेयः न प्राप्तः सर्वस्यापि श्रेयसो योग्य इत्यर्थः अतो न शोच्य इति भावः ॥ ७ ॥

८ ] ति० टी०–एतदेव ध्वनयन्ती सकलदेवसेव्यत्वं तस्याह–व्यक्तमिति । शौचमपहतपाप्मत्वादिलक्षणं माहात्म्यं सर्वनियन्तृत्वम् “ यद्भीषोदेति सूर्यः ” इति श्रुतेः ॥ ८ ॥

रा० टी०–व्यक्तमिति । व्यक्तं देवादिषु प्रसिद्धं शौचम् अतिपवित्रकारकमत एव उत्तमं रामस्य माहात्म्यं विज्ञाय सूर्यः अंशुभिः किरणैः रामस्य गात्रं संतापयितुं नार्हति ॥ ८ ॥

गो० टी०–तदेतद्विशिनष्टि–व्यक्तमित्यादि । शौचं त्रिविधकरणशुचित्वं माहात्म्यं सर्वोत्तमत्वम् ॥ ८ ॥

९ ] ति० टी०–युक्तशीतोष्णोऽत एव सुखः सुखस्पर्श इत्यर्थः ॥ ९ ॥

रा० टी०–शिव इति । काननेभ्यो वनेभ्यो विनिःसृतः युक्तशीतोष्णः यथोप्सितशीतोष्णविशिष्टः अत एव सुखः सुखसंपादकः अत एव शिवः माङ्गलिककार्यप्रवर्तकोऽनिलः सर्वेषु कालेषु राघवं सेविष्यति सेविष्यते ॥ ९ ॥

गो० टी०–शिव इति । सर्वेषु कालेषु वसन्तादिकालेषु युक्तशीतोष्णः तत्तत्कालोचितद्रव्यसंस्पर्शनेन संपादितशीतोष्णस्पर्श इत्यर्थः ॥ ९ ॥ १० ॥

१० ] ति० टी०–चन्द्रमाश्चन्द्रः ह्लादयिष्यति सुखयिष्यति ॥ १० ॥

रा० टी०–शयानमिति । पिता दशरथ इव शीतैः रश्मिभिः करैरास्पृशन्नभिपरिष्वजन् संमिलंश्च संश्चन्द्रमाश्चन्द्रः ह्लादयिष्यति ॥ १० ॥

११–१२ ] ति० टी०–ब्रह्मा ब्राह्मणो विश्वामित्रः ब्रह्मेव सृष्टिकर्ता वा तिमिध्वजः शम्बरस्तत्सुतः सुबाहुरित्यर्थ इति कतककृतः । तीर्थस्तु–कदाचिद्रामो वैजयन्तं नगरं निरुध्य तत्रत्यतिमिध्वजाख्यशम्बरपुत्रस्य दानवस्य पुत्रं हतवान् तेन

१ जानती वै इति गो. पाठः । २ भ्रमयतीति गो. पाठः । ३ धर्मसत्यव्रतधन इति गो. पाठः । ४ रश्मिभिः···शीतैरिति गो. पाठः । ५ ऽप्यरण्यस्थ इति गो. पाठः । ६ वत्स्यतीति गो. पाठः ।

यस्येषुपथमासाद्य विनाशं यान्ति शत्रवः । कथं न पृथिवी तस्य शासने स्थातुमर्हति ॥ १३ ॥
या श्रीः शौर्यं च रामस्य या च कल्याणसत्त्वता । निवृत्तारण्यवासः स्वं क्षिप्रं राज्यमवाप्स्यति ॥ १४ ॥
सूर्यस्यापि भवेत्सूर्यो ह्यग्नेरग्निः प्रभोः प्रभुः । श्रियाः श्रीश्च भवेदग्र्या कीर्त्याः कीर्तिः क्षमाक्षमा ॥ १५ ॥

---

प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददावित्येतद्बलात्कल्पयति कतकोक्तं तु न युक्तं ताटकावधोत्तरं सुबाहुवधात्प्रागेव विश्वामित्रेणास्त्रोपदेशस्य प्रागुक्तत्वात्, सुबाहोर्मारीचभ्रातृत्वस्य पूर्वमुक्तत्वेन शम्बरपुत्रत्वानौचित्याच्च ॥ ११ ॥ १२ ॥

रा० टी०—ददाविति।दानवेन्द्रं तमतिप्रबलं तिमिध्वजसुतं तिमिध्वजः शम्बरस्तस्य सुतः सुबाहुस्तं रणे दृष्ट्वा ज्ञात्वा ब्रह्मा ब्राह्मणत्वं प्राप्तः सृष्टिकर्तृत्वेन ब्रह्मसदृशो वा विश्वामित्रः महौजसे अतिपराक्रमविशिष्टाय यस्मै रामाय दिव्यानि अस्त्राणि ह हर्षेण ददौ सः शूरः पुरुषव्याघ्रः परमपुरुषः स्वबाहुबलमाश्रितः अत एव रणे असंत्रस्तः असौ रामः वेश्मनि गृहे इव अरण्ये वने निवत्स्यते एतेन सुबाहुवधात्पूर्वमेव विश्वामित्रास्त्रदानस्योक्तत्वात् हतं दृष्ट्वेत्यर्थे असमञ्जसमुपलभ्य कदाचिद्रामो वैजयन्तं नगरं निरुध्य तत्रत्यतिमिध्वजाख्यशम्बरपुत्रस्य दानवस्य पुत्रं हतवांस्तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददौ इत्येतत्तीर्थकल्पितं क्लिष्टं तादृशकल्पनायां प्रमाणाभावात् सुबाहोर्मारीचभ्रातृत्वस्य पूर्वमुक्तत्वेन शम्बरपुत्रानौचित्यादिति भट्टोक्त्या न भ्रमितव्यं मारीचपितुरेव शम्बरेति नामान्तरे बाधकाभावात्। श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—ददाविति । तिमिध्वजः शम्बरः वैजयन्तमिति ख्यातं पुरं यत्र तिमिध्वजः स शम्बर इति ख्यातः शतमायो महासुर इत्युक्तत्वात् तत्सुतं दानवेन्द्रं हतं दृष्ट्वा यस्मै रामाय दिव्यास्त्राणि ददौ । 'यदा व्रजति संग्रामं ग्रामार्थे नगरस्य वा । गत्वा सौमित्रिसहितो नाविजित्य निवर्तते ' इत्यभिधानात् । कदाचिद्रामो दण्डकारण्यं गत्वा वैजयन्तपुरं निरुध्य दशरथविरोधिभूतशम्बरसुतं हतवान् तेन प्रीतो ब्रह्मा रामाय दिव्यास्त्राणि ददावित्यवगम्यते ॥ ११ ॥

गो० टी०—स शूर इति । अरण्यस्थोऽपीत्यन्वयः ॥१२॥

१३ ] ति० टी०—तस्य शासने पृथिवी तत्स्थाः प्राणिनः कथं न शासने स्थास्यन्ति अतस्तस्य कुतोऽपि न भयमिति भावः ॥ १३ ॥

रा० टी०—यस्येति । यस्य रामस्य इषुपथमासाद्य प्राप्य शत्रवो विनाशं यान्ति तस्य शासने आज्ञायां पृथिवी स्थातुं कथं नार्हति ॥ १३ ॥

गो० टी०—वने रामस्य सौख्यं भवतु भरतस्य रूढमूलत्वात् रामस्य राज्यं न सिध्यतीत्याशङ्क्याह—यस्येति ॥ १३ ॥

१४ ] ति० टी०—या यादृशी श्रीः शरीरशोभा यादृशं च शौर्यं यादृशी च कल्याणसत्त्वता दृश्यते तया ज्ञायते निवृत्तवनवासः क्षिप्रमेव स्वं राज्यं प्राप्स्यति ॥ १४ ॥

रा० टी०—येति । रामस्य या श्रीः विलक्षणसंपत्तिः शौर्यं विलक्षणशूरता च या च कल्याणसत्त्वता कल्याणकारकविलक्षणबलयुक्तत्वं तैर्हेतुभिः रामः स्वं राज्यं क्षिप्रमवाप्स्यति प्राप्स्यति ॥ १४ ॥

गो० टी०—येति । रामस्य या श्रीः सर्वलक्षणसंपन्ना गात्रशोभा यच्च शौर्यं शूरो जेता तस्य भावः शौर्यम् 'शूरो वीरश्च विक्रान्तो जेता ' इत्यमरः । या च कल्याणसत्त्वता प्रशस्तबलयुक्तता एतैरसाधारणहेतुभिः स रामः क्षिप्रं राज्यमवाप्स्यतीति संबन्धः ॥ १४ ॥

१५ ] ति० टी०—इदानीं साक्षादेव सर्वान्तर्यामित्वं रामस्य दर्शयति—सूर्यस्यापीति । सर्वस्यापि स्वस्वकार्यजनकत्वमेतदधीनमेवेति भावः क्षमाक्षमेति षष्ठीतत्पुरुषः ॥ १६ ॥

रा० टी०—रामस्य सर्वनियन्तृत्वं बोधयन्ती आह—सूर्यस्येति । सूर्यस्य सर्वावभासकादित्यस्यापि सूर्योऽवभासक इत्यर्थः । ननु " तमेव भान्तमनुभाति सर्वम् " इत्यादिश्रुत्या सूर्यावभासकत्वं ब्रह्मणः प्रसिद्धमिति ब्रह्म किमित्यत आह—अग्नेः सर्वाग्र्यस्य प्रकाशब्रह्मणोऽप्यग्निः प्रकाशक इत्यर्थः । अत एव प्रभोः सर्वनियन्तुर्ब्रह्मादित्रयस्यापि प्रभुर्नियन्ता अग्निशब्दस्य ब्रह्मपरत्वम् । अग्र्यत्वादग्निनामासावित्यादिना मध्वाचार्यैर्व्याख्यातम् अभिमतश्चायं सिद्धान्तो भूषणकृतामपि अत एव प्रभोः सर्वनियन्तुरपि नियन्तेति तैर्व्याख्यातं सर्वनियन्तृत्वं च विष्ण्वादीनामेवेति भावः । किंच सूर्यस्य प्रकाशकारणस्यापि सूर्यः कारणमित्यर्थः । ननु सूर्यकारणत्वेन वह्निः प्रसिद्ध इति किं स इत्यत आह—अग्नेरप्यग्निः कारणमित्यर्थः । ननु सर्वकारणत्वेन ब्रह्मणः प्रसिद्धत्वादिति किं तदित्यत आह—प्रभोः सकलनियन्तुरपि प्रभुर्नियन्तेत्यर्थः । अग्र्या रामाग्रे गमनशीला क्षमाक्षमा क्षमायाः पृथिव्याः क्षमा क्षान्तिर्यस्याः सा किंच क्षमायाः शान्तेरपि क्षमा शान्तिः अतिशान्तिविशिष्टेत्यर्थः । किंच क्षमया पृथिव्या क्षम्यते सह्यते पाल्यते इत्यर्थः सा सीता तु श्रियाः लक्ष्म्याः श्रीः स्वामिनीत्यर्थः अत एव कीर्त्याः रामयशसः कीर्तिः कारणभूतेत्यर्थः । सूर्यस्य सर्वजगदवभासकस्यापि सूर्योऽवभासकः अग्नेः सर्वदाहकस्याप्यग्निर्दाहक इति भूषणोक्तार्थस्तु न युक्तः दाहकत्वेन प्रकाशकत्वेन च द्वयोः प्रसिद्ध्याऽन्यत रोपादानस्य निरर्थकत्वापत्तिः नापि सूर्यस्यापि प्रकाशको दाहकश्च अग्नेरपि प्रकाशको दाहकश्चेत्यर्थो युज्यते पतत्प्रकर्षदोषवत्तापत्तेरिति दिक् ॥ १६ ॥

---

१ स इति गो. पाठः ।

दैवतं देवैतानां च भूतानां भूतसत्तमः । तस्य के ह्यगुणा देवि वैने वाप्यथवा पुरे ॥ १६ ॥
पृथिव्या सह वैदेह्या श्रिया च पुरुषर्षभः । क्षिप्रं तिसृभिरेताभिः सह रामोऽ³भिषेक्ष्यते ॥ १७ ॥
दुःखजं विसृजत्यैश्रु निष्क्रामन्तमुदीक्ष्य यम् । अयोध्यायां जैनः सर्वः शोकवेगसमाहतः ॥ १८ ॥
कुशचीरधरं ⁶वीरं गच्छन्तमपराजितम् । सीतेवानुगता लक्ष्मीस्तस्य किं नाम दुर्लभम् ॥ १९ ॥
धनुर्ग्रहवरो यस्य बाणखड्गास्त्रभृत्स्वयम् । लक्ष्मणो व्रजति ह्यग्रे तस्य किं नाम दुर्लभम् ॥ २० ॥
निवृत्तवनवासं तं द्रष्टासि पुनरागतम् । जहि शोकं च मोहं च देवि सत्यं ब्रवीमि ते ॥ २१ ॥
शिरसा चरणावेतौ वन्दमानमनिन्दिते । पुनर्द्रक्ष्यसि कल्याणि पुत्रं चन्द्रमिवोदितम् ॥ २२ ॥
पुनः प्रविष्टं दृष्ट्वा तमभिषिक्तं महाश्रियम् । समुत्स्रक्ष्यसि नेत्राभ्यां शीघ्रमानन्दजं जलम् ॥ २३ ॥

गो० टी०–सूर्यस्येत्यादि । सूर्यस्यापि सूर्यो भवेत् सकलजगत्प्रकाशकस्य सूर्यस्यापि प्रकाशको भवेत् । अग्नेरग्निर्दाहकस्याप्यग्नेर्दाहकः प्रभोः प्रभुः सर्वनियन्तुरपि नियन्ता श्रियः श्रीः संपदोऽपि संपत् यद्वा कान्तेरपि कान्तिः कान्तेरप्यतिशयावह इत्यर्थः । क्षमाक्षमा क्षमाया अप्यतिशयोऽनेनेति भावः। दैवतं दैवतानां च दैवतानामपि सकलकार्यनिर्वहणक्षम इत्यर्थः । भूतानां भूतसत्तमः उत्तमभूतमित्यर्थः । भूतत्वं सत्ता सर्वेषां सत्ता तत्सत्ताधीनेति भावः तस्यैवंभूतस्य सर्वगुणसंपन्नस्य देशे वने वा पुरे वा के अगुणाः न कोऽपीत्यर्थः अगुणः प्रतिबन्धकीभूत इति यावत् ॥१५॥१६॥

१६ ] ति० टी०–अगुणाः दोषजनका इत्यर्थः ॥ १६ ॥

रा० टी०–दैवतमिति । हि पूर्वोक्तहेतोः भूतसत्तमः भूतान् प्राणिनः सत्तमर्यान सत्तमामिच्छति यः सीतारामः भूतानां पृथिव्याद्यधोदेशवासिनां देवतानामूर्ध्वदेशवासिनां च दैवतं देवता पूज्य इत्यर्थः । तस्य सीतारामस्य अगुणाः नित्यगुणविरोधिनः अन्यथा कर्तार इत्यर्थः देशे दण्डकादौ पुरे लङ्कादौ वा के सन्ति न केऽपीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०–राम एताभिस्तिसृभिः सहाभिषेक्ष्यते वसिष्ठादिभिरिति शेषः श्रिया विजयलक्ष्म्या ॥ १७ ॥

रा० टी–पृथिव्येति । पृथिव्या शासनान्तररहितभूम्या श्रिया अन्यासाध्यविजयसंपत्त्या च वैदेह्या निखिलकार्यसाधनकारणीभूतसीतया च एताभिस्तिसृभिः सह संहितः स रामो ह हर्षेण अभिषेक्ष्यते वशिष्ठादिभिरिति शेषः ॥ १७ ॥

गो० टी०–पृथिव्येति । सहेत्यत्र स इति पदच्छेदः स रामः पृथिव्या वैदेह्या श्रिया विजयलक्ष्म्या च एताभिः तिसृभिः सह क्षिप्रमभिषेक्ष्यति हेतिसंबन्धः ॥ १७ ॥

१८ ] ति० टी०–कालान्तरेऽपि राज्यार्हतां जनानुरागप्रदर्शनेनाह–दुःखजमिति । यतोऽयोध्यायां विद्यमानः सर्वो जनोऽयं निष्क्रामन्तमुदीक्ष्य दुःखजमश्रु विसृजति, अतस्तस्य राज्यमवश्यं भावीति शेषः ॥ १८ ॥

रा० टी०–दुःखजमिति । अपराजितं कैश्चिदपि पराजेतुमशक्यं कुशचीरधरं कुशचीरयोर्धारणं गच्छन्तं प्राप्नुवन्तं वीरं यं रामं निष्क्रामन्तमयोध्याया निर्गच्छन्तमुदीक्ष्य दृष्ट्वा अयोध्यायां विद्यमानः सर्वो जनः दुःखजमश्रु विसृजति यस्य च सीतेव सीतासदृशी अनुगता नित्यं प्राप्ता लक्ष्मीः महाराजत्वसूचकशोभा संपत्तिः तस्य रामस्य किं दुर्लभं न किंचिदित्यर्थः । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०–दुःखजमिति । अस्य श्लोकस्य पृथिव्या सहेति पूर्वश्लोकस्थेन स रामोऽभिषेक्ष्यतीत्यनेन संबन्धः ॥१८॥

१९ ] ति० टी०–अथ तस्य वने विषयसुखं नास्तीति शोचन्तीमाह–कुशचीरादिधरमपि यं लक्ष्मीरिव सीतानुगता तस्य किं दुर्लभम् । इवशब्द एवार्थे । सीतारूपेण लक्ष्मीरेवैषेति भावः एतेन स विष्णुरेवेति ध्वनितम् ॥ १९ ॥

गो० टी०–कुशचीरेति । लक्ष्मीरिव स्थिता सीतानुगतेत्यन्वयः अनेन राज्यश्रीरन्यन्न परिगृह्णातीति द्योत्यते ॥ १९ ॥

२० ] ति० टी०–धनुर्ग्रहाणां वरः श्रेष्ठः पुरुषोत्तमत्वं विना न लक्ष्मणोऽग्रेसरः स्यादिति भावः ॥ २० ॥

रा० टी०–धनुरिति । धनुर्ग्रहवरो धनुर्धारिश्रेष्ठः अत एव बाणखड्गास्त्रभृत्स्वयं लक्ष्मणो यस्याग्रे व्रजति तस्य किं दुर्लभं न किमपीत्यर्थः ॥ २० ॥

गो०टी०–धनुर्ग्रहेति।धनुर्ग्रहवरः धनुर्धरश्रेष्ठः॥२०–२१॥

२१–२३ ] ति० टी०–द्रष्टासि लुट् ॥ २१–२३ ॥

रा० टी०–निवृत्तेति । निवृत्तवनवासं वनवासान्निवृत्तं तं रामं द्रष्टासि ॥ २१ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–शिरसेति । एतौ भवदीयौ चरणौ शिरसा मूर्ध्ना वन्दमानं पुत्रमुदितं चन्द्रमिव पुनर्द्रक्ष्यसि ॥ २२ ॥

गो० टी०–शिरसेति । एतौ परिदृश्यमानसर्वलक्षणसंपन्नौ उदितं चन्द्रं प्रतिपच्चन्द्रम् ॥ २२ ॥ २३ ॥

रा० टी०–पुनरिति । प्रविष्टं गृहे समागतं दृष्ट्वा आनन्दजं जलं नेत्राभ्यां शीघ्रं समुत्स्रक्ष्यसि त्यक्तासि ॥ २३ ॥

१ दैवतानामिति गो. पाठः । २ राष्ट्रे इति गो. देशे इति रा. पाठः । ३ ऽभिषेक्ष्यतीति गो. पाठः । ४ आस्रमिति गो.पाठः । ५ जनाः सर्वे ··· हताः इति गो. पाठः । ६ देवमिति गो. पाठः । ७ क्षिप्र···पम इति गो. पाठः ।

मा शोको देवि दुःखं वा न रामे दृश्यतेऽशिवम् । क्षिप्रं द्रक्ष्यसि पुत्रं त्वं ससीतं सहलक्ष्मणम् ॥ २४ ॥
त्वयाऽशेषो जनश्चायं समाश्वास्यो यतोऽनघे । किमिदानीमिदं देवि करोषि हृदि विक्लवम् ॥ २५ ॥
नार्हा त्वं शोचितुं देवि यस्यास्ते राघवः सुतः । नहि रामात्परो लोके विद्यते सत्पथे स्थितः ॥ २६ ॥
अभिवादयमानं तं दृष्ट्वा ससुहृदं सुतम् । मुदाश्रु मोक्ष्यसे क्षिप्रं मेघरेखेव वार्षिकी ॥ २७ ॥
पुत्रस्ते वरदः क्षिप्रमयोध्यां पुनरागतः । कराभ्यां मृदुपीनाभ्यां चरणौ पीडयिष्यति ॥ २८ ॥
अभिवाद्य नमस्यन्तं शूरं ससुहृदं सुतम् । मुदास्रैः प्रोक्षसे पुत्रं मेघराजिरिवाचलम् ॥ २९ ॥

आश्वासयन्ती विविधैश्च वाक्यैर्वाक्योपचारे कुशलानवद्या ।
रामस्य तां मातरमेवमुक्त्वा देवी सुमित्रा विरराम रामा ॥ ३० ॥
निशम्य तल्लक्ष्मणमातृवाक्यं रामस्य मातुर्नरदेवपत्न्याः ।
सद्यः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

२४ ] ति० टी०—रामे रामविषये शोकः प्रलापादिदुःखं व्यथा मास्तु यतस्तस्मिन्नशिवमशुभं न दृश्यते ॥ २४ ॥

रा० टी०—मेति । हे देवि ! रामे अशिवं न दृश्यते अत एव पुत्रं क्षिप्रं शीघ्रं द्रक्ष्यसि अत एव शोकस्तज्जन्यं दुःखं वा मास्तु ॥ २४ ॥

गो० टी०—मा शोक इति । हे देवि ! रामे अशिवम् अशुभं न दृश्यते अतः शोकः प्रलापादिः दुःखं मनोव्यथा वा मा न कार्यमित्यर्थः ॥ २४ ॥

२५–२६ ] ति० टी०—हे अनघे! यस्मात्त्वयाशेषोऽयं जनस्त्वत्परिवाररूपत्वात्त्वया समाश्वास्यः अतो देवि ! त्वं हृदि विक्लवं दुःखं किं करोषि ॥ २५ ॥ २६ ॥

रा० टी०—त्वयेति । हे अनघे ! अशेषः सर्वोऽयं रामवियोगजनितदुःखवाञ्जनः यतस्त्वया समाश्वास्यः अतः त्वद् विक्लवं शोकं हृदि करोषि तत्किं कुत्सितं न युक्तमित्यर्थः ॥ २५ ॥

रा० टी०—नेति । सत्पथे अतिसमीचीनमार्गे स्थितः यस्माद्रामात्परो भिन्नो लोके कस्मिंश्चिद्भुवने न स राघवो यस्यास्ते सुतः सा त्वं शोचितुं शोकं कर्तुं नार्हा ॥ २६ ॥

गो०टी०—त्वयेति। विक्लवम् भावप्रधानो निर्देशः॥२५॥२६॥

२७–२८ ] ति० टी०—मेघरेखा मेघपङ्क्तिः ॥ २७ ॥ २८ ॥

रा० टी०—अभीति । ससुहृदं सुहृत्सहितमभिवादयमानं वन्दनां कुर्वन्तं तं रामं क्षिप्रं दृष्ट्वा मुदा अतिहर्षेणाश्रु मोक्ष्यसे तत्र दृष्टान्तः वार्षिकी वर्षासंबन्धिनी मेघरेखा अभ्रपङ्क्तिरिव ॥ २७ ॥

रा० टी०—पुत्र इति । अयोध्यां पुनरागतस्ते पुत्रः चरणौ त्वत्पादौ पीडयिष्यति ॥ २८ ॥

गो० टी०—अभिवादयमानमिति । मेघरेखा मेघपङ्क्तिः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—अभिवाद्य चरणौ स्पृष्ट्वा प्रोक्षसे 'उक्ष सेचने' । वर्तमानसमामीप्ये लट् ॥ २९ ॥

रा० टी०—अभिवाद्येति । अभिवाद्य सुहृद्भिरभिवादनं कारयित्वा नमस्यन्तं सुतं मुदास्रैः आनन्दाश्रुभिः पुनः प्रोक्ष्यसि वर्तमानसामीप्य इति भविष्यति लट् ॥ २९ ॥

गो० टी०—अभिवाद्येति । अभिवाद्य नमस्यन्तम् अभिवादनपूर्वकं प्रणमन्तम् ॥ २९ ॥

३०–३१ ] ति० टी०—वाक्योपचारे वाक्यरचनायाम् । रामा रमणीया ॥ ३० ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

रा० टी०—उपसंहरन्नाह—आश्वासयन्तीति । वाक्योपचारे वाक्यप्रयोगे कुशला अनवद्या मृषावक्तृत्वादिदोषसंसर्गरहिता विविधैर्वाक्यैः रामस्य मातरमाश्वासयन्ती रामा रामविषयकस्मृतिमती देवी सुमित्रा एवमुक्त्वा विरराम तूष्णीं बभूव रामाशब्द अर्शआद्यजन्तः ॥ ३० ॥

रा० टी०—निशम्येति । तद्वर्णितं लक्ष्मणमातृवाक्यं निशम्य श्रुत्वा विद्यमानायाः रामस्य मातुः शरीरे शोकः सद्यो विननाश दध्वंसे तत्र दृष्टान्तः अल्पतोयः स्वल्पवारिविशिष्टः शरद्गतः शरदृतौ दृश्यमानः मेघ इव ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

गो० टी०—आश्वासयन्तीति । वाक्योपचारे वाक्यैरुपचारविषये ॥ ३० ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने ऽयोध्याकाण्डव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१ तमिति गो. पाठः । २ पवेति गो. पाठः । ३ इममिति गो. पाठः । ४ पाणिभ्यामिति गो. पाठः । ५ प्रोक्ष्यसि पुनरिति गो. रा. पाठः ।

## पञ्चचत्वारिंशः सर्गः ।

नगरगमनाय बहुशः प्रार्थ्यमाना अपि रामविरहमसहमानाः पौरा न विरेमुस्तदा ससीतालक्ष्मणो रामो रथादवतीर्य पद्भ्यामेवाक्रमीत्पौरास्तं निवर्तयितुं सुतरां प्रायतंस्तथापि स पितृनिदेशमेवानुससाराथो क्रममाणास्ते परिणतेऽह्नि तमसातीरमासेदुः ।

अनुरक्ता महात्मानं रामं सत्यपराक्रमम् । अनुजग्मुः [1]प्रयान्तं तं वनवासाय मानवाः ॥ १ ॥
निवर्तितेऽ[2]पीव बलात्सुहृद्[3]र्धर्मेण राजनि । नैव ते संन्यवर्तन्त रामस्यानुगता रथम् ॥ २ ॥
अयोध्यानिलयानां हि पुरुषाणां महायशाः । बभूव गुणसंपन्नः पूर्णचन्द्र इव प्रियः ॥ ३ ॥
स याच्यमानः काकुत्स्थस्[4]ताभिः प्रकृतिभिस्तदा । कुर्वाणः पितरं सत्यं वनमेवान्वपद्यत ॥ ४ ॥
अवेक्षमाणः सस्नेहं चक्षुषा प्रपिबन्निव । उवाच रामः [5]सस्नेहं ताः प्रजाः स्वाः प्रजा इव ॥ ५ ॥
या प्रीतिर्बहुमानश्च मय्ययोध्यानिवासिनाम् । मत्प्रियार्थं विशेषेण भरते सा वि[6]धीयताम् ॥ ६ ॥
स हि कल्याणचारित्रः कैकेय्यानन्दवर्धनः । करिष्यति यथावद्वः प्रियाणि च हितानि च ॥ ७ ॥
ज्ञानवृद्धो वयोबालो [7]मृदुर्वीर्यगुणान्वितः । अनुरूपः स वो भर्ता भविष्यति भयापहः ॥ ८ ॥

१ ] ति० टी०—इदानीं दूरमनुगच्छत्पौरजननिवर्तनमाह—अन्विति । वनवासाय प्रयान्तमित्यन्वयः ॥ १ ॥

रा० टी०—नगरवासवृत्तं वर्णयन्नाह—अनुरक्ता इति । वनवासाय प्रयान्तं तं राममनुरक्ताः तद्विषयकातिप्रीतिमन्तः मानवाः अयोध्यावासिजनाः अनुजग्मुः ॥ १ ॥

गो० टी०—एवं सुमित्रया कौसल्याश्वासनपर्यन्तं कथासंघट्टनं परिसमाप्य संप्रति रामगमनवृत्तान्तं प्रस्तौति—अनुरक्ता इत्यादि ॥ १ ॥

२ ] ति० टी०—सुहृद्धर्मेण 'यमिच्छेत्पुनरायातं नैव दूरमनुव्रजेत्' इत्युक्तिरूपेण तेऽनुरक्ताः पौराः ॥ २ ॥

रा० टी०—निवर्तिते इति । सुहृद्धर्मेण अनुव्रजने सुहृद्भिराचरणीयो धर्मः तेन 'यमिच्छेत्पुनरायान्तं नैव दूरमनुव्रजेत्' इत्याद्युक्तिरूपेणेत्यर्थः । राजनि निवर्तिते सति रामस्य रथमनुगतास्तेनैव सन्न्यवर्तन्त तेन तेषां तत्सहगमनेच्छा सूचिता ॥ २ ॥

गो० टी०—निवर्तित इति । सुहृद्वर्ग राजसुहृद्भूतावरोधवर्गे राजनि च सचिवसहिते राजनि च ते पौरजनाः ॥ २॥३॥

३ ] ति० टी०—तदनिवृत्तौ हेतुमाह—अयोध्येति ॥ ३ ॥

४ ] ति० टी०—याच्यमानः प्रतिनिवृत्तिमिति शेषः । ताभिः प्रकृतिभिरनुरक्ततमप्रजाभिः सत्यं सत्यवन्तम् ॥ ४ ॥

रा० टी०—अयोध्येति । गुणसंपन्नो यो रामः येषां अयोध्यानिलयानामयोध्यावासिनां पूर्णचन्द्र इव प्रियो बभूव स काकुत्स्थः ताभिः प्रकृतिभिर्याच्यमानः सहगमनाय प्रार्थ्यमान एव पितरं सत्यं कुर्वाणः सन् वनमन्वपद्यत अगच्छत् । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—स इति । याच्यमानः निवर्तस्व निवर्तस्वेति प्रार्थ्यमानः सत्यं सत्यप्रतिज्ञम् ॥ ४ ॥

५ ] ति० टी०—स्वाः प्रजा इव स्वपुत्रानिव ॥ ५ ॥

रा० टी०—अवेक्षमाण इति । स्वाः स्वकीयाः प्रजाः पुत्रानिव ताः याचमानाः प्रजाः राम उवाच ॥ ५ ॥

गो० टी०—अवेक्षमाण इति । स्वाः प्रजा इव स्वान्यपत्यानीव ॥ ५ ॥

६ ] ति० टी०—अयोध्यानिवासिनाम् युष्माकमिति शेषः ॥ ६ ॥

रा० टी०—तद्वचनमेवाह—येत्यादिभिः । अयोध्यावासिनां भवतामपि या यादृशी प्रीतिः स्नेहः यो बहुमानः अतिसत्कारश्च सा स च मत्प्रियार्थं मन्निष्ठप्रीतिवृद्ध्यर्थं भरते विधीयतां क्रियताम् एतेन भरतो मदतिप्रिय इति व्यञ्जितम् ॥ ६ ॥

गो० टी०—स्वेन पितृवचनपरिपालनस्यावश्यकर्तव्यत्वात् प्रजानुरागेण ताभ्यो हितमुपदिशति—या प्रीतिरित्यादिना ॥ ६–८ ॥

७ ] ति० टी०—प्रियाण्यैहलौकिकसुखजनकानि हितानि परलोकसुखजनकानि ॥ ७ ॥

रा० टी०—स इति । कल्याणचारित्रः सर्वकल्याणकारकाचरणविशिष्टः स भरतः वो युष्माकं प्रियाणि प्रीतिनिष्पादकानि हितानि वृद्धिकारककार्याणि यथावत्करिष्यति ॥ ७ ॥

८ ] ति० टी०—वयसा बालोऽपि ज्ञानवृद्धः वीर्यगुणान्वितोऽपि मृदुः ॥ ८ ॥

रा० टी०—तत्पालनयोग्यतां बोधयन्नाह—ज्ञानेति । ज्ञानवृद्धः अतिज्ञानवान् मृदुवीर्यगुणान्वितः मृदुः अतिकोमलचित्तः वीर्यगुणैः अतिपराक्रमवात्सल्यादिभिरन्वितो युक्तः स एव स इति कर्मधारयः, मृदुशब्दस्य धर्मपरत्वे तु त्रयाणां द्वन्द्वे कृते तत्पुरुषः अत एव अनुरूपः पालनयोग्यः अत एव भयापहः प्रजाभयनाशनयोग्यः वयोबालः वयसा बालः स भरतः वो युष्माकं भर्ता भविष्यति ॥ ८ ॥

१ प्रयान्तमिति गो. पाठः । २ ऽपि चेति गो. पाठः । ३ वर्गे चेति गो. पाठः । ४ स्ताभिरिति गो. पाठः । ५ स्नेहेनेति गो. पाठः । ६ निवेश्यतामिति गो. पाठः । ७ मृदुर्वीर्यगुणान्वित इति रा. पाठः ।

स हि राजगुणैर्युक्तो युवराजः समीक्षितः । अपि चापि मया शिष्टैः कार्यं वो भर्तृशासनम् ॥ ९ ॥
न संतप्येद्यथा चासौ वनवासं गते मयि । महाराजस्तथा कार्यो मम प्रियचिकीर्षया ॥ १० ॥
यथा यथा दाशरथिर्धर्ममेवाश्रितो भवेत् । तथा तथा प्रकृतयो रामं पतिमकामयन् ॥ ११ ॥
बाष्पेण पिहितं दीनं रामः सौमित्रिणा सह । चकर्षेव गुणैर्बद्धं जनं पुरनिवासिनम् ॥ १२ ॥
ते द्विजास्त्रिविधं वृद्धा ज्ञानेन वयसौजसा । वयःप्रकम्पशिरसो दूरादूचुरिदं वचः ॥ १३ ॥
वहन्तो जवना रामं भो भो जात्यास्तुरंगमाः । निवर्तध्वं न गन्तव्यं हिता भवत भर्तरि ॥ १४ ॥
कर्णवन्ति हि भूतानि विशेषेण तुरंगमाः । यूयं तस्मान्निवर्तध्वं याचनां प्रतिवेदिताः ॥ १५ ॥

---

९ ] ति० टी०—समीक्षितो राज्ञा निश्चितः मया शिष्टैः मत्तोऽधिकैरिति यावत्, ईदृशै राजगुणैर्युक्तः हि यतः अपि चाप्यस्मादपि हेतोः भरते प्रीतिर्विधीयतां यतो वो युष्माकं भर्तृशासनं राजाज्ञा कार्यावश्यकार्या भवति ॥ ९ ॥

रा० टी०—स इति । मया शिष्टैः शिक्षितैः राजगुणैर्युक्तः स भरतः युवराजः प्रजापालकत्वेन युवराजसदृशः समीक्षितो निश्चितः पित्रादिभिरिति शेषः अतः भर्तृशासनं राजाज्ञा वो युष्माकं कार्यम् ॥ ९ ॥

गो० टी०—स हीति । हि यस्मात् कारणात् भरतो वः युष्माकं युवराजः समीक्षितः राज्ञेति शेषः अतो मया शिष्टैः वशिष्टैः लक्ष्मणशत्रुघ्नादिभिः सर्वैरपि भर्तृशासनं कार्यम् । अपि चेति वक्तव्यान्तरसमुच्चये ॥ ९ ॥

१० ] ति० टी०—तथा कार्योऽनुकूलाचरणेन सदा समाश्वासनीयः ॥ १० ॥

रा० टी०—नेति । महाराजो दशरथः यथा न संतप्येत्तथा कार्यः अनुकूलाचरणेन तोषणीय इत्यर्थः ॥ १० ॥

गो० टी०—नेति । मयि वनं गते सति असौ महाराजः यथा न संतप्येत् मम प्रियचिकीर्षया तथा कार्यः ॥ १० ॥

११ ] ति० टी०—धर्मं राजवाक्यपरिपालनरूपम् अकार्येऽश्रित्ते स्वीकृतवन्तः अत्यन्तधर्मशालित्वात् ॥ ११ ॥

रा० टी०—यथेति । दाशरथिः रामः यथा यथा येन येन प्रकारेण धर्ममाश्रितः ग्राहितवाँस्तथातथा तेन तेन प्रकारेण धर्ममाश्रितः आश्रयणकर्म्यः प्रकृतयः प्रजाः पतिं राममकामयन्नयोभयत्राश्रितः शब्दाद्वत्या उभयान्वयी पूर्वत्रान्तर्भावितणिजर्थः श्रिञः कर्तरि निष्ठा परत्र कर्तरि क्विप् ॥ ११ ॥

गो० टी०—यथेति । धर्मे पितृवचनपरिपालनरूपे धर्मे तथा तथा प्रकृतयो रामं पतिमकामयन् आदौ राजा ज्येष्ठं भवन्तमेवास्मद्रक्षणार्थं युवराजत्वेन कल्पितवान् अयमर्थो भवतास्माभिश्च कर्तव्य इति राममेव पुनः पुनः पतिमकामयन्तेत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—बाष्पेण पिहितं पिहितनेत्रं रज्जुरूपैः स्वगुणैर्बद्धं पुरनिवासिनं सौमित्रिसहितो रामश्चकर्षेव उत्प्रेक्षालंकारः गुणैरित्यंशे श्लेषः ॥ १२ ॥

रा० टी०—बाष्पेणेति । दीनं निश्चितरामवियोगजनितदुःखाक्रान्तमत एव बाष्पेण अश्रुणा पिहितं व्याप्तं गुणैः रघुनाथनिष्ठातिसौशील्यादिभिर्बद्धं स्वाधीनकृतं पुरवासिनं जनं गुणैः रज्जुभिः बद्धमिव रामश्चकर्ष । अत्रापि गुणबद्धशब्दौ शब्दाद्वत्योभयान्वयिनौ ॥ १२ ॥

गो० टी०—बाष्पेणेति । सौमित्रिणा सहेत्यनेन रामस्येव लक्ष्मणस्यापि गुणपौष्कल्यमस्तीति द्योत्यते गुणैरेव गुणैः पाशैरिति श्लिष्टरूपकम् ॥ १२ ॥

१३ ] ति० टी०—ओजसा तपोबलेन एवं त्रिविधं यथा तथा वृद्धास्तेषां मध्ये वयःप्रकम्पशिरसो वयस आधिक्यात्कम्पयुक्तशिरसोऽतिवृद्धत्वादनुधावनाशक्त्या दूरादिदमूचुः । क्वचित् ' प्रमुग्धशिरसः ' इति पाठः ॥ १३ ॥

रा० टी०—ते इति । ज्ञानादिभिस्त्रिभिः त्रिविधं यथा स्यात्तथा वृद्धाः ये अत एव वयःप्रकम्पशिरसः अतिवयोहेतुकप्रकम्पविशिष्टशिरोविशिष्टाः ये द्विजाः ते दूरादिदं वचः ऊचुः । दूरादित्यनेन तत्समीपगमनासामर्थ्यं तेषां सूचितम् ॥ १३ ॥

गो० टी०—त इति । त्रिविधमिति क्रियाविशेषणम् ओजसा तपोबलेन वयसा प्रकम्पं चञ्चलं शिरो येषां ते तथा ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—किमूचुस्तदाह—वहन्त इति । रथेन प्रापयन्त इत्यर्थः जात्या उत्तमजातीयाः भर्तरि रामविषये हिता भवत वनं मा नयतेति यावत् ब्राह्मणयाच्ञामतिक्रम्य युष्मद्गमनं भर्तृरहितमिति भावः ॥ १४ ॥

रा० टी०—तद्वचनमेवाह—वहन्त इति । जात्याः उत्तमजातिप्रसूताः अत एव जवनाः अतिगमनशीलाः भो भो तुरङ्गमाः मन्तव्यं मननयोग्यं रामं वहन्तो यूयं भर्तरि रामे हिताः प्रियवहनकर्तारः भवत न निवर्तध्वं गन्तव्यदेशमप्राप्य भवद्भिर्न निवर्तितव्यमित्यर्थः । ' गन्तव्यम् ' इति पाठे अनुगमनार्हमित्यर्थः ॥ १४ ॥

१५ ] ति० टी०—विशेषेण यूयं कर्णवन्त इत्यनुकर्षस्तस्माद्बधिरवन्न गन्तव्यम्, अपि तु याचनामस्मदीयां प्रतिवेदिता ज्ञातवन्तो निवर्तध्वम् ॥ १५ ॥

रा० टी०—ननु पशुत्वादस्माभिः कथं तव संभाषणमि

---

१ चेति गो. पाठः । २ धर्मं एव स्थितोऽभवदिति गो. पाठः । ३ बद्ध्वेति गो. पाठः । ४ मन्तव्यमिति रा. पाठः ।

धर्मतः स विशुद्धात्मा वीरः शुभदृढव्रतः । उपवाह्यस्तु वो भर्ता नापवाह्यः पुराद्वनम् ॥ १६ ॥
एवमार्तप्रलापांस्तान्वृद्धान्प्रलपतो द्विजान् । अवेक्ष्य सहसा रामो रथादवततार ह ॥ १७ ॥
पद्भ्यामेव जगामाथ ससीतः सहलक्ष्मणः । संनिकृष्टपदन्यासो रामो वनपरायणः ॥ १८ ॥
द्विजातीन्हि पदातींस्तान्रामश्चारित्रवत्सलः । न शशाक घृणाचक्षुः परिमोक्तुं रथेन सः ॥ १९ ॥
गच्छन्तमेव तं दृष्ट्वा रामं संभ्रान्तमानसाः । ऊचुः परमसंतप्ता रामं वाक्यमिदं द्विजाः ॥ २० ॥
ब्राह्मण्यं कृत्स्नमेतत्त्वां ब्रह्मण्यमनुगच्छति । द्विजस्कन्धाधिरूढास्त्वामग्नयोऽप्यनुयान्त्वमी ॥ २१ ॥
वाजपेयसमुत्थानि च्छत्राण्येतानि पश्य नः । पृष्ठतोऽनुप्रयातानि मेघानिव जलात्यये ॥ २२ ॥

त्यत आहुः—कर्णवन्तीति । भूतानि प्राणिनः कर्णवन्ति सन्तीति शेषः तत्र तुरङ्गमाः अश्वाः विशेषेण कर्णवन्तः अतो याचनां प्रतिवेदिताः मत्प्रार्थनाविषयकज्ञानवन्तो यूयं तस्मात्स्वविधारितवनमार्गमध्यनिवर्तनान्निवर्तध्वं वनप्रापणमन्तरा न निवर्तितव्यमित्यर्थः ॥ १९ ॥

गो० टी०—कर्णवन्तीति । याचनां प्रतिवेदिताः प्रार्थनां ज्ञापिताः अस्माभिरिति शेषः ॥ १९ ॥

१६ ] ति० टी०—उपवाह्यः पुरसमीपं प्रापणीयः वो युष्माकम्, न तु पुरादपनीय वनं वाह्यः प्रापणीयः ॥ १६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—धर्मत इति । विशुद्धात्मा वो युष्माकं भर्ता अत एव नापवाह्यः विरुद्धवहनानर्हः स रामः पुराद्वनं धर्मतः सुखप्रापकत्वेन उपवाह्यः प्रापणीयः ॥ १६ ॥

गो० टी०—धर्म इति । उपवाह्यः पुरसमीपे वाह्यः ॥ १६ ॥

१७ ] ति० टी०—आर्तप्रलापानार्तवाक्यानि प्रलपतः कथयतः ॥ १७ ॥

रा० टी०—एवमिति । आर्तप्रलापान्दुःखसूचकशब्दान्प्रलपतः कथयतो द्विजान्ब्राह्मणानवेक्ष्य रथादवततार एतेन रामस्य मर्यादापालकत्वं व्यक्तम् ॥ १७ ॥

गो० टी—एवमिति । आर्तप्रलापान् प्रलपतः आर्तवाक्यानि प्रयुञ्जानानित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—द्विजानां संगमार्थं संनिकृष्टपदन्यासो भूत्वा वनपरायण एव शनैर्जगाम नतु निवृत्तो नापि स्थितः रथेन गमने ब्राह्मणक्लेशेन दोषः प्रतिनिवृत्य ब्राह्मणाश्वासने व्रतभङ्गो भवतीति धिया पद्भ्यां मन्दगमनोऽभूत् यावद्बृद्धसंनिधानमिति भावः ॥ १८ ॥

रा० टी०—पद्भ्यामिति । संनिकृष्टपदन्यासः संनिकृष्टो ब्राह्मणसंगमनेच्छया अल्पीभूतः पदन्यासो यस्य स रामः पद्भ्यामेव जगाम ॥ १८ ॥

गो० टी०—पद्भ्यामिति । संनिकृष्टपदन्यासः पद्भ्यां जगामेति ब्राह्मणवाक्यश्रवणानन्तरं रथगमने दोषो भवतीति प्रतिनिवृत्य ब्राह्मणाश्वासने व्रतभङ्गो भवतीति धिया रथादवतीर्य तदागमनपर्यन्तं मन्दं मन्दं जगामेत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—रथेन परिमोक्तुं न शशाक अत्यन्तं रथवेगालम्बनेन निवर्तयितुं न शशाकेत्यर्थः । तत्र घृणाचक्षुष्ट्वं हेतुः घृणा दया तत्सूचकचक्षुष्मानित्यर्थः ॥ १९ ॥

रा० टी०—रथादवतरणे प्रयोजनं वदन्नाह—द्विजातीनिति । चारित्रवत्सलः वात्सल्यसूचकाचरणविशिष्टः घृणाचक्षुः दयासूचकदृष्टिमान् रथेन सहितः स रामः पदातीन्द्विजातीन्परिमोक्तुं निवर्तयितुं न शशाक तेन रामस्याधर्मभीरुत्वं सूचितम् ॥ १९ ॥

गो० टी०—रथादवतीर्य किमर्थं पादगमनं कृतवानित्याशङ्क्याह—द्विजातीनिति । रथेन द्विजातीन् परिमोक्तुं न शशाक रथेनोपलक्षितः सन् सावरोधं दशरथमिवाज्ञप्त्यादिना द्विजातीन् निवर्तयितुं न शशाकेत्यर्थः । घृणाचक्षुः दयार्द्रचक्षुरित्यर्थः ॥ १९ ॥

२० ] ति० टी०—गच्छन्तमेव स्वप्रार्थनानन्तरमपि न स्थितं नापि निवृत्तमित्यर्थः ॥ २० ॥

रा० टी०—गच्छन्तमिति । रामं सर्वाभिरामदातारम् एवं रथादिरहितत्वेन गच्छन्तं तं रामं दृष्ट्वा संभ्रान्तमानसाः संभ्रान्ते रामकर्तृकादरे मानसं येषां ते परमसंतप्ताः निश्चितरामवियोगजनितसंतापं प्राप्ताः द्विजाः इदं वाक्यमूचुः ॥ २० ॥

गो० टी०—गच्छन्तमिति । गच्छन्तमेव बहुशो निवृत्तिहेतुप्रदर्शनेऽपि पितृवचनचिकीर्षया गच्छन्तमेवेत्यर्थः ॥ २० ॥

२१ ] ति० टी०—ब्राह्मण्यं ब्राह्मणसमूहः ब्रह्मण्यं ब्रह्महितम् द्विजस्कन्धाधिरूढाः पात्रारणिद्वारेणेति शेषः ॥ २१ ॥

रा० टी०—तद्वचनमेवाह—ब्राह्मण्यमिति । कृत्स्नं निखिलमेतद्ब्राह्मण्यं ब्राह्मणसमूहः "ब्राह्मणमाणववाडवाद्यत्" इति यत् । ब्रह्मण्यम् ब्राह्मणहितं त्वामनुगच्छति अत एव द्विजस्कन्धादिरूढाः ब्राह्मणस्कन्धेषु स्थिताः अमी अरणीपात्रादिद्वारका अग्नयस्त्वामनुयान्ति ॥ २१ ॥

गो० टी०—दुःखप्रलापादिनाप्यनिवृत्तं रामं सहवनगमनलक्षणं महाभारमारोप्य निवर्तयितुमुपक्रमते—ब्राह्मण्यमित्यादिना । ब्राह्मण्यं ब्राह्मणसमूहः "ब्राह्मणमाणववाडवाद्यत्" इति यत्प्रत्ययः । ब्रह्मसु ब्राह्मणेषु साधुः ब्रह्मण्यः तमग्नयः अरण्यारोपिताः केवलानां द्विजस्कन्धाधिरूढत्वासंभवात् ॥ २१ ॥

२२ ] ति० टी०—वाजपेयसमुत्थानि वाजपेययाजिनो रा-

१ स्थिति गो. पाठः । २ चेतस इति गो. पाठः । ३ यान्त्यमीति गो. रा. पाठः ।

अनवाप्तातपत्रस्य रश्मिसंतापितस्य ते । एभिश्छायां करिष्यामः स्वैश्छत्रैर्वाजपेयकैः ॥ २३ ॥
या हि नः सततं बुद्धिर्वेदमन्त्रानुसारिणी । त्वत्कृते सा कृता वत्स वनवासानुसारिणी ॥ २४ ॥
हृदयेष्वेव तिष्ठन्ते वेदा ये नः परं धनम् । वत्स्यन्त्यपि गृहेष्वेव दाराश्चारित्ररक्षिताः ॥ २५ ॥
पुनर्न निश्चयः कार्यस्त्वद्गतौ सुकृता मतिः । त्वयि धर्मव्यपेक्षे तु किं स्याद्धर्मपथे स्थितम् ॥ २६ ॥
याचितो नो निवर्तस्व हंसशुक्लशिरोरुहैः । शिरोभिर्निभृताचार महीपतनपांसुलैः ॥ २७ ॥

जवच्छत्रादिसंबन्धस्य श्रुतावुक्तेः मेघानिव जलात्यये शारदमेघवत्पाण्डुराणिच्छत्राणीत्यर्थः ॥ २२ ॥

रा० टी०—वाजपेयेति । वाजपेयसमुत्थानि वाजपेये वाजपेययागे समुत्थानि लब्धानि पृष्ठतोऽनुप्रयातानि जलात्यये शरदि मेघानिव एतानि नोऽस्माकं छत्राणि पश्य वाजपेयिनां राजवच्छत्रधारणं श्रुतौ प्रसिद्धम् ॥ २२ ॥

गो० टी०—वाजपेयेति । वाजपेयसमुत्थानि वाजपेयानुष्ठानसंभृतानि जलात्यये शरदि ॥ २२ ॥

२३ ] ति० टी०—अनवाप्तातपत्रस्याप्राप्तश्वेतच्छत्रस्य वाजपेयकैर्वाजपेययागप्राप्तैः ॥ २३ ॥

रा० टी०—छत्रदर्शने प्रयोजनं वदन्नाह—अनवाप्तेति । न अवाप्तं प्राप्तमातपत्रं छत्रं येन तस्य अत एव रश्मिसंतापितस्य ते वाजपेयकैः वाजपेये उपलब्धैः एभिः स्वैः स्वकीयैश्छत्रैः छायां करिष्यामः "यावज्जीवं कंचन प्रत्यारोहेद्बृहस्पतिसवेन वा यजेत्प्रत्यवरोहिणीयेन यजेत् श्वेतच्छत्री भवतीति विज्ञायते" इति वाजपेययाजिनां श्वेतच्छत्रधारणविधानम् ॥ २३ ॥

गो० टी०—अनवाप्तेति । वाजपेयिकैः[1] वाजपेयप्राप्तैः "यावज्जीवं न कंचन प्रत्यवरोहेत् बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत श्वेतच्छत्री भवतीति विज्ञायते" इति वाजपेययाजिनां श्वेतच्छत्रधारणविधानादिति भावः ॥ २३ ॥

२४ ] ति० टी०—वेदमन्त्रानुसारिणी तदभ्यासानुसरणशीला त्वत्कृते त्वन्निमित्तं वनवासानुसारिणी वेदाभ्यासादि परित्यज्य वनवासोन्मुखीकृतेत्यर्थः ॥ २४ ॥

रा० टी०—येति । नोऽस्माकं या बुद्धिः वेदमन्त्रानुसारिणी मन्त्राभ्यासनिरतेत्यर्थः सा बुद्धिस्त्वत्कृते त्वदर्थं वनवासानुसारिणी कृता एतेन वयमपि सहैव नेतव्या इति सूचितम् ॥ २४ ॥

गो० टी०—अस्माकं बुद्धिरेतावन्तं कालं निश्चिन्ततया मन्त्रविषयाभूत् इदानीं त्वत्कृतवनवासविषयाभूदिति रामे महान्तं भारमारोपयन्ति—याहीत्यादिना ॥ २४ ॥

२५ ] ति० टी०—अस्माकं त्वया सह वनानुगमने न काप्यनुपपत्तिरित्याहुः—हृदयेष्विति । ये नोऽस्माकं परं धनं वेदाः तेऽस्माकं हृदय एवावतिष्ठन्ते चारित्रं पातिव्रत्यम् ॥ २५ ॥

रा० टी०—ननु धनदारान्विहाय कथं भवतां सह गमनमित्यत आहुः—हृदयेष्विति । ये वेदाः नः परमुत्कृष्टं धनं ते हृदयेष्वेव अवतिष्ठन्ते चारित्ररक्षिताः स्वाचरणकर्तृकरक्षाविशिष्टा दारा अपि गृहे वत्स्यन्ति एतेन सहगमने न काप्यनुपपत्तिरिति सूचितम् ॥ २५ ॥

गो० टी०—ब्राह्मणानां धनभूतं वेदं परित्यज्य सहधर्मचारिदारसंरक्षणमप्यकृत्वा कथमस्माभिः सह गम्यत इत्याकाङ्क्षायामाह—हृदयेष्विति । नः परं धनं उत्कृष्टधनभूता ये वेदास्ते हृदयेष्वेव तिष्ठन्ति अनुचारणे तेषां न कापि हानिरिति भावः । चारित्रेण पातिव्रत्येन रक्षिता दाराश्च गृहेष्वेव तिष्ठन्ति[2] चारित्राणामेव तद्रक्षकत्वान्नास्मद्रक्ष्यास्त इति भावः ॥ २५ ॥

२६ ] ति० टी०—पुनरिति[3] । यद्यपि त्वद्गतौ त्वदनुगमनेऽस्माकं मतिः सुकृता निश्चिता अतः पुनर्वनगमननिश्चयोऽस्माकं न कार्योऽस्ति कृतत्वादेव तथापि किंचिद्ब्रूम इति शेषः । त्वयि धर्मव्यपेक्षे ब्राह्मणवचनरूपधर्मनिरपेक्षे सति किंभूतं धर्मपथे स्थितं स्यात्, न किमपि सर्वे धर्ममार्गं व्यतिक्रमेयुः ॥ २६ ॥

रा० टी०—ननु बहूनामसंमतत्वान्मद्गमनमेव संदिग्धमित्यत आहुः—पुनरिति । गतौ त्वत्कर्तृकगमने त्वद्गमनविरोध्यन्यः निश्चयः पुनर्न कार्यः कैश्चिदिति शेषः । इति मतिर्निश्चयः सुकृता अस्माभिरिति शेषः । अयं त्वच्छब्दः मर्वादिपठितोन्यपर्यायः । तत्र हेतुमाह—त्वयि धर्मव्यपेक्षे धर्मापेक्षारहिते सति धर्मपथे धर्ममार्गे स्थितं किं वस्तु स्यान्न किमपीत्यर्थः ॥ २६ ॥

गो० टी०—अथ मत्प्रार्थनया निवर्तध्वमित्यत्राह—नेति । त्वद्गतौ त्वन्निवर्तनरूपगतौ मतिः सुकृता सुष्ठुकृता निश्चयः वनगमननिश्चयः पुनर्न कार्यः त्वयेति शेषः । त्वयि धर्मव्यपेक्षे पितृवचनपरिपालनरूपधर्मसापेक्षे सति अस्माभिः धर्ममपेक्षितुं[4] पालयितुं किं निमित्तं स्यात् त्वयि वनं गतेऽस्माभिर्धर्म एव त्यक्तव्य इति भावः, यद्वा त्वयि तु धर्मपरायणे त्वयि तु धर्मव्यपेक्षे सति ब्राह्मणप्रार्थनाकरणरूपधर्मनिरपेक्षे सति किं भूतं धर्ममपेक्षितुं स्यात् न किमपीत्यर्थः ॥ २६ ॥

२७ ] ति० टी०—तस्मादस्माभिर्हंसशुक्लशिरोरुहैः पलितकेशैः शिरोभिः साष्टाङ्गप्रणामेन महीपतनपांसुलैर्महीपतनेन पांसुलैः रजोव्याप्तैर्देहैश्च याचितस्त्वं निभृताचार निश्चलधर्मानुष्ठान! निवर्तस्व । अत्र ब्राह्मणैर्नमस्कारः क्षत्रियस्य कथमिति न शङ्क्यं तत्त्वज्ञतया भगवदवतारत्वदृष्ट्या नमस्कारेणादोषात्, यद्वा राज्ञो विष्णवंशत्वेन नतौ न दोष इत्याहुः ॥ २७ ॥

रा० टी०—याचित इति । हंसशुक्लशिरोरुहैः हंसशुक्लसदृशशुक्लविशिष्टकेशविशिष्टैः शिरोभिरुपलक्षितैः महीपतनपांसुलैः

१ वाजपेयिकैरिति गो. पाठः । २ एव तिष्ठन्तीति गो. पाठः । ३ पुनरिति गो. पाठः । ४ धर्ममपेक्षितुमिति गो. पाठः ।

बहूनां वितता यज्ञा द्विजानां य इहागताः । तेषां समाप्तिरायत्ता तव वत्स निवर्तने ॥ २८ ॥
भक्तिमन्तीहे भूतानि जङ्गमाजङ्गमानि च । याचमानेषु तेषु त्वं भक्तिं भक्तेषु दर्शय ॥ २९ ॥
अनुगन्तुमशक्तास्त्वां मूलैरुद्धतवेगिनः । उन्नता वायुवेगेन विक्रोशन्तीव पादपाः ॥ ३० ॥
निश्चेष्टाऽऽहारसंचारा वृक्षैकस्थाननिश्चिताः । पक्षिणोऽपि प्रयाचन्ते सर्वभूतानुकम्पनम् ॥ ३१ ॥
एवं विक्रोशतां तेषां द्विजातीनां निवर्तने । ददृशे तमसा तत्र वारयन्तीव राघवम् ॥ ३२ ॥

---

प्रणामार्थं महीपतनेन धूलीधूसरैः अमात्यादिभिर्याचितोऽपि त्वं नो निवर्तस्व निभृताचारेति संबोधनं तदर्थस्तु निभृतो नितरां पोषितः आचारः सज्जनमार्गो येनेति ॥ २७ ॥

गो० टी०—ज्ञानवयस्तपोवृद्धा अपि द्विजाः विश्लेषासहिष्णुतया प्रणामेनापि रामं निवर्तयितुमुद्युञ्जते—याचित इति । हे निभृताचार निश्चलधर्मानुष्ठान ! हंसशुक्लशिरोरुहैः पलितकेशैः महीपतनपांसुलैः कृतसाष्टाङ्गप्रणामैः नः अस्माकं शिरोभिर्याचितो निवर्तस्व वृद्धब्राह्मणानां क्षत्रियकुमारप्रणामः परत्वबुद्ध्या ॥ २७ ॥

२८ ] ति० टी०—एवमपि गच्छन्तमेव दृष्ट्वाहुः—बहूनामिति । ये द्विजा इहागतास्तेषां बहूनां यज्ञा इह काले विततः सन्ति तेषां समाप्तिस्त्वन्निवर्तनायत्ता अनिवृत्तौ सर्वयज्ञविघ्नकर्तृत्वं त्वय्यापत्स्यतीति भावः ॥ २८ ॥

रा० टी०—बहूनामिति । हे वत्स ! ये इहागतास्तेषां बहूनां द्विजानां ये विततः विस्तृता यज्ञास्तेषां समाप्तिः निवर्तने वनवासान्निवृत्तिसमये आयत्ता अस्माभिर्निश्चितेत्यर्थः । पूर्वस्तेषांशब्दो यच्छब्दमहिम्ना उत्तरत्र ये इति तच्छब्दमहिम्ना चाध्याहृतः ॥ २८ ॥

गो० टी०—बहूनामिति । ये द्विजा इहागतास्तेषां ये यज्ञाः विततः विस्तृताः संभृतसंभारा इति यावत् तेषां यज्ञानां समाप्तिस्तव निवर्तने आयत्ता त्वन्निवर्तनाधीनेत्यर्थः । एवं न कृतं चेत्सर्वे यज्ञास्त्वयैव विघ्निताः स्युरिति भावः ॥ २८ ॥

२९ ] ति० टी०—न केवलमस्मत्प्रार्थनैव अपि तु सर्वभूतप्रार्थनापीत्याहुः—भक्तीति । जङ्गमाजङ्गमानि सर्वाण्यपि भूतानि भक्तिमन्ति स्नेहवन्ति तेषु त्वन्निवृत्तिं याचमानेषु भक्तेषु त्वमपि भक्तिं स्नेहं प्रदर्शय निवृत्त्येति शेषः ॥ २९ ॥

रा० टी०—वनगमने प्रयोजनान्तरं वदन्त आहुः—भक्तिमन्तीति । जङ्गमाजङ्गमानि चराचराणि ते भक्तिमन्ति सन्तीति शेषः अतो याचमानेषु तेषु भक्तेषु विद्यमानां भक्तिं त्वं दर्शय स्वगमनेन प्रकटय तेन "भक्तिरेवैनं गमयति" इत्यादिश्रुतिसार्थक्यं कुर्विति प्रार्थना सूचिता ॥ २९ ॥

गो० टी०—न केवलं वयमेव तिर्यक्स्थावराण्यपि त्वन्निवृत्तिमपेक्षन्त इत्याह—भक्तिमन्तीति । भक्तिं स्नेहं दर्शय सफलयेत्यर्थः ॥ २९ ॥

३० ] ति० टी०—तेषां याच्ञाप्रकारमाह—मूलैः स्थावरत्वाद्धृतस्कन्धं हतवेगा अतस्त्वामनुगन्तुमशक्ता उन्नता उच्छ्रिताः पादपा वायुवेगेन वायुवेगजशाखाचलनशब्दैर्विक्रोशन्तीव त्वन्निवर्तनायेति शेषः ॥ ३० ॥

रा० टी०—ननु भक्ताः स्वयमेवागत्य मद्दर्शनं करिष्यन्तीति किं मद्गमनेनेत्यत आहुः—अनुगन्तुमिति । वायुवेगेन करणेन मूलेन सह उद्धतवेगिनः अतिप्रकम्पविशिष्टाः इत्यर्थः पादपा इव उद्धतवेगिनः अतिवृद्धा इत्यर्थः अत एव त्वामनुगन्तुमशक्ताः उन्नताः उदि परमात्मनि त्वयि नताः महान्तः त्वां विक्रोशन्ति आह्वयन्ति त्वदागमनं वाञ्छन्तीत्यर्थः । त्वामित्युभयान्वयि । एतेन त्वयैव गन्तव्यमिति सूचितम् ॥ ३० ॥

गो० टी०—अनुगन्तुमिति । मूलैः पादस्थानीयैस्त्वामनुगन्तुमशक्ताः उद्धतवेगिनः प्रतिहतवेगिनः वायुवेगेन उन्नताः ऊर्ध्वबाहव इव स्थिता इति भावः । पादपाः विक्रोशन्तीव क्रन्दन्तीव वायुवेगोत्थशब्दैरिति भावः । उद्धतवेगिभिरित्यपि पाठः ॥ ३० ॥

३१ ] ति० टी०—चेष्टा गात्रचलनादिरूपा आहारार्थसंचारश्च तेभ्यो निर्गतास्तद्रहिताः वृक्षरूपैकस्थान एव निश्चिता निश्चयेन स्थिताः, न त्वाहारायापि भुवमवतीर्णाः एवं मरणपर्यन्तव्यापारेण त्वां याचन्ते निवृत्तिमिति शेषः ॥ ३१ ॥

रा० टी०—तद्वने तिर्यग्योनीनामपि तव दर्शनाकाङ्क्षेति बोधयन्त आहुः—निश्चेष्टेति । निश्चेष्टाहारसंचाराः वृद्धत्वादिना निर्गताश्चेष्टा बहुवाग्व्यापाराः आहारसंचाराः आहारार्थं संचरणं येषां ते अत एव वृक्षैकस्थाननिश्चिताः एकवृक्षस्थितिविषयकनिश्चयवन्तः पक्षिणः संपातिप्रभृतयोऽपि सर्वभूतानुकम्पनं त्वां प्रयाचन्ते द्रष्टुमिच्छन्तीत्यर्थः ॥ ३१ ॥

गो० टी०—निश्चेष्टेति । चेष्टा चलनादिकम् आहारसंचाराश्च येभ्यो निर्गतास्ते तथोक्ताः प्रयाचन्ते प्रार्थयन्ते निवृत्तिमिति शेषः । एवं तिर्यक्स्थावराणामपि खेदो रामस्य सर्वशरीरित्वात्, शरीरिणो वैपरीत्ये हि शरीरव्यथा दृष्टा ॥ ३१ ॥

३२ ] ति० टी०—निवर्तने निवर्तननिमित्तं विक्रोशतां तेषामनुग्रहाय मार्गे तिर्यक्प्रवाहत्वाद्राघवं वारयन्तीव तमसा ददृशे दृष्टा ॥ ३२ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण विक्रोशतां तेषां द्विजातीनां निवर्तने इव स्थिता राघवं रामं वारयन्ती वरमिच्छन्ती तमसा तत्र तस्मिन्समये ददृशे कर्मणि लिट् । वारशब्दः स्वार्थिकाणन्तः ॥ ३२ ॥

---

१ हंसेति गो. पाठः । २ रामेति गो. पाठः । ३ विष्ठिता इति गो. पाठः । ४ कम्पिनमिति गो. पाठः । ५ आपत्स्यते इति युक्तं भाति ।

ततः सुमन्त्रोऽपि रथाद्विमुच्य श्रान्तान्हयान्संपरिवर्त्य शीघ्रम् ।
पीतोदकांस्तोयपरिप्लुताङ्गानचारयद्वै तमसाविदूरे ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

## षट्चत्वारिंशः सर्गः ।

तमसातीरमनुगतो रामोऽयोध्यास्थजनवृत्तं भावयमानः पितरावनुशोच्य पुनश्च भरतसाद्गुण्येनाश्वास्यमानः पल्लवारचितशयनीये संविवेश। लक्ष्मणस्तु सुमन्त्राग्रे रामगुणान्प्रस्तूयमान एवास्तेऽथ प्रबुध्यमानो रामोऽनुसृतपौरवञ्चनाय वनगमनमबोधयन्त्या नगरगमनमेव प्रदर्शयन्त्या गत्या रथं प्रवर्त्यानेतुं सूतं प्रैरयत्तथा तेनानुष्ठिते प्रापितरथमधिरुह्य ससीतालक्ष्मणो रामोऽग्रेवणं प्रतस्थे ।

ततस्तु तमसातीरं रम्यमाश्रित्य राघवः । सीतामुद्वीक्ष्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥
इयमद्य निशा पूर्वा सौमित्रे प्रहिता वनम् । वनवासस्य भद्रं ते न[1] चोत्कण्ठितुमर्हसि ॥ २ ॥
पश्य शून्यान्यरण्यानि रुदन्तीव समन्ततः । यथा निलयमायद्भिर्निलीनानि मृगद्विजैः ॥ ३ ॥
अद्यायोध्या तु नगरी राजधानी पितुर्मम । सस्त्रीपुंसा गतानस्माञ्छोचिष्यति न संशयः ॥ ४ ॥

गो० टी०—एवमिति । निवर्तने विषये यद्वा, द्विजातीनामिति संबन्धसामान्ये षष्ठी द्विजातिभिः प्रार्थ्यमानरामनिवर्तन इत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—संपरिवर्त्य श्रमापनुत्तये कृतविलुण्ठनान्विधाय तोयपरिप्लुताङ्गान्स्नापितांस्तमसाया अविदूरेऽचारयद्भक्षिततृणानकारयत् ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रा० टी०—तत इति । ततस्तमसादर्शनानन्तरं श्रान्तान्हयान्रथाद्विमुच्य परिवर्त्य श्रमनिवर्तकपरिभ्रमणं कारयित्वा पीतोदकान्पीतजलांस्तोयपरिप्लुताङ्गान्कृतस्नानान्हयांस्तमसाविदूरे तमसाया निकटे अचारयत् ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

गो० टी०—तत इति । संपरिवर्त्य अध्वश्रमनिवृत्त्यर्थं परिवेष्टनं कारयित्वा ॥ ३३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चचत्वारिंशः सर्गः ॥४५॥

---

१ ] ति० टी०—सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यनेन सीतोद्देश्यकताप्यस्य वचसो ध्वनिता ॥ १ ॥

रा० टी०—रामवृत्तं बोधयितुमाह—तत इति । रम्यं रमणीयं तमसायाः नदीविशेषस्य तीरमाश्रित्य सीतामुद्वीक्ष्य अवलोक्य सौमित्रिमिदं वचनमब्रवीत् ॥ १ ॥

गो० टी०—ततस्त्वित्यादि । सीतामुद्वीक्ष्येति लक्ष्मणं प्रति कथनं वक्ष्यमाणस्यानुत्कण्ठाकारणस्य सीताविषयेऽपि तुल्यत्वज्ञापनाय ॥ १ ॥

२ ] ति० टी०—हे सौमित्रे ! वनवासस्य वनवाससंबन्धिनिशानां मध्येऽद्य प्रवृत्तेयं निशा वनं वनवासं प्रति पूर्वा प्रहिता प्राप्ता वनवासकालस्यैतन्निशामारभ्य गणनीयत्वात् अतस्त्वमुत्कण्ठितुमद्यप्रभृति पुरौत्सुक्येनायोध्यादिस्मरणं कर्तुं नार्हसि ॥ २ ॥

रा०टी०—तद्वचनमेवाह—इयमिति । हे सौमित्रे ! वनवासस्य वनवाससंबन्धिनी इयं पूर्वा प्रथमा निशा प्रहिता प्राप्ता इतःप्रभृत्येव चतुर्दशवर्षगणना कर्तव्येति तात्पर्यम् अतः अवनं वनवासविरोधि वस्तु उत्कण्ठितुं स्मर्तुं नार्हसि ते भद्रं कल्याणमेव सर्वत्रेति शेषः ॥ २ ॥

गो० टी०—इयमिति । वनवासस्य पूर्वा प्रथमा अद्येयं निशा इदानीमुपस्थिता रात्रिः प्रहिता गतप्राया अतः स त्वम् उत्कण्ठितुं नार्हसि सीतामुद्वीक्ष्य सौमित्रिमब्रवीदित्यस्यैवं वाभिप्रायः अतिसुकुमारी सीता कथं पद्भ्यामेव वनं गच्छेदिति नोत्कण्ठितुमर्हसीति ॥ २ ॥

३ ] ति० टी०—यथायोगं स्वस्वनिलयमायद्भिरागच्छद्भिर्मृगद्विजैर्निलीनानि सशब्दमन्तर्लीनतया व्याप्तानि अत एव शून्यान्यरण्यानि रुदन्तीवास्मान्दृष्ट्वा खिन्नानीव वर्तन्ते तानि पश्य ॥ ३ ॥

रा० टी०—पश्येति । समन्ततः चतुर्दिक्षु यथानिलयं स्वस्ववासस्थानमनतिक्रम्य आयद्भिरागच्छद्भिः मृगद्विजैः मृगपक्षिभिः निलीनानि शून्यानि मङ्गलकार्यरहितानि रुदन्तीवारण्यानि तमसातीरवनानि त्वं पश्य ॥ ३ ॥

गो० टी०—पश्येति । शून्यानि निष्प्रभाणि यथानिलयं यथास्थानमायद्भिरागच्छद्भिः मृगद्विजैर्निलीनानि व्याप्तानि तात्कालिकतच्छब्दैः रुदन्तीव निष्प्रभत्वेन रोदनोत्प्रेक्षा ॥ ३ ॥

४ ] ति० टी०—सस्त्रीपुंसा स्त्रीपुंसैः सहिता अद्यप्रभृति ॥ ४ ॥

---

१ स नेति गो. पाठः । २ अत्र पञ्चमी युक्तेति भाति ।

अनुरक्ता हि मनुजा राजानं बहुभिर्गुणैः । त्वां च मां च नरव्याघ्र शत्रुघ्नभरतौ तथा ॥ ५ ॥
पितरं चानुशोचामि मातरं च यशस्विनीम् । अपि नान्धौ भवेतां नौ रुदन्तौ तावभीक्ष्णशः ॥ ६ ॥
भरतः खलु धर्मात्मा पितरं मातरं च मे । धर्मार्थकामसहितैर्वाक्यैराश्वासयिष्यति ॥ ७ ॥
भरतस्यानृशंसत्वं संचिन्त्याहं पुनः पुनः । नानुशोचामि पितरं मातरं च महाभुज ॥ ८ ॥
त्वया कार्यं नरव्याघ्र मामनुव्रजता कृतम् । अन्वेष्टव्या हि वैदेह्या रक्षणार्थं सहायता ॥ ९ ॥
अद्भिरेव हि सौमित्रे वत्स्याम्यद्य निशामिमाम् । एतद्धि रोचते मह्यं वन्येऽपि विविधे सति ॥ १० ॥
एवमुक्त्वा तु सौमित्रिं सुमन्त्रमपि राघवः । अप्रमत्तस्त्वमश्वेषु भव सौम्येत्युवाच ह ॥ ११ ॥

रा० टी०—अद्येति । सस्त्रीपुंसा स्त्रीपुंसैः सहिता "अचतुरविचतुर-" इत्यच् । अयोध्या अस्माञ्छोचिष्यति ॥ ४ ॥

गो० टी०—वनरोदनोत्प्रेक्षया उद्बुद्धसंस्कारो नगरवृत्तान्तं स्मरति—अद्येति । स्त्रीपुंसेति "अचतुरविचतुरसुचतुरस्त्रीपुंस—" इत्यादिना निपातनादकारान्तत्वम् ॥ ४ ॥

५ ] ति० टी०—कुतस्तत्राह—अनुरक्ता इति । बहुभिर्गुणैरिति सर्वान्वयि ॥ ५ ॥

रा० टी०—शोके हेतुं वदन्नाह—अनुरक्ता इति । बहुभिर्गुणैरुपलक्षितान्राजादीन्मनुजा अयोध्यावासिजनाः अनुरक्तास्तद्विषयकातिस्नेहवन्तः सन्तीति शेषः ॥ ५ ॥

गो० टी०—शोचनहेतुमाह—अनुरक्ता इति । गुणैर्हेतुभिः राजानं प्रत्यनुरक्ता हि राजानमित्युपादानमौद्धत्यपरिहाराय ॥ ५॥

६ ] ति० टी०—नावस्मदर्थे अस्मन्निमित्तमभीक्ष्णं मुहुर्मुहू रुदन्तौ पितरावन्धौ न भवेताम्, अपि भवेतामेव अतः शोचामि तौ ॥ ६ ॥

रा० टी०—पितरमिति । यशस्विनीमतियशोविशिष्टामनुशोचामि । ननु किमर्थमनुशोचसीत्यत आह—नौ अस्मदर्थमभीक्ष्णशः वारंवारं रुदन्तौ तौ मातापितरौ अन्धौ नापि भवेतां बहिर्दृष्टितां नापि निवर्तयातामित्यर्थः किंच अन्धौ अस्मद्विषयकद्वेषवत्तासंभावनया बहूनां चक्षुरपहारकौ नापि भवेतां तेनापहारकत्वेन मत्पित्रोर्दोषस्पर्शित्वं स्यादिति पश्चात्तापः सूचितः । अपिः संभावनार्थकः ॥ ६ ॥

गो० टी०—पितरमिति । रुदन्ताविति सन्ततरोदनवशेनान्धौ स्यातामित्यर्थः ॥ ६ ॥

७ ] ति० टी०—अथवा तदनुशोकोऽस्माकं वृथेत्याह—भरत इति ॥ ७ ॥

रा०टी०—वस्तुतस्त्वेवं न भवितेति बोधयन्नाह—भरत इति। धर्मार्थकामसहितैर्धर्मादिबोधकैर्वाक्यैः आश्वासयिष्यति ॥ ७ ॥

गो० टी०—एवमपि काचित्प्रत्याशास्तीत्याह—भरत इति ॥ ७ ॥ ८ ॥

८ ] ति० टी०—अनृशंसत्वमक्रूरत्वम् ॥ ८ ॥

रा० टी०—भरतस्येति । अनृशंसत्वं सर्वकालं क्रूरतासंसर्गरहितत्वं क्रूरताविरोधित्वं वा संचिन्त्य संस्मृत्य नानुशोचामि ॥ ८ ॥

९ ] ति० टी०—अथ लक्ष्मणानुगमनेन संतुष्ट आह—त्वयेति । मामनुव्रजता त्वया तु यत्कार्यं कर्तव्यं तत्कृतमेव हि यतस्त्वदनुव्रजनाभावे वैदेहीरक्षणार्थं सहायता सहायसमूहोऽन्वेष्टव्यः स्यात् त्वमेकोऽपि सहायसमूहस्थानीय इति भावः । अतस्त्वस्यै अद्यारभ्यैव सुखाहारादिकं संपादयेति शेषः ॥ ९ ॥

रा० टी०—लक्ष्मणोपकृतिं बोधयन्नाह—त्वयेति । अनुव्रजता अनुगमनं कुर्वता त्वया कार्यमस्माभिः कर्तव्यं कृतं साधितमन्यथा वैदेह्या रक्षणार्थं सहायता सहायसमूहः अन्वेष्टव्या अन्वेषणीया स्यादिति शेषः तेन सहायसमूहसामर्थ्यं लक्ष्मणे एव दर्शितामिति व्यक्तम् ॥ ९ ॥

गो० टी०—त्वया चोदितमेव कृतमित्याह—त्वयेति । कार्यमवश्यं कर्तव्यं, तत्र हेतुः अन्वेष्टव्येति ॥ ९ ॥

१०–११ ] ति० टी०—अहं त्वत्र तमसातीरे इमां निशामद्भिरेव कृतप्राणरक्षणो वत्स्यामि प्रथमदिनत्वाद्वनवाससंकल्पाङ्गत्वेनेति शेषः । तदेवाह—एतद्धीति । वन्ये सत्यपीत्यन्वयः ॥ १० ॥ ११ ॥

रा० टी०—तात्कालिककर्तव्यं बोधयन्नाह—अद्भिरिति । अद्भिर्जलैरेव इमां निशां वत्स्यामि एवेन भक्षणान्तरव्यावृत्तिः । तत्र हेतुः विविधे अनेकप्रकारे वन्ये भक्ष्यफलादौ सत्यपि एतज्जलमात्रभक्षणमेव अद्य अस्यां रात्रौ रोचते एतेन तमसायास्तीर्थत्वात्तदुपवासविधिः कृत इति व्यक्तं तेन तस्य मर्यादापालकत्वं ध्वनितम् ॥ १० ॥

रा० टी०—एवमिति । सौमित्रिमेवमुक्त्वा अश्वेषु अश्वरक्षणेषु अप्रमत्तस्त्वं भवेति सुमन्त्रमुवाच ॥ ११ ॥

गो० टी०—अद्भिरेव वत्स्यामि अप एवाहारीकृत्य वत्स्यामि । वनवासोपक्रमदिवसत्वादस्य पुण्यक्षेत्रत्वाच्चोपवासः एतद्धि रोचते नान्यत् अनुरक्तजनदुःखस्मरणादिति भावः ॥ १० ॥ ११ ॥

१ वेति गो. पाठः । २ स्विति गो. पाठः । ३ विचिन्त्येति गो. पाठः । ४ अपि लक्ष्मणेति गो. पाठः । ५ रक्षणार्थे इति गो. पाठः । ६ स्विति गो. पाठः । ७ विरोचते इति रा. पाठः ।

सोऽश्वान्सुमन्त्रः संयम्य सूर्येऽस्तं समुपागते । प्रभूतयवसान्कृत्वा बभूव प्रत्यनन्तरः ॥ १२ ॥
उपास्य तु शिवां संध्यां दृष्ट्वा रात्रिमुपागताम् । रामस्य शयनं चक्रे सूतः सौमित्रिणा सह ॥ १३ ॥
तां शय्यां तमसातीरे वीक्ष्य वृक्षदलैर्वृताम् । रामः सौमित्रिणा सार्धं सभार्यः संविवेश ह ॥ १४ ॥
सभार्यं संप्रसुप्तं तु श्रान्तं संप्रेक्ष्य लक्ष्मणः । कथयामास सूताय रामस्य विविधान्गुणान् ॥ १५ ॥
जाग्रतोरेव तां रात्रिं सौमित्रेरुदितो रविः । सूतस्य तमसातीरे रामस्य ब्रुवतो गुणान् ॥ १६ ॥
गोकुलाकुलतीरायास्तमसाया विदूरतः । अवसत्तत्र तां रात्रिं रामः प्रकृतिभिः सह ॥ १७ ॥
उत्थाय च महातेजाः प्रकृतीस्ता निशाम्य च । अब्रवीद्भ्रातरं रामो लक्ष्मणं पुण्यलक्षणम् ॥ १८ ॥
अस्मद्व्यपेक्षान्सौमित्रे निर्व्यपेक्षान्गृहेष्वपि । वृक्षमूलेषु संसक्तान्पश्य लक्ष्मण सांप्रतम् ॥ १९ ॥

---

१२ ] ति० टी०—संयम्य यथायोग्यं बन्धनं कृत्वा प्रभूतयवसान्प्रभूतघासान् प्रत्यनन्तरः प्रत्यासन्नः ॥ १२ ॥

रा० टी०—स इति । स सुमन्त्रः अश्वान्संयम्य यथोचितं बन्धनं प्रापय्य प्रभूतयवसान्बहुघासान्कृत्वा तदग्रे संस्थाप्य प्रत्यनन्तरः रामं प्रत्यासन्नो बभूव ॥ १२ ॥

गो० टी०—स इति । प्रभूतयवसान् पर्याप्ततृणान् ' यवसं तृणमर्जुनम् ' इत्यमरः । प्रत्यनन्तरः प्रतिगतमनन्तरकृत्यं येन स तथोक्तः अवगतानन्तरकार्य इत्यर्थः । संनिहित इत्यर्थ इत्येके ॥ १२ ॥

१३ ] ति० टी०—शयनं शयनस्थलं शर्करापांसुत्क्षेपणादिना चक्रे इत्यन्वयः ॥ १३ ॥

रा० टी०—उपास्येति । उपागतां रात्रिं दृष्ट्वा सौमित्रिणा सह सूतः शिवां कल्यणप्रदां संध्यामुपास्य सांध्यविधिं समाप्येत्यर्थः विद्यमानस्य रामस्य शयनं शयनयोग्यस्थलं चक्रे । विद्यमानस्येति ल्यबन्तार्थान्वयार्थमध्याहृतम् ॥ १३ ॥

गो० टी०—उपास्येति । उपासनं नमस्कारः सूतजातेरपि नमस्कारमात्रं संभवति ॥ १३ ॥

१४ ] ति० टी०—वृक्षदलैर्वृक्षपर्णैः सौमित्रिणा सार्धं सूतेन कृतां शय्यां वीक्ष्य सभार्यः संविवेश ॥ १४ ॥

रा० टी०—तामिति । सौमित्रिणा सार्धं सूतेन वृक्षदलैः वृक्षपर्णैः कृतां रचितामित्यर्थः तां शय्यां वीक्ष्य सभार्यो रामः संविवेश ॥ १४ ॥

गो० टी०—तामिति । वृक्षदलैः सौमित्रिणा सार्धं सूतेन कृतां वीक्ष्य इत्यन्वयः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—गुणान्कथयामास जागरणार्थमिति भावः ॥ १५ ॥

रा० टी०—सभार्यमिति । संप्रेक्ष्य समवलोक्य विविधान् अनेकप्रकारान्रामस्य गुणाँल्लक्ष्मणः कथयामास ॥ १५ ॥

१६ ] ति० टी०—तां रात्रिमित्यत्यन्तसंयोगे द्वितीया । उदितो रविः अरुणोदयकालो जात इत्यर्थः ॥ १६ ॥

रा० टी०—जाग्रत इति । सूतस्य सुमन्त्राय रामस्य गुणान् ब्रुवतः अत एव तां रात्रिं जाग्रतः सौमित्रेः रविरुदितः । " षष्ठी चानादरे " इति षष्ठी " कालाध्वनोरत्यन्तसंयोगे " इति द्वितीया । सूतस्येत्यत्र संबन्धसामान्ये षष्ठी ॥ १६ ॥

गो० टी०—जाग्रत इति । तां रात्रिमिति अत्यन्तसंयोगे द्वितीया सर्वां रात्रिं जाग्रतः सूतस्य सूताय रामस्य गुणान् कालक्षेपार्थं ब्रुवतः सौमित्रेः सौमित्रौ ब्रुवति सति रविरुदितः उदितुमारब्धः उषःकालोऽभूदित्यर्थः । यद्वा उदयपर्यन्तं गमनकालेऽपि गुणानब्रवीदिति भावः ॥ १६ ॥

१७ ] ति० टी०—गोकुलैराकुलं व्याप्तं तीरं यस्यास्तस्यास्तमसायास्तीरे विदूरतो द्विजसंवेशदेशादतिदूरदेशेऽतिसंधाय गमनसौकर्यार्थमवसत् । प्रकृतिसाहित्यं तमसातीरवासमात्रे बोध्यम् ॥ १७ ॥

रा० टी०—गोकुलेति । गोकुलाकुलतीरायाः गोसमूहः व्याप्ततीरविशिष्टायाः तमसायाः विदूरतः ष्ठीवनादिहेतुकापचारभिया किंचिद्दूरं तां रात्रिमवसत् ॥ १७ ॥

गो० टी०—पूर्वकथाशेषं प्रस्तौति—गोकुलेति । विदूरतप्रकृतिभिः पौरश्रेणिभिः ' राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ' इत्यमरः ॥ १७ ॥

१८ ] ति० टी०—निशाम्यावलोक्य निद्राणा इति शेषः ॥ १८ ॥

रा० टी०—उत्थायेति । ताः सुप्ताः प्रकृतीः प्रजाः निशाम्य दृष्ट्वा लक्ष्मणमब्रवीत् ॥ १८ ॥

गो० टी०—उत्थायेति । निशाम्य दृष्ट्वा ॥ १८ ॥

१९ ] ति० टी०—अस्मद्व्यपेक्षानस्मास्वेव विशेषेणापेक्षावतः अत एव गृहेषु निर्व्यपेक्षान्निरपेक्षान् श्रमात्सांप्रतमरुणोदयेऽपि सुप्तान् ॥ १९ ॥

रा० टी०—तदाकारमाह—अस्मदिति । अस्मद्व्यपेक्षानस्मद्विषयकात्यपेक्षाविशिष्टानत एव गृहेषु अपिना पुत्रादिषु निर्व्यपेक्षानपेक्षारहितान् अत एव वृक्षमूलेषु संसुप्तान् अध्वश्रमादेतावत्कालपर्यन्तमपि स्वापविशिष्टान्पौरान्पश्य विशेष्यमध्याहृतम् ॥ १९ ॥

---

१ कृतामिति गो. पाठः । २ तमिति गो. पाठः । ३ ह्येवेति गो. रा. पाठः । ४ लिति गो. पाठः । ५ निरपेक्षानिति गो. पाठः । ६ संसुप्तानिति गो. पाठः ।

यथैते नियमं पौराः कुर्वन्त्यस्मन्निवर्तने । अपि प्राणान्न्यसिष्यन्ति न तु त्यक्ष्यन्ति निश्चयम् ॥ २० ॥
यावदेव तु संसुप्तास्तावदेव वयं लघु । रथमारुह्य गच्छामः पन्थानमकुतोभयम् ॥ २१ ॥
अतो भूयोऽपि नेदानीमिक्ष्वाकुपुरवासिनः । स्वपेयुरनुरक्ता मा वृक्षमूलेषु संश्रिताः ॥ २२ ॥
पौरा ह्यात्मकृताद्दुःखाद्विप्रमोच्या नृपात्मजैः । न तु खल्वात्मना योज्या दुःखेन पुरवासिनः ॥ २३ ॥
अब्रवील्लक्ष्मणो रामं साक्षाद्धर्ममिव स्थितम् । रोचते मे तथा प्राज्ञ क्षिप्रमारुह्यतामिति ॥ २४ ॥
अथ रामोऽब्रवीत्सूतं शीघ्रं संयुज्यतां रथः । गमिष्यामि ततोऽरण्यं गच्छ शीघ्रमितः प्रभो ॥ २५ ॥
सूतस्ततः संत्वरितः स्यन्दनं तैर्हयोत्तमैः । योजयित्वा तु रामस्य प्राञ्जलिः प्रत्यवेदयत् ॥ २६ ॥
अयं युक्तो महाबाहो रथस्ते रथिनां वर । त्वरयारोह भद्रं ते ससीतः सहलक्ष्मणः ॥ २७ ॥

---

गो० टी०—अस्मदिति । अस्मद्यपेक्षान् अस्मास्वेव विशेषेणापेक्षावतः ॥ १९ ॥

२० ] ति० टी०—एते पौरा अस्मन्निवर्तने यथा नियमं यत्नं कुर्वन्ति तथा जाने अपि प्राणान्न्यसिष्यन्ति त्यक्ष्यन्ति न त्वस्मन्निवर्तननिश्चयं त्यक्ष्यन्तीत्यर्थः ॥ २० ॥

रा० टी०—यथेति । यथा येन प्रकारेण अस्मन्निवर्तने अस्मत्कर्तृककिंचिज्जनबोधितनिवृत्तौ नियमं नियोगं कुर्वन्ति तथा प्राणानपि न्यसिष्यन्ति त्यक्ष्यन्ति ज्ञातवियोगे सतीति शेषः निश्चयं सहगमनकृतनियोगं तु न त्यक्ष्यन्ति एतेन एतन्निवारणे यत्नोऽन्वेषणीय इति ध्वनितम् ॥ २० ॥

गो० टी०—यथेति । पौराः अस्मन्निवर्तने यथा येन प्रकारेण नियमं कुर्वन्ति तेन प्रकारेण प्राणानपि असिष्यन्ति त्यक्ष्यन्ति निश्चयं तु निवर्तननिश्चयं तु न त्यक्ष्यन्तीति संबन्धः ॥ २० ॥

२१ ] ति० टी०—अतः—यावदिति । लघु शीघ्रम् ॥ २१ ॥

रा० टी०—तात्कालिकस्वकर्तव्यमाह—यावदिति । यावत् यावत्कालं वयं लघुसंसुप्तास्तावत्कालं द्वित्रिघटिकयेत्यर्थः रथमारुह्य अकुतोभयं सर्वतो भयरहितं पन्थानं गच्छाम एतेन तमसातटदक्षिणतटादारभ्य किंचिद्दूरं प्रशस्तो मार्गो नास्तीति व्यक्तम् ॥ २१ ॥

गो० टी०—यावदिति । यावदेव यावत्येव काले तावदेव तावत्येव काले लघु क्षिप्रं रथमारुह्य गच्छाम 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः ॥ २१ ॥

२२ ] ति० टी०—शीघ्रगमने हेतुमाह—अत इति । एवमन्तरमेते यतो मामनुरक्ता अतो भूयोऽपि न स्वपेयुः अतो यावन्नोत्तिष्ठन्ति तावच्छीघ्रं गच्छाम इत्याशयः ॥ २२ ॥

रा० टी०—ननु पुरवासिनां का गतिरित्यत आह—अत इति । स्वप हे स्वकीयरक्षक लक्ष्मण ! अतः मध्ये सुमार्गाभावाद्धेतोः भूयोऽधिकं मामनुरक्ता अपि इक्ष्वाकुपुरवासिनः इदानीं मां न ईयुः आगच्छेयुः इदानीमित्यनेन भरतेन सह आगन्तार इति सूचितम् ॥ २२ ॥

गो० टी०—अत इति । इक्ष्वाकुपुरवासिनः मामनुरक्ताः इदानीमिव भूयः पुनर्वृक्षमूलानि संश्रिताः न स्वपेयुः अतो रथमारुह्य गच्छामेति पूर्वेण संबन्धः ॥ २२ ॥

२३ ] ति० टी०—तत्र हेत्वन्तरमाह—पौरा हीति । आत्मकृतादात्मनिमित्तकात् आत्मनात्मनिमित्तकेन योज्याः संयोज्या ॥ २३ ॥

रा० टी०—ननु सहगमने का क्षतिरित्यत आह—पौरा इति । नृपात्मजैः आत्मकृतात्स्वकारणकादपि दुःखात्पौरा विप्रमोच्याः आत्मना स्वेनापि कृतेन दुःखेन पुरवासिनो न योज्याः एतेन सह गमने तेषां दुःखातिशयो भवितेति ध्वनितं तेन रामस्य दयालुत्वातिशयो व्यक्तः ॥ २३ ॥

गो० टी०—पौरा इति । आत्मकृतात्स्वकृतात् आत्मना स्वेन ॥ २३–२६ ॥

२४ ] ति० टी०—आरुह्यताम् रथ इति शेषः ॥ २४ ॥

रा० टी०—अब्रवीदिति । हे प्राज्ञ ! येन प्रकारेण भवता उक्तं तथा मे रोचते अतः क्षिप्रमारुह्यतां रथ इति शेषः इति लक्ष्मणो राममब्रवीत् ॥ २४ ॥

२५–२६ ] ति० टी०—ततः संयोजितेन तेन रथेनेत्यर्थः । शीघ्रं गच्छ रथयोजनायेति शेषः प्रभो समर्थ ! ॥ २५ ॥ २६ ॥

रा० टी०—अथेति । प्रभो हे समर्थ सूत ! रथः शीघ्रं संयुज्यतां ततस्तेन रथेन इतः अस्मात्स्थानाच्छीघ्रं गमिष्यामि इति रामः सूतमब्रवीत् ॥ २५ ॥

रा० टी०—सूत इति । ततः रामोक्त्यनन्तरं त्वरितः वेगवान् सूतः हयोत्तमैः रामस्य स्यन्दनं योजयित्वा प्राञ्जलिः सम्प्रत्यवेदयदबोधयत् ॥ २६ ॥

२७ ] ति० टी०—युक्तः सज्जः ॥ २७ ॥

रा० टी०—बोधनप्रकारमाह—अयमिति । हे महाबाहो ! अयं रथो युक्तः अश्वैः योजितः अतस्त्वरया वेगेन आरोह त्वमिति शेषः ॥ २७ ॥

गो० टी०—अयमिति । युक्तः सज्जः ॥ २७ ॥

---

१ प्राणा नसिष्यन्तीति गो. पाठः । २ गच्छामेति गो. पाठः । ३ मूलानीति गो. पाठः । ४ मोक्ष्या इति गो. पाठः । ५ ते इति गो. पाठः । ६ श्रीमान्सुमन्त्रं युज्यतामिति गो. पाठः । ७ स त्वरित इति रा. पाठः । ८ अथ रामायेति गो. पाठः । ९ समारोह सुभद्रमिति गो. पाठः ।

तं स्यन्दनमधिष्ठाय राघवः सपरिच्छदः । शीघ्रगामाकुलावर्तां तमसामतरन्नदीम् ॥ २८ ॥
स संतीर्य महाबाहुः श्रीमाञ्छिवमकण्टकम् । प्रापद्यत महामार्गमभयं भयदर्शिनाम् ॥ २९ ॥
मोहनार्थं तु पौराणां सूतं रामोऽब्रवीद्वचः । उदङ्मुखः प्रयाहि त्वं रथम[1]ारुह्य सारथे ॥ ३० ॥
मुहूर्तं त्वरितं गत्वा निवर्तय रथं पुनः । यथा न विद्युः पौरा मां तथा कुरु समाहितः ॥ ३१ ॥
रामस्य तु[2] वचः श्रुत्वा तथा चक्रे च[3] सारथिः । प्रत्यागम्य च रामस्य स्यन्दनं प्रत्यवेदयत् ॥ ३२ ॥
तौ संप्रयुक्तं तु रथं समास्थितौ तदा ससीतौ रघुवंशवर्धनौ ।
प्रचोदयामास ततस्तुरंगमान्स सारथिर्येन पथा तपोवनम् ॥ ३३ ॥

२८ ] ति० टी०–परिच्छदो धनुःष्कवचादि आकुलावर्तां निबिडावर्ताम् आवर्तैराकुलामिति वा ॥ २८ ॥

रा० टी०–तमिति । सपरिच्छदः धनुरादिसामग्रीसहितो राघवः स्यन्दनमधिष्ठाय शीघ्रगामतिवेगवतीमाकुलावर्ताम् आकुला व्याप्ता आवर्ता यस्यां तां तमसां नदीमतरत् ॥ २८ ॥

गो० टी०–तमिति । सपरिच्छदः धनुष्कवचादिसहितः आकुलावर्ताम् आवर्ताकुलाम् ॥ २८ ॥

२९ ] ति० टी०–भयदर्शिनामप्यभयं मार्गं राजमार्गमित्यर्थः ॥ २९ ॥

रा० टी०–स इति । महाबाहुः स रामः महाप्रशंसनीयेन घट्टेनेत्यर्थः संतीर्य तमसामिति शेषः भयदर्शिनां भीतिमतामपि अभयं भयनिवर्तकं शिवं मार्गं प्रापद्यत प्राप्नुमैच्छत् ॥ २९ ॥

गो० टी०–स संतीर्येति । महामार्गं प्रापद्यत जलस्थितरथादवतीर्य पद्भ्यामेव महामार्गं प्रापयदित्यर्थः भयदर्शिनां श्वापदादीनाम् अभयं तत्संबन्धिभयरहितमित्यर्थः ॥ २९ ॥

३० ] ति० टी०–त्वमेव रथमास्थायोदङ्मुखः प्रयाहि मत्प्रतिनिवृत्तिबुद्ध्युत्पादनेन जनमोहनाय न तु वयम् व्रतभङ्गापत्तेः ॥ ३० ॥

रा० टी०–मोहनार्थमिति । हे सारथे ! रथमारुह्य उदङ्मुखः सन्पौराणां पाटलिपुत्रदेशादागतानामश्वानां मोहनार्थं मोहजनितातिवेगकुटिलगतिनिवृत्त्यर्थं त्वं प्रयाहि अतिवेगेनाश्वान् गमयेत्यर्थः इति वचः सूतं रामोऽब्रवीत् । एतेन तमसोत्तरणानन्तरं रामो रथादवततारेति सूचितं तेन स्वस्योदङ्मुखगमने व्रतभङ्गः स्यादिति हेतुः सूचितः ' पुरं नपुंसकं गेहे देहपाटलिपुत्रयोः ' इति मेदिनी ॥ ३० ॥

गो० टी०–मोहनार्थमिति । मोहनं वञ्चनं ननु सदयस्य रामस्य स्वविरहासहिष्णूनां स्वस्मिन्निरतिशयप्रेमभाजां वञ्चनमनुचितमुच्यते नेदं वञ्चनं व्रणचिकित्सान्यायेन नागरिकाणामुन्मस्तकानन्देन सत्ता न भवेदिति सुसात्म्यानुभवप्रदानार्थं वनवासव्याजेन विश्लेषस्य संकल्पिततया हितव्यापारत्वेन वञ्चनत्वासंभवात् यदि रामस्य तथा संकल्पो न भवेत्तर्हि कथं निःशेषसर्वजननिद्राकरणं सुमन्त्रलक्ष्मणवत्तेष्वेकस्यापि निर्निद्रत्वापत्तेः । मोहनमेवाह–उदङ्मुख इत्यादि । पौराणां मोहनार्थमुदङ्मुखः प्रयाहि अयोध्यां प्रति रामो निवृत्त इति पौराणां भ्रान्तिमुत्पादयितुमुदङ्मुखो याहीत्यर्थः । स्वस्य रथेनोदङ्मुखं गत्वा मार्गान्तरेण वनमगमनस्य कर्तुं शक्यत्वेऽपि अयोध्याभिमुखगमने व्रतभङ्गः स्यादिति धिया सुमन्त्रमभिमुखो याहीत्युक्तवान् तथा कुर्विति पौराणां मोहनार्थं सूतमब्रवीदिति संबन्धः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०–तदेवाह–मुहूर्तमिति । न विद्युर्वनमेव गत इति न जानीयुः ॥ ३१ ॥

रा० टी०–ननूदङ्मुखगमनानन्तरं किं कर्तव्यमित्यत आह–मुहूर्तमिति । त्वरितं शीघ्रं यथा स्यात्तथा मुहूर्तं गत्वा उत्तरदक्षिणक्रमेण पुनः पुनर्यात्वा पुनः रथं निवर्तय मत्समीपं प्रापयेत्यर्थः । एवं गमनस्य प्रयोजनं पुनराह–यथा येन प्रकारेण पौराः अश्वमार्गावगतिसंपत्तिं न विद्युः संस्मरेयुः त्वं तथा कुरु ॥ ३१ ॥

३२ ] ति० टी०–तथा चक्रे उदङ्मुखतया गत्वा मार्गान्तरेण निवृत्तिपूर्वकमागत्य एवं हि रामः प्रतिनिवृत्त इति पौरभ्रमः सिध्यति महामायाधिष्ठातुर्भगवत इयत्या क्रियया पौरमोहनं नाश्चर्यायेति मन्तव्यम् । प्रत्यवेदयदारोहणार्थमज्ञापयत् ॥ ३२ ॥

रा० टी०–रामस्येति । वचो वचनं श्रुत्वा स सारथिस्तथा चक्रे अतिवेगेन मुहूर्तमुदङ्मुखं गत्वा रामसमीपं पुनः प्रापेत्यर्थः प्रत्यागम्य रामसमीपं प्राप्य स्यन्दनं रामस्य रामाय प्रत्यवेदयत् आरोहणार्थं प्रार्थयदित्यर्थः ॥ ३२ ॥

गो० टी०–रामस्येति । प्रत्यागम्येति मार्गान्तरेण प्रत्यागम्येत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०–संप्रयुक्तं सम्यगानीय दर्शितं समास्थितावारूढौ अभूतामिति शेषः । येन पथा मार्गेण तपोवनं प्राप्यत इति शेषः ततस्तेन मार्गेण तुरङ्गमान्प्रचोदयामास ॥ ३३ ॥

रा० टी०–ताविति । तदा सूतप्रार्थनानन्तरकाले ससीतौ सीतासहितौ रघुवंशवर्धनौ तौ रामलक्ष्मणौ संप्रयुक्तं सारथिना सम्यक्प्रदर्शितं रथं समास्थितौ बभूवतुरिति शेषः ततः रामप्ररोहणानन्तरं येन पथा अध्वना तपोवनं प्राप्यते इति शेषः तेन पथा स सारथिस्तुरङ्गमान् प्रचोदयामास ॥ ३३ ॥

१ आस्थायेति गो. पाठः । २ वचनमिति गो. पाठः । ३ स इति गो. पाठः ।

ततः समास्थाय रथं महारथः ससारथिर्दाशरथिर्वनं ययौ ।
उदङ्मुखं तं तु रथं चकार प्रयाणमाङ्गल्यनिमित्तदर्शनात् ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ।

प्रातः प्रतिबुद्धाः पौरा रामादर्शनेनात्मानमुपालभमानाः शोकाक्रान्ताः दृढतरप्रयत्नैः रामरथगतिमन्वेषयन्तोऽप्यलभमाना अनन्यगतित्वान्नगरमेव प्रपेदिरे ।

प्रभातायां तु शर्वर्यां पौरास्ते राघवं विना । शोकोपहतनिश्चेष्टा बभूवुर्हतचेतसः ॥ १ ॥
शोकजाश्रुपरिद्यूना वीक्षमाणास्ततस्ततः । आलोकमपि रामस्य न पश्यन्ति स्म दुःखिताः ॥ २ ॥
ते विषादार्तवदना रहितास्तेन धीमता । कृपणाः करुणा वाचो वदन्ति स्म मनीषिणः ॥ ३ ॥
धिगस्तु खलु निद्रां तां ययापहृतचेतसः । नाद्य पश्यामहे रामं पृथूरस्कं महाभुजम् ॥ ४ ॥

गो० टी०—ताविति । संप्रयुक्तं सम्यगानीतं रथं समास्थितौ अभूतामिति शेषः । येन पथा तपोवनं प्राप्यते तेन प्रचोदयामास ॥ ३३ ॥

३४ ] ति० टी—उक्तं निगमयति—तत इति । प्रयाणापेक्षितं माङ्गल्यं शुभं यन्निमित्तं शकुनं तद्दर्शनात्तदनुभवहेतोरुदङ्मुखं रथं चकार स्थापयामास । तत आरुह्य दक्षिणाभिमुखतया वनं ययौ ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रा० टी०—तत इति । ससारथिः सारथिसहितो दाशरथिः रामः रथं समास्थाय ततस्तमसातीराद्वनं ययौ तं रामाधिष्ठितरथं तु सः सारथिः प्रयाणमाङ्गल्यनिमित्तदर्शनात्प्रयाणे यन्माङ्गल्यं तस्य यन्निमित्तं तद्दर्शनात्सुशकुनपक्ष्यादिदर्शनार्थमुदङ्मुखं चकार तेन प्रयाणे मङ्गलसूचकः कश्चन पक्ष्यादिरुदीच्यां स्थित इति सूचितम् । किंच प्रयाणमाङ्गल्यनिमित्ते यद्दर्शनमुदङ्मुखीभूय गन्तव्यमिति बोधकशास्त्रं तस्मात् ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०—तत इति । सः सुमन्त्रः प्रयाणमाङ्गल्यनिमित्तदर्शनात् प्रयाणानुकूलमङ्गलसूचकनिमित्तदर्शनाद्धेतो रथमुदङ्मुखं चकार निमित्तस्वीकारार्थमुदङ्मुखं चकारेत्यर्थः । ततः निमित्तस्वीकारानन्तरं रथमास्थाय वनं ययाविति संबन्धः । प्रयाणे दक्षिणपादोद्धारवदुदङ्मुखगमनं मङ्गलायेति भावः॥३४॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

१ ] ति० टी०—शोकेनोपहता अत एव निश्चेष्टाः हतचेतसो मूर्च्छिताः ॥ १ ॥

रा० टी०—रामगमनानन्तरकालिकं सुप्तोत्थितपौरवृत्तं वर्णयन्नाह—प्रभातायामिति । शर्वर्यां रात्रौ प्रभातायां प्रभातत्वं प्राप्तायां ते सुप्तोत्थिताः पौरा राघवं विना शोकोपहतनिश्चेष्टाः शोकेन उपहताः विपरिणताः अत एव निश्चेष्टाः व्यापाररहितास्ते एव ते इति कर्मधारयः अत एव हतचेतस इव बभूवुः । तुरिवार्थे ॥ १ ॥

गो० टी०—अथ पौरवृत्तान्तं दर्शयति—प्रभातायामित्यादि । शोकोपहतनिश्चेष्टाः शोकोपहतत्वान्निश्चेष्टाः हतचेतसः मूढाः ॥ १ ॥

२–३ ] ति० टी०—परिद्यूनाः खिन्नाः आलोकमालोकसाधनं रथोद्धतधूल्याद्यपि ॥ २ ॥ ३ ॥

रा० टी०—प्राप्तकिंचिच्चैतन्यकालोद्भूतं तद्वृत्तं वर्णयन्नाह—शोकजेति । शोकजाश्रुभिः परिद्यूनाः व्याप्ताः वीक्षमाणाः दुःखिताः पौराः रामस्यालोकं बोधकं रथरजोरेखादिकमपीत्यर्थः न पश्यन्ति स्म ॥ २ ॥

गो० टी०—शोकजेति । शोकजाश्रुभिः परिद्यूना परिक्रान्ताः आलोकमपि रामस्य रामसंबन्ध्योलोकमपि आलोकयत इत्यालोकः तमालोकसाधनं रथरेण्वादिकमपीत्यर्थः ॥२॥

रा० टी०—त इति । तेन धीमता रामेण रहिताः अत एव विषादार्तवदनाः विषादेनातिदुःखेन आर्तं दीनं वदनं मुखं येषां ते अत एव कृपणाः कर्तव्यविवेकरहिताः मनीषिणोऽपि ते पौराः करुणाः वाचो वदन्ति स्मः ॥ ३ ॥

गो० टी०—त इति । विषादार्तवदनाः दुःखेन म्लानमुखाः कृपणाः दीनवेषाः करुणा वाचः दीनवचांसि वदन्ति स्म अन्योन्यमिति शेषः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—यया निद्रया ‘ निद्रां भगवतीं विष्णोः ’ इत्यादिना मार्कण्डेयेन तस्या भगवन्मायारूपत्वाभिधानात् तदावरणादेव च विषयाविष्टानां भगवद्दर्शनं प्रसिद्धं श्रुतिशिरःसु पश्यामह इति तदर्थः । हे इति संबोधनं वा परस्परम्॥४॥

१ मनसिरिव इति गो. पाठः । २ अपहृतेति गो. पाठः ।

कथं रामो महाबाहुः स तथावितथक्रियः । भक्तं जनमभित्यज्य प्रवासं तापसो गतः ॥ ५ ॥
यो नः सदा पालयति पिता पुत्रानिवौरसान् । कथं रघूणां स श्रेष्ठस्त्यक्त्वा नो विपिनं गतः ॥ ६ ॥
इहैव निधनं याम महाप्रस्थानमेव वा । रामेण रहितानां नो किमर्थं जीवितं हितम् ॥ ७ ॥
सन्ति शुष्काणि काष्ठानि प्रभूतानि महान्ति च । तैः प्रज्वाल्य चितां सर्वे प्रविशामोऽथवा वयम् ॥ ८ ॥
किं वक्ष्यामो महाबाहुरनसूयः प्रियंवदः । नीतः स राघवोऽस्माभिरिति वक्तुं कथं क्षमम् ॥ ९ ॥
सा नूनं नगरी दीना दृष्ट्वास्मान्राघवं विना । भविष्यति निरानन्दा सस्त्रीबालवयोऽधिका ॥ १० ॥
निर्यातास्तेन वीरेण सह नित्यं महात्मना । विहीनास्तेन च पुनः कथं द्रक्ष्याम तां पुरीम् ॥ ११ ॥
इतीव बहुधा वाचो बाहुमुद्यम्य ते जनाः । विलपन्ति स्म दुःखार्ता हृतवत्सा इवाग्र्यगाः ॥ १२ ॥
ततो मार्गानुसारेण गत्वा किंचित्ततः क्षणम् । मार्गनाशाद्विषादेन महता समभिप्लुताः ॥ १३ ॥

रा० टी०—तद्वचनमेवाह–धिगिति । यया निद्रया अपहृतचेतसो वयमद्य रामं न पश्यामहे तां निद्रां धिक् ॥ ४ ॥

५–६ ] ति० टी०—तथाऽवितथाऽमोघा क्रिया यस्य स त्यक्त्वा गतः इदमनुचितं तस्येति भावः ॥ ५ ॥ ६ ॥

रा० टी०—कथमिति । अवितथक्रियः न वितथा कदाचिदपि मर्यादामतिक्रान्ता क्रिया व्यापारो यस्य सोऽपि रामः भक्तं सेवोन्मुखं जनमभित्यज्य कथं गतः केन मार्गेण यात इत्यर्थः ॥ ५ ॥

रा० टी०—य इति । औरसान्मुख्यान्पुत्रान् पितेव यः पालयति सः नस्त्यक्त्वा विपिनं कथं गतः ॥ ६ ॥

गो० टी०—कथमिति । अवितथक्रियः अमोघानुष्ठानः ५॥६

७–८ ] ति० टी०—निधनं प्रायोपवेशेन मरणम् महाप्रस्थानं मरणदीक्षापूर्वकमुत्तराभिमुखागमनम्, तद्रहितानां जीवितं किमर्थं कस्मै फलाय हितम् न कस्मा अपीत्यर्थः अतो मरणमेव श्रेयः ॥ ७ ॥ ८ ॥

रा० टी०—इहेति । निधनं मरणमिह अस्मिँस्थाने एव याम प्राप्नुयाम महाप्रस्थानं हिमालयान्तर्वर्तिमहापथं वा याम। ननु किमर्थमेवंक्रिया इत्यत आहुः–रामेण रहितानां जीवनं हितं नो नास्ति अतः किमर्थं न स्यादित्यर्थः किंच रामेण रहितानां नोऽस्माकं जीवितं किमर्थमुद्दिश्य हितं न कस्यापीत्यर्थः । अतो मास्तु इति तात्पर्यम् ॥ ७ ॥

गो० टी०—इहैवेति । इहैव निधनं प्रायोपवेशनेन मरणं महाप्रस्थानं मरणदीक्षापूर्वकमुत्तराभिमुखगमनम् । हिः प्रसिद्धौ ॥ ७ ॥

रा० टी०—नन्वकाले इह मरणं कथं भविष्यतीत्यत आहुः–सन्तीति । महान्ति बृहन्ति प्रभूतानि बहूनि काष्ठानि सन्ति अथ अतः तैरेव कृतां चितां वयं प्रविशामः ॥ ८ ॥

गो० टी०—सन्तीति । प्रविशामोऽथेति अथवेत्यर्थः॥८ ॥

९–११ ] ति० टी०—रामवृत्तान्तं पृच्छन्तं जनं प्रति किं वक्ष्यामः । अस्माभी राघवो वनं नीतः प्रापित इत्युत्तरं देयमिति चेदिदं वक्तुं कथं क्षमं वक्तुमशक्यमयोग्यं चैतत्र अन्यच्च न सदुत्तरमिति भावः ॥ ९–११ ॥

रा० टी०—ननु दुःखसत्त्वेऽपि स्वगृहं सर्थायनामित्यत आहुः–किमिति । किं वक्ष्यामः रामः क्वास्तीति तन्मात्रादिभिः पृष्टाः वयं किमुत्तरं दास्याम इत्यर्थः । ननु वनं गत इत्युत्तरं दातव्यमित्यत आहुः–राघवोऽस्माभिः नीतः वनं प्रापितः इति वक्तुमुत्तरं दातुं कथं क्षमं योग्यं न योग्यमित्यर्थः ॥ ९ ॥

रा० टी०—सेति । सस्त्रीबालवयोऽधिका स्त्रीबालवयोऽधिकसहिता सा नगरी अयोध्या राघवं विनाऽस्मान् दृष्ट्वा निरानन्दा आनन्दरहिता अत एव दीना क्षीणा भविष्यति ॥ १० ॥

रा० टी०—निर्याता इति । तेन वीरेण रामेण नित्यं निर्याता नित्यं गमनशालिनो वयं तेन हीनाः सन्तः तामयोध्यां कथं द्रक्ष्याम द्रक्ष्यामः ॥ ११ ॥

गो० टी०—किं वक्ष्याम इति । न किमपि वक्तुं शक्यमित्यर्थः । तदेव विवृणोति महाबाहुरित्यादिना नीतः वनमिति शेषः ॥ ९–१२ ॥

१२ ] ति० टी०– अग्रे भवा अग्र्याः पुरोगामिन्यस्ताश्च ता गावश्चेत्यर्थः । यद्वा अग्र्या मुख्याः पुष्टत्वदुग्धवत्त्वादिगुणा गाव इवेत्यर्थः । गा इत्यार्षम् ॥ १२ ॥

रा० टी०—इतीवेति । दुःखार्ताः ते पौरा जना बाहुमुद्यम्य उत्थाप्य बहुधा बहुप्रकारा वाचः इतीव अत्यन्तं विलपन्ति स्म दुःखार्तत्वे दृष्टान्तः हृतवत्साः अग्र्यगाः अग्र्याः मुख्यास्ता एव गाव इति कर्मधारयः ता इव गा इति आर्षमिति भट्टाः ॥ १२ ॥

१३ ] ति० टी०—ततो मार्गानुसारेणातिसंधानप्रवर्तितमार्गानुसारेण किंचित्क्षणं किंचित्कालं गत्वा ततो मार्गनाशाद्धमनया मार्गान्तरे प्रवृत्त्या रथमार्गादर्शनात् महता विषादेन समभिप्लुता व्याप्ताः ॥ १३ ॥

रा० टी०—तत इति । ततः वर्णितविलापानन्तरं मार्गानुसारेण गतरथरेखावलोकनेन किंचित् क्षणं कालं ततः

१ नामेति गो. पाठः । २ राघव इति गो. पाठः । ३ हीति गो. पाठः । ४ हि न इति गो. पाठः । ५ विवत्सा इव धेनव इति गो. पाठः । ६ क्षणं पुनः इति गो. पाठः ।

रथमार्गानुसारेण न्यवर्तन्त मनस्विनः । किमिदं किं करिष्यामो दैवेनोपहता इति ॥ १४ ॥
तदा यथागतेनैव मार्गेण क्लान्तचेतसः । अयोध्यामगमन्सर्वे पुरीं व्यथितसज्जनाम् ॥ १५ ॥
आलोक्य नगरीं तां च क्षयव्याकुलमानसाः । आवर्तयन्त तेऽश्रूणि नयनैः शोकपीडितैः ॥ १६ ॥
एषा रामेण नगरी रहिता नातिशोभते । आपगा गरुडेनेव ह्रदादुद्धृतपन्नगा ॥ १७ ॥
चन्द्रहीनमिवाकाशं तोयहीनमिवार्णवम् । अपश्यन्निहतानन्दं नगरं ते विचेतसः ॥ १८ ॥
ते तानि वेश्मानि महाधनानि दुःखेन दुःखोपहता विशन्तः ।
नैव प्रजग्मुः स्वजनं परं वा निरीक्षमाणाः प्रविनष्टहर्षाः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ।

राममार्गापरिज्ञानात्प्रत्यागतपौरैर्निवेदितरामवृत्तान्ताः पौरस्त्रियः कैकेयीमुपालभ्यातितरां परिदेवयन्ति स्म ।

तेषामेवं विषण्णानां पीडितानामतीव च । बाष्पविप्लुतनेत्राणां सशोकानां मुमूर्षया ॥ १ ॥
अभिगम्य निवृत्तानां रामं नगरवासिनम् । उद्गतानीव सत्त्वानि बभूवुरमनस्विनाम् ॥ २ ॥

---

तस्मात्स्थानाद्गत्वा मार्गनाशादागतपथेन रथपरावर्तनादग्रे रेखोत्पत्त्यभावेन मार्गादर्शनान्महता विशालेन समभिप्लुताः व्याप्ताः बभूवुरिति शेषः ॥ १३ ॥

गो० टी०–तत इति । मार्गानुसारेण किंचित् किंचिद्दूरं मार्गनाशात् रथमार्गादर्शनात् तच्च वीरुत्तृणपटलपिहितप्रदेशे रथचारणादिति ज्ञेयम् समभिप्लुताः व्याप्ता इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०–किमिदं यद्रथमार्गादर्शनम् इतःपरं किं करिष्यामः अहो दैवेनोपहता वयमिति वदन्तो न्यवर्तन्तेत्यन्वयः ॥ १४ ॥

रा० टी०–रथेति । रथमार्गानुसारेण स्वगतरथमार्गेणेत्यर्थः । न्यवर्तन्त इदमग्रे रथरेखाभावः किं कथं जातमिदं न संभवतीत्यर्थः अतः दैवेन अदृष्टविशेषेण उपहता वयं किं करिष्याम इत्यब्रुवन्निति शेषः ॥ १४ ॥

गो० टी०–रथस्येति । दैवेनोपहता इति प्रलपन्त इति शेषः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–व्यथिताः सज्जना यस्यां ताम् सत्पदेन कैकेय्या व्यावृत्तिः ॥ १५ ॥

रा० टी०–तदेति । तदा रामः क्व गत इति निश्चयाभावे यथागतेनैव मार्गेण पथा व्यथितसज्जनामयोध्यां सर्वे अगमन् । क्लान्तचेतस इत्यनेन पुनः पुनः रथमार्गान्वेषणे सामर्थ्याभावः सूचितः ॥ १५ ॥

१६–१८ ] ति० टी०–क्षयो हर्षक्षयस्तेन व्याकुलमानसा यद्वा क्षयं गृहं प्रति व्याकुलं गन्तव्यं न वेत्येवरूपं मानसं येषां तादृशाः आवर्तयन्तामुञ्चन् ॥ १६–१८ ॥

रा० टी०–आलोक्येति । क्षयव्याकुलमानसाः क्षयेन रामप्रतियोगिकसंयोगाभावेन व्याकुलं मानसं येषां ते नगरीमयोध्यामालोक्य शोकपीडितैर्नयनैः अश्रूणि आवर्तयन्त अमुञ्चन् ॥ १६ ॥

रा० टी०–एषेति । रामेण रहिता एषा नगरी नातिशोभते तत्र दृष्टान्तः ह्रदात् दहराद्गरुडेन उद्धृतपन्नगा उद्धृताः पन्नगाः यस्याः सा आपगा नदीव एतेन रिपुसत्त्वे तद्गमनयोग्यात्वं सूचितम् ॥ १७ ॥

रा० टी०–चन्द्रेति । हीनं रहितं निहतानन्दं हतसुखम् १८

गो० टी०–आलोक्येत्यादिश्लोकद्वयमेकं वाक्यम् । अन्त इतिकरणं बोध्यम् । क्षयव्याकुलमानसाः संमार्जनलेपनादिक्षयेण व्यथितमनस्काः अवर्तयन्त अमुञ्चन् ॥ १६–१८ ॥

१९ ] ति० टी०–दुःखेन रामवियोगदुःखेनोपहताः कथं गृहं प्रवेष्टव्यमिति दुःखेन विशन्तोऽपि नैव प्रजग्मुः स्ववेश्मपरवेश्मविवेकं नाज्ञासिषुः तथा निरीक्षमाणा अपि स्वजनपरजनविवेकं न प्राप्तवन्तः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

रा० टी०–त इति । दुःखोपहतास्ते पौराः महाधनानि तानि वेश्मानि गृहाणि दुःखेन विशन्तोऽपि निरीक्षमाणा अपि स्वजनं स्वकीयं जनं परं परकीयं जनं वा नैव प्रजग्मुः न ज्ञातवन्त इत्यर्थः ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

गो० टी०–ते तानीति । दुःखेन दुःखेन सहितं स्वजनं जनं वा पौरजनं वा न प्रजग्मुः नाज्ञासिषुः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

१–२ ] ति० टी०–तेषामित्यादि पद्यद्वयमेकं वाक्यम् । मुमूर्षयोपलक्षितानाममनस्विनां दुर्मनसां खिन्नानामिति

---

१ रथस्य मार्गनाशेनेति गो. पाठः । २ तत इति गो. पाठः । ३ अवर्तयन्तेति गो. पाठः । ४ प्रजह्रुरिति गो. पाठः । ५ जनमिति गो. पुरमिति रा. पाठः । ६ अनुगम्येति गो. पाठः । ७ वासिनमिति गो. रा. पाठः ।

स्वं स्वं निलयमागम्य पुत्रदारैः समावृताः । अश्रूणि मुमुचुः सर्वे बाष्पेण पिहिताननाः ॥ ३ ॥
न चाहृष्यन्न चामोदन्वणिजो न प्रसारयन् । न चाशोभन्त पैण्यानि नापचन्गृहमेधिनः ॥ ४ ॥
नष्टं दृष्ट्वा नाभ्यनन्दन्विपुलं वा धनागमम् । पुत्रं प्रथमजं लब्ध्वा जननी नाभ्यनन्दत ॥ ५ ॥
गृहे गृहे रुदंत्यश्च भर्तारं गृहमागतम् । व्यगर्हयन्त दुःखार्ता वाग्भिस्तोत्रैरिव द्विपान् ॥ ६ ॥
किं नु तेषां गृहैः कार्यं किं दारैः किं धनेन वा । पुत्रैर्वापि सुखैर्वापि ये न पश्यन्ति राघवम् ॥ ७ ॥
एकः सत्पुरुषो लोके लक्ष्मणः सह सीतया । योऽनुगच्छति काकुत्स्थं रामं परिचरन्वने ॥ ८ ॥

यावत् । सत्त्वान्यसव उद्गतानीवोत्क्रान्तानीव मृतप्राया जाता इति भावः ॥ १ ॥ २ ॥

रा० टी०—गृहप्रवेशानन्तरकालिकं प्रजावृत्तं बोधयन्नाह—तेषामित्यादिभिः । सशोकानामत एव विषण्णानां दुःखितानामत एवातीवपीडितानां पीडाविशिष्टाङ्गविशिष्टानामत एव बाष्पपरिप्लुतनेत्राणामत एव मुमूर्षया मरणेच्छया उपलक्षितानामत एव अमनस्विनामनवस्थितचित्तानां राममभिगम्य निवृत्तानां नगरवासिनां सत्त्वानि प्राणाः उद्गतानीव बभूवुः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—तेषामित्यादि । मुमूर्षया मर्तुमिच्छयोपलक्षितानां सत्त्वानि प्राणाः 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः । उद्गतानीव बभूवुः मुमूर्छुरित्यर्थः । अमनस्विनां धैर्यहीनानाम् ॥ १–२ ॥

३ ] ति० टी०—बाष्पेण पिहिताननाः अश्रुव्याप्तमुखा इत्यर्थः ॥ ३ ॥

रा० टी०—स्वं स्वमिति । निलयं गृहं बाष्पेण धूमाभासेन पिहिताननाः सर्वे अश्रूणि मुमुचुः ॥ ३ ॥

४ ] ति० टी०—हर्षः शारीरो मुखविकासादिरूपः मोद आन्तरो हर्षः परस्मैपदमार्षम् । प्रसारयन् प्रासारयन्नित्यर्थः प्रसारितान्यपि नाशोभन्त ॥ ४ ॥

रा० टी०—नगरवृत्तं वर्णयन्नाह—नचेत्यादिभिः । वणिजो न अहृष्यन् केनापि वस्तुना संतोषं न प्राप्नुवन्नत एव अमोदन् आनन्दं प्राप्नुवंश्च न प्रसारयन् प्रासारयंश्च न क्रय्यद्रव्याणीति शेषः अत एव पण्यानि आपणद्रव्याणि नाशोभन्त गृहमेधिनो गृहस्थाः न अपचन् पाको नैवाभवदित्यर्थः प्रायोऽन्येषां पाकानधिकारान्न न्यूनता ॥ ४ ॥

गो० टी०—नेति । न चाहृष्यन् सुहृद्दर्शनेनापि हर्षं न प्रापुः न च मोदमपूर्ववस्तुलाभेऽपि मोदं न प्रापुः प्रसारयन् प्रासारयन् पण्यानीति शेषः । पुण्यानि पुण्यफलभूतपुत्रकलत्रादीनि नापचन्निति गृहमेधिनः गृहस्थाः तेषां पचिक्रियासंबन्धस्त्वर्धशरीरभूतपत्नीद्वारा ॥ ४ ॥

५ ] ति० टी०—नष्टमिति । चिरनष्टधनस्य विपुलस्यागमं लाभं दृष्ट्वापि नाभ्यनन्दन् वाशब्द एवार्थे नाभ्यनन्दन्नेवेत्यर्थः ॥ ५ ॥

रा० टी०—नष्टमिति । नष्टं चोरादिना अपहृतं वस्तु लब्ध्वा विपुलं बहुधनागममपूर्वधनप्राप्तिं च दृष्ट्वा अवलोक्य नाभ्यनन्दन् अयोध्यावासिन इति शेषः । प्रथमजं पूर्वजातम् ॥ ५ ॥

गो० टी०—नष्टमिति । नष्टं चिरकालनष्टं रत्नादिकं धनागमं निध्यादिलाभम् ॥ ५ ॥

६ ] ति० टी०—व्यगर्हयन्त राघवमप्रतिनिवर्त्य किमर्थं यूयमागता इत्येवं वाग्रूपैस्तोत्रैरङ्कुशैः ॥ ६ ॥

रा० टी०—गृहे गृहे इति । गृहमागतं भर्तारं गृहे गृहे रुदन्त्यः दुःखार्ताः स्त्रियः वाग्भिः दुरुक्तैः व्यगर्हयन्त अपीडयन्तेत्यर्थः तत्र दृष्टान्तः तोत्रैः अङ्कुशैः द्विपानिव ॥ ६ ॥

गो० टी०—गृहे गृह इति । रुदन्त्यः सर्वाः स्त्रियः भर्तारं स्वस्वभर्तारं व्यगर्हयन्त किमर्थं भवद्भिरागतमित्येवं निन्दन्ति स्म तोत्रैः अङ्कुशैः । गर्हां विशदयति—किंन्वित्यादिश्लोकेन । इति व्यगर्हयन्तेत्यन्वयः ॥ ६ ॥ ७ ॥

७ ] ति० टी०—तेषां रामं विना आगतानां रामं राजानं विना सर्वस्यास्थिरत्वात् । किं च भगवन्तं राममादरेणापश्यन्तो ये गृहपुत्रदारसुखादिष्वासक्त्या प्रतिनिवृत्तास्तेषां पुनःपुनः संसारप्राप्तिरेव न तु कदापि मोक्ष इत्याशयः तस्य मायिकरूपदर्शनेऽपि चित्तशुद्धिद्वारा मोक्षोपयोगिज्ञानाधिकारो भवति ॥ ७ ॥

रा० टी०—तदुक्तमेव वर्णयन्नाह—किमित्यादिभिः । किं कार्यं न किंचिदित्यर्थः । तेन रामं विना भवतां गृहे स्थितिर्व्यर्थेति सूचितम् ॥ ७ ॥

८ ] ति० टी०—सत्पुरुषो भाग्यवान्पुरुषः सीता च भाग्यवती यो वने रामं परिचरन्ननुगच्छति ॥ ८ ॥

रा० टी०—एक इति । यः सीतया सह रामं परिचरन्ननुगच्छति सः एकः लक्ष्मण एव लोके सत्पुरुषः तेन भवत्सु न सत्पुरुषत्वमिति व्यञ्जितम् ॥ ८ ॥

गो० टी०—एक इति । सीतया सह रामं सीतासहितं राममित्यर्थः ॥ ८ ॥ ९ ॥

१ पुण्यानीति गो. पाठः । २ नाभ्यनन्दतेति गो. पाठः । ३ रुदन्त्य इति गो. रा. पाठः । ४ किमिति गो. पाठः ।

आपगाः कृतपुण्यास्ताः पद्मिन्यश्च सरांसि च । येषु यास्यति काकुत्स्थो विगाह्य सलिलं शुचि ॥ ९ ॥
शोभयिष्यन्ति काकुत्स्थमटव्यो रम्यकाननाः । आपगाश्च महानूपाः सानुमन्तश्च पर्वताः ॥ १० ॥
काननं वापि शैलं वा यं रामोऽनुगमिष्यति । प्रियातिथिमिव प्राप्तं नैनं शक्ष्यन्त्यनर्चितुम् ॥ ११ ॥
विचित्रकुसुमापीडा बहुमञ्जरिधारिणः । राघवं दर्शयिष्यन्ति नगा भ्रमरशालिनः ॥ १२ ॥
अकाले चापि मुख्यानि पुष्पाणि च फलानि च । दर्शयिष्यन्त्यनुक्रोशाद्गिरयो राममागतम् ॥ १३ ॥
प्रस्रविष्यन्ति तोयानि विमलानि महीधराः । विदर्शयन्तो विविधान्भूयश्चित्रांश्च निर्झरान् ॥ १४ ॥
पादपाः पर्वताग्रेषु रमयिष्यन्ति राघवम् । यत्र रामो भयं नात्र नास्ति तत्र पराभवः ॥ १५ ॥
स हि शूरो महाबाहुः पुत्रो दशरथस्य च । पुरा भवति नोऽदूरादनुगच्छाम राघवम् ॥ १६ ॥

---

९ ] ति० टी०—सातालक्ष्मणावेवेति किं वाच्यम्, अचेतना आपगादयोऽपि सभाग्याः न तु वयमित्याहुः—आपगा इति । विगाह्य स्नात्वा ॥ ९ ॥

रा० टी०—आपगा इति । ताः एव आपगा नद्यः कृतपुण्याः तान्येव सरांसि च कृतपुण्यानि येषु शुचि सलिलं विगाह्य अवगाह्य काकुत्स्थो रामो यास्यति ॥ ९ ॥

१० ] ति० टी०—रम्यकाननाश्चारुवृक्षसंघाः अनूपा जलप्रायदेशः ॥ १० ॥

रा० टी०—शोभयिष्यन्तीति । रम्यकाननाः चारुवृक्षसमूहविशिष्टाः अटव्यो वनानि महानूपाः जलप्रायदेशविशिष्टाः आपगा नद्यश्च सानुमन्तः प्रशस्तशृङ्गविशिष्टाः पर्वताश्च काकुत्स्थं शोभयिष्यन्ति तेन तेषामतिभाग्यवत्त्वं सूचितम् ॥ १० ॥

गो० टी०—शोभयिष्यन्तीति । रम्यकाननाः तत्र तत्र रम्यवृक्षराजियुक्ताः महानूपाः रम्यकच्छप्रदेशाः 'जलप्रायमनूपं स्यात्पुंसि कच्छः' इत्यमरः ॥ १० ॥

११ ] ति० टी०—ते शैलादयोऽनर्चितं न शक्ष्यन्ति अर्चितुमेव शक्ष्यन्तीत्यर्थः ॥ ११ ॥

रा० टी०—काननमिति । यं रामः अनुगमिष्यति सः प्राप्तमेनं प्रियातिथिमनर्चितुं नैव शक्ष्यति अर्चिष्यत्येवेत्यर्थः । इव एवार्थे ॥ ११ ॥

गो० टी०—काननमिति । नैनं शक्ष्यन्त्यनर्चितुम् अर्चितुं शक्ष्यन्त्येवेत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—तदेव दर्शयति—विचित्रेत्यादि । विचित्रैः कुसुमैरापीडः शिरोभूषणमेषाम् बह्वीर्मञ्जरीः पुष्पस्तबकान्धर्तुं शीलमेषां छान्दसो ह्रस्वः । नगा वृक्षाः दर्शयिष्यन्ति आत्मानमिति शेषः । एवं च पुष्पाञ्जलिरूपार्चायां ते शक्ता इति भावः ॥ १२ ॥

रा० टी०—विचित्रेति । विचित्रकुसुमैः अनेकविधपुष्पैः आपीडः शिरोभूषणं येषां ते बहुमञ्जरिधारिणः बह्वः विपुलाः मञ्जरीः पुष्पस्तबकान् धरन्ति तच्छीलाः अत एव भ्रमरशालिनः भ्रमराश्रयभूताः नगाः राघवं दर्शयिष्यन्ति स्वस्वरूपमिति शेषः । तेन तेषामतिसाफल्यं सूचितम् ॥ १२ ॥

गो० टी०—विचित्रेति । विचित्रकुसुमापीडाः विचित्रपुष्पशेखराः मञ्जरीत्यत्र छान्दसो ह्रस्वः दर्शयिष्यन्ति आत्मानमिति शेषः । नगाः वृक्षाः ॥ १२ ॥

१३–१४ ] ति० टी०—गिरयो दर्शयिष्यन्ति स्वगतवृक्षद्वारेति शेषः ॥ १३ ॥ १४ ॥

रा० टी०—अकाले इति । गिरयः गिरिस्थवृक्षाः अकाले पुष्पफलादिप्रसूतिकालाभावेऽपि अनुक्रोशात् अत्यादरात्पुष्पादीनि आगतं रामं दर्शयिष्यन्ति तेन तेषां हर्षातिशयो भवितेति व्यञ्जितम् ॥ १३ ॥

रा० टी०—प्रस्रविष्यन्तीति । महीधराः पर्वताः विविधान्भूयश्चित्रान्बहुविचित्रत्वविशिष्टान्निर्झरान्दर्शयन्तः सन्तः विमलानि तोयानि प्रस्रविष्यन्ति ॥ १४ ॥

गो० टी०—अकाल इति । दर्शयिष्यन्ति वृक्षलतादिद्वारेति भावः अनुक्रोशात् आदरादित्यर्थः ॥ १३ ॥ १४ ॥

१५ ] ति० टी०—पादपा रमयिष्यन्ति स्वमूलाकीर्यमाणपल्लवकुसुमरचितशय्यास्विति शेषः यत्र रामः वसतीति शेषः१९

रा० टी०—पादपा इति । पर्वताग्रेषु विद्यमानाः पादपा वृक्षाः राघवं रमयिष्यन्ति तेन तत्रैवास्माभिरपि गन्तव्यमिति सूचितम् । ननु तत्स्थानस्य व्याघ्रादिमत्त्वेन भीतिवहत्वात्कथं गन्तव्यमित्यत आहुः यत्र रामो विद्यत इति शेषः तत्र भयं कुतश्चिद्भीतिर्नास्ति अत एव पराभवः किंचित्कर्तृकास्मत्पराभूतिर्नास्ति ॥ १५ ॥

गो० टी०—यत्रेति । यत्र देशे रामो वर्तते अत्र भयं नास्ति तत्र पराभवोऽपि नास्ति ॥ १५ ॥

१६ ] ति० टी०—भयाभावादौ हेतुः—स हि शूर इत्यादि । नोऽस्माकमदूरात्पुरा भवति "यावत्पुरा—" इति भविष्यति लट् आसन्नो भविष्यतीत्यर्थः । अतो राघवमनुगच्छाम प्रार्थनायां लोट् ॥ १६ ॥

रा० टी०—स इति । दशरथस्य पुत्रः स रामः पुरा इह प्राकट्यात्पूर्वमपि नोऽस्माकं स्वामी भवति अतो दूरादपि राघवमनुगच्छाम एतेन नित्यपरिकराणामियमुक्तिरिति व्यक्तम् ॥ १६ ॥

---

१ स्नास्यतीति गो० पाठः । २ ऽभिगमिष्यतीति गो० पाठः । ३ शक्ष्यतीति स० पाठः ।

पादच्छाया सुखं[1] भर्तुस्तादृशस्य महात्मनः । स हि नाथो जनस्यास्य स गतिः स परायणम् ॥ १७ ॥
वयं परिचरिष्यामः सीतां यूयं च[2] राघवम् । इति पौरस्त्रियो भर्तॄन्दुःखार्तास्तत्तदब्रुवन् ॥ १८ ॥
युष्माकं राघवोऽरण्ये योगक्षेमं विधास्यति । सीता नारीजनस्यास्य योगक्षेमं करिष्यति ॥ १९ ॥
को न्वनेनाप्रतीतेन सोत्कण्ठितजनेन च । संप्रीयेतामनोज्ञेन वासेन हृतचेतसा ॥ २० ॥
कैकेय्या यदि चेद्राज्यं स्यादधर्म्यमनाथवत् । नहि नो जीवितेनार्थः कुतः पुत्रैः कुतो धनैः ॥ २१ ॥
यया पुत्रश्च भर्ता च त्यक्तावैश्वर्यकारणात्[3] । कं सा परिहरेदन्यं कैकेयी कुलपांसनी ॥ २२ ॥
कैकेय्या न वयं राज्ये भृतका[4] हि वसेमहि । जीवन्त्या जातु जीवन्त्यः पुत्रैरपि शपामहे ॥ २३ ॥

गो० टी०—पुरेति । दूरात्पुरा भवति भविष्यति ततः पूर्वमेवानुगच्छाम इत्यर्थः । "यावत्पुरानिपातयोर्लट्" इतिलट् ॥१६॥

१७ ] ति० टी०—पादच्छाया छायापदेनानुग्रहहेतुभूता सेवा लक्ष्यते । भर्तू रामचन्द्रस्य पादसेवैव नः परमसुखं सुखसाधनम् गतिः शरणम् परायणं शाश्वतप्रतिष्ठा ॥ १७ ॥

रा० टी०—तत्र गमने प्रयोजनं वदन्त आहुः—पादेति । महात्मनः तादृशस्य नित्यस्य भर्तुः स्वामिनो रामस्य पादच्छाया चरणसमीपस्थितिरेव सुखं तत्र हेतुः अस्य नित्यपरिकरस्य स राम एव नाथः वाञ्छितदाता स एव गतिः प्राप्यः अत एव स एव परायणं परमाश्रयः ॥ १७ ॥

गो० टी०—पादच्छायेति पादसेवा लक्ष्यते सुखा सुखसाधनभूता गम्यत इति गतिः प्राप्यः परायणं परमयनं सर्वप्रकारेणाधारभूत इत्यर्थः ॥ १७-१९ ॥

१८ ] ति० टी०—वयं स्त्रियः, यूयं पुरुषाः ॥ १८ ॥

रा० टी०—वयमिति । तन्नित्यपरिकरत्वाद्धेतोः परिचरिष्यामः सेविष्यामहे पौरस्त्रियः नित्यमयोध्यावासिन्यः तद्वचोऽब्रुवन् ॥ १८ ॥

१९ ] ति० टी०—अप्राप्तप्राप्तिर्योगः प्राप्तरक्षणं क्षेमम् ॥१९॥

रा० टी०—ननु वने कथं निर्वाह इत्यत आहुः—युष्माकमिति । योगक्षेमं योगमलभ्योच्छिष्टपुष्पफलादिलाभं क्षेमं पूर्वलब्धसेवाधिकारपालनं विधास्यति ॥ १९ ॥

२० ] ति० टी०—अप्रतीतेनासुखेन सोत्कण्ठितजनेनोत्कण्ठितजनसहितेन अत एवामनोज्ञेन हृतचेतसा चित्तनाशकेन वासेन को नु संप्रीयेतेत्यर्थः ॥ २० ॥

रा० टी०—तत्र स्थितेरयोग्यतां वर्णयन्त आहुः—क इति । अप्रतीतेन रामागमनविषयकप्रतीत्यनिष्पादकेन सोत्कण्ठितजनेन उत्कण्ठितजनसहितेन अत एवामनोज्ञेन रमणीयतारहितेन अत एव हृतचेतसा चेतश्चालकेन वासेन रामसाहित्यरहितनिवासेन कः संप्रीयेत न कोऽपीत्यर्थः ॥ २० ॥

गो० टी०—कोन्वनेनेति । अप्रतीतेन अप्रशस्तेन सतामयोग्येनेति यावत् । उत्कण्ठया शोकस्मरणेन सहितः सोत्कण्ठः कृतः सोत्कण्ठः सोत्कण्ठितः तादृशो जनो यस्य तेन अमनोज्ञेन उद्वेगकारिणा हृतचेतसा चित्तनाशकेन अनेन वासेन नगरेणेत्यर्थः । को नु जनःसंप्रीयेत न कोऽपीत्यर्थः तस्मादयं वासः त्याज्य इति भावः ॥ २० ॥

२१ ] ति० टी०—यदि चेदिति समुदायो यदर्थः अधर्म्यमधर्मयुक्तम्, अत एवानाथवन्नाथवद्भिन्नम् जीवितेनार्थो जीविताभिन्नोऽर्थोऽपि न पुत्रादिरूपस्तु सुतरां नेत्यर्थः ॥ २१ ॥

रा० टी०—इदानीं प्रवासकारणीभूतमन्थरां निन्दयन्त्य आहुः—कैकेय्या इति । इतः रामपालनायुतमत एव अनाथवन्नाथरहितसदृशमिदं राज्यं यदि च कैकेय्याः केकयीदास्या मन्थरायाः अधर्म्यं धर्मादनपेतविरुद्धमधर्मेण पालितमित्यर्थः स्यात्तदा नोऽस्माकं जीवितेन न अर्थः प्रयोजनं पुत्रैः कुतः धनैश्च कुतः ॥ २१ ॥

गो० टी०—कैकेय्या इति । अधर्म्यं धर्मादपेतमित्यर्थः अनाथवत् नाथश्चान्यं भावि प्रतिसन्धानेनेदमुक्तम् । कुत इति पुत्रधनकृतपुरुषार्थस्य जीवितमूलत्वादित्यर्थः ॥ २१ ॥

२२ ] ति० टी०—पुत्रो रामः परिहरेत्त्यागात्परिहरेत् पुत्रभर्तृत्यागिन्या इतरत्यागः कियानिति भावः ॥ २२ ॥

रा० टी०—ययेति । यया हेतुभूतया मन्थरया ऐश्वर्यकारणादहमतीव राज्ञीप्रियेति स्वप्रभूतिहेतोः पुत्रो रामः भर्ता दशरथश्च त्यक्तौ त्याजितौ सा कैकेयी कुलस्य पांसनी मलभूता मन्थरा अन्यं कं परिहरेत्यजेन्न त्याजयेदित्यर्थः ॥ २२ ॥

गो० टी०—ययेति । पुत्रो रामः परिहरेत् विपक्ष्य इति शेषः रक्षेदिति यावत् ॥ २२ ॥

२३ ] ति० टी०—जीवन्त्याः कैकेय्या राज्ये तया भृतकाः पोषिता हि अपि जीवन्त्यो न वसेमहि न वसेम इममर्थं प्रति पुत्रैरपि शपामहे ॥ २३ ॥

रा० टी०—कैकेय्या इति । जीवन्त्याः पालयन्त्याः कैकेय्याः केकयीदास्याः राज्ये भृतकाः तया पालिता अपि जीवन्त्यो वयं जातु कदाचिदपि न वसेमहि हि निश्चितमेतत् अत एव पुत्रैः अपिना भर्त्रादिभिरपि शपामहे अत्रार्थे शपथं कुर्मः शप उपालम्भे इत्यात्मनेपदम् ॥ २३ ॥

१ सुखेति गो. पाठः । २ त्विति गो. पाठः । ३ त्यक्तौ चेति रा. पाठः । ४ नीति गो. पाठः ।

या पुत्रं पार्थिवेन्द्रस्य प्रवासयति निर्घृणा । कस्तां प्राप्य सुखं जीवेदधर्म्यां दुष्टचारिणीम् ॥ २४ ॥
उपद्रुतमिदं सर्वमनालम्भमनायकम् । कैकेय्यास्तु कृते सर्वं विनाशमुपयास्यति ॥ २५ ॥
नहि प्रव्रजिते रामे जीविष्यति महीपतिः । मृते दशरथे व्यक्तं विलोपस्तदनन्तरम् ॥ २६ ॥
ते विषं पिबतालोड्य क्षीणपुण्याः सुदुःखिताः । राघवं वानुगच्छध्वमश्रुतिं वापि गच्छत ॥ २७ ॥
मिथ्याप्रव्राजितो रामः सभार्यः सहलक्ष्मणः । भरते संनिबद्धाः स्मः सौनिके पशवो यथा ॥ २८ ॥
पूर्णचन्द्राननः श्यामो गूढजत्रुररिंदमः । आजानुबाहुः पद्माक्षो रामो लक्ष्मणपूर्वजः ॥ २९ ॥
पूर्वाभिभाषी मधुरः सत्यवादी महाबलः । सौम्यश्च सर्वलोकस्य चन्द्रवत्प्रियदर्शनः ॥ ३० ॥
नूनं पुरुषशार्दूलो मत्तमातङ्गविक्रमः । शोभयिष्यत्यरण्यानि विचरन्स महारथः ॥ ३१ ॥

गो० टी०–कैकेय्या इति । जीवन्त्याः कैकेय्याः राज्ये भृतकाः भृतिभुजः ' भृतको भृतिभुक् ' इत्यमरः कैकेयीजीवनपर्यन्तं न तस्या राज्ये निवसेमहीति जीवन्तीशब्दस्य भावः ॥ २३ ॥ २४ ॥

२४ ] ति० टी०–अधर्म्यामधर्मयुताम् ॥ २४ ॥

रा० टी०–ननु वासे को दोष इत्यत आहुः–येति । निर्घृणा अतिक्रूरा या मन्थरा पार्थिवेन्द्रस्य पुत्रं प्रवासयति तामधर्म्यां प्राप्य कः सुखं जीवेन्न कोऽपीत्यर्थः ॥ २४ ॥

२५ ] ति० टी०–अनालम्भमयज्ञम् । तत्र हेतुः—अनायकमिति कृते तन्निमित्तम् ॥ २५ ॥

रा० टी०–उपद्रुतमिति । कैकेय्याः मन्थरायाः कृते अनायकं नायकरहितमत एव उपद्रुतं नानोपद्रवसहितमत एव अनालम्भं पश्वालम्भोपलक्षितयागरहितं सर्वमिदं राज्यं विनाशमुपयास्यति प्राप्स्यति ॥ २५ ॥

गो० टी०–उपद्रुतमिति । कैकेय्याः कृते कैकेयीनिमित्तम् ॥ २५ ॥

२६ ] ति० टी०–विलोपो नाशः ॥ २६ ॥

रा० टी०–ननु राज्ञो दशरथस्य सत्त्वादनाथकं कथमुच्यते इत्यत आहुः–नहीति । रामे प्रव्रजिते सति महीपतिर्न जीविष्यति पालयिष्यति लोकान्तरं गमिष्यतीत्यर्थः । अतः दशरथे मृते लोकान्तरं प्राप्ते सति अनन्तरं विघ्नरहितं व्यक्तं शोभितं यद्राज्यं तत्तस्य विलोपो विनाशो भविष्यतीति शेषः ॥ २६ ॥

गो० टी०–विनाशप्रकारमुपपादयन्ति–नहीति । विलोपो विनाशः ॥ २६ ॥

२७ ] ति० टी०–ते यूयं पुरुषाः सस्त्रीका इति शेषः आलोड्य पेषयित्वा अश्रुतिं वापि यत्र देशे कैकेय्या नामश्रवणमपि न भवति तादृशं दूरदेशं वा गच्छतेत्यर्थः ॥ २७ ॥

रा० टी०–त इति । ते अस्मदुक्तिं श्रुतवन्तः क्षीणपुण्या यूयमालोच्य अस्मदुक्तिं विचार्य राघवं राममनुगच्छध्वं वा तस्याशक्यत्वे विषं पिबत वा तस्याशक्यत्वे अश्रुतिं मन्थराराज्यश्रवणरहितदेशं गच्छत, अस्मदादिभिः सहेति शेषः ॥ २७ ॥

गो० टी०–त इति । ते यूयमालोड्य अमुमर्थमालोच्य सुदुर्गताः सुदरिद्राः रामरूपधनहीना इत्यर्थः । अश्रुतिं यत्र गते नामापि न श्रूयते तं देशमित्यर्थः ॥ २७ ॥

२८ ] ति० टी०–मिथ्याप्रव्राजितो मिथ्यावरकल्पनया प्रव्राजितोऽभूत् ततः कैकेयीवशगे भरते राजनि वसति सौनिके सूना पशुवधस्थानं तत्र भवे हिंसके तत्समीपे पशवो यथा निश्चितमरणास्तथा संनिबद्धाः स्मः संनिविष्टा भवामः ॥ २८ ॥

रा० टी०–मिथ्येति । रामः मिथ्या वृथा प्रव्राजितः। ननु राजनियोगे भवदुक्त्या किमित्यत आहुः–भरते कैकय्यतिप्रियत्वेन भरतसदृशे मन्थरायां तदाज्ञायामित्यर्थः । वयं संनिबद्धाः स्मः तत्र दृष्टान्तः सौनिके पशुहिंसके पशव इव एतेन मन्थराज्ञायाः सत्त्वेऽस्माकं कल्याणं न भविष्यतीति वस्तु व्यक्तं भरतशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः सामान्ये नपुंसकम् ॥ २८ ॥

गो० टी०–पितृवचननिर्देशेन कैकेयीप्रियचिकीर्षया च क्रियमाणे प्रव्रजने को दोष इत्यत्राह–मिथ्या प्रव्राजित इति। मिथ्या प्रव्राजितः कपटेन प्रव्राजितः सन्निसृष्टाः निक्षिप्ताः राज्ञेति शेषः । सौनिके पशुमारके ॥ २८ ॥

२९ ] ति०टी०–इदानीं तद्गुणवर्णनेनात्मानमाप्याययन्ति–पूर्णेत्यादि ॥ २९ ॥

३०–३१ ] ति० टी०–पूर्वाभिभाषी सौहार्दप्रदर्शनाय परभयापगमाय च सर्वत्र पूर्वभाषणशीलः ॥ ३० ॥ ३१ ॥

रा० टी०–रामगुणवर्णनपूर्वकारण्यभाग्यवत्तां बोधयन्त्य आहुः–पूर्णेत्यादि श्लोकत्रयेण । पूर्वाभिभाषी अत्यैश्वर्यवत्ताहेतुकपरभीतिनिवर्तनफलकस्वनिष्ठसौहार्दप्रकटनहेतुकपौर्वकालिकभाषणशीलः रामः अरण्यानि विचरन् सन् शोभयिष्यति । श्लोकत्रयमेकान्वयि ॥ २९–३१ ॥

गो० टी०–विश्लेषासहिष्णुतया रामस्स्वकार्यं कृतवानित्यभिधाय तद्गुणकीर्तनेनाप्यायनं कुर्वन्ति—पूर्णेत्यादिना । गूढजत्रुः गूढे निमग्ने जत्रुणी अंससंधी यस्य स तथोक्तः 'स्कन्धो भुजशिरोंसोऽस्त्री संधी तस्यैव जत्रुणी' इत्यमरः । पूर्वाभिभाषी स्वसौहार्दभव्यत्वप्रदर्शनाय सर्वत्र पूर्वभाषणशीलः ॥ २९–३१॥

१ लम्भमिति गो. पाठः । २ हीति गो. पाठः । ३ विलाप इति गो. पाठः । ४ सुदुर्गता इति गो. स्म दुःखिता इति रा. पाठः । ५ कथा इति गो. पाठः ।

तास्तथा विलपन्त्यस्तु नगरे नागरस्त्रियः। चुक्रुशुर्दुःखसंतप्ता मत्योरिव भयागमे ॥ ३२ ॥
इत्येवं विलपन्तीनां स्त्रीणां वेश्मसु राघवम्। जगामास्तं दिनकरो [1]रजनी[2] चाभ्यवर्तत ॥ ३३ ॥
नष्टज्वलनसंतापा प्रशान्ताध्यायसत्कथा। तिमिरेणानुलिप्तेव तदा सा नगरी बभौ ॥ ३४ ॥
उपशान्तवणिक्पण्या नष्टहर्षा निराश्रया। अयोध्या नगरी चासीन्नष्टतारमिवाम्बरम् ॥ ३५ ॥
तदा स्त्रियो रामनिमित्तमातुरा यथा सुते भ्रातरि वा विवासिते।
विलप्य दीना रुरुदुर्विचेतसः सुतैर्हि तासामधिकोऽपि सोऽभवत् ॥ ३६ ॥
प्रशान्तगीतोत्सवनृत्यवादना [3]विभ्रष्टहर्षा पिहितापणोदया।
तदा ह्ययोध्या नगरी बभूव सा महार्णवः संक्षपितोदको यथा ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः।

अवशिष्टरात्र्या बह्वध्वानमतिक्रान्तो रामः प्रातः स्नात्वोपास्य वेदश्रुतिं गोमतीस्यन्दिके चोत्तीर्य बहूर्द्धिद्धिः स्फीतान्कोसलान्सीतायै दर्शयन्नात्मनो भावि प्रत्यागमनं च सुमन्त्रेण मन्त्रयमाणोऽग्रतः प्रतस्थे।

रामोऽपि रात्रिशेषेण तेनैव महदन्तरम्। जगाम पुरुषव्याघ्रः पितुराज्ञामनुस्मरन् ॥ १ ॥

३२ ] ति० टी०–मृत्योरिव भयागमे मृत्युहेतुकभयागम इवेत्यर्थः ॥ ३२ ॥

रा० टी०–ता इति। तथा उक्तप्रकारेण विलपन्त्यः नगरस्त्रियः मृत्योर्भयागमे मृत्युकालोद्भूतभयप्राप्ताविव चुक्रुशुः रुरुदुः ॥ ३२ ॥

गो० टी०–ता इति। मृत्योर्भयागमे मरणसमये ॥ ३२ ॥

३३ ] ति० टी०–विलपन्तीनाम् दुःखं दृष्ट्वेति शेषः। रविरस्तं जगाम तदीयदुःखदर्शनासहिष्णुतया रविरपि शीघ्रगतिरभूदित्याशयः ॥ ३३ ॥

रा० टी०–उपसंहरन्नाह–इतीति। वेश्मसु स्वस्वगृहेषु विलपन्तीनां स्त्रीणां दिनकरः सूर्योऽस्तं जगाम अत एव रजनी रात्रिरभ्यवर्तत ॥ ३३ ॥

गो० टी०–इतीति। विलपन्तीनां विलपन्तीषु सतीष्वित्यर्थः। राघवमुद्दिश्येति शेषः ॥ ३३ ॥

३४] ति०टी०–नष्टो होमाद्यर्थोऽपि ज्वलनसंतापो ज्वलनसंगमो यस्याम् प्रशान्ता अध्याया अध्ययनानि सत्कथाश्च यस्यां सा ॥ ३४ ॥

रा० टी०–नष्टेति। नष्टो विध्वस्तः ज्वलनस्य आहवनीयाग्नेः संतापः ऊष्मा यस्यां सा, प्रशान्ताः विनष्टाः अध्यायसत्कथा अध्ययनसमीचीनवार्ताः यस्यां सा अत एव तिमिरेण अन्धकारेण अनुलिप्ता इव सा नगरी बभौ ददृशे इत्यर्थः॥ ३४॥

गो० टी०–नष्टेति। नष्टज्वलनसंतापा नष्टाग्निप्रणयना प्रशान्ताध्यायसत्कथा अध्यायो वेदः सत्कथा पुराणादिः निवृत्तवेदाध्ययनपुराणपाठेत्यर्थः ॥ ३४ ॥

३५ ] ति० टी०–निराश्रया रामरूपाश्रयराहित्यात् ॥ ३५॥

रा० टी०–उपशान्तेति। निराश्रया रामरूपाश्रयरहिता अयोध्या नष्टतारमम्बरमाकाशमिवासीत् ॥ ३५ ॥

गो० टी०–उपशान्तेति। उपशान्तवणिक्पण्या उपशान्तानि वणिजां पण्यानि यस्यां सा पण्यकल्पनाशून्येत्यर्थः॥ ३५॥

३६ ] ति० टी०–सुतैः तृतीयार्थी सुतेभ्योऽपि तासां सोऽधिकोऽभवत् ॥ ३६ ॥

रा० टी०–तदेति। रामनिमित्तं रामवियोगहेतोः आतुराः स्त्रियः सुते भ्रातरि च विवासिते इव विलप्य विविधमुक्त्वा रुरुदुः हि यतः सुतैः सुतादिभ्यः अधिकः प्रीतिविषयत्वेनोत्कर्षः तासां स रामोऽभवत् सुतैरित्यत्र पञ्चम्यर्थे तृतीया ॥ ३६ ॥

गो० टी०–तथेति। सुतैः सुतेभ्यः पञ्चम्यर्थे तृतीया भ्रातृभ्यश्चेत्यपि द्रष्टव्यम् ॥ ३६ ॥

३७ ] ति० टी०–वादनं वादित्रम् प्रशान्तानि गीतोत्सववादित्राणि यस्यां सा पिहित आपणानां पण्यवस्तूनामुदयः प्रसारणं यस्यां सा संक्षपितोदकः क्षीणोदकः। 'संक्षुभितोदकः' इति पाठे क्षैण्यात्संक्षुभितोदक इत्यर्थः ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रा० टी०–प्रशान्तेति। पिहिता आपणोदया आपणवस्तूनि यस्यां सा नगरी अयोध्या संक्षपितोदकः विनष्टजलः अर्णवः समुद्र इव बभूव। 'संक्षुभितोदकः' इति पाठे क्षैण्यात्संक्षुभितोदक इत्यर्थं इति भट्टाः ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

गो०टी०–प्रशान्तेति। पिहितापणोदया पिहितः आपणोदयः आपणस्थवस्तुसमृद्धिर्यस्याः सा तथोक्ता आपणोदयस्य पिहितत्वमापणाविधानात् संक्षपितोदकः संशोषितोदक इत्यर्थः ॥ ३७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

१ ] ति० टी०–अथ रामवृत्तान्तमाह–रामोऽपीति। तेनैव यत्र रात्रिशेषे स्त्रिया वञ्चितास्तेनैव महदन्तरं बहुदूरम् ॥१॥

१ तथेति गो. पाठः। २ नृत्तेति गो. पाठः। ३ व्यपास्तहर्षेति गो. पाठः।

तथैव गच्छतस्तस्य व्यपायाद्रजनी शिवा । उपास्य तु शिवां संध्यां विषयानत्यगाहत ॥ २ ॥
ग्रामान्विकृष्टसीमान्तान्पुष्पितानि वनानि च । पश्यन्नतिययौ शीघ्रं शनैरिव हयोत्तमैः ॥ ३ ॥
शृण्वन्वाचो मनुष्याणां ग्रामसंवासवासिनाम् । राजानं धिग्दशरथं कामस्य वशमास्थितम् ॥ ४ ॥
हा नृशंसाद्य कैकेयी पापा पापानुबन्धिनी । तीक्ष्णा संभिन्नमर्यादा तीक्ष्णकर्मणि वर्तते ॥ ५ ॥
या पुत्रमीदृशं राज्ञः प्रवासयति धार्मिकम् । वनवासे महाप्राज्ञं सानुक्रोशं जितेन्द्रियम् ॥ ६ ॥
[कथं नाम महाभागा सीता जनकनन्दिनी । सदा सुखेष्वभिरता दुःखान्यनुभविष्यति]
अहो दशरथो राजा निःस्नेहः स्वसुतं प्रति । प्रजानामनघं रामं परित्यक्तुमिहेच्छति ॥ ७ ॥
एता वाचो मनुष्याणां ग्रामसंवासवासिनाम् । शृण्वन्नतिययौ वीरः कोसलान्कोसलेश्वरः ॥ ८ ॥

---

रा० टी०—पुरवासिवृत्तान्तमुक्त्वा रामवृत्तान्तमाह—राम इत्यादिभिः । तेन उत्थानकालादारभ्येन रात्रिविशेषेण महदन्तरमतिदूरं रामो जगाम ॥ १ ॥

गो० टी०—अथ रामवृत्तान्तं प्रस्तौति—रामोऽपीति । तेनैव रात्रिशेषेण येन रात्रिशेषेण पौरान् विहाय गतस्तेनैव महदन्तरं महान्तमवकाशं महद्दूरमिति यावत् ॥ १ ॥

२ ] ति० टी०—व्यपायाद्गता विषयो देशः ॥ २ ॥

रा० टी०—तथेति । तथा अतिवेगेन गच्छतस्तस्य रामस्य शिवा हर्षदा रजनी व्यपायादगच्छदत एव शिवां संध्यामुपास्य विषयान्देशान्तराणि अत्यगाहत ॥ २ ॥

गो० टी०—तथेति । गच्छतः गच्छति सति व्यपायात् निरगात् विषयान्तम् उत्तरकोसलदक्षिणावधिम् ॥ २ ॥

३ ] ति० टी०—विशेषेण कृष्टाः सीमान्ता येषु अनेन सौराज्यं ध्वनितम् तान्यतिक्रामञ्छनैरिव शीघ्रं ययौ । रमणीयदेशादिदर्शनपारवश्यादतिशीघ्रमपि गमनं शनैरिव प्रत्यभादित्यर्थ इति तीर्थः 'शरैरिव' इति पाठे शरसदृशवेगवद्भिरश्वोत्तमैरित्यर्थ इति कतकः ॥ ३ ॥

रा०टी०—गमनप्रकारं वर्णयन्नाह—ग्रामानिति । विकृष्टसीमान्तान् विकृष्टाः वपनाय कर्षिताः सीमान्ताः सीमापर्यन्तभूमयो येषु तान् वनानि च पश्यन् ग्रामसंवासवासिनां ग्रामाः बहुगृहकाः संवासाः अल्पगृहकाः तद्वासिनां वाचः शृण्वन् सन् शरैरिव बाणवेगसदृशवेगविशिष्टैः हयोत्तमैः शीघ्रं ययौ अयमेव पाठः कतकसंमतः । तीर्थसंमतस्तु 'शनैः' इति पाठः । शनैरिव शीघ्रं ययौ रमणीयदेशादिदर्शनपारवश्यादतिशीघ्रमपि गमनं शनैरिव प्रत्यभादिति भट्टोदाहृततीर्थव्याख्या । सार्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०—ग्रामानिति । विकृष्टसीमान्तान् विशेषेण कृष्टसीमान्तान् बीजावापार्थं सज्जीकृतक्षेत्रानित्यर्थः । शनैरिव ययौ उत्तमाश्वानां गतिचातुर्यात् पुष्पितवनरामणीयकदर्शनपारवश्याच्चातिशीघ्रमपि गमनं शनैरिव जानन् ययावित्यर्थः । शृण्वन्निति ग्रामसंवासवासिनां ग्रामाः महाग्रामाः संवासा अल्पग्रामाः तेषु वासिनां शृण्वन्नतिययाविति पूर्वेण संबन्धः ॥ ३ ॥

४ ] ति० टी०—ग्रामा महान्तः संवासाः स्वल्पग्रामाः शृण्वन्ययावित्यन्वयः । ता वाच आह—राजानं धिगित्यादि । आस्थितं प्राप्तम् ॥ ४ ॥

रा० टी०—तद्वचनस्वरूपं बोधयन्नाह—राजानमित्यादिभिः । राजानं दशरथं हा इमं पुत्रं विना कथं जीविष्यतीति तत्संबन्धिनीं शोच्यतेत्यर्थः । आस्थितं कविभिर्वर्णितं कामस्य वशं कान्तिं धिक् रामकान्त्यग्रे तत्कान्तिस्तुच्छेत्यर्थः ॥ ४ ॥

गो० टी०—वाच एव प्रपञ्चयति—राजानमित्यादि । पापा पापस्वभावा पापानुबन्धिनी नैरन्तर्येण पापकारिणीत्यर्थः । तीक्ष्णा क्रूरा वनवासे वनवासनिमित्तं प्रवासयतीत्यन्वयः । अतिययौ अतिक्रम्य ययौ ॥ ४–९ ॥

५ ] ति० टी०—पापा पापकर्मारब्धशरीरा पापानुबन्धिनी पापकर्मनिरता तीक्ष्णा क्रूरदर्शना संभिन्नमर्यादा त्यक्तमर्यादा ॥ ५ ॥

रा० टी०—योग्यतया व्युत्क्रमेणान्वयः नृशंसा अतिक्रूरा अत एव पापा क्रूरत्वकारणीभूतपापविशिष्टा अत एव पापानुबन्धिनी पापं सर्वजनदुःखदानरूपाधर्ममनुबध्नाति शिक्षयतीत्यर्थः तच्छीला अत एव तीक्ष्णा अनम्रा अत एव संभिन्नमर्यादा संभिन्ना निवर्तिता मर्यादा नाश्रितकार्यासमापनरूपा यया सा या कैकेयी केकयीदासी मन्थरा सानुक्रोशमतिदयावन्तमीदृशं राज्ञः पुत्रं विवासयति सा मन्थरा तीक्ष्णकर्मणि अनम्रतासूचकव्यापारे स्वापराधक्षमापनाभावविशिष्टचेष्टायामद्यापि वर्तते । सार्धश्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

६ ] ति० टी०—ईदृशमनेककल्याणगुणवन्तं, सानुक्रोशं सदयम् ॥ ६ ॥

रा० टी०—कथमिति । जनकनन्दिनी दुःखान्दुःखोत्पादकान्पदार्थान्कण्टकादीन्कथमनुभविष्यति सहेतेत्यर्थः ॥ ७ ॥

७ ] ति० टी०—प्रजानां प्रियमिति शेषः । यद्वा प्रजाविषयेऽनघं पापरहितम् ॥ ७ ॥

रा० टी०—अहो इति । प्रजानामनघमघनिवर्तकं रामं परित्यक्तुं राजा दशरथः इच्छति अतः स्वसुतं प्रति निःस्नेहः स्नेहरहितोऽस्तीति शेषः । अहो आश्चर्यमेतत् ॥ ८ ॥

८ ] ति० टी०—कोसलानति अतिक्रम्य ययौ ॥ ८ ॥

---

१ स इति गो. पाठः । २ विषयान्तं व्यगाहतेति गो. पाठः । ३ शरैरिवेति [illegible] पाठः । ४ [illegible]

ततो वेदश्रुतिं नाम शिववारिवहां नदीम् । उत्तीर्याभिमुखः प्रायादगस्त्याध्युषितां दिशम् ॥ ९ ॥
गत्वा तु सुचिरं कालं ततः शीतवहां नदीम् । गोमतीं गोयुतानूपामतरत्सागरंगमाम् ॥ १० ॥
गोमतीं चाप्यतिक्रम्य राघवः शीघ्रगैर्हयैः । मयूरहंसाभिरुतां ततार स्यन्दिकां नदीम् ॥ ११ ॥
स महीं मनुना राज्ञा दत्तामिक्ष्वाकवे पुरा । स्फीतां राष्ट्रवृतां रामो वैदेहीमन्वदर्शयत् ॥ १२ ॥
सूत इत्येव चाभाष्य सारथिं तमभीक्ष्णशः । हंसमत्तस्वरः श्रीमानुवाच पुरुषोत्तमः ॥ १३ ॥
कदाहं पुनरागम्य सरय्वाः पुष्पिते वने । मृगयां पर्यटिष्यामि मात्रा पित्रा च संगतः ॥ १४ ॥
नात्यर्थमभिकाङ्क्षामि मृगयां सरयूवने । रतिर्ह्येषातुला लोके राजर्षिगणसंमता ॥ १५ ॥

---

रा० टी०–एता इति । ग्रामेषु यः संवास उत्तमनिवासस्तद्वासिनां मनुष्याणाम् एता वाचः शृण्वन्स कोशलेश्वरो रामः कोशलान्देशविशेषानतिययौ अतिक्रमणपूर्वकदेशान्तरं प्राप ॥ ९ ॥

९ ] ति० टी०–शिववारिवहां शिवानि वारीणि वहन्तीम् ॥ ९ ॥

रा० टी०–तत इति । ततः कोशलदेशातिक्रमणानन्तरं शिववारिवहां कल्याणप्रदजलवतीं वेदश्रुतिं वेदश्रुत्यभिधां नदीमुत्तीर्य अगस्त्याध्युषितामगस्त्यवासाधिकरणीभूतां दिशं दक्षिणामित्यर्थः । अभिमुखः संमुखो ययौ ॥ १० ॥

गो० टी०–तत इति । अगस्त्याध्युषितां दिशं दक्षिणां दिशम् ॥ १० ॥

१० ] ति० टी०–गोभिर्युतान्यनूपानि जलप्रायदेशा यस्याम् सागरंगमामित्यनेन यमुनावत्तस्या अपि पृथक्सागरप्रवेशं सूचयति ॥ १० ॥

रा० टी०–गत्वेति । सुचिरं बहुकालं ततः वेदश्रुतिनद्याः गत्वा शीतवहां शैत्यविशिष्टजलवहनकर्त्रीं गोयुतानूपां गोयुक्तजलप्रदेशविशिष्टां सागरंगमां सर्वकालं गङ्गासङ्गमद्वारा समुद्रं प्राप्तां गोमतीं नदीमतरत् गमेः सुप्युपसंख्यानमिति खचि मुमि च सिद्धम् ॥ ११ ॥

गो० टी०–गत्वेति। गोयुतानूपां गोयुक्तकच्छप्रदेशां सागरंगमामिति गमेः सुप्युपसंख्यानमिति खचि मुम् ॥ ११ ॥ १२ ॥

११ ] ति० टी०–स्यन्दिकां तदाख्याम् ॥ ११ ॥

रा० टी०–गोमतीमिति । गोमतीमतिक्रम्य तीर्त्वा मयूरहंसाभिरुतां मयूरादिशब्दविशिष्टां स्यन्दिकां तदभिधां नदीं ततार ॥ १२ ॥

१२ ] ति० टी०–सोऽतीतस्यन्दिकः महीं स्यन्दिकासीमां कोसलदेशरूपां राष्ट्रवृतामवान्तरजनपदावृतां वैदेहीमन्वदर्शयत् इक्ष्वाकवे मनुना दत्तकोसलदेशस्य दक्षिणसीमां कथयामासेत्यर्थः । यद्यपीक्ष्वाकादयः सार्वभौमास्तथापि तेषां स्वराजधानीत्वात्स्यन्दः कोसलदेश एव सार्वभौमत्वं तु तद्देशसिंहासनाधिष्ठातृसकलराजपालनीयाज्ञत्वमेवेत्यलम् ॥ १२ ॥

रा० टी०–स इति । सः उत्तीर्णस्यन्दिकानदीको रामः इक्ष्वाकवे तदभिधमहाराजाय राज्ञा राजराजेन मनुना दत्ता राजधानीप्रकल्पनायाज्ञप्तामित्यर्थः । स्फीतां स्वच्छां राष्ट्रवृतामवान्तरदेशविशिष्टां महीं पृथ्वीं वैदेहीमन्वदर्शयत् ॥ १३ ॥

गो० टी०–स इति । महीं कोसलदेशं राष्ट्रवृताम् अवान्तरजनपदावृतां यद्यपीक्ष्वाकूणामियं भूमिः सशैलवनकानना इति भूमिमात्रमिक्ष्वाकोरेव तथापि तस्य जन्मभूमिरियम् इतरजनपदस्थाः करदा इति बोध्यम् ॥ १३ ॥

१३ ] ति० टी०–सूत ३ प्लुतः शृण्वित्यादि आभाष्य संबोध्य हंसमत्तस्वरो मत्तहंसस्वरः ॥ १३ ॥

रा० टी०–सूतेति । सारथिं सूत ! इति अभीक्ष्णशः आभाष्य संबोध्य हंसमत्तस्वरः मत्तहंसस्वरसदृशस्वरविशिष्टः श्रीमान् अतिशोभाविशिष्टो रामः उवाच ॥ १४ ॥

गो० टी०–सूत इतीति । सूत इतीत्यत्र गुणाभावो वाक्यसन्धेरनित्यत्वात् हंसमत्तस्वरः हंसस्येव मत्तः कलः स्वरो यस्य स तथा ॥ १४ ॥

१४ ] ति० टी०–अथ परिगृहीतमनुष्यदेहस्य तद्देहग्रहणानुरूपोऽभिनयः–कदेति । आगम्य अतिक्रान्तं स्वदेशमिति शेषः ॥ १४ ॥

रा० टी०–तदाकारमाह–कदेति । आगम्य वनवासान्निवृत्य पुष्पिते सरय्वाः वने मात्रादिना संगतोऽहं मृगयामाखेटं कदा पर्यटिष्यामि ॥ १९ ॥

गो० टी०–भाविपितृवियोगसूचकमौत्कण्ठ्यमाह–कदेति। पर्यटिष्यामि चरिष्यामि ॥ १९ ॥

१५ ] ति० टी०–ननु मृगयायाः 'स्त्रीद्यूतमृगयापानवाक्पारुष्योग्रदण्डताः । अर्थस्य दूषणं चेति राज्ञां व्यसनसप्तकम्' इत्युक्तेर्व्यसनानां निषेधाच्च कथं तदिच्छेत्यत आह–नात्यर्थमिति । प्रजान्यायचिन्तादिवैमुख्यापादकतयात्यन्तरतेरेव तस्यां निषेधात् न तु सर्वथैव निषेधोऽस्त्यत आह–एषा रतिः क्रीडा लोके राजर्षिगणसंमता, अतोऽतुला न सर्वथा निषिद्धेत्यर्थः । 'गजादयो न हन्तव्या मृगयायां महेषुभिः' इत्यादिनास्या अप्यनुमतत्वमिति भावः ॥ १९ ॥

---

१ शिवजलामिति गो. पाठः । २ राष्ट्रावृतामिति गो. रा. पाठः । ३ पुरुषर्षभ इति गो. पाठः । ४ पञ्चदशषोडशयोः स्थानव्यत्यासेन गो. पाठः ।

राजर्षीणां हि लोकेऽस्मिन्रत्यर्थं मृगयावने । काले कृतां तां मनुजैर्धन्विनामभिकाङ्क्षिताम् ॥ १६ ॥
स तमध्वानमैक्ष्वाकः सूतं मधुरया गिरा । तं तमर्थमभिप्रेत्य ययौ वाक्यमुदीरयन् ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

## पञ्चाशः सर्गः ।

रामोऽयोध्याभिमुखीभूय तामापृच्छ्य मध्येमार्गं द्रष्टुमागताञ्जानपदजनान्विवर्त्य कोसलानतिक्रम्य गङ्गां प्राप । प्रसङ्गतो वाल्मीकिर्गङ्गां वर्णयति । लक्ष्मणसुमन्त्रानुमतो रामो गङ्गातटगतेङ्गुदीतरुमूले रथादवारुरोह स्वं द्रष्टुमागतं गुहनामानं निषादराजमभ्युजगामाथ पश्चिमसंध्यामुपास्य कृतजलाहार एव भुवमधिशिश्ये । सुमन्त्रगुहलक्ष्मणाः संभाषमाणा एव निशां निन्युः ।

विशालान्कोसलान्रम्यान्यात्वा लक्ष्मणपूर्वजः । अयोध्यामुन्मुखो धीमान्प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥
आपृच्छे त्वां पुरिश्रेष्ठे काकुत्स्थपरिपालिते । दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥ २ ॥

---

रा० टी०—ननु 'स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थस्य दूषणं चेति राज्ञां व्यसनसप्तकम्' इत्यादिना मृगयाया निषिद्धत्वाद्धिंसाप्रचुरत्वाच्च कथं तामभिकाङ्क्षसे इत्यत आह—नेति । सरयूवने मृगयामाखेटमत्यर्थमर्थातिक्रमणां हिंसनमित्यर्थः नाभिकाङ्क्षामि । ननु पुनः किमर्थमुच्यते इत्यत आह—एषा मदीप्सिता मृगयारतिः मृगादिना विहरणमेव न तु हिंसेत्यर्थः । अत एव राजर्षिगणसंमता मन्वादिसंमतिविषयीभूता अत एव लोके अतुला हिंसाप्रचुराखेटोपमारहिता एतेन निषेधवाक्यानि प्रचुरहिंसाविशिष्टाखेटपराणीति सूचितम् ॥ १६ ॥

गो० टी०—ननु 'स्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदण्डताः । अर्थस्य दूषणं चेति राज्ञां व्यसनसप्तकम्' इति निन्दिता मृगया कथं काङ्क्ष्यत इत्याशङ्क्य हिंस्रमृगनिवृत्त्यर्था कादाचित्का न गर्हिता किंतु निरन्तरैव यथा राजसूये "तस्याः सभाया मध्ये अधिदेवनमुद्धत्यावोक्ष्याऽक्षान् निर्वपेत्" इति विहितं द्यूतमित्याह—राजर्षीणामिति । हि यस्मात्कारणात् राजर्षीणां वने मृगया रत्यर्थमस्तीति शेषः । काले श्राद्धादिकाले मनुजैः सदाचारपरैः वृतां स्वीकृतां धन्विनामभिकाङ्क्षितां चललक्ष्यवेधनार्थं धन्विभिरभिकाङ्क्षितां तां मृगयां नात्यर्थमभिकाङ्क्षामि किंचित् काङ्क्षामीत्यर्थः । रतिः क्रीडा ॥ १६ ॥ १७ ॥

१६ ] ति० टी०—'राजर्षीणां हि' इति श्लोकः पुनरुक्तार्थक इव कतकासंमतश्चेति बोध्यम् एवं हि तद्व्याख्या—हि यतोऽस्मिंल्लोके राजर्षीणां वने मृगया रत्यर्थमासीत् । अतोऽहमपि काले श्राद्धादिकाले मनुजैर्मनुपुत्रैः सदाचारपरैरपि कृतां स्वीकृतां धन्विनां चञ्चललक्ष्येष्विषुसिद्ध्यर्थमभिकाङ्क्षितां नात्यर्थमभिकाङ्क्षामीति संबन्धः ॥ १६ ॥

रा० टी०—राजर्षीणामिति । यतः राजर्षीणां रत्यर्थं मृगया अतः काले विहरणसमये मनुजैः मनुवंश्यराजैः कृतां स्वीकृतामत एव धन्विनामितरधनुर्धराणामभिकाङ्क्षितां मृगयामाकाङ्क्षामीति शेषः ॥ १७ ॥

१७ ] ति० टी०—तं तमर्थमभिप्रेत्य विषयीकृत्य मधुरया गिरा सूतं प्रति वाक्यमुदीरयन्स ऐक्ष्वाको रामस्तमध्वानं ययाविति संबन्धः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

रा० टी०—स इति । ऐक्ष्वाकः इक्ष्वाकुवंशप्रसूतः स रामः मधुरया गिरा वाक्यमुदीरयन् सन् तं स्वोक्तवाक्यार्थं तं सूतमभिप्रेत्य बोधयित्वा तमध्वानं ययौ ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनपञ्चाशः सर्गः ॥ ४९ ॥

गो० टी०—स इति । ऐक्ष्वाकः "दाण्डिनायन—"इत्यादिना निपातनात् साधुः स रामः सूतं प्रति तं तमर्थं राजगुणादिरूपम् अभिप्रेत्य हृदये कृत्वा मधुरया गिरा वाक्यमुदीरयन् सन् अध्वानं ययौ अमुमर्थमुत्तरत्र दशरथं प्रति सूतो व्यक्तीकरिष्यति ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनपञ्चाशः सर्गः ॥ ४९ ॥

१ ] ति० टी०—अथ जन्मभूमिप्रयुक्तस्नेहेन निर्गमनकाले शिष्टाचारपरिप्राप्ततया च स्वदेशमापृच्छति स्वस्वरूपगोपनाय—विशालानिति । यात्वा तदन्तं गत्वा ॥ १ ॥

रा० टी०—सूतसंभाषणानन्तरकालिकं वृत्तमाह—विशालानित्यादिभिः । विशालान्विस्तीर्णान्रम्यान्कोशलान्यात्वा तदन्तं प्राप्य अयोध्याभिमुखः अभिमुखो रामः वाक्यमब्रवीत् ॥१॥

गो० टी०—विशालानिति । कोसलान् यात्वा अन्तपर्यन्तदक्षिणकोसलान् यात्वेत्यर्थः ॥ १ ॥

२ ] ति० टी०—हे पुरि श्रेष्ठे ! त्वां त्वत्संबन्धिदैवतानि च आपृच्छे प्रार्थयामि ॥ २ ॥

रा० टी०—तद्वाक्यमेवाह—आपृच्छे इति । पुरि श्रेष्ठे सर्वोत्कृष्टे हे पुरि! त्वां यानि दैवतानि त्वां पालयन्ति रक्षन्ति यानि च आवसन्ति भवत्प्रीत्या नित्यं तिष्ठन्ति तानि च आपृच्छे कथयामि ॥ २ ॥

---

१ कृतमिति गो. पाठः । २ ऽभिमुख इति गो. पाठः । ३ आत्मनेपदमत्र युक्तं भाति ।

निवृत्तवनवासस्त्वामनृणो जगतीपतेः । पुनर्द्रक्ष्यामि मात्रा च पित्रा च सह संगतः ॥ ३ ॥
ततो रुचिरताम्राक्षो भुजमुद्यम्य दक्षिणम् । अश्रुपूर्णमुखो दीनोऽब्रवीज्जानपदं जनम् ॥ ४ ॥
अनुक्रोशो दया चैव यथार्हं मयि वः कृतः । चिरं दुःखस्य पापीयो गम्यतामर्थसिद्धये ॥ ५ ॥
तेऽभिवाद्य महात्मानं कृत्वा चापि प्रदक्षिणम् । विलपन्तो नरा घोरं व्यतिष्ठंश्च क्वचित्क्वचित् ॥ ६ ॥
तथा विलपतां तेषामतृप्तानां च राघवः । अचक्षुर्विषयं प्रायाद्यथार्कः क्षणदामुखे ॥ ७ ॥
ततो धान्यधनोपेतान्दानशीलजनाञ्छिवान् । अकुतश्चिद्भयान्रम्यांश्चैत्ययूपसमावृतान् ॥ ८ ॥
उद्यानाम्रवणोपेतान्संपन्नसलिलाशयान् । तुष्टपुष्टजनाकीर्णान्गोकुलाकुलसेवितान् ॥ ९ ॥

गो० टी०—निर्गमनावसरे शिष्टाचारप्राप्तस्य पुरदेवतानमस्कारस्य कार्यसंकटेनाकृतत्वादिदानीमयोध्याराज्यसीमान्ते स्थित्वा आरब्धस्य चतुर्दशवर्षावधिकव्रतस्य निर्विघ्नपरिसमाप्त्यर्थं पुरदेवतानमस्कारपूर्वकमभ्यनुज्ञां प्रार्थयते—आपृच्छ इत्यादिना । यानीति तान्यप्यापृच्छ इत्यर्थसिद्धम् ॥ २ ॥ ३ ॥

३ ] ति० टी०—प्रार्थनाप्रकारमाह—निवृत्तेति ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—निवृत्तेति । निवृत्तवनवासः चतुर्दशवर्षनियमितवनवासान्निवृत्तः अत एव जगतीपतेः पितुः अनृणः आज्ञापितकरणेन तदृणरहितः त्वां दैवतसहितभवतीं पुनर्द्रक्ष्यामि एतेन भवत्यापि पित्रादिसमीपे गन्तव्यमिति सूचितं तेन केनचिद्रूपेण सापि सहैवागतेति व्यक्तं तेन तस्याः कामचारगमनकर्त्रीत्वं व्यञ्जितम् ॥ ३ ॥

४ ] ति० टी०—जानपदं जनं स्वदर्शनार्थं तत्रागतं तेषामश्रुपूर्णमुखत्वाल्लोकव्यवहारानुसारेण नट इव स्वयमप्यश्रुपूर्णमुखः ॥ ४ ॥

रा० टी०—तत इति । ततः अयोध्याज्ञापनानन्तरं रुचिरताम्रे स्वाभाविकस्वच्छारुणे अक्षिणी नेत्रे यस्य सः अश्रुपूर्णमानन्दजलव्याप्तं मुखं यस्य सः अदीनः नित्यं दीनत्वाभावविशिष्टः रामः जानपदं जनमब्रवीत् ॥ ४ ॥

गो० टी०—तत इति । भुजोद्यमनं रथवेगेन दूरगमनात् अश्रुपूर्णमुखत्वं तदश्रुदर्शनात् जनं दर्शनार्थमागतम् ॥ ४ ॥

५ ] ति० टी०—अनुक्रोश आदरोऽनुतापो वा दया कारुण्यम् । यथायोग्यं मयि वो युष्माकम् युष्माभिरिति यावत् कृतः कृता च दुःखस्य चिरमनुभव इति शेषः । पापीयोऽशोभनम् अतो युष्माभिर्गम्यताम् वयमप्यर्थसिद्धये पित्रनुज्ञातार्थसिद्धयेऽवतारप्रयोजनार्थसिद्धय इति इत्थम् गच्छाम इति शेषः । व्याख्यानान्तरं स्वप्रयोजकत्वान्नोक्तम् ॥ ५ ॥

रा० टी०—तद्वचनमेवाह—अनुक्रोश इति । यथार्हं यथायोग्यमपि अनुक्रोश आदरः दया च कृतः कृता लिङ्गविपरिणामेनान्यत्राप्यन्वयः । अतः अर्थसिद्धये स्वस्वकार्यनिर्वर्तनाय गम्यताम् । ननु सहगमने का क्षतिरित्यत आह—दुःखस्य चिरं विलम्बः पापीयः न युक्तमित्यर्थः । एतेन सहगमने भवतां मद्गमनादिजनितः खेदातिशयो भविष्यतीति सूचितम् ॥ ५ ॥

गो० टी०—अनुक्रोश इति । अनुक्रोशः आदरः दया अनुकम्पा यथार्हं स्वामित्वानुगुणं वः युष्माभिः कृतः कृता चेत्यपि द्रष्टव्यम् दुःखस्य अनुभूयमानस्य दुःखस्य चिरं चिरकालविशिष्टत्वं पापीयः अशोभनं मद्दर्शने भवतां दुःखमभिवर्धते अतो गम्यताम् अर्थसिद्धये गृहकृत्यादिकरणाय ॥ ५ ॥

६ ] ति० टी०—त एवं रामेण बोधिताः ॥ ६ ॥

रा० टी०—ते इति । ते रामेण निवारिताः नराः घोरं विलपन्तः विविधं कथयन्तः क्वचित्क्वचिद्व्यतिष्ठन् स्थितियोग्यस्थलाविचारेणैवातिष्ठन्नित्यर्थः ॥ ६ ॥

गो० टी०—त इति । व्यतिष्ठन्त रामदर्शनाशया शीघ्रं न जग्मुरित्यर्थः ॥ ६ ॥

७ ] ति० टी०—अतृप्तानां दर्शनतृप्तिरहितानाम् क्षणदामुखे सायंकालेऽर्को यथा तथाचक्षुर्विषयं देशं गतः ॥ ७ ॥

रा० टी०—तथेति । अतृप्तानां रामदर्शनहेतुकतृप्तिरहितानामत एव तथा तेन प्रकारेण विलपतामेषां जनानामचक्षुर्विषयं चक्षुर्गतिरहितदेशं राघवः प्रायात् तत्र दृष्टान्तः क्षणदामुखे सायंसमये अर्को यथा ॥ ७ ॥

गो० टी०—तथेति । विलपतामित्यनादरे षष्ठी अचक्षुर्विषयं चक्षुर्विषयताभावम् क्षणदामुखे निशामुखे ॥ ७ ॥

८ ] ति० टी०—तदेवाह वाल्मीकिः—तत इति । दानशीला जना येषु तान् चैत्यैर्देवताधिष्ठानवृक्षैर्यूपैश्च समावृतान्॥८॥

रा० टी०—तत इति । धान्यधनैः उपेतान्युक्तान्दानशीलजनान्दानिजनविशिष्टानत एव शिवान्मङ्गलविशिष्टानकुतश्चिद्भयान् कुतश्चिद्भयरहितानत एव रम्यान् चैत्ययूपसमावृतान् चैत्याः देवाधिष्ठितवृक्षादयः यूपाः यज्ञस्तम्भास्तैर्युक्तान्॥८॥

गो० टी०—दुस्त्यजामपि राज्यश्रियं तृणीकृत्य गतवान् राम इति द्योतयितुमृषिः कोसलानभिवर्णयति—तत इत्यादिना । धनधान्ययोः प्रयोजनमाह दानेति । चैत्ययूपसमावृतान् चैत्यानि देवतायतनानि यूपाः सर्वतोमुखादियागप्रख्यापकाः यूपाकारत्वेन स्थापिताः स्तम्भाः उद्यानानि पुष्पवाटिकाः संपन्नाः संपूर्णाः गोकुलैराकुलं निबिडं यथा भवति यथा सेवितान् नरेन्द्राणां लक्षणीयान् एकैकशो नगरसदृशत्वेन लक्षयितुं योग्यान् कोसलान् कोसलदेशस्थग्रामान् ॥ ८—१० ॥

९ ] ति० टी०—गोकुलैराकुलतया सेवितान् ॥ ९ ॥

१ र्राघवेति गो. पाठः । २ व्यतिष्ठन्तेति गो. पाठः ।

रक्षणीयान्नरेन्द्राणां ब्रह्मघोषाभिनादितान् । रथेन पुरुषव्याघ्रः कोसलानत्यवर्तत ॥ १० ॥
मध्येन मुदितं स्फीतं रम्योद्यानसमाकुलम् । राज्यं भोज्यं नरेन्द्राणां ययौ धृतिमतां वरः ॥ ११ ॥
तत्र त्रिपथगां दिव्यां शीततोयामशैवलाम् । ददर्श राघवो गङ्गां रम्यामृषिनिषेविताम् ॥ १२ ॥
आश्रमैरविदूरस्थैः श्रीमद्भिः समलंकृताम् । कालेऽप्सरोभिर्हृष्टाभिः सेविताम्भोह्रदां शिवाम् ॥ १३ ॥
देवदानवगन्धर्वैः किंनरैरुपशोभिताम् । नागगन्धर्वपत्नीभिः सेवितां सततं शिवाम् ॥ १४ ॥
देवाक्रीडशताकीर्णां देवोद्यानयुतां नदीम् । देवार्थमाकाशगतां विख्यातां देवपद्मिनीम् ॥ १५ ॥
जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम् । क्वचिद्वेणीकृतजलां क्वचिदावर्तशोभिताम् ॥ १६ ॥

---

रा० टी०—उद्यानाम्रवणोपेतामुद्यानैः पुष्पवृक्षादिनिर्मितवाटिकाविशेषैः आम्रवनैश्च उपेतान्युक्तान्संपन्नाः अतिरमणीयाः सलिलाशयाः येषु तानत एव तुष्टपुष्टजनैः आकीर्णान्व्याप्तान्गोकुलाकुलसेवितान् गवां कुलैः गवादिभिः गव्यामकुलैः गवयमहिष्यादिभिः सेवितान् ॥ ९ ॥

१० ] ति० टी०—नरेन्द्राणां रक्षणीयान् ग्रामश इति शेषः । नरेन्द्ररक्षणयोग्यैकैकग्रामान् इतरनरेन्द्रराज्यतुल्यैकैकग्रामानिति यावत् ॥ १० ॥

रा० टी०—ब्रह्मघोषैः वेदनादैः अभिनादितानत एव नरेन्द्राणां रक्षणीयान्कोशलानत्यवर्तत । श्लोकत्रयमेकान्वयि ॥ १० ॥

११ ] ति० टी०—मध्येन मध्यगत्या नरेन्द्राणामितरेषां भोज्यं राज्यं देशं ययौ स्वदेशत्वाभावेन तज्जनानुयानशङ्काभावाच्छनैर्देशसौभाग्यं पश्यन्नगमदित्यर्थः ॥ ११ ॥

रा० टी०—मध्येनेति । मुदितं स्फीतं स्वच्छं नरेन्द्राणां खण्डमण्डलेश्वराणां भोज्यं राज्यं मध्येन मध्यगतमार्गेण ययौ ॥ ११ ॥

गो० टी०—मध्येनेति । मध्येन मार्गेण भोग्यस्यापि राज्यस्य त्यागमृषिर्विस्मयते—धृतिमतां वर इति ॥ ११ ॥

१२ ] ति० टी०—तत्रायोध्याराज्याद्दक्षिणराज्ये ॥ १२ ॥

रा० टी०—तत्रेति । तत्र तस्मिन् समये त्रिपथगां त्रयः स्वर्गमृत्युपाताललोका एव पन्थानः तैर्गच्छति तां दिव्यां प्राकृतविलक्षणां शिवतोयां परमकल्याणप्रदजलविशिष्टामशैवलां शैवालरहिताम् ऋषिभिर्निषेवितामत एव रम्यां मनोहरां गङ्गां ददर्श ॥ १२ ॥

गो० टी०—तत्रेत्यादि । तत्र कोसलाद्दक्षिणदेशे त्रिभिः पथिभिर्गच्छतीति त्रिपथगा तां स्वर्गमर्त्यपाताललोकगामिनीमित्यर्थः । शिवतोयाम् अच्छतोयाम् ॥ १२ ॥

१३ ] ति० टी०—काले क्रीडाकाले सेविता अम्भःपूर्णह्रदा यस्यां ताम् ॥ १३ ॥

रा० टी०—आश्रमैरिति । आश्रमैः सिद्धमुन्यादिगृहैः समलंकृतां काले स्नानादिसमये हृष्टाभिः अप्सरोभिः सेविताम्भोह्रदामम्भःपूर्णह्रदविशिष्टां शिवां शिवसंबन्धिनीम् ॥ १३ ॥

गो० टी०—आश्रमैरित्यादि । श्रीमद्भिः धर्मसमृद्धिमद्भिः काले क्रीडाकाले उचितकाले वा सेवितानि प्राप्तानि अम्भांसि येषां तादृशा ह्रदाः यस्यां सा शिवां क्रीडार्थं सेवनेऽपि पावनाम् ॥ १३ ॥

१४ ] ति० टी०—नागपत्नीभिर्गन्धर्वपत्नीभिश्च सेविताम् । सततं शिवामित्यनेन महानिशायामपि तस्यां स्नानाद्यधिकारः सूचितः । तदुक्तं भारते—'भुक्त्वा वा यदि वाऽभुक्त्वा रात्रौ वा यदि वा दिवा । न कालनियमः कश्चिद्गङ्गां प्राप्य सरिद्वराम् ॥' इति ॥ १४ ॥

रा० टी०—देवादिभिः किन्नरैश्च उपशोभितां नागगन्धर्वपत्नीभिः सततं सेवितां शिवां शिवप्रापिकाम् ॥ १४ ॥

गो० टी०—नानागन्धर्वपत्नीभिः गन्धर्वाणां नानात्वं देवगन्धर्वमनुष्यगन्धर्वभेदात् सेवितां शिवामिति पूर्ववत् सेवितृभेदेऽप्येकरूपपावनत्वकथनान्नानर्थक्यम् ॥ १४ ॥

१५ ] ति० टी०—देवानामाक्रीडैः क्रीडापर्वतैर्हिमवत उभयतीरवर्तिभिर्युक्तां । देवार्थं देवानां स्नानपानादिप्रयोजनाय तत्प्रार्थनयाऽऽकाशगताम् देवपद्मिनीं देवभोग्यहेमपद्मवतीम् ॥ १५ ॥

रा० टी०—देवाक्रीडानां देवाक्रीडाविशिष्टपर्वतानां शतैः आकीर्णां तीरद्वये व्याप्तां देवोद्यानैः देवनिर्मितपुष्पादिवृक्षवाटिकाभिर्युतां नदीं सर्वनदीमनोरथपूरिकां सर्वनदीस्वामिनीमित्यर्थः । देवार्थं क्रीडार्थमाकाशगमां शिलासंघट्टोत्थितजलकणिकाद्वारा आकाशगमनकर्त्रीं विख्यातां सकलभुवनप्रसिद्धां देवपद्मिनीं देवभोग्यपद्मविशिष्टाम् ॥ १५ ॥

गो० टी०—देवाक्रीडाः देवार्हक्रीडापर्वताः देवोद्यानानि देवार्होद्यानानि देवार्थमाकाशगमां देवपूजनार्थमाकाशं प्राप्तां देवपद्मिनीं देवार्हाम्भोजयुक्तामित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—शिलामयस्थले यो जलाघातशब्दस्तद्रूपाट्टहासेनोग्राम् । पाठान्तरे जलेनाधूताः प्रक्षालिता गुहाग्रा गुहाग्राणि यया ताम् फेनरूपो यो निर्मलो हासो मन्दहासस्तद्वतीम् उत्तमादिना स्त्रीरूपेण वर्णनं प्रवाहरूपाया गङ्गाया इति बोध्यम् । वेणीकृतजलां द्वित्रिजलसंयोगात् ॥ १६ ॥

रा० टी०—जलाघाताट्टहासोग्रां जलानां शिलासु पततां यानां यः आघातः अतिसंघर्षः तेन जातो योऽट्टहासः अट्टहाससदृशशब्दः तेन उग्रां फेननिर्मलहासिनीं फेन एव निर्मलहासोऽस्त्यस्याः तां क्वचिद्देशे वेणीकृतजलामनेकविधतिर्यगादि-

---

१ रक्षणीयानिति गो. पाठः । २ भोग्यमिति गो. पाठः । ३ शिवेति गो. पाठः । ४ पुण्यामिति गो. पाठः । ५ सरोभिरिति गो. पाठः ।
६ क्रीडास्थलाकीर्णामिति गो. पाठः । ७ उद्यानशतयुतामिति गो. पाठः । ८ गमामिति गो. रा. पाठः ।

कचित्स्तिमितगम्भीरां कचिद्वेगसमाकुलाम् । कचिद्गम्भीरनिर्घोषां कचिद्भैरवनिःस्वनाम् ॥ १७ ॥
देवसंघाप्लुतजलां निर्मलोत्पलसंकुलाम् । कचिदाभोगपुलिनां कचिन्निर्मलवालुकाम् ॥ १८ ॥
हंससारससंघुष्टां चक्रवाकोपशोभिताम् । सदामत्तैश्च विहगैरभिपन्नामनिन्दिताम् ॥ १९ ॥
कचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् । कचित्फुल्लोत्पलच्छन्नां कचित्पद्मवनाकुलाम् ॥ २० ॥
कचित्कुमुदखण्डैश्च कुड्मलैरुपशोभिताम् । नानापुष्परजोध्वस्तां समदामिव च कचित् ॥ २१ ॥
व्यपेतमलसंघातां मणिनिर्मलदर्शनाम् । दिशागजैर्वनगजैर्मत्तैश्च वरवारणैः ॥ २२ ॥
[6]देवराजोपवाह्यैश्च संनादितवनान्तराम् । प्रमदामिव यत्नेन भूषितां भूषणोत्तमैः ॥ २३ ॥
फलपुष्पैः किसलयैर्वृतां गुल्मैर्द्विजैस्तथा । [8]विष्णुपादच्युतां दिव्यामपापां पापनाशिनीम् ॥ २४ ॥

---

गमनेन वेणीकृतं जलं यया सा तामावर्तैः अनेकविधभ्रमितजलैः शोभिताम् ॥ १६ ॥

गो० टी०—गङ्गां स्त्रीत्वेन रूपयति—जलाघातेत्यादिना। जलाघातः शिलासु जलपतनं तेन तच्छब्दो लक्ष्यते स एवाट्टहासः सघोषहासः तेनोग्रां फेनमेव निर्मलहासः तद्वतीं वेणीकृतजलां निम्नोन्नतशिलापतनेन वेण्याकारतया कृतजलाम्॥१६॥

१७ ] ति० टी०—स्तिमिता निश्चला सा चासौ गम्भीरा च तां गम्भीरनिर्घोषां मृदङ्गादिवत्, भैरवनिःस्वनाम् अशन्यादिवत् ॥ १७ ॥

रा० टी०—स्तिमितगम्भीराम् स्तिमिता निश्चला सा एव गम्भीरेति कर्मधारयः तां वेगेन समाकुलां व्याप्तां गम्भीरः निर्घोषः शब्दो यस्याः सा तां भैरवो भयप्रदः निःस्वनो यस्याः सा ताम् ॥ १७ ॥

गो० टी०—कचिदगाधस्थले स्तिमितगम्भीरां निश्चलगम्भीरां गम्भीरनिर्घोषो मृदङ्गादेरिव भैरवो निःस्वनोऽशन्यादेरिव १७

१८–२० ] ति० टी०—आभोगपुलिनां विशालसैकताम् ॥ १८–२० ॥

रा० टी०—देवसंघैः आप्लुतं स्नातं जलं यस्याः सा तां निर्मलान्येवोत्पलानि तैः संकुलां व्याप्ताम् आभोगेन जलपरिपूर्णतया विशिष्टं पुलिनं यस्याः सा ताम् ' आभोगः परिपूर्णता ' इत्यमरः । निर्मला स्वच्छा वालुका यस्यां ताम् ॥ १८ ॥

गो० टी०—आभोगपुलिनां परिपूर्णतायुक्तपुलिनां विशालसैकतामित्यर्थः । 'आभोगः परिपूर्णता' इत्यमरः । निर्मलवालुकां निर्मलसिकताम् ॥ १८ ॥

रा० टी०—हंसादिभिः संघुष्टामभिपन्नां व्याप्तामनिन्दितां स्वजननिन्दानिवर्तिकाम् ॥ १९ ॥

गो० टी०—सारसो हंसविशेषः विहगैः हंसादिभिन्नैः पक्षिविशेषैः ॥ १९ ॥

रा० टी०—कचित्तीररुहैः तीरजनितैः, फुल्लान्येवोत्पलानि तैः छन्नां, पद्मवनैः कमलजातिविशेषसमूहैः आकुलाम् ॥ २० ॥

गो० टी०—कचित् फुल्लोत्पलच्छन्नामिति पूर्वमुत्पलशोभोक्ता अत्र तच्छन्नत्वमिति विशेषः कुड्मलैः कह्लारादिकुड्मलैः ॥२०॥

२१ ] ति० टी०—कुड्मलरूपैः कुमुदखण्डैः समूहैरित्यर्थः। पुष्परजसा ध्वस्तां संयुक्तां समदामिव मदसहितां प्रमदामिव स्थिताम् ॥ २१ ॥

रा० टी०—कुड्मलैः कलिकाभिः कुमुदखण्डैः कुमुदसमूहैः उपशोभितां नानापुष्परजोभिर्ध्वस्तां व्याप्तामित्यर्थः । कचित्प्रयागादौ समदां स्वेच्छयोत्पथगत्यादिभिः मदसहितामिव॥२१॥

गो० टी०—नानापुष्परजोभिः ध्वस्तां वर्णान्तरं प्राप्तामित्यर्थः । एवं रक्तवर्णत्वात् समदामिव स्थितां व्यपेतमलसंघातामत एव मणिनिर्मलदर्शनाम् ॥ २१ ॥

२२ ] ति० टी०—व्यपेतो दूरीकृतो मलसंघातः पापसंघातो यया ताम् । 'व्यपेतजलसंघाताम्' इति पाठे तीरे कूरप्रवाहरहितामित्यर्थः । मणिर्मुक्तामणिः अनेनातिस्वच्छशुभ्रजलत्वं दिग्गजाद्यालोडनेऽपि निर्मलत्वमित्यतिशयोक्तिरलंकारः वरवारणैरुत्तमगजैः ॥ २२ ॥

रा० टी०—व्यपेति । व्यपेतो निःशेषतो निवर्तितो मलसंघातः जनानां पापसमूहो यया तां मणिनिर्मलदर्शनां रजोसंबन्धाभावे शिलाघाते वा मणिवन्निर्मलं स्वच्छं दृश्यते सा तां दिशागजैः दिग्गजजातीयगजैः मत्तैर्वनगजैश्च वरवारणैः ग्रामीणोत्तमगजैश्च ॥ २२ ॥

गो० टी०—वैडूर्यमणिवन्निर्मलदर्शनां वरवारणैः राजगजैः देवोपवाह्यैः देवानां वाहनभूतैः ॥ २२ ॥

२३ ] ति० टी०—देवराजानस्ते उपवाह्या येषां तैश्च वरगजैः । 'औपवाह्यैः' इति पाठे तेषां क्रीडार्थयानभूतैरित्यर्थः ॥ २३ ॥

रा० टी०—देवराज इन्द्रः उपवाह्यो येषां तैः ऐरावतजातीयगजैरित्यर्थः । सन्नादितवनान्तराम् सन्नादितं वनस्यारण्यस्य जलस्य वा अन्तरं मध्यं समीपदेशो वा यस्याः तां जलवाची वनशब्दः कोशे प्रसिद्धः भूषणोत्तमैः भूषितां प्रमदामिव ॥२३॥

२४ ] ति० टी०—भूषणान्येवाह—फलेत्यादि । द्विजैः

---

१ जलाकुलामिति गो. पाठः । २ शोभितामिति गो. पाठः । ३ कूजितामिति गो. पाठः । ४ संनादितान्तरामिति गो. पाठः । ५ उपेति गो. पाठः । ६ देवोपवाह्यैश्च मुहुरिति गो. पाठः । ७ फलैरिति गो. पाठः । ८ एतदाद्यर्धयोर्व्यत्यासेन गो. पाठः । ९ राजानस्ते इति युक्तमिति भाति ।

शिंशुमारैश्च नक्रैश्च भुजंगैश्च [1]समन्विताम् । [2]शंकरस्य जटाजूटाद्भ्रष्टां सागरतेजसा ॥ २५ ॥
समुद्रमहिषीं गङ्गां सारसक्रौञ्चनादिताम् । आससाद महाबाहुः शृङ्गवेरपुरं प्रति ॥ २६ ॥
तामूर्मिकलिलावर्तामन्ववेक्ष्य महारथः । सुमन्त्रमब्रवीत्सूतमिहैवाद्य वसामहे ॥ २७ ॥
अविदूरादयं नद्या बहुपुष्पप्रवालवान् । सुमहानिङ्गुदीवृक्षो वसामोऽत्रैव सारथे ॥ २८ ॥
[3]प्रेक्षामि सरितां श्रेष्ठां संमान्यसलिलां शिवाम् । देवमा[4]नवगन्धर्वमृगप[5]न्नगपक्षिणाम् ॥ २९ ॥
लक्ष्मणश्च सुमन्त्रश्च बाढमित्येव राघवम् । उक्त्वा तमिङ्गुदीवृक्षं तदोपययतुर्हयैः ॥ ३० ॥
रामोऽभियाय तं रम्यं वृक्षमिक्ष्वाकुनन्दनः । रथादवतरत्तस्मात्सभार्यः सहलक्ष्मणः ॥ ३१ ॥

---

पक्षिभिः । विष्णुपादस्पर्शेन ब्रह्मलोकाद्ब्रह्माण्डबाह्यजलदेशाच्च च्युतामपापां कर्मनाशादिवत्केनापि प्रकारेण पापजनकत्वाभाववतीमिति कतकः तन्न, पापजनकत्वसंभावनाया एवाभावात् वस्तुतोऽपापां पापदजन्तुरहिताम् । तत्र हेतुः—पापनाशिनीं दर्शनमात्रेण तादृशीम् ॥ २४ ॥

रा० टी०—किसलयैः नवीनपत्रैः द्विजैः विलक्षणपक्षिभिः वृताम् विष्णुपादच्युतां विष्णोर्महाविष्णोः पादं स्थानं साकेतान्तर्वर्तिमहावैकुण्ठः तस्माच्च्युतां प्रथमं निर्गतामत एव बालकाण्डोक्तहिमवत्प्रभवत्वं न विरुध्यते अत एव दिव्यां प्राकृतविलक्षणजनैरपि सेविताम् अर्शआद्यजन्तः । अत एव अपापां सर्वकालं पापसंसर्गशून्याम् ॥ २४ ॥

गो० टी०—फलैः पुष्पैः किसलयैरेव भूषणोत्तमैरिति व्यस्तरूपकं, यद्वा फलपुष्पादिभिर्वृतामत एव भूषितां प्रमदामिव स्थितामिति वार्थः । द्विजैः पक्षिभिः ॥ २३ ॥

२५ ] ति० टी०—'शिंशुमारो जलकपिः' इति वैजयन्तीकोशकर्ता । नक्रैर्मकरैः, सागरतेजसा भगीरथतपसा ॥ २५ ॥

रा० टी०—शिंशुमारैर्जलकपिभिः 'शिंशुमारो जलकपिः' इति वैजयन्ती । नक्रैः मकरैः सागरतेजसा भगीरथतपोबलेन शङ्करस्य जटाजूटाद्भ्रष्टाम् ॥ २५ ॥

गो० टी०—शिंशुमारैः नक्रविशेषैः, यद्वा शिंशुमारैः जलकपिभिः 'शिंशुमारस्त्वम्बुकपिः' इति वैजयन्ती । अत्र विष्णुपादच्युतामित्युक्त्या बालकाण्डे हिमवत्प्रभवत्वं तत्र प्रादुर्भावमात्रेणेति ज्ञेयम् ॥ २४ ॥

२६ ] ति० टी०—शृङ्गवेरपुरं प्रस्थितामिति शेषः ॥ २६ ॥

रा० टी०—सारसादिनादितां शृङ्गवेरपुरं प्रति शृङ्गवेरपुरसमीपे विद्यमानां गङ्गां महाबाहुः राम आससाद ॥ २६ ॥

गो० टी०—सारसक्रौञ्चनादिताम् सरो निवासो येषां ते सारसाः पक्षिविशेषाः "सोऽस्य निवासः" इत्यण् । अतो हंससारससंघुष्टामित्यनेन न पौनरुक्त्यं शृङ्गवेरपुरं प्रति गङ्गामाससाद शृङ्गवेरपुरं प्रति गच्छन् गङ्गामाससादेत्यर्थः, यद्वा शृङ्गवेरपुरं प्रति शृङ्गवेरपुरसमीपे गङ्गामाससादेत्यर्थः ॥ २५ ॥

२७] ति० टी०—ऊर्मिभिः कलिलाः संपृक्ता आवर्ता यस्यां सा ताम् इह गङ्गातीरे ॥ २७ ॥

रा० टी०—तामिति । ऊर्मिभिः लहरीभिः कलिला व्याप्ता आवर्ता यस्या तामन्ववेक्ष्य अवलोक्य अद्य इहैव वसामहे इति सुमन्त्रमब्रवीत् ॥ २७ ॥

गो० टी०—तामिति । ऊर्मिकलिलावर्ताम् उर्मिमिश्रावर्ताम् ॥ २६ ॥

२८ ] ति० टी०—नद्यविदूरत्वं बहुपुष्पप्रवालत्वे हेतुः इङ्गुदी तापसतरुः ॥ २८ ॥

रा० टी०—स्थलविशेषं निर्दिशन्नाह—अविदूरादिति । प्रवालं नवीनपत्रमविदूरात्समीपे सुमहान् इङ्गुदीवृक्षः तापसतरुः अत्रैव वसामः ॥ २८ ॥

गो० टी०—अविदूरादिति । अविदूरात्समीपे इङ्गुदीवृक्षस्तापसतरुः ॥ २७ ॥

२९ ] ति० टी०—देवादीनां संमान्यं सलिलं यस्यास्ताम् अनेन गङ्गाजलं प्रवाहादन्यत्रानीतमपि सकलपापक्षयसमर्थमिति ध्वनितम् ॥ २९ ॥

रा० टी०—प्रेक्षामीति । देवादिभिः संमान्यं पूजनीयं सलिलं यस्याः तां सरितां श्रेष्ठां प्रेक्षामि इहस्थ एव पश्यामीत्यर्थः एतेन वासयोग्यत्वं सूचितम् ॥ २९ ॥

गो० टी०—द्रक्ष्याम इति । संमान्येत्यस्य देवेत्यादिना संबन्धः ॥ २८ ॥

३० ] ति० टी०—तत्र गङ्गातीरे स्थितमिङ्गुदीवृक्षं हयैर्ययतुः ॥ ३० ॥

रा० टी०—लक्ष्मण इति । बाढमतिशोभनमित्येवोक्त्वा तं राघवमिङ्गुदीवृक्षमुपययतुः प्रापयामासतुः ॥ ३० ॥

गो० टी०—लक्ष्मण इति । बाढमित्यङ्गीकारे ॥ २९ ॥

३१ ] ति० टी०—तमभियाय तत्समीपं गत्वेति यावत् अवतरदवातरत् ॥ ३१ ॥

रा० टी०—राम इति । अभियाय प्राप्य रथात् अवतरदवातरत् आगमशास्त्रस्यानित्यत्वादड्विरहः ॥ ३१ ॥

---

१ निषेवितामिति गो. पाठः । २ अर्धमिदं गो. नास्ति । ३ द्रक्ष्याम इति गो. पाठः । ४ दानवेति गो. पाठः । ५ मानुषेति गो. पाठः ।

सुमन्त्रोऽप्यवतीर्याथ मोचयित्वा हयोत्तमान् । वृक्षमूलगतं राममुपतस्थे कृताञ्जलिः ॥ ३२ ॥
तत्र राजा गुहो नाम रामस्यात्मसमः सखा । निषादजात्यो बलवान्स्थपतिश्चेति विश्रुतः ॥ ३३ ॥
स श्रुत्वा पुरुषव्याघ्रं रामं विषयमागतम् । वृद्धैः परिवृतोऽमात्यैर्ज्ञातिभिश्चाप्युपागतः ॥ ३४ ॥
ततो निषादाधिपतिं दृष्ट्वा दूरादुपस्थितम् । सह सौमित्रिणा रामः समागच्छद्गुहेन सः ॥ ३५ ॥
तमार्तः संपरिष्वज्य गुहो राघवमब्रवीत् । यथायोध्या तथेदं ते राम किं करवाणि ते ॥ ३६ ॥
ईदृशं हि महाबाहो कः प्राप्स्यत्यतिथिं प्रियम् । ततो गुणवदन्नाद्यमुपादाय पृथग्विधम् ॥ ३७ ॥
अर्घ्यं चोपानयच्छीघ्रं वाक्यं चेदमुवाच ह । स्वागतं ते महाबाहो तवेयमखिला मही ॥ ३८ ॥

---

गो० टी०—राम इति । अभियाय प्राप्य ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—उपतस्थे समीपे सेवार्थं प्राप्तः ॥ ३२॥

रा० टी०—सुमन्त्र इति । उपतस्थे सेवार्थं समीपं प्राप ॥ ३२ ॥

३३ ] ति० टी०—आत्मसमः प्राणसमः निषादजात्यस्तज्जातौ भवः बलवान्प्राणतः सेनातश्च स्थपतिर्निषादाधिपतिः । 'निषादजात्यः स्थपतिः' इत्यनेन निषादस्थपतिं याजयेदित्यत्र कर्मधारय इति सूचितम् । यद्यपीदृशसख्यं हीनप्रेष्यं हीनसख्यमित्यादिनोपपातकेषु गणितम्, तथापि तद्विप्रविषयं राज्ञामाटविकबलेन प्रयोजनवत्त्वात् । षड्विधबलसंग्रहस्य राजधर्मत्वाच्च तत्सख्यमेवेति दिक् । अत्रेदं बोध्यम्—निषादगुहविषये 'रामस्यात्मसमः सखा' इत्येवं वदता वाल्मीकिना रामसमत्वरामसमानख्यातित्वोक्त्या भगवद्भक्तत्वेन निषादत्वेऽपि पूर्वकृतश्रवणादिमत्त्वेन तस्य तत्त्वज्ञत्वं सूचितम् ॥ ३३ ॥

रा० टी०—तत्रेति । तत्र तस्मिन्देशे आत्मसमः निखिलधृतिमानातिधैर्यवानित्यर्थः बलवान् निषादजात्यः निषादजातीयः स्थपतिः अधीशः इति विश्रुतः ख्यातः गुहो नाम गुहनामा राजा दशरथेन आज्ञप्त इति शेषः रामस्य सखा आसीदिति शेषः । ननु 'हीनप्रेष्यं हीनसख्यं हीनगेहनिवेशनम्' इत्यादिना हीनजातिसख्यस्य उपपातकेषु परिगणनात्प्रशस्तकुले प्रसूतः परमधर्मज्ञो राजा दशरथः रामश्च हीनजातिनिषादेन सह सख्यं कथं कृतवान् इति तु न भ्रमितव्यम् । निषादानां भगवदवतारभूतपृथुराजजनकब्राह्मणमथितवेनशरीरोद्भवत्वेन क्षत्रियत्वादत एव निषादस्थपत्याधिकरणे "निषादस्थपतिं याजयेत्" इति श्रुत्या निषादस्थपतीनां याजनाधिकारः संगच्छते । प्रपञ्चितं चैतत् निषादस्थपत्यधिकरणे मीमांसकैः अत एव रामभोजनार्थं निषादकर्तृकोदनानयनं न विरुध्यते । धर्मशास्त्रे हीनप्रकरणे निषादपरिगणनं तु निषादविलोमजातानामिति न विरोधस्तत्र निषादत्वव्यवहारस्तु भाक्त इति दिक् ॥ ३३ ॥

गो० टी०—तत्रेत्यादि । तत्र देशे राजा तद्देशाधिपतिः आत्मसमः प्राणसमः निषादजात्यः निषादजातौ भवः दिगादित्वाद्यत् । बलवान् चतुरङ्गबलवान् स्थपतिः निषादाधिपतिः 'स्थपतिः पुनः स्थापत्येऽधिपतौ तक्षिण' इति वैजयन्ती 'हीनप्रेष्यं हीनसख्यं हीनगेहनिवेशनम्' इत्युपपातकपरिगणितं हीनजातिसख्यं महाकुलप्रसूतस्य रामस्य कथमुपपद्यत इति चेत्सत्यं "निषादस्थपतिं याजयेत्" इति निषादाधिपतेर्यज्ञसंबन्धश्रवणात् अत्यन्तानुचितं न भवतीत्यनुमन्तव्यं वस्तुतस्तु 'न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृ[illegible] सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता जनार्दने' इत्युक्तरीत्या रामभक्तोऽयमत्युत्तम एव, गुहस्य भगवत्प्रियत्वं गुहेन सहितो रामो लक्ष्मणेन च सीतयेति दर्शितम् ॥ ३२ ॥ ३३ ॥

३४ ] ति० टी०—उपागतो रामसमीपं प्राप्तः विषयं स्वदेशम् ॥ ३४ ॥

रा० टी०—स इति । विषयं स्वदेशमागतं प्राप्तं रामं श्रुत्वा वृद्धादिभिः परिवृतः स गुहः उपागतः रामसमीपं प्राप्तः ॥ ३४॥

३५ ] ति० टी०—समागच्छदाश्लेषमालिङ्गनादिना संगतोऽभूत् ॥ ३५ ॥

रा० टी०—तत इति । दूरादुपस्थितं प्राप्तं दृष्ट्वा सौमित्रिणा सह रामः गुहेन समागच्छदालिङ्गनमकरोत् ॥ ३५ ॥

गो० टी०—तत इति । दूरादुपस्थितं दृष्ट्वा समागच्छदित्यनेन प्रत्युत्थानाभिगमनोक्तिः । लक्ष्मणेन सह समागच्छत् लक्ष्मणवत्तस्मिन्भ्रातृत्वबुद्धिमकरोदित्यर्थः । समित्येकीभावे ३५

३६ ] ति० टी०—आर्तो रामीयवल्कलादिधारणदर्शनेन तप्तः । इदमस्मत्पुरम् ॥ ३६ ॥

रा० टी०—तमिति । आर्तः रामदर्शनमन्तरा अतिदुःखी गुहः तं राघवं संपरिष्वज्य अब्रवीत् । तद्वचनमेवाह—हे राम! यथा अयोध्या तव तथा इदं मत्पुरं तव अतः ते किं करवाणि यथेच्छमाज्ञापयेत्यर्थः ॥ ३६ ॥

गो० टी०—तमिति । आर्तः धृतवल्कलदर्शनेन संतप्तः अनेन रामस्य पूर्वमेव मृगयाव्यापारादिना सख्यमस्तीति गम्यते इयमस्मत्पुरी ॥ ३५ ॥ ३६ ॥

३७-३८ ] ति० टी०—ईदृशवचने कारणमाह—ईदृशं हीति । अनेन भगवत्स्वरूपज्ञत्वमात्मनो ध्वनितम् । अन्नाद्यमन्नमोदनस्तदाद्यं भोज्यादीत्यर्थः ॥ ३७ ॥ ३८ ॥

रा० टी०—स्वभाग्यातिशयं बोधयन्नाह—ईदृशमिति । ईदृशमतिमनोहरं प्रियमतिथिं कः प्राप्स्यति न कोऽपीत्यर्थः । अर्घ्यं

---

१ तथेयमिति गो. पाठः । २ क्षिप्रमिति गो. पाठः ।

वयं प्रेष्या भवान्भर्ता साधु राज्यं प्रशाधि नः । भक्ष्यं भोज्यं च पेयं च लेह्यं चैतैदुपस्थितम् ॥ ३९ ॥
शयनानि च मुख्यानि वाजिनां खादनं च ते । गुहमेवं ब्रुवाणं तु राघवः प्रत्युवाच ह ॥
अर्चिताश्चैव हृष्टाश्च भवता सैर्वदा वयम् । ॥ ४० ॥
पद्भ्यामभिगमाच्चैव स्नेहसंदर्शनेन च । भुजाभ्यां साधुवृत्ताभ्यां पीडयन्वाक्यमब्रवीत् ॥ ४१ ॥
दिष्ट्या त्वां गुह पश्यामि ह्यरोगं सह बान्धवैः । अपि ते कुशलं राष्ट्रे मित्रेषु च वैनेषु च ॥ ४२ ॥
यत्त्विदं भवता किंचित्प्रीत्या समुपकल्पितम् । सर्वं तदनुजानामि नहि वर्ते प्रतिग्रहे ॥ ४३ ॥
कुशचीराजिनधरं फलमूलाशनं च माम् । विद्धि प्रणिहितं धर्मे तापसं वनगोचरम् ॥ ४४ ॥
अश्वानां खादनेनाहमर्थी नान्येन केनचित् । एतावतात्र भवता भविष्यामि सुपूजितः ॥ ४५ ॥

---

पृथक्-तत इति । पृथग्विधमनेकप्रकारं गुणवत् स्वादुशीत्रपरिपाकादिगुणविशिष्टमन्नाद्यमोदनादि उपादाय प्रापय्य ३७

गो० टी०-तत इति । आद्यशब्देन पेयादिकमुच्यते पृथग्विधं मांसादिभेदेन बहुविधम् ॥ ३७ ॥

रा० टी०-अर्घ्यमर्घहितजलोपलक्षितपूजनसामग्रीमुपानयत् उवाच च । हकारो हर्षार्थः । अर्धद्वयमेकान्वयि । तद्वचनमेवाह-स्वागतमिति । इयं मम भोग्या मही तवैव ॥ ३८ ॥

गो० टी०-स्वागतमिति । इयं मही अटवीराज्यम् ॥ ३८ ॥

३९ ] ति० टी०-नो राज्यं भक्ष्यादिकं च प्रशाधि स्वीकुरु ॥ ३९ ॥

रा० टी०-अतः भर्ता स्वामी भवानेव वयं प्रेष्या दासाः सर्वं वाक्यं सावधारणं भवतीति न्यायेन एवकारलाभः अतः वः प्रदर्शितं राज्यमुपस्थितभक्ष्यादि च शयनानि शय्याश्च खादनं घासादि च प्रशाधि स्वीकुरु तत्र भक्ष्यमन्नादि, भोज्यं पायसादि, पेयं पानकरसादि, लेह्यं विलक्षणयवाग्वादि चकारेण चूष्यमिक्षुदण्डादि । अर्धचतुष्टयमेकान्वयि ॥ ३९ ॥

गो० टी०-भक्ष्यमिति । भक्ष्यं खाद्यं व्यञ्जनादि भोज्यम् अन्नं, पेयं पानकादि लेह्यं रसायनादि खादनं घासः ॥ ३९ ॥

४० ] ति० टी०-वाजिनां खादनं घासादि महाप्रभुरपि सन्स्वगृहादिह दूरं यत्पद्भ्यामागतोऽसि, यच्च 'तवेयमखिला मही' इत्यनेन स्नेहं दर्शयसि, तेन त्वया वयमर्चिता एव, हृष्टाश्च वयमित्युवाचेत्यर्थः । 'सर्वदा वयमर्चिताः' इत्यनेन मद्यानमेव मे महती पूजा, तच्च सर्वदा तवास्ते इत्यप्यर्थो गर्भितः अत एव वयं त्वयि सदा हृष्टाः ॥ ४० ॥

रा० टी०-गुहमिति । राघवो रामः प्रत्युवाच ॥ ४० ॥

रा० टी०-तत्प्रतिवचनमेवाह-अर्चिता इत्यादिभिः । पद्भ्यामुपानदादिरहितचरणाभ्यामभिगमात् आगमनात् स्नेहसंदर्शनेन च सर्वदा निखिलदानकर्त्रा भवता वयमर्चिताः अत एव हृष्टाः अतिसंतोषं प्राप्ताः ॥ ४१ ॥

गो० टी०-गुहमिति । अर्चितत्वेऽपि केचिन्न तन्मात्रेण तुष्यन्ति न तथा वयमित्याह-हृष्टाश्चेति । स्नेहसंदर्शनेन राज्यं प्रशाधीतिवाक्यकृतेन स्नेहप्रदर्शनेन ॥ ४० ॥

४१ ] ति० टी०-अत एव पुनरालिङ्गति, अत्यन्तप्रेमास्पदत्वं बोधयितुं भुजाभ्यामिति ॥ ४१ ॥

रा० टी०-भुजाभ्यामिति । साधुषु महात्मसु वृत्तं वर्तनं ययोस्ताभ्यां पीडयन् पुनरालिङ्गनं कुर्वन् वाक्यं वचनान्तरमब्रवीत् । वचनान्तरमेवाह-बान्धवैः सह त्वां पश्यामि दिष्ट्या भाग्यमेतत् ॥ ४२ ॥

गो० टी०-भुजाभ्यामिति । साधु पीडयन् सम्यगालिङ्गन् पीनाभ्यामित्यनेन सुखहेतुत्वमुच्यते ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०-वनेषु चेति तन्याटविकत्वाद्वनकुशलप्रश्नः । क्वचित् 'धनेषु' इति पाठः ॥ ४२ ॥

रा० टी०-अपीति । राष्ट्रादौ ते कुशलम् । अपिः प्रश्ने । ...त्समुपकल्पितं प्रापितं तत्सर्वं तु प्रतिजानामि मित्रधनत्वात् ममैवेदं सर्वमिति प्रतिज्ञां करोमि तथापि प्रतिग्रहे राजभोग्यवस्तुग्रहणे न वर्ते अतो न गृह्णामीत्यर्थः । सार्धश्लोक एकान्वयी हिस्तथाप्यर्थकः ॥ ४३ ॥

४३ ] ति० टी०-अनुजानाम्यङ्गीकृत्य ददामि प्रतिग्रहे भोगफलके ॥ ४३ ॥

गो० टी०-यत्त्विति । अनुजानामि मम सर्वं सम्यक् कृतमित्यनुजानामि प्रतिग्रहे न वर्ते प्रतिग्रहधर्मं नाश्रितवानस्मीति भावः ॥ ४३ ॥

४४-४५ ] ति० टी०-धर्मे प्रणिहितं पित्राज्ञापालनलक्षणे धर्मे सावधानम् अत्र तद्दत्तस्याग्रहे प्रतिग्रहेऽप्रतिग्रहीतृत्वरूपधर्मोपन्यासेनान्नभोजनायोग्यत्वे व्रतस्थत्वरूपहेतूपन्यासेन च तदन्नस्य भोज्यायोग्यत्वं सूचयता तस्य तत्त्वज्ञत्वं सूचितम् अन्यथा निषादत्वेनाभोज्यान्नतया तमेव हेतुमुपन्यसेत्, स वा कथं पक्वान्नमाहरेत् एतेन तत्त्वज्ञः सर्वोऽपि भोज्यान्न एवेति ध्वनितम् ॥ ४४ ॥ ४५ ॥

रा० टी०-स्ववृत्तिं बोधयन्नाह-कुशेति । वनगोचरं वनमात्रवसनशीलं तापसं तपोनिरतमत एव धर्मे तापसोचितकर्मणि प्रणिहितमत एव कुशादिधरमत एव फलाद्यशनं मां विद्धि जानीहि अतः अश्वानां खादनेन अश्वकर्तृकभोजनेनैवाहमर्थी नेवापेक्ष्यते इत्यर्थः ॥ ४४ ॥ ४५ ॥

---

१ इदमिति गो. पाठः । २ सर्वथेति गो. पाठः । ३ पीनाभ्यामिति गो. पाठः । ४ धनेष्विति गो. पाठः । ५ अन्नमिति गो. पाठः ।

एते हि दयिता राज्ञः पितुर्दशरथस्य मे । एतैः सुविहितैरश्वैर्भविष्याम्यहमर्चितः ॥ ४६ ॥
अश्वानां प्रतिपानं च खादनं चैव सोऽन्वशात् । गुहस्तत्रैव पुरुषांस्त्वरितं दीयतामिति ॥ ४७ ॥
ततश्चीरोत्तरासङ्गः संध्यामन्वास्य पश्चिमाम् । जलमेवाददे भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥ ४८ ॥
तस्य भूमौ शयानस्य पादौ प्रक्षाल्य लक्ष्मणः । सभार्यस्य ततोऽभ्येत्य तस्थौ वृक्षमुपाश्रितः ॥ ४९ ॥
गुहोऽपि सह सूतेन सौमित्रिमनुभाषयन् । अन्वजाग्रत्ततो राममप्रमत्तो धनुर्धरः ॥ ५० ॥
तथाशयानस्य ततो यशस्विनो[1] मनस्विनो दाशरथेर्महात्मनः ।
अदृष्टदुःखस्य सुखोचितस्य सा तदा व्यतीता[2] सुचिरेण शर्वरी ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

---

गो० टी०—राज्याम्नायपरिग्रहे हेतुं दर्शयति—कुशचीराजिनधरमिति । कुशं पवित्रमेखलादिरूपं चीरं वल्कलम् अजिनं कृष्णाजिनम् धर्मे प्रणिहितं पितृवाक्यपरिपालनादिधर्मे सावधानं वनं गोचरः संचारविषयो यस्य तम् ॥ ४४ ॥

रा० टी०—एतावतेति । एतावता भवदागमनादिनैव सुपूजितो भविष्यामि । अर्धं पृथक्—एते इति । एते अश्वा दयिताः प्रियाः अतः सुविहितैः घासादिना तृप्तिं प्राप्तैः अश्वैः अहमर्चितो भविष्यामि । सार्धश्लोक एकान्वयी ॥ ४६ ॥

गो० टी०—अश्वानामिति अश्वानां खादनेन ग्रासेन अर्थी प्रयोजनवान् अश्वघास एव प्रयोजनमित्यर्थः । अत्र अस्मिन्समये ॥ ४९ ॥

४६ ] ति० टी०—एते अश्वाः ॥ ४६ ॥

गो० टी०—एते हीति । सुविहितैः पोषितैः ॥ ४६ ॥

४७ ] ति० टी०—प्रतिपानं जात्याश्वानां राजौपवाह्यानां ग्रासदानानन्तरं यत्पाय्यते क्षीरादि तत्प्रतिपानम्, यच्च घृतशर्करादियुतयवचूर्णादि खाद्यते तत्खादनम्, त्वरितं दीयतामित्यन्वशादित्यन्वयः ॥ ४७ ॥

रा० टी०—रामवचनश्रवणानन्तरकालिकां गुहोक्तिमाह—अश्वानामिति । प्रतिपानं घासभक्षणानन्तरं पेयं पायसादि खादनं घृतशर्करादिमिश्रयवचूर्णादि त्वरितं दीयतामिति स गुहः पुरुषान् स्वभृत्यान् अन्वशात् आज्ञापयत् । अर्धद्वयमेकान्वयि ॥ ४७ ॥

गो० टी०—अश्वानामिति । स गुहस्तत्रैव तदानीमेव पुरुषान् स्वभृत्यान् प्रति अश्वानां खादनं प्रति पानं क्षीरादिकं च त्वरितं दीयतामित्यन्वशात् ॥ ४७ ॥

४८ ] ति० टी०—जलमेवाददे तीर्थप्राप्तिनिमित्तकोपवासस्यावश्यकत्वात् ॥ ४८ ॥

रा० टी०—तत इति । चीरोत्तरासङ्गः उत्तरीययुक्तो रामः स्वयं लक्ष्मणेन आहृतमानीतं जलमेवाददे पपौ तीर्थोपवासविधिः कृत इत्यर्थः ॥ ४८ ॥

गो० टी०—तत इति । उत्तरासङ्गः उत्तरीयमन्वास्य उपास्य अनेन स्नानमाक्षिप्यते भोज्यमाहारम् ॥ ४८ ॥

४९ ] ति० टी०—अभ्येत्य ततोऽन्यत्र समीपदेश आगत्य तस्थावित्यनेन तस्य निद्राभावः सूचितः ॥ ४९ ॥

रा० टी०—तस्येति । वृक्षमुपाश्रितः प्राप्तस्य सभार्यस्य तस्य रामस्य पादौ प्रक्षाल्य ततः सीता रामादभ्येत्य तत्समीपदेशाद्देशान्तरं प्राप्य लक्ष्मणः तस्थौ सूतेन सह गुहोऽपि धनुर्धरः सन् सौमित्रिमनुभाषयन् सन् रामं सुखं यथा स्यात्तथा अन्वजाग्रदजागरीत् आर्षमेतत् । सार्धश्लोक एकान्वयी ४९॥५०

गो० टी०—तस्येति । शय्याकाले पादप्रक्षालनं राजोपचाराद्वा स्वशेषवृत्त्यनुरूपत्वाद्वा, यद्वा प्रक्षालनं रामकर्तृकतदाचमनस्याप्युपलक्षणम् प्रक्षाल्याचम्य शयानस्य शयाने सतीत्यर्थः । भावलक्षणे षष्ठी ततस्तस्मात् शयनप्रदेशात् अभ्येत्य गुहाभिमुखमेत्य वृक्षमेवोपाश्रितस्तस्थौ ॥ ४९ ॥

५०] ति०टी०—अन्वजाग्रदित्यार्षम् अजागरीदित्यर्थः ५०॥

गो० टी०—गुहोऽपीति । सौमित्रिमनुभाषयन् रामगुणान् प्रस्तुत्य सौमित्रिं वाचयन्नित्यर्थः । अन्वजाग्रत् जाग्रतं सौमित्रिमन्वजाग्रत् किमर्थः रामसुद्दिश्य रामं संरक्षितुमित्यर्थः । धनुर्धर इत्यनेन लक्ष्मणेप्यतिशङ्का गुहस्य द्योत्यते ॥ ५० ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

५१ ] ति० टी०—सुचिरेण शर्वरीति निद्रागमनाच्चिरत्वप्रतिभासस्तस्याम् ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

रा० टी०—तथेति । यशस्विनः समाधिकरहितयशोविशिष्टस्य शर्वरी रात्रिः व्यतीता ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चाशत्तमः सर्गः ॥ ५० ॥

---

१ ऽस्य धीमतो यशस्विन इति गो. पाठः । २ व्यतीयाय चिरेणेति गो. पाठः ।

## एकपञ्चाशः सर्गः ।

मज्जागर्मि रघुवरपरिरक्षणेऽतः सुखं स्वपिहीति गुहो लक्ष्मणं प्रार्थयते । लक्ष्मणो रामप्रभावं प्रस्तुत्यान्यनिर्वर्तितपरिरक्षाकैंकर्यात्मनो निद्रासुखायोग्यत्वं समर्थयन् पित्रादीनां दुरवस्थितिसंभावनया परिशोचन्नथो गुहेन मन्त्रयमाणो जाग्रदेव रात्रिं नयति ।

तं जाग्रतमदम्भेन भ्रातुरर्थाय लक्ष्मणम् । गुहः संतापसंतप्तो राघवं वाक्यमब्रवीत् ॥ १ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता । प्रत्याश्वसिहि साध्वस्यां राजपुत्र यथासुखम् ॥ २ ॥
उचितोऽयं जनः सर्वः क्लेशानां त्वं सुखोचितः । गुप्त्यर्थं जागरिष्यामः काकुत्स्थस्य वयं निशाम् ॥ ३ ॥
नहि रामात्प्रियतमो ममास्ते भुवि कश्चन । ब्रवीम्येवं च ते सत्यं सत्येनैव च ते शपे ॥ ४ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन्सुमहद्यशः । धर्मावाप्तिं च विपुलामर्थकामौ च पुष्कलौ ॥ ५ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया । रक्षिष्यामि धनुष्पाणिः सर्वथा ज्ञातिभिः सह ॥ ६ ॥
न मेऽस्त्यविदितं किंचिद्वनेऽस्मिंश्चरतः सदा । चतुरङ्गं ह्यतिबलं सुमहत्संतरेमहि ॥ ७ ॥
लक्ष्मणस्तु ततोवाच रक्ष्यमाणास्त्वयानघ । नात्र भीता वयं सर्वे धर्ममेवानुपश्यता ॥ ८ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया । शक्या निद्रा मया लब्धुं जीवितं वा सुखानि वा ॥ ९ ॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि । तं पश्य सुखसंसुप्तं तृणेषु सह सीतया ॥ १० ॥

---

१ ] ति० टी०—एवं रामे शयाने तद्रक्षार्थं जाग्रल्लक्ष्मणगुहसंवादः—तमित्यादि । अदम्भेनाकृत्रिमानुरागेण भ्रातुरर्थाय भ्रातृ रक्षार्थं राघवं रघुकुलजं संतापसंतप्तो रामस्य भूशय्यादिजेन संतापेन पीडितः ॥ १ ॥

रा० टी०—गुहोक्तिं वर्णयितुमाह—तमिति । भ्रातुरर्थाय सुखं शयनाय जाग्रतं तं लक्ष्मणं संतापसंतप्तः लक्ष्मणदुःखदर्शनजनितसंतापवान् गुहः राघवं लक्ष्मणमब्रवीत् ॥ १ ॥

गो० टी०—तं जाग्रतमित्यादि । अदम्भेन अकृत्रिमेण अर्थाय रक्षणाय संतापसंतप्तः रामदुर्दशादर्शनसंतापेन संतप्तः राघवं लक्ष्मणम् ॥ १ ॥

२] ति० टी०—इयमिति । प्रत्याश्वसिहि विश्रान्तो भव॥२॥

रा० टी०—तद्वचनमेवाह—इयमिति । साधु यथा तथा उपकल्पिता रचिता अतः अस्यां शय्यायां यथासुखं प्रत्याश्वसिहि विश्रान्तिं कुरु ॥ २ ॥

गो० टी०—इयमिति । प्रत्याश्वसिहि विश्रान्तो भवेति यावत् ॥ २ ॥

३ ] ति० टी०—अयं जन आटविकः ॥ ३ ॥

रा० टी०—उचित इति । क्लेशानां जागरणादिदुःखानामयं मदादिर्जनः उचितः योग्यः त्वं तु सुखोचितः अतः काकुत्स्थस्य रामस्य गुप्त्यर्थं वयं निशां सर्वरात्रं जागरिष्यामः ॥ ३ ॥

गो० टी०—उचित इति । अयं जनः वनचारित्वेन क्लेशसहो जनः ॥ ३ ॥ ४ ॥

४-६] ति०टी०—नहि रामादिति । सर्वास्मभूतात्॥४-६॥

रा० टी०—नहीति । ते तवाग्रे सत्यं ब्रवीमि अत्र विश्वासार्थं सत्येन स्वसुकृतेनेत्यर्थः शपे शपथं करोमि ॥ ४ ॥

रा० टी०—अस्येति । अस्य रामस्य प्रसादात् प्रसादं प्राप्यैव यशआदिकमाशासे वाञ्छामि एतेन प्रसादाभावे यशआदिकं व्यर्थमेवेति सूचितम् । एकश्चकार एवार्थे ॥ ५ ॥

गो० टी०—अस्येति । आशंसे प्रार्थये केवलामर्थावाप्तिम् अर्थावाप्तिमेवेत्यर्थः । केचित्तु केवलमिति पठित्वा केवलं प्रसादादीति योजयन्ति ॥ ५ ॥

रा० टी०—स इति । सः रामप्रसादाकाङ्क्षी अहं सर्वथा सर्वप्रकारेण रक्षिष्यामि ॥ ६ ॥

गो० टी०—स इति । सर्वतः सर्वदिक्षु ॥ ६ ॥

७ ] ति० टी०—अविदितमज्ञातम् । किं च—चतुरङ्गमिति । परकीयमिति शेषः । तादृशमपि परकीयं बलं संतरेमहि युद्धेन जयेम ॥ ७ ॥

रा० टी०—रक्षणे स्वयोग्यतां प्रकाशयन्नाह—नेति । अविदितमज्ञातं सुमहदतिविस्तीर्णमतिबलं चतुरङ्गं रिपुप्रेषितसैन्यं संतरेमहि सुखं जेष्याम इत्यर्थः ॥ ७ ॥

गो० टी०—नहीति । अविदितमिति पदच्छेदः किंचित् विरोध्यागमनस्थानं बलं परकीयं प्रसहेमहीत्येतदात्मनि बहुवचनं जात्यपेक्षया ॥ ७ ॥ ८ ॥

८ ] ति० टी०—ततोवाच तत उवाचेति च्छेदः आर्षः संधिः । अत्र देशे वयं न भीताः यतो धर्ममेवानुपश्यता त्वया रक्ष्यमाणा भवामः ॥ ८ ॥

रा० टी०—लक्ष्मण इति । ततः गुहवचनश्रवणानन्तरं लक्ष्मण उवाच ततोवाचेत्यत्र गुणः अतः एव निर्देशात् । वचनमेवाह—धर्मं सेवकरीतिमनुपश्यता ज्ञातवता त्वया रक्ष्यमाणाः वयं नैव भीताः ॥ ८ ॥

९-१० ] ति० टी०—तथापि जागरणे कारणमाह—कथमिति । जीवितं विशिष्टसुखजीवितजनकं भोजनादि ॥९॥१०॥

---

१ अस्ति इति गो. रा. पाठः । २ एतदहमिति गो. पाठः । ३ धर्मावाप्तिं च केवलामिति गो. पाठः । ४ तममिति गो. पाठः । ५ सर्वत इति गो. पाठः । ६ नहि मेऽविदितमिति गो. पाठः । ७ प्रसहेमहीति गो. पाठः । ८ तं तदेति गो. पाठः । ९ संविष्टमिति गो. पाठः ।

योमन्त्रतपसा लब्धो विविधैश्च पैराक्रमैः । एको दशरथस्यैषे पुत्रः सदृशलक्षणः ॥ ११ ॥
अस्मिन्प्रैव्रजिते राजा न चिरं वर्तयिष्यति । विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १२ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः । निर्घोषोपरतं तोत मन्ये राजनिवेशनम् ॥ १३ ॥
कौसल्या चैव राजा च तथैव जननी मम । नाशंसे यदि जीवन्ति सर्वे ते शर्वरीमिमाम् ॥ १४ ॥
जीवेदपि हि मे माता शत्रुघ्नस्यान्ववेक्षया । तद्दुःखं यँदि कौसल्या वीरसूर्विनशिष्यति ॥ १५ ॥
अनुरक्तजनाकीर्णा सुखालोकप्रियावहा । राजव्यसनसंसृष्टा सा पुरी विनशिष्यति ॥ १६ ॥
कथं पुत्रं महात्मानं ज्यैष्ठपुत्रमपश्यतः । शरीरं धारयिष्यन्ति प्राणा राज्ञो महात्मनः ॥ १७ ॥

रा० टी०—ननु तर्हि किमर्थं जागरणमित्यत आह—कथमिति । दाशरथौ रामे भूमौ शयाने सति निद्रापि लब्धुं मया कथं शक्या तत्र जीवितशब्दः करणनिष्ठान्तः भावनिष्ठान्तप्रकृतिकअर्शआद्यजन्तो वा अत एव भक्षणमर्थः ॥ ९ ॥

गो० टी०—भीत्यभावे किमर्थं जागरणमित्याह—कथमिति। निद्रा न लभ्यत इति भावः जीवितम् आश्वासनं निद्रैव न लभ्यते जीवितसुखानां का कथेति भावः ॥ ९ ॥

रा० टी०—भूमिशयनायोग्यत्वं बोधयन्नाह—य इति । सर्वैः मिलितैरित्यर्थः देवासुरैः प्रसहितुं पराभवितुं न शक्यः तं तृणेषु सुखसंसुप्तं पश्य ॥ १० ॥

गो० टी०—य इति । प्रसहितुमिति "तीषसह" इत्यादिना गाक्षिक इट् संविष्टं शयानम् ॥ १० ॥

११ ] ति० टी०—मन्त्रो गायत्र्यादिः तपः कृच्छ्रादि पराक्रमैस्तज्जन्यैर्ऋष्यशृङ्गानयनाश्वमेधाद्यनुष्ठानैः एको मुख्यः । तत्र हेतुः—सदृशलक्षणः पुरुषोत्तमसदृशलक्षणः दशरथसदृशलक्षण इत्यापाततोऽर्थः ॥ ११ ॥

रा० टी०—य इति । विविधैः पराक्रमैः उपलक्षितः सदृशलक्षणः सदृशानि सकलसद्गुणबोधकानि लक्षणानि शरीरचिह्नानि यस्य सः अत एव एकः मुख्यः मन्त्रतपसा लब्धः यः दशरथस्य पुत्रः तस्मिन्नस्मिन्रामे प्रव्रजिते सति राजा चिरं बहुकालं न वर्तयिष्यति राज्यं पालयिष्यति अतः विधवा पालकरहिता मेदिनी क्षिप्रं भविष्यति । श्लोकद्वयमेकान्वयि॥११॥१२॥

गो० टी०—य इति । मन्त्रतपसा मन्त्रयुक्ततपसा मन्त्रतपोभ्यामित्यर्थः परिश्रमैः यज्ञादिभिः एकः मुख्यः ' एके मुख्यान्यकेवलाः ' इत्यमरः । सदृशलक्षण: स्वसदृशलक्षणः ॥ ११ ॥

१२ ] ति० टी०—विधवा विगतपतिका ॥ १२ ॥

गो० टी०—अस्मिन्निति । वर्तयिष्यति जीविष्यति विधवा पतिरहिता ॥ १२ ॥

१३ ] ति० टी०—श्रमेणोपरता राजभवनेऽयोध्यानगरे च भविष्यन्तीति शेषः । निर्घोषोपरतमुपरतनिर्घोषं भवतीति मन्ये ॥ १३ ॥

रा० टी०—विनद्येति । सुमहानादं विनद्य रामरामेत्युच्चार्येत्यर्थः श्रमेण खेदाधिक्येन उपरताः निवृत्ताः स्त्रियो भविष्यन्तीति शेषः अतः रामनिवेशनं रामगृहं निर्घोषोपरतं निर्घोषरहितं मन्ये ॥ १३ ॥

गो० टी०—विनद्येति । उपरताः भविष्यन्तीति शेषः अत एव निर्घोषोपरतम् उपरतनिर्घोषं भविष्यतीति मन्ये॥१३॥

१४ ] ति० टी०—जीवन्तीति नाशंसे न संभावयामि यदि वा जीवन्त्येतावत्पर्यन्तम्, तदेमां शर्वरीमेव जीविष्यन्ति नाग्रे अन्नपानाद्यभावादिति संभावयामीति शेषः ॥ १४ ॥

रा० टी०—कौशल्येति । कौशल्यादयः इमां शर्वरीं रात्रिं यदि जीवन्ति अतिमूर्च्छां न प्राप्नुवन्तीत्यर्थः तदा अहमाशंसे तद्धैर्यप्रशंसां करिष्यामीत्यर्थः ॥ १४ ॥

गो० टी०—कौसल्येति । सर्वे जीवन्ति जीविष्यन्तीति नाशंसे यदि जीवन्ति इमां शर्वरीमेव ॥ १४ ॥

१५ ] ति० टी०—जीवेदपि एतद्रात्र्याः परमपीति शेषः । यदि यत् वीरसूः कौसल्या एकपुत्रत्वाद्विनशिष्यत्येव तदतिदुःखमित्यर्थः ॥ १५ ॥

रा० टी०—जीवेदिति । शत्रुघ्नस्य स्वपुत्रस्य अन्ववेक्षया अवलोकनेन हि यदि मे माता जीवेत्तदापि यदि वीरसूः अतिवीरपुत्रोत्पादनकर्त्री कौशल्या विनशिष्यति विनङ्क्ष्यति लोकान्तरगमनेन अदृश्यत्वं प्राप्स्यति तत्तदा दुःखमतिक्लेशः स्थास्यत्येवेति शेषः ॥ १५ ॥

गो० टी०—जीवेदिति । शत्रुघ्नस्यान्ववेक्षया शत्रुघ्नस्नेहेनेत्यर्थः । पुनः पुनर्दर्शनेन वा वीरं सूत इति तथा कौसल्या विनशिष्यतीति यद्दुःखं तद्दुःसहमित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—अनुरक्तै रामानुरक्तैर्जनैराकीर्णा व्याप्ता सुखालोकरूपं प्रियमावहति सा सदा सुखवल्लोका इदानीं राजव्यसनेन दशरथमरणदुःखेन संसृष्टा युक्ता ॥ १६ ॥

रा० टी०—अनुरक्तेति । अनुरक्ताः रामविषयकानुरागविशिष्टाः ये जनास्तैः आकीर्णाः व्याप्ता अत एव सुखा अतिसुखहेतुः अत एव लोकप्रियावहा या पुरी सा अयोध्या राजव्यसनसंसृष्टा राजदुःखसंबन्धवती सती विनशिष्यति ॥ १६ ॥

गो० टी०—अनुरक्तजनाकीर्णेति । राजव्यसनसंसृष्टा राजमरणनिमित्तव्यसनसंयुक्तेत्यर्थः ॥ १६–१८ ॥

१७] ति०टी०—राजव्यसनमेव दर्शयति—कथमिति॥१७॥

१ परिश्रमैरिति गो. पाठः । २ इह इति गो. पाठः । ३ प्रव्राजित ... गो. पाठः । ४ तात इति गो. पाठः । ५ रामेति रा. पाठः । ६ ... इति गो. पाठः । ७ ज्येष्ठं प्रियमिति गो. पाठः ।

विनष्टे नृपतौ पश्चात्कौसल्या विनशिष्यति । अनन्तरं च मातापि मम नाशमुपैष्यति ॥ १८ ॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् । राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १९ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन्काले ह्युपस्थिते । प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति राघवम् ॥ २० ॥
रम्यचत्वरसंस्थानां संविभक्तमहापथाम् । हर्म्यप्रासादसंपन्नां गणिकावरशोभिताम् ॥ २१ ॥
रथाश्वगजसंबाधां तूर्यनादविनादिताम् । सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २२ ॥
आरामोद्यानसंपन्नां समाजोत्सवशालिनीम् । सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २३ ॥
अपि जीवेद्दशरथो वनवासात्पुनर्वयम् । प्रत्यागम्य महात्मानमपि पश्याम सुव्रतम् ॥ २४ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिनो वयम् । निवृत्ते वनवासेऽस्मिन्नयोध्यां प्रविशेमहि ॥ २५ ॥

रा० टी०—कथमिति । ज्येष्ठपुत्रमपश्यतः राज्ञः प्राणाः शरीरं कथं धारयिष्यन्ति न धारयिष्यन्तीत्यर्थः । राजा लोकान्तरं गमिष्यतीति तात्पर्यम् ॥ १७ ॥

१८ ] ति० टी०—मातापि भर्तृपुत्रवियोगात्सत्यप्येकपुत्रसंनिधौ ॥ १८ ॥

रा० टी०—अनर्थान्तरमाह—विनष्टे इति । नृपतौ विनष्टे लोकान्तरगमनप्रयुक्तादृश्यत्वं प्राप्ते सति अनन्तरं शीघ्रं यथा स्यात्तथा कौसल्या विनशिष्यति पश्चान्मम मातापि नाशमुपैष्यति ॥ १८ ॥

१९ ] ति० टी०—मनोरथं रामराज्याभिषेकमनवाप्य अतिक्रान्तमतिक्रान्तं नष्टं नष्टमिति क्रोशन्निति शेषः । प्रत्यागतं रामं राज्येऽनिक्षिप्यैव मे पिता विनशिष्यतीत्यन्वयः ॥ १९ ॥

रा० टी०—ननु यथा विश्वामित्रसहगमनसमये रामदर्शनाभावप्रयुक्तराजकर्तृकलोकान्तरगमनाभावः तथात्रापि भविष्यतीत्यत आह—अतिक्रान्तमिति । राज्ये राममनिक्षिप्य अप्रापय्य प्रारम्भविषयीभूताभिषेकमदृष्ट्वेत्यर्थः अत एव अतिक्रान्तं सर्वत उत्कृष्टमित्यर्थः मनोरथमनवाप्य मे पिता विनशिष्यति विनङ्क्ष्यति लोकान्तरं गमिष्यतीत्यर्थः एतेनेदानीं गमने हीर्हेतुर्भविष्यतीति ध्वनितम् ॥ १९ ॥

गो० टी०—अतिक्रान्तमिति । मे पिता रामे राज्यमनिक्षिप्य अत एव मनोरथमनवाप्य विनशिष्यतीति यत्तस्मात् अतिक्रान्तमतिक्रान्तं सर्वप्रयोजनमतीत्य गतमित्यर्थः । अथवा अतिक्रान्तमतिक्रान्तमनोरथमनवाप्य पुनः पुनर्वर्धनं मनोरथमनवाप्य रामो जातः वर्धिष्यते उद्वाहं करिष्यति राज्यं प्राप्स्यतीत्येवमभिवृद्धं मनोरथमित्यर्थः । मनोरथातिक्रान्तिमेवाह—राज्ये राममनिक्षिप्येति ॥ १९ ॥

२०-२२ ] ति० टी०—तस्मिन्काले मरणकाल उपस्थिते वै वृत्तं मृतं पितरं रघुकुलजं सर्वप्रेतकार्येषु संस्करिष्यन्ति ते सिद्धार्थाः भाग्यवन्तः प्राप्तराज्याश्च भरतादय इति शेषः । कोपात्तथामायहणम् ॥ २०-२२ ॥

२३ ] ति० टी०—विचरिष्यन्ति भरतादय इति शेषः ॥ २३ ॥

रा० टी०—सिद्धार्था इति । तस्मिन्लोकान्तरप्रयाणयोग्ये काले उपस्थिते सति सर्वेषु प्रेतकार्येषु प्रयाणसमयोचितकर्तव्येषु राघवं दशरथं ये संस्करिष्यन्ति मङ्गलपाठादिकं करिष्यन्ति ते सिद्धार्थाः एतेन भरतोऽपि तस्मिन्काले नं प्राप्स्यति न वेति संशयः सूचितः ॥ २० ॥

गो० टी०—सिद्धार्था इति । तस्मिन्काले मरणकाले उपस्थिते प्रेतकार्येष्वप्युपस्थितेषु । वृत्तमतीतं मृतमिति यावत् । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' इत्यमरः । भूमिपं पितरं सिद्धार्थाः कृतार्थाः संस्करिष्यन्ति वयं त्वकृतार्था इति भावः ॥ २० ॥

रा० टी०—रम्येति । अपि यदि दशरथो जीवेत्प्रजाः पालयेत्तदा रम्यचत्वरसंस्थानां रमणीयचतुष्पथयुक्तां हर्म्यैर्धनिनां गृहैः प्रासादैर्देवभूभुजां सदनैः संपन्नां रथाश्वगजसंबाधां रथादिभिर्व्याप्तां समाजोत्सवशालिनीं समाजानां ब्राह्मणादिसमूहानामुत्सवस्य शालिनीमाश्रयभूतां मम पितुः राजधानीमयोध्यां विचरिष्यन्ति सुखेन स्थास्यन्तीत्यर्थः अयोध्यावासिन इति शेषः वयं वनवासात्प्रत्यागम्य निवर्त्य महात्मानं राजानं पश्याम । श्लोकचतुष्टयमेकान्वयि ॥ २१-२४ ॥

गो० टी०—रम्यचत्वरसंस्थानामिति । रम्यचत्वरसंस्थानां रमणीयाङ्गणसंस्थानां सुविभक्तमहापथां गृहपङ्क्तिभिः सम्यक् विभक्तराजमार्गां हर्म्यप्रासादसंपन्नां हर्म्यैर्धनिनां वासैः प्रासादैर्देवभूभुजां वासैश्च संपूर्णां 'हर्म्यादिर्धनिनां वासः प्रासादो देवभूभुजाम्' इत्यमरः । रथाश्वगजसंबाधां संबाधां निबिडां नादितां संजातनादां सर्वकल्याणसंपूर्णां सर्वैः पुत्रजन्मोत्सवप्रभृतिभिः संपन्नाम् आरामोद्यानसंपन्नाम् आरामाः उद्यानानि च उपवनानि राज्ञः क्रीडार्हवनानि च समाजोत्सवशालिनीं समाजैः संघैः क्रियमाण उत्सवः समाजोत्सवः देवोत्सव इत्यर्थः ॥ २१-२३ ॥

२४ ] ति० टी०—अपि जीवेदिति संभावने लिङ् । अपि च अपि पश्याम अपि द्रक्ष्यामः ॥ २४ ॥

गो० टी०—अपीति । अपिः संभावनायाम् ॥ २४ ॥

२५ ] ति० टी०—सत्यप्रतिज्ञेन रामेण ॥ २५ ॥

१ रामे राज्यमिति गो. पाठः । २ ऽपीति गो. पाठः । ३ भूमि .. पाठः । ४ विनादितामिति गो. रा. पाठः । ५ पश्येमेति गो. पाठः
६ कुशलिनेति गो. पाठः ।

परिदेवयमानस्य दुःखार्तस्य महात्मनः । तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ॥ २६ ॥
तथाहि सत्यं ब्रुवति प्रजाहिते नरेन्द्रसूनौ गुरुसौहृदाद्गुहः ।
मुमोच बाष्पं व्यसनाभिपीडितो ज्वरातुरो नाग इव व्यथातुरः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ।

अनुचरैः प्रापितां नावमारुरुक्षुं रामं किं ते भूयः करवाणीत्यर्थयमानं गुहं रामो राजानुवर्तने न्ययुङ्क्त । वनेऽप्यनुचरत्वमर्थयमानं सुमन्त्रं निविवर्तयिषू रामः सहेतूपन्यासं तत्समर्थ्य न्यवर्तयत । आज्ञापितगुहोपनीतवटक्षीरेण निर्वर्तितजटाजूटास्ते नावमारुरुहुः । प्राप्तमध्या सीता गङ्गां प्रार्थयत । प्रतीरमवतीर्णास्ते सायं कस्यचित्तरोर्मूलमासेदुः ।

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः । उवाच रामः सौमित्रिं लक्ष्मणं शुभलक्षणम् ॥ १ ॥
भास्करोदयकालोऽसौ गता भगवती निशा । असौ सुकृष्णो विहगः कोकिलस्तात कूजति ॥ २ ॥
बर्हिणानां च निर्घोषः श्रूयते नदतां वने । तराम जाह्नवीं सौम्य शीघ्रगां सागरंगमाम् ॥ ३ ॥
विज्ञाय रामस्य वचः सौमित्रिर्मित्रनन्दनः । गुहमामन्त्र्य सूतं च सोऽतिष्ठद्भ्रातुरग्रतः ॥ ४ ॥

रा० टी०—संभावनान्तरमाह—अपीति । सत्यप्रतिज्ञेन रामेण सार्धमयोध्यामपि प्रविशेमहि । संभावनार्थोऽपिः ॥२५॥

गो० टी०—अपि सत्यप्रतिज्ञेनेति । सत्यप्रतिज्ञेन पित्रेति शेषः । अस्मिन् रामे प्रविशेमहीत्याशंसायां लिङ् ॥ २५ ॥

२६ ] ति० टी०—परिदेवयमानस्येति इत्थमित्यादिः तिष्ठतो जाग्रतः ॥ २६ ॥

रा० टी०—परीति । दुःखार्तस्य अत एव परिदेवयमानस्य राजपुत्रस्य लक्ष्मणस्य शर्वरी रात्रिः अत्यवर्तत व्यतीताऽभवत् ॥ २६ ॥

गो० टी०—परिदेवयमानस्येति । परिदेवयमानस्येत्यादौ संबन्धसामान्ये षष्ठी एवमिति शेषः ॥ २६ ॥

२७ ] ति० टी०—गुरौ रामे सौहृदादित्युभयान्वयि अतिस्नेहाज्ज्वरातुरो गुहः व्यथातुरो नागो गज इव ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

रा० टी०—तथेति । नरेन्द्रसूनौ लक्ष्मणे सत्यं मृषासंसर्गशून्यं वचनं ब्रुवति सति गुरुं सौहृदाद्धेतोः व्यसनाभिपीडितः अत एव व्यथातुरश्चञ्चलचित्तः गुहः बाष्पमश्रु मुमोच, तत्र दृष्टान्तः ज्वरातुरः ज्वरपीडितः नागो गज इव ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

गो० टी०—तथेति । सत्यं वास्तवं नरेन्द्रपुत्रे लक्ष्मणे गुरुसौहृदात् गुरुषु पित्रादिषु सौहृदात् स्नेहात् ज्वरातुरो नागो गज इव व्यथातुरो गुह इत्यन्वयः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

१ ] ति० टी०—प्रभातायामिति ॥ १ ॥

रा० टी०—लक्ष्मणोक्त्यनन्तरकालिकां रामोक्तिं वर्णयितुमाह—प्रभातायामिति । शर्वर्यां रात्रौ प्रभातायां सत्यां रामः लक्ष्मणमुवाच ॥ १ ॥

गो० टी०—प्रभातायामिति । पृथुवक्षा इत्युत्साहातिरेकोक्तिः महायशा इति धर्मव्यतिक्रमाभावः सूचितः सौमित्रिमिति रामं दशरथं विद्धि इत्यादिनोक्तार्थानुष्ठायित्वं सूचितं शुभलक्षणमित्यनेन स्वभक्तिरुक्ता ॥ १ ॥

२–३ ] ति० टी०—सुकृष्णो विहगः काकः कोकिलपालकत्वाच्च कोकिलपदेनोक्तः, काकेति नामग्रहणस्य प्रातर्निन्द्यत्वादेवमुक्तिः ॥ २ ॥ ३ ॥

रा० टी०—तद्वचनमेवाह—भास्करेति । असौ भास्करोदयकालः अतः भगवती तारासंपत्तिमती निशा गता तत्र हेतुः सुकृष्णः अतिश्यामः कोकिलः कोकिलपालितः विहगः काक इत्यर्थः कूजति प्रातःकाले काकशब्दस्यैव प्रसिद्धत्वात्कोकिलशब्देन काक उच्यते काकशब्दाद्युक्तिस्तु प्रातस्तन्नामोच्चारणस्य निषिद्धत्वादिति दिक् । बर्हिणानां मयूराणां निर्घोषश्च श्रूयते अतः जाह्नवीं तराम । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—भास्करोदयकाल इति । भास्करशब्दोऽयं तत्संबन्ध्यरुणवाची गता गतप्राया भगवती कामवर्धिनी 'भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । सुकृष्णो विहगः भरद्वाजः कोकिलः कोकिलश्चेत्यर्थः ॥ २ ॥

गो० टी०—बर्हिणानामिति । वने नदतामिति नगरस्थक्रीडामयूरव्यावृत्तगम्भीरध्वनिरुक्ता शीघ्रगामिति नावं विना दुस्तरत्वोक्तिः सागरंगमामिति महत्त्वोक्तिः ॥ ३ ॥

४ ] ति० टी०—विज्ञाय तरणसाधनं शीघ्रमानेयमित्येवं रामवचनतात्पर्यं ज्ञात्वा गुहं सूतं चामन्त्र्यामन्त्रणेनैव तत्तात्पर्यं बोधयित्वा यथापूर्वं भ्रातुरग्रतोऽतिष्ठत् ॥ ४ ॥

रा० टी०—विज्ञायेति । सौमित्रिः रामस्य वचः विज्ञाय विशेषेण ज्ञात्वा तरणार्थं नावमाकाङ्क्षते इति बुद्ध्वेत्यर्थः गुहं

१ पुत्रे इति गो. पाठः । २ ऽभवमिति गो. पाठः ।

स तु रामस्य वचनं निशम्य प्रतिगृह्य च । स्थपतिस्तूर्णमाहूय सचिवानिदमब्रवीत् ॥ ५ ॥
अस्यवाहनसंयुक्तां कर्णग्राहवतीं शुभाम् । सुप्रतारां दृढां तीर्थे शीघ्रं नावमुपाहर ॥ ६ ॥
तं निशम्य गुहादेशं गुहामात्यो गतो महान् । उपोह्य रुचिरां नावं गुहाय प्रत्यवेदयत् ॥ ७ ॥
ततः स प्राञ्जलिर्भूत्वा गुहो राघवमब्रवीत् । उपस्थितेयं नौर्देव भूयः किं करवाणि ते ॥ ८ ॥
तवामरसुतप्रख्य तर्तुं सागरगामिनीम् । नौरियं पुरुषव्याघ्र शीघ्रमारोह सुव्रत ॥ ९ ॥
अथोवाच महातेजा रामो गुहमिदं वचः । कृतकामोऽस्मि भवता शीघ्रमारोप्यतामिति ॥ १० ॥
ततः कलापान्संनह्य खड्गौ बद्ध्वा च धन्विनौ । जग्मतुर्येन तौ गङ्गां सीतया सह राघवौ ॥ ११ ॥
राममेवं तु धर्मज्ञमुपागत्य विनीतवत् । किमहं करवाणीति सूतः प्राञ्जलिरब्रवीत् ॥ १२ ॥

सूतं च आमन्त्र्य शीघ्रं नौरानेया शीघ्रं तरणकामो रामः इत्युक्त्वेत्यर्थः भ्रातुः अग्रतः अग्रे अतिष्ठत् ॥ ४ ॥

गो० टी०—विज्ञायेति । वचो विज्ञाय नदीतरणसाधनं शीघ्रमानेतव्यमित्येवंरूपं वचनतात्पर्यं ज्ञात्वा गुहं सूतं चामन्त्र्य युवाभ्यामपि रामवचनतात्पर्यं ज्ञातं किमिति संबोध्य भ्रातुरग्रतोऽतिष्ठत् ॥ ४ ॥

५ ] ति० टी०—स तु गुहस्तु रामस्य वचनं तराम आकाङ्क्षामित्येवं निशम्य तात्पर्यतो ज्ञात्वा प्रतिगृह्य नमस्कारपूर्वं प्रतिगृह्य सचिवानाहूय तन्मध्ये कंचित्प्रत्यब्रवीत् ॥ ५ ॥

रा० टी०—स इति । स्थपतिः निषादाधिपतिः सः गुहः रामस्य वचनं निशम्य श्रुत्वा प्रतिगृह्य लक्ष्मणद्वारा तदभिप्रायं बुद्ध्वा सचिवान्स्वमन्त्रिणस्तूर्णमाहूय इदमब्रवीत् ॥ ५ ॥

गो० टी०—सत्विति । प्रतिगृह्य शिरोनतिपूर्वकं तथैव करिष्यामीत्यङ्गीकृत्य ॥ ५ ॥

६ ] ति० टी०—अस्यवाहनसंयुक्ताम् अस्य जलं निरस्य नावं तीरं प्रापयतीत्यस्यवाहनमरित्रं मयूरव्यंसकादित्वात्समासः कर्णग्राहः कर्णधारः सुखेन प्रतारः प्रतरणं यया तां दृढां दृढसंधिबन्धां तीर्थेऽवतारमार्गे उपाहर समीपं प्रापय ॥६॥

रा० टी०—अस्येति । वाहनसंयुक्तां वाहयति जलनिरसनद्वारा नावं तीरं प्रापयतीति वाहनमरित्रं तेन संयुक्तां कर्णग्राहवतीं कर्णग्राहः कर्णधारः तद्वतीं शुभां रमणीयरागादिविशिष्टत्वेन मनोरमां दृढां छिद्रादिरहितात्वेन अदार्व्यशङ्कारहितामत एव अस्य रामस्य सुप्रतारां सुखं तारणयोग्यां नावं तीर्थे तरणघट्टे शीघ्रमुपाहर प्रापय ॥ ६ ॥

गो० टी०—अस्येति । अस्य रामस्य वाहनसंयुक्तां वाह्यते नीयतेऽनेनेति वाहनमरित्रादि तेन संयुक्तां कर्णग्राहवतीं कर्णमरित्रं गृह्णातीति कर्णग्राहः कर्णधारः तद्वती 'कर्णं श्रोत्रमरित्रं च' इति निघण्टुः । सुप्रतारां सुष्ठु तारयितुं समर्थां दृढां सुश्लिष्टसन्धिबन्धां तीर्थेऽवतारमार्गे उपाहरेत्येकवचनं सचिवगणाभिप्रायेण ॥ ६—८ ॥

७—९ ] ति० टी०—उपोह्य समीपं प्रापय्य ॥ ७—९ ॥

रा० टी०—तमिति । गुहादेशं निशम्य श्रुत्वा रुचिरां नावमुपोह्य तत्समीपघट्टे प्रापय्य प्रत्यवेदयत् इयं नौरागतेत्यबोधयत् ॥ ७ ॥

रा० टी०—तत इति । ततः स्वमन्त्रिबोधितनौदर्शनानन्तरं गुहः राघवं राममब्रवीत् । तद्वचनमेवाह—हे देव ! नौरुपस्थिता प्रापिता भूयः पुनस्ते किं करवाणि ॥ ८ ॥

रा० टी०—तवेति । हे अमरसुतप्रख्य ! अमरा ध्वंसाऽप्रतियोगिनी सुतप्रख्या दशरथसुतेति नाम यस्य तत्संबोधनं सागरगामिनीं गङ्गां तर्तुमियं नौः प्रापितेति शेषः अतः शीघ्रमारोह ॥ ९ ॥

गो० टी०—तवेति । नौरियमिति उपस्थितेति शेषः ॥९॥

१० ] ति० टी०—आरोप्यताम खनित्रपिटकवैदेहीवस्त्राभरणादिकमिति शेषः ॥ १० ॥

रा० टी०—अथेति । अथ गुहप्रार्थनाश्रवणानन्तरं भवता अहं कृतकामः निष्पादिताभीष्टः अतः शीघ्रमारोप्यतां खनित्रपिटकादि आरोप्यतामित्यर्थः इदं वचः रामो गुहमुवाच ॥१०॥

गो० टी०—अथेति । आरोप्यतामिति खनित्रपिटकवैदेहीवस्त्राभरणादिकमिति शेषः ॥ १० ॥

११ ] ति० टी०—संनह्य कवचं कलापांस्तूणीरान् येनावतरणमार्गेण नावमारुह्य तामनिर्वाच्यगुणां गङ्गां लोकास्तरन्ति तमवतारं तर्तुं जग्मतुः ॥ ११ ॥

रा० टी०—तत इति । ततः गुहाज्ञापनानन्तरं संनह्य कवचं संधार्य कलापाँस्तूणीरान्खड्गौ च बद्ध्वा धन्विनौ राघवौ येन मार्गेण तरणार्थं जना गच्छन्ति इति शेषः तेन मार्गेण गङ्गां जग्मतुः ॥ ११ ॥

गो० टी०—तत इति । तौ राघवौ संनह्य कवचौ धृत्वा कलापान् तूणीरान् खड्गौ च बद्ध्वा धन्विनौ जना येन मार्गेण गङ्गां प्राप्नुवन्ति तेन मार्गेण जग्मतुः ॥ ११ ॥

१२ ] ति० टी०—एवं तु एवंभूतं तु रथादिनिरपेक्षं गच्छन्तं तु ॥ १२ ॥

रा० टी०—राममिति । एवं स्वकर्मकानाज्ञापनप्रकारेण विद्यमानं राममुपागत्य विनीतवद्विनीतिविशिष्टं किमहं करवाणीति वचः सूतोऽब्रवीत् ॥ १२ ॥

१ ऽमरस्वगण इति गो. पाठः । २ तां त्वमिति गो. पाठः । ३ ताविति गो. पाठः । ४ उपगम्येति गो. पाठः । ५ तर्तुमिति युक्तं भाति ।

ततोऽब्रवीद्दाशरथिः सुमन्त्रं स्पृशन्करेणोत्तमदक्षिणेन ।
सुमन्त्र शीघ्रं पुनरेव याहि राज्ञः सकाशे भव चाप्रमत्तः ॥ १३ ॥
निवर्तस्वेत्युवाचैनमेतावाद्धि कृतं मम । रथं विहाय पद्भ्यां तु गमिष्यामो महावनम् ॥ १४ ॥
आत्मानं त्वभ्यनुज्ञातमवेक्ष्यार्तः स सारथिः । सुमन्त्रः पुरुषव्याघ्रमैक्ष्वाकमिदमब्रवीत् ॥ १५ ॥
नातिक्रान्तमिदं लोके पुरुषेणेह केनचित् । तव सभ्रातृभार्यस्य वासः प्राकृतवद्वने ॥ १६ ॥
न मन्ये ब्रह्मचर्ये वो स्वधीते वा फलोदयः । मार्दवार्जवयोर्वापि त्वां चेद्व्यसनमागतम् ॥ १७ ॥
सैह राघव वैदेह्या भ्राता चैव वने वसन् । त्वं गतिं प्राप्स्यसे वीर त्रीँल्लोकांस्तु जयन्निव ॥ १८ ॥

गो० टी०—राममिति । धर्मज्ञं भृत्यधर्मज्ञं विनीतवत् सविनयमिति क्रियाविशेषणम् ॥ १२ ॥

१३ ] ति० टी०—उत्तमश्चासौ दक्षिणश्च तेन स्पर्शादिव्यापारे उत्तमेन स्पर्शमात्रेण सकलदुःखहारकत्वाद्दक्षिणेनेतरेण करेण दक्षिणकरेण ॥ १३ ॥

रा० टी०—तत इति । हे सुमन्त्र ! राज्ञः दशरथस्य सकाशे समीपे शीघ्रं याहि अप्रमत्तः मद्वियोगहेतुकानवधानतारहितश्च भव इति वचः उत्तमदक्षिणेन स्पर्शमात्रेण स्पृश्यमानोत्तमत्वसूचकसव्येतरेण करेण सुमन्त्रं स्पृशन्सन्नुवाच ॥ १३ ॥

गो० टी०—तत इति । उत्तमेति संबोधनम् ॥ १३ ॥

१४ ] ति० टी०—गमनप्रत्याशानिवृत्तये पुनः सावधारणां निवृत्तिमाह—निवर्तस्वेति । एतावत्पर्यन्तं राजाज्ञया यानेन गमनं कृतम् हि अतः परं ममानेन न प्रयोजनं यतो रथं विहाय पद्भ्यामेव महावनं गमिष्यामः, अतस्त्वं सर्वथा निवर्तस्व ॥ १४ ॥

रा० टी०—तदौदासीन्यमुपलक्ष्य पुनः प्रवृत्तं रामवचनं वर्णयन्नाह—निवर्तस्वेति । एतावद्गङ्गापर्यन्तरथकरणकगमनमेव कृतं पित्राज्ञया स्वीकृतमतस्त्वं निवर्तस्व वयं तु पद्भ्यां गमिष्यामः इति एनं सुमन्त्रमुवाच ॥ १४ ॥

गो० टी०—याहीति सामान्योक्तं सोपपत्तिकमाह—निवर्तस्वेति । मम एतावत् कृतं हि गङ्गातीरपर्यन्तं रथेन प्रापणं कृतं हि हीति राजाज्ञाद्योतनम् । अतः परं यानं विहाय पद्भ्यामेव महावनं गमिष्यामः अतस्त्वं निवर्तस्वेत्येवमुवाच ॥ १४ ॥

१५ ] ति०टी०—अभ्यनुज्ञातम् प्रतिनिवृत्त्यै इति शेषः॥१५॥

रा० टी०—आत्मानमिति । अभ्यनुज्ञातमयोध्यागमनायाज्ञप्तमात्मानमवेक्ष्य ज्ञात्वा ऐक्ष्वाकं राममब्रवीत् ॥ १५ ॥

गो० टी०—आत्मानमिति । अवेक्ष्य बुद्ध्वा आर्तः अनुगमनेऽभ्यनुज्ञानकृतेऽतिदुःखितः ॥ १५ ॥

१६ ] ति० टी०—तदादौ लोकदृष्ट्या शोकापनुदं वचनमाह—नातीति । सभ्रातृभार्यस्य तव प्राकृतवत्क्षुद्रवद्वने वासो येन दैवेन कृतस्तदिदं दैवमिह लोके केनाप्यतिक्रान्तं लङ्घितं न अतो हृदये मा शुच इत्यर्थः । यद्वा ते वनवासो जात इति यदिदमिह लोकेऽयोध्यास्थलोकमध्ये केनापि पुरुषेण न हयत्यन्तं कान्तं स्वीकृतं सर्वासंमतमेव, अतोऽस्मदादीन्दोषेण मा गृह्णीया इति तात्पर्यम् ॥ १६ ॥

रा० टी०—तद्वचनमेवाह—नेति । पदैश्वर्यमतिक्रम्य सभ्रातृभार्यस्य तव वने वासः तदिदमैश्वर्यं लोके केनचित्पुरुषेण नाक्रान्तं परित्यक्तम् ॥ १६ ॥

गो० टी०—नातिक्रान्तमिति । तव सभ्रातृभार्यस्य वने प्राकृतवत् क्षुद्रस्येव योयं वासः तदिदं लोके केनचिदपि पुरुषेण नातिक्रान्तं नाङ्गीकृतं सर्वासंमतोऽयं तव वने वास इत्यर्थः । किं पुनर्ममेति भावः ॥ १६ ॥

१७ ] ति० टी०—किं च यदि त्वामीदृशं व्यसनमागतं तदा ब्रह्मचर्यादि निष्फलमिति मन्ये ॥ १७ ॥

रा० टी०—नेति । यदि ब्रह्मचर्यादौ फलोदयः तर्हि व्यसनं दुःखमागतं प्राप्तं त्वामहं न मन्ये त्वां व्यसनं नैव प्राप्स्यतीति निश्चिनोमीत्यर्थः । अत्र मार्दवं दयालुत्वमार्जवं तृप्तिकारकवचनोच्चारणमिति न पौनरुक्त्यम् ॥ १७ ॥

गो० टी०—न मन्य इति । त्वां ब्रह्मचर्यस्वाध्यायमार्दवार्जवयुक्तं त्वां व्यसनमागतं चेत् ब्रह्मचर्ये अधःशयनादिलक्षणे अध्ययनकालकृते स्वधीते स्वाध्यायाध्ययने मार्दवे दयालुत्व इति यावत् आर्जवे अकौटिल्ये च फलोदयः फलसिद्धिर्नास्तीति मन्ये यदि ब्रह्मचर्यादिकं फलदं स्यात्तत् त्वयि दृश्येत न दृश्यते प्रत्युत वनवास एव दृष्टः अतो न तत् फलदमिति मन्ये इति भावः । खेदातिशयादेवमुक्तम् ॥ १७ ॥

१८ ] ति० टी०—इदानीं रामं भगवन्तं मत्वाह—सहेति । गतिमुत्कर्षमेकस्यैव त्रिलोकीजेतुर्जयेन पितृवाक्यपरिपालनेन च त्रीँल्लोकाञ्जयन्निव एवं च तवायं वनवासोऽपि महाफल एव॥१८॥

रा० टी०—सहेति । हे राघव ! वैदेह्या भ्रात्रा च सह वने वसन्स्त्रींल्लोकाञ्जयन्निव गतिमत्युत्कर्षं प्राप्स्यसे ॥ १८ ॥

गो० टी०—सहेति । त्रीन् लोकान् जयन्निव विष्णुरिवेत्यर्थः । गम्यत इति गतिः । कीर्तिः तां प्राप्स्यसे अतुलां कीर्तिं प्राप्स्यस इत्यर्थः । सुमन्त्रः पुरवासिष्वात्मानमन्तर्भाव्य वदति ॥ १८ ॥

१ ऽस्तीति गो. पाठः । २ सहेति रा. पाठः ।

वयं खलु हता राम ये त्वया ह्युपवञ्चिताः। कैकेय्या वशमेष्यामः पापाया दुःखभागिनः॥ १९ ॥
इति ब्रुवन्नात्मसमं सुमन्त्रः सारथिस्तथा। दृष्ट्वा दूरगतं रामं दुःखार्तो रुरुदे चिरम्॥ २० ॥
ततस्तु विगते बाष्पे सूतं स्पृष्टोदकं शुचिम्। रामस्तु मधुरं वाक्यं पुनः पुनरुवाच तम्॥ २१ ॥
इक्ष्वाकूणां त्वया तुल्यं सुहृदं नोपलक्षये। यथा दशरथो राजा मां न शोचेत्तथा कुरु॥ २२ ॥
शोकोपहतचेताश्च वृद्धश्च जगतीपतिः। कामभारावसन्नश्च तस्मादेतद्ब्रवीमि ते॥ २३ ॥
यद्यदाज्ञापयेत्किंचित्स महात्मा महीपतिः। कैकेय्याः प्रियकामार्थं कार्यं तदविकाङ्क्षया॥ २४ ॥
एतदर्थं हि राज्यानि प्रशासति नराधिपाः। यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते॥ २५ ॥
यद्यथा स महाराजो नालीकमधिगच्छति। न च ताम्यति शोकेन सुमन्त्र कुरु तत्तथा॥ २६ ॥

---

१९ ] ति० टी०—वयं तु सर्वथा पीडिता इत्याह—वयमिति। उपवञ्चिताः केचिद्रात्राववविदितगमनेन अहं बलान्निवर्तनेन एवं सर्वे त्यक्ताः॥ १९ ॥

रा० टी०—ननु तर्हि किमर्थं शोचसीत्यत आह—वयमिति। हे राम! त्वया सह वयं कैकेय्या कैकेयीदास्या मन्थरया वञ्चिता अकालकवरयाचनप्रेरणया प्रलम्भिताः अत एव दुःखभागिनो वयं पापायाः मन्थरायाः वशमेष्यामः॥ १९ ॥

गो० टी०—वयमिति। वयं त्वामनुगता वयं त्वयाप्युपवञ्चिताः खलु रात्रौ निद्रासमये अविदितगमनेन उपवञ्चिता एव अपि श्वस्तनादभिषेकविघटनेन कैकेय्यापि वञ्चिता इति योत्यते उपवञ्चिताः समीपे वञ्चिताः वनं प्रापय्यमाना इव त्यक्ता इति वार्थः। अत एव पापायाः कैकेय्या वशं दुःखभागिनः सन्तः एष्यामः अतो वयं हता इत्यन्वयः॥ १९ ॥ २० ॥

२० ] ति० टी०—आत्मसममतिबुद्धिमन्मन्त्रियोग्यम्। 'दूरगतम्' इति पाठे दूरदेशावस्थानवन्तं निश्चित्य तत्समीपे दुःखार्तश्चिरं रुरोद॥ २० ॥

रा० टी०—इतीति। आत्मसममात्योचितमित्यर्थः ब्रुवन् सुमन्त्रः दूरगतं दूरदेशसंयोगानुकूलव्यापारवन्तं रामं दृष्ट्वा चिरं रुरुदे॥ २० ॥

२१ ] ति० टी०—स्पृष्टोदकमाचामन्तं शुचिं पवित्रम्॥२१॥

रा० टी०—तत इति। बाष्पे अश्रुणि विगते सति स्पृष्टोदकं स्पृष्टमुदकं येन तं सूतं रामः मधुरं वाक्यं पुनः पुनरुवाच॥ २१ ॥

गो० टी०—तत इति। रोदनस्याशुचिताहेतुत्वात् स्पृष्टोदकम् आचान्तम् अत एव शुचिम्॥ २१–२२ ॥

२२ ] ति० टी०—सुहृदं व्यसनापनोदकम्। यत एवमतः—यथेत्यादि॥ २२ ॥

रा० टी०—[illegible]—इक्ष्वाकूणामिति। त्वया तुल्यं [illegible] इक्ष्वाकूणां सुहृदं नोपलक्षये पश्यामि अतः यथा येन [illegible] राजा मां न शोचेत्तथा कुरु॥ २२ ॥

२३ ] ति० टी०—कामभारावसन्नः कामवेगेन पीडितः, यद्वाऽवसन्नो मदभिषेकादिमनोरथसमूहः तस्मादेतदुक्तं वक्ष्यमाणं च॥ २३ ॥

रा० टी०—शोकेति। कामभारावसन्नः कामः इच्छाविषयीभूतः भारोऽभिषेकधारणं अवसन्नः विध्वस्तः यस्य अत एव शोकोपहतचेताः अस्तीति शेषः तस्मादेतद्ब्रवीमि॥ २३ ॥

२४ ] ति० टी०—कैकेय्याः प्रियो यः कामो विषयो भरताभिषेकादिस्तदर्थं यथा येन प्रकारेण यद्वस्त्वाज्ञापयेत्तदविकाङ्क्षयाऽस्मदादीनामविशङ्कया कार्यं सादरमनुष्ठेयम्॥ २४ ॥

रा० टी०—शोकनाशकोपायं बोधयन्नाह—यदिति। महात्मा महीपतिः कैकेय्याः प्रियकामार्थं यद्वस्तु यथा येन प्रकारेण आज्ञापयेत्तत्तथा तेन प्रकारेण अविकाङ्क्षया विकाङ्क्षा अनादरः तदभावेन अत्यादरेणेत्यर्थः कार्यं कर्तव्यम्॥ २४ ॥

गो० टी०—गुरवः स्वामिनश्च न नियम्याः अपि तु सर्वप्रकारेणानुवर्तनीया इत्याशयेनाह—यद्यदिति। विकाङ्क्षा अनादरः तदभावेन आदरेणेत्यर्थः॥ २४ ॥

२५ ] ति० टी०—एतच्छब्दार्थमाह—यदेषामिति। प्रशासतीत्यभ्यस्तत्वादत् सर्वकृत्येष्वपि कामक्रोधप्रवृत्तेष्वपि॥२५॥

रा० टी०—एतदर्थमिति। नराधिपाः राजानः एतदर्थं राज्यानि प्रशासति। एतदर्थमेवाह—यद्येन प्रशासनेन सर्वकृत्येषु एषां राज्ञां मनः ईप्सितं न प्रतिहन्यते एतेन राजेप्सितमविचारेण कर्तव्यमिति सूचितम्॥ २५ ॥

गो० टी०—एतदिति। एतच्छब्दार्थमाह—यदेषामिति। प्रशासतीति अभ्यस्तत्वाददादेशः सर्वकृत्येषु कामात् क्रोधाद्वा प्रवृत्तेष्वित्यर्थः॥ २५ ॥

२६ ] ति० टी०—यत्कार्यं प्रति यथा येन प्रकारेणालीकमप्रियम् ताम्यति ग्लायति॥ २६ ॥

रा० टी०—यदिति। यद्यस्मिन्कार्ये अलीकमौदासीन्यं नाधिगच्छति शोकेन न ताम्यति तदेव कार्यं तथा तेन प्रकारेण कुरु॥ २६ ॥

---

१ ये त्वयाप्युपेति गो. पाठः। २ तथेति गो. पाठः। ३ यच्चदाज्ञापयेदिति गो. पाठः। ४ नरेश्वरा इति गो. पाठः। ५ दुःखेनेति गो. पाठः।

अदृष्टदुःखं राजानं वृद्धमार्यं जितेन्द्रियम् । ब्रूयास्त्वमभिवाद्यैव मम हेतोरिदं वचः ॥ २७ ॥
नैं चाहमनुशोचामि लक्ष्मणो न च शोचति । अयोध्यायाश्च्युताश्चेति वने वत्स्यामहेति वौं॥ २८ ॥
चतुर्दशसु वर्षेषु निवृत्तेषु पुनःपुनः । लक्ष्मणं मां च सीतां च द्रैक्ष्यसे शीघ्रमागतान्॥ २९ ॥
एवमुक्त्वा तु राजानं मातरं च सुमन्त्र मे । अन्याश्च देवीः सहिताः कैकेयीं च पुनःपुनः ॥ ३० ॥
आरोग्यं ब्रूहि कौसल्यामथ पादाभिवन्दनम् । सीताया मम चार्यस्य वचनाल्लक्ष्मणस्य च ॥ ३१ ॥
ब्रूयाश्चापि[५] महाराजं भरतं क्षिप्रमानय । आगतश्चापि भरतः स्थाप्यो नृपमते पदे ॥ ३२ ॥
भरतं च परिष्वज्य यौवराज्येऽभिषिच्य च । अस्मत्संतापजं दुःखं न त्वामभिभविष्यति ॥ ३३ ॥
भरतश्चापि वक्तव्यो यथा राजनि वर्तसे । तथा मातृषु वर्तेथाः सर्वास्वेवाविशेषतः ॥ ३४ ॥

---

गो० टी०—यदिति । अलीकमाप्रियम् 'अलीकं त्वप्रियेऽनृते' इत्यमरः ॥ २६ ॥

२७ ] ति० टी०—अभिवाद्य मत्प्रातिनिधितया मदीयनमस्कारं कृत्वा ॥ २७ ॥

रा० टी०—अदृष्टेति । त्वं राजानं अभिवाद्य मम हेतोः मम इदं वचः ब्रूयाः ॥ २७ ॥

गो० टी०—अदृष्टदुःखमिति । मम हेतोः मदर्थं मम प्रतिनिधित्वेनेत्यर्थः ॥ २७ ॥

२८ ] ति० टी०—इदंपदार्थमाह—न चेति । वने वत्स्यामहेति वेति संधिरार्षः वत्स्यामहे इति वा । नानुशोचामीति संबन्धः ॥ २८ ॥

रा० टी०—स्ववचनमेवाह । नेति । अयोध्यायाः वयं च्युताः इति न शोचामि लक्ष्मणश्च न शोचति वने वत्स्यामहे इति वा न शोचामि एतेन मच्छोकहेतुकः शोकस्त्वया न कार्य इति सूचितम् । नमुनेत्यत्र नकारस्य योगविभागेन निपाद्याः क्वचिदसिद्धत्वाभावबोधनात्सन्धिः ॥ २८ ॥

गो० टी०—स्वविश्लेषजनितदुःखेन राजा न निर्वहेदिति भिया तदाश्वासकानि वाक्यान्याह—नैवाहमिति । लक्ष्मणो न च मैथिलीत्यत्र शोचतीति विपरिणामः कर्तव्यः वत्स्यामहेत्यत्र आर्षः सन्धिः ॥ २८ ॥

२९ ] ति० टी०—पुनरागतानस्मान्पुनस्त्वं द्रक्ष्यसीति संबन्धः, पुनः पुनरभीक्ष्णं द्रक्ष्यसि वा ॥ २९ ॥

रा० टी०—चतुर्दशेति । शीघ्रमागताँल्लक्ष्मणादीन्द्रक्ष्यसे ॥ २९ ॥

गो० टी०—चतुर्दशास्विति । पुनः पुनर्द्रक्ष्यसि "नित्यवीप्सयोः" इति द्विवचनम् आदरातिशयेन सदा द्रक्ष्यसीत्यर्थः॥२९॥

३० ] ति० टी०—सहिताः मम मात्रेति शेषः । पुनः पुनरभीक्ष्णं पूर्वोक्तं वाक्यमुक्त्वा कौसल्यामित्युपलक्षणम् सर्वाः प्रति कैकेयीं चारोग्यम् अहमरोगोऽदुःख इति ब्रूहि कैकेयीमिति न व्यङ्ग्योक्तिः किंतु दैवकृतत्वेनास्या अनपराधित्वमित्याशयेन ॥ ३० ॥

३१ ] ति० टी०—अथारोग्यकथनानन्तरं सर्वान्प्रत्यार्यस्य ज्येष्ठस्य मम सीताया लक्ष्मणस्य च वचनात्पादाभिवन्दनं ब्रूहि ॥ ३१ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण राजानमुक्त्वा मे मातरं कौशल्यां सहिताः हितत्वयुक्ताः अन्याश्च देवी राज्ञीः केकयीं च पुनः पुनः मे आरोग्यं ब्रूहि । अथ अनन्तरं सीतायाः आर्यस्य मम च लक्ष्मणस्य च वचनात् पादाभिवन्दनं कौशल्यादिचरणप्रणामं ब्रूहि । श्लोकद्वयमेकान्वयि हितशब्दो भावप्रधानः ॥ ३० ॥ ३१ ॥

गो० टी०—एवमित्यादि । राजानं मे मातरं अन्या देवीः सहिताः कौसल्यया सह वर्तमानाः कैकेयीं च पुनः पुनरेवमुक्त्वा अथ कौसल्यामारोग्यं पादाभिवन्दनं च ब्रूहीत्यन्वयः । आर्यस्य शास्त्रोदितज्येष्ठानुवर्तनरूपपरमधर्मवेदित्वात् लक्ष्मणस्यार्यत्वोक्तिः, कौसल्यां प्रत्येव पादाभिवन्दनकथनम् अन्यत्र निषेधात् 'आचार्यवदाचार्यदारे वृत्तिः पादसंवाहनवर्जम्' इति निषेधस्य सपत्नीमातृष्वपि तुल्यत्वात् ॥ ३०–३१ ॥

३२ ] ति० टी०—एवं पितरं मातरं प्रति संदिश्य पुनः पितरं प्रतिसंदिशति—ब्रूया इति । महाराजं दशरथं नृपमते राजसंमते पदे राज्ये ॥ ३२ ॥

रा० टी०—ब्रूया इति । भरतं क्षिप्रं शीघ्रमानय इति च महाराजं ब्रूयाः तदानयने प्रयोजनमाह—आगतो भरतः नृपमते राजेच्छाविषयीभूते पदे स्थाने स्थाप्यः ॥ ३२ ॥

गो० टी०—ब्रूया इति । नृपमते राज्ञामभिमते पदे यौवराज्य इत्यर्थः । अभिषिच्य स्थितमिति शेषः नाभिभविष्यतीत्यत्रेतिकरणं द्रष्टव्यम् अस्य ब्रूया इत्यनेन संबन्धः ॥३२॥३३॥

३३ ] ति० टी०—अथ सुमन्त्रं प्रत्याह—भरतं चेति । अभिषिच्याभिषेचय्य ॥ ३३ ॥

रा० टी०—सुमन्त्रदुःखध्वंसोपायं वदन्नाह—भरतमिति । यौवराज्ये भरतमभिषिच्य इव सर्वं तदधीनं कृत्वेत्यर्थः परिष्वज्य तमालिङ्ग्येत्यर्थः विद्यमानं त्वामस्मत्संतापजं दुःखं नाभिभविष्यति । च इवार्थे ॥ ३३ ॥

३४ ] ति० टी०—राजनि दशरथे ॥ ३४ ॥

---

१ नैवाहमिति गो. पाठः । २ मैथिलीति गो. पाठः । ३ चेति गो. पाठः । ४ द्रक्ष्यसि क्षिप्रमिति गो. पाठः । ५ हीति गो. पाठः ।

यथा च तव कैकेयी सुमित्रा चाविशेषतः । तथैव देवी कौसल्या मम माता विशेषतः ॥ ३५ ॥
तातस्य प्रियकामेन यौवराज्यमवेक्षता । लोकयोरुभयोः शक्यं नित्यदा सुखमेधितुम् ॥ ३६ ॥
निवर्त्यमानो रामेण सुमन्त्रः प्रतिबोधितः । तत्सर्वं वचनं श्रुत्वा स्नेहात्काकुत्स्थमब्रवीत् ॥ ३७ ॥
यदहं नोपचारेण ब्रूयाः स्नेहादविक्लवम् । भक्तिमानिति तत्तावद्वाक्यं त्वं क्षन्तुमर्हसि ॥ ३८ ॥
कथं हि त्वद्विहीनोऽहं प्रतियास्यामि तां पुरीम् । तव तात वियोगेन पुत्रशोकातुरामिव ॥ ३९ ॥
सराममपि तावन्मे रथं दृष्ट्वा तदा जनः । विना रामं रथं दृष्ट्वा विदीर्येतापि सा पुरी ॥ ४० ॥
दैन्यं हि नगरी गच्छेद्दृष्ट्वा शून्यमिमं रथम् । सूतावशेषं स्वं सैन्यं हतवीरमिवाहवे ॥ ४१ ॥
दूरेऽपि निवसन्तं त्वां मानसेनाग्रतः स्थितम् । चिन्तयन्तोऽद्य नूनं त्वां निराहाराः कृताः प्रजाः ॥ ४२ ॥

रा० टी०—भरत इति । भरतश्च वक्तव्यः । वक्तव्यमेवाह-अविशेषतः वैषम्यरहितत्वेन ॥ ३४ ॥

३५ ] ति० टी०—अविशेषतः शत्रुघ्नसंबन्धात्कैकेय्यविशेषतः कैकेय्यविशेषेत्यर्थः । एवं मम मातापि कैकेय्यविशेषाद्द्रष्टव्येत्यर्थः ॥ ३५ ॥

रा० टी०—यथेति । एतासु विषमदृष्टिर्न कर्तव्येति तात्पर्यम् ॥ ३५ ॥

गो० टी०—भरत इत्यादिश्लोकेनोक्तमर्थं विवृणोति-यथेति । सुमित्रोक्तिः लक्ष्मणशत्रुघ्नपक्षपातात् अवेक्षता अङ्गीकुर्वता त्वयेति शेषः । नित्यदा सर्वदा छान्दसो दाप्रत्ययः इति भरतश्चापि वक्तव्य इति पूर्वेणान्वयः ॥ ३४—३७ ॥

३६-३७ ] ति० टी०—अवेक्षताङ्गीकुर्वता उभयोर्लोकयोरिहपरलोकयोः । नित्यदा सर्वदा छान्दसो दाप्रत्ययः । सुखं वर्धयितुं शक्यम् तेन तथा वर्तस्व येन लोकद्वयेऽपि सुखं भवतीति व्यङ्ग्यं पर्यायोक्तमत्रालंकारः ॥ ३६ ॥ ३७ ॥

रा० टी०—तातस्येति । तातस्य जनकस्य प्रियकामेन अत एव यौवराज्यं यौवराज्यसदृशपालनमित्यर्थः अपेक्षता स्वीकुर्वता त्वया उभयोः प्रकटाप्रकटसाकेतयोः सुखमेधितुं वर्धयितुमतिसुखं प्राप्तुमित्यर्थः शक्यम् ॥ ३६ ॥

रा० टी०—निवर्त्यमान इति । रामेण निवर्त्यमानः अत एव प्रतिबोधितः सुमन्त्रः काकुत्स्थमब्रवीत् ॥ ३७ ॥

३८ ] ति० टी०—उपचारः स्वामिभृत्योचितः सत्कारः तेन न ब्रूया ब्रूयाम् छान्दसमेतत् । अपि तु स्नेहाद्विक्लवं वाक्यं ब्रवीमि तद्वाक्यं भक्तिमानिति ज्ञात्वा क्षन्तुमर्हसीति संबन्धः ॥ ३८ ॥

रा० टी०—तद्वचनमेवाह-यदिति । यद्वचः उपचारेण भृत्यवक्तव्यत्वेन न ब्रूयां किंतु स्नेहादविक्लवं धार्ष्ट्यविशिष्टं यथा स्यात्तथा ब्रूयाम् तद्वाक्यं भक्तिमानयं मद्विषयकातिस्नेहवानिति ज्ञात्वा क्षन्तुमर्हसि ॥ ३८ ॥

गो० टी०—यदिति । अहमविक्लवः धृष्टः सन् यद्वाक्यं ब्रूयां तन्नोपचारेण किंतु स्नेहात् तद्वाक्यं त्वं तावत् साकल्येन क्षन्तुमर्हसीति संबन्धः पाठभेदः । तव स्नेहादविक्लवो निर्भयः यद्वच उपचारेण न ब्रूयां सेवाधर्मं विहाय ब्रूयां तद्वाक्यं भक्तिमानिति हेतोः क्षन्तुमर्हसि ॥ ३८ ॥

३९ ] ति० टी०—पुत्रशोकः पुत्रवियोगजः शोकः ॥ ३९ ॥

रा० टी०—तद्वचनमेवाह—कथमिति । हे तात ! तव वियोगेन पुत्रशोकातुरामिव तां पुरीमयोध्यां त्वद्विहीनोऽहं कथं प्रतियास्यामि ॥ ३९ ॥

गो० टी०—कथमिति । तव तावद्वियोगेनेति पाठः । तव तातेति पाठे तात स्वामिन्नित्यर्थः वृद्धत्वाद्वत्सेति संबोधनं वा । पुत्रवियोगजः शोकः पुत्रशोकः तेनाक्रान्तामिव स्थितां पुरीमित्यन्वयः ॥ ३९ ॥

४० ] ति० टी०—मे रथं मत्प्रवर्त्यं रथं दूराद्दृष्ट्वा । तदा दर्शनकाले सराममपि अपिः संभावने स रामं संभावयमानो जनः पुरी च निकटगतं रथं विना रामं दृष्ट्वा विदीर्येतापि । अपिः संभावनायाम् ॥ ४० ॥

रा० टी०—स इति । तावत्पूर्वं मे रथं सरामं रामविशिष्टं दृष्ट्वा ऽनुमानतो ज्ञात्वा तदा समीपागमनसमये विना रामं रथं दृष्ट्वा साक्षादवलोक्य सा पुरी विदीर्येतापि । अपिः संभावनार्थकः ॥ ४० ॥

गो० टी०—सराममिति । पूर्वं सरामं रथं दृष्ट्वा इदानीं रामं विना स्थितं रथं दृष्ट्वा जनः सा पुर्यपि विदीर्येत दुःखेन भिद्येत पुरीशब्दोऽत्र जनव्यतिरिक्तपश्वादिपरः ॥ ४० ॥

४१ ] ति० टी०—सूतावशेषं हतवीरं रथं दृष्ट्वा स्वसैन्यमिव ॥ ४१ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—दैन्यमिति । शून्यं त्वया रहितं रथं दृष्ट्वा नगरी दैन्यं गच्छेत् तत्र दृष्टान्तः सूतावशेषं सूतमात्रावशिष्टमाहवे संग्रामे हतवीरं स्वसैन्यमिव ॥ ४१ ॥

गो० टी०—दैन्यमिति । आहवे हतवीरं हतं वीरं दृष्ट्वा स्वसैन्यमिव सूतावशेषं शून्यं रामरहितं रथं दृष्ट्वा नगरी दैन्यं गच्छेत् ॥ ४१ ॥

४२ ] ति० टी०—दूरेऽपि निवसन्तं त्वां मानसेन ध्या-

१ च विशेषत इति गो. पाठः । २ शोकार्तेति इति गो. पाठः । ३ ब्रूयामिति गो. रा. पाठः । ४ अविक्लव इति गो. पाठः । ५ तावदिति गो. पाठः । ६ आकुलामिति गो. पाठः । ७ चिन्तयन्त्य इति गो. रा. पाठः ।

दृष्टं तद्धि[1] त्वया राम यादृशं त्वत्प्रवासने । प्रजानां संकुलं वृत्तं त्वच्छोकक्लान्तचेतसाम् ॥ ४३ ॥
आर्तनादो हि यः पौरैरुन्मुक्तस्त्वत्प्रवासने[2] । सरथं मां निशाम्यैव[3] कुर्युः शतगुणं ततः ॥ ४४ ॥
अहं किं चापि वक्ष्यामि देवीं तव सुतो मया । नीतोऽसौ मातुलकुलं संतापं मा कृथा इति ॥ ४५ ॥
असत्यमपि नैवाहं ब्रूयां वचनमीदृशम् । कथमप्रियमेवाहं ब्रूयां सत्यमिदं वचः ॥ ४६ ॥
मम तावन्नियोगस्थास्त्वद्बन्धुजनवाहिनः । कथं रथं त्वया हीनं प्रवाह्यन्ति[4] हयोत्तमाः ॥ ४७ ॥

पारेणाग्रतः पुरः स्थितमिव त्वां चिन्तयन्त्यो रथेनागतप्रायो राम इति चिन्तयन्त्यः प्रजा जना अद्य एकस्य मम गमनदिने नूनं निश्चयेन निराहाराः कृता निराहारसंकल्पवत्यः कृता मरिष्यन्तीति यावत् ॥ ४२ ॥

रा० टी०—दूरे इति । दूरे निवसन्तं त्वां दूरे निवसन्तीं त्वां सर्वतो विलक्षणां सीतां च मानसेन मनोव्यापारेण अग्रतः स्थितं स्थितां च चिन्तयन्त्यः प्रजाः अद्य त्वद्रहितरथगमनसमये निराहाराः कृताः त्वदागमनाभावं श्रुत्वा आहारादिकं न करिष्यन्तीत्यर्थः निवसन्तमित्यस्य स्थितमित्यस्य च लिङ्गविपरिणामेनान्यत्राप्यन्वयः । एकस्त्वाशब्दः सर्वादिपठितादन्तप्रकृतिकटाबन्तः ॥ ४२ ॥

गो० टी०—दूर इति । प्रजाः अयोध्यावासिन्यः दूरे निवसन्तमपि त्वां मानसेनाग्रतः स्थितं त्वां चिन्तयन्त्यः भावनाप्रकर्षेण पुरतः स्थितमिव पश्यन्त्यः निराहाराः कृताः आहारेऽप्यादरं न कुर्वन्तीत्यर्थः ॥ ४२ ॥

४३ ] ति० टी०—तस्यैव युक्त्या साधनं करोति—दृष्टमित्यादिना । संकुलमार्तनादादि ॥ ४३ ॥

रा० टी०—अत्र त्वदनुभव एव प्रमाणमिति बोधयन्नाह—दृष्टमिति । हे राम ! त्वत्प्रवासने त्वच्छोकक्लान्तचेतसां प्रजानां संकुलमार्तरवादिविशिष्टं यादृशं वृत्तं तत्तादृशं त्वया दृष्टमेव ॥ ४३ ॥

गो० टी०—अत्रार्थे पूर्वानुभवं प्रमाणयति—दृष्टमिति । त्वत्प्रवासने प्रजानां यादृशं संकुलं वृत्तं संक्षोभो जातः तादृशं त्वया दृष्टं हि ॥ ४३ ॥

४४ ] ति० टी०—सरथं मामेव निशाम्येत्यन्वयः ॥ ४४ ॥

रा० टी०—आर्तेति । त्वत्प्रवासने यः आर्तनादः पौरैः उन्मुक्तः ततस्तस्मादार्तनादाच्छतगुणं नादं सरथं रथसहितं मामेव निशम्य कुर्युः ॥ ४४ ॥

गो० टी०—आर्तनाद इति । ततः प्रवासकालिकनादादित्यर्थः ॥ ४४ ॥

४५–४६ ] ति० टी०—पुना रामं विना स्वगमनेऽप्युपपत्तिमाह—अहमिति । अपि च अहं देवीं किं वक्ष्यामि देवीं कौसल्याम् । तव सुतो मया मातुलकुलं प्रापित इति ब्रूहि, तत्राह—ईदृशं वचनं प्रियमप्यसत्यं नैवाहं ब्रूयाम् । वनं प्रापित इत्येव तर्हि ब्रूहि, तत्राह—इदं सत्यमप्यप्रियमेव, अतः कथं ब्रूयाम् ' सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ' इति स्मृतेः । तस्मात्तव मातरं प्रति वक्तुं योग्यस्योत्तरस्याभावादहं न गमिष्यामीति भावः । एतदेव ध्वनयन्वक्ष्यति—'नत्र शक्ष्याम्यहं गन्तुम्' इति । यत्तु कतकेनासत्यमपि मातुलकुलगमनं वक्ष्यामि न तु सत्यमपि वनगमनमप्रियत्वादित्युक्तम्, तत्तु तत्र शक्ष्यामि इत्यादिनोक्तवचसां नगरगमनाभावप्रतिपादकत्वस्यैव लाभाच्चिन्त्यम् ॥ ४५ ॥ ४६ ॥

रा० टी०—अहमिति । देवीं कौशल्यामहं किं वक्ष्यामि येन वचनेन शोको न स्यात्तद्वचनं वदेत्यर्थः । ननु त्वयैव तद्विचार्य उच्यतामित्यत आह—तव सुतो मया मातुलकुलं नीतः अतः संतापं मा कृथाः इतीदृशमसत्यमेव वचनमहं नैव ब्रूयाम् एतेनेदृशासत्यकथने कंचित्कालं किंचिच्छोकहानिः संभवतीति सूचितम् । ननु तर्हि सत्यमेव ब्रूहीत्यत आह—अप्रियमिदं सत्यं वचः कथं ब्रूयाम् । तथा च मनुः 'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ' इति । श्लोकद्वयमेकान्वयि ॥ ४५ ॥ ४६ ॥

गो० टी०—यदि प्रियं ब्रूयां तदसत्यं भवति यदि च सत्यं ब्रूयां तदप्रियं भवति अतः कौसल्यां प्रति किमपि वक्तुं न शक्यमित्यभिप्रायेणाह—अहमित्यादिना । देवीमहं किं वा वक्ष्यामि न किमपि वक्तुं शक्नोमीत्यर्थः । तदेवोपपादयति—तवेत्यादिना । तवासौ सुतो मया मातुलकुलं नीतः तस्मात् संतापं मा कृथा इतीदृशमसत्यवचनमप्यहं नैव ब्रूयाम् असत्यवचनप्रतिषेधादिति भावः । सत्यमेव वदेत्यत्राह—कथमिति । अप्रियमिदं वनप्रापणरूपं सत्यं वचनं कथं ब्रूयां देव्या हानिप्रसङ्गादिति भावः ॥ ४५ ॥ ४६ ॥

४७ ] ति० टी०—रथोऽपि नेतुमशक्य इत्यनुपपत्त्यन्तरमाह—ममेति । एतेऽश्वा मम नियोगस्था मत्प्रेरणमात्राधीना मत्प्रेरणया त्वद्बन्धुजनवहनशीला एव, न त्वन्यवहनशीलाः, नापि त्वद्बन्धुरहितरथवहनशीलाः अतस्त्वया हीनं रथमेते कथं प्रवाह्यन्ति, न कथमपि वहन्ति अतो रथनयनं दुःशक्यमिति भावः ॥ ४७ ॥

रा० टी०—इदानीं रथगमनस्यैवाशक्यत्वं बोधयन्नाह—ममेति । मम नियोगस्थाः मम नियमने स्थिताः त्वद्बन्धुजनवाहिनः तव बन्धुजनः त्वमेव बन्धुजनश्च त्वद्बन्धुजनः स च स च त्वद्बन्धुजनौ तावेव वहन्ति तच्छीलिनः हयोत्तमाः त्वया त्वद्बन्धुना च विहीनं रथं कथं प्रवाह्यन्ति प्रवहणं करिष्यन्ति कथमिति संभावनायाम् । अत्र त्वयेत्यनेन त्वद्बन्धुलाभो भेदाध्यवसायाद्वाकाभाकयोर्ग्रहणं त्वाहस्यागमकं तत्र प्रकरणम् ॥ ४७ ॥

१ तद्धीति गो. पाठः । २ पौरैर्मुक्तस्त्वद्विप्रवासने इति गो. पाठः । ३ एवेति गो. रा. पाठः । ४ प्रवक्ष्यन्तीति गो. पाठः

तत्र शक्ष्याम्यहं गन्तुमयोध्यां त्वदृतेऽनघ । वनवासानुयानाय मामनुज्ञातुमर्हसि ॥ ४८ ॥
यदि मे याचमानस्य त्यागमेव करिष्यसि । सरथोऽग्निं प्रवेक्ष्यामि त्यक्तमात्र इह त्वया ॥ ४९ ॥
भविष्यन्ति वने यानि तपोविघ्नकराणि ते । रथेन प्रतिबाधिष्ये तानि सर्वाणि राघव ॥ ५० ॥
त्वत्कृतेन मया प्राप्तं रथचर्याकृतं सुखम् । आशंसे त्वत्कृतेनाहं वनवासकृतं सुखम् ॥ ५१ ॥
प्रसीदेच्छामि तेऽरण्ये भवितुं प्रत्यनन्तरः । प्रीत्याभिहितमिच्छामि भव मे प्रत्यनन्तरः॥ ५२ ॥
इमेऽपि च हया वीर यदि ते वनवासिनः । परिचर्यां करिष्यन्ति प्राप्स्यन्ति परमां गतिम् ॥५३॥
तव शुश्रूषणं मूर्ध्ना करिष्यामि वने वसन् । अयोध्यां देवलोकं वा सर्वथा प्रजहाम्यहम् ॥ ५४ ॥
नहि शक्या प्रवेष्टुं सा मयाऽयोध्या त्वया विना । राजधानी महेन्द्रस्य यथा दुष्कृतकर्मणा ॥ ५५ ॥

---

गो० टी०—ममेति । त्वद्बन्धुजनाः त्वद्वंश्याः यद्वा त्वद्बन्धुभूतसीतालक्ष्मणरूपजनाश्च त्वद्बन्धुजनाः तद्वाहिनः प्रवक्ष्यन्ति वोढारो भविष्यन्ति वहेर्लृटि रूपम् ॥ ४७ ॥ ४८ ॥

४८ ] ति० टी०—उपसंहरति–तत्रेति ॥ ४८ ॥

रा० टी०—तदिति । तदुक्तहेतोः त्वदृते त्वां विना अयोध्यां गन्तुं न शक्ष्यामि अतः वनवासानुयानाय वनवासानुगमनाय मामनुज्ञातुं त्वमर्हसि ॥ ४८ ॥

४९ ] ति० टी०—त्यक्तमात्रे त्यागक्षण एव ॥ ४९ ॥

रा० टी०—यदीति । याचमानस्य मे यदि त्यागमेव करिष्यसि तर्हि त्यक्तमात्रः कारणाभावेनापि त्यक्त एव सरथोऽहमग्निं प्रवेक्ष्यामि ॥ ४९ ॥

गो० टी०—यदीति । त्यक्तमात्रः तत्क्षण एव त्यक्तः॥४९॥

५० ] ति० टी०—भविष्यन्ति संभावितानि रथेन साधनेनाहमेव रथी भूत्वा प्रतिबाधिष्ये ॥ ५० ॥

रा० टी०—अनुगमने प्रयोजनं बोधयन्नाह—भविष्यन्तीति। ते तपोविघ्नकराणि यानि भविष्यन्ति चेदिति शेषः तानि बाधिष्ये एतेनाहमवश्यं नेतव्य इति सूचितम् ॥ ५० ॥

गो० टी०—भविष्यन्तीति । रथेन साधनेन प्रतिबाधिष्ये अहमेव रथी भूत्वा निवर्तयिष्यामीत्यर्थः। 'तानि सत्त्वानि' इति पाठः सर्वाणीति पाठे सत्त्वानीति शेषः ॥ ५० ॥

५१ ] ति० टी०—ननु सूतेन त्वया कथं रथिकृत्यं कर्तुं शक्यं तत्राह—त्वत्कृतेनेति । न केवलमहं सूतः किंतु प्रधानभूतो मन्त्री सूतत्वं तु त्वत्कृतानुग्रहरूपफलेन तदर्थफलस्यापि हेतुत्वाङ्गीकारान्मयाङ्गीकृतमिति शेषः तत्फलं च त्वदीयरथचर्यया त्वदनुग्रहकृतं सुखं मया प्राप्तम् , इदानीं त्वत्कृतेन त्वदङ्गीकृतवनानुगमनानुग्रहेण वनवासकृतं सुख राज्यचिन्तादुःखाभावान्महत्सुखमाशंसे प्रार्थयामि, एतेन त्वदवतारं ज्ञात्वैव त्वद्रथचर्यासौभाग्याय सूतत्वं मयाङ्गीकृतमिति ध्वनितम् ॥५१॥

रा० टी०—नन्वनुगमने क्लेशः स्यादित्यत आह—त्वदिति। त्वत्कृतेन त्वदिच्छया मया रथचर्याकृतं रथवाहनजनितं सुखं प्राप्तमतः त्वत्कृतेन त्वदिच्छयैव वनवासकृतं सुखमाशंसे इच्छामि ॥ ५१ ॥

गो० टी०—त्वदिति । त्वत्कृते त्वन्निमित्तं रथचर्याकृतं सुखं मया नावाप्तं राज्याभिषिक्तत्वद्रथचर्याकृतसुखं मया भाग्यहीनेन न लब्धं तथापि त्वत्कृतेन त्वत्साहाय्यकरणेन वनवासकृतमपि सुखमाशंसे इच्छामि राज्ये रथचर्याकृतसुखाभावेऽपि वा सारथित्वेन परिचर्याकरणकृतं वापि सुखं मम भवत्विति भावः, यद्वा त्वत्कृतेन त्वया कृतेनानुग्रहेणेत्यर्थः । रथचर्याकृतं रथप्रेरणकृतं सुखं कृतं मया अवाप्तम् एवं त्वत्कृतेनानुग्रहेण वनवासकृतं सुखमप्यहमाशंस इति ॥ ५१ ॥

५२-५३ ] ति० टी०—प्रत्यनन्तरः प्रत्यासन्नः अनुकूल इति यावत् । प्रत्यनन्तरो भवेति त्वया प्रीत्याभिहितं वाक्यं श्रोतुमिच्छामि ॥ ५२ ॥ ५३ ॥

रा० टी०—प्रसीदेति । अरण्ये ते प्रत्यनन्तरः अतिनिकटकवर्ती भवितुमिच्छामि । तत्र हेतुः प्रीत्या ते अभिहितमुक्तमिच्छामि श्रोतुमिति शेषः । अतः मे प्रत्यनन्तरस्त्वं भव । यदि च अभिहितमित्यस्य आज्ञामित्यर्थस्तदा श्रोतुमिति नाध्याहार्यम् ॥ ५२ ॥

गो० टी०—प्रसीदेति । प्रत्यनन्तरः समीपवर्ती मे प्रत्यनन्तरो भवेति प्रीत्या अभिहितमिच्छामि त्वकर्तृकमभिधानमिच्छामीत्यर्थः । क्रियतामिति मां वदेतिवत् ॥ ५२ ॥

रा० टी०—इमे इति । परिचर्यां सेवाम् ॥ ५३ ॥

गो० टी०—इम इति । परमां गतिं स्वामिशुश्रूषणादिति भावः ॥ ५३ ॥

५४-५५ ] ति० टी०—देवलोकं वेत्यनेन त्वद्भक्तानां भक्त्यन्तरायभूतदेवलोकप्राप्तिरपि हेयैवेति सूचितम् ॥५४॥५५॥

रा० टी०—तवेति । तव शुश्रूषणं सेवां वने करिष्यामि अतः अयोध्यां देवलोकं देवलोकगमनं च प्रजहामि त्यजामि एतेन यथेच्छं देवलोकमप्ययं गच्छतीति व्यञ्जितम् ॥ ५४ ॥

गो० टी०—तवेति । मूर्ध्नेत्यस्य सोपचारमिति फलितार्थः । सर्वथा सर्वप्रकारेण ॥ ५४ ॥

रा० टी०—नहीति । दुष्कृतकर्मणा पापकर्मकारिणा महेन्द्रस्य इन्द्रस्य राजधानी अमरावतीव ॥ ५५ ॥

गो० टी०—नहीति । महेन्द्रस्य राजधानी स्वर्गः ॥५५॥

---

१ सत्त्वानीति गो. पाठः । २ ऽवाप्तमिति गो. पाठः ।

वनवासे क्षयं प्राप्ते ममैषे हि मनोरथः । यदनेन रथेनैव त्वां वहेयं पुरीं पुनः ॥ ५६ ॥
चतुर्दश हि वर्षाणि सहितस्य त्वया वने । क्षणभूतानि यास्यन्ति शतसंख्यानि चान्यथा ॥ ५७
भृत्यवत्सल तिष्ठन्तं भर्तृपुत्रगते पथि । भक्तं भृत्यं स्थितं स्थित्या न मा त्वं हातुमर्हसि ॥ ५८ ॥
एवं वहुविधं दीनं याचमानं पुनः पुनः । रामो भृत्यानुकम्पी तु सुमन्त्रमिदमब्रवीत् ॥ ५९ ॥
जानामि परमां भक्तिमहं ते भर्तृवत्सल । शृणु चापि यदर्थं त्वां प्रेषयामि पुरीमितः ॥ ६० ॥
नगरीं त्वां गतं दृष्ट्वा जननी मे यवीयसी । कैकेयी प्रत्ययं गच्छेदिति रामो वनं गतः ॥ ६१ ॥
विपरीते तुष्टिहीना वनवासं गते मयि । राजानं नातिशङ्केत मिथ्यावादीति धार्मिकम् ॥ ६२ ॥
एष मे प्रथमः कल्पो यदम्बा मे यवीयसी । भरतारक्षितं स्फीतं पुत्रराज्यमवाप्स्यते ॥ ६३ ॥
मम प्रियार्थं राज्ञश्च सुमन्त्र त्वं पुरीं व्रज । संदिष्टश्चापि यानर्थांस्तांस्तान्ब्रूयास्तथा तथा ॥ ६४ ॥
इत्युक्त्वा वचनं सूतं सान्त्वयित्वा पुनः पुनः । गुहं वचनमक्लीबो रामो हेतुमदब्रवीत् ॥ ६५ ॥

---

५६ ] ति० टी०—वनवासे क्षयं प्राप्ते वनवासकाले समाप्ते पुरीं वहेयं प्रापयेयमिति यत्, एष मे मनोरथः ॥ ५६ ॥

रा० टी०—वनवासे स्वप्रयोजनान्तरं बोधयन्नाह—वनवास इति । वनवासे नियमितवनवासकाले क्षयं प्राप्ते सति यत्प्रयत्नवानहमनेन रथेन पुरीमयोध्यां त्वां वहेयं हि एष मम मनोरथः ॥ ५६ ॥

गो० टी०—वनवास इति । वनवासे क्षयं प्राप्ते वनवासे समाप्ते सतीत्यर्थः । वहेयमिति यत् अयं मे मनोरथ इति संबन्धः ॥ ५६ ॥

५७ ] ति० टी०—अन्यथा त्वया रहितस्य स्थितिपक्षे॥ ५७॥

रा० टी०—चतुर्दशेति । वने त्वया सहितस्य मे चतुर्दशवर्षाणि क्षणभूतानि क्षणत्वं प्राप्तानि यास्यन्ति अन्यथा सहगमनाभावे शतसंख्यानि यास्यन्ति संहिताया अभावस्तु "इकोऽसवर्णे शाकल्यस्य—" इति प्रकृतिभावात् ॥ ५७ ॥

गो० टी०—चतुर्दशेति । त्वया सहितस्येति ममेति शेषः । क्षणभूतानि क्षणतुल्यानि अतोऽन्यथा त्वद्विरह इत्यर्थः । शतसंख्यानि भवेयुरिति शेषः । शतगुणितानि भविष्यन्तीति भावः ॥ ५७ ॥

५८–६० ] ति० टी०—भर्तृपुत्रगते राजपुत्राश्रिते पथि यथा भृत्येन स्थातव्यं तथा त्वद्विषये तिष्ठन्तं सर्वभृत्यमध्ये भक्तिमन्तं भृत्यं स्थित्या भृत्ययोग्यया स्थित्या सर्वदा स्थितं नियुक्तं कार्यविषये कदाप्यपराधरहितमिति यावत् ॥ ५८–६० ॥

रा० टी०—भृत्येति । हे भृत्यवत्सल ! भर्तृपुत्रगते स्वामिपुत्रकर्तृकगतिमति पथि मार्गे तिष्ठन्तं स्थित्या सेवकरीत्या स्थितं विद्यमानं मां हातुं त्यक्तुं त्वं नार्हसि ॥ ५८ ॥

रा० टी०—एवमिति । भृत्यानुकम्पी भृत्यविषयकातिदयावान्रामः सुमन्त्रमब्रवीत् ॥ ५९ ॥

रा० टी०—तद्वचनमेवाह—जानामीति । यदर्थं त्वामितः प्रेषयामि तच्छृणु ॥ ६० ॥

गो० टी०—भृत्येति । हे भृत्यवत्सल ! भक्तं भृत्यमत एव स्थित्यां मर्यादायां स्थितम् अस्खलितमर्यादमत एव भर्तृपुत्रगते स्वामिपुत्रेण त्वया गते पथि वनगमने तिष्ठन्तं निश्चितत्वदनुगमनं मां त्वं हातुं नार्हसि ॥ ५८–६० ॥

६१ ] ति० टी०—रामो वनं गत इति प्रत्ययं निश्चयं कैकेयी गच्छेदित्यन्वयः ॥ ६१ ॥

रा० टी०—तत्प्रयोजनमाह—नगरीमिति । नगरीमयोध्यां त्वां गतं प्राप्तं दृष्ट्वा यवीयसी कनिष्ठा मे जननी कैकेयी रामो वनं गत इति प्रत्ययं प्रतीतिं गच्छेत्प्राप्नुयात् । रथेन गमने केनचिद्राज्ञा स्वदेशं प्रापित इति शङ्का भविष्यतीति सूचितम्॥ ६१॥

गो० टी०—नगरमित्यादि । श्लोकत्रयमेकान्वयम् । रामो वनं गत इति कैकेयी प्रत्ययं विश्वासं गच्छेत् धार्मिकं राजानं मिथ्यावादीति नातिशङ्केत भरतारक्षितं भरतेन आसमन्तात् रक्षितं पुत्रराज्यम् अवाप्नुयादिति च यत् एषः मे प्रथमः कल्पः कर्तव्येषु प्रयोजनेषु मुख्यः 'मुख्यः स्यात् प्रथमः कल्पः' इत्यमरः ॥ ६१–६३ ॥

६२] ति० टी०—अतिशङ्काऽन्यथाशङ्का तां न कुर्यात् ॥ ६२॥

रा० टी०—ननु तत्प्रतीत्या किमित्याह—परितुष्टेति । मयि वनवासं गतं तन्निश्चयत्वविशिष्टगतिमति सति परितुष्टा सती धार्मिकं राजानं मिथ्यावादी इति नातिशङ्केत ॥ ६२ ॥

६३–६५ ] ति० टी०—इत्येष मे प्रथमः कल्पो मुख्यं प्रयोजनं त्वद्गमनस्येत्यन्वयः भरतेनारक्षितं समन्ताद्रक्षितमीदृशं पुत्रराज्यं तज्जन्यं सुखं प्राप्नुयादिति च मम त्वद्गमनस्य प्रयोजनं भरतानयनस्य त्वदधीनत्वात् ॥ ६३–६६ ॥

रा० टी०—एष इति । भरतारक्षितं भरतेन आसमन्ताद्रक्षितमत एव स्फीतं प्रशस्तवृत्तिमत्पुत्रराज्यं यवीयसी अम्बा कैकेयी अवाप्स्यते एषः मम प्रथमः कल्पः संकल्पः एतेन भरतागमनादि त्वद्गमनसाध्यमिति बोधितम् ॥ ६३ ॥

---

१ एवेति रा. पाठः । २ अतोऽन्यथेति गो. अन्यथेति रा. पाठः । ३ स्थित्यां त्वं न मामिति गो. पाठः । ४ मयीति गो. पाठः । ५ परितुष्टा हि सा देवीति गो. रा. पाठः । ६ स्फीतं······मवाप्नुयादिति गो. पाठः । ७ सरथ इति गो. पाठः । ८ असीति गो. पाठः । ९ अक्लीबमिति रा. पाठः

नेदानीं गुह योग्योऽयं वासो मे सजने वने । अवश्यमाश्रमे[1] वासः कर्तव्यस्तद्गतो विधिः ॥ ६६ ॥
सोऽहं गृहीत्वा नियमं तपस्विजनभूषणम् । हितकामः पितुर्भूयः सीताया लक्ष्मणस्य च ॥ ६७ ॥
जटाः कृत्वा गमिष्यामि न्यग्रोधक्षीरमानय । तत्क्षीरं राजपुत्राय गुहः क्षिप्रमुपाहरत् ॥ ६८ ॥
लक्ष्मणस्यात्मनश्चैव रामस्तेनाकरोज्जटाः । दीर्घबाहुर्नरव्याघ्रो जटिलत्वमधारयत् ॥ ६९ ॥
तौ तदा चीरसंपन्नौ जटामण्डलधारिणौ । अशोभेतामृषिसमौ भ्रातरौ रामलक्ष्मणौ ॥ ७० ॥
ततो वैखानसं मार्गमास्थितः सहलक्ष्मणः । व्रतमादिष्टवान्रामः सहायं गुहमब्रवीत् ॥ ७१ ॥

रा० टी०—ममेति । पुरीमयोध्यां त्वं व्रज यान्यानर्थान्यथा यथा त्वं संदिष्टः पृष्टस्ताँस्तानर्थांस्तथा तथा ब्रूयाः ॥ ६४ ॥

गो० टी०—ममेति । यानर्थान् संदिष्टोऽसि तानर्थान्दशरथादीनुद्दिश्य तथा तथा ब्रूया इति संबन्धः ॥ ६४ ॥

रा० टी०—इतीति । इत्यनेन प्रकारेण वचनमुक्त्वा तेन सूतं सान्त्वयित्वा अक्लीबं क्लीबतानिवर्तकं हेतुमद्वचनं गुहमब्रवीत् ॥ ६५ ॥

गो० टी०—इतीति । हेतुमत् युक्तिमत् नेदानीमित्यनेन इह वस्तव्यमिति गुहप्रार्थनं द्योतितं मे सजने सजनप्रदेशे अयं वासो न योग्यः तद्गतो विधिः आश्रमवासगतः तद्विषय इत्यर्थः । विधिः पितृनियमनम् । सोहम् 'सप्त सप्त च वर्षाणि दण्डकारण्यमाश्रितः । अभिषेकमिमं त्यक्त्वा जटाजिनधरो वस' इति कैकेय्या नियुक्तोऽहं तपस्विजनभूषणं तपस्विजनातिशयावहं नियममधःशयनादिकं गृहीत्वा अङ्गीकृत्य पितुः सीताया लक्ष्मणस्य च भूयो हितकामः अतिशयेन परलोकसाधनपुण्यकामः सन् जटाः कृत्वा गमिष्यामि तदर्थं न्यग्रोधक्षीरमानय जटाकरणस्य सीतालक्ष्मणयोः प्रियत्वाभावेऽपि हितत्वमस्त्येव तयोरपि तेन धर्मातिशयात् रामजटाकरणे हि सहधर्मचारिण्याः सीताया अपि धर्मः सिद्धः लक्ष्मणस्य च तदनुरोधेन जटाकरणाद्धर्मः, यद्वा हितकामः न तु प्रियकाम इत्यर्थः ॥ ६५–६७ ॥

६६ ] ति० टी०—सजने वने वासो न योग्य इत्युक्तिरत्रैव वने स्थेयमिति कदाचिद्गुहः प्रार्थयेत्तत्प्रतिबन्धाय आश्रमे जनपदरहिते वासो योग्यः, अतस्तद्गत आश्रमवासोचितो विधिर्जटाधारणादिरूप इदानीं कर्तव्य इत्यन्वयः ॥ ६६ ॥

रा० टी०—तदाकारमाह—नेति । हे गुह ! सजने स्वकीयजनसहिते वने मे वासो न योग्यः अतः आश्रमे स्वकीयजनागम्यवनपर्णशालादाववश्यं वासः कर्तव्यः अत एव तद्गतस्तद्वासिषु प्राप्तः विधिश्च कर्तव्यः । कर्तव्य इत्युभयान्वयी॥६६॥

६७–६८ ] ति० टी०—सोऽहं नियमं वन्याहारभूशयनादिरूपं गृहीत्वा सीताया लक्ष्मणस्य चानुमत्या तपस्विजनभूषणं जटाः कृत्वा गमिष्यामि, अतो न्यग्रोधक्षीरमानय । भूयोऽतिशयेन पितुर्हितकामस्तत्प्रतिज्ञारक्षणेन । यत्तु सीताया हितकाम इति तन्न, जटाधारणेन सीताहिताप्रसिद्धेः । अनुमतिस्त्वपेक्षितैव अन्यथा संन्यासवद्वधा परमदुःखापत्तेः ॥ ६७ ॥ ६८ ॥

रा० टी०—तद्विधिं बोधयन्नाह—स इति । पित्रादेर्हितकामोऽहं तपस्विजनभूषणं नियमं भूशयनादि गृहीत्वा अत एव जटाः कृत्वा निर्माय गमिष्यामि अतः न्यग्रोधक्षीरं वटवृक्षपय आनय तदा रामाज्ञापितं क्षीरं गुहः क्षिप्रमुपाहरत् । श्लोकद्वयमेकान्वयि ॥ ६७ ॥ ६८ ॥

गो० टी०—तत्क्षीरमिति । लक्ष्मणस्य चेति तेनापि भ्रातृवदवस्थानस्य संकल्पितत्वादिति भावः अकरोदिति लक्ष्मणे प्रयोज्यकर्तृत्वं बोध्यम् । ऋषिः स्विद्यति दीर्घबाहुरिति । जटिलत्वं जटावत्त्वं तुन्दादित्वादिलच् ॥ ६८ ॥ ६९ ॥

६९–७० ] ति० टी०—लक्ष्मणस्याकरोत् तेनापि रामवदवस्थानस्य संकल्पितत्वात् ॥ ६९ ॥ ७० ॥

रा० टी०—लक्ष्मणस्येति । तेन गुहानीतक्षीरेण जटाः अकरोत् । अतः जाटिलत्वं जटिलधर्ममधारयत् ॥ ६९ ॥

रा० टी०—ताविति । चीरसंपन्नौ भ्रातरौ ऋषिसमौ अशोभेताम् ॥ ७० ॥

गो० टी—तस्यामप्यवस्थायां दर्शनीयतमत्वमाह—तावित्यादिश्लोकेन ॥ ७० ॥

७१ ] ति० टी०—वैखानसं मार्गं वानप्रस्थाश्रमधर्ममास्थितः प्राप्तुं कृतबुद्धिः सन्व्रतं वानप्रस्थव्रतमादिष्टवानङ्गीकृतवान् अत्र गङ्गारूपतीर्थप्राप्तौ, अग्रे प्रयागरूपतीर्थप्राप्तौ, तदग्रे पितृमरणश्रवणेऽपि यन्मुण्डनाकरणं रामलक्ष्मणयोस्तेनानेन परकृतिरूपार्थवादेन क्षत्रियाणां तीर्थादिषु मुण्डननिषेधं प्रतीम इत्यलम् । सहायं गङ्गातरणादिकृतसहायम् ॥ ७१ ॥

रा० टी०—तत इति । वैखानसं मार्गं वानप्रस्थधर्मम् आस्थितः अत एव व्रतं तदनुष्ठानमादिष्टवान् स्वीकृतवान्रामः सहायं तरणादिसाहाय्यकारिणं गुहमब्रवीत् ॥ ७१ ॥

गो० टी०—तत इति । विखना नाम ब्रह्मनखोत्पन्नः कश्चिन्मुनिः 'ये नखास्ते वैखानसाः । ये वालास्ते वालखिल्याः' इत्युक्तेः । सिंहादिशब्दवद्वर्णविपर्ययः । तेन प्रोक्तं वैखानसं प्रोक्तार्थे अण् मार्गं धर्ममित्यर्थः वानप्रस्थधर्ममिति यावत्, आस्थितः आश्रितः व्रतं ब्रह्मचर्यादिनियमम् आदिष्टवान् अङ्गीकृतवान् । नन्वत्र सर्वो वानप्रस्थधर्मोऽङ्गीकृतः उत यः कश्चित् । नाद्यः तस्य पुनर्गार्हस्थ्यग्रहणायोगात् आरूढपतितो हि स इत्युत्तराश्रमप्राप्तस्य पुनः पूर्वाश्रमावरोहो निन्दितः ।

१ आश्रम इति गो. रा. पाठः ।

अप्रमत्तो बले कोशे दुर्गे जनपदे तथा । भवेथा गुह राज्यं हि दुरारक्षतमं मतम् ॥ ७२ ॥
ततस्तं [1]समनुज्ञाप्य गुहमिक्ष्वाकुनन्दनः । जगाम तूर्णमव्यग्रः सभार्यः सहलक्ष्मणः ॥ ७३ ॥
स तु दृष्ट्वा नदीतीरे नावमिक्ष्वाकुनन्दनः । तितीर्षुः शीघ्रगां गङ्गामिदं वचनमब्रवीत् ॥ ७४ ॥
आरोह त्वं नरव्याघ्र स्थितां नावमिमां शनैः । सीतां चारोपयान्वक्षं परिगृह्य मनस्विनीम् ॥ ७५ ॥
स भ्रातुः शासनं श्रुत्वा सर्वमप्रतिकूलयन् । आरोप्य मैथिलीं पूर्वमारुरोहात्मवांस्ततः ॥ ७६ ॥
अथारुरोह तेजस्वी स्वयं लक्ष्मणपूर्वजः । ततो निषादाधिपतिर्गुहो ज्ञातीनचोदयत् ॥ ७७ ॥
राघवोऽपि महातेजा नावमारुह्य तां ततः । ब्रह्मवत्क्षत्रवच्चैव जजाप हितमात्मनः ॥ ७८ ॥
आचम्य च यथाशास्त्रं नदीं तां सह सीतया । [3]प्रणमत्प्रीतिसंतुष्टो लक्ष्मणश्च महारथः ॥ ७९ ॥
अनुज्ञाय सुमन्त्रं च सबलं चैव तं गुहम् । आस्थाय नावं रामस्तु चोदयामास नाविकान् ॥ ८० ॥

---

न द्वितीयः गृहस्थस्य वनस्थासाधारणजटाधारणादिकरणे शाखारण्डवदाश्रमरण्डतापत्तेः । मैवं पितृनियोगकृतसांकल्पिकनियमविशेषस्य युधिष्ठिरादिसन्यासधर्मवदविरुद्धत्वात् । उक्तं हि मनुना ' सम्यक् संकल्पजः कामो धर्ममूलमिदं स्मृतम् ' इति । सहायं गङ्गावतरणसहायं 'सखायम्' इति च पाठः ॥७१॥

७२-७४ ] ति० टी०—किमब्रवीत्तदाह—अप्रमत्त इति । दुःखेनारक्षा रक्षणं यस्य तद्दुरारक्षम् अतिशयेन दुरारक्षं दुरारक्षतमम् । ' दुरारक्ष्यतमम् ' इति पाठेऽतिशयेन दुःखेन रक्षितुं योग्यतममित्यर्थः ॥ ७२-७४ ॥

रा० टी०—तद्वचनमेवाह—अप्रमत्त इति । बलादौ अप्रमत्तस्त्वं भवेथाः तत्र हेतुः—हि यतः राज्यं दुरारक्षतमं दुःखेन आरक्ष्यते दुरारक्षं अतिशयेन दुरारक्षं दुरारक्षतमं मतं निश्चितम् ॥ ७२ ॥

गो० टी०—अप्रमत्त इति । बले चतुरङ्गबले कोशे अर्थौघे ' कोशोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः ' इत्यमरः । दुरारक्षं दुःखेन आ समन्तात् रक्षितुं शक्यम् । (पाठभेदः दुःखेन आरक्षा रक्षणं यस्य तद्दुरारक्षम् अतिशयेन दुरारक्षं दुरारक्षतमं भवेथाः इत्यार्षमात्मनेपदम्) ॥ ७२ ॥

रा० टी०—तत इति । गुहं तूर्णं समनुज्ञाप्य इक्ष्वाकुनन्दनो रामः जगाम ॥ ७३ ॥

गो० टी०—तत इति । अव्यग्रः अव्यासक्तः ' व्यग्रो व्यासक्त आकुले ' इत्यमरः ॥ ७३ ॥ ७४ ॥

रा० टी०—स इति । गङ्गां तितीर्षुः स रामः नदीतीरे उत्तरतीरवर्तिजले नावं दृष्ट्वा अब्रवीत् लक्ष्मणमिति शेषः ॥७४॥

७५ ] ति० टी०—स्थितामिमां नावं परिगृह्य हस्ते गृहीत्वा सीतामारोपय अन्वक्षं पश्चात्त्वमारोह ॥ ७५ ॥

रा० टी०—तद्वचनमेवाह—आरोहेति । हे नरव्याघ्र लक्ष्मण ! मनस्विनीं सीतां परिगृह्य स्थितां नावं शनैरारोपय अन्वक्षं पश्चात्त्वमारोह ॥ ७५ ॥

गो० टी०—आरोहेति । स्थितामिमां नावं परिगृह्य सीतां शनैरारोपय अन्वक्षम् अनुपदं त्वं चारोहेति संबन्धः, यद्वा त्वं प्रथममारोह अन्वक्षं मनस्विनीं सीतां परिगृह्य करायोर्गृहीत्वा आरोपयेत्युपचारोक्तिः । मनस्विनीमिति निन्दायां मतुप् भीरुमिति यावत् । पूर्वारोहणेऽस्मां बिभीयादिति भावः ॥ ७५ ॥

७६-७७ ] ति० टी०—अप्रतिकूलयन्ननुकूलयन् ॥७६॥७७॥

रा० टी०—स इति । स लक्ष्मणः भ्रातुः शासनं श्रुत्वा अप्रतिकूलयन्ननुकूलयन्सन्मैथिलीं पूर्वमारोप्य आरुरोह ॥ ७६ ॥

गो० टी०—लक्ष्मणस्तु निपुणतया प्रथमं सीतामारोप्य पश्चात्स्वयमारूढ इत्याह—स भ्रातुरिति । अप्रतिकूलयन् यथा तथा वाप्यारोहणशासनमनुतिष्ठन् आत्मवान् रामाशयज्ञ इत्यर्थः । पूर्वं मनस्विनीमित्युक्तम् इदानीमात्मवानित्युक्तम् उभाभ्यामारोपणे दोषशङ्काराहित्यं चोक्तम् ॥ ७६ ॥

रा० टी०—अथेति । अथ लक्ष्मणारोहणानन्तरं लक्ष्मणपूर्वजो रामः आरुरोह ततोऽनन्तरं गुहः ज्ञातीनचोदयत् रामाज्ञानुकूलं वर्तितव्यमिति प्रैरयत् ॥ ७७ ॥

गो० टी०—अथेति । ज्ञातीन् बन्धून् अचोदयत् नौः पारं नीयतामित्यचोदयत् ॥ ७७ ॥

७८ ] ति० टी०—ब्रह्मवत्क्षत्रियवद्ब्राह्मणक्षत्रियार्हं ब्रह्मक्षत्रदेवताकमित्यर्थो वा आत्मनो हितमुद्दिश्य जजाप । ' सुत्रामाणमृचा नावमारोहेत् ' इति स्मृतेः क्षत्रियाधिकारे पाठाद्ब्रह्मक्षत्रदेवताकत्वं चास्य ब्राह्मणे उक्तमिति कतकः । "दैवीं नावम्" इत्यादिर्ब्रह्मक्षत्रसाधारणो मन्त्र इत्यन्ये ॥ ७८ ॥

रा० टी०—राघव इति । ब्रह्मवद्वेदप्रवर्तकः महातेजा राघवः क्षत्रवत्क्षत्रियकुलविहितं यथा भवति तथा आत्मनो हितं स्वप्रापकं मन्त्रविशेषं जजाप एतेन तन्मन्त्रोच्चारणे रामस्य प्रीत्यतिशयो ध्वनितः ॥ ७८ ॥

गो० टी०—राघव इति । ब्रह्मवत् क्षत्रवदित्यर्हार्थे वतिप्रत्ययः । ब्राह्मणार्हं क्षत्रियार्हम् आत्मनो हितं जजाप " दैवीं नावम् "इत्यादि ब्रह्मक्षत्रसाधारणमन्त्रं जजापेत्यर्थः । यद्वा ब्रह्मक्षत्रशब्दयुक्तं मन्त्रं जजापेत्यर्थः । स च मन्त्रः "सुत्रामाणम्" इत्यादिः तत्र स्वरिष्टनेमिः पृतनाजिदिति ब्रह्मक्षत्रशब्दौ श्रुतौ ॥७८॥

७९-८० ] ति० टी०—प्रणमत् अडभाव आर्षः ॥७९॥८०॥

---

१ समनुज्ञायेति गो. पाठः । २ लक्ष्मणमिति गो. पाठः । ३ प्राणमत्प्रीतिसंहृष्टो लक्ष्मणश्चामितप्रभ इति गो. पाठः ।

ततस्तैश्चालिता नौका कर्णधारसमाहिता । शुभस्फ्यवेगाभिहता शीघ्रं सलिलमत्यगात् ॥ ८१ ॥
मध्यं तु समनुप्राप्य भागीरथ्यास्त्वनिन्दिता । वैदेही प्राञ्जलिर्भूत्वा तां नदीमिदमब्रवीन् ॥ ८२ ॥
पुत्रो दशरथस्यायं महाराजस्य धीमतः । निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः ॥ ८३ ॥
चतुर्दश हि वर्षाणि समग्राण्युष्य कानने । भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति ॥ ८४ ॥
ततस्त्वां देवि सुभगे क्षेमेण पुनरागता । यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी ॥ ८५ ॥
त्वं हि त्रिपथगे देवि ब्रह्मलोकं समक्षसे । भार्या चोदधिराजस्य लोकेऽस्मिन्संप्रदृश्यसे ॥ ८६ ॥
सा त्वां देवि नमस्यामि प्रशंसामि च शोभने । प्राप्तराज्ये नरव्याघ्रे शिवेन पुनरागते ॥ ८७ ॥
गवां शतसहस्रं च वस्त्राण्यन्नं च पेशलम् । ब्राह्मणेभ्यः प्रदास्यामि तव प्रियचिकीर्षया ॥ ८८ ॥

रा० टी०—आचम्येति । सीतया सह संतुष्टो रामः लक्ष्मणश्च यथाशास्त्रमाचम्य प्रणमत्प्राणमत् । आगमशास्त्रस्यानित्यत्वाद्वविरहः ॥ ७९ ॥

रा० टी०—अनुज्ञायेति । सुमन्त्रं सबलं सैन्यसहितं गुहं चानुज्ञाय नावमास्थाय नाविकांश्चोदयामास ॥ ८० ॥

गो० टी०—पूर्वोक्तं नावारोहणं विवृण्वन्नाह—आचम्येत्यादिना ॥ ७९ ॥ ८० ॥

८१ ] ति० टी०—कर्णधारेण नाविकेन समाहिता सज्जीकृता स्फ्यमरित्रं तेन वेगादभिहता प्रणुन्ना ॥ ८१ ॥

रा० टी०—तत इति । ततः नाविककर्मकप्रेरणानन्तरं तैः नाविकैः चालिता कर्णधारैः अरित्रग्राहकैः समाहिता तरणघट्टसंमुखीकृता शुभस्फवेगाभिहता शुभस्फस्य शोभनारित्रस्य वेगेन अभिहता शीघ्रं चालिता नौका सलिलं गङ्गाजलमत्यगाच्छीघ्रमचलत् ॥ ८१ ॥

गो० टी०—तत इति । कर्णधारसमाहिता समाहितकर्णधारा शुभस्फ्यवेगाभिहता शुभानां स्फ्यानामरित्राणां वेगेनाभिहता प्रणुन्ना ॥ ८१ ॥ ८२ ॥

८२ ] ति० टी०—गङ्गाया महादेवतात्वात्स्वीदेवतात्वाच्च सीता प्रार्थितवतीत्याह—मध्यमिति ॥ ८२ ॥

रा० टी०—मध्यमिति । भागीरथ्याः मध्यं समनुप्राप्य अनिन्दिता आश्रितानां निन्दितत्वनिवर्तिका वैदेही इदमब्रवीत् ॥ ८२ ॥

८३ ] ति० टी०—पालयतु पारयतु समापयत्विति यावत् रलयोः समानश्रुतित्वात् ॥ ८३ ॥

रा० टी०—तद्वचनमेवाह—पुत्र इति । अयं दशरथस्य पुत्रः त्वदभिरक्षितः सन्निदेशं राजाज्ञापितं पालयतु निर्विघ्नं चतुर्दशवर्षपर्यन्तं वनवासं करोत्वित्यर्थः ॥ ८३ ॥

गो० टी०—पुत्र इति । निदेशं चतुर्दशवर्षावधिकवनवासविषयनियोगं पारयित्वा निर्विघ्नं परिसमाप्य उष्य उषित्वा प्रत्यागमिष्यति यदेति शेषः ॥ ८३ ॥ ८४ ॥

८४ ] ति० टी०—पुनः प्रत्यागमिष्यति स्वदेशं यदीति शेषः ॥ ८४ ॥

रा० टी०—चतुर्दशेति । कानने वने उष्य उषित्वा भ्रात्रादिना सह यस्मिन्समये प्रत्यागमिष्यति ततः तस्मिन्समये क्षेमेण आगता अत एव प्रमुदिताहं त्वां यक्ष्ये पूजयितास्मि श्लोकद्वयमेकान्वयि ॥ ८४ ॥ ८५ ॥

८५ ] ति० टी०—सर्वकामसमृद्धिनी सर्वकामसमृद्धं सर्वकामपूरणमस्या अस्ति दातव्यत्वेनेत्यर्थः ॥ ८५ ॥

गो० टी०—तत इति । ततः तदा सुभगे सुकीर्ते 'भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । क्षेमेण कुशलेन सह यक्ष्ये पूजयिष्यामि सर्वकामसमृद्धिनीति व्रीह्यादित्वादिनिः ॥ ८५ ॥

८६ ] ति० टी०—समक्षसे व्याप्नोषि 'अक्षू व्याप्तौ संघाते च' तत्त्वं चास्या बालकाण्डे निरूपितम् ॥ ८६ ॥

रा० टी०—गङ्गायाः सामर्थ्यं पूजासमयविशेषं च बोधयन्तीं आह—त्वमिति । हे देवि हे त्रिपथगे ! या त्वं ब्रह्मलोकं समक्षसे व्याप्नोषि अस्मिँल्लोके उदधिराजस्य भार्या संप्रदृश्यसे तां त्वां सा सीताहं नमस्यामि प्रशंसामि स्तौमि च शिवेन कल्याणेन पुनरागतेन नरव्याघ्रे रामे प्राप्तराज्ये सति तव प्रीतिचिकीर्षया गवां शतसहस्रं शतसहस्रसंख्याकगवीः वस्त्राणि च पेशलमतिस्वादु अन्नं च ब्राह्मणेभ्यस्त्वत्तीरवर्तिविप्रेभ्यः प्रदास्यामि । श्लोकत्रयमेकान्वयि ॥ ८६–८८ ॥

गो० टी०—त्वमिति । ब्रह्मलोकं समीक्षसे ब्रह्मकमण्डलुत्वां द्रवीभूतधर्मरूपतया स्थित्वा ब्रह्मप्रक्षालितविष्णुपादोद्भवत्वादिति भावः अत एव विष्णुपादोद्भवामिति पूर्वमुक्तम् ॥ ८६ ॥

८७–८८ ] ति० टी०—प्रशंसामि स्तौमि शिवेन क्षेमेण ॥ ८७ ॥ ८८ ॥

गो० टी०—सेति । प्रशंसामि स्तौमि शिवेन क्षेमेण पेशलं रम्यं तव प्रियचिकीर्षया ब्राह्मणमुखेन हि देवतानां ग्रहणमिति भावः ॥ ८७ ॥ ८८ ॥

१ चोदिता सा नौः इति गो. पाठः । २ स्फेति रा. पाठः । ३ पारयित्वेममिति गो. पाठः । ४ त्रिपथगा देवीति गो. पाठः । ५ समीक्षसे इति गो. पाठः ।

सुराघटसहस्रेण मांसभूतौदनेन च । यक्ष्ये त्वां [1]प्रीयतां देवि पुरीं पुनरुपागता ॥ ८९ ॥
यानि त्वत्तीरवासीनि दैवतानि [2]च सन्ति हि । तानि सर्वाणि यक्ष्यामि तीर्थान्यायतनानि च ॥ ९० ॥
पुनरेव महाबाहुर्मया भ्रात्रा च संगतः । अयोध्यां वनवासात्तु प्रविशत्वनघोऽनघे ॥ ९१ ॥
तथा संभाषमाणा सा सीता गङ्गामनिन्दिता । दक्षिणा दक्षिणं तीरं क्षिप्रमेवाभ्युपागमत् ॥ ९२ ॥
तीरं तु समनुप्राप्य नावं हित्वा नरर्षभः । प्रातिष्ठत सह भ्रात्रा वैदेह्या च परंतपः ॥ ९३ ॥
अथाब्रवीन्महाबाहुः सुमित्रानन्दवर्धनम् । भव संरक्षणार्थाय सजने विजनेऽपि वा ॥ ९४ ॥
अवश्यं रक्षणं कार्यं मद्विधैर्विजने वने । अग्रतो गच्छ सौमित्रे सीता त्वामनुगच्छतु ॥ ९५ ॥
पृष्ठतोऽ[4]नुगमिष्यामि सीतां[5] त्वां चानुपालयन् । अन्योन्यस्य [6]हि नो रक्षा कर्तव्या पुरुषर्षभ ॥ ९६ ॥
नहि तावदतिक्रान्ताऽसुकरा काचन क्रिया । अद्य दुःखं तु वैदेही वनवासस्य वेत्स्यति ॥ ९७ ॥

---

८९ ] ति० टी०–मांसभूतौदनेन यक्ष्ये महाबलिदानेनेति शेषः ॥ ८९ ॥

रा० टी०–गङ्गापूजनसामग्रीं बोधयन्ती आह–सुरेति । पुरीं पुनः उपागता प्राप्ता अहं सुराघटसहस्रेण सुरेषु देवेषु न घटन्ते न सन्तीत्यर्थः तेषां सहस्रं तेन सहस्रसंख्याकसुरदुर्लभपदार्थेनेत्यर्थः । मांसभूतौदनेन मा नास्ति अंसो राजभागो यस्यां सा एव भूः पृथ्वी च उतं वस्त्रं च ओदनं च एतेषां समाहारः तेन च त्वां यक्ष्ये अतः प्रीयतां दन्त्योपधोऽप्यंसशब्दो भागवाची कोशे प्रसिद्धः ॥ ८९ ॥

गो० टी०–सुराघटसहस्रेणेति । मांसभूतौदनेन मांसरूपान्नेनेति यावत् ॥ ८९ ॥

९०–९१ ] ति० टी०–तीर्थानि प्रयागादीनि आयतनानि काश्यादीनि ॥ ९०–९१ ॥

रा० टी०–यानीति । त्वत्तीरवासीनि यानि दैवतानि तीर्थानि प्रयागादीनि च आयतनानि अक्षयवटालोप्यादीनि च सन्ति तानि सर्वाणि यक्ष्यामि ॥ ९० ॥

रा० टी०–पूजनप्रयोजनमुपसंहरन्ती आह–पुनरिति । हे अनघे ! मया भ्रात्रा च सङ्गतः संयुक्तो रामः अयोध्यां पुनः प्रविशतु ॥ ९१ ॥

गो० टी०–यानीति । तीर्थानि मणिकर्णिकादीनि आयतनानि काश्यादीनि ॥ ९०–९३ ॥

९२–९३ ] ति० टी०–दक्षिणा भर्तुरनुकूला ॥९२॥९३॥

रा० टी०–तथेति । दक्षिणा पत्यनुकूला गङ्गां तथा संभाषमाणा सा सीता दक्षिणं तीरमभ्युपागमत् ॥ ९२ ॥

रा० टी०–तीरमिति । नावं हित्वा त्यक्त्वा नरर्षभो रामः प्रातिष्ठत गमनप्रारम्भमकरोत् ॥ ९३ ॥

९४ ] ति टी०–संरक्षणार्थम् सीताया इति शेषः । भव सावधान इति शेषः ॥ ९४ ॥

रा० टी०–अथेति । सुमित्रानन्दवर्धनं लक्ष्मणं महाबाहुः रामः अब्रवीत् । तद्वचनमेवाह–विजने जनरहिते सजने परजनसहितेऽपि वने संरक्षणार्थाय सीतारक्षायै भव उद्युक्त इति शेषः ॥ ९४ ॥

गो० टी०–अथेति । भवेति । सावधान इति शेषः । अदृष्टे अदृष्टपूर्वे नः आवयोः "अस्मदो द्वयोश्च" इति बहुवचनं तावच्छब्दः साकल्यार्थकः अन्योन्यस्य साकल्येन रक्षा कर्तव्येति संबन्धः । यत्नस्यावश्यकर्तव्यत्वे युक्तिमाह–नहीति । अतिक्रान्ता अतिक्रान्तकाला काचनक्रिया न सुकरा हि पुनः संधातुं न शक्या हीत्यर्थः । तस्मात्काले सावधानतयास्माभिः स्थातव्यमिति भावः संबाधः संमर्दः क्षेत्रं शाल्यादिक्षेत्रस्थलं विषमं निम्नोन्नतप्रदेशयुक्तं प्रपतन्त्यस्मिन्निति प्रपातः गर्तः हि यस्मादत्र प्रवेक्ष्यति तस्माद्दुःखं वेत्स्यतीति संबन्धः इति सुमित्रानन्दवर्धनमब्रवीदित्यन्वयः ॥ ९४–९९ ॥

९५ ] ति० टी०–यदेवमतः–अग्रत इति । एवं च कार्यवशाद्धोरप्यग्रतो गमनमदोषायेति ध्वनितं मार्ग एव लघोरग्रतो गमनमदोषायेत्यन्ये एवं ह्यविश्वसनीयेति च ध्वनितम् ॥ ९५ ॥

९६ ] ति० टी०–नोऽस्माकम् सीतयापि पातिव्रत्यमहिम्नेतररक्षणम् ॥ ९६ ॥

रा० टी०–रक्षणे हेतुं वदन्नाह–अवश्यमिति । मद्विधैः मर्यादापालकैः विजने स्वजनेन रहिते वने रक्षणमवश्यं कार्यं बालादीनां स्त्रियाश्चेति शेषः अतः हे सौमित्रे ! त्वमग्रतो गच्छ त्वामनुपश्चात्सीता गच्छतु अनुपालयन्सन्पृष्ठतः अहमनुगमिष्यामि । नन्वावयो रक्षकत्वेऽपि रक्षकान्तरापेक्षा स्यादित्यत आह–नोऽस्माकमन्योन्यस्य रक्षा कर्तव्या तेन रक्षकान्तरापेक्षा नास्तीति सूचितम् । श्लोकद्वयमेकान्वयि ॥ ९५ ॥ ९६ ॥

९७ ] ति० टी०–कुत एवमतियत्नोऽत आह–नहीति । असुकरा दुष्करा काचन कापि क्रियातिक्रान्ता न, किं त्वितः प्रभृति दुष्करक्रियारम्भ इति भावः, यद्वा काचन क्रिया-

---

१ प्रयतेति गो. पाठः । २ वसन्ति चेति गो. पाठः । ३ अदृष्टे इति गो. पाठः । ४ ऽहमिति गो. पाठः । ५ त्वां च सीतां चेति गो. पाठः । ६ इहेति गो. पाठः ।

प्रणष्टजनसंबाधं [1]क्षेत्रारामविवर्जितम् । विषमं च प्रपातं च वनमेद्य प्रवेक्ष्यति ॥ ९८ ॥
श्रुत्वा रामस्य वचनं [2]प्रतस्थे लक्ष्मणोऽग्रतः । अनन्तरं च सीताया राघवो रघुनन्दनः ॥ ९९ ॥
गतं तु गङ्गापरपारमाशु रामं सुमन्त्रः सततं निरीक्ष्य ।
अध्वप्रकर्षाद्विनिवृत्तदृष्टिर्मुमोच बाष्पं व्यथितस्तपस्वी ॥ १०० ॥
स लोकपालप्रतिम[3]प्रभावस्तीर्त्वा महात्मा वरदो महानदीम् ।
ततः समृद्धाञ्छुभसस्यमालिनः [4]क्षणेन [5]वत्सान्मुदितानुपागमत् ॥ १०१ ॥
तौ तत्र हत्वा चतुरो महामृगान्वराहमृश्यं पृषतं महारुरुम् ।
आदाय मेध्यं त्वरितं बुभुक्षितौ वासाय काले ययतुर्वनस्पतिम् ॥ १०२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

ऽपायलक्षणाप्रतिक्रान्तास्मानतिक्रम्य प्राप्ता चेत्ततो रक्षा सुकरा नहि 'प्रहृतं प्रहृतमेव' इति न्यायादित्यर्थः । अद्येत्यादि सार्धश्लोक एकं वाक्यम् ॥ ९७ ॥

रा० टी०—नहीति । यया वैदेह्या असुकरा अतिप्रयत्नसाध्या काचनक्रिया नातिक्रान्ता कृतेत्यर्थः । सा वैदेही अद्य गमनसमये वनवासस्य वनवाससंबन्धि दुःखं वनगमनजनितखेदं वेत्स्यति अयं खेदो निवार्य इति तात्पर्यम् ॥ ९७ ॥

९८–१०० ] ति० टी०—दुःखज्ञाने हेतुः—प्रणष्टेति । क्षेत्रं शाल्यादिक्षेत्रम् । विषमं निम्नोन्नतं प्रपातं गर्तादि तद्युक्तम् ॥ ९८–१०० ॥

गो० टी०—दुःखं हेतुं वदन्नाह—प्रनष्टेति । प्रनष्टा अतिसूक्ष्मत्वाददृष्टा जनसंबाधा जनगमनहेतुकमार्गतृणादिश्लोदो यस्मिंस्तत्प्रायो जनैरगम्यमित्यर्थः अत एव क्षेत्रादिभिर्विवर्जितमत एव विषमं सर्वत्र निम्नोन्नताभ्यां सहितमत एव प्रपातं पतनयोग्यगर्तादिविशिष्टं वनमद्य गमिष्यति प्रवेक्ष्यति ॥ ९८ ॥

रा० टी०—श्रुत्वेति । अग्रतः अग्रे लक्ष्मणः प्रतस्थे सीतया लक्ष्मणमनुगच्छन्त्या इति शेषः रघुनन्दनो रामः ॥९९॥

रा० टी०—गतमिति । गतं प्राप्तं रामं सुमन्त्रः निरीक्ष्य अध्वप्रकर्षाद्रामाधिष्ठितमार्गस्य दूरत्वाद्धेतोः विनिवृत्तदृष्टिः अत एव व्यथितः सन् बाष्पं मुमोच ॥ १०० ॥

गो० टी०—गतमिति । गङ्गापरपारं गङ्गायाः अपरं पारं प्रततं निरीक्ष्य अविच्छिन्नं निरीक्ष्येत्यर्थः । तपस्वी संतापयुक्तः तप संताप इति धातुः । प्रतपन्निति पाठे तापवानित्यर्थः । तपस्वी शोचनीयः अध्वप्रकर्षात् मार्गविप्रकर्षात् विनिवृत्तदृष्टिः विनिवृत्तदृष्टिव्यापारः ॥ १०० ॥

१०१ ] ति० टी०—वत्सान्वत्सदेशान् ॥ १०१ ॥

रा० टी०—स इति । महानदीं गङ्गां तीर्त्वा शुभसस्यमालिनः निर्बाधसस्यसमूहविशिष्टानत एव मुदितान्वत्स्यान् वत्स्यनामकदेशानुपागमत् । देशव्यवस्था तु गङ्गायमुनासङ्गमसमीपवर्त्यन्तर्वेदीदेशः प्रयागदेशः, ततः पश्चिमभागे वत्सकदेशः, ततः पश्चिमभागे पाञ्चालः, यमुनादक्षिणतीरे शूरलदेशः, तस्मात्पश्चिमतो मत्स्यदेश इत्यादि ग्रन्थान्तरादवगन्तव्यम् ॥ १०१ ॥

गो० टी०—स इति । वत्सान् वत्सदेशान् मत्स्यानिति पाठो लेखकप्रमादकृतः । इत्थं हि देशव्यवस्था दृश्यते गङ्गायमुनयोर्मध्ये प्रयागप्रदेशो वत्सदेशः । ततः पश्चिमभागे पाञ्चालः । यमुनादक्षिणतीरे शूरसेनदेशः । तस्मात्पश्चिमतो मत्स्यदेश इति । 'सलोकपालप्रतिमप्रभाववान्' इतिपाठः अन्यथा वृत्तभङ्गः स्यात् ॥ १०१ ॥

१०२ ] ति० टी०—ऋश्यादयो हरिणभेदाः काले सायंकाले मांसस्य च वन्याहारान्तर्गतत्वान्न दोषः मृगयाधर्मकत्वाच्च न मृगहनने दोषः । बुभुक्षितौ हत्वा तानादाय गतावित्यनेन भोजनमर्थसिद्धमेवेति नोक्तम् ॥ १०२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

रा० टी०—ताविति । तत्र वत्स्यदेशे वराहादीन् चतुरो महामृगान्हत्वा खेलनार्थं संताड्य बुभुक्षितौ तौ रामलक्ष्मणौ मेध्यं मतिभिर्भोक्तव्यं फलादिकमित्यर्थः आदाय गृहीत्वा वनस्पतिं वृक्षसमीपं ययतुः ॥ १०२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्विपञ्चाशत्तमः सर्गः ॥ ५२ ॥

गो० टी०—ताविति । चातुर्विध्यमेवाह—वराहमित्यादि । ऋश्यादयो हरिणभेदाः ऋश्यं पृषतं महारुरुं च आदाय स्वीकृत्येत्यर्थः । मेध्यमिति ऋश्यादिसर्वविशेषणं काले सायंकाले त्वरितत्वोक्तिः सायंकालत्वात् बुभुक्षितत्वाच्च । द्विवचनेन सीतां कुत्रचिद्वनस्पतिमूले निक्षिप्य मृगग्रहणार्थं गत्वा पुनरागताविति गम्यते ॥ १०२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१ क्षत्रेति गो. पाठः । २ प्रततमिति गो. पाठः । ३ प्रभाववानिति गो. पाठः । ४ क्रमेणेति गो. पाठः । ५ वत्स्यानिति रा. पाठः ।

# त्रिपञ्चाशः सर्गः ।

न्यग्रोधमूलमुपाश्रितो बहुविधवचनचातुरीधुरीणो रामो दशरथमुपालभ्य कैकेयीतः कौसल्यादीनामनिष्टाशङ्कामुद्भाव्य लक्ष्मणं निवर्तयिषुः परं प्रायतत । लक्ष्मणस्तु नैवावां त्वद्वियुक्तौ जीवाव इत्युक्त्वैवावतस्थेऽथ रामस्तस्यानुवासं बाढमङ्गीचकार ।

स तं वृक्षं समासाद्य संध्यामन्वास्य पश्चिमाम् । रामो रमयतां श्रेष्ठ इति होवाच लक्ष्मणम् ॥ १ ॥
अद्येयं प्रथमा रात्रिर्याता जनपदाद्बहिः । या सुमन्त्रेण रहिता तां नोत्कण्ठितु[1]मर्हसि ॥ २ ॥
जागर्तव्यमतन्द्रिभ्यामद्यप्रभृति रात्रिषु । [2]योगक्षेमौ हि सीताया वर्तेते लक्ष्मणावयोः ॥ ३ ॥
रात्रिं कथंचिदेवेमां सौमित्रे वर्तयामहे । [3]अपवर्तामहे भूमावास्तीर्य स्वयम[4]र्जितैः ॥ ४ ॥
स तु संविश्य मेदिन्या महार्हशयनोचितः । इमाः सौमित्रये रामो व्याजहार कथाः शुभाः ॥ ५ ॥
ध्रुवमद्य महाराजो दुःखं स्वपिति लक्ष्मण । कृतकामा तु कैकेयी तुष्टा भवितुमर्हति ॥ ६ ॥
सा हि देवी महाराजं कैकेयी राज्यकारणात् । अपि न च्यावयेत्प्राणान्दृष्ट्वा भरतमागतम् ॥ ७ ॥
अनाथश्च हि वृद्धश्च मया चैव विना कृतः । किं करिष्यति कामात्मा [5]कैकेय्या वशमागतः ॥ ८ ॥
इदं व्यसनमालोक्य राज्ञश्च मतिविभ्रमम् । काम एवार्थधर्माभ्यां गरीयानिति मे मतिः ॥ ९ ॥

---

१ ] ति० टी०—स तमिति ॥ १ ॥

रा० टी०—वासवृक्षप्राप्त्यनन्तरकालिकं रामवृत्तमाह—स इति । समासाद्य प्राप्य पश्चिमामुत्तरां संध्यामन्वास्य रामः लक्ष्मणमुवाच ॥ १ ॥

गो० टी०—स तमित्यादि । अत्र मृगमांसादनमस्तमयात् प्रागर्थसिद्धम् अन्वास्य उपास्य ॥ १ ॥

२ ] ति० टी०—आ जनपदादिति च्छेदः आ इति यातेत्यनेन संबध्यते अस्मज्जनपदाद्बहिर्देशेऽद्येयं या रात्रिरायाता प्राप्ता, येयं वनवासरात्रिषु प्रथमा सुमन्त्रेण रहिता च, तामिमां प्राप्य नोत्कण्ठितुं नगरादि स्मर्तुम् ॥ २ ॥

रा० टी०—तद्वचनमेवाह—अद्येति । जनपदात्स्वकीयजनसेवितदेशाद्बहिः याता प्राप्ता सुमन्त्रेण रहिता प्रथमा या इयं रात्रिः तां प्राप्य उत्कण्ठितुं पित्रादि स्मर्तुं नार्हसि ॥ २ ॥

गो० टी०—अद्येति । याता प्राप्ता अद्येत्यस्य नोत्कण्ठितुमर्हसीत्यनेनान्वयः । उत्कण्ठा दुःखस्मरणं तां प्रतीति शेषः ॥ २ ॥

३ ] ति० टी०—न विद्यते तन्द्री ययोस्ताभ्याम् इकाभावो ह्रस्वत्वं चार्षम् । क्वचित्तु ' अतन्द्राभ्याम् ' इत्येव पाठः आवयोर्वर्तेतेऽस्मदायत्तावित्यर्थः । अप्राप्तप्राप्तिर्योगः लब्धपरिपालनं क्षेमः ॥ ३ ॥

रा० टी०—जागर्तव्यमिति । अतन्द्रिभ्यां तन्द्रारहिताभ्यामावाभ्यां जागर्तव्यं जागरितव्यम् तत्र हेतुः सीतायाः योगक्षेमौ आवयोरधीनौ इति शेषः वर्तेते तत्र योगः अलब्धस्य वन्यफलादेर्लाभः, क्षेमः लब्धस्य स्वमर्यादारूपवस्तुनः परिपालनम् ॥ ३ ॥

गो० टी०—जागर्तव्यमिति । योगक्षेमं पालनमिति यावत् , आवयोर्वर्तते अस्मदधीनमित्यर्थः ॥ ३ ॥

४ ] ति० टी०—कथंचिदेवेमाम, उटजादिनिर्माणाभावात् स्वयमर्जितैः तृणपर्णादिभिरिति शेषः । अपवर्तामहे यथाकथंचिच्छयनं कुर्मः ॥ ४ ॥

रा० टी०—रात्रिमिति । हे लक्ष्मण ! कथंचित्सुखाभावेऽपीत्यर्थः इमां रात्रिं वर्तयामहे व्यतीतयामः सुखाभावे हेतुः भूमौ पर्णशालारहितस्थले स्वयमार्जितैः तृणादिभिः आस्तीर्य अपवर्तामहे तिष्ठामः 'उपावर्तामहे' इति भूषणपाठः ॥ ४ ॥

गो० टी०—रात्रिमिति । कथंचिदेवेमामिति प्राथमिकत्वादिति भावः इमां शय्यासंपादनात् पूर्वमेव प्राप्तां स्वयमार्जितैः तृणपर्णैरिति शेषः । उपावर्तामहे शयिष्यामहे वर्तमानसामीप्ये वर्तमानवद्भावः ॥ ४ ॥

५ ] ति० टी०—कथा वार्ताः ॥ ५ ॥

रा० टी०—रामविशेषोक्तिं वर्णयितुमाह—स इति । स रामः इमाः कथाः सौमित्रये व्याजहार कथयामास ॥ ५ ॥

गो० टी०—स इति । संविश्य शयनं संकल्प्योषित्वा शयनस्य सर्गान्ते वक्ष्यमाणत्वात् कथाः वार्ताः ॥ ५ ॥

६ ] ति० टी०—कृतकामा संपन्नमनोरथा ॥ ६ ॥

रा० टी०—तत्कथनमेवाह—ध्रुवमिति । अद्य अस्मिन्समये दुःखं यथा स्यात्तथा महाराजः स्वपिति ध्रुवं निश्चितमेतत् अतः कृतकामा प्राप्तस्वाभीष्टवरापि कैकेयी किं तुष्टा भवितुमर्हति नेत्यर्थः । तुः किमर्थे ॥ ६ ॥

गो० टी०—ध्रुवमिति । कृतकामा फलितेच्छा ॥ ६ ॥

७–९ ] ति० टी०—राज्यकारणान्महाराज्यपदाभिषेककारणात्प्राणानपि न च्यावयेत् अपि तु च्यावयेदित्यर्थः ॥ ७–९ ॥

रा० टी०—सेति । प्राणाम्प्राणसदृशास्मद्रक्षक हे लक्ष्मण! आगतं भरतम न दृष्ट्वा भरतकर्तृकागमनमदृष्ट्वेत्यर्थः किंच अ न-

---

१ अर्हसीति गो. रा. पाठः । २ योगक्षेमं……वर्तते इति गो. पाठः । ३ उपावर्तामहे इति गो. पाठः । ४ आर्जितैरिति गो. पाठः । ५ कैकेयीवशमागत इति गो. पाठः ।

को ह्यविद्वानपि पुमान्प्रमदायाः कृते त्यजेत् । छन्दानुवर्तिनं पुत्रं तातो मामिव लक्ष्मण ॥ १० ॥
सुखी बत सुभार्यश्च भरतः केकयीसुतः । मुदितान्कोसलानेको यो भोक्ष्यत्यधिराजवत् ॥ ११ ॥
स हि राज्यस्य सर्वस्य सुखमेकं भविष्यति । ताते तु वयसातीते मयि चारण्यमाश्रिते ॥ १२ ॥
अर्थधर्मौ परित्यज्य यः काममनुवर्तते । एवमापद्यते क्षिप्रं राजा दशरथो यथा ॥ १३ ॥
मन्ये दशरथान्ताय मम प्रव्राजनाय च । कैकेयी सौम्य संप्राप्ता राज्याय भरतस्य च ॥ १४ ॥

---

आगतमागमनं यस्य तं भरतं दृष्ट्वा ज्ञात्वा भरतो नागत इति विचार्येत्यर्थः आगतमित्यत्र निषेधार्थकमकारं प्रश्लिष्येमौ अर्थौ राज्यकरणाद्राज्यकरणहेतुकभरतानयनार्थं महाराजं तु न च्यावयेत्प्रेषयेत् अस्मद्वियोगदुःखितत्वादिति तात्पर्यम् । तेन सुमन्त्रमेव प्रेषयितेति व्यञ्जितम् ॥ ७ ॥

रा० टी०—अनाथ इति । अनाथः सर्वनियन्तृत्वेन नाथान्तररहितः चक्रवर्तीत्यर्थः । वृद्धः ज्ञानवयोभ्यामधिकः अत एव वशमतिकान्तिमागतो नित्यं प्राप्तोऽपि महाराजः कैकेय्या मन्थरया मया विना कृतः अत एव कामात्मा कामः अभिषेकविषयिण्यिच्छा आत्मनि मनस्येव यस्य सः दुःखी सन्नित्यर्थः किं करिष्यति एतेन तत्कृत्यं विचारणीयमिति ध्वनितम् ॥८॥

गो० टी०—सा हीति । राज्यकारणात् राज्यस्थैर्यकारणात् । ननु न तेऽम्बा मध्यमा तात गर्हितव्या कथंचन । तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुर्विति वदतो रामस्य सर्वपुरुषार्थनिस्पृहस्य कथमेवंविधाः कैकेयीनिन्दाप्रधानाः स्वालापगर्भा उक्तयो युज्यन्ते । उच्यते अयोध्यामित एव त्वं काल्ये प्रविश लक्ष्मणेति वक्ष्यति अतस्तन्मतमनुवर्तितुमेवमुक्तमिति ज्ञेयम् ॥ ७ ॥ ८ ॥

रा० टी०—इदमिति । कामे अभिषेकविषयकोत्कटेच्छायां सत्यां मतिविभ्रमं मतिविभ्रमकारकमिदं वियोगजं व्यसनं दुःखमालोक्य अनुभूय विद्यमानस्यापि राज्ञः अर्थधर्माभ्यां गरीयान्गरीयस्त्वमस्ति अर्थधर्मयोर्नैव त्याग इत्यर्थः इति मे मतिः निश्चयः तेन तस्य धैर्यातिशयवत्त्वं मर्यादापालकत्वं च ध्वनितम् ॥ ९ ॥

गो० टी०—इदमिति । व्यसनं मदीयं मतिविभ्रमम् अर्थधर्मौ विहाय कामैकसेवित्वं पाठभेदः 'व्यसनं मदीयम्' अनेन धर्मस्याप्राधान्यमुक्तं मतिविभ्रमम् अतिनिस्पृहत्वम् अनेनार्थाप्राधान्यमुक्तम् ॥ ९ ॥

१० ] ति० टी०—कामस्य गरीयस्त्वं साधयति—को हीत्यादिना । अल्पज्ञोऽपि कः पुमान्मामिव छन्दानुवर्तिनमाज्ञाकारिणं पुत्रं प्रमदायाः कृते प्रमदातोषनिमित्तं त्यजेत्, किं पुनः सर्वज्ञो राजा तस्मात्सर्वतः प्रबलः काम इति भावः॥१०॥

रा० टी०—तस्य धैर्यातिशयवत्त्वं प्रकाशयन्नाह—क इति । तातो दशरथो मामिव अविद्वान् अरसज्ञोऽपि कः पुमान् कृते परोपकाराय छन्दानुवर्तिनमाज्ञाकारिणं पुत्रं प्रमदायाः अतिहर्षहेतुभूतायाः पुर्यास्त्यजेत् पृथक् कुर्यात् न कोपीऽत्यर्थः । कृते इत्यत्र विनापि प्रत्ययामित्युपपदलोपः ॥ १० ॥

गो० टी०—कामस्य गरीयस्त्वमुपपादयति—क इति । छन्दानुवर्तिनं स्वेच्छानुवर्तिनम् ॥ १० ॥ ११ ॥

११ ] ति० टी०—एवं वादो हि भगवतो लक्ष्मणमतिपरीक्षार्थमयोध्यां त्वं प्रविशेति लक्ष्मणं प्रति वक्तुं तदाशयं ज्ञातुं च न वास्तव इति बोध्यम् ॥ ११ ॥

रा० टी०—इदानीं भरतस्यापि दुःखातिशयो भवितेति बोधयन्नाह—सुखीति । एकः मया रहितः सभार्यः केकयीसुतो यो भरतः सः सुखी सन् अधिराजवत्कोशलान् बत किं भोक्ष्यति पालयिता नेत्यर्थः ॥ ११ ॥

१२ ] ति० टी०—एकं मुख्यं सुखम् अनुभवितेति शेषः ईदृशो भविष्यति । 'सुखमेकः' इति वा पाठः एक एव राजा भविष्यतीत्यर्थ इति तीर्थः ॥ १२ ॥

रा० टी०—ननु तर्हि राज्याधिकारे एव न तिष्ठेदित्यत आह—स इति । ताते वयसातीते अतिवयस्के सतीत्यर्थः स वसिष्ठादिभिर्बोधितो भरतः सर्वस्य राज्यस्य सर्वप्रजाभ्य इत्यर्थः एकमल्पं प्राणरक्षामात्रजं सुखं भविष्यति प्रापयिष्यति प्राप्त्यर्थकोऽन्तर्भावितणिजर्थश्च भवतिः ॥ १२ ॥

गो० टी०—स हीति । सुखमेकम् अद्वितीयं प्रधानभूतमित्यर्थः ॥ १२ ॥

१३-१४ ] ति० टी०—यो भरतः काममनुवर्तते स यथा राजा दशरथो विपदमापन्न एवं विपदमापद्यते प्राप्नोतीत्यर्थः अन्ये तु राजा दशरथो यथा राजत्वमापन्नस्तथा भरतो राजत्वमापद्यते इत्यर्थमाहुः ॥ १३ ॥ १४ ॥

रा० टी०—इदानीमिदं वियोगजनितदुःखं न दशरथयोग्यमिति बोधयन्नाह—अर्थेति । राजा दशरथो यथा येन प्रकारेण क्षिप्रं दुःखं प्राप्त इति शेषः एवमनेन प्रकारेण दुःखं यः पुरुषः अर्थधर्मौ परित्यज्य कामं स्वच्छामनुवर्तत सः आपद्यते एतेन अकारणकमिदं दुःखं शीघ्रं नंष्टेति सूचितम् ॥ १३ ॥

गो० टी०—प्रसङ्गात्केवलं कामं निन्दति—अर्थधर्माविति । दशरथो यथा व्यसनीति शेषः ॥ १३ ॥

रा० टी०—इदानीं केकय्यां दुःखातिशयोऽस्तीति बोधयन्नाह—मन्य इति । मम प्रव्राजनं निर्वर्तयितुं दशरथान्ताय दशरथसिद्धान्तं निर्वर्तयितुं भरतस्य राज्याय स्वनियुक्तत्वम्-

---

१ तत इति गो. पाठः । २ सभार्यं इति गो. रा. पाठः । ३ चेति गो. पाठः । ४ आस्थिते इति गो. पाठः ।

अपीदानीं तु कैकेयी सौभाग्यमदमोहिता । कौसल्यां च सुमित्रां च सा[1] प्रबाधेत[2] मत्कृते ॥ १५ ॥
माता[3]स्मत्कारणाद्देवी सुमित्रा दुःखमावसेत् । अयोध्यामित एव त्वं काले[4] प्रविश लक्ष्मण ॥ १६ ॥
अहमेको गमिष्यामि सीतया सह दण्डकान् । अनाथाया हि नाथस्त्वं कौसल्याया भविष्यसि ॥ १७ ॥
क्षुद्रकर्मा हि कैकेयी द्वेषादन्याय[5]माचरेत् । प[6]रिदद्याद्धि धर्मज्ञ गरं ते मम मातरम् ॥ १८ ॥
नूनं जात्यन्तरे का[7]पि स्त्रियः पुत्रैर्वियोजिताः । जनन्या मम सौमित्रे तद[8]प्येतदुपस्थितम् ॥ १९ ॥
मया हि चिरपुष्टेन दुःखसंवर्धितेन च । [9]विप्रयुज्यत कौसल्या फलकाले धिगस्तु माम् ॥ २० ॥
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् । सौमित्रे योऽहमम्बाया दद्मि शोकमनन्तकम् ॥ २१ ॥
मन्ये प्रीतिविशिष्टा सा मत्तो लक्ष्मण सा[10]रिका । यत्तस्याः श्रूयते वाक्यं शुक पादमरेर्दश ॥ २२ ॥

---

लब्धभरतसंबन्धिराज्यपालनाय विद्यमाना कैकेयी संतप्ता अस्मद्वियोगजदुःखाक्रान्तास्तीति मन्ये अत एव मत्कृते हर्षध्वंसे सति सौभाग्यमदमोहिता अहमतीव पतिप्रियेति सौभाग्यविषयको यो मद्धर्षस्तेन अमोहिता सा कैकेयी कौशल्यादीन् अ न प्रबाधेत । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—मन्य इति । संप्राप्तेत्यत्रेतिकरणं बोध्यम् ॥ १४ ॥

१५ ] ति० टी०—मत्कृते मम दुःखसंपादननिमित्तम् ॥ १५ ॥

गो० टी०—अपीति । कैकेयी न संप्रबाधेत इत्यत्र काकुः मत्कृते मत्संबन्धादित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—माता तवेति शेषः । काले प्रातःकाले उत्थायेत्यर्थः ॥ १६ ॥

रा० टी०—ननु एतत्स्मरणस्य इदानीं किं प्रयोजनमित्यत आह—मातेति । माताः कौशल्यादयः सुमित्रा च अस्मत्कारणादस्मदर्थमदुःखमावसेत्प्राप्नुयात् इतः हेतोः काले प्रभातसमये अयोध्यां प्रविश गच्छ सुमित्राया मातृग्रहणेन ग्रहणेऽपि पुनरुपादानं गोबलीवर्दन्यायेन वैशिष्ट्यबोधनाय ॥ १६ ॥

गो० टी०—मा स्मेति । इत एव समीपप्रदेशादेव ॥ १६ ॥

१७ ] ति० टी०—नाथो रक्षकः ॥ १७ ॥

रा० टी०—अहमिति । एकः सहायान्तररहितः नाथो रक्षकः ॥ १७ ॥

गो० टी०—अहमिति । नाथः रक्षकः ॥ १७ ॥

१८ ] ति० टी०—क्षुद्रकर्मा कैकेयी द्वेषादन्यायमाचरेत् हि निश्चितम् । तदेवाह—हे धर्मज्ञ ! ते मम च मातरं सुमित्रां कौसल्यां चोद्दिश्य गरं विषं हि तु दद्यात् ॥ १८ ॥

रा० टी०—मन्थरातोऽवश्यं रक्षा कर्तव्येति बोधयन्नाह—क्षुद्रेति । कैकेयी तद्दासी मन्थरा द्वेषात्सर्वनिष्ठप्रीत्यभावाद्धेतोः क्षुद्रकर्मा सती अन्यायमाचरेत् । तदेवाह—गरं विषम् ॥ १८ ॥

गो० टी०—क्षुद्रकर्मेति । "छाशुभाभ्याम्" इति डाप् द्वेष्यं द्वेषार्हं स्वकृतद्वेषोचितमित्यर्थः । अन्याय्यम् अवमानमित्यर्थः । 'द्वेषात्' इति च पाठः । परिदद्याः परिदानं नाम रक्ष्यतया प्रदानम् ॥ १८ ॥

१९ ] ति० टी०—जात्यन्तरे जन्मान्तरे एतत्पुत्रवियोगदुःखम् ॥ १९ ॥

रा० टी०—ननु हिंसाजनकं कर्म कथं करिष्यतीत्यत आह—नूनमिति । जात्यन्तरे मनुवंशातिरिक्तक्षत्रियजातौ स्त्रियः पुत्रैरपत्यैर्वियोजिताः अत्यन्तवियोगं प्राप्ता भवन्ति बालान् घ्नन्तीत्यर्थः तत्तस्माद्धेतोः एतदुपस्थितं दुःखं वारयेति शेषः ॥ १९ ॥

गो० टी०—नूनमिति । कस्मिंश्चित् जात्यन्तरे कस्मिंश्चित् जन्मनि एतत् पुत्रवियोजनम् ॥ १९ ॥

२० ] ति० टी०—फलकाले सुखानुभवकाले ॥ २० ॥

रा० टी०—मयेति । चिरपुष्टेन चिरं पोषितेन अत एव दुःखसंवर्धितेन कदा अयं संवर्धितो भविष्यतीति संभावनामूलकदुःखाभासं यथा स्यात्तथा संवर्द्धितं प्रापितेन मया फलकाले विप्रायुज्यत अतः मां वियोगसंपत्तिं धिक् ॥ २० ॥

गो० टी०—मयेति । फलकाले पुत्रोत्पत्तिफलस्य मातृशुश्रूषणस्य काले ॥ २० ॥ २१ ॥

२१ ] ति० टी०—कुत इत्यतः—सौमित्रे इति ॥ २१ ॥

रा० टी०—मेति । यतः योऽहम् अनन्तकमनिवानिवार्यम् अम्बायाः मातुः शोकं दद्मि अतः ईदृशं मत्सदृशवियोगहेतुकं सीमन्तिनी स्त्री मा स्म जनयेत् ॥ २१ ॥

२२ ] ति० टी०—हे लक्ष्मण ! अम्बया पालिता कृतवचनशिक्षा च सारिका मत्तोऽम्बायां प्रीतिविशिष्टा अधिकप्रीतियुक्ता इति मन्ये यद्यस्मात्तस्याः सारिकायाः सकाशादेवं शत्रुनिग्रहविषयम् 'शुक ! पादमरेर्दश' इति वाक्यं श्रूयते कौसल्ययेति शेषः अस्मत्तस्तु तदपि नेति भावः । अत्रेदं वाक्यम्—अरेर्बिडालस्य पादं हे शुक ! दशेत्यर्थकतया लोकप्रसिद्धमरेर्मत्पालयितुः कौसल्यायाः शत्रोः पादं दशेत्यर्थकतया रामेण योजितमिति वक्रोक्तिरलंकारः ॥ २२ ॥

रा० टी०—मन्ये इति । सा मात्रा कौशल्यया पालिता सारिका पक्षिविशेषः । मत्तोऽधिका प्रीतिविशिष्टा मातृविषयकस्नेहयुक्ता मातृप्रमोदजनिकेत्यर्थः यद्यस्माद्धेतोः शुक पाद-

---

१ नेति गो. पाठः । २ संप्रबाधेतेति गो. पाठः । ३ मा स्मेति गो. पाठः । ४ काल्ये इति गो. पाठः । ५ द्वेष्यमन्याय्यमिति गो. पाठः । ६ परिदद्या हि धर्मज्ञे भरते इति गो. पाठः । ७ कस्मिंश्चिति गो. पाठः । ८ तस्माद्देतदिति गो. पाठः । ९ विप्रायुज्यतेति गो. रा. पाठः । १० शारिकेति गो. पाठः ।

शोचन्त्याश्चाल्पभाग्यायां न किंचिदुपकुर्वता । पुत्रेण किमपुत्राया मया कार्यमरिंदम ॥ २३ ॥
अल्पभाग्या हि मे माता कौसल्या रहिता मया । शेते परमदुःखार्ता पतिता शोकसागरे ॥ २४ ॥
एको ह्यहमयोध्यां च पृथिवीं चापि लक्ष्मण । तरेयमिषुभिः क्रुद्धो ननु वीर्यमकारणम् ॥ २५ ॥
अधर्मभयभीतश्च परलोकस्य चानघ । तेन लक्ष्मण नाद्याहमात्मानमभिषेचये ॥ २६ ॥

मरेर्दशेति तस्याः सारिकायाः वाक्यं श्रूयते नात्रेति शेषः तद्धंस्तु हे शुक ! अरेः कौशल्याशत्रोः पादं त्वं दशेति सा तु वचनश्रवणेनापि संतोषयति अहं तु तत्राप्यशक्त इति तात्पर्यम् ॥ २२ ॥

गो० टी०—अम्बया वर्धिततिर्यग्जन्तुकृतप्रीतिमात्रमपि न मया कृतमित्याह—मन्य इति । हे लक्ष्मण ! सा पूर्वमावाभ्यामनुभूता शारिका मत्तः अस्मदपेक्षया प्रीतिविशिष्टेति मन्ये प्रीत्याऽधिकेति मन्ये मदपेक्षया अधिकां प्रीतिं कौसल्याया जनयतीत्यर्थः, यद्वा मदपेक्षया कौसल्यायामधिकप्रीतियुक्तेत्यर्थः। उभयत्र हेतुमाह—यस्या इति । यस्याः शारिकायाः हे शुक ! अरेः अरिभूतस्य बिडालस्य पादं दश खण्डय इति तत् अनुभूतसदृशं प्रीतिसंजननं वाक्यं श्रूयते अम्बयेति शेषः । लोके हि काचित्पोषिता शारिका समीपवर्तिनं शुकं प्रति बिडालं दशदशेति कूजन्ती दृश्यते, यद्वा अरेः कौसल्याशत्रोः पादं दशेति वाक्यं श्रूयते । पोषितत्वाविशेषेऽपि शारिकावदरिनिवर्तनवाचमप्यनुक्तवतो मम जन्म धिगित्यर्थः । अत्र प्रकरणबलेन भगवद्भजनादप्याचार्यसमाश्रयणस्य सुकरोपायत्वं दर्शितं भवति ' न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः ' इत्युक्तेः । तथाहि शारिकेत्यनेन ज्ञानकर्मरूपपक्षद्वयवानाचार्यो लक्ष्यते स्त्रीलिङ्गेन स्त्रीप्रायमितरत्सर्वमित्युक्तं भगवत्पारतन्त्र्यमुच्यते । आचार्यो भगवदपेक्षया मोक्षानन्दजननेऽधिकसुकरोपाय इत्यर्थः । ' पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदम् ' इति वचनात् । कोऽयमाचार्य इत्यत आह—यस्या इति । यस्या इति पञ्चमी । यस्मात् तत् गुरुपरंपरया प्राप्तं वाक्यं रहस्यमन्त्ररूपं श्रूयते। कीदृशं वाक्यमित्यत्राह—शुकेति । हे शुक ! शुकसमानवर्ण भगवन् अरेः विरोधिभूतस्य संसारस्य पादमाधारं संसारबीजभूताहंकारममकारावित्यर्थः । ' अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः । अविद्यातरुसंभूतिबीजमेतद्द्विधा स्थितम् ' इत्युक्तेः । दश निवर्तयेत्यर्थः । एवंरूपं वाक्यं यत्सकाशात् श्रूयते स मत्तः श्रेष्ठ इति संबन्धः । प्रकरणेनाप्ययमर्थोऽभिव्यज्यते तथाहि अयोध्यापुरपर्यायाद्वैकुण्ठान्निर्गत्य विरजां तीर्त्वा संसारकाननं प्रविश्य । " द्वा सुपर्णा स युजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति वेदान्तोक्तप्रक्रियया शरीराख्यमेकं वृक्षं जीवेन सहास्थाय "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये" इत्युक्तरीत्या कर्मफलं भोजयन् स्वानुभवालाभक्लिष्टसंसारिजनोत्कण्ठया वर्तमानः संसारिषु स्वागमनप्रयोजनालाभेन चरमोपायनिष्ठामेव परमोपायं निश्चिकायेत्युच्यते ॥ २२ ॥

२३] ति० टी०—अपुत्रायाः पुत्रकृतप्रयोजनरहितायाः॥२३॥

रा० टी०—शोचन्त्या इति । अल्पभाग्यायाः अल्पभाग्यासदृश्याः अपुत्रायाः प्रव्राजितपुत्रवत्याः मातुः न किंचिदुपकुर्वता वियोगजदुःखमशमयतेत्यर्थः मया किं कार्यम् ॥२३॥

गो० टी०—शोचन्त्या इति । अल्पभाग्यायाः अत एव अपुत्रायाः पुत्रकृतप्रयोजनरहितायाः अत एव शोचन्त्याः अम्बायाः किंचिदपि नोपकुर्वता मया पुत्रेण किं कार्यं किं प्रयोजनम् ॥ २३ ॥

२४ ] ति० टी०—शेते इदानीमिति शेषः ॥ २४ ॥

रा० टी०—अल्पभाग्येति । यतो मया रहिता अत एव अल्पभाग्या तत्सदृशी अत एव परमदुःखार्ता अत एव शोकसागरे पतिता मे माता शेते आस्ते ॥ २४ ॥

गो० टी०—न केवलं प्रयोजनालाभः प्रत्युत दुःखितैवेत्याह—अल्पभाग्येत्यादिश्लोकेन ॥ २४ ॥

२५ ] ति० टी०—नन्वेवं हृदये शोकस्तर्हि मया सर्वनिवारणसहायेनोक्तं राज्यमेव कुतो नाङ्गीकृतमिति चेन्न, राज्यकरणे त्वदपेक्षापि मे न, किंत्वधर्मभयादेव मया तन्नाङ्गीकृतमित्याह—एक इत्यादि । तरेयम् निरस्तारातिकां कर्तुं शक्त इत्यर्थः । ननु वीर्यमकारणं परलोकहिते, अपि तु धर्म एवेति शेषः ॥ २५ ॥

रा० टी०—ननु भवद्गमनमन्तरा कथं शत्रुविनाशः तं विना कथं तस्याः परमसुखमिति सुखार्थमेव गच्छसीत्यत आह—एक इति । अयोध्यां नित्यं प्राप्त इति शेषः एकोऽहं पृथिवीं निखिलपृथिवीशत्रून् चकारेण लोकान्तरशत्रूनपि क्रुद्धः सन्निषुभिः तरेयम्। ननु तर्हि किमर्थं गम्यत इत्यत आह—अकारणं विशेषकारणरहितं वीर्यं वीर्यहेतुकशत्रुनाशो न भवति तु निश्चितमेतत् ॥ २५ ॥

गो० टी०—तर्हि मातृदुःखनिवारणाय राज्यमाक्रम्यतामित्यत्राह—एक इत्यादिश्लोकद्वयेन । तरेयं तरितुं शक्नुयामाक्रमितुं शक्नुयामित्यर्थः। तर्हि किमर्थं तथा न कृतमित्यत आह—ननु वीर्यमकारणमिति । धर्महानिकरे कृत्ये वीर्यं साधकत्वेन नावलम्बनीयं खल्वित्यर्थः ॥ २५ ॥

२६ ] ति० टी०—अधर्मात्कैकेय्यै पितृदत्तवरपालनप्रति-

१ शोचन्त्या अल्पभाग्याया इति गो. पाठः ।

एतदन्यच्च करुणं विलप्य विजने[1] बहु । अश्रुपूर्णमुखो [2]दीनो निशि तूष्णीमुपाविशत् ॥ २७ ॥
[3]विलापोपरतं रामं गतार्चिषमिवानलम् । समुद्रमिव निर्वेगमाश्वासयत लक्ष्मणः ॥ २८ ॥
ध्रुवमद्य पुरी [4]राम अयोध्याऽऽयुधिनां वर । निष्प्रभा त्वयि निष्क्रान्ते गतचन्द्रेव शर्वरी ॥ २९ ॥
नैतदौपयिकं राम यदिदं परितप्यसे । विषादयसि सीतां च मां [5]चैव पुरुषर्षभ ॥ ३० ॥
न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥ ३१ ॥
नहि तातं न शत्रुघ्नं न सुमित्रां परंतप । द्रष्टुमिच्छेयमद्याहं स्वर्गं चापि त्वया विना ॥ ३२ ॥

शाश्वतिकपादधर्माद्भीतः अत एव परलोकस्य च नाशाद्भीत इति शेषः ॥ २६ ॥

रा० टी०–नन्वपराधविशेषाभावेऽपि शत्रुत्वेन प्रसिद्धा हन्तव्या एवेत्यत आह–अधर्मभयभीतः संग्रामादन्यत्र रिपूणामपि वधः अधर्मः इति भयेन भीतः परलोकस्य दूरशत्रुजनस्य इन्ता नास्मीति शेषः तेन हेतुना नाभिषेचये ॥ २६ ॥

गो० टी०–वीर्यस्यानवलम्बने हेतुमाह–अधर्मेति । अधर्मभयभीतः अधर्मादुत्पन्नं भयं लोकापवादः तस्माद्भीतः परलोकस्य नाशात् भीत इति शेषः अहमिति च शेषः । तेनाधर्मपरलोकभीतत्वेन हेतुना ॥ २६ ॥

२७-२८ ] ति० टी०–अन्यच्च एतज्जातीयम् । विजने इत्यनेन स्वविलापेन लोकदुःखाभावो ध्वनितः । अश्रुपूर्णमुखत्वं मदवल्लोकव्यवहारानुसारेणेति बोध्यम् ॥ २७ ॥ २८ ॥

रा० टी०–एतदिति । अदीनः नित्यं दीनतारहितोऽपि रामः विलप्य विविधमुक्त्वा उपाविशत् ॥ २७ ॥

गो० टी०–एतदिति । एतत्पूर्वोक्तमर्थजातम् अन्यदित्यनेन तादात्विकविलापस्य वाचामगोचरत्वमुक्तं विजने वन इति शोकहेतुत्वोक्तिः उपाविशत् अतिष्ठदित्यर्थः ॥ २७ ॥

रा० टी०–विलापेति । आश्वासयदाश्वासनफलकविज्ञापनामकरोत् ॥ २८ ॥

गो० टी०–विलप्येति । विलप्योपरतमित्यनेन मध्ये समाश्वासानर्हत्वोक्तिः ॥ २८ ॥

२९ ] ति० टी०–आ युधिनामिति च्छेदः ॥ २९ ॥

रा० टी०–तद्विज्ञापनामेवाह–ध्रुवमिति । आयुधिनां वर श्रेष्ठ ! शर्वरी रात्रिः एतेन त्वया विना मद्गमनमनर्थकमिति ध्वनितम् ॥ २९ ॥

गो० टी०–ध्रुवमिति । आयुधिनाम् आयुधवतां वर श्रेष्ठेत्यर्थः । निष्प्रभा भवेदिति शेषः ॥ २९ ॥

३० ] ति० टी०–औपयिकं युक्तं यतस्त्वत्परितापेन सीताया मम च विषादो भवति ॥ ३० ॥

रा० टी०–नेति । यदिदं परितप्यसे शोचसि तदौपयिकं युक्तं न अत एव विषादयसि दुःखयसि ॥ ३० ॥

गो० टी०–नैतदिति । परितप्यसे इति यदिदमस्ति एतत् परिदेवनं नौपयिकं न युक्तम् 'युक्तमौपयिकम्' इत्यमरः । "उपायाद्ध्रस्वश्च" इति ठक् आकारस्य ह्रस्वश्च । अयुक्तत्वमेवाह–विषादयसीति । पुरुषर्षभेत्यनेन पुरुषधौरेयस्य तव नैतद्युक्तम् अनेन विलापो न युक्त इत्यर्थः ॥ ३० ॥

३१ ] ति० टी०–अथ गन्तव्यमिति यदुक्तं तदुत्तरं सीतावदहमप्यवर्जमीय इति वक्तुमात्मनः सीतासाधर्म्यमाह–न चेति । त्वया हीना सीता त्वया हीनोऽहं च जलादुद्धृतौ मत्स्याविव न जीवावो न जीवाव इति जीवाव इत्यस्यावृत्त्या नञ्द्वयान्वयः । जीवनाभावस्य सर्वथा सत्यत्वप्रतिपादनाय द्विरुक्तिः ॥ ३१ ॥

रा० टी०–मन्मात्रप्रेषणं सर्वथा अयुक्तमिति बोधयन्नाह–न चेति । त्वया हीना सीता अहं च न जीवावो न जीवावः नञ्द्वयेन क्रियाऽऽवर्त्यते ॥ ३१ ॥

गो० टी०–अयोध्यामित एव त्वं काल्ये प्रविश लक्ष्मणेति यदुक्तं तत्रोत्तरमाह–न च सीतेति । त्वया हीना सीता च न न जीवतीत्यर्थः । त्वद्विहीनोऽहमपि न च । च एवकारार्थः । अहमपि न जीवाम्येवेत्यर्थः । दृष्टान्तार्थं सीताग्रहणम्, यद्वा सीतासमक्षं काकुत्स्थमिदं वचनमब्रवीदिति सीता पुरुषकारेण शरणागतिकरणात् स्वस्य शरणागतिफलाभावे पुरुषकारभूता सीतापि नेति भावः । अपि जीवावः यदि जीवावः तदा जलादुद्धृतौ मत्स्याविव मुहूर्तं स्वल्पकालं जीवावः यथा जलोद्धृतौ मत्स्यौ यावज्जलसंसर्गं जीवित्वा तद्विलये विनश्यतः तथा आवामपि त्वद्वचनहृदयज्ञानपर्यन्तमिति भावः । तथा वक्ष्यति सुन्दरकाण्डे ' न चास्य माता न पिता न चान्यः स्नेहाद्विशिष्टोऽस्ति मया समो वा । तावद्ध्यहं दूत जिजीविषेयं यावत्प्रवृत्तिं शृणुयां प्रियस्य ' इति ॥ ३१ ॥

३२ ] ति० टी०–अत्र नोत्कण्ठितुमर्हसीत्यस्योत्तरम्–नहीति । नञ्त्रयस्य नेच्छेयं नेच्छेयं नेच्छेयमिति प्रकारेणेच्छेयामिति पदावृत्त्यान्वयः स्वर्गं चाप्यद्य प्राप्तं द्रष्टुं त्वया विना नेच्छेयम् किमुत गन्तुमिति भावः ॥ ३२ ॥

रा० टी०–नहीति । तातादिकं स्वर्गं साकेतं च त्वया विना द्रष्टुं नेच्छेयम् एतेन नोत्कण्ठितुमर्हसीत्यस्योत्तरं जातम् ३२॥

गो० टी०–अथ नोत्कण्ठितुमर्हसीत्युक्तस्योत्तरमाह–नहि तातमित्यादिश्लोकेन ॥ ३२ ॥

१ वने इति गो. पाठः । २ राम इति गो. पाठः । ३ विलप्योपरतमिति गो. पाठः । ४ राजन्निति गो. पाठः । ५ वेति गो. पाठः ।

ततस्तत्र समासीनौ नातिदूरे निरीक्ष्य ताम् । न्यग्रोधे सुकृतां शय्यां भेजाते धर्मवत्सलौ ॥ ३३ ॥
स लक्ष्मणस्योत्तमपुष्कलं वचो निशम्य चैवं वनवासमादरात् ।
समाः समस्ता विदधे परंतपः प्रपद्य धर्मं सुचिराय राघवः ॥ ३४ ॥
ततस्तु तस्मिन्विजने महाबलौ महावने राघववंशवर्धनौ ।
न तौ भयं संभ्रममभ्युपेयतुर्यथैव सिंहौ गिरिसानुगोचरौ ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुष्पञ्चाशः सर्गः ।

सीतालक्ष्मणाभ्यां संप्रस्थितो रामः सायं गङ्गायमुनासंभेदसंनिहितभरद्वाजाश्रमं प्राप । भरद्वाजो राममभ्यर्च्यावासे चित्रकूटमस्तौषीत् चित्रकथासंलापैरात्रिमपनीयाथ प्रभाते चित्रकूटं प्रस्थितं रामं मुनिरनुजज्ञे ।

ते तु तस्मिन्महावृक्षे उषित्वा रजनीं शुभाम् । विमलेऽभ्युदिते सूर्ये तस्माद्देशात्प्रतस्थिरे ॥ १ ॥
यत्र भागीरथीं गङ्गां यमुनाभिप्रवर्तते । जग्मुस्तं देशमुद्दिश्य विगाह्य सुमहद्वनम् ॥ २ ॥

३३ ] ति० टी०—ततो लक्ष्मणवचनानन्तरं तत्र तस्मिन्नेव न्यग्रोधमूले समासीनौ सीतारामौ न्यग्रोधमूले स्वावस्थानदेशादतिसमीपे लक्ष्मणेन सुकृतां सम्यग्रचितां शय्यां भेजाते वत्सला च वत्सलश्च वत्सलौ 'पुमान्स्त्रिया' इत्येकशेषः ॥३३॥

रा० टी०—तत इति । ततः लक्ष्मणोक्तिश्रवणानन्तरं तत्र न्यग्रोधे सुखासीनौ धर्मवत्सलौ सीतारामौ नातिदूरे समीपे इत्यर्थः सुकृतां लक्ष्मणेन रचितां शय्यां निरीक्ष्य भेजाते तस्थतुः॥३३॥

गो० टी०—तत इति । ततः लक्ष्मणवचनानन्तरं तत्र पूर्वाश्रितवृक्षमूले भुक्तिस्थाने सुखासीनौ सुखोपविष्टौ सुखासीना च सुखासीनश्च सुखासीनौ सर्वत्र "पुमान् स्त्रिया" इत्येकशेषः सीतारामौ न्यग्रोधे न्यग्रोधमूले सुकृतां लक्ष्मणेन सुष्ठु कृतां शय्यां निरीक्ष्य तां भेजाते इति संबन्धः ॥ ३३ ॥

३४ ] ति० टी०—स रामो लक्ष्मणस्य वनवासं प्रत्यादरादुच्यमानमेवंभूतमत एवोत्तमपुष्कलमत्यन्तश्रेष्ठं वचो निशम्य सुचिराय स्वयं वनवासरूपं धर्मं प्रपद्याङ्गीकृत्य समस्ताः समा वनवासं प्रति विदधे लक्ष्मणस्यानुमतिमिति शेषः ॥ ३४ ॥

रा० टी०—स इति । उत्तमपुष्कलं मधुरं पूर्णार्थं लक्ष्मणस्य वचः सुचिराय बहुकालं निशम्य श्रुत्वा वनवासं वनवासोचितं धर्मं प्रपद्य यथाकालं कर्तव्यत्वेन निश्चित्य समस्ताः समाः वर्षाणि विदधे विधातुमनिश्चयत् ॥ ३४ ॥

गो० टी०—सलक्ष्मणस्येति । उत्तमं च तत् पुष्कलं च उत्तमपुष्कलम् अतीव भ्रातृस्नेहपुरस्कृतत्वादुत्तमं वक्तव्यस्य सर्वस्योक्तेः पुष्कलं पूर्णार्थं लक्ष्मणस्य वचः आदरान्निशम्य चिराय धर्मं वानप्रस्थधर्ममधःशयनादिकं प्रतिपद्य समस्ताः समाः वनवासम् अत्यन्तसंयोगे द्वितीया । विदधे लक्ष्मणेन सह विधातुमैच्छदित्यर्थः । अन्यथा भूतार्थासंभवः कविनाप्यादौ तथा वक्तुमयुक्तं लक्ष्मणस्य समस्ताः समाः प्रत्यनुमतिं विदध इति केचिदाहुः ॥ ३४ ॥

३५ ] ति० टी०—भयं तत्कार्यमितस्तत ईक्षणरूपं संभ्रमं च नोपेयतुः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रा० टी०—तत इति । भयं कुतश्चिद्भीतिं संभ्रममुद्वेगं च नैव अभ्युपेयतुः ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रिपञ्चाशत्तमः सर्गः ॥ ५३ ॥

गो० टी०—तत इति । भयं व्याघ्रादिभ्यः संभ्रमं व्याकुलत्वं भयहेतुशङ्कया इतस्ततो निरीक्षणमिति यावत् ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

१ ] ति० टी०—ते इति ॥ १ ॥

रा० टी०—उत्तरदिनवृत्तं बोधयितुमाह—ते इति । ते रामादयः शुभां रजनीमुषित्वा प्रतस्थिरे ॥ १ ॥

गो० टी०—ते त्विति । महावृक्षे महावृक्षमूले सामीप्ये सप्तमी । विमलेऽभ्युदिते स्पष्टमुदित इत्यर्थः ॥ १ ॥

२ ] ति० टी०—गङ्गामभि यमुना प्रवर्तते तद्देशं प्रयागम् गङ्गाया अतिपुण्यत्वध्वननायैवमुक्तिः ॥ २ ॥

रा० टी०—प्रस्थानमेव सविशेषं वर्णयन्नाह—यत्रेति । सुमहद्वनं विगाह्य अवलोक्येत्यर्थः । भागीरथी गङ्गा यत्र यमुनामभिप्रवर्तते तया सह सङ्गतेत्यर्थः । तं देशं प्रयागतीर्थमित्यर्थः उद्दिश्य जग्मुः ॥ २ ॥

गो० टी०—यत्रेत्यादिश्लोकद्वयमेकान्वयम् । भूमिभागान्

---

१ सुखासीनाविति गो. रा. पाठः । २ वने तदा महाबलाविति गो. पाठः भागीरथी गा यमुनामभीति रा. पाठः ।

ते भूमिभागान्विविधान्देशांश्चापि मनोहरान्[1] । अदृष्टपूर्वान्पश्यन्तस्तत्र तत्र यशस्विनः ॥ ३ ॥
यथा क्षेमेण संपश्यन्पुष्पितान्विविधान्द्रुमान्[2] । निवृत्तमात्रे[3] दिवसे रामः सौमित्रिमब्रवीत् ॥ ४ ॥
प्रयागमभितः पश्य सौमित्रे धूममुत्तमम्[4] । अग्नेर्भगवतः केतुं मन्ये संनिहितो मुनिः ॥ ५ ॥
नूनं प्राप्ताः स्म संभेदं गङ्गायमुनयोर्वयम् । तथाहि श्रूयते शब्दो वारिणोर्वारिघर्षजः[5] ॥ ६ ॥
दारूणि परिभिन्नानि वनजैरुपजीविभिः । छिन्नाश्चाप्याश्रमे[6] चैते दृश्यन्ते विविधा द्रुमाः ॥ ७ ॥
धन्विनौ तौ सुखं गत्वा लम्बमाने दिवाकरे । गङ्गायमुनयोः संधौ प्रापतुर्निलयं मुनेः ॥ ८ ॥
रामस्त्वाश्रममासाद्य त्रासयन्मृगपक्षिणः । गत्वा मुहूर्तमध्वानं भरद्वाजमुपागमत् ॥ ९ ॥

वनप्रदेशान् देशान् वत्स्यदेशावान्तरदेशान् एतदेव नानात्वमाह—तत्रतत्रेति यशस्विन इत्यनेन तत्तद्देशीयैरर्चितत्वमुक्तम् ॥ २॥३॥

३ ] ति० टी०—भूमिभागा भूमिप्रदेशाः ते पश्यन्तो जग्मुरिति संबन्धः ॥ ३ ॥

रा० टी०—विगाहनप्रकारं बोधयन्नाह—त इति । भूमिभागान् भूमेर्भागो विभागो येषु तानदृष्टपूर्वान् विविधान्देशान् तत्र तत्र तत्तद्देशे यशस्विनः अतितपोविशिष्टत्वेन प्रशस्तयशोविशिष्टमुनींश्च किंच देशान् वत्स्यदेशोत्तरवर्त्यवान्तरदेशांस्तत्र तत्र भूमिभागान् तत्तद्देशज्ञानजनकभूमिप्रदेशान् सीमा इत्यर्थः पश्यन्तो यशस्विनस्ते रामादयो जग्मुरित्यनुकृष्यते ॥ ३ ॥

४ ] ति० टी०—यथा यथासुखं जनानुमानशङ्काभावात्क्षेमेणोपविश्योत्थाय च शनैः शनैः स्वेच्छानुरोधेन संपश्यन्समपश्यन् निवृत्तमात्रेऽर्धमण्डलकाले ॥ ४ ॥

रा० टी०—यथेति । यथाक्षेमेण क्षेममनतिक्रम्य द्रुमान् संपश्यन्सन् दिवसे निवृत्तमात्रे निवृत्तप्राये किंचिदवशिष्टे सतीत्यर्थः सौमित्रिमब्रवीद् ॥ ४ ॥

गो० टी०—यथाक्षेमेणेति । यथाक्षेमेण क्षेमानतिक्रमेण "यथा सादृश्ये" इति पदार्थानतिवृत्तावव्ययीभावः "तृतीयासप्तम्योर्बहुलम्" इत्यलुक् क्षेमहेत्ववधानमनतिक्रम्येत्यर्थः । निवृत्तमात्रे अर्धमण्डलकाल इत्यर्थः ॥ ४ ॥

५ ] ति० टी०—भगवतोऽग्नेः केतुं लिङ्गं धूमं पश्य यदेवमतोऽत्र मुनिः संनिहित इति मन्ये ॥ ५ ॥

रा० टी०—तद्वचनमेवाह—प्रयागमिति । प्रयागमभितः प्रयागक्षेत्रसमीपे गङ्गायमुनासङ्गमसन्निधावित्यर्थः भगवतः समर्थस्य अग्नेः केतुं सूचकमुत्तमं सुगन्धविशिष्टमित्यर्थः धूमं पश्य । ननु किं दर्शनेनेत्यत आह—मुनिर्भरद्वाजः सन्निहित इत्यहं मन्ये हवनसंबंधिधूमदर्शनेनानुमिनोमीत्यर्थः ॥ ५ ॥

गो० टी०—प्रयागमिति । प्रयागमभितः प्रयागस्याभितः "अभितः परितः—" इत्यादिना द्वितीया केतुं ध्वजीभूतं धूममिति संबन्धः अतः संनिहितो मुनिरिति मन्ये ॥ ५ ॥

६ ] ति० टी०—संभेदं संगमम् । वारिणोर्गङ्गायमुनाजलयोः । वारिघर्षो विजातीयवारिसंबन्धः । 'घट्ट—' इति पाठेऽप्येवमेव॥६॥

रा० टी०—ननु प्रयागोऽयमित्यत्र किं गमकमित्यत आह—नूनमिति । गङ्गायमुनयोः संभेदं संगमं वयं प्राप्ताः स्म नूनं निश्चितमेतत् । तथाहि यतः गङ्गायमुनयोर्वारिणोः वारिघर्षजः उभयवारिसंघर्षजनितः शब्दः श्रूयते ' घट्टज ' इति पाठेऽप्येवमेवेति भट्टाः 'घट्टित' इति भूषणपाठः ' संभेदः सिन्धुसंगमः ' इत्यमरः तत्र सिन्धुर्नदी ॥ ६ ॥

गो० टी०—नूनमिति । संभेदं संगमम् ' संभेदः सिन्धुसंगमः ' इत्यमरः । वारिघट्टितो वारिणः शब्दः वारिजनितो वारिशब्दः वारिणोरन्योन्यघट्टनजः शब्द इत्यर्थः ॥ ६ ॥

७ ] ति० टी०—येषां दारूणि भिन्नानि ते द्रुमा दृश्यन्त इत्यन्वयः ॥ ७ ॥

रा० टी०—दारूणीति । वनजैः वनोद्भूतफलपुष्पादिभिर्हेतुभिः उपजीविभिः जीविकावद्भिः दारूणि काष्ठानि परिभिन्नानि विदारितानि दृश्यन्ते छिन्नाः विदारिता द्रुमाश्च दृश्यन्ते वनजशब्देन यदि जन्तव उच्यन्ते तदा उपजीविभिरित्यस्य समानाधिकरणं विशेषणम् ॥ ७ ॥

गो० टी०—दारूणीति । वनजैरुपजीविभिः वनोत्पन्नैः फलमूलकाष्ठाद्युपजीविभिः दारूणि इत्यत्रापि दृश्यन्त इत्यनुषज्यते॥७॥

८ ] ति० टी०—' धन्विनां विततौ ' इति पाठे तेषां मध्येविततौ मुख्याविति यावत् । संधावन्तर्वेदिदेशे निलयमावासं तत्समीपदेशम् ॥ ८ ॥

रा० टी०—रामोक्तिं समाप्य तद्वृत्तमाह—धन्विनाविति । दिवाकरे लम्बमाने अर्धास्तं प्राप्ते सति संधौ विद्यमानं मुनेर्भरद्वाजस्य निलयमाश्रमं प्रापतुः ॥ ८ ॥

गो० टी०—धन्विनाविति । लम्बमाने अस्तगिरौ लम्बमान इव दृश्यमाने संगमे वर्तमानं निलयम् आश्रमं तत्समीपप्रदेशं प्रापतुः ॥ ८ ॥

९ ] ति० टी०—आश्रमं तत्समीपवनप्रदेशम् त्रासयन्धनुर्धरत्वादिस्वरूपमात्रेण केवलं त्रासयन् । भरद्वाजं तदाश्रमम् ॥ ९ ॥

रा० टी०—राम इति । मृगपक्षिणः दुष्टान्मृगान्पक्षिणश्च त्रासयन् भरद्वाजमुपागमत् ॥ ९ ॥

गो० टी०—राम इति । त्रासयन् अपूर्वदर्शनेन त्रासं जनयन् मुहूर्तं मुहूर्तगम्यं भरद्वाजं भरद्वाजसमीपम् ॥ ९ ॥

१ मनोरमानिति गो. पाठः । २ गच्छन् स पश्यंश्चेति गो. पाठः । ३ निवृत्तेति गो. रा. पाठः । ४ उन्नतमिति गो. पाठः । ५ घट्टित इति गो. पाठः । ६ भरद्वाजाश्रमे इति गो. पाठः । ७ द्वितीयाविधानेऽपि स्पष्टीकरणाय तात्पर्यप्रदर्शनम् ।

ततस्त्वाश्रममासाद्य मुनेर्दर्शनकाङ्क्षिणौ । सीतयानुगतौ वीरौ दूरादेवावतस्थतुः ॥ १० ॥
स प्रविश्य महात्मानमृषिं शिष्यगणैर्वृतम् । संशितव्रतमेकाग्रं तपसा लब्धचक्षुषम् ॥ ११ ॥
हुताग्निहोत्रं दृष्ट्वैव महाभागः कृताञ्जलिः । रामः सौमित्रिणा सार्धं सीतया चाभ्यवादयत् ॥ १२ ॥
न्यवेदयत चात्मानं तस्मै लक्ष्मणपूर्वजः । पुत्रौ दशरथस्यावां भगवन्रामलक्ष्मणौ ॥ १३ ॥
भार्या ममेयं कल्याणी वैदेही जनकात्मजा । मां चानुयाता विजनं तपोवनमनिन्दिता ॥ १४ ॥
पित्रा प्रव्राज्यमानं मां सौमित्रिरनुजः प्रियः । अयमन्वगमद्भ्राता वनमेव धृतव्रतः ॥ १५ ॥
पित्रा नियुक्ता भगवन्प्रवेक्ष्याम तपोवनम् । धर्ममेवाचरिष्यामस्तत्र मूलफलाशनाः ॥ १६ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः । उपानयत धर्मात्मा गामर्घ्यमुदकं ततः ॥ १७ ॥
नानाविधानन्नरसान्वन्यमूलफलाश्रयान् । तेभ्यो ददौ तप्ततपा वासं चैवाभ्यकल्पयत् ॥ १८ ॥

१० ] ति० टी०—आश्रमं भरद्वाजस्य दूरादेवावतस्थतुः कार्यवशनिर्गतशिष्यद्वारा विज्ञापनपूर्वकानुमतिलाभार्थमिति भावः ॥ १० ॥

रा० टी०—तत इति । अनुगतौ युक्तौ दर्शनकाङ्क्षया आसाद्य प्राप्य दूरात् दूरे एव अवतस्थतुः तदाज्ञाकाङ्क्षयेति शेषः ॥ १० ॥

गो० टी०—तत इति । दूरादेवावतस्थतुः सायंतनसमयत्वादग्निहोत्रावसानं प्रतीक्षमाणाववतस्थतुरित्यर्थः ॥ १० ॥

११ ] ति० टी०—स तथा लब्धानुमतिः प्रविश्य उटजमिति शेषः संशितव्रतं तीक्ष्णव्रतम् तपसा लब्धचक्षुषं त्रैकालिकसर्वजगद्वृत्तान्ताभिज्ञम् ॥ ११ ॥

१२ ] ति० टी०—दृष्ट्वाऽवसरं ज्ञात्वा सौमित्रिणा सार्धम् अभ्यवन्ददिति शेषः । सीतया च नमस्कारं कारितवान् । तदाह—अभ्यवादयत् ॥ १२ ॥

रा० टी०—स इति । स बहिःप्राप्तशिष्यादिद्वारा लब्धाज्ञः रामः शिष्यगणैः शिष्यसमूहैः वृतं संशितव्रतं तीक्ष्णव्रतधारिणं तपसा लब्धं चक्षुः सर्वविषयकज्ञानं येन तं महात्मानमृषिं रामोऽभ्यवादयत् । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—स प्रविश्येत्यादिश्लोकद्वयम् । प्रविश्य दैवानिर्गतशिष्यमुखेनेति शेषः । संशितव्रतं तीक्ष्णव्रतम् एकाग्रम् एकप्रधानं ध्यानपरमिति यावत् । तपसा तपोवैभवेन लब्धचक्षुषं लब्धज्ञानम् अतीतानागतवर्तमानयावदर्थगोचरज्ञानयुक्तमित्यर्थः । दृष्ट्वैव दर्शनोत्तरकालमेवेत्यर्थः ॥ ११ ॥ १२ ॥

१३–१५ ] ति० टी०—तत्र मूलफलाशना इत्यन्तेन स्ववृत्तान्तसहितमात्मानं भरद्वाजाय न्यवेदयत ॥ १३–१५ ॥

रा० टी०—न्यवेदयतेति । लक्ष्मणपूर्वजो रामस्तस्मै भरद्वाजाय आत्मानं न्यवेदयत अबोधयत । तदेवाह—आवां दशरथस्य पुत्रौ रामलक्ष्मणौ ॥ १३ ॥

रा० टी०—भार्येति । मामनुयाता अनुगता इयं वैदेही मम भार्या न्यवेदयत चात्मानमित्यत्रात्मशब्देनात्मभूतानामपि ग्रहणात् लक्ष्मणादिनिवेदनमार्थिकम् ॥ १४ ॥

रा० टी०—आगमने कारणं बोधयन्नाह—पित्रेति । पित्रा वनं प्रव्राज्यमानं केकयीवरदानहेतुना प्रेष्यमाणं मामयं भ्राता अन्वगमत् ॥ १५ ॥

गो० टी०—न्यवेदयतेत्यादिश्लोकद्वयमेकान्वयम् । सीतालक्ष्मणयोः सर्वात्मना परतन्त्रत्वादात्मानमित्यनेन तयोरपि ग्रहणं कल्याणी पतिव्रतेत्यर्थः । अनुयातेति न्यवेदयतेति संबन्धः ॥ १३–१५ ॥

१६ ] ति० टी०—धर्ममेव वानप्रस्थधर्ममेव मूलफलग्रहणं मांसस्याप्युपलक्षणम् ॥ १६ ॥

रा० टी०—उपसंहरन्नाह—पित्रेति । नियुक्ता साक्षात्परंपरया चाज्ञप्ताः वयं तपोवनं प्रवेक्ष्यामः धर्मं वानप्रस्थोचितकर्म आचरिष्यामः ॥ १६ ॥

गो० टी०—पित्रेति । धर्मं पितृवचनपरिपालनरूपम् ॥ १६ ॥

१७ ] ति० टी—गां मधुपर्काङ्गं महोक्षम् ॥ १७ ॥

रा० टी०—तस्येति । तस्य रामस्य वचनं श्रुत्वा गां मधुपर्काङ्गीभूतमहोक्षं अर्घ्यमर्घार्हितमुदकं तदुपलक्षितनिखिलपूजनसामग्रीं धर्मात्मा भारद्वाजः उपानयत् रामसमीपं प्रापयत् ॥ १७ ॥

गो० टी०—तस्येति । गां मधुपर्काङ्गभूतमहोक्षं तथा च स्मृतिः ‘ गोमधुपर्कार्हो वेदाध्यायी आचार्य ऋत्विक् स्नातको राजा वा धर्मयुक्तः ’ इति अर्घ्यं पूजाविधेरङ्गम् अन्नरसान् अदनीयरसान् रसप्रधानान् पदार्थविशेषानित्यर्थः । वन्यमूलफलाश्रयान् वन्यमूलफलप्रकृतिकान् ॥ १७ ॥ १८ ॥

१८ ] ति० टी०—अन्नमत्रादनीयमात्रम् अत एव मूलफलाश्रयान् इति वक्ष्यति । रसाः पानीयविशेषाः वासं वासस्थानम् ॥ १८ ॥

रा० टी०—नानेति । वन्यान्येव मूलफलानि आश्रयः उपादानं येषां तान् नानाविधानन्नरसान् अन्ना अदनीया एव रसास्तान् तेभ्यो रामादिभ्यो ददौ वासं वासयोग्यस्थलं च अभ्यकल्पयत् अरचयत् अन्नस्यौदनार्थकत्वं तु नात्र संभवति धर्ममेवाचरिष्यामस्तत्र मूलफलाशना इत्यनेन तन्निषेधस्य बोधितत्वात् अत एव न स्वातन्त्र्येण कर्मणोरन्वयः ॥ १८ ॥

१ महाभागमिति गो. पाठः । २ प्रवेक्ष्यामः इति गो. रा. पाठः; एव चरिष्याम इति गो. पाठः । ४ अत्रात्मनेपदं युक्तमिति भाति ।

मृगपक्षिभिरासीनो मुनिभिश्च समन्ततः । राममागतमभ्यर्च्य स्वागतेनागतं मुनिः ॥ १९ ॥
प्रतिगृह्य तु तामर्चामुपविष्टं स राघवम् । भरद्वाजोऽब्रवीद्वाक्यं धर्मयुक्तमिदं तदा ॥ २० ॥
चिरस्य खलु काकुत्स्थ पश्याम्यहमुपागतम् । श्रुतं तव मया चैव विवासनमकारणम् ॥ २१ ॥
अवकाशो विविक्तोऽयं महानद्योः समागमे । पुण्यश्च रमणीयश्च वसत्विह भवान्सुखम् ॥ २२ ॥
एवमुक्तस्तु वचनं भरद्वाजेन राघवः । प्रत्युवाच शुभं वाक्यं रामः सर्वहिते रतः ॥ २३ ॥
भगवन्नित आसन्नः पौरजानपदो जनः । सुदर्शमिह मां प्रेक्ष्य मन्येऽहमिममाश्रमम् ॥ २४ ॥
आगमिष्यति वैदेहीं मां चापि प्रेक्षको जनः । अनेन कारणेनाहमिह वासं न रोचये ॥ २५ ॥
एकान्ते पश्य भगवन्नाश्रमस्थानमुत्तमम् । रमते यत्र वैदेही सुखार्हा जनकात्मजा ॥ २६ ॥

१९-२० ] ति० टी०-आगतमागतं तेजोविशेषान्मर्यादारक्षणाय मध्ये मध्ये स्थित्वा निकटं प्राप्तं मृगपक्षिभिर्मुनिभिश्च सह स्वागतेनाभ्यर्च्य मुनिभिः सह मुनी रामं समन्तत आसीनोऽभवदिति योजना मृगपक्षिणामर्चा च प्रदक्षिणगमनादिरूपा वर्णिता ॥ १९ ॥ २० ॥

रा० टी०-मृगेति । समन्ततः मृगपक्षिभिः मुनिभिश्च सहासीनो मुनिः भरद्वाजः तां मुनिसमर्पितामर्चां प्रतिगृह्य उपविष्टं संस्थितं राघवमिदं धर्मयुक्तं वाक्यमब्रवीत् । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०-मृगपक्षिभिरिति । मृगपक्षिभिरासीनो मुनिभिश्चेत्यनेन मुनिवैभवात्तिर्यञ्चोऽपि मुनिनिर्विशेषं संजातविश्वासा सेवन्त इति गम्यते । स्वागतेनाह स्वागतमाहेत्यर्थः, यद्वा मृगपक्षिभिः सहेति शेषः । स्वागतेनाभ्यर्च्येति संबन्धः ॥१९॥

गो० टी०-मुनिराहेत्येतद्विवृणोति-प्रतिगृह्येति ॥ २० ॥

२१-२३ ] ति० टी०-चिरस्य चिरकालस्य इहाश्रम आगतं त्वां पश्यामि अनेन सर्वमपि कदाचिदागमनं ध्वनितम् पूर्वरामावतारकालिकमागनं मनसि निधाय वैषोक्तिः । चक्षुषा एव रूपं पश्यामि यः केवलं ध्यानगोचर एव सोऽप्येवंभूत इत्याश्चर्यं व्यङ्ग्यम् अकारणं निर्निमित्तम् ॥ २१-२३ ॥

रा० टी०-तद्वाक्यमेवाह-चिरस्येति । हे काकुत्स्थ राम ! तव उपागतं समीपागमनं चिरस्य बहुकालतः पश्यामि कदा आगन्तेति सर्वदैवालोचयामीत्यर्थः । तत्र हेतुः अकारणं स्वेच्छातिरिक्तकारणरहितं तव विवासनं श्रुतं वाल्मीकिमुखादवगतम् । चो हेतौ ॥ २१ ॥

रा० टी०-स्वाभिप्रेतमाह-अवकाश इति । महानद्योः गङ्गायमुनयोः समागमे सङ्गमसमीपे अवकाशः विशाल इत्यर्थः विविक्तः दुर्जनसंसर्गरहितः अत एव पुण्यः अत एव रमणीयः अयं देशोऽस्तीति शेषः अतः इह भवान्सुखं वसतु ॥ २२ ॥

रा० टी०-एवमिति । भरद्वाजेन एवमुक्तो राघवः प्रत्युवाच ॥ २३ ॥

गो० टी०-चिरस्य चिरम् ॥ २१-२३ ॥

२४-२५ ] ति० टी०-इत आसन्न एतदाश्रमाददूरवर्ती पौरजानपदो जनो मां सुदर्शं सुखेन द्रष्टुं शक्यं प्रेक्ष्य ज्ञात्वा वैदेहीं मां च प्रेक्षको जनो वैदेह्यादिदर्शनार्थी जनस्तदर्थमिममाश्रममागमिष्यतीत्यहं मन्य इत्यन्वयः ॥ २४ ॥ २५ ॥

रा० टी०-तदेवाह-भगवन्निति । इतः स्थानात् आसन्नः निकटवर्ती प्रेक्षको दर्शनाभिलाषी पौरजानपदः अयोध्यातद्देशयोर्भवः अजनः कर्माधीनजन्मरहितः नित्यसुखादिरित्यर्थः जनः सुदर्शनं सुखेन दर्शनयोग्यं मां वैदेहीं च प्रेक्ष्य ज्ञात्वा इममाश्रममागमिष्यति अनेन कारणेन न रोचये वाञ्छामि । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०-भगवन्नित्यादि । इत एतदाश्रमापेक्षया इह आश्रमे सुदर्शं सुखेन द्रष्टुं शक्यं प्रेक्ष्य ज्ञात्वा वैदेहीं मां च प्रेक्षको जनः इममाश्रममागमिष्यतीत्यहं मन्ये अनेन कारणेन इह वासं न रोचय इत्यन्वयः मां प्रेक्षक इत्यत्र "अकेनोर्भविष्यदाधमर्ण्ययोः" इति षष्ठी प्रतिषेधः । एकान्ते पौरजनाविदिते पश्य चिन्तय ॥ २४-२६ ॥

२६ ] ति० टी०-यत्र यस्मिन्नाश्रमस्थाने तादृशमेकान्ते वर्तमानं पश्य ज्ञात्वा निर्दिशेत्यर्थः । अत्र भगवन्नित्यादिश्लोकत्रयस्य तीर्थेन वास्तवस्त्वर्थः-रावणवधार्थं गूढमवतीर्णं मां मा प्रकटीकुरु अन्यथा सर्वोऽपि जनः सुदर्शं विष्णुं मां ज्ञात्वा वैदेहीं च मां लक्ष्मीं प्रेक्ष्य ज्ञात्वा तां मां च प्रेक्षकः सन्निहागमिष्यति अत एवंविधं प्रकटवासं न रोचये, अतो यत्र वैदेही रमते सम् , आश्रयतीत्याश्रमं जगत्, तस्य स्थानं सर्वोत्तमं मां त्वमेवैकान्ते पश्य मत्स्वरूपं न प्रकटयेत्यन्तेन व्याख्यातम् तदप्युक्तम् , मुनिना रामस्वरूपप्रकटनस्य सर्ववेद्यं यथा भवति प्राक् काव्यकरणात् अक्षरमर्यादयापि तादृशार्थालाभाच । पौरजानपदो जन इति पदस्वारस्याचेति सुधियो विभावयन्तु ॥ २६ ॥

रा० टी०-एकान्त इति । आश्रम् आसमन्तात् श्रमं श्रमनिवर्तकं स्थानं पश्य आलोच्य आज्ञापय यत्र वैदेही रमते रमेत ॥ २६ ॥

१ आह तामिति गो. पाठः । २ चेति गो. पाठः । ३ त्वामिहागतमिति गो. पाठः । ४ इदमिति गो. पाठः । ५ रमेतेति गो. पाठः ।

एतच्छ्रुत्वा शुभं वाक्यं भरद्वाजो महामुनिः । राघवस्य तु तद्वाक्यमर्थग्राहकमब्रवीत् ॥ २७ ॥
दशक्रोश इतस्तात गिरिर्यस्मिन्निवत्स्यसि । महर्षिसेवितः पुण्यः पर्वतः शुभदर्शनः ॥ २८ ॥
गोलाङ्गूलानुचरितो वानरर्क्षनिषेवितः । चित्रकूट इति ख्यातो गन्धमादनसंनिभः ॥ २९ ॥
यावता चित्रकूटस्य नरः शृङ्गाण्यवेक्षते । कल्याणानि समाधत्ते न मोहे कुरुते मनः ॥ ३० ॥
ऋषयस्तत्र बहवो विहृत्य शरदां शतम् । तपसा दिवमारूढाः कपालशिरसा सह ॥ ३१ ॥
प्रविविक्तमहं मन्ये तं वासं भवतः सुखम् । इह वा वनवासाय वस राम मया सह ॥ ३२ ॥
स रामं सर्वकामैस्तं भरद्वाजः प्रियातिथिम् । सभार्यं सह च भ्रात्रा प्रतिजग्राह हर्षयन् ॥ ३३ ॥

२७ ] ति० टी०—एतदिति । राघवस्यार्थग्राहकं तदुक्तप्रयोजनप्रतिपादकं तद्वक्ष्यमाणमब्रवीत् ॥ २७ ॥

रा० टी०—एतदिति । अर्थग्राहकं स्थानान्तरान्वेषणप्रयोजनबोधकं तद्वाक्यं श्रुत्वा भरद्वाज एतद्वाक्यमब्रवीत्॥२७॥

गो० टी०—एतदिति । अर्थग्राहकम् अर्थबोधकं यथा भवति तथा, यद्वा अर्थग्राहकं बह्वर्थवत् अब्रवीत् ॥ २७ ॥

२८-२९ ] ति० टी०—दशक्रोशे इति सप्तम्यन्तम् । इतो महाश्रमात् ॥ २८ ॥ २९ ॥

रा० टी०—तद्वचनमेवाह—दशेति । इतः दशक्रोशे त्रिंशत्क्रोशपरिच्छिन्नदेशसन्निधौ महर्षिसेवितः पर्वतः अवान्तरपर्वतविशिष्टः गिरिः पर्वतोऽस्ति यस्मिंस्त्वं निवत्स्यसि दशशब्दस्यैकशेषेणायमर्थो लब्धः अत एव नासंभवः दशक्रोशः दशक्रोशपरिमित इति पर्वतविशेषणे तु नैकशेषकल्पना ॥ २८ ॥

रा० टी०—ननु तद्गिरेः किं नामेत्यत आह—गोलाङ्गूलेति । गोलाङ्गूलानुचरितः वानरादिभिर्निषेवितः गन्धमादनसदृशः चित्रकूट इति ख्यातोऽस्तीति शेषः ॥ २९ ॥

गो० टी०—दशक्रोश इत्यादि । यस्मिन् गिरौ निवत्स्यसि सगिरिरितो दशक्रोशः दशक्रोशावस्थित इत्यर्थः । गन्धमादनसंनिभः गन्धमादनपर्वतसंनिभः । अतीतानागतवर्तमानज्ञो महर्षिः गोलाङ्गूलानुचरितो वानरर्क्षनिषेवित इति केवलत्रिवर्गाभिधानेन एतत्सजातीया एव रामस्य सहाया अपि भविष्यन्तीति सूचितवानिति गम्यते ॥ २८ ॥ २९ ॥

३० ] ति० टी०—यावता यदा शृङ्गाण्यवेक्षते तदेति शेषः । समाधत्ते मनसा कर्तुमाशास्ते ॥ ३० ॥

रा० टी०—यावतेति । यावता कालेन नरः शृङ्गाणि अवेक्षते पश्यति तावता कालेनैव कल्याणानि दर्शनप्रभावजनितशुभानि समाधत्ते प्राप्नोति अत एव पापे मनः न कुरुते ॥ ३० ॥

गो० टी०—यावतेति । नरः यावता दूरेण चित्रकूटस्य शृङ्गाण्यवेक्षते तावता कल्याणानि पुण्यकर्माणि समाधत्ते प्राप्नोति, यद्वा समाधत्ते आचरति पापे मनो न कुरुते तत्र वसन् किमुतेति भावः । यद्वा यावता कालेन ॥ ३० ॥

३१ ] ति० टी०—तदुपपादयति—ऋषय इति । बहुदिनमृतनृकपालवच्छुष्कं शिरस्तेन सह तेन विद्यमानेनोपलक्षितास्तपसा शरदां शतं विहृत्यातिवार्धकेऽपि तपसा क्रीडित्वा दिवं स्वर्गमारूढाः । केचित्तु कपालशिरसेति शरीरोपलक्षणं सशरीराः स्वर्गं गता इत्याहुः तन्न, धर्मपुत्रादीनामपि कियद्दूरमेव धर्मवैभवदर्शनायैतच्छरीरेण गमनं ततस्तन्निरासपूर्वकमेव स्वर्गगमनश्रवणादिति कतकः ॥ ३१ ॥

रा० टी०—तत्र वासे शिष्टाचारं प्रमाणयन्नाह—ऋषय इति । तत्र चित्रकूटे तपसा युक्ता बहवः ऋषयः कपालशिरसा त्वद्दर्शनफलकनित्यस्थितिमच्छिवेन सह शरदां शतं विहृत्य दिवप्रमोदविशेषमारूढाः प्राप्ताः एतेन शिवस्य रामानुरागिश्रेष्ठत्वं व्यञ्जितम् ॥ ३१ ॥

गो० टी०—ऋषय इति । तत्र चित्रकूटे शरदां शतं तपसा विहृत्य क्रीडन्त इव महत्तपः परिसमाप्येत्यर्थः । कपालशिरसा सह दिवमारूढाः तपश्चरणेन निरन्तरकपालासनेन प्रक्षीणत्वक्शिरोरुहतया कपालावशिष्टशिरसा सह दिवमारूढा इत्यर्थः । कपालशिरसेत्येतच्छरीरोपलक्षणं सशरीराः स्वर्गं गता इत्यर्थः, यद्वा कपालशिरा इति कस्यचित् ऋषेः संज्ञा कपालशिरसा कपालरूपशिरोयुक्तेनेत्यध्याहृतशरीरपदविशेषणमित्येके कपालमात्रावशिष्टं शिरो यस्मिन्निति तपोविशेषणमित्येके ॥ ३१ ॥

३२ ] ति० टी०—वनवासाय वनवासनियमसिद्धये इह वेति शिष्टाचारमात्रम् ॥ ३२ ॥

रा० टी०—प्रविविक्तमिति । प्रविविक्तं दुष्टजनरहितं सुखं सुखप्रदं तं चित्रकूटं भवतः वासं वासाश्रयं मन्ये अतः तत्र इह वा मया सह वस तत्रेत्यध्याहृतम् ॥ ३२ ॥

गो० टी०—प्रविविक्तमिति । प्रविविक्तं प्रकर्षेण विजनम् ॥ ३२ ॥

३३ ] ति० टी०—रामं तद्रजन्यां तत्र वसन्तं प्रतिजग्राहातिथियोग्यसत्कारैर्वशीकृतवान् ॥ ३३ ॥

रा० टी०—स इति । प्रियातिथिं तं रामं सर्वकामैः निखिलेच्छाविषयीभूतपदार्थप्रापकवचनैः हर्षयन्स भरद्वाजो जग्राह तस्यां रात्रौ निवासयामास ॥ ३३ ॥

गो० टी०—सराममिति । सर्वकामैः प्रतिजग्राह अति-

१ एतो वाक्यमिति गो. पाठः । २ सर्वतः सुखदर्शन इति गो. पाठः । ३ पापे इति गो. पाठः । ४ धर्मविदिति गो. पाठः

तस्य प्रयागे रामस्य तं महर्षिमुपेयुषः । प्रपन्ना रजनी पुण्या चित्राः कथयतः कथाः ॥ ३४ ॥
सीतातृतीयः काकुत्स्थः परिश्रान्तः सुखोचितः । भरद्वाजाश्रमे रम्ये तां रात्रिमवसत्सुखम् ॥ ३५ ॥
प्रभातायां तु शर्वर्यां भरद्वाजमुपागमत् । उवाच नरशार्दूलो मुनिं ज्वलिततेजसम् ॥ ३६ ॥
शर्वरीं भगवन्नद्य सत्यशील तवाश्रमे । उषिताः स्मोऽह वसतिमनुजानातु नो भवान् ॥ ३७ ॥
रात्र्यां तु तस्यां व्युष्टायां भरद्वाजोऽब्रवीदिदम् । मधुमूलफलोपेतं चित्रकूटं व्रजेति ह ॥ ३८ ॥
वासमौपयिकं मन्ये तव राम महाबल । नानानगगणोपेतः किंनरोरगसेवितः ॥ ३९ ॥
मयूरनादाभिरतो गजराजनिषेवितः । गम्यतां भवता शैलश्चित्रकूटः स विश्रुतः ॥ ४० ॥
पुण्यश्च रमणीयश्च बहुमूलफलायुतः । तत्र कुञ्जरयूथानि मृगयूथानि चैव हि ॥ ४१ ॥
विचरन्ति वनान्तेषु तानि द्रक्ष्यसि राघव । सरित्प्रस्रवणप्रस्थान्दरीकन्दरनिर्झरान् ॥
चरतः सीतया सार्धं नन्दिष्यति मनस्तव ॥ ॥ ४२ ॥
प्रहृष्टकोयष्टिभकोकिलस्वनैर्विनोदयन्तं च सुखं परं शिवम् ।
मृगैश्च मत्तैर्बहुभिश्च कुञ्जरैः सुरम्यमासाद्य समावसाश्रयम् ॥ ४३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

---

थियोग्यसत्कारैर्वशीकृतवानित्यर्थः पाठभेदः प्रतिजग्राह पउचचार ॥ ३३ ॥

३४–३६ ] ति० टी०–रजनी प्रपन्ना प्राप्ता ॥३४–३६॥

रा० टी०–तस्येति । प्रयागे महर्षिमुपेयुषः प्राप्तस्य कथाः कथयतो रामस्य रजनी प्रपन्ना प्राप्ता ॥ ३४ ॥

रा० टी०–सीतेति । सीता तृतीया यस्य सः सुखोचितः परिश्रान्तः अध्वजनितश्रमवत्तया प्रतीयमानः काकुत्स्थः भरद्वाजाश्रमे सुखमवसत् ॥ ३५ ॥

रा० टी०–प्रभातायामिति । ज्वलिततेजसं मुनिमुवाच ॥ ३६ ॥

गो० टी०–तस्येति । प्रपन्ना प्राप्ता ॥ ३४–३६ ॥

३७ ] ति० टी०–इहाश्रमे शर्वरीमुषिताः स्म । अह अथेत्यर्थे । वसतिं गन्तव्यां चित्रकूटरूपां तद्गमनं प्रत्यनुजानातु ॥ ३७ ॥

रा० टी०–तद्वचनमेवाह–शर्वरीति । हे भगवन् सत्यशील! तवाश्रमे एव शर्वरी रात्रिः उषिता स्म ह अथ वसतिं वासस्थलं गन्तुमिति शेषः अनुजानातु आज्ञापयतु । उरेवार्थे ॥ ३७॥

गो० टी०–शर्वरीमिति । वसतिमनुजानातु पूर्वोक्तां वसतिं प्रति गन्तुमनुज्ञां करोत्वित्यर्थः ॥ ३७ ॥

३८ ] ति० टी०–भरद्वाजः तथा रामेण प्रार्थित इति शेषः । व्रज इति अनुजगाविति शेषः ॥ ३८ ॥

रा० टी०–रात्र्यामिति । व्युष्टायां व्यतीतायां सत्यां भरद्वाजः इदमब्रवीत् । तद्वचनस्वरूपमाह–इति इतः चित्रकूटं व्रज ३८

गो० टी०–रात्र्यामिति । व्रजेत्यब्रवीदित्यन्वयः । हेति पादपूरणे हर्षे वा ॥ ३८ ॥

३९–४१ ] ति० टी०–औपयिकमुचितम् । नगा वृक्षाः ॥ ३९–४१ ॥

रा० टी०–तत्र हेतुं वदन्नाह–वासमिति । नाना अनेकविधैः नगगणैर्वृक्षसमूहैः उपेतः मयूरनादैः अभिरतः रमणीयः गजराजैः निषेवितः विश्रुतः प्रख्यातः शैलश्चित्रकूटः गम्यतां तत्र वासमौपयिकं युक्तं मन्ये । श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

रा० टी०–पुण्य इति । तानि कुञ्जरमृगयूथानि सरिदादीनि च द्रक्ष्यसि अतः तव मनो नन्दिष्यति । तत्र सरितो नद्यः, प्रस्रवणाः बिन्दुशो जलनिपाताः, प्रस्थाः शिलाः, दर्यः पाषाणसन्धयः, कन्दराः गुहाः, निर्झराः गिरिच्युताल्पप्रवाहाः । सार्धश्लोकद्वयमेकान्वयि ॥ ४१ ॥ ४२ ॥

गो० टी०–वासमिति । तत्रेति शेषः औपयिकं युक्तं 'युक्तमौपयिकम्' इत्यमरः । नानानगगणोपेतः नानावृक्षनिचयोपेतः ॥ ३९–४१ ॥

४२ ] ति० टी०–विचरन्ति इदं शत्रन्तम् । सरितो नद्यः प्रस्रवणास्तनुतरजलप्रवाहास्तद्युताः प्रस्थाः सानूनि, दरी पाषाणनिर्भेदः, कन्दरा गिरिगुहाः, निर्झरा घनप्रवाहाः, तान्द्रक्ष्यसीत्यन्वयः एते कुञ्जरादयः सीतया सार्धं चरतस्तवेत्यन्वयः॥४२॥

गो० टी०–सरित्प्रस्रवणप्रस्थानिति । सरितो नद्यः, प्रस्रवणानि तनुतरजलप्रवाहाः, प्रस्थाः सानवस्तान् दरीकन्दरनिर्दरान् दर्यः पाषाणसंश्लेषस्थानानि, कन्दराः गुहाः, निर्दरा विदीर्णपाषाणसंधयः तान् ॥ ४२ ॥

४३ ] ति० टी०–कोयष्टिभष्टिट्टिभः ॥ ४३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुःपञ्चाशः सर्गः ॥ ५५ ॥

---

१ पुण्ये इति रा. पाठः । २ रजन्यां त्विति गो. पाठः । ३ शर्वरीति रा. पाठः । ४ उषिता स्म हेति रा. पाठः । ५ स्मह्रेति गो. पाठः । ६ रुत इति गो. पाठः । ७ चाभित इति गो. पाठः । ८ वनान्तेऽस्मिन्निति गो. पाठः । ९ निर्दरानिति गो. पाठः । १० कोयष्टिकेति गो. रा. पाठः । ११ विनादितं तं वसुधाधरमिति गो. पाठः । १२ आश्रममिति गो. पाठः ।

## पञ्चपञ्चाशः सर्गः ।

चित्रकूटं प्रति प्रस्थितयो रामलक्ष्मणयोर्भरद्वाजो मार्गमुपदिशति । स्वनिर्मितकाष्ठादिनावा ससीतौ रामलक्ष्मणौ यमुनां प्रतेरतुः । अभिमतफलपुष्पादिप्राप्त्या मोदमानया सीतया समं तौ सायं स्वोचितयमुनातट ऊषतुः ।

उषित्वा रजनीं तत्र राजपुत्रावरिंदमौ । महर्षिमभिवाद्याथ जग्मतुस्तं गिरिं प्रति ॥ १ ॥
तेषां स्वस्त्ययनं चैव महर्षिः स चकार ह । प्रस्थितान्प्रेक्ष्य तांश्चैव पिता पुत्रानिवौरसान् ॥ २ ॥
ततः प्रचक्रमे वक्तुं वचनं स महामुनिः । भरद्वाजो महातेजा रामं सत्यपराक्रमम् ॥ ३ ॥
गङ्गायमुनयोः संधिमादाय मनुजर्षभ । कालिन्दीमनुगच्छेतां नदीं पश्चान्मुखाश्रिताम् ॥ ४ ॥
अथासाद्य तु कालिन्दीं प्रतिस्रोतःसमागताम् । तस्यास्तीर्थं प्रचरितं प्रकामं प्रेक्ष्य राघव ॥
तत्र यूयं प्लवं कृत्वा तरतांशुमतीं नदीम् । ॥ ५ ॥
ततो न्यग्रोधमासाद्य महान्तं हरितच्छदम् । परीतं बहुभिर्वृक्षैः श्यामं सिद्धोपसेवितम् ॥ ६ ॥

रा० टी०–प्रहृष्टेति । प्रहृष्टानां कोयष्टिककोकिलानां स्वनैः शब्दैः सुखं विनोदयन्तं प्रापयन्तं मृगैः कुञ्जरैश्च सुरम्यमाश्रयं वासयोग्यपर्वतमासाद्य प्राप्य समावस ॥ ४३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

गो० टी०–प्रहृष्टेति । कोयष्टिकाः टिट्टिभकाः 'कोयष्टिकष्टिट्टिभकः' इत्यमरः ॥ ४३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुःपञ्चाशः सर्गः ॥ ५४ ॥

१] ति० टी०–अथ भरद्वाजेन मार्गोपदेशः–उषित्वेति॥१॥

रा० टी०–भरद्वाजवचनश्रवणानन्तरकालिकं रामवृत्तमाह–उषित्वेत्यादिभिः । तत्र भरद्वाजाश्रमे उषित्वा महर्षिमभिवाद्य तं महर्षिनिर्दिष्टं गिरिं चित्रकूटं जग्मतुः ॥ १ ॥

गो० टी०–उषित्वेत्यादि ॥ १ ॥

२ ] ति० टी०–औरसान्पुत्रान्पितेव तान्प्रस्थितान्प्रेक्ष्य तेषां स्वस्त्ययनं चकार । चैवौ पादपूरणार्थौ ॥ २ ॥

रा० टी०–तेषामिति । औरसान् पुत्रान् पितेव तान्प्रस्थितान्प्रेक्ष्य तेषां रामादीनां स्वस्त्ययनं गमनकालोचितस्वस्तिक्रियां चकार ॥ २ ॥

गो० टी०–तेषामिति । तेषां प्रस्थातुमुद्युक्तानाम् 'अन्वगात्' इति पाठः । 'अन्वशात्' इति पाठे अनुशिष्टवान् मार्गोपदेशमकरोदित्यर्थः ॥ २ ॥

३ ] ति० टी०–प्रचक्रमे मार्गोपदेशार्थमिति शेषः ॥ ३ ॥

रा० टी०–तत इति । स महामुनिः वक्तुं प्रचक्रमे ॥ ३ ॥

गो० टी०–तदेव विवृणोति–तत इति ॥ ३ ॥

४ ] ति० टी०–पश्चान्मुखाश्रितां गङ्गाजलवेगाभिघातेन किंचिद्दूरं पश्चान्मुखं गतामिति तीर्थः । संधिः संगमतीर्थम् । संगमात्पश्चिमप्रदेश एवाश्रितस्वप्रयुक्तव्यवहारो संगमपूर्वभागे तु गङ्गाया एव व्यवहार इति भाव इति कतकः, अन्ये तु पश्चान्मुखया गङ्गया श्रितां कालिन्दीमनुगच्छेतामित्यर्थः । अत एवाग्रे कालिन्दीमासाद्येत्युक्तिरित्याहुः ॥ ४ ॥

रा० टी०–वचनस्वरूपमाह–गङ्गेत्यादिभिः । गङ्गायमुनयोः सन्धिं सङ्गममादाय आरभ्य पश्चान्मुखाश्रितामतिप्रबलगङ्गावेगेन पश्चान्मुखं किंचिद्दूरं पश्चिमाभिमुखत्वमाश्रितं यया तां कालिन्दीमनुगच्छेतां तां पश्यंस्तदुत्तरतीरवर्तिमार्गेण गच्छेत्यर्थः अत्र द्विवचं तु सीतारामानतिरेकबुद्ध्या ॥ ४ ॥

गो० टी०–गङ्गायमुनयोरिति । प्रथमं गङ्गायमुनयोः संधिमासाद्य पश्चान्मुखाश्रितां गङ्गाजलवेगाभिहत्या किंचित्पश्चान्मुखप्रवाहं प्राप्तां कालिन्दीं नदीम् अनुगच्छेताम् अनुसृत्य गच्छेतां पश्चिमाभिमुखौ भूत्वा गच्छेतां भवन्ताविति शेषः । पाठभेदः 'अभिगच्छेताम्' अभिमुखं गच्छेतां कालिन्द्या अभिमुखीभूय गच्छेतामित्यर्थः ॥ ४ ॥

५ ] ति० टी०–अथ शुद्धां कालिन्दीं प्रतिस्रोतो यथा भवति तथा समागतां विपरीतप्रवाहामासाद्य तस्यास्तीर्थमवतरणप्रदेशं प्रचरितं गमनागमनाभ्यामतिक्षुण्णं दृष्ट्वा प्लवं तरणसाधनम् अंशुमतीं सूर्यतनयाम् ॥ ५ ॥

रा० टी०–अथेति । अथ यमुनातीरतो गमनानन्तरं प्रतिस्रोतः समागतां प्रवाहमार्गलब्धानेकतीर्थसङ्गमवतीं कालिन्दीमासाद्य प्राप्य तीर्थं पवित्रकारकं तस्याः कालिन्द्याः प्रचरितं विलक्षणप्रचलनं प्रकामं यथा स्यात्तथा प्रेक्ष्य तत्र यमुनायां प्लवमुडुपं कृत्वा आंशुमतीम् अंशुमतः सूर्यस्य इयं कन्या तां तरत । सार्धश्लोक एकान्वयी ॥ ५ ॥

गो० टी०–शीघ्रस्रोतसमित्यनेन गङ्गाजलवेगप्रतिहतिस्तिमितजलव्यतिरिक्तप्रदेश उच्यते तीर्थम् अवतरणप्रदेशं प्रचरितं गमनागमनाभ्यामतिक्षुण्णमित्यर्थः । आंशुमतीम् अंशुमतः सूर्यस्यापत्यभूताम् ॥ ५ ॥

६ ] ति० टी०–श्यामं श्यामनामकम् ॥ ६ ॥

१ इवान्वगादिति गो. पाठः । २ आसाद्य मनुजर्षभाविति गो. पाठः । ३ शीघ्रस्रोतसमापगामिति गो. पाठः । ४ पुराणं प्रेक्ष्य राघवाविति गो. पाठः । ५ विश्रुतमिति गो. पाठः ।

तस्मिन्सीताञ्जलिं कृत्वा प्रयुञ्जीताशिषां क्रियाम् । समासाद्य च तं वृक्षं वसेद्वातिक्रमेत वा ॥ ७ ॥
क्रोशमात्रं ततो गत्वा नीलं प्रेक्ष्य च काननम् । सल्लकीबदरीमिश्रं राम वन्यैश्च यामुनैः ॥ ८ ॥
स पन्थाश्चित्रकूटस्य गतस्य बहुशो मया । रम्यो मार्दवयुक्तश्च दावैश्चैव विवर्जितः ॥ ९ ॥
इति पन्थानमादिश्य महर्षिः संन्यवर्तत । अभिवाद्य तथेत्युक्त्वा रामेण विनिवर्तितः ॥ १० ॥
उपावृत्ते मुनौ तस्मिन्रामो लक्ष्मणमब्रवीत् । कृतपुण्याः स्म भद्रं ते मुनिर्यन्नोऽनुकम्पते ॥ ११ ॥
इति तौ पुरुषव्याघ्रौ मन्त्रयित्वा मनस्विनौ । सीतामेवाग्रतः कृत्वा कालिन्दीं जग्मतुर्नदीम् ॥ १२ ॥
अथासाद्य तु कालिन्दीं शीघ्रस्रोतस्विनीं नदीम् । चिन्तामापेदिरे सद्यो नदीजलतितीर्षवः ॥ १३ ॥
तौ काष्ठसंघाटमथो चक्रतुः सुमहाप्लवम् । शुष्कैर्वन्यैः समाकीर्णमुशीरैश्च समावृतम् ॥ १४ ॥
ततो वैतसशाखाश्च जम्बुशाखाश्च वीर्यवान् । चकार लक्ष्मणश्छित्त्वा सीतायाः सुखमासनम् ॥ १५ ॥

रा० टी०–तत इति । ततो यमुनासंतरणानन्तरं महान्तमतिप्रवृद्धं हरितच्छदं हरितपत्रविशिष्टमत एव श्यामं बहुभिर्वृक्षैः परीतं युक्तं न्यग्रोधं वटवृक्षमासाद्य प्राप्य तस्मिन्न्यग्रोधे स्थिता सीता अञ्जलिं प्रणयसूचकबद्धयुगलकरं कृत्वा आशिषः वनवासनिवर्तनरूपमनोरथस्य क्रिया कुशलमस्माकमागमनं भवत्विति प्रार्थनां प्रयुञ्जीत 'आशिषः शिवाः' इति भूषणपाठः । सार्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०–ततः तरणानन्तरं न्यग्रोधं तीरस्थं हरितच्छदं श्यामलपत्रम् अत एव श्यामं श्यामनामकं वृक्षैः सह विवृद्धं, यद्वा वृक्षैः श्यामं वृक्षसहितत्वात् विशेषेण श्यामलं वृक्षैरित्युपलक्षणे तृतीया आशिषः मनोरथान् प्रयुञ्जीत प्रार्थयेत् । सीतेति शेषः ॥ ६ ॥

७ ] ति० टी०–आशिषां क्रियां करणं प्रयुञ्जीतास्माकं पुनरागमनं भवत्विति सीता वृक्षं नत्यादिना प्रार्थयेत् । वसेद्वातिक्रमेत वेत्येकवचनं सीताभिप्रायकम् । श्रमे वसेत् अन्यथाग्रे गच्छेदित्यर्थः ॥ ७ ॥

रा० टी०–समासाद्येति । तं वृक्षं समासाद्य पूजनादिना सम्यक् प्राप्य वसेत् तत्रैव निशि शयीत वा अतिक्रमेततः परं गच्छेत्ततः तस्मान्न्यग्रोधात्क्रोशमात्रं गत्वा पलाशबदरीमिश्रं पलाशैः बदरीभिश्च युक्तं यामुनैः यमुनातीरोद्भवैः वंशैः वेणुभिरुपलक्षितं नीलं काननं वनं प्रेक्ष्य मया बहुशो गतस्य बहुवारं मत्कर्तृकगमनविशिष्टस्य चित्रकूटस्य यः रम्यः रमणीयः मार्दवयुक्तः मृदुः स प्रसिद्धः पन्थाः मार्गः त्वया प्राप्स्यते इति शेषः । सार्धश्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

गो० टी०–वसेद्वातिक्रमेत वा सीता श्रान्ता चेत् किंचित्कालं वसेत् नो चेदतिक्रमेतेत्यर्थः ॥ ७ ॥

८ ] ति० टी०–ततः कालिन्दीदक्षिणतीरवर्तिन्यग्रोधात् । यामुनैर्यमुनातीरजैः ॥ ८ ॥

गो० टी०–ततः दक्षिणतटस्थन्यग्रोधात् यामुनैः यमुनासंबन्धिभिः यमुनातीरजैरित्यर्थः ॥ ८ ॥

९ ] ति० टी०–मार्दवयुक्तः वालुकोपेतत्वात्कण्टकपाषाणादिरहितत्वाच्च । दावैर्विवर्जितो वनाग्निरहितः ॥ ९ ॥

गो० टी०–सः काननं पथिशब्दापेक्षया पुंलिङ्गत्वम् मार्दवयुक्तः सूक्ष्मसिकतावत्त्वात् वनदावैर्वनाग्निभिः 'दवदावौ वनारण्यवह्नी' इत्यमरः । तथाप्यत्र दावशब्दोऽग्निमात्रपरः विशिष्टवाचकानामिति न्यायात् ॥ ९ ॥

१०–१३ ] ति० टी०–तथेत्युक्त्वा त्वदुपदिष्टमार्गेणैव गमिष्याम इत्युक्त्वा ॥ १०–१३ ॥

रा० टी०–इतीति । इति अनेन प्रकारेण पन्थानमादिश्य बोधयित्वा तथेत्युक्त्वा अभिवाद्य प्रियमानेन रामेण विनिवर्तितः स महर्षिः न्यवर्तत । अर्धद्वयमेकान्वयि ॥ १० ॥

रा० टी०–उपेति । उपावृत्ते निवृत्ते सति यद्यस्मात् नः अस्मान्मुनिः अनुकम्पते तस्माद्वयं कृतपुण्याः अतः ते भद्रं कल्याणमिति रामः लक्ष्मणमब्रवीत् ॥ ११ ॥

गो० टी०–अभिवाद्येत्यर्धेन महर्षिं विशेषयति तथैव गमिष्याम इत्युक्त्वा अभिवाद्य त्वमाश्रमं गच्छेति रामेण विनिवर्तितो महर्षिः न्यवर्ततेति संबन्धः ॥ १०–११ ॥

रा० टी०–इतीति । मन्त्रयित्वा परस्परं संभाष्य तौ रामलक्ष्मणौ कालिन्दीं जग्मतुः ॥ १२ ॥

गो० टी०–इतीति । मन्त्रयित्वा पूर्वोक्तरीत्या कृतार्थतामनुसंधाय ॥ १२ ॥ १३ ॥

रा० टी०–अथेति । शीघ्रस्रोतस्विनीं झटितिप्रवाहविशिष्टां कालिन्दीमासाद्य चिन्तां कालिन्दीतरणोद्देश्यकभरद्वाजोक्तिविषयकस्मृतिमापेदिरे प्रापुः ॥ १३ ॥

१४–१५ ] ति० टी०–काष्ठसंघाटः काष्ठसंघातस्तद्रूपं

१ तस्मायिति गो. पाठः । २ आशिषः शिवा इति गो. आशिष इति रा. पाठः । ३ त्विति गो. पाठः । ४ द्रक्ष्यथेति गो. पाठः । ५ पलाशेति गो. रा. पाठः । ६ रम्यं वंशैरिति गो. वंशैरिति रा. पाठः । ७ वनदावैरिति गो. पाठः । ८ आवेचेति गो. पाठः । ९ सौमित्रे इति गो. पाठः । १० स्रोतोवहामिति गो. पाठः । ११ सर्वे इति गो. पाठः । १२ शुष्कैर्वंशैरिति गो. पाठः । १३ आस्तीर्णमिति गो. पाठः । १४ वेतसेति गो. पाठः । १५ जम्बूशाखा इति गो. पाठः ।

तत्र श्रियमिवाचिन्त्यां रामो दाशरथिः प्रियाम् । ईषत्सं लज्जमानां तामध्यारोपयत प्लवम् ॥ १६ ॥
पार्श्वे तत्र च वैदेह्या वसने भूषणानि च । प्लवे कठिनकाजं च रामश्चक्रे समाहितः ॥ १७ ॥
आरोप्य सीतां प्रथमं संघाटं परिगृह्य तौ । ततः प्रतेरतुर्यत्तौ प्रीतौ दशरथात्मजौ ॥ १८ ॥
कालिन्दीमध्यमायाता सीता त्वेनामवन्दत । स्वस्ति देवि तरामि त्वां पारयेन्मे पतिर्व्रतम् ॥ १९ ॥
यक्ष्ये त्वां गोसहस्रेण सुराघटशतेन च । स्वस्ति प्रत्यागते रामे पुरीमिक्ष्वाकुपालिताम् ॥ २० ॥
कालिन्दीमथ सीता तु याचमाना कृताञ्जलिः । तीरमेवाभिसंप्राप्ता दक्षिणं वरवर्णिनी ॥ २१ ॥
ततः प्लवेनांशुमतीं शीघ्रगामूर्मिमालिनीम् । तीरजैर्बहुभिर्वृक्षैः संतेरुर्यमुनां नदीम् ॥ २२ ॥
[4]तेषु ते प्लवमुत्सृज्य प्रस्थाय यमुनावनात् । श्यामं न्यग्रोधमासेदुः शीतलं हरितच्छदम् ॥ २३ ॥
न्यग्रोधं समुपागम्य वैदेही चाभ्यवन्दत । नमस्तेऽस्तु महावृक्ष पारयेन्मे पतिर्व्रतम् ॥ २४ ॥

महाप्लवमुडुपम् उशीरैर्नलदैः वेतसैरित्यर्थं इति कतकोक्तमयुक्तम् ॥ १४ ॥ १५ ॥

रा० टी०—ताविति । काष्ठानां संघाटः समूहो यस्मिन्शुष्कैर्वंशैः समाकीर्णं संयुक्तमुशीरैः शोभनगन्धवत्तृणविशेषैः समावृतं सुमहाप्लवं चक्रतुः ॥ १४ ॥

रा० टी०—तत इति । ततः प्लवनिर्माणानन्तरं वैतसशाखाः जम्बुशाखाश्च छित्वा सीतायाः सुखमासनं चकार ॥ १५ ॥

गो० टी०—तौ काष्ठसंघाटमिति । काष्ठसंघाटः काष्ठनिचयः उशीरैः वीरणतृणमूलैः 'मूलेऽस्योशीरमस्त्रियाम्' इत्यमरः ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—अचिन्त्यामचिन्त्यप्रभावाम् । स रामः १६

रा० टी०—तत्रेति । तत्र तस्मिन्समये अचिन्त्यां श्रियं शोभामिव ईषल्लज्जमानां तां प्रियां स दाशरथिः प्लवमध्यारोपयत ॥ १६ ॥

गो० टी०—तत्रेति । अचिन्त्याम् अचिन्त्यसौन्दर्यां कान्तकरग्रहादावश्यकत्वाच्चेषल्लज्जावतीम् ॥ १६ ॥

१७ ] ति० टी०—कठिनं खनित्रम् काजं पेटकम् द्वन्द्व एकवद्भावः । कठिनकं खनित्रम् आजमजचर्मपिनद्धं पेटकमित्यर्थमन्वे ॥ १७ ॥

रा० टी०—पार्श्वे इति । तत्र प्लवे वैदेह्याः पार्श्वे वसनादीनि कठिनकाजं च काठनकं खनित्रमाजमजचर्मपिनद्धं पिटकमित्यर्थः चक्रे स्थापयामासेत्यर्थः ॥ १७ ॥

गो० टी०—पार्श्वे इति । तत्रैव वैदेह्याः पार्श्वे कठिनकाजं कठिनकं कन्दमूलखननसाधनमायसाग्रं दारु आजम् अजचर्मपिनद्धं पिटकं द्वन्द्वैकवद्भावः । चक्रे स्थापितवानित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—संघाटं प्लवम् ॥ १८ ॥

रा० टी०—आरोप्येति । यत्तौ कृतप्रयत्नौ प्रीतौ तौ रामलक्ष्मणौ प्रथमं संघाटं प्लवं परिगृह्य सीतामारोप्य प्रतेरतुः पुप्लुवाते ॥ १८ ॥

गो० टी०—आरोप्येति । संघाटं प्लवं यत्तौ प्लवचालने यतमानौ ॥ १८ ॥

१९ ] ति० टी०—पतिर्व्रतं चतुर्दशवर्षावधिकं पारयेत्समापयेत् ॥ १९ ॥

रा० टी०—कालिन्दीति । कालिन्दीमध्यमायाता सीता एनां कालिन्दीमवन्दत वन्दनपूर्वकं प्रार्थयत् । अर्धं पृथक् ॥ १९ ॥

रा० टी०—प्रार्थनास्वरूपमाह—स्वस्तीति । हे देवि ! याऽहं त्वां तरामि तस्याः मे पतिः स्वस्ति यथा स्यात्तथा व्रतं प्रतिज्ञां पारयेत् समापयेत् । अर्धं पृथक्—यक्ष्ये इति । रामे स्वस्ति यथा स्यात्तथा प्रत्यागते सति गोसहस्रेण सहस्रसंख्याकगवीभिः सुराघटशतेन शतसंख्याकदेवदुर्लभपदार्थेन च त्वां यक्ष्ये ॥ २० ॥

गो० टी०—कालिन्दीमध्यमित्यादि । मे पतिः व्रतं वनवाससंकल्पं पारयेत् समापयेत् गोसहस्रेण त्वामुद्दिश्य गोसहस्रप्रदानेन सुराघटशतेन च नैवेद्येन स्वस्ति यथा भवति तथा प्रत्यागते सति गोसहस्रप्रदानेन सुराघटशतेन च त्वां यक्ष्य इत्यादि याचमाना तीरं प्राप्तेत्यन्वयः ॥ १९–२१ ॥

२०–२१ ] ति० टी०—स्वस्ति प्रत्यागते यक्ष्य इति संबन्धः ॥ २० ॥ २१ ॥

रा० टी०—कालिन्दीमिति । वरवर्णिनी उत्तमवर्णविशिष्टा विलक्षणगौराङ्गीत्यर्थः कालिन्दीं याचमाना सीता दक्षिणं तीरमभिसंप्राप्ता ॥ २१ ॥

२२ ] ति० टी०—उक्तमेवोपसंहरति—तत इति । तीरजैर्वृक्षैरुपलक्षिताम् ॥ २२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—तत इति । तीरजैर्वृक्षैरुपलक्षितामंशुमतीं यमुनां प्लवेन संतेरुः ॥ २२ ॥

गो० टी०—तत इति । वृक्षैरिति उपलक्षणे तृतीया ॥ २२ ॥

२३–२४ ] ति० टी०—यमुनातीरसंबन्धिवनात् ॥ २३ ॥ २४ ॥

रा० टी०—ते इति । तीर्णाः ते रामादयः प्लवमुत्सृज्य त्यक्त्वा यमुनावनात् प्रस्थाय श्यामं न्यग्रोधमासेदुः ॥ २३ ॥

रा० टी०—न्यग्रोधमिति । समुपागम्य संप्राप्य वैदेही न्यग्रोधमभ्यवन्दत वन्दनपूर्वकप्रार्थनामकरोत् । अर्धं पृथक् २४

१ संलज्जमानामिति गो. पाठः । २ सहायुधैरिति गो. पाठः । ३ वीराविति गो. पाठः । ४ ते तीर्णा इति गो. रा. पाठः । ५ तामिति गो. पाठः । ६ वाक्यमब्रवीदिति गो. पाठः ।

कौसल्यां चैव पश्येम सुमित्रां च यशस्विनीम् । इति सीताञ्जलिं कृत्वा पर्यगच्छन्मनस्विनी ॥ २५ ॥
अवलोक्य ततः सीतामायाचन्तीमनिन्दिताम् । दयितां च विधेयां च रामो लक्ष्मणमब्रवीत् ॥ २६ ॥
सीतामादाय गच्छ त्वमग्रतो भरतानुज । पृष्ठतोऽनुगमिष्यामि सायुधो द्विपदां वर ॥ २७ ॥
यद्यत्फलं प्रार्थयते पुष्पं वा जनकात्मजा । तत्तत्प्रयच्छ वैदेह्या यत्रास्या रमते मनः ॥ २८ ॥
[ गच्छतोस्तु तयोर्मध्ये बभूव जनकात्मजा । मातङ्गयोर्मध्यगता शुभा नागवधूरिव ॥ ]
एकैकं पादपं गुल्मं लतां वा पुष्पशालिनीम् । अदृष्टरूपां पश्यन्ती रामं पप्रच्छ साऽबला ॥ २९ ॥
रमणीयान्बहुविधान्पादपान्कुसुमोत्करान् । सीतावचनसंरब्ध आनयामास लक्ष्मणः ॥ ३० ॥
विचित्रवालुकजलां हंससारसनादिताम् । रेमे जनकराजस्य सुता प्रेक्ष्य तदा नदीम् ॥ ३१ ॥
क्रोशमात्रं ततो गत्वा भ्रातरौ रामलक्ष्मणौ । बहून्मेध्यान्मृगान्हत्वा चेरतुर्यमुनावने ॥ ३२ ॥

विहृत्य ते बर्हिणपूगनादिते शुभे वने वारणवानरायुते ।
समं नदीवप्रमुपेत्य सत्वरं निवासमाजग्मुरदीनदर्शनाः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

गो० टी०—ते तीर्णा इति । यमुनावनात् यमुनातीरवनात् ॥ २३ ॥ २४ ॥

२५ ] ति० टी०—पर्यगच्छत्परितोऽगच्छत् प्रदक्षिणं चकारेति यावत् ॥ २५ ॥

रा० टी०—प्रार्थनास्वरूपमाह—नम इति । मे पतिः व्रतं प्रतिज्ञां पारयेत् कौशल्यां सुमित्रां च चकारान्तरेण केकयीं च पश्येम ॥ २५ ॥

गो० टी०—नमस्त इत्यादि। पर्यगच्छत् प्रदक्षिणं चकार २५

रा० टी०—इतीति । सीता पर्यगच्छत्परितोऽगच्छत्प्रदक्षिणमकरोदित्यर्थः । अर्धं पृथक्—अवलोक्येति । आयाचन्तीं प्रार्थयन्तीं पूजां समापयन्तीमित्यर्थः विधेयां स्वानुकूलां दयितामवलोक्य रामो लक्ष्मणमब्रवीत् । अर्धद्वयमेकान्वयि ॥ २६ ॥

२६–२८ ] ति० टी०—विधेयामनुकूलां सीतामायाचन्तीं प्रार्थयन्तीमवलोक्याब्रवीदित्यन्वयः ॥ २६–२८ ॥

गो० टी०—अवलोक्येति । अवलोक्य सीतायाः श्रान्त्यश्रान्ती परीक्ष्येत्यर्थः। आयाचन्तीं मनोरथान् प्रार्थयन्तीम्॥२६॥

रा० टी०—वचनस्वरूपमाह—सीतामिति । अग्रतः अग्रे गच्छ सायुधोऽहं पृष्ठतः अनुगमिष्यामि ॥ २७ ॥

गो० टी०—सीतामादायेति । भरताग्रजेति बहुव्रीहिः। अग्रतो गच्छेत्यनेन सीतायाः पुरतो गच्छेत्युक्तम् ॥ २७ ॥

रा० टी०—यद्यदिति । यत्र यस्मिंस्थले अस्याः मनो रमते तत्र यद्यत्प्रार्थयते तत्तत्प्रयच्छ ॥ २८ ॥

गो० टी०—अग्रतो गमनफलमाह—यद्यत्फलमित्यादिश्लोकेन ॥ २८ ॥ २९ ॥

२९] ति० टी०—साबला सीता पप्रच्छ कोऽयं वृक्ष इत्यादि २९

रा० टी०—रामोक्तिं संवर्ण्य सीतावृत्तमाह—एकैकमिति। अदृष्टरूपपादपादीन्पश्यन्ती सीता एकैकं पप्रच्छ प्रश्नपूर्वकोत्तरजनितनिश्चयं चकार अदृष्टरूपामित्यस्य लिङ्गादिविपरिणामेनान्येष्वप्यन्वयः पादपानित्यस्य पादपावयवानित्यर्थः अतो न पौनरुक्त्यम् । सार्धश्लोक एकान्वयी ॥ २९ ॥ ३० ॥

गो० टी०—एकैकमिति । पप्रच्छ केषां संज्ञेति पृष्टवतीत्यर्थः ॥ ३० ॥

३० ] ति० टी०—रमणीयान्रम्यान् कुसुमोत्करान्पादपान्कुसुमस्तोमविशिष्टवृक्षावयवान् सीतावचनेन संरब्धस्त्वरावानानयामासेत्यन्वयः । आनयामासेत्यानिन्य इत्यर्थं आर्षम्॥३०॥

रा० टी०—सीतेति । सीतावचनसंरब्धः सीताज्ञापनहेतुत्वरावाँल्लक्ष्मणः विचित्रा वालुका यस्मिंस्तज्जलं यस्याः तां हंसादिभिर्नादितां यमुनामानयामास ॥ ३१ ॥

गो० टी०—रमणीयामिति । पादपानित्यनेन स्तबकविशिष्टाः पादपावयवा उच्यन्ते सीतावचनसंरब्धः सीतावचनेन त्वरितः ॥ ३१ ॥

३१ ] ति० टी०—विचित्रेत्यादि नदीविशेषणम् । नदीं यमुनाम् ॥ ३१ ॥

रा० टी०—रेमे इति । नदीं यमुनां जनकराजस्य सुता प्रेक्ष्य रेमे एतेन यमुनादक्षिणतटेनैव स मार्ग इति व्यक्तम् । ततोऽनन्तरं क्रोशमात्रं गत्वा मेध्यान्मार्गे संप्राप्तान्मृगान्हत्वा संताड्य यमुनावने चेरतुः । सार्धश्लोक एकान्वयी ॥ ३२ ॥

गो० टी०—विचित्रवालुकजलामिति । नदीं यमुनां सुदूरं तत्तीरे गमनात्तद्दर्शनम् ॥ ३२ ॥

३२ ] ति० टी०—चेरतुर्भुक्तवन्तौ ॥ ३२ ॥

गो० टी०—क्रोशमात्रमिति । मेध्यान् शुचीन् भक्ष्यानिति यावत् चेरतुः भक्षितवन्तौ 'चर गतिभक्षणयोः' ॥ ३३ ॥

३३ ] ति० टी०—वप्रं तीरम् ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

---

१ पश्येयमिति गो. पाठः । २ वनस्पतिमिति गो. पाठः । ३ अग्रजेति गो. पाठः । ४ ऽहमिति गो. पाठः । ५ प्रदद्या इति गो. पाठः । ६ अधिकोऽयं श्लोको गो. पाठे । ७ पूर्वामिति गो. पाठः । ८ उत्क्रम्यानिति गो. पाठः । ९ संमतमिति गो. पाठः ।

# षट्पञ्चाशः सर्गः ।

प्रातरग्रे प्रस्थितास्ते वनरामणीयकेन मोदमानाश्चित्रकूटं प्राप्य वाल्मीक्याश्रमं प्राविशन् । वाल्मीक्यनुज्ञया तद्वासमना रामो लक्ष्मणेन पर्णशालां निर्मापयामास । कृतदेवयजनास्ते सुमुहूर्ते तां विविशुः ।

अथ रात्र्यां व्यतीतायामवसुप्तमनन्तरम् । प्रबोधयामास शनैर्लक्ष्मणं रघुपुंगवः ॥ १ ॥
सौमित्रे शृणु वन्यानां वल्गु व्याहरतां स्वनम् । संप्रतिष्ठामहे कालः प्रस्थानस्य परंतप ॥ २ ॥
[2]प्रसुप्तस्तु ततो भ्राता समये प्रतिबोधितः । जहौ निद्रां च [3]तन्द्रां च प्रसक्तं च [4]परिश्रमम् ॥ ३ ॥
तत उत्थाय ते सर्वे स्पृष्ट्वा नद्याः शिवं जलम् । पन्थानम्[5]ृषिभिर्जुष्टं चित्रकूटस्य तं ययुः ॥ ४ ॥
ततः संप्रस्थितः काले रामः सौमित्रिणा सह । सीतां कमलपत्राक्षीमिदं वचनमब्रवीत् ॥ ५ ॥
आदीप्तानिव वैदेहि सर्वतः पुष्पितान्नगान् । स्वैः पुष्पैः किंशुकान्पश्य मालिनः शिशिरात्यये ॥ ६ ॥
पश्य भल्लातकान्बिल्वान्नरैरनुपसेवितान् । फलपु[7]ष्पैरवनतान्नूनं [8]शक्ष्याम जीवितुम् ॥ ७ ॥

---

रा० टी०—विहृत्येति । बर्हिणपूगैः मयूरसमूहैः नादिते वारणवानराभ्यामापुते व्याप्ते वने विहृत्य समं वैषम्यरहितं नदीवप्रं यमुनादक्षिणतीरमुपेत्य प्राप्य निवासं निवासयोग्यं स्थलमाजग्मुः ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

गो० टी०—विहृत्येति । पूगः समूहः समम् अनिम्नोन्नतं नदीवप्रं नदीतीरं संमतं निवासं सीताभिमतं वासस्थानम् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

१ ] ति० टी०—अथावसुप्तं स्वप्रबोधानन्तरमपीषत्सुप्तम् एतेन चतुर्दशवर्षपर्यन्तं लक्ष्मणः स्वापहीनोऽनाहारश्चेति लोकप्रवादोऽपास्तः ॥ १ ॥

रा० टी०—शयनानन्तरकालिकं रामवृत्तमाह—अथेति । रात्र्यां व्यतीतायां सत्यामनन्तरं दूररहितं यथा स्यात्तथा अवसुप्तं लक्ष्मणं रघुपुङ्गवो रामः प्रबोधयामास ॥ १ ॥

गो० टी०—अथेति । अनन्तरं स्वप्रबोधानन्तरम् अवसुप्तम् ईषत्सुप्तमित्यर्थः ॥ १ ॥

२ ] ति० टी०—वन्यानां शुकपिकादीनां स्वनं शृणु प्रस्थानस्य कालो जातोऽतः संप्रतिष्ठामहे गच्छामः । 'संप्रतीक्षामहे कालम्' इति पाठे प्रस्थानकालं जानीम इत्यर्थः ॥ २ ॥

रा० टी०—प्रबोधनप्रकारमाह—सौमित्रे इति । वल्गु व्याहरतां शोभनशब्दं कुर्वतां वन्यानां स्वनं शृणु । तच्छ्रवणप्रयोजनमाह—प्रस्थानस्य कालः समागत इति शेषः । हे परन्तप अतः संप्रतिष्ठाम व्रजेम ॥ २ ॥

गो० टी०—सौमित्र इति । वन्यानां शुकपिकशारिकादीनां वल्गु सुन्दरं कालः प्राप्त इति शेषः ॥ २ ॥

३ ] ति० टी०—समये प्रबोधसमये । तन्द्रामालस्यम् ॥ ३ ॥

रा० टी०—प्रसुप्त इति । प्रसुप्तो लक्ष्मणः समये प्रातःकाले भ्रात्रा प्रबोधितः सन्निद्रादिप्रसक्तमध्वप्राप्तं परिश्रमं च जहौ ॥ ३ ॥

गो० टी०—स सुप्त इति । समये प्रबोधनसमये तन्द्रीं जाड्यं जहौ तदा प्रभृतीति शेषः । पथिश्रमं तत्कृतोपचारमित्यर्थः ॥ ३ ॥

४–५ ] ति० टी०—नद्याः कालिन्द्या जलं स्पृष्ट्वा स्नानाद्यन्तं नित्यकृत्यं कृत्वा ॥ ४ ॥ ५ ॥

रा० टी०—तत इति । सर्वे रामादयः नद्या यमुनाया जलं स्पृष्ट्वा ऋषिभिर्जुष्टं सेवितं तं भारद्वाजनिर्दिष्टं चित्रकूटस्य पन्थानं ययुः ॥ ४ ॥

रा० टी०—तत इति । संप्रस्थितो रामः कमलपत्राक्षीं सीतामिदमब्रवीत् ॥ ५ ॥

गो० टी०—तत उत्थायेति । नद्याः कालिन्द्याः स्पृष्ट्वेत्युपलक्षणं प्रातःकालिकस्नानादिकृत्यानां तं पन्थानं पलाशवनरूपम् ॥ ४ ॥ ५ ॥

६ ] ति० टी०—आदीप्तानिव ज्वलितानिव मालिनः स्वैः पुष्पैर्मालावत इव स्थितान् शिशिरात्यये वसन्ते ॥ ६ ॥

रा० टी०—आदीप्तानिति । हे वैदेहि ! शिशिरात्यये माघफाल्गुनापगमे वसन्ते इत्यर्थः स्वैः स्वकीयैः स्वकीयैः पुष्पैः मालिनः मालाधारिण इव पुष्पितान्किंशुकान्पलाशाभिधाननगान्वृक्षान्सर्वतश्चतुर्दिक्षु आदीप्तान् प्रचलितानिव पश्य । इव उभयान्वयी ॥ ६ ॥

गो० टी०—आदीप्तानिति । आदीप्तानिव आसमन्ताज्ज्वलत इव नगान् वृक्षान् स्वैः पुष्पैः मालिनः मालावत इव स्थितान् शिशिरात्यये वसन्तसमये ॥ ६ ॥

७ ] ति० टी०—शक्ष्याम जीवितुम् जीवनसाधनफलादिसंपत्तेः ॥ ७ ॥

---

१ नन्दन इति गो. पाठः । २ स सुप्तः समये भ्रात्रा लक्ष्मण इति गो. पाठः । ३ तन्द्रीमिति गो. पाठः । ४ पथीति गो. पाठः । ५ ऋषिणा विष्टमिति गो. पाठः । ६ फुल्लानिति गो. पाठः । ७ पत्रैरिति गो. पाठः । ८ शक्ष्यामीति गो. पाठः ।

पश्य द्रोणप्रमाणानि लम्बमानानि लक्ष्मण । मधूनि मधुकारीभिः संभृतानि नगे नगे ॥ ८ ॥
एष क्रोशति नत्यूहस्तं शिखी प्रतिकूजति । रमणीये वनोद्देशे पुष्पसंस्तरसंकटे ॥ ९ ॥
मातङ्गयूथानुसृतं पक्षिसंघानुनादितम् । चित्रकूटमिमं पश्य प्रवृद्धशिखरं गिरिम् ॥ १० ॥
समभूमितले रम्ये द्रुमैर्बहुभिरावृते । पुण्ये रंस्यामहे तात चित्रकूटस्य कानने ॥ ११ ॥
ततस्तौ पादचारेण गच्छन्तौ सह सीतया । रम्यमासेदतुः शैलं चित्रकूटं मनोरमम् ॥ १२ ॥
तं तु पर्वतमासाद्य नानापक्षिगणायुतम् । बहुमूलफलं रम्यं संपन्नसरसोदकम्[1] ॥ १३ ॥
मनोज्ञोऽयं गिरिः सौम्य नानाद्रुमलतायुतः । बहुमूलफलो रम्यः स्वाजीवः प्रतिभाति मे ॥ १४ ॥
मुनयश्च महात्मानो वसन्त्यस्मिञ्शिलोच्चये । अयं वासो भवेत्तात वयमत्र वसेमहि[2] ॥ १५ ॥
इति सीता च रामश्च लक्ष्मणश्च कृताञ्जलिः । अभिगम्याश्रमं सर्वे वाल्मीकिमभिवादयन् ॥ १६ ॥
तान्महर्षिः प्रमुदितः पूजयामास धर्मवित् । आस्यतामिति चोवाच स्वागतं [3]तं निवेद्य च ॥ १७ ॥

रा० टी०—पश्येति । नरैरनुपसेवितानगम्यत्वेन नररहितान्फलपुष्पैरवनतान्भल्लातकान्वीराभिधवृक्षान् बिल्वांश्च पश्य अतिमनोहरा इमे इत्यर्थः अतो जीवितुं गजादिसंघर्षाद्रक्षितुं शक्ष्याम शक्ष्यामः ॥ ७ ॥

गो० टी०—पश्येति । भल्लातकान् वीरवृक्षान् फुल्लान् फुल्लपुष्पान् अनुपसेवितान् दुर्गमत्वादिति भावः । जीवितुं शक्ष्यामि एवमादिजीवनसाधनस्य विद्यमानत्वादिति भावः ॥७॥

८ ] ति० टी०—आढकचतुष्टयं द्रोणस्तत्प्रमाणमधुपूर्णानि मधूनि मधुपटलानि मधुकारीभिर्मधुमक्षिकाभिः नगे वृक्षे ॥८॥

रा० टी०—पश्येति । द्रोणप्रमाणानि आढकचतुष्टय-"परिमितानि मधुकारीभिः मधुमक्षिकाभिः संभृतानि नगे नगे प्रतिवृक्षे लम्बमानानि मधूनि पश्य ॥ ८ ॥

गो० टी०—पश्येति । द्रोणप्रमाणानि द्रोणम् आढकद्वयं तत्प्रमाणानि तत्प्रमाणमधुपूरितानि मधूनि कुर्वन्तीति मधुकार्यः "कर्मण्यण्" ङीप् ताभिः मधुमक्षिकाभिरिति यावत् संभृतानि निर्मितानि नगे नगे वृक्षे वृक्षे लम्बमानानि मधूनि मधुपटलानि पश्य ॥ ८ ॥

९-१२ ] ति० टी०—नत्यूहो दात्यूहः । पुष्पसंस्तरसंकटे पुष्पैः कृतेन संस्तरेणाच्छादनेन संकटे निबिडे वनोद्देशे॥९-१२॥

रा० टी०—एष इति । एषः परिदृश्यमानः नत्यूहः दात्यूहः क्रोशति तं क्रोशन्तं नत्यूहं शिखी मयूरः प्रतिकूजति तं पश्येत्यनुकृष्यते । अर्धं पृथक्—रमणीये इति । पुष्पाणां संस्तरः सर्वत्र विद्यमानत्वेन आच्छादनं तस्य संकटे तत्कर्तृकवृष्टिविशिष्टे अत एव रमणीये वनोद्देशे मातङ्गयूथैर्गजसमूहैः अनुसृतं युक्तं पक्षिसंघैः अनुनादितं प्रवृद्धानि शिखराणि यस्य तं चित्रकूटं गिरिं पश्य ॥ ९ ॥ १० ॥

गो० टी०—एष इति । नत्यूहः दात्यूहः वनोद्देशे वनप्रदेशे पुष्पसंस्तरसंकटे पुष्पमयास्तरणेन निबिडे ॥ ९ ॥

गो० टी०—मातङ्गयूथानुसृतमिति । मातङ्गयूथानुसृतं गजकुलैर्व्याप्तं प्रवृद्धशिखरम् उन्नतशिखरम् ॥ १० ॥ १२ ॥

रा० टी०—समेति । समान्येकाकाराणि भूमितलानि यस्मिँस्तस्मिंश्चित्रकूटस्य कानने रंस्यामहे ॥ ११ ॥

रा० टी०—तत इति । ततः तस्मात् स्थलात् पादचारेण गच्छन्तौ रामलक्ष्मणौ रम्यं विहरणयोग्यमत एव मनोरमं चित्रकूटमासेदतुः प्रापतुः ॥ १२ ॥

१३ ] ति० टी०—संपन्नसरसोदकं स्वादूदकसहितम्॥१३॥

१४ ] ति० टी०—सुतरामाजीवो जीवनोपायो यस्मिन्१४

रा० टी०—तमिति । नानापक्षिगणैः आयुतं व्याप्तं संपन्नानि सम्यक् प्राप्तानि सरसानि आस्वादसहितानि उदकानि यस्मिँस्तं पर्वतमासाद्य प्राप्य अयं गिरिः रम्यः रमणयोग्यः अत एव मनोज्ञः मनोहरः अत एव स्वाजीवः शोभनमाजीवः जीविका यस्मिन् सः मे प्रतिभाति निश्चयविषयो भवति इत्युवाचेति शेषः । श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

गो० टी०—तं त्वित्यारभ्य अभिवादयन्नित्यन्तमेकं वाक्यम्। तं त्विति । सरसोदकं स्वादूदकं स्वाजीवः शोभनः आजीवो जीविका यस्मिन् स तथोक्तः शिलोच्चये पर्वते इति इति निश्चित्य आश्रमं वाल्मीकीयम् अभिवादयन् अभ्यवादयन् । तदानीं चित्रकूटे वाल्मीकेर्वासः भरतागमनानन्तरमृषिनिर्गमनकथनात्ततः प्रभृति तमसातीर इति ज्ञेयम् । अतो न बालकाण्डकथाविरोधः ॥ १३–१९ ॥

१५ ] ति० टी०—अयं वासो भवेद्वासयोग्यो भवेत् ॥१५॥

रा० टी०—मुनय इति । अस्मिन् शिलोच्चये मुनयो वसन्ति अत एव अयं दृश्यमान आश्रमः वासः वासयोग्यो भवेद्भवति अत एव वयं वसेमहि ॥ १५ ॥

१६ ] ति० टी०—वाल्मीकिमभिवादयन्नभ्यवादयन् चित्रकूटे स्थित एव वाल्मीकी रामराज्यप्राप्तिसमये तमसातीरं गत इति न विरोध इति प्राञ्चः, प्राचेतसादयं वाल्मीकिरन्य एवेति तत्त्वम् ॥ १६ ॥

रा० टी०—इतीति । इति अनेन प्रकारेणोक्त्वा सर्वे रामादयः आश्रमं प्राप्य वाल्मीकिमभिवादयन्नभ्यवादयन् ॥ १६ ॥

१७ ] ति० टी०—तं रामं प्रति स्वागतं स्वागतप्रश्नं निवेद्य विज्ञाप्य ॥ १७ ॥

१ संपन्नमिति गो. पाठः । २ तात्रदत्र सौम्य रमेमहीति गो. पाठः । ३ त्विति गो. पाठः ।

ततोऽब्रवीन्महाबाहुर्लक्ष्मणं लक्ष्मणाग्रजः । संनिवेद्य यथान्यायमात्मानमृषये प्रभुः ॥ १८ ॥
लक्ष्मणानय दारूणि दृढानि च वराणि च । कुरुष्वावसथं सौम्य वासे मेऽभिरतं मनः ॥ १९ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिर्विविधान्द्रुमान् । आजहार ततश्चक्रे पर्णशालामरिंदमः ॥ २० ॥
तां निष्ठितां बद्धकटां दृष्ट्वा रामः सुदर्शनाम् । शुश्रूषमाणमेकाग्रमिदं वचनमब्रवीत् ॥ २१ ॥
ऐणेयं मांसमाहृत्य शालां यक्ष्यामहे वयम् । कर्तव्यं वास्तुशमनं सौमित्रे चिरजीविभिः ॥ २२ ॥
मृगं हत्वानय क्षिप्रं लक्ष्मणेह शुभेक्षण । कर्तव्यः शास्त्रदृष्टो हि विधिर्धर्ममनुस्मर ॥ २३ ॥
भ्रातुर्वचनमाज्ञाय लक्ष्मणः परवीरहा । चकार च[1] यथोक्तं[2] हि तं रामः पुनरब्रवीत् ॥ २४ ॥
ऐणेयं श्रपयस्वैतच्छालां यक्ष्यामहे वयम् । त्वर सौम्यमुहूर्तोऽयं ध्रुवश्च दिवसो ह्ययम्[3] ॥ २५ ॥
स लक्ष्मणः कृष्णमृगं हत्वा मेध्यं प्रतापवान् । अथ चिक्षेप सौमित्रिः समिद्धे जातवेदसि ॥ २६ ॥

रा० टी०—तानिति । तानभिवादनकर्तॄन् धर्मविन्महर्षिः स्वागतं निवेद्य उक्त्वा आस्यतामित्युवाच पूजयामास च अर्घ्यादिभिरिति शेषः ॥ १७ ॥

१८–२० ] ति० टी०—आत्मानं संनिवेद्यामुकपुत्रोऽमुकहेतोरागतोऽस्मीत्युक्त्वा ॥ १८–२० ॥

रा० टी०—तत इति । ततः वाल्मीकिकर्तृकपूजनप्राप्त्यनन्तरमात्मानं समूलवनगमनप्रयत्नमृषये यथान्यायं संनिवेद्य कथयित्वा लक्ष्मणमब्रवीत् ॥ १८ ॥

गो० टी०—तत इत्यादि श्लोकद्वयमेकं वाक्यम् । यथान्यायं यथाक्रमम् आत्मानमृषये संनिवेद्य अमुकस्य पुत्रोऽहम् अयमस्मद्भ्राता इयमस्मद्भार्या एतादृशकार्यार्थमागता वयमित्येवमुक्त्वा वराणि जम्बूप्रभृतीनि गृहनिर्माणार्हाणि तिन्त्रिणीमधूकादेस्त्याज्यत्वात् आनय आवसथं कुरुष्वेति लक्ष्मणमब्रवीदिति संबन्धः ॥ २० ॥

रा० टी०—तद्वचनस्वरूपमाह—लक्ष्मणेति । वराणि निषिद्धच्छायकविभीतकादिभिन्नत्वेनोत्कृष्टानि काष्ठानि आनय । तत्प्रयोजनमाह—आवसथं वासशालां कुरुष्व वासे अत्र निवसने मे मनोऽभिरतम् ॥ १९ ॥

रा० टी०—तस्येति । द्रुमान् द्रुमावयवानाजहार आनिन्ये ततः पर्णशालां चक्रे ॥ २० ॥

२१ ] ति० टी०—निष्ठितामन्तर्बहिः काष्ठभित्त्या सुप्रतिष्ठापितां बद्धकटां बद्धकवाटां छान्दसो वर्णलोपः, यद्वा बद्धच्छदिपम् बद्धः कटो वर्षावारको यस्यामित्यर्थात् एकाग्रं लक्ष्मणम् ॥ २१ ॥

रा० टी०—तामिति । निष्ठितां दृढकाष्ठादिरचितात्वेन वातवर्षादिना पराभवितुमशक्यां बद्धकटां बद्धः संरचितः कटः वर्षाच्छादको यस्याः तामत एव सुदर्शनां तां पर्णशालां दृष्ट्वा एकाग्रं सावधानचित्तं लक्ष्मणमब्रवीत् ॥ २१ ॥

गो० टी०—तामिति । निष्ठितां निश्चलां वातादिना चालयितुमशक्यां भित्तिसहितां परिनिष्पन्नां बद्धकटां कुड्यार्थे कल्पितास्तरणां बद्धवाह्यावरणां वा ' कटे वर्षावरणयोः ' इति धातुः सुदर्शनां शोभनदर्शनां शुश्रूषमाणं परिचर्यां कुर्वन्तम् एकाग्रम् इतः परं किंवा आज्ञापयिष्यतीति सावधानम् ॥२१॥

२२ ] ति० टी०—शालां पर्णशालाधिष्ठातृदेवताम् वास्तुशमनं वास्तुशान्तिः चिरजीविभिश्चिरजीवित्वेच्छावद्भिः ॥ २२ ॥

रा० टी०—वचनस्वरूपमाह—ऐणेयमिति । ऐणेयमेणीसुतं मृगमित्यर्थः मां समाहृत्य प्रापय्य वर्तस्वेति शेषः । तत्प्रयोजनमाह—वयं शालां शालाभिमानिदेवतां यक्ष्यामहे एतेन पर्णशालादेवतापूजने मृगः स्थापनीय इति सूचितं प्रसिद्धं च कर्मविशेषे मेषादीनां मृगमिति शास्त्रदृष्टो विधिः कर्तव्यः इमं धर्मं कुलपरंपराप्राप्तरीतिमनुस्मर अतः मृगं क्षिप्रमेव इहैव आनय । हतुशब्दौ एवार्थौ ॥ २२ ॥ २३ ॥

गो० टी०—ऐणेयमिति । ऐणेयम् एणसंबन्धि एणाढ्क् आर्षः शालां शालाधिष्ठात्रीस्तत्तद्दिग्वासिनीर्देवताः तास्तु शय्यादेशे कामलिङ्गेन देहल्यामन्तरिक्षलिङ्गेनेत्यादिनगरखण्डप्रतिपाद्याः तादृशयागार्थं पूर्वं वास्तुशमनं वास्तुशान्तिः गृहप्रवेशार्हं कर्म कर्तव्यं गृहदेशे वर्तमानभूतपिशाचादीनां शमनं कर्तव्यमित्यर्थः । कर्तव्यं चिरजीविभिरित्यनेन अकरणे आयुःक्षयो दर्शितः । तदुक्तं ब्रह्माण्डपुराणे—' न च व्याधिभयं तस्य न च बन्धुजनक्षयः । जीवेद्वर्षशतं स्वर्गकल्पमेवं वसेन्नरः ' इति । कथं कर्तव्यमित्यपेक्षायामाह—कर्तव्य इति । शास्त्रदृष्टः शास्त्रेषु निर्णीतः विधिः प्रकारः कर्तव्यः धर्मं तदनुकूलधर्मशास्त्रम् अनुस्मर अवधेहीत्यर्थः ॥ २२–२४ ॥

२३–२४ ] ति० टी०—पशुवधदोषशङ्कां वारयति—कर्तव्य इति । यज्ञार्थपशुहिंसा न दोष इति भावः । शास्त्रदृष्टः शास्त्रबोधितो धर्मशास्त्रबोधितकर्तव्यत्वरूपः ॥ २३ ॥ २४ ॥

रा० टी०—भ्रातुरिति । आज्ञाय सम्यक् ज्ञात्वा यथोक्तमुपक्रमनतिक्रम्य लक्ष्मणः चकार मृगमानिनायेत्यर्थः तं लक्ष्मणं स रामः पुनरब्रवीत् ॥ २४ ॥

२५–२६ ] ति० टी०—ऐणेयं मृगमांसम् एतच्छालामेनां शालां तदधिष्ठातृत्रिलिपर्जन्यादिपञ्चाशद्देवताः । अयं सौम्यो मुहूर्तः दिवसश्चायं ध्रुवसंज्ञकः ॥ २५ ॥ २६ ॥

१ स यथोक्तं चेति गो० पाठः । २ स इति रा० पाठः । ३ ऽप्ययमिति गो० पाठः ।

तं[1] तु पक्वं समाज्ञाय निष्टप्तं छिन्नशोणितम् । लक्ष्मणः पुरुषव्याघ्रमथ राघवमब्रवीत् ॥ २७ ॥
अयं सर्वः समस्ताङ्गः[2] शृतः कृष्णमृगो मया[3] । देवता[4] देवसंकाश यजस्व कुशलो ह्यसि ॥ २८ ॥
रामः स्नात्वा तु नियतो गुणवाञ्जप[5]कोविदः । संग्रहेणाकरोत्सर्वान्मन्त्रान्सत्रावसानिकान् ॥ २९ ॥
इष्ट्वा[6] देवगणान्सर्वान्विवेशावसथं शुचिः । बभूव च मनोह्लादो रामस्यामिततेजसः ॥ ३० ॥
वैश्वदेवबलिं कृत्वा रौद्रं वैष्णवमेव च । वास्तुसंशमनीयानि मङ्गलानि प्रवर्तयन् ॥ ३१ ॥
जपं च न्यायतः कृत्वा स्नात्वा नद्यां यथाविधि । पापसंशमनं रामश्चकार बलिमुत्तमम् ॥ ३२ ॥

रा० टी०—वचनस्वरूपमाह—ऐणेयमिति । ऐणेयं ऐणेयभक्ष्यं फलं श्रपयस्व त्वर अत्र विलम्बं न कुर्वित्यर्थः । तत्र हेतुः अयं मुहूर्तो ध्रुवः ध्रुवसंज्ञकः निश्चयेन कार्यसाधक इत्यर्थः । ननु पुनरयमागमिष्यति किं त्वरयेत्यत आह—अयं विधिः दिवसः दिनसंबन्धी रात्रौ न कर्तव्य इत्यर्थः । अतः वयं शालां यक्ष्यामहे यजामः लृङुपात्तभविष्यत्त्वस्याविवक्षा श्रपयस्वेत्यनेन अपक्वफलं मृगाय न समर्पणीयमिति व्यञ्जितम् । अत्रैणेयशब्दात्तस्येदमित्यण् वृद्धाच्छ इत्यस्याप्रवृत्तिस्तु संज्ञापूर्वकविधेरनित्यत्वात् ॥ २६ ॥

गो० टी०—ऐणेयं श्रपयस्वेति । श्रपयस्व पच अयं मुहूर्तः ध्रुवः स्थिरः अयं शोभनतिथिनक्षत्रयुक्तो दिवसो वासरश्च ध्रुवः स्थिर इत्यर्थः । पाठभेदः अयं सौम्यमुहूर्तः शुभमुहूर्तः अयं दिवसश्च ध्रुवः यजमानस्थैर्यकारी ॥ २६ ॥

रा० टी०—स इति । सः रामाज्ञापितः लक्ष्मणः आमेध्यमतिपवित्रमेव कृष्णमृगं कृष्णमृगभक्ष्यपरिपक्वफलं समिद्धे प्रज्वलिते एव जातवेदसि वह्नौ चिक्षेप कृष्णमृगशब्दः अर्श-आद्यजन्तः तस्येदमित्यणन्तो वा, चरमे वृद्धयभावः संज्ञापूर्वकविधेरनित्यत्वात् । कृष्णो मृगो भक्षकत्वेन यस्येति बहुव्रीहिर्वा । हतुशब्दावेवार्थौ अत एव मृगं हत्वानय क्षिप्रमित्याज्ञापनवचनेन चकार च यथोक्तं स इत्यनेन च न विरोधः ॥२६॥

गो० टी०—स लक्ष्मण इति । समिद्धे सम्यग्दीप्ते जातवेदसि अग्नौ चिक्षेप पपाचेत्यर्थः ॥ २६ ॥

२७ ] ति० टी०—निष्टप्तं नितरां तप्तम् । छिन्नशोणितमुपरतरुधिरस्यन्दम् ॥ २७ ॥

रा० टी०—तमिति । तं मृगभक्ष्यं पक्वं तत्र हेतुः निष्टप्तं चिरकालस्थापितत्वेनातितापविशिष्टमत एव छिन्नशोणितमारुण्यरहितं समाज्ञाय लक्ष्मणः पुरुषव्याघ्रं राघवं राममब्रवीत् ॥ २७ ॥

गो० टी०—तं त्विति । निष्टप्तं सोष्णं छिन्नशोणितं क्षीणशोणितम् ॥ २७ ॥

२८ ] ति० टी०—सर्वः सर्वकर्माहः समस्ताङ्गः शिरःपादादिसर्वाङ्गोपेतः शृतः पक्वः ॥ २८ ॥

रा० टी०—वचनस्वरूपमाह—अयमिति । मया शृतः परिपक्वः समस्ताङ्गः सर्वावयवसंपन्नः सर्वोऽयं कृष्णमृगः कृष्णमृगभक्ष्यः स्थित इति शेषः अतः हे देवसङ्काश देवता यथा यथाविधि यजस्व मृगोदेश्यकभक्ष्यसमर्पणपूर्वकयजनं कुरु त्वं कुशलोऽसि ॥ २८ ॥

गो० टी०—अयमिति । कृष्णः कृष्णमृगः समाप्ताङ्गः परिपूर्णावयवः शृतः पक्वः कृष्णमृगो यथा पूर्णावयवत्वात् पाकतः श्यामत्वाच्च पूर्वावस्थ इव दृश्यत इत्यर्थः । कुशलोऽसि यजने समर्थोऽसि ॥ २८ ॥

२९–३० ] ति० टी०—गुणवान्कर्मापेक्षितप्रायत्यादिगुणवान् सत्रावसानिकान्यागसमाप्तिप्रयोजनान्मन्त्रान्गृहीत्वा संग्रहेण वास्तुशान्त्यादि अकरोत् ॥ २९ ॥ ३० ॥

रा० टी०—राम इति । जपकोविदः जपेषु मन्त्रेषु कोविदोऽभिज्ञः रामस्तु स्नात्वा भक्ष्यसमर्पणपूर्वकस्नानं कृत्वा सत्रावसानिकान् यज्ञसमाप्तिहेतुभूतान्मन्त्रान्संग्रहेण संक्षेपेणाकरोत् यथाक्रियमुदचारयत् ॥ २९ ॥

गो० टी०—राम इति । गुणवान् प्रायत्यादिगुणवान् जप्यकोविदः जप्यमन्त्रेषु समर्थः संग्रहेण संक्षेपेण सत्रावसानिकान् सत्रं वास्तुयागः यैर्मन्त्रैरवसीयते परिसमाप्यते ते सत्रावसानाः सत्रावसाना एव सत्रावसानिकाः विनयादेराकृतिगणत्वात् स्वार्थे ठक् छान्दसो वृद्धयभावः अकरोत् यावता वास्तुशान्तिकर्म समाप्यते तावन्मन्त्रान् जजापेत्यर्थः । मन्त्रजपपूर्वकं कर्माण्यकरोदित्यर्थः ॥ २९ ॥

रा० टी०—इष्ट्वेति । सर्वान् यागसमागतनिखिलान्देवगणान् इष्ट्वा शुचिः राम आवसथं विवेश । अमिततेजसो रामस्य मनोह्लादो बभूव ॥ ३० ॥

गो० टी०—इष्ट्वा देवगणानिति । देवगणान् वास्तुदेवताः ह्लादस्तुष्टिः ॥ ३० ॥

३१ ] ति० टी०—एवं गृहाधिष्ठितदेवतापूजामुक्त्वा पुनः स्नानपूर्वकं वैश्वदेवादिप्रकारमाह—वैश्वदेवेत्यादि । वास्तुसंशमनीयानि वास्तुदोषशमनार्थं मङ्गलानि मङ्गलपाठादीनि ॥ ३१ ॥

३२ ] ति० टी०—पापसंशमनं पापशमनसाधनं बलिं वैश्वदेवबलिमित्युपसंहारेण वादः ॥ ३२ ॥

रा० टी०—यागमेव विशिष्य वर्णयन्नाह—वैश्वेति । वास्तुसंशमनीयानि वास्तुदोषपरिहारकाणि मङ्गलानि प्रवर्तयन्रामः नद्यां यथाविधि स्नात्वा न्यायतो जपं कृत्वा पापसंशमनं

[1] तं त्विति गो. रा. पाठः । [2] कृष्णः समाप्ताङ्ग इति गो. पाठः । [3] यथेति गो. पाठः । [4] देवतामिति गो. पाठः । [5] जप्येति गो. पाठः । [6] इष्ट्वेति रा. पाठः ।

वेदिस्थलविधानानि चैत्यान्यायतनानि च । आश्रमस्यानुरूपाणि स्थापयामास राघवः ॥ ३३ ॥
[वन्यैर्माल्यैः फलैर्मूलैः पक्वैर्मांसैर्यथाविधि । अद्भिर्जपैश्च वेदोक्तैर्दर्भैश्च ससमित्कुशैः ॥
तौ तर्पयित्वा भूतानि राघवौ सह सीतया । तदा विविशतुः शालां सुशुभां शुभलक्षणौ ॥]
तां वृक्षपर्णच्छदनां मनोज्ञां यथाप्रदेशं सुकृतां निवाताम् ।
वासाय सर्वे विविशुः समेताः सभां यथा देवगणाः सुधर्माम् ॥ ३४ ॥
[अनेकनानामृगपक्षिसंकुले विचित्रपुष्पस्तवकैर्द्रुमैर्युते ।
वनोत्तमे व्यालमृगानुनादिते तदा विजह्रुः सुसुखं जितेन्द्रियाः ॥]
सुरम्यमासाद्य तु चित्रकूटं नदीं च तां माल्यवतीं सुतीर्थाम् ।
ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात् ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

वैश्वदेवबलिं रौद्रं रुद्रसंबन्धिनं बलिं च वैष्णवं बलिं च चकार एतेन पुनः स्नानकरणं रौद्रयागकरणादिति भूषणोक्तव्याख्यानं चिन्त्यं पाठक्रमादार्थक्रमो बलीयानित्यस्य सर्वशास्त्रशैलीसिद्धत्वात् । अन्यथा वैश्वदेवबलिवैष्णवबलिजपानन्तरं स्नानकर्तृत्वापत्तिरिति तथैव तेषां वक्तव्यं स्यादिति दिक् । श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

गो० टी०—वैश्वदेवबलिमिति । वैश्वदेवबलिं वैश्वदेवबलिहरणे रौद्रं रुद्रदेवताकं वैष्णवं विष्णुदेवताकं च यागं वास्तुसंशमनीयानि गृहारिष्टशामकानि मङ्गलानि मङ्गलकराणि पुण्याहवाचनशान्तिजपादीनि । स्नात्वेति पुनः स्नानकरणं 'ततः सर्वौषधीस्नानं यजमानस्य कारयेत्' इति स्मरणादित्याहुः। वस्तुतस्तु रौद्रयागकरणात् पुनः स्नानं रौद्रकर्मकरणे अप उपस्पृश्येति विधानादिति ज्ञेयम् । पापसंशमनं पापशब्देन पापप्रधानानि दिवाचरनक्तंचराणि क्रूरभूतान्युच्यन्ते तेषां संशमनं, यद्वा पापसंशमनं पञ्चसूना गृहस्थस्येत्याद्युक्तरीत्या सूनारूपपापशमनं वैश्वदेवबलिमित्यत्र भूतबलिमात्रोक्तिः अत्र तद्व्यतिरिक्तः पित्रादिविषयः, यद्वा पूर्वं वैश्वदेवरूपबलिमित्यर्थः अत्र सर्वभूतबलिः, यद्वा पूर्वोक्तस्य सर्वस्योपसंहारः ॥३१॥ ३२ ॥

३३ ] ति० टी०—वेदिस्थलानां बलिहरणवेदिस्थलानामष्टदिग्वर्तिनां विधानानि चैत्यं गणपत्यायतनम् आयतनानि विष्ण्वादेः अनुरूपाणि सूक्ष्ममार्गेणेति यावत् ॥ ३३ ॥

रा० टी०—वेदीति । वेदिस्थले विधानं येषां तानि आश्रमस्यानुरूपाणि योग्यानि चैत्यानि ज्ञातव्यानि स्मर्तव्यानीत्यर्थः । आयतनानि गणपत्यादिविशिष्टस्थलानि स्थापयामास प्रतिष्ठाविधिं चकारेत्यर्थः ॥ ३३ ॥

गो० टी०—वेदिस्थलविधानानीति । वेदिस्थलविधानानि बलिहरणादिवेदिस्थलसंस्थानानि 'वेदिः परिष्कृता भूमिः' इत्यमरः । चैत्यानि मन्त्रदेवतावासस्थानानि आयतनानि विष्ण्वाद्यावासस्थलानि । पाठभेदः चैत्यानि देवतास्थानानि आयतनानि अभ्यगाराणि अनुरूपाणि आश्रमस्यानुरूपाणि सूक्ष्माणीत्यर्थः । स्थापयामास मन्त्रतस्तत्तद्देवतानां तत्र तत्रावस्थानं कल्पितवानित्यर्थः ॥ ३३–३६ ॥

३४ ] ति० टी०—वृक्षपर्णैः कृतं छदनं छादनं यस्यां ताम् ॥ ३४ ॥

रा० टी०—तामिति । वृक्षपर्णैः तरुविशेषपत्रैः छदनमाच्छादनं यस्यास्तां मनोज्ञां रमणीयां निवातां वातनिवारणयोग्यां यथाप्रदेशमुचितस्थले सुकृतां निर्मितां तां पर्णशालां समेताः सर्वे रामादयः वासाय विविशुः । तत्र दृष्टान्तः सुधर्मां सभां देवगणाः यथा एतेन पर्णशालायाः अतिसमृद्धिमतीत्वं व्यक्तं तेन रामस्य अचिन्त्यशक्तिमत्वं बोधितम् ॥ ३४ ॥

गो० टी०—तामिति । वृक्षपर्णच्छदनां वृक्षपर्णरूपाच्छादनपटलयुक्तां यथाप्रदेशं शास्त्रोक्तप्रदेशमनतिक्रम्य 'आग्नेय्यां पाकशाला' इत्यादिशास्त्रं सुधर्मां देवसभां 'स्यात्सुधर्मा देवसभा' इत्यमरः ॥ ३६ ॥

गो० टी०—अनेकेति । पुष्पस्तवकपदं कर्णावतंसादिपदवन्निर्वाह्यं व्यालाः सर्पाः गजा वा जितेन्द्रिया इत्यनेन विहारो ग्राम्यभिन्नजलक्रीडापुष्पापचयादिरिति सूच्यते ॥ ३७ ॥

३५ ] ति० टी०—मृगपक्षिजुष्टां तां नदीमासाद्य हृष्टः ३९

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

रा० टी०—सुरम्यमिति । सुरम्यं चित्रकूटमासाद्य प्राप्य तत्र सुतीर्थामतिपवित्रत्वविशिष्टां मृगपक्षिभिर्जुष्टां सेवितां माल्यवतीं नदीं च आसाद्य हृष्टः प्राप्तसंतोषः सन्ननन्द अत एव पुरविप्रवासात् पुरविप्रवासजन्यं दुःखं जहौ ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१ श्लोकद्वयमेतदधिकं गो. पाठे । २ श्लोकोऽयमधिको गो. पाठे ।

## सप्तपञ्चाशः सर्गः ।

गुहचारैर्निवेदितरामचित्रकूटगमनः सुमन्त्रो गुहमापृच्छ्यायोध्यां जगाम । तत्रानुद्रवत्पौरेषु निवेदितपूर्वं रामवृत्तं सोऽन्तःपुरं प्राप्य दशरथाग्रे न्यवेदीत् । तच्छ्रुत्वा कौसल्यादशरथयोर्मूर्छितयोः सर्वे दुःखाद्विलेपुः ।

कथयित्वा तु दुःखार्तः सुमन्त्रेण चिरं सह । रामे दक्षिणकूलस्थे जगाम स्वगृहं गुहः ॥ १ ॥
भरद्वाजाभिगमनं प्रयागे च सभाजनम् । आ गिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् ॥ २ ॥
अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् । अयोध्यामेव नगरीं प्रययौ गाढदुर्मनाः ॥ ३ ॥
स वनानि सुगन्धीनि सरितश्च सरांसि च । पश्यन्यतो ययौ शीघ्रं ग्रामाणि नगराणि च ॥ ४ ॥
ततः सायाह्नसमये [4]द्वितीयेऽहनि सारथिः । अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह ॥ ५ ॥
स शून्यामिव निःशब्दां दृष्ट्वा परमदुर्मनाः । सुमन्त्रश्चिन्तयामास शोकवेगसमाहतः ॥ ६ ॥

---

गो० टी०—सुरम्यमिति । तां प्रसिद्धां सुतीर्थां शोभनजलावतरणप्रदेशां हृष्टः पुलकितः पुरविप्रवासात् अनित्तमिति शेषः ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

१ ] ति० टी०—एवं रामव्यापारमुक्त्वा विसृष्टसुमन्त्रव्यापारमाह—कथयित्वेति । रामे दक्षिणतीरस्थे सुमन्त्रेण सह दुःखार्तो गुहश्चिरं रामगुणान्कथयित्वा रामभद्रे दृष्टिपथादतिक्रान्ते तेन सह स्वगृहं जगाम ॥ १ ॥

रा० टी०—रामवृत्तमुक्त्वा गङ्गाकूलस्थितगुहवृत्तमाह—कथयित्वेति । रामे दक्षिणकूलस्थे सति चिरं कथयित्वा रामकथा इति शेषः भरद्वाजाभिगमनं प्रयागे रामभरद्वाजसमागमं सभाजनं भरद्वाजकर्तृकरामसत्कारं च तेषां रामादीनामागिरेः चित्रकूटगिरिपर्यन्तं गमनं च तत्रस्थैः गुहप्रेषितशृङ्गवेरपुरस्थचारैः अभिलक्षितं दृष्टं ज्ञात्वा चेति शेषः सुमन्त्रेण सह गुहः स्वगृहं जगाम एतेन पञ्चदिनपर्यन्तं शृङ्गवेरपुरसमीपे सुमन्त्रगुहाभ्यां स्थितमिति व्यक्तम् । श्लोकद्वयमेकान्वयि॥१॥२॥

गो० टी०—एवं रामस्य चित्रकूटगमनपर्यन्तवृत्तान्तमभिधाय गुहसुमन्त्रादिवृत्तान्तमृषिः प्रस्तौति—कथयित्वेति । गुहो रामे दक्षिणकूलस्थे सति सुदुःखार्तः सन् सुमन्त्रेण सह चिरं कथयित्वा यावद्रामोऽक्षिपथमतिक्रामति तावत्पर्यन्तं तत्रैव स्थित्वा रामगुणान् कथयित्वेत्यर्थः । स्वगृहं जगाम तेन सह स्वगृहं जगामेत्यर्थः ॥ १ ॥

२ ] ति० टी०—भरद्वाजाभिगमनं रामादीनां भरद्वाजऋषिस्य गमनम् । सभाजनं भरद्वाजेनेति शेषः । ‘सहासनम्’ इति पाठान्तरम् तत्रस्थैः शृङ्गवेरपुरस्थैर्गुहप्रेषितचारैः करणभूतैस्तन्मुखेनाभिलक्षितं ज्ञातं कृत्वा गुहादनुज्ञातः सुमन्त्रो ययावित्यन्वयः । गङ्गोत्तरणतृतीयदिवसे भरद्वाजाश्रमात्प्रतिनिवृत्तदूतमुखात्तावत्पर्यन्तं तद्वृत्तं ज्ञात्वा तद्दिन एव शृङ्गवेरपुरात्सुमन्त्रस्य प्रतिनिवृत्तिरिति बोध्यमत एव ‘रामस्य निर्गमदिनाद्दिने षष्ठेऽर्धरात्रके । हा हा लक्ष्मण हा सीते हा रामेति मृतो नृपः॥’ इति पाद्मं संगच्छते । दिनद्वयेन शृङ्गवेरपुरे रामागमनम् तद्द्वितीयदिने गङ्गोत्तरणम्, तदा दिनत्रयं सुमन्त्रस्य तत्र स्थितिः तत्र तृतीयदिवसे मध्याह्ने प्रयागत आगतचारेभ्यो रामवृत्तान्तं लब्ध्वा ततः प्रस्थाय मध्येऽवस्थानम्, ततः षष्ठेऽपराह्णेऽयोध्याप्रवेशः सुमन्त्रस्य, तदर्धरात्रे राज्ञो मरणमिति ॥ २ ॥

गो० टी०—भरद्वाजाभिगमनमिति । तेषां रामादीनां भरद्वाजाभिगमनं भरद्वाजसेवनं प्रयागे भरद्वाजेन सहासनम् आगिरेश्चित्रकूटपर्यन्तं गमनं च तत्रस्थैः शृङ्गवेरपुरस्थैश्चारैरभिलक्षितं निवेदितं सुमन्त्रेण सम्यग्विदितमित्यर्थः । गङ्गोत्तरणदिवसनिशा वनस्पतिमूले द्वितीया भरद्वाजाश्रमे तृतीया यमुनातीरे चतुर्थेऽहनि चित्रकूटगमनं पञ्चमे पुनरागम्य चारैर्निवेदनम् ॥२॥

३ ] ति० टी०—अनुज्ञातः गुहेनेति शेषः ॥ ३ ॥

रा० टी०—सुमन्त्रवृत्तमाह—अनुज्ञात इति । गुहेनानुज्ञातः सुमन्त्रः गाढदुर्मनाः अतिखिन्नः सन्नयोध्यां प्रययौ ॥ ३ ॥

गो० टी०—अनुज्ञात इति । अथ रामवृत्तान्तश्रवणानन्तरम् अनुज्ञातः गुहेनेति शेषः । गाढदुर्मनाः अत्यन्तदुर्मनाः ॥३॥

४ ] ति० टी०—यत्तः सावधानः शीघ्रमतिवेगेन ॥ ४ ॥

रा० टी०—स इति। वनादीनि पश्यन् सः सुमन्त्रः प्रययौ॥४॥

गो० टी०—स वनानीति । ग्रामाणि ग्रामान् ॥ ४ ॥

५ ] ति० टी०—द्वितीयेऽहनि शृङ्गवेरपुरतः प्रतिनिवृत्तिदिवसात् ॥ ५ ॥

रा० टी०—तत इति । ततः शृङ्गवेरपुराद्द्वितीये अहनि सायाह्ने समये निरानन्दां प्रकटानन्दरहितामयोध्यां समनुप्राप्य ददर्श ‘तृतीयेऽहनि’ इति भूषणपाठः ॥ ५ ॥

गो० टी०—तत इति । ततः ग्रामनगरातिक्रमणानन्तरं तृतीयेऽहनि शृङ्गवेरपुरान्निर्गमापेक्षया तृतीयदिवसे, यद्वा अहनि तृतीये सायाह्नसमये अह्नः तृतीयकालभूते सायाह्नकाले अयोध्यां समनुप्राप्य निरानन्दां तां ददर्श ॥ ५—७ ॥

६ ] ति० टी०—शून्यामिव शून्यनगरीमिव ॥ ६ ॥

रा० टी०—स इति । शून्यामिव रामरहितत्वेन प्रतीय-

---

१ स्त्विति गो. पाठः । २ सहासनमिति गो. पाठः । ३ ययाविति गो. पाठः । ४ तृतीये इति गो. पाठः ।

कच्चिन्न सगजा साश्वा सजना सजनाधिपा । रामसंतापदुःखेन दग्धा शोकाग्निना पुरी ॥ ७ ॥
इति चिन्तापरः सूतो वाजिभिः शीघ्रयायिभिः । नगरद्वारमासाद्य त्वरितः प्रविवेश ह ॥ ८ ॥
सुमन्त्रमभिधावन्तः शतशोऽथ सहस्रशः । क्व राम इति पृच्छन्तः सूतमभ्यद्रवन्नराः ॥ ९ ॥
तेषां शशंस गङ्गायामहमापृच्छ्य राघवम् । अनुज्ञातो निवृत्तोऽस्मि धार्मिकेण महात्मना ॥ १० ॥
ते तीर्णा इति विज्ञाय बाष्पपूर्णमुखा नराः । अहो धिगिति निःश्वस्य हा रामेति [1]विचुक्रुशुः ॥ ११ ॥
शुश्राव च वचस्तेषां वृन्दं वृन्दं च तिष्ठताम् । हताः स्म खलु ये नेह पश्याम इति राघवम् ॥ १२ ॥
दानयज्ञविवाहेषु समाजेषु महत्सु च । न द्रक्ष्यामः पुनर्जातु धार्मिकं राममन्तरा ॥ १३ ॥
किं समर्थं जनस्यास्य किं प्रियं किं सुखावहम् । इति रामेण नगरं [5]पित्रेव परिपालितम् ॥ १४ ॥

मानामत एव निःशब्दामयोध्यां दृष्ट्वा शोकवेगसमाहतः शोकवेगव्याप्तः अत एव परमदुर्मनाः स सुमन्त्रश्चिन्तयामास ॥ ६ ॥

७-८ ] ति० टी०—चिन्ताप्रकारमाह—कच्चिदिति । नशब्दो वितर्के ॥ ७ ॥ ८ ॥

रा० टी०—चिन्तास्वरूपमाह—कच्चिदिति । सगजा गजसहिता साश्वा अश्वसहिता सजना जनसहिता सजनाधिपा जनाधिपो राजा तत्सहिता पुरी अयोध्या रामसंतापदुःखेन रामस्य यः संतापः प्रातिभासिकवनगमनजनितखेदस्तेन जातं यद्दुःखं तेन तद्धेतुकेन शोकाग्निना कच्चिन्न दग्धा । कच्चिदिति संभावनायाम् ॥ ७ ॥

रा० टी०—इतीति । इत्यनेन प्रकारेण चिन्तापरः अत एव त्वरितः वेगवान्सूतः शीघ्रयायिभिः त्वरितं गमनशीलैर्वाजिभिः नगरद्वारमासाद्य प्रविवेश ॥ ८ ॥

गो० टी०—इतीति । त्वरितः प्रविवेश नगरं जनसंचारशून्यं निःशब्दं वर्तते राजा कामवस्थां प्राप्त इति ज्ञातुं त्वरितः प्रविष्टवानित्यर्थः ॥ ८ ॥ ९ ॥

९ ] ति० टी०—अभ्यद्रवन्सूतसंमुखमाजग्मुः ॥ ९ ॥

रा० टी०—सुमन्त्रमिति । अभियान्तं प्राप्तिमन्तं सूतं सुमन्त्रं रामः क्व इति पृच्छन्तः शतशः सहस्रशः नराः अभ्यद्रवन् ॥ ९ ॥

१० ] ति० टी०—गङ्गायां शृङ्गवेरपुरे रामेणानुज्ञातस्तमापृच्छ्य निवृत्तोऽस्मि ततः परं वृत्तान्तं न जानामीति शशंस १०

रा० टी०—तेषामिति । गङ्गायां गङ्गातटे राघवमापृच्छ्य किं कुर्यामिति पृष्ट्वा अनुज्ञातः अयोध्यां व्रजेत्याज्ञप्तोऽहं निवृत्तोऽस्मि इति तेषां शशंस ॥ १० ॥

गो० टी०—तेषामिति । गङ्गायां गङ्गातीरे निवृत्तोऽस्मीति तेषां शशंसेति संबन्धः ॥ १० ॥

११ ] ति० टी०—तीर्णा गङ्गामुत्तीर्य गताः ॥ ११ ॥

रा० टी०—त इति । ते रामादयस्तीर्णा गङ्गापारं गता इति विज्ञाय सुमन्त्रकथनादवमत्य अहो धिक् रामविहीनानस्मानिति शेषः इति निःश्वस्य बाष्पपूर्णमुखाः नराः हा रामेति विचुक्रुशुः ॥ ११ ॥

गो० टी०—त इति । ते रामादयः ॥ ११ ॥

१२ ] ति० टी०—वृन्दं वृन्दं संघशस्तिष्ठतां तेषां जनानां य इह रथे रामं न पश्यामस्ते हताः खल्विति वचः शुश्राव ॥ १२ ॥

रा० टी०—शुश्रावेति । ये वयमिह अस्मिन्समये राघवं न पश्यामः ते वयं हताः स्म इति ॥ १२ ॥

गो० टी०—शुश्रावेति । वृन्दं वृन्दं च तिष्ठतां संघशः तिष्ठतां हता इति ये वयम् इह अस्मिन् रथे राघवं न पश्यामः इति अस्माद्धेतोः ते हता स्मेति संबन्धः । दानयज्ञविवाहेष्विति । दानादिषु अन्तरा मध्ये नायकमणिवत् वर्तमानं रामं पुनः जातु कदाचिदपि न द्रक्ष्यामः किमिति काकुः । येन केनापि दाने क्रियमाणे रामः स्वयं तत्र गत्वा तिष्ठति किमर्थं देशे काले पात्रे च दापयितुं यज्ञेऽपि गच्छति किमर्थं न्यायार्जितधनैः कारयितुं तत्तत्कर्म संदेहविच्छेदविस्मृतज्ञापनादिकं कर्तुं च विवाहे च मध्ये गच्छति किमर्थम् उभयवर्गसंघटनायासंमतानामभिमतद्रविणप्रदानाय अस्खलितं कर्मणामनुष्ठापनाय च समाजेषु महत्सु अन्यत्रापि महासदस्सु दीर्घसत्रेष्वपीत्यर्थः । यत्र कुत्राप्यदृष्टकार्येष्विति वा अत्र सर्वत्र हेतुर्धार्मिकमिति । किमिति । अस्य जनस्य किं समर्थं किं क्षेमंकरं वस्तु किं प्रियं किं सुखावहमिति रामेण तत्तदभिमतवस्तुप्रदात्रा रामेण पित्रेव नगरं परिपालितं नगरशब्देन नगरस्थजना लक्ष्यन्ते इति वचः शुश्रावेति पूर्वेण संबन्धः ॥ १२–१४ ॥

१३ ] ति० टी०—दानादिव्यवहारेषु धार्मिकं रामं वयमन्तरा दानादिव्यवहारमध्ये जातु पुनर्न द्रक्ष्याम इति च शुश्राव ॥ १३ ॥

रा० टी०—दानादिविषये महत्सु प्रवृद्धेषु समाजेषु जनसमूहेषु अन्तरा मध्ये जातु कदाचिद्धार्मिकं रामं पुनर्न द्रक्ष्यामः । इति च नेति च संभावनायाम् ॥ १३ ॥

१४ ] ति० टी०—पित्रेव रामेण परिपालितं नगरमस्व

१ पार्थिविरिति गो. पाठः । २ यान्तं त्वमिति गो. यातं स्विति रा. पाठः । ३ जना इति गो. पाठः । ४ चेति गो. पाठः । ५ पितवदिति गो. पाठः ।

वातायनगतानां च स्त्रीणामन्वन्तरापणम्। राममेवाभितप्तानां शुश्राव परिदेवनाम् ॥ १५ ॥
स राजमार्गमध्येन सुमन्त्रः पिहिताननः। यत्र राजा दशरथस्तदेवोपययौ गृहम् ॥ १६ ॥
सोऽवतीर्य रथाच्छीघ्रं राजवेश्म प्रविश्य च। कक्ष्याः सप्ताभिचक्राम महाजनसमाकुलाः ॥ १७ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्याथ समागतम्। हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १८ ॥
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः। अन्योन्यमभिवीक्षन्ते व्यक्तमार्ततराः स्त्रियः ॥ १९ ॥
ततो दशरथस्त्रीणां प्रासादेभ्यस्ततस्ततः। रामशोकाभितप्तानां मन्दं शुश्राव जल्पितम् ॥ २० ॥
सह रामेण निर्यातो विना राममिहागतः। सूतः किं नाम कौसल्यां क्रोशन्तीं प्रतिवक्ष्यति ॥ २१ ॥

जनस्य किं समर्थमुचितं किं प्रियं तत्करं वस्तु किमिहामुत्र सुखावहं वस्त्विति चिन्ताव्याप्तं बभूवेति शेषः ॥ १४ ॥

रा० टी०—किमिति। यत् इति इदं नगरं रामेण पित्रेव परिपालितं मर्यादास्वलावण्यातिशयादिदर्शनेन परिपोषितं तस्यास्य जनस्य समर्थं सम्यगर्थः प्रयोजनसिद्धिर्येन तद्वस्तु किं प्रियं प्रीतिविषयीभूतं च किं सुखावहं सुखप्रापकं च किं रामं विना न किमपीत्यर्थः। इति च द्वन्द्वं द्वन्द्वं तिष्ठतां तेषां जनानां वचः शुश्राव कर्मकर्तरि लिट् अधिगच्छति शास्त्रार्थं इत्यादाविव नात्मनेपदं सुमन्त्र इति कर्तुरध्याहारो वा। श्लोकत्रयमेकान्वयि ॥ १४ ॥

१५–१६ ] ति० टी०—अन्वनन्तरम् । वातायनगतानां स्त्रीणां राममुद्दिश्याभितप्तानां परिदेवनामन्तरापणमापणमध्ये गच्छञ्शुश्राव ॥ १५ ॥ १६ ॥

रा० टी०—वातायनेति। वातायनगतानां रामवार्ताश्रवणाय गवाक्षसंलग्नानां राममुद्दिश्य अभितप्तानां स्त्रीणां परिदेवनम् अन्तरापणं आपणमध्ये अनुशुश्राव धातूपसर्गयोर्व्यवहितप्रयोगस्त्वत एव निर्देशात् ॥ १५ ॥

गो० टी०—वातायनगतानामिति । अन्वन्तरापणं शुश्राव उभयपार्श्वस्थानामापणानां मध्ये मध्ये शुश्रावेत्यर्थः। विभक्त्यर्थेऽव्ययीभावः ॥ १५ ॥

रा० टी०—स इति । पिहिताननः वस्त्रेणाच्छादितमुखः सुमन्त्रः राजमार्गमध्येन यत्र गृहे राजा दशरथः तदेव गृहमुपययौ ॥ १६ ॥

गो० टी०—स राजमार्गमध्येनेति। पिहिताननः जनदर्शनाक्षमतया ॥ १६ ॥

१७ ] ति० टी०—कक्ष्या द्वाराणि ॥ १७ ॥

रा० टी०—स इति। सः राजगृहं प्राप्तः सुमन्त्रः रथादवतीर्य राजवेश्म प्रविश्य महाजनसमाकुलाः सप्त कक्ष्या अभिचक्राम ॥ १७ ॥

गो० टी०—सोऽवतीर्येति। राजनिर्गमाभावेन महाजनसंकुलत्वम् ॥ १७ ॥

१८ ] ति० टी०—हाहाकारः कृतो याभिस्ताः हर्म्यं धनिकगृहम् विमानं सप्तभूमिकं गृहम् प्रासादो राजगृहम् त्रिभूमिकं गृहमित्यन्ये तदुपलक्षितामयोध्यां समागतमवेक्ष्येत्यन्वयः, यद्वा तैः करणैरवेक्ष्य तत्रारोहणपूर्वकमवेक्ष्येत्यन्वयः ॥ १८ ॥

रा० टी०—हर्म्यैरिति । हर्म्यैः धनिनां गृहविशेषैः विमानैः सप्तभूमिगृहैः। ‘विमानोऽस्त्री देवयाने सप्तभूमिगृहेऽपि च’ इति वैजयन्ती। प्रासादैः राजाधिराजगृहविशेषैरुपलक्षिताः रामादर्शनकर्पिताः रामदर्शनाभावेन पीडिताः नार्यः समागतं रामं विना आगतं किंच समागतमगतेन रामकर्तृकगमनाभावेन समं सहितं रथं सुमन्त्रं वा अवेक्ष्य हाहाकारकृताः आसन्निति शेषः ॥ १८ ॥

गो० टी०—हर्म्यैरिति। हर्म्यैर्धनिनां वासैः विमानैः सप्तभूमिगृहैः ‘विमानोऽस्त्री देवयाने सप्तभूमिगृहेऽपि च’ इति वैजयन्ती। प्रासादैः महाराजार्हगृहविशेषैः उपलक्षिताः नार्यः समागतं रामेण विना समागतं सुमन्त्रमवेक्ष्य हाहाकारकृताः कृतहाहाकाराः बभूवुरिति शेषः ॥ १८ ॥

१९ ] ति० टी०—अन्योन्यमव्यक्तं यथा भवति तथा वीक्षन्ते इतिकर्तव्यतामौढ्यादिति शेषः ॥ १९ ॥

रा० टी०—आयतैरिति । आर्ततरा अत्यार्ताः स्त्रियः अश्रुवेगेन व्याप्तैः अत एव विमलैः कज्जलादिरहितैः आयतैः विशालैः नेत्रैः व्यक्तं यथा भवति तथा अन्योन्यमभिवीक्षन्ते। एतेन कर्तव्यविषयकविवेकाभावस्तासां ध्वनितः ॥ १९ ॥

गो० टी०—आयतैरिति । अव्यक्तमस्पष्टमिति क्रियाविशेषणम् ॥ १९ ॥ २० ॥

२० ] ति० टी०—प्रासादेभ्यः सुमन्त्रस्य राजवेश्मप्रवेशं दृष्ट्वा प्रासादेभ्योऽवतीर्णानामित्यर्थः । मन्दं राजसांनिध्यान्मन्दत्वम् ॥ २० ॥

रा० टी०—तत इति । ततस्ततः तेभ्यस्तेभ्यः प्रासादेभ्यः रामशोकाभितप्तानां स्त्रीणां जल्पितं मन्दं शुश्राव एतेन इन्द्रियपाटवराहित्यं सूचितं तेन रामवियोगदुःखस्यातिशयत्वं व्यक्तम् ॥ २० ॥

२१ ] ति० टी०—किं नाम प्रतिवक्ष्यति अतिघोरत्वात् किमपि वक्तुं अशक्यमिति भावः ॥ २१ ॥

रा० टी०—जल्पितस्वरूपमाह—सहेति । रामेण सह

१ शोकाभीति गो. पाठः। २ देवनमिति गो. रा. पाठः। ३ शोचन्तीमिति गो. पाठः।

यथा च मन्ये दुर्जीवमेवं न सुकरं ध्रुवम् । आच्छिद्य पुत्रे निर्याते कौसल्या यत्र जीवति ॥ २२ ॥
सत्यरूपं तु तद्वाक्यं राजस्त्रीणां निशामयन् । प्रदीप्त इव शोकेन विवेश सहसा गृहम् ॥ २३ ॥
स प्रविश्याष्टमीं कक्ष्यां राजानं दीनमातुरम् । पुत्रशोकपरिद्यूनमपश्यत्पाण्डुरे गृहे ॥ २४ ॥
अभिगम्य तमासीनं राजानमभिवाद्य च । सुमन्त्रो रामवचनं यथोक्तं प्रत्यवेदयत् ॥ २५ ॥
स तूष्णीमेव तच्छ्रुत्वा राजा विद्रुतमानसः । मूर्छितो न्यपतद्भूमौ रामशोकाभिपीडितः ॥ २६ ॥
ततोऽन्तःपुरमाविद्धं मूर्च्छिते पृथिवीपतौ । उच्छ्रित्य बाहू चुक्रोश नृपतौ पतिते क्षितौ ॥ २७ ॥
सुमित्रया तु सहिता कौसल्या पतितं पतिम् । उत्थापयामास तदा वचनं चेदमब्रवीत् ॥ २८ ॥
इमं तस्य महाभाग दूतं दुष्करकारिणः । वनवासादनुप्राप्तं कस्मान्न प्रतिभाषसे ॥ २९ ॥
अद्येममनयं कृत्वा व्यपत्रपसि राघव । उत्तिष्ठ सुकृतं तेऽस्तु शोकेन स्यात्सहायता ॥ ३० ॥

---

निर्यातः निर्गतः रामं विना इहागतः सूतः नाम प्रसिद्धं क्रोशन्तीं कौसल्यां किं प्रतिवक्ष्यति ॥ २१ ॥

गो० टी०—सह रामेणेत्यादिश्लोकत्रयमेकं वाक्यम् । यथेति । यत्रेति विभक्तिप्रतिरूपको निपातः प्रथमार्थे वर्तते यथा क इत्यादिवद् यत्र स इत्यत्र यथा येन प्रकारेण अस्मज्जीवितं दुर्जीवं दुःखेन जीवनार्हं मन्ये एवमेव कौसल्यापुत्रे निर्याते सति आच्छिद्य प्रसह्य जीवति यत्र जीवतीति यत् । तत् न सुकरं दुःसंपादं ध्रुवं मन्य इत्येकैकव्यक्त्यपेक्षया एकवचनं विभक्तिप्रतिरूपकमव्ययं वा । सत्यरूपमिति । निशामयन् निशमयन् दीर्घश्छान्दसः शृण्वन्नित्यर्थः ॥ २१–२३ ॥

२२ ] ति० टी०—अथ प्रत्येकं राममातॄणां दुःखप्रलापः—यथा चेति । यथा जीवं जीवनं दुःखजनकं मन्ये, एवं ध्रुवं निश्चयेन सुकरं सुकरनाशं नेति मन्ये । यत्र यतः पुत्रे राम आच्छिद्य न्यायप्राप्तमभिषेकमाच्छिद्य त्यक्त्वा निर्याते सत्यपि कौसल्या जीवति । मन्ये इत्येकैकव्यक्त्यपेक्षयैकवचनम् ॥२२॥

रा० टी०—यथेति । आच्छिद्य राज्यं त्यक्त्वेत्यर्थः । पुत्रे निर्याते यत्र यस्मिन्नुपाये सति कौशल्या जीवति तं ध्रुवं निश्चितं सुकरमुपायं न मन्ये । ननु कौशल्यायाः नित्यत्वान्मरणाभावेन जीवनं सिद्धमेवेत्यत आहुः—एवं चेत् दुर्जीवं यावद्रामागमनं दुःखेन जीवनं यथा यथावन्मन्ये । चशब्दश्चेदर्थे ॥२२॥

२३ ] ति० टी०—सत्यरूपं परमार्थरूपं तत्स्त्रीणां वाक्यं निशामयञ्शोकेन प्रदीप्त इव सन्राजगृहं विवेश । अत्र श्लोकद्वये तीर्थकतकादिव्याख्या नात्यन्तं समञ्जसेत्युपेक्षिता ॥२३॥

रा० टी०—सत्येति । सत्यरूपं तत्त्वार्थनिरूपकं राजस्त्रीणां तद्वाक्यं निशामयञ्छृण्वन्सञ्छोकेन प्रदीप्त इव सुमन्त्रः सहसा शीघ्रं गृहं गृहावयवीभूताष्टमीं कक्ष्यां विवेश ॥ २३ ॥

२४ ] ति० टी०—स इति । परिद्यूनं म्लानम् ॥ २४ ॥

रा० टी०—स इति । स सुमन्त्रः अष्टमीं कक्ष्यां प्रविश्य पुत्रशोकेन परिद्यूनं मलिनमत एव दीनं क्षीणत्वेन प्रतीयमानमातुरं पुत्रदर्शने उत्कण्ठितं राजानं पाण्डुरे श्वेते राजते इत्यर्थः । गृहे अपश्यत् ॥ २४ ॥

गो० टी०—स प्रविश्येति । परिद्यूनं क्षीणं "दिवो विजिगीषायाम्" इति निष्ठानत्वं पाण्डुर इति विशेषणाद्राजलक्ष्मीनास्तीत्युच्यते ॥ २४ ॥ २५ ॥

२५–२६ ] ति० टी०—प्रत्यवेदयत् विस्तरेण प्रतिपादनमग्रे भविष्यति ॥ २५ ॥ २६ ॥

रा० टी०—अभिगम्येति । अभिगम्य संप्राप्य सुमन्त्रः रामवचनं यथोक्तमुक्तमनतिक्रम्य प्रत्यवेदयत् ॥ २५ ॥

रा० टी०—स इति । तद्रामवचनं तूष्णीमेव श्रुत्वा शोकाभिपीडितः अत एव विद्रुतमानसः अनवस्थमनाः अत एव मूर्च्छितो राजा भूमौ न्यपतत् ॥ २६ ॥

गो० टी०—स तूष्णीमिति । तूष्णींभावे हेतुः विभ्रान्तचेतन इति ॥ २६ ॥

२७–२९ ] ति० टी०—आविद्धं दुःखाभिहतम् ॥२७–२९॥

रा० टी०—तत इति । ततः तस्मिन्पृथिवीपतौ क्षित्यधीशे नृपतौ राजनि मूर्च्छिते सति अत एव क्षितौ पतिते सति आविद्धमतिपीडितमन्तःपुरं बाहू उच्छ्रित्य चुक्रोश ॥२७॥

रा० टी०—सुमित्रयेति । तदाऽऽक्रोशनकाले पतितमुत्थापयामास तदा इदं वचनं चाब्रवीत् ॥ २८ ॥

गो० टी०—तत इति । आविद्धं शोकेनाभिहतम् अभूदिति शेषः । मूर्च्छिते आविद्धमासीत् पतिते बाहू उद्धृत्य चुक्रोशेति विशेषः ॥ २७ ॥ २८ ॥

रा० टी०—वचनस्वरूपमाह—इममिति । वनवासादनुप्राप्तं दुष्करकारिणो रामस्य दूतं संदेशहरमिमं सुमन्त्रं कस्माद्धेतोः न प्रतिभाषसे हेतुं वदेत्यर्थः ॥ २९ ॥

गो० टी०—इममिति । दूतं संदेशहरं दुष्करकारिणः दुष्करकार्यकारिणः ॥ २९ ॥

३० ] ति० टी०—अद्येति । इमं दुःखसाधनं पुत्रप्रवासनरूपमनयं कृत्वाद्य किं व्यपत्रपसि लज्जसे यन्न प्रतिभाषसे तस्माच्छोकं विधूयोत्तिष्ठ ते सुकृतं सत्यपरिपालनरूपं

---

१ नरेन्द्रमिति गो. पाठः । २ विभ्रान्तचेतन इति गो. पाठः । ३ उद्धृत्येति गो. पाठः ।

देव यस्या भयाद्रामं नानुपृच्छसि सारथिम् । नेह तिष्ठति कैकेयी [1]विश्रब्धं प्रतिभाष्यताम् ॥ ३१ ॥
सा तथोक्त्वा महाराजं कौसल्या शोकलालसा । धरण्यां निपपाताशु बाष्पविप्लुतभाषिणी ॥ ३२ ॥
[2]विलपन्तीं तथा दृष्ट्वा कौसल्यां पतितां भुवि । पतिं चावेक्ष्य ताः सर्वाः [3]समन्ताद्रुरुदुःस्त्रियः ॥ ३३ ॥
ततस्तमन्तःपुरनादमुत्थितं समीक्ष्य वृद्धास्तरुणाश्च मानवाः ।
स्त्रियश्च सर्वा रुरुदुः समन्ततः पुरं तदासीत्पुनरेव संकुलम् ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

## अष्टपञ्चाशः सर्गः ।

दुःखानर्हान् रामादीननुशोचन्दशरथः सुमन्त्रं तेषां वचनादि कथयितुं प्रेरयत्सुमन्त्रस्तेषां वचांसि कथयति स्म ।

प्रत्याश्वस्तो यदा राजा मोहात्प्रत्यागतस्मृतिः । [4]तदाजुहाव तं सूतं रामवृत्तान्तकारणात् ॥ १ ॥
[5]तदा सूतो महाराजं कृताञ्जलिरुपस्थितः । राममेवानुशोचन्तं दुःखशोकसमन्वितम् ॥ २ ॥
वृद्धं परमसंतप्तं नवग्रहमिव द्विपम् । विनिःश्वसन्तं ध्यायन्तमस्वस्थमिव कुञ्जरम् ॥ ३ ॥

---

पुण्यमस्तु । किंच एवं शोके त्वया क्रियमाणे तव सहायता सहायसमूहः परिजनः सर्वोऽपि न स्यात् त्वच्छोकेन सर्वोऽपि नश्येदित्यर्थः ॥ ३० ॥

रा० टी०—अद्येति । हे राघव ! इमं स्वपुत्रप्रव्राजमनयं नीतिविरुद्धमिव कृत्वा व्यपत्रपसि किं नैतद्युक्तमित्यर्थः अतः उत्तिष्ठ ते सुकृतं सत्यपरिपालनमस्तु सदैव तिष्ठत्वित्यर्थः ते शोके सति सहायता सहायसमूहः मन्त्र्यादिरित्यर्थः न स्याद्विनश्येदित्यर्थः ॥ ३० ॥

गो० टी०—अद्येममिति । इममनयं पुत्रविवासनं सुकृतं शोभनं शोके विषये सहायता न स्यात् शोकानुवर्तनं मा कृथा इत्यर्थः ॥ ३० ॥

३१ ] ति० टी०—कैकेयीभयान्न पृच्छामीति चेत्तत्राह—देवेति । विश्रब्धं निःशङ्कम् ॥ ३१ ॥

रा० टी०—यथा रामानुगमने अस्मदादयः केकय्या निवारिताः तथा तद्वार्ताश्रवणमपि निवार्यतेति केकयीभिया न ब्रूषे चेत्तद्भीरिदानीं नास्तीत्याह—देवेति । यस्या भयात्प्रतिवारणशङ्कया रामं नानुपृच्छसि सा कैकेयी इह न तिष्ठति अतः विस्रब्धं निःशङ्कं प्रतिभाष्यताम् ॥ ३१ ॥

गो० टी०—व्यसनानुशयकृततूष्णींभावे हेत्वन्तरं कल्पयति—देवेति । कैकेयी सेति शेषः । विस्रब्धं सविश्वासं निःशङ्कमिति यावत् ॥ ३१ ॥

३२–३४] ति०टी०—विप्लुतभाषिणी गद्गदभाषिणी ३२-३४

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रा० टी०—सेति । तथा उक्त्वा शोकलालसा शोकव्याप्ता अत एव बाष्पविप्लुतभाषिणी बाष्पा बाष्पविशिष्टा विप्लुतभाषिणी स्खलद्वाग्विशिष्टा सैव सेति कर्मधारयः सा कौशल्या निपपात ॥ ३२ ॥

गो० टी०—सेति । बाष्पेण विप्लुतं विलुप्तं सगद्गदं यथा भवति तथा भाषिणी ॥ ३२ ॥

रा० टी०—विलपन्तीमिति । अवेक्ष्य दृष्ट्वा रुरुदुः ॥ ३३ ॥

गो० टी०—एवमिति । पतितमिति शेषः ॥ ३३ ॥

रा० टी०—तत इति । ततः तस्मिन्समये उत्थितं तमन्तःपुरनादं समीक्ष्य वृद्धादयो मानवाः सर्वाः स्त्रियः पुरवासिन्यश्च समन्ततो रुरुदुः अतः तत्पुरं पुनः संकुलं रोदनव्याप्तमासीत् ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

गो० टी०—तत इति । समीक्ष्य श्रुत्वा पुनरेव संकुलं रामगमनकाल इव व्याकुलमासीत् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तपञ्चाशः सर्गः ॥ ५७ ॥

१–२ ] ति० टी०—प्रत्याश्वस्त इति । प्रत्याश्वस्तः कृतोपचारः मोहान्मोहं परित्यज्य प्रत्यागतस्मृतिः प्रत्यागतसंज्ञः । 'प्रत्यागतः पुनः' इति पाठेऽप्ययमेवार्थः । रामवृत्तान्तकारणादाजुहाव रामवृत्तान्तं प्रष्टुम् ॥ १ ॥ २ ॥

३ ] ति० टी०—नवग्रहं नवो नूतनो ग्रहो ग्रहणं यस्य तं द्विपमिव विनिःश्वसन्तमस्वस्थं स्वीयमध्येन स्थितं कुञ्जरमिव ध्यायन्तम् ॥ ३ ॥

रा० टी०—राजवृत्तमाह—प्रत्याश्वस्त इत्यादिभिः । यदा राजा मोहात् मूर्छातः प्रत्यागता प्राप्ता स्मृतिः स्वपरिकरविषयकस्मरणं यस्य सः अत एव प्रत्याश्वस्तः स्थिरचित्तस्तदा रामवृत्तान्तकारणाद्रामवृत्तश्रवणहेतोः सूतमाजुहाव ॥ १ ॥

[1] विस्रब्धमिति गो. रा. पाठः । [2] एवं विलपतीमिति गो. पाठः । [3] सुस्वरमिति गो. पाठः । [4] पुनरिति गो. पाठः । [5] अथेति गो. पाठः ।

राजा तु रजसा सूतं ध्वस्ताङ्गं समुपस्थितम् । अश्रुपूर्णमुखं दीनमुवाच परमार्तवत् ॥ ४ ॥
क्व नु वत्स्यति धर्मात्मा वृक्षमूलमुपाश्रितः । सोऽत्यन्तसुखितः सूत किमशिष्यति राघवः ॥ ५ ॥
दुःखस्यानुचितो दुःखं सुमन्त्र शयनोचितः । भूमिपालात्मजो भूमौ शेते कथमनाथवत् ॥ ६ ॥
यं यान्तमनुयान्ति स्म पदातिरथकुञ्जराः । स वत्स्यति कथं रामो विजनं वनमाश्रितः ॥ ७ ॥
व्यालैर्मृगैराचरितं कृष्णसर्पनिषेवितम् । कथं कुमारौ वैदेह्या सार्धं वनमुपाश्रितौ ॥ ८ ॥
सुकुमार्या तपस्विन्या सुमन्त्र सह सीतया । राजपुत्रौ कथं पादैरवरुह्य रथाद्गतौ ॥ ९ ॥
सिद्धार्थः खलु सूत त्वं येन दृष्टौ ममात्मजौ । वनान्तं प्रविशन्तौ तावश्विनाविव मन्दरम् ॥ १० ॥
किमुवाच वचो रामः किमुवाच च लक्ष्मणः । सुमन्त्र वनमासाद्य किमुवाच च मैथिली ॥ ११ ॥
आसितं शयितं भुक्तं सूत रामस्य कीर्तय । जीविष्याम्यहमेतेन ययातिरिव साधुषु ॥ १२ ॥

---

गो० टी०–प्रत्याश्वस्त इति । प्रत्यागतः सूतस्याभिमुखागतः ॥ १ ॥

रा० टी०–तदेति । तदा राजाह्वानसमये नवग्रहं वनात्सद्यो गृहीतमत एव कुञ्जरं स्वयूथगजं ध्यायन्तमत एव विनिःश्वसन्तं परमसंतप्तमत एव अस्वस्थं द्विपं गजमिव दुःखशोकसमन्वितं महाराजं कृताञ्जलिः सूतः उपस्थितः प्राप्तः । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०–अथेत्यादिश्लोकद्वयमेकं वाक्यम् । नवग्रहं सद्यो गृहीतम् अस्वस्थं व्याधिग्रस्तम् ॥ २ ॥ ३ ॥

४ ] ति० टी०–रजसा मार्गरजसा परमार्तवत्परमार्तार्हं वच उवाच ॥ ४ ॥

रा० टी०–राजेति । रजसा ध्वस्ताङ्गं समुपस्थितं सूतं परमार्तवत्परमार्तत्वविशिष्टं वच उवाच ॥ ४ ॥

गो० टी०–राजेति । ध्वस्ताङ्गं रजसा धूसरिताङ्गं धूतं कम्पितं परमार्तवत्परमार्त इव दीन इत्यर्थः ॥ ४ ॥

५ ] ति० टी०–वत्स्यति वनवासकालस्य बहुदीर्घत्वाद्भविष्यत्प्रयोगः ॥ ५ ॥

रा० टी०–तद्वचनप्रकारमाह–क्वेति । स राघवो रामः किमशिष्यति भोक्ष्यते ॥ ५ ॥

गो० टी०–पूर्वसर्गे यथोक्तमित्युक्तं विवरीतुं प्रश्नमवतारयति–क्व नु वत्स्यतीत्यादिना ॥ ५ ॥

६–७ ] ति० टी०–दुःखस्यानुचितोऽपि दुःखं प्राप्तः शयनसुत्तमम् ॥ ६ ॥ ७ ॥

रा० टी०–दुःखस्येति । हे सुमन्त्र ! दुःखस्य अनुचितो रामः दुःखं प्राप्तः शयनोचितः महाराजशय्यायोग्यः अनाथवन्नाथत्वाभाववानिव भूमौ कथं शेते ॥ ६ ॥

रा० टी०–यमिति । विजनं स्वजनरहितं वनं कथं वत्स्यति ॥ ७ ॥

गो० टी०–दुःखमित्येतत् क्रियाविशेषणम् शयनोचितः महार्हशयनोचितः ॥ ६ ॥ ७ ॥

८ ] ति० टी०–व्यालैरजगरैः मृगैर्व्याघ्रादिभिः ॥ ८ ॥

रा० टी०–व्यालैरिति । व्यालैर्महासर्पैः मृगैः सिंहादिभिः आचरितं निषेवितं वनं वैदेह्या सार्धं कुमारौ कथमुपाश्रितौ संश्रितौ ॥ ८ ॥

गो० टी०–महार्हशयनोचितः व्यालैरजगरादिभिर्मृगैः सिंहव्याघ्रादिदुष्टमृगैः उपस्थितौ उपाश्रितौ आसितमित्यादौ भावे निष्ठा ॥ ८–११ ॥

९ ] ति० टी०–रथादवरुह्य कथं पादैर्गतौ ॥ ९ ॥

रा० टी०–सुकुमार्येति । सुकुमार्या अतिमृदुशरीरया तपस्विन्या धर्मान्वेषणशीलया सीतया सह राजपुत्रौ रथादवरुह्य पादैः कथं गतौ ॥ ९ ॥

१०–११ ] ति० टी०–अश्विनाविव मन्दरम् मन्दरस्य कार्ष्ण्यमात्राद्वनसादृश्यम् ॥ १० ॥ ११ ॥

रा० टी०–सिद्धार्थ इति । येन त्वया मन्दरं मन्दराचलं प्रविशन्तौ अश्विनाविव वनान्तं प्रविशन्तौ ममात्मजौ दृष्टौ स त्वं सिद्धार्थः सिद्धनिखिलप्रयोजनकोऽसीति शेषः ॥ १० ॥

रा० टी०–किमिति । वनमासाद्य प्राप्य रामादिः किमुवाच ॥ ११ ॥

१२ ] ति० टी०–आसितादयो भावे निष्ठान्ताः एतेनासनादिव्यापारश्रवणेन ययातिरिव साधुषु स्वर्गात्पतन्ययातिर्मां साधुषु पातयेतीन्द्रं प्रार्थयित्वा यथा साधुषु पतितस्तद्वार्तया सुखजीवनो जातः, एवं स्वर्गतुल्यात्पुत्रसंयोगाद्भ्रष्टस्य भवल्लक्षणसाधुसमागमात्पुत्रवार्ताश्रवणेन जीविष्यामीति भावः ॥ १२ ॥

रा० टी०–आसितमिति । रामस्य आसितं संस्थितिं शयितं शयनं भुक्तं भोजनं कीर्तय कथय एतेन कथनेनाहं जीविष्यामि, तत्र दृष्टान्तः साधुषु साधुभिरित्यर्थः ययातिर्नहुषपुत्र इव । अत्रेयमाख्यायिका स्वर्गात्पतनसमये मां साधुषु पातयेतीन्द्रं संप्रार्थ्य साधुसङ्गं लब्ध्वा तेभ्यस्तत्त्वज्ञानं प्राप्येन्द्रलोकादपि परं लोकं प्राप्य सुखं प्राप्तो ययातिरिति । भावनिष्ठान्ता आसितादयः ॥ १२ ॥

गो० टी०–आसितम् आसनं शयितं शयनं भुक्तं भोजनं च

---

१ भूतमिति गो. पाठः । २ उपस्थिताविति गो. पाठः । ३ अहमिति गो. रा. पाठः ।

इति सूतो नरेन्द्रेण चोदितः सज्जमानया । उवाच वाचा राजानं स बाष्पपरिबद्धया ॥ १३ ॥
अब्रवीन्मे महाराज धर्ममेवानुपालयन् । अञ्जलिं राघवः कृत्वा शिरसाभिप्रणम्य च ॥ १४ ॥
सूत मद्वचनात्तस्य तातस्य विदितात्मनः । शिरसा वन्दनीयस्य वन्द्यौ पादौ महात्मनः ॥ १५ ॥
सर्वमन्तःपुरं वाच्यं सूत मद्वचनात्त्वया । आरोग्यमविशेषेण यथार्हं[2]मभिवादनम् ॥ १६ ॥
माता च मम कौसल्या कुशलं चाभिवादनम् । अप्रमादं च वक्तव्या ब्रूयाश्चै[3]नामिदं वचः ॥ १७ ॥
धर्मनित्या यथाकालमग्न्यगारपरा भव । देवि देवस्य पादौ च देववत्परिपालय ॥ १८ ॥
अभिमानं च मानं च त्यक्त्वा वर्तस्व मातृषु । अनुराजानमार्यां च कैकेयीमम्ब कारय[4] ॥ १९ ॥
कुमारे भरते वृत्तिर्वर्तितव्या च राजवत् । अ[5]प्यज्येष्ठा हि राजानो राजधर्ममनुस्मर ॥ २० ॥

कीर्तय एतेन रामसंबन्ध्यासनादिकीर्तनेन अहं साधुषु ययातिरिव जीविष्यामि ययातिः सत्सु पतेयमितीन्द्रं प्रार्थ्य स्वर्गाद्भ्रष्टः साधुसमागमं प्राप्य यथा निवृत्तदुःखोऽभूत् तद्वदहमपि निवृत्तदुःखो भविष्यामीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—सज्जमानया स्खलन्त्या बाष्पपरिबद्धया कण्ठगतबाष्पनिरुद्धया ॥ १३ ॥

रा० टी०—इतीति । सज्जमानया रामसंलग्नया बाष्पपरिरुद्धया बाष्पाणि परिरुद्धानि यया तया वाचा नरेन्द्रेण चोदितः स सूतः उवाच ॥ १३ ॥

गो० टी०—इतीति । बाष्पपरिरुधया[1] कण्ठगतबाष्परुद्धयेत्यर्थः अत एव सज्जमानया स्खलन्त्या षस्जगताविति धातुः धातोरनेकार्थत्वादत्र स्खलनार्थकः ॥ १३ ॥ १४ ॥

१४–१५ ] ति० टी०—हे महाराज ! राघवो धर्ममेवानुपालयंस्तत्पालनाद्धेतोरब्रवीद्वक्ष्यमाणं वचः । तदाह—हे सूत मत्प्रतिनिधित्वेन राज्ञेऽञ्जलिं कृत्वा तथैव शिरसा नत्वा विदितात्मनो लोके धर्मिष्ठत्वेन प्रसिद्धस्य शिरसा वन्दनयोग्यस्य राज्ञः पादौ मद्वचनाद्रामोऽभिवादयत इत्युक्त्वा मत्प्रतिनिधित्वेन वन्द्यौ ॥ १४ ॥ १५ ॥

रा० टी०—तद्वचनस्वरूपमाह—अब्रवीदिति । हे महाराज ! अञ्जलिं प्रणयसूचकबद्धयुगलकरं कृत्वा धर्मं स्वकुलपरंपरारीतिमनुपालयन्राघवो रामः अब्रवीत् ॥ १४ ॥

रा० टी०—रामवचनस्वरूपं बोधयन्नाह—सूतेति । हे सूत ! विदितात्मनः ज्ञातस्वस्वरूपस्य अत एव महात्मनः अत एव शिरसा वन्दनीयस्य तातस्य पादौ मद्वचनाद्रामेणातीव वन्दितावित्युक्त्वा वन्द्यौ अभिवन्दनीयौ ॥ १५ ॥

गो० टी०—सूतेति । वन्द्यौ वन्दनीयौ ॥ १५ ॥

१६ ] ति० टी०—ततः सर्वमन्तःपुरं त्वया मद्वचनाद्रामो वः सर्वा अविशेषेणारोग्यं पृच्छतीति वाच्यं यथार्हं यथायोग्यं तासां मदभिवादनं च वाच्यम् ॥ १६ ॥

रा० टी०—सर्वमिति । सर्वमन्तःपुरमविशेषेण अयोध्यातः किंचिद्विशेषाभावेन आरोग्यं रोगराहित्यं वाच्यं मद्वचनाद्यथार्हं यथायोग्यमभिवादनं च वाच्यम् । अप्रधानीभूतान्तःपुररूपकर्मणि ण्यत् ॥ १६ ॥

गो० टी०—सर्वमिति । अन्तःपुरम् आरोग्यमभिवादनं च वाच्यं ब्रूञो द्विकर्मकत्वादप्रधानकर्मण्यन्तःपुरे प्रथमा कृताभिहितत्वात् एवमुत्तरश्लोकेऽपि ॥ १६ ॥

१७–१८ ] ति० टी०—ततो मम माता कौसल्या मद्वचनात्कुशलं प्रणामं धर्मेऽप्रमादं च वक्तव्या किं चैनामिदं वक्ष्यमाणं विशिष्य ब्रूयाः । किं तदित्याह—धर्मेत्यादि ॥ १७ ॥ १८ ॥

रा० टी०—मातेति । मम माता कौशल्या च कुशलादिकं वक्तव्या तत्राप्रमादं सावधानतामेनां कौशल्यामिदं वचश्च ब्रूयाः ॥ १७ ॥

रा० टी०—रामवचनस्वरूपमाह—धर्मेति । हे देवि ! धर्मनित्या नित्यं धर्मविशिष्टा त्वं यथाकालमग्न्यगारपरा यागशालारक्षिका भव देवस्य राज्ञः पादौ देववत्परिपालय निषेवस्व ॥ १८ ॥

गो० टी०—मातेति । अप्रमादम् धर्मे भर्तरि च इदं वक्ष्यमाणम् ॥ १७ ॥

गो० टी०—धर्मनित्येत्यादि । अभिमानं गर्वम् 'गर्वोऽभिमानोऽहंकारः' इत्यमरः । कुलाभिमानमित्यर्थः । मानः चित्तसमुन्नतिः ज्येष्ठपत्नीत्वनिबन्धनां चित्तसमुन्नतिमित्यर्थः । अनुराजानमार्यां च कारय अनुकारयेत्यर्थः । व्यवहिताश्चेति व्यवहितप्रयोगः । अन्विति तुल्यार्थे 'पश्चात्सादृश्ययोरनु' इत्यमरः । राजानं कैकेयीं च तुल्यमनुवर्तस्वेत्यर्थः ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—अभिमानः प्रधानमहिषीत्वप्रयुक्तोऽहंकारः मानस्तत्प्रयुक्त इतरतिरस्कारकश्चित्तविकारः मातृष्वित्यस्य मदीयास्विति शेषः । अनुगतो राजा यस्यास्तां कैकेयीं हे अम्ब ! आर्यां श्लाघ्यां कारय । 'धारय' इति पाठेऽप्ययमेवार्थः तया सह मा विरौत्सीरित्यर्थः ॥ १९ ॥

रा० टी०—अभिमानमिति । अनुराजानं राजसेवानन्तरमभिमानमहं सर्वश्रेष्ठेति गर्वं मानं तत्तत्कृतसत्कारं च त्यक्त्वा तत्रास्थामकृत्वेत्यर्थः मातृषु स्वसपत्नीषु वर्तस्व कैकेयीं च अवधारय सौहार्देन स्वीकुरु ॥ १९ ॥

२० ] ति० टी०—भरते च राजवद्वृत्तिः कार्या तत्र

१ रुध्येति गो. पाठः । २ मामिति गो. पाठः । ३ चाभीति गो. पाठः । ४ अवधारयेति रा. पाठः । ५ अर्थेति गो. रा. पाठः ।

भरतः कुशलं वाच्यो वाच्यो मद्वचनेन च । सर्वास्वेव यथान्यायं वृत्तिं वर्तस्व मातृषु ॥ २१ ॥
वक्तव्यश्च महाबाहुरिक्ष्वाकुकुलनन्दनः । पितरं यौवराज्यस्थो राज्यस्थमनुपालय ॥ २२ ॥
अतिक्रान्तवया राजा मा स्मैनं व्यपरोरुधः । कुमारराज्ये जीवस्त्वं तस्यैवाज्ञाप्रवर्तनात् ॥ २३ ॥
अब्रवीच्चापि मां भूयो भृशमश्रूणि वर्तयन् । मातेव मम माता ते द्रष्टव्या पुत्रगर्धिनी ॥ २४ ॥
इत्येवं मां महाबाहुर्ब्रुवन्नेव महायशाः । रामो राजीवपत्राक्षो भृशमश्रूण्यवर्तयत् ॥ २५ ॥
लक्ष्मणस्तु सुसंक्रुद्धो निःश्वसन्वाक्यमब्रवीत् । केनायमपराधेन राजपुत्रो विवासितः ॥ २६ ॥
राज्ञा तु खलु कैकेय्या लघु चाश्रुत्य शासनम् । कृतं कार्यमकार्यं वा वयं येनाभिपीडिताः ॥ २७ ॥

---

हेतुः—अज्येष्ठा अपि राजानो हि निश्चयेन पूज्या इति यावत् राजधर्ममनुस्मर । 'अर्थज्येष्ठा हि' इति पाठेऽर्थेन राज्यरूपार्थेन ज्येष्ठा हि यतोऽतः पूज्या इति शेषः इति राजधर्ममनुस्मरेति । कतककृत्तु—राजानमनुराज्ञः पश्चात् आर्यां कैकेयीमभिवादयेत्यर्थः 'कैकेयीमभिवादय' इति पाठः । कुमारे चेत्यादि प्राग्वत् । कैकेय्या वरबलेनाधिकत्वाद्भरतस्य च राजदत्तार्थवत्त्वेन ज्येष्ठत्वात्तयोरभिवादनमम्बाया युक्तम् तद्वैमुख्यनिवृत्तये च राजधर्ममनुस्मरेत्याह ॥ २० ॥

रा० टी०—कुमार इति । कुमारे भरते राजवद्राजनीव वृत्तिः सत्कार इत्यर्थः कर्तव्या । ननु राजभिन्ने कथमिदमित्यत आह अर्थज्येष्ठा अत्यैश्वर्यनियामका इत्यर्थः राजानः राजवन्मन्तव्याः इति इमं धर्ममनुस्मर । हिरिवार्थे ॥ २० ॥

गो० टी०—राजवत् राज्ञीव वृत्तिर्वर्तितव्या उपचारः कर्तव्य इत्यर्थः अर्थज्येष्ठाः अर्थेनैव ज्येष्ठाः न तु वयसेत्यर्थः ॥ २० ॥

२१ ] ति० टी०—भरतो मद्वचनेन कुशलं वाच्यः सर्वासु मातृषु न्यायमनतिक्रम्य वृत्तिं वर्तस्वेति वाच्यः ॥ २१ ॥

रा० टी०—भरत इति । मद्वचनेन भरतः कुशलं वाच्यः सर्वासु मातृषु यथान्यायं वृत्तिमनुवर्तनं सेवामित्यर्थः वर्तस्व कुरुष्व इति च वाच्यः ॥ २१ ॥

गो० टी०—भरत इति । भरतः कुशलं वाच्यः त्वयेति शेषः । वाच्यो मद्वचनेन च मयोक्तमित्यपि वाच्य इत्यर्थः । यद्वा भरतो मद्वचनेन कुशलं वाच्यः सर्वास्वेव मातृषु यथान्यायं यथाक्रमं वृत्तिं वर्तस्व वृत्तिं कुरु शुश्रूषस्वेत्यर्थः । इति वाच्यश्चेति द्वितीयवाच्यपदान्वयः ॥ २१ ॥

२२ ] ति० टी०—वक्तव्यश्चेति । भरत इति शेषः । राज्यस्थं प्रधानराज्यस्थम् ॥ २२ ॥

रा० टी०—वक्तव्य इति । यौवराज्यस्थः युवराजसदृशस्त्वं राज्यस्थं पितरमनुपालय निषेवस्व इति च इक्ष्वाकुकुलनन्दनो भरतो वक्तव्यः ॥ २२ ॥

गो० टी०—वक्तव्य इति । राज्यस्थं प्रधानराज्यस्थं मा व्यवरोरुधः अवरुद्धं मा कार्षीः अतिक्रान्तवयस्कत्वादिति तत्र हेतुः कुमारराज्ये यौवराज्ये जीव भोगान् भुङ्क्ष्वेत्यर्थः इति च वक्तव्य इत्यन्वयः ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—व्यपरोरुधः राज्याद्भ्रंशयेत्यर्थः । तस्यैवाज्ञाप्रवर्तनान्मदनुग्रहाय तस्यैवाज्ञां प्रवर्तयन्कुमारराज्ये जीवस्व तोषं कुरु ॥ २३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अतीति । अतिक्रान्तवयाः चिरकालप्रादुर्भूतिमान् यो राजा तं मा व्यपरोरुधः तन्मनोभङ्गं न कुर्वित्यर्थः । तदुपायमाह—तस्य राज्ञः आज्ञाप्रवर्तनादेव यौवराज्येऽधिकृतस्त्वं जीवस्व निर्वाहं कुरु ॥ २३ ॥

२४-२५ ] ति० टी०—अब्रवीदित्यादि वाक्यं भरतं प्रत्येव । अब्रवीदित्यादि श्लोकद्वयं प्रक्षिप्तमिति कतकः ॥२४-२५॥

रा० टी०—अब्रवीदिति । पुत्रगर्धिनी पुत्रविषयकातीच्छावती मम माता इव ते तव द्रष्टव्या इति भृशमश्रूणि वर्तयन्सन् मां भूयो बहुवारमब्रवीत् ॥ २४ ॥

रा० टी०—इतीति । इति ब्रुवन्महाबाहुः रामः भृशमश्रूणि अवर्तयदिव तच्छ्रवणमात्रेणैवाश्रुपूर्णे मम नेत्रे अभवतामित्यर्थः ॥ २५ ॥

गो० टी०—अब्रवीदिति । अश्रूणि वर्तयन् करिष्यमाणमातृविषयपीडास्मरणादिति हृदयं स्वस्य मातृविषयशुश्रूषाया अलाभाद्वा अश्रुवर्तनं मम माता स्वमातेव त्वया द्रष्टव्या इति भरतमुद्दिश्य मां ब्रुवन्नेव भृशमश्रूण्यवर्तयत् । शोकजनितरक्तिमानमाह—राजीवताम्राक्ष इति । अनन्तरमश्रुमोचनं ततोऽवक्तव्यस्यानुचितत्वात् अनुमाशयमुत्तरत्र सीतापहरणानन्तरमुद्घाटयिष्यति सुप्तप्रमत्तकुपितानां वचनैर्भावज्ञानं द्रष्टव्यमिति न्यायेन ॥ २४ ॥ २५ ॥

२६ ] ति० टी०—अथ लक्ष्मणवाक्यमाह—लक्ष्मण इति । केनेत्यादिसार्धसप्तश्लोकास्तद्वचः ॥ २६ ॥

रा० टी०—रामोक्तिमुक्त्वा लक्ष्मणोक्तिमाह—लक्ष्मण इति । अयं राजपुत्रो रामः केनापराधेन विवासितः अकारणकमेवैतत्कालिकं विवासनमित्यर्थः ॥ २६ ॥

गो० टी०—लक्ष्मणस्त्विति । तु शब्देन रामवन्न सर्वथा हृदयं जुगोपेत्युक्तम् ॥ २६ ॥

२७ ] ति० टी०—येन विवासनेन वयं पीडितास्तद्विवासनं राज्ञा तु कार्यं वाकार्यमिवाकार्यं कृतम् कैकेय्या लघु

---

१ व्यवेति गो. पाठः । २ त्वमिति गो. पाठः । ३ महाराजेति गो. पाठः । ४ इवेति रा. पाठः । ५ ताम्राक्ष इति गो. पाठः । ६ त्वाश्रित्येति गो. पाठः ।

यदि प्रव्राजितो रामो लोभकारणकारितम् । वरदाननिमित्तं वा सर्वथा दुष्कृतं कृतम् ॥ २८ ॥
इदं तावद्यथाकाममीश्वरस्य कृते कृतम् । रामस्य तु परित्यागे न हेतुमुपलक्षये ॥ २९ ॥
असमीक्ष्य समारब्धं विरुद्धं बुद्धिलाघवात् । जनयिष्यति संक्रोशं राघवस्य विवासनम् ॥ ३० ॥
अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥ ३१ ॥

शासनमाश्रुत्य प्रतिज्ञाय कृतम्, यद्वा तद्विवासनं कृतं कार्यं कर्तुं योग्यं वा भवतु, अकार्यमकर्तुं योग्यं वा भवतु, अस्माकं तु पीडा सर्वथैवेत्यर्थः ॥ २७ ॥

रा० टी०–वस्तुतस्त्वस्मिन्विषये राज्ञो नापराध इति बोधयन्नाह–राज्ञेति । येन विवासनेन वयमभिपीडितास्तत्कार्यं विवासनं कैकेय्याः लघुशासनमाश्रुत्य अकार्यमिव कृतम् अभिषेकप्रतिबन्धकत्वाद्विरुद्धं प्रतिभातीत्यर्थः ।वाशब्द इवार्थे॥२७॥

गो० टी०–राज्ञेति । येन विवासनेन वयमभिपीडिताः तद्विवासनम् अकार्यं तु अकार्यमेव राज्ञा तु कैकेय्याः लघुशासनमाश्रित्य कार्यं वाऽकार्यमिव कृतं खलु, यद्वा राज्ञा खलु लघु तुच्छं कैकेय्याः शासनमाश्रित्याकार्यमेव कार्यं कृतं येन कार्येण वयमभिपीडिताः ॥ २७ ॥

२८ ] ति० टी०–उक्तमेवार्थं प्रकारान्तरेणाह–यदीति । यदि यद्रामः प्रव्राजितस्तल्लोभरूपेण कारणेन कैकेय्या कारितम्, यद्वा कैकेय्यै प्रतिश्रुतवरदाननिमित्तकं वा भवतु सर्वथा दुष्कृतं कृतमनुचितं कृतम् एतद्व्यतिरिक्तं वरयेति सुवचत्वात् वरदानकाले विशिष्य नियोगाभावाच्च पतित्वेन भार्याशिक्षणे समग्राधिकाराच्च ॥ २८ ॥

रा० टी०–यदीति । यद्राज्ञा रामः प्रव्राजितः तल्लोभकारणकारितं लोभकारणेन राजातीव सत्यवक्ता पुत्रश्चैतस्यातीवाज्ञाकारीति यशोभिवाञ्छारूपहेतुना कारितं कृतं वरदाननिमित्तं वा कृतं सर्वथा इदानीं दुष्कृतं न कर्तव्यमित्यर्थः । इतीदानीमर्थे । दशैते राजमातङ्गाः स्तस्यैवामी तुरङ्गमा इत्यादाविवाप्रधानीभूतमपि प्रव्राजनं यत्तच्छब्दाभ्यां परामृश्यते अत एव नपुंसकत्वम् ॥ २८ ॥

गो० टी०–प्रतिज्ञातार्थप्रदानस्य कथमकार्यत्वं तत्राह–यदीति । रामः प्रव्राजितो यदि प्रव्राजित इति यत् एतत् लोभकारणकारितं वरदाननिमित्तं वा कैकेय्याः प्रतिश्रुतवरदाननिमित्तं वा सर्वथा दुष्कृतं कृतं वरदानसमये वरद्वयस्य भरताभिषेकरामनिष्कासनरूपेण विनियोगाभावात् । यदिशब्दस्वारस्यानुरोधेनेत्थं वा योजनीयं लोभकारणकारितमिति क्रियाविशेषणं रामः लोभकारणकारितं वा वरदाननिमित्तं वापि यदिप्रव्राजितः तथापि सर्वथा दुष्कृतमकार्यं राज्ञा कृतं न राज्यं दास्यामीति प्रतिज्ञातुं शक्यत्वात् ज्येष्ठपुत्रविवासनस्यानुचितत्वाच्चेति भावः । 'नत्वेकपुत्रं दद्यान्न त्वेव ज्येष्ठपुत्रम्' इति हि स्मर्यते । 'लोभकारणकारितः' इति पाठे रामविशेषणं लोभरूपकारणेन प्रेरित इत्यर्थः ॥ २८ ॥

२९–३० ] ति० टी०–ननु दैवप्रेरणयेदं जातमिति न दोषो राज्ञ इत्याशङ्क्य निरपराधपुत्रत्यागे दोषस्त्ववश्यं राज्ञ इत्याह–इदमिति । ईश्वरस्य कृते ईश्वरप्रेरणायां सत्यां यथाकाममीश्वरेच्छामनतिक्रम्येदं तावत्कृतं भवतु नाम, तथापि तु रामस्य परित्यागे हेतुभूतं दोषं न पश्यामि अतः केवलं बुद्धिलाघवादसमीक्ष्योचितानुचितमनवेक्ष्य विरुद्धं धर्मशास्त्रविरुद्धमारब्धं रामविवासनं संक्रोशमिह परत्र च दुःखं जनयिष्यत्येव निर्हेतुकपुत्रदारत्यागस्योपपातकेषु गणनादिति भावः ॥ २९ ॥ ३० ॥

रा० टी०–ननु कर्तृत्वं करणत्वं च 'स्वभावश्चेतना धृतिः' इत्याद्युक्त्या सर्वस्य परमात्मायत्तत्वाद्राज्ञः कोऽपराध इत्यत आह–इदमिति । ईश्वरस्य परमात्मनः कृते इच्छया निष्पादिते एव कृतं राज्ञः प्रयत्नः इदं यथाकामं यथेष्टं स्यादिति शेषः । परं तु परित्यागे हेतुं न उपलक्षये ईश्वरस्यापि कृताविति शेषः ॥ २९ ॥

गो० टी०–इदमिति । रामस्य परित्यागे हेतुं नोपलक्षये किंतु ईश्वरस्य कृते स्वतन्त्रव्यापारे स्थितेन राज्ञेति शेषः । इदं रामप्रव्राजनं यथाकामं तावत् यथेच्छमेव कृतं, यद्वा इदं रामविवासनमीश्वरस्य कृते ईश्वरप्रयोजनाय यथाकामं कृतं केवलमीश्वरप्रेरणेन शास्त्रमनवेक्ष्य कृतमित्यर्थः । हि यस्माद्रामस्य परित्यागे हेतुं नोपलक्षये परित्यागहेतुदोषसद्भावे हि पुत्रविवासनं शास्त्रीयं स्यात् अयं चोपसंहारश्लोकः ॥ २९ ॥

रा० टी०–नन्वीश्वरस्य स्वतन्त्रत्वान्निर्हेतुकमपि कार्यं स्यादित्यत आह–असमीक्ष्येति । बुद्धिलाघवाद्बुद्धौ विचारे लाघवादालस्यादिना विचारस्याल्पत्वादित्यर्थः । असमीक्ष्य सम्यग्विचारमकृत्वा समारब्धं विरुद्धं राघवस्य विवासनं संक्रोशं स्वकर्तुर्निन्दां जनयिष्यति ॥ ३० ॥

गो० टी०–यथेष्टकरणं चेत् कथमनुतप्तवान् राजेत्यत्राह–असमीक्ष्येति । विरुद्धमत एव असमीक्ष्यानालोच्य बुद्धिलाघवात् समारब्धं कृतं राघवस्य विवासनं संक्रोशं दुःखं जनयिष्यति जनयति अतो राजाऽनुतताप इति भावः ॥ ३० ॥

३१ ] ति० टी०–'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥' इति वचनार्थं हृदि निधायाह–अहमिति । भर्ता स्वामी पिता चेति 'ज्येष्ठो भ्राता पितुः समः' इत्युक्तेः । वस्तुतस्तु केवलमायिकत्वाल्लक्ष्मणादिशरीराणां तेषामेवमुक्तौ न दोष इति बोध्यम् ॥ ३१ ॥

रा० टी०–ननु पित्रादिवियोगस्यासह्यत्वादयोध्यागमनेच्छया एवं ब्रूषे चेन्मया सार्धं त्वं मागच्छेत्यत आह–अह-

सर्वलोकप्रियं त्यक्त्वा सर्वलोकहिते र[१]तम् । सर्वलोकोऽनुरज्येत कथं [२]त्वानेन कर्मणा ॥ ३२ ॥
सर्वप्रजाभिरामं हि रामं प्रव्राज्य धार्मिकम् । सर्वलोकविरोधे[३]न कथं राजा [४]भविष्यति ॥ ३३ ॥
जानकी तु महाराज निःश्वसन्ती तपस्विनी । भूतोपहतचित्तेव विष्ठिता वि[५]स्मृता स्थिता ॥ ३४ ॥
अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी । तेन दुःखेन रुदती नैव मां किंचिदब्रवीत् ॥ ३५ ॥
उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता । मुमोच सहसा बाष्पं म[६]यान्तमुपवीक्ष्य सा ॥ ३६ ॥

मिति । पितृत्वं मत्कर्तृकसेव्यत्वं नोपलक्षये रामवियोगे सर्तीति शेषः । तत्र हेतुः—मम भ्रात्रादिः राघव एव ॥ ३१ ॥

गो० टी०—पिता कथं निन्द्य इत्यत्राह—अहमिति । गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य परित्यागो विधीयते, इति वचनादिति भावः । भ्राता राघव एव मम पिता 'ज्येष्ठो भ्राता पितृसमः' इत्युक्तेः तस्य पितृत्वाभावेऽपि भर्तृत्वमस्त्येवेत्याशङ्क्याह—भर्ता चेति स्वामीत्यर्थः । किं बहुना बन्धुः सर्वविधोऽपि राघव एव एतेन परमैकान्तिभिः प्राकृतपित्रादयः परित्याज्याः भगवानेव निरुपाधिकः पिता भर्ता बन्धुश्चेत्युक्तं भवति ॥ ३१ ॥

३२ ] ति० टी०—सर्वलोकप्रियं रामं त्यक्त्वा स्थिते त्वयि प्राक्सर्वलोकहिते रते संप्रति सर्वलोकाहितेऽरते वानेन क्रूरेण कर्मणा सर्वलोकः कथमनुरज्येत । 'सर्वलोकहिते रतम्' इति पाठे रामविशेषणं सर्वलोकप्रियत्वे हेतुतयेति बोध्यम् ॥ ३२ ॥

रा० टी०—सर्वेति । सर्वलोकहिते रतमत एव सर्वलोकप्रियं रामं त्यक्त्वा विद्यमानेन मया अनेन रामत्यागरूपेण कर्मणा करणभूतेन सर्वलोकः कथमनुरज्येत ॥ ३२ ॥

गो० टी०—कथं मुख्यं पितरं विहाय गौणमनुवर्तसे तत्राह—सर्वलोकप्रियमिति । अनेन कर्मणा प्रियपुत्रप्रव्राजनरूपक्रूरकर्मणा सर्वलोकहिते रतं सर्वलोकप्रियं रामं त्यक्त्वा अनेन कर्मणोपलक्षितं सर्वलोकाहिते रतं सर्वलोकाप्रियमित्यर्थः त्वा त्वां प्रति सर्वलोकः कथमनुरज्येत कश्चित्क्रूरस्तत्तुल्योऽनुरज्यतां न तु सर्वोऽपीति भावः । सर्वलोकनिरुपाधिकबन्धुं त्यक्त्वा सोपाधिकबन्धुं त्वां कथमाश्रयेयमिति हृदयम् ॥ ३२ ॥

३३ ] ति० टी०—कथं राजा भविष्यति पितेति शेषः । इत्येवं राजानं ब्रूहीति लक्ष्मणोऽवोचदित्यर्थः ॥ ३३ ॥

रा० टी०—रामं विना पितुरपि तत्र स्थितिर्दुर्लभेति बोधयन्नाह—सर्वेति । सर्वलोकविरोधेन विरुद्धभाषणेनेत्यर्थः । राजा दशरथः कथं भविष्यति स्थास्यति न स्थास्यतीत्यर्थः ॥ ३३ ॥

गो० टी०—अनेनेत्युक्तं प्रपञ्चयति—सर्वप्रजाभिराममिति । कथं राजा भविष्यसीत्येवं राजानं ब्रूहीत्यब्रवीदिति पूर्वेणान्वयः सुमन्त्रप्रेषणवेलायां लक्ष्मणादिवाक्याश्रवणेऽप्यत्र सिद्धवदनुवादः सामर्थ्यात्तदानीमेवमुक्तमित्यवगन्तव्यम् ॥ ३३ ॥

३४-३६ ] ति० टी०—विस्मृता विस्मृतसर्वप्रयोजनेऽवस्थिता आश्चर्यं मन्यमानेव विष्ठिता स्थिता ॥ ३४-३६ ॥

रा० टी०—जानकीवृत्तमाह—जानकीति । तपस्विनी अतिविचारशीला विस्मृता भवनादिविषयकविशेषस्मृतिरहिता भूतोपहितचित्ता अत एव विष्ठिता चेष्टारहितात्वेन स्थिता कान्तेव तेन भवदादिदुःखस्मरणेन निःश्वसन्ती रुदती च सती स्थिता न दृष्टं पूर्वव्यसनं पौर्वकालिकदुःखं यया सा राजपुत्री जानकी तु मां किंचिन्न अब्रवीत् । श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०—जानकी त्विति । तुशब्देन लक्ष्मणाद्वैषम्यमुच्यते लक्ष्मणो रामशोकविकारमालक्ष्य हृदयनिहितं वचसोद्घाटितवान् सीता तु न तथेति मयोच्यमानं सीताशोकानुभावमाकर्ण्य क्षुब्धहृदयेन त्वया न भवितव्यमिति द्योतयितुं महाराजेति संबोधनं हृदयस्थशोकातिरेकेण निःश्वसन्ती मनस्विनी गम्भीरमनस्का भूतोपहतचित्तेव विष्ठिता स्तिमिता विस्मिता विस्मितेवोत्फुल्लनयना स्थिता ॥ ३४ ॥

गो० टी०—अदृष्टपूर्वव्यसनेति । अदृष्टपूर्वव्यसना अननुभूतपूर्वव्यसना तत्र हेतुः राजपुत्रीति यशस्विनीति तदानीमप्यनुदितकैकेयीनिन्दात्वेन कीर्तिमती तेन दुःखेन भर्तृदुःखदर्शनजदुःखेन रुदती रोदनानुभाववती सती मां किंचिदपि नैवाब्रवीत् केनचित्संभाषणस्याप्यसह्यत्वात् ॥ ३५ ॥

रा० टी०—उद्वीक्षेति । मां प्रयान्तं प्रयाणाभिमुखमुदीक्ष्य अवलोक्य परिशुष्यता मुखेनोपलक्षिता भर्तारमुद्वीक्षमाणा सा सीता सहसा बाष्पं मुमोच ॥ ३६ ॥

गो० टी०—उद्वीक्षमाणेति । ततो भर्तारमश्रुमुखमुद्वीक्षमाणा सती परिशुष्यता मुखेन उपलक्षिता मां प्रयान्तमुद्वीक्ष्य सहसा बाष्पं मुमोच रथे गते कथं पद्भ्यामेव क्रूरं कान्तारं चरिष्यति राम इति हृदयं धारयितुमशक्ता अश्रूणि मुमोचेत्यर्थः ॥ ३६ ॥ ३७

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

१ रतमिति गो. रा. पाठः । २ त्वा इति गो. पाठः । ३ लोकं विरुध्येममिति गो.पाठः । ४ भविष्यसीति गो. पाठः । ५ विस्मितेति गो. पाठः । ६ मां प्रयान्तमुदीक्ष्येति रा. पाठः ।

तथैव रामोऽश्रुमुखः कृताञ्जलिः स्थितोऽब्रवील्लक्ष्मणबाहुपालितः ।
तथैव सीता रुदती तपस्विनी निरीक्षते राजरथं तथैव माम् ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

## एकोनषष्टितमः सर्गः ।

पृष्टः सुमन्त्रः पुनरपि रामस्य वने प्रयाणमयोध्यां प्रति निवृत्तिसमयदृष्टां स्थिरचराद्यवस्थामयोध्याद्यवस्था च वर्णयन् । शोकाविष्टो दशरथः सुमन्त्राग्रे बहुशः प्रलपति ।

मम त्वश्वा निवृत्तस्य न प्रावर्तन्त वर्त्मनि । उष्णमश्रु विमुञ्चन्तो रामे संप्रस्थिते वनम् ॥ १ ॥
उभाभ्यां राजपुत्राभ्यामथ कृत्वाहमञ्जलिम् । प्रस्थितो रथमास्थाय तद्दुःखमपि धारयन् ॥ २ ॥
गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान्बहून् । आशया यदि मां रामः पुनः शब्दापयेदिति ॥ ३ ॥
विषये ते महाराज महाव्यसनकर्शिताः । अपि वृक्षाः परिम्लानाः सपुष्पाङ्कुरकोरकाः ॥ ४ ॥

३७ ] ति० टी०—लक्ष्मणबाहुपालितो लक्ष्मणेन सेव्यमानः अब्रवीत् उक्तमिति शेषः । निरीक्षते राज्ञस्तव रथं मां च ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

रा० टी०—तथैवेति । यो रामः तथा अब्रवीत्संदेशमिति शेषः सः अश्रुमुखः सन् राजरथं मां च निरीक्षते तथैव सीता च निरीक्षते ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टपञ्चाशत्तमः सर्गः ॥ ५८ ॥

१ ] ति० टी०—एवं रामवृत्तान्तमुक्त्वा प्रत्यागतिसमयानुभूतस्वदेशपुरवृत्तान्तमाह—मम त्विति । ममाश्वा मन्नियम्याश्वा न प्रावर्तन्त यथापूर्वं रथवहनोन्मुखा नाभूवन्नित्यर्थः । जात्याश्वस्वभाववर्णनेन स्वभावोक्तिरत्रालंकारः ॥ १ ॥

रा० टी०—रामादीनां वृत्तमुक्त्वा स्ववृत्तमाह—ममेति । रामे वनं संप्रस्थिते सति निवृत्तस्य मम नियम्या अश्वाः अश्रु विमुञ्चन्तः सन्तः वर्त्मनि मार्गे न प्रावर्तन्त पूर्ववन्न चेलुः ॥ १ ॥

गो० टी०—ममेति । मम वर्त्मनि मत्संबन्धिनि मार्गे न प्रावर्तन्त नववियोगक्लेशादिति भावः ॥ १ ॥

२ ] ति० टी०—तद्दुःखं तद्वियोगदुःखम् ॥ २ ॥

रा० टी०—उभाभ्यामिति । तद्दुःखं वियोगजनितखेदं धारयन् सहमानोऽहं प्रस्थितः ॥ २ ॥

गो० टी०—उभाभ्यामिति । राजपुत्राभ्यामिति चतुर्थी तद्दुःखं तादृशं दुःखम् ॥ २ ॥

३ ] ति० टी०—बहून्रामस्य गङ्गोत्तरणदिनादिदिनत्रयम् यद्यपि भरद्वाजाश्रमाचारप्रतिनिवृत्तिमत्तृतीयदिवस एव सुमन्त्रप्रस्थानम्, तथापि तद्दिनेऽल्पावशिष्टदिनपर्यन्तं स्थित्या बहूनित्युक्तम् । किमर्थं तत्र स्थितिस्तत्राह—शब्दापयेदिति । तत्समीपचरद्वारमनुष्यमुखेनाकारयेदित्यर्थः ॥ ३ ॥

रा० टी०—गुहेनेति । यदि कदाचिद्रामः मां पुनः शब्दापयेत् आह्वयेत् इति आशया बहून् त्रीन् दिवसान् गुहेन सार्धं तत्रैव स्थितोऽस्मि वर्तमानसामीप्य इति भूते लट् ॥ ३ ॥

गो० टी०—गुहेनेति । गुहेन सार्धं तत्कोहितजनसंदर्शनमपि क्लेशापहमिति भावः । तत्रैव ननु वर्त्मनि दिवसानिति बहुवचनेन कपिञ्जलाधिकरणन्यायेन त्रित्वसिद्धिरित्येके । वस्तुतस्तु वनस्पतिमूले एकदिनं भरद्वाजाश्रमे द्वितीयं यमुनातीरे तृतीयं चतुर्थं चित्रकूटप्रवेशः पञ्चमं गुहचारैस्तत्सर्वं निवेदितं षष्ठे सूतनिर्गमः, यद्वा द्वितीयदिने भरद्वाजाश्रमे रामस्य चित्रकूटगमनव्यवसायात् तृतीयदिने चारैर्निवेदनं चतुर्थे सूतनिर्गमः अतः त्रीन् दिवसान् गङ्गाकूले स्थितोऽस्मीत्यर्थः । बहूनिति विशेषणात् रामवियोगेन एकैकस्य दिवसस्य कल्पवत् प्रतिभानमिति दर्शितं पुनः शब्दापयेत् पुनराह्वयेत् वनचरमुखेनेति हृदयम् शब्दशब्दाण्णौ तत्कृतापुगन्तोऽप्ययमस्ति अतोऽङ्कापयतीत्यादिवत् सिद्धम् ॥ ३ ॥

४ ] ति० टी०—कैकेयीनिमित्तं रामविवासनं सर्वक्षोभकरमभूदित्याह—विषये ते इति । तव देशे पुष्पमपि न विकसितम् अङ्कुरः शाखासु पल्लवोद्भेदः, कोरकाः पुष्पमुकुलानि, तैः सहिता वृक्षाः अत्र सर्वत्र हेत्वंशे चोत्प्रेक्षा बोध्या ॥ ४ ॥

रा० टी०—स्ववृत्तमुक्त्वा देशवृत्तमाह—विषय इति । ते विषये देशे सपुष्पाङ्कुरकोरकाः वृक्षा अपि महाव्यसनेनातिदुःखेन कर्शिताः पीडिताः अत एव परिम्लानाः तत्राङ्कुराः शाखासु नवीनपल्लवोद्गमाः कोरकाः कुसुममुकुलानि ॥ ४ ॥

गो० टी०—अथ रामस्य सर्वान्तर्यामितादात्म्यं सूचयितुं सर्वेषां रामविरहक्लेशं वर्णयति, यद्वा कैकेयीप्रियार्थमविचारेण सहसा कृतं कार्यं सर्वक्षोभनिमित्तमभूदित्याह—विषय इत्यादि । विषये देशे 'देशविषयौ तूपवर्तनम्' इत्यमरः । अपिशब्देन लतादयः समुच्चीयन्ते व्याध्यादिना एकदेशग्लानिं व्यावर्तयितुं

१ कृताञ्जलिमिति रा० पाठः । २ ऽभवदिति गो० पाठः । ३ प्रमुखत इति गो० पाठः । ४ मे इति रा० पाठः । ५ रामेति गो० पाठः ।

उपतप्तोदका नद्यः पल्वलानि सरांसि च । परिशुष्कपलाशानि वनान्युपवनानि च ॥ ५ ॥
न च सर्पन्ति सत्त्वानि व्याला न [1]प्रसरन्ति च । रामशोकाभिभूतं तं [2]निष्कूजमिव[3] तद्वनम् ॥ ६ ॥
लीनपुष्करपत्राश्च नद्यश्च[4] कलुषोदकाः । संतप्तपद्माः पद्मिन्यो लीनमीनविहंगमाः ॥ ७ ॥
जलजानि च पुष्पाणि माल्यानि स्थलजानि च । नातिभान्त्यल्पगन्धीनि फलानि च यथापुरम् ॥ ८ ॥
अत्रोद्यानानि शून्यानि प्रलीनविहगानि च । न चाभिरामानारामान्पश्यामि मनुजर्षभ[5] ॥ ९ ॥
प्रविशन्तमयोध्यायां[6] न कश्चिदभिनन्दति । नरा राममपश्यन्तो निःश्वसन्ति मुहुर्मुहुः ॥ १० ॥

---

सपुष्पेत्यादि सपुष्पाङ्कुरकोरकाः पुष्पाणि अभिनवविकसितानि अङ्कुराः शाखासु नवपल्लवोद्भेदाः कोरका कलिकाः 'कलिकाकोरकः पुमान्' इत्यमरः । तैः सहिता वृक्षा अपि परिम्लानाः कठिनकोमलविभागमन्तरेणापि सर्वमेकदैव परिम्लानमभूदित्यर्थः ॥ ४ ॥

५ ] ति० टी०—उपतप्तोदकाः शुष्कोदकाः पलाशः पर्णम् ॥ ५ ॥

रा० टी०—उपेति । पल्वलानि अल्पसरांसि उपतप्तोदका इत्यस्य लिङ्गविपरिणामेनान्यत्राप्यन्वयः परिशुष्काणि पलाशानि पत्राणि येषां तानि ॥ ५ ॥

गो० टी०—उपतप्तोदका इति । अकार्त्स्न्येनोपतप्तत्वव्युदासायोदकपदं तेनातपकार्योपतापव्यावृत्तिः पल्वलानि सरांसि च पल्वलानीति दृष्टान्तार्थम् एवं वनानीत्यपि अनेनाल्पाधिकविभागमन्तरेण परितप्तत्वं द्योत्यते उपतप्तोदका इति पदं लिङ्गविपरिणामेन पल्वलादौ योजनीयं वनानि सन्ततजलसेकमन्तरेण प्ररूढानि कठिनाकाराणि, उपवनानि जलसेकेन प्ररूढान्यतिकोमलानि परिशुष्कपलाशानि एकरूपेण शुष्कपत्राणि 'पत्रं पलाशम्' इत्यमरः ॥ ५ ॥

६ ] ति० टी०—सत्त्वानि प्राणिनो न सर्पन्ति न प्रसरन्तीत्यादावाहारार्थमपीति शेषः । यतस्तत्प्राणिजातं रामशोकाभिभूतं तद्वनं मार्गस्थमत्यन्तं पक्षिशब्दवन्निष्कूजमिव पक्षिशब्दरहितम् ॥ ६ ॥

रा० टी०—न चेति । सत्त्वानि वनवासिजनाः न सर्पन्ति व्यालाः सर्पादयश्च न प्रसरन्ति । तत्र हेतुः तत्प्राणिजातं रामशोकेन अभिभूतं पराभूतमत एव तद्वनं निःकूजं शब्दरहितमिव अभवदिति शेषः ॥ ६ ॥

गो० टी०—नेति । न सर्पन्ति न गच्छन्ति किंतु स्तब्धतया तिष्ठन्ति सत्त्वानि जन्तवः व्यालाः हिंस्रपशवः सर्वदा संचारस्वभावा गजा वा न प्रचरन्ति आहारार्थमपि न संचरन्तीत्यर्थः। गमनवच्छब्दोऽपि नास्तीत्याह—निष्कूजमिति निष्कूजं निःशब्दम् ॥ ६ ॥

७ ] ति० टी०—लीनं संकुचितं पुष्करपत्रं नलिनीदलं यासु ताः संतप्तपद्माः शुष्कपद्माः पद्मिन्यः सरांसि विहंगमा अत्र जलपक्षिणः ॥ ७ ॥

रा० टी०—लीनेति । लीनपुष्करपत्राः गलितनलिनीदलविशिष्टाः कलुषाणि मलिनानि उदकानि यासां ताः नद्य आसन्निति शेषः । पद्मिन्यः सरांसि सन्तप्तपद्माः शुष्कपद्मविशिष्टाः अत एव लीना विध्वस्ताः मीनविहङ्गमाः यासु ताः आसन्निति शेषः ॥ ७ ॥

गो० टी०—लीनपुष्करपत्रा इति । लीनपुष्करपत्राः ग्लान्यतिशयेन जलान्तर्विलीनपद्मपत्राः लीनाः संचाररहिताः विहङ्गमा जलकाकादयः ॥ ७ ॥

८ ] ति० टी०—स्थलजानि माल्यानि पुष्पाणि यथापुरं यथापूर्वम् ॥ ८ ॥

रा० टी०—जलजानि जलोत्पन्नानि पुष्पाणि स्थलजानि माल्यानि पुष्पाणि नातिभान्ति । तत्र हेतुः अल्पगन्धीनि परिभ्रष्टबहुगन्धवन्ति फलानि च यथापुरं यथापूर्वं न भान्ति 'माल्यं पुष्पे पुष्पदाम्नि' इति वैजयन्ती ॥ ८ ॥

गो० टी०—जलजानीति । माल्यानि पुष्पाणि 'माल्यं पुष्पे पुष्पदाम्नि' इति वैजयन्ती । यथापुरं यथापूर्वं अल्पगन्धीनीति मत्वर्थीय इनिः स्वभावस्य दुस्त्यजत्वादल्पत्वं फलानि रसालपनसादीनि ॥ ८ ॥

९ ] ति० टी०—उद्यानानि पुष्पवाटिकाः आरामान्कृत्रिमवनानि अनेन मनुष्याणां सर्वशोऽत्यन्तदुःखवत्त्वं कैमुतिकन्यायेनैव प्रतिपादितं बोध्यम् ॥ ९ ॥

रा० टी०—अत्रेति । प्रलीनविहगानि परिध्वस्तपक्षीणि अत एव शून्यानि अत्र अयोध्यायामुद्यानानि पुष्पवाटिकाः सन्तीति शेषः । आरामान् कृत्रिमवनानि अभिरामान्न पश्यामि 'आरामः स्यादुपवनं कृत्रिमं वनमेव यत्' इत्यमरः ॥ ९ ॥

गो० टी०—अत्रेति । उद्यानानि आक्रीडाः 'पुमानाक्रीड उद्यानम्' इत्यमरः । शून्यानि निर्जनानि प्रलीनाः नीडेषु मूर्च्छिताः विहगाः शुकपिकशारिकादयः येषु तानि तथोक्तानि आरामान् कृत्रिमवनानि 'आरामः स्यादुपवनं कृत्रिमं वनमेव यत्' इत्यमरः । न चाभिरामान् किंतु निःश्रीकान् पश्यामीत्यर्थः ॥ ९ ॥ १० ॥

१० ] ति० टी०—तदेवाह—प्रविशन्तमिति ॥ १० ॥

रा० टी०—प्रविशन्तमिति । अयोध्यायां प्रविशन्तं मां कश्चिज्जनो नाभिनन्दति । तत्र हेतुः राममपश्यन्तो नराः मुहुर्मुहुः निश्वसन्ति ॥ १० ॥

---

१ प्रचरन्तीति गो.पाठः। २ निःकूजमिति रा.पाठः। ३ अभवदिति गो. पाठः। ४ नरेन्द्रेति गो.पाठः। ५ नाथेति गो.पाठः। ६ अयोध्यां मामिति गो.पाठः।

देव राजरथं दृष्ट्वा विना राममिहागतम् । दूरादश्रुमुखः सर्वो राजमार्गे[1] गतो जनः ॥ ११ ॥
हर्म्यैर्विमानैः प्रासादैरवेक्ष्य रथमागतम् । हाहाकारकृता नार्यो रामादर्शनकर्शिताः ॥ १२ ॥
आयतैर्विमलैर्नेत्रैरश्रुवेगपरिप्लुतैः । अन्योन्यमभिवीक्षन्तेऽव्यक्तमार्ततराः स्त्रियः ॥ १३ ॥
नामित्राणां न मित्राणामुदासीनजनस्य च । अहमार्ततया कंचिद्विशेषं[3][4] नोपलक्षये ॥ १४ ॥
अप्रहृष्टमनुष्या च दीननागतुरंगमा । आर्तस्वरपरिम्लानविनिःश्वसितनिःस्वना ॥ १५ ॥
निरानन्दा महाराज रामप्रव्राजनातुरा । कौसल्या पुत्रहीनेव अयोध्या प्रतिभाति मे[6] ॥ १६ ॥
सूतस्य वचनं श्रुत्वा वाचा परमदीनया । बाष्पोपहतया सूतमिदं[7] वचनमब्रवीत् ॥ १७ ॥
कैकेय्या विनियुक्तेन पापाभिजनभावया । मया न मन्त्रकुशलैर्वृद्धैः सह समर्थितम् ॥ १८ ॥

११-१२ ] ति० टी०–देवेति संबुद्धिः राजरथं राज्ञस्तव रथम् अश्रुमुखः अभूदिति शेषः ॥ ११-१२ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–देवेति । देव हे राजन् ! रामं विना इहागतं राजरथं दूराद्दृष्ट्वा सर्वो जनः अश्रुमुख आसेति शेषः ॥ ११ ॥

गो० टी०–देव राजरथमिति । देवराजरथमित्यत्र देवेति संबोधनम् ॥ ११ ॥

रा० टी०–हर्म्यैरिति । हर्म्यादिभिरुपलक्षिताः नार्यः आगतं रथमवेक्ष्य रामस्य अदर्शनेन कर्षिताः प्राप्तखेदाः सत्यः हाहाकारकृता आसन् ॥ १२ ॥

गो० टी०–हर्म्यैरित्यादिश्लोकद्वयमेकान्वयम् । हाहाकारकृताः कृतहाहाकाराः आयतैरित्यश्रुवेगातिशयोक्त्यर्थः निरञ्जनत्वं द्योतयितुं विमलैरित्युक्तम् । अभिवीक्षन्ते व्यक्तमित्यत्र अव्यक्तमिति पदच्छेदः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०–अव्यक्तमिति छेदः रामप्रवासजनितपीडयार्ताः परस्परं सम्यङ् नेक्षन्त इत्यर्थः ॥ १३ ॥

रा० टी०–आयतैरिति । आर्ततराः स्त्रियः अश्रुवेगपरिप्लुतैः अत्यश्रुव्याप्तैः अत एव विमलैः कज्जलादिरहितैः आयतैर्विशालैर्नेत्रैः अन्योन्यं व्यक्तं यथा स्यात्तथाऽभिवीक्षन्ते । अयं श्लोकः पूर्वमपि पठितः ॥ १३ ॥

१४ ] ति० टी०–अन्योन्यं शत्रूणां तथा मित्राणामुदासीनजनस्य चार्ततयार्तत्वगुणसाम्येन विशेषं नोपलक्षये इत्यन्वयः । यद्यपि रामस्य स्वतोऽमित्रासंभवः, कैकेयीकुब्जयोस्तत्त्वस्य दैववशात्संभवेऽपि तयोरार्तत्वभावः, (?) तथाप्यनयोः शत्रुत्वमनयोर्मित्रत्वमयमुदासीन इति भेदो न ज्ञायत इति तात्पर्यम् ॥ १४ ॥

रा० टी०–नेति । अमित्राणां शत्रूणां मित्राणां च उदासीनजनस्य शत्रुत्वमित्रत्वानाक्रान्तस्य च आर्ततया हेतुना कंचिद्विशेषं परस्परं भेदं नोपलक्षये नकारत्रयेण क्रियाप्यावर्तते तेनोपलक्षणे स्वप्रमादाभावः सूचितः ॥ १४ ॥

गो० टी०–नामित्राणामिति । उदासीनेत्यत्रापि नञनुषज्यते अमित्राणां तवेति शेषः । रामस्यामित्रप्रसङ्गाभावात् यद्वा पौरजनस्यामित्राणां पौरजनस्य मित्राणां च उदासीनजनस्य उदासीनजनापेक्षया आर्ततया हेतुना विशेषं नोपलक्षये कुत्रचित्पुरुषे मित्राणि च न स्वकार्याणि कुर्वन्ति नापि शत्रवोऽपीति भावः ॥ १४ ॥

१५ ] ति० टी०–आर्तस्वरपरिम्लानविनिःश्वसितनिःस्वना दीर्घशब्दवन्निःश्वासयुक्तेति यावत् ॥ १५ ॥

१६-१७ ] ति० टी०–पुत्रहीना पुत्रवियुक्ता कौसल्येव अनेन सर्वेषां रामे पुत्रवत्प्रेम ध्वनितम् ॥ १६-१७ ॥

रा० टी०–अप्रहृष्टेति । न प्रहृष्टाः मनुष्या यस्यां सा दीनाः क्षीणाः नागाः गजाः तुरङ्गमाः अश्वा यस्यां सा आर्तस्वरैः दीनतासूचकशब्दैः परिम्लाना विनिःश्वसितामत्युच्छ्वासानां निःस्वनः शब्दो यस्यां सा अत एव निरानन्दा आनन्दरहिता, तत्र हेतुः रामप्रव्राजनातुरा अयोध्या पुत्रहीना कौसल्येव प्रतिभाति । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

रा० टी०–सुतस्येति । परमदीनया बाष्पोपहतया बाष्पैः उपहतया स्खलितया वाचा सूतमिदं वचनमब्रवीत् ॥ १७ ॥

गो० टी०–अप्रहृष्टमनुष्येत्यादिश्लोकद्वयमेकान्वयम् । विनिःश्वसितनिःस्वना दीर्घनिःश्वासस्वनयुक्ता, यद्वा विनिःश्वसितस्येव निःस्वनो यस्याः सा व्याधिविशेषोपरुद्धनिःश्वासजनवद्विरतहाहाकारयुक्तेत्यर्थः । संनिहितत्वेन कौसल्यां दृष्टान्तीकरोति पुत्रहीना पुत्रवियुक्ता एतावता प्रबन्धेन रामस्य सर्वात्मकता ऋषिणानुसंहितेति प्रबन्धगतवस्तुध्वनिः ॥ १५-१७ ॥

१८ ] ति० टी०–राजा सर्वथा त्वया महदकार्यं कृतमिति सुमन्त्राभिप्रायं तदीयास्युक्तिवचनैर्निर्णीयाङ्गीकारेणोत्तरमाह–कैकेय्येति । पापाभिजनभावया पापकुलजया पापदेशजया पापाभिप्रायया च ' कुलेऽप्यभिजनो जन्मभूम्याम् ' इत्यमरः । विनियुक्तेन रामप्रव्राजने इति शेषः न समर्थितं न विचारितम् ॥ १८ ॥

रा० टी०–तद्वचनमेवाह–कैकेय्येति । पापाभिजनभा-

१ दुःखादिति गो. पाठः । २ मार्गगत इति गो. रा. पाठः । ३ किंचिदिति गो. पाठः । ४ विशेषमुपलक्षये इति गो. पाठः । ५ म्लाना विनिरिति गो. पाठः । ६ मेति गो. पाठः । ७ राजा तं सूतमिदमिति गो. पाठः

न सुहृद्भिर्न चामात्यैर्मन्त्रयित्वा सनैगमैः । मयायमर्थः संमोहात्स्त्रीहेतोः सहसा कृतः ॥ १९ ॥
भवितव्यतया नूनमिदं वा व्यसनं महत् । कुलस्यास्य विनाशाय प्राप्तं सूत यदृच्छया ॥ २० ॥
सूत यद्यस्ति ते किंचिन्मयापि[2] सुकृतं कृतम् । त्वं प्रापयाशु मां रामं प्राणाः संत्वरयन्ति माम् ॥ २१ ॥
यद्यद्यापि ममैवाज्ञा निवर्तयतु राघवम् । न शक्ष्यामि विना रामं मुहूर्तमपि जीवितुम् ॥ २२ ॥
अथवापि महाबाहुर्गतो दूरं भविष्यति । मामेव रथमारोप्य शीघ्रं रामाय दर्शय ॥ २३ ॥
वृत्तदंष्ट्रो महेष्वासः क्वासौ लक्ष्मणपूर्वजः । यदि जीवामि साध्वेनं पश्येयं सीतया सह ॥ २४ ॥

---

वया पापाः क्रूरकर्मविषयकसंमतिदानजनितपापविशिष्टा ये अभिजनाः अभितः समीपे विद्यमानाः जनाः मन्थरादयस्तैः सहभावो नित्यं स्थितिर्यस्यास्तया कैकेय्या विनियुक्तेन प्रार्थितेन मया यद्यपि मन्त्रकुशलैर्दृष्टैः सुहृद्भिः सनैगमैः शास्त्रसंपन्नैरमात्यैश्च सह मन्त्रयित्वा न समर्थितं कृतं रामप्रव्राजनमिति शेषः तथापि अयं रामप्रव्राजनरूपोऽर्थः संमोहादविवेकात्स्त्रीहेतोः सहसा न कृतः न कृतः नञ्द्वयोपादानं दार्ढ्यबोधनाय विवेकादेव कृत इत्यर्थः । वा शब्दो यद्यपीत्यर्थे श्लोकद्वयमेकान्वयि ॥१८-१९॥

गो० टी०—सुमन्त्रे पृष्टस्योत्तरमभिधाय ततोऽधिकं राज्यपुरुषक्षोभादिकं कथयति सति तन्ममाकृत्यकरणद्योतनार्थमिति बुद्ध्याङ्गीकारेणोत्तरमाह—कैकेय्येति । विनियुक्तेन 'प्रतिज्ञां प्रतिजानीष्व यदि त्वं कर्तुमिच्छसि । अथ तद्व्याहरिष्यामि यदभिप्रार्थितं मया' इत्युक्तक्रमेण विशेषेण नियोगं प्रापितेनेत्यर्थः। पापाभिजनभावया पापविषयजन्मभूम्यभिप्राययुक्तया, यद्वा पापो योऽभिजनभावः कुलक्रमागतोऽभिप्रायः स यस्यास्तया ' कुलेऽप्यभिजनो जन्मभूमौ ' इत्यमरः । शंस मे जीव वा मा वा न मामुपहसिष्यसीत्युक्तवत्या मात्रा तुल्यस्वभावयेत्यर्थः । न समर्थितं न विचारितम् ॥ १८ ॥

१९ ] ति० टी०—नञोऽनेकधा प्रयोगः शोकेन चित्तवैक्लव्यात् सहसा झटित्यविचारेणैव ॥ १९ ॥

गो० टी०—न सुहृद्भिरिति । निगमः पुरम् ' पुरं वणिक्पथो वेदो निगमः ' इत्यमरः तत्र भवा नैगमाः तैः अत्रापि नेत्यनुषज्यते अयमर्थः रामप्रवासनरूपार्थः सुहृद्भिर्मन्त्रयित्वा न कृतः अमात्यैश्च मन्त्रयित्वा न कृतः नैगमैश्च मन्त्रयित्वा न कृतः किंतु स्त्रीहेतोः संमोहात् सहसा कृतः ॥ १९ ॥

२० ] ति० टी०—भवितव्यतयावश्यप्रापकदुरदृष्टवशात् वा इति वैसदृश्यसमानार्थम् । यदृच्छया दैवेच्छया ॥ २० ॥

रा० टी०—विवेककरणे हेतुं वदन्नाह—भवितव्यतयेति । यद्यस्माद्राक्षसकुलादस्य मद्बुद्धिस्थस्य ऋषिसमूहस्य महद्व्यसनं दुःखं तस्य कुलस्य विनाशायं भवितव्यतया उपलक्षितया कृच्छ्रया वनगत्या इदं दुःखं प्राप्तम् ॥ २० ॥

गो० टी०—भवितव्यतयेति।अथवा इदं व्यसनं यदृच्छया दृष्टहेतुं विना भवितव्यतया पापेन प्राप्तमिति संबन्धः ॥ २० ॥

२१ ] ति० टी०—यदि यदि वा अथवेति यावत् । सुकृतं प्रियम् । संत्वरयन्ति निष्क्रमितुमिच्छन्तीति यावत् ॥ २१ ॥

रा० टी०—दुःखशान्त्यर्थं यत्नमाह—सूतेति । हे सूत ! यदि ते तुभ्यं किंचित्सुकृतमुपकारः मया कृतमस्ति तर्हि आशु शीघ्रं मां रामं रामसमीपं प्रापय तत्र हेतुः प्राणाः इन्द्रियाणि मां संत्वरयन्ति रामसंदर्शनार्थमिति शेषः ॥ २१ ॥

गो० टी०—सूतेति । ते तुभ्यं सुकृतमुपकारः संत्वरयन्ति निर्जिगमिषन्तीत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—मदाज्ञया भवान्गत्वा राघवं निवर्तयतु । ननु भरताय त्वया राज्यस्य दत्तत्वात्त्वदाज्ञया मया कथं गन्तव्यं तत्राह—अद्यापि ममैवाज्ञा यावद्भरतागमनमिति भावः । निवृत्तौ हेतुः—नेत्यादि ॥ २२ ॥

रा० टी०—प्रापणप्रकारं वदन्नाह—यदीति । यदि अद्यापि ममैवाज्ञा वर्तते इति शेषः तर्हि राघवं रामं निवर्तयतु निवर्त्य मत्समीपे आनयत्वित्यर्थः कश्चिदिति शेषः । ननु किमर्थमेवं त्वरेत्यत आह—रामं विना मुहूर्तमपि जीवितुं स्थातुं न शक्ष्यामि ॥ २२ ॥

गो० टी०—यदीति । अद्यापि अस्यां विपद्यपि ममैवाज्ञा यदि प्रवर्तते तदा राघवं निवर्तय। तुशब्दोऽवधारणे॥२२॥२३॥

२३ ] ति० टी०—पुनरपि रामनिवर्तनस्याशक्यत्वात्स्वनयनमेवाह—अथवापीति ॥ २३ ॥

रा० टी०—पक्षान्तरमाह—अथवेति । अथवा निवर्तनयोग्यजनाभावे अपि यदि महाबाहुः रामः दूरं गतो भविष्यति तदा रामाय रामं प्रापयितुं मामेव रथमारोप्य शीघ्रं दर्शय ॥ २३ ॥

२४ ] ति० टी०—वृत्तदंष्ट्रः कुन्दकुड्मलाकारदंष्ट्रः । यदि जीवामीति तत्समीपगमनपर्यन्तमपि जीवने संदेह इति भावः ॥ २४ ॥

रा० टी०—वृत्तेति । वृत्तदंष्ट्रः कुन्दकुड्मलसदृशदन्तवानसौ रामः क्वास्ति यदि सीतया सह एनं रामं पश्येयं तर्हि साधु यथा स्यात्तथा जीवामि जीवितास्मि वर्तमानसामीप्ये इति भविष्यति लट् ॥ २४ ॥

गो० टी०—वृत्तदंष्ट्र इति । वृत्तदंष्ट्रः कुन्दकुड्मलाकारदंष्ट्रः यदि पश्येयं जीवामीति संबन्धः ॥ २४ ॥

---

१ चेति गो. पाठः । २ त्विति गो. पाठः ।

[लोहिताक्षं महाबाहुमामुक्तमणिकुण्डलम् । रामं यदि न पश्येयं गमिष्यामि यमक्षयम् ॥]
अतो नु किं दुःखतरं योऽहमिक्ष्वाकुनन्दनम् । इमामवस्थामापन्नो नेह पश्यामि राघवम् ॥ २५ ॥
हा राम रामानुज हा हा वैदेहि तपस्विनि । न मां जानीत दुःखेन म्रियमाणमनाथवत् ॥ २६ ॥
स तेन राजा दुःखेन भृशमर्पितचेतनः । अवगाढः सुदुष्पारं शोकसागरमब्रवीत् ॥ २७ ॥
रामशोकमहावेगः सीताविरहपारगः । श्वसितोर्मिमहावर्तो बाष्पवेगजलाविलः ॥ २८ ॥
बाहुविक्षेपमीनोऽसौ विक्रन्दितमहास्वनः । प्रकीर्णकेशशैवालः कैकेयीवडवामुखः ॥ २९ ॥
ममाश्रुवेगप्रभवः कुब्जावाक्यमहाग्रहः । वरवेलो नृशंसाया रामप्रव्राजनायतः ॥ ३० ॥
यस्मिन्बत निमग्नोऽहं कौसल्ये राघवं विना । दुस्तरो जीवता देवि मयायं शोकसागरः ॥ ३१ ॥

रा० टी०—लोहिताक्षमिति । लोहिताक्षमरुणनयनम् आमुक्तानि परित्यक्तानि मणिकुण्डलानि येन तं रामं यदि न पश्यामि तर्हि यमक्षयं यमस्य कालस्य क्षयः अभावो यस्मिंस्तं साकेतलोकं गमिष्यामि ॥ २५ ॥

गो० टी०—लोहिताक्षमिति । आमुक्तमणिकुण्डलं धृतरत्नकुण्डलम् ॥ २५ ॥

२५–२६ ] ति० टी०—अतो न्वित्यतःशब्दार्थमाह—इमामिति । एवमत्यन्तसंनिहितमरणकाले उत्तमलोकदस्वस्मरणाभ्याससंपादनाय भगवतात्मवियोगः पितुः संपादित इति तत्त्वम् ॥ २५ ॥ २६ ॥

रा० टी०—अत इति । इमामवस्थामापन्नः प्राप्तो योऽहमिक्ष्वाकुनन्दनं न पश्यामि तस्य मे अतः अस्माद्दर्शनाभावात्किं दुःखतरं न किमपीत्यर्थः ॥ २६ ॥

गो० टी०—अतो न्विति । न पश्यामीति यत् अतः अदर्शनात् दुःखतरं किंनु किमपि दुःखतरं नास्तीत्यर्थः ॥२६॥२७॥

रा० टी०—हेति । अनाथवद्रक्षकरहितवत् दुःखेन म्रियमाणं मां भवान्न जानीत हा अतिदुःखमेतत् ॥ २७ ॥

२७ ] ति० टी०—अर्पितचेतनो गतचेतनः सुदुष्पारं शोकसागरमवगाढः प्रविष्टः अब्रवीत् । शोकं सागरत्वेनावर्णयदित्यर्थः ॥ २७ ॥

रा० टी०—स इति । तेन रामवियोगजनितेन दुःखेन अर्पितचेतनः निविष्टचित्तः अत एव सुदुष्पारं शोकसागरमवगाढो निमग्नो राजा अब्रवीत् वचनान्तरमुच्चारयामास । 'अर्दितचेतनः' इति भूषणपाठः ॥ २८ ॥

गो० टी०—स तेनेति । दुःखेन तप्तायःपिण्डस्थानीयेन अर्पि(र्दि ?)तचेतनः व्याप्तचित्तः । अवगाढः प्रविष्टः ॥ २८ ॥

२८ ] ति० टी—तदाह—रामेत्यादि । रामशोकरूपो महानावेगो वैपुल्यं यस्य सीताविरहरूपपारगतस्तत्पारसंबन्धः श्वसितरूप ऊर्मियुक्तो महावर्तो यस्य सः बाष्पवेगरूपनदीजलैराविलः ॥ २८ ॥

रा० टी०—वचनान्तरस्वरूपमाह—रामेति । रामशोकमहावेगः रामनिष्ठपित्रादिवियोगहेतुकशोकस्मरणजनितः रामकर्मको वा शोक एव महावेगो यस्मिन् सः सीताविरहपारगः सीताविरहः सीतावियोगजनितशोकः स एव पारः परसमुद्रस्तं गच्छतीति सः सीतावियोगजनितशोकसागरेण सङ्गत इत्यर्थः। श्वसितोर्मिमहावर्तः श्वसितौ ऊर्ध्वाधश्चलितमहाश्वासौ ऊर्मिमहावर्तौ यस्मिन् सः बाष्पवेगजलाविलः बाष्पवेगाः अतिवेगवत्कौशल्याद्यश्रूणि तान्येव जलानि तैः आविलः परिपूर्णः ॥ २९ ॥

गो० टी०—अनुभूयमानस्वशोकस्यापरिमेयत्वात्तं सागरत्वेन रूपयति—रामशोकमहाभोग इत्यादिना । रामशोक एव महानाभोगो वैपुल्यं यस्य स तथा, सीताविरहरूपं पारं गच्छतीति तथा अश्रुवेगस्य प्रभवो मूलहेतुः । सागरो हि वर्षस्य निदानं महाग्रहः अनेन कुब्जावाक्यमेव रामप्रवासनमूलमिति राज्ञा ज्ञातमित्यवगम्यते नृशंसायाः कैकेय्याः वर एव वेला जलवृद्धिर्यस्य रामप्रव्राजनमेवायतमायामो दैर्घ्यं यस्य स तथा । सागरत्वरूपणप्रयोजनमाह—यस्मिन्नित्यादिश्लोकेन ॥ २९–३२ ॥

२९ ] ति० टी०—शोचितॄणां प्रकीर्णकेशा एव शैवालं यत्र कैकेय्येव वडवामुखं यत्र ॥ २९ ॥

रा० टी०—बाहुविक्षेपा एव मीना यस्मिन् सः विक्रन्दितानि नानाविधजनरुदितानि महास्वनाः यस्मिन्सः प्रकीर्णकेशा एव शैवाला यस्मिन्सः कैकेय्येव वडवामुखः शोधकवचनेनापारजलशोषणप्रवृत्तवडवाग्निर्यस्मिन्सः ॥ ३० ॥

३०–३१ ] ति० टी०—अश्रुवेगप्रभवः षष्ठीतत्पुरुषः अश्रुवेगोत्पादक इत्यर्थः । नृशंसायाः कैकेय्याः वर एव वेला मर्यादा यस्य यतो रामप्रव्राजना समुद्रात्कालकूटमिव जातेति कतकः । अन्ये तु—रामप्रव्राजनमेवायतं विस्तारो यस्य स रामप्रव्राजनायत इत्यर्थमाहुः ॥ ३० ॥ ३१ ॥

रा० टी०—ममाश्रुवेगात्प्रभवति इत्पद्यते सः कुब्जाया मन्थरायाः वाक्यमेव महाग्रहः महाग्रहसदृशग्राहको मकरो यस्मिन्सः या नृशंसा मन्थरा सैव वरा उत्तमा वेला मर्यादा यस्मिन् सः रामप्रव्राजनेन आयतः विस्तृतः ॥ ३१ ॥

१ श्लोकोऽयमधिको गो. रा. पाठे । २ पश्यामीति रा. पाठः । ३ महाभोग इति गो. पाठः । ४ फेनेति गो. पाठः । ५ मीनौघ इति गो.पाठः। ६ वेलेति रा. पाठः ।

अशोभनं योऽहमिहाद्य राघवं दिदृक्षमाणो न लभे सलक्ष्मणम् ।
इतीव राजा विलपन्महायशाः पपात तूर्णं शयने स मूर्च्छितः ॥ ३२ ॥
इति विलपति पार्थिवे प्रनष्टे करुणतरं द्विगुणं च रामहेतोः ।
वचनमनुनिशम्य तस्य देवी भयमगमत्पुनरेव राममाता ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

## षष्टितमः सर्गः ।

रामशोकाद्भुवि परिलुठन्त्यै कौसल्यायै रामादीनां धीरोदात्ततया संतापं व्यवधूय वने वासं संवर्ण्यापि सुमन्त्रो न तद्दुःखमपनेतुं शशाक ।

ततो भूतोपसृष्टेव वेपमाना पुनः पुनः । धरण्यां गतसत्त्वेव कौसल्या सूतमब्रवीत् ॥ १ ॥
नय मां यत्र काकुत्स्थः सीता यत्र च लक्ष्मणः । तान्विना क्षणमप्यद्य जीवितुं नोत्सहे ह्यहम् ॥ २ ॥
निवर्तय रथं शीघ्रं दण्डकान्नय मामपि । अथ तान्नानुगच्छामि गमिष्यामि यमक्षयम् ॥ ३ ॥
बाष्पवेगोपहतया स वाचा सज्जमानया । इदमाश्वासयन्देवीं सूतः प्राञ्जलिरब्रवीत् ॥ ४ ॥
त्यज शोकं च मोहं च संभ्रमं दुःखजं तथा । व्यवधूय च संतापं वने वत्स्यति राघवः ॥ ५ ॥

---

रा० टी०–यस्मिन्नहं निमग्नः सोऽयं शोकसागरः राघवं विना जीवता मया दुस्तरः । श्लोकचतुष्टयमेकान्वयि ॥ ३२ ॥

३२ ] ति० टी०–दिदृक्षमाणो यद्राघवं द्रष्टुं न लभे तदशोभनं मम महत्पापम् पापजन्यं तददर्शनमिति यावत् ॥३२॥

रा०टी०–अशोभनमिति । राघवं दिदृक्षमाणो योऽहं न लभे तस्य मे अशोभनमतत् इति प्रलपन्सन् संमूर्च्छितो राजा शयने शय्यायां पपात ॥ ३३ ॥

गो० टी०–अशोभनमिति । न लभ इति यत् इदमशोभनमित्यन्वयः । कविनापि वक्तुमशक्यत्वादिवेत्युक्तम् ॥ ३३ ॥

३३ ] ति० टी०–रामहेतोरिति विलपति पार्थिवे प्रनष्टे मूर्छिते सति तस्य करुणतरं वचनं निशम्य देवी द्विगुणं भयमुपागमत् भर्तृवियोगदुःखस्यापारस्य संभावनया ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

रा० टी०–इतीति । प्रनष्टे परिणतत्वेन प्रतीयमाने पार्थिवे इत्यनेन प्रकारेण करुणतरं रामहेतोः विलपति सति तस्य विलपतो राज्ञः वचनमनुनिशम्य द्विगुणं राजानवधानताभयापेक्षयाधिकं भयं देवी कौसल्याऽगमत् ॥ ३४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनषष्टितमः सर्गः ॥ ५९॥

गो० टी०–इतीति । इति उक्तप्रकारेण रामहेतोः करुणतरं यथा तथा द्विगुणं विलपति पार्थिवे प्रणष्टे मूर्छिते सति देवी पुनरेव भयमगमत् पूर्वं रामस्य किं भविष्यतीति इदानीं भर्तुरपि किं भविष्यतीति भयमगमदित्यर्थः ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

१–२ ] ति० टी०–तत इति । भूतोपसृष्टेव भूताविष्टेव गतसत्त्वेव गतासुरिव धरण्याम् पतितेति शेषः ॥ १ ॥ २ ॥

रा० टी०–कौशल्यावृत्तान्तं वर्णयन्नाह–तत इति । भूतोपसृष्टा भूतेन गृहीतेव पुनः पुनर्वेपमाना गतसत्त्वेव धरण्यां पतिता कौशल्या सूतमब्रवीत् ॥ १ ॥

रा० टी०–तद्वचनस्वरूपमाह–नयेति । काकुत्स्थो रामः यत्रास्ति तत्र मां नय तान् विना जीवितुं स्थातुं नोत्सहे ॥ २॥

गो० टी०–तत इति । भूतोपसृष्टेव धरण्यां वेपमाना भूतगृहीतेव भूमौ पतित्वा विवर्तमानेत्यर्थः । गतसत्त्वेव गतप्राणेव 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः ॥१॥२॥

३–४ ] ति० टी०–अथ यदि ॥ ३ ॥ ४ ॥

रा० टी०–निवर्तयेति । रथं शीघ्रं निवर्तय रामसंज्ञकं कुरु अथ यदि तान् रामादीन्नानुगच्छामि तदा यमक्षयं कालागम्यं साकेतं गमिष्यामि ॥ ३ ॥

गो० टी०–निवर्तयेति । अथ तान्नानुगच्छामि तान्नानुगच्छामि चेत् ॥ ३ ॥

रा० टी०–बाष्पेति । सज्जमानया रामसंलग्नया अत एव बाष्पवेगेन उपहतया स्खलन्त्या वाचा देवीमाश्वासयन्निदमब्रवीत् ॥ ४ ॥

गो० टी०–बाष्पवेगेति । सज्जमानया विक्लवया ॥ ४ ॥

५ ] ति० टी०–संभ्रममावेगम् ॥ ५ ॥

रा० टी०–तद्वचनस्वरूपमाह–त्यजेति । दुःखजं संभ्रमं च त्यज तत्र हेतुः संतापं प्रातिभासिकमात्रादिवियोगजनितदुःखं व्यवधूय दूरीकृत्य राघवो वने वत्स्यति ॥ ५ ॥

---

१ अत्रेति गो. पाठः ।

लक्ष्मणश्चापि रामस्य पादौ परिचरन्वने । आराधयति धर्मज्ञः परलोकं जितेन्द्रियः ॥ ६ ॥
विजनेऽपि वने सीता वासं प्राप्य गृहेष्विव । विस्रम्भं लभतेऽभीता रामे [1]विन्यस्तमानसा ॥ ७ ॥
नास्या दैन्यं कृतं किंचित्सुसूक्ष्ममपि लक्ष्यते । उचितेव प्रवासानां वैदेही प्रतिभाति [2]मे ॥ ८ ॥
नगरोपवनं गत्वा यथा स्म रमते पुरा । तथैव रमते सीता निर्जनेषु वनेष्वपि ॥ ९ ॥
बालेव रमते सीताबालचन्द्रनिभानना । रामा रामे ह्यदीनात्मा विजनेऽपि वने सती ॥ १० ॥
तद्गतं हृदयं यस्यास्तदधीनं च जीवितम् । अयोध्या [3]हि भवेदस्या रामहीना तथा वनम् ॥ ११ ॥
[4]परिपृच्छति वैदेही ग्रामांश्च नगराणि च । गतिं दृष्ट्वा नदीनां च पादपान्विविधानपि ॥ १२ ॥
रामं वा लक्ष्मणं वापि [5]दृष्ट्वा जानाति जानकी । अयोध्या क्रोशमात्रे तु विहारमिव साश्रिता ॥ १३ ॥

---

गो० टी०—त्यजेति । मोहं रामस्य किं भविष्यतीत्यज्ञानं संभ्रमं व्याकुलत्वं संतापं शोकजनितदेहसंतापं रामो दुःखितो भविष्यतीति संतापमित्यर्थः । यस्माद्राघवः संतापं व्यवधूय वत्स्यति तस्माच्छोकादिकं त्यजेत्यन्वयः ॥ ५ ॥

६ ] ति० टी०—रामस्य पादौ परिचरन्परलोकमाराधयाति संपादयति ॥ ६ ॥

रा० टी०—लक्ष्मण इति । रामस्य पादौ परिचरन्स परलोकं परः सर्वोत्कृष्टः यो लोको जनः तं परमपुरुषमित्यर्थः किंच परः सर्वोत्कृष्टः लोक्यते दृश्यते असौ स तं किंच परः सर्वोत्कृष्टः लोको यस्य स तं साकेताधीशमित्यर्थः आराधयति निषेवते ॥ ६ ॥

गो० टी०—लक्ष्मण इति । परलोकमाराधयति परलोकं साधयति राधसाधसंसिद्धाविति धातुः ॥ ६ ॥

७ ] ति० टी०—अभीतेति च्छेदः विस्रम्भः प्रणयः ॥ ७ ॥

रा० टी०—विजने इति । वनेऽपि वा संप्राप्य रामे विन्यस्तमानसा अत एव अभीता सीता गृहेष्विव विश्रम्भं प्रणयं लभते 'विश्रम्भः प्रणयेऽपि च' इत्यमरः ॥ ७ ॥

गो० टी०—विजन इति । लभते भीतेत्यत्र अभीतेति पदच्छेदः विस्रम्भं प्रणयम् 'विस्रम्भः प्रणयेऽपि च' इत्यमरः ॥ ७ ॥

८–९ ] ति० टी०—कृतं वनवासकृतं दैन्यमित्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—नेति । अस्याः सीतायाः कृतं सुसूक्ष्ममपि किंचिद्दैन्यं न लक्ष्यते अत एव प्रवासानामुचिता योग्या प्रतिभात्येव । इव एवार्थे ॥ ८ ॥

रा० टी०—नगरेति । पुरा पूर्वं नगरोपवने गत्वा यथा रमते स्म तथैव निर्जनेष्वपि वनेषु रमते ॥ ९ ॥

गो० टी०—नास्या इति । कृतं वनवासकृतम् किंचिदित्यस्य विवरणं सुसूक्ष्ममिति । प्रवासानामुचितेव प्रवासानां योग्येव अभ्यस्तवनवासप्रयासेवेत्यर्थः ॥ ८ ॥ ९ ॥

१० ] ति० टी०—बालेवेति दुःखापरिज्ञानेनोपमा तस्या देहाद्यभिमानाभावान्नाधिजं दुःखमिति भावः । अबालचन्द्रेत्यादिच्छेदः । रामारामे रामरूपे आराम इत्यर्थः, भिन्नपदे वा ॥ १० ॥

रा० टी०—तदत्र भङ्ग्यन्तरेणाह—बालेति । अबालचन्द्रनिभानना अबालचन्द्रः पूर्णचन्द्रस्तत्सदृशाननविशिष्टा किंवा बालचन्द्रं निभाति प्रकाशयति तदाननं यस्याः सा रामा सीता रामे रामसमीपे बालेव रमते ॥ १० ॥

गो० टी०—बालेति । क्रीडैकरसत्वाद्बालदृष्टान्तः दुःखापरिज्ञाने वा बालदृष्टान्तः । अबालचन्द्रनिभाननेतिच्छेदः । रामे अधीनात्मा सक्तचित्तेत्यर्थः । यद्वा रामारामे रामरूपारामे ॥ १० ॥

११ ] ति० टी०—रामहीनायोध्या यथा वनं तथा भवेदित्यन्वयः ॥ ११ ॥

रा० टी०—तदिति । यस्याः सीतायाः हृदयं तद्गतं नित्यं रामं प्राप्तमत एव यस्याः जीवितं तदधीनं रामायत्तं तस्याः अस्याः सीतायाः रामहीना अयोध्या यथा वनं तथा भवेत् एतेन सीतासुखे रामसन्निधिरेव कारणमिति ध्वनितं तेन सीताया अतिसुखात्वं व्यञ्जितम् ॥ ११ ॥

गो० टी०—तद्गतमिति । यद्यस्मात्कारणात् अस्याः सीतायाः हृदयं तद्गतं रामगतं जीवितं च तदधीनं तस्माद्वनं रामसहितम् अयोध्या भवेत् रामहीना अयोध्यापि तथा वनं भवेदित्यर्थः ॥ ११ ॥

१२–१३ ] ति० टी०—नदीनां गतिं रामनगरवृक्षांश्च दृष्ट्वा रामं वा लक्ष्मणं वा पृच्छति पृष्ट्वा च जानाति अयोध्यातः क्रोशमात्रे विद्यमानं विहारं संश्रिता यथा रमते स्म तथैव वनेऽप्यरमतेत्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०—वैदेहीसुखज्ञापकचिह्नानि वदन्नाह—परीति । वैदेही विदेहकुलप्रादुर्भूता जानकी रामं लक्ष्मणं वा ग्रामादीन् परिपृच्छति नदीनां गतिं विलक्षणगमनं च दृष्ट्वा परिपृच्छति पृष्ट्वा जानाति तत्कथनेन निश्चिनोति अतः अयोध्याक्रोशमात्रे एव विद्यमानं विहारं विहरणोपवनमिव संश्रिता संप्राप्ता विहारशब्दोऽधिकरणघञन्तः । श्लोकद्वयमेकान्वयि एवार्थे ॥ १२ ॥ १३ ॥

गो० टी०—पथीत्यादिना सीतायाः उल्लास उच्यते दृष्ट्वेति

---

१ संन्यस्तेति गो. पाठः । २ मेति गो. पाठः । ३ ऽपीति गो. पाठः । ४ पथीति गो. पाठः । ५ पृष्ट्वेति गो. रा. पाठः ।

इदमेव स्मराम्यस्याः सहसैवोपजल्पितम् । कैकेयीसंश्रितं जल्पं नेदानीं प्रतिभाति माम् ॥ १४ ॥
ध्वंसयित्वा तु तद्वाक्यं प्रमादात्पर्युपस्थितम् । ह्लादनं वचनं सूतो देव्या मधुरमब्रवीत् ॥ १५ ॥
अध्वना वातवेगेन संभ्रमेणातपेन च । न विगच्छति वैदेह्याश्चन्द्रांशुसदृशी प्रभा ॥ १६ ॥

सर्वत्रान्वेति रामं लक्ष्मणं वा पृच्छति पृष्ट्वा जानाति च अयोध्यायाः क्रोशमात्रे विहारं क्रीडां संश्रितेव स्थिता, यद्वा विहरन्त्यस्मिन्निति विहारः तम् । अधिकरणे घञ् उद्यानमित्यर्थः॥१२॥१३

१४–१६ ] ति० टी०–इदमेव सीतायाः संबन्धीदमेव प्रस्तुतवृत्तान्तजातमेव स्मरामि । कैकेयीसंश्रितं कैकेयीमुद्दिश्य प्रवृत्तम् । सहसा हठेन । सीतया तस्याः परमदुःखकारिणीत्वान्मां प्रति यत्तद्विषयं जल्पं वाक्यमुपजल्पितमुक्तं तदिदानीं मां न प्रतिभात्येवेत्येवंरूपेण प्रमादात्पर्युपस्थितं मुखान्निर्गतं कैकेयीविषयं सीतावाक्यं ध्वंसयित्वा व्यवहारान्तरेणानुक्तप्रायमिव कृत्वा देव्याः कौसल्याया ह्लादनं मधुरं वचनं सूतोऽब्रवीदित्याह कविः ॥ १४–१६ ॥

रा० टी०–इदमिति । अस्याः सीताया इदं रामसंयोगजनितसुखसूचकाचरणमेव स्मरामि अत एव जल्पितं तदेव कथितमत एव कैकेयीसंश्रितं कैकेय्युद्देश्यकमुपजल्पितं मन्थरया प्रदर्शितं जल्पमनेकविधवचनं मां न प्रतिभाति एतेन सीतासुखदर्शनेनास्माकं सर्वं दुःखं प्रनष्टमिति व्यञ्जितं तेन भवत्यापि सीतासुखमन्तरान्यन्न स्मर्तव्यमिति सूचितम् ॥१४॥

रा० टी०–ध्वंसयित्वेति । प्रमादाद्रामवियोगजनितग्लानेः पर्युपस्थितं संस्मृतं तत्प्रव्रजनबोधकं वाक्यं मन्थरासंमतिजनितकैकयीवचनं ध्वंसयित्वा सीतासुखस्मारणेन विस्मार्य देव्याः कौशल्याया ह्लादनं सुखप्रापकं मधुरवचनं सूतोऽब्रवीत् ॥ १९ ॥

गो० टी०–अयोध्यानिर्गमकालिकं ककेयीविषयकं सीतायाः परुषं वचनं कौसल्यायाः प्रियमिति वक्तुमुपक्रम्य तस्य हृदयोर्जीवननिराशहेतुत्वं मत्वा नोचितमिदं वक्तुमित्यस्मरणव्याजेनोपारमतेत्याह–इदमेवेत्यादि । अस्याः सीतायाः संबन्धि इदमेव स्मरामि प्रस्तुतवृत्तान्तमेव स्मरामि कैकेयीसंश्रितं कैकेयीमुद्दिश्य प्रवृत्तं सहसा उपजल्पितं हठात्सीतयोक्तं वाक्यम् इदानीं मा मां प्रति न भातीति सूतः प्रमादात् इदं गोपनीयमित्यवधानाभावात् पर्युपस्थितं सीतावचनत्वेन वक्तुमुपक्रान्तं तद्वाक्यं ध्वंसयित्वा प्रच्याव्य देव्याः ह्लादनम् आह्लादनकरम् उपक्रान्तवाक्यवदेव्याः संतापाहेतुभूतं मधुरं वचनमब्रवीदिति पदयोजना । सहसा त्वरया उपजल्पितम् अक्रमेणोक्तमित्यस्मरणहेतुप्रदर्शनं कैकेयीसंश्रितमित्युपक्रान्तांशः इदं स्मरामीति पुनः स्मरेति चोदनावकाशाप्रदानम् इदानीं भवदुःखदर्शनसमये मा मां प्रति न भातीति ध्वंसनप्रकारः । ध्वंसनहेतुं कविरनुवदति ध्वंसयित्वा तु तद्वाक्यं प्रमादात् पर्युपस्थितमिति । ह्लादनमित्यनेनोपस्थितवचनस्य तापहेतुत्वं द्योत्यते । ननु कैकेयीनिन्दारूपत्वेऽपि देव्यास्तापकारणमवश्यं गोपनीयं कीदृशं तद्वाक्यं स्यात्किंचिदिदमित्युक्तौ तव किं प्रमाणं स्यात् उच्यते अवधेहि एवंविधं हि कार्यवशात् गुप्तं कुत्रचित्कविर्निवृणोति चेत् सर्वशोऽपि तत्कथमिदमित्यभिदध्यात् अत्रेमं च प्रमादादुपस्थितं ध्वंसितं हृदयोः संतापकरं कैकेयीविषयकं वृत्तान्तं कविरुत्तरत्र व्यक्तीकरिष्यति युद्धकाण्डे सीतामधिकृत्य निजगर्हेऽत्र कैकेयीं क्रोशन्ती कुररी यथा इत्युक्त्वा । कैकेयीविषयकं सीतावचनमेवाह–'सकामा भव कैकेयि हतोऽयं कुलनन्दनः' इति इदं सीताहृदयं कैकेय्याः राज्यलाभेनैवाभीष्टसिद्धेः रामविवासनाभ्यर्थनस्येदमाकूतं रामविवासने हि तद्वियोगं क्षणमपि सोढुमक्षमा सीताप्येनमनुगच्छेत् सा च लोकोत्तरसुन्दरी केनाप्यपह्रियेत तस्यां च हृतायां रामः स्वत एव नश्येत् ततो मे राज्यं सुप्रतिष्ठितं स्यात् अन्यथा लब्धेनापि राज्येन न किंचित्प्रयोजनं यतो रामगुणपरवशः सर्वोऽपि जनः तद्विधेयः स्यात् तस्माद्रामोऽपि विनाशाय विवासनीय इति इदमेव सीतोक्तं रामोऽप्यारण्यकाण्डे सुप्रमत्तकुपितानां वचनैर्भावज्ञानं दृष्टमिति न्यायेन वक्ष्यति 'कच्चित्सकामा कैकेयी सुखिता सा भविष्यति । या न तुष्यति राज्येन पुत्रार्थे दीर्घदर्शिनी ॥ अन्यत्र च 'यदभिप्रेतमस्मासु प्रियं वरवृतं च यत् । कैकेय्यास्तत्सुसंवृत्तं क्षिप्रमद्यैव लक्ष्मणे' इति ॥ इममेवार्थं पूर्वसर्गान्ते सूचितवान् 'जानकी तु महाराज निःश्वसन्ती तपस्विनी। भूतोपहतचित्तेव विष्ठिता विस्मिता स्थिता ॥ अदृष्टपूर्वव्यसना राजपुत्री यशस्विनी । तेन दुःखेन रुदती नैव मां किंचिदब्रवीत् ॥ उद्वीक्षमाणा भर्तारं मुखेन परिशुष्यता । मुमोच सहसा बाष्पं मां प्रयान्तमुदीक्ष्य सा' इति ॥ अत्र रोदनमवचनं परिशुष्यता मुखेन भर्तृवीक्षणं पुनः सुमन्त्रवीक्षणं बाष्पमोचनं च कुर्वन्त्या पूर्वोक्तार्थस्मरणम् तत एव स्तब्धता भर्तृमुखवीक्षणेन वक्तुमनर्हत्वज्ञानं बाष्पमोचनेन सूतवीक्षणेन च श्वश्रूं प्रत्यकथनीयत्वद्योतनं चेति व्यज्यते । तत्र सीतयोक्तं प्रामादिकमिति जुगोप अत्र तु स्वस्यैव प्रमादोत्थं व्याजेन परिहृतवान् ॥ १४ ॥ १९ ॥

रा० टी०–तद्वचनस्वरूपमाह–अध्वनेति । अध्वना अध्वगमनजनितश्रमेण वातवेगेन अतिवायुप्रवाहेण च संभ्रमेण भयहेतुभूतव्याघ्रादिदर्शनेन च आतपेन घर्मेण च वैदेह्याः प्रभा न विगच्छति परिणामं प्राप्नोति ॥ १६ ॥

गो० टी०–अध्वनेति । अध्वना अध्वगमनेन संभ्रमेण व्याघ्रादिदर्शनजन्यव्याकुलत्वेन न विगच्छति न विकरोति॥१६॥

१ वाक्यमिति गो.पाठः । २ मेति गो. पाठः ।

सदृशं शतपत्रस्य पूर्णचन्द्रोपमप्रभम् । वदनं तद्वदान्याया वैदेह्या न विकम्पते ॥ १७ ॥
अलक्तकरसरक्ताभावलक्तकरसवर्जितौ । अद्यापि चरणौ तस्याः पद्मकोशसमप्रभौ ॥ १८ ॥
नूपुरोत्कृष्टलीलेव खेलं गच्छति भामिनी । इदानीमपि वैदेही तद्रागान्यस्तभूषणा ॥ १९ ॥
गजं वा वीक्ष्य सिंहं वा व्याघ्रं वा वनमाश्रिता । नाहारयति संत्रासं बाहू रामस्य संश्रिता ॥ २० ॥
न शोच्यास्ते न चात्मा ते शोच्यो नापि जनाधिपः । इदं हि चरितं लोके प्रतिष्ठास्यति शाश्वतम् ॥ २१ ॥
विधूय शोकं परिहृष्टमानसा महर्षियाते पथि सुव्यवस्थिताः ।
वने रता वन्यफलाशनाः पितुः शुभां प्रतिज्ञां प्रतिपालयन्ति ते ॥ २२ ॥

---

१७ ] ति० टी०—वदान्याया दात्र्या वल्गुवाचश्च 'वदान्यो वल्गुवागपि' । न विकम्पते म्लानतां न याति ॥ १७ ॥

रा० टी०—सदृशमिति । शतपत्रस्य कमलस्य सदृशं सदृशत्वेन प्रतीयमानं पूर्णचन्द्रेण उपमा उपमेया प्रभा यस्य तद्वदान्याया मधुरवचनशीलायाः वैदेह्याः वदनं मुखं न विकम्पते कदाचिदपि परिणतिं न प्राप्नोतीत्यर्थः । उपमाशब्दः कर्मप्रत्ययान्तः 'वदान्यो वल्गुवागपि' इत्यमरः ॥ १७ ॥

गो० टी०—सदृशमिति । शतपत्रस्य पद्मस्य पूर्णचन्द्रोपमप्रभं पूर्णचन्द्रसदृशप्रभं वदान्यायाः वल्गुवाचः 'वदान्यो वल्गुवागपि' इत्यमरः । न विकम्पते न विचलति स्वाभाविकप्रभां न जहातीत्यर्थः ॥ १७ ॥

१८ ] ति० टी०—अलक्तकरसवर्जितावपि तद्रसरक्तकान्ती स्वभावरक्ततया पद्मकोशसमप्रभौ न तु मार्गगतिप्रसक्तकाठिन्यभाजा ॥ १८ ॥

रा० टी०—अलक्तेति । अलक्तकरसेन वर्जितौ रहितावपि तस्याः चरणौ अलक्तकरसरक्ताभौ अलक्तकरसरक्ताभसदृशाभाविशिष्टौ अद्यापि पादचारेण वनगमनेऽपि दृश्येते इति शेषः ॥ १८ ॥

गो० टी०—अलक्तकरसरक्ताभाविति—अद्यापि वनगमनेऽपि ॥ १८ ॥

१९ ] ति० टी०—नूपुरेणोत्कृष्टा तिरस्कृता हंसादिलीला यया सेव खेलं विलासयुतम् अर्शआद्यजन्तम् । तद्रागेण भर्तृप्रीतियोजकभूषणानुरागेणान्यस्तान्यत्यक्तानि भूषणानि यया ॥ १९ ॥

रा० टी०—नूपुरेति । तस्मिन् रामे यो रागोऽत्यनुरागस्तेन अन्यस्तानि अपरित्यक्तानि भूषणानि यया सा अत एव नूपुरोत्कृष्टलीला नूपुराभ्यामुत्कृष्टा हंसादिलीलातिरस्कारिकात्वेनातिश्रेष्ठा लीला यस्याः सा भामिनी वैदेही खेलं सविलासमेव यथा स्यात्तथा इदानीं वनाध्वन्यपि गच्छति 'उद्घुष्टहेलेव' इति भूषणपाठः ॥ १९ ॥

गो० टी०—नूपुरेति । तद्रागात् भूषणविषयस्नेहात् न्यस्तभूषणा चरणाद्यवयवेष्वर्पितभूषणा वैदेही नूपुरोद्घुष्टहेलेव नूपुरोत्पन्नस्वनानुकारिलीलायुक्तेव खेलं सलीलं गच्छति सीतायाः सर्वदा साभरणत्वं मन्ये साभरणा सुप्ता सीतास्मिन् शयनोत्तम इत्युत्तरत्र भरतवचनादवगम्यते यद्वा तद्रागात् रामेण सह गमनकौतुकात् न्यस्तभूषणा उत्सृष्टनूपुराऽपि नूपुरोत्कृष्टहेलेव नूपुरखचितविलासेव ॥ १९ ॥

२० ] ति० टी०—नाहारयति न करोति न संप्राप्नोतीति वा ॥ २० ॥

रा० टी०—गजमिति । वनमाश्रिता प्राप्ता सीता रामस्य बाहू संश्रिता सती गजादिकं वीक्ष्य संत्रासं नाहारयति प्राप्नोति ॥ २० ॥

गो० टी०— गजमिति । गजं दर्शनमात्रेण भीषणमहाकायं वीक्ष्य न तु श्रुत्वा सिंहं तमपि तृणाय मत्वा व्याघ्रं वा जन्तुमात्रहिंसकतया सिंहादप्यतिक्रूरं सिंहदर्शनादपि व्याघ्रदर्शनमतिक्रूरमिति न तत्प्रकर्षः वनमाश्रिता विनापि सिंहादीन् स्वत एव भयंकरं प्रदेशमवगाहमानापि नाहारयति नारोपयति आहारयतेरारोपार्थकत्वात् भयभावना मात्रमपि न करोतीत्यर्थः। नाहारयति संत्रासं स्त्रीत्वप्रयुक्तस्वाभाविकभीतिरपि निर्गता तत्र हेतुमाह—बाहू रामस्य संश्रिता परिवान्तर्गताः किं बिभ्यतीति भावः ॥२०॥

२१ ] ति० टी०—अतस्ते रामादयो न शोच्याः ते तवात्माप्यत एव न शोच्यः । न राजापि तेषां सुखश्रवणेन तस्यापि जीवनसंभवात् । इतोऽपि न शोच्यांश इत्याह—इदं हीत्यादि । प्राप्तमपि राज्यं महाबलोऽपि परित्यज्य पितृवचनमपालयदित्येवमादि रामचरितं स्वार्थबुद्धिंस्य भर्तारमपि परित्यज्यातिघोरं कृतवती कैकेयीत्यादि इदं रामचरितं शाश्वतं प्रतिष्ठास्यतीत्यनेन तन्नामवदेवास्य सुस्थिरत्वं वदता तस्येश्वरत्वं ध्वनितम् न ह्यन्यचरित्रं शाश्वतं प्रतिष्ठां लभते ॥ २१ ॥

रा० टी०—नेति । हि सर्वेषां सुखित्वाद्धेतोः ते रामादयो न शोच्या अतस्ते आत्मा देहोऽपि न शोच्यः अत एव जनाधिपो राजाऽपि न शोच्यः एतेन त्वदादीनां तत्सुखसुखित्वमुचितमिति ध्वनितम् । रामसुखेहेतुमाह—इदं चरितं परमधर्महेतुकरामाचरणं शाश्वतं बहुकालं लोके सर्वभुवने प्रतिष्ठास्यति अतिप्रतिष्ठां प्राप्स्यतीत्यर्थः ॥ २१ ॥

गो० टी०—नशोच्या इति । ते रामादयः आत्मानो वयम् इदं चरितं पितृवचनपरिपालनरूपं चरित्रं शाश्वतम् आचन्द्रार्कम् ॥ २१ ॥

२२ ] ति० टी०—महर्षिभिर्याते ॥ २२ ॥

---

१ उद्घुष्टहेलेवेति गो. पाठः । २ आत्मान इति गो. पाठः ।

तथापि सूतेन सुयुक्तवादिना निवार्यमाणा सुतशोककर्शिता ।
न चैव देवी विरराम कूजितात्प्रियेति पुत्रेति च राघवेति च ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ।

पतिव्रतावरिष्ठापि कौसल्या पुत्रशोकासहिष्णुतया तद्दुरवस्थां संभावयन्ती दशरथमुपालभते ।

वनं गते धर्मरते रामे रमयतां वरे । कौसल्या रुदती चार्ता भर्तारमिदमब्रवीत् ॥ १ ॥
यद्यपि त्रिषु लोकेषु प्रथितं ते महद्यशः । सानुक्रोशो वदान्यश्च प्रियवादी च राघवः ॥ २ ॥
कथं नरवरश्रेष्ठ पुत्रौ तौ सह सीतया । दुःखितौ सुखसंवृद्धौ कथं दुःखं सहिष्यतः ॥ ३ ॥
सा नूनं तरुणी श्यामा सुकुमारी सुखोचिता । कथमुष्णं च शीतं च मैथिली विसहिष्यते ॥ ४ ॥

---

रा० टी०—विधूयेति । शोकं पित्रादिवियोगजनितं विधूय त्यक्त्वा महर्षियाते महर्षिभिः सेविते पथि सुव्यवस्थिताः अत एव परिहृष्टमानसास्ते रामादयः पितुः शुभां प्रतिज्ञां प्रतिपालयन्ति ॥ २२ ॥

गो० टी०—विधूयेति । महर्षियाते महर्षिभिः प्राप्ते ॥२२॥

२३ ] ति० टी०—तथाऽपीति । सूतेन निवार्यमाणा सूतोक्तं गृहीतवत्यपि न विरराम दुःखप्राबल्यादिति शेषः ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०—तथेति । सुयुक्तवादिना न्याय्यकथनशीलेन सूतेन यद्यपि निवार्यमाणा देवी कौशल्या तथापि सुतशोककर्षिता सती प्रियेत्यादिकूजिताच्छब्दान्नैव विरराम ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षष्टितमः सर्गः ॥ ६० ॥

गो० टी०—तथापीति । तथापीत्युक्तं विवृणोति—सूतेनेत्यादिना सुयुक्तवादिना सूतेन तथा निवार्यमाणापि सुतशोककर्शितत्वात् देवी प्रियेत्यादिकूजितान्न विरराम ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने अयोध्याकाण्डव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

१ ] ति० टी०—परमपतिव्रतापि कौसल्या दुःखातिशयात्पूर्वं जानत्यपि त्रेताश्रयव्यवहारवल्लोकाश्रयेण राजानमुपालभते—वनमिति । आर्ता खिन्ना । 'स्वार्ता' इति पाठे सुतरामार्ता 'रुदतीव' इति पाठे इव एवार्थे, यद्वा उक्तार्थध्वननायेव-शब्दः ॥ १ ॥

रा० टी०—राजानं प्रति कौसल्योक्तिं वर्णयितुमाह—वनमिति । रमयतां वरे रामे वनं गते सति रुदती कौसल्या भर्तारमब्रवीत् ॥ १ ॥

गो० टी०—वनमिति । स्वार्ता सुतरामार्ता ॥ १ ॥

२ ] ति० टी०—अनुक्रोशादिविशिष्टो राघव इति ते महद्यशः प्रथितमिति योजना ॥ २ ॥

३ ] ति० टी०—अथापि हे नरवरश्रेष्ठ ! सीतया सह तौ पुत्रौ कथं त्यक्तवानिति शेषः । अथ ताञ्शोचति—दुःखितावित्यादि । दुःखं प्राप्तावित्यर्थः ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—यद्यपीति । सानुक्रोशोऽतिदयावान् वदान्योऽतिवक्ता प्रियवादी प्रीत्युत्पादकवचनवान् राघवो दशरथोऽस्तीति ते महद्यशः यद्यपि त्रिषु लोकेषु विदितं तथापि सीतया सह तौ पुत्रौ कथमत्यज इति शेषः अनुचितं कृतमिति तात्पर्यम् । त्यागे दोषमाह—सुखसंवृद्धौ रामलक्ष्मणौ दुःखितौ प्राप्तपित्रादिवियोगजनितदुःखविशिष्टौ सन्तौ दुःखं वनवासजनितखेदं कथं सहिष्यतः एतेनायं त्यागस्तव यशोदूषक इव प्रतिभातीति ध्वनितम् । श्लोकद्वयमेकान्वयि॥२॥३॥

गो० टी०—यद्यपीति । राघवः दशरथः सानुक्रोशः वदान्यश्च प्रियवादी चेति ते महद्यशः त्रिषु लोकेषु प्रथितं यद्यपि तथापि अतिशयितताऽपयशस्करं कृत्यं कृतमिति वाक्यशेषः। तथापि दुःखितौ मार्गे दुःखितौ तौ वने कथं दुःखं सहिष्यत इति वक्ष्यमाणेनान्वयो वा यद्वा वार्द्धके नानाव्रतोपवासादिमहाप्रयासलब्धं ज्येष्ठमपि पुत्रमभिषेककाले त्यक्त्वापि प्रतिज्ञां निरूढवानिति ते महद्यशस्त्रिषु लोकेषु यद्यपि प्रथितं भवति राघवश्च वदान्यतया दयया प्रियवचनशीलतया मह्यं वाचा पूर्वं दत्तं राज्यं न त्यजामीति वक्तुमक्षमतया च राज्यं दत्तवान् अतस्तस्यापि महद्यश इति युवयोरिदं युक्तमस्तु तथापि तौ कथं दुःखं सहिष्यत इति योजना ॥ २ ॥ ३ ॥

४ ] ति० टी०—तरुण्यतिक्रान्तकौमारा श्यामा प्राप्तयौवना ॥ ४ ॥

रा० टी०—सेति । श्यामाषोडशवर्षपरिमितात्वेन प्रतीयमाना मैथिली उष्णादिकं कथं विसहिष्यते ॥ ४ ॥

---

१ परे इति गो. पाठः । २ स्वार्तेति गो. रा. पाठः । ३ वने इति गो. पाठः । ४ प्रेति गो. पाठः ।

भुक्त्वाशनं विशालाक्षी सूपदंशान्वितं शुभम् । वन्यं नैवारमाहारं कथं सीतोपभोक्ष्यते ॥ ५ ॥
गीतवादित्रनिर्घोषं श्रुत्वा शुभसमन्विता । कथं क्रव्यादसिंहानां शब्दं श्रोष्यत्यशोभनम् ॥ ६ ॥
महेन्द्रध्वजसंकाशः क नु शेते महाभुजः । भुजं परिघसंकाशमुपाधाय महाबलः ॥ ७ ॥
पद्मवर्णं सुकेशान्तं पद्मनिःश्वासमुत्तमम् । कदा द्रक्ष्यामि रामस्य वदनं पुष्करेक्षणम् ॥ ८ ॥
वज्रसारमयं नूनं हृदयं मे न संशयः । अपश्यन्त्या न तं यद्वै फलतीदं सहस्रधा ॥ ९ ॥
यत्त्वया करुणं कर्म व्यपोह्य मम बान्धवाः । निरस्ताः परिधावन्ति सुखार्हाः कृपणा वने ॥ १० ॥
यदि पञ्चदशे वर्षे राघवः पुनरेष्यति । जह्याद्राज्यं च कोशं च भरतो नोपलक्ष्यते ॥ ११ ॥

गो० टी०—सा नूनमिति । तरुणी आरब्धयौवना श्यामा यौवनमध्यस्था एतत् पदद्वयोपादानेनेषन्न्यूनयौवनमध्यं प्राप्तेत्यवगम्यते । पाठभेदः श्यामा तरुणी यौवनमध्यस्था तरुणी न तु यौवनारम्भस्था तरुणीत्यर्थः ॥ ४ ॥

५-६ ] ति० टी०—सूपदंशान्वितं शोभनव्यञ्जनसहितं नैवारं नीवारसंबन्धिनम् ॥ ५ ॥ ६ ॥

रा० टी०—भुक्त्वेति । सूपदंशं शोभनव्यञ्जनयुक्तमशनं भोज्यपदार्थं भुक्त्वा नैवारं नीवारसंबन्धि वन्यमाहारं कथमुपभोक्ष्यते ॥ ५ ॥

गो० टी०—भुक्त्वाशनमिति । सूपदंशान्वितं शोभनव्यञ्जनसहितं नैवारं नीवारसंबन्धिनम् ॥ ५ ॥

रा० टी०—गीतेति । गीतादिकं श्रुत्वा क्रव्यादसिंहानां मांसमात्रभक्षककेसरिणामशोभनं शब्दं कथं श्रोष्यति ॥ ६ ॥

गो० टी०—गीतवादित्रनिर्घोषमिति । क्रव्यादाः मांसभक्षकाः ॥ ६ ॥

७ ] ति० टी०—महेन्द्रध्वजसंकाशस्तद्वत्सर्वलोकस्योत्सवदः ॥ ७ ॥

रा० टी०—महेन्द्रेति । महेन्द्रध्वजसंकाशः सर्वोत्सवदातृत्वेन महेन्द्रध्वजसदृशः महाभुजो रामः परिघसकाशं भुजमुपधाय उपबर्हणत्वेन निधाय क शेते ॥ ७ ॥

गो० टी०—महेन्द्रध्वजसंकाश इति । महेन्द्रध्वजो नाम इन्द्रधनुः कदाचित् ध्वजाकारेण परमाभ्युदयनिमित्ततया प्रतिभातीत्याहुः ॥ ७ ॥

८ ] ति० टी०—पद्मवर्णं पद्मदलवर्णं पद्मनिःश्वासं पद्मपत्रगन्धिनिःश्वासम् ॥ ८ ॥

रा० टी०— पद्मेति । पद्मवर्णं पद्मवद्वर्ण्यते कविभिर्गीयते तत् सुकेशान्तं सुकेशपर्यन्तं पद्मनिःश्वासं पद्मसुगन्धसदृशसुगन्धविशिष्टनिःश्वासविशिष्टं पुष्करेक्षणं कमलसदृशनेत्रविशिष्टं रामस्य वदनं मुखं कदा द्रक्ष्यामि ॥ ८ ॥

गो० टी०—पद्मवर्णमिति । पद्मवर्णं पद्मपत्रवर्णं पद्मनिःश्वासं पद्मगन्धिनिःश्वासम् ॥ ८ ॥

९ ] ति० टी०—यद्यतस्तमपश्यन्त्या इदं सहस्रधा न फलति न विशीर्यतेऽतस्तद्वज्रसारं वज्रवत्कठिनं नूनमित्युत्प्रेक्षा ॥ ९ ॥

रा० टी०—वज्रसारेति । तं तादृशवदनवन्तं रामं अपश्यन्त्या मम यद्धृदयं सहस्रधा न फलति भिद्यते तद्धृदयं वज्रसारमयमुत्तमवज्रकाठिन्यसदृशकाठिन्यविशिष्टमस्तीति शेषः ॥ ९ ॥

गो० टी०—वज्रसारमयमिति । न फलति न स्फुटति ञिफला विशरण इति धातुः ॥ ९ ॥

१० ] ति० टी०—त्वया व्यपोह्य वृद्धैरविचार्य यत्करुणं शोचनीयं कर्मानुचितवरदानरूपं कृतं तेन हेतुना मम बान्धवाः कैकेय्या निरस्ताः सुखार्हा अपि कृपणाः सन्तो वने धावन्ति, यद्वा व्यपोह्य अनादृत्य राज्यात्प्रभ्रंश्य वा त्वया निरस्ता वने परिधावन्तीति यत्तदकरुणं क्रूरं कर्म त्वया कृतमित्यर्थः ॥ १० ॥

रा० टी०—यदिति । यद्यस्मात्करुणं सदयं कर्म प्रव्राजनाभावसंपादकं व्यापारं व्यपोह्य सन्त्यज्य सुखार्हा मम बान्धवाः अतिप्रीतिविषयीभूता रामादयः निरस्ताः प्रव्राजितास्तस्माद्धेतोः कृपणाः सन्तो वने परिधावन्ति ॥ १० ॥

गो० टी०—यत्त्वयेति । त्वया निरस्ताः मम बान्धवा रामादयः व्यपोह्य नगरं त्यक्त्वा वने परिधावन्तीति यत् एतत् अकरुणं कर्म करुणाराहित्येन कृतं कर्मेत्यर्थः ॥ १० ॥

११ ] ति० टी०—ननु चतुर्दशवर्षानन्तरं तव पुत्रस्यैव राज्यं भविष्यति तत्राह—यदीति । तावत्पर्यन्तं वने जीवनमेव न संभाव्यते तथापि यदि जीवन्पुनरेष्यति तथापि भरतो राज्यं जह्यादिति नोपलक्ष्यते न संभाव्यत इत्यर्थः ॥ ११ ॥

रा० टी०—यदीति । पञ्चदशे वर्षे चतुर्दशवर्षान्ते इत्यर्थः यदि राघवः पुनरैष्यति आयाता तर्हि भरतोपि राज्यं कोशं च जह्यात्त्यक्ष्यतीत्यर्थं इत्युपलक्ष्यते अनुमीयते ॥ ११ ॥

गो० टी०—चतुर्दशवर्षानन्तरं रामो राज्यं प्राप्स्यतीत्याशङ्क्य परिहरति—यदीति । पञ्चदशे वर्षे राघवो यदि पुनरेष्यति तथापि राज्यं कोशं च जह्यात् त्यजेत् कुतः यस्मात् कारणात् भरतेनोपभुज्यते भरतेनोपभुक्ततया तेन पुनर्दत्तमपि राज्यं

१ शुभमनिन्दितेति गो. पाठः । २ उपधायेति गो. रा. पाठः । ३ भरतेनोपभुज्यते इति गो. पाठः ।

भोजयन्ति किल श्राद्धे केचित्स्वानेव बान्धवान् । ततः पश्चात्समीक्षन्ते कृतकार्या द्विजोत्तमान् ॥ १२ ॥
तत्र ये गुणवन्तश्च विद्वांसश्च द्विजातयः । न पश्चात्तेऽभिमन्यन्ते सुधामपि सुरोपमाः ॥ १३ ॥
ब्राह्मणेष्वपि वृत्तेषु भुक्तशेषं द्विजोत्तमाः । नाभ्युपेतुमलं प्राज्ञाः शृङ्गच्छेदमिवर्षभाः ॥ १४ ॥
एवं कनीयसा भ्रात्रा भुक्तं राज्यं विशांपते । भ्राता ज्येष्ठो वरिष्ठश्च किमर्थं नावमन्यते ॥ १५ ॥
न परेणाहृतं भक्ष्यं व्याघ्रः खादितुमिच्छति । एवमेव नरव्याघ्रः परलीढं न मन्यते ॥ १६ ॥

---

रामस्त्यजेदित्यर्थः । भरतो नोपलक्ष्यत इति पाठान्तरम् राज्यं कोशं च भरतो जह्यात् इदं तु नोपलक्ष्यते यद्रामः पुनर्भरतदत्तं राज्यं प्रतिगृह्णीयादिति । यद्वा यदि राघवः पुनरेष्यति तदा भरतः राज्यं कोशं च जह्यादिति नोपलक्ष्यते करस्थराज्यत्यागस्यासंभावितत्वादित्यर्थः । भरतो यदि भोक्ष्यत इति च पाठः ॥ ११ ॥

१२ ] ति० टी०—अथापि कदाचिद्भरतो जह्यात्तथापि रामस्तन्नाङ्गीकरिष्यतीति सदृष्टान्तमाह—भोजयन्तीत्यादिना । केचिच्छ्राद्धकर्तारो वयोगुणैरधिकान्विप्राञ्श्राद्धे निमन्त्र्य वयोगुणहीनानपि स्वान्बान्धवाञ्श्राद्धे भोजयन्ति ततः कृतकार्याः सन्तो निमन्त्रितान्द्विजर्षभान्पश्चादिष्टपङ्क्तौ भोजयितुं समीक्षन्ते विचारयन्ति ॥ १२ ॥

१३ ] ति० टी०—तत्र निमन्त्रितेषु ये गुणवन्तः श्राद्धापेक्षितगुणवन्तस्ते सुरोपमाः पश्चात्पङ्क्तौ सुधासदृशं स्वाद्वन्नमपि नानुमन्यन्ते ॥ १३ ॥

रा० टी०—चतुर्दशवर्षान्ते आगतोऽपि रामः चतुर्दशवर्षपर्यन्तं भरतस्य राज्यस्वामित्वाभिमानित्वे पश्चात्त्यक्तमपि राज्यं न ग्रहीष्यतीति बोधयन्ती आह—भोजयन्तीति । ये केचित्पुरुषाः श्राद्धे स्वान् स्वकीयान् बान्धवाञ्जामात्रादीनेव अधिकदक्षिणादानादिहेतुना पूर्वं भोजयन्ति ततः पश्चात्कृतकार्याः निष्पादितश्राद्धप्रयोजनाः सन्तोऽपि द्विजोत्तमान्निमन्त्रितब्राह्मणान्समीक्षन्ते भोजनार्थं प्रतीक्षन्ते तत्र तात्कालिकप्रतीक्षणसमये ये गुणवन्तो विद्वांसः अत एव सुरोपमा देवतुल्याः द्विजातयः ते पश्चाद्भोज्यं सुधामपि अमृतवत्स्वाद्वपि पायसादिकं नाभिमन्यन्ते स्वीकुर्वन्ति श्लोकद्वयमेकान्वयि॥ १२ ॥ १३ ॥

गो० टी०—भरतेनोपभुक्ततया पुनर्दत्तमपि राज्यं रामो न भोक्ष्यत इत्यत्र दृष्टान्तमाह—भोजयन्तीत्यादिना । किलेति वार्तायाम् लोके केचित् ब्राह्मणाः विद्यागुणवयोऽभ्यधिकेषु विप्रेषु विद्यमानेषु दक्षिणाविशेषप्रापणलोभेन स्वानेव बान्धवान् श्राद्धे भोजयन्ति ततः पश्चात्तदनन्तरं कृतकार्याः कृतश्राद्धकार्याः सन्तः श्राद्धावसाने द्विजर्षभान् पूर्वभुक्तविप्रापेक्षया विद्यावृत्तवयोभिः श्रेष्ठान् समीक्षन्ते इष्टपङ्क्तौ भोजयितुमिच्छन्ति तत्र तदानीं ये गुणवन्तः वृत्तवन्तः विद्वांसः विद्यावन्तः सुरोपमाः देववत्पूज्यतमा वृद्धाः द्विजातयः ते पश्चादिष्टपङ्क्तौ सुधामपि अमृततुल्यान्नमपि नाभिमन्यन्ते नाद्रियन्ते ननु कुतो नाद्रियन्ते ब्राह्मणशेषभोजने शूद्रशेषवन्निषेधाभावादित्यत्राह—ब्राह्मणेष्वित्यादिना । तृप्तेष्वपि ब्राह्मणेषु पूर्वभुक्तानां ब्राह्मणत्वेपीत्यर्थः । प्राज्ञाः द्विजर्षभाः ऋषभाः शृङ्गच्छेदमिव निजावमानहेतुं पश्चाद्भोक्तुमिच्छाम् अभ्युपैतुं नालं न क्षमन्त इत्यर्थः । यद्वा शृङ्गमग्रं शृङ्गे छेदो यस्य तत् शृङ्गच्छेदं छिन्नाग्रं तृणम् यथा वृषभा वृषभान्तरजग्धाग्रं तृणं भोक्तुं नालं तद्वदित्यर्थः । शृङ्गच्छेदमिति वृषभभक्षिताग्रतृणनामेत्यप्याहुः ॥ १२–१४ ॥

१४ ] ति० टी०—ननु कुतो नानुमन्यन्ते ब्राह्मणशेषभोजने शूद्रशेषभोजनवद्दोषाभावादत आह—ब्राह्मणेष्वपीति । ब्राह्मणेषु वृत्तेषु भुक्तवत्सु तद्भुक्तशेषमपि यतो द्विजोत्तमाः प्राज्ञाश्चातस्तद्भोजनमभ्युपेतुमङ्गीकर्तुं नालम् अवमाननात् ऋषभाः स्वशृङ्गच्छेदमिव शृङ्गस्थानीयो हि सतां मानः ॥ १४ ॥

रा० टी०—ननु शूद्रशेषभोजनस्य निषिद्धत्वेपि ब्राह्मणशेषभोजनस्य निषेधाभावात्कुतो न स्वीकुर्वन्तीत्यत आह—ब्राह्मणेष्विति । ब्राह्मणेष्वपि वृत्तेषु पूर्वं भुक्तेषु सत्सु द्विजोत्तमाः भुक्तशेषमन्नमभ्युपेतुं स्वीकर्तुं नालं समर्थाः एतेन निष्कारणकपश्चाद्भोजने अत्याज्यमानभङ्गः स्यादिति हेतुः सूचितः मानस्यात्याज्यत्वे दृष्टान्तः ऋषभाः आत्मानः शृङ्गच्छेदमिव शृङ्गच्छेदे हि तेषां मानभङ्गः इति प्रसिद्धं यद्वा भुक्तशेषं भुक्तशेषभोजनं शृङ्गच्छेदमिव मानध्वंसकत्वेन प्रभुत्वविघातकमेव इति हेतोः ऋषभाः जात्यादिना श्रेष्ठाः प्राज्ञाः द्विजोत्तमाः अभ्युपेतुमङ्गीकर्तुंनालं न समर्थाः शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके इति मेदिनी ॥ १४ ॥

१५ ] ति० टी०—दार्ष्टान्तिके योजयति—एवमिति । कनीयोभुक्तत्वात्स्वयं ज्येष्ठो वयसा गुणैश्च वरिष्ठः संस्तेन त्यक्तमपि राज्यं किमर्थं नावमंस्यते सर्वथा तिरस्करिष्यत्येवेत्यर्थः । मद्दर्शनानुरोधेनागतो मज्जीवनपर्यन्तमेव स्थास्यति तूष्णीं न पुना राज्यं करिष्यतीत्यर्थः ॥ १६ ॥

रा० टी०—दृष्टान्तमुक्त्वा दार्ष्टान्तिके नियोजयन्ति—एवमिति । एवमनेन प्रकारेण कनीयसा कनिष्ठेन भुक्तं राज्यं ज्येष्ठो वरिष्ठो रामः किमर्थंकुतः नवामन्यते तिरस्करिष्यति तिरस्करिष्यत्येवेत्यर्थः ॥ १६ ॥

गो० टी०—उक्तमर्थं दार्ष्टान्तिके योजयति एवमित्यादिना । एवं पूर्वोक्तद्विजर्षभवत् कनीयसा कनिष्ठेन विशांपते हे प्रजानाथ वरिष्ठः गुणैः श्रेष्ठः किमर्थं नावमंस्यते कस्मै प्रयोजनाय न तिरस्करिष्यति सर्वात्मना तिरस्करिष्यत्येवेत्यर्थः ॥ १९ ॥

१६ ] ति० टी०—परेणाहृतं क्रोष्ट्वादिखादितशेषम् । परलीढं परास्वादितं न मन्यते न मंस्यते ॥ १६ ॥

---

१ द्विजर्षभानिति गो० पाठः । २ सुरामपीति रा० पाठः । ३ तृप्तेषु पश्चाद्भोक्तुं द्विजर्षभाः । नाभ्युपैतुमिति गो० पाठः। ४ मंस्यते इति गो० पाठः। ५ पराश्लीढमिति रा० पाठः ।

हविराज्यं पुरोडाशः कुशा यूपाश्च खादिराः । नैतानि यातयामानि कुर्वन्ति पुनरध्वरे ॥ १७ ॥
तथा ह्यात्तमिदं राज्यं हृतसारां सुरामिव । नाभिमन्तुमलं रामो नष्टसोममिवाध्वरम् ॥ १८ ॥
नैवंविधमसत्कारं राघवो मर्षयिष्यति । बलवानिव शार्दूलो बालधेरभिमर्शनम् ॥ १९ ॥
नैतस्य सहिता लोका भयं कुर्युर्महामृधे । अधर्मं त्विह धर्मात्मा लोकं धर्मेण योजयेत् ॥ २० ॥
नन्वसौ काञ्चनैर्बाणैर्महावीर्यो महाभुजः । युगान्त इव भूतानि सागरानपि निर्दहेत् ॥ २१ ॥

रा० टी०—पुनः सदृष्टान्तं तदेवाह—न परेणेति । परेण-स्वातिरिक्तेनाहृतं स्वीकृतं भक्ष्यं व्याघ्रः खादितुं नेच्छति एवं नरव्याघ्रः रामोऽपि परालीढं स्वकीयत्वेन भरतस्वीकृतं न मन्यते मन्ता ॥ १६ ॥

गो० टी०—न परेणेति । परेण अन्येन वृकगोमाय्वादिना आहृतं भक्षितशेषत्वेनानीतं परलीढं परेणास्वादितं परभुक्तशेषमिति यावत् न मन्यते न बहुमन्यते ॥ १६ ॥

१७ ] ति० टी०—एतानि हविरादीन्येकत्राध्वरे विनियोगाद्यातयामानि पुनरध्वरेऽध्वरान्तरे विनियुक्तानि न कुर्वन्ति । 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्' इत्यमरः। यद्यपि मन्त्राः कृष्णाजिनं दर्भा इति स्मृत्या कुशानां यातयामत्वदोषो नेत्युक्तं तथापि तज्जीर्णत्वरूपयातयामत्वदोषाभावपरं न तु विनियुक्तविनियोगपरम् 'ब्रह्मयज्ञेषु ये दर्भा विनियुक्ता न तेऽन्यतः' इत्यनेन विनियुक्तविनियोगनिषेधस्य न्यायेन सर्वत्र लाभादित्याहुः ॥ १७ ॥

रा० टी०—हविरिति । यातयामानि अध्वरान्तरविनियुक्तत्वेन परिभुक्तानि एतानि हविरादीनि अध्वरे प्रकृतयागे न कुर्वन्ति नियोजयन्ति तत्र खादिराः खदिरादिनिर्मिता यूपा यागस्तम्भाः ' जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ' इत्यमरः । न च मन्त्राः कृष्णाजिना दर्भा इत्यादिस्मृत्या कुशानां यातयामत्वदोषास्पर्शित्वादत्र कुशोक्तिर्विरुद्धेति वाच्यं स्मृतेर्जीर्णत्वरूपयातयामत्वदोषाभावपरत्वादत एव ' ब्रह्मयज्ञेषु ये दर्भा विनियुक्ता न तेऽन्यतः ' इति स्मृत्यन्तरं सङ्गच्छते ॥१७॥

गो० टी०—हविरिति । हविः चरुप्रभृतं पुरोडाशाः पिष्टादिविकाराः खादिरा इत्येतत् पालाशादीनामुपलक्षणं यातयामानि परिभुक्तानि यागे विनियुक्तानीति यावत्। 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्' इत्यमरः। अध्वरे यागान्तरे पुनर्न कुर्वन्ति न विनियुञ्जते मन्त्राः कृष्णाजिनं दर्भा इत्याद्यातयामत्वबोधकवचनेषु दर्भादिशब्दाः कुशादिव्यतिरिक्तपराः ॥ १७ ॥

१८ ] ति० टी०—तथैवान्येनात्तमुपभुक्तपूर्वमिदं राज्यं रामोऽभिमन्तुमङ्गीकर्तुं नालम् । नष्टसोमं भुक्तसोममध्वरं तत्स्थं सोमरूपं हविः ॥ १८ ॥

रा० टी०—तथेति । तथा तेन प्रकारेण आत्तं भरतेनोपभुक्तमिदं राज्यं हृतसारां हृतः सारांशो यस्यास्तां सुरामिव आध्वरमध्वरसंबन्धि नष्टसोममुपभुक्तसोममिव अभिमन्तुं स्वीकर्तुं रामो नालम् ॥ १८ ॥

गो० टी०—तथेति । आत्तम् उपभुक्तपूर्वं हृतसारां गृहीतसारांशाम् अभिमन्तुम् अभिलषितुं नष्टसोममिवाध्वरमिति अन्येन सोमपाने कृते सत्ररूपमध्वरं तदक्षमतायां यथान्यो नाभिलषति तद्वदित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—बालधेः पुच्छस्य ॥ १९ ॥

रा० टी०—नैवमिति । एवं विधमसत्कारं भवत्कर्तृकसत्काराभावं राघवो न मर्षयिष्यति असत्कारेण दत्तं राज्यं न स्वीकरिष्यतीत्यर्थः मर्षणाभावे दृष्टान्तः बालधेः पुच्छस्य अभिमर्शनं स्पर्शं बलवाञ्छार्दूल इव ॥ १९ ॥

गो० टी०—नैवंविधमिति । बालधेः पुच्छस्य अवमर्शनम् अवमत्य स्पर्शनम् ॥ १९ ॥

२० ] ति० टी०—शार्दूलवद्बलवत्त्वमेव दर्शयति—नैतस्येति । सहिताः सुरासुरैः सहिताः लोकाः प्रतियोधाः किमर्थं तर्हि मामाक्रम्य राज्यं न कृतवांस्तत्राह—अधर्मं त्विति। अधर्मं तु मत्वा न तथा कृतवानिति भावः । नन्वेवं तस्य धर्मनिष्ठता कथमत आह—इहेति । यो धर्मात्मा इह मनुष्यलोके लोकं धर्मेण योजयेत् एवं धर्मप्रवर्तकस्य तस्य धर्मनिष्ठता अनुक्तिसिद्धैवेति भावः । यद्वातुरप्यर्थे अधर्ममधर्मप्रवृत्तमपि लोकं दण्डादिना यो धर्मेण योजयेत्स कथं स्वयमधर्मं कुर्यादित्यर्थः ॥ २० ॥

रा० टी०—एतद्राज्यस्वीकाराभावेऽपि तस्य न काचित्क्षतिरिति बोधयन्ती आह—नैतस्येति । सहिताः हिताः पालकास्तैः सहिताः लोकाः सर्वभुवनवर्तिसुरासुराः मृधे संग्रामे एतस्य रामस्य भयं न कुर्युः अत एव इहास्मिन्कालेऽपि धर्मात्मा रामः अधर्मं लोकं जनं धर्मेण योजयेत् योजयिष्यति एतेन सर्वनियमनसमर्थस्य साक्षाद्राज्यशासने न किंचित्प्रयोजनमिति ध्वनितम् ॥ २० ॥

गो० टी०—ननु वयं किं कुर्मः पौरुषधर्मबलाभ्यां हीनः स्वयमेव गत इत्यत्राह—नैतस्येति । सहिताः मिलिताः लोकाः चतुर्दशभुवनस्थाः सुरासुरादयः महामृधे महायुद्धे एतस्य रामस्य भयं न कुर्युः भयं कर्तुं न शक्नुयुरित्यर्थः । किंतु अधर्मम् अधर्ममार्गस्थं लोकं जनं धर्मेण योजयेत् 'चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति' इत्युक्तो रामः स्वयमधर्मं कथं कुर्यादित्यर्थः ॥ २० ॥

२१ ] ति० टी०—रामेऽशक्तिशङ्कापि नेत्याह—नन्विति ।

१ पुरोडाशा इति रा. पाठः । २ अवेति गो. पाठः ।

स तादृशः सिंहबलो वृषभाक्षो नरर्षभः। स्वयमेव हतः पित्रा जलजेनात्मजो यथा ॥ २२ ॥
द्विजातिचरितो धर्मः शास्त्रे दृष्टः सनातनैः। यदि ते धर्मनिरते त्वया पुत्रे विवासिते ॥ २३ ॥
गतिरेका पतिर्नार्या द्वितीया गतिरात्मजः। तृतीया ज्ञातयो राजंश्चतुर्थी नैव विद्यते ॥ २४ ॥
तत्र त्वं मैव नैवासि रामश्च वनमाहितः। न वनं गन्तुमिच्छामि सर्वथा हि हता त्वया ॥ २५ ॥
हतं त्वया राष्ट्रमिदं सराज्यं हताः स्म सर्वाः सह मन्त्रिभिश्च।
हता सपुत्रास्मि हताश्च पौराः सुतश्च भार्या च तव प्रहृष्टौ ॥ २६ ॥

काञ्चनैः काञ्चनभूषितपुङ्खैर्युगान्ते युगान्तकाले ईश्वर इव भूतानि समुद्रांश्च निर्दहेन्नाशयेच्छोषयेच्च ॥ २१ ॥

रा० टी०—तत्सामर्थ्यमेव भङ्ग्यन्तरेणाह—नन्विति। नन्विच्छायां सत्यां महावीर्योऽसौ रामः काञ्चनैः काञ्चनभूषितपुङ्खविशिष्टैः बाणैः युगान्ते प्रलयकाले इव भूतानि सागरानपि निर्दहेत् ॥ २१ ॥

गो० टी०—नन्विति। युगान्तः युगान्तकालः भूतानि पञ्चमहाभूतानि ॥ २१ ॥

२२ ] ति० टी०—पित्रा त्वया स्वयमेव स्वपुत्रो हतो भ्रष्टराज्यः कृतः। जलजेन मत्स्येन स यथात्मजानेव भक्षयति तद्वदित्यर्थः ॥ २२ ॥

रा० टी०—स इति। तादृशः अतिप्रभावविशिष्टः सः रामः पित्रा त्वया स्वयमेव हतः ऐश्वर्यशोभायास्त्याजितः तत्र दृष्टान्तः जलजेन कमलेन आत्मजः आत्मनः स्वस्य जो जनिर्यस्मात्स जलपदार्थो यथा यथा स्वशोभासम्पादकजलशोभां स्वातिप्रसृत्या जलजं निवारयति तथा स्वस्वातन्त्र्येण स्वशोभाजनकीभूतपुत्रशोभां भवान्निवारितवानित्यर्थः। 'जो ना मृत्युञ्जये जन्ये' इति मेदिनी। ममैवाधिकः खेद इति बोधयन्ती आह द्विजातीति। यतः सनातनैः ऋषिभिः शास्त्रस्मृत्यादौ धर्मः द्विजातिचरितः त्रिवर्णाधिकृतः दृष्टो बोधितस्तेन धर्मेणोपलक्षिताहं धर्मनिरते पुत्रे त्वया विवासिते सति त्वया हता धर्मरहिता कृता अतः वनं गन्तुमिच्छामि धर्मरहितत्वे हेतुः पतिरेव नार्या एका गतिः धर्मरक्षकः द्वितीया गतिरात्मजः तृतीया ज्ञातयस्तत्र तेषु मध्ये त्वं मदग्रे नैवासि मूर्छितोऽसीत्यर्थः रामः वनमाहितः प्राप्तः अतो न सोपीऽह नास्ति चकारेणात एव ज्ञातयो विनष्टाः एतेन मम धर्मनिर्वाहकः कश्चिन्नास्तीति सूचितम्। श्लोकद्वयमेकान्वयि इतिर्हेत्वर्थेऽव्ययं यदिति सामान्ये नपुंसकम् ॥ २२–२५ ॥

गो० टी०— स तादृश इति। तादृशः अवाङ्मनसगोचरपराक्रमयुक्तः जलजेन मत्स्येन। मत्स्यो ह्यात्मजानेव भक्षयतीति प्रसिद्धम् ॥ २२ ॥

२३ ] ति० टी०—एवं चाहमेव हतेत्याह श्लोकत्रयेण—द्विजातीत्यादि। सनातनैर्ऋषिभिः शास्त्रे वेदे दृष्टस्त्रैवर्णिकैर्द्विजातिभिश्चरितो धर्मो यदि ते सत्यः स्यात्तर्हि पुत्रो न विवासितः स्यादिति शेषः। एवं धर्ममुपेक्ष्य धर्मनिरते पुत्रे त्वया विवासिते सति ॥ २३ ॥

गो० टी०—इयता प्रबन्धेनोक्तमुपसंहरति—द्विजातिचरित इति। धर्मनिरते पुत्रे त्वया विवासिते सति द्विजातिचरितः शिष्टत्रैवर्णिकाचरितः शास्त्रदृष्टः सनातनो धर्मः ते यदि अस्ति किमित्यर्थेऽव्ययमिदम् ॥ २३ ॥

२४–२५ ] ति० टी०—शास्त्रेणोच्यमानाः स्त्रियास्तिस्रो गतयः। तत्र तासु प्रथमगतिभूतस्त्वं मम नास्त्येव सपत्नीवशत्वात्। 'नास्ति' इति पाठ आर्षत्वं बोध्यम्। द्वितीयगतिभूतो रामश्च वनमाहितो वनं प्रहितस्त्वया। न च तत्प्राप्तये वनं गन्तुमिच्छामि सपतिकात्वात्। तृतीया ज्ञातयस्त्वसंनिहितास्तस्मात्सर्वथा हता त्वया ॥ २४ ॥ २५ ॥

गो० टी०—एवं राजकृतानीत्या स्वहानिमाह—गतिरित्यादि। एका मुख्या प्रथमेत्यर्थः। द्वितीया भर्त्रभावे गतिरित्यर्थः। ज्ञातयः पित्रादयः तृतीया भर्तृपुत्राभावे गतिरित्यर्थः। चतुर्थी स्वातन्त्र्यरूपा तथा च स्मृतिः 'पिता रक्षति कौमारे भर्ता रक्षति यौवने। वार्द्धके तनयो रक्षेन्न स्त्री स्वातन्त्र्यमर्हति' इति ॥ २४ ॥

गो० टी०—तत्रेति। तत्र तासु गतिषु त्वं न त्वं भर्ता न भवसि सपत्नीपरतन्त्रत्वात्। मे ज्ञातिरपि नास्ति दूरस्थत्वादिति भावः न वनंगन्तुमिच्छामि सभर्तृकत्वात् निहता अस्मीति शेषः ॥ २५ ॥

२६ ] ति० टी०—सुतश्च भार्या च भरतकैकेय्यौ प्रहृष्टौ ॥ २६ ॥

रा० टी०—उपसंहरन्ती आह—हतमिति। सराज्यं अन्तरङ्गराज्यसहितं राष्ट्रं बहिरङ्गराज्यं त्वया हतं विनाशितमत एव मन्त्रिभिः सह सर्वाः प्रजा हताः अत एव सपुत्राहं हतास्मि अत एव पौरा हताः। ननु सर्वेषां विद्यमानत्वात्कथमिदमुच्यते इत्यत आह तव प्रहृष्टौ स्वनिष्टहर्षे एव सुतो रामादिरस्ति भार्या अस्मदादिरप्यस्ति चकारेण राष्ट्रादयोऽपि सन्ति अन्यथा सर्वेषां विनाश इत्यर्थः ॥ २६ ॥

गो० टी०—न केवलमहमेका हता अन्येऽपीत्याह—हत-

१ शास्त्रदृष्टः सनातनः इति गो. पाठः। २ नेहेति गो. पाठः। ३ चैव मे नास्तीति गो. पाठः। ४ वनमाश्रित इति गो. पाठः। ५ निहतेति गो. पाठः। ६ राज्यमिदं सराष्ट्रं हतस्तथात्मेति गो. पाठः।

इमां गिरं दारुणशब्दसंहितां निशम्य रामेति मुमोह दुःखितः ।
ततः स शोकं प्रविवेश पार्थिवः स्वदुष्कृतं चापि पुनस्तथास्मरत् ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ।

पुत्रवियोगविमना अपि कौसल्यापरुषोक्त्यभिहतो दशरथः एतन्निदानभूतमुनिकुमारहननरूपस्वदुष्कृतं स्मरन्मुमोहाथोत्थित साञ्जलिबन्धं कौसल्यां प्रसादयामास । विलोक्यैतद्द्विषीदन्त्या कौसल्यया सप्रणामं प्रसादितो दशरथो निद्रां प्रपेदे ।

एवं तु क्रुद्धया राजा राममात्रा सशोकया । श्रावितः परुषं वाक्यं चिन्तयामास दुःखितः ॥ १ ॥
चिन्तयित्वा स च नृपो [4]मोहव्याकुलितेन्द्रियः । अथ दीर्घेण कालेन संज्ञामाप परंतपः ॥ २ ॥
स संज्ञामुपलभ्यैव दीर्घमुष्णं च निःश्वसन् । कौसल्यां पार्श्वतो दृष्ट्वा ततश्चिन्तामुपागमत् ॥ ३ ॥
तस्य चिन्तयमानस्य प्रत्यभात्कर्म दुष्कृतम् । यदनेन कृतं पूर्वमज्ञानाच्छब्दवेधिना ॥ ४ ॥
अमनास्तेन शोकेन रामशोकेन च प्रभुः । द्वाभ्यामपि महाराजः शोकाभ्यामभितप्यते ॥ ५ ॥

मिति । राज्यं कोसलराज्यं राष्ट्राणि अन्यानि त्वन्मित्रपालितानि सुतः भरतः तवैव तव सुताभिमानात् भार्या कैकेयी तद्वचनकरणात् ॥ २६ ॥

२७ ] ति० टी०—दारुणशब्दसंहितां दारुणशब्दयुक्ताम् स्वदुष्कृतं वक्ष्यमाणम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

रा० टी०—इममिति । दारुणशब्दसंहितां प्रातिभासिककठिनत्वविशिष्टशब्दविशिष्टामिमां कौशल्योक्तां गिरं निशम्य मामेति कृत्वा मुमोह ततो मोहानन्तरं दुःखितः पार्थिवः स्वदुष्कृतं स्वकीयाया दुष्कृतमकालिकवरयाचनं स्मरन्सन् शोकं प्रविवेश ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

गो० टी०—इमामिति । प्रविवेश तत्र मग्न इत्यर्थः दुष्कृतं स्मरन् एतादृशदुःखस्य निदानभूतं किं कर्म पूर्वं कृतमिति स्मरन्नित्यर्थः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

१ ] ति० टी०—एवं कौसल्याक्रूरवचोभीतस्य राज्ञोऽञ्जलिपर्यन्तं दैन्यं दृष्ट्वा राजानमनुनयति—एवं त्विति । चिन्तयामासानयोच्यमानं सर्वं सत्यं किमिह कर्तव्यमिति विचारयामास ॥ १ ॥

रा० टी०—राजवृत्तं बोधयन्नाह—एवमिति । क्रुद्धया प्रातिभासिककोपविशिष्टया राममात्रा परुषं कठिनत्वेन प्रतीयमानं वाक्यं श्रावितो राजा चिन्तयामास ॥ १ ॥

गो० टी०—एवमिति । चिन्तयामास अनया सत्यमेव कथितं मया चान्यैरकृतपूर्वं महदकृत्यं कृतं किमतः परं करोमीति चिन्तयामासेत्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०—मोहव्याकुलितेन्द्रियः जात इति शेषः॥२॥

रा० टी०—चिन्तयित्वेति । मोहव्याकुलितेन्द्रियो राजा दीर्घेण अनल्पेन कालेन संज्ञां बहिःपदार्थविषयकज्ञानमाप ॥२॥

३ ] ति० टी०—चिन्तामुपागमत्पुत्रविश्लेषजदुःखसाधनं कर्म ममेति चिन्तामगमत् ॥ ३ ॥

रा० टी०—स इति । उपलभ्य प्राप्य पार्श्वतः पार्श्वे कौसल्यां दृष्ट्वा चिन्तामुपागमत् ॥ ३ ॥

गो० टी०—ससंज्ञामिति । पुनश्चिन्तामुपागमत् अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत इति न्यायेन प्रियपुत्रविश्लेषजं महद्दुःखमनुभवामि एतद्धेतुभूतं किं कर्मकृतमिति पुनश्चिन्तां प्राप्तवानित्यर्थः ॥ ३ ॥

४ ] ति० टी०—प्रत्यभात्प्रतिभातम् दुष्कृतं कर्म मुनिकुमारवधरूपं शब्दमेव लक्ष्यदेशस्थं प्राप्य विध्यतीति शब्दवेधी ॥ ४ ॥

रा० टी०—तस्येति । चिन्तयमानस्य तस्य राज्ञः अज्ञानादयं क्रूरमृगाभिज्ञ इति ज्ञानाभावाच्छब्दवेधिना शब्दमेव लक्ष्यीकृत्य विध्यतीति शब्दवेधी तेन बाणेन करणेन यदनेन राज्ञा दुष्कृतं कर्म कृतं तत्कर्म प्रत्यभाद्बुद्धिविषयत्वमगच्छत् ॥ ४ ॥

गो० टी०—तस्येति । दुष्कृतं कर्म मुनिकुमारवधरूपं कर्म प्रत्यभात् प्रतीतमभूत् शब्दवेधिना शब्देन लक्ष्येण वेद्धुं शीलमस्यास्तीति शब्दवेधी राजा बाणो वा ॥ ४ ॥

५ ] ति० टी०—अमना दुर्मनाः तेन शोकेन मुनिकुमारवधजेन शोकेन ॥ ५ ॥

१ संश्रितामिति गो० पाठः । २ राजापीति गो० पाठः । ३ तदास्मरन्निति गा० तथा स्मरन्निति रा० पाठः । ४ मुमोह व्याकुलेन्द्रिय इति ग० पाठः ५ पुनरिति गो० पाठः । ६ अन्वतप्यतेति गो० पाठः । ७ व्यद्रुमिति युक्तम् ।

दह्यमानस्तु शोकाभ्यां कौसल्यामाह दुःखितः । वेपमानोऽञ्जलिं कृत्वा प्रसादार्थमवाङ्मुखः ॥ ६ ॥
प्रसादये त्वां कौसल्ये रचितोऽयं मयाञ्जलिः । वत्सला चानृशंसा च त्वं हि नित्यं परेष्वपि ॥ ७ ॥
भर्ता तु खलु नारीणां गुणवान्निर्गुणोऽपि वा । धर्मं विमृशमानानां प्रत्यक्षं देवि दैवतम् ॥ ८ ॥
सा त्वं धर्मपरा नित्यं दृष्टलोकपरावरा । नार्हसे विप्रियं वक्तुं दुःखितापि सुदुःखितम् ॥ ९ ॥
तद्वाक्यं करुणं राज्ञः श्रुत्वा दीनस्य भाषितम् । कौसल्या व्यसृजद्बाष्पं प्रणालीव नवोदकम् ॥ १० ॥
सा मूर्ध्नि बद्ध्वा रुदती राज्ञः पद्ममिवाञ्जलिम् । संभ्रमादब्रवीत्त्रस्ता त्वरमाणाक्षरं वचः ॥ ११ ॥
प्रसीद शिरसा याचे भूमौ निपतितास्मि ते । याचितास्मि हता देव क्षन्तव्याहं नहि त्वया ॥ १२ ॥

रा० टी०–दुष्कृतस्वरूपं तु स्वयमेव वक्ष्यति–अमना इति तेन स्मृतिविषयीभूतदुष्कृतजनितेन शोकेन रामशोकेन च महाराजः अमनाः दुर्मना अभवदिति शेषः अत एव द्वाभ्यां शोकाभ्यामभितप्यते अभ्यतप्यत ॥ ५ ॥

गो० टी०–अमना इति । अमनाः अस्वस्थचित्तः क्षुभितान्तःकरण इत्यर्थः तेन मुनिकुमारवधजनितेन ॥ ५ ॥

६ ] ति० टी०–अवाङ्मुखः स्वकृततदप्रियस्मरणाल्लज्जया ६॥

रा० टी०–दह्यमान इति । प्रसादार्थं कौशल्याप्रीत्यर्थमञ्जलिं कृत्वा अवाङ्मुखः उदासीनमुखदर्शनसहनासमर्थत्वेन अवनतमुखः अत एव वेपमानो राजा कौशल्यामाह ॥ ६ ॥

गो० टी०–दह्यमान इति । अवाङ्मुखः अवनतमुखः स्वकृतकौसल्याविषयाप्रियजन्यया लज्जया भीत्या चेति भावः॥६॥

७ ] ति० टी०–परेष्वपि शत्रुष्वपि ॥ ७ ॥

रा० टी०–वचनाकारमाह–प्रसादय इति । यतः परेषु शत्रुष्वपि त्वं वत्सला अत एव अनृशंसा क्रूरतारहिता त्वमसि अतस्त्वां प्रसादये ॥ ७ ॥

गो० टी०–प्रसादय इति । परेष्वपि प्रतिकूलेष्वपि ॥ ७ ॥ ८ ॥

८ ] ति० टी०–विमृशमानानां जानतीनाम् ॥ ८ ॥

रा० टी०–भर्तेति । धर्मं विमृशमानानां विचारयन्तीनां नारीणां गुणवान्निर्गुणो वा भर्ता दैवतं देवता तासां पतिभिन्नं दैवतं नास्तीत्यर्थः ॥ ८ ॥

९ ] ति० टी०–दृष्टौ लोके परावरावुत्कर्षापकर्षौ यया सा अपकृष्टा अपि भर्तारमेवं न वदन्तीति भावः ॥ ९ ॥

रा० टी०–सेति । सा ज्ञातसकलधर्मतत्त्वा अत एव धर्मपरा अत एव दृष्टलोकपरावरा दृष्टौ निश्रितौ लोकपरावरौ जननायुत्तममध्यमत्वे यया सा त्वं दुःखितापि प्रियं भर्तारं विप्रियं वक्तुं नार्हसे अर्हसि ॥ ९ ॥

गो० टी०–सा त्वमिति । दृष्टलोकपरावरा दृष्टौ लोके अने परावरौ उत्कर्षापकर्षौ यया सा तथोक्ता सुदुःखितं मां प्रतीति शेषः ॥ ९ ॥

१० ] ति० टी०–प्रणाली प्रासादादौ जलनिर्गममार्गः नवोदकं वर्षजलम् ॥ १० ॥

रा० टी०–तदिति । तत्करुणं वाक्यं श्रुत्वा बाष्पमश्रु व्यसृजत् तत्र दृष्टान्तः प्रणाली प्रासादादिषु निर्मितजलनिर्गममार्गः नवोदकं वृष्टिजलमिव 'द्वयोः प्रणाली पयसः पदव्याम्' इत्यमरः ॥ १० ॥

गो० टी०–तद्वाक्यमिति । प्रणाली प्रासादादिषु दार्वादिनिर्मितजलनिर्गममार्गः । 'द्वयोः प्रणाली पयसः पदव्याम्' इत्यमरः । नवोदकं वर्षजलम् ॥ १० ॥

११ ] ति० टी०–स्वाहननाय राज्ञा कृतं राज्ञोऽञ्जलिं पाणिभ्यां गृहीत्वा पद्ममिव मूर्ध्नि बद्ध्वा रुदती त्रस्ता अहमपि कैकेयीवत्पातिशोककारिवचनादिकं प्राप्तवतीति भीता संभ्रमाद्रात्यत्वादपाद्धच आह ॥ ११ ॥

रा० टी०–सेति । रुदती त्रस्ता पतिविषयकस्वापराधहेतुकत्रासविशिष्टा सा कौशल्या राज्ञः अञ्जलिं बद्धयुगलकरं पद्ममिव मूर्ध्नि स्वशिरसि बद्ध्वा धृत्वा संभ्रमादत्यादरात्त्वरमाणं अतिवेगविशिष्टमक्षरं यस्मिंस्तद्वचः अब्रवीत् ॥ ११ ॥

गो० टी०–सेति । राज्ञः अञ्जलिं पद्ममिव मूर्ध्नि बद्ध्वा पाणिभ्यां गृहीत्वा मूर्ध्नि बद्ध्वेत्यर्थः त्रस्ता धर्माद्भीता ॥ ११ ॥

१२ ] ति० टी०–भूमौ निपतितास्मि साष्टाङ्गं प्रणमामि हे देव त्वया याचिताहमह्ननीताहं हतास्मि ईश्वरेप्सितवैपरीत्यस्यान्याय्यत्वात् अतस्त्वया क्षन्तव्या न किंतु दासीवत्प्रहर्तव्येत्यर्थः ॥ १२ ॥

रा० टी०–वचनाकारमाह–प्रसीदेति । ते अग्रे भूमौ निपतिता कृतप्रणामास्मि हे देव हता पुत्रवियोगपीडिताऽहं त्वया न हन्तव्या स्वदैन्यवचनोक्त्या न पीडयितव्या इत्यहं याचिता याचनकर्त्री पूर्वं कर्माविवक्षया कर्तरि निष्ठा 'क्षन्तव्याहं नहि त्वया' इति भट्टपाठस्तत्र त्वयाहं न हता पीडिता किंतु मन्थरया पीडितेत्यर्थः ॥ १२ ॥

गो० टी०–प्रसीदेति । भूमौ निपतितास्मि प्रणतास्मीत्यर्थः कुतः यतः ते याचिता त्वया याचिताहं हतास्मि अतः त्वयाहं हन्तव्या नहि संहर्तव्या नहि एतदपराधक्षान्तये मम प्रहार एव त्वया कर्तव्यो न संहारो दास्या इवेत्यर्थः॥१२॥

१ स इति गो० पाठः । २ भूपतिरिति गो० पाठः । ३ हन्तव्येति गो० रा० पाठः ।

नैषा हि सा स्त्री भवति श्लाघनीयेन धीमता । उभयोर्लोकयोर्लोके पत्या या संप्रसाद्यते ॥ १३ ॥
जानामि धर्मं धर्मज्ञ त्वां जाने सत्यवादिनम् । पुत्रशोकार्तया तत्तु मया किमपि भाषितम् ॥ १४ ॥
शोको नाशयते धैर्यं शोको नाशयते श्रुतम् । शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ १५ ॥
शक्यमापतितः सोढुं प्रहारो रिपुहस्ततः । सोढुमापतितः शोकः सुसूक्ष्मोऽपि न शक्यते ॥ १६ ॥
वनवासाय रामस्य पञ्चरात्रोऽत्र गण्यते । यः शोकहतहर्षायाः पञ्चवर्षोपमो मम ॥ १७ ॥

१३ ] ति० टी०–एषा हि लोके सा स्त्री कुलस्त्री न भवति या उभयोः श्लाघनीयेन पत्या संप्रसाद्यते ॥ १३ ॥

रा० टी०–नेति । उभयोर्लोकयोः श्लाघनीयेन पत्या या स्त्री संप्रसाद्यते सा स्त्री लोके नास्ति एतेन स्वभाग्यवत्तातिशयः सूचितः ॥ १३ ॥

गो० टी०–नैषेति । श्लाघनीयेन स्वयं प्रसाद्येन पत्या लोके या संप्रसाद्यते सा स्त्री उभयोर्लोकयोर्न भवति । ऐहिकामुष्मिकसुखभागिनी न भवतीत्यर्थः ॥ १३ ॥

१४ ] ति० टी०–किमप्यत्यनुचितं भाषितं तत्क्षन्तव्यमिति शेषः ॥ १४ ॥

रा० टी०–ज्ञानामीति । हेधर्मज्ञ धर्मं पतिः परुषं न वक्तव्य इत्यादिरीतिं जानामि त्वां सत्यवादिनं च जाने तथापि पुत्रशोकार्तया मया तत्परुषाभासं किमपि भाषितम् । तुस्तथाप्यर्थे ॥ १४ ॥

गो० टी०–ज्ञानामीति । किमपि अविचारितम् अनुचितं च तत् क्षन्तव्यमिति शेषः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–शोक एवमाद्यमनुचितव्यवहारप्रवर्तक इत्याह–शोक इत्यादि ॥ १५ ॥

रा० टी०–शोकस्याकार्यकारित्वं बोधयन्ती आह–शोक इति । श्रुतं शास्त्रश्रवणजनितनिश्चितधर्ममतः सर्वं यशआदिकं नाशयते ॥ १५ ॥

१६ ] ति० टी०–सुसूक्ष्मोऽपि शोकः सोढुं न शक्यते किं पुनर्महानिति शेषः ॥ १६ ॥

रा० टी०–शक्यमिति । रिपुहस्ततः आपतितः प्रहारः आयुधादिः सोढुं शक्यं आपतितः विधिवशात्प्राप्तः सुसूक्ष्मोऽपि शोकः सोढुं न शक्यते शक्यमिति सामान्ये नपुंसकम् ॥ १६ ॥

गो० टी०–शक्य इति । आपतितः हठात्प्राप्तः ॥ १६ ॥

१७ ] ति० टी०–स्वशोकस्य महत्त्वं दर्शयति–वनेति । पञ्चरात्र इत्यस्य गत इति शेषः । तत्र प्रथमा तमसातीरे, द्वितीया गुहपुरे, तृतीया गङ्गातीरे, चतुर्थी प्रयागे, पञ्चमी यमुनातीरे, षष्ठी चित्रकूटे तद्दिने सुमन्त्रस्यायोध्याप्राप्तिः अत एवाग्रे षष्ठीति दशरथोक्तिः । अथवाद्यदिने संपूर्णदिनं स्वनिकटे स्थितत्वेन स्वदेशे तमसातीरे एव स्थितत्वेन तद्दिनमगणय्य कौसल्ययात्र पञ्चरात्रो गण्यत इत्युक्तम् राजा तु तमपि गृहीत्वा षष्ठीति वक्ष्यति । यत्तु कतकेन निर्गमनात्सप्तरात्रः सुमन्त्रागमनदिने इत्युक्तम्, तदज्ञानात् गङ्गोत्तरणदिनात्तृतीयेऽहनि चारप्रतिनिवृत्त्युत्तरं सायाह्ने तद्दिन एव सुमन्त्रप्रस्थानस्य वक्तुं शक्यत्वात् रामस्य निर्गमनादिने षष्ठे इति पूर्वलिखितपाद्यविरोधाच्च ॥ १७ ॥

रा० टी०–शोकस्य चिरकालस्थायित्वं बोधयन्ती आह–वनेति । वनवासाय गतस्य रामस्य अद्य इदानीं यः पञ्चरात्रो गतः सः पञ्चरात्रः शोकहतहर्षाया मम अत्रास्मिन्समये पञ्चवर्षोपमो गण्यते ज्ञायते ॥ १७ ॥

गो० टी०–शोकस्य नूतनत्वादशक्यत्वमाह–वनवासायेति । वनवासाय वने वासं कर्तुं प्रस्थितस्य रामस्य पञ्चरात्रोऽद्य गण्यते वने पञ्चरात्रो वासो गण्यते अत्र केचित् प्रथमायां रात्रौ तमसातीरे द्वितीयरात्रौ जाह्नवीतीरे तृतीयरात्रौ गङ्गादक्षिणकूलस्थे वनस्पतौ, चतुर्थरात्रौ प्रयागे, पञ्चमरात्रौ यमुनातीरे, ततः सुमन्त्रः षष्ठदिवसे रामश्चित्रकूटं गमिष्यतीति वृत्तान्तं ज्ञात्वा तदहः सायाह्नसमये अयोध्यां प्राप्तवान् ततोऽत्र पञ्चरात्रगणनमुपपद्यत इत्यूचिरे । अन्ये त्वाहुः गङ्गावतरणपर्यन्तं वनवासत्वाभावात् ततः परं वनस्पतिभरद्वाजाश्रमयमुनातीरचित्रकूटेषु चतस्रो रात्रयः चतुर्थ्यां सुमन्त्रस्य निर्गमः पञ्चम्यामिदं वचनमिति एवं सत्यत्रपदस्वारस्यमिति । ननु सप्तपञ्चाशे सर्गे 'भरद्वाजाभिगमनम् प्रयागे च सहासनम् । आगिरेर्गमनं तेषां तत्रस्थैरभिलक्षितम् ॥ अनुज्ञातः सुमन्त्रोऽथ योजयित्वा हयोत्तमान् ।' इत्याद्यनन्तरं 'ततः सायाह्नसमये तृतीयेऽहनि सारथिः । अयोध्यां समनुप्राप्य निरानन्दां ददर्श ह' इत्युक्त्या अयोध्यानिर्गमदिवसमारभ्य षष्ठेऽहनि किल रामस्य चित्रकूटप्रवेशः अथ चारेभ्यः सप्तमे अष्टमे वा सूतस्य तद्वृत्तान्तश्रवणं ततस्तृतीयेऽहनि सूतस्यायोध्याप्रवेशः तत्कथं पञ्चरात्र इति परिगण्यते । उच्यते तृतीयेऽहनीत्यत्र अह्नस्तृतीयभाग इत्यर्थः । आगिरेर्गमनमित्यत्र गमनोद्योगमित्यर्थः । तथा च 'गुहेन सार्धं तत्रैव स्थितोऽस्मि दिवसान् बहून् । आशया यदि मां रामः पुनः शब्दापयेदिति' इत्यत्र बहूनित्युक्त्या दिनत्रयं शृङ्गिबेरपुरे सूतस्य वासः चतुर्थे दिने ऋजुमार्गेण दिवारात्रमागतचारमुखात् रामस्य चित्रकूटप्रवेशोद्योगं निशम्य तद्दिवससायंकाले वेगेनायोध्याप्रवेशस्तस्मिन् दिने कौसल्याह–पञ्चरात्रोऽद्य गण्यत इति । अतो न किंचिदनुपपन्नम् ॥ १७ ॥

१ शक्य इति गो. पाठः । २ ऽद्येति गो. पाठः । ३ रात्रे इति युक्तम् ।

तं हि चिन्तयमानायाः शोकोऽयं हृदि वर्धते । नदीनामिव वेगेन समुद्रसलिलं महत् ॥ १८ ॥
एवं हि कथयन्त्यास्तु कौसल्यायाः शुभं वचः । मन्दरश्मिरभूत्सूर्यो रजनी चाभ्यवर्तत ॥ १९ ॥
अथ प्रह्लादितो वाक्यैर्देव्या कौसल्यया नृपः । शोकेन च समाक्रान्तो निद्राया वशमेयिवान् ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ।

निशीथे प्रबुद्धो दशरथः पुत्रशोकान्मरणप्रयोजकस्वदुष्कृतमनुस्मृत्य कौसल्यां वक्तुमुपक्रमते । युवराजावस्थायां मृगयामटन्नहमपररात्रेऽम्भसि कुम्भं निमज्जयत ऋषिकुमारस्य जलपूरणशब्दं शृण्वन्बृंहितभ्रान्त्या शरमसृजं, तदभिहतस्तपस्विकुमारको जरन्तौ पितरौ चुक्रोश, श्रुत्वा तत्रासविषादोऽहं तमुपागच्छम्, आर्तः स स्ववृत्तं निवेद्य वृद्धावाश्वासयितुं मां नियोज्य शल्योद्धरणे प्रैरयदुद्धृते च शल्ये प्राणान्मुमोच ।

प्रतिबुद्धो मुहूर्तेन शोकोपहतचेतनः । अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥ १ ॥
रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् । आपेदे उपसर्गस्तं तमः सूर्यमिवासुरम् ॥ २ ॥
सभार्ये हि गते रामे कौसल्यां कोसलेश्वरः । विवक्षुरसितापाङ्गीं स्मृत्वा दुष्कृतमात्मनः ॥ ३ ॥
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् । अर्धरात्रे दशरथः सोऽस्मरद्दुष्कृतं कृतम् ॥ ४ ॥
स राजा पुत्रशोकार्तः स्मृत्वा दुष्कृतमात्मनः । कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ५ ॥

---

१८ ] ति० टी०—नदीनां वेगेन समुद्रसलिलमिवेत्युत्प्रेक्षामात्रं न तु तस्य तेन वृद्धिरित्याहुः परे तु महत्समुद्रसलिलं वेगेन चन्द्रोदयवृद्धिवेगे नदीनां हृदि तटद्वयान्तरे यथा वर्धत इत्यर्थः । समुद्रगामिनदीनां चन्द्रोदयकालिकसमुद्रवृद्धया वृद्धेः क्वियद्दूरमथाप्युपलम्भादित्याहुः ॥ १८ ॥

रा० टी०—तमिति । तं रामं चिन्तयमानायाः मे अयं शोकः हृद्येव वर्धते न बहिर्गच्छतीत्यर्थः तत्र दृष्टान्तः नदीनां वेगेन महत्समुद्रसलिलमिव एतेन शोकस्य स्थिरत्वं ध्वनितम् ॥ १८ ॥

गो० टी०—तमिति । नदीवेगेन समुद्रवृद्धिरिति लोकवादः ॥ १८ ॥

१९-२० ] ति० टी०—शुभं वचोऽतिदुःखिताया अपि पत्युद्वनयपरत्वाद्वचसः शुभत्वम् ॥ १९ ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये,रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

रा० टी०—एवमिति । कौशल्याया एवमनेन प्रकारेण कथयन्त्याः सत्याः सूर्यो मन्दरश्मिरभूदतएव रजनी रात्रिः अभ्यवर्तत ॥ १९ ॥

रा० टी०—अथेति । शोकेन समाक्रान्तः कौशल्यया प्रह्लादितो नृपः निद्राया वशमेयिवान्प्राप्तः ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

गो० टी०—एवमिति । कथयन्त्याः कथयन्त्यामित्यर्थः शुभं वचः अतिदुःखितावस्थायामपि पत्युद्वनयपरत्वात् वचसः शुभत्वम् ॥ १९ ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

१ ] ति० टी०—प्रतिबुद्धे इति ॥ १ ॥

रा० टी०—राजवृत्तमाह—प्रतिबुद्ध इति । मुहूर्तेन प्रतिबुद्धः गतनिद्रः शोकोपहतचेतनः राजा दशरथः चिन्तामभ्यपद्यत प्राप्नोत् ॥ १ ॥

गो० टी०—प्रतिबुद्ध इत्यादि ॥ १ ॥

२ ] ति० टी०—वासवोपमं तं दशरथम् उपसर्गे उपप्लवः शोक इति यावत् । आसुरं तमोऽसुरस्य राहोः संबन्धि तम आवरणशक्तिर्यथा सूर्यमावृणोति तद्वत् ॥ २ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—रामेति । वासवोपममिन्द्रसदृशं तं दशरथं विवासाद्धेतोः उपसर्गः उपद्रवहेतुभूतशोक आपेदे प्राप्नोत्तत्र दृष्टान्तः आसुरं राहुसंबन्धि तमः सूर्यमिव॥२॥

गो० टी०—रामलक्ष्मणयोरिति । रामलक्ष्मणयोर्विवासात् उपसर्गः महोपद्रवः पुत्रशोकरूपः आसुरम् असुरसंबन्धि तमः राहुः ॥ २ ॥

३ ] ति० टी०—आत्मनो दुष्कृतं स्मृत्वासितापाङ्गीं विवक्षुरभवत् ॥ ३ ॥

रा० टी०—सेति । रामे गते सति कोशलेश्वरः राजा आत्मनः दुष्कृतं स्मृत्वा वियोगहेतुत्वेन प्रकल्प्येत्यर्थः असितापाङ्गीं कौशल्यां विवक्षुः वक्तुमिच्छुः आसीदिति शेषः ॥ ३ ॥

गो० टी०—सभार्य इति । विवक्षुः अभूदिति शेषः । असितापाङ्गीमित्यनेन निवृत्तक्रोधत्वमुक्तम् ॥ ३ ॥

४-५ ] ति० टी०—षष्ठीं रजनीम् । प्राप्येति शेषः ॥४॥५॥

रा० टी०—स इति । रामे वनं प्रव्राजिते सति षष्ठीं रजनीं रात्रिमुपलभ्य अर्धरात्रे कृतं स्वनिष्पादितं दुष्कृतं स राजा दशरथोऽस्मरत् क्रमशः सस्मार ॥ ४ ॥

---

१ तथा प्रसादित इति गो. पाठः । २ आविवेशेति गो. पाठः । ३ संस्मरन्निति गो. पाठः ।

यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् । तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥ ६ ॥
गुरुलाघवमर्थानामारम्भे कर्मणां फलम् । दोषं वा यो न जानाति स बाल इति होच्यते ॥ ७ ॥
कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति । पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥ ८ ॥
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति । स शोचेत्फलवेलायां यथा किंशुकसेचकः ॥ ९ ॥
सोऽहमाम्रवणं छित्त्वा पलाशांश्च न्यषेचयम् । रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥ १० ॥

---

रा० टी०–स इति । पुत्रशोकार्ता कौशल्यामिदं वचनमब्रवीत् ॥ ५ ॥

गो० टी०–स राजेति । रजनीमिति सप्तम्यर्थे द्वितीया षष्ठीं रजनीं प्राप्येति शेषो वा संस्मरन् स्थित इति शेषः॥४॥ ५॥

६ ] ति० टी०–तदेव लभते तल्लभत एवेति च ॥ ६ ॥

रा० टी०–वचनाकारमाह–यदिति । हे कल्याणि ! शुभं विहितमशुभमविहितं वा यदाचरति तत् आत्मनः कर्मजं शुभाशुभकर्मजनितं शुभमशुभं वा सुखं दुःखं वेत्यर्थः कर्ता लभते एव शुभाशुभशब्दौ कार्यकारणयोस्तादात्म्यादुभयपरौ ॥ ६ ॥

गो० टी०–स्मृतमात्मदुष्कृतं वक्तुं तदनुकूलां लोकस्थितिं दर्शयति–यदिति । कल्याणीति सान्त्वोक्तिः । लोके पुरुषः शुभं वा अशुभं वा यदाचरति परस्य कर्मजं परशुभाशुभप्रापकपुण्यापुण्यात्मककर्मजम् तदेव शुभं वा अशुभं वा फलम् आत्मनोऽपि लभते तथा च ऋषेः पुत्रवियोगकरणेन ममापि पुत्रवियोगः प्राप्त इति भावः ॥ ६ ॥

७] ति० टी०–अर्थानामैहिकानां कर्मणां पारलौकिकानामारम्भ आरम्भकाले फलं प्रति यो गुरुलाघवं गौरवं लाघवं च दोषं वा गुणं वा न जानाति केनचिदल्पेन हत्यादिना महदनिष्टं केनचिन्महतापि यागादिनाल्पफलं तथेदं कर्माल्पदोषं बहुगुणमिदं च बहुदोषमल्पगुणमित्येवं न जानाति स बाल इत्युच्यते न स्तनंधयः ॥ ७ ॥

रा० टी०–गुर्विति । आरम्भे आरम्भसमये कर्मणां गुरुलाघवं वा फलं सुखं दोषं दुःखं वा यो न जानाति स बाल इत्युच्यते ॥ ७ ॥

गो० टी०–अन्यामपि लोकस्थितिमाह–गुरुलाघवमिति । कर्मणामारम्भे आरम्भसमये अर्थानां फलानां गुरुलाघवं गुरुत्वं लघुत्वं च फलं दोषं वा फलं फलहानिं वा यद्वा सुखरूपतां दुःखरूपतां वा यो न जानाति सः बालः अज्ञ इत्युच्यते अल्पफलकं बहुकर्मनिष्फलं च कर्मारभमाणो बुद्धिहीनः बहुफलकमल्पं कर्म सफलं कर्म चारभमाणः सुबुद्धिरित्यर्थः । तथा चात्मविनोदरूपाल्पफलं पुत्रवियोगरूपमहाफलहानिकरं मृगयाकर्म कुर्वन्नहमज्ञ एवास्मीति भावः ॥ ७ ॥

८ ] ति० टी०–छित्वा पलाशोपरोधनिवृत्त्यर्थमिति शेषः । पुष्पं दृष्ट्वा पुष्पमहत्त्वं दृष्ट्वा फलमहत्त्वमनुमायेत्यर्थः । गृध्नुर्लिप्सुः शोचति स्वतर्कितफलाभावात् ॥ ८ ॥

रा० टी०–कश्चिदिति । यः कश्चित्पुरुषः पुष्पमतिमनोहरपलाशकुसुमं दृष्ट्वा फले गृध्नुरभिलाषी सन् आम्रवणं छित्त्वा इदं न मनोहरपुष्पकमित्यस्य फलं न स्वादु भवितेति बुद्ध्या संछिद्य पलाशान्निषिञ्चति सः पुरुषः फलागमे फलप्राप्तिसमये शोचति तत्फलकटुत्वमुपलभ्य पश्चात्तापं करोतीत्यर्थः ॥ ८ ॥

गो० टी०–फलतारतम्यविचारमन्तरेण कर्मणि प्रवृत्तस्योक्तं बालिशत्वं दृष्टान्तमुखेन विवृणोति कश्चिदिति । लोके कश्चित्पुरुषः पुष्पं दृष्ट्वा फले गृध्नुः साभिलाषः सन् अधिकवर्णमहापुष्पवत्त्वात् तदनुगुणमहाफलं भविष्यतीति साभिलाष इत्यर्थः । आम्रवणं चूतवनम् अल्पनिर्वर्णपुष्पकं छित्त्वा पलाशोपरोधपरिहारार्थं छित्त्वा पलाशांश्च किंशुकानेव निषिञ्चति जलसेचनादिना पोषयति सः फलागमे फलप्राप्तिकाले सति अनुपभोग्यफलदर्शनात् शोचति ॥ ८ ॥

९ ] ति० टी०–दृष्टान्तं दार्ष्टान्तिके योजयति–अविज्ञायेति । फलं क्रियमाणकर्मणो भावि फलमविज्ञायाविचार्य कर्म त्वेव कर्मैव तु लौकिकं वैदिकं वानुधावत्यनुतिष्ठति शोचेत् तप्येदित्यर्थः ॥ ९ ॥

रा० टी०–अविज्ञायेति । यः पुरुषः फलमविज्ञाय इदं ममेष्टदमित्यविचार्य कर्म लौकिकीं वैदिकीं वा क्रियां अनुधावति करोति सः पुरुषः फलवेलायां शोचेत् तत्र दृष्टान्तः किंशुकस्य पलाशस्य सेचक इव ॥ ९ ॥

गो० टी०–दृष्टान्तोक्तं दार्ष्टान्तिके दर्शयति–अविज्ञायेति । भाविफलमविज्ञाय कर्म त्वेवानुधावति कर्मैवानुसरति तदनुकूलहिंसां तु न पश्यतीत्यर्थः ॥ ९ ॥

१० ] ति० टी०–अस्तु प्रकृते किं तत्राह सोऽहमिति । फलागमे रामकृतस्वोत्तरक्रियया लभ्यपारलौकिकफलप्राप्तिसमये रामाभिषेकजसुखप्राप्तिसमये वा ॥ १० ॥

रा० टी०–स इति । सः कर्मफलविषयकविवेकरहितोऽहमाम्रवणं तत्स्थानीयं शुभकर्म छित्त्वा पलाशाँस्तत्स्थानीयाशुभकर्माणि न्यषेचयमकरवमतः फलागमे तत्कर्मफलप्राप्तिसमये रामं त्यक्त्वा पश्चाच्छोचामि ॥ १० ॥

गो० टी०–एवं सदृष्टान्तमुक्तस्य प्रकृतोपयोगं दर्शयति–सोहमिति । आम्रवणच्छेदनपूर्वकपलाशसेचकतुल्योहमित्यर्थः । आम्रवणं छित्त्वेत्यनेन अभिषेकविघातपूर्वकरामवि-

लब्धशब्देन कौसल्ये कुमारेण धनुष्मता । कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥ ११ ॥
तदिदं मेऽनुसंप्राप्तं देवि दुःखं स्वयंकृतम् । संमोहादिह बालेन यथा स्याद्भक्षितं विषम् ॥ १२ ॥
यथान्यः पुरुषः कश्चित्पलाशैर्मोहितो भवेत् । एवं मयाप्यविज्ञातं शब्दवे[1]ध्यमिदं फलम् ॥ १३ ॥
देव्यनूढा त्वमभवो युवराजो भवाम्यहम् । ततः प्रावृडनुप्राप्ता [2]मम कामविवर्धिनी ॥ १४ ॥
[3]अपास्य हि रसान्भौमांस्तप्त्वा च जगदंशुभिः । परेताचरितां भी[4]मां रवि[5]राचरते दिशम् ॥ १५ ॥

---

ग्रासमं लक्ष्यते पलाशांश्च न्यषेचयमित्यनेन कैकेयीप्रिवकरणं लक्ष्यते ॥ १० ॥

११ ] ति० टी०—यदाचरतीत्याद्युक्तविषयमाह—लब्धेति । कुमारोऽजकुमारः शब्दवेधीति लब्धः शब्दो येन तादृशेन मया शब्दवेधीत्येवं लब्धकीर्तिनेति यावत् । कुमारेण जीवत्पितृकेण इदं वक्ष्यमाणम् ॥ ११ ॥

रा० टी०—ननु तत्किं दुष्कृतं कर्मेत्यत आह—लब्धेति । लब्धः श्रुतः शब्दो येन तेन धनुष्मता कुमारः शब्दवेधी अयं कुमारः शब्दश्रवणमात्रेण लक्ष्यान्विध्यतीति प्रशंसाविशिष्टेन मया पापं कृतम् ॥ ११ ॥

गो० टी०—एतद्दुःखानुभवस्य निदानं वक्तुमुपक्रमते—लब्धशब्देनेति । कुमारः शब्दवेधीति लब्धशब्देन प्राप्तख्यातिना मया इदं वक्ष्यमाणं पापं मुनिकुमारवधरूपं कर्मकृतमितिसंबन्धः यद्वा लब्धशब्देन लब्धगजतुल्यमुनिपुत्रशब्देन मया शब्दवेधी कुमार इत्यभिमानेन इदं वक्ष्यमाणं मुनिकुमारवधरूपं पापं कृतम् ॥ ११ ॥

१२ ] ति०टी०—तदिदं तत्फलमिदं दुःखम् । अज्ञानकृतकर्म५. कथमेवं फलं तत्राह—संमोहादिति । अज्ञानेनापि भक्षितं विषं यथा बालमपि हन्ति तद्वदित्यर्थः ॥ १२ ॥

रा० टी०—तदिति । तत्तस्मात्कर्मणः स्वयं कृतं निष्पादितमिदं वियोगजनितं दुःखं संप्राप्तं तत्र दृष्टान्तान्तरमाह—मोहादिदं दुःखदमिति ज्ञानाभावाद्बालेन यथा विषं भक्षितम् ॥१२॥

गो० टी०—शुभं वा अशुभं वा पुरुषकृतं कर्म लोकान्तरे जन्मान्तरे वा फलाय भवेत् मत्कृतकर्मणस्त्वत्युत्कटत्वादिहैव तत्फलं प्राप्तमित्याह—तदिदमिति । इह लोके बालेन संमोहात् भक्षितं विषं यथा दुःखरूपं स्यात्तथैव स्वयं कृतं तदिदं दुष्कृतं मे दुःखरूपम् अनुसंप्राप्तं जातमित्यर्थः ॥ १२ ॥

१३ ] ति० टी०—शब्दवेध्यं शब्दवेधित्वामित्यर्थे आर्षम् । इदं फलमेवं दुष्टफलमिति मयाप्यविज्ञातम् । अयं भावः—यथान्यः प्राकृतः पुरुषः पलाशैः पलाशपुष्पैर्मोहितस्तत्फलं न जानाति, तथाहमपि शब्दवेधित्वं लोकपूज्यं ज्ञात्वा तत्फलमेवं क्रूरमिति न ज्ञातवानिति । कतकस्तु—यथा पलाशपुष्पैरन्यो मोहितो भवति, तथाहं कैकेयीवाक्यैरिति शेषः । अथाज्ञानकृतस्यापि विषपानवदावश्यकं फलमित्युपसंहरति—एवमिति । शब्दवेधित्वरूपं सामर्थ्यं प्राप्य यत्कर्माविज्ञातं सत्कृतं तस्य कर्मण इदं फलं कैकयीवाक्यकृतो मोह इत्यर्थ इत्याह ॥ १३ ॥

रा० टी०—तदेव भङ्ग्यन्तरेण सदृष्टान्तमाह—यथेति । यथा कश्चित्प्राकृतः पुरुषः पलाशैः पलाशकुसुमैः मोहितः इदमनिष्टफलकमिति ज्ञानाभाववान् सन् भवेच्छुभफलकमिति तत्फलाभिकाङ्क्षी स्यात्तथा मयापि इदमशुभं फलं यस्य तच्छब्दवेध्यमविज्ञातमत एव शब्दवेध्यमिदं फलं प्रशंसारूपशुभफलदमिदमिति मोहितोऽभवमिति शेषः ॥ १३ ॥

गो० टी०—उक्तमर्थं संग्रहेण दर्शयन्नुपसंहरति—यथान्य इत्यादिना । अन्यः प्राकृतः कश्चित्पलाशैः पलाशपुष्पैः "फलेलुक्" यथा मोहितो भवेत् यादृशं पुष्पं तादृशं फलं भविष्यतीति मोहं प्राप्तो भवेत् एवं ममामि मयापि शब्दो वेध्यो लक्ष्यं यस्य स शब्दवेध्यः शरः शब्दवेध्यमयं शब्दवेध्यविकारभूतं तद्धेतुकमित्यर्थः फलमविज्ञातं शब्दवेधित्वख्यातिमात्रमेव जानता मया भाव्यनर्थफलं न विज्ञातमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—तादृशदुष्कर्मप्राप्तिः कदेत्यत्राह—देवीति । ॥ १४ ॥

रा० टी०—संक्षिप्योक्तं सकारणं कर्म विशदयन्नाह—देवीत्यादिभिः । हे देवि यदा त्वमनूढा विवाहरहिता अभवः अहं युवराजो भवामि अभवंस्ततस्तदा भौमान्भूमौ प्राप्तान् रसानपास्य संत्याज्य शोषयित्वेत्यर्थः । तत्र हेतुः—अंशुभिः किरणैः जगत्तप्त्वा परेताचरितां परेतसेवितामतएव भीमां दिशं दक्षिणामित्यर्थः । रविराचरते प्राप्नोत् अत एव कामविवर्धिनी प्रावृडनुप्राप्ता । श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

गो० टी०—एतादृशशब्दवेधनं कदा प्राप्तमित्याकाङ्क्षायामाह—देवीत्यादिना । अनूढा अकृतविवाहा युवत्वे सति राजा युवराजः भवामि अभवं प्रावृट् वर्षाकालः ॥ १४ ॥

१५ ] ति० टी०—प्रावृषं वर्णयति—अपास्येति । भौमान्रसानपास्य निरस्य शोषयित्वेति यावत् तेनैव हेतुनाजगत्तप्त्वा परेताचरितामतएव भीमां दिशं दक्षिणां दिशमा-

---

१ वेध्यमयमिति गो. पाठः । २ मदकामविवर्धनीति गो. पाठः । ३ उपास्येति गो. पाठः । ४ भीतामिति रा. पाठः । ५ आविशते इति गो. पाठः ।

उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः । ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥ १६ ॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः । वृष्टिवातावधूताग्रान्पादपानभिपेदिरे ॥ १७ ॥
पतितेनाम्भसाऽऽच्छन्नः पतमानेन चासकृत् । आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥ १८ ॥
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि । सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजङ्गवत् ॥ १९ ॥
तस्मिन्नतिसुखे काले धनुष्मानिषुमान्रथी । व्यायामकृतसंकल्पः सरयूमन्वगां नदीम्[1] ॥ २० ॥
निपाने महिषं रात्रौ गजं वाभ्यागतं मृगम् । अन्यद्वा[2] श्वापदं किंचिज्जिघांसुरजितेन्द्रियः[3] ॥ २१ ॥
अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः । अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥ २२ ॥

चरते गच्छति । 'आविशते' इति पाठान्तरम् 'उपास्य' इति पाठेऽपि सेवित्वेत्यर्थद्वारा शोषयित्वेत्यत्रैव पर्यवसानं बोध्यम् ॥ १९ ॥

गो० टी०–उपास्येति । उपास्य गृहीत्वा रसान् जलानि जगद्भूमिं परेताचरितां प्रेताचरितामत एव भीमां दिशं दक्षिणामित्यर्थः । आविशते आविशते स्म ॥ १९ ॥

१६ ] ति० टी०–सारङ्गा हरिणाश्चातका वा ॥ १६ ॥

रा० टी०–उष्णमिति । स्निग्धाः सजलाः मेघाः ददृशिरे अत एव उष्णमन्तर्दधे तिरोबभूव ततस्तस्माद्धेतोर्भेकादयः जहृषिरे तत्र भेकाः मण्डूकाः, सारङ्गाः हरिणाश्चातकाश्च, बर्हिणः मयूराः ॥ १६ ॥

गो० टी०–उष्णमिति । स्निग्धाः शीतलाः भेका मण्डूकाः, सारङ्गा हरिणाश्चातका वा ॥ १६ ॥

१७ ] ति० टी०–क्लिन्नाः पक्षोत्तराः पक्षोपरिभागा येषाम् अत एव कृच्छ्रात्कृच्छ्राख्याचरणनिमित्तं स्नाता इव वृष्टियुक्तवातेन कम्पिताग्रान् ॥ १७ ॥

रा० टी०–क्लिन्नेति । क्लिन्ना आर्द्राः पक्षोत्तराः पक्षोत्तरभागाः येषां ते अत एव कृच्छ्राद्व्रतविशेषाद्धेतोरिव स्नाताः पतत्रिणः पक्षिणः वृष्टिवाताभ्यामवधूतानि अग्राणि येषां तान्पादपान्वृक्षानभिपेदिरे प्रापुः ॥ १७ ॥

गो० टी०–क्लिन्नपक्षोत्तरा इति । क्लिन्नपक्षोत्तराः सिक्तपक्षोपरिभागाः अत एव स्नाता इव स्थिताः वृष्टिवातावधूताग्रान् वृष्टिवाताभ्यां कम्पिताग्रानपि पादपान् कृच्छ्रात् क्लिन्नपक्षत्वेन यत्नात् अभिपेदिरे आरूढाः ॥ १७ ॥

१८ ] ति० टी०–पतमानेन पतता मत्ताः सारङ्गा यस्मिंस्तादृशोऽचलस्तोयराशिरिवाबभौ ॥ १८ ॥

रा० टी०–पतितेनेति । पतितेन भूतकालोद्भवपातविशिष्टेन पतमानेन वर्तमानकालोद्भवपातविशिष्टेन च अम्भसा जलेन आच्छन्नः मत्तसारङ्गः मदविशिष्टगजः अचलः तरङ्गरहितः तोयराशिः समुद्र इव आबभौ 'सारङ्गो हरिणे भृङ्गे चातके शबले गजे' इति च निघण्टुः ॥ १८ ॥

गो० टी०–पतितेनेति । पतितेन पतमानेन च निरन्तरेणेत्यर्थः । अम्भसा वर्षजलेन छन्नः मत्तसारङ्गः मत्तगजः 'सारङ्गो हरिणे भृङ्गे चातके शबले गजे' इति निघण्टुः । अचलो गिरिः अचलो निश्चलः निस्तरङ्गः तोयराशिः समुद्र इवाबभौ अचलपदस्यावृत्त्या एकस्य गिरिपरस्य विशेष्यत्वम् अन्यस्य तोयराशिविशेषणत्वमिति ध्येयम् ॥ १८ ॥

१९ ] ति० टी०–गिरिधातुभ्यो धातुरूपहेतुभ्यः क्वचित्पाण्डुरधातुसंयोगात्पाण्डुराणि क्वचिदरुणधातुसंयोगादरुणानि क्वचित्सभस्मानि, भस्मसंबन्धाद्भुजंगवत्कुटिलानीति शेषः ॥ १९ ॥

रा० टी०–पाण्डुरेति । विमलानि मलरहितान्यपि स्रोतांसि भुजङ्गवत्कुटिलगतिमत्त्वेन भुजङ्गसदृशानि गिरिधातुभ्यः हेतुभ्यः पाण्डुरारुणवर्णानि पाण्डुरवर्णारुणवर्णविशिष्टानि सभस्मानि भस्मसंबन्धाद्भस्मसहितानि च सुस्रुवुः ॥ १९ ॥

गो० टी०–पाण्डुरारुणवर्णानीति । गिरिधातुभ्यो हेतुभ्यः विमलान्यपि स्रोतांसि पाण्डुरारुणवर्णानि पाण्डुरधातुसंयोगात् पाण्डुरवर्णानि अरुणधातुसंयोगादरुणवर्णानि सभस्मानि दावानलभस्मसहितानि भुजङ्गवत् नानावर्णयुक्तसर्पा इव कुटिलानि सुस्रुवुः ॥ १९ ॥

२० ] ति० टी०–व्यायामो मृगयाविहारः ॥ २० ॥

२१ ] ति० टी०–जिघांसुरन्वगामित्यन्वयः ॥ २१ ॥

रा० टी०–तस्मिन्निति । अतिसुखे अतिसुखके तस्मिन्काले धनुष्मान् धनुर्विशिष्टः इषुमान्बाणविशिष्टः रथी रथविशिष्टः अजितेन्द्रियः न जितानि मृगयाविहारान्निवर्तितानीन्द्रियाणि येन सः अत एव व्यायामे मृगयाविहारे कृतसंकल्पो निश्चयो येन सः अत एव महि प्रशंसनीये निपाने नदीजलपानोचितनदीप्रदेशे अभ्यागतं प्राप्तं यम् उपद्रवकारकं गजं मृगं हिंसार्थमन्वेषणकर्तारमन्यद्वा किंचिच्छ्वापदं व्याघ्रादिं जिघांसुरहं सरयूं नदीमन्वगाम् । श्लोकद्वयमेकान्वयि 'उपसर्गे परीक्षे च चकारः परिकीर्तितः' इत्येकाक्षरः । एको वा शब्दः हेतौ ॥ २० ॥ २१ ॥

गो० टी०–तस्मिन्नित्यादिश्लोकद्वयमेकं वाक्यम् व्यायामकृतसंकल्पः मृगयाविहारे कृतसंकल्प इत्यर्थः । निपीयते अस्मिन्निति निपानम् अवतारस्थलं तस्मिन् श्वापदं व्याघ्रादिदुष्टमृगम् ॥ २० ॥ २१ ॥

२२ ] ति० टी०–पूर्यतः समन्तत्वमार्थम् ॥ २२ ॥

[1] नदीमिति गो. पाठः । [2] अन्यं वेति गो. पाठः । [3] कंचिदिति गो. पाठः ।

ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम् । शब्दं प्रति गजप्रेप्सुरभिलक्ष्यमपातयम् ॥ २३ ॥
अमुञ्चं निशितं बाणमहमाशीविषोपमम् । तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ॥ २४ ॥
हा हेति पततस्तोये बाणाद्व्यथितमर्मणः । तस्मिन्निपतिते भूमौ वागभूत्तत्र मानुषी ॥ २५ ॥
कथमस्मद्विधे शस्त्रं निपतेच्चे तपस्विनि । प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः ॥ २६ ॥
इषुणाऽभिहतः केन कस्य वाऽपकृतं मया । ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ॥ २७ ॥
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते । जटाभारधरस्यैव वल्कलाजिनवाससः ॥ २८ ॥
को वधेन ममार्थी स्यात्किं वास्यापकृतं मया । एवं निष्फलमारब्धं केवलानर्थसंहितम् ॥ २९ ॥

---

रा० टी०—अथेति । अथ सरयूतीरगमनानन्तरमन्धकारे अन्धकारसमये जले पूर्यतः पूर्यमाणस्य कुम्भस्य घटस्य अचक्षुर्विषये प्रभूतं घोषं नर्दतः वारणस्य घोषमिव अश्रौषम् ॥२२॥

गो० टी०—अथान्धकार इति । पूर्यत इति शत्रन्तत्वमार्षम् ॥ २२ ॥

२३ ] ति० टी०—शब्दं प्रति शब्दं लक्ष्यं कृत्वा, यद्वा शब्दावगतवेध्यं प्रति गजप्रेप्सुर्गजरूपं वध्यं प्राप्तुमिच्छुः । तज्जिघांसया शरमुद्धृत्याभिलक्ष्यं संमुखमपातयम् ॥ २३ ॥

रा० टी०—तत इति । ततस्तच्छब्दश्रवणानन्तरमाशीविषोपमं शरमुद्धृत्य गजप्रेप्सुः वध्यत्वेन गजं प्राप्तुमिच्छुरहमभिलक्ष्यं लक्ष्यगजसमीपवर्तिनः शब्दं प्रति अपातयमत्यजम् ॥ २३ ॥

गो० टी०—ततोऽहमिति । गजप्रेप्सुः गजरूपवेध्यं प्राप्तुमिच्छुः हननेच्छुरित्यर्थः । शब्दं प्रति शब्दं लक्ष्यं कृत्वा अभिलक्ष्य शब्दकर्तृभूतो गज एतावन्मात्रे तिष्ठतीति लक्षीकृत्येत्यर्थः । शरमपातयमिति संबन्धः ॥ २३ ॥

२४–२५ ] ति० टी०—यत्र निशितं बाणममुञ्चं तत्र वनौकस आरण्यकमनुष्यस्य बाणाभिहतमर्मणस्तोये पततो हा हेति व्यक्ता वागुषसि प्रादुरासीत् तत्र भूमौ तस्मिन्निपतिते सति मानुषी वागभूत् ॥ २४ ॥ २५ ॥

रा० टी०—अमुञ्चमिति । पदानि । शितं तीक्ष्णं बाणमहममुञ्चं तत्र तस्मिन्नुषसि प्रातःकाले बाणात् व्यथितमर्मण: अत एव तोये पततः वनौकसः वनवासिनः हा हेति शब्देन व्यक्ता वाक् प्रादुरासीत् । सार्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०—अमुञ्चमिति । यत्र बाणममुञ्चं तत्र वनौकसः वनम् ओकः स्थानं यस्य तस्य तपस्विन इति यावत् व्यक्ता वाक् प्रादुरासीदिति संबन्धः ॥ २४ ॥

रा० टी०—तस्मिन्निति । तस्मिन् वनवासिनि तत्र भूमौ निपतिते सति अस्मद्विधे तपस्विनि तपोनिरते शस्त्रं कथं निपतेत् इति मानुषी मनुष्योच्चारिता वागभूत् मम शत्रोरभावादसंभवमेतदिति तात्पर्यम् । अर्धद्वयमेकान्वयि ॥ २६ ॥

गो० टी०—विविच्य वाग्रुदितेत्याह—तस्मिन्नित्यादि । अस्मद्विधे अजातशत्रौ प्रविविक्तां प्रकर्षेण निर्जनां रात्रौ अपररात्रौ उदकमाहारयतीत्युदाहारः मन्थौदनेत्यादिना उदकशब्दस्योदादेशः । यद्यपि हारशब्दे परे उदादेशो विहितः तथाप्येकदेशविकृतमनन्यवद्भवतीति दीर्घः, छान्दसो वा । किं कृतं किमनिष्टं कृतं न्यस्तदण्डस्य उपरतवाङ्मनःकायसंबन्धिपरहिंसस्य 'दण्डोऽस्त्री शासने राज्ञां हिंसायां दमसैन्ययोः' इति विश्वः अर्थी प्रयोजनवान् गुरुतल्पगं गुरुदारगम् 'तल्पं शय्याट्टदारेषु' इत्यमरः । हत इत्येतन्मातापितरावित्यत्र वचनविपरिणामेन योजनीयम् सर्वे निहता इत्युक्तिर्मातापितृजीवनहेतुभूतस्य स्वस्य वधात् अकृतात्मना अनिश्चितबुद्धिना इति वागभूदिति पूर्वेणान्वयः ॥ २६–३२ ॥

२६ ] ति० टी०—तामेव वाणीमाह—कथमित्यादि । अस्मद्विधे तपस्विन्यजातशत्रौ प्रविविक्तां निर्जनां रात्रावपररात्रे उदाहार इत्यत्र दीर्घ आर्षः ॥ २६ ॥

रा० टी०—प्रविविक्तामिति । उदाहारः उदकाहरणकर्ता योऽहं प्रविविक्तां जनसंचाररहितां नदीमागतः सोऽहं केन पुरुषेण इषुणा बाणेनाभिहतः कस्य पुरुषस्य मयापकृतम् ॥२६॥

२७ ] ति० टी०—न्यस्तदण्डस्य त्यक्तपरपीडस्य ॥ २७ ॥

रा० टी०—ऋषेरिति । न्यस्तदण्डस्य त्यक्तपरपीडनस्य वन्येन फलादिना जीवतः मद्विधस्य ऋषेः शस्त्रेण वधः कथं विधीयते ॥ २७ ॥

२८ ] ति० टी०—जटाभारेत्यादिना हन्तुरपि लाभाभावः सूचितः ॥ २८ ॥

रा० टी०—जटेति । जटाभारधरस्य द्रव्यादिभाररहितस्येत्यर्थः । मम वधेन कोऽर्थी धनादिमान् स्यात् । नन्वपकारिवध एवार्थः इत्यत आह—कस्य मयाऽपकृतं न कस्यापीत्यर्थः ॥ २८ ॥

२९ ] ति० टी०—मम वधेन कः पुमानर्थी मनुष्यमांसेन न कस्यापि प्रयोजनमिति व्यर्थ एव मद्वध इति भावः । परलोकनाशकत्वात्केवलानर्थसंहितमिह लोके च फलरहितम् ॥२९॥

रा० टी०—एवमिति । एवमनेन प्रकारेण निष्फलं फलरहितं कर्म आरब्धं आरम्भकर्तारं केवलानर्थसंहितं केवलानर्थेन प्रयोजनसंसर्गशून्यस्वार्थविध्वंसेन संहितं सहितं जनं

---

१ अत्र त्वपातयमिति गो. पाठः । २ बाणाभिहतेति गो. बाणव्यथितेति रा. पाठः । ३ बाणे इति गो. पाठः । ४ शितिं गो पाठः । ५ वा किं कृतमिति गो. पाठः । ६ अपरराच इति पुस्तके दृश्यते ।

न कश्चित्[1]साधु मन्येत यथैव गुरुतल्पगम् । नेमं[2] तथानुशोचामि जीवितक्षयमात्मनः ॥ ३० ॥
मातरं पितरं चोभावनुशोचामि मद्वधे । तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ॥ ३१ ॥
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति । वृद्धौ च मातापितरावहं चैकेषुणा हतः ॥ ३२ ॥
केन स्म निहताः सर्वे सुबालेनाकृतात्मना । तां गिरं करुणं[3] श्रुत्वा मम धर्मानुकाङ्क्षिणः ॥ ३३ ॥
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि । तस्याहं करुणं श्रुत्वा ऋषेर्विलपतो निशि[4] ॥ ३४ ॥
संभ्रान्तः शोकवेगेन भृशमासं विचेतनः । तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ॥ ३५ ॥
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् । अवकीर्णजटाभारं प्रविद्धकलशोदकम् ॥ ३६ ॥
पांसुशोणितदिग्धाङ्गं शयानं शल्यवेधितम्[5] । स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनम्[6] ॥ ३७ ॥
इत्युवाच[7] वचः क्रूरं दिधक्षन्निव तेजसा । किं तवापकृतं राजन्वने निवसता मया ॥ ३८ ॥
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया । एकेन खलु बाणेन मर्मण्यभिहते मयि ॥ ३९ ॥

कश्चिदस्मिँल्लोके गुरुतल्पगमिव साधु न मन्येत एतेन साधुकृतमिति कश्चिन्न वदिष्यतीत्यर्थः ॥ २९ ॥

३०-३१ ] ति० टी०—कश्चिदिहलोके परत्र वा यथा गुरुतल्पगं न साधु मन्यन्त एवमेनं न मन्येत कोऽपीत्यर्थः । आत्मन इमं जीवितक्षयं नानुशोचामि ॥ ३० ॥ ३१ ॥

रा० टी०—नेति । मद्वधे सति मातरं पितरमुभौ यथानुशोचामि तथात्मनः स्वस्य इमं प्राप्तं जीवितक्षयं प्राणनाशं नानुशोचामि ॥ ३० ॥

रा० टी०—तदिति । मया चिरकालभृतं बहुकालं पोषितं वृद्धं तदेतन्मिथुनं मातापितृयुग्मं मयि पञ्चत्वमापन्ने प्राप्ते सति कां वृत्तिं जीविकां वर्तयिष्यति प्राप्स्यति ॥ ३१ ॥

३२ ] ति० टी०—एकेनेषुणा वृद्धौ हतौ, अहं च हतः मद्वधेन तयोर्वधस्य सिद्धत्वादित्याशयः ॥ ३२ ॥

रा० टी०—वृद्धाविति । यस्य मातापितरौ वृद्धौ सोऽहमकृतात्मना अनिश्चितान्तःकरणेन अत एव सुबालेन केन पुरुषेणैकेषुणा एकबाणेन हतोऽस्मि येनैकस्यापि हननेन वयं सर्वे निहताः रक्षकाभावान्मातापितरावपि निहतप्रायावित्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—अकृतात्मनाऽजितेन्द्रियेण धर्मानुकाङ्क्षिणो धर्मप्रतीक्षाशीलस्य मम कराभ्यामित्यन्वयः ॥ ३३ ॥

रा० टी०—तामिति । करुणां कारुण्यजनिकां तां गिरं श्रुत्वा विद्यमानस्य धर्मानुकाङ्क्षिणः धर्ममात्रापेक्षासहितस्य अत एव व्यथितस्य मे सशरं शरान्तरसहितं चापं भुव्यपतत् ॥ ३३ ॥

गो० टी०—तामिति । सशरं चापमित्यनेन शरे मुक्तेऽपि हस्तलाघवाच्छरान्तरं धनुषि संहितवानित्यवगम्यते करुणां गिरं श्रुत्वा करुणाजनकं वचः श्रुत्वा स्थितस्येति शेषः ॥३३॥

३४-३५ ] ति० टी०—करुणं करुणाजनकं वचः श्रुत्वा विलपतः । 'लालप्यतः' इति पाठे तु यङन्ताच्छता आर्षः ॥ ३४ ॥ ३५ ॥

रा० टी०—तस्येति । विलपतस्तस्य ऋषेः करुणं करुणाजनकं वचः श्रुत्वा शोकवेगेन भृशं संभ्रान्तः उद्वेगं प्राप्तः अत एव विचेतन आसं लालप्यत इति पाठे तु यङन्ताच्छता आर्षः इति भट्टाः 'लालपतः' इति भूषणपाठः ॥ ३४ ॥

गो० टी०—तस्येति । लालपत इति यङ्लुगन्ताच्छतृप्रत्ययः प्रलपत इत्यर्थः विलपनमित्यर्थसिद्धम् ॥ ३४ ॥

३६ ] ति० टी—प्रविद्धं ध्वस्तं पर्यस्तं वा ॥ ३६ ॥

रा० टी०—तमिति । तम ऋषिणाधिष्ठितं देशमागम्य दीनसत्त्वः क्षीणबलः अत एव सुदुर्मनाः अहं अवकीर्णजटाभारमवकीर्णः शिथिलीभूतो जटाभारो यस्य तं प्रविद्धं विभिन्नं कलशोदकमुदककलशो यस्य तं पांसुशोणिताभ्यां दिग्धं व्याप्तमङ्गं यस्य तमिषुणा हतमत एव शल्यपीडितं विद्धबाणजनितपीडाविशिष्टमत एव शयानं भुवि पतितं तापसमपश्यम् । अर्धचतुष्टयमेकान्वयि ॥ ३६ ॥ ३६ ॥

गो० टी०—तमिति । दीनसत्त्वः दीनहृदयः सुदुर्मनाः अत्यन्तदुःखितमनाः प्रविद्धकलशोदकं पर्यस्तकलशोदकमित्यर्थः नतु ध्वस्तकलशोदकमिति ततस्तं घटमादाय पूर्णं परमवारिणेति वक्ष्यमाणविरोधात् पांसुशोणितदिग्धाङ्गं पांसुविशिष्टशोणितेन लिप्ताङ्गं शल्यपीडितं शरायपीडितम् ॥ ३६ ॥ ३६ ॥

३७-३९ ] ति० टी०—त्रस्तं नेत्राभ्यामुद्वीक्ष्य॥३७-३९॥

रा० टी०—स इति । स तापसः त्रस्तं भीतिविशिष्टमत एव अस्वस्थचेतनं मां समुद्वीक्ष्य तेजसा दिधक्षन् दग्धुमिच्छन्निव क्रूरं प्रातिभासिकक्रूरत्वविशिष्टमितीदं वच उवाच ॥३७॥

गो० टी०—स मामुद्वीक्ष्येति । त्रस्तं भीतमत एवास्वस्थचेतसं व्याकुलचित्तम् ॥ ३७ ॥

रा० टी०—वचनाकारमाह—किमिति । हे राजन् ! मया

१ कश्चिदिति गो. पाठः । २ नाहमिति गो. पाठः । ३ करुणामिति गो. रा. पाठः । ४ निशि लालपतो वहिति गो. पाठः । ५ पीडितमिति गो. रा. पाठः । ६ चेतसमिति गो. पाठः । ७ तत इति गो. पाठः ।

द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे । तौ नूनं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ ॥ ४० ॥
चिरमाशां कृतां कष्टां तृष्णां संधारयिष्यतः । न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा ॥ ४१ ॥
पिता यन्मां न जानीते शयानं पतितं भुवि । जानन्नपि च किं कुर्यादशक्तश्चापरिक्रमः ॥ ४२ ॥
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् । पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव ॥ ४३ ॥
न त्वामनुदहेत्क्रुद्धो वनमेंधिरिवैधितः । इयमेकपदी राजन्यतो मे पितुराश्रमः ॥ ४४ ॥
तं प्रसादय गत्वा त्वं न त्वां संकुपितः शपेत् । विशल्यं कुरु मां राजन्मर्म मे निशितः शरः ॥ ४५ ॥
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा । सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति ॥ ४६ ॥
इति मामविशच्चिन्ता तस्य शल्यापकर्षणे । दुःखितस्य च दीनस्य मम शोकातुरस्य च ॥ ४७ ॥

---

किं तवापकृतं येनापकारेण गुर्वर्थं मातापितृक्रियानिर्वाहार्थमम्भो जलं जिहीर्षुराहर्तुमिच्छुरहं त्वया ताडितः ॥ ३८ ॥

रा० टी०—एकेनेति । एकेन बाणेन मर्मणि मर्मस्थले मयि अभिहते सति मे जनयिता जनकः माता चेमौ द्वौ अन्धावपि निहतौ रक्षकाभावेन निहतप्रायौ ॥ ३९ ॥

गो० टी०—किं तवेति । जिहीर्षुः आहर्तुमिच्छुः गुर्वर्थं मातापितृनिमित्तम् ॥ ३८ ॥ ३९ ॥

४० ] ति० टी०—जनयिता पिता नूनं निश्चयेन मत्प्रतीक्षौ ॥ ४० ॥

रा० टी०—ताविति । पिपासितौ पातुमिच्छू अत एव मत्प्रतीक्षौ मत्कर्मकप्रतीक्षावन्तौ तौ मातापितरौ कष्टां कष्टसंपादिकां तृष्णां पिपासाहेतुकां चिरं कृतां बहुकालतो निष्पन्नामाशां मदानीतजलविषयकोत्कटेच्छां संधारयिष्यतः ॥४०॥

गो० टी०—ताविति । आशाकृतां पुत्रो मे जलमाहरिष्यतीत्याशासहितां तृष्णां पिपासां कष्टां दुःसहाम् ॥ ४० ॥

४१ ] ति० टी०—कृतामाशां पुत्रो जलमानेष्यतीत्येवंरूपां ममागमनात्तृष्णां पिपासां च चिरं धारयिष्यतः तपसः श्रुतस्य वेत्यत्र मामकस्य पित्र्यस्य चेति शेषः । फलयोगः फलसंबन्धो नास्ति ॥ ४१ ॥

रा० टी०—नेति । तपसः मदाचरितशुभकर्मणः श्रुतस्य मच्छ्रवणविषयीभूतेतिहासपुराणादेर्वा फलयोगः फलसंबन्धः मयि नास्ति यद्यस्माद्धेतोः पतितं बाणेन पातितमत एव भुवि शयानं मां न जानीते एतेन तज्ज्ञाने यथाकथंचिद्दुःखनिवृत्तिः स्यादिति संभावना सूचिता ॥ ४१ ॥

गो टी०—न नूनमिति । तपसः श्रुतस्य वेत्यत्र मामकस्येति विशेषणं देयम् ॥ ४१ ॥

४२ ] ति० टी०—अपरिक्रमः संचाराक्षमोऽन्धत्वात्॥४२॥

रा० टी०—दुःखनिवर्तनस्याशक्यत्वादाह—जानन्निति । अपरिक्रमः पङ्गुत्वेन संचाररहितः अत एव अशक्तः पिता जानन्नपि किं कुर्यात् न किमपीत्यर्थः अकरणे दृष्टान्तः भिद्यमानं नगं वृक्षं त्रातुमशक्तिः अन्यो नग इव ॥ ४२ ॥

गो० टी०—जानन्निति । अपरिक्रमः असंचारः पङ्गुरिति यावत् भिद्यमानं वातादिनेति शेषः ॥ ४२ ॥

४३ ] ति० टी०—अशक्तिर्वृद्धत्वात् वातादिना भिद्यमानं नगं वृक्षमन्यो नग इव मां त्रातुमशक्तः त्वमेव मे पितुराचक्ष्व ॥ ४३ ॥

रा० टी०—राजकर्तव्यं बोधयन्नाह—पितुरिति । आचक्ष्व मद्वृत्तान्तं कथय । अर्थं पृथक् ॥ ४३ ॥

गो० टी०—पितुरिति । राघवेति संबोधनात् सरयूतीरे बहुशो मृगयापर्यटनेन पूर्वमेव दशरथं ज्ञातवानित्यवगम्यते । न त्वामनुदहेदिति । अन्यथा दहेदिति भावः ॥ ४३ ॥

४४ ] ति० टी०—एधितो वर्धितो वह्निर्वनमिव त्वां न दहेत् मा दहत्वित्यर्थः एकपदी सूक्ष्ममार्गः यतो यया एकपद्या मे पितुराश्रमः प्राप्यते सेयमेकपदी ॥ ४४ ॥

रा० टी०—तं शापभीतमवलोक्याह—नेति । एधितः प्रवृद्धः अग्निर्वनमिव क्रुद्धो मत्पिता त्वां न दहेत् तेन पितुरतिशान्तिमत्वं ध्वनितम् । आश्रमप्रापकमार्गं बोधयन्नाह—इयमेकपदी मार्गः यतो यया आश्रमः प्राप्यते इति शेषः तेनानयैव गच्छेति सूचितम् 'वर्त्मन्येकपदीति च' इत्यमरः ॥४४॥

गो० टी०—इयमिति । एकपदी एकपदन्यासमात्रयुक्ता सरणिरित्यर्थः । ' वर्त्मन्येकपदी ' इत्यमरः । यतः यत्रैकपद्याम् ॥ ४४ ॥

४५–४७ ] ति० टी०—तया गत्वा तथा प्रसादय यथा त्वां न शपेत् मां विशल्यं कुरु ते शरो मे मर्म रुणद्धि पीडयति । मृदु सिकताप्रायम् सोत्सेधमुच्छ्रायवत्तीरम् अम्बुरयो नदीवेग इव ॥ ४५–४७ ॥

रा० टी०—तमिति । प्रसादय प्रसन्नं कुरु यतः संकुपितः पिता न शपेत् । अर्थं पृथक्—विशल्यमिति । हे राजन् ! विशल्यं विद्धबाणरहितं कुरु तत्र हेतुः शरः मे मर्म मर्मस्थलं रुणद्धि पीडयति तत्र दृष्टान्तः मृदुवालुकामयत्वेनातिकोमलं सोत्सेधमुन्नतत्वविशिष्टं तीरमम्बुरयः गङ्गाप्रवाहवेगो यथा । अर्धद्वयमेकान्वयि ॥ ४६ ॥

---

१ आशाकृतामिति गो. पाठः । २ अशक्तिरपरिक्रम इति गो. पाठः । ३ अशक्तिरिति रा. पाठः । ४ वह्निरिति गो-पाठः । ५ त्वां स इति गो-पाठः ।

लक्षयामास स ऋषिश्चिन्तां मुनिसुतस्तदा । ताम्यमानं स मा कृच्छ्रादुवाच परमार्थवित् ॥ ४८ ॥
सीदमानो विवृत्ताङ्गोऽचेष्टमानो गतः क्षयम् । संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाम्यहम् ॥ ४९ ॥
ब्रह्महत्याकृतं तापं हृदयादपनीयताम् । न द्विजातिरहं राजन्मा भूत्ते मनसो व्यथा ॥ ५० ॥
शूद्रायामस्मि वैश्येन जातो नरवराधिप । इतीव वदतः कृच्छ्राद्बाणाभिहतमर्मणः ॥ ५१ ॥
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले । तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ॥
स मामुद्वीक्ष्य संत्रस्तो जहौ प्राणांस्तपोधनः ॥ ॥ ५२ ॥

जलार्द्रगात्रं तु विलप्य कृच्छ्रं मर्मव्रणं संततमुच्छ्वसन्तम् ।
ततः सरय्वां तमहं शयानं समीक्ष्य भद्रे सुभृशं विषण्णः ॥ ५३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रा० टी०—तपस्विवचनश्रवणानन्तरकालिकं राजवृत्तमाह—सेति । सशल्यः बाणसहितोऽयं प्राणैः क्लिश्यते विशल्यश्चेद्विनशिष्यति विनङ्क्ष्यति इति चिन्ता शल्यापकर्षणे मामविशत् ॥ ४६ ॥

गो० टी०—विशल्यमिति । मर्म रुणद्धि पीडयतीत्यर्थः । मृदुसिकतामयं सोत्सेधम् औन्नत्यवत् अम्बुरयः नदीवेगः ॥ ४६ ॥ ४६ ॥

रा० टी०—दुःखितस्येति । शोकातुरस्य मे चिन्तां स ऋषिर्ज्ञानी मुनिसुतः लक्षयामास अत एव ताम्यमानं मां कृच्छ्रादुवाच । सार्धश्लोक एकान्वयी ॥ ४७ ॥ ४८ ॥

गो० टी०—दुःखितस्येति । दुःखितस्य महदकृत्यं प्राप्तमिति दुःखितस्य शोकातुरस्य ब्रह्महत्या भविष्यतीति भिया शोकेन पीडितस्य ॥ ४७ ॥

४८ ] ति० टी०—मम चिन्तां लक्षयामासेत्यन्वयः । एवं चिन्तया शल्यं नोद्धरतीति ज्ञातवान् परमार्थः शास्त्रतत्त्वम् । 'परमार्तवत्' इति पाठे परमार्तः सन्नित्यर्थः ॥ ४८ ॥

गो० टी०—ताम्यमान इति । क्षयं गतः नाशं प्राप्तुमुपक्रान्तः संस्तभ्येत्यादिश्लोकद्वयस्य इति मामुवाचेत्यनेनान्वयः । स्थिरचित्तो भवाम्यहमित्यत्र स्थिरचित्तो भवानथेति च पाठः शूद्रायां वैश्येन जातः करण इत्यर्थः 'शूद्राविशोस्तु करणः' इत्यमरः ॥ ४८—५० ॥

४९ ] ति० टी०—क्षयं शक्तिक्षयं गतः प्राप्तः विवृत्ताङ्गः परावृत्तनेत्रः अचेष्टमानो हस्तपादादिचेष्टारहितः धैर्येण शोकं संस्तभ्याहं स्थिरचित्तो भवामि मम चित्ते मोहो नास्तीत्यर्थः अतो यद्वदामि तच्छृण्वित्यर्थः । शोकं ब्रह्महत्याभिजं संस्तभ्य त्यक्त्वा अधुना स्थिरचित्तो भवेति पाठान्तरेऽर्थः ॥ ४९ ॥

रा० टी०—वचनाकारमाह—सीदमान इति । सीदमानः क्लेशं प्राप्तः तत्र हेतुः विवृत्ताङ्गः विपरिणतनेत्रादिविशिष्टः अत एव अचेष्टमानः कायव्यापाररहितः अत एव क्षयं विनाशं गतः प्राप्तोऽहं धैर्येण शोकं संस्तभ्य निरुध्य स्थिरचित्तो भवामि ॥४९॥

५० ] ति० टी०—अतो ब्रह्महत्याकृतं तापं भयम् अर्धचादिस्तापशब्दः ॥ ६० ॥

रा० टी०—ब्रह्महत्येति । हे राजन्! ब्रह्महत्याकृतं ब्राह्मणहननजनितं पापं हृदयात्स्वान्तःकरणादपनीयतां निःसार्य तां ब्रह्महत्यादोषो मां प्राप्तः इति स्वनिश्चयस्त्यज्यतामित्यर्थः । ननु कथं त्याग इत्यत आह—अहं द्विजातिर्न अतस्ते मनसो व्यथा दुःखं मास्तु ॥ ६० ॥

५१ ] ति० टी०—वैश्येन शूद्रायां जातः करणः इतीव इत्येवंजातीयकम् ॥ ६१ ॥

५२ ] ति० टी०—आताम्यमानस्य ताम्यतः व्यथया संकुचिताङ्गस्येति यावत् । उद्धरम् अडभाव आर्षः संत्रस्तः प्राणहरत्वात् तपोधनस्तत्कुमारः ॥ ६२ ॥

रा० टी०—ननु कोऽसीत्यत आह—शूद्रायामिति । वैश्येन शूद्रायामहं जातोऽस्मि तेन करणोऽस्मीति सूचितं कृच्छ्रादितीव अतीव वदतः विघूर्णतः लुण्ठतः अत एव विचेष्टस्य उचितव्यापाररहितस्य आतम्यमानस्य अतिग्लानिं प्राप्नुवतस्तस्य मुनिसुतस्य बाणमुद्धरं आगमशास्त्रानित्यत्वादडभावः 'शूद्राविशोस्तु करणः' इत्यमरः । श्लोकद्वयमेकान्वयि ॥ ६१ ॥ ६२ ॥

रा० टी०—स इति । संत्रस्तः मातापित्रोर्निर्वाहः कथं भविष्यतीतिसंभावनाहेतुकसंत्रासविशिष्टः स तपोधनः मामुद्वीक्ष्य प्राणाञ्जहौ । अर्धं पृथक् ॥ ६३ ॥

गो० टी०— इतीति । विघूर्णतः कदाचिदतीव वेपमानस्येत्यर्थः विचेष्टस्य कदाचिदिति शेषः । वेपमानस्य कदाचिदीषत्कम्पमानस्येत्यर्थः । आनम्यमानस्य व्यथया संकुचिताङ्गस्येत्यर्थः । नानथमानस्येति पाठे अतिशयेन नदत इत्यर्थः । उद्धरम् उदहरम् अडभावोऽनित्यत्वात् ॥ ६१ ॥ ६२ ॥

५३ ] ति० टी०—कृच्छ्रं मर्मव्रणं प्राप्य विलप्य च संत-

१ हृदये इति गो. पाठः । २ ताम्यमानः इति गो. पाठः । ३ परमार्तवादिति गो. परमार्थवदिति रा. पाठः । ४ विवृत्ताङ्गश्चेष्टमान इति रा. पाठः । ५ वेष्टमान इति गो. पाठः । ६ पापमिति गो. रा. पाठः । ७ जनपदाधिपेति गो. पाठः । ८ आनम्येति गो. आतम्येति रा. पाठः । ९ कृच्छ्रादिति गो. पाठः । १० ऽस्मीति गो. पाठः ।

# चतुःषष्टितमः सर्गः ।

प्राप्तजरद्दम्पतिरहं ताभ्यां पुत्रवृत्तं न्यवेदयम्, तौ च पुत्रान्तिकं प्रापयम्, तमालिङ्गय करुणं विलपन्तौ तौ तस्मै निवापाञ्जलिं ददतुः। प्राप्तदिव्यदेहः स वृद्धावाश्वास्य स्वर्गं जगाम, पुत्रवियोगदुःखितौ तौ पुत्रशोकादन्तकरं शापं मह्यं वितीर्य देहं विमुच्य परं प्रापतुः। निवेद्यैवं विलपन्दशरथोऽपररात्रे राममनुस्मृत्य प्राणाञ्जहौ।

वधमप्रतिरूपं तु महर्षेस्तस्य राघवः। विलपन्नेव धर्मात्मा कौसल्यामिदमब्रवीत् ॥ १ ॥
तदज्ञानान्महत्पापं कृत्वा संकुलितेन्द्रियः। एकस्त्वचिन्तयं बुद्ध्या कथं नु सुकृतं भवेत् ॥ २ ॥
ततस्तं घटमादाय पूर्णं परमवारिणा। आश्रमं तमहं प्राप्य यथाख्यातपथं गतः ॥ ३ ॥
तत्राहं दुर्बलावन्धौ वृद्धावपरिणायकौ। अपश्यं तस्य पितरौ लूनपक्षाविव द्विजौ ॥ ४ ॥
तन्निमित्ताभिरासीनौ कथाभिरपरिश्रमौ। तामाशां मत्कृते हीनावुपासीनावनाथवत् ॥ ५ ॥

---

तमुच्छ्वसन्तं सरयूतीरे मृत्वा शयानं वीक्ष्याहं भृशं विषण्णोऽभवमिति कौसल्यां प्रत्युक्तवानुवादः ॥ ६३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रा० टी०—जलार्द्रेति । सरय्वां शयानमत एव जलार्द्रगात्रं सरयूजलक्लिन्नशरीरं मर्मव्रणं मर्मसु व्रणं यस्य तमत एव कृच्छ्रं यथा स्यात्तथा विलप्य विविधमुक्त्वा उच्छ्वसन्तं तं तपस्विनं समीक्ष्य सुभृशम् अतीव विषण्णः दुःखी आसमिति शेषः ॥ ६४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०—जलार्द्रगात्रमिति । अयं श्लोकः प्रथमदृष्टानुवादः मर्मणि प्राणस्थाने व्रणः यस्य तं सरय्वां सरयूतीरे विषण्णोऽस्मि विषण्णोऽभवम् ॥ ६३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

१ ] ति० टी०—वधमिति । राघवो दशरथो वधं स्मृत्वा पुत्रं प्रति विलपन्नेव कौसल्यामिमदब्रवीदवदत् ॥ १ ॥

रा० टी०—उपरतऋषिपुत्रदर्शनकथनानन्तरकालिकं राजवृत्तमाह—वधमिति । अप्रतिरूपमयोग्यं तस्य महर्षेर्वधं विलपन्कथयन्राघवो दशरथः इदमब्रवीत् ॥ १ ॥

गो० टी०—वधमिति । विलपन्नेव मध्ये स्वपुत्रं विलपन्नेव ॥ १ ॥

२ ] ति० टी०—संकुलितेन्द्रियः क्षुभितेन्द्रियः कथं नु सुकृतं भवेदित्यचिन्तयम् ॥ २ ॥

रा० टी०—वचनाकारमाह—तदिति । अज्ञानान्महत्पापं कृत्वा संकुलितेन्द्रियः व्याकुलकरणोऽहं तत्पापं सुकृतं सुविनष्टमित्यर्थः कथं भवेदिति बुद्ध्या मनसाहमचिन्तयम् ॥ २ ॥

गो० टी०—तदिति । संकुलेन्द्रियः व्याकुलेन्द्रियः सुकृतं दुष्टु कृतं मुनिकुमारवचनमिति शेषः । इत्यचिन्तयमित्युपस्कार्य यद्वा अस्य वधज्ञापनाज्ञापनयोः किं शुभोदर्कं भवेदित्यचिन्तयमित्यर्थः ॥ २ ॥

३ ] ति० टी०—तत एवं चिन्तानन्तरं यथाख्यातपथं मुनिकुमारोपदिष्टं मार्गं प्राप्याऽऽख्याऽऽश्रमं गतः ॥ ३ ॥

रा० टी०—तत इति । ततः चिन्तानन्तरं परमवारिणा अत्युत्कृष्टसरयूजलेन पूर्णं तं घटमादाय आख्यातपथम् ऋषिबालोपदिष्टमार्गं गतः प्राप्तोऽहं तं मुनिपित्रधिष्ठितमाश्रमं यथावत्प्राप्य तत्र तस्मिन्नाश्रमे दुर्बलौ पङ्गुत्वेन चलनसामर्थ्यरहितौ अन्धौ अपरिणायकौ रक्षकान्तररहितौ तन्निमित्ताभिः पुत्रसंबन्धिनीभिः कथाभिः अपरिश्रमौ श्रमाभाववन्तौ तां मत्पुत्रो जलमानेष्यतीत्याकारिकामाशामिच्छाविशेषमुपासीनौ प्राप्तौ मत्कृते मत्कर्तृकवधे सति हीनौ पुत्ररहितौ अत एव लूनौ छिन्नौ पक्षौ ययोः तौ द्विजौ पक्षिणाविव आसीनौ तस्य पितरौ अनाथवन्नाथत्वाभाववानिवाहमपश्यम् । श्लोकत्रयमेकान्वयि ॥ ३–५ ॥

गो० टी०—ततस्तं घटमिति । ततः मुनिकुमारोक्तज्ञापनमेव श्रेयस्करमिति निश्चयानन्तरं यथाख्यातपथं प्राप्य आश्रमं गत इति संबन्धः ॥ ३ ॥

४ ] ति० टी०—तत्राश्रमेऽपरिणायकौ संचारयितृपुरुषान्तररहितौ ॥ ४ ॥

५ ] ति० टी०—तन्निमित्ताभिः पुत्रनिमित्ताभिः कथाभिर्हेतुभिरपरिश्रमावासीनौ पुत्रो जलमानेष्यतीत्येवंरूपां तामाशामुपासीनौ सेवमानौ मत्कृते मत्कृतदुष्कर्मनिमित्तं तामाशां प्रति हीनावपि तां सेवमानावपश्यमिति पूर्वेणान्वयः । 'उदासीनौ' इति पाठेऽनाथवदुदासीनौ दुःखिताविव ॥ ५ ॥

गो० टी०—तत्रेत्यादि । परितो नयति संचारयतीति परिणायकः तद्रहितौ तन्निमित्ताभिः पुत्रविषयाभिः कथाभिः उपलक्षितौ अपरिक्रमौ पङ्गुभूतौ मत्कृते मन्निमित्तं तामाशां हीनौ जलानयनाशारहितौ पुत्रविषयाशारहितौ उदासीनौ प्रयलशून्यौ तस्य पितरावपश्यमिति संबन्धः ॥ ४ ॥ ५ ॥

---

१ पुनरिति गो. पाठः । २ ऽहं संकुलेन्द्रिय इति गो. पाठः । ३ अपरिक्रमाविति गो. पाठः । ४ उदासीनाविति गो. पाठः ।

शोकोपहतचित्तश्च भयसंत्रस्तचेतनः । तच्चाश्रमपदं गत्वा भूयः शोकमहं गतः ॥ ६ ॥
पदशब्दं तु मे श्रुत्वा मुनिर्वाक्यमभाषत । किं चिरायसि मे पुत्र पानीयं क्षिप्रमानय ॥ ७ ॥
यन्निमित्तमिदं तात सलिले क्रीडितं त्वया । उत्कण्ठिता ते मातेयं प्रविश क्षिप्रमाश्रमम् ॥ ८ ॥
यद्व्यलीकं कृतं पुत्र मात्रा ते यदि वा मया । न तन्मनसि कर्तव्यं त्वया तात तपस्विना ॥ ९ ॥
त्वं गतिस्त्वगतीनां च चक्षुस्त्वं हीनचक्षुषाम् । समासक्तास्त्वयि प्राणाः कथं त्वं नाभिभाषसे॥ १० ॥
मुनिमव्यक्तया वाचा तमहं सज्जमानया । हीनव्यञ्जनया प्रेक्ष्य भीतचित्त इवाब्रुवम् ॥ ११ ॥
मनसः कर्म चेष्टाभिरभिसंस्तभ्य वाग्बलम् । आचचक्षे त्वहं तस्मै पुत्रव्यसनजं भयम् ॥ १२ ॥
क्षत्रियोऽहं दशरथो नाहं पुत्रो महात्मनः । सज्जनावमतं दुःखमिदं प्राप्तं स्वकर्मजम् ॥ १३ ॥

६ ] ति० टी०—तौ दृष्ट्वा शोकोपहतचित्त इत्यादि भूयोऽधिकम् ॥ ६ ॥

रा० टी०—शोकेति । भयेन वधजनितदोषेण संत्रस्तं चेतः यस्य सः अहं तदाश्रमं श्रमनिवर्तकं पदं स्थानं गत्वा भूयः तद्दुःखदर्शनेनाधिकं शोकं गतः प्राप्त आसमिति शेषः ॥ ६ ॥

गो० टी०—शोकोपहतचित्त इति । पुत्रवधेन पूर्वमेव शोकोपहतचित्तः भूयः शोकं गतः तद्दर्शनादतिशयितशोकं गतः॥६॥

७ ] ति० टी०—चिरायसि विलम्बयसि ॥ ७ ॥

रा० टी०—पदेति । पदशब्दं पादक्रमजनितस्वनं श्रुत्वा अभाषत । भाषणाकारमाह—किं किमर्थं चिरयसि विलम्बं करोषि ॥ ७ ॥

गो० टी०—पदशब्दमिति । पदशब्दं चरणविन्यासजशब्दं चिरायसि विलम्बसे तत्करोतीति णिच् यन्निमित्तं किं निमित्तमित्यर्थः । यद्वा यन्निमित्तं त्वया सलिले क्रीडितम् इदं गृहीति शेषः । 'यन्न दत्तम्' इति पाठे इदानीं पानीयं न दत्तमिति यत् तस्मात्त्वया सलिले क्रीडितमित्यन्वयः उत्कण्ठिता शोकस्मरणवत्यभूत् व्यलीकमप्रियम् 'अलीकम्' इति पाठे अलीकमपराधः 'अलीकमपराधः' इति हलायुधः ॥ ७-९ ॥

८ ] ति० टी०—यन्निमित्तं येन हेतुना एतावत्कालं त्वया सलिले क्रीडितं तेन ते मातोत्कण्ठिता सशोकस्मरणवत्यभूत् । 'यन्न दत्तम्' इति पाठे यत्त्वया शीघ्रं जलमावयोर्न दत्तम्, यत्त्वया सलिले क्रीडितं तेन ते मातोत्कण्ठितेत्यन्वयः ॥ ८ ॥

रा० टी०—यदिति । यन्निमित्तं येन कारणेन इदमतिविलम्बं त्वया सलिले क्रीडितं तेन कारणेन ते माता उत्कण्ठिता शोकसहितं सस्मार अतः क्षिप्रं प्रविश ॥ ८ ॥

९ ] ति० टी०—व्यलीकमप्रियम् ॥ ९ ॥

रा० टी०—यदिति । व्यलीकमप्रियं तत्त्वया मनसि न कर्तव्यं स्मर्तव्यमेतेन मातापितृकर्तृकापकृतिरपि पुत्राणां कल्याणप्रदेति व्यञ्जितम् ॥ ९ ॥

१०] ति० टी०—अगतीनां त्वं गतिः हीनचक्षुषां त्वं चक्षुः अतो यन्न भाषसे तत्कथं कस्मात् ॥ १० ॥

रा० टी०—त्वमिति । अगतीनां रक्षकरहितानां हीनचक्षुषामस्माकं त्वमेव गतिः रक्षकः अत एव चक्षुश्च अत एव त्वयि प्राणाः अस्माकमिन्द्रियाणि समासक्ता संलग्नाः त्वं कथं किमर्थं न अभिभाषसे ॥ १० ॥

गो० टी०—त्वमिति । नः अस्मान् इति मुनिर्वाक्यमभाषतेत्यन्वयः ॥ १० ॥

११ ] ति० टी०—हतपदशब्दत इव हतधिया सज्जमानया गद्गदया अत एव हीनव्यञ्जनया व्यञ्जनाक्षरव्यक्तिरहितया अत एवाव्यक्तया वाचा वदन्तं मुनिं प्रेक्ष्य भीतचित्त इवाहं तादृश्यैव वाचाऽब्रुवमित्यन्वयः ॥ ११ ॥

रा० टी०—मुनिमिति । सज्जमानया पुत्रासक्तिसहितया अव्यक्तया अतिदुःखत्वाद्व्यक्ताक्षररहितया वाचा उपलक्षितं तं हतपुत्रं मुनिं प्रेक्ष्य भीतचित्त एवाहं हीनव्यञ्जनया भीत्या व्यक्तिरहितयेत्यर्थः । वाचा अब्रुवम् । इव एवार्थे ॥ ११ ॥

गो० टी०—मुनिमिति । सज्जमानया स्खलन्त्या हीनव्यञ्जनया अस्पष्टाक्षरया 'व्यञ्जनं श्मश्रुनिष्ठानचिह्नेष्ववयवेऽक्षरे' इति वैजयन्ती । अव्यक्तया वाचा अब्रुवमिति संबन्धः । भीतोऽपि सन् भीतः भीतभीतः अत्यन्तभीत इत्यर्थः। पाठभेदः भीतोऽपि सन्भीत इवाब्रुवम् । इवशब्दो वाक्यालङ्कारे ॥ ११ ॥

१२ ] ति० टी०—मनस इति । मनसः कर्म भीतिरूपं वाग्बलमाश्रित्य चेष्टाभिरभीतिसाध्यव्यवहारैरभि अभितः संस्तभ्य भीताकारतामाच्छाद्याभीत इवाचचक्षे ॥ १२ ॥

रा० टी०—भङ्ग्यन्तरेण तदेवाह—मनस इति । वाग्बलं वाच आच्छादकं मनसः कर्म भीतिमित्यर्थः । चेष्टाभिः अवचनेन न निर्वाह इत्यादिविचाररूपव्यापारैरभिसंस्तभ्य आछाद्य पुत्रव्यसनजं पुत्रमरणजनितं भयमहमाचचक्षे ॥ १२ ॥

गो० टी०—उक्तमेव विशदं दर्शयति—मनस इति । मनसः कर्म ऊहापोहात्मकं चेष्टाः इन्द्रियनियमनरूपव्यापाराः ताभिर्वाग्बलम् अभिसंस्तभ्य स्खलितां वाचं बलात् दृढीकृत्येत्यर्थः । तस्मै भयमाचचक्ष इति संबन्धः । यद्वा वाग्बलमभिसंस्तभ्य लज्जाभीतिप्रभृतिभिः मन्दवचनोऽभूत्वेत्यर्थः । आचचक्षे इति लिडुत्तमपुरुषैकवचनम् ॥ १२ ॥

१३ ] ति० टी०—महात्मनस्तव पुत्रो नाहमिति योज्यम् सज्जनावमतं सज्जनगर्हितम् मया भवता चेति शेषः ॥ १३ ॥

५ किं-त्वं नो इति गो० पाठः ।

भगवंश्चापहस्तोऽहं सरयूतीरमागतः । जिघांसुः श्वापदं [1]किंचिन्निपाने वागतं गजम् ॥ १४ ॥
ततः श्रुतो मया शब्दो जले कुम्भस्य पूर्यतः । द्विपोऽयमिति मत्वाहं बाणेनाभिहतो मया ॥ १५ ॥
गत्वा तस्यास्ततस्तीरमपश्यमिषुणा हृदि । विनिर्भिन्नं गतप्राणं शयानं भुवि तापसम् ॥ १६ ॥
[भगवञ्छब्दमालक्ष्य मया गजजिघांसुना । विसृष्टोऽम्भसि नाराचस्तततस्ते निहतः सुतः ॥]
ततस्तस्यैव वचनादुपेत्य परितप्यतः । स मया सहसा बाण उद्धृतो मर्मतस्तदा ॥ १७ ॥
स चोद्धृतेन बाणेन सहसा स्वर्गमास्थितः । भगवन्तावुभौ शोचन्नन्धाविति विलप्य च ॥ १८ ॥
अज्ञानाद्भवतः पुत्रः सहसाभिहतो मया । शेषमेवं गते यत्स्यात्तत्प्रसीदतु मे मुनिः ॥ १९ ॥
स तच्छ्रुत्वा वचः क्रूरं मया तदघशंसिना । नाशकत्तीव्रमायासं स कर्तुं भगवानृषिः ॥ २० ॥
स बाष्पपूर्णवदनो निःश्वसञ्शोकमूर्छितः । मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ २१ ॥

---

रा० टी०—कथनप्रकारमाह—क्षत्रिय इत्यादिभिः । येन मया सज्जनैः अवमतं तिरस्कृतं स्वकर्मजमिदं दुःखं प्राप्तं प्रापितं स दशरथोऽहं महात्मनस्तव पुत्रो नाहम् ॥ १३ ॥

गो० टी०—क्षत्रिय इति । महात्मनः तवेति शेषः । सज्जनात्रमतं सज्जनावमतिविषयभूतं सत्पुरुषगर्हितमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—तदेवाह—भगवन्निति । निपाने आगतं श्वापदं व्याघ्रादिं गजं वा जिघांसुरित्यन्वयः ॥ १४ ॥

रा० टी०—ननु किं तत्कर्मेत्यत आह—भगवन्निति । निपाने जलपानदेशे आगतं प्राप्तं किंचित्क्रूरमित्यर्थः श्वापदं व्याघ्रादि- गजं च जिघांसुरहं सरयूतीरमागतः ॥ १४ ॥

गो० टी०—भगवन्निति । निपाने जलावतारे आगतं गजं श्वापदं हिंस्रशार्दूलादिकं च जिघांसुः चापहस्तोऽहं सरयूतीरमागतः ॥ १४ ॥

१५ ] ति० टी०—अयं शब्दहेतुः पदार्थ इत्यर्थः । द्विप इति मत्वाहं स्थितस्ततो मया स बाणेन हतः ॥ १५ ॥

रा० टी०—तत इति । ततः सरयूतीरगमनानन्तरं जले पूर्यतः पूर्यमाणस्य कुम्भस्य शब्दो मया श्रुतः अयम् एतच्छब्दकारणीभूतः द्विपः गजः इति मत्वा अहमतिष्ठमिति शेषः । अत एव मया बाणेन अभिहतः ॥ १५ ॥

गो० टी०—तत्रेति । पूर्यतः पूर्यमाणस्य द्विप इति मत्वा अयं शब्दहेतुः पदार्थः मया अभिहतः ॥ १५—१८ ॥

१६ ] ति० टी०—गतप्राणं गतकल्पप्राणम् ॥ १६ ॥

रा० टी०—गत्वेति । तस्याः सरय्वास्तीरं गत्वा असुना मत्प्रयुक्तबाणेन विनिर्भिन्नमत एव गता गमनानुकूलव्यापार- विशिष्टाः प्राणा यस्य तं तापसमपश्यम् ॥ १६ ॥

१७ ] ति० टी०—तस्यैव स्वपुत्रस्यैव वचनाद्बाण उद्धृत इत्यन्वयः ॥ १७ ॥

रा० टी०—तत इति । ततस्तद्दर्शनानन्तरं परितप्यतः विशल्यत्वेन खेदं प्राप्नुवतस्तस्य तपस्विनो वचनादेव उपेत्य तत्समीपं प्राप्य मर्मतः मर्मस्थलात्स बाणो मयोद्धृतः ॥ १७ ॥

१८ ] ति० टी०—अन्धौ मातापितरौ कोऽतःपरं रक्षिष्यतीति भगवन्तौ शोचन्विलाप्य च स्वर्गमास्थित इत्यन्वयः ॥ १८ ॥

रा० टी०—स इति । उद्धृतेन बाणेन हेतुभूतेन भगवन्तावुभौ मातापितरौ शोचन् विलप्य स तापसः स्वर्गमास्थितः॥१८॥

गो० टी०—स इति । उद्धृतेन बाणेन हेतुना अन्धौ पितरौ मातापितराविति भवन्तावेव शोचन् विलप्य च स्वर्गमास्थितः१९॥

१९ ] ति० टी०—युष्मद्रक्षके पुत्रे एवं गते सति शेषं कर्तव्यं यत्स्यात्तत्र मह्यं भगवान्प्रसीदतु तदुद्दिश्य मामाज्ञापयत्वित्यन्वयः । युष्मद्रक्षणमपि मया कर्तुं शक्यमिति भावः ॥ १९ ॥

रा० टी०—अज्ञानादिति । एवमनेन प्रकारेण भवतः पुत्रः अज्ञानान्मयाभिहतः अतः शेषं शिष्यते प्रलयेऽपि न विध्वस्यते सः नित्यलोकस्तं गते प्राप्ते सति यत्कर्तव्यं स्यात्तथा भवति तथा मुनिर्भवान्प्रसीदतु अनुग्रहं निग्रहं वा कुर्वित्यर्थः ॥ १९ ॥

गो० टी०—अज्ञानादिति । एवं गते एवं प्राप्ते सति यच्छेषं कर्तव्यं स्यात् शापानुग्रहादिकं तत्प्रति मे मयि प्रसीदतु शापो वाऽनुग्रहो वा यः कर्तव्यस्तं करोत्वित्यर्थः॥ २० ॥

२०—२१ ] ति० टी०—एवमज्ञानकृतत्वबोधनाच्छेषायुःपर्यन्तं रक्षणस्यापि कर्तव्यताबोधनाच्च मां दैवान्न भस्मसादकरोदित्याह—स इति । तीव्रमायासं भस्मीभावफलकशापदानम् ॥ २० ॥ २१ ॥

रा० टी०—स इति । अघशंसिना मया कथितमिति शेषः । क्रूरं वचः श्रुत्वा तीव्रमायासं विध्वंसकशापं कर्तुं दातुं भगवान्समर्थोऽपि स ऋषिर्नाशकत् एतेन पुत्रवधस्याज्ञानजातत्वान्न विध्वंसनयोग्यत्वं राज्ञ इति तन्निश्चितो हेतुः सूचितः तेन ऋषेः परमधर्मज्ञत्वं व्यञ्जितम् । 'अकर्तुम्' इति भूषणपाठः ॥ २० ॥

---

१ कंचिन्निपाने चागतमिति गो. पाठः । २ तत्रेति गो. पाठः । ३ अयमिति गो. पाठः । ४ असुनेति रा. पाठः । ५ श्लोकोऽयमधिको गो. पुस्तके । ६ तस्यैवेति गो. पाठः । ७ भवन्तौ पितराविति गो. पाठः । ८ वृद्धाविति रा. पाठः । ९ मयोक्तमिति गो. पाठः । १० अकर्तुमिति गो. पाठः । ११ मूर्छित इति गो. पाठः ।

यद्येतदशुभं कर्म न स्म[1] मे कथयेः स्वयम् । फलेन्मूर्धा स्म ते राजन्सद्यः शतसहस्रधा ॥ २२ ॥
क्षत्रियेण वधो राजन्वानप्रस्थे विशेषतः । ज्ञानपूर्वं[2] कृतः स्थानाच्च्यावयेदपि वज्रिणम् ॥ २३ ॥
सप्तधा तु [3]भवेन्मूर्धा मुनौ तपसि तिष्ठति । ज्ञानाद्विसृजतः शस्त्रं तादृशे ब्रह्मवादिनि ॥ २४ ॥
अज्ञानाद्धि कृतं यस्मादिदं [4]ते तेन जीवसे । अपि ह्य[5]कुशलं न स्याद्राघवाणां कुतो भवान् ॥ २५ ॥
नय नौ नृप तं देशमिति मां चाभ्यभाषत । अद्य तं द्रष्टुमिच्छावः पुत्रं पश्चिमदर्शनम् ॥ २६ ॥
रुधिरेणावसिक्ताङ्गं प्रकीर्णाजिनवाससम् । शयानं भुवि निःसंज्ञं धर्मराजवशं गतम् ॥ २७ ॥
अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ । अस्पर्शयमहं पुत्रं तं मुनिं सह भार्यया ॥ २८ ॥

---

गो० टी०—स इति । अघशंसिना दुःखशंसिना आय सं व्यसनम् अकर्तुं नाशकत् कृतवानेवेत्यर्थः ॥ २१ ॥

रा० टी०—स इति । महातेजाः स ऋषिः उपस्थितं समीपे प्राप्तं मामुवाच ॥ २१ ॥

गो टी०—स इत्यादि । स्मेति वाक्यालङ्कारे फलेत् विशीर्येत ञिफला विशरण इति धातुः मच्छापेनेति शेषः क्षत्रियेण पालकेन वानप्रस्थे अज्ञानतः कृतो वधः वज्रिणमिन्द्रमपि स्थानात् च्यावयेत् ज्ञानपूर्वं कृतः ज्ञानकृतस्तु विशेषतश्च्यावयेत् अविलम्बो विशेषः सप्तधेत्युपलक्षणं बहुधेत्यर्थः । ब्रह्मवादिनि परमात्मज्ञे 'ब्रह्मचारिणि' इति पाठे चरतेर्गत्यर्थत्वात् 'सर्वे गत्यर्था ज्ञानार्थाः' इति न्यायेन ब्रह्मतत्त्वं चरितुं ज्ञातुं शीलमस्यास्तीति ब्रह्मचारी तस्मिन् 'ज्ञाने तत्त्वे तपोऽध्यात्मवेदेषु ब्रह्म चोच्यते' इति निघण्टुः । यस्मात् कारणात् इदं दुष्कृतमज्ञानात्कृतं तेन त्वं जीवसि अपि च अथ ज्ञानपूर्वकत्वे वधस्य राघवाणां कुलं न स्यात् भवान् कुतः स्यात् जीवेत् इति मामुवाचेत्यन्वयः २२—२६

२२ ] ति० टी०—स्मशब्दो वाक्यालंकारे । फलेद्विशीर्येत २२

रा० टी०—वचनाकारमाह—यदीति । एतदज्ञानात्त्वत्कृतमशुभं कर्म मे मह्यं यदि न कथयेः तर्हि ते मूर्धा शतसहस्रधा फलेत् भिद्येत ॥ २२ ॥

२३ ] ति० टी०—ज्ञानपूर्वत्वे सद्योऽनर्थप्राप्तिः स्यादित्याह—क्षत्रियेणेति । विशेषतोऽन्धत्वानाथत्वादेः ज्ञानपूर्वं कृतो यद्ययं वधः स्यात्तदा तच्छ्रवणजो मत्कोपो वज्रिणमपि स्थानाच्च्यावयेत्पातयेत्किमु त्वादृशमित्यर्थः ॥ २३ ॥

रा० टी०—तत्र हेतुं वदन्नाह—क्षत्रियेणेति । हे राजन् ! वानप्रस्थे क्षत्रियेण ज्ञानपूर्वकृतो वधस्ताडनं वज्रिणमिन्द्रमपि स्थानात्स्वर्गाच्च्यावयेत्पातयेदेतेन यदिन्द्रं पातयेत्तर्हि तदितरं पातयेदिति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः ॥२३॥

२४ ] ति० टी०—पुत्रकोपेनापि तत्कालनाशाभावोऽज्ञानादेवेत्याह—सप्तधा त्विति । स्वापेक्षया तपोन्यूनत्वात्सप्तधेति ब्रह्मवादिनि ब्रह्मवादिसमे । 'ब्रह्मचारिणि' इति पाठान्तरम् ॥ २४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सप्तधेति । तपसि कृच्छ्रचान्द्रायणादौ तिष्ठति कुर्वति मुनौ ब्रह्मवादिनि ब्रह्मवेत्तरि वा ज्ञानाच्छस्त्रं विसृजतः पुरुषस्य मूर्धा सप्तधा उपलक्षणविधया अनेकधेत्यर्थः । भवेत् किंच तपसि ब्रह्मविचारे तिष्ठति अत एव ब्रह्मवादिनि ब्रह्मप्राप्ते तादृशे मत्पुत्रसदृशे मुनौ शस्त्रं विसृजतः पुरुषस्य मूर्धा सप्तधा अनेकधा भवेत् 'ब्रह्मचारिणि' इति पाठान्तरं तस्यापि ब्रह्मप्राप्ते इत्येवार्थः । तत्र पक्षे तपसीत्यस्य पूर्व एवार्थः ॥ २४ ॥

२५ ] ति० टी०—जीवसे जीवसि ते तव यस्मादिदं कर्माज्ञानात्कृतं तेन जीवसि । हिः पादपूरणार्थः । यदि ज्ञानपूर्वं कृतमिदं स्यात्तदा राघवाणां कुलमेव न स्यात् कुतो भवान् जीवेदिति शेषः ॥ २५ ॥

रा० टी०—अज्ञानादिति । हि यस्मादिदं कर्म त्वया अज्ञानात्कृतं तेन हेतुना जीवसि अपि अन्यथा ज्ञानपूर्वकवधे कुलं न स्यात् नश्येदित्यर्थः । भवानेव कुतः एतेन काव्यार्थापत्यलंकारेण ज्ञानपूर्वकवधः कैश्चिदपि न कर्तव्य इत्युपदेशः सूचितः ॥ २५ ॥

२६—२७] ति० टी०—पश्चिमदर्शनमन्तदर्शनं द्रष्टुमिच्छावोऽतस्तं देशं नयेति मामभाषत ॥ २६ ॥ २७ ॥

रा० टी०—नयेति । हे नृप! तं पुत्रशरीराधिष्ठितदेशं नौ आवां नय प्रापय । तत्र हेतुः—पश्चिमदर्शनं पश्चिममन्तिमं दर्शनं यस्य तं रुधिरेण अवसिक्तमङ्गं यस्य तं प्रकीर्णानि प्रक्षिप्तानि अजिनवासांसि यस्य तं निःसंज्ञं संज्ञारहितमत एव भुवि शयानं धर्मराजवशं गतं धर्मराजादुत्तमधर्माचरणाद्वशं कान्तिविशेषं गतं प्राप्तं पुत्रं द्रष्टुमिच्छावः इति मामभ्यभाषत । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—नयेत्यादिश्लोकद्वयमेकं वाक्यम् । धर्मराजवशं गतं पुत्रं द्रष्टुमिच्छावः अतः नौ तं देशं नयेति मामभ्यभाषतेति संबन्धः ॥ २७ ॥ २८ ॥

२८] ति० टी०—अहं तं देशं नीत्वा तं पुत्रमस्पर्शयम् ॥२८॥

रा० टी०—अथेति । अथ तदाज्ञापनानन्तरमेक एवाहं नीत्वा अहं सर्वकालं धर्मत्यागाभावं तमत एव आर्यया भार्यया सह सहितं तं मुनिपुत्रं भृशदुःखितौ मातापितरौ अस्पर्शयं स्पर्शमकारयम् अहमित्यत्र नञ्पूर्वकहाधातोः कर्तरि कः ॥२८॥

---

१ त्वमिति गो॰ पाठः । २ ज्ञानपूर्वकृत इति रा॰ पाठः । ३ फलेदिति गो॰ पाठः । ४ तेनैव जीवसीति गो॰ जीवसीति रा॰ पाठः ।
५ ह्यद्य कुलं न स्यादिक्ष्वाकूणामिति गो॰ ह्यद्य कुलमिति रा॰ पाठः ।

तौ पुत्रमात्मनः स्पृष्ट्वा तमासाद्य तपस्विनौ । निपेततुः शरीरेऽस्य पिता [1]चैनमुवाच ह ॥ २९ ॥
नाभिवादयसे माऽद्य न च मामभिभाषसे । किं[2] नु शेषे तु भूमौ त्वं वत्स किं कुपितो ह्यसि॥३०॥
[3]नन्वहं तेऽप्रियः पुत्र मातरं पश्य धार्मिकीम् । किं[4] नालिङ्गसे पुत्र सुकुमारवचो वद ॥ ३१ ॥
कस्य वा पररात्रेऽहं श्रोष्यामि हृदयंगमम् । अधीयानस्य मधुरं शास्त्रं वान्यद्विशेषतः ॥ ३२ ॥
को मां संध्यामुपास्यैव स्नात्वा हुतहुताशनः । श्लाघयिष्यत्युपासीनः पुत्रशोकभयार्दितम् ॥ ३३ ॥
कन्दमूलफलं हृत्वा यो मां प्रियमिवातिथिम् । भोजयिष्यत्यकर्मण्यमप्रग्रहमनायकम् ॥ ३४ ॥
इमामन्धां च वृद्धां च मातरं ते तपस्विनीम् । कथं पुत्र भरिष्यामि कृपणां पुत्रगर्धिनीम् ॥ ३५ ॥
तिष्ठ मा मा गमः पुत्र यमस्य सदनं प्रति । श्वो मया सह गन्तासि जनन्या च समेधितः ॥ ३६ ॥

---

गो० टी०—अथेति । अहं तौ नीत्वा अहं तमस्पर्शयमिति संबन्धेनाहंशब्दद्वयानैयर्थ्यम् ॥ २९–३१ ॥

२९ ] ति० टी०—तं तदवस्थमात्मनः पुत्रमासाद्य स्पृष्ट्वास्य शरीरे निपेततुः पितैनमुवाच च ॥ २९ ॥

रा० टी०—ताविति । आत्मनः स्वस्य पुत्रमासाद्य प्राप्य स्पृष्ट्वा अस्य शरीरे तौ मातापितरौ निपेततुः अस्य पिता एनमुवाच च ॥ २९ ॥

३० ] ति० टी०—कुपितो जातकोपः ॥ ३० ॥

रा० टी०—वचनाकारमाह—नेति । मा मामद्य नाभिवादयसे प्रणमसि भाषसे च न किं किमर्थं भूमौ शेषे कुपितः किमासि ॥ ३० ॥

३१ ] ति० टी०—'नन्वहम्' इति पाठः । अप्रिय इति च्छेद इति कतकः 'न त्वहम्' इति पाठः । अहं यदि तव प्रियो न तथापि मातरं पश्येति संबन्ध इति तीर्थः ॥ ३१ ॥

रा० टी०—नन्विति । हे पुत्र ! ननु यदि अहं ते अप्रियः तदा मातरं पश्य किं किमर्थं नालिङ्गसे हे सुकुमार ! वद ब्रूहि ॥३१॥

गो० टी०—न त्विति । अहं ते प्रियः न तु चेत् मातरं पश्येत्यन्वयः ॥ ३२ ॥

३२ ] ति० टी०—अन्यद्वा पुराणं· वैश्याच्छूद्रयां जातत्वेन संकरत्वाद्वेदप्रसङ्गो नोक्तः ॥ ३२ ॥

रा० टी०—कस्येति । पररात्रे अर्धरात्रादूर्ध्वभागे शास्त्रमन्यत्पुराणादिकं वा अधीयानस्य कस्य विशेषतो मधुरं हृदयङ्गमं मनोहरं वचः श्रोष्यामि ॥ ३२ ॥

गो० टी०—कस्येति । हृदयंगमं मनोहरस्वरमधीयानस्य पठतः अन्यद्वा इतिहासपुराणादिकं वा ॥ ३३ ॥

३३ ] ति० टी०—संध्यामिति तन्त्रमार्गेणेति शेषः । हुतहुताशनो 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्समापयेत्' इत्युक्तरीत्या श्लाघयिष्यति श्लाघनमुद्वर्तनं तत्पूर्वकं स्नापयिष्यति । 'नाप्सु श्लाघमानः स्नायात्' इति ब्रह्मचारिप्रकरणस्थापस्तम्बस्मृतौ तथा व्याख्यानात् ॥ ३३ ॥

रा० टी०—क इति । पुत्रशोकभयेन अर्दितं पीडितं मामुपासीनः समीपे स्थितः सन्कः श्लाघयिष्यति स्तोष्यति ॥ ३३ ॥

गो० टी०—क इति । संध्यामुपास्य नमस्कारपूर्वकं तान्त्रिकं संध्यावन्दनं कृत्वेत्यर्थः । हुतहुताशनः कृतहोमः । ननु वैश्यात् शूद्रायां जातो हि करणस्तस्य कथं होमाधिकार इति मैवं 'नमस्कारेण मन्त्रेण पञ्चयज्ञान्समापयेत्' इति चतुर्थवर्णस्यापि पञ्चमहायज्ञाधिकारः स्मर्यते ततोऽप्यधिकस्य करणस्य स्वोचितमन्त्रैर्होमाधिकारस्य कैमुत्यन्यायसिद्धत्वात् श्लाघयिष्यति उपचरिष्यतीत्यर्थः ॥ ३४ ॥

३४ ] ति० टी०—कन्दं जलोद्भवपद्मादीनाम्, मूलं स्थलोद्भवानामिति तीर्थः अकर्मण्यं कर्मानुष्ठानाक्षमम् अप्रग्रहं नीवारादिसंग्रहरहितम् अनायकं पालकहीनमित्यर्थं तीर्थः । कर्मणि साधुं कर्मण्यमित्यतिथिविशेषणम् भोजयिष्यति । 'कर्मण्यम्' इत्येव च पाठः अप्रग्रहं यष्टिग्रहणपूर्वकमार्गप्रदर्शकरहितम् अत एवानायकं स्नानादिकर्मप्रवर्तकहीनमित्यर्थं कतकः ॥ ३४ ॥

रा० टी०—कन्देति । अकर्मण्यं कर्मानुष्ठानानर्हमप्रग्रहं मुनिभक्ष्यसंग्रहरहितमनायकं रक्षकरहितं मां प्रियमतिथिमिव कन्दादिकं हृत्वा आनीय यो भोजयिष्यति स कः न कोऽपीत्यर्थः । तत्र कन्दं जलजन्यानां कमलादीनां मूलं, मूलं स्थलजन्यानां मृत्तिकातिरोहिताधोभागः 'कर्मण्यम्' इति कतकपाठः अतिथिविशेषणं कर्मणि साधुरिति तदर्थः ॥ ३४ ॥

गो० टी०—कन्दमूलफलमिति । कन्दं जलोद्भवानां पद्मादीनां, मूलं स्थलोद्भवानाम्, अकर्मण्यं कर्मानुष्ठानाक्षमम् अप्रग्रहं नीवारादिसंग्रहरहितम् अनायकम् अनाथं रक्षकरहितं यष्टिं गृहीत्वा मार्गदर्शकरहितमिति वार्थः ॥ ३५ ॥ ३६ ॥

३५ ] ति० टी०—भरिष्यामि स्वयमन्ध इति शेषः ॥ ३५॥

रा० टी०—इमामिति । पुत्रगर्धिनीं पुत्रविषयकातीच्छावतीमिमामन्धां तव मातरं कथं भरिष्यामि ॥ ३५ ॥

३६ ] ति० टी०—मा मेत्याबाधे द्विर्वचनम् । मामुद्दिश्य तिष्ठ मा गमः मा गच्छेति वा । समेधितः संगतः ॥ ३६ ॥

रा० टी०—तिष्ठेति । हे पुत्र! मा मां प्रति त्वं तिष्ठ यमस्य सदनं त्वं मा गमं न गच्छ समेधितः वर्धितस्त्वं मया जनन्या च सह गन्तासि समेधनकर्तृत्वं च प्रत्यासत्तिन्यायेन साहि-

---

१ चास्त्वेवमब्रवीदिति गो. पाठः । २ न्विति गो. पाठः । ३ चेति गो. पाठः । ४ न त्वहमिति गो. पाठः । ५ धार्मिकेति गो. पाठः । ६ वत्सेति गो. पाठः ।

उभावपि च शोकार्तावनाथौ कृपणौ वने । क्षिप्रमेव गमिष्यावस्त्वया हीनौ यमक्षयम् ॥ ३७ ॥
ततो वैवस्वतं दृष्ट्वा तं प्रवक्ष्यामि भारतीम् । क्षमतां धर्मराजो मे बिभृयात्पितरावयम् ॥ ३८ ॥
दातुमर्हति धर्मात्मा लोकपालो महायशाः । ईदृशस्य ममाक्षय्यामेकामभयदक्षिणाम् ॥ ३९ ॥
अपापोऽसि यथा[1] पुत्र निहतः पापकर्मणा । तेन सत्येन गच्छाशु ये लोका[2]स्त्वस्त्रयोधिनाम् ॥ ४० ॥
यां हि शूरा गतिं यान्ति संग्रामेष्वनिवर्तिनः । हतास्त्वभिमुखाः पुत्र गतिं तां परमां व्रज ॥ ४१ ॥
यां गतिं सगरः शैब्यो दिलीपो जनमेजयः । नहुषो धुन्धुमारश्च प्राप्तास्तां गच्छ पुत्रक ॥ ४२ ॥

त्यान्वयिनोरेव एतेन त्वां विनास्मज्जीवनं नैव भविष्यतीति सूचितम् ॥ ३६ ॥

गो० टी०–तिष्ठेति । तिष्ठ मां मां प्रति तिष्ठ मा गमः मागच्छ समेधितः सहित इत्यर्थः ॥ ३७ ॥ ३८ ॥

३७ ] ति० टी०–यमक्षयं यमगृहम् ॥ ३७ ॥

रा० टी०–उभाविति । त्वया हीनौ आवां यमक्षयं धर्मराजगृहं क्षिप्रमेव गमिष्यावः ॥ ३७ ॥

३८ ] ति० टी०–यमगृहगमने स्वप्रयोजनमाह–तत इति । धर्मराजो मे क्षमतां पुत्रवियोगजनकं पूर्वकृतापराधम् अयं मे पुत्रः पितरौ बिभृयात्पालयतु ॥ ३८ ॥

रा० टी०–ननु तत्र गमने भवतोः किं प्रयोजनमित्यत आह–तत इति । वैवस्वतं धर्मराजं दृष्ट्वा भारतीं वचनं प्रवक्ष्यामि । वचनाकारमाह–धर्मराजो भवान्क्षमतामस्मदपराधमिति शेषः । तत्प्रयोजनमाह–मे ममायं पुत्रः पितरौ आवां बिभृयात् ॥ ३८ ॥

गो० टी०–तत इति । वैवस्वतं यमं धर्मराजः क्षमतां मत्पुत्रस्य स्वपरिसरागमनविलम्बं सहतां मे मत्संबन्धी अयं पुत्रः पितरौ बिभृयादिति भारतीं प्रवक्ष्यामीति संबन्धः ॥ ३९ ॥ ४० ॥

३९ ] ति० टी०–ननु त्वया याचितेऽपि कथमेतल्लभ्यतेऽत आह–दातुमिति । लोकपालोपम ईदृशस्यानाथस्याभयदक्षिणां पुत्रदानेन तदभावेन महाभयप्राप्तेरिति भावः । कतकस्तु—यतोऽयं मे पुत्रः पितरौ बिभृयात्, अतोऽस्य धर्मराजो भवान्क्षमतां शस्त्रपातजन्यदुर्मरणजनकं पापं क्षमताम् एवं मया प्रार्थितो दुर्मरणजां दुर्गतिं दूरीकृत्य त्वां स्वर्गं नेयिष्यति[3], ईदृशस्य तपस्विनो ममैकां पुत्रतारणरूपाभयदक्षिणां लोकपालत्वाद्दातुमर्हतीत्यर्थमाह ॥ ३९ ॥

रा० टी०–नन्विह गतेन कथं त्वत्सेवेत्यत आह–दातुमिति । ईदृशस्य अन्धत्वादिविशिष्टस्य मम अक्षय्यां चेतुमशक्याम् एकामभयदक्षिणां भवान्दातुमर्हति तेन पुनर्मद्गृहं प्रेषयेति सूचितम् ॥ ३९ ॥

४०] ति० टी०–अथ मृतस्य पुनर्लाभमशक्यं मत्वा विश्वामित्र इव त्रिशङ्कुं स्वमहिम्ना सुतं स्वर्गं प्रापयति—अपापोऽसीत्यादि । अपापस्त्वं पुत्र ! पापकर्मणानेन क्षत्रियेण यथा निहतोऽसि, तेन हननेन प्रायश्चित्तरूपेण शुद्धः सत्येन मदीयेनाशस्त्रयोधिनां शूराणां लोकान्गच्छेत्यर्थः । यद्वा हे पुत्र ! पापेन कर्मणा शस्त्रवधलक्षणेन निहतो यथा यद्यपि त्वमसि, तथापि तेन मदीयेन सत्येनापापो भूत्वा शस्त्रयोधिनां लोकान्गच्छ ॥ ४० ॥

रा० टी०–ननु प्रार्थितोऽपि दुर्लभं मत्वा यदि न दास्यति तर्हि का मद्गतिरित्यत आह–अपाप इति । हे पुत्र! पापकर्मणा केनचित्पूर्वादृष्टेन हेतुना निहतोऽपि त्वं यथा यथावदपापः पापरहितोऽसि अवशिष्टकिंचित्सूक्ष्मपापफलस्यापि भुक्तत्वान्नेदानीं तव पापसंभावनास्तीति तात्पर्यं तेन हेतुना सत्येन सर्वधर्ममूलभूतसत्यरूपधर्मेणोपलक्षितस्त्वमशस्त्रयोधिनां ये लोकाः तानाशु गच्छ एतेनाकालमृत्युभीतिस्त्वया न कर्तव्येति सूचितं तेन ब्रह्मवेत्तॄणामकालमरणादिकमकिंचित्करमिति सूचितम् । नचास्य ब्रह्मवेत्तृत्वेन ब्रह्मलोकप्राप्तियोग्यस्य कथमशस्त्रयोधिलोकप्राप्तिप्रेरणेति वाच्यम् ब्रह्मलोकस्यैवास्त्रयोधिनोऽपि प्राप्यत्वात् । तथा च स्मृतिः 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति ॥ ४० ॥

गो० टी०–राज्ञा स्वहस्तकृतं हननं पूर्वकृतस्य पापस्य प्रायश्चित्तत्वेन प्राप्तमिति मत्वा वदति—अपाप इति । पापकर्मणा राज्ञा यदा निहतः तदैवापापोऽसि तेन अपापत्वेन हेतुना सत्येन मम सत्येन शस्त्रयोधिनां ये लोकास्तान् आशु गच्छेति योजना। नन्वस्य तपस्विनो ब्रह्मलोकप्राप्तिरेव वक्तव्या शस्त्रहननमात्रेण शस्त्रयोधिनां लोकं प्राप्यत्वेन वदति एतत्कथमुपपद्यते उच्यते 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च शरेणाभिमुखो हतः' इति । शस्त्रयोधिनामुत्कृष्टलोकप्राप्तिभवणान्न दोषः ॥ ४१–४२ ॥

४१ ] ति० टी०–उक्तमेवार्थं पुनराह—यामिति ॥ ४१ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–यामिति । अनिवर्तिनः संग्रामेभ्यः पलायनरहिताः संग्रामेषु हता इत्यर्थः यां गतिं यान्ति तां व्रज ॥ ४१ ॥

४२ ] ति० टी०–तमेवार्थं विशेषत आह–यां गतिमिति ॥ ४२ ॥

रा० टी०–तदेव महतां गम्यमिति बोधयन्नाह–यामिति । यां सगरादयः प्राप्तास्तां गच्छ ॥ ४२ ॥

१ यदेति गो. पाठः । २ लोकांः शूरेति गो. पाठः । ३ नेष्यतीति युक्तं भाति ।

या गतिः सर्वभूतानां स्वाध्यायात्तपसश्च या । भूमिदस्याहिताग्नेश्च एकपत्नीव्रतस्य च ॥ ४३ ॥
गोसहस्रप्रदातॄणां गुरुसेवाभृतामपि । देहन्यासकृतां या च तां गतिं गच्छ पुत्रक ॥ ४४ ॥
न हि त्वस्मिन्कुले जातो गच्छत्यकुशलां गतिम् । स तु यास्यति येन त्वं निहतो मम बान्धवः ॥ ४५ ॥
एवं स कृपणं तत्र पर्यदेवयतासकृत् । तथोक्त्वा कर्तुमुदकं प्रवृत्तः सह भार्यया ॥ ४६ ॥
स तु दिव्येन रूपेण मुनिपुत्रः स्वकर्मभिः । स्वर्गमध्यारुहत्क्षिप्रं शक्रेण सह धर्मवित् ॥ ४७ ॥
आबभाषे च तौ वृद्धौ शक्रेण सह तापसः । आश्वस्य च मुहूर्तं तु पितरं वाक्यमब्रवीत् ॥ ४८ ॥
स्थानमस्मि महत्प्राप्तो भवतोः परिचारणात् । भवन्तावपि च क्षिप्रं मम मूलमुपैष्यथः ॥ ४९ ॥
एवमुक्त्वा तु दिव्येन विमानेन वपुष्मता । आरुरोह दिवं क्षिप्रं मुनिपुत्रो जितेन्द्रियः ॥ ५० ॥
स कृत्वाथोदकं तूर्णं तापसः सह भार्यया । मामुवाच महातेजाः कृताञ्जलिमुपस्थितम् ॥ ५१ ॥

---

४३ ] ति० टी०—सर्वभूतानां गतिराश्रयो ब्रह्म । एकपत्नीव्रता रामादयः ॥ ४३ ॥

४४ ] ति० टी०—गुरुसेवाभृतस्तत्सेवाकर्तारः देहन्यासकृतो महाप्रस्थानादिना परलोकार्थं तनुत्यजः ॥ ४४ ॥

रा० टी०—इदानीं तव कामचारगतिर्भवितेति बोधयन्नाह—येति । स्वाध्यायो वेदाध्ययनं देहन्यासकृतः प्रयागादौ बुद्धिपूर्वं तनुत्यागकर्तारः एतेन यामिच्छसि तां गच्छेतिसूचितम् । श्लोकद्वयमेकान्वयि ॥ ४३ ॥ ४४ ॥

गो० टी०—या गतिरिति । एकपत्नीव्रतस्येति इदं च व्रतमनुकूलायां पुत्रिण्यां पत्न्यां बोध्यम् ॥ ४४ ॥

गो० टी०—गोसहस्रप्रदातॄणामिति । या येति एकस्य यच्छब्दस्य पूर्वेणान्वयः गुरुभृतां गुरुशुश्रूषाकारिणां देहन्यासकृतां महाप्रस्थानादिनेति शेषः यद्वा परलोकप्राप्तिसंकल्पपूर्वकं गङ्गायमुनासंगमादौ जलेऽग्नौ वा तनुं त्यजतामित्यर्थः ॥ ४५ ॥

४५ ] ति० टी०—अस्मिन्कुले मदीये नित्यतपस्विकुले यास्यति अकुशलां गतिमित्यनुकर्षः ॥ ४५ ॥

रा० टी०—नहीति । अस्मिन् तपसि कुले जातः कश्चिदपि जनः येन हेतुना अकुशलां गतिं न गच्छति तेनैव हेतुना मम बान्धवो निहतो भवान् अकुशलां गतिं नैव यास्यति एतेन ब्रह्मवित्तपस्विकुलस्य दोषास्पर्शित्वं सूचितं तेन तत्कुलस्य ब्रह्मवेत्तृत्वं व्यक्तम् ॥ ४५ ॥

गो० टी०—नेति । अस्मिन्कुले तपोविधानामस्माकं कुले जातः अकुशलाम् अशुभां गतिं न गच्छेत् अपि तु मम बान्धवः पुत्रः त्वं येन निहतः स एवाकुशलां गतिं यास्यति ॥ ४६ ॥

४६ ] ति० टी०—उदकं संस्कारपूर्वकम् ॥ ४६ ॥

रा० टी०—एवमिति । सः तत्पिता कृपणं यथा स्यात्तथा पर्यदेवयत व्यलपत्तथा तेन प्रकारेण उक्त्वा विलप्य उदकं प्रमीतक्रियाङ्गीभूतोदकक्रियां कर्तुं प्रवृत्तः ॥ ४६ ॥

गो० टी०—एवमिति । उदकं संस्कारपूर्वोदकक्रियाः॥४७॥

४७ ] ति० टी०—स्वर्गमध्यारुहत् तेन सत्येनाशु गच्छेति वचनानन्तरमेवेति शेषः । शक्रेण सहेत्यनेन मुनिपुत्रं स्वर्गं नेतुं शक्रः समागत इति ध्वनितम् ॥ ४७ ॥

रा० टी०—स इति । दिव्येन रूपेणोपलक्षितः स मुनिपुत्रः शक्रेण सह स्वर्गमध्यारुहत् ॥ ४७ ॥

गो० टी०—स त्विति । शक्रेण सह स्वर्गमध्यारुहदित्यनेन मुनिपुत्रं स्वर्गं नेतुं शक्रः समागत इति गम्यते ॥ ४८ ॥

४८ ] ति० टी०—आरुह्य पुनः शक्रेण सहागत्याबभाषे इत्यन्वयः । अस्यैव प्रपञ्चः—आश्वस्येत्यादि । अत्र वक्तुः शोकग्रस्ततया बभाषेऽब्रवीदिति पौनरुक्त्यं न दोषाय ॥ ४८ ॥

रा० टी०—आबभाष इति । शक्रेण सह तापसस्तौ मातापितरौ मुहूर्तमाबभाषे आश्वासयामासेत्यर्थः । आश्वास्य पितरमिदमब्रवीत् । शक्रेण सहेत्युक्त्या शक्रोऽपि तदानयनार्थमागत इति व्यक्तम् ॥ ४८ ॥

गो० टी०—संग्रहेणोक्तं स्वर्गारोहणं विवृणोति—आबभाष इति । तापसः शक्रेण सह तौ वृद्धौ आबभाषे । आभाषणेऽपि वृद्धयोरश्रवणात् पुनराहेत्याह—आश्वास्य चेति ॥ ४९ ॥

४९ ] ति० टी०—भवतोरिति अनेन मातापितृसेवा धर्मान्तराभावेऽपि सैवेन्द्रसालोक्यदेति ध्वनितम् । मूलं समीपम् ॥ ४९ ॥

रा० टी०—वचनाकारमाह—स्थानमिति । परिचारणात्सेवनान्महत्स्थानं प्राप्तोऽस्मि भवन्तावपि मम मूलं मत्समीपं क्षिप्रमुपेष्यतः प्राप्स्यतः ॥ ४९ ॥

गो० टी०—स्थानमिति । मूलं समीपम् 'आद्ये शिफायां नक्षत्रे मूलं कुञ्जसमीपयोः' इति निघण्टुः ॥ ५० ॥

५०-५१ ] ति० टी०—वपुष्मता पुष्पकादिवत्प्रशस्ताकारेण ॥ ५० ॥ ५१ ॥

रा० टी०—एवमिति । वपुष्मता प्रशस्तशरीरविशिष्टेन प्रशस्ताकारेणेत्यर्थः । विमानेन आरुरोह ॥ ५० ॥

रा० टी०—स इति । उपस्थितं समीपे स्थितं मां भार्यया सह तापसः उवाच ॥ ५१ ॥

---

१ सभूतानामिति गो. पाठः । २ तपसेति गो. पाठः । ३ या या गुरुभृतामिति गो. पाठः । ४ ततोऽस्मै इति गो. पाठः । ५ आश्वास्येति गो. रा. पाठः । ६ पितरावेति गो. पाठः । ७ उपैष्यत इति गो. उपेष्यत इति रा. पाठः । ८ तूदकमिति गो. पाठः ।

अद्यैव जहि मां राजन्मरणे नास्ति मे व्यथा । यैः शरेणैकपुत्रं मां त्वमकार्षीरपुत्रकम् ॥ ५२ ॥
त्वयापि च यदज्ञानान्निहतो मे सै बालकः । तेन त्वामपि शप्स्येऽहं सुदुःखमतिदारुणम् ॥ ५३ ॥
पुत्रव्यसनजं दुःखं यदेतन्मम सांप्रतम् । एवं त्वं पुत्रशोकेन राजन्कालं करिष्यसि ॥ ५४ ॥
अज्ञानात्तु हतो यस्मात्क्षत्रियेण त्वया मुनिः । तस्मात्त्वां नाविशत्याशु ब्रह्महत्या नराधिप ॥ ५५ ॥
त्वामप्येतादृशो भावः क्षिप्रमेव गमिष्यति । जीवितान्तकरो घोरो दातारमिव दक्षिणाम् ॥ ५६ ॥
एवं शापं मयि न्यस्य विलप्य करुणं बहु । चितामारोप्य देहं तन्मिथुनं स्वर्गमभ्ययात् ॥ ५७ ॥
तदेतच्चिन्तयानेन स्मृतं पापं मया स्वयम् । तदा बाल्यात्कृतं देवि शब्दवेध्यनुकर्षिणा ॥ ५८ ॥

गो० टी०—एवमिति । वपुष्मतां प्रशस्ताकारेण प्रशंसायां मतुप् ॥ ६१ ॥ ६२ ॥

५२ ] ति० टी०—जहि प्राणैर्वियोजय ॥ ६२ ॥

रा० टी०—वचनाकारमाह—अद्येति । हे राजन् ! यस्त्वं शरेण एकपुत्रं मामपुत्रकमकार्षीः स त्वं मामद्यैव जहि ॥६२॥

गो० टी०—अद्येति । जहि प्राणान् मोचय "हन्तेर्जः" इति आदेशः । कथं मारणं दुःखाकरत्वादित्यत्राह—मरणे नास्ति मे व्यथेति । व्यथाभावहेतुमाह—यदिति । अतोऽपि किं व्यथास्तीति भावः ॥ ६३ ॥

५३ ] ति० टी०—यदज्ञानान्निहतोऽतः शप्स्ये, न तु प्रत्यक्षमेव भस्मीकरोमि । सुदुःखमतिदारुणमिति क्रियाविशेषणे ॥ ६३ ॥

रा० टी०—त्वयेति । येन हेतुना मे बालस्त्वया निहतस्तेनैव हेतुना त्वामतिदारुणमसह्यं सुदुःखं शप्स्ये बोधयामि । लडुपात्तभविष्यत्वस्याविवक्षा शपो बोधनार्थकत्वं तु 'नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि' इत्यादिना मनोरमादौ स्पष्टम् ॥ ५३ ॥

गो० टी०—त्वयेति । अभिशप्स्यामि नतु भस्मीकरोमीति भावः सुदुःखमतिदारुणमिति क्रियाविशेषणम् ॥ ६४ ॥

५४ ] ति० टी०—दुःखं मरणपर्यवसायि सांप्रतं वर्तते त्वन्निमित्तमिति शेषः । कालं करिष्यसि मृत्युं प्राप्स्यसि ॥६४॥

रा० टी०—पुत्रेति । हे राजन् ! एतत्त्वन्निमित्तकं पुत्रव्यसनजं दुःखं मम यथास्ति एवं तथा पुत्रशोकेन कालं पुत्रसंयोगजनितसुखसमयं करिष्यसि त्यक्ष्यसि विक्षेपणार्थककृधातोर्लृट् ॥ ६४ ॥

गो० टी०—पुत्रव्यसनजमिति । यद्यस्मात्कारणात् मम एतन्मरणपर्यवसायिपुत्रव्यसनजं दुःखम् अभूदिति शेषः एवं पुत्रशोकेन कालं करिष्यसि मृत्युं प्राप्स्यसीत्यर्थः । 'कालो मृत्यौ च समये' इति वैजयन्ती ॥ ६९ ॥

५५ ] ति० टी०—ब्रह्महत्या तत्समं पापम् ॥ ६९ ॥

रा० टी०—अज्ञानादिति । क्षत्रियेण त्वया यतः अज्ञानान्मुनिर्हतस्तस्माद्धेतोः ब्रह्महत्या ब्रह्महत्यामदृशकरणवधजनितपापं त्वां न आविशति ब्रह्महत्याशब्दः आचाराक्विबन्तप्रकृतिककर्तृक्विबन्तः अत एव ब्राह्मणजातिनिषेधकैतत्पुत्रत्वोक्त्या न विरोधः यदि चेह ब्रह्मशब्दे न ब्रह्मज्ञानी उच्यते तदा शङ्कोत्तरयोर्निर्दलत्वं बोध्यम् ॥ ६९ ॥

गो० टी०—अज्ञानादिति । ब्रह्महत्या बहुपातकमित्यर्थः । अन्यथा वैश्यात् शूद्रायां जातस्य करणाख्यसंकरजातित्वेन ब्रह्महत्याप्रसक्त्यभावात् ॥ ६६ ॥

५६ ] ति० टी०—एतादृशो भावः पुत्रशोकेन मरणरूपः । यथा तत्तद्वस्तु दक्षिणां दातारं यथा सा दक्षिणान्यतः प्राप्ता भवति तद्वत् ॥ ६६ ॥

रा० टी०—दोषस्पर्शित्वाभावेऽपि परमात्मेच्छा न निवार्येति बोधयन्नाह—त्वामिति । जीवितान्तकरः पालनविघातकः अत एव घोरः एतादृशः मत्खेदसदृशखेदस्य भावः सत्ता दक्षिणं सर्वस्वादिरूपं दातारं त्वामप्यागमिष्यति । इवो हेतौ । यदि मकाररहितः पठेस्तदा दक्षः अतिसामर्थ्यमस्ति अस्येति दक्षी तेन परमात्मेच्छारूपकालेन हेतुना आगमिष्यतीत्यर्थः ॥ ६६ ॥

गो० टी०—त्वामिति। एतादृशः पुत्रशोकरूपः भावः स्वभावः दातारमिव दक्षिणा यथा विप्राय दक्षिणा दत्ता दातारं स्वसदृशफलं प्रापयति तथेत्यर्थः । पुत्रशोकातिशयेन इह जन्मन्येव फलमनुभविष्यसीति धिया क्षिप्रमित्युक्तवान् दक्षिणाशब्देन दक्षिणाहेतुकं सुकृतं लक्ष्यते ॥ ६७ ॥

५७ ] ति० टी०—देहं देहौ ॥ ६७ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण मयि शापं भविष्यत्कालिकवस्तुबोधनं न्यस्य उक्त्वेत्यर्थः चितामारोप्य तन्मिथुनं स्त्रीपुरुषं स्वर्गमभ्ययात् प्राप्नोत् ॥ ६७ ॥

गो० टी०—एवमिति । देहमित्येकवचनेन चितारोहणकाले देहयोर्गाढबद्धत्वं लक्ष्यते ॥ ६८ ॥

५८ ] ति० टी०—शब्दवेध्यनुकर्षिणा प्रथमं शब्दवेधिना पश्चाद्विद्धशल्यानुकर्षणमपि कृतवता पापं मुनिकुमारवधरूपम् । तीर्थस्तु—'शब्दवेध्यानुशिक्षिणा' इति पाठं शब्देन वेद्धुं योग्यं

१ यदिति गो. पाठः । २ तु यदविज्ञानादिति गो. पाठः । ३ सुतः शुचिरिति गो. पाठः । ४ अभिशप्स्यामीति गो. पाठः । ५ आगमिष्यतीति रा. पाठः । ६ दक्षिणेति गो. पाठः ।

तस्यायं कर्मणो देवि विपाकः समुपस्थितः । अपथ्यैः सह संभुक्ते व्याधिरन्नरसे यथा ॥ ५९ ॥
तस्मान्मा मा गतं भद्रे तस्योदारस्य तद्वचः । इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह तु भूमिपः ॥ ६० ॥
यदहं पुत्रशोकेन संत्यजिष्यामि जीवितम् । चक्षुर्भ्यां त्वां न पश्यामि कौसल्ये त्वं हि मां स्पृश ॥ ६१ ॥
यमक्षयमनुप्राप्ता द्रक्ष्यन्ति नहि मानवाः । यदि मां संस्पृशेद्रामः सकृदन्वारभेत वा ॥ ६२ ॥
धनं वा यौवराज्यं वा जीवेयमिति मे मतिः । न तन्मे सदृशं देवि यन्मया राघवे कृतम् ॥ ६३ ॥
सदृशं तत्तु तस्यैव यदनेन कृतं मयि । दुर्वृत्तमपि कः पुत्रं त्यजेद्भुवि विचक्षणः ॥ ६४ ॥
कश्च प्रव्राज्यमानो वा नासूयेत्पितरं सुतः । चक्षुषा त्वां न पश्यामि स्मृतिर्मम विलुप्यते ॥ ६५ ॥
दूता वैवस्वतस्यैते कौसल्ये त्वरयन्ति माम् । अतस्तु किं दुःखतरं यदहं जीवितक्षये ॥ ६६ ॥
नहि पश्यामि धर्मज्ञं रामं सत्यपराक्रमम् । तस्य दर्शनजः[12] शोकः सुतस्याप्रतिकर्मणः ॥ ६७ ॥
उच्छोषयति वै[13] प्राणान्वारि स्तोकमिवातपः । न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम् ॥ ६८ ॥
मुखं द्रक्ष्यन्ति रामस्य वर्षे पञ्चदशे पुनः । पद्मपत्रेक्षणं सुभ्रु सुदंष्ट्रं चारुनासिकम् ॥ ६९ ॥
धन्या द्रक्ष्यन्ति रामस्य ताराधिपसमं मुखम् । सदृशं शारदस्येन्दोः फुल्लस्य कमलस्य च ॥ ७० ॥
सुगन्धि मम रामस्य धन्या द्रक्ष्यन्ति ये[16] मुखम् । निवृत्तवनवासं तमयोध्यां पुनरागतम् ॥ ७१ ॥

---

शब्दवेध्यं तदनुशिक्षितुं शीलं यस्य तेनेत्यर्थं चाह । तदसमञ्जसमिति स्पष्टमेव ॥ ५८ ॥

रा० टी०–तदिति । यत् आबाल्यादीषदज्ञानात्पापं कृतं तच्चिन्तयानेन चिन्तयमानेन शब्दवेध्यनुकर्षिणा शब्दवेधिना बाणेन अनुकर्षति प्राणानपहरति तच्छीलेन मया तदेतन्मुनिवधनं स्मृतम् ॥ ५८ ॥

गो० टी०–तदिति । शब्दवेध्यनुकर्षिणा शब्दवेधिनं बाणं प्रयुञ्जानेन यद्वा शब्दवेधिनं बाणं मुक्त्वा पुनस्तच्छरीरप्रोतशल्यमनुकृष्टवतेत्यर्थः । चिन्तयानेन मरणपर्यवसायी पुत्रशोकः प्राप्तः अस्य किं निदानमिति चिन्तयानेन एतत् पापं स्मृतं मुनिकुमारवधरूपं पापं स्मृतिविषयमभूदित्यर्थः॥५९॥

५९ ] ति० टी०–विपाकः फलम् अपथ्यैर्व्यञ्जनैः सह भुक्तेऽन्नरसे व्याधिर्यथोपतिष्ठते । ‘ व्याधिमन्नरसो यथा ’ इति पाठे उपस्थापयतीति शेषः ॥ ५९ ॥

रा० टी०–परमात्मेच्छायत्तस्वदुःखस्य कर्मफलत्वेनोत्प्रेक्ष्याह–तस्येति । हे देवि ! तस्य मुनिदुःखदानरूपस्य कर्मणः अयं विपाकः फलं समुपस्थितः प्राप्तः । नन्वज्ञानाज्ञातकर्मण कथं फलप्राप्तिरित्यत आह–अपथ्यैः अपक्वहरितालादिभिः सह अन्नरसे संभुक्ते अज्ञानतोऽपि भक्षिते सति व्याधिर्यथा ॥ ५९ ॥

गो० टी०–तस्येति । अपथ्यैः व्याधिविवर्धकैः व्यञ्जनैः सह संभुक्तः अन्नरसः व्याधिमुत्पादयतीति शेषः । समुपस्थितो भवति बाधकत्वेन प्राप्तो भवति । ‘ अपथ्यैः सह संभुक्ते व्याधिरन्नरसे यथा ’ इति च पाठः ॥ ६० ॥

६०–७१ ] ति० टी०–उदारस्य श्रेष्ठस्य तद्वचस्तद्वचःफलं त्रस्तो मरणभयादिति शेषः । रुदन् जीवितं त्यक्ष्यामीति भार्यामाहेति संबन्धः ॥ ६० ॥ चक्षुर्भ्यां न पश्यामि मुमूर्षुत्वादिति भावः ॥ ६१ ॥ नहि द्रक्ष्यन्तीति इह विद्यमानान्स्वेष्टबन्धूनिति शेषः। इतः परं त्वत्स्पर्शादिकं मे दुर्लभमिति भावः । यदि मामद्य रामः सकृदपि स्पृशेत् अन्वारभेत्किंचिद्द्वारा वा स्पृशेत् ॥६२॥ यदि वा धनं कोशं यौवराज्यं वा लभेत तदा जीवेयम् । राघवे यन्मया कृतं विवासनरूपं तन्मे वृत्तस्य सदृशं न ॥ ६३ ॥ अनेन रामेण यन्मयि कृतं राज्यं त्यक्त्वा मद्वचःपरिपालनरूपं तत्तस्यैव सदृशम् । अनन्वयोऽत्रालंकारः । मत्सदृशोऽन्यायकृद्रामसदृश उचितकर्ता च भुवि नाभूदस्ति भविष्यति वान्य इत्याह–दुर्वृत्तमपीति ॥ ६४–६७ ॥ स्तोकमल्पं वारि आतपो यथा शुष्कं करोति । ये द्रक्ष्यन्ति न ते मनुष्याः, किं देवांशा एव ॥ ६८–७१ ॥

रा० टी०–तस्मादिति । उदारस्य महतः तस्य ऋषेर्वचः वचनबोधितं दुःखमागतं प्राप्तमिति उक्त्वा त्रस्तः वियोगजनितदुःखेनोद्विग्नः भूमिपो दशरथः रुदन्सन्भार्यां कौसल्यामाह ‘उदारो दातृमहतोः’ इत्यमरः ॥ ६० ॥ वचनाकारमाह–यदिति । यत् यस्माद्धेतोः पुत्रशोकेन जीवितं प्रजापालनम् इह लोके स्थितिमित्यर्थः । संत्यजिष्यामि संत्यक्ष्यामि अतः त्वां न पश्यामि अत एव त्वमपि मा स्पृश मामिति शेषः । ‘मा’ इति पाठः अत एव मा मामिति भूषणे व्याख्यातम् ॥ ६१ ॥ ननु कुतो न मां पश्यसीत्यत आह–यमक्षयमिति । यमक्षयं यमस्य कालगतेः क्षयः विध्वंसो यस्मिँस्तं कालागम्यसाकेतलो-

---

१ संभुक्त इति गो. पाठः । २ व्याधिमन्नरस इति गो. पाठः । ३ ममागतमिति रा. पाठः । ४ अर्धमेतत् गो. नास्ति । ५ संत्यक्ष्याम्यथेति गो. पाठः । ६ साधु मेति गो. पाठः । ७ श्लोकोऽयं सार्धचतुःषष्टेरग्रे गो. पाठे । ८ स स्पृशेदिति रा. पाठः । ९ अद्य लभेतेति गो. पाठः । १० इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिपः । एतदिति गो. पाठः । ११ त्वेति रा. पाठः । १२ अदर्शनज इति गो. पाठः । १३ मे इति गो. पाठः १४ निभमिति गो. पाठः । १५ नाथस्येति गो. पाठः । १६ तदिति गो. पाठः ।

द्रक्ष्यन्ति सुखिनो रामं शुक्रं मार्गगतं यथा । कौसल्ये चित्तमोहेन हृदयं [1]सीदतनेराम् ॥ ७२ ॥
वेदये न च संयुक्ताञ्शब्दस्पर्शरसानहम् । चित्तनाशाद्विपद्यन्ते सर्वाण्येवेन्द्रियाणि [2]हि ॥
क्षीणस्नेहस्य दीपस्य [3]संरक्ता रश्मयो यथा ॥ ॥ ७३ ॥
अयमात्मभवः शोको मामनाथमचेतनम् । [4]संसाधयाति वेगेन यथा कूलं नदीरयः ॥ ७४ ॥
हा राघव महाबाहो हा ममायासनाशन । हा पितृप्रिय मे नाथ हा [5]ममासि गतः सुत ॥ ७५ ॥
हा कौसल्ये न [6]पश्यामि हा सुमित्रे तपस्विनि । हा नृशंसे ममामित्रे कैकेयि कुलपांसनि ॥ ७६ ॥
इति मातुश्च रामस्य सुमित्रायाश्च संनिधौ । राजा दशरथः शोचञ्जीवितान्तमुपागमत् ॥ ७७ ॥

[7]तथा तु दीनः कथयन्नराधिपः प्रियस्य पुत्रस्य विवासनातुरः ।
गतेऽर्धरात्रे भृशदुःखपीडितस्तदा जहौ प्राणमुदारदर्शनः ॥ ७८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

---

कमित्यर्थः । येन मानवाः मनुवंशिनः अनुप्राप्ता प्राप्यनुकूलव्यापारवन्तः ते न द्रक्ष्यन्ति इहलोकस्थान्न पश्यन्ति एतेन मनुवंशीयानां स्वाभाविकः सौशील्यगुणो व्यञ्जितः । अर्धं पृथक् । नन्विहस्थितौ उपायं विचार्य स्थीयतामित्यत आह—यदि रामः मां सकृदपि स्पृशेदन्वारभेत पश्चाद्गमनारम्भं कुर्यात्तदा धनं कोशादिकं यौवराज्यं युवराजपाल्यं जीवेयं पालयेयमिति मे मतिः निश्चयः । अर्धद्वयमेकान्वयि ॥ ६२ ॥ रामागमनं विना स्थित्यभावे हेतुं वदन्नाह—नेति । यदकालकप्रव्राजनं मया कृतं तन्मेऽसदृशमनुचितमित्यर्थः । यदाज्ञापरिपालनमनेन रामेण कृतं तत्तस्य सदृशमुचितमेव एतेनेह स्थितौ जना नुपहसिष्यन्तीति ध्वनितम् ॥ ६३ ॥ तदेव भङ्ग्यन्तरेण बोधयन्नाह—दुर्वृत्तमिति । दुर्वृत्तमसद्वृत्तिमसूयेभिन्देद् ॥ ६४ ॥ वियोगजदुःखस्य परां काष्ठां बोधयन्नाह—चक्षुषेति । मयि विद्यमाना स्मृतिं रामभिन्नविषयकस्मरणं विलल्यते ॥ ६५ ॥ स्मृत्यन्तराभावे हेतुं वदन्नाह—दूता इति । स्वतस्य स्वः स्वकीय एव सः रामः तस्य किं च सुशोभनः अतः गुणद्वारा सर्वत्र व्याप्तिर्यस्य तस्य रामस्य एते प्रसिद्धाः गुणाः दूतावद्दूता इव स्वरयन्ति रामसन्निधिं द्रुतं प्राप्तुमुत्साहयन्तीत्यर्थः वै निश्चितमेतत् । अर्धं पृथक्—अत इति । जीवितस्य पालनस्य क्षयः अवसानं यस्मिन् समये तस्मिन्रामं न पश्यामि अतः किं दुःखतरं न किमपीत्यर्थः । अर्धद्वयमेकान्वयि ॥ ६६ ॥ तस्येति । स्तोकं स्वल्पं वारि आतपो घर्म इव ॥ ६७ ॥ नन्विह स्थितौ प्रयोजनाभावाद्वयमपि भवता सहैव गमिष्याम इत्यत आह—नेति । ये रामस्य मुखं द्रक्ष्यन्ति ते मनुष्याः प्राकृतनरा न । तत्र हेतुः—यतो देवाः अतिप्रमोदवन्तः अत एव धन्याः चारुः अतिमनोहरा नासिका यस्मिंस्तत्ताराधिपश्चन्द्रस्तत्समं तत्सदृशम् एतेन तद्दर्शनार्थं भवतीभिः स्थातव्यमिति ध्वनितम् । अर्धचतुष्टयमेकान्वयि ॥ ६८ ॥ ६९ ॥

तदेव भङ्ग्यन्तरेणाह—सदृशमिति । शारदस्य शरत्संबन्धिनः शोभनो गन्धो यस्मिंस्तत् ॥ ७० ॥ निवृत्तेति । शुक्रमतिप्रभावविशिष्टं मार्गः गतो येन तं यथा यथावत् द्रक्ष्यन्ति एतेन तद्दर्शनमतिभाग्यवशेन लभ्यमिति सूचितम् ॥ ७१ ॥

गो० टी०—तस्मादिति । उदारस्य शापप्रदातुः उदारत्वोक्तिरपुत्रस्य पुत्रसंपादनपरत्वात्, यद्वा उदारस्य महतः 'उदारो दातृमहतोः' इत्यमरः वचो मामागतं शापरूपवचनार्थो मां प्राप्त इत्यर्थः ॥ ६१ ॥ चक्षुर्भ्यामिति । मा माम् ॥ ६२ ॥ इत्युक्त्वा स रुदंस्त्रस्तो भार्यामाह च भूमिप इत्यर्धानन्तरम् 'एतन्मे सदृशं देवि यन्मया राघवे कृतम् । सदृशं तत्तु तस्यैव यदनेन कृतं मयि ॥' इति क्रमः ॥ ६३ ॥ एतदर्थद्वयं क्रमेणोपपादयति—दुर्वृत्तमित्यर्धद्वयेन ॥ ६४ ॥ यदीति । रामः सकृदप्यद्य मां संस्पृशेत् लभेत वा चक्षुर्विषयतां प्राप्नुयाद्वा तदा जीवेयमिति गम्यमानत्वात्तदनुक्तिः । किमर्थमेवमर्थं न करोषीत्यत्राह—यमेति । यमक्षयं यमगृहमनुप्राप्ताः मानवाः बान्धवान्न द्रक्ष्यन्ति हीत्यर्थः । तस्माज्जीवनकाल एव दर्शनमपेक्ष्यत इति भावः ॥ ६५–६७ ॥ तस्येति । अप्रतिकर्मणः प्रतिक्रियारहितस्य स्तोकमल्पम् 'स्तोकाल्पक्षुल्लकाः' इत्यमरः ॥ ६८ ॥ नेति । मनुष्याः जरायुजाः न भवन्ति किंतु देवाः नित्ययौवनाः 'अहं पुनर्देवकुमाररूपमलंकृतं तं सुतमागजन्तम् । नन्दामि पश्यन्नपि दर्शनेन भवामि दृष्ट्वा च पुनर्युवेव ॥' इति हि पूर्वमुक्तवान् । चारुशुभकुण्डलं तन्मुखसंयोगात् कुण्डलमतीव शोभां प्राप्तमित्युच्यते ॥ ६९ ॥ ७१ ॥ निवृत्तवनवासमिति । मार्गगतं शुक्रं यथा मौढ्यं विहाय स्वस्थानगतं शुक्रमिव ॥ ७२ ॥

७२–७८ ] ति० टी०—शुक्रं मार्गगतं यथा मौढ्यादि विहाय स्वोच्चमार्गगतं शुक्रमिवेत्यर्थ इति तीर्थः । कतकस्तु—'शुक्रं मार्गगतं यथा' इति पाठः, हस्तात्पअराद्वान्यदेशगतं पुनश्च स्वर्णं यथास्थानं गतं प्राप्तं शुकं क्रीडाशुकमिवेत्यर्थं इत्याह । चित्त-

---

१ सीदतीव मे इति गो. पाठः । २ मे इति गो. पाठः । ३ संसक्ता इति गो. पाठः । ४ सादयतीति गो. पाठः । ५ -ऽद्य कासीति गो. पाठः । ६ नशिष्यामीति गो पाठः । ७ यदा तु दीनमिति गो. पाठः ।

## पञ्चषष्टितमः सर्गः ।

प्रभाते प्राबोधिकवादित्रघोषान्वितबन्दिस्तुतिपाठे प्रवृत्तेऽप्यप्रबुध्यमानं दशरथमन्तिकचराः स्त्रिय उपायान्तरैर्गतप्राणं विनिश्चित्युरथ प्रबुद्धानां कौसल्यासुमित्रादीनां दुःखाक्रन्देनोच्चैस्तमामभ्याहृतं प्रसक्ते ।

अथ रात्र्यां व्यतीतायां प्रातरेवापरेऽहनि । बन्दिनः पर्युपातिष्ठंस्तत्पार्थिवनिवेशनम् ॥ १ ॥
सूताः परमसंस्कारा मागधाश्चोत्तमश्रुताः । गायकाः श्रुतिशीलाश्च निगदन्तः पृथक्पृथक् ॥ २ ॥
राजानं स्तुवतां तेषामुदात्ताभिहिताशिषाम् । प्रासादाभोगविस्तीर्णः स्तुतिशब्दो ह्यवर्तत ॥ ३ ॥

---

मोहेन दुःखातिशयप्राप्तमूर्छया सीदतेतरामतिशयेन शीर्यतीव ॥ ७२ ॥ वेदये जानामि संयुक्तानिन्द्रियसंयुक्तान् संरक्ता भस्मतां प्राप्ता यथा दीपस्य रश्मयो विपद्यन्ते तथेन्द्रियाणीत्यर्थः ॥७३॥ संसाधयति नाशयति ॥ ७४–७८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

रा० टी०–कौशल्ये इति । चित्तस्य यो मोहः इह स्थितौ कर्तव्याकर्तव्यविषयकविवेकाभावस्तेन मे हृदयं सीदतेतराम् । अत एव संयुक्तानिन्द्रियसंबद्धानपि शब्दादीनहं न वेद जानामि । तत्र हेतुः चित्तनाशात्सर्वाणि विपद्यन्ते परिणतानि भवन्ति तत्र दृष्टान्तः संरक्ताः अरुणाः । अर्धचतुष्टयमेकान्वयि ॥ ७२ ॥ ७३ ॥ अयमिति । आत्मना निष्पादितः शोकः मामचेतनं शिथिलमित्यर्थः संसाधयति करोति, तत्र दृष्टान्तः नदीरयः गङ्गावेगः कूलमिव ॥ ७४ ॥ तद्विलापमाह–हेति । आयासनाशन दुःखविध्वंसक ॥ ७५ ॥ हेति । नाथ मनोरथपूरक ॥ ७६ ॥ हेति । अनृशंसे क्रूरचेष्टारहिते अत एव आमित्रे अतिप्रिये कुलपांसनि कुलाधिपप्रकाशिके कैकेयि इति अनेन प्रकारेण रामस्य मातुः कौशल्यायाः संनिधौ शोचन्स जीवितान्तं पालनाभावमप्रकटसाकेतलोकमित्यर्थः । उपागमत् प्राप्नोत् ॥७७॥ गमनसमयं बोधयन्नाह–तथेति । प्राणं पालनं जहौ अप्रकटसाकेतं प्रापेत्यर्थः ॥ ७८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुःषष्टितमः सर्गः ॥ ६४ ॥

गो० टी०–कौसल्य इति । चित्तमोहेन चित्तस्य मोहो दुःखातिशयप्राप्ता मूर्च्छा तयेत्यर्थः । ' मूर्छा तु कश्मलं मोहः ' इत्यमरः । हृदयं मनसोऽधिष्ठानं सीदतीव विशीर्यतीव संयुक्तान् इन्द्रियसंयुक्तान् न वेद येन जाने ॥७३॥ हृदयविशरणेन शब्दाद्यज्ञाने हेतुमाह–चित्तनाशादिति । संसक्ताः दीपाविनाभूताः यथा स्नेहनाशकृतदीपनाशाद्रश्मिनाशः एवं शरीरशैथिल्यकृतचित्तनाशादिन्द्रियनाश इति सूचितम् ॥ ७४ ॥ ७५ ॥ हेति । आयासनाशन दुःखनाशन ॥ ७६–७९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुःषष्टितमः सर्गः ॥६४॥

१ ] ति० टी०–अथेति ॥ १ ॥

२ ] ति० टी०–परमसंस्कारा व्याकरणादिशिक्षावन्तः परमालंकारा वा । मागधा वंशावलीकीर्तकाः । 'मङ्गलाः' इति पाठेऽपि मङ्गलपाठकास्त एव उत्तमश्रुता उत्तमं श्रुतं वंशपरम्पराश्रवणमेषां ते मागधाः । श्रुतिशीला गायकास्तन्त्रीनादविभाजनशीला गायकाः पृथक्पृथङ् निगदन्तः स्वस्वमार्गानुसारेणेति शेषः ॥ २ ॥

रा०टी०–अप्रकटसाकेतस्थराजैश्वर्यं वर्णयन्नाह–अथेति । अथ अप्रकटसाकेतलोकप्रस्थानानन्तरं रात्र्यां व्यतीतायां सत्यामपरेऽहनि प्रातरेव बन्दिनः राजस्तुतिकर्तारः परमसंस्काराश्छन्दोव्याकरणाध्ययनाध्यापनजनितसंस्कारविशिष्टवाणीविशिष्टाः सूताः वंशपरम्पराप्रवक्तारश्च मङ्गलाः गणपत्यादिस्तवपाठकाश्च उत्तमश्रुताः उत्तमं श्रुतं गानाभिज्ञमुखेभ्यः श्रवणं येषां ते अतिशिक्षावन्त इत्यर्थः अत एव श्रुतिशीलाः श्रवणश्रावणकर्मपरिशीलनकर्तारः अत एव पृथक् पृथक् निगदन्तः स्वस्वाभिज्ञतां दर्शयन्तो गायकाश्च पार्थिवनिवेशनमप्रकटसाकेतान्तर्वर्तिराजाधिष्ठितगृहं पर्युपातिष्ठन्प्रापुः । श्लोकद्वयमेकान्वयि ।'परमसंस्कारा मागधाश्च'इति पाठान्तरं राजवंशपरम्परावक्तार इति तदर्थः अस्मिन्पक्षे सूतशब्दः पौराणिकार्थकः॥१॥२॥

गो० टी०–अथेत्यादि श्लोकद्वयमेकं वाक्यम् । रात्र्यां रात्रिशेषे परमसंस्काराः व्याकरणाद्युत्तमसंस्कारयुक्ताः श्रेष्ठालंकारयुक्ता वा बन्दिन इति पूर्वमुक्तत्वात् सूताः वंशावलिकीर्तकाः मङ्गलाः मङ्गलपाठकाः उत्तमं श्रुतं गान्धर्वशास्त्रश्रवणं येषां ते उत्तमश्रुताः एतद्विशेषणद्वयं गायकमात्रविशेषणम् अन्यत्सर्वविशेषणं सर्वत्र पर्युपातिष्ठन्निति क्रियापदम् ॥ १–२॥

३ ] ति० टी०–उदात्तमुच्चैःस्वरेणाभिहिता आशिषो यैस्तेषां प्रासादानामाभोगेषु मध्येषु विस्तीर्णः प्रतिध्वनिनेति शेषः ॥ ३ ॥

रा० टी०–राजानमिति । उदात्तेन उच्चैःस्वरेण अभिहिताः प्रयुक्ताः आशिषो यैस्तेषां राजानं स्तुवतां तोषयतां बन्द्यादीनां प्रासादाभोगविस्तीर्णः प्रासादानां देवगृहादीनामाभोगेषु मध्येषु विस्तीर्ण विस्तारो यस्य सः स्तुतिशब्दोऽवर्तत ॥ ३ ॥

---

१ मङ्गला इति गो. रा. पाठः । २ स्तुतिशीला इति गो. पाठः ।

ततस्तु स्तुवतां तेषां सूतानां पाणिवादकाः । अपदानान्युदाहृत्य पाणिवादान्यवादयन् ॥ ४ ॥
तेन शब्देन विहगाः प्रतिबुद्धाश्च सस्वनुः । शाखास्थाः पञ्जरस्थाश्च ये राजकुलगोचराः ॥ ५ ॥
व्याहृताः पुण्यशब्दाश्च वीणानां चापि निःस्वनाः । आशीर्गेयं च गाथानां पूरयामास वेश्म तत् ॥ ६ ॥
ततः शुचिसमाचाराः पर्युपस्थानकोविदाः । स्त्रीवर्षवरभूयिष्ठा उपतस्थुर्यथापुरा ॥ ७ ॥
हरिचन्दनसंपृक्तमुदकं काञ्चनैर्घटैः । आनिन्युः स्नानशिक्षाज्ञा यथाकालं यथाविधि ॥ ८ ॥
मङ्गलालम्भनीयानि प्राशनीयान्युपस्करान् । उपानिन्युस्तथा पुण्याः कुमारीबहुलाः स्त्रियः ॥ ९ ॥

गो० टी०—राजानमिति । उदात्ताभिहिताशिषाम् उदात्तेन उच्चैःस्वरेण अभिहिताः प्रयुक्ताः आशिषो यैस्तेषां प्रासादाभोगविस्तीर्णः प्रासादेषु आभोगः परिपूर्णता तया विस्तीर्णः 'आभोगः परिपूर्णता' इत्यमरः ॥ ३ ॥

४] ति० टी०—पाणिवादकाः पाणिवादनशीलाः अपदानानि राज्ञां वृत्ताद्भुतकर्माण्युदाहृत्य तदनुगतं पाणिवादान्यवादयन् ॥४॥

रा०टी०—तत इति । ततः शब्दप्रवृत्त्यनन्तरं तेषां सूतानां स्तुवतां सतां पाणिवादकाः तालगत्यनुरोधेन पाणिवादनकुशलाः पुरुषाः अपदानानि राजकुलप्रभूतविचित्रचरितानि उदाहृत्य पाणिवादान्पाणिरूपवाद्यानि अवादयन् ॥ ४ ॥

गो० टी०—तत इति । स्तुवतां स्तुवत्सु सत्सु पाणिवादकाः तालगत्या विविधं पाणिभ्यां वादयन्तीति पाणिवादका अपदानानि वृत्तान्यद्भुतकर्माणि पाणिवादानवादयन् पाणिवादानकुर्वन्नित्यर्थः ॥ ४ ॥

५ ] ति० टी०—सस्वनुः फणादित्वात्पक्षे एत्वाभ्यासलोपाभावः । ये राजकुलगोचरा राजकुलवासयोग्या ये शुकादयः ॥ ५ ॥

रा० टी०—तेनेति । तेन पाण्यादिवादनजनितेन शब्देन प्रतिबुद्धा इव शाखास्थाः पुष्पवाटिकादिवृक्षशाखानिवासिनः ये राजकुलगोचराः राजकुलमात्रनिवसनशीलाः अत एव पञ्जरस्थाः विहगाः ते च सस्वनुः ॥ ५ ॥

गो० टी०—तेनेति । शाखास्थाः गृहारामवृक्षशाखासु वर्तमानाः राजकुलगोचराः राजगृहे दृश्यमानाः विहगाः शकुनादयः ५

६ ] ति० टी०—तैः पूर्वश्लोकोक्तैः शुकादिभिर्व्याहृताः पुण्यशब्दाः काशीगङ्गादिरूपाः गाथानां केवलगायकानामाशीर्गेयमाशीर्वादप्रधानं गानं यद्वा गाथा राज्ञां चरित्रादिप्रतिपादिकास्तासामाशीर्वादघटितं गानमित्यर्थः ॥ ६ ॥

रा० टी०—व्याहृता इति । व्याहृता ब्राह्मणशुकाद्युच्चारिताः पुण्याः वेददेवादिसंबन्धित्वेन पवित्रकारका एव शब्दाः वीणानां निःस्वनाश्च तद्राजाधिष्ठितं वेश्म गृहं पूरयामासुः गाथानां ब्राह्मणादिरचितप्रबन्धानां संबन्धि आशीर्गेयम् आशिषो राजाभिप्रेतस्य गेयं गानं च पूरयामास पूरयामासेत्यस्य वचनविपरिणामेनान्यत्राप्यन्वयः ॥ ६ ॥

गो० टी०—व्याहृता इति । व्याहृताः ब्राह्मणैरुक्ताः पुण्यशब्दाः पुण्यपुरुषक्षेत्रतीर्थकीर्तनादिरूपाः पूरयामासुरिति विपरिणामेन योजनीयं गाथानां दशरथविषयप्रबन्धविशेषाणां संबन्धि आशीर्गेयम् आशीर्वादरूपगानम् ॥ ६ ॥

७ ] ति० टी०—पर्युपस्थानं परिचर्या स्त्रीभिर्वर्षवरैः षण्ढैश्च भूयिष्ठाः । 'षण्ढो वर्षवरस्तुल्यौ' । परिचारका इति शेषः ॥७॥

रा० टी०—तत इति । ततः ब्राह्मणादिशब्दश्रवणानन्तरं शुचिः कपटसंसर्गशून्यः समाचारः सम्यगाचरणं येषां ते स्त्रियश्च वर्षवराः क्लीबानि च तैः भूयिष्ठाः अधिकाः पर्युपस्थाने सेवायां कोविदाः निपुणाः जनाः पुरा यथा प्रकटायोध्यास्थितिसमये इव उपतस्थुः एतेन असाधारणदशरथपरिकरा अपि दशरथेन सहैव अप्रकटसाकेतलोकं प्रापुरिति व्यञ्जितम् ॥७॥

गो० टी०—तत इति । पर्युपस्थानकोविदाः कालोचितपरिचर्याविचक्षणाः स्त्रीवर्षधरभूयिष्ठाः अन्तःपुराध्यक्षस्त्रीभिः वर्षधरैः षण्ढैश्च समृद्धाः परिचारका इति शेषः ॥ ७ ॥

८ ] ति० टी०—स्नानशिक्षाज्ञाः स्नानविधिज्ञाः यद्वारुणोदयात्पूर्वमेवोषसि स्नानार्थं जलमानेतव्यमिति शिक्षाज्ञाः ॥ ८ ॥

रा० टी०—सेवाकारमाह—हरीति । स्नानशिक्षाज्ञाः स्नानशिक्षां यथाविधिस्नानशासनं जानन्ति ताः पूर्वोक्ताः स्त्र्यादयः हरिचन्दनैः संपृक्तं संमिश्रमुदकं काञ्चनैर्घटैर्यथाकालं यथाविधि आनिन्युः ॥ ८ ॥

गो० टी०—हरिचन्दनसंपृक्तमिति । हरिचन्दनसंपृक्तं हरिचन्दनसंमिश्रं स्नानशिक्षाज्ञाः स्नानप्रकारज्ञाः यथाविधि यथानियमम् ॥ ८ ॥

९ ] ति० टी०—मङ्गलालम्भनीयानि मङ्गलार्थमालम्भनीयानि स्पर्शनीयानि गवादीनि । 'आलम्भः स्पर्शहिंसयोः' । प्राशनीयानि गङ्गोदकादीनि । दन्तधावनानन्तरं गण्डूषत्वेन प्राशनीयानि यानि नारिकेलोदकजीरकोदकानि च उपस्करा दर्पणवस्त्राभरणादयः कुमारीबहुलाः कुमार्यो बहुला यासु ताः स्त्रियो वरनार्यः ॥ ९ ॥

रा० टी०—मङ्गलेति । मङ्गलालम्भनीयानि मङ्गलहेतुकस्पर्शयोग्यानि गोप्रभृतीनि प्राशनीयानि दन्तधावनानन्तरं गण्डूषेण प्राशनयोग्यानि गङ्गोदकनारिकेलोदकजीरकोदकानि उपस्करान्वस्त्राभरणदर्पणादीन्कुमारीणां बहुलमाधिक्यं यासु ताः पुण्याः दोषरहिताः स्त्रियः उपानिन्युः ॥ ९ ॥

१ वाद्यानिति गो. रा. पाठः । २ वीति गो. पाठः । ३ धरेति गो. पाठः । ४ उपनिन्युरिति गो. पाठः ५ ऽप्यन्या इति गो. पाठः । ६ क्लीबशब्दः कोशे पुंलिङ्गो दृश्यते ।

सर्वलक्षणसंपन्नं सर्वं विधिवदर्चितम् । सर्वं सुगुणलक्ष्मीवत्तद्बभूवाभिहारिकम् ॥ १० ॥
ततः सूर्योदयं यावत्सर्वं परिसमुत्सुकम् । तस्थावनुपसंप्राप्तं किंस्विदित्युपशङ्कितम् ॥ ११ ॥
अथ याः कोशलेन्द्रस्य शयनं प्रत्यनन्तराः । ताः स्त्रियस्तु समागम्य भर्तारं प्रत्यबोधयन् ॥ १२ ॥
अथाप्युचितवृत्तास्ता विनयेन नयेन च । नह्यस्य शयनं स्पृष्ट्वा किंचिदप्युपलेभिरे ॥ १३ ॥
ताः स्त्रियः स्वप्नशीलज्ञाश्चेष्टां संचलनादिषु । ता वेपथुपरीताश्च राज्ञः प्राणेषु शङ्किताः ॥ १४ ॥

गो० टी०—मङ्गलालम्भनीयानीति । मङ्गलालम्भनीयानि मङ्गलरूपानुलेपनानि तैलोद्वर्तनादीनि स्पर्शनीयानि गवादीनीत्येके प्राशनीयानि दन्तधावनानन्तरं गण्डूषत्वेन प्राशनीयानि संपिष्टतिलनारिकेलजीरकादिद्रव्याणि औषधविशेषानिति वार्थः, गङ्गादितीर्थोदकानीति वार्थः, अनुदिनमखिलदुरितहरणायाखिलकर्मणामधिकारापादनाय च प्राशनीयानि कुलाराधनभूतश्रीरङ्गनाथचरणारविन्दसमर्पिततीर्थोदकतुलस्यादीनीति वार्थः, तीर्थोदकभाजनावरणपेटिकादेरेव परिचारकैरानयनं ज्ञेयम् । उपस्करान् दर्पणवस्त्राभरणकुसुमादीनि कुमारीबहुलाः कुमारीप्रायाः स्त्रियः इति द्वितीया वारयोषित इति यावत् ॥ ९ ॥

१० ] ति० टी०—आभिहारिकं प्रातःसमये राज्ञो यदभिहर्तव्यं मङ्गलार्थमानेतव्यम्, तत्सर्वं सर्वलक्षणयुक्तं सर्वं विधिवदर्चितं यथायोग्यं बहूकृतं सुगुणं च तल्लक्ष्मीवच्च ॥ १० ॥

रा० टी०—सर्वेति । सर्वैः निखिलैः लक्षणैः संपन्नं युक्तमत एव अर्चितं प्रशंसाविशिष्टं सुगुणलक्ष्मीवच्छोभनाः गुणाः संपादकत्वेन यस्मिन्नत एव लक्ष्मीवच्छोभासंपत्तिभ्यां विशिष्टं तदेव तदिति कर्मधारयः यत्सर्वं निखिलमाभिहारिकं मङ्गलार्थं राज्ञे प्रातः प्रापणीयं तत्सर्वं विधिवदभूत् ॥ १० ॥

गो० टी०—सर्वलक्षणसंपन्नमिति । आभिहारिकं राज्ञे प्रातर्यदाहर्तव्यं मङ्गलार्थमानेतव्यं तत्सर्वं सर्वलक्षणसंपन्नत्वादिधर्मविशिष्टं बभूव सुगुणं च तत् लक्ष्मीवच्चेति समासः॥१०॥

११ ] ति० टी०—परिसमुत्सुकं राजदर्शनं प्रतीति शेषः तस्थौ ततोऽनुपसंप्राप्तमप्राप्तराजदर्शनमत एव किंस्विदित्युपशङ्कितमभूत् ॥ ११ ॥

रा० टी०—अप्रकटसाकेतलोकप्राप्तराजसंपत्तिं संवर्ण्य राजकर्तृकगमनानन्तरकालिकप्रकटसाकेतलोकजनवृत्तान्तं वर्णयन्नाह—तत इत्यादिभिः । परिसमुत्सुकं रामवृत्तान्तश्रवणफलकराजदर्शनौत्सुक्यविशिष्टं यत्सर्वं प्रकटायोध्याजनजातं यावत्सूर्योदयं सूर्योदयपर्यन्तं तस्थौ तज्जनजातमनुपसंप्राप्तं बहिर्गमनाभावविशिष्टराजानं ज्ञात्वा स्वित् इदं राजानागमनं किं किंनिमित्तकमित्युपशङ्कितं शङ्कां प्राप उपलक्ष्येत्यध्याहृतम्॥११॥

गो० टी०—तदिति । तत् पूर्वोक्तं परिजनजातं सूर्योदयं यावत्सूर्योदयात्पूर्वमेव परिसमुत्सुकं राजसेवासमुत्सुकम् अनुपसंप्राप्तम् अनागतं राजानं प्रति किंस्विदित्युपशङ्कितं सत् तस्थौ राजानागतः तस्य किं वा स्यादिति शङ्कासंयुक्तं तस्थावित्यर्थः ॥ ११ ॥

१२ ] ति० टी०—शयनं प्रति अनन्तरा आसन्नाः कौसल्यादिव्यतिरिक्ताः प्रत्यबोधयन्प्रतिबोधनोचितमृदुविनीतवचनैः स्पर्शैश्च ॥ १२ ॥

रा० टी०—अथेति । अथ सूर्योदयानन्तरं कोशलेन्द्रस्य दशरथस्य अनन्तराः समीपवर्तिन्यः याः स्त्रियस्तास्तु शयनं शय्यां प्रति संगम्य भर्तारं राजानं प्रत्यबोधयन् ॥ १२ ॥

गो० टी०—अथेति । याः कौसल्यादिव्यतिरिक्ताः शयनं प्रत्यनन्तराः शयनसन्निकृष्टा इत्यर्थः । प्रत्यबोधयत् प्रबोधनोचितसविनयमृदुवाक्यैः प्राबोधयन्नित्यर्थः ॥ १२ ॥

१३ ] ति० टी०—उचितवृत्ताः स्पर्शनादिव्यापारोचिताः । किंचिदपि जीवच्चेष्टादि ॥ १३ ॥

रा० टी०—अथेति । अथ प्रबोधनानन्तरं तत्प्रबोधोपलम्भाभावानन्तरमित्यर्थः । उचितवृत्ताः उचितं योग्यं वृत्तं बोधनविषयिणी प्रवृत्तिर्यासां ताः स्त्रियः विनयेन नम्रतया नयेन यथोचितरीत्या अस्य राज्ञः शयनं शय्यां स्पृष्ट्वा अत्रास्ति नास्ति वेति शङ्कानिवृत्त्यर्थं संस्पृश्य किंचिद्राजानित्यधार्यं वस्त्रादिकमपि न उपलेभिरे शय्यायां न प्रापुः एतेन सवस्त्राभरणशरीरसहितः साकेतलोकं जगामेति सूचितम् ॥ १३ ॥

गो० टी०—तथेति । तथापि बोधयित्वापि उचितवृत्ताः स्पर्शनादिव्यापारोचिताः विनयेन प्रश्रयेण नयेन युक्त्या च अस्य शयनं शयनस्थानं स्पृष्ट्वा किंचिदपि निद्रालक्षणम् उच्छ्वासादिकं न लेभिरे न ज्ञातवत्यः ॥ १३ ॥

१४ ] ति० टी०—स्वप्नशीलज्ञाः स्वप्नभावज्ञाः संचलनादिषु हृदयकरमूलनाडिषु चेष्टां नोपलेभिरे ततो वेपथुयुक्ताः राज्ञः प्राणेषु शङ्किता आसन् ॥ १४ ॥

रा० टी०—ता इति । राज्ञः चेष्टासंचलनादिषु चेष्टा कायव्यापारः असञ्चलनादयः प्रकृतिविपर्यासाभावप्रभृतयः तेषु प्राणेषु इन्द्रियेषु च शङ्किताः स्वप्नशीलज्ञाः स्वप्नसूचकस्वभावज्ञानवत्यस्ताः अमृतपाणयस्ताः राजदर्शनार्थमागताः वेपथुपरीताः राजशरीरादर्शनेन कम्पयुक्तदेहाः स्त्रियः प्रतिस्रोततृणाग्राणां स्रोतःसमीपोद्भूतवेतसप्रभृतिकोमलतृणाग्रभागानां सदृशं कम्पवत्त्वेन तुल्यं यथा स्यात्तथा संचकाशिरे, यद्वा ताः अदृष्टराजशरीराः स्वप्नशीलज्ञास्ताः अमृतपाणयः राज्ञः स्त्रियः

१ तद्बभूवेति गो. पाठः । २ तस्थेति गो. पाठः । ३ चेष्टासंचलनादिष्विति गो. रा. पाठः । ४ राजानिति रुचिरं दृश्यते ।

प्रतिस्रोतस्तृणाग्राणां सदृशं संचकाशिरे । अथ संदेहमानानां क्षीणां दृष्ट्वा च पार्थिवम् ॥
यत्तदाशङ्कितं पापं तदा जज्ञे विनिश्चयः ॥ ॥ १५ ॥
कौसल्या च सुमित्रा च पुत्रशोकपराजिते । प्रसुप्ते न प्रबुद्ध्येते यथाकालसमन्विते ॥ १६ ॥
निष्प्रभासौ विवर्णा च सन्ना शोकेन संनता । न व्यराजत कौसल्या तारेव तिमिरावृता ॥ १७ ॥
कौसल्यानन्तरं राज्ञः सुमित्रा तदनन्तरम् । न स्म विभ्राजते देवी शोकाश्रुलुलितानना ॥ १८ ॥
ते च दृष्ट्वा तदा सुप्ते उभे देव्यौ च तं नृपम् । सुप्तमेवोद्गतप्राणमन्तःपुरमदृश्यत ॥ १९ ॥

चेष्टादिषु स्वकायव्यापारादिषु शङ्किताः अत एव तृणाग्राणां सदृशं वेपथुपरीताः सत्यः संचकाशिरे । सार्धश्लोक एकान्वयी 'तर्श्चैरामृतपुच्छेषु' इति मेदिनी ॥ १४ ॥

गो० टी०—एतदेवोपपादयति–ता इति । स्वप्नशीलज्ञाः स्वापस्वभावज्ञाः ताः पूर्वोक्ताः स्त्रियः चेष्टासंचलनादिषु चेष्टा हस्तपादादिचलनं संचलनं हृदयादिस्पन्दनम् आदिशब्देन निश्वासादिकं गृह्यते तेषु किंचिन्नोपलेभिरे इत्यनुषङ्गेण संबन्धः । वेपथुना कम्पेन परीताः व्याप्तास्ताः स्त्रियः राज्ञः प्राणेषु शङ्किताः सत्यः प्रतिस्रोतस्तृणाग्राणां नदीप्रवाहाभिमुखवेतसादितृणाग्राणां सदृशं तुल्यं यथा तथा संचकाशिरे संचकम्पिर इत्यर्थः ॥ १४ ॥

१५ ] ति० टी०—प्रतिस्रोत इति । स्रोतोभिमुखस्थितवेतसादितृणाग्राणां सदृशं कम्पं संचकाशिरे प्रकाशितवत्यः प्राप्ता इति यावत् । संदेहमानानां संदिहानानां यदाशङ्कितं पापं मरणपूर्वं राज्ञेति शेषः । तस्य निश्चयो जज्ञे जातः ॥ १५ ॥

रा० टी०—अथेति । अथ प्रकम्पप्राप्त्यनन्तरं पार्थिवं पार्थिवशयनस्थानमेव दृष्ट्वा संदिहानानां संदेहमानानां स्त्रीणां यत्पापं दुःखदायकत्वेन पापसदृशं स्वलोकान्तरगमनमित्यर्थः। आशङ्कितं राज्ञा कथितमित्यर्थः तत्तस्य विनिश्चयस्तदा तस्मिन्काले जज्ञे पार्थिवमित्यत्र तस्येदमित्यण् नच तदपवादस्य वृद्धाच्छ इत्यस्य प्रवृत्त्या कथमणुच्यत इति वाच्यं "संज्ञायां वा" इत्यनेन वृद्धसंज्ञायाः वैकल्पिकत्वात्तस्याः प्राप्ताप्राप्तविभाषात्वेन "वृद्धिर्यस्याचामादि–" इत्यस्यापि निवर्तिकात्वादिति दिक् । अर्धद्वयमेकान्वयि ॥ १५ ॥

गो० टी०—अथेति । यत्पापं मरणरूपमाशङ्कितं तस्य निश्चयस्तदा जज्ञ इति संबन्धः ॥ १५ ॥

१६ ] ति० टी०—यथाकालसमन्विते मृते इव, यद्वा यथाकालसमन्विते बह्वीषु रात्रिषु दुःखतो जागरणादयथाकाले प्रत्युषसि निद्रया समन्विते इत्यर्थः ॥ १६ ॥

रा० टी०—कौशल्येति । पुत्रशोकेन पराजिते अत एव कालसमन्विते अन्तकालयुक्ते इव प्रसुप्ते कौशल्यासुमित्रा च न प्रबुध्येते जागृतः ॥ १६ ॥

गो० टी०—कौसल्येति । पुत्रशोकेन पराजिते आक्रान्ते अत एव यथाकालसमन्विते मृते इव प्रसुप्ते न प्रबुध्येते ॥ १६ ॥

१७ ] ति० टी०—शोकेन सन्नोपहता संनता सुप्तिवशसंकुचितहस्तपादादिकरणा। कौसल्येति अत्र स्मेति शेषः॥१७॥

रा० टी०—निष्प्रभेति । शोकेन सन्नता पराभूता सन्ना दुःखिता कौशल्या तिमिरावृता अन्धकाराच्छन्ना तारेव न व्यराजत अशोभत ॥ १७ ॥

गो० टी०—निष्प्रभेति । निष्प्रभा निःश्रीका विवर्णा पूर्ववर्णाद्विपरीतवर्णा शोकेन सन्ना कृशा सन्नता कार्श्येन नम्रा तिमिरावृता उत्पातकालोत्थधूमास्तिमिरं तेनावृता तारेव तारकेव न व्यराजत ॥ १७ ॥

१८ ] ति० टी०—न विभ्राजते न विशेषेण भ्राजते । तत्र हेतुः—शोकेत्यादि ॥ १८ ॥

रा० टी०—कौसल्येति । राज्ञोऽनन्तरं समीपे विद्यमाना या कौशल्या न विभ्राजतेस्म सा कौशल्या तदनन्तरं तत्सन्निधौ विद्यमाना सुमित्रा च न विभ्राजते स्म अत एव देवी शेषराजपत्नी न विभ्राजते स्म ॥ १८ ॥

गो० टी०—कौसल्यानन्तरमिति । प्रथमं राजा न विभ्राजते स्म राज्ञो नन्तरं कौसल्याशोकाश्रुलुलितानना सती न विभ्राजते स्म तदनन्तरं देवी तथाविधा सुमित्रा न विभ्राजते स्म मृतादृशरथाज्जीवन्त्योः कौसल्यासुमित्रयोर्विशेषो नासीदित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—ते उभे देव्यौ प्रभातादिना सुप्ते दृष्ट्वा नृपं च तं सुप्तमेव सन्तं तदवस्थायामेवोद्गतप्राणं लक्षणतो दृष्ट्वा सर्वमेवान्तःपुरमुद्गतप्राणं तत्कल्पमदृश्यत । 'अमन्यत' इति पाठेऽन्तःपुरं कर्तृ नृपमुद्गतप्राणममन्यतेत्यर्थः । तीर्थस्तु अदृश्यतेत्येतत्परस्परमपश्यदित्यर्थं व्याचष्टे ॥ १९ ॥

रा० टी०—ते इति । उभे कौशल्यासुमित्रे देव्यौ सुप्ते इव दृष्ट्वा नृपं नृपसंबन्धि शयनं तमाकाशमिव शून्यं दृष्ट्वा विद्यमानमन्तःपुरमुद्गतालयं प्राप्ताः प्राणा इन्द्रियाणि यस्य तदिव अत एव सुप्तं स्वापाश्रयीभूतमिव अदृश्यत नृपशब्दः इदमर्थाण्णन्तः द्वयभावस्तु संज्ञापूर्वकविधेरनित्यत्वात् ॥ १९ ॥

गो० टी०—ते इति । सुप्ते ते उभे देव्यौ च दृष्ट्वा सुप्तमेव सन्तमुद्गतप्राणं तं नृपं च अन्तःपुरम् अन्तःपुरजनः अदृश्यत अपश्यत् ॥ १९ ॥ २० ॥

१ संवेपमानानामिति गो० पाठः । २ तस्येति गो० पाठः । ३ चेति गो० पाठः । ४ तथेति गो० पाठः ।

ततः प्रचुक्रुशुर्दीनाः सस्वरं ता वराङ्गनाः । करेणव इवारण्ये स्थानप्रच्युतयूथपाः ॥ २० ॥
तासामाक्रन्दशब्देन सहसोद्गतचेतने । कौसल्या च सुमित्रा च त्यक्तनिद्रे बभूवतुः ॥ २१ ॥
कौसल्या च सुमित्रा च दृष्ट्वा स्पृष्ट्वा च पार्थिवम् । हा भर्तेति परिक्रुश्य पेततुर्धरणीतले ॥ २२ ॥
सा कोसलेन्द्रदुहिता चेष्टमाना महीतले । न भ्राजते रजोध्वस्ता तारेव गगनच्युता ॥ २३ ॥
नृपे शान्तगुणे जाते कौसल्यां पतितां भुवि । अपश्यंस्ताः स्त्रियः सर्वा हतां नागवधूमिव ॥ २४ ॥
ततः सर्वा नरेन्द्रस्य कैकेयीप्रमुखाः स्त्रियः । रुदत्यः शोकसंतप्ता निपेतुर्गतचेतनाः ॥ २५ ॥
ताभिः स बलवान्नादः क्रोशन्तीभिरनुद्रुतः । येन स्फीतीकृतो भूयस्तद्गृहं समनादयत् ॥ २६ ॥
तत्परित्रस्तसंभ्रान्तपर्युत्सुकजनाकुलम् । सर्वतस्तुमुलाक्रन्दं परितापार्तबान्धवम् ॥ २७ ॥
सद्योनिपतितानन्दं दीनं विक्लवदर्शनम् । बभूव नरदेवस्य सद्म दिष्टान्तमीयुषः ॥ २८ ॥

२०-२१ ] ति० टी०-स्थानाद्वासस्थानात्प्रच्युतो यूथपो महागजो यासां ताः करेणव इव प्रचुक्रुशुरित्यन्वयः॥२०॥२१॥

रा० टी०-तत इति । ततः राजदर्शनाभावायनन्तरं वराङ्गनाः राजपत्न्यः प्रचुक्रुशुः तत्र दृष्टान्तः स्थानात्स्वसमीपात्प्रच्युतः क्वचिद्गतः यूथपो यासां ताः करेणव इव ॥ २० ॥

रा० टी०-तासामिति । कौसल्या सुमित्रा च आक्रन्दशब्देन रोदनस्वनेन त्यक्तनिद्रे त्यक्ता विनष्टा निद्रा तत्सदृशमूर्छा ययोस्ते अत एव उद्गतचेतने प्राप्तचैतन्ये बभूवतुः॥२१॥

गो० टी०-तासामिति । सहसोद्गतचेतने सहसोत्पन्नप्रबोधे ॥ २१-२३ ॥

२२ ] ति० टी०-हा भर्तेति । हा भर्तरितीत्यर्थः ॥२२॥

रा० टी०-कौसल्येति । पार्थिवं पार्थिवमस्पृश्यां धरणीतले पेततुः ॥ २२ ॥

२३ ] ति० टी०-अयोध्याजनपदवाची कोशलशब्दस्तालव्यमध्यः कौसल्यापितृदेशवाची तु दन्त्यमध्यः ॥ २३ ॥

रा० टी०-सेति । महीतले चेष्टमाना लुण्ठन्ती अत एव रजोध्वस्ता धूलीं प्राप्ता कोशलेन्द्रदुहिता कौशल्या गगनच्युता तारेव न भ्राजते ॥ २३ ॥

२४-२५ ] ति० टी०-शान्तगुणे उपशान्तजीवनधर्मे ॥ २४ ॥ २५ ॥

रा० टी०-नृप इति । नृपे राजनि शान्तगुणे जाते पालकत्वाभावत्वं प्राप्ते सतीत्यर्थः । भुवि पतितां कौशल्यां हतां नागवधूमिव अपश्यन् ॥ २४ ॥

रा० टी०-तत इति । कैकेयीप्रमुखाः केकयीप्रभृतयः निपेतुः ॥ २५ ॥

गो० टी०-नृप इति । शान्तगुणे शान्तदेहोष्णस्पन्दनादिगुणे ॥ २४ ॥ २५ ॥

२६ ] ति० टी०-ताभिः कैकेयीप्रभृतिभिः पश्चादन्तःपुरं प्रविष्टाभिः स्वनादेन प्रथमप्रविष्टानां स्त्रीणां बलवान्नादोऽनुद्रुतो युक्तः अभूदिति शेषः, येनानुद्रवणेन स्फीतीकृतो वर्धितः स नादो भूयोऽधिकं तद्गृहं समनादयद्व्याप्तवान् । तीर्थस्तु—'येन स्थिरीकृतं भूयः' इति पठित्वा येन नादेन स्थिरीकृते मुखरितं तद्गृहं कर्तृ भूयोऽत्यर्थं समनादयदनददित्यर्थमाह ॥ २६ ॥

रा० टी०-ताभिरिति । क्रोशन्तीभिः ताभिः स्त्रीभिः बलवान् अतिदृढो नादः अनुद्रुतः प्रापितः येन नादेन भूयः अधिकं यथा स्यात्तथा स्फीतीकृतः प्रवर्धितः नादः प्रतिध्वनिरित्यर्थः, गृहं समनादयत् अतिनादविशिष्टमकरोत् ॥ २६ ॥

गो० टी०-ताभिरिति । स नादः कौसल्याप्रभृतीनां नादः क्रोशन्तीभिस्ताभिः पश्चात्प्रविष्टकैकेयीप्रभृतिभिरनुद्रुतः अनुसृतोऽभूत् येनानन्तरक्रोशानुद्रुतेन पूर्वनादेन स्थिरीकृतं व्याप्तं तत्सर्वं गृहं समनादयत् महान्तं प्रतिध्वनिमजनयदित्यर्थः ॥ २६ ॥

२७] ति० टी०-पर्युत्सुकजनाकुलं पूर्ववृत्तान्तज्ञानाय पर्युत्सुकजननिबिडम् ॥ २७ ॥

२८ ] ति० टी०-दिष्टान्तं कालधर्ममुपेयुषः प्राप्तस्य सद्म परित्रस्तसंभ्रान्तत्वादिगुणविशिष्टं बभूव ॥ २८ ॥

रा० टी०-तदिति । तासां स्त्रीणां परित्रस्तं अत्युद्वेगत्वेन संभ्रान्ताः ते एव पर्युत्सुकाः वृत्तान्तश्रवणौत्सुक्यवन्तस्ते एव जनास्तैः आकुलं व्याप्तमत एव तुमुलः वचनान्तरश्रवणाभावसंपादकः आक्रन्दो यस्मिन्नत एव परितापेन आर्ता व्याप्ताः बान्धवाः यस्मिन्नत एव दीनं क्षीणमत एव विक्लवं विक्लवकारकं दर्शनं यस्य तद्दिष्टान्तं दिष्टस्य कालस्य अन्तः अभावो यस्मिंस्तं लोकम् ईयुषः प्राप्तस्य नरदेवस्य वेश्म गृहं बभूव । अर्थचतुष्टयमेकान्वयि । 'दिष्टं दैवे पुमान्काले' इति मेदिनी ॥ २७ ॥ २८ ॥

गो० टी०-तदित्यादि । पर्युत्सुकजनाकुलं पूर्वं पर्युत्सुकजनाकुलं सद्म नरदेवस्य दिष्टान्तमीयुषः नरदेवे मरणं प्राप्ते

१ नाथेति परिक्रुश्येति गो. पाठः । २ गगनाच्च्युतेति गो. पाठः । ३ रुदन्त्य इति गो. रा. पाठः । ४ स्थिरीकृतमिति गो. पाठः । ५ समुत्सुकसंभ्रान्तमिति गो. पाठः । ६ दीनविक्लवेति गो. पाठः ।

अतीतमाज्ञाय तु पार्थिवर्षभं यशस्विनं [१]तं परिवार्य पत्नयः ।
भृशं रुदन्त्यः करुणं सुदुःखिताः प्रगृह्य बाहू व्यलपन्ननाथवत् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

## षट्षष्टितमः सर्गः ।

निःसंज्ञस्य राज्ञः शिरः स्वाङ्क आनीय कैकेयीं विनिन्द्य कौसल्या रामादीन्परिशोचति । आलिङ्ग्य विलपन्तीं कौसल्यामपनीय राज्ञो देहं तैलद्रोण्यां निक्षिप्यामात्यादयः सायं स्वस्वभवनमुपजग्मुः ।

तमग्निमिव संशान्तमम्बुहीनमिवार्णवम् । [२]गतप्रभमिवादित्यं स्वर्गस्थं प्रेक्ष्य [३]भूमिपम् ॥ १ ॥
कौसल्या बाष्पपूर्णाक्षी विविधं शोककर्शिता । उपगृह्य शिरो राज्ञः कैकेयीं प्रत्यभाषत ॥ २ ॥
सकामा भव कैकेयि भुङ्क्ष्व राज्यमकण्टकम् । त्यक्त्वा राजानमेकाग्रा नृशंसे दुष्टचारिणि ॥ ३ ॥
विहाय मां गतो रामो भर्ता च स्वर्गतो मम । विपथे सार्थहीनेव नाहं जीवितुमुत्सहे ॥ ४ ॥
भर्तारं तु परित्यज्य का स्त्री दैवतमात्मनः । इच्छेज्जीवितुमन्यत्र कैकेय्यास्त्यक्तधर्मणः ॥ ५ ॥

सति सम्भ्रस्तसंभ्रान्तं सम्भ्रस्तम् उद्विग्नं संभ्रान्तम् अनवस्थितं च इत्येवमादिविशेषणयुक्तं बभूवेति संबन्धः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—अतीतं मृतं पत्नयः पत्न्यः बाहू प्रगृह्याभिहत्य अनाथवदनाथाहम् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

रा० टी०—अतीतमिति । पार्थिवर्षभमतीतं लोकान्तरगतमाज्ञाय परिवार्य शयनस्थानं परिवृत्य बाहू प्रगृह्य अन्योन्यं गृहीत्वा करुणं रुदन्त्यः पत्नयः तत्पत्न्यः व्यलपन् विविधमकथयन् ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चषष्टितमः सर्गः ॥ ६५ ॥

गो० टी०—अतीतमिति । आज्ञाय सम्यक् ज्ञात्वा पत्नयः पत्न्यः बाहू प्रगृह्य परस्परं बाहू गृहीत्वेत्यर्थः ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चषष्टितमः सर्गः ॥ ६५ ॥

१ ] ति० टी०—तमिति ॥ १ ॥

२ ] ति० टी०—राज्ञः शिर उपगृह्य अङ्के कृत्वेत्यर्थः ॥ २ ॥

रा० टी०—कौसल्यावृत्तं बोधयन्नाह—तमिति । भूमिपं राजानं स्वर्गस्थमप्रकटसाकेतपुरस्थं प्रेक्ष्य ज्ञात्वा अत एव तं तदधिष्ठितागारं संशान्तं प्रज्वलनरहितमग्निमिव अम्बुहीनमर्णवमिव गतप्रभं निवृत्ततेजसमादित्यमिव प्रेक्ष्य शोककर्षिता शोकेन वियोगजनितदुःखेन कर्षिता पीडिता अत एव बाष्पैः अश्रुभिः पूर्णे अक्षिणी यस्याः सा कौसल्या विविधमनेकप्रकारेण रुचिरं राज्ञः शिरः अप्याग्रभागमुपगृह्य गृहीत्वा कैकेयीं केकयीदासीं मन्थरां प्रत्यभाषत 'अग्रे प्रधाने च शिरः' इति नानार्थः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—तमित्यादि । राज्ञः शिर उपगृह्य अङ्के कृत्वेत्यर्थः ॥ १–३ ॥

३ ] ति० टी०— एकाग्रा पुत्रराज्यैकाग्रचित्ता ॥ ३ ॥

रा० टी०—तत्प्रतिभाषणमेवाह—सकामेति । नृशंसे क्रूरस्वभावे अत एव दुष्टचारिणि कैकेयि मन्थरे ! राजानं त्यक्त्वा इमं लोकं त्याजयित्वा एकाग्रा स्वस्थचित्ता सती त्वम् अकण्टकं विघ्नरहितं राज्यं भुङ्क्ष्व अत एव सकामा प्राप्तस्वमनोरथा भव ॥ ३ ॥

४ ] ति० टी०—राज्यस्याकण्टकत्वं दर्शयति—विहायेति । विपथे कान्तारे सार्थहीना सहायभूतपथिकसंघरहिता ॥ ४ ॥

रा० टी०—ननु स्वामिन्यास्तव सत्त्वे कथं मम राज्यभोग इत्यत आह—विहायेति । मां विहाय रामो गतः वनमिति शेषः, भर्ता च स्वः सर्वतः परलोकं गतः अतः विपथे दुर्गममार्गे सार्थहीना रक्षणयोग्यपथिकजनरहिता इवाहं जीवितुं पालयितुं नोत्सहे ॥ ४ ॥

गो० टी०—विहायेति । विपथे दुर्मार्गे सार्थहीना सहायभूतपथिकसंघरहितेत्यर्थः ॥ ४ ॥

५ ] ति० टी०—आत्मनो दैवतं भर्तारं परित्यज्य त्यक्तधर्मणस्त्यक्तः स्त्रीधर्मो यया तादृश्याः कैकेय्या अन्यत्र अन्या पुत्रराज्ये का जीवितुमिच्छेत् । 'परिष्वज्य' इति पाठे परिष्वज्य तेन सह भोगान्भुक्त्वा तं कालान्तरे परित्यज्येति शेषः ॥ ५ ॥

रा० टी०—ननु त्वदतिरिक्तानामपि बह्वीनां राजस्त्रीणां सत्त्वात्तदायत्तं राज्यं स्यादित्यत आह—भर्तारमिति । आत्मनः दैवतं देवं भर्तारं परित्यज्य अन्यत्र भर्तृरहितस्थाने त्यक्तधर्मणः त्यक्तः धर्मः स्वामिसंरक्षणरूपा सेवकरीतिर्यया तस्याः कैकेय्याः केकयीदास्यास्तव संनिधौ का मदन्यापि स्त्री जीवितुमिच्छेन्न कापीत्यर्थः ॥ ५ ॥

१ संमिति गो० पाठः । २ हतेति गो० पाठः । ३ पार्थिवमिति गो० पाठः ।

न लुब्धो बुध्यते दोषान्किंपाकमिव भक्षयन् । कुब्जानिमित्तं कैकेय्या राघवाणा कुलं हतम् ॥ ६ ॥
अनियोगे नियुक्तेन राज्ञा रामं विवासितम् । सभार्यं जनकः श्रुत्वा परितप्स्यत्यहं यथा ॥ ७ ॥
स मामनाथां विधवां नाद्य जानाति धार्मिकः । रामः कमलपत्राक्षो जीवन्नाशमितो गतः ॥ ८ ॥
विदेहराजस्य सुता तथा चारुतपस्विनी । दुःखस्यानुचिता दुःखं वने पर्युद्विजिष्यति ॥ ९ ॥
नदतां भीमघोषाणां निशासु मृगपक्षिणाम् । निशम्यमाना संत्रस्ता राघवं संश्रयिष्यति ॥ १० ॥
वृद्धश्चैवाल्पपुत्रश्च वैदेहीमनुचिन्तयन् । सोऽपि शोकसमाविष्टो नूनं त्यक्ष्यति जीवितम् ॥ ११ ॥

गो० टी०—भर्तारमिति । त्यक्तधर्मणः त्यक्तधर्मायाः "धर्मादनिच् केवलात्" इत्यनिच् ॥ ५ ॥

६ ] ति० टी०—एवं साहसकरणे हेतुमाह—नेति । किंपाको निम्बः, कतकस्तु—किंपाको विषभेदस्तं कोपादिना भक्षयन्नात्महत्यादोषं न बुध्यते तद्वदित्यर्थ इत्याह तत्र लुब्ध इति नात्यन्तं समञ्जसं धनलोभादिना परस्य विषभक्षणं कारयन्यथा हत्यादोषं न बुध्यते इति वक्तुमुचितम् । यत्कैकेय्या राघवाणां कुलं हतं करकुब्जानिमित्तं प्रेरकतया ॥ ६ ॥

रा० टी०—नेति । कैकेय्या कैकेयीदास्या राघवाणां कुलं हतं पीडितम् तत्र निमित्तं कारणं कुब्जा तन्निष्ठकुब्जात्वं कुब्जात्वविशिष्टा प्रायः कुटिला भवन्तीति प्रसिद्धम् । एतेन स्वनिष्ठकौटिल्यधर्मेणाकार्यमपि कृतमिति ध्वनितं तेन कौटिल्यविशिष्टैरकार्यं न गण्यते इति ध्वनितम् । तत्र दृष्टान्तः लुब्धः स्वजीवनविषयकलोभविशिष्टः जनः किंपाकं ब्राह्मण्यनाशकनिषिद्धलशुनपाकादिकं भक्षयन् चिरकालजीवनहेतुभूतं किंचिद्व्याधिनिवर्तनार्थं खादन्सन्नपि दोषान्भक्षणजनितदुरितानि न बुध्यते । इवोऽप्यर्थे ॥ ६ ॥

गो० टी०—नेति । लुब्धः अर्थलिप्सुः किम्पाकं कुत्सितपाकं विषविपाकमित्यर्थः । किम्पाको नाम काकमर्दनामकविषफलविशेषः इति केचित्, कुब्जानिमित्तं कुब्जाहेतोः "निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्" इति हेतौ प्रथमा ॥ ६ ॥

७ ] ति० टी०—अनियोगेऽनुचितनियोगे । वरव्याजात्कैकेय्या नियुक्तेन राज्ञा सभार्यं रामं विवासितं श्रुत्वा जनकोऽहमिव परितप्स्यति ॥ ७ ॥

रा० टी०—अनियोग इति । अनियोगे नियोगानुचितकाले नियुक्तेन नियोगकर्त्रा राज्ञा विवासितं सभार्यं भार्यासहितं रामं श्रुत्वा जनकः मिथिलाधीशः अहमिव परितप्स्यति ॥ ७ ॥

गो० टी०—अनियोगे नियुक्तेनेति । अनियोगे वरप्रदानसमये वरस्य विशेषनिर्देशाभावे सति नियुक्तेन इदानीं भरताभिषेकरूपे रामविवासनरूपे च कैकेय्या नियुक्तेन अनुचितनियोगे नियुक्तेनेति वार्थः, जनको वैदेहः ॥ ७ ॥

८ ] ति० टी०—जीवन्नेव नाशमदर्शनं गतः । 'जीवनाशमितो गतः' इति पाठे राज्ञो जीवनाशो यथा भवति तथा गत इत्यर्थः ॥ ८ ॥

रा० टी०—स इति । जीवन्नाशं जीवतां सफलजन्मनामृषीणां नाशः विध्वंसो यस्मिन्देशे तं देशमितो गतः धार्मिको रामः विधवां लोकान्तरगमनकर्तृत्वेन धवरहितामत एव अनाथां मामद्य न जानाति वृत्तश्रवणजनितज्ञानवानास्तीत्यर्थः । 'जीवनाशम्' इति पाठान्तरं तत्रापि स एवार्थः ॥ ८ ॥

गो० टी०—स इति । इतः अत्र देशे राज्ञा जीवनाशं गतः प्राप्तः स रामः अनाथां पुत्रविरहेण रक्षकान्तररहितां विधवां मां न जानाति ॥ ८ ॥

९ ] ति० टी०—चारुतपस्विनी भर्तृसेवनादिस्याश्रयः । पर्युद्वेगो भयं वने दुःखं प्राप्येति शेषः ॥ ९ ॥

रा० टी०—विदेहेति । चारुतपस्विनी पतिसेवाविषयकसुविचारविशिष्टा विदेहराजस्य सुता वने दुःखमनुभूयेति शेषः । पर्युद्विजिष्यति उद्वेगं प्राप्स्यति ॥ ९ ॥

गो० टी०—विदेहराजस्येति । तपस्विनी शोचनीया, दुःखमिति क्रियाविशेषणं पर्युद्विजिष्यति भयं प्राप्स्यतीत्यर्थः ॥ ९ ॥

१० ] ति० टी०—निशम्यमाना नादमिति शेषः । 'निशम्य नादम्' इति पाठान्तरम् ॥ १० ॥

रा० टी०—नदतामिति । नदतां नादं कुर्वतां भीमघोषाणां भयंकरघोषकारकस्वभावविशिष्टानां मृगादीनां निशम्यमाना नादमिति शेषः, अत एव संत्रस्ता सीता राघवं संश्रयिष्यति रामकण्ठसंलग्ना भविष्यति । किंच भीमघोषाणां भयंकरशब्दविशिष्टानां मृगादीनां नदतां नादं निशम्यमानेत्यर्थः । 'निशम्य नादम्' इति पाठान्तरमिति भट्टाः ॥ १० ॥

गो० टी०—नदतामिति । नदतां नदत्सु निशम्य नादमित्यर्थसिद्धम् ॥ १० ॥

११ ] ति० टी०—अल्पपुत्रश्चेति जनक इति शेषः । अल्पपुत्र इत्यस्य कन्यामात्रसंततिरित्यर्थ इति तीर्थः ॥ ११ ॥

रा० टी०—वृद्ध इति । वृद्धः ज्ञानवयोभ्यामाधिकोऽपि अल्पपुत्रः अल्पः एक इत्यर्थः, पुत्रः पुत्रसदृशः कन्येत्यर्थः यस्य स जनकः वैदेहीं वनगमनजनितवैदेहीदुःखमनुचिन्तयन्नत

१ जीवन्नाशमिति गो. पाठः । २ मीतेति गो. पाठः । ३ नूनमिति गो. पाठः । ४ नन्विति गो. पाठः ।

साहमद्यैव दिष्टान्तं गमिष्यामि पतिव्रता । इदं शरीरमालिङ्ग्य प्रवेक्ष्यामि हुताशनम् ॥ १२ ॥
तां ततः संपरिष्वज्य विलपन्तीं तपस्विनीम् । [1]व्यपनिन्युः सुदुःखार्तां कौसल्यां व्यावहारिकाः ॥ १३ ॥
तैलद्रोण्यां [2]तदा[3]मात्याः संवेश्य जगतीपतिम् । राज्ञः सर्वाण्यथादिष्टाश्चक्रुः कर्माण्यनन्तरम् ॥ १४ ॥
न तु [4]संकालनं राज्ञो विना पुत्रेण मन्त्रिणः । [5]सर्वज्ञाः कर्तुमीषुस्ते ततो रक्षन्ति भूमिपम् ॥ १५ ॥
तैलद्रोण्यां शायितं तं सचिवैस्तु नराधिपम् । हा मृतोऽयमिति ज्ञात्वा स्त्रियस्ताः पर्यदेवयन ॥ १६ ॥
बाहूनुच्छ्रित्य कृपणा नेत्रप्रस्रवणैर्मुखैः । [6]रुदत्यः शोकसंतप्ताः कृपणं पर्यदेवयन् ॥ १७ ॥
हा महाराज रामेण [7]संततं प्रियवादिना । विहीनाः सत्यसंधेन किमर्थं विजहासि नः ॥ १८ ॥
कैकेय्या दुष्टभावाया राघवेण [8]विवर्जिताः । कथं [9]सपत्न्या वत्स्यामः समीपे विधवा वयम् ॥ १९ ॥

---

एव शोकसमाविष्टः सञ्जीवितं प्रजापालनं त्यक्ष्यति पुत्रशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ ११ ॥

गो० टी०–वृद्ध इति । अल्पपुत्रः दुहितृमात्रपुत्रः सोऽपि जनकोऽपि ॥ ११ ॥

१२ ] ति० टी०–दिष्टान्तं मरणम् । शरीरालिङ्गनपूर्वकमग्निप्रवेशे हेतुः––पतिव्रतेति ॥ १२ ॥

रा० टी०–सेति । सा प्राप्तपुत्रपतिवियोगा पतिव्रताहमिदं परिदृश्यमानं शरीरं राजशरीरसंबन्धिशय्यावस्त्रादिकमालिङ्ग्य हुताशनं वह्निलोकं प्रवेक्ष्यामि प्रवेशनानुकूलव्यापारानुकूलेच्छावत्यस्मीत्यर्थः । अत एव दिष्टान्तं कालगतिरहितं पत्यधिष्ठितसाकेतमित्यर्थः, गमिष्यामि संयोगानुकूलव्यापारानुकूलकृतिमती भविष्यामीत्यर्थः । एतेन साकेतलोकस्य मार्गो वह्निलोक इति ध्वनितम् ॥ १२ ॥

गो० टी०–साहमिति । दिष्टान्तं मरणं पतिव्रता । ‘आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता’ इत्युक्तपातिव्रत्यविशिष्टा ॥ १२ ॥

१३ ] ति० टी०–व्यावहारिका व्यवहारे बाह्याभ्यन्तरसकलराज्यकृत्ये नियुक्ता अमात्या व्यपानिन्युः अन्तःपुराध्यक्षस्त्रीद्वारा भर्त्रालिङ्गनाद्विमोच्यान्यतो निन्युरित्यर्थः ॥ १३ ॥

रा० टी०–तामिति । तां राजशय्यां परिष्वज्य विलपन्तीं कौशल्यां व्यावहारिकाः राजकुलोचितव्यवहारे नियुक्ताः जनाः व्यपनिन्युः शय्यातोऽन्यत्र प्रापयामासुः ॥ १३ ॥

गो० टी०–तामिति । व्यावहारिकाः व्यवहारे बाह्याभ्यन्तरसकलराजकृत्ये नियुक्ताः“तत्र नियुक्तः”इति ठक् अमात्या इत्यर्थः, कौसल्यां भर्त्रालिङ्गनाद्व्यपनीय विमोच्य अन्यतोऽपनीयेत्यर्थः, तैलद्रोण्यां तैलपूरितकटाहे जगतीपतिं भूपतिं संनिवेश्य राज्ञोऽनन्तरकर्तव्यानि सर्वाणि कर्माणि दुःखापनोदनादीनि चक्रुः। ‘अपनिन्युः’ इति पाठे व्यावहारिकाः व्यवहारविदो लौकिकाः अपनिन्युरित्येकं वाक्यम् । तैलद्रोण्यामित्यारभ्य वाक्यान्तरम् आदिष्टाः राजकृत्येष्वादिष्टाः अमात्याः कर्माणि प्रजाश्वासनादीनि चक्रुः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०–तैलद्रोणी तैलपूर्णकटाहः आदिष्टाः वसिष्ठादिभिराज्ञप्ता अमात्यास्तस्यां नृपं संवेश्य स्थापयित्वाऽनन्तरं कर्तव्यानि दुःखपरिपालनादीनि कर्माणि चक्रुः॥ १४ ॥

रा० टी०–तैलेति । तदा कौशल्याया अन्यत्र नयनसमये आदिष्टाः वशिष्ठेनाज्ञप्ताः राज्ञो मान्याः राजसत्कृता जनाः तैलद्रोण्यां, तानां चौराणां अयौ प्राणलक्ष्म्यौ द्यन्ति गृह्णन्ति ते तेषां द्वाःस्थानां द्रोणीस्थितिर्यस्यां स्थल्यां तस्यां जगतीपतिं जगत्याः पतिः स्थितो यस्मिंस्तं पर्यङ्कं संवेश्य संस्थाप्य अनन्तरं विघ्नराहितं यथा स्यात्तथा कर्माणि तत्कालोचितकृत्यानि अथ कृत्स्नं यथा भवति तथा चक्रुः ‘ऊर्णा काष्ठाम्बुवाहिन्यां गवां ग्रासभुजि स्थितौ’ इति विश्वः ‘तश्चौरामृतपुच्छेषु’ इति मेदिनी । ‘अः कृष्णः शंकरो ब्रह्मा शक्रः सोमोऽनिलोऽनलः । सूर्यः प्राणो यमः कामो वसन्तः प्रणवः सुख इति मात्रिका ‘लक्ष्मीर्गकार उच्यते’ इत्येकाक्षरः ॥ १४ ॥

१५ ] ति० टी०–पुत्रेण विना संकालनं प्रेतनिर्हारं न कर्तुमीषुः यतः सर्वज्ञास्ततो हेतोस्तैलद्रोण्यां भूपं रक्षन्ति ॥ १५॥

रा० टी०–ननु शय्यारक्षणं किमर्थमित्यत आह–नेति । राज्ञः पुत्रेण विना संकालनं सविधिप्रक्षेपं कर्तुं सर्वज्ञा अपि मन्त्रिणः न ईषुः ततः तस्मात् हेतोः भूमिपं राजपर्यङ्कं रक्षन्ति ॥ १५ ॥

गो० टी०–संस्कारं कुतो न चक्रुरित्यत्राह–न त्विति । सर्वज्ञाः सर्वधर्मज्ञाः अतो न धर्मलोप इति भावः । अनेन गम्यते तैलमिश्रत्वे शवस्य पर्युषितत्वदोषो नास्तीति संकलनं संस्कारम् ॥ १५ ॥

१६ ] ति० टी०–शायितं ज्ञात्वा हा मृतोऽयमिति पर्यदेवयन् ॥ १६ ॥

रा० टी०–तैलेति । तं राजपर्यङ्कं तैलद्रोण्यां प्रतिष्ठितद्वारपरक्षितस्थल्यां सचिवैः शायितं तं राजपर्यङ्कं नराधिपं ज्ञात्वा पर्यङ्के राजा शयान इति निश्चित्येत्यर्थः, अयं राजा अमृतः मृतसदृशः पुत्रवियोगेन मूर्छित इत्यर्थः, हा अतिकष्टमेतदिति ताः राजगमनवृत्तान्तानभिज्ञाः स्त्रियः पर्यदेवयन् ॥१६॥

गो० टी०–तैलद्रोण्यामिति । तैलद्रोण्यां शायितं नृपं ज्ञात्वा तत्र निवेशकाले राजदर्शनाभावात् हा मृतोऽयमिति भूयोऽपि पर्यवारयन्नित्यर्थः ॥ १६ ॥

१७–१९ ] ति० टी०–नेत्राणां प्रस्रवणमश्रुप्रवाहो येषु मुखेषु तैः ॥ १७–१९ ॥

---

१ व्यपनीयेति गो. पाठः । २ अथेति गो. पाठः । ३ मान्या इति रा. पाठः । ४ संकलनमिति गो. पाठः । ५ धर्म्येति गो. पाठः । ६ रुदन्त्य इति गो. रा. पाठः । ७ सततमिति गो. रा. पाठः । ८ वियोजिता इति गो. पाठः । ९ पतिघ्न्येति गो. पाठः ।

स हि नाथः सै चास्माकं तव च प्रभुरात्मवान् । वनं रामो गतः श्रीमान्विहाय नृपतिश्रियम् ॥ २० ॥
त्वया तेन च वीरेण विना व्यसनमोहिताः । कथं वयं निवत्स्यामः कैकेय्या च विदूषिताः ॥ २१ ॥
यया च राजा रामश्च लक्ष्मणश्च महाबलः । सीतया सह संत्यक्ताः सा कमन्यं न हास्यति ॥ २२ ॥
ता बाष्पेण च संवीताः शोकेन विपुलेन च । व्यचेष्टन्त निरानन्दा राघवस्य वरस्त्रियः ॥ २३ ॥
निशा नैक्षत्रहीनेव स्त्रीव भर्तृविवर्जिता । पुरी नाराजतायोध्या हीना राज्ञा महात्मना ॥ २४ ॥
बाष्पपर्याकुलजना हाहाभूतकुलाङ्गना । शून्यचत्वरवेश्मान्ता न बभ्राज यथापुरम् ॥ २५ ॥
गते तु शोकात्त्रिदिवं नराधिपे महीतलस्थासु नृपाङ्गनासु च ।
निवृत्तचारः सहसा गतो रविः प्रवृत्तचारा रजनी ह्युपस्थिता ॥ २६ ॥
ऋते तु पुत्राद्दहनं महीपतेर्नारोचयंस्ते सुहृदः समागताः ।
इतीव तस्मिञ्शयने न्यवेशयन्विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २७ ॥

रा० टी०—कौशल्यादीनां विलापं वर्णयन्नाह—बाहूनिति । नेत्रप्रस्रवणैः नेत्रेभ्यः प्रस्रवः अश्रुप्रच्युतिर्येषु तैर्मुखैरुपलक्षिताः बाहूनुच्छ्रित्य उत्क्षिप्य रुदन्त्यः शोकसंतप्ताः स्त्रियः कृपणं यथा स्यात्तथा पर्यदेवयन्विविधमुच्चारयामासुः ॥ १७ ॥

रा० टी०—परिदेवनाकारमाह—हेत्यादिभिः । रामेण विहीनाः नोऽस्मान् किमर्थं विजहासि ॥ १८ ॥

रा० टी०—कैकेय्या इति । सपत्न्याः कैकेय्याः संबन्धिन्याः दुष्टभावायाः दुष्टो भावश्चिन्तनं यस्यास्तस्याः मन्थरायाः समीपे धवरहिताः वयं कथं वत्स्यामः यदि चायं सपत्नीशब्दः शार्ङ्गरवादिस्तदा सामानाधिकरण्येनैवान्वयः कैकेय्या इत्यस्य केकयीदास्या इत्यर्थः ॥ १९ ॥

गो० टी०—बाहूनिति । नेत्राणां प्रस्रवणं वारिप्रवाहो येषु तथा ॥ १७–२० ॥

२० ] ति० टी०—तव प्रभुस्तव जीवनस्य प्रभुः ॥ २० ॥

रा० टी०—स इति । प्रभुः निखिलसामर्थ्यविशिष्टः अत एव आत्मवानविधेयवान्यो रामः अस्माकं तव च नाथः स रामः नृपतिश्रियं राजलक्ष्मीं विहाय वनं गतः ॥ २० ॥

२१–२२ ] ति० टी०— विदूषिता राज्यगर्वात्तिरस्कृताः ॥ २१ ॥ २२ ॥

रा० टी०—त्वयेति । त्वया तेन रामेण च विना व्यसनमोहिताः व्यसनेन दुःखेन मोहिताः कर्तव्यविषयकविवेकरहिताः अत एव विदूषिताः कार्पण्यादिदोषविशिष्टाः वयं कैकेय्या मन्थरया सह कथं निवत्स्यामः ॥ २१ ॥

रा० टी०—ययेति । यया मन्थरया राजादयः संत्यक्ताः वियोजिताः सा मन्थरा अन्यं भरतादिकं कं न हास्यति वियोजयिष्यति ॥ २२ ॥

गो० टी०—त्वयेति । विदूषिताः राज्यगर्वात् तिरस्कृताः ॥ २१–२४ ॥

२३ ] ति० टी०—राघवस्य दशरथस्य ॥ २३ ॥

रा० टी०—राजस्त्रीणां विलापमुपसंहरन्नाह—ता इति । बाष्पादिना संवीताः संयुक्ता राघवस्य दशरथस्य वरस्त्रियः व्यचेष्टन्त विविधचेष्टामकुर्वत ॥ २३ ॥

२४ ] ति० टी०—न अराजतेति च्छेदः ॥ २४ ॥

रा० टी०—निशेति । नक्षत्रहीना निशेव भर्तृवर्जिता पाणिग्रहीतृरहिता स्त्रीव महात्मना राज्ञा रहिता अयोध्या पुरी न अराजत ॥ २४ ॥

२५ ] ति० टी०—शून्यचत्वरवेश्मान्ता संमार्जनालेपबल्यादिशून्यचत्वराद्यन्ता यथापुरं यथापूर्वम् ॥ २५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—बाष्पेति । बाष्पपर्याकुला बाष्पैर्व्याप्ताः जनाः यस्यां सा, हाहाभूताः कुलाङ्गनाः यस्यां सा, शून्याः संमार्जनादिरहिताः चत्वरवेश्मान्ताः यस्यां सा, यथापुरं न बभ्राज । चत्वरश्चतुष्पथः वेश्मान्तो द्वारम् ॥ २५ ॥

गो० टी०—बाष्पपर्याकुलजनेति । शून्यचत्वरेति संमार्जनानुलेपनबल्यादिशून्यचत्वरादियुक्तेति यावत् यथापुरं यथापूर्वम् ॥ २५ ॥

२६ ] ति० टी०—राज्ञि शोकात्पुत्रशोकात्त्रिदिवं स्वर्गं गते नृपाङ्गनासु च शोकादेव महीतलस्थासु महीतले लुठन्तीषु निवृत्तचारो निवृत्तकिरणप्रचारः प्रवृत्तचारा प्रवृत्ततमःप्रचारा ॥ २६ ॥

रा० टी०—गत इति । नराधिपे दशरथे त्रिदिवं त्रिभिः ब्रह्मादिभिः दीव्यते स्तूयते असौ तं साकेतं गते सति नृपाङ्गनासु महीतलस्थासु सतीषु रविः निवृत्तचारः निवृत्तकिरणप्रचारः सन्गतोऽस्तमिति शेषः, अत एव प्रवृत्तचारा प्रवृत्तः चारः तमःसंचारो यस्यां सा रजनी उपस्थिता प्राप्ता ॥ २६ ॥

गो० टी०—गते त्विति । शोकात् पुत्रशोकात् निवृत्तचारः निवृत्तकिरणप्रचारः गत इति अस्तमिति शेषः । प्रवृत्तचारा प्रवृत्ततमःप्रचारा ॥ २६ ॥

२७ ] ति० टी०—सुहृदो वसिष्ठाद्याः पर्युषितदाहनिषेध-

१ सदेति गो. पाठः । २ व्यवेष्टन्तेति गो. पाठः । ३ चन्द्रविहीनेवेति गो. पाठः । ४ न रोचयन्त इति गो. पाठः ।

गतप्रभा द्यौरिव भास्करं विना व्यपेतनक्षत्रगणेव शर्वरी ।
पुरी बभासे रहिता महात्मना कण्ठास्रकण्ठाकुलमार्गचत्वरा ॥ २८ ॥
नराश्च नार्यश्च समेत्य संघशो विगर्हमाणा भरतस्य मातरम् ।
तदा नगर्यां नरदेवसंक्षये बभूवुरार्ता न च शर्म लेभिरे ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तषष्टितमः सर्गः ।

अपरेऽह्न्यास्थानमागता मार्कण्डेयादयो राज्ञः सत्त्वासत्त्वाभ्यां जनपदस्योत्कर्षापकर्षौ निर्दिश्य राजपुत्रेषु कंचिद्राज्येऽभिषेक्तुं वसिष्ठं प्रार्थयामासुः ।

आक्रन्दिता निरानन्दा सास्रकण्ठजनाविला । अयोध्यायामवतता सा व्यतीयाय शर्वरी ॥ १ ॥
व्यतीतायां तु शर्वर्यामादित्यस्योदये ततः । समेत्य राजकर्तारः सभामीयुर्द्विजातयः ॥ २ ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च कश्यपः । कात्यायनो गौतमश्च जाबालिश्च महायशाः ॥ ३ ॥
एते द्विजाः सहामात्यैः पृथग्वाचमुदीरयन् । वसिष्ठमेवाभिमुखाः श्रेष्ठं राजपुरोहितम् ॥ ४ ॥

---

वचनानि तु विप्रविषयाणीति न विरोधः । तस्मिञ्शयने तैलद्रोण्याम् ॥ २७ ॥

रा० टी०—याचकानां वृत्तान्तं वर्णयन्नाह—ऋते इति । समागताः सुहृदः नृपतेर्दशरथात्पुत्राद्रामाच्च ऋते विना दहनं सर्वेषां संतापं नारोचयन् असहन्नितीव अतो हेतोः अचिन्त्यं चिन्तयितुमशक्यं दर्शनं अवलोकननिश्चयो यस्य तं राजानं विचिन्त्य शयने पर्यङ्कसन्निधौ न्यवेशयन् न्यविशन् ॥ २७ ॥

गो० टी०—ऋते त्विति । समागताः सुहृदः बान्धवाः पुत्रादृते महीपतेर्दहनं न रोचयन्ते । अनेनातिबलपराक्रमयुक्तसत्पुत्रसद्भावेऽप्यस्मिन् काले दैववशादेकोऽप्यसन्निहितः तूष्णीमवस्थानमयुक्तम् अतो येन केनापि प्रकारेण संस्कारः कर्तव्य इति कैश्चिद्यत्नः कृत इति गम्यते । तस्मिन् शयने पूर्वोक्ततैलद्रोण्याम् ॥ २७ ॥

२८–२९ ] ति० टी०—आ कण्ठं धारारूपेण प्रवहद्भिरस्रैरुपलक्षिताः कण्ठा येषां तैराकुला मार्गाश्चत्वराश्च यस्यां सा ॥ २८ ॥ २९ ॥

एकः श्लोकोऽत्रसर्गे कतकसंख्यया भ्रष्ट इति ज्ञायते ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

रा० टी०—गतेति । भास्करं विना गतप्रभा नष्टप्रकाशा द्यौरिव व्यपेताः अन्धकारादिना तिरोहिताः नक्षत्रगणाः यस्यां सा शर्वरी रात्रिरिव महात्मना रामादिना रहिता अत एव आकण्ठं कण्ठमभिव्याप्य वर्तमानानि अस्राणि अश्रूणि येषु ते कण्ठाः येषां तैः, आकुलानि निबिडानि मार्गचत्वराणि यस्याः सा पुरी बभासे न बभासे इत्यर्थः । मगधेष्विवोशीनरेषु यवा इत्यादाविव मत्वर्थलाघः 'नद्याश्रुकण्ठा' इति भूषणपाठः ॥ २८ ॥

रा० टी०—भरतपरिकरवृत्तान्तं वर्णयन्नाह—नरा इति । भरतस्य संबन्धिनो नगर्यां विद्यमानाः ये नरादयस्ते संघशः नरदेवसंक्षये नरदेवशोभनगृहे विद्यमानां भरतस्य मातरं समेत्य प्राप्य विगर्हमाणाः स्वस्वभाग्यं निन्दन्तः सन्तः आर्ता बभूवु अत एव शर्म सुखं न लेभिरे भरतस्येत्युभयान्वयि ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

गो० टी०—गतप्रभेति । व्यपेतनक्षत्रगणा चन्द्रादिसकलतेजोहीना रामादिसकलराजरहितस्योपमा अस्रकण्ठैः कण्ठस्तम्भितबाष्पैः आकुलानि मार्गचत्वराणि यस्याः सा तथोक्ता ॥ २८ ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

---

१ ] ति० टी०—संजाताक्रन्दा अत एव निरानन्दा विद्यमानास्रकण्ठैर्जनैराविला आकुला अवतता दुःखवशादीर्घीभूता ॥१॥

रा० टी०—दिवावृत्तं वर्णयितुमाह—आक्रन्दितेति । आक्रन्दिता आसमन्तात्क्रन्दितं परिदेवनं यस्यामत एव सास्रकण्ठैः अश्रुसहितकण्ठविशिष्टैर्जनैराकुला निबिडा अयोध्यायामवतता अतिविस्तृतात्वेन प्रतीयमाना या शर्वरी रात्रिः सा व्यतीयाय ॥ १ ॥

गो० टी०—अथाराजकदोषवर्णनम्—आक्रन्दितनिरानन्देति । आक्रन्दितेन हेतुना निरानन्दा अवतता दीर्घा दुःखवशादतिदीर्घभूतेत्यर्थः ॥ १ ॥

२–३ ] ति०टी०—राजकर्तारो राज्ञोऽशेषकार्यकर्तारः॥२॥३॥

४ ] ति० टी०—पृथग्वाचं राजकार्यविषये भिन्नभिन्नप्र-

---

१ नचेति गो पाठः । २ आक्रन्दितनिरानन्देति गो. पाठः । ३ आकुलेति गो. पाठः । ४ काश्यप इति गो. रा पाठः ।

अतीता शर्वरी दुःखं या नो वर्षशतोपमा । अस्मिन्पञ्चत्वमापन्ने पुत्रशोकेन पार्थिवे ॥ ५ ॥
स्वर्गस्थश्च महाराजो रामश्चारण्यमाश्रितः । लक्ष्मणश्चापि तेजस्वी रामेणैव गतः सह ॥ ६ ॥
उभौ भरतशत्रुघ्नौ केकयेषु परंतपौ । पुरे राजगृहे रम्ये मातामहनिवेशने ॥ ७ ॥
इक्ष्वाकूणामिहाद्यैव कश्चिद्राजा विधीयताम् । अराजकं हि नो राष्ट्रं विनाशं समवाप्नुयात् ॥ ८ ॥
नाराजके जनपदे विद्युन्माली महास्वनः । अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ९ ॥
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते । नाराजके पितुः पुत्रो भार्या वा वर्तते वशे ॥ १० ॥
अराजके धनं नास्ति नास्ति भार्याप्यराजके । इदमत्याहितं चान्यत्कुतः सत्यमराजके ॥ ११ ॥

स्थाना वाचोऽब्रुवन् । एवं च कार्यसिद्धेरयोगाद्वसिष्ठमेवाभिमुखा बभूवुः ॥ ४ ॥

रा० टी०–व्यतीतायामिति । राजकर्तारः राजोचितकर्मनिर्वाहकाः द्विजातयः समेत्य संघीभूय सभामीयुः प्रापुः ॥२॥

रा० टी०–द्विजातीन्निर्दिशन्नाह—मार्कण्डेय इति द्वाभ्याम्। अग्रे वसिष्ठमेवाभिमुखाः एते मार्कण्डेयादयो द्विजाः अमात्यैः सह पृथक् भिन्नां वाचमुदीरयन्नकथयन् आगमशास्त्रस्यानित्यत्वादाङ्विरहः । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०–व्यतीतायामिति । राजकर्तारः राजाभिषेककार्यकर्तारः ॥ २–४ ॥

५–६ ] ति० टी०–पुत्रशोकेनास्मिन्पार्थिवे पञ्चत्वं मरणमापन्ने सति दुःखं यथा तथा वर्षशतोपमा शर्वर्यतीतेति संबन्धः ॥ ५ ॥ ६ ॥

रा० टी०–तद्वचनान्येवाह–अतीतेति । नोऽस्माकं पार्थिवे पञ्चत्वम् । अप्रकटसाकेतमापन्ने प्राप्ते सति वर्षशतोपमा या एका शर्वरी सा दुःखं यथा स्यात्तथा अतीता ॥ ५ ॥

रा० टी०–स्वर्गेति । महाराजः स्वर्गस्थः अप्रकटसाकेतपुरनिवासी बभूवेति शेषः ॥ ६ ॥

गो० टी०– अतीतेति । अस्मिन्पार्थिवे पुत्रशोकेन पञ्चत्वमापन्ने सति या शर्वरी नः अस्माकं वर्षशतोपमा आसीत् सा शर्वरी दुःखं यथा तथा अतीता ॥ ५ ॥ ६ ॥

७ ] ति० टी०–केकयेषु तदाख्यदेशेषु । अवान्तरभेदापेक्षया बहुवचनमिति कतकः । वस्तुतोऽङ्गा इत्यादिवद्बहुवचनान्त एव जनपदवाचीत्यन्ये । राजगृहे राजगृहाख्ये पुरे॥७॥

रा० टी०–उभाविति । केकयेषु तदभिधदेशेषु राजगृहे तदभिधे पुरे रम्ये मातामहनिवेशने मातामहस्य गृहे भरतशत्रुघ्नौ आसाते इति शेषः ॥ ७ ॥

गो० टी०–उभाविति । राजगृहे राजगृहनामनि पुरे वर्तेते इति शेषः ॥ ७ ॥

८–९ ] ति० टी०–इक्ष्वाकूणामुक्तेक्ष्वाकूणां मध्ये । विपक्षे बाधकमाह–अराजकं हीति । हि यतोऽराजकं नो राष्ट्रं विनाशमवाप्नुयात्, अतः कश्चिद्राजा विधीयताम् । 'राजकं सदि राष्ट्रं नो नाशं नावाप्नुयाद्यथा' इति कतकसंमतः पाठः । नोऽस्माकं राष्ट्रं राजकं राजयुतं सन्नाशं नाप्नुयाद्यथा तथा कश्चिद्राजा विधीयतामित्यन्वयः । हिर्वाक्यालंकारे ॥ ८ ॥ ९ ॥

रा० टी०–इक्ष्वाकूणामिति । इह अस्यामयोध्यायामिक्ष्वाकूणां मध्ये कश्चिद्राजा रक्षकत्वेन राजसदृशः अद्यैव विधीयताम् । तदभावे दोषमाह–अराजकं नियन्तृरहितं राष्ट्रं विनाशं समवाप्नुयात् ॥ ८ ॥

गो० टी०–इक्ष्वाकूणामिति । निर्धारणे षष्ठी रामादीनां चतुर्णां मध्ये इत्यर्थः । अद्यैव राजाऽभिषेचने दोषः अराजकं हीति ॥ ८ ॥

रा० टी०–विनाशे हेतुं वदन्नाह–नेत्यादिभिः । विद्युत एव माला अस्येति महास्वनः अतिस्वनविशिष्टः पर्जन्यो मेघः अराजके दिव्येन वारिणा नाभिवर्षति ॥ ९ ॥

गो० टी०–अराजकत्वस्य विनाशहेतुत्वं प्रपञ्चयति–नाराजक इत्यादिना । विद्युन्मालीत्यादिविशेषणैर्महावर्षो दुर्लभ इति भावः । दिव्येनेत्यनेन शिलावर्षस्तु भविष्यतीति भावः॥९॥

१० ] ति० टी०–बीजमुष्टिर्न प्रकीर्यते बीजानामारोपो न क्रियते फलकाले लुण्टाकशङ्कया । पितुर्वशे पुत्रो भार्या वा पत्युर्वशे न वर्तते अतिक्रमे दण्डयितृभावात् ॥ १० ॥

रा० टी०–नेति । बीजमुष्टिः बीजयुक्तकर्षकबद्धकरः न प्रकीर्यते मुच्यते किंच मुष्टेः बीजं बीजमुष्टिः राजदन्तादित्वान्मुष्टेः परत्वं न प्रकीर्यते उप्यते पुत्रः पितुर्वशे भार्या च पत्युर्वशे न वर्तते, पत्युरिति शेषः ॥ १० ॥

गो० टी०–नेति । बीजमुष्टिः न प्रकीर्यते फललाभनिश्चयाभावादिति भावः । भार्यावशे न वर्तते व्यभिचारे शिक्षकाभावादिति भावः ॥ १० ॥

११ ] ति० टी०–धनाद्यभावश्च परिपालकाभावात् । इदमुक्तरूपमत्याहितं महद्भयमराजके प्रथमं प्राप्नोति । 'अत्याहितं महाभीतिः' इत्यमरः । अन्यत्सत्यं पितापुत्रपतिभार्यारूपप्रधानसत्यादन्यत्क्रयविक्रयादिलक्षणं कुतः ॥ ११ ॥

रा० टी०–अराजके इति । धनं नास्ति भार्यापि नास्ति व्यभिचारनिरतत्वाद्गृहे न तिष्ठतीत्यर्थः । इदमुक्तमत्याहितं महद्भयम् 'अत्याहितं महाभीतिः' इत्यमरः । तर्हि अन्यदेतद्भिन्नमसत्यं सर्वधर्ममूलसत्यलक्षणं कुतः न संभवतीत्यर्थः॥११॥

१ स्वर्गस्त इति गो. पाठः । २ कैकयेष्विति गो. पाठः । ३ न विनाशमवाप्नुयादिति गो. पाठः । ४ नाराजके धनं चास्तीति गो. पाठः ।

नाराजके जनपदे कारयन्ति सभां नराः । उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च ॥ १२ ॥
नाराजके जनपदे यज्ञशीला द्विजातयः । सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः ॥ १३ ॥
नाराजके जनपदे महायज्ञेषु यज्वनः । ब्राह्मणा वसुसंपूर्णा विसृजन्त्याप्तदक्षिणाः ॥ १४ ॥
नाराजके जनपदे प्रभूतनटनर्तकाः । उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः ॥ १५ ॥
नाराजके जनपदे सिद्धार्था व्यवहारिणः । कथाभिरनुरज्यन्ते कथाशीलाः कथाप्रियैः ॥ १६ ॥
नाराजके जनपदे तूद्यानानि समागताः । सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः ॥ १७ ॥
नाराजके जनपदे धनवन्तः सुरक्षिताः । शेरते विवृतद्वाराः कृषिगोरक्षजीविनः ॥ १८ ॥
नाराजके जनपदे वाहनैः शीघ्रवाहिभिः । नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः ॥ १९ ॥

---

गो० टी०—नाराजक इति । धनं नास्ति चोरभयादिति भावः । भार्या नास्ति बन्धुनिग्रहादिति भावः इदं वक्ष्यमाणम् अन्यत् पूर्वोक्तभयात् अन्यत् अत्याहितं महाभीतिरस्ति 'अत्याहितं महाभीतिः' इत्यमरः । तदेवाह- कुत इति । सत्यं क्रयविक्रयादिलक्षणम् ॥ ११ ॥

१२ ] ति० टी०—सभां न कारयन्ति । न्यायविचारायेति शेषः । ' केऽपि यन्ति ' इति पाठान्तरम् । उद्यानानीत्यादौ न यान्तीत्यनुकर्षः । वस्त्राद्यपहारभयात् न कारयन्ति वा भयादेव । पुण्यगृहाणि पुण्यसंपादकगृहाणि विप्राश्रयाणि ॥ १२ ॥

रा० टी०—नेति । सभां न कारयन्ति धर्मविचारकारणीभूता सभा न भवतीत्यर्थः । उद्यानादीनि च न कारयन्ति ॥ १२ ॥

गो० टी०—नेति । सभां न कारयन्ति मनःस्वास्थ्याभावात् उद्यानानि न कारयन्ति छेदनभयात् पुण्यगृहाणि देवतायतनादीनि न कारयन्ति दुर्गनिर्माणभयादिति भावः ॥ १२ ॥

१३ ] ति० टी०—सत्रं यत्र सर्वे ऋत्विजः सर्वे च यजमानाः । नान्वासते नानुतिष्ठन्ति ॥ १३ ॥

रा० टी०—नेति । द्विजातयः यज्ञशीलाः यागसंपादकस्वभाववन्तः अत एव दान्ताः जितेन्द्रियाः संशितव्रताः ब्राह्मणाः सत्राणि महायागान्नान्वासते ॥ १३ ॥

गो० टी०—नेति । ब्रह्म वेदः तदध्येतारो ब्राह्मणाः "तदधीते तद्वेद" इत्यण् सत्राणि महायज्ञान् यत्र सर्वे यजमानाः सर्वे ऋत्विजः नान्वासते नानुतिष्ठन्ति विघ्नभयात् ॥ १३ ॥

१४ ] ति० टी०—वसुसंपूर्णा बहुधनाः । आप्तदक्षिणाः शास्त्रेण यथा प्राप्तदक्षिणा यज्वनो ऋत्विजः प्रति न विसृजन्ति ॥ १४ ॥

रा० टी०—नेति । महायज्ञेषु किंचिद्धेतुकोत्कटेच्छाहेतुकप्रवृत्तमहायागेषु वसुसंपूर्णाः अतिधनवन्तोऽपि ब्राह्मणाः आप्तदक्षिणाः आप्ताः विधिप्राप्ताः शास्त्रोक्ता इत्यर्थः दक्षिणाः कर्मधारयः यज्वनः ऋत्विजः उद्दिश्य न विसृजन्ति ददति ॥ १४ ॥

गो० टी०—नेति । यज्वनः यज्वानः वसुसंपन्ना अपि धनसंपन्ना अपि आप्तदक्षिणाः भूरिदाक्षिणाः न विसृजन्ति न दिशन्ति आढ्यत्वव्यञ्जनेन दण्डभयादिति भावः ॥ १४ ॥

१५ ] ति० टी०—नर्तकः सूत्रधारः । नटाश्च प्रहृष्टा यत्र तादृशा उत्सवा देवाद्युत्सवाः, समाजास्तत्तत्कार्यसिद्ध्यर्थं मिलितजनाः समूहाः, ते उभयेऽपि दृष्टादृष्टशान्तिद्वारा राष्ट्रवर्धना भवन्ति तेन वर्धन्ते ॥ १५ ॥

रा० टी०—नेति । प्रभूताः प्रवृद्धा नटाः अभिनयसमर्थाः नर्तकाः गात्रविक्षेपणकर्तारो येषु ते राष्ट्रवर्धनाः देशवृद्धिकारकाः उत्सवाः देवोद्देश्यकोत्साहाः समाजाः विवाहाद्युत्सवाः न वर्धन्ते न भवन्तीत्यर्थः ॥ १५ ॥

गो० टी०—नेति । नटाः नाट्याभिनयसमर्थाः नर्तकाः नर्तनमात्रसमर्थाः प्रभूताः बहुलाः नटनर्तका येषु ते तथोक्ताः उत्सवाः देवतोत्सवाः समाजाः तीर्थयात्राः एतदुभयाभावे राष्ट्रहानिरित्यभिप्रायेणाह- राष्ट्रवर्धना इति ॥ १५ ॥

१६ ] ति० टी०—व्यवहारिणः कमप्यर्थमुद्दिश्यान्योन्यं विवदमानाः सिद्धार्थाः निर्णीतार्थाः, यद्वा व्यवहारिणः पण्यजीविनः, असिद्धार्था अनिष्पन्नप्रयोजनाः । कथाशीलाः पुराणादिकथाश्रवणशीलाः कथाप्रियैः कथाकथनप्रियैः पौराणिकैरुक्ताभिः कथाभिर्न रज्यन्ते वक्तृश्रोतृणां स्वास्थ्याभावात् ॥ १६ ॥

रा० टी०—नेति । कथाशीलाः भगवद्वार्ताश्रवणस्वभावा अपि व्यवहारिणः स्वजीविकार्थं क्रयविक्रयकर्तारः जनाः असिद्धार्थाः अनिष्पन्नप्रयोजनाः सन्तः कथा भगवद्वार्ताकथनं प्रिया प्रीतिकारिका येषां तैः पौराणिकैः कथिताभिः कथाभिः नानुरज्यन्ते प्रीयन्ते तेन प्रीतिपरमकारणीभूतचित्तस्वास्थ्याभावः सूचितः ॥ १६ ॥

गो० टी०—नेति । व्यवहारिणः कमप्यर्थमुद्दिश्यान्योन्यं विवदमानाः सिद्धार्थाः लब्धप्रयोजनाः न भवन्ति निरूपणनियमनकर्तुरभावादुत्कोचप्रायत्वाच्चेति भावः । यद्वा व्यवहारिणः क्रयविक्रयरूपेण व्यापारेण जीवन्तः, कथाशीलाः इतिहासपुराणादिकथावदनशीलाः, कथाप्रियैः कथासु तत्परैः श्रोतृभिः कथाभिः हेतुभिः नानुरज्यन्ते अनुरक्ता न क्रियन्ते श्रोतृणां स्वास्थ्याभावादिति भावः । यद्वा कथाशीलाः, वावदूकाः कथाभिः वादजल्पवितण्डाभिः कथाप्रियैः सामाजिकैः सह नानुरज्यन्ते न तुष्यन्ति तत्पारितोषिकादिप्रदराजाभावात् ॥ १६ ॥

१७–१९ ] ति० टी०—समागता मिलिताः ॥ १७–१९ ॥

---

१ संपन्ना इति गो. पाठः । २ प्रभूतेति गो. रा. पाठः । ३ अन्विति गो. पाठः । ४ चिति गो. रा. नास्ति । ५ अष्टादशैकोनविंशश्लोकयोः गो. व्यत्यस्तः पाठः । ६ गामिभिरिति गो. रा. पाठः ।

नाराजके जनपदे बद्धघण्टा विषाणिनः । अटन्ति राजमार्गेषु कुञ्जराः षष्टिहायनाः ॥ २० ॥
नाराजके जनपदे शरान्संततमस्यताम् । श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥ २१ ॥
नाराजके जनपदे वणिजो दूरगामिनः । गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥ २२ ॥
नाराजके जनपदे चरत्येकचरो वशी । भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥ २३ ॥
नाराजके जनपदे योगक्षेमः प्रवर्तते । न चाप्यराजके सेना शत्रून्विषहते युधि ॥ २४ ॥
नाराजके जनपदे हृष्टैः परमवाजिभिः । नराः संयान्ति सहसा रथैश्च प्रतिमण्डिताः ॥ २५ ॥
नाराजके जनपदे नराः शास्त्रविशारदाः । संवदन्तोपतिष्ठन्ते वनेषूपवनेषु वा ॥ २६ ॥

रा० टी०—नेति । कुमार्यः समागताः संघीभूताः हेमभूषिताः सत्यः क्रीडितुं विहर्तुमुद्यानानि पुष्पवाटिकाः न यान्ति ॥ १७ ॥

गो० टी०—नेति । समागताः संघीभूताः न यान्ति पुष्पापचयाद्यर्थं सखीभिः सह न यान्ति चोरभयादिति भावः ॥१७॥

रा० टी०—नेति । धनवन्तः कृषिगोरक्षजीविनः वैश्या इत्यर्थः सुरक्षिताः स्वपरिकरैरत्यन्तं रक्षिता अपि विवृतद्वाराः दिवापि अपिहितकपाटवन्तः सन्तः न शेरते ॥ १८ ॥

गो० टी०—नेति । शीघ्रगामिभिर्वाहनैः रथैरित्यर्थः, न निर्यान्ति परिभवशङ्कयेति भावः ॥ १८ ॥

रा० टी०—नेति । शीघ्रगामिभिः वाहनैः रथादिभिः करणैः नारीभिः सहिताः कामिनः नराः अरण्यानि न निर्यान्ति ॥१९॥

गो० टी०—नेति । विवृतद्वाराः न शेरते किंतु बद्धकपाटा एव ॥ १९ ॥

२० ] ति० टी०—विषाणिनः प्रशस्तदन्ताः ॥ २० ॥

रा० टी०—नेति । षष्टिहायनाः षष्टिवर्षमितावस्थावन्तः बद्धघण्टाः विषाणिनः प्रशस्तदन्तविशिष्टाः कुञ्जराः न अटन्ति घण्टाग्रहणदन्तोत्पाटनशङ्कयेति तात्पर्यं तेन चौराणां बाहुल्यं सूचितम् ॥ २० ॥

गो० टी०—नेति । विषाणिनः प्रशस्तदन्ताः षष्टिहायनाः षष्टिवर्षाः ॥ २० ॥

२१–२२ ] ति० टी०—उपासनेऽभ्यासे ॥ २१ ॥ २२ ॥

रा० टी०—नेति । संततं निरन्तरं शरान्बाणान् अस्यतां लक्ष्यमुद्दिश्य त्यजतां वीराणामिष्वस्त्राणामुपासने अभ्यासकाले तलनिर्घोषः युद्धोत्साहजनकज्यासंयुक्तकरतलशब्दः न श्रूयते 'स्यादुपासनमभ्यासः' इत्यमरः ॥ २१ ॥

गो० टी०—नेति । अस्यतां क्षिपताम् उपासने अभ्यासे 'स्यादुपासनमभ्यासः' इत्यमरः । तलनिर्घोषः ज्याकरतलनिर्घोषः ॥ २१ ॥

रा० टी०—नेति । बहुपण्यसमाचिताः बहुपण्यैर्युक्ताः दूरगामिनो वणिजः क्षेमं यथा स्यात्तथा अध्वानं न गच्छन्ति ॥२२॥

गो० टी०—नेति । क्षेमं क्षेमावहं बहुपण्यैः समाचिताः समृद्धाः, यद्वा पण्यानां क्रय्यद्रव्याणां समाचिताः दशभाराः 'आचितो दशभारः स्यात्' इत्यमरः बहवः पण्यसमाचिताः येषां ते तथोक्ताः ॥ २२ ॥

२३–२४ ] ति० टी०—एकोऽसहाय एव चरतीत्येकचरो यतिः वशी जितेन्द्रियः आत्मना मनसा आत्मानं ब्रह्म॥२३॥२४॥

रा० टी०—नेति । एकचरः असहायचारी वशी जितेन्द्रियः यत्र सायं तदेव गृहं निवासो यस्य स मुनिः आत्मना मनसा आत्मानं परमात्मानं भावयन् चिन्तयन्सन्न चरति गच्छति अन्नलाभविषयकसंशयहेतुकचित्तस्वास्थ्याभावादिति भावः॥२३॥

गो० टी०—नेति । एकोऽसहायश्चरतीत्येकचरः वशी जितेन्द्रियः आत्मना अन्तःकरणेन आत्मानं परमात्मानं भावयन् चिन्तयन् यत्र सायंगृहः यस्मिन्प्रदेशे सायंकालो भवति तत्र गृहं निवासो यस्य तथा सन्न चरति अन्नप्रदात्रभावादिति भावः॥२३॥

रा० टी०—नेति । योगक्षेमः योगेन सहितः क्षेमः न प्रवर्तते भवति अलभ्यलाभो योगः लब्धस्य परिपालनं क्षेमः । सेना शत्रून् विषहते पराभावयति ॥ २४ ॥

गो० टी०—नेति । योगक्षेमम् अलब्धलाभो योगः लब्धस्य परिपालनं क्षेमः योगश्च क्षेमश्च योगक्षेमं द्वन्द्वैकवद्भावः । विषहते जयति ॥ २४ ॥

२५ ] ति० टी०—प्रतिमण्डिताः भूषिताः । 'प्रतिमण्डितैः' इति पाठान्तरम् ॥ २५ ॥

रा० टी०—नेति । प्रतिमण्डिताः भूषिताः नराः हृष्टैः परमवाजिभिरुत्कृष्टाश्वैः युक्तैः रथैः न संयान्ति 'प्रतिमण्डितैः' इति पाठान्तरमिति भट्टाः ॥ २५ ॥

गो० टी०—नेति । परिमण्डिताः भूषिताः ॥ २५ ॥

२६ ] ति० टी०—संवदन्त उपतिष्ठन्ते संधिस्स्वार्षः॥२६॥

रा० टी०—नेति । शास्त्रविशारदाः शास्त्रेषु निपुणाः नराः वनेषु जलसमीपेषु उपवनेषु आरामेषु वासं वदन्तः स्वस्वगृहीतपक्षस्थापनपूर्वकपरपक्षं निराकुर्वन्तः सन्तः न वसिष्यन्ते शोभिष्यन्ते ॥ २६ ॥

गो० टी०—नेति । संवदन्तः व्याकुर्वन्तः वनेषु मुनीनामावासभूतवनेषु ॥ २६ ॥

१ सततमिति गो. पाठः । २ क्षेममिति गो. पाठः । ३ परीति गो. पाठः । ४ ऽत्रेति गो. ऽवशिष्यन्त इति रा. पाठः । ५ चेति गो. पाठः ।

नाराजके जनपदे माल्यमोदकदक्षिणाः । देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥ २७ ॥
नाराजके जनपदे चन्दनागुरुरूषिताः । राजपुत्रा विराजन्ते वसन्ते इव शाखिनः ॥ २८ ॥
यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् । अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ २९ ॥
ध्वजो रथस्य प्रज्ञानं धूमो ज्ञानं विभावसोः । तेषां यो नो ध्वजो राजा स देवत्वमितो गतः ॥ ३० ॥
नाराजके जनपदे स्वकं भवति कस्यचित् । मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् ॥ ३१ ॥
ये हि संभिन्नमर्यादा नास्तिकाश्छिन्नसंशयाः । तेऽपि भावाय कल्पन्ते राजदण्डनिपीडिताः ॥ ३२ ॥
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते । तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥ ३३ ॥
राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् । राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ३४ ॥
यमो वैश्रवणः शक्रो वरुणश्च महाबलः । [3]विशिष्यन्ते नरेन्द्रेण वृत्तेन महता ततः ॥ ३५ ॥

२७–२९ ] ति० टी०—कल्प्यन्ते प्रवर्त्यन्ते ॥२७–२९॥

रा० टी०—नेति । नियतैः यतचित्तैर्जनैः माल्यादीनि न कल्प्यन्ते संपाद्यन्ते ॥ २७ ॥

गो० टी०—नेति । कल्प्यन्ते संपाद्यन्ते ॥ २७ ॥

रा० टी०—नेति । चन्दनादिभिः रूषिताः भूषिताः राजपुत्राः वसन्ते शाखिनो वृक्षा इव न विराजन्ते ॥ २८ ॥

गो० टी०—नेति । रूषिताः लिप्ताः ॥ २८ ॥

रा० टी०—यथेति । अराजकं राजरहितं राष्ट्रमुदकादिरहितनद्यादयो यथा तथा भवतीति शेषः ॥ २९ ॥

गो० टी०—यथेति । तथा राष्ट्रमिति न शोभत इति शेषः ॥ २९ ॥

३० ] ति० टी०—प्रज्ञानमनुमापकः । तेषां राज्यकर्तॄणां नोऽस्माकं यो राजा ध्वजोऽस्माद्य राज्यभारप्रतिष्ठाज्ञापकः स इतो देवत्वं गतः एवं चास्मानितः परं केऽपि जना न मंस्यन्त इति भावः ॥ ३० ॥

रा० टी०—ध्वज इति । रथस्य प्रज्ञानमनुमानेन बोधकं ध्वजः विभावसोः वह्नेः ज्ञानमनुमानेन बोधकं धूमः एतेन तेषां प्रसिद्धानां नोऽस्माकं ध्वजो ज्ञापको यो राजा स इतः निर्गत्येति शेषः देवत्वमतिप्रमोदं गतः प्राप्तः ॥ ३० ॥

गो० टी०—ध्वज इति । ध्वजो रथस्येत्यादिदृष्टान्तार्थं वचः प्रज्ञानं ज्ञापकं ज्ञानं लिङ्गं ध्वजः प्रकाशकः इतः अस्माल्लोकाल्लोकस्य देवत्वं गत इत्यर्थः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—स्वकं जीवनमित्यर्थः ॥ ३१ ॥

रा० टी०—नेति । कस्यचित्पुरुषस्य स्वकं स्वकीयं न भवति किंचिदिति शेषः अत एव परस्परं भक्षयन्ति ॥ ३१ ॥

३२ ] ति० टी०—ये संभिन्नमर्यादा उल्लङ्घितस्वजातिवर्णाश्रममर्यादाः अत एव पूर्वं राजदण्डनिपीडिता नास्तिकाः सन्ति तेऽपीदानीं छिन्नसंशया राजदण्डशङ्कारहिताः सन्तो भावाय प्रभुत्वाय कल्पन्ते ॥ ३२ ॥

रा० टी०—य इति । संभिन्नमर्यादाः संभिन्नाः दूरीकृता मर्यादा वैदिकरीतिर्यैस्ते अत एव नास्तिकाः न अस्ति परलोको येषां ते अत एव राजदण्डनिपीडिताः प्राप्तराजदण्डाः ये जनाः ते हि अराजकसमये छिन्नसंशयाः राजदण्डविषयकसंशयरहिताः सन्तः अतिभावाय अतिभावं मर्यादसत्तातिक्रमं प्रापयितुं कल्पन्ते ॥ ३२ ॥

गो० टी०—ये हीति । संभिन्नमर्यादाः उल्लङ्घितस्वस्वजातिवर्णाश्रममर्यादाः अत एव पूर्वं राजदण्डनिपीडिताः ये नास्तिकास्ते इदानीं छिन्नसंशयाः राजदण्डशङ्कारहिताः सन्तः भावाय सद्भावाय प्रभावाय वा कल्पन्ते समस्तदैहिकपीडासमर्था भवन्तीत्यर्थः ॥ ३२ ॥

३३ ] ति० टी०—दृष्टिश्चक्षुर्यथा शरीरस्य हितसाधनेऽहितनिवारणे च नित्यमेव प्रवर्तते तथा राजा राष्ट्रस्य सत्यधर्मयोः प्रभवः प्रवर्तको राजा प्रजानां हितसाधनेऽहितनिवारणे च नित्यमेव प्रवर्तते ॥ ३३ ॥

रा० टी०—यथेति । दृष्टिः स्वावलोकनं शरीरस्य हितप्रवर्तनायेति शेषः, नित्यं प्रवर्तते तथा सत्यधर्मयोः प्रभवः कारणं राजा राष्ट्रस्य हितप्रवर्तनाय प्रवर्तते ॥ ३३ ॥

गो० टी०—यथेति । दृष्टिः शरीरस्य यथा प्रवर्तते हितसाधकत्वेनाहितनिवारकत्वेन च सदैव प्रवर्तते सत्यधर्मयोः प्रभवः कारणं राजापि राष्ट्रस्य तथा प्रवर्तत इत्यर्थः ॥ ३३ ॥

३४ ] ति० टी०—राजा सत्यं च धर्मश्च सत्यधर्मयोः प्रवर्तक इत्यर्थः । कुलवतां क्षेत्रबीजशुद्धिमतां कुलं तत्प्रवर्तकः ॥ ३४ ॥

रा० टी०—राजेति । नृणां सत्यादिकं राजैव ॥ ३४ ॥

गो० टी०—राजेति । कुलवतां क्षेत्रबीजशुद्धिमतां कुलं कुलाचारप्रवर्तकः ॥ ३४ ॥

३५ ] ति० टी०—यमादयो महता वृत्तेन युक्तेन राज्ञा विशिष्यन्तेऽतिशय्यन्ते तिरस्क्रियन्ते यमस्य दण्डमात्रं कुबेरस्य धनदत्वमेवेन्द्रस्य पालनमेव वरुणस्य सदाचारे नियमनमेतद्गुणचतुष्टयवता राज्ञा ते तिरस्क्रियन्त इति भावः ॥ ३५ ॥

१ अगार्विति गो. रा. पाठः । २ नरा इति गो. पाठः । ३ विशेष्यन्ते इति गो. पाठः ।

अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन । राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ ३६ ॥
जीवत्यपि महाराजे तवैव वचनं वयम् । नातिक्रमामहे सर्वे वेलां प्राप्येव सागरः ॥ ३७ ॥
स नः समीक्ष्य द्विजवर्य वृत्तं नृपं विना राष्ट्रमरण्यभूतम् ।
कुमारमिक्ष्वाकुसुतं तथान्यं त्वमेव राजानमिहाभिषेचय ॥ ३८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

## अष्टषष्टितमः सर्गः ।

मार्कण्डेयाद्यनुमतो वसिष्ठो भरतशत्रुघ्नौ प्रापयितुं दूतान् दिदेश । तेषां प्रयाणं केकयनगरे प्रवेशश्च ।

तेषां तद्वचनं श्रुत्वा वसिष्ठः प्रत्युवाच ह । मित्रामात्यजनान्सर्वान्ब्राह्मणांस्तानिदं वचः ॥ १ ॥

रा० टी०—यम इति । महता अतिप्रशंसनीयेन वृत्तेन यमादिचतुष्टयान्यतमनिष्ठधर्मसदृशसर्वधर्माचरणेन उपलक्षितेन नरेन्द्रेण राज्ञा यमादयो विशिष्यन्ते अप्रधानतां प्राप्यन्ते अयं भावः यमे दण्डदानमात्रं धर्मः कुबेरस्य धनदत्वमात्रमिन्द्रस्य रक्षणमात्रम् वरुणस्य सदाचारनियमनमात्रं राजनि तु सर्वं इति तेभ्यो राज्ञः आधिक्यमिति, किंच महता वृत्तेन युक्तेन नरेन्द्रेणैव यमादयो विशिष्यन्ते ऐश्वर्यविशिष्टा भवन्तीत्यर्थः, एतेन महतां राज्ञां धर्मत्यागे देवानां ह्रास एवेति सूचितम् ॥ ३५ ॥

गो० टी०—यम इति । नरेन्द्रेण महता वृत्तेन सर्वप्रकाररक्षणरूपचरित्रेण विशेष्यन्ते अधःक्रियन्ते यकि गुणश्छान्दसः । यमस्य दण्डनमात्रं कुबेरस्य धनदत्वमेव इन्द्रस्य पालनमेव वरुणस्य सदाचारनियमनमेव एतद्गुणचतुष्टययुक्तत्वान्नरेन्द्रेण यमादयो व्यावर्त्यन्त इत्यर्थः, यद्वा यतो महता वृत्तेन युक्तः ततो हेतोः एकैकदिग्वर्तिप्रजारक्षकयमादिभ्यः विशेष्यते अतिशीयते ॥ ३५ ॥

३६ ] ति० टी०—साध्वसाधुनी विभजन्व्यवस्थापयन्राजा चेन्न स्यात्तदाहो सूर्याभावे तम इव तमसीव न किंचन कर्तव्याकर्तव्यं प्रज्ञायेत प्रतीयेत । तम इति प्रथमा सप्तम्यर्थे अकारान्ततमशब्दस्य तमे इति सप्तम्यन्तं वा । 'तमस्त्वपि तमं तथा' इति द्विरूपकोशात् ॥ ३६ ॥

रा० टी०—अहो इति । साध्वसाधुनी कर्मणी विभजन् यथोचितं विभ्रयन् राजा चेद्यदि लोके न भवेत्तर्हि इदं भूतलं तम इव सूर्याभावहेतुकान्धकारप्रचुरमिव स्यादत एव किंचन स्वकर्तव्यादिकं न प्रज्ञायेत तेन विपरीतप्रवृत्तिः स्यादिति सूचितम् ॥ ३६ ॥

गो० टी०—अहो इति । साध्वसाधुनी लोके विभजन् व्यवस्थापयन् राजा न स्याचेत् इदमराजकत्वम् अहो तम इव स्यात् यतः किंचन कर्तव्याकर्तव्यं न प्रज्ञायेत, यद्वा साध्वसाधुनी विभजन् राजा लोके न भवेत् चेत् इदं जगत् किंचन किंचिदपि न प्रज्ञायेत न प्रतीयेत किंतु तम इव स्यात् सूर्याभाव इव तमोरूपमेव स्यात् ॥ ३६ ॥

३७ ] ति० टी०—राजनि जीवत्यपि तव वचनं वयं नातिक्रमाम अत इदानीमपि त्वमेव गतिरिति वसिष्ठं प्रति सर्वेषामुक्तिः ॥ ३७ ॥

रा० टी०—वसिष्ठोद्देश्यकप्रवृत्तं सर्ववचनमाह—जीवतीति । महाराजे दशरथे जीवति अस्मान् पालयत्यपि वयं तव वचनं वेलां प्राप्य सागर इव नैवातिक्रमामहे ॥ ३७ ॥

गो० टी०—जीवतीति । महाराजे जीवत्यपि वयं तव वचनं नातिक्रमामहे इदानीं किमुतेति भावः ॥ ३७ ॥

३८ ] ति० टी०—स त्वं नोऽस्माकं वृत्तं कृत्यं नृपं विना प्रवृत्तमिति शेषः । तादृशं वीक्ष्य राष्ट्रं चेदं तं विनारण्यभूतं समीक्ष्येक्ष्वाकुसुतं भरतं तथान्यं वा कंचिद्राजानमभिषेचय॥३८॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०—स इति । द्विजवर्य हे वसिष्ठ ! स त्वं नोऽस्माकं वृत्तं पैर्वकालिकस्वायत्तवार्तां समीक्ष्य संस्मृत्य नृपं विना अरण्यभूतं राष्ट्रं च समीक्ष्य विचार्य कुमारं कुमारावस्थापन्नमिक्ष्वाकुसुतमन्यं वा त्वमेव राजानमभिषेचय राज्यपालकत्वेन कंचन स्थापयेत्यर्थः ॥ ३८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

गो० टी०—स इति । हे द्विजवर्य वसिष्ठ ! सः त्वं नः अस्माकं वृत्तम् अराजकत्वप्रयुक्तं सर्वं कृत्यं समीक्ष्य नृपं विना राज्यमरण्यभूतं स्यादित्यपि समीक्ष्य इक्ष्वाकुसुतं दशरथतनयम् अभिषिञ्चेति योजना ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

१ ] ति० टी०—मित्रामात्यजनाः सुमन्त्रादयः ब्राह्मणा मार्कण्डेयादयः ॥ १ ॥

१ तत्स्वमिति गो. पाठः । २ वद्यान्यमिति गो. पाठः । ३ अभिषिञ्चेति गो. पाठः । ४ हीति गो. पाठः ।

यदसौ मातुलकुले दत्तराज्यः परं सुखी । भरतो वसति भ्रात्रा शत्रुघ्नेन मुदान्वितः ॥ २ ॥
तच्छीघ्रं जवना दूता गच्छन्तु त्वरितं हयैः । आनेतुं भ्रातरौ वीरौ किं समीक्षामहे वयम् ॥ ३ ॥
गच्छन्त्विति ततः सर्वे वसिष्ठं वाक्यमब्रुवन् । तेषां तद्वचनं श्रुत्वा वसिष्ठो वाक्यमब्रवीत् ॥ ४ ॥
एहि सिद्धार्थ विजय जयन्ताशोकनन्दन । श्रूयतामितिकर्तव्यं सर्वानेव ब्रवीमि वः ॥ ५ ॥
पुरं राजगृहं गत्वा शीघ्रं शीघ्रजवैर्हयैः । त्यक्तशोकैरिदं वाच्यः शासनाद्भरतो मम ॥ ६ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः । त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ७ ॥
मा चास्मै प्रोषितं रामं मा चास्मै पितरं मृतम् । भवन्तः शंसिषुर्गत्वा राघवाणामितः क्षयम् ॥ ८ ॥

---

रा० टी०—वशिष्ठप्रत्युक्तिं वर्णयितुमाह—तेषामिति । तेषां मित्रामात्यसहितब्राह्मणानां वचनं श्रुत्वा मित्रादीनिदं वचः प्रत्युवाच ॥ १ ॥

गो० टी०—तेषामित्यादि । मित्रामात्यगणान् मित्रभूतामात्यगणान् सुमन्त्रादीन् ब्राह्मणान् मार्कण्डेयादीन् ॥ १ ॥

२ ] ति० टी०—यद्यस्माद्राज्ञा कैकेयीवचनाद्दत्तराज्यो भरतो मातुलकुले वसति ॥ २ ॥

३ ] ति० टी०—अतस्तावानेतुं दूता गच्छन्तु वयं किं समीक्षामहे विचारयामहे राज्ञैव भरतराज्यस्य निश्चितत्वादिति भावः ॥ ३ ॥

रा० टी०—तत्प्रतिवचनमेवाह—यदिति । यद्यस्माद्धेतोः राजगृहे तदभिधे पुरे मातुलकुले शत्रुघ्नेन सह मुदान्वितोऽसौ भरतो वसति तत्तस्माद्धेतोः शीघ्रं यथा स्यात्तथा जवनाः शीघ्रगमनकर्तारो दूताः भ्रातरावानेतुं हयैस्त्वरितं गच्छन्तु इदमेवोचितमिति तात्पर्यम् अतः परमुत्कृष्टं वयं किं समीक्षामहे अतः परमुत्कृष्टं नास्त्येवेति तात्पर्यम्। श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—यदित्यादि । राजगृहे राजगृहाख्ये पुरे यद्यस्मात् वसति तत्तस्मात् जवनाः वेगवन्तः दूताः गच्छन्त्विति संबन्धः किं समीक्षामहे किं विचारयामः राज्ञैव भरताय राज्यस्य दत्तत्वादिति भावः ॥ २ ॥ ३ ॥

४ ] ति० टी०—मन्त्रिणो वसिष्ठवाक्यमनुजानन्ति—गच्छन्त्विति ॥ ४ ॥

रा० टी०—गच्छन्त्विति । ततो वशिष्ठवचनश्रवणानन्तरं गच्छन्तु दूता इति शेषः । इति वाक्यं सर्वे सुमन्त्रमार्कण्डेयप्रभृतयः वशिष्ठमब्रुवन् तेषां सुमन्त्रादीनां वचनं श्रुत्वा वशिष्ठः वाक्यमब्रवीत् ॥ ४ ॥

गो० टी०—तथैवामात्या अनुजानन्ति—गच्छन्त्विति ॥ ४ ॥

५ ] ति० टी०—सिद्धार्थादयो मन्त्रिसमाननामानो दूता न मन्त्रिण इत्याहुः । अन्ये तु—मन्त्रिणो दूताश्चेमे इत्याहुः । इतिकर्तव्यं गतैर्युष्माभिरनुष्ठेयकृत्यजातम् ॥ ५ ॥

रा० टी०—वाक्याकारमाह—एहीति । हे सिद्धार्थादयो दूताः! सर्वान्पञ्चसंख्याकान् वो युष्मान् कर्तव्यं ब्रवीमि इति अतः श्रूयतां सिद्धार्थादयो मन्त्रिनामानो दूता न तु मन्त्रिणः नन्दनसाहचर्यादित्येके यदि च सिद्धादिसाहचर्येण नन्दनोऽपि मन्त्री एवेति व्याख्यायते तदा नन्दन इति कस्यचिन्मन्त्रिणो नामान्तरमिति बोध्यम् । मन्त्रिभिर्दूतकर्म कथं क्रियते इति तु न भ्रमितव्यम् अतिनिपुणानां सर्वकर्मस्वधिकारात् ॥ ५ ॥

गो० टी०—एहीति । सिद्धार्थविजयजयन्ताशोका ख्यामन्त्रिसमाननामानो दूताः न तु मन्त्रिणः मन्त्रिव्यतिरिक्तनन्दनशब्दसहपाठात् पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिण इत्युपरि वक्ष्यमाणत्वाच्च इतिकर्तव्यं कार्यकलापम् ॥ ५ ॥

६ ] ति० टी०—शीघ्रजवैरतिवेगैः मम शासनाद्भरतो वाच्य इत्यन्वयः ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—पुरमिति । राजगृहं राजगृहाख्यं पुरं गत्वा त्यक्तशोकैर्भवद्भिर्मम शासनाद्वचनाद्भरतः इदं वाच्यः ॥ ६ ॥

गो० टी०—पुरमिति । त्यक्तशोकैः भवद्भिरिति शेषः । इदं वक्ष्यमाणं वचनं मम शासनात् भरतो वाच्यः ॥ ६ ॥

७ ] ति० टी०—कथं वाच्यस्तदाह—पुरोहित इति । अत्ययमसह्यकालातिक्रमं तदेनात्यायिकम् । अतिक्रमे एतीत्यव्ययम् । कालातिक्रमे एति नश्यतीति वाच्योऽर्थः विनयादित्वाट्ठक् । तादृशं कृत्यमस्ति, अतस्त्वरमाणो निर्याहीति वाच्यमित्यनुकर्षः ॥ ७ ॥

रा० टी०—इममर्थमेवाह—पुरोहित इति । पुरोहितो वशिष्ठः मन्त्रिणश्च त्वरमाणस्त्वं निर्याहि आगच्छ त्वया कृत्यं कर्तव्यम् आत्ययिकमावश्यकमित्यर्थः । इति प्राह प्राहुश्च वचनविपरिणामेनात्राप्यन्वेति । अत्येति कालातिक्रमे नश्यति तदेवात्ययिकं विनयादित्वात्स्वार्थिकष्ठक् ॥ ७ ॥

गो० टी०—पुरोहित इति । मन्त्रिणः प्राहुरिति विपरिणामः । अत्ययः कालातिपातः तं प्राप्तमात्ययिकं "विनयादिभ्यष्ठक्" इति ठक् तादृशं कृत्यमस्ति अतस्त्वरमाणो निर्याहीति वाच्य इत्यनुकर्षः । यद्वा अत्ययः कृच्छ्रं तत्र भवमात्ययिकम् 'अत्ययोऽतिक्रमे कृच्छ्रे' इत्यमरः । कृत्यमस्तीति शेषः ॥ ७ ॥

८ ] ति० टी०—इतः शोकरूपान्मूलात्क्षयं मा शंसिषुर्मा कथयन्तु ॥ ८ ॥

रा० टी०—सिद्धार्थादीनुपदिशन्वशिष्ठ आह—मेति । अस्मै

---

१ पुरे राजगृहे इति गो. रा. पाठः । २ समन्वित इति गो. पाठः । ३ त्वरितैरिति गो. पाठः । ४ इममिति गो. पाठः ।

भर्तुः प्रियार्थं कुलरक्षणार्थं भर्तुश्च वंशस्य परिग्रहार्थम् ।
अहेडमानास्त्वरया स्म दूता रात्र्यां तु ते तत्पुरमेव याताः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

## एकोनसप्ततितमः सर्गः ।

तप्यमानं विमनस्कं भरतमनुलक्ष्य तद्विनोदनायातोद्याख्यायिकाभिः प्रयतमानानां सवयसामप्यन्ते कस्मात्ते वैमनस्यमिति प्रश्ने रात्रावनुभूतदुःस्वप्नप्रकारं दौर्मनस्यहेतुत्वेन भरतः प्रस्तौति ।

यामेव रात्रिं ते दूताः प्रविशन्ति स्म तां पुरीम् । भरतेनापि तां रात्रिं स्वप्नो दृष्टोऽयमप्रियः ॥ १ ॥
व्युष्टामेव तु तां रात्रिं दृष्ट्वा तं स्वप्नमप्रियम् । पुत्रो राजाधिराजस्य सुभृशं पर्यतप्यत ॥ २ ॥
तप्यमानं तमाज्ञाय वयस्याः प्रियवादिनः । आयासं [1]विनयिष्यन्तः सभायां चक्रिरे कथाः॥ ३ ॥
वादयन्ति [2]तदा शान्तिं लासयन्त्यपि चापरे । नाटकान्यपरे [3]स्माहुर्हास्यानि विविधानि च ॥ ४ ॥

सांनिध्येन अञ्जसाशब्देन मानसत्वरोच्यते अञ्जसा आर्जवेनेति वार्थः ॥ २१ ॥

२२ ] ति० टी०—भर्तुरिति । भर्तुर्नियोक्तुर्वसिष्ठस्य प्रियार्थं शीघ्रगमनेन प्रीतिसंपादनार्थं, यद्वा भर्तुर्दशरथस्य प्रियार्थं शीघ्रानीतभरतकृतौर्ध्वदेहिकेन परलोकप्राप्तेः । कुलस्य प्रजाकुलस्य रक्षणार्थम् भर्तुर्दशरथस्य यो वंशो वंशपरम्परागतराज्यं तस्य परिग्रहार्थं भरतेन स्वीकारार्थम् अहेडमाना उपेक्षारहिताः 'हेडृ अनादरे' अत एव त्वरया युक्ता दूता रात्र्यामेव तत्पुरं याताः अत्र कतकोक्तसंख्यारीत्या षट् श्लोकास्त्रुटिताः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

रा० टी०—भर्तुरिति । भर्तुः दशरथादेः प्रियार्थं कुलस्य प्रजासमूहस्य रक्षणार्थं वंशस्य वंशरीतेः परिग्रहार्थं निर्वाहार्थमहेडमानाः अनादररहितास्ते दूताः रात्र्यामेव तत्पुरं याताः प्राप्ताः॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

गो० टी०—भर्तुरिति । भर्तुः दशरथस्य प्रियार्थं शीघ्रानीतभरतकृतौर्ध्वदैहिकादिना दशरथस्य परलोकप्राप्तिहेतुत्वात्, कुलरक्षणार्थं सनाथीकरणेन कुलजातानां संरक्षणार्थं भर्तुर्वंशस्य इक्ष्वाकुवंशस्य परिग्रहार्थं प्रतिष्ठार्थं, यद्वा भर्तुर्वंशो भरतादिः तस्य परिग्रहार्थं प्रतिष्ठार्थं पित्रौर्ध्वदैहिककर्मनिर्वर्तनेन सज्जनपरिग्रहार्थं वा अहेडमानाः हेडृ अनादर इत्यस्माद्धातोः शानच् अनादरमकुर्वाणाः सादरा इति यावत् अत एव त्वरया युक्ता दूताः रात्र्यामेव अस्तमयानन्तरमपि कियत्कालं गत्वा रात्र्यामेव तत्पुरं याताः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

१ ] ति० टी०—यामिति । यामेव रात्रिं प्राप्य दूताः पुरीं प्रविशन्ति स्मेति योजना । अयं वक्ष्यमाणः ॥ १ ॥

रा० टी०—मातुलकुलस्थभरतवृत्तान्तमाह-यामित्यादिभिः । यां रात्रिमुपलभ्य दूताः पुरीं प्रविशन्ति स्म तां रात्रिमुपलभ्य भरतेन अयं वक्ष्यमाणः अप्रियः स्वप्नः दृष्टः ॥ १ ॥

गो० टी०—यामिति । यामेव यस्यामेव सप्तम्यर्थे द्वितीया छान्दसी । तां तस्याम् अयं वक्ष्यमाणः ॥ १ ॥

२ ] ति० टी०—व्युष्टां प्रभातरूपां तां रात्रिं प्राप्याप्रियं स्वप्नं दृष्ट्वा पर्यतप्यतेत्यन्वयः । प्रातःकालिकत्वेन शीघ्रफलता स्वप्नस्य सूचिता ॥ २ ॥

रा० टी०—स्वप्नकालविशेषं बोधयन्नाह—व्युष्टामिति । व्युष्टां व्यतीतप्रायां प्रातरित्यर्थः, रात्रिमुपलभ्य पुत्रो भरतः सुभृशमत्यन्तं पर्यतप्यत ॥ २ ॥

गो० टी०—व्युष्टामिति । व्युष्टां प्रभातायां तस्यामित्यर्थः, प्रभातस्वप्नः सद्यः फलद इति द्योतयितुमिदमुक्तम् ॥ २ ॥

३ ] ति० टी०—आयासं दुःस्वप्नदर्शनजं दुःखं विनयिष्यन्तोऽपनेष्यन्तः ॥ ३ ॥

रा० टी०—तप्यमानमिति । तप्यमानं दुष्टस्वप्नदर्शनजनितखेदवन्तमाज्ञाय आयासं खेदं विनयिष्यन्तः विनेष्यन्तः दूरीकुर्वन्तो वयस्याः सभायां कथाः व्यथापनोदकवार्ताः चक्रिरे परस्परं कथयामासुः ॥ ३ ॥

गो० टी०—तप्यमानमिति । वयस्याः सुहृदः आयासं मनःखेदम् ॥ ३ ॥

४ ] ति० टी०—अन्ये तद्दूरीकुर्वन्तो वीणादि वादयन्ति अपरे शान्तिं तस्य खेदशान्तिमुद्दिश्य लासयन्ति नर्तयन्ति वेश्याः । 'शान्तिं लोलयन्ति' इति पाठः तस्य शान्तिं तूष्णीमवस्थानं लोलयन्ति चालयन्ति श्लोकाद्यर्थप्रश्नव्याजेनेत्यर्थः ।

[1] समाधास्यन्त इति गो. पाठः । [2] हि विनेष्यन्त इति गो. पाठः । [3] तथेति गो. पाठः । [4] प्राहुरिति गो. रा. पाठः ।

स तैर्महात्मा भरतः सखिभिः प्रियवादिभिः । गोष्ठीहास्यानि कुर्वद्भिर्न प्राहृष्यत राघवः ॥ ५ ॥
तमब्रवीत्प्रियसखो भरतं सखिभिर्वृतम् । सुहृद्भिः पर्युपासीनः किं सखे नानुमोदसे ॥ ६ ॥
एवं ब्रुवाणं सुहृदं भरतः प्रत्युवाच ह । शृणु त्वं यन्निमित्तं मे दैन्यमेतदुपागतम् ॥ ७ ॥
स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम् । पतन्तमद्रिशिखरात्कलुषे गोमये ह्रदे ॥ ८ ॥
प्लवमानश्च मे दृष्टः स तस्मिन्गोमये ह्रदे । पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहुः ॥ ९ ॥
ततस्तिलोदनं भुक्त्वा पुनः पुनरधःशिराः । तैलेनाभ्यक्तसर्वाङ्गस्तैलमेवान्वगाहत ॥ १० ॥
स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि । उपरुद्धां च जगतीं तमसेव समावृताम् ॥ ११ ॥
औपवाह्यस्य नागस्य विषाणं शकलीकृतम् । सहसा चापि संशान्ता ज्वलिता जातवेदसः ॥ १२ ॥
अवदीर्णां च पृथिवीं शुष्कांश्च विविधान्द्रुमान् । अहं पश्यामि विध्वस्तान्सधूमांश्चैव पर्वतान् ॥ १३ ॥

अपरे हास्यानि हास्यरसप्रधानानि विविधानि नाटकान्याहुः ॥ ४ ॥

रा० टी०—कथाप्रकारं वर्णयन्नाह—वादयन्तीति । शान्तिं खेदनिवृत्तिमुद्दिश्य वादयन्ति वीणादीति केचिदिति च शेषः अपरे लासयन्ति नृत्यन्ति अपरे हास्यानि हास्यरसोत्पादकानि भाषासंस्कृतमिश्रवचनादीनि प्राहुः ॥ ४ ॥

गो० टी०—वादयन्तीति । शान्तिं भरतस्य दुःखशान्तिमुद्दिश्य वादयन्ति वीणादिकमिति शेषः । लासयन्ति लास्यं कुर्वन्ति लास्यं सुकुमारनृत्तं, नाटकानि संस्कृतप्राकृतपैशाचमागधादिमिश्रगद्यपद्यरूपाणि, हास्यानि हासजनकवाक्यानि ॥४॥

५ ] ति० टी०—गोष्ठीहास्यानि गोष्ठ्युचितानि हास्यानि नर्माणि ॥ ५ ॥

रा० टी०—स इति । गोष्ठीहास्यानि गोष्ठ्युचितहास्यसंपादकवचनोच्चारणानि कुर्वद्भिः प्रियवादिभिः प्रियबोधनशीलैः सखिभिः सहितोऽपि भरतः न प्राहृष्यत ॥ ५ ॥

गो० टी—स तैरिति । गोष्ठीहास्यानि गोष्ठी सभा सभ्यहास्यानीत्यर्थः ॥ ५ ॥

६–७] ति० टी०—प्रियसखः सखिमात्रस्य प्रियत्वाविवादाद्भूयो गतिर्ज्ञेया अत्यन्तप्रिय इति । नानुमोदसे गानादिति शेषः ॥ ६ ॥ ७ ॥

रा० टी०—तमिति । हे सखे! सुहृद्भिः पर्युपासीनस्त्वं किं किमर्थं नानुमोदसे इति सखिभिर्वृतं भरतं प्रियसखः भरतस्य प्रियः सखा अब्रवीत् ॥ ६ ॥

रा० टी०—एवमिति । एवं ब्रुवाणं कथयन्तं सुहृदं प्रत्युवाच । तत्प्रतिवचनमेवाह—यन्निमित्तं यत्कारणकमेतन्मे दैन्यमुपागतं प्राप्तं तत्कारणं शृणु ॥ ७ ॥

गो० टी०—तमिति । प्रियसखः अन्तरङ्गसुहृत् "राजाहस्सखिभ्यष्टच्" इति टच् ॥ ६–८ ॥

८–९ ] ति० टी०—गोमये ह्रदे गोमयपूर्णे ह्रदे ॥ ८॥९॥

रा० टी०—स्वप्न इति । मलिनं म्लानं मुक्तमूर्धजमबद्धकेशं गोमये गोमयप्रचुरे कलुषे ह्रदे अद्रिशिखरात्पतन्तं पित स्वप्नेऽद्राक्षम् ॥ ८ ॥

रा० टी०—प्लवमान इति । तस्मिन्ह्रदे प्लवमानः अ लिना तैलं पिबन्मुहुर्मुहुः हसन्निव स पिता दृष्टः ॥ ९ ॥

गो० टी०—प्लवमान इति । प्लवमानः मण्डूकवत् ॥ ९ ।

१० ] ति० टी०—तिलोदनं तिलमिश्रमोदनम् । अन्वग हतेत्यन्तः प्रथमः स्वप्नः ॥ १० ॥

रा० टी०—तत इति । ततः तैलपानानन्तरं तिलोद तिलमिश्रमोदनं भुक्त्वा अधश्शिराः तैलेन अभ्यक्तानि सव ङ्गानि यस्य स राजा तैलमेवान्वगाहत तैले अगाहत् ॥ १०

गो० टी०—तत इति । तिलमिश्र ओदनः तिलोदनः ॥१०

११ ] ति० टी०—स्वप्नान्तरमाह—स्वप्नेऽपीति । तमस समावृतामेवोपरुद्धां तिरोहितां, यद्वासुररक्षोभिरुपरुद्धाम् ॥११

१२] ति० टी०—औपवाह्यस्य राजवाहनस्य नागस्य दन्तिः विषाणं दन्तः, ज्वलिता अग्नयोऽकस्माच्छान्ता दृष्टाः ॥ १२

१३ ] ति० टी०—अवदीर्णां विदीर्णाम् ॥ १३ ॥

रा० टी०—स्वप्नान्तरमाह—स्वप्न इति । शुष्कं साग भुवि पतितं चन्द्रं च उपरुद्धां राक्षसादिभिः पीडितामत तमसेव समावृतां जगतीं पृथिवीं च औपवाह्यस्य राजवाह योग्यस्य नागस्य हस्तिनः शकलीकृतं खण्डीकृतं विषाणं द च ज्वलिताः पूर्वं प्रज्वलिताः ये जातवेदसो वह्नयस्ते पश्चात् हसा त्वरितं संशान्ताः गतज्वालास्तांश्च अवदीर्णां विदीर्णतां शिष्टां पृथिवीं च विध्वस्तान्पतितान्सधूमान् धूमसहितान्प तांश्च अहं पश्यामि अपश्यम् "वर्तमानसामीप्ये"इति भूते लट् श्लोकत्रयमेकान्वयि'औपवाह्यो राजवाह्यः'इति हलायुधः११–१

गो० टी०—स्वप्नेऽपीति । तमसा समावृतामिव उपरु तिरोहिताम् औपवाह्यस्य राजवाह्यस्य 'औपवाह्यो राजवाह्य इति हलायुधः । नागस्य गजस्य जातवेदसा अग्निना । अवदी र्णामिति । अवतीर्णाम् अधःपतितां पश्यामीति सर्वत्रान्व वर्तमानसामीप्ये वर्तमानवत्प्रयोगः ॥ ११–१३ ॥

१ वादिभिरिति गो. पाठः । २ गोमयह्रदे इति गो. पाठः । ३ एवावगाहतेति गो. पाठः । ४ संशान्तं ज्वलितं जातवेदसमिति गो. पाठ
५ दीर्णामिति गो. पाठः । ६ चापीति गो. पाठः ।

पीठे कार्ष्णायसे चैवं निषण्णं कृष्णवाससम् । प्रहरन्ति स्म राजानं प्रमदाः कृष्णपिङ्गलाः ॥ १४ ॥
त्वरमाणश्च धर्मात्मा रक्तमाल्यानुलेपनः । रथेन खरयुक्तेन प्रयातो दक्षिणामुखः ॥ १५ ॥
प्रहसन्तीव राजानं प्रमदा रक्तवासिनी । प्रकर्षन्ती मया दृष्टा राक्षसी विकृतानना ॥ १६ ॥
एवमेतन्मया दृष्टमिमां रात्रिं भयावहाम् । अहं रामोऽथवा राजा लक्ष्मणो वा मरिष्यति ॥ १७ ॥
नरो यानेन यः स्वप्ने खरयुक्तेन याति हि । अचिरात्तस्य धूम्राग्रं चितायां संप्रदृश्यते ॥ १८ ॥
एतन्निमित्तं दीनोऽहं नं वचः प्रतिपूजये । शुष्यतीव च मे कण्ठो न स्वस्थमिव मे मनः ॥ १९ ॥
न पश्यामि भयस्थानं भयं चैवोपधारये । भ्रष्टश्च स्वरयोगो मे छाया चोपगता मम ॥
जुगुप्स इव चात्मानं नच पश्यामि कारणम् ॥ ॥ २० ॥
इमां चं दुःस्वप्नगतिं निशम्य हि त्वनेकरूपामवितर्कितां पुरा ।
भयं महत्तद्धृदयान्न याति मे विचिन्त्य राजानमचिन्त्यदर्शनम् ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

१४-१५] ति० टी०—कृष्णाश्च पिङ्गलाश्च प्रमदाः॥१४॥१५॥

रा० टी०—प्रथमस्वप्नसमानं स्वप्नान्तरमाह—पीठे इति । कृष्णपिङ्गलाः कृष्णपिङ्गलवर्णविशिष्टाः प्रमदाः कार्ष्णायसे नीललोहनिर्मिते पीठे निषण्णं संस्थितं कृष्णवाससं धृतनीलवस्त्रं राजानं मत्पितरं प्रहरन्ति स्म ॥ १४ ॥

रा० टी०—त्वरमाण इति । रक्तमाल्यानुलेपनः अरुणमालाचन्दनधारी खरयुक्तेन रथेन त्वरमाणः धर्मात्मा राजा दक्षिणाभिमुखः सम्प्रयातः ॥ १५ ॥

गो० टी०—पीठ इति । कृष्णाश्च पिङ्गलाश्च कृष्णपिङ्गलाः ॥ १४—१६ ॥

१६ ] ति० टी०—रक्तवासिनी रक्तवस्त्रा प्रहसन्तीव॥१६॥

रा० टी०—प्रहसन्तीति। रक्तवासिनी धृतरक्तवस्त्रा विकृतानना छिन्ननासिकादिविशिष्टाननविशिष्टा राजानं प्रकर्षन्ती प्रहसन्तीव प्रमदा स्वप्ने मया दृष्टा ॥ १६ ॥

१७ ] ति० टी०—इमां भयावहां रात्रिं प्राप्य एवमेतद्दृष्टम् । अहं मरिष्यामीति विपरिणामः ॥ १७ ॥

रा० टी०—एवमिति । वाम हे सुन्दरसखे! भयावहां भयप्रापिकामिमां रात्रिमुपलभ्य एवमनेन प्रकारेण एतन्मया दृष्टम् । ननु किमेवंदर्शनेनेत्यत आह—मदन्यतमः रिष्यति स्वजनागम्यदेशं प्राप्स्यति गत्यर्थकरिधातोर्लृट् ॥ १७ ॥

गो० टी०—उक्तस्वप्नदर्शनफलमाह—एवमित्यादिना । इमां रात्रिम् अस्यां रात्रौ अहं मरिष्यामीति विपरिणामः कार्यः१७॥

१८ ] ति० टी०—दृष्टदुःस्वप्नफलं निगमयति—नर इत्यादि । धूम्राग्रं धूमशिखा ॥ १८ ॥

रा० टी०—प्राकृतविलक्षणजनविषयकस्वप्नफलमुक्त्वा प्राकृतजनविषयकं फलं वदन्नाह—नर इति । यः प्राकृतो नरः खरयुक्तेन यानेन स्वप्ने याति तस्य जनस्य चितायां धूमाग्रं धूमशिखा अचिरात्संप्रदृश्यते ॥ १८ ॥

गो० टी०—नर इति । धूमाग्रं धूमशिखा ॥ १८ ॥

१९ ] ति० टी०—एतदुक्तं निमित्तं स्वप्नरूपं दृष्ट्वेति शेषः । वचो युष्माकं न प्रतिपूजये । ‘ न प्रतिपेप्रिये ’ इति पाठे युष्माकं वचः प्राति नयेन भृशं प्रीतो भवामीत्यर्थः । यङन्ताल्लडिति कतकः ॥ १९ ॥

रा० टी०—एतदिति । येन अहं दीनः तन्निमित्तमेतदेव अत एव वचः भवद्वचनं न प्रतिपूजये अत एव मे कण्ठः शुष्यत्येव मनः स्वस्थं नैव ॥ १९ ॥

गो०टी०—एतदिति।एतन्निमित्तम् उक्तस्वप्नदर्शनहेतुना१९

२० ] ति० टी०—भयस्थानं भयकारणम् उपधारयेऽवशतो बिभर्मि । छाया कान्तिः अपगता पूर्वरूपं त्यक्तवती मलिनेत्यर्थः । आत्मानं जुगुप्स इव किमर्थं मम जन्मेत्येवमादिरूपेण। कारणं जुगुप्साकारणम् । ‘ जुगुप्सन्निव ’ इति पाठे जुगुप्सन्निव तिष्ठामि तत्कारणं च न पश्यामीत्यर्थः ॥ २० ॥

रा० टी०—नेति । भयस्थानं भयनिमित्तं न पश्यामि भयं तु उपधारये प्राप्नुयामि अत एव मे स्वरयोगः शुक्लस्वरः भ्रष्टः विपरिणतः अत एव छाया कान्तिः अपगता विवर्णतां प्राप्ता२०

गो० टी०—नेति । भयस्थानं भयकारणम् अथ च भयमुपधारये अवशतो बिभेमि छाया कान्तिः ‘छाया त्वनातपे कान्तौ’ इति वैजयन्ती ॥ २० ॥

रा० टी०—जुगुप्सन्निति । आत्मानं भयनिवर्तकयत्नं जुगुप्सनयुक्तत्वेन निन्दन्नेवाहं कारणं भयनिवृत्तिहेतुं न पश्यामि। अर्थं पृथक् ॥ २१ ॥

गो० टी०—जुगुप्सन्निति । जुगुप्सन्निव अस्मीति शेषः । कारणं जुगुप्साकारणम् ॥ २१ ॥

२१ ] ति० टी०—पुरा पूर्वमतर्कितामनेकरूपां दुःस्वप्नगतिं

---

१ एवमिति गो. पाठः । २ हसन्तीति गो. पाठः । ३ धूमाग्रमिति गो. रा. पाठः । ४ तत्र वः इति गो. पाठः । ५ चोपहतेति गो. पाठः । ६ जुगुप्सन्निति गो. रा. पाठः । ७ हीति गो. पाठः । ८ निशाम्य तामनेकेति गो. पाठः । ९ प्राप्नोमीति युक्तं दृश्यते ।

## सप्ततितमः सर्गः ।

दृष्टं स्वप्नं सुहृदः प्रति कथयति भरतेऽयोध्यातः प्राप्ता दूता भरतं प्रणम्य वसिष्ठसंदेशं न्यवेदयन् । तच्छ्रुत्वातूर्णं कृतत्वरो भरतो मातामहादीन्संपृच्छ्यायोध्यां प्रति प्रतस्थे ।

भरते ब्रुवति स्वप्नं दूतास्ते क्लान्तवाहनाः । प्रविश्यासह्यपरिखं रम्यं राजगृहं पुरम् ॥ १ ॥
समागम्य च राज्ञा ते राजपुत्रेण चार्चिताः । राज्ञः पादौ गृहीत्वा च तमूचुर्भरतं वचः ॥ २ ॥
पुरोहितस्त्वां कुशलं प्राह सर्वे च मन्त्रिणः । त्वरमाणश्च निर्याहि कृत्यमात्ययिकं त्वया ॥ ३ ॥
इमानि च महार्हाणि वस्त्राण्याभरणानि च । प्रतिगृह्य विशालाक्ष मातुलस्य च दापय ॥ ४ ॥
अत्र विंशतिकोटयस्तु नृपतेर्मातुलस्य ते । दशकोटयस्तु संपूर्णास्तथैव च नृपात्मज ॥ ५ ॥

निशम्य हि दुःस्वप्नं स्मृत्वा हि स्मृत्वैव चिन्ताया अविषयदर्शनमपि राजानं विचिन्त्य राजदर्शनविषयां चिन्तां प्राप्य महद्भयं मे हृदयान्न यातीत्यर्थः ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनसप्ततितमः सर्गः ॥६९॥

रा० टी०—इमामिति । पुरा पूर्वमवितर्कितामनेकरूपामिमां स्वप्नगतिं निशम्य राजानमविचिन्त्यं निश्चितत्वेन चिन्तनानर्हं दर्शनं यस्य तं विचिन्त्य हृदयान्महद्भयं न याति ॥२२॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

गो० टी०—इमामिति । तामिमां दुःस्वप्नगतिं दुःस्वप्नभेदम् अवितर्कितां पूर्वमविचारिताम् अमोघामिति भावः । पूर्वचिन्ताकृतत्वे हि वैफल्यम् । अचिन्त्यदर्शनम् असंभाव्यदर्शनम् अत्र सर्गे अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति "स्वरैर्वराहैः" इत्यादिश्रुतिरुपबृंहिता स्वप्नश्च पूर्वचिन्तापुरस्कृतो न फलति प्रत्यूषे च फलति सद्यः यामविलम्बात्फलविलम्बः फलं च द्रष्टुः दृष्टस्य तत्संबन्धिनो वा भविष्यतीत्यादिकमुक्तम् ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनसप्ततितमः सर्गः ॥ ६९ ॥

१ ] ति० टी०—असह्या दुःसहाः परिखाः परिखाप्रदेशवर्तिप्राकारयन्त्रसमूहो यस्य तत् । 'असह्यपरिघम्' इति पाठान्तरम् ॥ १ ॥

२ ] ति० टी०—राज्ञा केकयेन राजपुत्रेण युधाजिता समागम्य वसिष्ठादिदत्तपदार्थपुरःसरतया संगमपूर्वं यथोचितं व्यवहारं कृत्वा ताभ्यामर्चिता राज्ञः स्वीयस्य भरतस्य पादौ गृहीत्वा नमस्कृत्य भरतं वच ऊचुः । राज्ञः केकयराजस्यैवेत्यन्ये ॥ २ ॥

रा० टी०—दूतवृत्तान्तं वर्णयन्नाह—भरत इति । भरते एवमनेन प्रकारेण स्वप्नं ब्रुवति सति दूताः असह्यपरिखं शत्रुभिः न सह्या परिखा यस्य तद्राजगृहं राजगृहाख्यं पुरं समागम्य राज्ञा केकयराजेन राजपुत्रेण च अर्चिताः सत्कृताः सन्तः राज्ञः भरतस्य पादौ गृहीत्वा अभिवन्द्य तं भरतमूचुः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—भरत इति । असह्यपरिघं परैरप्रधृष्यपरिघं राज्ञा केकयराजेन राजपुत्रेण युधाजिता अर्चिताः आनीतोपायननिरीक्षणेन संमानिताः राज्ञः भरतस्य । भरतस्य परमकृतत्वात् तमिति निर्देशः ॥ १ ॥ २ ॥

३ ] ति० टी०—मन्त्रिणः प्राहुरिति विपरिणामः आत्ययिकं कालातिक्रमासहं कृत्यमस्तीति शेषः ॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—पुरोहित इति । पुरोहितो वसिष्ठः ॥ ३ ॥

गो० टी०—पुरोहित इति । आत्ययिकं दुष्करम् अत्ययः कृच्छ्रम् 'अत्ययोऽतिक्रमे कृच्छ्रे मरणे दण्डदोषयोः' इति वैजयन्ती । त्वया कृत्यं कर्तव्यम् अतो निर्याहीत्यन्वयः ॥ ३ ॥

४ ] ति० टी०—मातुलस्य च चान्मातामहस्य च ॥ ४ ॥

रा० टी०—इमानीति । महार्हाणि बहुमूल्यकानि वस्त्राणि आभरणानि च प्रतिगृह्य मातुलस्य दापय ॥ ४ ॥

गो० टी०—इमानीति । विशालाक्षेति विभूषणावलोकनजनितविस्मयोत्फुल्लाक्षत्वमाह । मातुलस्य च दापयेति चकारात् प्रथमं मातामहस्य दापय अथ मातुलस्य दापयेत्यर्थः ॥४॥

५ ] ति० टी०—अत्रास्तद्रव्ये विंशतिकोट्यस्तत्संख्याकवस्त्राभरणानि नृपतेर्मातामहस्य तदर्धं मातुलस्य ॥ ५ ॥

रा० टी०—देयव्यक्तीनां संख्यां बोधयन्नाह—अत्रेति । अत्र आह्य देयव्यक्तिषु विंशतिकोट्यः विंशतिकोटिपरिमितव्यक्तयः नृपतेस्त्वन्मातामहस्य प्राप्या इति शेषः दशकोट्यस्तु ते मातुलस्य प्राप्याः ॥ ५ ॥

गो० टी०—अत्रेति । अत्र वस्त्राभरणादिमहार्हवस्तुजाते

१ परिघमिति गो. पाठः । २ तु राज्ञा चेति गो. पाठः । ३ स्थिति गो. पाठः ।

प्रतिगृह्य तु तत्सर्वं स्वनुरक्तः सुहृज्जने । दूतानुवाच भरतः कामैः संप्रतिपूज्य तान् ॥ ६ ॥
कच्चित्से कुशली राजा पिता दशरथो मम । कच्चिदारोग्यता रामे लक्ष्मणे च महात्मनि ॥ ७ ॥
आर्या च धर्मनिरता धर्मज्ञा धर्मवादिनी । अरोगा चापि कौसल्या माता रामस्य धीमतः ॥ ८ ॥
कच्चित्सुमित्रा धर्मज्ञा जननी लक्ष्मणस्य या । शत्रुघ्नस्य च वीरस्य अरोगा चापि मध्यमा ॥ ९ ॥
आत्मकामा सदा चण्डी क्रोधना प्राज्ञमानिनी । अरोगा चापि मे माता कैकेयी किमुवाच ह ॥ १० ॥
एवमुक्तास्तु ते दूता भरतेन महात्मना । ऊचुः संप्रश्रितं वाक्यमिदं तं भरतं तदा ॥ ११ ॥
कुशलास्ते नरव्याघ्र येषां कुशलमिच्छसि । श्रीश्च त्वां वृणुते पद्मा युज्यतां चापि ते रथः ॥ १२ ॥

नृपतेः विंशतिकोट्यः विंशतिकोटिमूल्यानि वस्त्राभरणादीनि मातुलस्य दशकोट्यः दशकोटिमूल्यानि संपूर्णा अन्यूना इत्युभयविशेषणं तथैव तदर्हमेव अन्यथा राजतुल्यतया राजपुत्रदाने तस्य बहुमान एव न भवतीति भावः ॥ ५ ॥

६ ] ति० टी०–सुहृज्जने मातुलादिरूपे प्रदाप्येति शेषः । कामैरभिमतवस्तुजातैः ॥ ६ ॥

रा० टी०–प्रतीति । तद्दूतसमर्पितं सर्वं वस्तु प्रतिगृह्य सुहृज्जने मातुलादिरूपे प्रदाप्येति शेषः । तान्दूतान् संप्रतिपूज्य सम्यक् सत्कृत्य उवाच ॥ ६ ॥

गो० टी०–प्रतिगृह्येति । सुहृज्जने मातुलादौ स्वनुरक्तः प्रदाप्येति शेषः । कामैरभीष्टान्नपानादिभिः ॥ ६ ॥

७–९ ] ति० टी०–अथ क्रमेण कुशलं पृच्छति–राजेत्यादि ॥ ७–९ ॥

रा० टी०–तद्वचनाकारमाह–कच्चिदिति । कच्चिदित्यभीष्टप्रश्ने ॥ ७ ॥

गो० टी०–कच्चिदिति । अरोगता आरोग्यम् 'आरोग्यता' इति पाठे स्वार्थे ष्यञ् ॥ ७ ॥

रा० टी०–आर्येति । धीमतः समाधिकरहितधीविशिष्टस्य ॥ ८ ॥

गो० टी०–आर्येति । आर्या ज्येष्ठमातृत्वेन पूज्या धर्मनिरता धर्मानुष्ठानपरा धर्मज्ञा ज्ञात्वानुष्ठानमिति न्यायेन अनुष्ठानमूलज्ञानयुक्ता धर्ममेव जनेषु पश्यतीति धर्मदर्शिनी गुणग्राहिणी नतु दोषदर्शिनीत्यर्थः अप्यरोगेत्यन्वयः । अपिः प्रश्ने धीमत इत्यनेन पुत्रकृतातिशय उच्यते ॥ ८ ॥

रा० टी०–कच्चिदिति । अरोगा रोगरहिता ॥ ९ ॥

गो० टी०–कच्चिदिति । सेति धर्मशास्त्रस्मरणाविनयः । मध्यमेत्यनेन न तेऽम्बा मध्यमाता तेऽत्यत्र कैकेय्या मध्यमात्वमितरव्यपेक्षया ॥ ९ ॥

१० ] ति० टी०–मातुः स्वभावानुवादपूर्वं तस्या आरोग्यं पृच्छति–आत्मकामेति । आत्मप्रयोजनकामा प्राज्ञमानिनी आत्मानं प्राज्ञां मन्यते सा ॥ १० ॥

रा० टी०–आत्मेति । सदा नित्यं आत्मकामा आत्मनां जीवानां कं सुखममति प्रापयति सा अत एव चण्डी क्रोधना चण्ड्यां हिंसिकायां क्रोधनं कोपो यस्याः ' चण्डी कात्यायनीदेव्यां हिंस्रकोपनयोषितोः' इति मेदिनी । प्राज्ञमानिनी प्राज्ञान् तत्त्वज्ञान् मानयति पूजयति तच्छीला अरोगा नित्यं रोगरहिता कैकेयी किमुवाच कथयामास ॥ १० ॥

गो० टी०–आत्मकामेति । आत्मानं कामयत इति आत्मकामा स्वप्रयोजनपरेत्यर्थः । प्रज्ञैव प्राज्ञा प्राज्ञामात्मानं मन्यत इति प्राज्ञमानिनी मन इति णिनिः "क्यङ्मानिनोश्च" इति पुंवद्भावः चण्डी उग्रा क्रोधना कोपवती मे माता अप्यरोगा कैकेयी किमुवाच स्वबन्धुविषये किमुवाचेत्यर्थः । दुःस्वप्नदर्शनदूतागमनाभ्यां कैकेय्या किंचित्कृतं भवेदित्यूहितवान् भरत इति सूचयत्यात्मकामेत्यादिभिः ॥ १० ॥

११ ] ति० टी०–संप्रश्रितं सविनयं संक्षिप्तं च ॥ ११ ॥

रा० टी०–एवमिति । तदा भरतप्रश्नकाले एवमनेन प्रकारेणोक्ता दूताः संप्रश्रितं विनयसहितमिदं वाक्यमूचुः ॥ ११ ॥

गो० टी०–एवमिति । महात्मना महाबुद्धिना एतेनायोध्यावृत्तान्तोऽनेन ज्ञात इति सूचितं सप्रश्रयं सविनयम् अनेन सर्वात्मना अयोध्यावृत्तान्तगोपनं सूच्यते तदेत्यनेन किंचिद्विलम्बोक्तौ भरतोऽन्यथा मन्येतेति झटित्युत्तरमुक्तमित्युच्यते ११

१२ ] ति० टी०–येषां कुशलमिच्छसि तेषां कुशलमेव । त्वरयाह्वानेन शङ्का न कार्या । पद्मा पद्मवती श्रीस्त्वां वृणुते तथा शोभा त्वयि दृश्यते येन सर्वामङ्गलशङ्काव्यावृत्तिः, अतो यात्रायै रथो युज्यताम् ॥ १२ ॥

रा० टी०–वचनाकारमाह–कुशला इति । येषां कुशलं त्वमिच्छसि ते कुशलाः सन्तीति शेषः । पद्मा पद्मगृहा श्रीर्लक्ष्मीस्त्वां वृणुते आवकाङ्क्षते एतेन भरतस्य नारायणत्वं तत्पत्न्या ऋतुकालश्च सूचितः अतः रथः युज्यतां तेन विशेषव्यवस्था न प्रष्टव्येति व्यञ्जितं तेन तेषामसत्यकथनाद्भीतिः सूचिता ॥ १२ ॥

गो० टी०–कुशला इति । कुशला इति सामान्योक्तिः प्रत्येकोक्त्याः संदेहानुत्पादाय । श्रीः लक्ष्मीः पद्मा पद्महस्ता

१ स्विति गो. पाठः । २ चारोगतेति गो. पाठः । ३ दर्शिनीति गो. पाठः । ४ वापीति रा. पाठः । ५ साऽरोगेति गो. पाठः । ६ सप्रश्रयमिति

भरतश्चापि तान्दूतानेवमुक्तोऽभ्यभाषत । [1]आपृच्छेऽहं महाराजं दूताः संत्वरयन्ति माम् ॥ १३ ॥
एवमुक्त्वा तु तान्दूतान्भरतः पार्थिवात्मजः । दूतैः संचोदितो वाक्यं मातामहमुवाच ह ॥ १४ ॥
राजन्पितुर्गमिष्यामि सकाशं दूतचोदितः । पुनरप्यहमेष्यामि यदा मे त्वं स्मरिष्यसि ॥ १५ ॥
भरतेनैवमुक्तस्तु नृपो मातामहस्तदा । तमुवाच शुभं वाक्यं [2]शिरस्याघ्राय राघवम् ॥ १६ ॥
गच्छ तातानुजाने त्वां कैकेयी सुप्रजास्त्वया । मातरं कुशलं ब्रूयाः पितरं च परंतप ॥ १७ ॥
पुरोहितं च कुशलं ये चान्ये द्विजसत्तमाः । तौ च तात महेष्वासौ भ्रातरौ रामलक्ष्मणौ ॥ १८ ॥
तस्मै हस्त्युत्तमांश्चित्रान्कम्बलानजिनानि च । [3]सत्कृत्य केकयो राजा भरताय ददौ धनम् ॥ १९ ॥
अन्तःपुरेऽतिसंवृद्धान्व्याघ्रवीर्यबलोपमान् । [4]दंष्ट्रायुक्तान्महाकायाञ्शुनश्चोपायनं ददौ ॥ २० ॥
रुक्मनिष्कसहस्रे द्वे षोडशाश्वशतानि च । सत्कृत्य कैकयीपुत्रं केकयो धनमा[5]दिशन् ॥ २१ ॥
[6]तदामात्यानभिप्रेतान्विश्वास्यांश्च गुणान्वितान् । ददावश्वपतिः [7]शीघ्रं भरतायानुयायिनः ॥ २२ ॥

---

अर्थश्चायच् राज्यश्रीरिति हार्दो भावः अमङ्गल्यव्याहृतिर्भरतप्रत्याख्या ॥ १२ ॥

१३ ] ति० टी०—दूता मां संत्वरयन्तीत्युक्त्वा महाराजमापृच्छे गमनाद्यनुज्ञायै इति दूतानभ्यभाषतेत्यन्वयः ॥ १३ ॥

रा० टी०—भरत इति । दूतैरेवमुक्तो भरतः तान्दूतानभ्यभाषत । भाषणाकारमाह—दूताः मां संत्वरयन्ति गन्तुमिति शेषः । इति महाराजं मातामहमापृच्छेयम् ॥ १३ ॥

गो० टी०—भरत इति । एवमुक्तो भरतः दूताः मां संत्वरयन्तीति महाराजमापृच्छ इति तान् दूतानभ्यभाषतेति योजना ॥ १३ ॥

१४] ति० टी०—संचोदितः शीघ्रं गच्छेत्येवं प्रेरितः ॥१४॥

रा० टी०—एवमिति । भरतस्तान्दूतानेवमुक्त्वा दूतैः संचोदितः प्रार्थितः सन्मातामहमुवाच ॥ १४ ॥

गो० टी०—एवमिति । दूतैः संचोदितो भरतस्तान् दूतानेवमुक्त्वा मातामहं वाक्यमुवाच ॥ १४ ॥

१५–१६ ] ति० टी०—मे स्मरिष्यसीति शेषत्वविवक्षायां षष्ठी मामित्यर्थः ॥ १५ ॥ १६ ॥

रा० टी०—वचनाकारमाह—राजन्निति । दूतचोदितोऽहं पितुः सकाशं प्रकाशमानं गृहमित्यर्थः, गमिष्यामि यदा मे स्मरिष्यसि तदा पुनरेष्यामि "अधीगर्थ—" इति षष्ठी ॥ १५ ॥

गो० टी०—राजन्निति । मे मां यदा स्मरिष्यसि यदा आगन्तव्यमिति स्मरिष्यसि तदैष्यामि आगन्तव्यमिति भवत्स्मरणं यदा जानामि तदा आगमिष्यामीत्यर्थः । मे इत्यत्र "अधीगर्थदयेशाम्" इति षष्ठी ॥ १५ ॥

रा० टी०—भरतेनेति । एवमुक्तो मातामहस्तं भरतं शिरसा शिरोदेशेनाघ्राय वाक्यमुवाच ॥ १६ ॥

गो० टी०—भरतेनेत्यादि । रामलक्ष्मणावित्यन्तं स्पष्टम् ॥ १६–१८ ॥

१७ ] ति० टी०—सुप्रजाः शुभप्रजावती ॥ १७ ॥

रा० टी०—वचनाकारमाह—गच्छेति । हे तात ! येन त्वया कैकेयी सुप्रजास्तं त्वामनुजाने आज्ञापयामि अतः गच्छ ॥ १७ ॥

१८ ] ति० टी०—तौ च कुशलं ब्रूया इति संबन्धः ॥१८॥

रा० टी०—पुरोहितमिति । तौ प्रसिद्धौ ॥ १८ ॥

१९ ] ति० टी०—तस्मै भरतायेत्यन्वयः । चित्रान्कम्बलान् चित्राण्यजिनानि मृगाणाम् ॥ १९ ॥

रा० टी०—केकयराजोक्तिं संवर्ण्य तत्कृत्यमाह—तस्मै इति । हस्त्युत्तमानुत्तमहस्तिनः चित्रान्विचित्रान्कम्बलानजिनानि मृगविशेषचर्माणि च धनं स्वर्णपात्रादि च तस्मै भरताय ददौ ॥ १९ ॥

गो० टी०—तस्मा इति । अस्याद्यावित्युक्त्वेत्युपस्कार्यं तस्मै भरतायाभिसत्कृत्य ददौ श्लाघापूर्वं ददावित्यर्थः ॥ १९ ॥

२० ] ति० टी०—अतिसंवृद्धान्यत्नेन वर्धितान् व्याघ्रवीर्यबलोपमांस्तद्रूपमवीर्यबलवतः । 'बलान्वितान्' इति पाठान्तरम् ॥ २० ॥

रा० टी०—अन्तःपुर इति । व्याघ्रवीर्यबलाभ्यामुपमा येषां तान्दंष्ट्रायुक्तान्महाकायान्बृहद्देहाञ्छुनः कुक्कुरांश्च उपायनं ददौ ॥ २० ॥

गो० टी०—अन्तःपुर इति । मातुल इत्यनुषज्यते २१–२९॥

२१ ] ति० टी०—निष्कमुरोभूषणं धनमुक्तरूपम् ॥ २१ ॥

रा० टी०—रुक्मेति । द्वे रुक्मनिष्काणां सहस्रे अश्वशतानि षोडश च धनं केकयीपुत्रं भरतं सत्कृत्यादिशद्ददौ ॥२१॥

गो० टी०—रुक्मनिष्कसहस्रे इति । निष्काः वक्षोभूषणानि 'निष्कोऽस्त्री हेम्नि दीनारे साष्टे कर्षशते पले । वक्षोविभूषणे कर्षे' इति वैजयन्ती । धनम् उक्तरूपम् आदिशत् आदाय गच्छतेति भृत्यानाज्ञापयामास ॥ २० ॥

२२] ति० टी०—अमात्यानाप्तीयान् अश्वपतिः केकयः२२॥

---

१ आपृच्छेऽहमिति रा. पाठः । २ शिरसेति रा. पाठः । ३ अभिसत्कृत्य केकेयो इति गो. पाठः । ४ श्लोकोऽयं चतुर्विंशतितमस्थाने ('स इत्तं' इत्यस्मात्पूर्वे ) गो. पाठे । ५ आदिशदिति गो. रा. पाठः । ६ तथेति गो. पाठः । ७ क्षिप्रमिति गो. पाठः ।

ऐरावतानैन्द्रशिरान्नागान्वै प्रियदर्शनान् । खराञ्शीघ्रान्सुसंयुक्तान्मातुलोऽस्मै धनं ददौ ॥ २३ ॥
स दत्तं केकयेन्द्रेण धनं तन्नाभ्यनन्दत । भरतः केकयीपुत्रो गमनत्वरया तदा ॥ २४ ॥
बभूव ह्यस्य हृदये चिन्ता सुमहती तदा । त्वरया चापि दूतानां स्वप्नस्यापि च दर्शनात् ॥ २५ ॥
स[1] स्ववेश्माभ्य[2]तिक्रम्य नरनागाश्व[3]संकुलम् । प्रपेदे सुमहच्छ्रीमान्राजमार्गमनुत्तमम् ॥ २६ ॥
अभ्यतीत्य ततोऽपश्यदन्तःपुरम[4]नुत्तमम् । ततस्तद्भरतः श्रीमानाविवेशानिवारितः ॥ २७ ॥
स मातामहमापृच्छ्य मातुलं च युधाजितम् । रथमारुह्य भरतः शत्रुघ्नसहितो ययौ ॥ २८ ॥
रथान्मण्डलचक्रांश्च योजयित्वा प[5]रं शतम् । उष्ट्रगोऽश्वखरैर्भृत्या भरतं या[6]न्तमन्वयुः ॥ २९ ॥
बलेन गुप्तो भरतो महात्मा सहार्यकस्यात्मसमैरमात्यैः ।
आदाय शत्रुघ्नमपेतशत्रुर्गृहाद्ययौ सिद्ध इवेन्द्रलोकात् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

रा० टी०—तदेति । अभिप्रेतान्स्वेप्सितान्विश्वास्यान्विश्वासार्हाननुयायिनः अनुगमनशीलानमात्यान्स्वमन्त्रिणः अश्वपतिः केकयराजः भरताय ददौ ॥ २२ ॥

गो० टी०—तथेति । अमा सह प्राणांस्त्यजन्तीत्यमात्यास्तान् अभिप्रेतान् सहायभूतानित्यर्थः। विश्वास्यान् विश्वसनीयान् अश्वपतिः केकयः ॥ २१ ॥

२३–२५ ] ति० टी०—ऐरावतानिरावत्पर्वतभवानैरावतकुलोद्भवान्वा । ऐन्द्रशिरानिन्द्रशिरनामकदेशभवान्नागान्गजान् ॥ २३–२६ ॥

रा० टी०—उपसंहरन्नाह—ऐरावतानिति । ऐरावतानिरावत्पर्वतोद्भवानैरावतकुलोद्भवांश्च ऐन्द्रशिरानिन्द्रशिराभिधदेशोद्भवांश्च नागान्गजान्प्रियदर्शनान्सुसंयुक्ताञ्छिक्षितान्खरानश्वतरांश्च धनं ददौ ॥ २३ ॥

गो० टी०—मातामहकृतसत्कारप्रकारमुक्त्वा मातुलकृतसत्कारप्रकारमाह—ऐरावतानित्यादिना । ऐरावतान् इरावत्पर्वतभवान् ऐन्द्रशिरान् इन्द्रशिराख्यपर्वतभवान् शीघ्रान् वेगवतः सुसंयुक्तान् परिचितान् ॥ २२ ॥

रा० टी०—स इति । गमनत्वरया हेतुना केकयेन्द्रेण दत्तं धनं भरतो नाभ्यनन्दत ॥ २४ ॥

रा० टी०—बभूवेति । स्वप्नस्य दर्शनाद्दूतानां त्वरया च अस्य भरतस्य हृदये सुमहती चिन्ता बभूव ॥ २५ ॥

२६ ] ति० टी०—स इति । स मातामहादिभ्यो लब्धधनो यात्रापरिकरसंनाहनाय स्ववेश्माभिगम्य कृतयात्रापरिकरस्ततोऽभ्यतिक्रम्य निर्गत्य नरादिसंकुलं राजमार्गं प्रपेदे । सुमहती श्रीः सुमहच्छ्रीस्तद्वान् ॥ २६ ॥

रा० टी०—स्वस्वेति । स्वस्ववेश्म स्वकीयत्वेनाभिमतनिखिलगृहाणि अभ्यतिक्रम्य त्यक्त्वा नरनागाश्वसङ्कुलं राजमार्गं श्रीमान्भरतः प्रपेदे प्राप ॥ २६ ॥

गो० टी०—स इति । स्ववेश्म व्यतिक्रम्येत्यनेन स्ववेश्मप्रवेशोऽर्थसिद्धः । तथा च राज्ञा मातुलेन च स्वगृह एव कृतसत्कारो मातामह्यादिदर्शनार्थमन्तःपुरं गतवानिति बोध्यम्, अथवा भरतस्य दुःस्वप्नदर्शनदुःखदूतागमनवृत्तान्तश्रवणेन केकयमातुलौ स्वगृहमेवागताविति द्रष्टव्यं, सुमहच्छ्रीमान् सुमहाश्रीमान् ॥ २६ ॥

२७ ] ति० टी०—अभ्यतीत्य स्वगृहाद्राजगृहपर्यन्तं राजमार्गमतीत्येत्यर्थः ॥ २७ ॥

रा० टी०—अभ्यतीत्येति । ततो राजमार्गादभ्यतीत्यागत्य अन्तःपुरमपश्यत् । ततो दर्शनानन्तरमनिवारितो भरत अन्तःपुरमाविवेश अन्तःपुरमित्युभयान्वयि ॥ २७ ॥

गो० टी०—अभ्यतीत्येति । राजमार्गमिति शेषः ॥ २७ ॥

२८ ] ति० टी०—मातुलं च चेन मातामहीमातुलान्यौ ॥ २८ ॥

रा० टी०—स इति । सः मातामह्याद्यनुज्ञातो भरतः मातामहं मातुलं चापृच्छ्य रथमारुह्य ययौ ॥ २८ ॥

गो० टी०—स इति । मातामहं स्वेनैव सहान्तःपुरमागतं मातुलं च तथाभूतम् ॥ २८ ॥

२९ ] ति० टी०—मण्डलाकाराणि चक्राणि येषां तान् । कतकस्तु—मण्डलाकारतया रथप्रवर्तनसाधकं चक्रं मण्डलचक्रं चतुर्दिक्चक्रमध्यस्थं तद्येषां तान् । काश्यादौ च तथेदानीं प्रसिद्धमित्याह ॥ २९ ॥

रा० टी०—रथानिति । मण्डलचक्रान्मण्डलानि मण्डलाकारसंपादकानि चक्राणि येषां तान्परं भिन्नं शतं रथानुष्ट्रादिभिर्योजयित्वा भरतमन्वयुः ॥ २९ ॥

गो० टी०—रथानिति । मण्डलचक्रान् वर्तुलचक्रयुक्तान् परःशतं शतात्परान् पङ्क्तिविंशतीत्यादिसूत्रे निपातनादेकवचनं, रथानुष्ट्रादिभिः संयोज्य भृत्याः यान्तं भरतमन्वयुः ॥ २९ ॥

३० ] ति० टी०—बलेन स्वीयेन मातुलीयेन च आर्यकस्य मातामहस्य । 'सभार्यकः स्वात्मसमैः' इति पाठान्तरं भार्यासहित इत्यर्थः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

---

१ स्वेति रा. पाठः। २ व्यतीति गो. पाठः। ३ संवृतमिति गो. पाठः। ४ उदारधीरिति गो. पाठः। ५ परःशतमिति गो. पाठः। ६ यातमिति रा. पाठः।

# एकसप्ततितमः सर्गः ।

उत्तीर्णानेकनदनदीको भरतोऽनेकाञ्जनपदानुल्लङ्घ्य यावदयोध्यां प्राप्नोति तावत्तां हतहर्षत्वादिजनप्राया विलोक्यानेकशस्त- त्कारणानि वितर्कयन्सूतं प्रति पृच्छंश्च विमना एव राजगृहं प्रविवेश ।

स प्राङ्मुखो राजगृहादभिनिर्याय वीर्यवान् । ततः सुदामां द्युतिमान्संतीर्यावेक्ष्य तां नदीम् ॥ १ ॥
ह्लादिनीं दूरपारां च प्रत्यक्स्रोतस्तरङ्गिणीम् । शतद्रूमतरच्छ्रीमान्नदीमिक्ष्वाकुनन्दनः ॥ २ ॥
ऐलधाने नदीं तीर्त्वा प्राप्य चापरपर्वतान् । शिलामाकुर्वतीं तीर्त्वा आग्नेयं शल्यकर्षणम् ॥ ३ ॥
सत्यसंधः शुचिर्भूत्वा प्रेक्षमाणः शिलावहाम् । अभ्यगात्स महाशैलान्वनं चैत्ररथं प्रति ॥ ४ ॥

---

रा० टी०—बलेनेति । बलेन मातामहप्रेषितसेनया गुप्तो रक्षितो भरतः शत्रुघ्नमादाय आर्यकस्य मातामहस्य आत्मसमैः अमात्यैः सह इन्द्रलोकात्सिद्ध इव गृहाययौ ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणा- वयोध्याकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

गो० टी०—बलेनेति । महात्मा महाधैर्यो भरतः आर्यकस्य मातामहस्य बलेन गुप्तः आत्मसमैः स्वप्रभावसदृशैः अमात्यैः सह शत्रुघ्नमादाय अपेतशत्रुः निष्कण्टकः सन् इन्द्रलोकात् सिद्धो देवजातिरिव गृहाययौ ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्ततितमः सर्गः ॥७०॥

---

१ ] ति० टी०—सुदामां तदाख्यां नदीम्, इदं मार्गान्तरं चतुरङ्गबलगमनोचितं दूतास्तु शीघ्रं तन्नगरप्राप्तये कान्तारमार्गेण गताः इदं च दूतमार्गोक्तनद्यादीनामिहानुक्तेरन्येषामुक्तेश्च ज्ञायते ॥ १ ॥

२ ] ति० टी०—दूरं पारं परतीरं यस्यास्तां ह्लादिनीं तदाख्यां नदीम् । प्रत्यक्स्रोतस्तरङ्गिणीं पश्चिमप्रवाहां नदीम् ततः शतद्रूं तत्संज्ञिकाम् ॥ २ ॥

रा० टी०—मार्गवृत्तं वर्णयन्नाह—स इत्यादिभिः । स भरतः प्राङ्मुखः सन्राजगृहात्तदभिधपुरान्निर्याय गत्वा सुदामां तदभिधां नदीं संतीर्य अवेक्ष्य रमणीयतत्प्रवाहादीनवलोक्य दूरपारां दूरे पारं परतीरं यस्यास्तामतिविशालामित्यर्थः । ह्लादिनीं तदभिधां प्रत्यक् पश्चिमाभिमुखं स्रोतः प्रवाहो यस्याः सा एव तरङ्गिणी तां नदीं च शतद्रूं तदभिधां च नदीमतरत् । दूरपारेति नद्यन्तरं वा । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—स प्राङ्मुख इत्यादि । अत्र दूता ऋजुदुर्गमार्गेण त्वरितं गिरिव्रजमागताः भरतस्तु चतुरङ्गबलयुक्तत्वात् वक्रमपि महामार्गमाश्रित्य ययौ अतो नदीपर्वतादिभेदकीर्तनमिति बोध्यम् । सुदामां सुदामाख्यां नदीम् अवेक्ष्य तां संतीर्य दूरे पारं परतीरं यस्यास्तां दूरपारां विशालामित्यर्थः, ह्लादिनीं ह्लादिन्याख्यां नदीं संतीर्य शतद्रूं शतद्र्वाख्यां प्रत्यक्स्रोतस्तरङ्गिणीं पश्चिमाभिमुखप्रवाहतरङ्गयुक्तां च नदीमतरत् ॥१॥२॥

३ ] ति० टी०—ऐलधाने तदाख्यग्रामे नदीं तद्ग्रामवर्तिनीम् । 'ऐलधानीम्' इति पाठे तदाख्यामित्यर्थं कतकः । अपरपर्वता जनपदविशेषाः । 'अपरपर्पटान्' इति पाठान्तरम् । शिलां तदाख्यनदीम् । आकुर्वतीनामकं नद्यन्तरमिति कतकः । शिलामासमन्तात्कुर्वतीं शिलाकर्षणस्वभावामित्यर्थ इति तीर्थः । स्वमध्यपतितं वस्तु शिलारूपं कुर्वतीमित्यर्थः । तरणं च तद्वर्तिशिलाप्रायकाष्ठनौकयेत्यन्ये । आग्नेयमाग्नेयदिग्गतं शल्यकर्षणं तदोषध्युपेतं देशम् यत्र च शिलावहा नदीति कतकः आग्नेयं शल्यकर्तनमिति ग्रामद्वयम्, तन्मध्ये शिलावहा नदीति तीर्थः ॥ ३ ॥

४ ] ति० टी०—महाशैलानतीत्य चैत्ररथं वनमभ्यगात् । चैत्ररथं यातुं महाशैलानत्यगादिति पाठान्तरेऽर्थः ॥ ४ ॥

रा० टी०—ऐलधान इति । ऐलधाने ऐलधानाभिधनगरे विद्यमानां नदीं तीर्त्वा अपरपर्पटान् पर्पटाः औषधिविशेषाः सन्ति येषु ते पर्पटाः ग्रामविशेषाः अपरे पूर्वे एव पर्पटाः अपरपर्पटाः तान्पूर्वदेशवर्तिपर्पटाभिधौषधिविशिष्टग्रामविशेषानित्यर्थः । प्राप्य शिलां पाषाणमाकुर्वती स्वमध्यपतितवस्तुजातेन रचयन्तीं नदीविशेषं तीर्त्वाग्नेयमग्निदिशि भवं शल्यकर्षणं तदोषधियुक्तदेशमाग्नेयं शल्यकर्षणमिति ग्रामद्वयं वा प्रेक्षमाणः सन् शिलावहां शिलामपि वाहयति सा ताम् अतिवेगवन्नदीविशेषमित्यर्थः अभ्यगात् । व्याख्याद्वयं कतकतीर्थयोः प्रसिद्धम् । अनन्तरं शुचिर्भूत्वा तत्र स्नात्वेत्यर्थः । महाशैलान्पूजनीयपर्वतान् चैत्ररथं वनं च अभ्यगात् । अभ्यगादित्यनुकृष्यते यदि तु शिलावहामित्यस्यापि प्रेक्षणकर्मत्वं तदा पर्वतवनयोरेवाभिगमनकर्मत्वं पूर्वार्थे प्रतिरनन्तरार्थः । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—एलाधान इति । एलानामेलकानाम् आधानमुत्पत्तिस्थानं तद्रूपादेलाधानाख्ये नगरे नदीं पूर्वोक्तां शतद्रूं तीर्त्वेत्यनुवादः । अपरपर्पटान् पर्पटानामदूरभवो ग्रामः पर्पटाः प-

---

१ राघव इति गो. पाठः । २ ह्रादिनीमिति गो. रा. पाठः । ३ एलाधाने इति गो. पाठः । ४ पर्पटानिति गो. रा. पाठः । ५ ह्यासेयमिति रा. पाठः । ६ कर्तनमिति गो. पाठः । ७ श्रीमानिति गो. रा. पाठः ।

सरस्वतीं च गङ्गां च युग्मेन प्रतिपद्य च । उत्तरान्वीरमत्स्यानां भारुण्डं प्राविशद्वनम् ॥ ५ ॥
वेगिनीं च कुलिङ्गाख्यां ह्लादिनीं पर्वतावृताम् । यमुनां प्राप्य संतीर्णो बलमाश्वासयत्तदा ॥ ६ ॥
शीतीकृत्वा तु गात्राणि क्लान्तानाश्वास्य वाजिनः । तत्र स्नात्वा च पीत्वा च प्रायादादाय चोदकम् ॥ ७ ॥
राजपुत्रो महारण्यमनभीक्ष्णोपसेवितम् । भद्रो भद्रेण यानेन मारुतः खमिवात्यगात् ॥ ८ ॥
भागीरथीं दुष्प्रतरां सोऽंशुधाने महानदीम् । उपायाद्राघवस्तूर्णं प्राग्वटे विश्रुते पुरे ॥ ९ ॥
स गङ्गां प्राग्वटे तीर्त्वा समायात्कुटिकोष्टिकाम् । सबलस्तां स तीर्त्वाथ समगाद्धर्मवर्धनम् ॥ १० ॥

पंटाः ओषधिविशेषाः अदूरभवश्चेति प्रासस्याणो "वरणादिभ्यश्च" इति लुप् लुपि युक्तव्यक्तिवचनता पूर्वपर्पटाः अपरपर्पटाश्चेति ग्रामद्वयमस्ति तत्रापरपर्पटान् विश्रान्त्यर्थं प्राप्य शिलामाकुर्वतीं शिलामासमन्तात्कुर्वतीं शिलाकर्षणस्वभावामत एव शिलाव-हामित्यन्वर्थसंज्ञां नदीं तीर्त्वा तस्या आग्नेय्यां दिशि भवमाग्नेयं शल्यं हृदयशल्यं दुःखं कर्तयति छेदयतीति शल्यकर्तनं नाम नगरं प्रेक्षमाणः सन् अत्ययात्।सत्यसंधः शुचिरित्याभ्यां तत्रस्य-जनेभ्य ईतिवारणं [ भीतिवारणं ] प्रतिज्ञाय तथैव कृतवा-नित्युच्यते । चैत्ररथं चैत्ररथतुल्यत्वात्तदाख्यं वनं प्रति उदिश्य महाशैलानत्ययात् तद्दर्शनकुतूहलेन महापर्वतानत्यगा-दित्यर्थः ॥ ३ ॥ ४ ॥

५ ] ति० टी०–सरस्वतीम् इयमत्र पश्चिमप्रवाहा, गङ्गाप-देनात्र सुचक्षुसीताद्यन्यतमाः पश्चिमप्रवाहा ग्राह्याः, एतास्तिस्रो गङ्गाप्रवाहा एवेति पुराणप्रसिद्धम् । तां युग्मेन संगमेन प्रतिपद्य प्राप्य वीरमत्स्यानां देशानामुत्तरान्देशान्प्राप्य भारुण्डाख्यं वनं प्राविशत् । 'उत्तरम्' इति पाठे वनविशे-षणं तत् ॥ ५ ॥

रा० टी०–सरस्वतीमिति । युग्मेन सङ्गमत्वेन रूपेण विद्यमानां सरस्वतीं तदभिधपश्चिमवाहिनीं नदीविशेषं, गङ्गां तदभिधपश्चिमवाहिनीं नदीविशेषं प्रतिपद्य तत्सङ्गमं प्राप्येत्यर्थः। वीरमत्स्यानां देशानां उत्तरानुत्तरभागांश्च प्रतिपद्य भारुण्डं तन्नामकं वनं प्राविशत् । प्रतिपद्येत्युभयान्वयि । 'उत्तरम्' इति पाठे वनविशेषणमिति भट्टाः। अस्मिन्पक्षे प्रतिपद्येति नावर्तते ५॥

गो० टी०–सरस्वतीमिति । सरस्वतीं तदाख्यां नदीं गङ्गां गङ्गाख्यां कांचिन्नदीं पश्चिमसमुद्रगामिनीं गङ्गास्रोतोभेदं वा युग्मेन संगमेन प्रत्यपद्यत ययौ, यद्वा युग्मेन द्वन्द्वतया पार्श्वद्वये प्रवहन्तीमिति शेषः । वीरमत्स्यानां वीरमत्स्याख्यदे-शानाम् उत्तरं भारुण्डं भारुण्डाख्यं वनं प्राविशत् ॥ ५ ॥

६ ] ति० टी०–ततो वेगिनीत्वादिविशेषवतीं कुलिङ्गा-ख्यां नदीं संतीर्णो यमुनां प्राप्य बलमाश्वासयत् ॥ ६ ॥

रा० टी०–वेगिनीमिति । वेगिनीमतिवेगविशिष्टां ह्ला-दिनीं सेवकजनप्रदां पर्वतैरावृतां कुलिङ्गाख्यां नदीं यमुनां च प्राप्य सन्तीर्णो भरतः बलं सेनामाश्वासयत् व्यश्रमयत्, कुलि-ङ्गाख्यां तीर्णो भरतः यमुनां प्राप्याश्वासयदित्यर्थो वा ॥ ६ ॥

गो० टी०–वेगिनीमिति । वेगिनीं वेगयुक्तां ह्लादिनीं संतोषकारिणीं पर्वतैरावृतां कुलिङ्गाख्यां नदीं यमुनां प्राप्य संतीर्णः यमुनासमीपे संतीर्ण इत्यर्थः । अन्यत्रातिवेगत्वा-दन्यत्र पर्वतावृतत्वाच्चेति भावः । आतपखिन्नं बलं मध्याह्ने आश्वासयत् ॥ ६ ॥

७ ] ति० टी०–गात्राणि वाजिनाम् शीतीकृत्वा स्नप-नादिना । आश्वास्य छायायां घासादिदानेन । उदकमादाय तीर्थबुद्ध्या ॥ ७ ॥

रा० टी०–आश्वासनाकारमाह–शीतीति । गात्राणि अश्वशरीराणि शीतीकृत्वा स्नापनादिना तदूष्माणं निवर्त्ये-त्यर्थः।क्लान्तान् श्रान्तान्वाजिनः आश्वास्य घासादिदानेन संतोष्य तत्र स्नात्वा उदकमादाय तीर्थबुद्ध्या गन्तव्यप्रदेशे जलाभाव-बुद्ध्या वा गृहीत्वा अनभीक्ष्णोपसेवितं न अभीक्ष्णं वारंवार-मुपसेवितं जनकर्तृकोपसेवा यस्य तन्महारण्यं भद्रः नित्यं कल्याणयुक्तो भरतः भद्रेण कल्याणयुक्तेन यानेन मारुतो वायुः खमाकाशमिव अभ्यगात् । श्लोकद्वयमेकान्वयि ॥ ७॥ ८ ॥

गो० टी०–आश्वासनप्रकारमाह–शीतीकृत्येति । तत्र कुलिङ्गायमुनासंभेदे दूरगमनेन क्लान्तान् वाजिनः कंचित्कालं छायास्वाश्वास्य तेषां गात्राणि शीतीकृत्य आर्द्रपृष्ठानि कृत्वा स्वयं स्नात्वा उदकं च पीत्वा उत्तरत्र गन्तव्यदेशस्य निर्जल-देशत्वात्तत्र पानार्थमुदकमादाय च प्रायात् ॥ ७ ॥

८ ] ति० टी०–अनभीक्ष्णोपसेवितं बहुधा जनैरनुपसे-वितम्, भद्रेण प्रशस्तेन रथेन भद्रजातीयेन गजेन वा ॥ ८ ॥

गो० टी०–राजपुत्र इति । राजपुत्रत्वेन भद्रः मङ्गलाचा-रयुक्तः अनभीक्ष्णोपसेवितम् अत्यन्तं जनैरनुपसेवितं महा-रण्यत्वादप्रहतमित्यर्थः, महारण्यं दुर्गमं वनं भद्रेण भद्रगजरू-पेण यानेन अरण्यसंचारनिपुणो भद्रजातीयः मारुतः खमिवा-त्ययात् अतिवेगेनातिक्रान्तवान् भूमौ हि मारुतः पर्वतादिना मन्दीभवति ॥ ८ ॥

९-१० ] ति० टी०–अंशुधाने ग्रामे महानदीं गङ्गां दुष्प्रतरां ज्ञात्वा प्राग्वटे पुरे आगत्य तत्र तां तीर्त्वा कुटि-कोष्ठिकामायत्तां तीर्त्वा धर्मवर्धनं ग्राममगात् ॥ ९ ॥ १० ॥

रा० टी०–भागीरथीमिति । स भरतः अंशुधाने अंशु-

१ प्रत्यपद्यतेति गो. पाठः । २ उत्तरामिति गो. रा. पाठः । ३ ह्लादिनीमिति गो. रा. पाठः । ४ अत्ययादिति गो. अभ्ययादिति रा. पाठः । ५ दुष्प्रतरामंशुधाने इति गो. पाठः । ६ कोष्ठिकामिति गो. पाठः । ७ समपद्यदिति गो. पाठः ।

तोरणं दक्षिणार्धेन जम्बूप्रस्थं समागमत्[1] । वरूथं च ययौ रम्यं ग्रामं दशरथात्मजः ॥ ११ ॥
तत्र रम्ये वने वासं कृत्वासौ प्राङ्मुखो ययौ । उद्यानमुज्जिहानायाः प्रियका यत्र पादपाः ॥ १२ ॥
स[2] तांस्तु प्रियकान्प्राप्य शीघ्रानास्थाय वाजिनः । अनुज्ञाप्याथ भरतो वाहिनीं त्वरितो ययौ ॥ १३ ॥
वासं कृत्वा सर्वतीर्थे तीर्त्वा चोत्तरगां[3] नदीम् । अन्या नदीश्च विविधैः[4] पार्वतीयैस्तुरंगमैः ॥ १४ ॥
हस्तिपृष्ठकमासाद्य कुटिकामभ्यवर्तत । ततार च नरव्याघ्रो लौहित्ये च[5] कपीवतीम् ॥ १५ ॥
एकसाले स्थाणुमतीं विनते गोमतीं नदीम् । कलिङ्गनगरे चापि प्राप्य सालवनं तदा ॥ १६ ॥

धानग्रामसमीपे भागीरथीं दुष्प्रतरां ज्ञात्वेति शेषः । विश्रुते प्रसिद्धे प्राग्वटे तदभिधे पुरे उपायात्प्राप्नोत् ॥ ९ ॥

गो० टी०—भागीरथीमिति । अंशुधाने नगरे दुष्प्रतरां भागीरथीं विश्रुते तरणस्थलत्वेन प्रसिद्धे प्राग्वटे पुरे उपायात् आगच्छत् तत्तरणार्थमिति शेषः ॥ ९ ॥

रा० टी०—स इति । प्राग्वटे तदभिधग्रामसमीपे गङ्गां तीर्त्वा कुटिकोष्टिकां तदभिधां नदीं समायात्प्राप्नोत् । सबलः सेनासहितो भरतः तां कुटिकोष्टिकां तीर्त्वा धर्मवर्धनं तदभिधग्रामं समगात्प्राप्नोत् ॥ १० ॥

गो० टी०—स इति । सबलः स भरतः प्राग्वटे तत्समीपे गङ्गां तीर्त्वा कुटिकोष्टिकां नदीं समायात् । स तां तीर्त्वा धर्मवर्धनं ग्रामं समायात् प्राप ॥ १० ॥

११ ] ति० टी०—तोरणं दक्षिणार्धेन तोरणग्रामस्य दक्षिणभागेन जम्बूप्रस्थाख्यं ग्राममागतः वरूथं तदाख्यम् ॥ ११ ॥

रा० टी०—तोरणमिति । दक्षिणार्धेन तोरणाभिधग्रामस्य दक्षिणार्धभागेन जम्बूप्रस्थं तदभिधग्रामं समागमत् । अनन्तरं वरूथं वरूथाख्यं ग्रामं ययौ ॥ ११ ॥

गो० टी०—तोरणमिति । तोरणं दक्षिणार्धेन तोरणग्रामस्य दक्षिणभागेन जम्बूप्रस्थं ग्रामम् उपागमत्, ततो वरूथाख्यं ग्रामं ययौ ॥ ११ ॥

१२ ] ति० टी०—उज्जिहानायास्तन्नामकनगर्याः प्रियकास्तन्नामानो वृक्षाः ॥ १२ ॥

रा० टी०—तत्रेति । तत्र वरूथग्रामसमीपे वने वासं कृत्वा प्राङ्मुखः सन् यत्र प्रियकाः अतिप्रियाः प्रियकनामानो वा पादपाः तदुज्जिहानायाः तदभिधनगर्याः उद्यानं ययौ ॥ १२ ॥

गो० टी०—तत्रेति । तत्र तत्समीपे रम्ये वने वासं रात्रिवासं कृत्वा प्रभाते प्राङ्मुखः सन् उज्जिहानायाः नगर्याः उद्यानं ययौ यत्र उद्याने प्रियकाः बन्धूकाः कदम्बा वा सन्ति ॥ १२ ॥

१३ ] ति० टी०—'सालांस्तु प्रियकान्' इति पाठे सालशब्दो वृक्षपर्यायः । 'स तांस्तु' इति पाठे स भरत इत्यर्थः । शीघ्रान्वाजिन आस्थाय रथे संयोज्यानुज्ञाप्य मया शीघ्रं गम्यते भवद्भिर्मन्दमागन्तव्यमित्येवम् उज्जिहानाया अर्वाक्स्वदेशत्वेन भयाभावात् ॥ १३ ॥

रा० टी०—स इति । स भरतः तान्प्रियकान्प्राप्य शीघ्राञ्छीघ्रगमनशीलान् वाजिनोऽश्वानास्थाय वाहिनीं सेनामनुज्ञाप्य भवद्भिः शनैरागन्तव्यमित्युक्त्वा त्वरितो ययौ एतेन तद्देशस्य निर्भयत्वं सूचितम् । 'सालांस्तु प्रियकान्' इति पाठे सालशब्दो वृक्षपर्याय इति भट्टाः ॥ १३ ॥

गो० टी०—सालानिति । सालान् वृक्षान् 'अनोकहः कुटः सालः' इत्यमरः । पूर्वोक्तवनस्थान् प्रियकवृक्षान् प्राप्य शीघ्रान् वाजिनः आस्थाय रथे बद्ध्वा वाहिनीमनुज्ञाप्य त्वरितो ययौ उज्जिहानायाः परं स्वदेशत्वान्निर्भयं मन्दमागम्यतामिति सेनामनुज्ञाप्य स्वयं त्वरितो ययौ ॥ १३ ॥

१४ ] ति० टी०—सर्वतीर्थे तदाख्यग्रामे पार्वतीयैः पर्वतोद्भवैः स्वार्थिकाणन्तमित्याहुः ॥ १४ ॥

१५–१६ ] ति० टी०—हस्तिपृष्ठकं ग्रामः कुटिका नदी लौहित्ये ग्रामे कपीवतीं नदीम् । 'हस्तिपृष्ठ—' इति, 'एकसाले' इति श्लोकद्वयं प्रक्षिप्तमिति कतकः ॥ १५ ॥ १६ ॥

रा० टी०—वासमिति । सर्वतीर्थे तदभिधग्रामविशेषे वासमेकरात्रिं निवासं कृत्वा पार्वतीयैः पर्वतभवैस्तुरङ्गमैरश्वैः उत्तानिकां तदभिधां नदीमन्याश्च नदीस्तीर्त्वा हस्तिपृष्ठकं तदभिधग्राममासाद्य प्राप्य कुटिकां तदभिधनदीमत्यवर्तत ततार, लौहित्ये तदभिधनगरसमीपे कपीवतीं तदभिधनदीं च ततार । श्लोकद्वयमेकान्वयि पार्वतीयशब्दः स्वार्थाणन्तः ॥ १४ ॥ १५ ॥

गो० टी०—वासमिति । सर्वतीर्थे ग्रामे वासम् एकरात्रिवासं कृत्वा । पाठभेदः सर्वतीर्थे सर्वतीर्थाख्ये ग्रामे उत्तानिकाम् उन्नतजलत्वेन तदाख्याम् अन्याः नदीः स्वल्पजलाः पार्वतीयैः पर्वतदेशोत्पन्नैस्तुरंगमैः रथाश्वैः तीर्त्वेत्यनुषङ्गः हस्तिपृष्ठवदुन्नतत्वात् हस्तिपृष्ठकाख्यं ग्राममासाद्य कुटिकां नदीमत्यवर्तत हस्तिपृष्ठकसमीपे कुटिकामतरदित्यर्थः । लौहित्ये लोहितमृत्त्वाल्लौहित्यनाम्नि नगरे कपीवतीं बहुकपिवत्त्वात्तन्नाम्नीं नदीम् "अन्येषामपि दृश्यते" इति दीर्घः ॥ १४ ॥ १५ ॥

रा० टी०—एकेति । एकसाले तदभिधनगरसमीपे स्थाणुमतीं तदभिधनदीं विनते तदभिधग्रामसमीपे गोमतीं नदीं च प्राप्य ततारेति शेषः । कलिङ्गनगरे तत्समीपे सालवनं क्षिप्रमागच्छत् । सार्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०—एकसाल इति । एकसाले एकसालादूरभव-

१ उपागमदिति गो. पाठः । २ सालांस्त्विति गो. पाठः । ३ उत्तानिकामिति गो. रा. पाठः । ४ विविधा इति गो. रा. पाठः । ५ अतीति

भरतः क्षिप्रमागच्छत्सुपरिश्रान्तवाहनः । वनं च समतीत्याशु शर्वर्यामरुणोदये ॥ १७ ॥
अयोध्यां मनुना राज्ञा निर्मितां स ददर्श ह । तां पुरीं पुरुषव्याघ्रः सप्तरात्रोषितः पथि ॥ १८ ॥
अयोध्यामग्रतो दृष्ट्वा सारथिं चेदमब्रवीत् । एषा नातिप्रतीता मे पुण्योद्याना यशस्विनी ॥ १९ ॥
अयोध्या दृश्यते दूरात्सारथे पाण्डुमृत्तिका । यज्वभिर्गुणसंपन्नैर्ब्राह्मणैर्वेदपारगैः ॥ २० ॥
भूयिष्ठमृद्धैराकीर्णा राजर्षिवरपालिता । अयोध्यायां पुरा शब्दः श्रूयते तुमुलो महान् ॥ २१ ॥
समन्तान्नरनारीणां तमद्य न शृणोम्यहम् । उद्यानानि हि सायाह्ने क्रीडित्वोपरतैर्नरैः ॥ २२ ॥
समन्ताद्विप्रधावद्भिः प्रकाशन्ते ममान्यथा । तान्यद्यानुरुदन्तीव परित्यक्तानि कामिभिः ॥ २३ ॥
अरण्यभूतेव पुरी सारथे प्रतिभाति माम् । नह्यत्र यानैर्दृश्यन्ते न गजैर्न च वाजिभिः ॥
निर्यान्तो वाभियान्तो वा नरमुख्या यथा पुरा ॥ ॥ २४ ॥

त्वादेकसालाख्ये ग्रामे स्थाणुमतीं संततजलप्रवाहेन स्थाणुभूतवृक्षत्वात् स्थाणुमतीं नाम नदीं निम्नप्रदेशत्वात् विनताख्ये नगरे बहुजलत्वेन गोमत्याख्यां नदीं च ततार । भरतः सुपरिश्रान्तवाहनः सन् कलिङ्गनगरसमीपस्थं सालवनं सर्जकवनं प्राप्य विश्रमार्थं गत्वा ततस्तदा स्वल्पकाल एवागच्छत् ॥ १६ ॥

१७-१८ ] ति० टी०—भरत इति ॥ १७ ॥ १८ ॥

रा० टी०—वनमिति । समतीत्य तद्वनमुल्लङ्घ्य शर्वर्यां रात्रौ अरुणोदये तत्समये मनुना निर्मितां प्रकटितामयोध्यां पुरीं पथि मार्गे सप्तरात्रोषितः स भरतः ददर्श ॥ १७ ॥ १८ ॥

गो० टी०—वनमिति । सालवनं च शर्वर्यामाशु समतीत्य अरुणोदयेऽयोध्यां संददर्श ॥ १७ ॥

गो० टी०—तामिति । पथि सप्तरात्रोषितः अष्टमदिवसे त्वरातिशयेन रात्रावपि गत्वा अरुणोदयसमये अयोध्यां ददर्श, दृष्ट्वा सारथिमब्रवीच्च ॥ १८ ॥

१९ ] ति० टी०—नातिप्रतीता नातिहर्षिता । 'प्रतीतो हर्षितः ख्यातः' इति वैजयन्ती ॥ १९ ॥

रा० टी०—अयोध्यामिति । अग्रतोऽयोध्यां दृष्ट्वा सारथिमब्रवीत् । वचनाकारमाह—पुण्योद्याना एषा अयोध्या यतः पाण्डुमृत्तिका उत्साहसूचकगोमयादिलेपनाभावयुक्तपाण्डुवर्णविशिष्टमृत्तिकायुक्तप्रदेशविशेषवती अतः अतिप्रतीता अतिप्रहृष्टा मे न दृश्यते 'प्रतीतो हर्षितः ख्यातः' इति वैजयन्ती। सार्धश्लोक एकान्वयी ॥ १९ ॥

गो० टी०—एषेत्यादिश्लोकद्वयमेकान्वयम् । पाण्डुमृत्तिका गोमयानुलेपनाद्याचरणाभावाच्छ्वेतमृत्तिका एषायोध्या नातिप्रतीता मे दृश्यते नातिसंतुष्टा दृश्यते सुप्सुपेतिसमासः । 'प्रतीतो हर्षिते ख्याते ज्ञाते प्रत्ययिते त्रुवे' इति वैजयन्ती । यज्वभिः विधिनेष्टवद्भिः गुणसंपन्नैः शमदमादिगुणसमृद्धैः भूयिष्ठं भूयम् ऋद्धैः धनिकैः ॥ १९ ॥ २० ॥

२०-२१ ] ति० टी०—पाण्डुमृत्तिका सुधाधवलितत्वाभिरानन्दत्वाच्च पाण्डुमृत्तिकारूपकम् । यज्वादिभिर्व्याप्तापि राजपालितापि पाण्डुमृत्तिकासमूह इव निःसारा ॥ २०॥२१॥

रा० टी०—यज्वभिरिति । गुणसंपन्नैः शमदमादिगुणविशिष्टैः यज्वभिर्याज्ञिकैः वेदपारगैर्ब्राह्मणैश्च ऋद्धैः धनादिना प्रवृद्धैर्जनैश्च भूयिष्ठमधिकं यथा भवति तथा आकीर्णा संकुला राजर्षिवरेण पालिता या अयोध्या पुरी तस्यामयोध्यायां पुरा पूर्वं नरनारीणां समन्तात् यः शब्दः श्रूयते अश्रूयत तं शब्दमद्य न शृणोमि । वर्तमानसामीप्य इति भूते लट् । अर्धचतुष्टयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०—अयोध्यायामिति । श्रूयत इति वर्तमाननिर्देशस्मृतौ वर्तमानवद्भानात् नरविशिष्टा नार्यो नरनार्यस्तासाम् ॥ २१ ॥

२२-२३ ] ति० टी०—सायाह्न उद्यानानि प्रविश्य रात्रौ क्रीडित्वोपरतैर्नरैः प्रातः समन्ताद्विप्रधावद्भिर्यानि पूर्वमत्यन्तं प्रकाशन्ते तान्यद्य कामिभिः परित्यक्तानि अनु मां लक्षीकृत्य रुदन्तीव ममान्यथा महारण्यानीव प्रकाशन्ते ॥ २२ ॥ २३ ॥

रा० टी०—उद्यानानीति । सायाह्ने यानि उद्यानानि प्रविश्येति शेषः, क्रीडित्वा रात्रौ विहृत्य उपरतैः प्रातर्निर्गतैः अत एव समन्ताद्विप्रधावद्भिर्नरैः प्रकाशन्ते प्राकाशन्त, तान्यद्य इदानीं कामिभिः परित्यक्तानि अत एव अनुरुदन्तीव अत एव अन्यथा पूर्वतो विलक्षणं प्रकाशन्ते । सार्धश्लोक एकान्वयी ॥ २२ ॥ २३ ॥

गो० टी०—उद्यानानीति । सार्धश्लोकमेकं वाक्यम् । उद्यानानि सायाह्ने गते त्विति शेषः । रात्रौ क्रीडित्वा उपरतैः प्रातर्विप्रधावद्भिः गृहं प्रति गच्छद्भिः नरैः अन्यदा पूर्वं प्रकाशन्ते अद्य त्वाहतानीति ॥ २२ ॥

२४ ] ति० टी०—यानैः शिबिकादिभिः अभियान्तः प्रविशन्तः ॥ २४ ॥

१ संददर्शेति गो. पाठः । २ वाक्यमिति गो. पाठः । ३ यज्वभिरिति गो. रा. पाठः । ४ परीति गो. रा. पाठः । ५ अन्यदेति गो. पाठः ६ मे इति गो. पाठः । ७ पुरमिति गो. पाठः ।

उद्यानानि पुरा भान्ति मत्तप्रमुदितानि च । जनानां रतिसंयोगेष्वत्यन्तगुणवन्ति च ॥ २५ ॥
तान्येतान्यद्य पश्यामि निरानन्दानि सर्वशः । स्रस्तपर्णैरनुपथं विक्रोशद्भिरिव द्रुमैः ॥ २६ ॥
नाद्यापि श्रूयते शब्दो मत्तानां मृगपक्षिणाम् । सं रक्तां मधुरां वाणीं कलं व्याहरतां बहु ॥ २७ ॥
चन्दनागुरुसंपृक्तधूपसंमूर्छितोऽमलः । प्रवाति पवनः श्रीमान्किं नु नाद्य यथा पुरा ॥ २८ ॥
भेरीमृदङ्गवीणानां कोणसंघट्टितः पुनः । किमद्य शब्दो विरतः सदादीनगतिः पुरा ॥ २९ ॥
अनिष्टानि च पापानि पश्यामि विविधानि च । निमित्तान्यमनोज्ञानि तेन सीदति मे मनः ॥ ३० ॥
सर्वथा कुशलं सूत दुर्लभं मम बन्धुषु । था ह्यसति संमोहे हृदयं सीदतीव मे ॥ ३१ ॥

रा० टी०—अरण्येति । हे सारथे ! इयं पुरी अरण्यभूतेव मां प्रतिभाति । तत्र हेतुः—यानैः शिबिकादिभिः गजैर्वाजिभिर्वा निर्यान्तः पुरान्निर्गच्छन्तः अभियान्तः निविशन्तो वा नरमुख्याः पुरा इव न दृश्यन्ते । सार्धश्लोक एकान्वयी॥२४॥

गो० टी०—प्रकारान्तरमप्याह—अरण्येति ॥ २३ ॥

गो० टी०—नहीति । यानैः शिबिकादिभिः निर्यान्तः नगरान्निर्गच्छन्तः अभियान्तः प्रविशन्तः ॥ २४ ॥

२५ ] ति० टी०—मत्तप्रमुदितानि मत्तप्रमुदितभृङ्गकोकिलादिमन्ति तादृशस्त्रीपुरुषवन्ति च रत्यर्थसंयोगे विविधकुसुमलतागृहदीर्घिकाक्रीडापर्वतादियुक्ततया यान्यत्यन्तगुणवन्त्यत्यन्तमनुकूलानि तान्यद्य निरानन्दानि पश्यामि ॥ २५ ॥

२६] ति० टी०—यतो विक्रोशद्भिरिव द्रुमैरुपलक्षितानि २६

रा० टी०—उद्यानानीति । जनानां रतिसंयोगेषु प्रीतिहेतुकसंसर्गेषु सत्सु यानि उद्यानानि मत्तप्रमुदितानि मत्तानि हर्षितानि प्रमुदितानि प्रमोदकारणानि अत एव गुणवन्ति विचित्रगुणविशिष्टानि पुरा भान्ति अशोभन्त तानि एतानि स्रस्तपर्णैः स्रस्तानि पर्णानि येभ्यः अत एव अनुपथं प्रतिमार्गं विक्रोशद्भिरिव द्रुमैरुपलक्षितानि सर्वशः उद्यानानि निरानन्दानि पश्यामि । अर्धचतुष्टयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०—उद्यानानीति । मत्तानि फलपल्लवमकरन्दास्वादेन मत्तशुककोकिलभ्रमरादियुक्तत्वान्मत्तानि प्रमुदितानि आलवालकरणदोहदसेचनादिना कन्दलितानि रतिसंयोगेषु रत्यर्थसंयोगेषु अत्यन्तगुणवन्ति विविधकुसुमलतागृहदीर्घिकाक्रीडापर्वतादिगुणयुक्तानि अद्य त्वाहतानीति द्रुमैरुपलक्षितानि पश्यामीत्यन्वयः ॥ २५ ॥ २६ ॥

२७ ] ति० टी०—अद्याप्युदितेऽपि सूर्येऽस्मात्तु प्रत्यासन्नेष्वपि कलमव्यक्तम् ॥ २७

रा० टी०—नेति । सुरक्तामनुरागविशिष्टां मधुरां वाणीं कलं रमणीयं यथा स्यात्तथा बहु व्याहरतां निकूजतां मृगपक्षिणां शब्दः अद्य सूर्योदयसमयेऽपि न श्रूयते ॥ २७ ॥

गो० टी०—नेति । अद्यापि सूर्योदयेऽपि मत्तानां स्वस्वाभीष्टफलभोजनेन मत्तानाम् अत एव संरक्तां रागयुक्ताम् मधुरां रमणीयाम् वाणीं कलं यथा भवति तथा व्याहरतां मृगपक्षिणां क्रीडामृगशुकसारिकाप्रभृतीनां शब्दो न श्रूयते ॥ २७ ॥

२८ ] ति० टी०—संमूर्छितो व्याप्तः ॥ २८ ॥

रा० टी०—चन्दनेति । चन्दनागरुभिस्तत्सुगन्धैः संपृक्तः संमिश्रः धूपसंमूर्छितः धूपसुगन्धव्याप्तः अमलः श्रीमान्पवनः पुरेव किं नु किमर्थं न प्रवाति ॥ २८ ॥

गो० टी०—चन्दनागरुसंपृक्त इति । चन्दनागरुसंपृक्तः चन्दनागरुगन्धसंपृक्तः धूपसंमूर्छितः धूपव्याप्तः श्रीमान् रमणीयः ॥ २८ ॥

२९ ] ति० टी०—कोणो भेर्यादिवादनदण्डस्तेन संघट्टितस्तदाऽऽघातजनितो यः पुरा सदा अदीनगतिरनुभूतः स किं विरतः ॥ २९ ॥

रा० टी०—भेरीति । कोणसंघट्टितः कोणैः भेर्यादिवादनसाधनीभूतदण्डाङ्गुल्यादिभिः संघट्टितो निष्पादितः अदीनगतिः दीनगतिनिवर्तकः सदा नित्यं पुरा पूर्वं यो भेर्यादीनां शब्दोऽभवदिति शेषः, सोऽद्य इदानीं किं किमर्थं विरतो निवृत्तः॥२९॥

गो० टी०—भेरीमृदङ्गवीणानामिति । कोणसंघट्टितः भेरीमृदङ्गवीणावादनसाधनभूतदण्डहस्ततलाङ्गुल्याद्याहतिजनितः सदा अदीनगतिरिति पदच्छेदः पुरा अदीनगतिशब्दः अद्य पुनः किमर्थं विरतः उपरतः ॥ २९ ॥

३० ] ति० टी०—अनिष्टान्यनिष्टसूचकानि पापानि क्रूराणि काकादयः । 'पापं स्यात्क्रूरपाप्मनोः' । अमनोज्ञान्यशुभसूचकानि निमित्तानि वामाक्षिस्पन्दादीनि ॥ ३० ॥

रा० टी०—अनिष्टानीति । अनिष्टानि इष्टविरोधिदर्शनानि पापानि क्रूराणि काकादीनि निमित्तानि दुःखहेतुभूतानि अत एव अमनोज्ञानि अप्रियाणि वामाङ्गस्फुरणादीनि च पश्यामि तेन मनः सीदति 'पापं स्यात्क्रूरपाप्मनोः' इति वैजयन्ती ॥ ३० ॥

गो० टी०—अनिष्टानीति । अनिष्टानि अनिष्टसूचकानि पापानि क्रूराणि 'पापं स्यात् क्रूरपाप्मनोः' इति वैजयन्ती । अमनोज्ञानि दर्शनमात्रेण दुःखकराणि निमित्तानि अशुभसूचकानि शिवावाशितादीनि ॥ ३० ॥

३१ ] ति० टी०—असति संमोहे तत्कारणे ॥ ३१ ॥

१ संरक्तामिति गो. सुरक्तामिति रा. पाठः । २ अगरुसंपृक्तो इति गो. पाठः । ३ ऽतुल इति गो. पाठः। ४ पुरमिति गो. पाठः । ५ मेऽवसीदतीति रा. पाठः ।

विषण्णः श्रान्तहृदयस्त्रस्तः संलुलितेन्द्रियः । भरतः प्रविवेशाशु पुरीमिक्ष्वाकुपालिताम् ॥ ३२ ॥
द्वारेण वैजयन्तेन प्राविशच्छ्रान्तवाहनः । द्वाःस्थैरुत्थाय विजयं पृष्टस्तैः सहितो ययौ ॥ ३३ ॥
स त्वनेकाग्रहृदयो द्वास्थं प्रत्यर्च्य तं जनम् । सूतमश्वपतेः क्लान्तमब्रवीत्तत्र राघवः ॥ ३४ ॥
किमहं त्वरयानीतः कारणेन विनानघ । अशुभाशङ्कि हृदयं शीलं च पततीव मे ॥ ३५ ॥
श्रुता नु यादृशाः पूर्वं नृपतीनां विनाशने । आकारांस्तानहं सर्वानिह पश्यामि सारथे ॥ ३६ ॥
संमार्जनविहीनानि परुषाण्युपलक्षये । असंयतकवाटानि श्रीविहीनानि सर्वशः ॥ ३७ ॥
बलिकर्मविहीनानि धूपसंमोदनेन च । अनाशितकुटुम्बानि प्रभाहीनजनानि च ॥ ३८ ॥

रा० टी०—सर्वथेति । तथा तेन प्रकारेण असति असमीचीने संमोहे संमोहकारणे अशकुने सति मम बन्धुषु सर्वथा सर्वप्रकारेण कुशलं दुर्लभमत एव मम हृदयं सीदति ॥ ३१ ॥

गो० टी०—सर्वथेति । संमोहे संमोहकारणे ॥ ३१ ॥

३२ ] ति० टी०—विषण्णो दीनः, श्रान्तहृदयः खिन्नचित्तः, संलुलितानि क्षुभितानीन्द्रियाणि यस्य सः ॥ ३२ ॥

रा० टी०—भरतोक्तिं संवर्ण्य तद्वृत्तान्तमाह—विषण्ण इत्यादिभिः । श्रान्तहृदयः कुशकुनदर्शनहेतुकखेदविशिष्टहृदयविशिष्टः अत एव त्रस्तः उद्विग्नः अत एव विषण्णः औदासीन्यविशिष्टः अत एव संलुलितानि संचलितानि इन्द्रियाणि यस्य स भरतः पुरीमयोध्यां प्रविवेश ॥ ३२ ॥

गो० टी०—विषण्ण इति । विषण्णः दुःखितः श्रान्तहृदयः कलुषितमनस्कः लुलितेन्द्रियः क्षुभितबाह्येन्द्रियः ॥ ३२ ॥

३३ ] ति० टी०—वैजयन्तेनेन्द्रप्रासादद्वारतुल्यद्वारेण तन्नामकेन वा विजयं पृष्टः कृतविजयप्रश्नः । 'विजयशुक्तः' इति पाठान्तरम् ॥ ३३ ॥

रा० टी०—प्रवेशनप्रकारमाह—द्वारेणेति । वैजयन्तेन तदभिधपश्चिमद्वारेण श्रान्तवाहनो भरतः प्राविशदनन्तरं द्वाःस्थैः विजयं पृष्टस्तैर्द्वाःस्थैः सहितश्च सन् ययौ ॥ ३३ ॥

गो० टी०—द्वारेणेति । वैजयन्तेन वैजयन्ताख्येन द्वारेण नगरपश्चिमद्वारेण अत्र । रे इति गायत्र्यक्षरम् पञ्चसहस्राणि श्लोकानां गतानि ॥ ३३ ॥

३४ ] ति० टी०—अनेकाग्रहृदयो व्याकुलहृदयः द्वाःस्थं जनं प्रत्यर्च्य सोपचारं निवर्त्य अश्वपतेः केकयस्य ॥ ३४ ॥

रा० टी०—स इति । अनेकाग्रहृदयः चञ्चलचित्तः राघवो भरतः एवं सहागतं द्वाःस्थं जनं प्रत्यर्च्य सत्कारपूर्वकं निवर्त्य अश्वपतेः केकयस्य सूतमब्रवीत् ॥ ३४ ॥

गो० टी०—स त्विति । अनेकाग्रहृदयः व्याकुलमनाः प्रत्यर्च्य सोपचारं निवर्त्य ॥ ३४ ॥

३५ ] ति० टी०—आनीतः दूतद्वारेति शेषः । कारणेन विना कारणोक्तिं विना अत एव मे हृदयमशुभाशङ्कि । शीलं धैर्यादिस्वभावः पतति गलति ॥ ३५ ॥

रा० टी०—वचनाकारमाह—किमिति । हे अनघ ! कारणेन विना किं त्वरया वेगेन अहमानीतः दूतैरिति शेषः, कारणमस्त्येवेत्यर्थः, अत एव मम हृदयमशुभाशङ्कि अशुभसंशयविशिष्टमस्तीति शेषः, अत एव शीलं नित्यं दैन्यरहितस्वभावः पतति अपगच्छतीव ॥ ३५ ॥

गो० टी०—किमिति । कारणेन विना आह्वानकारणोक्तिं विना त्वरयाऽऽनीतः द्रुतं वसिष्ठेनानीतः अनघेति चिन्तासमर्थतोक्तिः ॥ ३६ ॥

३६ ] ति० टी०—श्रुताः कथास्विति शेषः । तांस्तादृशान् ॥ ३६

रा० टी०—श्रुता इति । नृपतीनां विनाशे विनाशकाले यादृशा आकाराः पूर्वं नोऽस्माभिः श्रुतास्तादृशान्सर्वानाकारानिहास्मिन्समये अहं पश्यामि ॥ ३६ ॥

गो० टी०—श्रुता इति । नः अस्माभिः आकारान् वक्ष्यमाणान् तान् तादृशान् इह नगरे ॥ ३६ ॥

३७ ] ति० टी०—तानाकारानाह—संमार्जनेत्यादि । ईदृशानि कुटुम्बिभवनान्युपलक्षये इति संबन्धः । असंयतकवाटानि, अनाशितकुटुम्बानीति वक्ष्यमाणत्वेन तद्बन्धनसामर्थ्याभावात् ॥ ३७ ॥

रा० टी०—आकारानेवाह—समिति । संमार्जनैर्विहीनानि रहितानि असंयताः अपिहिताः कवाटाः कोशगृहकपाटाः येषां तानि सर्वशो गृहाणि उपलक्षये ॥ ३७ ॥

गो० टी०—आकारानेव दर्शयति—संमार्जनविहीनानीत्यादिना । संमार्जनविहीनानि कानिचित्कुटुम्बिभवनानीति शेषः ॥ ३७ ॥

३८ ] ति० टी०—धूपसंमोदनेन परिमलेन हीनानीति शेषः । अनाशितकुटुम्बान्यभोजितकुटुम्बानि । प्रभा शोभा ॥ ३८ ॥

रा० टी०—तदेव विशिष्याह—बलीत्यादिभिः । धूपसंमोदनेन धूपस्थगन्धप्रसरेण विहीनानीति शेषः । न आशिताः भोजिता कुटुम्बा येषु अत एव प्रभाहीनाः जनाः येषु अलक्ष्मीकानि लक्ष्मीरहितानि कुटुम्बिभवनानि पश्यामि । सार्धश्लोक एकान्वयी ॥ ३८ ॥ ३९ ॥

गो० टी०—बलिकर्मविहीनानीति । धूपसंमोदनेन धूमपरिमलेन विहीनानीत्यपकर्षः अनाशितकुटुम्बानि अभोजितकुटुम्बानि व्यन्तप्रयोगः भोजयितॄणामपि दुःखाक्रान्ततया पाकयज्ञाभावात् ॥ ३८ ॥

१ स इति गो. पाठः । २ चेति रा. पाठः । ३ नो इति गो. पाठः ।

अलक्ष्मीकानि पश्यामि कुटुम्बिभवनान्यहम् । अपेतमाल्यशोभानि असंमृष्टाजिराणि च ॥ ३९ ॥
देवागाराणि शून्यानि न भान्तीह यथा पुरा । देवतार्चाः प्रविद्धाश्च यज्ञगोष्ठ्यस्तथैव च ॥ ४० ॥
माल्यापणेषु राजन्ते नाद्य पण्यानि वा तथा । दृश्यन्ते वणिजोऽप्यद्य न यथापूर्वमत्र वै ॥ ४१ ॥
ध्यानसंविग्नहृदया नष्टव्यापारयन्त्रिताः । देवायतनचैत्येषु दीनाः पक्षिमृगास्तथा ॥ ४२ ॥
मलिनं चाश्रुपूर्णाक्षं दीनं ध्यानपरं कृशम् । सस्त्रीपुंसं च पश्यामि जनमुत्कण्ठितं पुरे ॥ ४३ ॥
इत्येवमुक्त्वा भरतः सूतं तं दीनमानसः । तान्यनिष्टान्ययोध्यायां प्रेक्ष्य राजगृहं ययौ ॥ ४४ ॥

तां शून्यशृङ्गाटकवेश्मरथ्यां रजोरुणद्वारकवाटयन्त्राम् ।
दृष्ट्वा पुरीमिन्द्रपुरीप्रकाशां दुःखेन संपूर्णतरो बभूव ॥ ४५ ॥
बभूव पश्यन्मनसोऽप्रियाणि यान्यन्यदा नास्य पुरे बभूवुः ।
अवाक्शिरा दीनमना न हृष्टः पितुर्महात्मा प्रविवेश वेश्म ॥ ४६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकसप्ततितमः सर्गः ॥ ७१ ॥

---

३९ ] ति० टी०—अलक्ष्मीकानि विचित्रध्वजतोरणाद्यभावात् ॥ ३९ ॥

रा० टी०—अपेतेति । अपेता निवृत्ता माल्यानां पुष्पाणां शोभा येषु तानि न संमृष्टानि अजिराणि अङ्गणानि येषु अत एव शून्यानि देवागाराणि देवगृहाणि पुरा इव न भान्ति॥४०॥

गो० टी०—अपेतमाल्यशोभानीति । अपेता माल्यशोभा द्वारि बद्धपुष्पदामशोभा येभ्यस्तानि शून्यानि पूजकपरिचारकादिरहितानि ॥ ३९ ॥

४० ] ति० टी०—देवतार्चाः प्रतिमाः प्रविद्धा निरस्तपूजनाः यज्ञगोष्ठ्यस्तथाविधाः प्रविद्धा यज्ञरहिताः ॥ ४० ॥

रा० टी०—देवतेति । देवतार्चाः देवप्रतिमापूजाः प्रविद्धा निवृत्ताः, यज्ञगोष्ठ्यः यज्ञशालाश्च तथा प्रविद्धाः दूषिताः । प्रविद्धशब्दः शब्दान्तरयोभयान्वयी । माल्यापणेषु पुष्पक्रयार्हापणविशेषेषु यानि पण्यानि क्रयार्हाणि पुष्पाणि राजन्तेऽराजन्त तानि अद्य तथा न, न राजन्त इत्यर्थः॥ ४१ ॥

गो० टी०—देवतार्चा इति । देवतार्चाः देवपूजाः प्रविद्धाः छुप्ताः 'अर्चा पूजाप्रतिमयोः' इति वैजयन्ती । यज्ञगोष्ठ्यः यज्ञसभाः तथाविधाः प्रविद्धा इत्यर्थः । पण्यानि क्रयपुष्पाणि ॥ ४० ॥

४१ ] ति० टी०—माल्यापणेषु माल्यविक्रयापणेषु पण्यानि माल्यरूपाणि ॥ ४१ ॥

रा० टी०—दृश्यन्त इति । ध्यानेन चिन्तया संविग्नानि हृदयानि येषां ते अत एव नष्टव्यापारेण निवृत्तक्रयाविक्रयव्यवहारेण यन्त्रिताः संकुचिताः सन्तः वणिजोऽपि पूर्वमिव न दृश्यन्ते ४२॥

गो० टी०—दृश्यन्त इति । ध्यानसंविग्नहृदयाः ध्यानाकुलहृदयाः नष्टव्यापारयन्त्रिताः नष्टक्रयविक्रयादिव्यापाराः यन्त्रिताः निरुद्धाश्च 'यत्रि संकोचे' इति धातुः ॥ ४१ ॥

४२ ] ति० टी०—नष्टेन व्यापारेण क्रयविक्रयादिव्यापारेण यन्त्रिता निरुद्धापणाः ॥ ४२ ॥

रा० टी०—देवेति । देवायतनचैत्येषु देवालयस्थलविशेषेषु पक्षिमृगाः दीनाः दृश्यन्ते इति शेषः । अर्थं पृथक्—मलिनमिति । ध्यानपरं चिन्ताविष्टमत एव पूर्णाश्रमुत्कण्ठितं किंचिद्विषयकाध्यानविशिष्टं जनं पश्यामि ॥ ४३ ॥

गो० टी०—देवायतनचैत्येष्वित्यादि । स्त्रीपुंसेति निपातनात् समासान्तोऽच्प्रत्ययः समुदायसमुदायिनोर्भेदविवक्षया जनविशेषणत्वम् ॥ ४२ ॥ ४३ ॥

४३–४४ ] ति० टी०—मलिनत्वादिगुणकं स्त्रीपुंसं पश्यामि ॥ ४३ ॥ ४४ ॥

रा० टी०—इतीति । प्रेक्ष्य दृष्ट्वा राजगृहं ययौ ॥ ४३ ॥

गो० टी०—इतीति । तान्यरिष्टानि प्रेक्ष्य तं सूतमित्येवमुक्त्वेत्यन्वयः ॥ ४४ ॥

४५ ] ति० टी०—शृङ्गाटकं चतुष्पथः रजसाऽरुणानि धूसराणि द्वारकवाटानि द्वारयन्त्राणि च यस्याम् ॥ ४५ ॥

रा० टी०—तामिति । इन्द्रपुरीप्रकाशां शून्याः शृङ्गाटकादयो यस्यां तां शृङ्गाटकं चतुष्पथः रजोभिः अरुणानि धूसराणि द्वारकपाटयन्त्राणि यस्यां तां पुरीं दृष्ट्वा दुःखेन संपूर्णतरो व्याप्तो बभूव ॥ ४४ ॥

गो० टी०—तामिति । शून्याः जनरहिताः शृङ्गाटकवेश्मरथ्याः चतुष्पथगृहवीथ्यो यस्यां रजोरुणद्वारकपाटयन्त्रां रजोभिः अरुणानि मलिनानि द्वारस्थकपाटानां यन्त्राणि तालकुञ्च्यादीनि यस्याम् संमार्जनाद्यभावादिति भावः॥ ४५ ॥

४६ ] ति० टी०—अन्यदा राजजीवने ॥ ४६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

---

१ चाभान्ति यथापुरमिति गो. रा. पाठः । २ गोष्ठ्यस्तथाविधा इति गो. गोष्ठ्यस्तथाविधा इति रा. पाठः । ३ गण्या इति गो. पाठः । ४ ध्यानकृशं परमिति रा. पाठः । ५ कपाटेति गो. पाठः । ६ पुरेति गो. पाठः । ७ बहूनीति गो. पाठः ।

एतत्सुरुचिरं भाति पितुर्मे शयनं पुरा । शशिनेवामलं रात्रौ गगनं तोयदात्यये ॥ १९ ॥
तदिदं न विभात्यद्य विहीनं तेन धीमता । व्योमेव शशिना हीनमप्शुष्क इव सागरः ॥ २० ॥
बाष्पमुत्सृज्य कण्ठेन स्वात्मना परिपीडितः । प्रच्छाद्य वदनं श्रीमद्वस्त्रेण जयतां वरः ॥ २१ ॥
तमार्तं देवसंकाशं समीक्ष्य पतितं भुवि । निकृत्तमिव सालस्य स्कन्धं परशुना वने ॥ २२ ॥
माता मातङ्गसंकाशं चन्द्रार्कसदृशं सुतम् । उत्थापयित्वा शोकार्तं वचनं चेदमब्रवीत् ॥ २३ ॥
उत्तिष्ठोत्तिष्ठ किं शेषे राजपुत्र महायशः । त्वद्विधा नहि शोचन्ति सन्तः सदसि संमताः ॥ २४ ॥
दानयज्ञाधिकारा हि शीलश्रुतितपोनुगा । बुद्धिस्ते बुद्धिसंपन्न प्रभेवार्कस्य मन्दिरे ॥ २५ ॥
स रुदित्वा चिरं कालं भूमौ परिविवृत्य च । जननीं प्रत्युवाचेदं शोकैर्बहुभिरावृतः ॥ २६ ॥

गमनत्वेन मरणसदृशेन दुःखितः अत एव शोकेन संवीतः संयुक्तः अत एव भ्रान्ताकुलितचेतनः भ्रान्तेन कार्यविषयकाविवेकेनाकुलिता व्याप्ता चेतना यस्य स भरतः विललाप ॥ १८ ॥

गो० टी०–तत इति । शोकेन संवीतः शोकेनावृतः मरणदुःखितः मरणश्रवणेन संजातदुःखः भ्रान्ता अनवस्थिता आकुलिता खिन्ना चेतना यस्य सः भ्रान्ताकुलितचेतनः ॥१८॥

१९ ] ति० टी०–विलापं दर्शयति–एतदिति । पुरा भाति स्म ॥ १९ ॥

रा० टी०–विलापाकारमाह–एतदित्यादिभिः । यदिदं शयनं तोयदात्यये शरत्काले रात्रौ शशिना अमलं गगनमिव सुरुचिरं मनोहरं पुरा पूर्वं भाति अभात् तत्तेन धीमता राज्ञा विहीनं इदं शयनं शशिना विहीनं व्योमाकाशमिव अप्शुष्कः आपः शुष्काः यस्य सः सागर इव अद्य न विभाति। श्लोकद्वयमेकान्वयि 'शुष्काप' इति पाठान्तरमिति भट्टाः ॥ १९ ॥ २० ॥

गो० टी०–विलापमेवाह–एतदित्यादिना ॥ १९ ॥

२० ] ति० टी०–अप्शुष्क आपः शुष्का यस्मिन्कालाग्निना सः । 'अप्शुष्कमिव सागरम्' इति पाठे सागरस्वरूपमित्यर्थः । 'शुष्कापः' इति पाठान्तरम् ॥ २० ॥

गो० टी०–तदिति । अप्शुष्कः शुष्कापः आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। 'उच्छुष्कः' इति पाठान्तरम् ॥२०॥

२१ ] ति० टी०–श्रीमद्वदनं वस्त्रेणाच्छाद्य कण्ठेन कण्ठस्वरेण सह बाष्पं नेत्रजलमुत्सृज्य भूमौ पतित्वा विललापेति शेषः ॥ २१ ॥

रा० टी०–बाष्पमिति । बाष्पमश्रूणि कण्ठेन कण्ठदेशेन उत्सृज्य संत्यज्य श्रीमद्वदनं मुखं वस्त्रेण प्रच्छाद्य आच्छाद्य परमपीडितः अतिदुःखी अत एव स्वार्तः स्वः स्वकीयो मित्रादिवर्गः आर्तः पीडितो यस्य सः जयतां वरो भरतः विललापेति शेषः । 'स्वात्मना परिपीडितः' इति पाठान्तरम् ॥ २१ ॥

गो० टी०–बाष्पमिति । कण्ठेन कण्ठस्वरेण स्वार्तः सुतरामार्तः अभवदिति शेषः । परमपीडितः मानसव्यथाकुलः ॥ २१—२३ ॥

२२–२३ ] ति० टी०–सालस्य सालवृक्षस्य स्कन्धं शाखाम् ॥ २२ ॥ २३ ॥

रा० टी०–तमिति । चन्द्रार्कसदृशं चन्द्रार्कान्यतरसदृशत्वेन प्रतीयमानं मातङ्गसंकाशं गजसदृशदेहवत्त्वेन प्रतीयमानं सालस्य वृक्षविशेषस्य परशुना निकृत्तं छिन्नमत एव भुवि पतितं स्कन्धं महाशाखामिव भुवि पतितं देवसंकाशं देवानामपि प्रकाशकमार्तं दुःखितमत एव शोकार्तं शोकव्याप्तं सुतं माता समीक्ष्य उत्थापयित्वा उत्थाप्य च इदं वचनमब्रवीत्। श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

२४ ] ति० टी०–राजपुत्रेति । 'राजपुत्र' इति वा पाठः सदसि संमताः सभ्याः ॥ २४ ॥

रा० टी०–उत्थापनाकारं बोधयन्नाह–उत्तिष्ठेति । राजन् हे परमानुरागविशिष्ट! त्वमुत्तिष्ठोत्तिष्ठ आदरे वीप्सा किं किमर्थं शेषे हि यतः सदसि संमताः पूज्याः त्वद्विधाः सन्तो नहि शोचन्ति ॥ २४ ॥

गो० टी०–उत्तिष्ठोत्तिष्ठेति । राजन्निति भरतशोकनिवर्तनार्थमित्युक्तवती सदसि संमताः सभ्या इत्यर्थः । दानयज्ञौ अधिक्रियेते अनयेति दानयज्ञाधिकारा तत्र हेतुः शीलेति। शीलं सद्वृत्तं श्रुतिवचो वेदवाक्यं ते अनुगच्छतीति तदनुगा तदनुसारिणी बुद्धिः अध्यवसायः अर्कस्य प्रभा मन्दिर इव सूर्यप्रभा यथा स्वस्थाने निश्चला भवति तथा ते बुद्धिर्निश्चला भातीत्यर्थः। 'मन्दर' इतिपाठे अर्कस्य प्रभा मन्दर इवेत्युक्तिरत्युन्नतमन्दरपर्वते अर्कप्रभायाः पर्वतान्तरापेक्षया चिरकालावस्थानात् । पाठभेदः मन्दर इतिपाठे मन्दरशिखरे स्थितस्यार्कस्य प्रभेवाधिकप्रकाशवतीत्यर्थः । उत्तरायणे हि मन्दरगतस्य सूर्यस्य प्रभाधिकं प्रकाशत इति प्रसिद्धम् ॥२४–२६॥

२५–२६ ] ति० टी०–शीलं सद्वृत्तम्, श्रुतिः श्रुतम् तपश्चान्द्रायणादि, तदनुगा । 'शीलश्रुतिमनोनुगा' इति पाठे तदुभयपरिशीलनविषयं यन्मनःसंकल्पात्मकं तदनुगा बुद्धिरध्यवसायात्मिका । अर्कस्य मन्दिरेऽर्कमण्डले तदेव हि तस्य गृहम् । तीर्थस्तु–'मन्दरे' इति पाठं मत्वाऽत्युन्नतमन्दरपर्वतेऽर्कप्रभायाश्चिरावस्थानादेवमुक्तिरिति व्याचख्यौ ॥२५॥ २६॥

१ स्वार्तः परमपीडित इति गो. रा. पाठः । २ मत्तमातङ्गेति गो. पाठः । ३ भुव इति गो. पाठः । ४ वचोनगोति गो. पाठः । ५ [illegible]

अभिषेक्ष्यति रामं तु राजा यज्ञं नु यक्ष्यते । इत्यहं कृतसंकल्पो हृष्टो यात्रामयासिषम् ॥ २७ ॥
तदिदं ह्यन्यथाभूतं व्यवदीर्णं मनो मम । पितरं यो न पश्यामि नित्यं प्रियहिते रतम् ॥ २८ ॥
अम्ब केनात्यगाद्राजा व्याधिना मय्यनागते । धन्या रामादयः सर्वे यैः पिता संस्कृतः स्वयम् ॥ २९ ॥
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् । उपजिघ्रेत्तु मां मूर्ध्नि तातः संनाम्य सत्वरम् ॥ ३० ॥
क्व स पाणिः सुखस्पर्शस्तातस्याक्लिष्टकर्मणः । यो हि मां रजसा ध्वस्तमभीक्ष्णं परिमार्जति ॥ ३१ ॥
यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि संमतः । तस्य मां शीघ्रमाख्याहि रामस्याक्लिष्टकर्मणः ॥ ३२ ॥
पिता हि भवति ज्येष्ठो धर्ममार्यस्य जानतः । तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ॥ ३३ ॥
धर्मविद्धर्मशीलश्च महाभागो दृढव्रतः । आर्ये किमब्रवीद्राजा पिता मे सत्यविक्रमः ॥ ३४ ॥
[गुरुरेकः प्रजानां तु पिता मे सत्यविक्रमः ।]
पश्चिमं साधुसंदेशमिच्छामि श्रोतुमात्मनः । इति पृष्टा यथातत्त्वं कैकेयी वाक्यमब्रवीत् ॥ ३५ ॥

---

रा० टी०–दानेति । हे बुद्धिसंपन्न ! शीलश्रुतितपोऽनुगा- शीलं सत्स्वभावः श्रुतिः सच्छास्त्रश्रवणं तपः तस्यातिविचारः मननं निदिध्यासनं चेत्यर्थः । तदनुगा तदनुगामिनी अत एव दानयज्ञाधिकारा दानयज्ञे अधिकारो यस्याः सा ते बुद्धिः मन्दिरे मण्डलरूपस्वगृहे अर्कस्य प्रभेव राजते इति शेषः एतेन शोकं त्यक्त्वा दानादिकं कर्तव्यमिति सूचितम् । तीर्थस्तु 'मन्दरे' इति पाठं मत्वा अत्युन्नतमन्दरपर्वते अर्कप्रभायाः चेरावस्थानादेवमुक्तिरिति व्याचख्याविति भट्टाः ॥ २६ ॥

रा० टी०–स इति । चिरं कालं रुदित्वा परिविष्टस्य राज्ञ- श्रामणीभिरीक्षणार्थमितस्ततो भ्रान्त्वा च बहुभिः शोकैरावृतः स भरतः जननीं प्रत्युवाच ॥ २६ ॥

२७ ] ति० टी०–यक्ष्यते करिष्यति । यात्रामयासिषं यात्रा- मकार्षम् । 'अयाचिषम्' इति पाठे मातामहायेति शेषः॥२७॥

रा० टी०–तत्प्रतिवचनमेवाह–अभिषेक्ष्यतीति । राजा राममभिषेक्ष्यति अनन्तरं यज्ञमेव यक्ष्यते करिष्यति इति कृतसंकल्पः कृतनिश्चयः अहं यात्रामयोध्याकर्मकगमनमयाचिषम् दूतगमनात्पूर्वं मातामहमिति शेषः । एतेन रामा- भिषेककाले दशरथेनोक्तो भरतसंनिधाविति व्यक्तम् अत एव भरतस्य न मृषा संसर्गित्वम् । एकस्तुशब्दोऽनन्तरार्थकः द्वितीय एवार्थः ॥ २७ ॥

गो० टी०–अभिषेक्ष्यतीति । यज्ञं यक्ष्यत इति यज्ञं करिष्यत इत्यर्थः । यात्रामयासिषं यात्रामकार्षमित्यर्थः ॥२७॥

२८] ति० टी०–अन्यथाभूतं चिन्तितविपरीतं जातम्॥२८॥

रा० टी०–तदिति । योऽहं पितरं न पश्यामि तस्य मम इत्यनेन प्रकारेण इदं संकल्पितमन्यथाभूतमत एव मनो व्यवदीर्णमतिदुःखितम् ॥ २८ ॥

गो० टी०–तदिति । व्यवदीर्णं भिन्नम् ॥ २८–३० ॥

२९ ] ति० टी०–रामेणौर्ध्वदेहिकं कृतमिति मन्वान आह–धन्या इत्यादि ॥ २९ ॥

रा० टी०–अम्बेति । अम्ब हे मातः ! राजा केन व्याधिना मानसिकव्यथाविशेषेण हेतुभूतेन अत्यगात् नाकमगच्छत् । मयि अनागते सति यैः पिता संस्कृतः संवितः ते रामादयो धन्याः ॥ २९ ॥

३० ] ति० टी०–पुनः शोचति–नेति । प्राप्तमिहागतं संनाम्य मूर्धानमिति शेषः ॥ ३० ॥

रा० टी०–नेति । मां प्राप्तमतो राजा न जानाति नूनं निश्चितमेतत् अन्यथा मां संनाम्य मूर्ध्नि उपजिघ्रेत् । तुरप्यर्थे ॥ ३० ॥

३१ ] ति० टी०–परिमार्जति परिमार्ष्टि ॥ ३१ ॥

रा० टी०–क्वेति । यः रजसा ध्वस्तं व्याप्तं मा परिमार्जति सः अक्लिष्टकर्मणः सरलस्वभावस्य तातस्य सुखस्पर्शः पाणिः क्वास्तीति शेषः । परिमार्जतीत्यत्र गणकार्यस्यानित्यत्वाच्छपो लुक् ॥ ३१ ॥

गो० टी०–क्वेति । परिमार्जति परिमार्ष्टि माम् आगतमिति शेषः । क्व स पाणिः गत इति शेषः ॥ ३१–३४ ॥

३२ ति० टी०–आख्याहि आगतमिति शेषः ॥ ३२ ॥

रा० टी०–य इति । यो रामः मम भ्राता पिता च यस्याहं संमतो दासस्तस्य रामस्य समीपे मामाख्याहि ममागमनं कथयेत्यर्थः ॥ ३२ ॥

३३–३४ ] ति० टी०–धर्मं जानत आर्यस्य श्रेष्ठस्य विवेकिनः पुरुषस्य ज्येष्ठो ज्येष्ठभ्राता पिता भवति अतस्तस्य पादौ ग्रहीष्यामि यतः स इदानीं मम गतिः ॥ ३३ ॥ ३४ ॥

रा० टी०–सगमकं तत्प्रयोजनमाह–पितेति । धर्मं जानतः पुरुषस्य ज्येष्ठो भ्राता पिता भवति हि अतः तस्य पादौ अहं ग्रहीष्यामि स एव मम गतिः ॥ ३३ ॥

रा० टी०–धर्मेति । धर्मवित्त्वादिधर्मविशिष्टो राजा आर्ये रामे किमब्रवीत् यात्रासमये इति शेषः । तत्कथयेत्यर्थः ॥३४॥

३५ ] ति० टी०–पश्चिमं संदेशमन्त्यकालिकम् ॥ ३५ ॥

---

१ तु इति रा. पाठः । २ अयाचिषमिति रा. पाठः । ३ संस्कृत इति रा. पाठः । ४ संनम्येति गो. पाठः । ५ येनेति गो. पाठः । ६ धीमत इति गो. पाठः । ७ नित्यश्च सत्यसंधो इति गो. पाठः । ८ आर्ये इति गो. पाठः । ९ धर्मविशिष्टः रा. पाठे ।

रामेति राजा विलपन्हा सीते लक्ष्मणेति च । स महात्मा परं लोकं गतो मतिमतां वरः ॥ ३६ ॥
इतीमां पश्चिमां वाचं व्याजहार पिता तव । कालधर्मं परिक्षिप्तः पाशैरिव महागजः ॥ ३७ ॥
सिद्धार्थास्तु नरा राममागतं सह सीतया । लक्ष्मणं च महाबाहुं द्रक्ष्यन्ति पुनरागतम् ॥ ३८ ॥
तच्छ्रुत्वा विषसादैवं द्वितीयाप्रियशंसनात् । विषण्णवदनो भूत्वा भूयः पप्रच्छ मातरम् ॥ ३९ ॥
क चेदानीं स धर्मात्मा कौसल्यानन्दवर्धनः । लक्ष्मणेन सह भ्रात्रा सीतया च समागतः ॥ ४० ॥
तथा पृष्टा यथान्यायमाख्यातुमुपचक्रमे । मातास्य युगपद्वाक्यं विप्रियं प्रियशंसया ॥ ४१ ॥
स हि राजसुतः पुत्र चीरवासा महावनम् । दण्डकान्सह वैदेह्या लक्ष्मणानुचरो गतः ॥ ४२ ॥
तच्छ्रुत्वा भरतस्त्रस्तो भ्रातुश्चारित्रशङ्कया । स्वस्य वंशस्य माहात्म्यात्प्रष्टुं समुपचक्रमे ॥ ४३ ॥

३६ ] ति० टी०–विलपन्परलोकं गतः न तु किंचिदपि संदेशमवोचादित्यर्थः ॥ ३६ ॥

रा० टी०–गुरुरिति । तु यतः मे पिता प्रजानामेको मुख्यो गुरुरुपदेष्टा अतः आत्मनः मत्संबन्धिनं पश्चिममन्तिमं संदेशं तदुपदिष्टं श्रोतुमिच्छामि एतेन संदेशं वदेति सूचितम् ॥३५॥

रा० टी०–इतीमिति । इति पृष्टा कैकेयी यथातत्त्वं तत्त्वमनतिक्रम्य अब्रवीत् । अर्थं पृथक् । तद्वचनाकारमाह—रामेति । पाशैः पस्य पालनस्य आशो व्याप्तिर्यैस्तैः रामादिगमनैः हेतुभिः रामेत्यादिविलपन्कालधर्मपरिक्षिप्तः कालधर्मेभ्यः शरीरविकारादिभ्यः परिक्षिप्तः परित्यक्तः रहित इत्यर्थः । महान् गजो यस्य स इन्द्र इव परं लोकं साकेतं गतः साकेतकर्मकगमनानुकूलव्यापारवान्सन् ये नरा पुनरागतं रामं द्रक्ष्यन्ति ते सिद्धार्थाः इतीमां पश्चिमां वाचं तव पिता व्याजहार । श्लोकत्रयमेकान्वयि ॥ ३६–३८ ॥

गो० टी०–पश्चिमामिति । आत्मनः संदेशं मद्विषयसंदेशम् ॥ ३६ ॥

गो० टी०–एवं पृष्टवन्तं भरतं प्रति त्वां राजा न स्मृतवान् किंतु राममेव स्मरन् स्वर्गमगादिति पितृविषयस्नेहनिवर्तनाभिप्रायेणोत्तरमाह–रामेत्यादिना ॥ ३६ ॥

३७–३८ ] ति० टी०–इमां वाचं सिद्धार्थास्त्वित्यादि वक्ष्यमाणाम् ॥ ३७ ॥ ३८ ॥

गो० टी०–इमामित्यादिश्लोकद्वयमेकान्वयम् । सिद्धार्थाः कृतार्थाः पुनरागतं द्रक्ष्यन्तीति इमां वाचं व्याजहारेति संबन्धः ॥ ३७ ॥ ३८ ॥

३९ ] ति० टी०–एवं द्वितीयेति राजमरणापेक्षया रामवनगमनरूपाप्रियस्य द्वितीयत्वम् ॥ ३९ ॥

रा० टी०–तदिति । एवमिदं कैकेयीवचनं श्रुत्वा तत्तेन कैकेयीवचनेन द्वितीयाप्रियशंसनाद्रामवियोगरूपापरद्वेष्यसूचनात् विषसाद विषादं प्राप अत एव विषण्णवदनो भूत्वा मातरं भूयः पप्रच्छ ॥ ३९ ॥

गो० टी०–तदिति । द्वितीयाप्रियशंसनात् राजमरणापेक्षया रामस्य देशान्तरगमनरूपाप्रियस्य द्वितीयत्वम् ॥३९॥४०॥

४० ] ति० टी०–क चेदानीं गत इति शेषः । समागतो मिलितः ॥ ४० ॥

रा० टी०–प्रश्नाकारमाह–केति । राम इदानीं कास्ति॥४०॥

४१–४२ ] ति० टी०–विप्रियं रामविवासनरूपम् । प्रियशंसया प्रियशङ्कया एतच्छ्रवणे भरतस्य सुखं भविष्यतीति तर्केण । युगपद्राजमरणकथनसमकालमेव ॥ ४१ ॥ ४२ ॥

रा० टी०–तथेति । तथा तेन प्रकारेण पृष्टाऽस्य भरतस्य माता कैकेयी प्रियशंसया प्रियबोधनशीलया वाचा विप्रियमप्रियत्वेन प्रतिभासमानं वाक्यं राज्ञो रामादीनां च गमनसूचकवचनं युगपदेककालावच्छेदेन यथान्यायं न्यायमतिक्रम्य व्याख्यातुं वक्तुमुपचक्रमे 'प्रियशङ्कया' इति पाठे तु इदं गमनद्वयं तत्त्वतः प्रियमप्रियं वेति संशयेनोपलक्षितेति कैकेयीविशेषणम् ॥ ४१ ॥

गो० टी०–तथेति । यथातथमिति सम्यक्पाठः यथा चायमिति पाठे अयं वृत्तान्तः यथा तथाख्यातुमित्यन्वयः । विप्रियं रामविवासनप्रतिपादकं प्रियशङ्कया एतच्छ्रवणेन भरतस्य प्रियं भविष्यतीति वितर्केण 'शङ्का वितर्कभययोः' इति वैजयन्ती । युगपत् राजमरणकथनसमकालमेव, यद्वा युगपदाख्यातुमुपचक्रम इत्युपक्रमस्य वक्ष्यमाणपरत्वात् याचितस्ते पिता राज्यं रामस्य च विवासनमिति वक्ष्यमाणवाक्यार्थाभिप्रायेण यौगपद्यम् ॥ ४१ ॥

रा० टी०–स इति । हे पुत्र! स ज्येष्ठो राजसुतः चीरवासाः सन्दण्डकान् गतः ॥ ४२ ॥

गो० टी०–स हीति । दण्डकान् महावनमिति वेदाः प्रमाणमितिवन्निर्देशः ॥ ४२ ॥

४३ ] ति० टी०–चारित्रशङ्कया रामस्य धर्मच्युतिशङ्कया त्रस्तः स्ववंशस्य माहात्म्यमसदाचाराभावपूर्वकं सदाचारनिरतत्वमसदाचारत्यागित्वं च तत्संस्मृत्य प्रष्टुं दण्डकारण्यगमनकारणमिति शेषः ॥ ४३ ॥

१ गतिमत्वमिति गो. रा. पाठः । २ इमां त्विति गो. पाठः । ३ कालधर्मपरिक्षिप्त इति रा. पाठः । ४ ते इति गो. पाठः । ५ एवेति गो. पाठः । ६ समं गत इति गो. पाठः । ७ यथातत्त्वमिति गो. पाठः । ८ शङ्कयेति गो. संशयेति रा. पाठः ।

कच्चिन्न ब्राह्मणधनं हृतं रामेण कस्यचित् । कच्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥ ४४ ॥
कच्चिन्न परदारान्वा राजपुत्रोऽभिमन्यते । कस्मात्स दण्डकारण्ये भ्रूणहेव विवासितः ॥ ४५ ॥
अथास्य चपला माता तत्स्वकर्म यथातथम् । तेनैव स्त्रीस्वभावेन व्याहर्तुमुपचक्रमे ॥ ४६ ॥
एवमुक्ता तु कैकेयी भरतेन महात्मना । उवाच वचनं हृष्टा वृथापण्डितमानिनी ॥ ४७ ॥
न ब्राह्मणधनं किंचिद्धृतं रामेण कस्यचित् । कश्चिन्नाढ्यो दरिद्रो वा तेनापापो विहिंसितः ॥
न रामः परदारान्स चक्षुर्भ्यामपि पश्यति ॥ ॥ ४८ ॥
मया तु पुत्र श्रुत्वैव रामस्यैवाभिषेचनम् । याचितस्ते पिता राज्यं रामस्य च विवासनम् ॥ ४९ ॥
स स्ववृत्तिं समास्थाय पिता ते तत्तथाकरोत् । रामस्तु सहसौमित्रिः प्रेषितः सह सीतया ॥ ५० ॥
तमपश्यन्प्रियं पुत्रं महीपालो महायशाः । पुत्रशोकपरिद्यूनः पञ्चत्वमुपपेदिवान् ॥ ५१ ॥

रा० टी०—तदिति । तदुक्ताकारपूर्वकं रामगमनं श्रुत्वा स्वस्य वंशस्य माहात्म्यान्महत्त्वं प्राप्य विद्यमानस्य भ्रातुः रामस्य चारित्रशङ्कया वनगमनहेतुभूतसदाचरणसंशयेन प्रष्टुं समुपचक्रमे आरेभे ॥ ४३ ॥

गो० टी०—तदिति । चारित्रशङ्कया चारित्रं किमभूदिति शङ्कया वंशस्य माहात्म्यात् असदाचारवैमुख्यपूर्वकसदाचारनिरतत्वं वंशस्य माहात्म्यम् ॥ ४३ ॥

४४ ] ति० टी०—कस्यचित् हेतोरिति शेषः । अपापो निरपराधः ॥ ४४ ॥

रा० टी०—प्रश्नाकारमाह—कच्चिदिति । रामेण ब्राह्मणधनं कस्यचिदन्यस्य वा धनमिति शेषः, न हृतं कच्चित् । अपापः पापरहितः न विहिंसितः केनचित्प्रबलहेतुना विध्वंसितः कच्चित् । कच्चिदितिप्रश्न ॥ ४४ ॥

गो० टी०—कच्चिदिति । ब्राह्मणधनमित्यत्राविभक्तिको निर्देशः कस्यचिद्ब्राह्मणस्येत्यर्थः, यद्वा कस्यचित् कस्माच्चिद्धेतोरित्यर्थः ॥ ४४ ॥

४५ ] ति० टी०—'भ्रूणहेव विवासितः' इति पाठे सर्वशास्त्राध्यायी भ्रूणस्तस्य हन्तेत्यर्थ इति तीर्थः । भ्रूणो गर्भ इत्यन्ये ॥ ४५ ॥

रा० टी०—कच्चिदिति । कस्माद्धेतोः ॥ ४५ ॥

गो० टी०—कच्चिदिति । भ्रूणः श्रुताध्ययनसंपन्नः 'अनूचानो गुणैर्युक्तो व्रतस्वाध्यायवाञ्छुचिः । भ्रूण इत्युच्यते सद्भिस्त्वेष यो विजितेन्द्रियः ॥' इतिस्मृतेः ॥ ४५ ॥

४६-४८ ] ति० टी०—स्त्रीस्वभावेन धर्माधर्महिताहितोचितानुचितविवेकशून्यतारूपेण ॥ ४६ ॥ ४८ ॥

रा० टी०—अथेति । स्त्रीस्वभावेन स्त्रीषु सुतरामभावो यस्य तेन अतिधैर्येणेत्यर्थः, उपलक्षितापि माता अथ नित्यं बाधितत्वेनाप्रष्टव्यभरतप्रश्नश्रवणहेतुना चपला चापल्यं प्राप्ता सती यथातथं सत्यं यथा स्यात्तथा स्वकर्म व्याहर्तुमुपचक्रमे ॥ ४६ ॥

गो० टी०—अथेति । यथातथं यथावृत्तं निपातनात्साधुः स्त्रीस्वभावेन चापल्येनेत्यर्थः । व्याहर्तुमुपचक्रमे वक्तुं प्रवृत्तेत्यर्थः । अथास्येतिश्लोको मुनेः मेदाभिनयः एवमितिश्लोकः क्रमिक इति केचित् ॥ ४६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—एवमिति । भरतेनैवमुक्ता हृष्टा तत्त्वज्ञानेन प्राप्तसंतोषा अत एव पण्डितमानिनी पण्डितांस्तत्त्वज्ञान्मानयति पूजयति तच्छीला, किंच पण्डितमानः तत्त्वज्ञकर्तृकपूजा अस्त्यस्याः सा कैकेयी वृथा प्रयोजनाभावरहितं सप्रयोजनमित्यर्थः वचनमुवाच ॥ ४७ ॥

गो० टी०—एवमिति । अयं श्लोकः पूर्वानुवादार्थः ॥ ४७ ॥

रा० टी०—वचनाकारमाह—नेति । किंचिदल्पमपि ब्राह्मणधनं रामेण न हृतं कस्यचिदन्यस्यापि धनमिति शेष ॥ ४८ ॥

गो० टी०—न ब्राह्मणेत्यादि । रामः परदारान् चक्षुर्भ्यामपि न पश्यति एवं सति न स्पृशतीत्यत्र किं वक्तव्यमिति भावः ॥ ४८ ॥

रा० टी०—नेति । चक्षुर्भ्यामपि न पश्यति स्पर्शादि नेति किं वक्तव्यमित्यर्थः । अर्थं पृथक् ॥ ४९ ॥

४९ ] ति० टी०—इह राज्ये ते राज्यं रामस्य च विवासनं ते पिता याचित इति संबन्धः ॥ ४९ ॥

रा० टी०—ननु तर्हि किमर्थं स वनं गत इत्यत आह—मयेति । हे पुत्र ! रामस्याभिषेचनं श्रुत्वैव पिता भवज्जनकः ते त्वदर्थं राज्यं राज्यरक्षणं रामस्य विवासनं च याचितः ॥ ५० ॥

गो० टी०—मयेति । ते राज्यं रामस्य विवासनं च पिता याचितः पूर्वदत्तवरद्वयविषयत्वेन याचित इत्यर्थः ॥ ४९ ॥

५० ] ति० टी०—स्ववृत्तिं स्वस्य सत्यस्थितिलक्षणाम् । तथाकरोत् तुभ्यं राज्यं दत्तवानित्यर्थः ॥ ५० ॥

रा० टी०—स इति । स राजा स्ववृत्तिं सत्यप्रतिज्ञत्वरूपस्वस्वभावमास्थाय तथा मद्याचनानुरूपमकरोत् । अत एव रामो वनं प्रेषितः ॥ ५१ ॥

गो० टी०—स इति । स्ववृत्तिं स्वप्रतिज्ञारूपां वृत्तिम् ॥ ५० ॥

५१ ] ति० टी०—परिद्यूनः क्षीणो विलपन्वा ॥ ५१ ॥

१ भ्रूणहेवेति गो. पाठः । २ मृद्धेति गो. पाठः । ३ कच्चिदिति रा. पाठः । ४ चेति गो. पाठः । ५ एवेति गो. पाठः । ६ चेति गो. पाठः । ७ प्रेषित इति गो. रा. पाठः ।

त्वया त्विदानीं धर्मज्ञ राजत्वमवलम्ब्यताम् । त्वत्कृते हि मया सर्वमिदमेवंविधं कृतम् ॥ ५२ ॥
मा शोकं मा च संतापं धैर्यमाश्रय पुत्रक । त्वदधीना हि नगरी राज्यं चैतदनामयम् ॥ ५३ ॥
तत्पुत्र शीघ्रं विधिना विधिज्ञैर्वसिष्ठमुख्यैः सहितो द्विजेन्द्रैः ।
संकाल्य राजानमदीनसत्त्वमात्मानमुर्व्यामभिषेचयस्व ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

## त्रिसप्ततितमः सर्गः ।

भरतः ससर्मभेदं कैकेयीं बहुधा विनिन्द्य राममानीय राज्ये निवेश्याहं त्वदप्रियार्थं तदनुचरो भवामीति प्रतिजानीते ।

श्रुत्वा च स पितुर्वृत्तं भ्रातरौ च विवासितौ । भरतो दुःखसंतप्त इदं वचनमब्रवीत् ॥ १ ॥
किं नु कार्यं हतस्येह मम राज्येन शोचतः । विहीनस्याथ पित्रा च भ्रात्रा पितृसमेन च ॥ २ ॥
दुःखे मे दुःखमकरोर्व्रणे क्षारमिवाददाः । राजानं प्रेतभावस्थं कृत्वा रामं च तापसम् ॥ ३ ॥

---

रा० टी०—तमिति । प्रियं पुत्रं राममपश्यन्महीपालः पुत्रशोकेन परिघूनः क्षीणः सन्पञ्चत्वं पञ्चभ्यः पञ्चसंख्याकभूतनिर्मितेभ्यः त्वमन्यं साकेतमित्यर्थः उपपेदिवान्प्राप ॥ ६२ ॥

गो० टी०—तमिति । पुत्रशोकपरिघूनः पुत्रशोकेन परिघूनः तप्तः विलपन्नित्यर्थो वा " दिवो विजिगीषायाम् " इति निकानस्वम् ॥ ६१ ॥

५२ ] ति० टी०—धर्मज्ञ रामस्येव पित्राज्ञापालनरूपधर्मज्ञ ! ॥ ६२ ॥

रा० टी०—त्वयेति । हे धर्मज्ञ ! इदानीं यावद्रामवनस्थितिसमये राजत्वं राजधर्मं पालनमित्यर्थः अवलम्ब्यतां स्वीक्रियताम् । ननु किमर्थमेवं कृतमित्यत आह—त्वत्कृते त्वत्तः अन्यस्य देवादेः कृते कार्यार्थमिदं सर्वं मया कृतं निष्पादितम् ॥ ६३ ॥

गो० टी०—त्वयेति । धर्मज्ञ राजनीतिज्ञ ! ॥ ६२ ॥

५३ ] ति० टी०—मा शोकम् कुर्विति शेषः । अनामयं निरुपद्रवं राज्यं चैतत्त्वदधीनम् ॥ ६३ ॥

रा० टी०—मेति । यतो नगरी त्वदधीना अनामयं निरुपद्रवं राज्यं च त्वदधीनमतः शोकं मा संतापं च मा कुरु इति शेषः, धैर्यमाश्रय स्वीकुरु । त्वदधीनाशब्दः लिङ्गविपरिणामेनाप्यन्वेतीति ॥ ६४ ॥

गो० टी०—मा शोकमिति । अनामयं निरुपद्रवम् ॥ ६३ ॥

५४ ] ति० टी०—संकाल्य प्रेतसंस्कारेण संस्कृत्य ॥ ६४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

रा० टी०—तदिति । हे पुत्र ! वसिष्ठप्रमुखैः द्विजेन्द्रैः सहितस्त्वमदीनसत्त्वम् न दीनं क्षीणं सत्त्वं येन तं राजानं पालयं संकल्प्य वसिष्ठाद्युपदेशपूर्वकं गृहीत्वा आत्मानं स्वबुद्धिमभिषेचय राजनीतौ स्नापय निवेशयेत्यर्थः । राजशब्दो भावप्रधानः ॥ ६६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

गो० टी०—तदिति । संकाल्य संस्कृत्य ॥ ६४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

१ ] ति० टी०—अथ सर्वानर्थमूलत्वं मातुस्तद्वचनादेव ज्ञात्वा तामुपालभते—श्रुत्वेति । वृत्तमत्यगः ॥ १ ॥

रा० टी०—मातृवचनश्रवणानन्तरकालिकं भरतवृत्तान्तमाह—श्रुत्वेति । पितुः वृत्तं वृत्तान्तं विवासितौ च भ्रातरौ श्रुत्वा दुःखसंतप्तः स भरत इदमब्रवीत् ॥ १ ॥

गो० टी०—श्रुत्वेत्यादि । वृत्तम् अतीतं मृतमिति यावत् १

२ ] ति० टी०—हतस्य त्वयाऽपारदुःखं प्रापितस्य ॥ २ ॥

रा० टी०—वचनाकारमाह—किमिति । पित्रा विहीनस्य अथ पितृसमेन भ्रात्रा विहीनस्य अत एव शोचतः अत एव हतस्य निहतप्रायस्य मम राज्येन किं कार्यं न किमपीत्यर्थः ॥ २ ॥

गो० टी०—किं न्विति । कार्यं प्रयोजनं हतस्य भाग्यहीनस्य ॥ २ ॥

३ ] ति० टी०—दुःखे दुःखकरणे दृष्टान्तः व्रणे क्षारमिव क्षारं खरमूत्रसहितचूर्णम् ॥ ३ ॥

रा० टी०—भवत्या अनुष्ठितं नोचितमिति बोधयन्नाह—दुःखे इति । दुःखे पितृलोकान्तरगमनश्रवणजनितखेदे यद्दुःखं रामवियोगश्रवणजनितं खेदमकरोः तद्रूपे क्षारं लवणादीव अददाः । अयं पृथक् । राजानमिति । राजानं प्रेतभावस्थं लोकान्तरगमनकर्तृत्वेन मृतसदृशं रामं तापसं च कृत्वा

---

१ संकाल्येति रा. पाठः । २ तु पितरमिति गो. पाठः । ३ त्विति रा. पाठः । ४ अददा इति गो. पाठः ।

कुलस्य त्वमभावाय कालरात्रिरिवागता । अङ्गारमुपगृह्य स्म पिता मे नावबुद्धवान् ॥ ४ ॥
मृत्युमापादितो राजा त्वया मे पापदर्शिनि । सुखं परिहृतं मोहात्कुलेऽस्मिन्कुलपांसनि[1] ॥ ५ ॥
त्वां प्राप्य हि पिता मेऽद्य सत्यसंधो महायशाः । तीव्रदुःखाभिसंतप्तो वृत्तो[2] दशरथो नृपः ॥ ६ ॥
विनाशितो महाराजः पिता मे धर्मवत्सलः । कस्मात्प्रव्राजितो रामः कस्मादेव वनं गतः ॥ ७ ॥
कौसल्या च सुमित्रा च पुत्रशोकाभिपीडिते । दुष्करं यदि जीवेतां प्राप्य त्वां जननीं मम ॥ ८ ॥
नन्वार्योऽपि[3] च धर्मात्मा त्वयि वृत्तिमनुत्तमाम् । वर्तते गुरुवृत्तिज्ञो यथा मातरि वर्तते ॥ ९ ॥
तथा ज्येष्ठा हि मे माता कौसल्या दीर्घदर्शिनी । त्वयि धर्मं समास्थाय भगिन्यामिव वर्तते ॥ १० ॥
तस्याः पुत्रं महात्मानं[4] चीरवल्कलवाससम् । प्रस्थाप्य वनवासाय कथं पापे न शोचसे ॥ ११ ॥

---

कुलस्य अयोध्याजनसमूहस्य अभावाय रामवियोगदुःखहेतुकानवस्थित्यै त्वं कालरात्रिः उपागता प्राप्ता अत एव अङ्गारं प्रकाशस्वरूपरामाङ्कतेजः उपगृह्य तद्द्वारा साकेतं गत्वेत्यर्थः, मे पिता न अवबुद्धवान्न किंचिज्ज्ञापितवानित्यर्थः । सार्धश्लोक एकान्वयी स्मो हेतौ ॥ ३ ॥ ४ ॥

गो॰ टी॰—दुःख इति । दुःखे दुःखकरणात् व्रणक्षाराधानसादृश्यम् ॥ ३ ॥

४ ] ति॰ टी॰—कालरात्रिः संहाररात्रिः । मे पिताङ्गारमुपगृह्यालिङ्गय नावबुद्धवान् । स्मेति लोकोक्तौ ॥ ४ ॥

गो॰ टी॰—कुलस्येति । कालरात्रिः प्रलयकालोत्थितसर्वसंहारशक्तिः उपगृह्य आलिङ्गय ॥ ४–६ ॥

५ ] ति॰ टी॰—मे राजेति योजना । अस्मिन्कुले सुखं त्वया परिहृतम् ॥ ५ ॥

रा॰ टी॰—मृत्युमिति । कुलपांसिनि कुलपस्य कुलधर्मरक्षणस्य ज्येष्ठपुत्राभिषेकस्येत्यर्थः, अंसो निवर्तनमस्त्यस्याः तत्संबोधनं पापदर्शिनि राक्षसदोषदर्शनशीले त्वया राजा मृत्युं लोकान्तरगमनकर्तृत्वेन मृत्युसदृशमापादितः प्रापितः अत एव अस्मिन्कुले अयोध्याजनसमूहे मोहात्कर्तव्यविषयकाविवेकात्सुखं परिहृतं दूरीकृतम् ॥ ५ ॥

६ ] ति॰ टी॰—वृत्तोऽतीतः ॥ ६ ॥

रा॰ टी॰—त्वामिति । सत्यसंधो महायशाः वृद्धः ज्ञानवयोभ्यामधिको मे पिता त्वां प्राप्य अद्य अस्मिन्समये दुःखाभिसंतप्तः रामवियोगजनितदुःखाक्रान्तोऽभवदिति शेषः ॥ ६ ॥

७ ] ति॰ टी॰—कस्माद्विनाशितः, कस्मात्प्रव्राजितः, स वा कस्माद्वनं गतः निष्प्रयोजनमेवेत्यर्थः ॥ ७ ॥

रा॰ टी॰—विनाशित इति । धर्मवत्सलो मे पिता कस्माद्विनाशितः लोकान्तरप्रेषणत्वेनादर्शनं प्रापितः । ननु पुत्रवियोगात्स्वयमेवादर्शनं गत इत्यत आह—रामः प्रव्राजितः अयोध्यायाः निर्गमितः सन् वनं कस्माद्गतः प्राप्तः तं हेतुं वदेत्यर्थः ॥ ७ ॥

गो॰ टी॰—विनाशित इति । महाराजः कस्माद्विनाशितः रामः कस्मात्प्रव्राजित इति संबन्धः त्वया सर्वं निष्फलमेव कृतमिति भावः ॥ ७ ॥

८ ] ति॰ टी॰—न केवलं पितृभ्रातृपीडा, अपि तु मात्रोरपीत्याह—कौसल्येत्यादि । मम जननीं त्वामेव मृत्युं प्राप्य यदि जीवेतां तदपि दुष्करं दुर्लभमेव ॥ ८ ॥

रा॰ टी॰—इदानीं कौशल्यादेरतीव दुःखमिति बोधयन्नाह—कौशल्येति । मम जननीं त्वां प्राप्य यदि जीवेतां तर्हि दुष्करं ताभ्यां कृतमिति शेषः ॥ ८ ॥

गो॰ टी॰—कौसल्येति । यदि जीवेतां तदा दुष्करं जीवेतामिति संबन्धः ॥ ८ ॥

९ ] ति॰ टी॰—आर्यो रामः गुरुषु कर्तव्यां वृत्तिं जानाति तादृशः ॥ ९ ॥

रा॰ टी॰—तत्तदपराधहेतुका त्वत्कृतिर्न संभवतीत्याह—नन्विति । गुरुवृत्तिज्ञः पित्रादिसेवारीतिज्ञाता धर्मात्मा आर्यो रामः यथाऽनुत्तमां वृत्तिं मातरि कौसल्यायां वर्तते वर्तयति तथा त्वयि वर्तते वर्तयति ॥ ९ ॥

गो॰ टी॰—ननु त्विति । आर्यः ज्येष्ठः वृत्तिं शुश्रूषां वर्तते करोतीत्यर्थः मातरि वर्तते मातरि शुश्रूषते ॥ ९ ॥

१० ] ति॰ टी॰—राममात्रापि न कश्चिदपराधस्त्वयि कृत इत्याह—तथेति । दीर्घदर्शिनी स्वतो दूरकालभाव्यनर्थं जानती त्वयि धर्मं त्वच्चित्तानुवर्तनरूपं धर्ममास्थाय यथा भगिन्यां वर्तते तथा त्वयि वर्तत इत्यर्थः ॥ १० ॥

रा॰ टी॰—तथेति । दीर्घदर्शिनी दीर्घं सार्वकालिककुलधर्मं पश्यति जानाति तच्छीला मे माता कौशल्या धर्मं समास्थाय आश्रित्य भगिन्यामिव त्वयि वर्तते एतेन द्वयोरपराधसंभावना नास्तीति सूचितम् ॥ १० ॥

गो॰ टी॰—तथेति । दीर्घदर्शिनी दूरकालभाव्यनर्थदर्शिनी 'दूरानर्थस्य संदर्शी दीर्घदृष्टिः प्रकीर्तितः' इति ॥ १० ॥

११ ] ति॰ टी॰—तस्यास्तादृशधर्मज्ञायाः । चीरपर्यायं वल्कलं वासो यस्य तम् ॥ ११ ॥

---

१ पांसिनीति गो. रा. पाठः । २ वृद्ध इति रा. पाठः । ३ ननु त्वार्योऽपीति गो. पाठः । ४ कृतात्मानमिति गो. पाठः ।

अपापे[1]दर्शिनं शूरं कृतात्मानं यशस्विनम् । प्रव्राज्य चीरवसनं किं नु पश्यसि कारणम् ॥ १२ ॥
लुब्धाया विदितो मन्ये न तेऽहं राघवं यथा[2] । तथा ह्यनर्थो राज्यार्थं त्वया नीतो महानयम् ॥ १३ ॥
अहं हि पुरुषव्याघ्रावपश्यन्रामलक्ष्मणौ । केन शक्तिप्र[3]भावेण राज्यं रक्षितुमुत्सहे ॥ १४ ॥
तं हि नित्यं महाराजो बलवन्तं महौ[4]जसम् । उपा[5]श्रितोऽभूद्धर्मात्मा मेरुर्मेरुवनं यथा ॥ १५ ॥
सोऽहं कथमिमं भारं महाधुर्य[6]समुद्यतम् । दम्यो धुरमिवासाद्य सहेयं केन चौजसा ॥ १६ ॥
अथवा मे भवेच्छक्तियोगै[7]र्बुद्धिबलेन वा । सकामां न करिष्यामि त्वामहं पुत्रगर्धिनीम् ॥ १७ ॥

रा० टी०—तस्या इति । पापे राक्षसार्थं वनवासाय तस्याः कौशल्यायाः पुत्रं प्रस्थाप्य कथं न शोचसि ॥ ११ ॥

गो० टी०—तस्या इति । तस्याः तादृशधर्मयुक्तायाः॥ ११॥

१२ ] ति० टी०—किं कारणं फलं पश्यसि ॥ १२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अपापेति । पापं स्वाश्रितजनापराधं पश्यति तच्छीलस्तद्भिन्नस्तं स्वाश्रितापराधविषयकज्ञानाभाववन्तमित्यर्थः, यशस्विनं रामं प्रव्राज्य किंतु किंचित्कारणं पश्यसि जानासि ॥ १२ ॥

गो० टी०—अपापदर्शनमिति । किंतु पश्यसि कारणं किं फलं पश्यसीत्यर्थः । फलं हि प्रयोजकतया कारणं न किमपीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—अहं राघवं प्रति यथा यादृशो यादृशभक्तिमांस्तथा लुब्धाया राज्यलुब्धायास्ते न विदितो मन्ये । तत्र हेतुः—तथाहि तत एव राज्यार्थं महानयमनर्थः पितृनाशराज्याईज्येष्ठवनवासादिरूप आनीतः संपादितः ॥ १३ ॥

रा० टी०—लुब्धाया इति । यथा येन प्रकारेणाहं राघवं सेवे इति शेषः तथा लुब्धायाः रामप्रीतिविषयकलोभविशिष्टायास्ते तव विदितः ज्ञातोऽस्ति अतः राज्यार्थं मद्राज्यनिमित्तं त्वया अनर्थो न नीतः प्रापितः इत्यहं मन्ये निश्चिनोमि एतेन प्रव्राजनकारणं न विज्ञायते इति ध्वनितम् ॥ १३ ॥

गो० टी०—लुब्धाया इति । अहं राघवं प्रति यथा यादृशप्रकारयुक्तः तथा लुब्धायास्ते लुब्धया त्वया न विदित इति मन्ये । अविदितत्वे हेतुमाह—तथाहीति । राज्यार्थं मम राज्यार्थं महानयमनर्थस्त्वया आनीतो हि आनीतः खलु संपादितः खलु १३

१४ ] ति० टी०—उक्तानर्थमात्रमेव त्वदुश्चेष्टाफलम्, न तु त्वदिष्टसिद्धिरित्याह—अहं हीति । न कथमपीति भावः॥१४॥

रा० टी०—ननु राज्यस्य स्वतः प्राप्तत्वात्स्वीक्रियतां तदित्यत आह—अहमिति । रामलक्ष्मणावपश्यन् केन शक्तिप्रभावेण किंनिष्ठशक्तिसत्तया रक्षितुमुत्सहे एतेन तावेव मच्छक्तिरिति सूचितम् ॥ १४ ॥

गो० टी०—राघवं प्रत्यहं यादृश इत्युक्तं विवृणोति—अहमिति । अपश्यन् हि अपश्यन्नेव 'हि हेताववधारणे' इत्यमरः केन शक्तिप्रभावेन शक्त्यतिशयेन भ्रातृसंपत्तिरेव मम शक्त्यतिशय इति भावः ॥ १४ ॥

१५ ] ति० टी०—न केवलं ममैव रामशक्त्यपेक्षा, किंतु पितुरपीत्याह—तं हीति । मेरुः स्वजनितमेरुवनं यथा स्वरक्षणार्थमाश्रितः, अन्यथा परैराक्रमणीय एव स्यात्, एवं राजा इहामुत्रार्थसिद्धये राममाश्रितः ॥ १५ ॥

रा० टी०—इदानीं न केवलं ममैव शक्तिः सः किंतु मत्पितुरपीति बोधयन्नाह—तमिति । तं रामं नित्यं सर्वकालमुपाश्रितः सेवमानो महाराजोऽभूत्तत्र दृष्टान्तः मेरुः सुमेरुः मेरुवनं स्ववृत्तिवृक्षसमूहमिव ॥ १५ ॥

गो० टी०—न केवलं ममैव रामापेक्षा पितुरपीत्याह—तमिति । मेरुर्मेरुवनं यथा मेरुजनितमेरुवनस्य तद्रक्षकत्वं परैराक्रमितुमशक्यत्वसंपादनेन ॥ १५ ॥

१६–१७ ] ति० टी०—सोऽहं ज्येष्ठरामैकबलः भारं राज्यभारं महाधुर्येण समुद्यतं धृतं धुरमासाद्य दम्यो वत्सतर इव कथं सहेयम्, केन चौजसा बलेन सहेयं रामं विनेति शेषः । तर्हि त्वं षण्ढकल्पस्तत्राह—अथवेति । शक्ती राज्यभरणसामर्थ्यम् । योगैः 'योगः संहननोपायध्यानसंगतियुक्तिषु' इत्युक्तयोगैर्बुद्धियुक्तमहाप्राणत्वलक्षणबलेन यद्यपि भवेत्संभावितैवाथापि पुत्रगर्धिनीं पुत्रराज्याभिलाषवतीं त्वां सकामां पूर्णकामनां न करिष्यामि अन्यथा त्वमिवाहमपि लोके दूषितः स्यामिति भावः ॥ १६ ॥ १७ ॥

रा० टी०—स इति । इमं भारं राज्यभरं महाधुर्यसमुद्यतं महाधुर्याद्बलीवर्दात्समुद्यतमुत्तारितं धुरं भारं दम्यः अल्पवत्स इव सः रामलक्ष्मणाभ्यां रहितोऽहं केन ओजसा बलेन सहेयं महाधुर्यसमुद्यतमिति सामान्ये नपुंसकम् 'वहेयम्' इति भूषणपाठः । 'दम्यवत्सतरौ समौ' इत्यमरः ॥ १६ ॥

गो० टी०—केन शक्तिप्रभावेनेत्युक्तमर्थं सदृष्टान्तमाह—स इति । अहं बालः इमं प्रबुद्धपितृधृतं भारं राज्यभारं महाधुर्यो महाबलीवर्दः धुरं वहतीति धुर्यः "धुरो यड्ढकौ" इति यत् प्रत्ययः तेन समुद्धृतं धुरं भारं पुंस्त्वमार्षं दम्यः तरुणवत्स इव 'तर्णकः स्मर्यते वत्सो दम्यो वत्सतरश्च सः' इति हलायुधः । 'दम्यवत्सतरौ समौ' इत्यमरश्च । केनौजसा केनावष्टम्भेन 'ओजोऽवष्टम्भबलयोः' इति वैजयन्ती । कथं केन प्रकारेण वहेयम्॥१६॥

रा० टी०—अथवेति । योगैः स्वव्यापारैः बुद्धिबलेन प्रयत्नेन वा शक्तिः राक्षसविनाशनसामर्थ्यं यदि भवेत्तदा पुत्रगर्धिनीं

१ दर्शनमिति गो. पाठः । २ प्रत्यंति गो. तथेति रा. पाठः । ३ प्रभावेनेति गो. पाठः । ४ महाबल इति गो. पाठः । ५ अपाश्रित इति गो. । ६ समुद्धृतमिति गो. पाठः । ७ वहेयमिति गो. पाठः ।

न मे विकाङ्क्षा जायेत त्यक्तुं त्वां पापनिश्चयाम् । यदि रामस्य नावेक्षा त्वयि स्यान्मातृवत्सदा ॥ १८ ॥
उत्पन्ना तु कथं बुद्धिस्तवेयं पापदर्शिनी । साधुचारित्रविभ्रष्टे पूर्वेषां नो विगर्हिता ॥ १९ ॥
अस्मिन्कुले हि सर्वेषां ज्येष्ठो राज्येऽभिषिच्यते । अपरे भ्रातरस्तस्मिन्प्रवर्तन्ते समाहिताः ॥ २० ॥
न हि मन्ये नृशंसे त्वं राजधर्ममवेक्षसे । गतिं वा न विजानासि राजवृत्तस्य शाश्वतीम् ॥ २१ ॥
सततं राजपुत्रेषु ज्येष्ठो राजाभिषिच्यते । राज्ञामेतत्समं तत्स्यादिक्ष्वाकूणां विशेषतः ॥ २२ ॥

पुत्रविषयकोत्कटेच्छावतीं सकामां राक्षसविनाशविषयकेच्छावतीं त्वां न करिष्यामि तत्कामापूर्त्या पीडयिष्यामि रामगमनात्पूर्वमेव राक्षसाग्निहनिष्यामीत्यर्थः । हिंसार्थककृधातोर्लट् तदुपात्तभविष्यत्त्वस्याविवक्षा ॥ १७ ॥

गो० टी०-अथवेति । योगैः सामदानाद्युपायैः 'योगः सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । बुद्धिबलेन ग्रहणधारणाद्यष्टाङ्गयुक्तबुद्धिबलेन वा मे शक्तिर्भवेत् राजपुत्रत्वेन संभावितत्वात् तथापि पुत्रगर्धिनीं पुत्रप्रयोजनाभिलाषवतीं त्वां सकामां न करिष्यामि गर्हिताभिलाषत्वादिति भावः ॥ १७ ॥

१८ ] ति० टी०-किं च 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन तव विवासनमेव सांप्रतम्, तथापि रामस्य त्वयि मातृवद्व्यवहारान्न कर्तुं शक्यमित्याह-नेति । त्वां त्यक्तुं विकाङ्क्षा इच्छाभावो नैव जायेत, यदि रामस्यमातृवदवेक्षा त्वयि न स्यात् ॥ १८ ॥

रा० टी०-रामप्रीतिविषयीभूतमेव मम प्रीतिविषयीभूतमिति बोधयन्नाह-नेति । सदा नित्यं त्वयि रामस्य मातृवदवेक्षा दृष्टिर्न स्यात्तर्हि पापनिश्चयां पापेषु पापविशिष्टासुरविनाशेषु निश्चयो यस्याः सा तां राक्षसनिरासहेतुकरामप्रव्राजनकर्त्रीमित्यर्थः त्वां त्यक्तुं विकाङ्क्षा काङ्क्षाभावः मे न जायेत त्याज्यमेवेत्यर्थः ॥ १८ ॥

गो० टी०-नेति । रामस्य त्वयि मातृवत् मातरीव सदा अपेक्षा भक्तिपूर्वकेक्षणं यदि न स्यात्तदानीं पापनिश्चयां त्वां त्यक्तुं मे विकाङ्क्षा काङ्क्षाराहित्यं न जायेत काङ्क्षा जायेतैव रामस्य त्वयि मातृवत् प्रतिपत्तिसद्भावात् त्वां त्यक्तुं नेच्छामीत्यर्थः ॥ १८ ॥

१९ ] ति० टी०-इयं बुद्धिः कनिष्ठस्याभिषेकबुद्धिः ॥ १९ ॥

रा० टी०-उत्पन्नेति । पापदर्शिनि पापाचरणशीले ! अत एव साधुचरित्रात्समीचीनाचरणात् विभ्रष्टे राक्षसे निमित्तभूते इयमकालिका अत एव नः पूर्वेषां दशरथादीनां विगर्हिता तव बुद्धिः प्रव्राजनविषयकनिश्चयः कथमुत्पन्ना ॥ १९ ॥

गो० टी०-उत्पन्नेति । नः पूर्वेषां पूर्वैः विगर्हिता इयं बुद्धिः ज्येष्ठे विद्यमाने कनिष्ठस्य राज्यप्रार्थनाविषया बुद्धिः तव कथमुत्पन्ना ॥ १९ ॥

२० ] ति० टी०-अस्या बुद्धेः पूर्वगर्हितत्वमेव दर्शयति-अस्मिन्निति । अस्मदीये कुले सर्वेषां ज्येष्ठोऽभिषिच्यते, न त्वापेक्षिकज्येष्ठः अपरे भ्रातरस्तस्मिन्समाहितास्तदधीनाः प्रवर्तन्ते एवं किल नः सर्वेषामाचार इति शेषः । स्मरति च मनुः-'ज्येष्ठ एव तु गृह्णीयात्सकलं पैतृकं धनम् । अन्ये तमनुजीवेयुर्यथैव पितरं तथा ॥' इति ॥ २० ॥

रा० टी०-ननु राज्ययोग्यस्य तवेह विद्यमानत्वात्क्रमनेऽपि का क्षतिरित्यत आह-अस्मिन्निति । अस्मिन्नस्मदीये कुले सर्वेषां मध्ये ज्येष्ठो राज्येऽभिषिच्यते अपरे कनिष्ठभ्रातरः समाहिता एकाग्रचित्ताः सन्तः तस्मिन् ज्येष्ठे प्रवर्तन्ते अनुवर्तन्ते । तथा च मनुः 'ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः । शेषास्तमनुजीवेयुर्यथैव पितरं तथा ' इति ॥ २० ॥

गो० टी०-अस्मिन्निति । पूर्वेषामिति निर्धारणे षष्ठी अपरे कनिष्ठा भ्रातरः तस्मिन्समाहिताः प्रवर्तन्ते पितृवत्तच्चित्तानुवर्तने सावधाना जीवन्तीत्यर्थः । तथाह मनुः 'ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः । शेषास्तमनुजीवेयुर्यथैव पितरं तथा ' इति ॥ २० ॥

२१ ] ति० टी०-राजधर्मं नावेक्षसे न जानासि राजवृत्तस्य राजधर्मस्य शाश्वतीमव्यभिचारितां गतिं कल्पमपि न जानासीति मन्ये ॥ २१ ॥

रा० टी०-नेति । नृशंसे घातुके राक्षसे ! त्वं द्विपरं राजधर्ममेव अवेक्षसे दुष्टवधः कर्तव्य इत्येव जानासीत्यर्थः । राजवृत्तस्य राजवृत्तान्तस्य शाश्वतीं सार्वकालिकीं गतिं रीतिं नैव विजानासि इति अहं न मन्ये सर्वं विजानासीति मन्ये इत्यर्थः । एतेन जानत्यैव त्वया विपरीतं कृतमिति ध्वनितम् ॥ २१ ॥

गो० टी०-नेति । राजधर्मं राज्ञां विहितं धर्मं नावेक्षसे नाद्रियसे अथवा राजवृत्तस्य राजसमाचारस्य गतिं प्रकारं वा न जानासीति मन्ये ॥ २१ ॥

२२ ] ति० टी०-एतद्राज्ञां सर्वराज्ञां समम्, यद्राजपुत्रेषु ज्येष्ठस्याभिषेकः इक्ष्वाकूणां तज्ज्येष्ठाभिषेचनं विशेषतः स्यात्संभाव्यते । 'राज्ञां सर्वम्' इति पाठे सर्वमित्यत्र छान्दसी षष्ठ्यर्थे द्वितीया सर्वेषामित्यर्थः ॥ २२ ॥

रा० टी०-विपरीतत्वमेव प्रकटयितुमाह-सततमिति । राजपुत्रेषु मध्ये ज्येष्ठो राजा राजत्वेन अभिषिच्यते एतन्मतं राज्ञां सर्वराजानां समं तुल्यं सततं सार्वकालिकं च इक्ष्वाकूणां तु एतन्मतं विशेषतः विशेषेण ॥ २२ ॥

गो० टी०-न केवलमस्माकमेवायं धर्मः किंतु सर्वेषा-

१ नापेक्षेति गो. पाठः । २ दर्शिनि इति गो. रा. पाठः । ३ पूर्वेषामिति गो. पाठः । ४ वृत्ते हीति गो. पाठः । ५ सर्वराजानामिति युक्तं दृश्यते ।

तेषां धर्मैकरक्षाणां कुलचारित्रशोभिनाम् । अद्य चारित्रशौटीर्यं त्वां प्राप्य विनिवर्तितम् ॥ २३ ॥
तवापि सुमहाभागे जनेन्द्रकुलपूर्वके । बुद्धिमोहः कथमयं संभूतस्त्वयि गर्हितः ॥ २४ ॥
न तु कामं करिष्यामि तवाहं पापनिश्चये । यया व्यसनमारब्धं जीवितान्तकरं मम ॥ २५ ॥
एष त्विदानीमेवाहमप्रियार्थं तवानघे । निवर्तयिष्यामि वनाद्भ्रातरं स्वजनप्रियम् ॥ २६ ॥
निवर्तयित्वा रामं च तस्याहं दीप्ततेजसः । दासभूतो भविष्यामि सुस्थितेनान्तरात्मना ॥ २७ ॥

मपीत्याह—सततमिति । राजवृत्ते विचार्यमाण इति शेषः । एतद्राज्ञां सर्वेषां समम् इक्ष्वाकूणां तु तज्ज्येष्ठाभिषेचनं विशेषतः स्यात् अस्खलिताचारत्वादिति भावः ॥ २२ ॥

२३ ] ति० टी०—धर्मेणैकेन रक्षा रक्षणं येषां तेषां धर्मैकरक्षाणां धर्ममेकं रक्षन्ति तेषां वा कुलक्रमागतचारित्रेण शोभावतां यच्चारित्रविषयकं शौटीर्यं गर्वस्तदद्य त्वां प्राप्य त्वत्संबन्धान्निवर्तितमित्यर्थः ॥ २३ ॥

रा० टी०—तेषामिति । धर्मैकरक्षाणा धर्मैकेण मुख्यधर्मेण रक्षा रक्षणं येषां तेषां किंच धर्मैकं मुख्यधर्मं सदाचारं रक्षन्ति तेषामत एव कुलचारित्रेण कुलोचिताचरणेन शोभिनां चारित्रशौण्डीर्यं चारित्रेण प्रवृद्धं कुलं त्वां प्राप्य विनिवर्तितम् । तव विपरीताचरणेन परिणतम् ॥ २३ ॥

गो० टी०—तेषामिति । धर्मेण एका रक्षा येषां ते तथा कुलचारित्रशोभिनां कुलक्रमागतचरित्रशोभिनाम् 'चरित्रं चरितं शीलं चारित्रं च समं मतम्' इति हलायुधः । चारित्रशौण्डीर्यं चरित्रगर्वितत्वं चरित्रजनितसमुन्नतत्वमिति यावत् त्वां प्राप्य विनिवर्तितं त्वत्संबन्धान्निवृत्तमित्यर्थः ॥ २३ ॥

२४ ] ति० टी०—तथा त्वय्यपि महाकुलप्रसूतायामेवंविधबुद्धिकारणं न पश्यामीत्याह—तवापीति । हे सुमहाभागे ! तदुपपादकं विशेषणं जनेन्द्रकुलपूर्वके इति । जनेन्द्रः कैकेयकुलकूटस्थः पूर्वकः कारणं यस्यास्तथाभूते अतो महाकुलप्रसूतायास्तव गर्हितोऽयं बुद्धिमोहस्त्वयि कथं संभूत इत्यन्वयः । 'जनेन्द्राः कुलपूर्वगाः' इति पाठे तव पितृवंशराजानोऽपि कुलपूर्वं कुलज्येष्ठं गच्छन्ति, राजत्वेन तादृशा इत्यर्थः । शेषं प्राग्वत् ॥ २४ ॥

रा० टी०—इदं तवाचरणं मातृवंशाचरणस्यापि विरोधीति बोधयन्नाह—तवेति । शोभनो महाभागः अत्यैश्वर्यं यस्मिंस्तस्मिन् जनेन्द्रकुलपूर्वके जनेन्द्रः केकयराजविशिष्टः; स एव कुलं कुलाचारः पूर्वं मुख्यमित्यर्थः । तस्मिन्वंशे प्रसूतायास्तव गर्हितः सज्जनैर्निन्दितः अयं बुद्धिमोहस्तु कथं संभूतः अपि अनन्वितमेतत् । प्रसूताया इति सप्तमीमहिम्ना कथं 'सुमहाभागा जनेन्द्राः कुलपूर्वगाः' इति भूषणपाठः॥२४॥

गो० टी०—स्वकुलचारित्रक्रममभिधाय मातृकुलाचारक्रममप्याह—तवेति । जनेन्द्राः राजानः कुलपूर्वगाः कुलपूर्वाः कुलज्येष्ठाः तान् गच्छन्तीति कुलपूर्वगाः ज्येष्ठाभिषेचनशीला इत्यर्थः सुमहाभागाः सुचरित्राः ॥ २४ ॥

२५ ] ति० टी०—सर्वथा त्वद्बुद्धिमहं नानुवर्तिष्य इत्याह—न त्विति ॥ २५ ॥

रा० टी०—नत्विति । यया त्वया जीवितान्तकरं पितृपालनविध्वंसजनितं मम व्यसनं दुःखमारब्धं तस्यास्तव पापनिश्चये राक्षसे तद्विषयकं काममिच्छां न करिष्यामि निवर्तयिष्यामि विक्षेपार्थककृधातोर्लृट् ॥ २५ ॥

गो० टी०—फलितमाह—न त्वित्यादिना ॥ २५ ॥

२६ ] ति० टी०—न केवलं त्वदिष्टाकरणम् । किं त्वनिष्टमपि करिष्यामीत्याह—एष इति । अप्रियार्थं तत्संपादनार्थम् ॥ २६ ॥

रा० टी०—ननु तर्हि किमर्थं बहु वदसीत्यत आह—एष इति । इदानीं तु तव अप्रियार्थं त्वद्विषयकसर्वाप्रीतिनिष्पत्त्यर्थमनघं स्वाश्रितजनाघनिवर्तकमत एव स्वजनप्रियं भ्रातरं रामं वनान्निवर्तयिष्यामि एतेन त्वदीप्सितराक्षसवधः कालान्तरे भवितेति सूचितम् ॥ २६ ॥

गो० टी०—न केवलमिष्टाकरणम् अनिष्टमपि तव करोमीत्याह—एष इति । एष इत्यविलम्बोक्तिः तव मद्व्याजेन राज्यं भोक्तुकामायाः ॥ २६ ॥

२७ ] ति० टी०—दासभूतो दासत्वं प्राप्तः मद्राज्येच्छोस्तवानिष्टसंपादनार्थमित्याशयः । न केवलं त्वत्कोपादेवैतदाचरणम्, अपि तु परमार्थत एवेत्याह—सुस्थितेनेति सुखप्रतिष्ठेन चित्तेनेत्यर्थः । ज्येष्ठानुवर्तनस्यैव शाश्वतः परमहितत्वादिति भावः ॥ २७ ॥

रा० टी०—निवर्तयित्वेति । रामं निवर्तयित्वा निवर्त्य तस्य रामस्य दासभूतः नित्यं दासत्वं प्राप्तः सुस्थितेनान्तरात्मना मनसा भविष्यामि स्थास्यामि ॥ २७ ॥

गो० टी०—न केवलं निवर्तनं दासश्च तस्य स्यामित्याह—निवर्तयित्वेति । दासभूतः छत्रचामरादिधारणेन किंकरवृत्तिर्भविष्यामि । इदं च न त्वयि कोपात् किंतु स्वरूपेणेत्याशयेनाह—सुस्थितेनेति सुप्रतिष्ठितेनान्तःकरणेनेत्यर्थः ॥ २७ ॥

१ अत्रेति गो. पाठः । २ शौण्डीर्यमिति गो. रा. पाठः । ३ भागा जनेन्द्राः कुलपूर्वगा इति गो. पाठः । ४ बुद्धेरिति गो. पाठः । ५ त्वयेति गो. पाठः । ६ अनघमिति गो. रा. पाठः । ७ राजा इति युक्तमिति भाति । ८ विक्षेप इति भाति ।

इत्येवमुक्त्वा भरतो महात्मा प्रियेतरैर्वाक्यगणैस्तुदंस्ताम् ।
शोकार्दितश्चापि ननाद भूयः सिंहो यथा मन्दरकन्दरस्थः ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुःसप्ततितमः सर्गः ।

कैकेयीदुश्चेष्टानुस्मरणेन समाविष्टकोपो भरतः पुनस्तां विनिन्द्य कौसल्यायाः पुत्रशोकासहिष्णुत्वे कामधेनुवृत्तं दृष्टान्ततया संवर्ण्य रामं वनादानीय राज्येऽभिषिच्य तत्प्रतिज्ञातवनवासमहं पूरये इति निश्चिन्वन्नेव शोकातिरेकात्प्राप्तमूर्छः पपात ।

तां तथा गर्हयित्वा तु मातरं भरतस्तदा । रोषेण महताविष्टः पुनरेवाब्रवीद्वचः ॥ १ ॥
राज्याद्भ्रंशस्व कैकेयि नृशंसे दुष्टचारिणि । परित्यक्तासि[3] धर्मेण मा मृतं रुदती भव ॥ २ ॥
किं नु तेऽदूषयद्रामो राजा वा भृशधार्मिकः । ययोर्मृत्युर्विवासश्च त्वत्कृते तुल्यमागतौ ॥ ३ ॥
भ्रूणहत्यामसि प्राप्ता कुलस्यास्य विनाशनात् । कैकेयि नरकं गच्छ मा च तातसलोकताम् ॥ ४ ॥

२८ ] ति० टी०—प्रियेतरैर्दुःखकरैः ॥ २८ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

रा० टी०—इतीति । अप्रियेतरैः अप्रियसदृशैः वाक्यगणैः तां मातरं तुदन्निव इति वचनं भरत उक्त्वा शोकार्दितः सन् मन्दरकन्दरस्थः सिंह इव भूयोऽधिकं ननाद ' पर्वतगह्वरस्थः ' इति भूषणपाठः ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

गो० टी०—इतीति । तुदन् व्यथयन् पर्वतगह्वरस्थः पर्वतगुहास्थः गुहास्थत्वे संतोषातिशयात् सिंहस्य नादातिशय इत्यभिप्रायेण विशेषणमिदम् ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने ऽयोध्याकाण्डव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

१ ] ति० टी०—तामिति ॥ १ ॥

रा० टी०—रोषावेशकालप्रभृतभरतवृत्तान्तमाह—तामिति । तां मातरं गर्हयित्वा अनुचितं त्वया कृतमित्याद्युक्त्वा महता प्रवृद्धेन रोषेण अभीप्सितरामाभिषेकनिवृत्तिश्रवणजनितकोपेन आविष्टो भरतः अब्रवीत् ॥ १ ॥

गो० टी०—एवं सामान्यतो मृदुतया निन्दित्वा पुनस्तदपराधस्मरणेन प्रवृद्धरोषः क्रूरं निन्दति—तामित्यादिना । तथा मृदुतया ॥ १ ॥

२ ] ति० टी०—भ्रंशस्व भ्रष्टा भव वनं गच्छेत्यर्थः । मृतं भर्तारमुद्दिश्य रुदती मा भव धर्मत्यागेन भार्यापतिभावस्य नष्टत्वादिति भावः । केचित्तु—परित्यक्तधर्मेणस्ते पुत्रजीवनमसंभावितम्, अतो मा मां मृतं दृष्ट्वा रुदती भवेत्यर्थः । तव पुत्रमरणकृतः शोकोऽस्त्वित्ति भाव इत्याहुः ॥ २ ॥

रा० टी०—वचनाकारमाह—राज्यादिति । नृशंसाः क्रूराः दास्यः सन्ति यस्याः तत्संबोधनम् अत एवदुष्टचारिणि दुष्टानां दुर्मन्त्राणां चारः संचारोऽस्त्यस्यास्तत्संबोधनं हे कैकेयि ! धर्मेण सेवकरीत्या ऋतं युक्तं मां राज्याद्भ्रंशस्व असि मत्कर्तृकगमने सति त्वमपि रुदती भव असीति गत्यर्थकासधातुप्रकृतिकक्विबन्तप्रकृतिकसप्तम्यन्तम् ॥ २ ॥

गो० टी०—राज्यादिति । भ्रंशस्व भ्रष्टा भव त्वन्मातृवत्त्वमपि वनं प्रविशेत्यर्थः । मा मृतं रुदती भव प्राणहानिकरकार्यकरणान्मां मृतं मत्वा रोदनं कुर्वित्यर्थः । यद्वा मृतं भर्तारमुद्दिश्य रुदती च मा भव पतिभार्याभावस्य गतत्वादिति भावः ॥ २ ॥

३ ] ति० टी०—अदूषयत्त्वत्संबन्धि किं गुणादिकमदूषयत् । तुल्यं युगपत् ॥ ३ ॥

रा० टी०—किमिति । ययोः मृत्युः प्राकृतागम्यलोकान्तरगमनं विवासश्च तुल्यमेककालावच्छेदेन आगतौ प्रापितौ सः रामः राजा वा ते किमदूषयत् ॥ ३ ॥

गो० टी०—किमिति । ते किं न्वदूषयत् तव संबन्धि किंतु गुणचारित्रादिकमदूषयत् तुल्यं युगपत् ॥ ३ ॥

४ ] ति० टी०—तस्माद्भ्रूणहत्यां शास्त्रध्येतृब्रह्महत्यां प्राप्तासि उत्तमक्षत्रियस्य राज्ञो भर्तुर्वधाद्रामादीनां विवासनाच्चेति भावः । नरकं गच्छ प्राप्तकाले लोट् । नरक एव ते न्याय्यप्राप्त इत्यर्थः ॥ ४ ॥

रा० टी०—भ्रूणेति । असि प्रव्राजनरूपायां भ्रूणहत्यां बालताडने प्राप्ता अत एव अस्य कुलस्य अयोध्यावासिजनसमूहस्य विनाशनात् विनाशमतिखेदमतति प्रापयति सा त्वं तातसलोकतां गच्छ प्राप्नुहि नरकं नरकसदृशदुःखितस्वजनदर्शनजनितखेदं मा गच्छ ' भ्रूणः स्त्रीगर्भडिम्भयोः ' इति मेदिनी । असीतिगत्यर्थकासधातुप्रकृतिकक्विबन्तप्रकृतिकसप्तम्यन्तं नरकशब्दः आधारक्विबन्तप्रकृतिकर्तृक्विबन्तः ॥ ४ ॥

गो० टी०—भ्रूणहत्यामिति । भ्रूणहत्यां भ्रूणहत्यातुल्यपापं सलोकतां समानलोकत्वम् ॥ ४ ॥

१ तदिति रा. पाठः । २ पर्वतगह्वरस्थ इति गो. पाठः । ३ चेति गो. पाठः । ४ भर्तुरिति गो. पाठः ।

यत्त्वया हीदृशं पापं कृतं घोरेण कर्मणा । सर्वलोकप्रियं हित्वा ममाप्यापादितं भयम् ॥ ५ ॥
त्वत्कृते मे पिता वृत्तो रामश्चारण्यमाश्रितः । अयशो जीवलोके च त्वयाहं प्रतिपादितः ॥ ६ ॥
मातृरूपे ममामित्रे नृशंसे राज्यकामुके । न तेऽहमभिभाष्योऽस्मि दुर्वृत्ते पतिघातिनि ॥ ७ ॥
कौसल्या च सुमित्रा च याश्चान्या मम मातरः । दुःखेन महताविष्टास्त्वां प्राप्य कुलदूषिणीम् ॥ ८ ॥
न त्वमश्वपतेः कन्या धर्मराजस्य धीमतः । राक्षसी तत्र जातासि कुलप्रध्वंसिनी पितुः ॥ ९ ॥
यत्त्वया धार्मिको रामो नित्यं सत्यपरायणः । वनं प्रस्थापितो [1]वीरः पितापि[2] त्रिदिवं गतः ॥ १० ॥
यत्प्रधानासि तत्पापं मयि पित्रा विना कृते । भ्रातृभ्यां च परित्यक्ते सर्वलोकस्य चाप्रिये ॥ ११ ॥

५ ] ति० टी०—ईदृशं भर्तृमरणरामविवासनरूपम् । घोरेण कर्मणा कर्मणो घोरत्वं च सामान्यविषयत्वद्वयस्येदृशविशेषविषयत्वकरणम् । सर्वलोकप्रियं रामं हित्वा विवास्य भयं कैकेयीपुत्रोऽयं तद्वदेव दुष्टस्वभाव इति लोककलङ्करूपम्, यद्वा त्वद्दोषतो रामो मां त्यक्ष्यतीति भयम्, यद्वा महापातकयुतायास्तव संसर्गेण पञ्चमपातकित्वरूपभयम् ॥ ५ ॥

रा० टी०—यदिति । घोरेण क्रूरेण कर्मणा राक्षसाचरणेन हेतुना सर्वलोकप्रियं रामं हित्वा वनं प्रापय्य ईदृशं पापं पापानुमापकं दुःखं यत्त्वया कृतं संपादितं तेन ममापि भयं कर्तव्यविषयकसंशयजनितभीतिः आपादितं प्रापितम् ॥ ५ ॥

गो० टी०—यदिति । घोरेण कर्मणा घोरेण व्यवसायेन ईदृशं रामविवासनभर्तृमरणरूपं यत्पापं कृतं तेन सर्वलोकप्रियं रामं त्यक्त्वा स्थितस्य ममापि भयमापादितं त्वत्कृतं पापं ममापि भयमजनयत् न तु राज्यमिति भावः ॥ ५ ॥

६ ] ति० टी०—तदेवाह—त्वदिति । जीवलोके च । चात्परलोके च प्रतिपादितः प्रापितः ॥ ६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—त्वदिति । त्वत्कृते त्वदर्थं रामः अरण्यमाश्रितः अत एव मे पिता आवृत्तः लोकान्तरकर्तव्यकर्मणि प्रवृत्तः अत एव अयशः भरतमात्रा राजेप्सितो विध्वंसितः इत्याकारकं दुर्यशः जीवलोके त्वयाऽहं प्रतिपादितः प्रापितः ॥ ६ ॥

गो० टी०—त्वत्कृत इति । अयशः मातृमुखेन ज्येष्ठं विवास्य राजानं नाशितवानित्येवंविधं प्रतिपादितः प्रापितः ॥ ६ ॥

७–८ ] ति० टी०—न तेऽहमभिभाष्यः मत्संभाषणं त्वया न कार्यमित्यर्थः ॥ ७ ॥ ८ ॥

रा० टी०—इदानीं राज्यपालनार्थमहं नाज्ञापितव्य इति बोधयन्नाह—मात्रिति । मातृरूपे विपर्ययत्वाविशिष्टे अमित्रे जननीद्वारा रामवियोगहेतुत्वेन मित्ररहिते अनृशंसे क्रूरविरोधिनि अराजि राजरहिते अकामुके मदिच्छाया अविषये दुर्वृत्ते दुःखेन वृत्तं वर्तनं यस्य तस्मिन्पतिघातिनि स्वामिपीडादायिनि पालनेऽहं न अभिभाष्यः आज्ञापयितव्योऽस्मि ॥ ७ ॥

गो० टी०—मातृरूप इति । राज्यकामुक इति अमैथुनेच्छातो न ङीप् न तेऽहमभिभाष्य इति "कृत्यानां कर्तरि वा" इति षष्ठी मत्संभाषणं त्वया न कर्तव्यमित्यर्थः ॥ ७ ॥

रा० टी०—कौशल्येति । कुलदूषाः अयोध्याजनसमूहदूषका जना भृत्यादयः सन्ति अस्याः तां त्वां प्राप्य कौशल्यादयो महता दुःखेनाविष्टा व्याप्ताः सन्तीति शेषः ॥ ८ ॥

गो० टी०—कौसल्येति । याश्चान्या इत्यत्र ता इत्यध्याहारः ॥ ८ ॥

९ ] ति० टी०—न त्वमश्वपतेः कन्या तत्कुलोचिता कन्या न भवसीत्यर्थः । पितुरित्यस्य ममेति शेषः, यद्वा स्वपितुः कुलस्य प्रध्वंसिनी दुश्चरित्रत्वव्यवस्थापिका ॥ ९ ॥

रा० टी०—त्वद्भृत्यवर्गस्यैवायमपराध इति बोधयन्नाह—नेति । धर्मराजस्य धर्मेणैव शोभमानस्य धीमतः अश्वपतेः कन्या त्वं पितुर्दशरथस्य कुलप्रध्वंसिनी नासि ननु तर्हि का प्रध्वंसिनीत्यत आह—तत्र रामाभिषेकसमये राक्षसी अतिक्रूरकर्मकारिकात्वेन राक्षसीसदृशी काचित्सखी जाता प्रादुर्भूता प्राप्तेत्यर्थः । तेन तयैव अभिषेकध्वंसः कारित इति ध्वनितम् ॥ ९ ॥

गो० टी०—नेति । नत्वमश्वपतेः कन्या तत्कुलोचितकन्या न भवसीत्यर्थः । धर्मराजस्य धर्मप्रधानराजस्य तत्र केकयराजे । उक्तेऽर्थे हेतुमाह—यदित्यादिना ॥ ९ ॥ १० ॥

१० ] ति० टी०—पिता मम गतो गमितः ॥ १० ॥

रा० टी०—यदिति । पापनिश्चये यस्य अयोध्यारक्षणस्य अपगतो निश्चयो यस्यास्तत्संबोधनं यत् यया राक्षसीरूपया सख्या हेतुभूतया रामो वनं प्रस्थापितः अत एव पिता त्रिदिवं त्रिभिर्ब्रह्मविष्णुमहेश्वरैः दीव्यते स्तूयते यः तं साकेतं गतः प्राप्तः सा सखी यत्प्रधाना या राक्षसीरूपा सखी प्रधाना स्वमन्त्रग्राहिकात्वेन मुख्या यस्याः सा अत एव निरयगामिनी अमङ्गलप्रापिका त्वं च मयि पित्रा विना कृते सति भ्रातृभ्यां च परित्यक्ते सति अत एव सर्वलोकस्य अप्रिये प्रीत्यविषयीभूते सति धर्मसंयुक्तां कौशल्यां वियुक्तां पतिपुत्रवियोगविशिष्टां कृत्वा तया सह किं पापं प्राप्स्यसे कं लोकं च प्राप्स्यसे सामान्योक्त्या रामपरिकराणां कर्मफलभोगाभावः सूचितः यदिति सामान्ये नपुंसकं कमिति लिङ्गविपरिणामेनान्यत्राप्यन्वेति । श्लोकत्रयमेकान्वयि ॥ १०–१२ ॥

११ ] ति० टी०—यत्प्रधाना यत्पापप्रधाना तत्पापं तत्पा-

[1] दुःखादिति गो. पाठः । [2] चेति गो. पाठः ।

कौसल्यां धर्मसंयुक्तां वियुक्तां पापनिश्चये । कृत्वा कं प्राप्स्यसे ह्यद्य लोकं निरयगामिनी ॥ १२ ॥
किं नावबुध्यसे क्रूरे नियतं बन्धुसंश्रयम् । ज्येष्ठं पितृसमं रामं कौसल्यायात्मसंभवम् ॥ १३ ॥
अङ्गप्रत्यङ्गजः पुत्रो हृदयाच्चाभिजायते । तस्मात्प्रियतरो मातुः प्रिया एव तु बान्धवाः ॥ १४ ॥
अन्यदा किल धर्मज्ञा सुरभिः सुरसंमता । वहमानौ ददर्शोर्व्यां पुत्रौ विगतचेतसौ ॥ १५ ॥

पफलम् । पितृभ्रातृरहितेऽत एव त्वन्निमित्तं सर्वलोकाप्रियं मयि वृत्तं तद्राहित्यरूपं सर्वलोकाप्रियत्वरूपं च ॥ ११ ॥

गो० टी०—यत्प्रधानेति । यत्प्रधानं यस्याः सा यत्प्रधाना यत्पापकर्मप्रधानासि त्वं तत्पापं तत्कर्मजनितं पापं पित्रा विनाकृते भ्रातृभ्यां परित्यक्ते मयि संक्रान्तमिति शेषः । संक्रान्तकार्यं विशेषणद्वयेन दर्शितम् अप्रिये इति संबुद्धिः ॥ ११ ॥

१२ ] ति० टी०—हे पापनिश्चये! वियुक्तां पतिपुत्रवियुक्तां कृत्वा कं लोकं कं नरकलोकम् ॥ १२ ॥

गो० टी०—कौसल्यामिति । वियुक्तां गुणवत्पुत्रवियुक्तां कृत्वा निरयगामिनि त्वं कं लोकं प्राप्स्यसे निरयं विना कं लोकं प्राप्स्यस इत्यर्थः कं लोकं कं नरकं निरयगामिनीति सिद्धवत्कारात् कमितिक्षेपोक्त्या पूर्वसृष्टा अपर्याप्ता इत्युच्यते । विशेषणद्वयं संबोधनम् ॥ १२ ॥

१३ ] ति० टी०—बन्धुसंश्रयं बन्धूनामाश्रयभूतम् । कौसल्याया आत्मसंभवमौरसं संधिस्त्वार्षः एवंगुणविशिष्टं किं नावबुध्यसे न जानासीत्यर्थः ॥ १३ ॥

रा० टी०—किमिति । क्रूरे हे क्रूरजनविशिष्टे ! नियतं नितरां यता नियमिताः ब्रह्मादयो येन तं बन्धुसंश्रयं बन्धूनां पराश्रयं कौशल्यायाः याति प्राप्नोति प्रादुर्भवतीत्यर्थः । स एवात्मसंभवः आत्मना स्वमनसैव संभवो यस्य तं पितृसमं पितृसदृशत्वेन प्रतीयमानं ज्येष्ठं रामं किं नावबुध्यसे जानासि अत एव संधौ नार्षकल्पना ॥ १३ ॥

गो० टी०—किमिति । बन्धुसंश्रयं बन्धूनामाश्रयभूतं कौसल्यायां आत्मसंभवमित्यत्र कौसल्यायात्मसंभवमित्यार्षसंधिः, यद्वा पृषोदरादित्वेन आकारलोपः गूढोऽत्मा न प्रकाशते इतिवत् तेन सम्यक्संधिः । नियतं किं नावबुध्यसे प्राकृतवद्बन्धुविघातकमवगतासीति भावः ॥ १३ ॥

१४ ] ति० टी०—अस्त्वौरसस्ततः किं तत्राह—अङ्गेत्यादि । अङ्गानि मुखवक्षउदरपाणिपादरूपाणि प्रत्यङ्गानि नेत्राङ्गुल्यादीनि । एतेन ' अङ्गादङ्गात्संभवसि ' इति श्रुतौ वीप्सयाऽङ्गप्रत्यङ्गग्रहणं सूचितम् एतेन तस्य सर्वाङ्गतेजःसंभृतत्वं दर्शितम् " यदेतद्रेतस्तत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम् " इति श्रुतेः । स्त्रिया रक्तमेव रेतः हृदयं हृदयपुण्डरीकमात्माधिष्ठानम् अनेन " हृदयादधिजायसे " इति श्रुत्यर्थ उक्तः । यद्वैवं तस्मान्मातुरौरसः पुत्रः प्रियतरः " आत्मा वै पुत्रनामासि " इति श्रुतेः । निरुपाधिप्रेमास्पदत्वं चात्मनः सर्वलोकसिद्धमेव । बान्धवाः पितृमात्रादयः प्रिया एव, न तु प्रियतराः। एवं चौरसवियोगदुःखमतिदुःसहमिति भावः । ' प्रियत्वान्न तु बान्धवः ' इति पाठं मत्वा तीर्थेनेत्थं व्याख्यानम्—प्रियत्वादेव न बान्धवो बन्धुदत्तपुत्रादिवन्न भवतीति । तत्र नार्थसामञ्जस्यमिति कतकसंमतपाठ एव ज्यायान् ॥ १४ ॥

रा० टी०—इदानीं लौकिकदृष्टान्तेन रामे मातुरतिप्रियत्वं बोधयन्नाह—अङ्गेति । अङ्ग हे मातः ! हृदयान्मनसः प्राप्य प्रत्यङ्गजः अङ्गमङ्गं प्रति प्रत्यङ्गं तस्मान्मुखनेत्रवक्षउदरपाणिपादादितेजोभ्यः जायते साकारतां प्राप्नोति सः अभिजायते उत्पद्यते तस्माद्धेतोः पुत्रः औरसः मातुः प्रियतरः इतरे बान्धवास्तु प्रिया एव एवेन प्रियतरत्वव्यवच्छेदः एतेन रामस्य कौशल्यातिप्रियत्वं सूचितम् । तथाहि " अङ्गादङ्गात्संभवसि " इति श्रुतिः नच वास्तवोदरादिसंबन्धशून्यजन्मवतो रामस्य वास्तवोदरादिसंबन्धवल्लौकिकपुत्रदृष्टान्तेन रामस्य कौशल्यातिप्रियत्वं कथं साधितमिति वाच्यं कौशल्यायास्तादृशाभिनिवेशाङ्गीकारेणादोषात् ॥ १४ ॥

गो० टी०—औरसपुत्रविश्लेषो मातुरसह्य इति दर्शयितुम् " अङ्गादङ्गात् " इति श्रुत्यर्थं हृदि निधायाह—अङ्गेति । अङ्गानि मुखकण्ठवक्षःकुक्षिहस्तपादाः प्रत्यङ्गानि नेत्रनासाङ्गुल्यादीनि तज्जस्तत्तेजोजः "अङ्गादङ्गात्संभवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि" इति श्रुतावपि वीप्सयाङ्गप्रत्यङ्गग्रहः अङ्गप्रत्यङ्गजत्वं च सर्वाङ्गतेजःसंभृतत्वम् " यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम् " इति श्रुतेः । स्त्रियास्तु शोणितमेव रेतः हृदयात् हृदयपुण्डरीकात् प्रत्यगात्मस्थानाच्च जायते तस्मात्पुत्रो मातुः प्रियतमो भवति बान्धवो भ्रात्रादिः न प्रियतमः किं तु प्रिय एव एवमतिशयप्रियत्वात्पुत्रस्य तद्वियोगादिदुःखं दुःसहमिति भावः । सुरभिर्बन्धुमात्रे दुःखितवती किं पुनः पुत्रे कौसल्येति सूचयति—ननु बान्धव इति ॥ १४ ॥

१५ ] ति० टी०—अत्रार्थे इतिहासमाह—अन्यदेति । कस्मिंश्चित्पूर्वकाल इत्यर्थः । सुरभिः कामधेनुः किलेत्यैतिह्ये । धर्मज्ञाः पुराविदो वृद्धा एवं वदन्ति किलेत्यर्थः । वहमानौ हलम् ॥ १५ ॥

रा० टी०—तदेव दृष्टान्तान्तरेण बोधयन्नाह—अन्यदेत्यादिभिः । अन्यदा अन्यस्मिन्काले सुरसंमता देवपूजिता सुरभिः कामधेनुः वहमानौ हलं कर्षन्तौ अत एव विगतचेतसौ पुत्रौ वृषभौ उर्व्यां पृथिव्यां ददर्श ॥ १५ ॥

गो० टी०—पुत्रशोको मातुर्दुःसह इत्यत्रेतिहासं प्रमाणयति—अन्यदेत्यादिना । अन्यदा पूर्वकाले । किलेत्यैतिह्ये

१ स्वयेति गो. पाठः । २ गामिनि इति गो. पाठः । ३ अपीति गो. पाठः । ४ तम इति गो. पाठः । ५ प्रियत्वान्न तु बान्धव इति गो. पाठः ।

तावर्धदिवसं[1] श्रान्तौ दृष्ट्वा पुत्रौ महीतले । रुरोद पुत्रशोकेन बाष्पपर्याकुलेक्षणम्[2] ॥ १६ ॥
अधस्ताद्व्रजतस्तस्याः सुरराज्ञो महात्मनः । बिन्दवः पतिता गात्रे सूक्ष्माः सुरभिगन्धिनः ॥ १७ ॥
[3]निरीक्षमाणस्तां शक्रो ददर्श सुरभिं स्थिताम् । आकाशे [4]विष्ठितां दीनां रुदतीं भृशदुःखिताम्[5] ॥ १८ ॥
तां दृष्ट्वा शोकसंतप्तां वज्रपाणिर्यशस्विनीम् । इन्द्रः प्राञ्जलिरुद्विग्नः सुरराजोऽब्रवीद्वचः ॥ १९ ॥
भयं कच्चिन्न चास्मासु कुतश्चिद्विद्यते महत् । कुतोनिमित्तः शोकस्ते ब्रूहि सर्वहितैषिणि[6] ॥ २० ॥
एवमुक्ता तु सुरभिः सुरराजेन धीमता । प्रत्युवाच ततो धीरा वाक्यं वाक्यविशारदा ॥ २१ ॥
शान्तं पापं न वः किंचित्कुतश्चिदमराधिप । अहं तु मग्नौ शोचामि स्वपुत्रौ विषमे स्थितौ ॥ २२ ॥
एतौ दृष्ट्वा कृशौ दीनौ सूर्यरश्मिप्रतापितौ । वध्यमानौ[7] बलीवर्दौ कर्षकेण दुरात्मना ॥ २३ ॥

---

तथावदन्ति किलेत्यर्थः । धर्मज्ञा कर्षणकालधर्मज्ञा सुरभिः कामधेनुः सुरसंमता देवपूजिता वहमानौ हलमिति शेषः, विगतचेतसौ मूर्छिताविस्यर्थः, पुत्रौ साक्षात्पुत्रौ किंचिन्निमित्तवशाद्भूमिं गतौ, यद्वा पुत्रौ स्ववंश्यत्वेन पुत्रव्यपदेश्यौ ॥ १९ ॥

१६ ] ति० टी०—अर्धदिवसं दिवसस्यार्धं व्याप्य वहनेन श्रान्तौ दृष्ट्वा । पुत्रौ स्वाङ्गजौ कुतोऽपि हेतोर्भुवं गतौ । वक्ष्यति च—मम कायात्प्रसूताविति ॥ १६ ॥

रा० टी०—ताविति । तौ हलं कर्षन्तौ अर्धदिवसं प्राप्य श्रान्तौ पुत्रौ वृषभौ दृष्ट्वा बाष्पपर्याकुलेक्षणा सुरभिः रुरोद 'अर्धदिवसे' इति भूषणपाठः ॥ १६ ॥

गो० टी०—ताविति । अर्धदिवसे दिवसस्यार्धे मध्याह्न इत्यर्थः 'अर्धदिवसम्' इतिपाठे "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया सर्वथा एकदेशिसमासः मध्याह्नपर्यन्तमित्यर्थः १६

१७–१९ ] ति० टी०—सुरराज्ञः सुरराजस्य अनित्यत्वान्न टच् ॥ १७–१९ ॥

रा० टी०—अधस्तादिति । तस्याः सुरभेः अधस्तादधोमार्गेण व्रजतः सुरराज्ञः इन्द्रस्य गात्रेषु सुरभिगन्धिनः शोभनगन्धविशिष्टाः सूक्ष्माः बिन्दवः अश्रुबिन्दुकणिकाः पतिताः समासान्तविधेरनित्यत्वाट्टजभावः ॥ १७ ॥

गो० टी०—अधस्तादिति । सुरराज्ञः सुरराजस्य समासान्तविधेरनित्यत्वाट्टजभावः ॥ १७ ॥

रा० टी०—निरीक्षमाण इति । तां बिन्दुपातनकर्त्रीं निरीक्षमाणः शक्रः आकाशे अधिष्ठितामाकाशाश्रितां भृशदुःखितां स्थितां सुरभिं ददर्श ॥ १८ ॥

रा० टी०—तामिति । वज्रपाणिः इन्द्रः तां सुरभिं दृष्ट्वा अब्रवीत् ॥ १९ ॥

गो० टी०—निरीक्षमाण इति । निरीक्षमाणः उपरि निरीक्षमाणः ॥ १९ ॥ २० ॥

२०–२१ ] ति० टी०— अस्मास्वमरेषु । कुतोनिमित्तः किंनिमित्तकः कुत इत्याद्यादित्वात्प्रथमार्थे तसिः । न चास्मास्विति नाम्नि काकुर्द्रष्टव्या ॥ २० ॥ २१ ॥

रा० टी०—वचनाकारमाह—भयमिति । कुतश्चित्कस्मादपि हेतोः अस्मासु भयं न विद्यते अतः अयं तव शोकः कुतोनिमित्तः किंनिमित्तकस्तद्ब्रूहि ॥ २० ॥

रा० टी०—एवमिति । वाक्यविशारदा वचननिपुणा सुरभिः प्रत्युवाच ॥ २१ ॥

गो० टी०—भयमिति । अस्मासु सुरेषु मध्ये कुतश्चिदपि भूतान्महद्भयं न विद्यते कच्चित्प्रायशः त्वदश्रुमोचनस्य भयसूचकत्वादिति भावः । कुतोनिमित्त इत्यत्र आद्यादित्वात्प्रथमान्तविहिततस्यन्तस्य कुतःशब्दस्य निमित्तशब्देन समानाधिकरणेन बहुव्रीहिः किंनिमित्तक इत्यर्थः, यद्वा सार्वविभक्तिकस्तसिरित्यनुशासनात् अत्र प्रथमार्थे तसिप्रत्ययः ॥ २१ ॥ २२ ॥

२२–२३ ] ति० टी०—किंचिदपि भयं कुतोऽपि हेतोर्युष्माकं नास्ति । शान्तं पापमित्यादिकमनुच्चितश्रवणजदोषनिवर्तको वचनविशेषो युष्मद्दुःखजनकं पापं शान्तमित्यर्थः । किं त्वहं मग्ना दुःखमग्नौ विषमे देशे स्थितौ कर्षकेण प्रतोदादिना वध्यमानौ ताड्यमानौ दृष्ट्वा शोचामि ॥ २२ ॥ २३ ॥

रा० टी०—तदाकारमाह—शान्तमिति । पापं पापाचरणशीलं रक्षोजातं शान्तं कालवशेन शान्तिं प्राप्तमतः कुतश्चिदपि वो युष्माकं देवानां किंचिद्भयं नास्ति । ननु कुतः शोचसीत्यत आह—विषमे विषमगतौ स्थितौ प्रारब्धवशेन प्राप्तौ सूर्यरश्मिप्रतापितौ सूर्यकिरणैः संतापितौ कर्षकेण वध्यमानौ ताड्यमानौ अत एव दीनौ क्षीणमानसौ अत एव कृशौ दुर्बलशरीरौ अत एव मग्नौ दुःखे निमग्नौ स्वपुत्रौ बलीवर्दौ दृष्ट्वा शोचामि । श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०—शान्तमिति । शान्तं पापं प्रतिहतममङ्गलमित्यादिकमनुचितप्रसक्तश्रवणदोषनिवर्तकवचनविशेषः । वः युष्माकं मध्ये कुतश्चिदपि पुरुषार्त्किंचिद्भयं नास्ति किंतु मग्नौ दुःखमग्नौ विषमे संकटे स्थितौ स्वपुत्रौ प्रति शोचामि ॥ २२ ॥

गो० टी०—एताविति । एतौ दृष्ट्वेति श्लोकस्य पूर्वश्लोकस्योत्तरार्धेनान्वयः ॥ २४ ॥

---

१ दिवसे इति गो. पाठः । २ पर्याकुलेक्षणेति गो. रा. पाठः । ३ षड्विंशश्लोकोऽस्मात्पूर्वं गो. पाठे । ४ ऽधिष्ठितामिति रा. पाठः । ५ रुदन्तीमिति गो. रा. पाठः । ६ सर्वं हितैषिणी इति रा. पाठः । ७ अर्द्यमानाविति गो. पाठः । ८ सुराधिपेति गो. पाठः ।

मम कायात्प्रसूतौ हि दुःखितौ भारपीडितौ । यौ दृष्ट्वा परितप्येऽहं नास्ति पुत्रसमः प्रियः ॥ २४ ॥
यस्याः पुत्रसहस्रैस्तु कृत्स्नं व्याप्तमिदं जगत् । तां दृष्ट्वा रुदतीं शक्रो न सुतान्मन्यते परम् ॥ २५ ॥
इन्द्रो ह्य[1]श्रुनिपातं तं स्वगात्रे पुण्यगन्धिनम् । सुरभिं मन्यते दृष्ट्वा भूयसीं तामिहे[2]श्वरः ॥ २६ ॥
[3]समाप्रतिमवृत्ताया लोकधारणकाम्यया । श्रीमत्या गुणमु[4]ख्यायाः स्वभावपरि[5]चेष्टया ॥ २७ ॥
यस्याः पुत्रसहस्राणि सापि शोचति कामधुक् । किं पुनर्या विना रामं कौसल्या वर्तयिष्यति ॥ २८ ॥
एकपुत्रा च साध्वी च विवत्सेयं त्वया कृता । तस्मात्त्वं सततं दुःखं प्रेत्य चेह च लप्स्यसे ॥ २९ ॥
अहं त्व[6]पचितिं भ्रातुः पितुश्च सकलामिमाम् । व[7]र्धनं यशसश्चापि करिष्यामि न संशयः ॥ ३० ॥

२४ ] ति० टी०—नास्ति पुत्रसमः प्रिय इति सुरभिवचनोपसंहारः ॥ २४ ॥

रा० टी०—ममेति । यौ मम कायात्प्रसूतौ तौ भारपीडितौ दृष्ट्वा अहं परितप्ये, तत्र हेतुः पुत्रसमः प्रियः अन्यो नास्ति ॥२४॥

गो० टी०—पुत्रं विशेषयति—ममेति । यौ दृष्ट्वा अहं परितप्ये तौ मम कायात्प्रसूतौ प्रसूतत्वं परंपरया तस्मात्पुत्रसमः प्रियो नास्तीति योजना ॥ २९ ॥

२५ ] ति० टी०—अथेन्द्रव्यापारमाह—यस्या इति । पुत्रसहस्रैः साक्षात्पुत्रसंतानपतितैः । तां रुदतीं दृष्ट्वा इन्द्रोऽपि सुतात्परमधिकं किमपि न मन्यते ॥ २५ ॥

रा० टी०—यस्या इति । यस्याः सुरभेः पुत्रसहस्रैः इयत्तारहितपुत्रैः इदं जगद्व्याप्तं तां रुदतीं सुरभिं दृष्ट्वा सुतात्परमधिकं प्रियं शक्रो न मन्यते अमन्यत ॥ २५ ॥

गो० टी०—कविराह—यस्या इति । मेन्यत अमन्यत ॥२६॥

२६ ] ति० टी०—इह संसारे भूयसीं सर्वोत्कृष्टाम् ॥२६॥

रा० टी०—इन्द्र इति । स्वगात्रे पुण्यगन्धिनं तं सुरभिकर्तृकमश्रुनिपातं दृष्ट्वा सुरभिं भूयसीं सर्वोत्कृष्टां मन्यते अमन्यत तेन तद्गन्धस्य विलक्षणत्वं सूचितम् । तद्दुःखप्रतीकाराकरणेन तत्प्रतीकारस्य इन्द्राशक्यत्वं व्यञ्जितम् ॥ २६ ॥

गो० टी०—इन्द्रोऽपीति । इन्द्रोऽपि स्वगात्रे पुण्यगन्धिनं रम्यगन्धम् अश्रुनिपातम् अश्रुपातं दृष्ट्वा तां सुरभिं भूयसीं श्रेष्ठाम् अमन्यत ॥ १८ ॥

२७ ] ति० टी०—समं सर्वप्राण्यनुग्रहे वैषम्यरहितमप्रतिमं सर्वोत्तमं वृत्तं चरित्रं यस्याः श्रीमत्या इष्टदानैश्वर्यशक्तिमत्याः गुणमुख्यायाः सत्यरूपमुख्यगुणवत्या लोकधारणकाम्यया प्रवृत्ताया इति शेषः । स्वभावपरिचेष्टया ‘ आहारनिद्राभयमैथुनानि सामान्यमेतत्पशुभिर्नराणाम् ’ इति सामान्यप्राप्तमिथुनीभावलक्षणया ॥ २७ ॥

२८ ] ति० टी०—यस्याः पुत्रसहस्राणि संतानपरंपराद्वारेण सन्ति सापि शोचति, किं पुनर्मानुषी एकपुत्रा कौसल्या रामं विना वर्तयिष्यति जीविष्यति शोकेन विशिष्टा सतीति शेषः । इदं किं वक्तव्यमित्यर्थः ॥ २८ ॥

रा० टी०—समेति । लोकधारणकाम्यया सर्वस्थितीच्छया समं वैषम्यरहितमत एव अप्रतिममत्युत्तममित्यर्थः वृत्तं वर्तनं यस्यास्तस्याः श्रीमत्याः निखिलैश्वर्ययुक्तायाः गुणः सत्त्वसङ्ग इत्यर्थः मुख्यो यस्यास्तस्याः यस्याः पुत्रसहस्राणि अनन्तपुत्राः सन्तीति शेषः । सापि कामधुक् सुरभिः स्वभावपरिचेष्टया स्वाभाविकस्वपुत्रव्यापारदर्शनेन हेतुना शोचति या एकपुत्रा कौशल्या रामं विना वर्तयिष्यति वर्तते सा शोचतीति किं वक्तव्यम् । ‘मदा’ इति ‘स्वभावपरिवेषया’ इति च भूषणपाठः । श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

गो० टी०—भरतवचनम्—सदेत्यादि । श्लोकद्वयमेकं वाक्यम् । अप्रतिमं निस्तुलं वृत्तं चरित्रं यस्यास्तस्याः श्रीमत्याः समृद्धिमत्याः गुणनित्यायाः नित्यगुणायाः यस्याः सुरभेः स्वभावपरिवेषया स्वभावेन स्त्रीपुंस्वभावेन मैथुनेन परिवेष आवृत्तिर्यस्यास्तादृश्या लोकधारणकाम्यया लोकधारणेच्छया पुत्रसहस्राणि सन्ति सन्तानपरंपरया बहवः पुत्राः सन्तीत्यर्थः । सापि कामधुक् कामधेनुः यथेष्टसृष्टिक्षमा शोचति अशोचत् । या राममेकं विना वर्तयिष्यति सा हि शोचतीति किं पुनः ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—विवत्सा विवत्सेव । यदेवं—तस्मादिति ॥ २९ ॥

रा० टी०—एकेति । एकपुत्रा इयं कौसल्या त्वया विवत्सा पुत्रवियुक्ता कृता तस्माद्धेतोः इह लोके प्रेत्य लोकान्तरं गत्वा च विद्यमाना त्वं दुःखमपवादजनितखेदं लप्स्यसे प्राप्स्यसि ॥ २९ ॥

गो० टी०—एकपुत्रेत्यादि । विवत्सा पुत्रविरहिता तस्मात् विवत्सात्वकरणात् लप्स्यसे तत्फलत्वेन ॥ २९ ॥

३० ] ति० टी०—अपचितिं पूजां पितुरिमां वक्ष्यमाणौर्ध्वदेहिकक्रियारूपां पूजां करिष्यामीत्यपकर्षः ॥ ३० ॥

रा० टी०—ननु मत्पुत्रत्वात्त्वमपि तथैव प्राप्स्यसीत्यत आह—अहमिति । भ्रातुः पितुश्च यशसो वर्धिनीमपचितिं पूजां करिष्यामि तेन ममापवादो न भवितेति सूचितम् । ‘ पूजनं स्यादपचितिः’ इत्यमरः ॥ ३० ॥

१ ऽपीति गो. पाठः । २ सुरेश्वर इति गो. पाठः । ३ सदेति गो. पाठः । ४ नित्याया इति गो. पाठः । ५ परिवेषयेति गो. पाठः । ६ ह्यीति गो. पाठः । ७ वर्धिनीमिति रा. पाठः ।

आनाय्य च महाबाहुं कोशलेन्द्रं महाबलम् । स्वयमेव प्रवेक्ष्यामि वनं मुनिनिषेवितम् ॥ ३१ ॥
नह्यहं पापसंकल्पे पापे पापं त्वया कृतम् । शक्तो धारयितुं पौरैरश्रुकण्ठैर्निरीक्षितः ॥ ३२ ॥
सा त्वमग्निं प्रविश वा स्वयं वा विश दण्डकान् । रज्जुं बद्ध्वाथवा कण्ठे नहि तेऽन्यत्परायणम् ॥ ३३ ॥
अहमप्यवनीं[2] प्राप्ते रामे सत्यपराक्रमे । कृतकृत्यो भविष्यामि विप्रवासितकल्मषः ॥ ३४ ॥
इति नाग इवारण्ये तोमराङ्कुशतोदितः[3] । पपात भुवि संक्रुद्धो निःश्वसन्निव पन्नगः ॥ ३५ ॥
संरक्तनेत्रः शिथिलाम्बरस्तथा विधूतसर्वाभरणः परंतपः ।
बभूव भूमौ पतितो नृपात्मजः शचीपतेः केतुरिवोत्सवक्षये ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

गो॰ टी॰—अहमिति । अपचितिं पूजाम् 'पूजा नमस्यापचितिः' इत्यमरः । भ्रातुरपचितिं राज्यप्रदानरूपां पितुरिमां सकलामपचितिम् और्ध्वदैहिकात्मिकाम् ॥ ३० ॥

३१ ] ति॰ टी॰—अथ यशोवर्धनं भ्रातृपूजां चाह—आनाय्येत्यादि । महाबाहुं रामं वनं प्रवेक्ष्यामि तद्व्रतसमाप्तये तत्प्रतिनिधितयेति भावः ॥ ३१ ॥

रा॰ टी॰—पूजाकारमाह—आनाय्येति । महाबाहुं कोशलेन्द्रं राममानाय्य अयोध्यां प्रापय्य स्वयमेवाहं वनं प्रवेक्ष्यामि वनं प्रवेक्ष्यामीत्यनेन मद्द्वारैव रामस्य वनवासो भवितेति सूचितं तेन रामनिवृत्तौ न तत्सत्यप्रतिज्ञत्वहानिरिति ध्वनितम् एतेन रामप्रीतौ पितुरत्यन्तप्रीतिर्भवितेति सूचितं तेन महाराजस्य रामसुखसुखित्वं व्यक्तम् तेन भरतस्य हार्दज्ञत्वं व्यक्तमत एव रामपूजावत्र पितृपूजाप्रकारान्तरकथनम् । 'आनीय' इति भूषणपाठः ॥ ३१ ॥

गो॰टी॰—भ्रातुरपचितिमाह—आनाययित्वेत्यादिना ३१

३२ ] ति॰ टी॰—पापं ज्येष्ठविवासनपूर्वकं कनिष्ठराज्यरूपम् ॥ ३२ ॥

रा॰ टी॰—न हीति । पापसंकल्पे पस्य अयोध्यापालनस्य अपगतः संकल्पः निश्चयो यस्यास्तत्संबोधनम् अपापे पापसंसर्गशून्ये रामाभिषेके त्वया कृतं निष्पादितं पापमुचितविघातरूपापराधं धारयितुं सहितुमश्रुकण्ठैः पौरैः निरीक्षितोऽहं न शक्तः ॥ ३२ ॥

गो॰ टी॰—नहीति । पापं रामविवासनरूपं धारयितुं सोढुम् अश्रुकण्ठैः गद्गदकण्ठैः ॥ ३२ ॥

३३ ] ति॰ टी॰—अस्य मरणान्तमेव प्रायश्चित्तमित्याह—सेति । बुद्धिपूर्वकृतमहापापेत्यर्थः । कण्ठे रज्जुं बद्ध्वेत्यस्य म्रियस्वेति शेषः । परायणं गतिः ॥ ३३ ॥

रा॰ टी॰—नतु तदपराधनिवृत्त्यर्थं मया किं कर्तव्यमित्यत आह—सेति । सा सहचरीजनमन्त्रस्वीकारपूर्वककृतरामापराधा त्वं रज्जुं वेणीं कण्ठे बद्ध्वा कृत्वेत्यर्थः, अग्निं रामानुप्रकाशरूपं ब्रह्म प्रविश तद्द्वारा राजाधिष्ठितसाकेतं गच्छेत्यर्थः । अथवा दण्डकान्रामाधिष्ठितवनमाविश रामं प्रसादयेत्यर्थः । अन्यदेतदुपायद्वयाद्भिन्नं परायणमुत्तमत्वप्रापकं नैव । वेण्याः कण्ठे करणं तु वत्सस्य कण्ठे करणवदार्तत्वद्योतनाय एतेन अन्यतरप्रसादनेन द्वयोः प्रसादनं भवितेति सूचितं तेन जन्यजनकयोः परस्परं परा प्रीतिर्व्यञ्जिता 'रज्जुर्वेण्यां गुणेऽपि च' इति मेदिनी ॥ ३३ ॥

गो॰ टी॰—अस्य पापस्य मरणान्तिकप्रायश्चित्तं विना निवर्तकान्तरं नास्तीत्यभिप्रायेणाह—सेति । सा बुद्धिपूर्वकमहापापकारिणी कण्ठे रज्जुं बधान बद्ध्वा म्रियस्वेत्यर्थः । परायणं गतिः ॥ ३३ ॥

३४ ] ति॰ टी॰—विप्रवासितकल्मषो दूरीकृतकलङ्कः ३४

रा॰ टी॰—अहमिति । रामे अवनीमयोध्याभूमिं प्राप्ते सति विप्रवासितकल्मषः दूरीकृतप्रातिभासिकापराधः अत एव कृतकृत्यो भविष्यामि ॥ ३४ ॥

गो॰ टी॰—अहमिति । विप्रवासितकल्मषः अपनीतकिल्बिषः ॥ ३४ ॥

३५ ] ति॰ टी॰—इतीत्यस्य विलप्येति शेषः । 'नाग इवारण्यस्तोमर—' इति पाठान्तरम् । संक्रुद्धः पन्नग इव श्वसन्नित्यन्वयः । पाठान्तरेऽरण्ये तत्संबन्धिनि बन्धनस्थाने तोमराङ्कुशतोदितो नाग इवेत्यर्थः । भुवि पपात भरत इति शेषः ॥ ३५ ॥

रा॰ टी॰—इतीति । इत्यनेन प्रकारेण उक्त्वा तोमराङ्कुशतोदितः तोमरैः अङ्कुशैश्च व्यथितो नागो गज इव संक्रुद्धः पन्नगः सर्प इव संक्रुद्धः स्मृतरामवियोगजनितदुःखहेतुकक्रोधाक्रान्तो भरतः भुवि पपात ॥ ३५ ॥

गो॰ टी॰—इतीति । इति संक्रुद्धः पन्नगः इव निःश्वसन् आरण्ये अरण्यगर्ते तोमराङ्कुशचोदितः तोमरैरङ्कुशैश्च विद्धो नाग इव भुवि पपात भरत इति शेषः ॥ ३५ ॥

३६ ] ति॰ टी॰—शचीपतेः केतुरिन्द्रध्वजः । उत्सवक्षय उत्सवान्ते ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

१ आनाययित्वा नन्दं कौसल्याया इति गो. पाठः । २ अवनिमिति गो. पाठः । ३ चोदित इति गो. पाठः ।

## पञ्चसप्ततितमः सर्गः ।

वृत्तं रामविवासनादि स्वस्यानभिमतमिति निवेदयन्भरतः शत्रुघ्नेन सह कौसल्यागृहं प्राप । राज्यकामस्य ते कार्यं कैकेय्या सुविहितमित्यादिदोषारोपैः परुषभाषिणीमपि कौसल्यां विनीतो भरतो यद्यहं तादृशोऽभविष्यम् अयोध्या एवमादिकनेकपातकान्युपन्यस्याश्वासयत्ततो ज्ञातहृदयत्वादृजुभावा कौसल्या भरतमङ्क आनीय भृशं रुरोद ।

दीर्घकालात्समुत्थाय संज्ञां लब्ध्वा स वीर्यवान् । नेत्राभ्यामश्रुपूर्णाभ्यां दीनामुद्वीक्ष्य मातरम् ॥ १ ॥
सोऽमात्यमध्ये भरतो जननीमभ्यकुत्सयत् । राज्यं न कामये जातु मन्त्रये नापि मातरम् ॥ २ ॥
अभिषेकं न जानामि योऽभूद्राज्ञा समीक्षितः । विप्रकृष्टे ह्यहं देशे शत्रुघ्नसहितोऽभवम् ॥ ३ ॥
वनवासं न जानामि रामस्याहं महात्मनः । विवासनं च सौमित्रेः सीतायाश्च यथाभवत् ॥ ४ ॥
तथैव क्रोशतस्तस्य भरतस्य महात्मनः । कौसल्या शब्दमाज्ञाय सुमित्रां चेदमब्रवीत् ॥ ५ ॥
आगतः क्रूरकार्यायाः कैकेय्या भरतः सुतः । तमहं द्रष्टुमिच्छामि भरतं दीर्घदर्शिनम् ॥ ६ ॥
एवमुक्त्वा सुमित्रां तां विवर्णवदना कृशा । प्रतस्थे भरतो यत्र वेपमाना विचेतना ॥ ७ ॥

---

रा० टी०—पातमेव भङ्ग्यन्तरेणाह—सामिति । शिथिलान्यम्बराणि वस्त्राणि यस्य विधूतानि देहकम्पेन कम्पितानि भृत्यैरपवर्जितानि वा सर्वाभरणानि यस्य स भरतः उत्सवक्षये उत्सवान्ते शचीपतेरिन्द्रस्य केतुर्ध्वज इव भूमौ पतितो बभूव ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

गो० टी०—संरक्तनेत्र इति । शचीपतेः केतुः इन्द्रध्वजः उत्सवक्षये उत्सवान्ते ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

१ ] ति० टी०—दीनां स्वमनीषितभङ्गतः ॥ १ ॥

रा० टी०—मूर्च्छानन्तरकालिकं भरतवृत्तमाह—दीर्घकालादित्यादिभिः । समुत्थाय मूर्छां निवर्त्य संज्ञां विवेकं लब्ध्वा जननीं स्वजनिकां दीनां कुमन्त्रेणानुचितमनुष्ठितं मयेति विचारेण खिन्नां मातरमुद्वीक्ष्य सवीर्यवान् वीर्यवद्भ्रातृसहितो भरतः अमात्यमध्ये अभ्यकुत्सयत् । सार्धश्लोक एकान्वयी ॥ १ ॥

गो० टी०—दीर्घकालादिति । दीनां प्रतिहतेच्छत्वात् । स इति । अमात्यमध्ये सुमन्त्रादिमध्ये अनेन भरतागमनं श्रुत्वा सुमन्त्रादयः इतः पूर्वमागता इति गम्यते अभ्यकुत्सयत् मन्त्रिणां ज्ञापनाय पुनरप्यनिन्ददित्यर्थः ॥ १ ॥

२ ] ति० टी०—अमात्या भरतागमनं श्रुत्वा प्राप्ताः सुमन्त्रादयः । अभ्यकुत्सयत् लोकस्येव स्वस्यापि कैकेयीकृतव्यवहारे परमानिष्टताख्यापनायोक्तरीत्यैव सर्वलोकसमक्षं जगर्ह इत्यर्थः । अथ प्रयोजकत्वानुमन्तृत्वाद्यपि स्वस्य प्रकृतविषये नास्तीति मन्त्रिणः प्रत्यापयति—राज्यमित्यादि । मातरं नैव मन्त्रये अपरिवार्ये, राज्यग्रहणार्थं न प्रेरयामि । तत्र हेतुः—राज्यं न कामये इति ॥ २ ॥

रा० टी०—अभिकुत्सनाकारमाह—राज्यमिति । जातु कदाचिदपि राज्यं न कामये नेच्छामि अत एव मातरं न मन्त्रये संमत्यर्थमभिभाषे ॥ २ ॥

गो० टी०—कैकेय्या कृतं स्वेष्टं नेति मन्त्रिभ्यो ज्ञापयति—राज्यमिति । जातु कदाचिदपि एतत् न कामये, न मन्त्रये इत्युभयत्रापि संबध्यते मन्त्रये राज्यार्थमिति शेषः । मन्त्रणं विचारः न जानामि मदनुज्ञापूर्वकोऽयं न भवतीत्यर्थः । यो मदर्थोऽभिषेकः राज्ञा समीक्षितश्चिन्तितः अभूत् तमभिषेकं न जानामि । अज्ञाने हेतुमाह—विप्रकृष्ट इति ॥ २ ॥

३–४ ] ति० टी०—योऽभिषेको राज्ञा समीक्षितश्चिन्तितः अज्ञाने हेतुमाह—विप्रकृष्ट इति । अतिदूरतरे इत्यर्थः ॥३॥४॥

रा० टी०—अभिषेकनिवृत्तिफलकस्वसंमतिविषयकजनसंभावनानिवृत्त्यर्थमाह—अभिषेकमिति । राज्ञा दशरथेन समीक्षितो विचारितः योऽभिषेकस्तमभिषेकं न जानामि विशिष्य न ज्ञातमित्यर्थः । तत्र हेतुः विप्रकृष्टे अतिदूरे देशे शत्रुघ्नसहितोऽहमभवमासम् ॥ ३ ॥

रा० टी०—वनेति । रामादेः वनवासं वने वासो येन तत् विवासनं प्रव्राजनं यथा अभवत्तथा न जानामि ॥ ४ ॥

गो० टी०—वनवासमिति । विवासनं वेत्यत्र न जानामीत्यनुकर्षः ॥ ३ ॥ ४ ॥

५ ] ति० टी०—तथैव प्राग्वदेव ॥ ५ ॥

६–७ ] ति० टी०—दीर्घदर्शिनमैहिकामुष्मिककर्मणः कालान्तरभाविफलज्ञानक्षमबुद्धिमन्तम् अत एव तं द्रष्टुमिच्छामि ॥ ६ ॥ ७ ॥

रा० टी०—तथेति । तथा क्रोशतः उच्चारयतः भरतस्य शब्दमाज्ञाय बुद्ध्वा सुमित्रां कौसल्या इदं वचनमब्रवीत् ॥ ५ ॥

---

१ नेति गो. पाठः । २ सुमित्रामिदमिति गो. पाठः । ३ सा विवर्णा मलिनेति गो. पाठः ।

स तु [1]राजात्मजश्चापि शत्रुघ्नसहितस्तदा । प्रतस्थे भरतो [2]येन कौसल्याया निवेशनम् ॥ ८ ॥
ततः शत्रुघ्नभरतौ कौसल्यां प्रेक्ष्य दुःखितौ । पर्यष्वजेतां दुःखार्तां पतितां नष्टचेतनाम् ॥ ९ ॥
रुदन्तौ [3]रुदती दुःखात्समेत्या[4]र्या मनस्विनी । भरतं प्रत्युवाचेदं कौसल्या भृशदुःखिता ॥ १० ॥
इदं ते राज्यकामस्य राज्यं प्राप्तकमकण्टकम् । संप्राप्तं बत कैकेय्या शीघ्रं क्रूरेण कर्मणा ॥ ११ ॥
प्रस्थाप्य चीरवसनं पुत्रं मे वनवासिनम् । कैकेयी कं गुणं तत्र पश्यति क्रूरदर्शिनी ॥ १२ ॥
क्षिप्रं मामपि कैकेयी प्रस्थापयितुमर्हति । हिरण्यनाभो यत्रास्ते सुतो मे सुमहायशाः ॥ १३ ॥
अथवा स्वयमेवाहं सुमित्रानुचरा सुखम् । अग्निहोत्रं पुरस्कृत्य प्रस्थास्ये [5]येन राघवः ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—आगत इति । क्रूरकार्यायाः क्रूरं कार्यं कृत्यं यस्यास्तस्याः कैकेय्याः सुतो भरतः आगतः तं दीर्घदर्शिनमतिज्ञानवन्तं भरतं द्रष्टुमिच्छामि ॥ ६ ॥

गो० टी०—आगत इति । दीर्घदर्शिनमित्यनेन रामनिर्गमनं भरतो न संमन्यत इति कौसल्याहृदयमिति सूचितम् ॥६॥

रा० टी०—एवमिति । सुमित्रामेवमुक्त्वा विवर्णवदना विचेतना कौशल्या यत्र भरतस्तत्र प्रतस्थे ॥ ७ ॥

गो० टी०—एवमिति । भरतो यत्र स्थितः तत्र प्रतस्थे॥६॥

८ ] ति० टी०—चापिभ्यां सुमन्त्रादयः । येन मार्गेण निवेशनं प्राप्यत इति शेषः ॥ ८ ॥

रा० टी०—स इति । राजात्मजः भरतश्च येन मार्गेण कौशल्यायाः निवेशनं गृहं प्राप्यते इति शेषः, तेन मार्गेण प्रतस्थे ॥ ८ ॥

गो० टी०—स इति । यत्र कौसल्याया निवेशनं स्थितं तत्र प्रतस्थे ॥ ७ ॥

९ ] ति० टी०—कौसल्यां स्वगृहात्प्रस्थिताम् ॥ ९ ॥

रा० टी०—तत इति । ततः स्वप्रस्थानानन्तरं दुःखितौ शत्रुघ्नभरतौ दुःखार्तामत एव पतितां मार्गे स्खलितां नष्टचेतनां कौशल्यां प्रेक्ष्य अवलोक्य पर्यष्वजेताम् ॥ ९ ॥

गो० टी०—तत इत्यादि । आर्यां ज्येष्ठां मातरम् ॥८॥९॥

१० ] ति० टी०—समेत्यालिङ्ग्य । तादृशसमयेऽप्यालिङ्गनकरणयोग्यं विशेषणम्—मनस्विनीति ॥ १० ॥

रा० टी०—रुदन्ताविति । दुःखाद्रुदन्तौ शत्रुघ्नभरतौ समेत्य प्राप्य आर्या ज्येष्ठा कौशल्या भृशदुःखिता अत एव रुदती सती भरतं प्रत्युवाच ॥ १० ॥

११ ] ति० टी०—राज्यं प्राप्तं भुङ्क्ष्वेति शेषः । राज्यप्राप्तिप्रकारमाह—क्रूरेण रामविवासनरूपेण कर्मणा । कैकेय्या तयेत्यर्थे शेषत्वविवक्षायाम् । संप्राप्तं राजतः ततश्च त्वया प्राप्तमिति भावः ॥ ११ ॥

रा० टी०—इदमिति । अराज्यकामस्य सर्वकालं राज्य[illegible]नारहितस्य ते तव अकण्टकं रिपुरहितं प्राप्तं [illegible] [illegible] [illegible] राज्यं शीघ्रमविचारितं यथा स्यात्तथेत्यर्थः, कैकय्याः कैकयीदास्याः मन्थरायाः कर्मणा क्रियया संप्राप्तं त्वां प्रापितम् ॥ ११ ॥

गो० टी०—इदमिति । कथं राज्यं प्राप्तं तत्राह—संप्राप्तमिति । क्रूरेण रामविवासनपूर्वकेण कर्मणा वराभ्यर्थनेन ॥ १० ॥

१२ ] ति० टी०—त्वमपि मे पुत्र इति तव राज्यदाने न किमपि मे दुःखम्, अपि तु चीरवसनं वनचारिणं चीरवसनत्वादिवनचारिवेषं मे पुत्रं रामं त्वदागमनादपि पूर्वं शीघ्रं वनं प्रति प्रस्थाप्य राजानं मारितवती कैकेयी तत्र तादृशप्रस्थापने कं गुणं पश्यतीति न जाने इति दुःखमिति शेषः । स्थिते तु रामे स एव पितृवाक्यात्त्वामेवाभिषिच्य रक्षेत्, अतो व्यर्थोऽयं तत्प्रयास इति भावः ॥ १२ ॥

रा० टी०—प्रस्थाप्येति । तत्राभिषेकसमये चीरवसनं वनवासिनं मे पुत्रं रामं कारयित्वेति शेषः । प्रस्थाप्य च कैकेयी मन्थरा कं गुणं पश्यति न कमपीत्यर्थः ॥ १२ ॥

गो० टी०—प्रस्थाप्येति । तत्र प्रस्थापने कं गुणम् अतिशयं पश्यति न कमपि गुणं रामप्रस्थापनं विनापि राज्यलाभसंभवात् ॥ ११ ॥

१३ ] ति० टी०—मामपि प्रस्थापयितुमर्हति मां प्रति तस्या दुःखहेतुत्वप्रकृतेरिति भावः । हिरण्यनाभो हिरण्यवर्णनाभियुक्तः । इदमसाधारणं रामलक्षणम् ॥ १३ ॥

रा० टी०—क्षिप्रमिति । हिरण्यनाभः मनोहरविशिष्टः मे सुतो रामो यत्रास्ते तत्र मामपि क्षिप्रं प्रस्थापयितुमर्हति॥१३॥

गो० टी०—क्षिप्रमिति । कैकेयी मामपि प्रस्थापयितुमर्हति सर्वस्य राज्यस्य तदायत्तत्वादिति भावः । हिरण्यनाभः हिरण्यवत्स्पृहणीयनाभियुक्तः नाभिग्रहणं शरीरस्योपलक्षणम् ॥१२

१४ ] ति० टी०—कैकेयीचित्तानुवृत्तेस्तव राजसंस्कारेऽधिकारो नास्तीति ध्वनयन्त्याह—अथवेति । अग्निहोत्रमिति राजदेहस्याप्युपलक्षणं कैकेयीवर्त्मगमने भरतो मे प्रेतकार्यं न कुर्यादिति राज्ञा निषेधादिति भावः ॥ १४ ॥

रा० टी०—अथेति । अथवा तत्कर्तृकप्रस्थापनाभावे सुमित्रा अनुचरा यस्याः साऽहमग्निहोत्रं पुरस्कृत्य ब्राह्मणद्वारा

१ रामानुज इति गो. पाठः । २ यत्रेति गो. पाठः । ३ रुदतीमिति गो. पाठः । ४ आर्यां मनस्विनीमिति गो. पाठः । ५ यत्रेति गो. रा. पाठः ।

कामं वा स्वयमेवाद्य तत्र मां नेतुमर्हसि । यत्रासौ पुरुषव्याघ्रस्तप्स्यते मे सुतस्ततः ॥ १५ ॥
इदं हि तव विस्तीर्णं धनधान्यसमाचितम् । हस्त्यश्वरथसंपूर्णं राज्यं निर्यातितं तया ॥ १६ ॥
इत्यादिबहुभिर्वाक्यैः क्रूरैः संभर्त्सितोऽनघः । विव्यथे भरतोऽतीव व्रणे तुद्येव सूचिना ॥ १७ ॥
पपात चरणौ तस्यास्तदा संभ्रान्तचेतनः । विलप्य बहुधाऽसंज्ञो लब्धसंज्ञस्तदाभवत् ॥ १८ ॥
एवं विलपमानां तां प्राञ्जलिर्भरतस्तदा । कौसल्यां प्रत्युवाचेदं शोकैर्बहुभिरावृताम् ॥ १९ ॥
आर्ये कस्मादजानन्तं गर्हसे मामकल्मषम् । विपुलां च मम प्रीतिं स्थिरां जानासि राघवे ॥ २० ॥
कृतशास्त्रानुगा बुद्धिर्मा भूत्तस्य कदाचन । सत्यसंधः सतां श्रेष्ठो यस्यार्योऽनुमते गतः ॥ २१ ॥

---

अग्रे कृत्वा यत्र राघवः तत्र प्रस्थास्ये उपलक्षणविधया राजशरीरस्य ग्रहणं तु न युक्तं प्रमाणाभावात् सशरीरराजस्य गमनस्योक्तत्वेन तच्छरीरस्येहाभावाच्च ॥ १४ ॥

गो० टी०—कैकेयीकृतपापानुबन्धिनस्तव राजसंस्काराधिकारो नास्तीति ध्वनयन्त्याह—अथवेति । अग्निहोत्रं राजाग्निहोत्रम् अग्निहोत्रस्य ज्येष्ठभार्याधीनत्वात् दशरथेन भरतसंस्कारप्रतिषेधाच्चेति भावः । एतेन राजशरीरप्रापणमप्यर्थसिद्धम् ॥ १३ ॥

१५ ] ति० टी०—अथवा तत्रातत्पक्षत्वे राजसंस्कारादि कृत्वा पश्चान्मां तत्र नयेत्याह—कामं वेति । तप्स्यते तप्यते चेत्यपि बोध्यम् ॥ १५ ॥

रा० टी०—काममिति । वा अथवा असौ मे सुतः यत्र तपस्तप्यते तत्र स्वयमेव त्वं नेतुमर्हसि ॥ १५ ॥

गो० टी०—काममिति । तपस्तप्यते तपः करोतीत्यर्थः "तपस्तपः कर्मकस्यैव" इति कर्मवद्भावादात्मनेपदम् ॥ १४ ॥

१६ ] ति० टी०—समाचितं व्याप्तम् । निर्यातितं दत्तम् 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतम्' ॥ १६ ॥

रा० टी०—इदमिति । धनधान्यसमाचितं धनादिभिर्व्याप्तं हस्त्यादिभिः संपूर्णं विस्तीर्णमिदं राज्यं तव निर्यातितं न्यासत्वेन समर्पितं तथा निश्चितमेतत् ॥ १६ ॥

गो० टी०—तव प्रस्थापने मम का शक्तिस्तत्राह—इदमिति । धनधान्यसमाचितं धनधान्यसंपूर्णं तया कैकेय्या निर्यातितं दापितम् 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणे मतम्' इति विश्वः ॥ १५ ॥

१७ ] ति० टी०—व्रणे प्राचीने सूचिना प्रतुद्येव संभर्त्सितः कैकेयीपक्षत्वधिया गर्हितो विव्यथे पितृभ्रातृवियोगखिन्नेनाश्वासार्थमागतस्थलेऽपि खेदहेतुवचनश्रवणादिति भावः ॥ १७ ॥

रा० टी०—इतीति । क्रूरैः क्रूरसदृशैः बहुभिर्वाक्यैः भर्त्सित इव भरतः व्रणे सूचिना तुद्य प्रतुद्य विद्यमान इव अतिविव्यथे । अतीवौ भिन्नक्रमौ क्रूरशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः पूर्वरामवियोगश्रवणजनितखेदस्य व्रणोपमा ॥ १७ ॥

गो० टी०—इत्यादिबहुभिरिति । संभर्त्सितः परपक्ष्यबुद्ध्या भाषितः व्रणे सूचिना तुद्येव व्यथयित्वेत्र पूर्वमेव भ्रातृपितृवियोगखिन्नोऽपि कौसल्यावाक्यश्रवणखिन्न इत्यर्थः ॥ १६ ॥

१८ ] ति० टी०—असंज्ञ इति छेदः ॥ १८ ॥

रा० टी०—पपातेति । तदा कौसल्योक्तिश्रवणकाले संभ्रान्तचेतनः उद्विग्नचित्तः अत एव असंज्ञः कर्तव्यविषयकज्ञानरहितो भरतः यदा लब्धसंज्ञोऽभवत् तदा बहुधा विलप्य तस्याः कौसल्यायाश्चरणौ उद्दिश्य पपात ॥ १८ ॥

गो० टी०—पपातेति । चरणौ प्रतीति शेषः । बहुधासंज्ञ इत्यत्र असंज्ञ इति पदच्छेदः ॥ १७ ॥

१९ ] ति टी०—विलपमानामिदं ते राज्यकामस्येत्यादि भाषमाणाम् ॥ १९ ॥

रा० टी०—एवमिति । एवमुक्तप्रकारेण विलपमानां तां कौसल्यां प्राञ्जलिर्भरतः प्रत्युवाच ॥ १९ ॥

गो० टी०—एवमिति । एवं विलपमानां पूर्वोक्तप्रकारेण विलपन्तीम् ॥ १८ ॥

२० ] ति० टी०—अजानन्तम् अत्रत्यवृत्तान्तमिति शेषः । राघवे तद्विषये मम हृदि पूर्वं स्थितां विपुलां प्रीतिं जानास्येव इदानीं तु ततोऽधिका पितृबुद्धेरपि तत्रैवोपसंहारात् ॥ २० ॥

रा० टी०—तत्प्रतिवचनाकारमाह—आर्ये इति । अकल्मषं कपटशून्यमजानन्तं रामप्रव्राजनविषयकज्ञानाभाववन्तं मां कस्माद्गर्हसे इदं राज्यं तव निर्यातितमित्यादि वदसि । ननु इदमाज्ञापनं न विगर्हणेत्यत आह—राघवे रामे मे विपुलां प्रीतिं त्वं जानासि एतेन तं विना अहमत्र स्थातुमशक्त इति व्यञ्जितं तेनाशक्यज्ञापनं विगर्हणामूलमिति ध्वनितम् । अजानन्तमित्यनेन पूर्वं मज्ज्ञाने रामप्रव्राजनं नैव स्यादिति सूचितम् ॥ २० ॥

गो० टी०—आर्ये इति । अजानन्तम् अभिषेकादिकमिति शेषः ॥ १९ ॥

२१ ] ति० टी०—इममर्थं परबुद्धेरप्रत्यक्षत्वाच्छपथैः प्रत्याययति—कृतेति । सत्यसंधत्वादिगुणविशिष्ट आर्यो रामो यस्यानुमते संमते सति वनं गतस्तस्य कृतशास्त्रानुगा गुरुशिक्षितश्रुतिस्मृतिमार्गगा बुद्धिर्मा भूत् इतोऽधिकानर्थाभावादयं परमः शपथः अतः परं शपथाः सामान्येन शपथकरणमपि विशेषतः स्वस्मिन्नपि पर्यवस्यतीति बोध्यम् ॥ २१ ॥

---

१ पुत्रो मे तप्यते तप इति गो. तप्यते म सुतस्तप इति रा. पाठः । २ तथेति रा. पाठः । ३ भरतस्तीव्रमिति गो. रा. पाठः । ४ ततः स्थिर इति गो. पाठः । ५ अकिल्बिषमिति गो. पाठः । ६ स्थिरामिति गो. पाठः । ७ कृता शास्त्रेति गो. पाठः ।

प्रैष्यं पापीयसां यातु सूर्यं च प्रति मेहतु । हन्तु पादेन गां सुप्तां यस्यार्योऽनुमते गतः ॥ २२ ॥
कारयित्वा महत्कर्म भर्ता भृत्यमनर्थकम् । अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः॥२३ ॥
परिपालयमानस्य राज्ञो भूतानि पुत्रवत् । ततस्तु द्रुह्यतां पापं यस्यार्योऽनुमते गतः ॥ २४ ॥
बलिषड्भागमुद्धृत्य नृपस्यारक्षितुः प्रजाः । अधर्मो योऽस्य सोऽस्यास्तु यस्यार्योऽनुमते गतः॥२५॥
संश्रुत्य च तपस्विभ्यः सत्रे वै यज्ञदक्षिणाम् । तां चापलपतां पापं यस्यार्योऽनुमते गतः ॥ २६ ॥
हस्त्यश्वरथसंबाधे युद्धे शस्त्रसमाकुले । मा स्म कार्षीत्सतां धर्मं यस्यार्योऽनुमते गतः ॥ २७ ॥

रा० टी०—रामविषयकस्वप्रीत्यज्ञातजनकर्तृकविपरीतसंभावनानिवृत्त्यर्थं भरतशपथमाह—कृतेत्यादिभिः । यस्य मम अनुमते संमतौ सत्यामार्यो ज्येष्ठो रामः गतः वनमिति शेषः । तस्य मम कृतशास्त्रानुगा कृता गुरुणा निष्पादिता शास्त्रानुगा धर्मशास्त्रानुवर्तिनी बुद्धिः कदाचन कस्मिंश्चित्काले मा भूत् विनश्येदित्यर्थः एतेनैवं सत्यहमपि विनश्येयमिति व्यञ्जितम् । तथा च स्मृतिः ' बुद्धिनाशात्प्रणश्यति ' इति ॥ २१ ॥

गो० टी०—कौसल्यया स्वस्मिन्नारोपितं दोषं परिहर्तुं शपथवाक्यान्याह—कृतेत्यादिना । आर्यः रामः यस्यानुमते संमतौ सत्यां गतः तस्य शास्त्रानुगा कृता बुद्धिः गुरुणा विधिनेषधबोधकशास्त्रानुसारित्वेन सुशिक्षिता बुद्धिः कदाचन मा भूदिति संबन्धः यद्यहमार्यप्रवासने अनुमन्तास्मि तर्हि श्रुतिस्मृतिज्ञानात् प्रच्युतो भूयासमित्यर्थः । एवमुत्तरत्रापि सामान्यनिर्देशो भरतविषयतया योजनीयः 'निर्विशेषं न सामान्यम्' इति न्यायात् अत्र शपथव्याजेन धर्मविशेषाश्च शिक्ष्यन्ते मुनिनेति बोध्यम् । अत्र च सत्पुरुषविषयापराधे शास्त्रज्ञानभ्रंशो भवतीति सूचितम्॥२०॥

२२ ] ति० टी०—प्रैष्यं प्रेष्यत्वं, प्रतिमेहतु अभिमुखं मूत्रादि करोतु ॥ २२ ॥

रा० टी०—प्रैष्यमिति । पापीयसामतिशयानां हीनजात्यादीनां प्रैष्यं प्रेष्यत्वं दासत्वमित्यर्थः, यातु प्राप्नोतु । सूर्यं प्रति सूर्याभिमुखं मेहतु मूत्रमुत्सृजतु पादेन सुप्तां गां हन्तु एतत्त्रितयजन्यं पापं प्राप्नुयादित्यर्थः ॥ २२ ॥

गो०टी०—प्रैष्यमिति । प्रैष्यं प्रेष्यभावं पापीयसाम् अतिशयेन पापिनां हीनजातीनां प्रेष्यत्वं हि पापहेतुः सूर्यं प्रति मेहतु मूत्रपुरीषोत्सर्गं करोतु सूर्याभिमुखेन मेहने यत्पापं तत् प्राप्नोत्वित्यर्थः । अनेन सूर्यं प्रति मेहनं न कर्तव्यमिति सिद्धं, गां पादेन हन्तु पादेन गोहननपापं प्राप्नोतु । पादेन गोहननं दोषः सुप्तामित्यनेन स्वहननप्रवृत्तगोहननं न दोषायेत्युक्तम् ॥ २१ ॥

२३ ] ति० टी०—यो भर्ता भृत्यं महत्कर्म कारयित्वा अनर्थकं भृतिरहितं करोति तस्य योऽधर्मः सोऽस्यास्त्विन्यन्वयः ॥ २३ ॥

रा० टी०—कारयित्वेति । भर्ता स्वामी महद्दुष्करं कर्म कारयित्वा भृत्यमनर्थकमर्थरहितं करोति तस्याप्यर्थं हरतीत्यर्थः । अस्य भर्तुः योऽधर्मः सः यस्यानुमते आर्यो गतः तस्यास्तु ॥ २१ ॥

गो० टी०—कारयित्वेति । यो भर्ता भृत्यं महत्कर्म कारयित्वा " हृक्रोरन्यतरस्याम् " इति द्विकर्मकत्वम् अनर्थकं तं प्रयोजनशून्यं करोतीति शेषः, अस्य भर्तुः यः अधर्मः सोऽस्तु ॥ २२ ॥

२४ ] ति० टी०—ततस्तस्मै आद्यादित्वाच्चतुर्थ्यर्थे तसिः । यस्यानुमते गतस्तस्यास्त्विति शेषः ॥ २४ ॥

रा० टी०—परीति । पुत्रवद्भूतानि प्रजाः परिपालयमानस्य ततस्तस्य राज्ञो द्रुह्यतां जनानां पापं तस्य स्यादिति शेषः संबन्धसामान्यविवक्षया षष्ठी ॥ २४ ॥

गो० टी०—परिपालयमानस्येति । परिपालयमानस्य राज्ञः राज्ञि परिपालयति सति तं प्रति द्रुह्यतां पापं ततः तस्य ॥२३॥

२५ ] ति० टी०—बलिः करस्तद्रूपं षड्भागमुद्धृत्यादाय प्रजा अरक्षितुर्योऽधर्मः सोऽस्यास्तु ॥ २५ ॥

रा० टी०—बलीति । बलिः करः स एव षड्भागः षष्ठांशस्तमुद्धृत्य गृहीत्वा प्रजाः अरक्षितुः योऽधर्मः सोऽस्य स्यात् तृजन्तमेतत् अत एव न कर्मणि षष्ठी ॥ २९ ॥

गो० टी०—बलिषड्भागमिति । बलिषड्भागं बलिः करः 'बलिः पूजोपहारे च दैत्यभेदे करेऽपि च' इति वैजयन्ती । षष्ठो भागः षड्भागः बलिश्चासौ षड्भागश्चेति विशेषणसमासः उद्धृत्य आदाय ॥ २४ ॥

२६ ] ति० टी०—सत्रे यागे । संश्रुत्य प्रतिज्ञाय । अपलपतां तपस्विभ्यो ऋत्विग्भ्यः ॥ २६ ॥

रा० टी०—संश्रुत्येति । सत्रे यागे तपस्विभ्यो ऋत्विग्भ्यः दक्षिणां संश्रुत्य एतावत्परिमितां दास्यामीति प्रतिज्ञाय तां प्रतिज्ञाविषयीभूतदक्षिणामपलपतां नैव मया प्रतिज्ञातेति कथयतां पापं स्यात् । ' विप्रलपताम् ' इति भूषणपाठः॥२६॥

गो० टी०—संश्रुत्येति । सत्रे यागे तपस्विभ्यः व्रतोपवासशीलेभ्यः ऋत्विग्भ्यः यज्ञदक्षिणां संश्रुत्य प्रतिज्ञाय तां दक्षिणां विप्रलपतां विरुद्धोक्त्या अपलपताम् ॥ २६ ॥

२७ ] ति० टी०—सतां धर्ममपराङ्मुखतया युद्धम् ॥२७॥

रा० टी०—हस्तीति । हस्त्यश्वरथसंबाधे युद्धे हस्त्यादिसंकुले शस्त्रसमाकुले शस्त्रास्त्रव्याप्ते युद्धे सतां महात्मनां धर्मं पलायनाभावादिं यो मा स्म कार्षीत् पलायनादीनि वा कार्षीदित्यर्थः, तस्य यत्पापं तत्स्यादिति शेषः ॥ २७ ॥

१ प्रैष्यमिति गो. पाठः । २ तमिति गो. पाठः । ३ अरक्षत इति गो. पाठः । ४ विप्रलपतामिति गो. पाठः ।

उपदिष्टं सुसूक्ष्मार्थं शास्त्रं यत्नेन धीमता । स नाशयतु दुष्टात्मा यस्यार्योऽनुमते गतः ॥ २८ ॥
मा च तं व्यूढबाह्वंसं चन्द्रभास्करतेजसम्[1] । द्राक्षीद्राज्यस्थमासीनं यस्यार्योऽनुमते गतः ॥ २९ ॥
पायसं कृसरं छागं वृथा सोऽश्नातु निर्घृणः । गुरूंश्चाप्यवजानातु यस्यार्योऽनुमते गतः ॥ ३० ॥
गैवां[2] स्पृशतु पादेन गुरून्परिवदेत[3] च । मित्रे द्रुह्येत सोऽर्त्यर्थं[4] यस्यार्योऽनुमते गतः ॥ ३१ ॥
विश्वासात्कथितं किंचित्परिवादं मिथः क्वचित् । विवृणोतु स दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ३२ ॥
अकर्ता चाकृतज्ञश्च त्यक्तात्मा[6] निरपत्रपः । लोके भवतु विद्विष्टो[7] यस्यार्योऽनुमते गतः ॥ ३३ ॥

---

गो० टी०—हस्त्यश्वरथसंबाध इति । सतां नराणां धर्मम् अपरावर्तनं मा स्म कार्षीत् परावर्तमानस्य यत्पापं तदस्त्वित्यर्थः ॥ २६ ॥

२८ ] ति० टी०—सुसूक्ष्मार्थं शास्त्रं वेदः । धीमता आचार्येणेति शेषः । ब्रह्मोज्झत्वरूपं पापं प्राप्नोत्वित्यर्थः ॥ २८ ॥

रा० टी०—उपदिष्टमिति । स दुष्टात्मा धीमता आचार्येण यत्नेन अतिप्रयत्नेन उपदिष्टं तद्बुद्धिविषयत्वं प्रापितं सुसूक्ष्मः अतिदुर्लक्ष्यः अर्थो यस्य तच्छास्त्रं नाशयतु अभ्यासाभावेन बुद्धिविषयरहितत्वं प्रापयतु तज्जन्यपापं प्राप्नुयादित्यर्थः ॥ २८ ॥

गो० टी०—उपदिष्टमिति । धीमता गुरुणा यत्नेनोपदिष्टं सुसूक्ष्मार्थं परलोकसाधकरहस्यार्थयुक्तं शास्त्रं वेदान्तादिविशिष्टार्थं नाशयतु विस्मरतु ॥ २७ ॥

२९ ] ति० टी०—व्यूढौ विशालौ बाहू अंसौ च यस्य तं रामं राज्यस्थमत एवासीनं सिंहासने मा द्राक्षीत् । तादृशरामदर्शनभाग्यरहितो भवतु ज्येष्ठानुवर्तनरहितो भवत्वित्यर्थः, तावत्पर्यन्तं जीवनं मा भूदिति वा ॥ २९ ॥

रा० टी०—मेति । व्यूढबाह्वंसं व्यूढं विशालं बाह्वंसं बाहू च अंसौ च तेषां समाहारो यस्य तं राज्यस्थं स्वीकृतस्वराज्यमत एव आसीनं सिंहासने स्थितं रामं स मा द्राक्षीद् अतिदुर्भगः स्यादित्यर्थः ॥ २९ ॥

गो० टी०—मेति । व्यूढबाह्वंसं व्यूढौ संहतौ मांसलौ बाहू अंसौ च यस्य तम् 'व्यूढौ विन्यस्तसंहतौ' इत्यमरः । राज्यस्थं प्राप्तराज्यम् आसीनं सिंहासने आसीनं तं रामं मा द्राक्षीत् तादृशरामदर्शनभाग्यरहितो भवत्वित्यर्थः ॥ २८ ॥

३० ] ति० टी०—कृसरं तिलमुद्गतण्डुलात्मकम् । छागं छागमांसं वृथा श्राद्धादिनिमित्तं विना अश्नातु अशनजं पापं प्राप्नोतु ॥ ३० ॥

रा० टी०—पायसमिति । पायसं पयःपक्वं कृसरं मिश्रिततिलमुद्गतण्डुलं छागं छं निर्मलत्वमगं न गच्छति यस्य तं ताम्बूलादिमित्यर्थः । किंच छो निर्मल एव अगो वृक्षस्तं तदवयवीभूततुलसीपत्रकमलपत्रादिकमित्यर्थः । वृथा परमात्मसमर्पणमन्तरा स निर्घृणः शास्त्रत्यागहेतुकभविष्यद्दण्डाश्रयीभूतस्वविषयकदयारहितः अश्नातु गुरून् पित्रादींश्च अवजानातु तदनादरं करोतु अवज्ञाजनितपापं प्राप्नोत्वित्यर्थः ॥ ३० ॥

गो० टी०—पायसमिति । कृसरं तिलौदनं छागम् अमांसमात्रोपलक्षणमेतत् वृथाऽश्नातु देवतापितृतिथिनिवेदनमन्तरेण भुङ्क्तामित्यर्थः । अवजानातु प्रत्युत्थानाभिवादनादिकं न करोत्वित्यर्थः ॥ २९ ॥

३१ ] ति० टी०—गवामिति । अङ्गमिति शेषः । परिवदेतापवदेत् मित्रे मित्राय ॥ ३१ ॥

रा० टी०—गवामिति । स गवां गाः पादेन स्पृशतु गुरून् पित्रादीन् परिवदेत दोषविशिष्टत्वेन कथयेत् । मित्रे मित्राय अत्यर्थमत्यन्तं द्रुह्येत 'गां च' इति भूषणपाठः ॥ ३१ ॥

गो० टी०—गा इति । गाः पादेन स्पृशतु । हन्तु पादेनेत्यत्र हननमुक्तम् इह तु पादस्पर्शोऽपि पापहेतुरित्युच्यते । परिवदेत् अपवदेत्, मित्रे द्रुह्येत मित्राय द्रुह्यत्वित्यर्थः ॥ ३० ॥

३२ ] ति० टी०—विश्वासादयं क्वापि न प्रकटयिष्यतीति विश्वासात् । मिथो रहसि ' मिथोऽन्योन्यरहस्ययोः ' । किंचित्परिवादं कस्यचित्सुरापानादिदोषम् ॥ ३२ ॥

रा० टी०—विश्वासादिति । स दुष्टात्मा विश्वासात् अयं ममातीव मित्रमित्यप्रकटनीयमदुक्तं क्वापि न प्रकटयितेति निश्चयात् मिथो रहसि कथितं किंचित्परिवादमभक्ष्यभक्षणादिकं विवृणोतु सर्वत्र प्रकाशयतु 'मिथोऽन्योन्यरहस्ययोः' इति कोशः॥३२॥

गो० टी०—विश्वासादिति । परिवादम् अपवादम् 'अपवादोपक्रोशनिर्वादावर्णपरिवादाः' इति हलायुधः । मिथः रहसि 'मिथोऽन्योन्यरहस्ययोः' इति वैजयन्ती । विश्वासाद्रहः कथितस्य परिवादस्य क्वचिदन्यत्र प्रकटीकरणं पातकमिति भावः ॥३१ ।

३३ ] ति० टी०—अकर्ता प्रत्युपकाराकर्ता अत एवाकृतज्ञः, अत एव त्यक्तः सज्जनैः । ' त्यक्तात्मा ' इति पाठे सज्जनैस्त्यक्त आत्मा स्वरूपं यस्येत्येवार्थः । उद्बन्धनादिना त्यक्तदेह इत्यर्थं तीर्थः । अत एव लोके विद्विष्टश्च भवतु॥३३॥

रा० टी०—अकर्तेति । सः अकर्ता प्रत्युपकाराकारकः अत एव अकृतज्ञः प्रत्युपकारविषयकाज्ञानवानत एव त्यक्तः सज्जनैर्बहिष्कृतः निरपत्रपः लज्जारहितः अत एव विद्विष्टः सर्वजनद्वेषविषयीभूतो भवतु ' त्यक्तात्मा ' इति पाठान्तरम्॥३३॥

गो० टी०—अकर्तेति । अकर्ता प्रत्युपकारस्याकर्ता अथाप्यकृतज्ञः आभ्यामेकं पापद्वकम् । त्यक्तात्मा सद्भिः परित्यक्तः

---

१ चन्द्रार्कसमतेजसमिति गो. पाठः । २ गाश्चेति गो. पाठः । ३ वदेत्स्वयमिति गो. पाठः । ४ ऽत्यन्तामिति गो. पाठः । ५ हीति गो. पाठः । ६ त्यक्तस्नेति गो. पाठः । ७ विद्वेष्य इति गो. पाठः ।

पुत्रैर्दारैश्च भृत्यैश्च स्वगृहे परिवारितः । स एको मृष्टमश्नातु यस्यार्योऽनुमते गतः ॥ ३४ ॥
अप्राप्य सदृशान्दारानानपत्यः प्रमीयताम् । अनवाप्य क्रियां धर्म्यां यस्यार्योऽनुमते गतः ॥ ३५ ॥
मात्मनः संततिं द्राक्षीत्स्वेषु दारेषु दुःखितः । आयुःसमग्रमप्राप्य यस्यार्योऽनुमते गतः ॥ ३६ ॥
राजस्त्रीबालवृद्धानां वधे यत्पापमुच्यते । भृत्यत्यागे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ३७ ॥
लाक्षया मधुमांसेन लोहेन च विषेण च । सदैव बिभृयाद्भृत्यान्यस्यार्योऽनुमते गतः ॥ ३८ ॥
संग्रामे समुपोढे च शत्रुपक्षभयंकरे । पलायमानो वध्येत यस्यार्योऽनुमते गतः ॥ ३९ ॥
कपालपाणिः पृथिवीमटतां चीरसंवृतः । भिक्षमाणो यथोन्मत्तो यस्यार्योऽनुमते गतः ॥ ४० ॥
मद्यमसक्तो भवतु स्त्रीष्वक्षेषु च नित्यशः । कामक्रोधाभिभूतश्च यस्यार्योऽनुमते गतः ॥ ४१ ॥
मास्या धर्मे मनो भूयादधर्मं स निषेवताम् । अपात्रवर्षी भवतु यस्यार्योऽनुमते गतः ॥ ४२ ॥

---

अथापि निरपत्रपः निर्लज्जः अकृतप्रायश्चित्त इति यावत्, इदमेकं पापम् ॥ ३२ ॥

३४] ति० टी०—एको मृष्टमश्नातु, इतरेष्वभोजितेषु॥३४॥

रा० टी०—पुत्रैरिति । सः पुत्रादिभिः स्वगृहे परिवारितो युक्तोऽपि एक एव मृष्टमश्नातु ॥ ३४ ॥

गो० टी०—पुत्रदारैरिति । मृष्टमश्नातु इतरेषु कदन्नभुक्षु स्वयं मृष्टं समीचीनमन्नमश्नातु ॥ ३३ ॥

३५ ] ति० टी०—प्रमीयतां म्रियताम् । धर्म्यां क्रियाम-ग्निहोत्रादिकाम् । म्रियतामित्यपकर्षः ॥ ३६ ॥

रा० टी०—अप्राप्येति । सः सदृशान् कुलशीलादिना स्वतुल्यान् दारान् भार्याः अप्राप्य अनपत्यः सन् धर्म्यां धर्म-हितां क्रियां च अनवाप्य प्रमीयतां म्रियताम् ॥ ३६ ॥

गो० टी०—अप्राप्येति। सदृशान्समानकुलान् धर्म्यां क्रियाम् अग्निहोत्रादिकं च अप्राप्य अनपत्यः सन् प्रमीयताम् ॥ ३४ ॥

३६ ] ति० टी०—दुःखित इत्यस्य भवत्विति शेषः । अ-प्राप्येत्यस्य म्रियतामिति शेषः ॥ ३६ ॥

रा० टी०—मेति । सः स्वेषु दारेषु आत्मनः सन्ततिं मा द्राक्षीत् अत एव दुःखितः सन् आयुः समग्रमप्राप्य प्रमीयता-मित्यनुकृष्यते ॥ ३६ ॥

गो० टी०—अप्राप्येत्यादिविवरणम्—मात्मन इति । अनेन ऋणापकरणं विना ब्रह्मचर्यादेव संन्यासः प्रतिषिध्यते । अवि-रक्तविषयमिदमिति चेन्, ब्रह्मचर्यादेव प्रव्रजेदित्यादेर्दार्ढ्याभावि-ष्कत्वात् तत्रैव हि इतरथेत्यनेनायमर्थो दर्शितः ॥ ३६ ॥

३७] ति० टी०—राजस्त्र्यादौ यत्पापं इत्याद्यपकर्षः॥३७॥

रा० टी०—राजेति । राजादीनां वधे यत्पापं भृत्यत्यागे अपराधरहितस्वमीधीनसेवकत्यागे यत्पापमुच्यते धर्मशास्त्रे इति शेषः, तत्पापं सः प्रतिपद्यताम् ॥ ३७ ॥

गो० टी०—राजस्त्रीबालवृद्धानामिति । राजस्त्र्यत्रापि यस्यार्योऽनुमते गत इत्यनुषञ्जनीयम् ॥ ३६ ॥

३८ ] ति० टी०—लाक्षयेति । पतनायतासंपादकवस्तु-विक्रयेणेत्यर्थः । भृत्यान्भरणीयान्पुत्रदारादीन् ॥ ३८ ॥

रा० टी०—लाक्षयेति । सः लाक्षादिनिषिद्धक्रयविक्रया-दिलब्धद्रव्यादिना भृत्यान्भर्तव्यान्पुत्रादीन्सदैव बिभृयात् ॥३८॥

गो० टी०—लाक्षयेति। भृत्यान् भरणीयान् लाक्षादिविक्र-यलब्धद्रव्येण बिभृयाद्रक्षेदित्यर्थः 'लाक्षालवणमांसानि वर्जनी-यानि विक्रये' इति स्मृतेः। 'अप्यकार्यशतं कृत्वा' इत्यस्यापवादो ऽयम् ॥ ३७ ॥

३९ ] ति० टी०—समुपोढे प्राप्ते ॥ ३९ ॥

रा० टी०—सङ्ग्राम इति । सः शत्रुपक्षभयंकरे शत्रुप-क्षाणां भयं करोति उत्पादयति तस्मिन्संग्रामे समुपोढे प्राप्ते सति पलायमानः सन् वध्येत रिपुणेति शेषः ॥ ३९ ॥

गो० टी०—संग्राम इति । समुपोढे निकटे 'उपोढो निक-टोढयोः' इति वैजयन्ती ॥ ३८ ॥

४०–४१ ] ति० टी०—चीरं जीर्णमलिनवस्त्रम् । ब्रह्महा भवत्विति शेषः । तादृशी निषिद्धाचरणा प्रव्रज्या भवत्विति वा भावः ॥ ४० ॥ ४१ ॥

रा० टी०—कपालेति । सः कपालपाणिः सन् उन्मत्त इव पृथिवीमटताम् ॥ ४० ॥

गो० टी०—कपालपाणिरिति । अटतां चरतु चीरं मलिनं जीर्णवस्त्रम् अनेन शैवमतप्रवेशो निन्द्यते ॥ ३९ ॥

रा० टी०—मद्य इति । सः कामादिभिः अभिभूतः परा-भूतः सन्मद्यादिषु नित्यशः प्रसक्तो भवतु ॥ ४१ ॥

गो० टी०—पाने प्रसक्त इति । स्पष्टम् ॥ ४० ॥

४२ ] ति० टी०—अपात्रवर्षी अपात्रे दाता ॥ ४२ ॥

रा० टी०—मेति । तस्य अस्य धर्मे मनो मा भूयात् अत एव सः अधर्मं निषेवतामत एव अपात्रवर्षी कुपात्रेभ्यो देय-वस्तुदाता भवतु ॥ ४२ ॥

गो० टी०—मा स्मेति । अपात्रवर्षी अपात्रे बहुदायी॥४१॥

---

१ पुत्रकोषेति गो. रा. पाठः । २ स्वेति गो. पाठः । ३ पाने प्रसक्त इति गो. मद्ये प्रसक्त इति रा. पाठः । ४ स्विति गो. पाठः । ५ मा स्मेति गो. मास्येति रा. पाठः । ६ स्विति गो. पाठः ।

संचितान्यस्य वित्तानि विविधानि सहस्रशः । दस्युभिर्विप्रलुप्यन्तां यस्यार्योऽनुमते गतः ॥ ४३ ॥
उभे संध्ये शयानस्य यत्पापं परिकल्प्यते । तच्च पापं भवेत्तस्य यस्यार्योऽनुमते गतः ॥ ४४ ॥
यदग्निदायके पापं यत्पापं गुरुतल्पगे । मित्रद्रोहे च यत्पापं तत्पापं प्रतिपद्यताम् ॥ ४५ ॥
देवतानां पितॄणां च मातापित्रोस्तथैव च । मा स्म कार्षीत्स शुश्रूषां यस्यार्योऽनुमते गतः ॥ ४६ ॥
सतां लोकात्सतां कीर्त्याः सञ्जुष्टात्कर्मणस्तथा । भ्रश्यतु क्षिप्रमद्यैव यस्यार्योऽनुमते गतः ॥ ४७ ॥
अपास्य मातृशुश्रूषामनर्थे सोऽवतिष्ठताम् । दीर्घबाहुर्महावक्षा यस्यार्योऽनुमते गतः ॥ ४८ ॥
बहुभृत्यो दरिद्रश्च ज्वररोगसमन्वितः । समायात्सततं क्लेशं यस्यार्योऽनुमते गतः ॥ ४९ ॥
आशामाशंसमानानां दीनानामूर्ध्वचक्षुषाम् । अर्थिनां वितथां कुर्याद्यस्यार्योऽनुमते गतः ॥ ५० ॥
मायया रमतां नित्यं पुरुषः पिशुनोऽशुचिः । राज्ञो भीतस्त्वधर्मात्मा यस्यार्योऽनुमते गतः ॥ ५१ ॥
ऋतुस्नातां सतीं भार्यामृतुकालानुरोधिनीम् । अतिवर्तेत दुष्टात्मा यस्यार्योऽनुमते गतः ॥ ५२ ॥

---

४३ ] ति० टी०—दस्युभिर्विप्रलुप्यन्ताम्, त्यागभोगविहीनानि भवन्त्विति भावः ॥ ४३ ॥

रा० टी०—सम्मिति । तस्य अस्य सहस्रशः बहूनि विविधानि अनेकप्रकाराणि संचितानि अर्जितानि वित्तानि धनानि दस्युभिश्चौरैः विप्रलुप्यन्तां बलात्प्रगृह्यन्ताम् ॥ ४३ ॥

गो० टी०—संचितानीति । दस्युभिस्तस्करैः ॥ ४२ ॥

४४-४५] ति० टी०—उभे संध्ये व्याप्येति शेषः॥४४॥४५॥

रा० टी०—उभे इति । उभे संध्ये प्राप्य शयानस्य जनस्य यत्पापं परिकल्पते प्राप्नोति तत्पापं तस्य भवेत् ॥ ४४ ॥

गो० टी०—उभे इति । उभयोः संध्ययोः ॥ ४३ ॥

रा० टी०—यदिति । अग्निदायकादौ यत्पापं तत्पापं सः प्रतिपद्यताम् ॥ ४५ ॥

गो० टी०—यदिति । गुरुतल्पगे गुरुदारगे ॥ ४४ ॥

४६ ] ति० टी०—देवतानामिति । देवतादिशुश्रूषारहितस्य यत्पापं तत्पापं स प्रतिपद्यतामित्यर्थः ॥ ४६ ॥

रा० टी०—देवतानामिति । सः देवतादीनां शुश्रूषां सेवां मा कार्षीत् ॥ ४६ ॥

गो० टी०—देवतानामिति । देवानां शुश्रूषा अग्निहोत्रादि कर्म संभृतैराज्यचरुपशुपुरोडाशादिभिः प्रीणनं पितॄणां तु उपरागादिषु मातापितृमरणतिथ्यादिषु च पूर्वोक्तैरन्यैश्च तिलादिभिराराधनम् । पितृशुश्रूषयैव मृतमातापितृशुश्रूषाग्रहणसंभवात् मातापित्रोरित्यत्र जीवतोरिति विवक्षितम् ॥ ४५ ॥

४७ ] ति० टी—सतां कीर्त्याः सद्भिः क्रियमाणश्लाघायाः । भ्रश्यतु सा मा भूत्तस्येत्यर्थः ॥ ४७ ॥

रा० टी०—सतामिति । सः सतां सज्जनसंबन्धिनो लोकात्सतां कीर्त्याश्च संजुष्टात्सज्जनसेव्यात्कर्मणश्च भ्रश्यतु सल्लोकादीन् प्राप्नोत्वित्यर्थः ॥ ४७ ॥

गो० टी०—सतामिति । सतां कीर्त्यात् सद्भिः क्रियमाणश्लाघनात् संजुष्टात्सत्सेवितात् ॥ ४६ ॥

४८ ] ति० टी०—अनर्थे जीवनस्याप्यनर्थे ॥ ४८ ॥

रा० टी०—अपास्येति । सः मातृशुश्रूषामपास्य त्यक्त्वा अनर्थे अर्थविध्वंसके मार्गे अवतिष्ठताम् ॥ ४८ ॥

गो० टी०—अपास्येति । पुनर्मातृशुश्रूषाग्रहणं तत्त्यागे प्रत्यवायभूयस्तया तन्नित्यतया च मातृशुश्रूषा हि नित्या यतस्तस्यां पतितायामपि शुश्रूषां विदधति स्मृतयः । अनर्थे अधर्मे ॥ ४७ ॥

४९ ] ति० टी०—समायात्प्राप्नुयात् ॥ ४९ ॥

रा० टी०—बहुभृत्य इति । सः बहुभृत्यादिविशिष्टः सन् क्लेशं समायात्प्राप्नुयात् ॥ ४९ ॥

गो० टी०—बहुपुत्र इति । बहुपुत्रस्यापि धनिनो दुःखाभावात् अपुत्रस्य दारिद्र्येऽपि भरणीयाल्पतया क्लेशाल्पतेति च विशेषणद्वयम् ॥ ४८ ॥

५० ] ति० टी०—अर्थिनामाशामिति संबन्धः । आशंसमानानां स्तुवताम् ऊर्ध्वचक्षुषां दातृमुखनिरीक्षकाणाम् ॥ ५० ॥

रा० टी०—आशामिति । सः आशां स्ववाञ्छामाशंसमानानां कथयतामत एव ऊर्ध्वचक्षुषां तत्स्तवनार्थं कृतोर्ध्वदृष्टीनामर्थिनामाशां मनोरथं वितथां निष्फलं कुर्यात् । आशामित्युभयान्वयि ॥ ५० ॥

गो० टी०—आशामिति । आशंसमानानां स्तुवताम् ऊर्ध्वचक्षुषाम् उन्नतासनस्थदातृमुखनिरीक्षकाणाम् अर्थिनाम् आशां वितथां कुर्यात् ॥ ४९ ॥

५१ ] ति० टी०—मायया वञ्चनया राज्ञो भीत इति भयकारणं पिशुनत्वाद्येव ॥ ५१

रा० टी०—माययेति । सः जनः पिशुनः सूचकः अत एव अशुचिः अत एव अधर्मात्मा अत एव राज्ञो भीतः सन्मायया नानाकपटवेषेण नित्यं रमताम् ॥ ५१ ॥

गो० टी०—माययेति । मायया वञ्चनया रमतां सक्तो भवतु ॥ ५० ॥

५२ ] ति० टी०—ऋतुकालानुरोधिनीमृतुस्नानकालस्वास्वसंनिहिताम् ॥ ५२ ॥

---

१ कल्पते इति रा. पाठः । २ कीर्त्यात्संजुष्टादिति गो. कीर्त्याः संजुष्टादिति रा. पाठः । ३ बहुपुत्र इति गो. पाठः । ४ स भूयास्सततं क्लेशीति गो. पाठः । ५ परुष इति गो. रा. पाठः ।

[1]विप्रलुप्तप्रजातस्य दुष्कृतं ब्राह्मणस्य यत् । [2]तदेतत्प्रतिपद्येत यस्यार्योऽनुमते गतः ॥ ५३ ॥
ब्राह्मणायोद्यतां पूजां विहन्तु कलुषेन्द्रियः । बालवत्सां च गां [3]दोग्धुर्यस्यार्योऽनुमते गतः ॥ ५४ ॥
धर्मदारान्परित्यज्य परदारान्निषेवताम् । त्यक्तधर्मरतिर्मूढो यस्यार्योऽनुमते गतः ॥ ५५ ॥
पानीयदूषके पापं तथैव विषदायके । यत्तदेकः स लभतां यस्यार्योऽनुमते गतः ॥ ५६ ॥
[4]तृषार्तं सति पानीये विप्रलम्भेन [5]योजयन् । यत्पापं लभते तत्स्याद्यस्यार्योऽनुमते गतः ॥ ५७ ॥
भक्त्या विवदमानेषु मार्गमाश्रित्य पश्यतः । [6]तेन पापेन युज्येत यस्यार्योऽनुमते गतः ॥ ५८ ॥
[7]एवमाश्वासयन्नेव दुःखार्तोऽ[8]नुपपात ह । विहीनां पतिपुत्राभ्यां कौसल्यां पार्थिवात्मजः ॥ ५९ ॥
[9]तदा तं शपथैः कष्टैः शपमानमचेतनम् । भरतं शोकसंतप्तं कौसल्या वाक्यमब्रवीत् ॥ ६० ॥

रा० टी०—ऋतुम्विति । सः पुरुषः ऋतुस्नातामत एव ऋतुकालानुरोधिनीमृतुकालहेतुकपतिसंनिधिप्राप्तिमतीं सतीं भार्यामतिवर्तेत तस्स्वीकारं न कुर्यात् ॥ ५२ ॥

गो० टी०—ऋतुस्नातामिति । ऋतुकालानुरोधिनीम् ऋतुस्नानादिवसं स्वसंनिहिताम् ॥ ५१ ॥

५३ ] ति० टी०—विप्रलुप्तप्रजातस्यान्नाद्यदानेन प्रनष्टसंतानस्य कार्द्रपाद्वा तथाभूतस्य, यद्वा विप्रलुप्ता विवर्जिता प्रजाता जातापत्या जाया येन तस्य ॥ ५३ ॥

रा० टी०—विप्रलुप्तेति । विप्रलुप्ताः अन्नाद्यदानेन विनष्टाः प्रजाताः पुत्राः यस्य तस्य ब्राह्मणस्य यद्दुष्कृतं तदेतत्पापं सः प्रतिपद्येत ॥ ५३ ॥

गो० टी०—विप्रलुप्तप्रजातस्येति । विप्रलुप्तप्रजातस्य नष्टापत्यस्य संततिहीनस्येत्यर्थः. तदेव दुष्कृतं प्रतिपद्येत ॥५३॥

५४ ] ति० टी०—विहन्तु विघ्नयतु । बालवत्सां दोग्धुः शास्त्रोक्तदोहनाधिकं दोग्धुः ॥ ५४ ॥

रा० टी०—ब्राह्मणायेति । सः पुरुषः ब्राह्मणाय उद्यतां केनचित्प्रापितां पूजां सत्कृतिं विहन्तु ब्राह्मणनिन्दादिना वारयतु बालः अल्पकालिको वत्सो यस्यास्तां गां च दोग्धु ॥५४॥

गो० टी०—ब्राह्मणायेति । बालवत्साम् अनिर्दशाम्॥५४॥

५५ ] ति० टी०—परदारान्निषेवता यत्पापं तत्पापं प्रतिपद्यताम् । मूढः भूयादिति शेषः ॥ ५५ ॥

रा० टी०—धर्मेति । सः पुरुषः धर्मदारान्पाणिगृहीतीं परित्यज्य त्यक्तधर्मरतिः सन् परदारान्निषेवताम् ॥ ५५ ॥

गो० टी०—धर्मदारानिति । निषेवतां भजताम् ॥५५॥

५६ ] ति० टी०—एको यत्पापद्वयं तदेक एव लभतामित्यर्थः ॥ ५६ ॥

रा० टी०—पानीयेति । पानीयदूषके कूपादिविघातके यत्पापं तत्पापं सः एकः असहायः सन् लभताम् ॥ ५६ ॥

गो० टी०—पानीयेति । पानीयदूषके विषदायके च यत्पापं तत् द्वयम् एको लभतामित्यर्थः ॥ ५४ ॥

५७ ] ति० टी०—विप्रलम्भेन वञ्चनया योजयन् अप्रयच्छन्निति यावत् ॥ ५७ ॥

रा० टी०—तृषार्तमिति । पानीये जले सति तृषार्तं पिपासार्दितं जनं विप्रलम्भेन अत्र जलं नास्तीति वञ्चनया योजयन्सन्यत्पापं लभते तत्पापं तस्य स्यात् 'योजयेत्' इति भूषणपाठः ॥ ५७ ॥

गो० टी०—तृष्णार्तमिति । पानीये सति गृहे विद्यमाने सति विप्रलम्भेन वञ्चनया यो योजयेत् न ददातीत्यर्थः, तस्य यत्पापं तल्लभेत ॥ ५६ ॥

५८-६० ] ति० टी०—भक्त्या शिवविष्ण्वादिदेवताभक्त्या । मार्गं तत्तद्रूपोद्बलकशैववैष्णवादिशास्त्रमाश्रित्यायमुत्कृष्टोऽयं नेति विवदमानेषु यत्पापं यच्च तयोर्विवादं पश्यतः शृण्वतः पापं तेन पापेन स युज्येतेत्यर्थः । 'तस्य पापेन' इति पाठे तयो यत्पापं तेन यस्यानुमते गतस्तस्य योगः संबन्धो भूयादित्यर्थः । भावे च युज्येतेति प्रयोगः । 'अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥' इति शिवपुराणोक्तेः । 'यो ब्रह्मविष्णुरुद्राणां भेदं युक्तिनिवेशतः । साधयेद्दुदरव्याधियुक्तो भवति मानवः ॥' इति कर्मविपाकशास्त्रोक्तेश्च । अत्र विवदमानानां जयोपायं ज्ञात्वा तदकथयतः पापमिति तीर्थव्याख्या । द्वयोः साम्यस्थापनपूर्वकं तेषां कलहशमनमकुर्वतः कलहप्रियस्य यत्पापमिति कतकव्याख्या ॥ ५८–६० ॥

रा० टी०—भक्त्येति । विवदमानेषु वादिप्रवादिषु भक्त्या अन्यतरविषयकप्रीत्या मार्गं स्वप्रीतिविषयीभूतजनजयरीतिमाश्रित्य विचार्य पश्यतः स्वप्रीतिविषयीभूतजनं चौर्येण बोधयतस्तस्य मध्यस्थस्य पापेन सः पुरुषः युज्येत ॥ ५८ ॥

गो० टी०—भक्त्येति । विवदमानेषु वादिप्रतिवादिषु विवादं कुर्वत्सु भक्त्या एकस्मिन् स्नेहेन मार्गं जयोपायमाश्रित्य पश्यतः ब्रुवतस्तस्य पापेन युज्येतेति संबन्धः ॥ ५७–५९ ॥

रा० टी०—एवमिति । पतिपुत्राभ्यां विहीनां कौसल्या-

१ ५३।५४।५५।५६ श्लोकाः ५४।५६।५३। ५५ स्थानेषु गो. पाठे । २ तदेवेति गो. पाठः । ३ दोग्धिवति गो. रा. पाठः । ४ तृष्णार्तमिति गो. पाठः । ५ योजयेदिति गो. पाठः । ६ तस्येति गो. रा. पाठः । ७ एतच्छ्लोकस्तार्धयोर्व्यत्यासेन गो. पाठः । ८ निपपातेति रा. पाठः । ९ तथा स्विति गो. पाठः।

मम दुःखमिदं पुत्र भूयः समुपजायते । शपथैः शपमानो हि प्राणानुपरुणत्सि मे ॥ ६१ ॥
दिष्ट्या न चलितो धर्मादात्मा ते सहलक्षणः । वत्स सत्यप्रतिज्ञो हि सतां लोकानवाप्स्यसि ॥ ६२ ॥
इत्युक्त्वा चाङ्कमानीय भरतं भ्रातृवत्सलम् । परिष्वज्य महाबाहुं रुरोद भृशदुःखिता ॥ ६३ ॥
एवं विलपमानस्य दुःखार्तस्य महात्मनः । मोहाच्च शोकसंरम्भाद्बभूव लुलितं मनः ॥ ६४ ॥
लालप्यमानस्य विचेतनस्य प्रनष्टबुद्धेः पतितस्य भूमौ ।
मुहुर्मुहुर्निःश्वसतश्च दीर्घं सा तस्य शोकेन जगाम रात्रिः ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः ।

वसिष्ठानुयुक्तो भरतः पितुर्देहं तैलद्रोण्या निःसार्य राजोचितद्रव्यैः संस्कृत्य सरय्वामुदकक्रियां विधायायोध्यां प्राप ।

तमेवं शोकसंतप्तं भरतं कैकेयीसुतम् । उवाच वदतां श्रेष्ठो वसिष्ठः श्रेष्ठवागृषिः ॥ १ ॥

---

मेवमाश्वासयन्सन्नेव दुःखार्तः दुःखदर्शनेनातिदुःखितो भरतः निपपात ॥ ५९ ॥

रा० टी०—तदेति । कष्टैः दुष्करैः शपथैः शपमानं शपथं कुर्वन्तं शोकसंतप्तमत एव अचेतनं भरतं कौशल्या अब्रवीत्॥६०॥

६१ ] ति० टी०—भूयोऽभ्यधिकं दुःखं हि यदेवं कष्टैः शपथैः शपमानो मे प्राणानुपरुणत्सि पीडयसे ॥ ६१ ॥

रा० टी०—तद्वचनाकारमाह—ममेति । हे पुत्र ! शपथैः शपमानस्त्वं यद्यपि मे प्राणानुच्छ्वासानुपरुणत्सि निरोधयसि तथापि इदं त्वच्छपथकरणं मम भूयोऽधिकं दुःखं समुपजायते जनयति त्वद्दुःखदर्शनेनाधिकदुःखं प्राप्नोमीत्यर्थः ॥ ६१ ॥

गो० टी०—ममेति । उपरुणत्सि पीडयसीत्यर्थः, यद्वा प्राणानुपरुणत्सि रामवियोगेन मे निर्गच्छतः प्राणान् स्थापयसि शपथकरणेन ममाश्वासो जात इत्यर्थः ॥ ६० ॥

६२ ] ति० टी०—अथ विशुद्धभावं ज्ञात्वाऽनुगृह्णाति—दिष्ट्येति । आत्मान्तःकरणं लक्षणैः शुभलक्षणैः सहितः सहलक्षणस्ते आत्मेत्यर्थः । हे वत्स ! हि यदि सत्यप्रतिज्ञो भविष्यसि तदा सतां लोकानवाप्स्यसि । कैकेय्यग्रे कृतां रामानयनप्रतिज्ञां सत्यां कुर्विति व्यङ्ग्यम् ॥ ६२ ॥

रा० टी०—दिष्ट्येति । हे वत्स ! यस्य ते आत्मा मनः धर्मान्न चलितः सः सहलक्षणः सकलसंलक्षणसंपन्नः सत्यप्रतिज्ञस्त्वं सतां रामादीनां लोकान्कृपादृष्टिप्रधानवाप्स्यसि दिष्ट्या भाग्येनैतत् । 'सहलक्ष्मणः' इति भूषणपाठः । लक्ष्मणवत्सत्यप्रतिज्ञोऽसीति तद्व्याख्या ॥ ६२ ॥

गो० टी०—दिष्ट्येति । दिष्ट्या भाग्येन आत्मा अन्तःकरणं धर्मात् ज्येष्ठानुवर्तनधर्मात् मे मम सहलक्ष्मणः सत्यप्रतिज्ञोऽसि लक्ष्मणवत् सत्यप्रतिज्ञोऽसीत्यर्थः, अतः सतां लोकानवाप्स्यसि ॥ ६३ ॥ ६२ ॥

६३ ] ति० टी०—एवमनुगृह्य पुत्रोचितकृत्येनाश्वासयति—इत्युक्त्वेति ॥ ६३ ॥

रा० टी०—इत्युक्त्वेति । इत्युक्त्वा रुरोद ॥ ६३ ॥

६४ ] ति० टी०—शोकसंरम्भाच्छोकातिशयात् तत एव मोहः लुलितं क्षुभितम् ॥ ६४ ॥

रा० टी०—भरतवृत्तमाह—एवमिति । उक्तप्रकारेण विलपमानस्य शपथादि कुर्वतो दुःखार्तस्य भरतस्य मनो महात्मकर्तव्यविवेकाभावात् एव शोकसंरम्भाच्छोकातिरेकाल्लुलितं चञ्चलं बभूव । 'शोकसंरोधात्' इति भूषणपाठः ॥ ६४ ॥

गो० टी०—एवमिति । एवं विलपमानस्य पूर्वोक्तशपथरूपेण विलपतः शोकसंरोधात् शोककृतसंरोधात् ॥ ६३ ॥

६५ ] ति० टी०—दीर्घं यथा भवति तथा रात्रौ रात्रिशेष. पाठान्तरे घर्ममुष्णं यथा भवति तथा ॥ ६५ ॥

अत्रैकश्लोकोऽधिक इति कतकसंख्यया ज्ञायते ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चसप्ततितमः सर्गः ॥७५॥

रा० टी०—लालप्यमानस्येति । लालप्यमानस्य उक्तप्रकारेण बहु कथयतः विचेतनस्य कार्याकार्यविवेकरहितस्य अत एव प्रनष्टबुद्धेः विध्वस्तकर्तव्यविषयकनिश्चयस्य अत एव भूमौ पतितस्य अत एव दीर्घं मुहुर्मुहुर्निःश्वसतस्तस्य भरतस्य शोकेन रात्रिर्जगाम ॥ ६५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

गो० टी०—लालप्यमानस्येति । लालप्यमानस्य भृशं प्रलपतः विचेतनस्य मूर्च्छितस्य प्रनष्टबुद्धेः क्षुभितान्तःकरणस्य घर्मम् उष्णं यथा भवति तथा निःश्वसतः ॥ ६५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

१ ] ति० टी०—तामिति । वसिष्ठः भरतागमनं श्रुत्वाऽऽगत इति शेषः ॥ १ ॥

---

१ लक्ष्मण इति गो. पाठः । २ म इति गो. पाठः । ३ संरोधादिति गो. पाठः । ४ घर्ममिति गो. पाठः । ५ कैकयीति रा. पाठः ।

अलं शोकेन भद्रं ते राजपुत्र महायशः । प्राप्तकालं नरपतेः कुरु संयानमुत्तमम् ॥ २ ॥
वसिष्ठस्य वचः श्रुत्वा भरतो धरणीं गतः । प्रेतकृत्यानि सर्वाणि कारयामास धर्मवित् ॥ ३ ॥
उद्धृत्य तैलसंसेकात्स तु भूमौ निवेशितम् । आपीतवर्णवदनं प्रसुप्तमिव भूमिपम् ॥ ४ ॥
संवेश्य शयने चाग्र्ये नानारत्नपरिष्कृते । ततो दशरथं पुत्रो विललाप सुदुःखितः ॥ ५ ॥
किं ते व्यवसितं राजन्प्रोषिते मय्यनागते । विवास्य रामं धर्मज्ञं लक्ष्मणं च महाबलम् ॥ ६ ॥
क यास्यसे महाराज हित्वेमं दुःखितं जनम् । हीनं पुरुषसिंहेन रामेणाक्लिष्टकर्मणा ॥ ७ ॥
योगक्षेमं तु तेऽव्यग्रं कोऽस्मिन्कल्पयिता पुरे । त्वयि प्रयाते स्वस्तात रामे च वनमाश्रिते ॥ ८ ॥
विधवा पृथिवी राजंस्त्वया हीना न राजते । हीनचन्द्रेव रजनी नगरी प्रतिभाति माम् ॥ ९ ॥
एवं विलपमानं तं भरतं दीनमानसम् । अब्रवीद्वचनं भूयो वसिष्ठस्तु महामुनिः ॥ १० ॥

---

रा० टी०—भरतशोकानन्तरकालिकं वृत्तमाह—तमिति । एवं शोकसंतप्तं भरतं श्रेष्ठा वाक् भरतकर्तृकसत्कृतिवचनं यस्मै सः वदतां श्रेष्ठो वशिष्ठः उवाच ॥ १ ॥

गो० टी०—तमिति । कैकेयीसुतमित्यत्र "केकयमित्रयुप्रलयानां यादेरियः" इति विहितस्येयादेशस्याभावः ॥ १ ॥

२ ] ति० टी०—संयानं प्रेतनिर्हारम् ॥ २ ॥

रा० टी०—वचनाकारमाह—अलमिति । शोकेन अलं न कुर्वित्यर्थः । कर्तव्यमाह—नरपतेः नरस्य पतिः राजा यस्य यत्संबन्धी तस्य तदुपबर्हणादेरित्यर्थः, उत्तमं यथोचितं संयानं बहिर्निर्गमनं कुरु ॥ २ ॥

गो० टी०—अलमिति । सयानं सम्यग्यानं स्वर्गप्रापकक्रियाजातमित्यर्थः ॥ २ ॥

३ ] ति० टी०—धरणीं गतः वसिष्ठं साष्टाङ्गं नमस्कृत्येत्यर्थः । 'धारणां गतः' इति पाठे धैर्यं प्राप्त इत्यर्थः । कारयामास तत्करणार्थं मन्त्रिणः प्रेरयामासेत्यर्थः ॥ ३ ॥

रा० टी०—वसिष्ठस्येति । धरणीं भूमिं गतः प्राज्ञो भरतः वशिष्ठस्य वचः श्रुत्वा प्रेतकृत्यानि लोकान्तरगतसंबन्धिकर्तव्यानि कारयामास ॥ ३ ॥

गो० टी०—वसिष्ठस्येति । धारणां गतः धैर्यं प्राप्तः 'मर्यादा धारणा स्थितिः' इत्यमरः स्वस्थान्तःकरण इत्यर्थः । कारयामासेति संक्षेपोक्तिः ॥ ३ ॥

४ ] ति० टी०—बहुदिवसतैलावस्थानोपाधिना आपीतवर्णं वदनं यस्य तम् ॥ ४ ॥

५ ] ति० टी०—दशरथमिति ददर्शेति शेषः ॥ ५ ॥

रा० टी०—कर्तव्याकारमाह—उद्धृत्येति । तैलसंरोधात् तानां चौराणां अश्च ईश्च अयौ प्राणलक्ष्म्यौ लान्ति गृह्णन्ति तेषां द्वारपाणां कर्तॄणां संरोधोऽभ्यजननिवारणं यस्मिन् तस्मात्स्थलविशेषादुद्धृत्य बहिरानीय भूमौ निवेशितं पर्यङ्काद्यः स्थापनमापीतवर्णस्य अतिपीतत्वविशिष्टवर्णस्य वदनं विशिष्टमिसतं भूमिपं भूमेः पः पालको यस्य यत्संबन्धी तदुपबर्हणविशिष्टास्तरणपटम् अग्र्ये अत्युत्तमे नानारत्नपरिष्कृते नानारत्नविशिष्टे शयने नवीने पर्यङ्के सुप्तं दशरथमिव संवेश्य संस्थाप्य ततः तस्य तत्स्मारकत्वेन प्राप्तस्मृतित्वाद्धेतोः पुत्रो विललाप । श्लोकद्वयमेकान्वयि 'तश्चौरामृतपुच्छेषु' इति मेदिनी 'अः कृष्णः शंकरो ब्रह्मा शक्रः सोमोऽनलोऽनिलः । सूर्यः प्राणो यमः कामो वसन्तः प्रणवः सुखी ॥ लक्ष्मीरीकार उच्यते' इति कोशः ॥ ४ ॥ ५ ॥

गो० टी०—उद्धृतमित्यादि श्लोकद्वयमेकान्वयम् । ततः स पुत्रः तैलसंरोधात् तैलद्रोण्याः उद्धृतं ततस्तैलापमार्जनाय भूमौ निवेशितं चिरं तैले स्थापनादापीतवर्णवदनम् अवयवशैथिल्याभावात् प्रसुप्तमिव स्थितं दशरथं भूपतिम् उक्तविशेषणे शयने संवेश्य शाययित्वा सुदुःखितः सन् विललाप ॥ ४ ॥ ५ ॥

६ ] ति० टी०—व्यवसितं मनीषितम् । प्रोषिते देशान्तरगते ॥ ६ ॥

रा० टी०—विलापाकारमाह—किमिति । मयि प्रोषिते मातुलकुलं प्राप्ते अनागते भवन्निकटकर्मकगमनाभाववति सति रामादिकं विवास्य त्वया किं व्यवसितं निश्चितम्, अनुचितं कृतमित्यर्थः ॥ ६ ॥

गो० टी०—किमिति । किं ते व्यवसितं त्वया किमध्यवसितं स्वर्गगमनायेति शेषः ॥ ६ ॥ ७ ॥

७ ] ति० टी०—रामेण हीनमिमं दुःखितं जनं हित्वा क यास्यसीत्यन्वयः ॥ ७ ॥

रा० टी०—केति । आक्लिष्टकर्मणा सरलस्वभावेन रामेण हीनमत एव दुःखितमिमं जनं हित्वा क यास्यसि ॥ ७ ॥

८–१० ] ति० टी०—ते तवास्मिन्पुरेऽयोध्यायां योगक्षेमं प्रजानाम् अव्यग्रं परित्यक्तदुःखपारवश्यं यथा तथा स्वः स्वर्गम् ॥ ८–१० ॥

रा० टी०—योगेति । हे तात ! रामे वनमाश्रिते प्राप्ते सति त्वयि स्वः सर्वपरलोकं प्रयाते प्राप्ते सति ते पुरे अव्यग्रं यथा स्यात्तथा योगक्षेमं कः कल्पयिता ॥ ८ ॥

---

१ कार्ष्णमिति गो. पाठः । २ कार्योणीति गो. पाठः । ३ उद्धृतामिति गो. पाठः । ४ संरोधादिति गो. पाठः । ५ भूपतिमिति गो. पाठः । ६ यास्यसीति गो. रा. पाठः । ७ राजन्निति गो. पाठः । ८ वचनमिति रा. पाठः ।

प्रेतकार्याणि यान्यस्य कर्तव्यानि विशांपतेः । तान्यव्यग्रं महाबाहो [1]क्रियतामविचारितम् ॥ ११ ॥
तथेति भरतो वाक्यं वसिष्ठस्याभिपूज्य तत् । ऋत्विक्पुरोहिताचार्यांस्त्वरयामास सर्वशः ॥ १२ ॥
ये त्वग्नयो नरेन्द्रस्य [2]अग्न्यगाराद्बहिष्कृताः । ऋत्विग्भिर्याजकैश्चैव [3]ते ह्रूयन्त यथाविधि ॥ १३ ॥
शिबिकायामथारोप्य राजानं गतचेतनम्[4] । बाष्पकण्ठा विमनसस्तमूहुः[5] परिचारकाः ॥ १४ ॥
हिरण्यं च सुवर्णं च वासांसि विविधानि च । प्रकिरन्तो जना मार्गं[6] नृपतेरग्रतो ययुः ॥ १५ ॥
चन्दनागुरु[7]निर्यासान्सरलं पद्मकं तथा । देवदारूणि चाहृत्य [8]क्षेपयन्ति तथापरे ॥ १६ ॥

रा० टी०–विधवेति। त्वया हीना अत एव विधवा रक्षकरहिता पृथिवी भूतलं न राजते अत एव हीनचन्द्रा चन्द्ररहित रजनी रात्रिरिव मां प्रतिभाति ॥ ९ ॥

रा० टी०–एवमिति । एवं विलपमानं भरतं वसिष्ठः भूयोऽब्रवीत् ॥ १० ॥

गो० टी०–योगक्षेममिति । ते पुरे अयोध्यायां कः जनः योगक्षेमं स्वकीयपरयोगक्षेमं कल्पयिता करिष्यति त्वः स्वर्गम् ॥ ८–१० ॥

११ ] ति० टी०–अविचारितं प्राचीनवैभवादिस्मरणरहितं यथा तथा ॥ ११ ॥

रा० टी०–वचनाकारमाह–प्रेतेति । अस्य साकेतं प्राप्तस्य विशां प्रजानां पतेः पत्युः यानि प्रेतकार्याणि परलोकगमनविहितकर्माणि कर्तव्यानि तानि अव्यग्रं यथा स्यात्तथा अविचारितं सशरीरं लोकान्तरं गतस्य प्रेतकार्याणि कर्तव्यानि न वेति संशयरहितं यथा स्यात्तथा क्रियताम् एतेन सशरीरगतपुरुषस्य वस्त्रादिषु तच्छरीरबुद्धिः कर्तव्येति सूचितं तेन कर्मणामवश्यकर्तव्यता व्यञ्जिता तेन वसिष्ठस्य मर्यादापालकत्वं व्यक्तम् ॥ ११ ॥

गो० टी०–प्रेतकार्याणीति । विशांपतेः प्रजानां पत्युः ॥ ११ ॥

१२ ] ति० टी०–ऋत्विजो यज्ञकर्मणि वृताः, पुरोहिताः सर्वहितप्रवर्तकाः । तदुक्तम्–'मन्त्रे च धर्मकृत्ये च शान्तिकर्मणि पौष्टिके । अध्वरे यश्च कुशलः स स्याद्राजपुरोहितः ॥' इति । उपनीय वेदाध्यापक आचार्यः ॥ १२ ॥

रा० टी०–तथेति । वसिष्ठस्य तद्वाक्यं तथेत्यभिपूज्य भरतः सर्वशः ऋत्विक्पुरोहिताचार्यान् त्वरयामास । तत्र ऋत्विजो यागकर्मसु प्रवृत्ताः, पुरोहिताः सकलहितकार्यप्रवर्तकाः । तथाहि 'मन्त्रे च धर्मकृत्ये च शान्तिकर्मणि पौष्टिके । अध्वरे यश्च कुशलः स स्याद्राजपुरोहितः ॥' इति । आचार्याः वेदाध्यापकाः ॥ १२ ॥

गो० टी०–तथेतीति । ऋत्विक्पुरोहिताचार्यान् ऋत्विजो यज्ञकर्मणि वृताः पुरोहिताः पुरोहितपरत्वेन शान्तिकपौष्टिकादिक्रियाप्रवर्तकाः आचार्याः वसिष्ठवामदेवादयः । 'त्रय्यां च धर्मकृत्ये च शान्तिकर्मणि पौष्टिके । अध्वरे यश्च कुशलः स स्याद्राजपुरोहितः ॥ उपनीय ददद्वेदमाचार्यः स उदाहृतः ।' इति लक्षणम् ॥ १२ ॥

१३–१४] ति० टी०–अग्न्यगाराद्बहिष्कृता अन्तःशवत्वाद्बहिःप्रदेशे प्रतिष्ठापिताः याजकैरुपद्रष्टृभिः हूयन्त स्म१३॥१४

रा० टी०–य इति । ये नरेन्द्रस्याग्नयः अग्न्यगाराद्बहिर्वेश्मनः ऋत्विग्भिर्याजकैश्च बहिष्कृतास्ते यथाविधि हूयन्ते॥१३॥

रा० टी०–शिबिकायामिति । गतचेतनं राजानमिव तं राजशय्योपबर्हणविशिष्टपटं शिबिकायामारोप्य परिचारकाः तात्कालिकवहनयोग्याः ऊहुः । अथशब्द इवार्थे ॥ १४ ॥

गो० टी०–य इति । अग्न्यगारात् अग्निगृहात् बहिष्कृताः अन्तःशववत्त्वात् बहिः प्रतिष्ठापिताः अग्नयो गार्हपत्यादयः याजकैः उपद्रष्टृभिः ऋत्विग्भिश्च आहूयन्त आनीयन्त१३॥१४

१५ ] ति० टी०–हिरण्यं रजतम् । स्वर्णरजतपुष्पाणीति यावत् ॥ १५ ॥

रा० टी०–हिरण्यमिति । नुः पतिः राजा यस्य यत्संबन्धी तस्य उपबर्हणविशिष्टपटस्य अग्रतः मार्गे हिरण्यादीन्प्रकिरन्तः प्रक्षिपन्तो नराः ययुः । तत्र हिरण्यशब्देन रजतं ग्राह्यं, किंच शोभनो वर्णो यस्य तद्धिरण्यमिति च समानाधिकरणमतो न पौनरुक्त्यम् ॥ १५ ॥

गो० टी०–हिरण्यमिति । हिरण्यं च सुवर्णं च रजतं च सुवर्णं च तत्कृतपुष्पाणीत्यर्थः ॥ १५ ॥

१६ ] ति० टी०–निर्यासो गुग्गुल्वादिः सरलपद्मके काष्ठभेदः देवदारूणि देवदारुकाष्ठानि, क्षेपयन्ति चितायामिति शेषः१६

रा० टी०–चन्दनेति । अपरे चन्दनादीनि आहृत्य चितां चक्रुः तत्र निर्यासो गुग्गुलुः 'गुग्गुलुः कालनिर्यासौ' इति निघण्टुः । सरलपद्मके काष्ठविशेषौ चाहृत्य चितां चक्रुः 'क्षेपयन्ति तथा परे' इति भट्टपाठः ॥ १६ ॥

गो० टी०–चन्दनागरुनिर्यासानिति । चन्दनागरुनिर्यासान् निर्यासो गुग्गुलुः 'गुग्गुलुः कालनिर्यासौ' इति निघण्टुः । चन्दनागरुजनितधूपद्रव्याणीति यावत् सरलं धूपसरलं पद्मकं सुरभिकाष्ठविशेषं क्षेपयन्ति पुरतः पार्श्वतश्च म्रियमाणसौवर्णराजताङ्गारधानीषु धूपार्थमिति शेषः । चन्दनादीनि गन्धान्तानि चिताकाष्ठद्रव्याणि स्थैव तु युक्तं तदा क्षेपयन्ति दहनार्थं चितामकुर्वन्नित्यर्थः ॥ १६ ॥

१ क्रियन्तामिति गो. पाठः । २ चाग्न्योति गो. पाठः । ३ आहियन्तेति गो. पाठः । ४ चेतसमिति गो. पाठः । ५ कहुरिति गो. रा. पाठः । ६ मार्गमिति गो. पाठः । ७ अगर्विति गो. रा. पाठः । ८ चितां चक्रुरिति रा. पाठः ।

गन्धानुच्चावचांश्चान्यांस्तत्र गत्वाथ भूमिपम् । तत्र संवेशयामासुश्चितामध्ये तमृत्विजः ॥ १७ ॥
तदा हुताशनं हुत्वा जेपुस्तस्य तदृत्विजः । जगुश्च ते यथाशास्त्रं तत्र सामानि सामगाः ॥ १८ ॥
शिबिकाभिश्च यानैश्च यथार्हं तस्य योषितः । नगरान्निर्ययुस्तत्र वृद्धैः परिवृतास्तथा ॥ १९ ॥
प्रसव्यं चापि तं चक्रुर्ऋत्विजोऽग्निचितं नृपम् । स्त्रियश्च शोकसंतप्ताः कौसल्याप्रमुखास्तदा ॥ २० ॥
क्रौञ्चीनामिव नारीणां निनादस्तत्र शुश्रुवे । आर्तानां करुणं काले क्रोशन्तीनां सहस्रशः ॥ २१ ॥
ततो रुदन्त्यो विवशा विलप्य च पुनःपुनः । यानेभ्यः सरयूतीरमवतेरुर्नृपाङ्गनाः ॥ २२ ॥
कृत्वोदकं ते भरतेन सार्धं नृपाङ्गना मन्त्रिपुरोहिताश्च ।
पुरं प्रविश्याश्रुपरीतनेत्रा भूमौ दशाहं व्यनयन्त दुःखम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

१७ ] ति० टी०—तत्र चितादेशे गत्वा तं चितामध्ये संवेशयामासुः स्थापयामासुः ॥ १७ ॥

रा० टी०—गन्धानिति । अन्यान् विलक्षणानुच्चावचान्गन्धांस्तत्र चितायां दत्वा भूमिपम् उपबर्हणसहितास्तरणपटं चितामध्ये ऋत्विजः संवेशयामासुः ॥ १७ ॥

गो० टी०—तत्र गत्वाथ भूमिपमित्युत्तरशेषः अथ चिताकल्पनानन्तरं तत्र चितासमीपं गत्वा तं भूमिपं चितामध्ये ततः शिबिकायाः उद्धृत्येति शेषः, संवेशयामासुः शाययामासुः ॥ १७ ॥

१८-१९ ] ति० टी०—जेपुः पैतृमेधिकमन्त्रान् तस्य परलोकशुद्ध्यर्थमिति शेषः । तदृत्विजस्तत्यज्ञप्रवर्तकाः ॥१८॥१९॥

रा० टी०—तदेति । हुताशनं वह्निं दत्वा भरतेन चितायां दापयित्वा तस्य राज्ञः तदृत्विजः जेपुः विहितमन्त्रमुच्चारयामासुः तत्र तस्मिन्समये सामगाः सामानि च जगुः ॥ १८ ॥

गो० टी०—तथेति । हुताशनं दत्वा भरतेन दापयित्वा जेपुः पैतृमेधिकमन्त्रविशेषानिति शेषः, तस्य परमगत्यर्थमिति शेषः। तमिति हुताशनविशेषणं हुतं प्रेताग्निमित्यर्थः। ते उद्गातृप्रभृतयः ऋत्विजः ॥ १८ ॥

रा० टी०—शिबिकाभिरिति । तस्य राज्ञः वृद्धैः परिवृता योषितः शिबिकाभिः यानैः रथादिभिश्च नगरान्निर्ययुः ॥ १९ ॥

गो० टी०—शिबिकाभिरिति। यानैरश्वादिभिः वृद्धैः परिचारकैः ॥ १९ ॥

२०-२२ ] ति० टी०—प्रसव्यमप्रदक्षिणम् अग्निचितमग्निचयनवन्तम् अश्वमेधान्तयज्ञकर्तारं स्त्रियश्च प्रसव्यं चक्रुरित्यन्वयः ॥ २०-२२ ॥

रा० टी०—प्रसव्यमिति । अग्निचितमग्निं प्राप्तं नृपं नृपसंबन्धिनं तं यज्ञ्वनः ऋत्विक्सहितो भरतः स्त्रियश्च प्रसव्यं प्रदक्षिणं चक्रुः ॥ २० ॥

रा० टी०—क्रौञ्चीनामिति । तत्र तस्मिन्काले आर्तानामत एव करुणं क्रोशन्तीनां क्रौञ्चीनां निनाद इव निनादः शुश्रुवे ॥ २१ ॥

रा० टी०—तत इति । ततः अत्यार्तत्वाद्धेतोः रुदन्त्यः अत एव विवशाः कान्तिरहिताः नृपाङ्गनाः पुनः पुनः विलप्य यानेभ्यः सरयूतीरमवतेरुः ॥ २२ ॥

गो० टी०—प्रसव्यमिति । अग्निचितम् अग्निचयनं कृतवन्तं तं नृपम् ऋत्विजः स्त्रियश्च प्रसव्यं सव्यापसव्यं प्रदक्षिणमप्रदक्षिणं च चक्रुः । पाठभेदः प्रसव्यम् अप्रदक्षिणम् इदं प्रदक्षिणस्याप्युपलक्षणम् भरतश्चेत्यर्थसिद्धम् इदं चाग्निदानात्पूर्वं शिबिकास्थे प्रेते क्रमस्याविवक्षितत्वादत्रोक्तं देशविशेषाचारोऽयं वा ॥ २०-२२ ॥

२३ ] ति० टी०—दशाहम् अत्यन्तसंयोगे द्वितीया दुःखमाशौचम् भूमौ शयाना इति शेषः । इदं ब्रह्मचर्यमात्रोपलक्षणम् । ननु 'द्वादशाहेन भूपालः क्षत्रियः षोडशेऽहनि' इति स्मृतेः कथं क्षत्रियस्य दशाहेनाशौचात्यय इति चेन्न 'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः' इति पराशरोक्तेरिति दिक् ॥२३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

रा० टी०—कृत्वेति । भरतेन सार्धं नृपाङ्गनाः ते मन्त्रिपुरोहिताश्च उदकमुदकदानं कृत्वा दशाहं दश दिनानि भूमौ दुःखं व्यनयन्त । न च 'द्वादशाहेन भूमिपः' इत्यादिवचनात् राज्ञां द्वादशाहेन शुद्धेः दशाहमिति विरुद्धमिति वाच्यं, तादृशवचनानां शरीरदाहविषयत्वेनादोषात् अत एव 'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः' इत्यादिवचनं संगच्छते ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

गो० टी०—कृत्वेति । ताश्च ते च ते पुमांस्त्रियेत्येकशेषः, दशाहम् "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया भूमौ शयाना

१ तत इति गो० पाठः । २ तथेति गो० पाठः । ३ दत्त्वेति गो० रा० पाठः । ४ तमिति गो० पाठः । ५ तदेति गो० पाठः । ६ वराङ्गना इति गो० पाठः ।

## सप्तसप्ततितमः सर्गः ।

दशेऽह्नि शत्रुघ्नयुतो भरतः सकलश्राद्धानि निर्वर्त्य तदङ्गत्वेन ब्राह्मणेभ्यो बहुधनरत्नादि व्यतरत् । त्रयोदशेऽह्न्यस्थिसंचयनार्थं चितामूलमुपागतो भरतः शोकाकुलः सन्धरण्यां निपपात । भुवि लुठन्नेव शत्रुघ्नो बहु व्यलपत् । अथो वसिष्ठसुमन्त्रावुभौ अपि तौ तावस्थिसंचयनकर्मण्यनात्यांस्त्वरयामासतुः ।

ततो दशाहेऽतिगते कृतशौचो नृपात्मजः । द्वादशेऽहनि संप्राप्ते श्राद्धकर्माण्यकारयत् ॥ १ ॥
ब्राह्मणेभ्यो धनं रत्नं ददावन्नं च पुष्कलम् । [ वासांसि च महार्हाणि रत्नानि विविधानि च ।]
बास्तिकं बहु शुक्लं च गाश्चापि बहुशस्तदा । ॥ २ ॥
दासीदासांश्च यानानि वेश्मानि सुमहान्ति च । ब्राह्मणेभ्यो ददौ पुत्रो राज्ञस्तस्यौर्ध्वदेहिकम् ॥ ३ ॥
ततः प्रभातसमये दिवसे च त्रयोदशे । विललाप महाबाहुर्भरतः शोकमूर्च्छितः ॥ ४ ॥
शब्दापिहितकण्ठश्च शोधनार्थमुपागतः । चितामूले पितुर्वाक्यमिदमाह सुदुःखितः ॥ ५ ॥

इति शेषः । कियत्कालपर्यन्तं भूमौ स्वपेयुस्ते पृथक् पृथक् इत्याशौचिनां पृथक्शयनं हि विहितं दुःखमाशौचं व्यनयन्त अगमयन् । ननु 'षोडशाहेन भूपालाः' इति क्षत्रियस्य षोडशाहाशौचमद्वावात् कथं दशाहमित्युच्यत इति चेत् सत्यम् 'क्षत्रियस्तु दशाहेन स्वकर्मनिरतः शुचिः' इत्यादिविशेषशाखानुसारेणोक्तमिति न दोषः । अत्र स्त्रीणां प्रेतदक्षिणमुदकदानं च सूत्रान्तरोक्तं ज्ञेयं तथा चितास्थस्य प्रदक्षिणं च अत एवाह बोधायनः 'प्रदक्षिणमपि बान्धवाः कुर्वन्ति' एवं मार्गेऽपि चितामारोप्य चितायामेवेत्यक इति । अत्र प्रेतेन सहाग्न्यानयनं चितारोपणं समन्त्रकमग्निदानं प्रदक्षिणीकरणमुदकदानं दशाहमाशौचेन भूमौ शयनमित्येतावन्मात्रं देशकुलसूत्रभेदेन और्ध्वदेहिकविशेष उक्त इति वा प्रधानोक्तिः सर्वग्रहणार्थमिति वा ज्ञेयम् ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने-ऽयोध्याकाण्डव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

१ ] ति० टी०—तत इति । दशाहेऽतिगते एकादशेऽह्नि कृतशौचोऽनुष्ठितप्रेतविमुक्तिदैकादशाहश्राद्धः । श्राद्धकर्माणि द्वितीयमासिकादिसपिण्डीकरणान्तश्राद्धानि ॥ १ ॥

रा० टी०—दशाहानन्तरकालिकं वृत्तमाह—तत इत्यादिभिः । दशाहेऽतिगते व्यतीते सति एकादशेऽहनीत्यर्थः, कृतशौचः कृतं शौचं स्वशुद्धिहेतुभूतैकादशाहविहितं कर्म येन स भरतः द्वादशेऽहनि संप्राप्ते सति श्राद्धकर्माणि द्वादशाहविहितकर्मविशेषानकारयदकरोत् । रामो राज्यमचीकरदित्यादाविवात्र णिच् ॥ १ ॥

गो० टी०—तत इति । दशाहे अतिगते अतीते एकादशाह इत्यर्थः, कृतशौचः कृतशौचापादकपुण्याहवाचननवश्राद्धादिक इत्यर्थः द्वादशेऽहनि श्राद्धकर्माणि षोडशमासिकानि सपिण्डीकरणान्तानीत्यर्थः अकारयत् अकरोदित्यर्थः स्वार्थे णिच् ॥ १ ॥ २ ॥

२ ] ति० टी०—बास्तिकं छागसमूहम् आर्षत्वक् । बस्तोऽजः शुक्लं रजतम्, 'शुक्लो योगान्तरे श्वेते शुक्लं च रजते मतम् ॥ २ ॥

रा० टी०—ब्राह्मणेभ्य इति । पुष्कलं बहु धनं रत्नं च बास्तिकं बस्तानां छागानां समूहः आर्षत्वक् तं च बहु शुक्लं प्रभूतरजतं च बहुशो गाश्च ब्राह्मणेभ्यो ददौ । यदि च बहु अधिकं शुक्लं स्वच्छत्वं यस्येति बहुव्रीहिस्तदा बास्तिकविशेषणम् । 'अजः प्रोक्तस्ततो बस्तः' इत्यमरः, 'शुक्लो योगान्तरे श्वेते शुक्लं च रजतं मतम्' इति विश्वः ॥ २ ॥

३] ति० टी०—ऊर्ध्वदेहोद्भवमौर्ध्वदेहिकं पारलौकिकम् ॥ ३ ॥

रा० टी०—दासीति । और्ध्वदेहिकं पारलौकिकं यथा स्यात्तथा दास्यादीन् ददौ "ऊर्ध्वदेहाच्चेति वक्तव्यम्" इति ठक् ॥ ३ ॥

गो० टी०—बास्तिकमित्यादि । बस्तानां छागानां समूहो बास्तिकं छान्दसष्ठक् 'अजा छागी स्तुभच्छागबस्तच्छागलका अजे' इत्यमरः बहुशुक्लमिति छागविशेषणं रजतं वा पितृप्रियत्वात् 'शुक्लो योगान्तरे श्वेते शुक्लं च रजते तथा' इति विश्वः । दासीदासं गवाश्वप्रभृतित्वादेकवद्भावः ऊर्ध्वं देहादूर्ध्वदेहः तत्र भवमौर्ध्वदैहिकम् "ऊर्ध्वदेहाच्चेति वक्तव्यम्" इति ठक् ॥ ३ ॥

४—५ ] ति० टी०—त्रयोदशे त्रयोदशेऽहनि शोधनार्थमुपागतो विललापेत्यन्वयः । दशाहाभ्यन्तरेऽस्थिसंचयनं कृत्वा सकलश्राद्धानन्तरं त्रयोदशेऽहनि चिताभस्मोद्धारपूर्वकं स्थलशुद्धिः कर्तव्येति क्षत्रियधर्म इति वाल्मीकिमुक्तेर्ज्ञायते इति कतकः । तीर्थस्तु—शोधनमस्थिसंचयनमित्याह । शब्देन रोदनशब्देन पिहित आवृतः कण्ठो यस्य, चितामूले इदं वाक्यमाह ॥ ४ ॥ ५ ॥

रा० टी०—तत इति । त्रयोदशे दिने प्रभातसमये भरतो विललाप ॥ ४ ॥

गो० टी०—तत इति । शब्दापिहितकण्ठः रोदनध्वनिना व्याप्तकण्ठः शोधनार्थं स्थलशोधनार्थम् 'दहनदेशमुदकुम्भैः स्ववोक्षति' इति सूत्रात् अस्थिसंचयनार्थमित्यर्थः साकल्येनास्थिनिचय इति वक्ष्यमाणत्वात् त्रयोदशेऽप्यस्थिसंचयनं सूत्रान्तरे दृश्यते

१ अर्धमेतदधिकं गो. पाठे । २ शतश इति गो. पाठः । ३ दासीदासं च यानं चेति गो. दासीदासं च यानानीति रा. पाठः । ४ मौर्ध्वदैहिकमिति गो. ग. पाठः । ५ स्थेति गो. पाठः । ६ स्तिति गो. पाठः ।

तात यस्मिन्निसृष्टोऽहं त्वया भ्रातरि राघवे । तस्मिन्वनं प्रव्रजिते शून्ये त्यक्तोऽस्म्यहं त्वया ॥ ६ ॥
यस्या गतिरनाथायाः पुत्रः प्रव्राजितो वनम् । तामम्बां तात कौसल्यां त्यक्त्वा त्वं क्व गतो नृप ॥ ७ ॥
दृष्ट्वा भस्मारुणं तच्च दग्धास्थि स्थानमण्डलम् । पितुः शरीरनिर्वाणं निष्टनन्विषसाद ह ॥ ८ ॥
स तु दृष्ट्वा रुदन्दीनः पपात धरणीतले । उत्थाप्यमानः शक्रस्य यन्त्रध्वज इवोच्छ्रितः ॥ ९ ॥
अभिपेतुस्ततः सर्वे तस्यामात्याः शुचिव्रतम् । अन्तकाले निपतितं ययातिमृषयो यथा ॥ १० ॥
शत्रुघ्नश्चापि भरतं दृष्ट्वा शोकपरिप्लुतम् । विसंज्ञो न्यपतद्भूमौ भूमिपालमनुस्मरन् ॥ ११ ॥

यथाह बोधायनः 'द्वितीयेऽह्नि युग्मदिवसेष्वर्धमासान्मासानृतून् संवत्सरं वा संचयनं कुर्यात्' इति ॥ ५ ॥

रा० टी०—विलापाकारमाह—शब्देति । चितामूले चितस्य स्वायत्तराजार्जितपदार्थस्य आमूलमासमन्ताद्भावेन स्थापनं यत्र तस्मिन् गृहे शोधनार्थं यथोचितं संस्थापनार्थमुपागतः प्राप्तः अत एव अतिदुःखितः पितृस्मारकपित्रसाधारणवस्तुदर्शनजनितपितृस्मरणहेतुकदुःखाक्रान्तः शब्दापिहितकण्ठः शब्दैः बहुप्रलापैः आपिहितः कण्ठो यस्य स भरतः इदं वाक्यमाह ॥ ५ ॥

गो० टी०—चितामूल इत्यर्थम् ॥ ५ ॥

६ ] ति० टी०—तदेवाह—तातेति । निसृष्टो दत्तः । प्रव्रजिते प्रव्राजिते । अहं शून्ये त्यक्तो निरवलम्बतया निरस्तः ॥ ६ ॥

रा० टी०—वाक्याकारमाह—तातेति । हे तात ! त्वया यस्मिन् राघवे रामे अहं निसृष्टः नियुक्तस्तस्मिन्वनं प्रव्रजिते अत एव शून्ये स्वजनरहिते समये त्वयाऽहं त्यक्तोऽस्मि एतेन तव लोकान्तरगमनं नोचितमिति सूचितम् ॥ ६ ॥

गो० टी०—तातेति । निसृष्टः दत्तः प्रव्रजिते प्रव्राजिते छान्दसो ह्रस्वः ॥ ६ ॥ ७ ॥

७ ] ति० टी०—यस्या अनाथाया गतिरवलम्बः पुत्र इत्यर्थः ॥ ७ ॥

रा० टी०—यस्या इति । अनाथायाः त्वदतिरिक्तरक्षकरहितायाः यस्याः कौसल्यायाः पुत्रः वनं प्रव्राजितस्तामम्बां मातरं कौसल्यां त्यक्त्वा त्वं क्व गतः स्वगमनस्थानं स्वयं कथयेत्यर्थः । तेन भरतस्य पितृदर्शनेच्छातिशयः सूचितः ॥ ७ ॥

८ ] ति० टी०—भस्मारुणं भस्मयुतम्, अतिदाहारुणं च दग्धास्थि दग्धान्यस्थीनि यस्मिन् स्थानमण्डलं चितास्थानमण्डलं पितुः शरीरनिर्वाणं शरीरनाशस्थानं तद्दृष्ट्वा निष्टनन्स्तनन्तं विलपन्विषसाद ॥ ८ ॥

रा० टी०—दृष्ट्वेति । तत्र भस्मनित्यधारणयोग्याग्निहोत्रविभूतिं दग्धास्थिस्थानमण्डलं दग्धास्थिनां दग्धाः अतिक्रमेण निहताः आस्था असदाग्रहाः तद्वतां महात्मनां स्थानेन स्थित्या मण्डलं यस्य तदरुणं गौरं पितुः शरीरनिर्वाणं शरीरबोधकं चित्रलिखितराजशरीरं चेत्यर्थः, दृष्ट्वा निष्टनन् अतिविलापं कुर्वन् विषसाद "अभिनिसः स्तनः शब्दसंज्ञायाम्" इति षत्वम् ॥ ८ ॥

गो० टी०—दृष्ट्वेति । भस्मारुणं भस्मयुक्तमरुणं च अरुणत्वमतिदग्धत्वात् पितुः शरीरनिर्वाणं शरीरं निर्वाप्यते विनाश्यते अस्मिन्निति शरीरनिर्वाणम् अधिकरणे ल्युट् । 'निर्वाणो निर्वृते मोक्षे विनाशे गजमज्जने' इति वैजयन्ती । निष्टनन् नितरां स्तनन् "अभिनिसस्तनः शब्दसंज्ञायाम्" इति षत्वम् । पाठभेदः भस्मारुणं भस्मना अरुणम् अव्यक्तरागं दग्धास्थिस्थानमण्डलं दग्धानामस्थ्नां यानि स्थानानि विन्यासविशेषाः तेषां मण्डलं समूहं दृष्ट्वा अस्थिमण्डलं दृष्ट्वेत्यर्थसिद्धं पितुः शरीरनिर्वाणं शरीरविनाशं प्रति निष्टनन् नितरां रोदनशब्दं कुर्वन् विषसाद दुःखितोऽभूत् ॥ ८ ॥

९ ] ति० टी०—दीनो दुःखितो भूत्वा पपात । उत्थाप्यमानः पुरुषैः यन्त्रबद्धो ध्वजो यन्त्रध्वजः स इव पपात । शक्रयन्त्रध्वजस्याकाशस्थस्य भूमौ पातायोगात् गृहाद्यलंकारार्थं ध्वजयन्त्ररूपेण ध्वजसदृशरूपेण निर्मित इत्यर्थं इति कतकः, उत्पाततः पतितेन तेनोपमेत्यन्ये ॥ ९ ॥

रा० टी०—स इति । दृष्ट्वा राजधार्याग्निहोत्रविभूतिं चित्रलिखिततच्छरीरं चावलोक्य दीनः क्षीणचित्तः भरतः जनैः उत्थाप्यमानः शक्रस्य यन्त्रध्वजः यथाविधि यन्त्रसंबद्धध्वज इव पपात ॥ ९ ॥

गो० टी०—स इति । उत्थाप्यमानः रज्जुभिरुत्थाप्यमानः च्युतः स्रस्तः शक्रस्य यन्त्रबद्धो ध्वजो यन्त्रध्वजः रज्जुयुक्तो ध्वज इव पपात यथा यन्त्रपतनात् ध्वजपतनम् एवं राजपतनात् भरतपतनमिति भावः ॥ ९ ॥

१०–११ ] ति० टी०—अन्तकाले पुण्यक्षयकाले ॥ १० ॥ ११ ॥

रा० टी०—अभीति । ततस्तस्य भूमौ पाताद्धेतोः सर्वे अमात्याः शुचिव्रतं भरतमभिपेतुः प्रापुः, तत्र दृष्टान्तः निपतितं ययातिम् ऋषयो यथा ॥ १० ॥

गो० टी०—अभिपेतुरिति । अमात्याः ज्ञातयः शुचिव्रतम् अन्तकाले पुण्यक्षयकाले निपतितं ययातिम् ऋषयः दौहित्रभूता इव अभिपेतुः ॥ १० ॥

रा० टी०—शत्रुघ्न इति । शोकपरिप्लुतं भरतं दृष्ट्वा विसंज्ञः शत्रुघ्नोऽपि भूमिपालं राजानमनुस्मरन्सन्भूमौ न्यपतत् ॥ ११ ॥

गो० टी०—शत्रुघ्न इति । भरतपतनावधि शत्रुघ्नस्य धैर्यं स्थितं तत्पतनानन्तरं तु भूमिपालमनुस्मरन्न्यपतत् ॥ ११ ॥

१ स्तः इति गो. पाठः । २ इव च्युत इति गो. पाठः ।

उन्मत्त इव निश्चेतो विललाप सुदुःखितः । स्मृत्वा पितुर्गुणाङ्गानि तानि तानि तदा तदा ॥ १२ ॥
मन्थराप्रभवस्तीव्रः कैकेयीग्राहसंकुलः । वरदानमयोऽक्षोभ्योऽमज्जयच्छोकसागरः ॥ १३ ॥
सुकुमारं च बालं च सततं लालितं त्वया । क तात भरतं हित्वा विलपन्तं गतो भवान् ॥ १४ ॥
ननु भोज्येषु पानेषु वस्त्रेष्वाभरणेषु च । प्रवारयति सर्वान्नस्तन्नः कोऽद्य करिष्यति ॥ १५ ॥
अवदारणकाले तु पृथिवी नावदीर्यते । विहीना या त्वया राज्ञा धर्मज्ञेन महात्मना ॥ १६ ॥
पितरि स्वर्गमापन्ने रामे चारण्यमाश्रिते । किं मे जीवितसामर्थ्यं प्रवेक्ष्यामि हुताशनम् ॥ १७ ॥
हीनो भ्रात्रा च पित्रा च शून्यामिक्ष्वाकुपालिताम् । अयोध्यां न प्रवेक्ष्यामि प्रवेक्ष्यामि तपोवनम् ॥ १८ ॥
तयोर्विलपितं श्रुत्वा व्यसनं चाप्यवेक्ष्य तत् । भृशमार्ततरा भूयः सर्व एवानुगामिनः ॥ १९ ॥
ततो विषण्णौ श्रान्तौ च शत्रुघ्नभरतावुभौ । धरायां स्म व्यचेष्टेतां भग्नशृङ्गाविवर्षभौ ॥ २० ॥

१२ ] ति० टी०—गुणाङ्गान्युपलालनगुणस्याङ्गभूतानि विचित्रवस्त्राभरणादिदानादिकर्माणि स्मृत्वा विललाप ॥ १२ ॥

रा० टी०—उन्मत्त इति । तदा तदा स्वस्वोचिततत्तत्काले उपलब्धानि तानि पितुर्गुणाङ्गानि गुणान् वात्सल्यादीन् अङ्गानि मृदुभूषणादिविशिष्टसुखादीनि स्मृत्वा दुःखितः अत एव उन्मत्त इव निश्चित्तः शत्रुघ्नो विललाप ॥ १२ ॥

गो० टी०—उन्मत्त इति । गुणाङ्गानि गुणानङ्गानि चेत्यर्थः, तदा तदा तानि तानि तत्तत्कालोचिताभिमतप्रदानोपलालनकराणि गुणाङ्गानि ॥ १२ ॥

१३–१४ ] ति० टी०—वरदानमयत्वादक्षोभ्यः । अमज्जयत् अस्मानिति शेषः ॥ १३ ॥ १४ ॥

रा० टी०—विलापाकारमाह—मन्थरेति । मन्थराप्रभवः मन्थरायाः प्रभवति उत्पद्यते मन्थरामूलकारणक इत्यर्थः । कैकेयीग्राहसंकुलः कैकेय्या तद्वचनमेव ग्राहः तेन संकुलः संयुक्तः वरदानमयः वरदानरूपः अत एव अक्षोभ्यः निवर्तयितुमशक्यस्तीव्रः अतलस्पर्शी शोकसागरः अमज्जयत् भरतादीनिति शेषः १३

रा० टी०—सुकुमारमिति । भरतं त्यक्त्वा भवान् क गतः एतेन स्वस्य भरतसुखदुःखित्वं सूचितम् ॥ १४ ॥

गो० टी०—मन्थरेति । मन्थरेति सगरव्यावृत्तिः, तीव्रः अगाध इति यावत्, अमज्जयत् अस्मानिति शेषः ॥ १३॥१४॥

१५ ] ति० टी०—नन्विति । बह्वन्याभरणादीनि दिव्यवस्त्रन्युपस्थाप्याङ्ग एषु किं तेऽपेक्षितं गृहाणेति प्रकर्षेणास्मदिष्टवरणं कारयति भावन् तदद्य नः कः करिष्यति त्वयि गते इति शेषः ॥ १५ ॥

रा० टी०—नन्विति । सर्वान्नोऽस्मान्भोज्यादिषु भवान् प्रवारयति बलान्न्ययोजयत् तन्नियोजनम् अद्य कः करिष्यति ॥१५॥

गो० टी०—नन्विति । प्रवारयसि एष्वाभरणादिषु किं तवेष्टं गृहाणेति प्रकर्षेण स्वयं ग्राहयसि तत्प्रवारणम् ॥ १५ ॥

१६–१८ ] ति० टी०—या त्वया विहीना सा पृथिवी अवदारणकाले तु तस्मिन्नपि नावदीर्यते ॥ १६—१८ ॥

रा० टी०—अवेति । धर्मज्ञेन महात्मना त्वया विहीना रहिता या पृथिवी सा अवदारणकाले अस्मिन्नवदारणसमये विदीर्यते न नु । तुः संभावनायाम् भागुरिमतेनात्राकारलोपे नञा समासः १६

गो० टी०—अवदारणेति । या पृथिवी धर्मज्ञेन त्वया विहीना नावदीर्यते न भिद्यते स्वयमिति शेषः, सा अवदारणकाले तु प्रलयकालेऽपि नावदीर्यते नावदीर्येतेत्यर्थः । पाठभेदः अवदारणकाले त्वद्विहीनतया अवदारणस्य प्राप्तकाले अवदारणकालत्वे हेतुः—त्वया विहीनेति । धर्मज्ञेन महात्मना त्वया राज्ञा एतादृशगुणाढ्येन त्वयेत्यर्थः, विहीना या सा पृथ्वी अवदारणकाले नावदीर्यत इत्यन्वयः ॥ १६ ॥

रा० टी०—पितरीति । मे जीवितसामर्थ्यं पालनसामर्थ्यं किं नास्तीत्यर्थः, अतः हुताशनं रामाङ्कतेजोरूपं ब्रह्म प्रवेक्ष्यामि तद्द्वारा तं प्राप्स्यामीत्यर्थः ॥ १७ ॥

रा० टी०—हीन इति । भ्रात्रादिना हीनोऽहमयोध्यां न प्रवेक्ष्यामि न स्थास्यामीत्यर्थः किंतु तपोवनं प्रवेक्ष्यामि ॥१८॥

गो०टी०—पितरीति । जीवितसामर्थ्यं जीवनशक्तिः १७–१८

१९ ] ति० टी०—अनुगामिनोऽनुचराः आर्ततरा अभूवन्निति शेषः ॥ १९ ॥

रा० टी०—तयोरिति । तयोः शत्रुघ्नभरतयोः विलपनं श्रुत्वा व्यसनं दुःखं च भृशमवेक्ष्य सर्वेऽनुगामिनः भूयः आर्ततराः बभूवुरिति शेषः ॥ १९ ॥

गो० टी०—तयोरिति । आर्ततराः आसन्निति शेषः ॥ १९ ॥

२० ] ति० टी०—व्यचेष्टेतां व्यलुण्ठेताम् । 'विश्रान्तौ' इति पाठे विशेषेण श्रान्तावित्यर्थः ॥ २० ॥

रा० टी०—तत इति । ततः अनुगाम्यार्तिदर्शनानन्तरं विषण्णौ अत एव श्रान्तौ संतप्तौ उभौ धरायां पृथिव्यां व्यचेष्टेतां व्यलुण्ठताम्, तत्र दृष्टान्तः भग्नशृङ्गौ विभिन्नाग्रभागौ ऋषभौ बलीवर्दाविव । 'विश्रान्तौ' इति भूषणपाठः ॥ २० ॥

गो० टी०—तत इति । विश्रान्तौ विशेषेण श्रान्तौ व्यचेष्टेतां व्यलुण्ठेताम् ॥ २० ॥

१ चेता इति गो. पाठः । २ प्रवारयसि नः सर्वांस्तन्नः कोऽन्य इति गो. पाठः । ३ अन्ववेक्ष्येति गो. पाठः । ४ विश्रान्ताविति गो. पाठः । ५ धरण्यामिति गो. पाठः ।

ततः प्रकृतिमान्वैद्यः पितुरेषां पुरोहितः । वसिष्ठो भरतं वाक्यमुत्थाप्य तमुवाच ह ॥ २१ ॥
त्रयोदशोऽयं दिवसः पितुर्वृत्तस्य ते विभो । सावशेषास्थिनिचये किमिह त्वं विलम्बसे ॥ २२ ॥
त्रीणि द्वन्द्वानि भूतेषु प्रवृत्तान्यविशेषतः । तेषु चापरिहार्येषु नैवं भवितुमर्हसि ॥ २३ ॥
सुमन्त्रश्चापि शत्रुघ्नमुत्थाप्याभिप्रसाद्य च । श्रावयामास तत्त्वज्ञः सर्वभूतभवाभवौ ॥ २४ ॥
उत्थितौ तौ नरव्याघ्रौ प्रकाशेते यशस्विनौ । वर्षातपपरिग्लानौ पृथगिन्द्रध्वजाविव ॥ २५ ॥
अश्रूणि परिमृद्नन्तौ रक्ताक्षौ दीनभाषिणौ । अमात्यास्त्वरयन्ति स्म तनयौ चापराः क्रियाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

२१ ] ति० टी०—प्रकृतिमान्सत्त्वप्रकृतिः वैद्यः ' सर्वज्ञभिषजौ वैद्यौ ' ॥ २१ ॥

रा० टी०—तत इति । ततः भरतातिविषाददर्शनानन्तरं प्रकृतिमान् प्रशस्तस्वभावविशिष्टः वैद्यः भिषक् निखिलविषयकज्ञानवान् एषां रामादीनां पितुः दशरथस्य पुरोहितो वसिष्ठः भरतमुत्थाप्य उवाच 'सर्वज्ञभिषजौ वैद्यौ' इत्यमरः॥२१॥

गो० टी०—तत इति । प्रकृतिमान् प्रशस्तस्वभावः 'प्रकृतिः पञ्चभूतेषु स्वभावे मूलकारणे ' इति वैजयन्ती । वैद्यः विद्यां तत्त्वज्ञानहेतुभूतां वेदान्तविद्यां वेदेति वैद्यः वेदान्तविद्याधिगतपरावरतत्त्वयाथात्म्यविज्ञानः सर्वज्ञ इति यावत् । "तदधीते तद्वेद" इत्यण् ' सर्वज्ञभिषजौ वैद्यौ ' इत्यमरः । एषामिति बहुवचननिर्देशो बुद्धिस्थरामाद्यपेक्षया पितुर्दशरथस्य ॥ २१ ॥

२२ ] ति० टी०—वृत्तस्य कृतदाहस्य सावशेषास्थिनिचये ऽस्थिसंचयनाख्यकर्मण आशौचान्तरा कृतस्याप्यवशेषो भूशुद्धिभस्मोद्धारलक्षणः, तेन सहितः सावशेषस्तस्मिन्कर्तव्ये सतीत्यर्थः । एतेन त्रयोदशेऽहन्यस्थिसंचयनं स्मृतिविरुद्धमित्यपास्तम् ॥ २२ ॥

रा० टी०—त्रयोदश इति । हे विभो ! वृत्तस्य लोकान्तरे प्रवृत्तस्य ते पितुः अयं त्रयोदशो दिवसः दिनमतः सावशेषास्थिनिचयेऽनवशेषाः अवशेषाः कृत्वा इत्यर्थः । आस्थाः सद्वस्तुविषयकाभिनिवेशाः ते सन्ति येषां तैः परिकरैः सहितस्य गणः निचये अर्जितवस्तुसमूहे इह अस्मिन्समये त्वं किं किमर्थं विलम्बसे ॥ २२ ॥

गो० टी०—त्रयोदश इति । वृत्तस्य संस्कृतस्य त्रयोदशोऽयं दिवसः सावशेषोऽस्थिनिचये अस्थिसंचयनाख्ये कर्मण्यवशिष्ट इत्यर्थः । दशाहमध्ये शास्त्रविहितं प्रधानावयवास्थिसंचयनं कृतं त्रयोदशे दिवसे तदेवावशिष्टाचारप्राप्तस्थलशोधनमात्रं कृतमिति न स्मृतिविरोध इत्यप्याहुः । स्मृतिश्चास्माभिर्दर्शितैव ॥ २२ ॥

२३ ] ति० टी०—त्रीणि द्वन्द्वानि—बुभुक्षापिपासे, शोकमोहौ, जरामृती, जन्ममरणे, सुखदुःखे, लाभालाभौ, चेति तीर्थः । अस्ति, जायते, वर्धते, अपक्षीयते, विपरिणमते, विनश्यतीत्येवंरूपाणीति कतकः । भूतेषु प्राणिषु । एवं भवितुमतिशोकाक्रान्ततया भवितुम् ॥ २३ ॥

रा० टी०—भवतां शोकोऽसंभव इति बोधयितुमाह—त्रीणीति । त्रीणि त्रित्वसंख्याविशिष्टानि द्वन्द्वानि क्षुत्पिपासे शोकमोहौ जरामृत्यू अविशेषतः सामान्यकारेण भौतिकेषु प्राकृतेष्वेव प्रवृत्तानि अतः अपरिहार्येषु प्राकृतैरनिवर्त्येषु द्वन्द्वेषु भवितुं प्राप्तुं त्वं नार्हसि एतेन तेषां प्राकृतविलक्षणत्वं ध्वनितम् । जन्ममरणसुखदुःखलाभालाभानां द्वन्द्वत्रयाणामपि उपलक्षणादिना तेष्वेवान्तर्भावान्न न्यूनता एकशेषघटया त्रिशब्देनैव षण्णां ग्रहणे तु नावान्तर्भावविचारक्लेशः ॥ २३ ॥

गो० टी०—त्रीणीति । अशनायापिपासे शोकमोहौ जरामृत्यू इत्युक्तानि त्रीणि द्वन्द्वानि भूतेषु जन्तुषु अविशेषतः प्रवृत्तानि तेषु चापरिहार्येषु प्राप्तेषु त्वमेवं भवितुं नार्हसि अज्ञवन्मोहेन प्रलपितुं नार्हसि ॥ २३ ॥

२४–२५ ] ति० टी०—सर्वभूतभवाभवौ उत्पत्तिविनाशौ ॥ २४ ॥ २५ ॥

रा० टी०—सुमन्त्र इति । तत्त्वज्ञः सुमन्त्रः शत्रुघ्नमुत्थाप्य अभिप्रसाद्य सर्वभूतभवाभवं सर्वभूतानां प्राकृतानामेव भवाभवमुत्पत्तिविनाशौ नतु प्राकृतविलक्षणानामित्यर्थः, श्रावयामास कथयामास एतेन रामलक्ष्मणविषये कश्चित्संशयो न कार्य इति ध्वनितम् ॥ २४ ॥

रा० टी०—उत्थिताविति । उत्थितौ तौ नरव्याघ्रौ शत्रुघ्नभरतौ पृथगुत्थितौ इन्द्रध्वजाविव प्रकाशेते ॥ २५ ॥

गो० टी०—सुमन्त्र इति । सर्वभूतभवाभवौ सर्वभूतोत्पत्तिविनाशौ ॥ २४ ॥ २५ ॥

२६ ] ति० टी०—परिमृद्नन्तौ मार्जयन्तौ । तनयौ राजपुत्रौ अपराः क्रिया भस्मोद्धारादिक्रियाः उद्दिश्येति शेषः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

रा० टी०—अश्रूणीति । अश्रूणि परिमृद्नन्तौ दूरीकुर्वन्तौ दीनभाषिणौ क्षीणभाषाविशिष्टौ तनयौ राजपुत्रौ अपराः त्रयोदशदिनोचिताः क्रियाः कर्तुमिति शेषः, त्वरयन्ति स्म ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

१ भवाभवमिति रा. पाठः । २ चेति गो. पाठः । ३ छिन्नाविति गो. पाठः ।

# अष्टसप्ततितमः सर्गः ।

रामसमीपगमनमीहमानं भरतं प्रति पितरं निगृह्य लक्ष्मणः किमिति रामप्रवासं नावारयदिति शत्रुघ्न अभिधत्ते । भूषणभूषितां द्वारस्थां कुब्जां भरतः सर्वापनिदानत्वेन निर्दिशति । सखीमध्यगतां कुब्जां शत्रुघ्नः कैकेय्याः कृष्ट्वा धरण्यां कोपेन च कर्कशमपि निर्भर्त्सयते । कुब्जां निर्मोक्तुं कैकेयी भरतं प्रार्थयते । भरतेन सयुक्तिकमुक्तः शत्रुघ्नस्तां मुमोच ।

अथ यात्रां समीहन्तं शत्रुघ्नो लक्ष्मणानुजः । भरतं शोकसंतप्तमिदं वचनमब्रवीत् ॥ १ ॥
गतिर्यः सर्वभूतानां दुःखे किं पुनरात्मनः । स रामः सत्त्वसंपन्नः स्त्रिया प्रव्राजितो वनम् ॥ २ ॥
बलवान्वीर्यसंपन्नो लक्ष्मणो नाम योऽप्यसौ । किं न मोचयते रामं कृत्वापि[1] पितृनिग्रहम् ॥ ३ ॥
पूर्वमेव तु निग्राह्यः समवेक्ष्य नयानयौ । उत्पथं यः समारूढो नार्या राजा वशं गतः ॥ ४ ॥
इति संभाषमाणे तु शत्रुघ्ने लक्ष्मणानुजे । प्राग्द्वारेऽभूत्तदा कुब्जा सर्वाभरणभूषिता ॥ ५ ॥

गो० टी०—अश्रूणीति । परिमृद्नन्तौ मार्जयन्तौ तनयौ राजपुत्रौ अपराः क्रियाः अस्थिसंचयनादिकाः प्रतीति शेषः॥२६॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने-ऽयोध्याकाण्डव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

१ ] ति० टी०—यात्रां रामसमीपयात्रां समीहन्तं समीहमानं विचारयन्तमित्यर्थः ॥ १ ॥

रा० टी०—त्रयोदशदिनक्रियासमाप्त्यनन्तरकालिकं वृत्तान्तमाह—अथेति । यात्रां रामसमीपोद्देश्यकगमनं समीहन्तमिच्छन्तं भरतं शत्रुघ्नः इदमब्रवीत् ॥ १ ॥

गो० टी०—अथेत्यादि । अथ अपरक्रियां निर्वर्त्य गृहं प्रति गमनानन्तरं यात्रां रामसमीपगमनं समीहन्तं समीहमानं यात्रोत्सुकमित्यर्थः ॥ १ ॥

२ ] ति० टी०—दुःखे दुःखजनकसंकटे प्राप्ते यः सर्वभूतानां गतिः स्मरणमात्रेण सर्वदुःखनाशकः, आत्मनः स्वस्यावयोश्च गतिरिति किं वक्तव्यम् अनेनातिसंकटे भगवत्स्मरणमेव दुःखनाशे समर्थं नान्यदिति सूचितम् । स रामः स्त्रिया प्रव्राजितः स च गत इत्येतदनुचितं तेन कृतं सामर्थ्ये सतीति शेषः ॥ २ ॥

रा० टी०—वचनाकारमाह—गतिरिति । सर्वभूतानां गतिर्यः स रामो नित्यविहारसहितो रामः स्त्रिया सह वनं प्रव्राजितः तस्य दुःखे सति आत्मनः अस्मदादेः दुःखे किं वक्तव्यम् ॥ २ ॥

गो० टी०—गतिरिति । सर्वभूतानां प्राणिमात्रस्य दुःखे सति यो गतिः स आत्मनो दुःखे सति गतिरिति किं पुनः किं वक्तव्यम् । एवं दुःखनिस्तारक्षमो रामः सत्त्वसंपन्नोऽपि बलसंपन्नोऽपि स्त्रिया अत्यन्ताबलया वनं प्रव्राजितः इदमत्यन्तचित्रमिति भावः ॥ २ ॥

३ ] ति० टी०—किं वा रामो राज्यलोभात्पित्राज्ञामुल्लङ्घितवानित्ययशोभयादेवं करोतु लक्ष्मणः सर्वथानुचितं कृतवानित्याह—बलवानिति । लक्ष्मणो नामानुचितकर्तृत्वेन शोच्यः । योऽप्यस्मद्भ्राता असौ पितृनिग्रहं कृत्वा रामं न मोचयते स्म वनवासात् ॥ ३ ॥

रा० टी०—बलवानिति । वीर्यसंपन्नो योऽसौ लक्ष्मणो नाम सः पितृनिग्रहं पित्राग्रहविषयीभूतरामप्रव्राजनं कृत्वा छित्त्वा रामं किं किमर्थं न मोचयते अमोचयत् दुःखादिति शेषः ॥ ३ ॥

गो० टी०—पितृपरतन्त्रो रामः किं करोत्वित्यत्राह—बलवानित्यादिना । नामेति कुत्सने 'नामप्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इति वैजयन्ती । लक्ष्मणो नाम योऽपीत्यनादरोक्तिः असौ पितृनिग्रहं कृत्वापि रामं वनवासात् किं न मोचयते स्म किं न मोचितवान् इदमप्यपरमाश्चर्यमिति भावः ॥ ३ ॥

४ ] ति० टी०—कथं पितृनिग्रह उचितस्तत्राह—पूर्वमिति । यो राजा नार्या वशं गतः सन्नुत्पथमन्यायमार्गमारूढः प्राप्तः, अतो लक्ष्मणः स्वयं नयानयौ न्यायान्यायौ अभिषेकविपर्यौ समीक्ष्य विचार्य 'गुरोरप्यवलिप्तस्य' इति शास्त्रानुसारेण वनप्रव्राजनात्पूर्वमेव तत्प्रसङ्गकाल एव निग्राह्यः नेदमनुचितमिति भावः ॥ ४ ॥

रा० टी०—नन्वनिवर्तनीयपित्राग्रहस्य कथं निवृत्तिरित्यत आह—पूर्वमिति । नार्याः स्त्रीणामवशं गतोऽपि यः राजा उत्पथं प्रतिज्ञातनिवर्तनरूपदुर्मार्गं समारूढः मन्थरासंमतिहेतुकारूढवान् स राजा नयानयौ समवेक्ष्य सम्यग्बोधयित्वा पूर्वमाग्रहप्राप्तेः प्रागेव निग्राह्यः निवारणीयः ॥ ४ ॥

गो० टी०—पितृनिग्रहे दोषो नास्तीत्याशङ्कां परिहरति—पूर्वमित्यादिना । यो राजा नार्या वशं गतः उत्पथं समारूढः अपथं प्राप्तः सः नयानयौ नीत्यनीती समवेक्ष्य सम्यक् विचार्य पूर्वमेव अन्यायप्रवृत्तिसमापनात् पूर्वमेव निग्राह्य इति योजना ॥ ४ ॥

५ ] ति० टी०—प्राग्द्वारे शत्रुघ्नाधिष्ठितद्वारे कुब्जा दैवादागताभूत् ॥ ५ ॥

रा० टी०—इतीति । तदा तस्मिन्समये शत्रुघ्ने इति अनेन प्रकारेण संभाषमाणे सति सर्वाभरणभूषिता कुब्जा मन्थरा प्राग्द्वारे अभूत् प्राप्तोत् ॥ ५ ॥

गो० टी०—इतीति । कुब्जा प्राग्द्वारेऽभूत् स्वामिकल्पितो

१ स्मेति गो. पाठः ।

१०७

लिप्ता चन्दनसारेण राजवस्त्राणि बिभ्रती । विविधं विविधैस्तैस्तैर्भूषणैश्च विभूषिता ॥ ६ ॥
मेखलादामभिश्चित्रैरन्यैश्च वैरभूषणैः । बभासे बहुभिर्बद्धा रज्जुभिरिव वानरी ॥ ७ ॥
तां समीक्ष्य तदा द्वाःस्थो भृशं पापस्य कारिणीम् । गृहीत्वाकरुणं कुब्जां शत्रुघ्नाय न्यवेदयत् ॥ ८ ॥
यस्याः कृते वने रामो न्यस्तदेहश्च वः पिता । सेयं पापा नृशंसा च तस्याः कुरु यथामति ॥ ९ ॥
शत्रुघ्नश्च तदाज्ञाय वचनं भृशदुःखितः । अन्तःपुरचरान्सर्वानित्युवाच धृतव्रतः ॥ १० ॥
तीव्रमुत्पादितं दुःखं भ्रातॄणां मे तथा पितुः । यथा सेयं नृशंसस्य कर्मणः फलमश्नुताम् ॥ ११ ॥
एवमुक्त्वा च तेनाशु सखीजनसमावृता । गृहीता बलवत्कुब्जा सा तद्गृहमनादयत् ॥ १२ ॥
ततः सुभृशसंतप्तस्तस्याः सर्वः सखीजनः । क्रुद्धमाज्ञाय शत्रुघ्नं व्यपलायत सर्वशः ॥ १३ ॥
अमन्त्रयत कृत्स्नश्च तस्याः सर्वः सखीजनः । यथायं समुपक्रान्तो निःशेषं नः करिष्यति ॥ १४ ॥

भरताभिषेकः कदा भविष्यतीति अवसरं प्रतीक्षमाणा भरतशत्रुघ्नाधिष्ठितराजगृहस्य प्राग्द्वारे दैवादागताभूत् ॥ ५ ॥

६ ] ति० टी०—राजवस्त्राणि राजार्हवस्त्राणि ॥ ६ ॥

रा० टी०—तामेव वर्णयन्नाह—लिप्तेति । चन्दनसारेण उत्तमचन्दनेन तैस्तैः राजगृहप्रसिद्धैः विविधैः भूषणैः विविधं विभूषिता चित्रैः विचित्रैः मेखलादामभिः अन्यैः अयोध्यादेशाप्रसिद्धैः वरभूषणैः उपलक्षिता मन्थरा बभासे, तत्र दृष्टान्तः रज्जुभिः वेणीभिः बद्धा वानरी तारा इव । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०—लिप्तेति । चन्दनसारेण चन्दनपङ्केन राजवस्त्राणि राजार्हवस्त्राणि कैकेयीदत्तानि, कञ्चुकान्तरीयोत्तरीयादिभेदाद्बहुवचनं तैस्तैरिति तत्तदवयवोचितत्वमुच्यते । एकैकाभरणे रत्नखचितत्वादिवैविध्यमाह—विविधैरिति । विविधमिति क्रियाविशेषणं तेन भूषणसंस्थानविशेष उच्यते ॥ ६ ॥

७ ] ति० टी०—वानरी कुरूपत्वात् । अत्र गुरुलघुप्रयुक्तश्छन्दोभङ्ग आर्षः । पाठान्तरे चः पादपूरणे ॥ ७ ॥

गो० टी०—मेखलादामभिरिति । भूषणशब्दोऽपि मेखलादामभिन्नपरः गोबलीवर्दन्यायात् अन्यैः मेखलाप्रदेशधारणीयैः बद्धेतिविशेषणात् भूषणानि बन्धनस्थानीयानि न तु शोभाकराणीत्युक्तम् ॥ ७ ॥

८ ] ति० टी०—अकरुणं निर्दयम् ॥ ८ ॥

रा० टी०—तामिति । तां मन्थरां पापस्य अकालिकप्रव्राजनजनिताधर्मस्य कारिणीं तां मन्थरां भृशमत्यन्तं समीक्ष्य अकरुणं यथा स्यात्तथा द्वास्थः शत्रुघ्नाय न्यवेदयत् ॥ ८ ॥

गो० टी०—तामिति । अकरुणां निर्दयाम् ॥ ८ ॥

९ ] ति० टी०—वने रामः तिष्ठतीति शेषः । यथामति निग्रहमिति शेषः ॥ ९ ॥

रा० टी०—निवेदनप्रकारमाह—यस्या इति । यस्याः कृते प्रयत्ने सति रामो वने इति शेषः, वो युष्माकं पिता च अन्यस्तदेहः सशरीरः साकेतं गत इति शेषः, सा नृशंसा क्रूरा पापा सर्वदुःखदानरूपपापकारिणी सा मन्थरा इयमेव तस्या दण्डमिति शेषः, यथामति यथेच्छं कुरु ॥ ९ ॥

गो० टी०—यस्या इति । वने अभूदिति शेषः, कुरु शिक्षणमिति शेषः ॥ ९—१२ ॥

१० ] ति० टी०—धृतव्रतः कर्तव्यत्वेनावधृतव्रत इत्यर्थः । 'द्रुतं वचः' इति पाठान्तरम् ॥ १० ॥

रा० टी०—शत्रुघ्न इति । भृशदुःखितः शत्रुघ्नः तद्द्वाःस्थोक्तं वचनमाज्ञाय ज्ञात्वा सर्वानन्तःपुरचरान् इति इदं वचः द्रुतमुवाच ॥ १० ॥

११–१३ ] ति० टी०—अश्नुतां प्राप्नुताम् । तथा कर्तव्यं मयेति शेषः ॥ ११–१३ ॥

रा० टी०—वचनाकारमाह—तीव्रमिति । यया मे भ्रातॄणां पितुश्च दुःखमुत्पादितं सेयं नृशंसस्य क्रूरस्य कर्मणः फलमश्नुतां हन्यतामित्यर्थः ॥ ११ ॥

रा० टी०—एवमिति । तेन शत्रुघ्नेन एवमुक्त्वा सखीजनसमावृता बलवत् अतिबलं यथा स्यात्तथा गृहीता सा कुब्जा तद्गृहमनादयत्स्वोच्चारितशब्देनापूरयदित्यर्थः ॥ १२ ॥

रा० टी०—तत इति । ततः शत्रुघ्नाज्ञापनानन्तरं क्रुद्धं शत्रुघ्नमाज्ञाय सुभृशमत्यन्तं तप्तः सन् तस्याः मन्थरायाः सखीजनः सर्वशः सर्वप्रकारेण व्यपलायत ॥ १३ ॥

गो० टी०—तत इति । विपलायतेति "उपसर्गस्यायतौ" इति रेफस्य लत्वम् ॥ १३ ॥

१४ ] ति० टी०—समुपक्रान्त आरब्धपराक्रमः ॥ १४ ॥

रा० टी०—पलायनप्रकारमाह—अमन्त्रयतेति । तस्याः मन्थरायाः कृत्स्नः सकलः सखीजनः अमन्त्रयत परस्परं संमतिमकरोत् । संमतिप्रकारमाह—सर्वः सकलस्वजनसहितः समुपक्रान्तः कोपप्रारब्धवान् अयं शत्रुघ्नः नः अस्मान्निश्शेषं यथा भवति तथा यथा यथावत्करिष्यति ॥ १४ ॥

१ शुभेति गो. पाठः । २ रज्जुबद्धेवेति गो. पाठः । ३ द्वाःस्थां सुभृशं पापेति गो. पाठः । ४ ऽकरुणामिति गो. पाठः । ५ न्यवेदयन्निति गो. पाठः । ६ द्रुतं वच इति रा. पाठः । ७ ययेति रा. पाठः । ८ उक्ता त्विति गो. पाठः । ९ विपलायतेति गो. पाठः । १० आमन्त्रयतेति गो. पाठः । ११ निःशेषानिति गो. पाठः ।

सानुक्रोशां वदान्यां च धर्मज्ञां च यशस्विनीम् । कौसल्यां शरणं [1]याम: सा हि नोऽस्ति ध्रुवा गतिः ॥ १५ ॥
स च रोषेण [2]संवीतः शत्रुघ्नः [3]शत्रुशासनः । [4]संचकर्ष तदा कुब्जां क्रोशन्तीं [5]पृथिवीतले ॥ १६ ॥
[6]तस्यां ह्याकृष्यमाणायां मन्थरायां ततस्ततः । चित्रं बहुविधं भाण्डं पृथिव्यां तद्व्यशीर्यत ॥ १७ ॥
तेन भाण्डेन [7]विस्तीर्णं श्रीमद्राजनिवेशनम् । अशोभत तदा भूयः शारदं गगनं यथा ॥ १८ ॥
स बली बलवत्क्रोधाद्गृहीत्वा पुरुषर्षभः । कैकेयीमभिनिर्भर्त्स्य बभाषे परुषं वचः ॥ १९ ॥
तैर्वाक्यैः परुषैर्दुःखैः कैकेयी भृशदुःखिता । शत्रुघ्नभयसंत्रस्ता पुत्रं शरणमागता ॥ २० ॥
[8]तं प्रेक्ष्य भरतः क्रुद्धं शत्रुघ्नमिदमब्रवीत् । अवध्याः सर्वभूतानां प्रमदाः क्षम्यतामिति ॥ २१ ॥
हन्यामहमिमां पापां कैकेयीं दुष्टचारिणीम् । यदि मां धार्मिको रामो नासूयेन्मातृघातकम् ॥ २२ ॥

गो० टी०—आमन्त्रयतेति । आमन्त्रयत अन्योन्यमाह्वयत् तस्याः सर्वः सखीजनः कृत्स्नः तदितरः सर्वोऽपि जनः यथा येन प्रकारेणायं शत्रुघ्नः उपक्रान्तः तथा नः निःशेषान्करिष्यति जनापेक्षया पुंस्त्वम्। वदान्यां वल्गुवाचम् 'वदान्यो वल्गुवागपि' इति वैजयन्ती। कौसल्यां शरणं याम सा नो ध्रुवा गतिरस्त्वित्यन्योन्यमाह्वयदित्यन्वयः ॥ १४—१६ ॥

१५ ] ति० टी०—अतः—सानुक्रोशामिति । सा नोऽस्माकं ध्रुवा गतिरस्ति, अतस्तां शरणं याम इत्यमन्त्रयतेत्यन्वयः ॥ १५ ॥

रा० टी०—ननु पलायनेऽपि कथं रक्षा भवितेत्यत आह—सानुक्रोशामिति । अनुक्रोशो दया तत्सहितामत एव वदान्यां मृदुभाषणशीलामत एव धर्मज्ञां कौशल्यां शरणं रक्षिकां यामः सा कौशल्या एव नोऽस्माकमिदानीं ध्रुवा गतिरस्ति वर्तमानत्वस्य विवक्षयेदानींलाभः ॥ १५ ॥

१६ ] ति० टी०—पृथिवीतले पातयित्वेति शेषः ॥ १६ ॥

रा० टी०—स इति । रोषेण संवीतः संयुक्तः शत्रुघ्नः क्रोशन्तीं विलपन्तीं कुब्जां पृथिवीतले संचकर्ष ॥ १६ ॥

१७-१८ ] ति० टी०—भाण्डं भूषणमात्रेऽपि ॥ १७॥१८ ॥

रा० टी०—तस्यामिति । ततस्ततः तत्र तस्यां कुब्जायामाकृष्यमाणायां सत्यां बहुविधमनेकप्रकारं चित्रमद्भुतं भाण्डं भूषणं व्यशीर्यत विदीर्णतां प्राप्नोत् 'भाण्डं भूषणमात्रेऽपि' इति कोशः ॥ १७ ॥

गो० टी०—तस्या इति । भाण्डं भूषणम् 'वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोः' इति वैजयन्ती। पृथिव्यां तद्व्यशीर्यत विशीर्णमासीत्, पाठभेदः पृथिव्यां तद्विशीर्यते विशीर्णमासीत् १७

रा० टी०—तेनेति । तेन मन्थरासंबन्धिना भाण्डेन भूषणेन विस्तीर्णं श्रीमद्राजस्य निवेशनं गृहं शारदं शरत्कालसंबन्धि गगनमिव यथा यथावद्भूयोऽधिकमशोभत ॥ १८ ॥

गो० टी०—तेनेति । शारदं प्रसन्ननक्षत्रमित्यर्थः ॥ १८ ॥

१९ ] ति० टी०—गृहीत्वा कुब्जां कैकेयीमभिनिर्भर्त्स्य कुब्जामोचनार्थमागतामिति शेषः । निर्भर्त्सनमत्र हस्तेन दूरीकरणम् ॥ १९ ॥

रा० टी०—स इति । बली स शत्रुघ्नः कैकेयीं तन्निवारणार्थमागतां स्वमातरं गृहीत्वा निर्भर्त्स्य च परुषं वचो बभाषे एतेन रामवियोगदुःखस्य दुःसहत्वं सूचितम् ॥ १९ ॥

गो० टी०—स इति । बलवत् क्रोधात् अतीवक्रोधात् कैकेयीमभिनिर्भर्त्स्येत्यनेन मन्थरामोचनार्थं तदा कैकेयी समागतेत्यवगम्यते ॥ १९ ॥

२० ] ति० टी०—परुषैर्मर्मग्राहिभिः । अत एव दुःखैः पुत्रं शरणमागता कुब्जामोचनार्थमिति शेषः ॥ २० ॥

रा० टी०—तैरिति । तैः शत्रुघ्नोच्चारितैः दुःखैः दुःखप्रापकैः वाक्यैः भृशदुःखिता अत एव शत्रुघ्नभयसंत्रस्ता कैकेयी शरणं मन्थरारक्षामुद्दिश्य पुत्रं भरतमागता ॥ २० ॥

गो० टी०—तैरिति । शत्रुघ्नभयसंत्रस्ता पुत्रं शरणमागतेत्यनेन भर्त्सनानन्तरं तां प्रहर्तुमप्युद्युक्तवानिति सूच्यते ॥ २० ॥

२१ ] ति० टी०—यतः सर्वभूतानामवध्या अतः क्षम्यतामित्यब्रवीत् ॥ २१ ॥

रा० टी०—तमिति । क्रुद्धं तं शत्रुघ्नं प्रेक्ष्य भरतः इदमब्रवीत् । वचनाकारमाह—प्रमदाः स्त्रियः सर्वभूतानामवध्याः इति हेतोः क्षम्यतां मन्थरापराध इति शेषः ॥ २१ ॥

गो० टी०—तामिति । क्षम्यतामित्यब्रवीदित्यन्वयः ॥ २१ ॥

२२ ] ति० टी०—मातृघातकं मां प्रति यदि रामो नासूयेत कुप्येत्, तदाहमिमां मातरमपि हन्याम् ॥ २२ ॥

रा० टी०—हन्यामिति । यदि मन्थरावधे इति शेषः, धार्मिको रामः मां मातृघातकं नासूयेत्तर्हि दुष्टचारिणीं दुष्टाचरणप्रापणशीलामत एव पापां कैकेयीं कैकेयीदासीमिमां मन्थरामहं हन्याम् । मन्थरायां मातृत्वं च मातृसखीत्वेनारोपात् ॥ २२ ॥

गो० टी०—हन्यामिति । नासूयेत गर्हेत ॥ २२ ॥

१ यामेति गो. पाठः । २ ताम्राक्ष इति गो. पाठः । ३ तापन इति गो. पाठः । ४ विचकर्षेति गो. पाठः । ५ धरणीति गो. पाठः । ६ तस्या ह्याकृष्यमाणाया मन्थराया इति गो. पाठः । ७ संस्तीर्णमिति गो. पाठः । ८ तां प्रेक्ष्येति गो. पाठः ।

इमामपि हतां कुब्जां यदि जानाति राघवः । त्वां च मां चैवे धर्मात्मा नाभिभाषिष्यते ध्रुवम् ॥ २३ ॥
भरतस्य वचः श्रुत्वा शत्रुघ्नो लक्ष्मणानुजः । न्यवर्तत ततो दोषात्तां मुमोच च मूर्छिताम् ॥ २४ ॥
सा पादमूले कैकेय्या मन्थरा निपपात ह । निःश्वसन्ती सुदुःखार्ता कृपणं विललाप ह ॥ २५ ॥
शत्रुघ्नविक्षेपविमूढसंज्ञां समीक्ष्य कुब्जां भरतस्य माता ।
शनैः समाश्वासयदार्तरूपां क्रौञ्चीं विलग्नामिव वीक्षमाणाम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

## एकोनाशीतितमः सर्गः ।

मन्त्रिप्रमुखाश्चतुर्दशेऽह्नि भरतं प्रति राज्यस्वीकारेऽभ्यर्थयन्त । तत्प्रतिषिध्य रामं प्रत्यानिनीषुर्भरतो यात्रार्थं मार्गादिनिर्माणे शिल्पिनो योजयितुं मन्त्रिणः प्राचोदयत् ।

ततः प्रभातसमये दिवसेऽथ चतुर्दशे । समेत्य राजकर्तारो भरतं वाक्यमब्रुवन् ॥ १ ॥
गतो दशरथः स्वर्गं यो नो गुरुतरो गुरुः । रामं प्रव्राज्य वै ज्येष्ठं लक्ष्मणं च महाबलम् ॥ २ ॥
त्वमद्य भव नो राजा राजपुत्र महायशः । संगत्या नापराध्नोति राज्यमेतदनायकम् ॥ ३ ॥

२३-२५ ] ति० टी०—जानाति ज्ञास्यते । नाभिभाषिष्यते स्त्रीघातिनाविति मत्वा इत्यब्रवीदिति पूर्वेण संबन्धः॥ २३–२५॥

रा० टी०—इमामिति । इमां कुब्जां हतां त्वत्कर्तृकप्राणवियोगाश्रयीभूतां यदि राघवो जानाति जानीयात्तर्हि त्वां मां च न अभिभाषेत ध्रुवं निश्चितमेतत् ॥ २३ ॥

रा० टी०—भरतस्येति । भरतस्य वचः वचनं श्रुत्वा शत्रुघ्नः ततः मन्थरावधरूपाद्दोषान्न्यवर्तत अत एव तां मन्थरां मुमोच ॥ २४ ॥

रा० टी०—सेति । सा भरतेन मोचिता सुदुःखार्ता मन्थरा कैकेय्याः पादमूले निपपात कृपणं यथा स्यात्तथा विललाप च ॥ २५ ॥

गो० टी०—मा भून्मातृहत्या सर्वकुहनामूलभूतेयमेव कुब्जा हन्यतामित्यत्राह—इमामित्यादिना । नाभिभाषिष्यते इत्यब्रवीदिति अनुकृष्टेन पूर्वेण संबन्धः ॥ २३—२५ ॥

२६ ] ति० टी०-शत्रुघ्नविक्षेपः शत्रुघ्नेनेतस्ततः कर्षणं तेन प्रनष्टज्ञानां विलग्नां यन्त्रादिना संयताम् ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

रा० टी०—शत्रुघ्नेति । शत्रुघ्नविक्षेपेण तत्कर्तृकात्याकर्षणेन विमूढा विवेकरहिता संज्ञा बुद्धिर्यस्यास्तामार्तरूपां दुःखचेष्टावतीं विलग्नां विगतवागुरां क्रौञ्चीमिव वीक्षमाणां कुब्जां भरतस्य माता समीक्ष्य शनैः समाश्वासयत् । शनैरित्यनेन तस्या अपि वियोगदुःखितात्वं सूचितम् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

गो० टी०—शत्रुघ्नविक्षेपविमूढसंज्ञामिति । विक्षेपो भामणं तेन विमूढसंज्ञाम् अन्यथाभूतमतिं विलग्नां वागुरालग्नामिति भावः 'विविग्नाम्' इति पाठे कम्पवतीमित्यर्थः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—चतुर्दशदिवसवृत्तमाह—तत इत्यादिभिः । चतुर्दशे दिवसे प्रभातसमये राजकर्तारो राजोचितमार्गप्रदर्शकाः मन्त्रिणः समेत्य एककालावच्छेदेनागत्य भरतमब्रुवन् ॥ १ ॥

गो० टी०—ततः प्रभात इत्यादि । त्रयोदशदिवसपर्यन्तमपरक्रियाव्यावृत्तत्वाच्चतुर्दश इत्युक्तं, समेत्य एकीभूय ॥ १ ॥

२ ] ति० टी०—रक्षासाधनत्वाद्राजा गुरुः, तत्राप्ययं गुरुतरः । ज्येष्ठं राज्यार्हम् ॥ २ ॥

रा० टी०—तद्वाक्याकारमाह—गत इति । गुरुतरः अतिश्रेष्ठो गुरुर्यो दशरथः सः रामं प्रव्राज्य स्वर्गं साकेतं गतः प्राप्तः ॥ २ ॥

गो० टी०—गत इति । गुरुतरो गुरुः परमगुरुरित्यर्थः॥ २॥

३ ] ति० टी०—यत एतद्राज्यमनायकं ततो राजा भव । ननु ज्येष्ठे विद्यमाने कथमहं राजा तत्राह—संगत्या ज्येष्ठस्य वनवासं प्रति पितुराज्ञासंगत्या तव च राज्यं प्रति तदाज्ञासंगत्या राज्यं कुर्वन्नपि भवान्नापराध्नोति धर्मविरोधज्येष्ठविरोधलोकविरोधान्न प्राप्नोति । पित्राज्ञाया उभाभ्यामपि पालनीयत्वादिति बहवः । एतद्राज्यमनायकमप्यमात्यादीनां संगत्यैकमत्येन दैवगत्या वा नापराध्नोति न नश्यति, अतो नो राजा भवेत्यर्थं तीर्थ आह ॥ ३ ॥

रा० टी०—ननु तर्हि किं कर्तव्यमित्यत आह—त्वमिति ।

१ हीति गो. पाठः । २ भाषेत वै इति रा. पाठः । ३ मन्थरामिति गो. पाठः । ४ चेति गो. पाठः । ५ चेति गो. पाठः ।

आभिषेचनिकं सर्वमिदमादाय राघव । प्रतीक्षते त्वां स्वजनः श्रेणयश्च नृपात्मज ॥ ४ ॥
राज्यं गृहाण भरत पितृपैतामहं ध्रुवम् । अभिषेचय चात्मानं पाहि चास्मान्नरर्षभ ॥ ५ ॥
आभिषेचनिकं भाण्डं कृत्वा सर्वं प्रदक्षिणम् । भरतस्तं जनं सर्वं प्रत्युवाच धृतव्रतः ॥ ६ ॥
ज्येष्ठस्य राजता नित्यमुचिता हि कुलस्य नः । नैवं भवन्तो मां वक्तुमर्हन्ति कुशला जनाः ॥ ७ ॥
रामः पूर्वो हि नो भ्राता भविष्यति महीपतिः । अहं त्वरण्ये वत्स्यामि वर्षाणि नव पञ्च च ॥ ८ ॥
युज्यतां महती सेना चतुरङ्गमहाबला । आनयिष्याम्यहं ज्येष्ठं भ्रातरं राघवं वनात् ॥ ९ ॥
आभिषेचनिकं चैव सर्वमेतदुपस्कृतम् । पुरस्कृत्य गमिष्यामि रामहेतोर्वनं प्रति ॥ १० ॥
तत्रैव तं नरव्याघ्रमभिषिच्य पुरस्कृतम् । आनयिष्यामि वै रामं हव्यवाहमिवाध्वरात् ॥ ११ ॥

---

यतः अद्य अस्मिन् समये एतद्राज्यमनायकं राजरहितमतः त्वं राजा भव एतेन मन्त्रिणां शत्रुकर्तृकाक्रमणशङ्का भरताभिप्रेतज्ञानेच्छा वा सूचिता । ननु सर्वसामर्थ्यविशिष्टज्येष्ठस्य विद्यमानत्वात्कथं मत्कर्तृकराजत्वप्राप्तिरित्यत आह—सङ्गत्या ज्येष्ठसंमत्या राजत्वं प्राप्त इति शेषः । नापराध्नोति अपराधं न प्राप्नोति एतेन रामाभिप्रेतमेवास्माभिरुच्यते इति सूचितम् ॥ ३ ॥

गो० टी०—त्वमिति । 'राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्' इति मातापित्रादेरपि राज्ञ एवान्तरङ्गरक्षकत्वोपदेशात् अनायकमपि एतद्राज्यं सङ्गत्या दैवयोगेन नापराध्नोति राज्यस्थजनजातमन्योन्यं न द्रुह्यतीत्यर्थः ॥ ३ ॥

४–५] ति० टी०—आभिषेचनिकमभिषेचनप्रयोजनं वस्तुजातं रामाभिषेकाय विततम् । स्वजनो मन्त्र्यादिः, श्रेणयः पौराः ॥ ४ ॥ ५ ॥

रा० टी०—अन्येषामप्येषैव संमतिरिति बोधयन्नाह—आभिषेचनिकमिति । राघव हे भरत ! आभिषेचनिकमभिषेकप्रयोजनकमिदं सर्वं सामग्रीजातमादाय गृहीत्वा स्वजनः अमात्यवर्गः श्रेणयः पौराश्च त्वां प्रतीक्षते प्रतीक्षन्ते च वचनविपरिणामेनान्यत्राप्यन्वयः ॥ ४ ॥

रा० टी०—राज्यमिति । हे भरत ! पितृपैतामहं राज्यं ध्रुवं गृहाण अत एव आत्मानमभिषेचय अत एव अस्मान्पाहि रक्ष ॥ ५ ॥

गो० टी०—प्रकृत्याभिमुख्यमप्यस्तीत्याह—आभिषेचनिकमिति । आभिषेचनिकम् अभिषेकप्रयोजनं पदार्थजातं स्वजनः अमात्यादयः श्रेणयः नैगमाः प्रतीक्षन्त इति विपरिणामः ॥ ४ ॥ ५ ॥

६ ] ति० टी०—भाण्डमुपकरणम् ॥ ६ ॥

रा० टी०—आभिषेचनिकमिति । आभिषेचनिकमभिषेकप्रयोजनकं सर्वं भाण्डं सामग्रीजातं प्रदक्षिणं भरतानुकूलं यथा स्यात्तथा कृत्वा निवेद्य विद्यमानं सर्वं जनं प्रति धृतव्रतः रामतोषकव्रतपरायणो भरतः प्रत्युवाच ॥ ६ ॥

गो० टी०—आभिषेचनिकमिति । भाण्डम् उपकरणम् ॥ ६ ॥

७ ] ति० टी०—राजता राजत्वम् ॥ ७ ॥

रा० टी०—प्रतिवचनाकारमाह—ज्येष्ठस्येति । नोऽस्माकं कुलस्य राजता राजत्वं ज्येष्ठस्य नित्यमुचिता अतः कुशला जनाः भवन्तः एवं वक्तुं नार्हन्ति ॥ ७ ॥

गो० टी०—ज्येष्ठस्येति । राजता राजत्वम् ॥ ७ ॥

८ ] ति० टी०—पूर्वो ज्येष्ठः । अरण्ये वत्स्यामि रामप्रतिनिधित्वेनेति शेषः ॥ ८ ॥

रा० टी०—ननु तर्हि कथं राज्यरक्षणमित्यत आह—राम इति । पूर्वो ज्येष्ठः नोऽस्माकं भ्राता रामः महीपतिर्भविष्यति, अरण्ये रामेप्सितवने तु अहं वत्स्यामि ॥ ८ ॥

गो० टी०—राम इति । वत्स्यामि रामप्रतिनिधित्वेनेति शेषः ॥ ८ ॥

९ ] ति० टी०—आनयिष्यामि इडार्षः ॥ ९ ॥

रा० टी०—युज्यतामिति । चतुरङ्गमहाबला चतुर्भिः अङ्गैः सहिताः महाबला यस्यां सा महती सेना युज्यताम् । तत्प्रयोजनमाह—राघवं रामं वनादहमानयिष्यामि आनेष्यामि ॥ ९ ॥

गो० टी०—युज्यतामिति । आनयिष्यामीत्यत्र इडार्षः ॥ ९ ॥

१० ] ति० टी०—रामहेतो रामाभिषेकार्थम् ॥ १० ॥

रा० टी०—ननु यदि नायास्यति तदा कथं तदभिषेक इत्यत आह—आभिषेचनिकमिति । पुरस्कृतं भवद्भिः संमुखे प्रदर्शितमाभिषेचनिकमेतदुपस्कृतमग्रे कृतं यथा स्यात्तथा वनं प्रति गमिष्यामि ॥ १० ॥

गो० टी०—आभिषेचनिकमिति । उपस्कृतं संस्कृतम् उपकरणमिति वार्थः, रामहेतोः रामाभिषेकार्थम् ॥ १० ॥

११ ] ति० टी०—पुरस्कृतमग्रतः कृतम् । अध्वरात् महायज्ञशालायाः स्वाग्निहोत्रगृहमित्यर्थः ॥ ११ ॥

रा० टी०—तत्रेति । पुरस्कृतं पूजितं तं राममध्वरात् यज्ञशालातः हव्यवाहमग्निमिव आनयिष्यामि आनेष्यामि 'पुरस्कृतः पूजितः स्यादभियुक्तेऽग्रतः कृते' इति वैजयन्ती ॥ ११ ॥

गो० टी०—तत्रैवेति । पुरस्कृतं पूजितम् 'पुरस्कृतः पूजिते स्यादभियुक्तेऽग्रतः कृते' इति वैजयन्ती । यद्वा पुरस्कृतं स्वजनदर्शनमाभिमुखीकृतमित्यर्थः । अध्वरात् यागशालायाः हव्यवाहं त्रेताग्निम् ॥ ११ ॥

---

१ आनेष्यामि तु वै इति गो. पाठः ।

न सकामां करिष्यामि स्वामिमां मातृगन्धिनीम् । वने वत्स्याम्यहं दुर्गे रामो राजा भविष्यति ॥ १२ ॥
क्रियतां शिल्पिभिः पन्थाः समानि विषमाणि च । रक्षिणश्चानुसंयान्तु पथि दुर्गविचारकाः ॥ १३ ॥
एवं संभाषमाणं तं रामहेतोर्नृपात्मजम् । प्रत्युवाच जनः सर्वः श्रीमद्वाक्यमनुत्तमम् ॥ १४ ॥
एवं ते भाषमाणस्य पद्मा श्रीरुपतिष्ठताम् । यस्त्वं ज्येष्ठे नृपसुते पृथिवीं दातुमिच्छसि ॥ १५ ॥
अनुत्तमं तद्वचनं नृपात्मजः प्रभाषितं संश्रवणे निशम्य च ।
प्रहर्षजास्तं प्रति बाष्पबिन्दवो निपेतुरार्याननने त्रसंभवाः ॥ १६ ॥

१२ ] ति० टी०—मातृगन्धिनीं केवलमातृव्यपदेशां मातृसंज्ञामात्रामित्यर्थ इति तीर्थः । कतकस्तु—' पुत्रगृद्धिनीम् ' इति पाङ्क्तः पाठः पुत्रगर्धिनीमित्यर्थ इत्याह ॥ १२ ॥

रा० टी०—नेति । स्वां स्वमातृकुलोद्भवामत एव मातृगन्धिनीं मातृस्नेहलेशविशिष्टामिमां मन्थरां मद्राज्यविषयकेच्छावर्तीं न करिष्यामि अत एव दुर्गे दुर्गमे वत्स्यामि अत एव रामो राजा भविष्यति ॥ १२ ॥

गो० टी०—नेति । मातृगन्धिनीं केवलमातृव्यपदेशां लेशमात्रमातृभावामिति वा 'गन्धो लेशे महीगुणे' इति वैजयन्ती १२

१३ ] ति० टी०—शिल्पिनः खनकाः यत्र पथोऽभावस्तत्र पन्था गमनमार्गः क्रियताम्, विषमाणि च निम्नोन्नतानि च समानि क्रियन्ताम् रथादिसुखगत्यर्थमिति भावः । पथि विषमादिषु दुर्गेषु विशेषेण जनांश्चारयन्तीति पथिदुर्गविचारकाः । ' पथिदुर्गविशारदाः ' इति पाठे तत्र वर्तमानदुर्गे चोरादिभीत्या गन्तुमशक्यप्रदेशे रक्षणविशारदा इत्यर्थः ॥ १३ ॥

रा० टी०—क्रियतामिति । शिल्पिभिः शिल्पकर्मकुशलैः पन्थाः मार्गः क्रियतां विषमाणि उन्नतानुन्नतत्वविशिष्टस्थलानि समानि एकरूपाणि क्रियन्ताम्, रक्षिणः रक्षणनिपुणाः पथिदुर्गविचारकाः पथि मार्गे दुर्गस्य दुर्गस्थलस्य विचारकाः शोधकाश्च अनुसंयान्तु ॥ १३ ॥

गो० टी०—क्रियतामिति । तत्समीपगमनायेति शेषः । विषमाणि निम्नोन्नतस्थलानि समानि क्रियन्तां पथिदुर्गविचारकाः मार्गे दुर्गस्थलशोधकाः, यद्वा दुर्गाभिज्ञा रक्षिणः ॥ १३ ॥

१४ ] ति० टी०—एवं संभाषमाणं तं प्रति सर्वोऽपि जनः श्रीमच्छुभमनुत्तमं वाक्यमुवाच ॥ १४ ॥

रा० टी०—एवमिति । रामहेतोः श्रीमत्संपत्तिकारकमनुत्तमं सर्वोत्तमं वाक्यम् एवं संभाषमाणं तं भरतं सर्वो जनः प्रत्युवाच ॥ १४ ॥

गो० टी०—एवमिति । रामहेतोः अनुत्तमं श्रीमद्वाक्यम् एवं संभाषमाणं प्रत्युवाचेति संबन्धः ॥ १४ ॥

१५ ] ति० टी०—तदेवाह—एवमिति । एवं रामराज्यविषयं भाषमाणस्य ते पद्मा तदाख्या पद्मचिह्ना च श्रीरुपतिष्ठताम्, ज्येष्ठानुसरणादिति भावः । तदेवाह—यस्त्वमिति । ज्येष्ठे ज्येष्ठाय पृथिवीं दातुमिच्छसि, अतः श्रीस्त्वामुपतिष्ठताम् ॥ १५ ॥

रा० टी०—तत्प्रतिवचनमेवाह—एवमिति । यस्त्वं ज्येष्ठे पृथिवीं दातुमिच्छसि तस्यैवंभाषमाणस्य ते पद्मा कमलकरा श्रीः लक्ष्मीः उपतिष्ठतां स्तौतु, वयं न स्तवने समर्था इत्यर्थः । एतेनेदमेव कर्तव्यमिति सूचितम् ॥ १५ ॥

गो० टी०—एवमिति । पद्मा पद्मालया श्रीः ते उपतिष्ठतां त्वत्समीपे अनपायिनी तिष्ठत्वित्यर्थः । नृपसुते नृपसुताय स एव सुतः ज्येष्ठत्वात् 'इतरे कामजाः स्मृताः' इतिवचनादिति भावः १५

१६ ] ति० टी०—संश्रवणे रामानयनप्रतिज्ञाविषयेऽनुत्तमं नृपात्मजेन प्रभाषितं तद्वचनं निशम्य स्थितानां जनानां प्रति भरतमुद्दिश्य प्रहर्षजा आर्याननने त्रसंभवा हर्षयुक्तमुखस्थनेत्रजबिन्दवो निपेतुरिति तीर्थः । अत्र आननपदमधिकम् । कतकस्तु—' नृपात्मजः प्रभाषितम् ' इति सविसर्गपाठः । नृपात्मजो जनैः प्रभाषितमनुत्तमं तद्वचनमाशीर्वचनं संश्रवणे सम्यक्श्रवणविषये प्राप्तं निशम्य श्रुत्वा हृष्टोऽभूदिति शेषः । अथ तं प्रति तं जनं लक्षीकृत्य कर्मप्रवचनीयत्वाद्द्वितीया । आर्यस्य पूज्यस्य भरतस्यार्यं पूज्यं यदाननं मुखम् । जनाशीर्वादश्रवणजसंतोषेण पूज्यत्वं मुखस्य । तद्वर्तिनेत्रसंभवाः, अत एव प्रहर्षजा बिन्दवो निपेतुः । अनुक्तभरतसौमुख्यकथनं चास्य श्लोकस्य प्रयोजनमित्याह—अत्र कतकपाठस्तद्व्याख्या च ज्यायसी ॥ १६ ॥

रा० टी०—अनुत्तममिति । संश्रवणे रामानयनप्रतिज्ञाविषये नृपात्मजप्रतिभाषितमनुत्तममत्युत्कृष्टं तद्वचनं निशम्य श्रुत्वा प्रहर्षजाः अतिहर्षेण समुद्भूताः आर्याननने त्रसंभवाः आर्याणामुत्तमानामननं जीवनं येभ्यः यद्धेतुकानन्दानुमानेन अन्येऽपि सज्जनाः सानन्दा भवन्तीत्यर्थः । ते एव नेत्रसंभवाः नयनजाताः बाष्पबिन्दवः निपेतुः । कतकस्तु ' नृपात्मजः प्रभाषितम् ' इति सविसर्गः पाठः । नृपात्मजो जनैः प्रभाषिताशीर्वचनं संश्रवणे सम्यक् श्रवणविषये प्राप्तं निशम्य श्रुत्वा हृष्टोऽभूदिति शेष इति भट्टाः ॥ १६ ॥

गो० टी०—अनुत्तममिति । संश्रवणे रामानयनप्रतिज्ञाविषये । ' आगूःसंगरसंधाः प्रतिश्रवः संश्रवः प्रतिज्ञा च ' इति हलायुधः । निशम्य स्थितानामिति शेषः । आर्याननने त्रसंभवा इत्यत्र आर्येत्यविभक्तिकनिर्देशः आर्याणामिति यावत् ॥ १६ ॥

१ नृपात्मजेति गो. रा. पाठः ।

ऊचुस्ते वचनमिदं निशम्य हृष्टाः सामात्याः सपरिषदो वियातशोकाः ।
पन्थानं नरवर भक्तिमाञ्जनश्च व्यादिष्टस्तव वचनाच्च शिल्पिवर्गः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

## अशीतितमः सर्गः ।

भरतामात्यनियुक्ताः शिल्पिन आगङ्गातटं सुरम्यशिबिरोदपानादिभिः सुखसंचारं मार्गं निर्ममुः ।

अथ भूमिप्रदेशज्ञाः सूत्रकर्मविशारदाः । स्वकर्माभिरताः शूराः खनका यन्त्रकास्तथा ॥ १ ॥
कर्मान्तिकाः स्थपतयः पुरुषा यन्त्रकोविदाः । तथा वर्धकयश्चैव मार्गिणो वृक्षतक्षकाः ॥ २ ॥
सूपकाराः सुधाकारा वंशचर्मकृतस्तथा । समर्था ये च द्रष्टारः पुरतश्च प्रतस्थिरे ॥ ३ ॥

१७ ] ति० टी०—इदं वचनं रामानयनवचनम् । वियातो विशेषेण यातो गतः शोको येषां ते जना इति विशेष्यम् । 'विधूतशोकाः' इति पाठान्तरम् । हे नरवर ! तव वचनाद्रामे त्वयि च भक्तिमाञ्छिल्पिवर्गः पन्थानं कर्तुं व्यादिष्टो जनो रक्षकजनश्च रक्षणं कर्तुं व्यादिष्टः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोनाशीतितमः सर्गः ॥७९॥

रा० टी०—ऊचुरिति । हे नरवर ! इदं भरतोक्तं वचनं निशम्य श्रुत्वा वियातशोकाः शोकरहिताः अत एव हृष्टाः सामात्याः अमात्यसहिताः सपरिषदः परिषत्सहिताः ते जनाः पन्थानं मार्गं रचयितुमिति शेषः, भक्तिमान् शिल्पिवर्गः जनः रक्षणकुशलपुरुषश्च तव वचनाद्व्यादिष्टः कथितः अस्माभिरिति शेषः, इदं वचनमूचुः इदं वचनमिति चोभयान्वयि ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

गो० टी०—ऊचुरिति । हे नरवर ! तव वचनात् शिल्पिवर्गः भक्तिमान् जनः रक्षकश्च पन्थानं प्रति व्यादिष्टः आज्ञप्ताः इतीदमूचुरिति संबन्धः ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनाशीतितमः सर्गः ॥ ७९॥

१ ] ति० टी०—भूमिप्रदेशज्ञा अन्तःसजलनिर्जलादिभूमिप्रदेशज्ञाः । सूत्रकर्मविशारदाः शिबिरादिनिर्माणे सूत्रग्रहणकुशलाः निर्जलेष्वगाधवापीकूपादिनिर्माणं सूत्रकर्मेति कतकः । खनकाः स्वकर्मणि खननेऽभिरताः परसैन्यपातष्टम्भेऽपि खनने दक्षाः, अत एव शूराः, यन्त्रका जलप्रवाहादियन्त्रणसमर्थाः॥१॥

२ ] ति० टी०—कर्मान्तिका वेतनजीविनः स्थपतयो रथादिकर्तारः, प्रधानवर्धकयः यन्त्रकोविदाः क्षेपणीयादियन्त्रकरणकुशलाः । 'पथदर्शनकोविदाः' इति पाठान्तरम् । वर्धकयस्तक्षाणः, मार्गिणस्तत्तद्गमनमार्गविशेषरक्षानियुक्ताः, वृक्षतक्षका मार्गावरोधिवृक्षच्छेत्तारः ॥ २ ॥

३ ] ति० टी०—सूपकाराः सूदाः, सुधा आलेपः, वंशचर्मकृतो वंशदलैः कटशूर्पादिकृतः । चर्मकृतो वस्त्रावाधमञ्चप्रारोप्यमाणपल्ययनादिकृतः । समर्था द्रष्टारः पूर्वानुभूतमार्गा मार्गद्रष्टारः ॥ ३ ॥

रा० टी०—शिल्पादिनियोगकर्त्रमात्यादिप्रार्थनानन्तरकालिकं वृत्तमाह—अथेत्यादिभिः । अथ भरताज्ञाश्रवणानन्तरं स्वकर्माभिरताः स्वस्वक्रियाविषयकातिप्रीतिमन्तः अत एव शूराः स्वस्वकर्मविषयककातर्यरहिताः भूमिप्रदेशज्ञाः सजलनिर्जलादिप्रदेशज्ञानवन्तः, सूत्रकर्मविशारदाः वेश्मादिनिर्माणोपयुक्तसूत्रग्रहणरूपक्रियानिपुणाः, खनकाः वापीकूपादिनिर्माणचतुराः, यन्त्रकाः नद्यादितरणकारणीभूतसेतुयन्त्रनिर्मायकाः, कर्मान्तिकाः वेतनजीविनः साधारणकर्मकरा इत्यर्थः, स्थपतयः प्रधानशिल्पिनः 'स्थपतिः कञ्चुकी कारुभेदे' इति नानार्थः, यन्त्रकोविदाः प्रक्षेपणीयप्रभृतियन्त्रनिर्माणनिपुणाः, वर्धकयस्तक्षाणः 'तक्षा तु वर्धकिः' इत्यमरः, मार्गिणः वनाध्वरक्षणयोग्याः, वृक्षतक्षकाः मार्गप्रतिबन्धकीभूतवृक्षावयवादिछेत्तारः पुरुषा इति सर्वेषां विशेष्यम् सूपकाराः पाककर्तारः । एतत्स्थाने 'कूपकारा' इति भूषणपाठः । सुधाकाराः प्रासादादिभित्त्यादिलेपनकारणीभूतपाषाणादिभस्मनिर्मापकाः, वंशचर्मकृतः वेणुत्वक्छेदकाः, समर्थाः चिरकालानुभूतविषयकस्मृतिविषयकसामर्थ्यविशिष्टाः, द्रष्टारः अनुभूतमार्गाश्च ये पुरुषास्ते पुरतः प्रतस्थिरे । श्लोकत्रयमेकान्वयि ॥ १–३ ॥

गो० टी०—अथेत्यादि । भूमिप्रदेशज्ञाः निम्नोन्नतादिप्रदेशज्ञाः, यद्वा नानादेशविदः सूत्रकर्मविशारदाः सूत्रकर्मणि निर्जलप्रदेशेष्वगाधवापीकूपादिजलोद्धारसूत्रकर्मणि विशारदाः समर्थाः, यद्वा सूत्रैः कर्म सूत्रकर्म तत्र विशारदाः समर्थाः तन्तुवाया इत्यर्थः । स्वकर्माभिरताः मार्गरक्षणादिस्वकर्मसावधानाः, खनकाः खननोपजीविनः सुरङ्गादिकृत इत्यर्थः, यन्त्रकाः महाकुल्यादितरणाय काष्ठादिना उपयन्त्रप्रकल्पकाः वागुरिका वा, कर्मान्तिकाः कर्मणि अन्तोऽवसानमेषा-

१ व्यादिष्टा इति गो. पाठः । २ कूपकारा इति गो. पाठः । ३ कर्मकृत इति गो. पाठः । ४ ते इति गो. पाठः ।

स तु हर्षात्तमुद्देशं जनौघो विपुलः प्रयान् । अशोभत महावेगः सागरस्येव पर्वणि ॥ ४ ॥
ते स्ववारं समास्थाय वर्त्मकर्मणि कोविदाः । करणैर्विविधोपेतैः पुरस्तात्संप्रतस्थिरे ॥ ५ ॥
लता वल्लीश्च गुल्मांश्च स्थाणूनश्मन एव च । जनास्ते चक्रिरे मार्गं छिन्दन्तो विविधान्द्रुमान् ॥ ६ ॥
अवृक्षेषु च देशेषु केचिद्वृक्षानरोपयन् । केचित्कुठारैष्टङ्कैश्च दात्रैश्छिन्दन्कचित्कचित् ॥ ७ ॥
अपरे वीरणस्तम्बान्बलिनो बलवत्तराः । विधमन्ति स्म दुर्गाणि स्थलानि च ततस्ततः ॥ ८ ॥
अपरेऽपूरयन्कूपान्पांसुभिः श्वभ्रमायतम् । निम्नभागांस्तथैवाशु समांश्चक्रुः समन्ततः ॥ ९ ॥

---

मस्तीति कर्मान्तिकाः परिकल्पितकर्मकारिणः भृतिजीविन इति यावत्, स्थपतयः कारवः 'स्थपतिः कारुभेदेऽपि' इत्यमरः। पुरुषाः अध्यक्षराजपुरुषाः, यन्त्रकोविदाः क्षेपणीयादियन्त्रकरणसमर्थाः, वर्धकयस्तक्षाणः ' तक्षा तु वर्धकिः ' इत्यमरः । मार्गिणः मार्गसमीकरणसमर्थाः, वृक्षतक्षकाः मार्गनिरोधकवृक्षच्छेदकाः, कूपकाराः कूपनिर्माणसमर्थाः, सुधाकाराः प्रासादस्थलक्षित्यादिलेपनकराः, वंशकर्मकृतः वंशैः कटपिटकशर्पादिकर्मकराः, समर्थाः कार्यान्तरेषु समर्थाः, द्रष्टारः पूर्वानुभूतमार्गाः मार्गप्रदर्शका इति यावत् ॥ १-३ ॥

४ ] ति० टी०—स त्विति । एवं मार्गसंनाहप्रवृत्तौ जनौघो रामदर्शनकौतुकजहर्षान्महावेगो महावेगवान्प्रयान्गच्छन्पर्वणि सागरस्य महावेगो जलौघ इवाशोभत ॥ ४ ॥

रा० टी०—स इति । तं रामाधिष्ठितमुद्देशं प्रदेशं हर्षात्प्रयान् गच्छन् जनौघः पर्वणि सागरस्य महावेग इव अशोभत ॥ ४ ॥

गो० टी०—स त्विति । हर्षात् कर्मकरणस्य दुःखात्मकत्वेऽपि जनौघस्य हृष्टत्वं रामदर्शनकुतूहलात्, तमुद्देशं प्रयान् रामाधिष्ठितप्रदेशमुद्दिश्य गच्छन् ॥ ४ ॥

५ ] ति० टी०—ते मार्गशोधकाः स्ववारं स्वसमूहं समास्थाय । 'वारसंघातसंचयाः' इत्यमरः । विविधोपेतैर्नानाप्रकारयुक्तैः पिटकखनित्रदात्रादिकरणैर्युक्ता इति शेषः ॥ ५ ॥

रा० टी०—ते इति । ते पूर्वोक्ताः कोविदाः निपुणाः स्ववारं स्वस्वजातीयसंघं समास्थाय विविधोपेतैः अनेकप्रकारविशिष्टैः करणैः स्वस्वकर्मनिष्पादकसामग्रीभिः पुरस्तात्प्रतस्थिरे 'वारसंघातसंचयाः' इत्यमरः ॥ ५ ॥

गो० टी०—त इति । ते मार्गशोधकाः स्ववारं समास्थाय स्वस्वशोध्यमार्गशोधने अन्योन्यपर्यायकरणं प्राप्य ' निवहावसरौ वारौ ' इत्यमरः । विविधोपेतैः विविधाः नानाप्रकाराः तानुपेतैः नानाविधैरित्यर्थः, करणैः खनित्रपिटककुठारादिभिः सह पुरस्तात्संप्रतस्थिरे ॥ ५ ॥

६ ] ति ० टी०—लताः शाखाः, स्थाणूञ्शङ्कून् अपसारयन्त इति शेषः ॥ ६ ॥

रा० टी०—लता इति । लताः मार्गावरोधकशाखाः ' समे शाखालते ' इत्यमरः । वल्लीः वीरुधः, गुल्मान्गुच्छान्, स्थाणून् शङ्कून्परिछिन्नोर्ध्वभागकाल्पवृक्षानित्यर्थः । ' स्थाणुरस्त्री ध्रुवः शङ्कुः ' इत्यमरः। अश्मनः पाषाणान् विविधान् द्रुमांश्च छिन्दन्तो जनाः मार्गं चक्रिरे ॥ ६ ॥

गो० टी०—लता इति । लताः मार्गावरणीभूताः शाखाः ' समे शाखालते ' इत्यमरः । वल्लीः वीरुधः, गुल्मान् कक्षान्, स्थाणून् शङ्कून् ' स्थाणुरस्त्री ध्रुवः शङ्कुः' इत्यमरः ॥ ६ ॥

७ ] ति० टी०—अरोपयन् छायार्थमिति शेषः । टङ्कः पाषाणभेदनः । छिन्दन् अडभाव आर्षः ॥ ७ ॥

रा० टी०—अवृक्षेष्विति । केचित्पुरुषाः कुठारैः केचित् टङ्कैः पाषाणभेदनसाधनैः केचित् दात्रैश्च क्वचित्क्वचित् छिन्दन् अच्छिन्दन् छेदनयोग्यानिति शेषः, आगमशास्त्रस्यानित्यत्वादड्विरहः । अवृक्षेषु वृक्षरहितेषु देशेषु वृक्षांश्च आरोपयन् छायासंपत्त्यर्थं शिल्पकौशलेन झटित्यरचयन्नित्यर्थः ॥ ७ ॥

गो० टी०—अवृक्षेष्विति । टङ्कैः पाषाणभेदनादिसाधनैः 'टङ्कः पाषाणदारणः' इत्यमरः । दात्रैर्लवित्रैः ' दात्रं लवित्रम् ' इत्यमरः, छिन्दन् अच्छिन्दन् ॥ ७ ॥

८ ] ति० टी०—बलिनो रूढमूलान्वीरणस्तम्बान् विधमन्ति हस्ताभ्यामेव निःसारयन्ति । दुर्गाणि स्थलान्युन्नतान्प्रदेशान्विधमन्ति खननेन समीकुर्वन्ति ॥ ८ ॥

रा० टी०—अपर इति । बलिनः अतिदृढमूलविशिष्टान्वीरणस्तम्बान्विगतमीरणमतिवायावपि कम्पो येषां ते एव स्तम्बाः प्रकाण्डरहितद्रुमाः तान्बलवत्तराः विधमन्ति स्वबाहुभ्यामुन्मूलयन्ति ततस्ततस्तत्र तत्र दुर्गाणि दुर्गमानि स्थलानि च समानि अकुर्वत इति शेषः 'स्तम्बो गुल्मे तृणादीनामप्रकाण्डद्रुमेऽपि च ' इति विश्वः ॥ ८ ॥

गो० टी०—अपर इति । वीरणस्तम्बान् वीरणतृणकाण्डान् विधमन्ति स्म अदहन्, ध्मा शब्दाग्निवक्रसंयोगयोरित्यस्मात् धातोर्धमादेशः । बलिनः रूढमूलान् छेत्तुमशक्यानित्यर्थः, दुर्गाणि गन्तुमशक्यानि निम्नो .:स्थलानीत्यर्थः । स्थलानि समानि चक्रुरिति शेषः ॥ ८ ॥

९ ] ति० टी०—कूपान्मार्गमध्यवर्तिनः तादृशमायतं श्वभ्रं गर्तं च पांसुभिरपूरयन् ॥ ९ ॥

रा० टी०—अपर इति । कूपान् मार्गमध्यवर्तिजलरहिततृणाद्याछादितकूपविशेषानायतं विस्तृतं श्वभ्रं गर्तं च पां-

---

१ समुद्र इवेति गो. पाठः । २ ततः केचिन्निति गो. पाठः ।

बबन्धुर्बन्धनीयांश्च क्षोद्यान्संचुक्षुदुस्तथा । बिभिदुर्भेदनीयांश्च तांस्तान्देशान्नरास्तदा ॥ १० ॥
अचिरेण तु कालेन परिवाहान्बहूदकान् । चक्रुर्बहुविधाकारान्सागरप्रतिमान्बहून् ॥ ११ ॥
निर्जलेषु च देशेषु खानयामासुरुत्तमान् । उदपानान्बहुविधान्वेदिकापरिमण्डितान् ॥ १२ ॥
ससुधाकुट्टिमतलः प्रपुष्पितमहीरुहः । मत्तोद्घुष्टद्विजगणः पताकाभिरलंकृतः ॥ १३ ॥
चन्दनोदकसंसिक्तो नानाकुसुमभूषितः । बह्वशोभत सेनायाः पन्थाः सुरपथोपमः ॥ १४ ॥
आज्ञाप्याथ यथाज्ञप्ति युक्तास्तेऽधिकृता नराः । रमणीयेषु देशेषु बहुस्वादुफलेषु च ॥ १५ ॥
यो निवेशस्त्वभिप्रेतो भरतस्य महात्मनः । भूयस्तं शोभयामासुर्भूषाभिर्भूषणोपमम् ॥ १६ ॥

---

सुभिः धूलिभिः अपूरयन् तथा तेन, प्रकारेण भूमेः निम्नभागाननुन्नतप्रदेशान्समन्ततः समाँश्चक्रुः ॥ ९ ॥

गो० टी०—अपर इति । कूपान् मार्गस्थान् आयतं श्वभ्रमवटं च पांसुभिरपूरयन् , निम्नभागांश्च पांसुभिः समांश्चक्रुः प्रपूर्येति शेषः, यद्वा पूर्वश्लोके दुर्गाणि तृणलतादिच्छन्नानि स्थलानि च विषमन्ति स्मेति योजना अतो न पुनरुक्तिः ॥ ९ ॥

१० ] ति० टी०—बन्धनीयान्सेतून् क्षोद्यान्क्षोदनीयान्शर्कराभूयिष्ठप्रदेशान् संचुक्षुदुश्चूर्णयामासुः भेदनीयाञ्जलनिर्गमार्थं भेद्यान् ॥ १० ॥

रा० टी०—बबन्धुरिति । बन्धनीयान्संतारणार्थं बन्धनयोग्यान् सेतूनित्यर्थः, बबन्धुः । क्षोद्यान् विषमशर्करादिमयत्वेन क्षोदनयोग्यान् तांस्तान् देशांश्चुक्षुदुः सुखेन गमनं यथा स्यात्तथा संपेषयामासुः । भेदनीयान् जलनिर्गमार्थं भेत्तव्यान् बिभिदुश्च ॥ १० ॥

गो० टी०—बबन्धुरिति । बन्धनीयान् जलप्रदेशान् बबन्धुः सेनासंतरणार्थं सेतुभिर्बबन्धुः । क्षोद्यान् क्षोदार्हान् शर्कराभूयिष्ठप्रदेशान् संचुक्षुदुः चूर्णयामासुः । भेदनीयान् कच्छादिबहुजलप्रदेशान् जलनिर्गमनार्थं बिभिदुः ॥ १० ॥

११ ] ति० टी०—परिवाहानल्पप्रवाहान्बन्धनेन बहूदकांश्चक्रुः ॥ ११ ॥

रा० टी०—अचिरेणेति । परिवाहान्बहुसुखवहनशीलान्बहूदकान् एकसुखवहनयोग्यबन्धनादिना बहूदकविशिष्टानत एव सागरप्रतिमान्सागरसदृशान्बहुविधाकारान् रचितघट्टादिनाऽनेकाकारविशिष्टान्बहूंश्चक्रुः ॥ ११ ॥

गो० टी०—अचिरेणेति । परिवाहान् अल्पप्रवाहान् जलोच्छ्वासान् बन्धनेन बहूदकान् चक्रुः, यद्वा परिवाहान् दूरस्थतटाकप्रवर्तितान् बहुविधाकारान् सोपानावतारायनेकप्रकारानित्यर्थः ॥ ११ ॥

१२ ] ति० टी०—खानयामासुरखनन् उदपानान्कूपवाप्यादीन् वेदिकाभिः परितोऽलंकृतान् ॥ १२ ॥

रा० टी०—निर्जलेष्विति । निर्जलेषु जलरहितेषु देशेषु वेदिकापरिमण्डितानत एव उत्तमान् बहुविधान् उदपानान्वापीकूपादीन् खानयामासुः ॥ १२ ॥

गो० टी०—निर्जलेष्विति । उदपानान् कूपान् 'पुंस्यन्धुः प्रहिः कूप उदपानं तु पुंसि वा ' इत्यमरः । बहुविधान् नरगजतुरगादिपानयोग्यसरोवाप्यादिभेदेन बहुविधान् वेदिकापरिमण्डितान् जलपानकाले विश्रान्त्यर्थं तीरे वेदिकालंकृतान् ॥ १२ ॥

१३-१४ ] ति० टी०—ससुधाकुट्टिमतलस्तत्र तत्र सच्छायजलाशयसमीपे विश्रमार्थं निवासाय ससुधानद्भूप्रदेशः सकुट्टिमतलश्च 'कुट्टिमोऽस्त्री निबद्धा भूः' क्वचित्सुधाभिः क्वचिन्मृत्तिकाभिरेव बद्धचत्वर इत्यर्थः ॥ १३ ॥ १४ ॥

रा० टी०—तन्मार्गमेव वर्णयति—ससुधेत्यादि द्वाभ्याम् । ससुधाकुट्टिमतलः समया पाषाणादिभिस्सम्यग्सहितया सामग्र्या कुट्टिमं निबद्धं दृढीकृतमित्यर्थः, तलं भूमिभागो यस्य सः, प्रपुष्पितमहीरुहः प्रपुष्पिताः अतिपुष्पविशिष्टाः महीरुहाः वृक्षाः यत्र सः, मत्ताः अत एवोद्घुष्टाः स्वस्वोचितशब्दविशिष्टाः द्विजगणाः पक्षिसमूहाः यत्र सः, पताकाभिः अलंकृतः शोभितः चन्दनोदकैः चन्दनमिश्रजलैः संसिक्तः नानाकुसुमैः अनेकविधपुष्पैः भूषितः अत एव सुरपथोपमः स्वर्गमार्गतुल्यः सेनायाः पन्था बहु अधिकमशोभत । श्लोकद्वयमेकान्वयि ' कुट्टिमोऽस्त्री निबद्धा भूः ' इत्यमरः ॥ १३ ॥ १४ ॥

गो० टी०—ससुधेत्यादिश्लोकद्वयमेकान्वयम् । सुधालिप्तकुट्टिमतलोपेतः ' कुट्टिमोऽस्त्री निबद्धा भूः ' इत्यमरः । प्रपुष्पितमहीरुहः जलसेचनेनेति शेषः । चन्दनोदकसंसिक्तः विश्रान्तिप्रदेशेषु चन्दनयुक्तवारिसिक्तः, नानाकुसुमभूषितः प्रकीर्णनानापुष्पशोभितः ॥ १३ ॥ १४ ॥

१५-१६ ] ति० टी०—अथ मार्गकरणानन्तरमधिकृता मार्गशिबिरादिनिवेशाधिकारिणो यथाज्ञप्ति यथाभरताज्ञापनं शिबिरादिनिवेशेऽनुचरानाज्ञाप्य यो यादृशो भरतस्याभिमतो निवेशस्तं तथा कृत्वा भूयोऽधिकभूषाभिः शोभयामासुर्वितानकनककलशरत्नध्वजादिभिर्भूषयामासुः । निवेशः शिबिरम् भूषणोपमं मार्गस्यालंकारसदृशम् अतिरमणीयमिति यावत् ॥१५॥१६॥

रा० टी०—आज्ञाप्येति । अथ मार्गनिर्माणानन्तरमधिकृताः मार्गवेश्मादिनिर्मापणे प्राप्ताधिकाराः अत एव युक्ताः तन्निर्मापणे संलग्नचित्ताः नराः यथाज्ञप्ति भरताज्ञप्तिमनति-

---

१ तदेति गो. पाठः । २ तथेति रा. पाठः । ३ एवेति गो. पाठः ।

नक्षत्रेषु प्रशस्तेषु मुहूर्तेषु च तद्विदः । निवेशान्स्थापयामासुर्भरतस्य महात्मनः ॥ १७ ॥
बहुपांसुचयाश्चापि [1]परिखाः परिवारिताः । तत्रे[2]न्द्रनीलप्रतिमाः प्रतोलीवरशोभिताः ॥ १८ ॥
प्रासादमाला[3]संयुक्ताः सौधप्राकारसंवृताः । पताकाशोभिताः सर्वे सुनिर्मितमहापथाः ॥ १९ ॥
[4]वितर्दिभिरिवाकाशे विटङ्काग्रविमानकैः । समुच्छ्रितैर्निवेशास्ते बभुः शक्रपुरोपमाः ॥ २० ॥
जाह्नवीं तु समासाद्य विविधद्रुमकाननाम् । शीतलामलपानीयां महामीनसमाकुलाम् ॥ २१ ॥
सचन्द्रतारागणमण्डितं यथा नभः क्षपायाममलं विराजते ।
नरेन्द्रमार्गः स [5]तदा व्यराजत क्रमेण रम्यः शुभशिल्पिनिर्मितः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

---

कस्य बहुस्वादुविशिष्टानि फलानि येषु तेषु रमणीयेषु देशेषु यो निवेशः शिबिरं महात्मनो भरतस्याभिमतः तं भूषणोपमं मार्गभूषणसदृशं निवेशं कारयित्वेति शेषः, भूषाभिः वितानसुवर्णकलशरत्नध्वजादिभिः भूयोऽधिकं शोभयमासुः । श्लोकद्वयमेकान्वयि ॥ १५ ॥ १६ ॥

गो० टी०—आज्ञाप्येत्यादि । अथ मार्गकरणानन्तरम् अधिकृताः मार्गशिबिरादिकरणे नियुक्ताः युक्ताः परस्परं युक्ताः बहुस्वादुफलेषु रमणीयेषु देशेषु भरतस्य यो निवेशः यादृशाकारविशिष्टो निवेशोऽभिप्रेतः अभिमतस्तं तादृशसंनिवेशं यथाज्ञप्ति यथामति आज्ञाप्य कर्तुं नियम्य भूषणोपमं भूषणभूतं स्वतोऽलंकृतमिति यावत्, निवेशं भूषाभिः वितानकनककलशध्वजादिभिः भूयोऽपि शोभयामासुः भूषयामासुः ॥१५॥१६॥

१७ ] ति० टी०—निवेशाञ्शिबिराणि ॥ १७ ॥

रा० टी०—वेश्मनिर्माणप्रारम्भकालं बोधयन्नाह—नक्षत्रेष्विति । नक्षत्रेषु मुहूर्तेषु च प्रशस्तेषु ज्योतिःशास्त्रगृहीतेषु सत्सु निवेशाञ्शिबिराणि स्थापयामासुः ॥ १७ ॥

गो० टी०—नक्षत्रेष्वित्यादि । तद्विदः वास्तुशास्त्रज्ञाः, निवेशान् शिबिराणि ॥ १७ ॥

१८ ] ति० टी०—बहुपांसुचया इत्यनेन शर्करादिराहित्यसूचनम् । परिखाः सगर्ताः पर्यन्तभित्तयः तत्र परिखाव्यच्छेदेनेत्यर्थः । इन्द्रनीलमणिनिर्मिताः प्रतिमाश्चित्रप्रतिमा येषु निवेशेषु । 'इन्द्रकीलप्रतिमाः' इति पाठे इन्द्रकीलपर्वतसदृश इत्यर्थः । एवञ्चाः परिखा इति यावत् । प्रतोली रथ्या ॥१८॥

१९ ] ति० टी०—सौधसदृशैः प्राकारैः संवृताः ॥ १९ ॥

२० ] ति० टी०—आकाशे वितर्दिभिरिव विधिधिष्ण्यैरिव स्थितैरुपलक्षिताः । विटङ्कं कपोतपालिका तद्युताग्रैर्विमानकैः सप्तभूमिकगृहैरत्युन्नतैरुपलक्षिता इत्यर्थ इति कतकः । 'विसर्पद्भिरिवाकाशे' इति पाठान्तरं सदोर्ध्वमूर्ध्वं गच्छद्भिरिवेत्यर्थः कथंचिद्योज्यः ॥ २० ॥

रा० टी०—बह्विति । बहुपांसूनामतिरक्तकणानामंशुचयः प्रभासमूहो येषु कान्तिमद्वालुकायुक्ता इत्यर्थः, परिखाभिः परिवारिताः युक्ताः इन्द्रनीलाः इन्द्रनीलमणिनिर्मिताः प्रतिमा येषु ते प्रतोलीवरैः रथ्यामुख्यैः शोभिताः प्रासादमालाभिः देवनृपतिभवनसमूहै संयुक्ताः सौधाः सुधालिप्ता एव प्राकारास्तैः संवृताः निबिडाः पताकाभिः शोभिताः सुनिर्मिताः महापथाः राजमार्गा येषु, आकाशे विसर्पद्भिः गच्छद्भिरिव समुच्छ्रितैः अत्युन्नतैः विटङ्काग्रविमानकैः विटङ्कैः कपोतपालिकाभिः विमानकैः सप्तभूमिकगृहैः उपलक्षिताः ते भरताज्ञप्ताधिकारिनिर्मापिताः शक्रपुरोपमाः निवेशाः शिबिराणि बभुः 'अंशुः प्रभाकिरणयोः' इति मेदिनी 'प्रासादो देवभूभुजाम्' इत्यमरः । 'कपोतपालिकायां तु विटङ्कं पुन्नपुंसकम्' इत्यमरः । श्लोकत्रयमेकान्वयि ॥१८–२०॥

गो० टी०—बह्वित्यादिश्लोकत्रयमेकं वाक्यम् । तत्र मार्गे बहुपांसुचयाः पांसुशब्देनात्र सूक्ष्मसिकता उच्यन्ते बहवः पांसुचया येषु ते तथोक्ताः परिखापरिवारिताः खेयैर्वृताः इन्द्रकीलप्रतिमाः इन्द्रकीलपर्वतसदृशाः प्रतोलीवरशोभिताः प्रतोली वीथिः 'रथ्या प्रतोली विशिखा' इत्यमरः । प्रासादमालावितताः प्रासादा देवगृहाणि 'प्रासादो देवभूभुजाम्' इत्यमरः। सौधप्राकारसंवृताः सौधाः राजगृहाणि, यद्वा सौधाः सुधाधवलिताः "तेन रक्तं रागात्" इत्यण् । समुच्छ्रितैः उन्नतैः अत एव आकाशे विसर्पद्भिरिव स्थितैः विटङ्काग्रविमानकैः विटङ्कयुक्ताग्रविमानैः 'कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्' इत्यमरः। विमानानि सप्तभूमिकाः प्रासादास्तैर्बभुः शक्रपुरोपमाः अमरावतीसदृशाः ॥ १८–२० ॥

२१–२२ ] ति० टी०—जाह्नवीं समासाद्याभिव्याप्य प्रवर्तितो नरेन्द्रमार्गो व्यराजतेत्यन्वयः ॥ २१ ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके-वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

रा० टी०—जाह्नवीमिति । विविधद्रुमकाननामनेकविधद्रुमविशिष्टवनविशिष्टां शीतलममलं मलनिवर्तकं पानीयं जलं यस्यास्तां महामीनैः समाकुलां निबिडां जाह्नवीं समासाद्य उत्तरतो दक्षिणतश्च प्राप्य शुभशिल्पिभिः क्रमेण निर्मितः रम्य-

---

१ परिखापरिवारिता इति गो. रा. पाठः । २ कीलेति गो. पाठः । ३ वितता इति गो. पाठः । ४ विसर्पद्भिरिति गो. रा. पाठः । ५ तथेति गो. पाठः ।

# एकाशीतितमः सर्गः ।

प्रभाते सूतमागधवन्दिभिर्मङ्गलतूर्यरवमिश्रे भरतगुणस्तवे प्रारब्धे भरतस्तन्नाहं राजेति निवार्य शत्रुघ्नं प्रति विलपति ॥ राजसभां प्राप्तो वसिष्ठो भरताद्यानयनाय दूतान्प्राहिणोत् । शत्रुघ्नामात्यादिभिर्युतो भरतो ... प्राविशत् ।

ततो नान्दीमुखीं रात्रिं भरतं सूतमागधाः । तुष्टुवुः सविशेषज्ञाः स्तवैर्मङ्गलसंस्तवैः ॥ १ ॥
सुवर्णकोणाभिहतः प्राणदद्यामदुन्दुभिः । दध्मुः शङ्खांश्च शतशो वाद्यांश्चोच्चावचस्वरान् ॥ २ ॥
स तूर्यघोषः सुमहान्दिवमापूरयन्निव । भरतं शोकसंतप्तं भूयः शोकैररन्धयत् ॥ ३ ॥
ततः प्रबुद्धो भरतस्तं घोषं संनिवर्त्य च । नाहं राजेति चोक्त्वा तं शत्रुघ्नमिदमब्रवीत् ॥ ४ ॥
पश्य शत्रुघ्न कैकेय्या लोकस्यापकृतं महत् । विसृज्य मयि दुःखानि राजा दशरथो गतः ॥ ५ ॥

---

रमणीयः सः प्रसिद्धो नरेन्द्रमार्गः क्षपायां रात्रौ सचन्द्रतारागणमण्डितं चन्द्रसहिततारासमूहशोभितममलं नभः आकाशमिव व्यराजत अशोभत । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

गो० टी०—जाह्नवीमिति । समासाद्य अवधीकृत्य तत्पर्यन्तमित्यर्थः, निवेशा बभुरिति पूर्वेणान्वयः उत्तरेण वा । गङ्गाविशेषणैस्ततः परं निवेशकरणाशक्यत्वं द्योत्यते ॥ २१ ॥

गो० टी०—सचन्द्रतारागणमण्डितमिति । सचन्द्रो यस्तारागणः तेन मण्डितम् ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽशीतितमः सर्गः ॥ ८० ॥

१ ] ति० टी०—नान्दीमुखीं भरताभिषेकाय वसिष्ठेन करिष्यमाणनान्दीमुखाभ्युदयप्राग्वर्तिनीम् । रामानयनाभ्युदयप्रारम्भयुक्ता नान्दीमुखीति कश्चित् रात्रिमल्पावशेषां दृष्ट्वेति शेषः । सविशेषज्ञा राजनि राजपुत्रे चापेक्षितविशेषस्तवं जानन्ति तादृशाः मङ्गलसंस्तवैर्मङ्गलप्रतिपादकैः ॥ १ ॥

रा० टी०—भरतवृत्तान्तं बोधयितुमाह—तत इत्यादित्रिभिः । नान्दीमुखीं नान्द्याः रामागमनविषयकोद्योगजनितानन्दस्य मुखं प्रारम्भो यस्यां तां रात्रिं ज्ञात्वेति शेषः, वाग्विशेषज्ञाः सूतमागधाः मङ्गलसंस्तवैः मङ्गलप्रतिपादकैः स्तवैस्तुष्टुवुः । नान्दीमुखीं ज्ञात्वेत्यनेन रामनिर्गमानन्तरमेतद्रात्रेः पूर्वं सूतादिभिर्न स्तुतमिति ध्वनितम् 'नन्दिरानन्दने धूते' इति विश्वः । अत्र दीर्घः स्वार्थिकाणन्तात् ङीपि बोध्यः । किंच नन्दो नन्दत्वमेव नान्दः सोऽस्त्यस्येति नान्दी तस्य इयः व्याप्तेर्मुखमारम्भो यस्यां तामित्यर्थः ॥ १ ॥

गो० टी०—तत इत्यादि । नान्दीमुखीं रामानयनाभ्युदयप्रारम्भयुक्तां, यद्वा भरताभिषेकाय वसिष्ठेन कृतनान्दीमुखाभ्युदययुक्तां, यद्वा शोकविगमाय कृताभ्युदयामित्यर्थः रात्रिं रात्रौ अपररात्र इत्यर्थः, यद्वा रात्रिं प्राप्येति शेषः । मङ्गलसंहितैः मङ्गलशब्दसहितैः ॥ १ ॥

२ ] ति० टी०—सुवर्णकोणः सुवर्णदण्डः, यामदुन्दुभिर्यामावसानसूचको दुन्दुभिः उच्चानुच्चावचस्वरान्वाद्यान्वाद्यविशेषान्दध्मुः । 'नान्द्यान्' इति पाठः मङ्गलादीनित्यर्थ इति तीर्थः ॥ २ ॥

रा० टी०—सुवर्णेति । सुवर्णकोणेन स्वर्णनिर्मितवादनदण्डेन अभिहतस्ताडितः यामदुन्दुभिः यामः याममात्रावशिष्टरात्रिसूचकः, किंच यामः स्नानादिप्रवृत्तिरूपः संयमहेतुः दुन्दुभिः प्रणदत् प्राणदत् आगमशास्त्रस्यानित्यत्वादडभावः । शतशः शङ्खास्तु वाद्यान् वादनयोग्यान् उच्चावचस्वरान् उच्चावचस्वरहेतून् शङ्खान् दध्मुः नरा इति शेषः । 'यामस्तु पुंसि प्रहरे संयमेऽपि प्रकीर्तितः' इति मेदिनी ॥ २ ॥

गो० टी०—सुवर्णकोणाभिहत इति । कोणो वादनदण्डः यामावसानसूचको दुन्दुभिः यामदुन्दुभिः प्राणदत् नदति स्म नाद्यन्ते एभिरिति नादाः काहल्यादयस्तान् उच्चावचस्वरान् निम्नोन्नतस्वरान् मन्द्रमध्यमतारकरूपेण नानास्वरानित्यर्थः ॥ २ ॥

३–४ ] ति० टी०—शोकैः शोकोत्पादनैः अरन्धयद्हिनस्ति स्म । 'रध पाकहिंसनयोः' ॥ ३–४ ॥

रा० टी०—स इति । दिवमापूरयन्निव स तूर्यघोषः शोकसंतप्तं भरतं भूयः शोकैः अरन्धयत्पीडयत् ॥ ३ ॥

रा० टी०—तत इति । ततः तच्छब्दश्रवणानन्तरं प्रबुद्धो भरतः अहं राजा न इत्युक्त्वा तं घोषं संनिवर्त्य शत्रुघ्नमब्रवीत् ॥ ४ ॥

गो० टी०—स इति । अरन्धयत् व्यदारयत् 'अरन्धयत्' इतिपाठे अपचत् अतपदित्यर्थः ॥ ३ ॥ ४ ॥

५ ] ति० टी०—कैकेय्या हेतुना मद्विषये जायमानं लोकस्य सूतमागधादेरपकृतमनुचितं कर्म पश्य । एवंरूपाणि दुःखानि दुःखकराणि मयि विसृज्य राजा गतः ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—पश्येत्यादिभिः । हे शत्रुघ्न ! कैकेय्याः संबन्धिनः लोकस्य जनस्य मन्थराया इत्यर्थः ।

---

१ वाग्विशेषज्ञा इति गो. रा. पाठः । २ संहितैरिति गो. पाठः । ३ प्रणददिति रा. पाठः । ४ नादानिति गो. पाठः । ५ अरन्धयदिति गो. पाठः । ६ चाप्युक्त्वेति गो. पाठः ।

तस्यैषा धर्मराजस्य धर्मपूला महात्मनः । परिभ्रमति राजश्रीर्नौरिवाकर्णिका जले ॥ ६ ॥
यो हि नः सुमहान्नाथः सोऽपि प्रव्राजितो वने[1] । अनया धर्ममुत्सृज्य मात्रा मे राघवः स्वयम् ॥ ७ ॥
इत्येवं भरतं [2]वीक्ष्य विलपन्त[3]मचेतनम् । [4]कृपणा रुरुदुः सर्वाः [5]सुस्वरं योषितस्तदा ॥ ८ ॥
तथा तस्मिन्विलपति वसिष्ठो राजधर्मवित् । सभामिक्ष्वाकुनाथस्य प्रविवेश महायशाः ॥ ९ ॥
शातकुम्भमयीं रम्यां [6]मणिहेमसमाकुलाम् । सुधर्मामिव धर्मात्मा सगणः प्रत्यपद्यत ॥ १० ॥
स काञ्चनमयं पीठं स्वस्त्यास्तरणसंवृतम् । अध्यास्त सर्ववेदज्ञो दूताननुशशास च ॥ ११ ॥
ब्राह्मणान्क्षत्रियान्[7]योधानमात्यान्गणवल्लभान् । क्षिप्रमानयताव्यग्राः कृत्यमात्ययिकं हि नः ॥ १२ ॥
सराजपुत्रं शत्रुघ्नं भरतं च यशस्विनम् । युधाजितं सुमन्त्रं च ये च तत्र हिता जनाः ॥ १३ ॥

महदपकृतमपकारं त्वं पश्य जानीहि येन अपकारेण मयि दुःखानि विसृज्य संस्थाप्य राजा गतः साकेतमिति शेषः, एतेन कैकेय्याः नापराध इति सूचितम् । तेन तत्स्वभावस्य अतिसरलत्वं व्यञ्जितम् ॥ ५ ॥

गो० टी०—पश्येति । कैकेय्या हेतुभूतया जायमानं लोकस्य सूतमागधादेः अपकृतम् अनुचितं कर्म पश्य, यद्वा लोकस्य जनस्य कैकेय्या महद्यथा भवति तथाऽपकृतम् । तदेवाह—विसृज्येत्यादि ॥ ५ ॥

६–८ ] ति० टी०—तस्य योगतस्तस्येत्यर्थः, अकर्णिका अकर्णधारा । 'अकण्टका' इति पाठः कण्टको नाविकस्तद्रहितेत्यर्थ इति कतकः ॥ ६–८ ॥

रा० टी०—तस्येति । धर्मराजस्य तस्य पितुः एषा राजश्रीः अकर्णिका कर्णधाररहिता नौरिव परिभ्रमति स्वनिर्वाहकं न प्राप्नोतीत्यर्थः । 'अकण्टका ' इति पाठः । कण्टको नाविकः तद्रहिता इत्यर्थ इति कतक इति भट्टाः भट्टसंमतस्तु ' अकर्णिका ' इति ॥ ६ ॥

रा० टी०—य इति । यः नोऽस्माकं सुमहानतिशयितो नाथः स राघवः अनया दासीभ्रान्तया मात्रा धर्मं पितृप्रतिज्ञाविषयीभूताभिषेकमुत्सृज्य त्याजयित्वा वने प्रव्राजितः प्रेषितः ॥ ७ ॥

रा० टी०—इतीति । एवं विलपन्तं भरतं वीक्ष्य सर्वाः योषितो रुरुदुः ॥ ८ ॥

गो० टी०—तस्येति । राजश्रीः प्रधाने राजनि वर्तमाने ज्येष्ठपुत्रस्य युवराजत्वेन प्राप्तेत्येवमविच्छिन्ना राज्यलक्ष्मीः अकर्णिका कर्णोऽरित्रम् ' कर्णः श्रोत्रमरित्रं च ' इति भुवनः । सोऽस्यास्तीति कर्णी स एव कर्णिकः कर्णधार इति यावत्, तद्रहिता ॥ ६–९ ॥

९ ] ति० टी०—राजधर्मविद्राजपुरोहितकर्तव्यधर्मवेत्ता । अतः स्वकृत्यं स्वयं संपादयतीत्याह—सभामित्यादि ॥ ९ ॥

रा० टी०—तथेति । तस्मिन् भरते विलपति सति राजधर्मवित् वसिष्ठः इक्ष्वाकुनाथस्य सभां प्रविवेश ॥ ९ ॥

१० ] ति० टी०—तद्विशेषणम्—शातकुम्भमयीत्यादि । सगणः सशिष्यगणः ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—शातेति । शातकुम्भमयीं सुवर्णप्रचुरां मणिभिः रत्नैश्च समाकुलां व्याप्तां सुधर्मामिव प्रतीयमानां सभां सगणः शिष्यसर्वसहितः धर्मात्मा वशिष्ठः प्रत्यपद्यत ॥ १० ॥

गो० टी०—शातकुम्भमयीमिति । शातकुम्भमयीं स्वर्णमयीं मणिरत्नसमाकुलां मणिश्रेष्ठसमावृताम् ' रत्नं स्वजातौ श्रेष्ठेऽपि ' इत्यमरः । यद्वा मणयो मुक्ताः ' मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ' इत्यमरः । रत्नानि पद्मरागादीनि अत्र सभामिति विशेष्यं सगणः सशिष्यगणः ॥ १० ॥ ११ ॥

११ ] ति० टी०—स्वस्त्यास्तरणसंवृतं स्वस्तिकाकारमण्डलवदास्तरणसंवृतं पीठमध्यास्त, ततो दूताननुशशास च ॥ ११ ॥

रा० टी०—स इति । स्वस्त्यास्तरणेन स्वस्तिकसदृशमण्डलाकारास्तरणविशेषेण विशिष्टं काञ्चनमयं स्वर्णनिर्मितं पीठं सर्ववेदज्ञो वशिष्ठः अध्यास्त दूतान् अनुशशास च ॥ ११ ॥

१२ ] ति० टी०—गणवल्लभाः सेनानायकाः । आत्ययिकं कालविलम्बासहिष्णु ॥ १२ ॥

१३ ] ति० टी०—सराजपुत्रं राजपुत्रैरितरैः सहितं शत्रुघ्नं युधाजिन्नामा कश्चिन्मन्त्री ये च हिता जनास्तांश्चानयत ॥ १३ ॥

रा० टी०—अनुशासनाकारमाह—ब्राह्मणानिति द्वाभ्याम् । अव्यग्राः सावधानाः यूयं ब्राह्मणादीन् सराजपुत्रं इतरराजकुमारसहितं शत्रुघ्नादिकं च क्षिप्रमानयत नोऽस्माकमात्ययिकं विलम्बानर्हं कृत्यमस्ति । गणवल्लभाः सेनाधीशाः युधाजिन्नामा कश्चित् सखा भरतमातुलस्य तु तत्रासत्त्वात् । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०—ब्राह्मणानिति । गणवल्लभान् गणाध्यक्षान् आत्ययिकम् अत्ययः कृच्छ्रं तत्र भवमात्ययिकं यत्नसाध्यमित्यर्थः, सराजभृत्यं राजान्तरङ्गभृत्यसहितम् युधाजिदिति विजयाख्यमन्त्रिणो नामान्तरं सुमन्त्रशब्दसाहचर्यात् । ये च

१ वन्यमिति गो. पाठः । २ प्रेक्ष्येति गो. पाठः । ३ विचेतनामिति गो. पाठः । ४ कृपणामिति गो. पाठः । ५ सस्वरमिति गो. रा. पाठः । ६ मणिरत्नेति गो. पाठः । ७ वैद्यानिति गो. रा. पाठः ।

ततो हलहलाशब्दो महान्समुदपद्यत । रथैरश्वैर्गजैश्चापि जनानामुपगच्छताम् ॥ १४ ॥
ततो भरतमायान्तं शतक्रतुमिवामराः । प्रत्यनन्दन्प्रकृतयो यथा दशरथं तथा ॥ १५ ॥
ह्रद इव तिमिनागसंवृतः स्तिमितजलो मणिशङ्खशर्करः ।
दशरथसुतशोभिता सभा सदशरथेव बभूव सा पुरा ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

## द्व्यशीतितमः सर्गः ।

पित्रा भ्रात्रा च ते दत्तमिदं राज्यं स्वीकुर्विति वसिष्ठो भरतं निर्वक्ति । भरतोऽपि सोऽधिक्षेपं निषिध्य कान्तारण्यमहं रामं प्रत्यानेतुं यथाशक्ति प्रयतिष्य इति प्रतिजज्ञे । भरतोक्तः सुमन्त्रो रामसमीपयात्रार्थं स्यन्दनं संयोज्य भरतान्तिकं प्रपेदे ।

तामार्यगणसंपूर्णां भरतः प्रग्रहां सभाम् । ददर्श बुद्धिसंपन्नः पूर्णचन्द्रां निशामिव ॥ १ ॥
आसनानि यथान्यायमार्याणां विशतां तदा । वस्त्राङ्गरागप्रभया द्योतिता सा सभोत्तमा ॥ २ ॥
सा विद्वज्जनसंपूर्णा सभा सुरुचिरा तथा । अदृश्यत घनापाये पूर्णचन्द्रेव शर्वरी ॥ ३ ॥

---

तत्र भरते हिताः हितपराः जनाः तानप्यानयतेति पूर्वेण संबन्धः ॥ १२–१६ ॥

१४–१५ ] ति० टी०–हलहलेति शब्दानुकरणम् ॥ १४ ॥ १५ ॥

रा० टी०–तत इति । ततो वशिष्ठाज्ञापनानन्तरं रथादिभिरुपगच्छतां जनानां हलहलाशब्दः समुपपद्यत समुपापद्यत, हलहलेति प्रभूतशब्दानुकरणम् ॥ १४ ॥

रा० टी०–तत इति । ततः गुर्वाज्ञाश्रवणानन्तरमायान्तं भरतं शतक्रतुमिन्द्रममरा इव दशरथं यथा तथा प्रकृतयः पजाः प्रत्यनन्दन् ॥ १५ ॥

१६ ] ति० टी०–ह्रद इव सभा । ह्रदोऽत्र सामुद्रः । भिन्नलिङ्गत्वेऽपि सहृदयोद्वेगाभावाच्चन्द्र इव मुखमितिवन्न दुष्टोपमा । तिमिरनेकयोजनायामविस्तारो मत्स्यः, नागा जलगजाः सर्पाश्च, मणयो मुक्ताद्याः, शर्कराः सुवर्णखनिमृत्तिकाः सभायां जलस्थाने सभातेजः एतदेव ध्वनयता स्तिमितजल इत्युक्तम् । चित्रस्थतिमिनागसंवृतत्वं मणयश्च स्तम्भादिषु विद्यन्त एव । शङ्खाश्चित्रेषु स्वर्णशर्करास्थाने । कुट्टिमादौ स्वर्णलेपः । प्रकारान्तरेण जलादिवर्णने तु कवेर्न्यूनता दोषः । मम तु विभक्तिपरिणामेनैषामेव सभायामप्यन्वयान्न दोषः एतेन वशिष्ठो जलम्, तिमिनागौ भरतशत्रुघ्नौ, मण्यादयोऽमात्यपौरजानपदा इति कतकोक्तमपास्तम् । दशरथसुतशोभिता सभा पुरा सदशरथा सभेव बभाविति योजना । पितृसमानाकारत्वात्पुत्रस्येदानीमपि सदशरथेवेत्युत्प्रेक्षा, पुरा यथेत्यंशे उपमेति तयोरत्र संसृष्टिः ॥ १६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

रा० टी०–ह्रद इति । तिमिनागसंवृतः तिमिभिः शतयोजनविस्तीर्णमत्स्यैः नागैर्जलगजैश्च संवृतः मणिशङ्खशर्करः मणिभिर्मुक्तादिभिर्युक्ताः शङ्खशर्करा यस्मिन् सः । तत्र शर्कराः सुवर्णखनिमृत्तिका इति भट्टाः स्तिमितजलः ह्रदः समुद्रह्रद इव दशरथसुतेन शोभिता सा सभा पुरा पूर्वं सदशरथा दशरथसहितेव बभूव ॥ १६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

गो० टी०–ह्रद इति । शर्कराशब्देनात्र स्थूलवालुका उच्यन्ते ह्रदश्च समुद्रसमीपस्थः तिमिशङ्खादिसाहचर्यात् अत्र स्तिमितजलेन वसिष्ठस्य तिमिनागाभ्यां भरतशत्रुघ्नयोर्मण्यादिभिरमात्यादीनां च साम्यम् ॥ १६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

---

१ ] ति० टी०–प्रग्रहा प्रकृष्टैर्वसिष्ठादिभिर्ग्रहः परिग्रहोऽधिष्ठानं यस्यां सा, निशापक्षे प्रकृष्टगुर्वादिग्रहवतीम् ॥ १ ॥

रा० टी०–भरतागमनकालिकं वृत्तमाह–तामित्यादिभिः । आर्यगणैः श्रेष्ठसमूहैः संपूर्णां प्रग्रहां प्रकृष्टाः ग्रहाः आग्रहवन्तो वसिष्ठादयो यस्यां तां सभां बुद्धिसंपन्नो भरतः पूर्णचन्द्रेण सहितां निशामिव ददर्श ॥ १ ॥

गो० टी०–तामिति । प्रग्रहां नियमवतीं, यद्वा शुक्रबृहस्पत्यादिप्रकृष्टग्रहयुक्तां तदा निशाविशेषणमिदम् ॥ १ ॥

२ ] ति० टी०–आर्याणां त्रैवर्णिकानाम् । आसनानि विशतामासनेषूपविशताम् ॥ २ ॥

रा० टी०–आसनानीति । यथान्यायं न्यायमनतिक्रम्य आसनानि विशतामार्याणां वस्त्राङ्गरागप्रभया वस्त्राणामङ्गरागाणां चन्दनसारादीनां प्रकाशेन सा सभोत्तमा द्योतिता ॥ २ ॥

गो० टी०–आसनानीति । आसनानि विशताम् आसनेषूपविशतामित्यर्थः ॥ २ ॥

३ ] ति० टी०–घनापाये शरदि ॥ ३ ॥

---

१ सुमहान्समपद्यतेति गो. पाठः । २ समुपपद्यतेति रा. पाठः । ३ बभौ यथेति गो. पाठः । ४ पूर्णचन्द्र इति गो. पाठः । ५ तदेति गो. पाठः ।

राज्ञस्तु प्रकृतीः सर्वाः स[1] संप्रेक्ष्य च धर्मवित् । इदं पुरोहितो वाक्यं भरतं मृदु चाब्रवीत् ॥ ४ ॥
तात राजा दशरथः स्वर्गतो धर्ममाचरन् । धनधान्यवतीं स्फीतां प्रदाय पृथिवीं तव ॥ ५ ॥
रामस्तथा स[2]त्यवृत्तिः सतां धर्ममनुस्मरन् । नाजहात्पितुरादेशं शशी ज्योत्स्नामिवोदितः ॥ ६ ॥
पित्रा भ्रात्रा च ते दत्तं राज्यं निहतकण्टकम् । तद्भुङ्क्ष्व मुदितामात्यः क्षिप्रमेवाभिषेचय ॥ ७ ॥
उदीच्याश्च प्रतीच्याश्च दाक्षिणात्याश्च केवलाः । कोट्यापरान्ताः सामुद्रा रत्नान्यु[3]पहरन्तु ते ॥ ८ ॥
तच्छ्रुत्वा भरतो वाक्यं शोकेनाभिपरिप्लुतः । जगाम मनसा रा[4]मं धर्मज्ञो धर्मकाङ्क्षया ॥ ९ ॥
सबाष्पकलया वाचा कलहंसस्वरो युवा । विललाप सभामध्ये जगर्हे च पुरोहितम् ॥ १० ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—सेति । सुरुचिरा अतिशोभावती सभा घनापाये शरदि शर्वरीव अदृश्यत ॥ ३ ॥

गो० टी०—सेति । घनापाये वर्षापगमे शरदीति यावत्, भरताभिषेकाय सर्वे अलंकृताः समागता इति भावः ॥ ३ ॥

४ ] ति० टी०—स वसिष्ठः संप्रेक्ष्य च चात्कृतानुमतिकांश्च कृत्वा ॥ ४ ॥

रा० टी०—राज्ञ इति । पुरोहितो वशिष्ठः भरतमब्रवीत् ॥ ४ ॥

गो० टी०—राज्ञ इति । प्रेक्ष्य संवादार्थमवलोक्य ॥ ४ ॥

५ ] ति० टी०—धर्मं सत्यपरिपालनरूपम् ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—तातेति । स्फीतां समृद्धां पृथ्वीं तव प्रदाय स्वः साकेतं गतः ॥ ५ ॥

गो० टी०—तातेति । तात वत्स ! धर्मं सत्यपरिपालनरूपं तव तुभ्यम् ॥ ५ ॥

६ ] ति० टी०—सतां धर्मम् 'जीवतो वाक्यकरणात्' इत्येवंरूपम् ॥ ६ ॥

रा० टी०—राम इति । सत्यवृत्तिः रामः पितुः आदेशमाज्ञां शशी ज्योत्स्नामिव न अजहात् तदाज्ञापरिपालनार्थमेव वनं गत इत्यर्थः ॥ ६ ॥

गो० टी०—राम इति । तथा पितृवत् सत्ये धृतिः प्रीतिर्यस्य स सत्यधृतिः 'धृङ् प्रीतौ' इतिधातोः स्त्रियां क्तिन्प्रत्ययः सतां पितृनिदेशवर्तिनां धर्मं पितृवचनपरिपालनरूपम् 'जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥' इतिवचनात् ॥ ६ ॥

७ ] ति० टी०—निहतकण्टकं रामस्य वनवासदानात्तथा ॥ ७ ॥

रा० टी०—पित्रेति । निहतकण्टकं रिपुरहितं ते तुभ्यं पित्रा भ्रात्रा च दत्तं तद्राज्यं मुदितामात्यस्त्वं भुङ्क्ष्व अत एव क्षिप्रमभिषेचय स्वात्मानमिति शेषः ॥ ७ ॥

गो० टी०—पित्रेति । अभिषेचय आत्मानमिति शेषः ॥ ७ ॥

८ ] ति० टी०—उदीच्यादयस्तत्तद्दिशि प्रत्येकसिंहासनाधीश्वरा ये च केवलाः सिंहासनरहिताः चात्प्राच्या अपरान्ता द्वीपवासिनः सामुद्राः पोतवणिजः कोट्योऽसंख्यातानि रत्नानि हरन्तु । 'कोट्योऽपरान्ताः' इति पाठान्तरम् । कोट्यो रत्नान्यनेककोटिसंख्यरत्नानि, यद्वा परान्तास्तत्तद्दिगन्तवासिनः, सामुद्राः समुद्रद्वीपवासिनः ॥ ८ ॥

रा० टी०—अभिषेचनप्रयोजनमाह—उदीच्या इति । उदीच्यादिदेशभवाः केवलाः उदीच्यादिदेशानवच्छिन्नाः स्वर्गपातालवासिन इत्यर्थः न परः अन्योऽन्तः वेदकर्मविध्वंसकः येभ्यः ते सामुद्राः समुद्रमध्यवासिनश्च कोट्या अनन्तसंख्यया युक्तानि रत्नानि ते उपहरन्तु ॥ ८ ॥

गो० टी०—उदीच्या इति । प्राच्या इत्यपि सिद्धं केवलाः सिंहासनादिरहिता इत्यपरान्तादिविशेषणम् अपरान्ताः अपरान्तदेशवासिनो यवनाः कोट्या कोटिसंख्यया उपलक्षितानि रत्नानि सामुद्राः समुद्रद्वीपवासिनः ॥ ८ ॥

९ ] ति० टी०—धर्मज्ञो ज्येष्ठाभिषेकरूपधर्मज्ञः धर्मकाङ्क्षया ज्येष्ठानुवर्तनरूपधर्मलिप्सया मनसा जगाम सस्मार ॥ ९ ॥

रा० टी०—तदिति । तत्पुरोहितभाषितं वाक्यं शोकेनाभिपरिप्लुतो भरतः धर्मकाङ्क्षया रामसेवाभिलाषया रामे मनसा जगाम रामं सस्मारेत्यर्थः ॥ ९ ॥

गो० टी०—तदिति । धर्मज्ञः कुलक्रमागतज्येष्ठाभिषेचनरूपधर्मज्ञः धर्मकाङ्क्षया ज्येष्ठानुवर्तनरूपधर्मलिप्सया रामं मनसा जगाम सस्मारेत्यर्थः ॥ ९ ॥

१० ] ति० टी०—जगर्हे सर्वज्ञोऽपि कथमेवमनुचिते मां प्रवर्तयसीत्युक्तवानित्यर्थः ॥ १० ॥

रा० टी०—स इति । सबाष्पकलया बाष्पकलासहितया वाचा उपलक्षितः कलहंसस्वरो युवा भरतः विललाप पुरोहितं जगर्हे च ॥ १० ॥

गो० टी०—स इति । बाष्पकलया अधर्मस्मरणात् रामस्मरणाद्वा बाष्पेणाव्यक्तया कलहंसस्वर इत्यनेन अभिनिवेशविशेषो द्योत्यते युवेत्यनेन भोगकालेऽपि भोगोपकरणजिहासा चित्रमिति ऋषिः स्तौति । सभामध्ये जगर्हे नियमातिक्रमं रहसि बोधयेदिति नियमोऽपि भग्नः अतिक्रूरमधर्मं नियुक्तवानिति दुःखपारवश्यात् रहःसदोविभागविस्मरणेन गर्हितवान् । पुरोहितं जगर्हे सम्यक्कृत्वयास्य कुलस्य भावि हितमवेक्षितमिति निनिन्द सभामध्ये बहवः समेत्य ममैकस्य पारतन्त्र्यं किमपजिहीर्षन्ति सभामध्ये किमवनेऽपि मदनं मुष्णन्ति ॥ १० ॥

१ समग्राः प्रेक्ष्येति गो. पाठः । २ सत्यधृतिरिति गो. पाठः । ३ अभिहरन्त्विति गो. पाठः । ४ रामे इति रा. पाठः । ५ ऽभिलाषेणेति युक्तं भाति ।

चरितब्रह्मचर्यस्य विद्यास्नातस्य धीमतः । धर्मे प्रयतमानस्य को राज्यं मद्विधो हरेत् ॥ ११ ॥
कथं दशरथाज्जातो भवेद्राज्यापहारकः । राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि ॥ १२ ॥
ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुषोपमः । लब्धुमर्हति काकुत्स्थो राज्यं दशरथो यथा ॥ १३ ॥
अनार्यजुष्टमस्वर्ग्यं कुर्यां पापमहं यदि । इक्ष्वाकूणामहं लोके भवेयं कुलपांसनः ॥ १४ ॥
यद्धि मात्रा कृतं पापं नाहं तदपि रोचये । इहस्थो वनदुर्गस्थं नमस्यामि कृताञ्जलिः ॥ १५ ॥
राममेवानुगच्छामि स राजा द्विपदां वरः । त्रयाणामपि लोकानां राघवो राज्यमर्हति ॥ १६ ॥
तद्वाक्यं धर्मसंयुक्तं श्रुत्वा सर्वे सभासदः । हर्षान्मुमुचुरश्रूणि रामे निहितचेतसः ॥ १७ ॥

११ ] ति० टी०—विद्यास्नातस्य सर्वविद्यानन्तरभाविस्नानयुतस्य रामस्य मद्विधश्चरितब्रह्मचर्यादिः ॥ ११ ॥

रा० टी०—तत्प्रकारमाह—चरितेति । चरितमाचरितं ब्रह्मचर्यं येन विद्यास्नातस्य निखिलविद्याकुशलस्य धर्मे पितृप्रतिज्ञापालने प्रयतमानस्य रामस्य राज्यं मद्विधः मत्सदृशः ज्ञातेत्यर्थः, को हरेत् ॥ ११ ॥

गो० टी०—चरितेति । चरितब्रह्मचर्यस्य अर्थाधितगुरुकुलवासस्य विद्यास्नातस्य 'वेदमधीत्य स्नायात्' इतिस्मृतिप्रक्रियया निखिलवेदाध्ययनानन्तरभाविस्नानकर्मयुक्तस्य धीमतस्तदर्थज्ञस्य धर्मे प्रयतमानस्य तदर्थानुष्ठानवतः मद्विधः शास्त्रवश्यो मादृशः ॥ ११ ॥

१२-१४ ] ति० टी०—रामस्य स्वमिति शेषः । हे भगवन् ! एवं विज्ञाय धर्मं न्याय्यं वक्तुमिह सभायामर्हसि नेदृशमन्याय्यमित्यर्थः ॥ १२-१४ ॥

रा० टी०—कथमिति । दशरथाज्जातः पुरुषः राज्यापहारकः कथं भवेत् न कथंचिदित्यर्थः । राज्यकरणे स्वानौचित्यं बोधयति—राज्यमहं च रामस्य अतस्त्वं धर्मं रामराज्यकरणोपायं वक्तुमर्हसि ॥ १२ ॥

गो० टी०—मद्विध इत्येतद्विवृणोति—कथमित्यादिना । रामविरहोत्तरक्षणे मृतस्य कुक्षौ जातोऽहं कथं तत्यक्तं राज्यं परिगृह्णीयां, मत्स्वरूपपर्यालोचनयापि नाहं राज्यार्ह इत्याह—राज्यं चेति । शेषवस्तुष्वेकमेकस्य किमीष्टे प्रत्युत राज्यं वा किमिति मां नेष्टे राज्यं चाहं च रामस्य राज्यमपि रामसंबन्धि अहमपि च रामसंबन्धी उभयमपि रामशेषमित्यर्थः । धर्मं वक्तुमिहार्हसि लोके स्वपित्रादिकं निगृह्य स्वयं राज्यस्य कर्तारः सन्ति तदेतद्युक्तावपि भवतीति मा मंस्थाः इह मद्विषये मत्प्रकृतिं ज्ञात्वा धर्मं वक्तुमर्हसि धर्मं पाल्यत्वपालकत्वरूपं वक्तुमर्हसि, रामशेषत्वाविशेषे एकं शेषं कथमपरं रक्षेत् तथा सति राज्यमेव मां किमिति न रक्षेदिति भावः । ननु रत्नपेटिकयोर्द्वयोः शेषत्वाविशेषेऽपि एकं रक्ष्यमपरं रक्षकं च दृष्टं तद्वदस्त्विति चेन्न, तत्र हि पेटिका कुब्जिकादिव्यापारेण स्वामिना रक्षकत्वेन विनियुक्ता नाहमेवं रामेण विनियुक्तः यथास्वैकधार्यमपि रत्नमवसरे पेटिकास्थं करोति तद्वत्स्वेनैव पाल्यमपि राज्यमस्माभिर्यावच्छक्ति प्रसादितोऽपि अनवसरतया रामो यदा मद्धीनं कुर्यात्तदा तदादिनशक्तिकस्तत्परतन्त्रः पेटिकावत् यावत्तदागमनं रक्षेयम् अतस्तन्निवर्तनप्रयत्न एव सर्वथा कार्यः प्रथमतो वरनिर्बन्धादिकृता राज्यस्यास्मदीयत्वबुद्धिः रामसमक्षं गत्वा परिहरणीयेति भावः ॥ १२ ॥

रा० टी०—ज्येष्ठ इति । काकुत्स्थः ककुत्स्थवंशोद्भवो रामः राज्यं लब्धुं दशरथ इव अर्हति ॥ १३ ॥

गो० टी०—वक्तव्यं धर्ममाह—ज्येष्ठ इत्यादिना । दिलीपनहुषशब्दौ चन्द्रसूर्यवंश्यश्रेष्ठराजोपलक्षणार्थौ ॥ १३ ॥

रा० टी०—अनार्येति । अनार्यैः श्रेष्ठैः जुष्टं सेवितमस्वर्ग्यं सुखनिवर्तकं पापं यदि अहं कुर्यां तर्हि इक्ष्वाकूणां कुलपांसनः कुलदूषक इत्यर्थः, अहं भवेयम् ॥ १४ ॥

गो० टी०—अनार्येति । इक्ष्वाकूणां लोके तत्संबन्धियाने जने ॥ १४ ॥

१५ ] ति० टी०—ननु त्वन्मात्रा प्रयासेन राज्यसंपादनात् स्माभिरेवमुक्तमत आह—यद्धीति । वनदुर्गस्थं वनरूपदुर्गस्थम् ॥ १५ ॥

रा० टी०—ननु भवन्मात्रानुमत्या मयोच्यत इत्यत आह—यदिति । मात्रा यत् कृतं संपादितं पापं रामवियोगहेतुकदुःखप्राप्तिजनितापराधं तत्र रोचये अत एव इहस्थोऽपि अहं वनदुर्गस्थं रामं नमस्यामि ॥ १५ ॥

गो० टी०—यद्धीति । अनेनाप्राप्तभाषणश्रवणपापस्य प्रायश्चित्तमनुष्ठितम् ॥ १५ ॥

१६ ] ति० टी०—द्विपदां मनुष्याणां वरः श्रेष्ठो राजा अस्य राज्यस्येति शेषः ॥ १६ ॥

रा० टी०—राममिति । अहं राममेव अनुगच्छामि । तत्र हेतुः—द्विपदां वरः परमपुरुषः त्रयाणां लोकानां राजा नियन्ता रामः एव राज्यं राज्याभिषेकमर्हति ॥ १६ ॥

गो० टी०—राममिति । द्वौ पादौ येषां ते द्विपदः "संख्यासुपूर्वस्य" इति लोपः समासान्तः, अतः 'पादः पत्' इति भस्थले पदादेशः, तेषां पुरुषाणामित्यर्थः ॥ १६ ॥

१७ ] ति० टी०—मध्ये कविवाक्यम्—तद्वाक्यमिति ॥ १७

रा० टी०—तदिति । तद्भरतोक्तं वाक्यं श्रुत्वा रामं निहितचेतसः रामनिमग्नचित्ताः सर्वे सभासदः हर्षाद्भरतवाक्यश्रवणजनितानन्दादश्रूणि मुमुचुः ॥ १७ ॥

यदि त्वार्यं न शक्ष्यामि विनिवर्तयितुं वनात् । वने तत्रैव वत्स्यामि यथार्यो लक्ष्मणस्तथा ॥ १८ ॥
सर्वोपायं तु वर्तिष्ये विनिवर्तयितुं बलात् । समक्षमार्यमिश्राणां साधूनां गुणवर्तिनाम् ॥ १९ ॥
विष्टिकर्मान्तिकाः सर्वे मार्गशोधकदक्षकाः[1] । प्रस्थापिता मया पूर्वं यात्रा च मम रोचते ॥ २० ॥
एवमुक्त्वा तु धर्मात्मा भरतो भ्रातृवत्सलः । समीपस्थमुवाचेदं सुमन्त्रं मन्त्रकोविदम् ॥ २१ ॥
तूर्णमुत्थाय गच्छ त्वं सुमन्त्र मम शासनात् । यात्रामाज्ञापय क्षिप्रं बलं चैव समानय ॥ २२ ॥
एवमुक्तः सुमन्त्रस्तु भरतेन महात्मना । प्रहृष्टः सोऽदिशत्सर्वं[2] यथासंदिष्टमिष्टवत् ॥ २३ ॥
ताः प्रहृष्टाः प्रकृतयो बलाध्यक्षा बलस्य च । श्रुत्वा यात्रां समाज्ञप्तां राघवस्य निवर्तने ॥ २४ ॥
ततो योधाङ्गनाः सर्वा भर्तॄन्सर्वान्गृहे गृहे । यात्रागमनमाज्ञाय त्वरयन्ति स्म हर्षिताः ॥ २५ ॥
ते हयैर्गोरथैः शीघ्रं[3] स्यन्दनैश्च मनोजवैः[4] । सह योषिद्बलाध्यक्षा बलं सर्वमचोदयन्[5] ॥ २६ ॥

गो० टी०–मध्ये कविवाक्यम्–तद्वाक्यमिति । सभासु सीदन्तीति सभासदः सभ्याः ॥ १७ ॥

१८ ] ति० टी०–सर्वथा स्वस्य राज्यचिन्ता नास्तीति प्रतिपादकं पुनर्भरतवाक्यम्–यदि त्विति ॥ १८ ॥

रा० टी०–पुनर्भरतवाक्यमाह–यदीति । आर्यं रामं विनिवर्तयितुमानेतुं यदि न शक्ष्यामि तर्हि तत्र रामाधिष्ठितवने एव वत्स्यामि ॥ १८ ॥

गो० टी०–यदीति । कनिष्ठे लक्ष्मणे आर्यशब्दप्रयोगो ज्येष्ठानुवर्तनरूपधर्मनिरतत्वात् यथार्यो लक्ष्मणस्तथाहं लक्ष्मणश्चेत्यर्थः ॥ १८ ॥

१९ ] ति० टी०–आर्यास्त्रैवर्णिकास्ते च ते मिश्राः पूज्यास्तेषां युष्माकं समक्षमित्यन्वयः ॥ १९ ॥

रा० टी०–सर्वेति । साधूनां वैषम्यरहितानां गुणवर्तिनामार्यैर्भवद्भिर्मिश्राणां संयुक्तानां सभासदां भवतां समक्षं विनिवर्तयितुं सर्वोपायं स्वबुद्धिविषयीभूतनिखिलोपायजातं वर्तिष्ये करिष्यामि ॥ १९ ॥

गो० टी०–सर्वोपायमिति । सर्वोपायं वर्तिष्ये सर्वोपायमिति क्रियाविशेषणं सर्वोपायैर्यत्नं करिष्य इत्यर्थः । आर्यमिश्राणां सदस्यानाम् 'आर्यमिश्राः पारिषदाः सदस्याः सामवायिकाः' इति सज्जनः । भवद्भिरागन्तव्यमित्यर्थादुक्तं भवति ॥ १९ ॥

२०–२२ ] ति० टी०–विष्टयो भृतिं विना कर्मकराः । कर्मान्तिका उक्ताः ॥ २०–२२ ॥

रा० टी०–विष्टीति । मार्गशोधकदक्षकाः मार्गशोधनचतुराः विष्टिकर्मान्तिकाः विष्टयः भृतिप्राप्तिमन्तरा कर्मकर्तारः कर्मान्तिकास्तदितरभृत्याश्च मया पूर्वमेव प्रस्थापिताः अतो मम यात्रैव रोचते ॥ २० ॥

रा० टी०–एवमिति । भ्रातृवत्सलो भरतः एवमुक्त्वा मन्त्रकोविदं संमतिदाननिपुणं सुमन्त्रमुवाच ॥ २१ ॥

रा० टी०–वचनाकारमाह–तूर्णमिति । हे सुमन्त्र! मम शासनात्त्वं तूर्णं गच्छ । गमनप्रयोजनमाह–यात्रां रामानयनोद्देश्यकमद्गमनहेतुकतत्तद्गमनमाज्ञापय अत एव बलं सेनां क्षिप्रं समानय प्रस्थापय ॥ २२ ॥

गो० टी०–विष्टिकर्मान्तिका इति । विष्टयो भृतिमन्तरेण जनपदेभ्यः समानीताः कर्मकराः कर्मान्तिकाः कर्मान्ते भृतिग्रहीतारः, मार्गशोधकरक्षका इति विष्ट्यादिविशेषणं प्रस्थापिता मया पूर्वमित्यभिधानात् वसिष्ठः शिबिरकरणनियोगमजानन्नभिषेकप्रस्तावं कृतवानित्यवगम्यते ॥ २०–२२ ॥

२३ ] ति० टी०–अदिशदाज्ञापयति स्म । इष्टवदिष्टार्हम् इष्टानुरूपमिति यावत् ॥ २३ ॥

रा० टी०–एवमिति । भरतेन एवमुक्तः सुमन्त्रः इष्टवत् स्वेच्छाविषयीभूतं सर्वं यथासंदिष्टमाज्ञामनतिक्रम्य अदिशदकथयत् ॥ २३ ॥

गो० टी०–एवमिति । इष्टवत् इष्टार्हम् इष्टानुरूपमिति यावत् ॥ २३ ॥

२४] ति० टी०–निवर्तते निवर्तननिमित्तं बलस्य यात्रां समाज्ञप्तां श्रुत्वा प्रकृतयो बलाध्यक्षाश्च प्रहृष्टा इत्यन्वयः ॥२४॥

रा० टी०–ता इति । राघवस्य निवर्तने निवर्तननिमित्तं समाज्ञप्तां बलस्य सेनायाः यात्रां श्रुत्वा ताः प्रकृतयः प्रजाः बलाध्यक्षाश्च प्रहृष्टा अभवन्निति शेषः ॥ २४ ॥

गो० टी०–ता इति । ताः प्रकृतयः पौरश्रेणयः 'राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च' इत्यमरः । बलाध्यक्षाः सेनापतयश्च राघवस्य निवर्तने निवर्तननिमित्तं समाज्ञप्तां बलस्य सैन्यस्य यात्रां श्रुत्वा प्रहृष्टाः आसन्निति शेषः ॥२४॥

२५] ति० टी०–यात्रागमनं रामयात्रार्थं गमनम् ॥ २५ ॥

रा० टी०–तत इति । ततः प्राप्तहर्षाद्धेतोः यात्रागमनं यात्रया भरतादिकर्तृकगमनेन आगमनं रामकर्तृकनिवर्तनमाज्ञाय गृहे गृहे स्वस्वगृहे सर्वान्भर्तॄन् योधाङ्गनाः त्वरयन्ति स्म॥२५॥

गो० टी०–तत इति । यात्रागमनं यात्राया आगमनं सिद्धिं यात्रारूपगमनमिति वा ॥ २५ ॥

२६ ] ति० टी०–गोरथैः शकटैरित्यर्थः ॥ २६ ॥

१ रक्षका इति गो. पाठः । २ हृष्टस्तदाऽदिशदिति गो. पाठः । ३ शीघ्रैरिति गो. पाठः । ४ महाजवैरिति गो. पाठः । ५ योधैरिति गो. पाठः ।

सज्जं तु तद्बलं दृष्ट्वा भरतो गुरुसंनिधौ । रथं मे त्वरयस्वेति सुमन्त्रं पार्श्वतोऽब्रवीत् ॥ २७ ॥
भरतस्य तु तस्याज्ञां परिगृह्य प्रहर्षितः । रथं गृहीत्वोपययौ युक्तं परमवाजिभिः ॥ २८ ॥
स राघवः सत्यधृतिः प्रतापवान्ब्रुवन्सुयुक्तं दृढसत्यविक्रमः ।
गुरुं महारण्यगतं यशस्विनं प्रसादयिष्यन्भरतोऽब्रवीत्तदा ॥ २९ ॥
तूर्णं त्वमुत्थाय सुमन्त्र गच्छ बलस्य योगाय बलप्रधानान् ।
आनेतुमिच्छामि हि तं वनस्थं प्रसाद्य रामं जगतो हिताय ॥ ३० ॥
स सूतपुत्रो भरतेन सम्यगाज्ञापितः संपरिपूर्णकामः ।
शशास सर्वान्प्रकृतिप्रधानान्बलस्य मुख्यांश्च सुहृज्जनं च ॥ ३१ ॥
ततः समुत्थाय कुले कुले ते राजन्यवैश्या वृषलाश्च विप्राः ।
अयूयुजन्नुष्ट्ररथान्खरांश्च नागान्हयांश्चैव कुलप्रसूतान् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

रा०टी०—ते इति । हयैरथैः गोरथैः शकटैःमनोजवैः स्यन्दनैश्च योधैश्च सह सहितं सर्वं बलं बलाध्यक्षाः शीघ्रमचोदयन् २६

गो० टी०—त इति । गोरथैः वृषभयुक्तरथैः शकटैरित्यर्थः बलं सर्वमित्यवयवावयविनोर्भेदनिर्देशः ॥ २६ ॥

२७-२८ ] ति० टी०—सज्जं गमनाय संनद्धम् । गुरुर्वसिष्ठः ॥ २७ ॥ २८ ॥

रा० टी०—सज्जमिति । तत्स्वकीयं बलं सज्जं दृष्ट्वा गुरुसन्निधौ स्थितो भरतः पार्श्वतः पार्श्वे स्थितं सुमन्त्रं मे रथं त्वरयस्वेत्यब्रवीत् ॥ २७ ॥

रा० टी०—भरतस्येति । तस्य भरतस्य आज्ञां परिगृह्य प्रहर्षितः सुमन्त्रः परमवाजिभिर्युक्तं रथं गृहीत्वा उपययौ भरतसमीपं प्राप ॥ २८ ॥

गो० टी०—सज्जमिति । सज्जं संनद्धं गुरुसंनिधावित्यनुज्ञानकरणार्थमुक्तम् ॥ २७ ॥ २८ ॥

२९ ] ति० टी०—गुरुं रामं प्रसादयिष्यन्निवृत्तये ॥ २९ ॥

रा० टी०—स इति । सत्यधृतिः सत्ये प्रारम्भपरिसमापने रामाभिषेके इत्यर्थः, धृतिर्बुद्धिर्यस्य दृढसत्यविक्रमः दृढौ अपरिचाल्यौ सत्यविक्रमौ यस्य स राघवो भरतः सुयुक्तं वचो ब्रुवन्सन्महारण्यगतं गुरुं रामं प्रसादयिष्यंश्च अब्रवीत् ॥ २९ ॥

गो० टी०—उक्तमर्थं पुनः संग्रहेण दर्शयति—स इत्यादिना । सत्यधृतिः अप्रच्युतधैर्यः सुयुक्तं ब्रुवन् गुरुं प्रसादयिष्यन् उचितवचनेन रामं प्रीणयिष्यन्नित्यर्थः ॥ २९ ॥

३० ] ति० टी०—बलस्य योगाय बलसंमेलनाय । बलप्रधानान् आज्ञापयेति शेषः ॥ ३० ॥

रा० टी०—वचनाकारमाह—तूर्णमिति । हे सुमन्त्र ! बलस्य सैन्यस्य योगाय गमनार्थं परस्परं यथोचितसंबन्धाय संबन्धं कारयितुं बलप्रधानान्सेनाधीशान्गच्छ वनस्थं रामं तूर्णमानेतुमहमिच्छामि ॥ ३० ॥

गो० टी०—तूर्णमिति । बलस्य योगाय बलस्य सन्नहनाय बलस्य संगतये वा 'योगः सन्नहनोपायध्यानसंगतियुक्तिषु' इत्यमरः । बलप्रधानान् गच्छ प्रधानशब्दः पुंलिङ्गोऽप्यस्ति ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—संपरिपूर्णकामस्तस्यापि रामदर्शने उत्कटेच्छत्वात् ॥ ३१ ॥

रा० टी०—स इति । भरतेनाज्ञापितः अत एव संपरिपूर्णकामः सूतपुत्रः सुमन्त्रः प्रकृतिप्रधानान् प्रजामुख्यान्बलस्य सैन्यस्य मुख्यानधीशांश्च शशास भरताज्ञापनं श्रावयामासेत्यर्थः॥३१॥

३२ ] ति० टी०—कुले कुले गृहे गृहे 'कुलं जनपदे गृहे' कुलप्रसूतानुत्तमान् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

रा० टी०—तत इति । ततः भरताज्ञापनश्रवणानन्तरं कुले कुले प्रतिगृहे विद्यमानाः राजन्यादयः उष्ट्रादीनयूयुजन् तत्र कुलप्रसूतानित्यस्य अत्युत्तमानित्यर्थः ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्व्यशीतितमः सर्गः ॥ ८२ ॥

गो० टी०—तत इति । वृषलाः शूद्राः कुले कुले गृहे गृहे 'कुलं जनपदे गृहे' इत्यमरः । अयूयुजन् सज्जानकुर्वन् कुलप्रसूतान् उत्तमानित्यर्थः ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्व्यशीतितमः सर्गः ॥ ८२ ॥

---

१ प्रतिगृह्य चेति गो. पाठः । २ गृहीत्वा प्रययाविति गो. पाठः । ३ समुत्थायेति गो. पाठः ।

# त्र्यशीतितमः सर्गः ।

प्रभाते पुरोहितशिल्पिसेनापौरादिपरिवृतो भरतः पुरान्निर्गत्योल्लङ्घ्य दूराध्वानं गुहाधिष्ठितशृङ्गिवेरपुरे गङ्गातीरमनुप्राप्य पितृक्रियार्थं परिजनविश्रान्तये च सेनां संनिवेश्योवास ।

ततः समुत्थितः कैल्यमास्थाय स्यन्दनोत्तमम् । प्रययौ भरतः शीघ्रं रामदर्शनकाम्यया ॥ १ ॥
अग्रतः प्रययुस्तस्य सर्वे मन्त्रिपुरोहिताः । अधिरुह्य हयैर्युक्तान्रथान्सूर्यरथोपमान् ॥ २ ॥
नवनागसहस्राणि कल्पितानि यथाविधि । अन्वयुर्भरतं यान्तमिक्ष्वाकुकुलनन्दनम् ॥ ३ ॥
षष्टी रथसहस्राणि धन्विनो विविधायुधाः । अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ॥ ४ ॥
शतं सहस्राण्यश्वानां समारूढानि राघवम् । अन्वयुर्भरतं यान्तं राजपुत्रं यशस्विनम् ॥ ५ ॥
कैकेयी च सुमित्रा च कौसल्या च यशस्विनी । रामानयनसंतुष्टा ययुर्यानेन भास्वता ॥ ६ ॥
प्रयाताश्चार्यसंघाता रामं द्रष्टुं सलक्ष्मणम् । तस्यैव च कथाश्चित्राः कुर्वाणा हृष्टमानसाः ॥ ७ ॥
मेघश्यामं महाबाहुं स्थिरसत्त्वं दृढव्रतम् । कदा द्रक्ष्यामहे रामं जगतः शोकनाशनम् ॥ ८ ॥
दृष्ट एव हि नः शोकमपनेष्यति राघवः । तमः सर्वस्य लोकस्य समुद्यन्निव भास्करः ॥ ९ ॥

---

१-२ ] ति० टी०—कल्यं प्रातःकाले ॥ १ ॥ २ ॥

रा० टी०—यात्रासामग्रीसंपत्त्यनन्तरकालिकवृत्तमाह—तत इति । कल्यं प्रातःकाले स्यन्दनोत्तममास्थाय भरतः प्रययौ ॥ १ ॥

रा० टी०—अग्रत इति । सर्वे मन्त्रिपुरोहिताः रथानधिरुह्य तस्य भरतस्य अग्रतः अग्रे प्रययुः ॥ २ ॥

गो० टी०—तत इति । काल्यम् अहर्मुखम् 'प्रत्यूषोऽहर्मुखं काल्यम्' इत्यमरः । प्राप्येति शेषः ॥ १ ॥ २ ॥

३-४ ] ति० टी०—यथाविधिकल्पितानि गजसंनहनोक्तविधिना कृतसंनाहानि ॥ ३ ॥ ४ ॥

रा० टी०—सैन्यसंख्यां बोधयन्नाह—नवेति । यथाविधि यथोचितं कल्पितानि क्रमेण संनिवेशितानि नागसहस्राणि नवनवसहस्रसंख्याकगजाः भरतमन्वयुः अनुजग्मुः ॥ ३ ॥

गो० टी०—नवनागसहस्राणीति । यथाविधि कल्पितानि भरतनियोगमनतिक्रम्य कल्पितानि नवनागसहस्राणीत्यनेन पुरस्थगजेषु नवनागसहस्रमात्रं प्रयाणे कल्पितमित्यवगम्यते ॥ ३ ॥

रा० टी०—षष्टिरिति । रथसहस्राणि षष्टिः षष्टिसहस्रसंख्याकरथाः विविधायुधाः अनेकविधायुधविशिष्टाः धन्विनश्च अन्वयुः ॥ ४ ॥

गो० टी०—षष्टिरिति । धन्विनो विविधायुधाश्चेत्यनेन योधा उक्ताः ॥ ४ ॥

५ ] ति० टी०—समारूढानि सादिभिरिति शेषः ॥ ५ ॥

रा० टी०—शतमिति । समारूढानि अश्ववारैर्विशिष्टानि अश्वानां शतं सहस्राणि शतसहस्रसंख्याकाश्वाः अन्वयुः ॥५॥

गो० टी०—शतमिति । समारूढानि सादिभिरिति शेषः ॥५॥

६ ] ति० टी०—कैकेयी च स्वकृतेः पुत्रं प्रत्याहिततया जातत्वान्मया किं कृतमिति खिन्ना पुनः प्रकृतिमापन्ना हर्षेण ययौ अत एव मध्यमत्वेऽप्यादौ तदुल्लेखः। यानेनेत्येकवचनं प्रत्येकापेक्षया सौहार्दादेकयानेनैव तिसृणां गमनं वा ॥ ६ ॥

रा० टी०—कैकेयीति । रामानयनसंतुष्टाः रामानयनहेतुकप्राप्तसंतोषाः केकय्यादयो ययुः । आदौ केकय्युपादानं तत्संतोषस्यातिशयद्योतनाय तेन तस्याः रामविषयकभीत्यतिशयः सूचितः ॥ ६ ॥

गो० टी०—कैकेयीति । अग्रतो गमनं पश्चात्तापातिशयात्, यानेनेत्येकवचनं प्रत्येकापेक्षया ॥ ६ ॥

७-९ ] ति० टी०—आर्यसंघातास्त्रैवर्णिकसमूहाः ॥७—९ ॥

रा० टी०—प्रयाता इति । तस्य रामस्य विचित्राः कथाः कुर्वाणाः आर्यसंघाताः आर्याणां वशिष्ठादीनां संघाताः समूहाः प्रयाताः अभवन्निति शेषः ॥ ७ ॥

गो० टी०—प्रयाता इति । आर्यसंघाताः त्रैवर्णिकसंघाः तस्यैव कथाः तत्संबन्धिवार्ताः ॥ ७ ॥

रा० टी०—कथाप्रकारं बोधयन्नाह—मेघेत्यादिद्वाभ्याम् । जगतः शोकनाशनं रामं कदा द्रक्ष्यामहे ॥ ८ ॥

गो० टी०—ता एवाह—मेघेत्यादिना । मेघश्यामं दूरस्थितत्वेऽपि त्वक्कुमशक्यं सौन्दर्यमुच्यते घर्माभितप्ताः पर्जन्यमितिवत् मेघश्यामं दर्शनमात्रेण सर्वसंतापहरं महाबाहुमायताश्च वृत्ताश्चेति सुकम् । महाबाहुं तादृशसौन्दर्यानुभवदानविषयौदार्ययुक्तं महाबाहुं तादृशसौन्दर्यभोगप्रदानसमर्थं रामामिन्दीवरश्यामं सर्वशत्रुनिबर्हणमितिवत् स्थिरसत्त्वं स्थिरव्यवसायं 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । 'स्थिरचित्तम्'

---

१ काल्यमिति गो. पाठः । २ काङ्क्ष्येति गो. पाठः । ३ पुरोधस इति गो. पाठः । ४ सत्यसंधजितेन्द्रियमिति गो.पाठः । ५ संहृष्ट इति गो. पाठः ।

इत्येवं कथयन्तस्ते संप्रहृष्टाः कथाः शुभाः । परिष्वजानाश्चान्योन्यं ययुर्नागरिकास्तदा ॥ १० ॥
ये च तत्रापरे सर्वे संमता ये च नैगमाः । रामं प्रतिययुर्हृष्टाः सर्वाः प्रकृतयः शुभाः ॥ ११ ॥
मणिकाराश्च ये केचित्कुम्भकाराश्च शोभनाः । सूत्रकर्मविशेषज्ञा ये च शस्त्रोपजीविनः ॥ १२ ॥
मायूरकाः क्राकचिका वेधका रोचकास्तथा । दन्तकाराः सुधाकारा ये च गन्धोपजीविनः ॥ १३ ॥

इति च पाठः आश्रितप्रातिकूल्येनाप्यविकृतमनस्कं दृढव्रतम् अन्तरङ्गैरप्यप्रकम्प्याश्रितरक्षणदीक्षं कदा द्रक्ष्यामहे रामं तन्मुखावलोकनमात्रं लभ्यते चेत् कैकेयीवचनजनिततापाः सर्वेऽपि निवर्तेरन् जगतः शोकनाशनं तस्मिन्सर्वलोकशोकनिवर्तके सति कथं वयं शोकाकुलाः स्याम तदीयसर्वलोकशोकनिवर्तकत्वस्य अस्मच्छोकस्य च कः सबन्धः मा शुच इत्युक्तवतोऽप्यस्यातिशय उक्तः ॥ ८ ॥

रा० टी०–दर्शने फलमाह–दृष्ट इति । नोऽस्माकं दृष्ट एव राघवः उद्यन् उदयं प्राप्नुवन् भास्करः सर्वलोकस्य तमोऽन्धकारमिव नः शोकमपनेष्यति । न इत्युभयान्वयि पूर्वत्र संबन्धसामान्यविवक्षया षष्ठी ॥ ९ ॥

गो० टी०–दृष्ट इति । दृष्ट एव रामः सन्निहितश्चेत्स मन्दस्मितो मां भूत् कटाक्षपूर्वकं किंचित् प्रियवचनं च मावोचत् अस्माभिश्च न यत्नः कार्यः किं तु दूरे दर्शनमात्रेणास्मच्छोकाः सर्वे नश्येयुः । तम इत्यादि । यथोद्यन् आदित्यो दूरस्थितोऽपि सकललोकान्धकारं निवर्तयति ॥ ९ ॥

१० ] ति० टी०–परिष्वजाना परिष्वजमानाः नगरे चरन्तीति नागरिकाः " चरति " इति ठक् ॥ १० ॥

रा० टी०–इतीति । इति एवंप्रकारेण शुभाः कथाः कथयन्तः अत एवान्योन्यं परिष्वजानाः नागरिकाः अयोध्यावासिनो जनाः ययुः ॥ १० ॥

गो० टी०–इतीति । परिष्वजानाः परिष्वजमानाः नगरे चरन्तीति नागरिकाः "चरति" इति ठक् ॥ १० ॥

११ ] ति० टी०–तत्र नगरे संमताः प्रसिद्धाः, नैगमा वणिजः, प्रकृतयः श्रेणयः ॥ ११ ॥

रा० टी०–य इति । तत्रायोध्यायां ये नैगमाः वणिजः संमताः भरतेनाज्ञप्ता इत्यर्थः, ते अपरे अनाज्ञप्ताश्च प्रकृतयः प्रजाश्च रामं प्रति ययुः ॥ ११ ॥

गो० टी०–य इति । तत्र नगरे ये रामस्य संमताः ये च नैगमाः वणिजः ते सर्वे सर्वाः प्रकृतयः पौरश्रेणयश्च रामं प्रति ययुः ॥ ११ ॥

१२ ] ति० टी०–श्रेणीर्विविच्याह–मणिकारा इति । शाणादौ मणिशोधकाः, सूत्रकर्मविशेषज्ञास्तन्तुवायाः, शस्त्रोपजीविनः शस्त्रनिर्माणोपजीविनः ॥ १२ ॥

रा० टी०–मणिकारा इति । ये मणिकाराः शाणादिना मणीनां शोधकाः ते च कुम्भकाराश्च सूत्रकर्मविशेषज्ञाः सूत्रकर्मविषयकविशेषज्ञानवन्तस्तन्तुवायादयः ये शस्त्रोपजीविनः शस्त्रनिर्माणादिना प्राप्तजीविकावन्तस्ते च ॥ १२ ॥

गो० टी०–ताः प्रपञ्चयति–मणीत्यादिना । अत्र यच्छन्दरहितस्थले सोऽनुषञ्जनीयः । मणिकाराः पद्मरागादिमणिसंस्कारकाः, कुम्भकाराः कुलालाः शोभनाः स्वकार्यदक्षा इति यावत् । सूत्रकर्मकृतः तन्तुवायादयः, शस्त्रोपजीविनः शस्त्रकारकाः, मायूरकाः मयूरपिच्छैश्छत्रव्यजनादिकारिणः, क्राकचिकाः क्रकचैः करपत्रैश्चन्दनादिदारुदलनकारिणः 'क्रकचोऽस्त्री करपत्रम्' इत्यमरः । रोचकाः दन्तकुड्यवेदिकादिषु कान्त्युत्पादकाः, वेधकाः दारुरत्नादिरन्ध्रकारिणः, दन्तकाराः दन्तैः पुत्रिकापीठशिबिकादिकारकाः, सुधाकाराः प्रासादतलकुड्यादिषु सुधालेपनकर्मकराः, गन्धोपजीविनः चन्दनकस्तूरीकर्पूरकुङ्कुमादिगन्धद्रव्यविक्रयजीविनः, सुवर्णकाराः प्रसिद्धाः, कम्बलधावकाः कम्बलशोधकाः, स्नापकोच्छादकाः स्नापकास्तैलाभ्यङ्गादिस्नानकारिणः उच्छादकाः अङ्गमर्दकाः 'उच्छादनं समुद्धेखोद्वाहनोद्वर्तनेषु च' इति विश्वः । धूपकाः, गृहादिषु धूपवासकाः शौण्डिकाः मद्यकराः 'शुण्डा करिकरे मद्ये' इति वैजयन्ती । रजकाः निर्णेजकाः 'निर्णेजकः स्याद्रजकः' इत्यमरः । तुन्नवायाः सौचिकाः 'तुन्नवायस्तु सौचिकः' इत्यमरः । ग्रामघोषमहत्तराः ग्राममहत्तराः घोषमहत्तराश्च महत्तराः प्रधानभूताः 'घोष आभीरपल्ली स्यात्' इत्यमरः । शैलूषाः भूमिकाधारिणः स्त्रीजीविनो वा अत एव सहस्त्रीभिरित्युक्तम् 'शैलालिनस्तु शैलूषा जायाजीवाः' इत्यमरः । कैवर्ताः धीवराः 'कैवर्ते दाशधीवरौ' इत्यमरः । ते सर्वे ययुरित्यन्वयः ॥ १२–१६ ॥

१३ ] ति० टी०–मायूरका लीलामयूरग्राहिणः इदमुपलक्षणं शुकादिकग्राहिणाम्, यद्वा मयूरपिच्छैश्छत्रादिव्यञ्जनकारिणः, क्रकचः करपत्रं तेन जीवन्ति ते क्राकचिकाः, वेधका मणिमुक्तादिवेधकर्तारः, रोचकाः काचकुप्यादिकर्तार इति कतकः । दन्तकारा गजदन्तादिभिः समुद्गकादिकर्तारो दन्तलेखकाश्च, सुधाकाराः सुधालेपकाराः, गन्धोपजीविनो गन्धद्रव्यविक्रयिकाः ॥ १३ ॥

रा० टी०–मायूरकाः मयूरपिच्छरचितव्यजनादिना प्राप्तजीविकावन्तः, क्राकचिकाः क्रकचाः करपत्राणि चन्दनादिचूर्णकारणीभूततक्षशस्त्रविशेषास्तैर्जीवन्ति ये ते 'क्रकचोऽस्त्रीकरपत्रं स्यात्' इत्यमरः । वेधकाः मणिमुक्तादिच्छिद्रकारकाः, रोचकाः स्वक्रियाकौशलेन गृहादिषु कान्त्युत्पादकाः, दन्तकाराः गजदन्तोपादानककार्यनिष्पादकाः, सुधाकाराः प्रासादादिलेपनकारणीभूतपाषाणादिभस्मकारकाः, गन्धोपजीविनः सुगन्धद्रव्यक्रयविक्रयकर्तारः ॥ १३ ॥

१ जना इति गो. पाठः । २ तथेति गो. पाठः । ३ कृतश्चेवेति गो. पाठः । ४ तथेति गो. पाठः ।

सुवर्णकाराः प्रख्यातास्तथा कम्बलकारकाः । स्नापकोष्णोदका वैद्या धूपकाः शौण्डिकास्तथा ॥ १४ ॥
रजकास्तुन्नवायाश्च ग्रामघोषमहत्तराः । शैलूषाश्च सह स्त्रीभिर्यान्ति कैवर्तकास्तथा ॥ १५ ॥
समाहिता वेदविदो ब्राह्मणा वृत्तसंमताः । गोरथैर्भरतं यान्तमनुजग्मुः सहस्रशः ॥ १६ ॥
सुवेषाः शुद्धवसनास्ताम्रमृष्टानुलेपिनः । सर्वे ते [6]विमलैर्यानैः शनैर्भरतमन्वयुः ॥ १७ ॥
प्रहृष्टमुदिता सेना सान्वयात्कैकयीसुतम् । भ्रातुरानयने यान्तं भरतं भ्रातृवत्सलम् ॥ १८ ॥
ते गत्वा दूरमध्वानं रथयानाश्वकुञ्जरैः । समासेदुस्ततो गङ्गां शृङ्गवेरपुरं प्रति ॥ १९ ॥
यत्र रामसखा वीरो गुहो ज्ञातिगणैर्वृतः । निवसत्यप्रमादेन देशं तं परिपालयन् ॥ २० ॥
उपेत्य तीरं गङ्गायाश्चक्रवाकैरलंकृतम् । व्यवतिष्ठत सा सेना भरतस्यानुयायिनी ॥ २१ ॥
निरीक्ष्यानुत्थितां सेनां तां च गङ्गां शिवोदकाम् । भरतः सचिवान्सर्वानब्रवीद्वाक्यकोविदः ॥ २२ ॥

१४ ] ति० टी०—स्नापका उष्णोदकस्नापकाः, उष्णोदका अङ्गमर्दकाः । 'उष्णोदकं समुल्लेखोद्वाहनोद्वर्तनेषु च' । धूपका धूपक्रियया जीविनः, शौण्डिका मद्यकृतः, 'शुण्डा करिकरे मद्ये' ॥ १४ ॥

रा० टी०—प्रख्याताः प्रसिद्धाः सुवर्णकाराः, कम्बलकारकाश्च स्नापकाः उष्णोदकादिना स्नाननिर्वाहकाः, उष्णोदकाः अङ्गनिपीडकाः ते च ते चेति द्वन्द्वः । 'उष्णोदकं समुल्लेखोद्वाहनोद्वर्तनेषु च' इति कोशः । किंच स्नापकाः स्नानसाधकाः, उष्णोदकाः उदकोष्णकर्तारः 'स्नापकोच्छादकाः' इति भूषणपाठः । उच्छादकाः अङ्गमर्दका इति तद्व्याख्या वैद्याश्च धूपिकाः धूपक्रियाजनितजीविकावन्तः, शौण्डिकाः मद्यनिर्माणकर्तारः 'शुण्डा करिकरे मद्ये' इति वैजयन्ती ॥ १४ ॥

१५ ] ति० टी०—तुन्नवायाः सूच्या सीवनकर्तारः, ग्रामे घोषे च वर्तमाना महत्तराः शैलूषा नटाः, कैवर्तकाः 'कैवर्तकारवाः' इति पाठे कारवाः कर्माराः ॥ १५ ॥

रा० टी०—रजकाः वस्त्रप्रक्षालनजीविकावन्तः, तुन्नवायाः सूच्या सीवनजीविकावन्तः 'तुन्नवायस्तु सौचिकः' इत्यमरः । ग्रामघोषमहत्तराः ग्रामघोषयोर्महत्तराः तत्तदधीशा इत्यर्थः । तत्र घोष आभीरपल्ली, स्त्रीभिः सह सहिताः शैलूषा नटाः कैवर्तकाः धीवराश्च यान्ति ययुः । श्लोकचतुष्टयमेकान्वयि 'शैलूषो नटबिल्वयोः' इति मेदिनी 'कैवर्ते दाशधीवरौ' इत्यमरः ॥ १५ ॥

१६ ] ति० टी०—गोरथैः शकटैः ॥ १६ ॥

रा० टी०—समाहिता इति । समाहिताः रामावेशितचित्ताः वृत्तसंमताः वृत्तं वर्तनं संमतं सच्छास्त्रानुकूलं येषां ते सहस्रशो ब्राह्मणाः गोरथैर्भरतमनुजग्मुः ॥ १६ ॥

गो० टी०—समाहिता इति । समाहिताः योगिनः गोरथैर्वृषभयुक्तरथैः शकटैरिति यावत् ॥ १६ ॥

१७ ] ति० टी०—गोरोचनकुङ्कुमादिसंबन्धात्ताम्रवर्णं मृष्टं संपूर्णमनुलेपोऽनुलेपनं येषां ते ॥ १७ ॥

रा० टी०—सुवेषा इति । ताम्रमृष्टानुलेपिनः ताम्रेण रक्तवर्णेन मृष्टं संयुक्तं यदनुलेपनं तद्वन्तः सर्वे ते अयोध्यावासिनः भरतमन्वयुः ॥ १७ ॥

गो० टी०—सुवेषा इति । ताम्रमृष्टानुलेपनाः रक्तवर्णसंपूर्णाङ्गरागाः ॥ १७ ॥

१८ ] ति० टी०—प्रहर्षः कायिकरोमाञ्चादिरूपः मोदो मानसः ॥ १८ ॥

रा० टी०—प्रहृष्टेति । प्रहृष्टेन भरतहर्षेण मुदिता प्रहृष्टा सा सेना भरतमन्वयात् ॥ १८ ॥

गो० टी०—प्रहृष्टमुदितेति । प्रहर्षः कायिको रोमाञ्चादिः प्रमोदो मानसो हर्षः आनयने आनयननिमित्तम् ॥ १८ ॥

१९ ] ति० टी०—शृङ्गवेरपुरं प्रति शृङ्गवेरपुर इत्यर्थः ॥ १९ ॥

रा० टी०—ते इति । ते भरतादयः रथादिभिः दूरमध्वानं गत्वा शृङ्गवेपुरं प्रति तत्समीपे गङ्गां समासेदुः ॥ १९ ॥

गो० टी०—त इति । शृङ्गिवेरपुरं प्रति दूरमध्वानं गत्वा गङ्गां समासेदुरिति संबन्धः, यद्वा शृङ्गिवेरपुरं प्रतीति लक्षणे कर्मप्रवचनीयः शृङ्गिवेरपुर इत्यर्थः ॥ १९ ॥

२०–२१ ] ति० टी०—अप्रमादेन सावधानतया ॥ २० ॥ २१ ॥

रा० टी०—तत्प्रकारमाह—यत्रेति । ज्ञातिगणैः ज्ञातिसमूहैः वृतः गुहः अप्रमादेन प्रमादरहितत्वेन परिपालयन् रक्षन्सन् यत्र देशे निवसति तं देशमुपेत्य प्राप्य चक्रवाकैरलंकृतं गङ्गायास्तीरं भरतस्यानुयायिनी सा सेना व्यवातिष्ठत । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०—यत्रेति । अप्रमादेन सावधानतया रामविरोध्यागमनवारणपर इत्यर्थः । तत्र देशे विद्यमानं शृङ्गिवेरपुरं प्रतीति पूर्वेणान्वयः ॥ २० ॥

गो० टी०—उपेत्येति । व्यवातिष्ठत व्यवस्थिताभूत् ॥ २१ ॥ २२

२२ ] ति० टी०—अनुत्थितां गमनेऽनुद्योगाम् ॥ २२ ॥

रा० टी०—निरीक्ष्येति । अनुत्थितां गङ्गातीरे संस्थिता-

१ धावका इति गो. पाठः । २ स्नापकोच्छादका इति गो. पाठः । ३ धूपिका इति रा. पाठः । ४ ययुरिति गो. पाठः । ५ लेपना इति गो. पाठः । ६ विविधैरिति गो. पाठः । ७ यान्तमिति गो. रा. पाठः । ८ शृङ्गिवेरेति गो. पाठः । ९ रामसख इति गो. पाठः । १० व्यवातिष्ठतेति गो. रा. पाठः । ११ ऽनुत्थितामिति गो. पाठः ।

निवेशयत मे सैन्यमभिप्रायेण सर्वतः । विश्रान्ताः प्रतरिष्यामः श्व इमां सागरंगमाम् ॥ २३ ॥
दातुं च तावदिच्छामि स्वर्गतस्य महीपतेः । और्ध्वदेहनिमित्तार्थमवतीर्योदकं नदीम् ॥ २४ ॥
तस्यैवं ब्रुवतोऽमात्यास्तथेत्युक्त्वा समाहिताः । न्यवेशयंस्तांश्छन्देन स्वेन स्वेन पृथक्पृथक् ॥ २५ ॥
निवेश्य गङ्गामनु तां महानदीं चमूं विधानैः परिबर्हशोभिनीम् ।
उवास रामस्य तदा महात्मनो विचिन्तमानो भरतो निवर्तनम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः ।

सेनानुगत्वाद्भरते रामहिंसाविषयकं दोषमाशङ्क्य गुहस्तत्तरणप्रतिरोधमीहमानो दाशान्नौरक्षणे विनियोज्य स्वयं भरतभावजिज्ञासुस्तत्समीपं ययौ । स्वोपाहृतफलमूलादिभि कृतातिथ्यं विश्रान्तं गतश्रममेनं पुरतः प्रयान्तमनुमेने ।

ततो निविष्टां ध्वजिनीं गङ्गामन्वाश्रितां नदीम् । निषादराजो दृष्ट्वैव ज्ञातीन्सं परितोऽब्रवीत् ॥ १ ॥

---

मित्यर्थः, तां सेनां शिवोदकां मङ्गलप्रदोदकविशिष्टां गङ्गां निरीक्ष्य भरतः सचिवानब्रवीत् ॥ २२ ॥

२३ ] ति० टी०–अथ विश्रान्ताः श्वः प्रतरिष्यामः, इत्यभिप्रायेणेति मदभिप्रायज्ञापनेन निवेशयतेत्यर्थः ॥ २३ ॥

रा० टी०–वचनाकारमाह–निवेशयतेति । अभिप्रायेण तत्तदिच्छया सर्वतः चतुर्दिक्षु मे सैन्यं निवेशयत । तत्प्रयोजनमाह–इदानीं विश्रान्ताः गतश्रमाः वयं श्वः प्रातः इमां प्रसिद्धां नदीं गङ्गां प्रतरिष्यामः प्रतरिताः स्म ॥ २३ ॥

गो० टी०–निवेशयतेति । अभिप्रायेण तत्तदिच्छया इदानीं विश्रान्ताः श्वो नदीं प्रतरिष्याम इति संबन्धः ॥ २३ ॥

२४ ] ति० टी०–और्ध्वदेहनिमित्तार्थम् एतच्छरीरपातोत्तरकालिकदेहभवसुखप्रयोजनायेत्यर्थः । यद्वा एतद्देहपातादूर्ध्वं जातदेहो निमित्तं यस्य परलोकस्य स ऊर्ध्वदेहनिमित्तः परलोकः स्वार्थिकोऽण् तदर्थमित्यर्थः । मध्ये मिलितनयन्तरे एवमनुक्त्या गङ्गायास्तर्पणेन पितृस्वर्गप्रापकत्वं सूचितम् ॥ २४ ॥

रा० टी०–तत्र स्थितौ प्रयोजनान्तरमाह–दातुमिति । नदीं गङ्गामवतीर्य स्वः सर्वपरं लोकं साकेतं गतस्य प्राप्तस्य महीपतेः पितुः और्ध्वदेहनिमित्तार्थमौर्ध्वदेहानामूर्ध्वगतशरीराणां निमित्तमर्थः प्रार्थना यस्य तदुदकं दातुमिच्छामि ॥ २४ ॥

गो० टी०–दातुमिति । और्ध्वदेहनिमितार्थम् ऊर्ध्वदेहभवसुखप्रयोजनायेत्यर्थः, नदीमवतीर्य पितुरौर्ध्वदेहनिमित्तार्थमुदकं दातुमिच्छामीत्यन्वयः ॥ २४ ॥

२५ ] ति० टी०–स्वेन स्वेन छन्देन स्वस्वेच्छया ॥ २५ ॥

रा० टी०–तस्येति । ब्रुवतस्तस्य भरतस्य एवं वचनं तथेत्युक्त्वा समाहिताः सचिवास्तां सेनां स्वेन स्वेन छन्देन स्वस्वेच्छया पृथक् पृथक् न्यवेशयन् ॥ २५ ॥

गो० टी०–तस्येति । छन्देन इच्छया 'छन्दः श्रुतीच्छापद्येषु' इति वैजयन्ती ॥ २५ ॥

२६ ] ति० टी०–गङ्गामनु गङ्गां लक्षीकृत्येत्यर्थः । परिबर्हो यात्रोपयुक्तपटवेश्माद्युपकरणजातम् । विधानैर्वासव्यवस्थाकल्पनैः रामस्य निवर्तनं विचिन्तमानः चिन्तयमान इत्यर्थः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

रा० टी०–निवेश्येति । परिबर्हशोभिनीं परिबर्हः यात्रोपयोगिपटवेश्माद्युपकरणजातैः शोभते तच्छीलिनीं चमूं सेनां विधानैः यथोचितस्थापनादिविधिभिः महानदीं गङ्गामनु निवेश्य महात्मनो रामस्य निवर्तनमयोध्यागमनं विचिन्तमानः चिन्तयमानो भरतः उवास 'तथोपकरणं प्रोक्तं परिबर्हः परिच्छदः' इति हलायुधः ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

गो० टी०–निवेश्येति । गङ्गामनु निवेश्य गङ्गामनुसृत्य निवेश्य गङ्गाकूलानुसारेण निवेश्येति यावत् विधानैस्तत्तज्जातिव्यवस्थाकल्पनादिभिः परिबर्हशोभिनीं परिबर्हो यात्रोपयुक्तपटवेश्माद्युपकरणम् 'तथोपकरणं प्रोक्तं परिबर्हः परिच्छदे' इति हलायुधः ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

---

१ ] ति० टी०–गङ्गामनु आश्रिताम् , निविष्टां क्वचित्कार्येऽभिनिवेशवतीम् ॥ १ ॥

रा० टी०–ससैन्यभरतस्थित्यानन्तरकालिकं वृत्तमाह–तत इत्यादिभिः । निविष्टां गङ्गातीरे संस्थितामत एव गङ्गामन्वाश्रितां सेवमानां ध्वजिनीं भरतसेनां दृष्ट्वैव परितो विद्यमानान् ज्ञातीन् निषादराजोऽब्रवीत् ॥ १ ॥

गो० टी०–तत इत्यादि । गङ्गामन्वाश्रितां प्राप्तामत एव निविष्टां कृतनिवेशां ध्वजिनीं सेनां दृष्ट्वा संत्वरितः ससंभ्रमः॥१॥

---

१ इदानीमिमां नदीमिति गो. पाठः । २ संत्वरित इति गो. पाठः ।

महतीयमितः सेना सागराभा प्रदृश्यते । नास्यान्तमवगच्छामि मनसापि विचिन्तयन् ॥ २ ॥
यदा तु खलु दुर्बुद्धिर्भरतः स्वयमागतः । स एष हि महाकायः कोविदारध्वजो रथे ॥ ३ ॥
बन्धयिष्यति वा पाशैरथ वास्मान्वधिष्यति । अनु दाशरथिं रामं पित्रा राज्याद्विवासितम् ॥ ४ ॥
संपन्नां श्रियमन्विच्छंस्तस्य राज्ञः सुदुर्लभाम् । भरतः कैकयीपुत्रो हन्तुं समधिगच्छति ॥ ५ ॥
भर्ता चैव सखा चैव रामो दाशरथिर्मम । तस्यार्थकामाः संनद्धा गङ्गानूपेऽत्र तिष्ठत ॥ ६ ॥
तिष्ठन्तु सर्वदाशाश्च गङ्गामन्वाश्रिता नदीम् । बलयुक्ता नदीरक्षा मांसमूलफलाशनाः ॥ ७ ॥
नावां शतानां पञ्चानां कैवर्तानां शतं शतम् । संनद्धानां तथा यूनां तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८ ॥

---

२ ] ति० टी०—इत इह गङ्गातीरे । नास्या अन्तमित्यर्थे संधिरार्षः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—महतीति । सागराभा समुद्रसदृशी महती इयं सेना इतः अस्मादेव स्थानात्प्रदृश्यते अत एव अस्य सैन्यस्य मनसापि अन्तं निवर्तकं चिन्तयन्सन्न अवगच्छामि निश्चिनोमि ॥ २ ॥

गो० टी०—महतीति । इतः इह श्रृङ्गिवेरपुरे अस्य सेनारूपवस्तुनः चिन्तयन्नहं मनसापि नास्यान्तमधिगच्छामीति संबन्धः ॥ २ ॥

३ ] ति० टी०—यदा तु खलु यस्माद्धेतोर्दुर्बुद्धिर्भरतः स्वयमागतस्ततो महती सेना प्रदृश्यत इत्यन्वयः, रामपीडार्थं प्रवृत्त इत्याशयेन दुर्बुद्धितावादः । भरतागमनचिह्नमाह—स इति । महाकायो महाप्रमाण इक्ष्वाकुकुलचिह्नभूतः कोविदारध्वजो रथे दृश्यते, अतो भरत एवायमिति भावः ॥ ३ ॥

रा० टी०—ननु किं निश्चयाभावेनेत्यत आह—यदेति । महाकायः उन्नतशरीरः रथे कोविदारध्वजः कोविदारसदृशः ध्वजो यस्य स स्वयमागतः एष भरतः यदा खलु दुर्बुद्धिः रामसंप्रदानकद्रोहवानित्यर्थः, तदा पित्रा विवासितं राममनु विद्यमानानस्मान्वधिष्यति पाशैर्बन्धयिष्यति वा । श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०—यथेति । सः इक्ष्वाकुकुलक्रमागतः कोविदारध्वजः रथे दृश्यते हि यस्मात् अतो भरतः स्वयमागतः यथा तु खलु ध्रुवमित्यर्थः, कोविदारध्वजः दुर्बुद्धिरित्यनेन भरतो रामद्रोहाकाङ्क्षया आगच्छतीति शङ्कितवानिति गम्यते ॥ ३ ॥

४ ] ति० टी०—नन्वायातु भरतः, किमस्माकमत आह—बन्धयिष्यतीति । स्वामात्यैरिति शेषः, वधिष्यतीति वा । अनु ततः पश्चाद्रामं वधिष्यति इति मन्ये इति शेषः ॥ ४ ॥

गो० टी०—तदेव स्थापयिष्यति—बन्धयिष्यतीत्यादिना । दाशानस्मान् बन्धयिष्यति अथवा वधिष्यति हनिष्यति हनो लृटि वधादेश आर्षः । अथ अथवा दाशरथिं ज्ञातिभूतमिति भावः विवासितं दुर्बलमित्यर्थः, संपन्नाम् अप्रच्युतां रामगमने हि श्रीः प्रच्युता स्यात् कैकेयीपुत्र इति दुष्प्रकृतित्वे हेतुः तस्य राज्ञः राजत्वार्हस्य रामस्य सुदुर्लभाम् ॥ ४ ॥ ५ ॥

५] ति० टी०—ननु रामवधेऽस्य किं फलमत आह—संपन्नामिति । संपूर्णामित्यर्थः सार्वकालिकीमिति यावत्, तस्य राज्ञो रामस्य सुदुर्लभां तस्मिञ्जीवति दुष्प्रापाम् अतो रामं हन्तुं समधिगच्छति बुद्धिं प्राप्नोति ॥ ५ ॥

रा० टी०—द्रोहे स्वोहितहेतुं वदन्नाह—संपन्नामिति । संपन्नां श्रियमन्विच्छन् भरतः हन्तुं समुपगच्छति राममित्रवर्गानिति शेषः ॥ ५ ॥

६] ति० टी०—नन्वेवमपि तव का भीतिरत आह—भर्तेत्यादि । एवं च तत्पक्षत्वादस्माकं भीतिरिति भावः । अस्माभिश्च सखित्वादेव रामेष्टं कर्तव्यम्, अतो नास्माभिरेते गङ्गा तारयितव्याः, अतो यूयं तस्य रामस्यार्थकामाः प्रयोजनेच्छवः संनद्धा अत्र गङ्गानूपे मत्संनिधौ तिष्ठत ॥ ६ ॥

रा० टी०—ननु ततः किमित्यत आह—भर्तेति । मम भर्त्रादिः राम एव एतेन वयमपि तद्द्वेष्या इति सूचितम् । रामानुयायित्वादस्माभिरपि तदुपकृतिः कर्तव्येति बोधयन्नाह—तस्य रामस्य अर्थकामाः प्रयोजनसिद्धिविषयकेच्छावन्तः अत एव सन्नद्धाः धृतकवचाः यूयं गङ्गानूपे गङ्गातीरे तिष्ठत ॥ ६ ॥

गो० टी०—किमतोऽभवत् इत्यत्राह—भर्तेति । अर्थकामा अर्थेच्छवः यूयमिति शेषः, अनूपे तीरे ॥ ६ ॥

७ ] ति० टी०—सर्वे मामका दाशास्तु गङ्गां नदीमेवान्वाश्रिताः, नदीरक्षा नदीतरणमार्गविघ्नवन्तो मांसमूलफलाशना एतद्भीत्या तीरे आगन्तुमशक्यतया नावारोपितमांसाद्यशना बलवन्तः सन्तस्तिष्ठन्तु ॥ ७ ॥

रा० टी०—स्थितिप्रयोजनं वदन्नाह—तिष्ठन्त्विति । बलयुक्ताः सेनासहिताः नदीरक्षाः सेनातरणवारणादिना नदीरक्षणकर्तारः अत एव गङ्गामन्वाश्रिताः सर्वे दाशाः धीवराः भवन्तः तिष्ठन्तु ॥ ७ ॥

गो० टी०—तिष्ठन्त्विति । सर्वे दाशाश्च गङ्गामन्वाश्रिताः सन्तः बलयुक्ताः सेनायुक्ताः नदीरक्षाः नदीतरणमार्गं रक्षन्तः मांसमूलफलाशनाः नावारोपितमांसाद्यशनाः तिष्ठन्तु ॥ ७ ॥

८ ] ति० टी०—बलवत्तामेवाह—नावामिति । पञ्चशतसंख्याकनावां प्रत्येकं संनद्धानां युद्धसंनाहवतां यूनां युद्धार्हाणां कैवर्तानां शतं शतमारुह्य तिष्ठन्त्वित्यभ्यचोदयत् ॥ ८ ॥

---

१ अधिगच्छामीति गो. पाठः । २ यथा त्विति गो. पाठः । ३ दाशानथेति गो. पाठः । ४ अथेति गो. पाठः । ५ समुपगच्छतीति रा. पाठः । ६ सर्वे इति गो. पाठः ।

[1]यदि तुष्टस्तु भरतो रामस्येह भविष्यति । इयं स्वस्तिमती [2]सेना गङ्गामद्य तरिष्यति ॥ ९ ॥
इत्युक्त्वोपायनं गृह्य मत्स्यमांसमधूनि च । अभिचक्राम भरतं निषादाधिपतिर्गुहः ॥ १० ॥
तमायान्तं तु संप्रेक्ष्य सूतपुत्रः प्रतापवान् । भरतायाचचक्षेऽथ [3]समयज्ञो [4]विनीतवत् ॥ ११ ॥
एष ज्ञातिसहस्रेण स्थपतिः परिवारितः । कुशलो दण्डकारण्ये वृद्धो भ्रातुश्च ते सखा ॥ १२ ॥
तस्मात्पश्यतु काकुत्स्थ त्वां निषादाधिपो गुहः । असंशयं विजानीते यत्र तौ रामलक्ष्मणौ ॥ १३ ॥
एतत्तु वचनं श्रुत्वा सुमन्त्राद्भरतः शुभम् । उवाच वचनं शीघ्रं गुहः पश्यतु मामिति ॥ १४ ॥
[5]लब्ध्वानुज्ञां संप्रहृष्टो ज्ञातिभिः परिवारितः । आगम्य भरतं प्रह्वो गुहो वचनमब्रवीत् ॥ १५ ॥
निष्कुटश्चैव देशोऽयं वञ्चिताश्चापि ते वयम् । [6]निवेदयाम ते सर्वं स्वके [7]दाशगृहे वस ॥ १६ ॥

---

रा० टी०—तरणत्ारणप्रकारमाह—नावामिति । पञ्चानां शतानां पञ्चशतसंख्याकानां नावामुपरि संनद्धानां यूनां कैवर्तानां शतं शतं तिष्ठतु गङ्गादक्षिणकूले इति शेषः, इति अभ्यचोदयत् गुह इति शेषः । एतेन नौकालाभाभावेन तरणप्रतिबन्धोऽर्थतः सेत्स्यतीति सूचितम् ॥ ८ ॥

गो० टी०—नावामित्यादि । पञ्चानां शतानां नावामेकैकस्या नावः कैवर्तानां शतं शतं तिष्ठन्तु शतं शतं कैवर्ताः तिष्ठन्त्वित्यर्थः ॥ ८ ॥

९ ] ति० टी०—एवं स्थितैरपि युद्धे त्वरा न कार्येत्याह—यदीति । यदि रामविषये तुष्टस्तदेयं सेना स्वस्तिमती तरिष्यति अन्यथा नौकासु स्थित्वा एतान्निहन्म इति भावः । 'यदादुष्टः' इति पाठेऽदुष्ट इति च्छेदः ॥ ९ ॥

रा० टी०—ननु नावोऽपि दूरदेशं नेतव्या इत्यत आह—यदीति । इह अस्मिन्समये भरतः यदि रामस्य तुष्टस्तोषको भविष्यति तदा स्वस्तिमती इयं तदीया सेना अद्यैव तरिष्यति तेन नावो दूरं प्रनेतव्या इति व्यञ्जितम् ॥ ९ ॥

गो० टी०—यदेति । रामस्य तुष्टः रामविषयतुष्टः 'यदादुष्टः' इति पाठे अदुष्ट इति पदच्छेदः स्वस्तिमतीति अन्यथा हन्तव्येति भावः ॥ ९ ॥

१०–११ ] ति० टी०—अभिचक्राम दर्शनार्थम् ॥ १० ॥ ११ ॥

रा० टी०—इतीति । इत्युक्त्वा मत्स्यादीनि गृहीत्वा भरतमभिचक्राम जगाम तत्र मत्स्यः दैन्यनिवर्तकवायुमान् औषधिविशेषः । तथाहि मदो दैन्यस्य सो नाशः तद्वान् अः वायुर्यस्य सः 'अः कृष्णः शंकरो ब्रह्मा शक्रः सोमोऽनिलोऽनलः' इति मात्रिका । मांसं राजभोग्यवस्तुविशेषः अस्य तत्त्वमग्रपदमेव वक्ष्यते मधु पुष्परसः ॥ १० ॥

रा० टी०—तमिति । समयज्ञो विनीतवान् सूतपुत्रः सुमन्त्रः भरताय आचचक्षे कथयामास ॥ ११ ॥

गो० टी०—इतीति । उपायनं कौशेयादि, मांसं मृगाणाम् ॥ १० ॥ ११ ॥

१२ ] ति० टी०—स्थपतिः प्रभुः । दण्डकारण्ये कुशलो निग्रहानुग्रहसमर्थश्चारैस्तत्रत्यवृत्तान्तज्ञः ॥ १२ ॥

१३–१५ ] ति० टी०—अपि चानेन प्रयोजनमस्तीत्याह—असंशयमिति ॥ १३–१५ ॥

रा० टी०—तत्प्रकारमाह—एष इति । ज्ञातिसहस्रेण परिवारितः युक्तः स्थपतिः अधीशः दण्डकारण्ये कुशलः तद्विषयकविशेषज्ञानवान् एषः गुहः ते भ्रातुः रामस्य सखा तस्माद्धेतोर्गुहः त्वां पश्यतु प्रतीहारैर्निवारितो न स्यादित्यर्थः । यत्र तौ रामलक्ष्मणौ तं देशमसंशयं यथा स्यात्तथा विजानीते । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

रा० टी०—एतदिति । भरतः एतत् शुभं वचनं श्रुत्वा गुहः मां शीघ्रं पश्यतु कश्चिन्न निवारयत्वित्यर्थः, इति वचनमुवाच ॥ १४ ॥

गो० टी०—एष इति । स्थपतिः प्रभुः दण्डकारण्ये कुशलः तत्र संचरणसमर्थ इत्यर्थः । विजानीते तं देशमित्यर्थः ॥ १२–१४ ॥

रा० टी०—लब्ध्वेति । अनुज्ञामाज्ञां लब्ध्वा संप्रहृष्टो गुहः प्रह्वः कृतशिरोनतिः सन्नागम्य वचनमब्रवीत् ॥ १५ ॥

गो० टी०—लब्ध्वेति । प्रह्वः कृतप्रणामः ॥ १५ ॥

१६ ] ति० टी०—अयं देशो निष्कुटो गृहारामकल्पः । वयं वञ्चिताः प्रस्थानसमयेऽप्रेषितनियोगदेशत्वात् । इयमुपचारोक्तिः सर्वं राज्यं ते निवेदयाम, वयं त्वदीयाः, अतः स्वीयदाशगृहे वस ॥ १६ ॥

रा० टी०—वचनाकारमाह—निष्कुट इति । निष्कुटः गृहारामतुल्यः भवद्भोगयोग्य इत्यर्थः, अयं देशोऽस्तीति शेषः । ते त्वत्सेवका वयं तु वञ्चिताः स्वानवधानतया प्रलम्भिताः । एतेन प्रत्युद्गमनकरणाभावप्रयुक्तः पश्चात्तापस्तस्य सूचितः । सेवकोचितमाह—सर्वं वृत्तजातं ते निवेदयाम अतः स्वके स्वकीये दाशगृहे अस्मदधिष्ठितभवने वस ॥ १६ ॥

गो० टी०—निष्कुट इति । अयं देशः मदधिष्ठितवनप्रदेशः ते निष्कुटः गृहारामभूतः 'गृहारामस्तु निष्कुटः' इत्यमरः । त्वद्भोगयोग्य इति यावत् । वयं च वञ्चिताः अत्र गमनानिवेदनेन

---

१ यदेति गो. पाठः । २ सेयामिति गो. पाठः । ३ विनयज्ञ इति गो. पाठः । ४ विनीतवानिति रा. पाठः । ५ लब्ध्वाभ्यनुज्ञां संहृष्ट इति गो. पाठः । ६ निवेदयामस्ते सर्वं इति गो. पाठः । ७ दासकुले इति गो. पाठः ।

अस्ति मूलफलं चैतन्निषादैः स्वयमर्जितम् । आर्द्रं शुष्कं यथा मासं वन्यं चोच्चावचं तथा ॥ १७ ॥
आशंसे स्वाशिता सेना वत्स्यत्येनां विभावरीम् । अर्चितो विविधैः कामैः श्वः ससैन्यो गमिष्यसि ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

## पञ्चाशीतितमः सर्गः ।

प्रस्थितो भरतो गुहं संश्लाघ्य भरद्वाजाश्रमप्रापकं पन्थानं पप्रच्छ । सानुगोऽहं ते मार्गं दर्शयामीति प्रतिज्ञाय स्वाशङ्कां निवेद्य भरतं प्रति रामविषयकं तदभिप्रायं पप्रच्छाभीक्ष्णं शोचन्तं च तमासाद्य समाश्वासयत् ।

एवमुक्तस्तु भरतो निषादाधिपतिं गुहम् । प्रत्युवाच महाप्राज्ञो वाक्यं हेत्वर्थसंहितम् ॥ १ ॥
ऊर्जितः खलु ते कामः कृतो मम गुरोः सखे । यो मे त्वमीदृशीं सेनामभ्यर्चयितुमिच्छसि ॥ २ ॥
इत्युक्त्वा स महातेजा गुहं वचनमुत्तमम् । अब्रवीद्भरतः श्रीमान्पन्थानं दर्शयन्पुनः ॥ ३ ॥

वञ्चिता इत्यर्थः, निवेदने हि प्रत्युद्गमनादिकं कर्तुं शक्यमिति भावः। सर्वे वयं ते त्वदीया इत्यर्थः अतः स्वके दासकुले दासगृहे वसेति निवेदयामः विज्ञापयामः पूर्वं गङ्गामासाद्येति गङ्गापर्यन्तमार्गकरणेऽपि अद्य मनुष्यप्रेरणाभावात्त्वदागमनं न ज्ञातवानस्मीति गुहेनोच्यते ॥ १६ ॥

१७ ] ति० टी०–वन्यं नीवारश्यामाकादि ॥ १७ ॥

रा० टी०–अस्तीति । निषादैः स्वयमर्जितं वन्यं वनोद्भवम् उच्चावचमार्द्रं शुष्कं च एतन्मूलफलं मांसं राजभोग्यं वस्तुविशेषश्च अस्ति एतत्स्वीकुर्वित्यर्थः ‘मांसं स्यादामिषे क्लीबम्’ इति मेदिनीकोशेन मांसशब्दस्यामिषार्थकत्वमवगतम् । आमिषशब्दस्य भोग्यवस्तुपरत्वं तु ‘भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च’ इति तत्कोशादेवेति बोध्यम् ॥ १७ ॥

गो० टी०–अस्तीति । वन्यं नीवारश्यामाकप्रियङ्ग्वादिधान्यम् आसंशे प्रार्थयामि । स्वाशिता सुष्ठु भोजिता ॥१७॥१८॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥

१८ ] ति० टी०–स्वाशिता सुष्ठु भोजिता वत्स्यतीत्याशंसे प्रार्थये । ‘वसत्वेनाम्’ इति पाठान्तरम् तत्राशंसे इति पुनरुक्तम् ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

रा० टी०–आशंसे इति । स्वाशिता सुभोजिता सेना एनां विभावरीं रात्रिं वसतु विविधैः कामैः अस्मन्मनोरथैरर्चितः ससैन्यस्त्वं श्वः प्रातर्गमिष्यसि गन्तासि ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणाख्येऽयोध्याकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

१ ] ति० टी०–एवमिति । हेत्वर्थसंहितं हेत्वर्थाभ्यामुपपत्तिप्रयोजनाभ्यां संयुक्तम् ॥ १ ॥

रा० टी०–निषादप्रार्थनानन्तरकालिकं वृत्तमाह–एवमित्यादिभिः । एवमुक्तो भरतः हेत्वर्थसंहितं हेतुरुपपत्तिः। अर्थः प्रयोजनं ताभ्यां संहितं युक्तं वाक्यं प्रत्युवाच ॥ १ ॥

गो० टी०–एवमिति । हेत्वर्थसंहितम् उपपत्तिप्रयोजनाभ्यां युक्तम् ॥ १ ॥

२ ] ति० टी०–ऊर्जितो महांस्तेऽयं कामः कामनाविषयो मत्सत्कारो मम कृत एव खलु । कथं तत्राह–यो मे इति । तव श्रद्धयैव सर्वं कृतमित्यर्थः ॥ २ ॥

रा० टी०–वाक्याकारमाह–ऊर्जित इति । यस्त्वमीदृशीं महतीं सेनामभ्यर्चयितुमिच्छसि तेन ते त्वया ऊर्जितः महान् कामः स्वेच्छाविषयीभूतसत्कारः कृतः अतः परं न किंचित्कर्तव्यमस्तीत्यर्थः ॥ २ ॥

गो० टी०–ऊर्जित इति । स्वस्य रामविषयभक्तिं द्योतयितुं मम गुरोः सखे इत्युक्तं यस्त्वमेक एव ईदृशीमपरिच्छिन्नां सेनामभ्यर्चितुमिच्छसि तस्य ते ऊर्जितः अभिवृद्धः कामः अर्चनामनोरथः कृतः खलु कृत एव, तवादरणेनैव वयमर्चिता इति भावः ॥ २ ॥

३ ] ति० टी०–पन्थानं दर्शयन्गन्तव्यपथि संमुखं हस्तं कुर्वन्पुनः पुनरब्रवीदित्यन्वयः । आदरेण वारंवारं कथनम् । ‘गुहं वचनमुत्तमम्’ ‘निषादाधिपतिं पुनः’ इति द्वितीयचतुर्थपादौ पाठान्तरे ॥ ३ ॥

रा० टी०–इतीति । स महातेजाः भरतः इत्युक्त्वा पन्थानं स्वगन्तव्यमार्गं दर्शयन्नङ्गुल्या बोधयन्पृच्छन्नित्यर्थः, पुनरब्रवीत् ॥ ३ ॥

गो० टी०–इतीति । महातेजा इति गाम्भीर्यद्योतनम् वत्समामित्यनेनार्चनोद्योगमात्रेण तृप्तत्वकथनादवाप्तसमस्तकामत्वमुक्तम्, श्रीमानिति तात्कालिक हर्षः ॥ ३ ॥

१ मूलं फलं चैवेति गो. पाठः । २ समुपाहृतमिति गो. पाठः । ३ च मांसं शुष्कं चेति गो. पाठः । ४ तथेति रा. पाठः । ५ महदिति गो. पाठः । ६ वत्स्यतीमामिति गो. वसत्वेनामिति रा. पाठः । ७ एकोऽभ्यर्चितुमिति गो. पाठः । ८ श्विति गो. पाठः । ९ निषादाधिपतिमिति गो. पाठः ।

कतरेण गमिष्यामि भरद्वाजाश्रमं पथा । गहनोऽयं भृशं देशो गङ्गानूपो दुरत्ययः ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः । अब्रवीत्प्राञ्जलिर्भूत्वा गुहो गहनगोचरः ॥ ५ ॥
दाशास्त्वनुगमिष्यन्ति देशज्ञाः सुसमाहिताः । अहं चानुगमिष्यामि राजपुत्र महाबल ॥ ६ ॥
कच्चिन्न दुष्टो व्रजसि रामस्याक्लिष्टकर्मणः । इयं ते महती सेना शङ्कां जनयतीव मे ॥ ७ ॥
तमेवमभिभाषन्तमाकाश इव निर्मलः । भरतः श्लक्ष्णया वाचा गुहं वचनमब्रवीत् ॥ ८ ॥
मा भूत्स कालो यत्कष्टं न मां शङ्कितुमर्हसि । राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ॥ ९ ॥
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् । बुद्धिरन्या न ते कार्या गुह सत्यं ब्रवीमि ते ॥ १० ॥
स तु संहृष्टवदनः श्रुत्वा भरतभाषितम् । पुनरेवाब्रवीद्वाक्यं भरतं प्रति हर्षितः ॥ ११ ॥
धन्यस्त्वं न त्वया तुल्यं पश्यामि जगतीतले । अयत्नादागतं राज्यं यस्त्वं त्यक्तुमिहेच्छसि ॥ १२ ॥

४ ] ति० टी०—कतरेण पथा । गहनो दुष्प्रवेशः ॥ ४ ॥

रा० टी०—तत्प्रकारमाह—कतरेणेति । भरद्वाजाश्रमं कतरेण मार्गेण गमिष्यामि अयं गङ्गानूपः गङ्गातीरदेशः गहनः वृक्षैर्निबिडः अत एव दुरत्ययः मार्गमन्तरा गन्तुमशक्यः । कतरेणेत्यनेन द्वौ मार्गौ दृश्यमानाविति सूचितम् ॥ ४ ॥

गो० टी०—कतरेणेति कतरेण केन मार्गेण भृशं गहनः अत्यन्तदुष्प्रवेशः अनूपो देशः जलप्रायो देशः 'जलप्रायमनूपं स्यात्' इत्यमरः ॥ ४ ॥

५ ] ति० टी०—गहनगोचरो गहनं वनं गोचरो देशो यस्य सः ॥ ५ ॥

रा० टी०—तस्येति । राजपुत्रस्य भरतस्य वचनं श्रुत्वा गहनगोचरः वनाभिज्ञः गुहः अब्रवीत् ॥ ५ ॥

गो० टी०—तस्येति । गहनं काननं गोचरः संचारप्रदेशो यस्य सः गहनगोचरः 'गहनं काननं वनम्' इत्यमरः ॥५॥

६ ] ति० टी०—दाशास्त्विवति । अतो गहनविषया न काचिच्छङ्केति भावः ॥ ६ ॥

रा० टी०—तद्वचनाकारमाह—दाशा इति । देशज्ञाः सुसमाहिताः एकाग्रचित्ताः दाशाः धीवराः अनुगमिष्यन्ति अहं चानुगमिष्यामि त्वामिति शेषः, एतेन मार्गप्रभस्य न प्रयोजनमिति सूचितम् ॥ ६ ॥

गो० टी०—दाशा इति । अहमनुगमिष्यामि अतो न मार्गविषयविचारः कर्तव्य इति भावः ॥ ६ ॥

७ ] ति० टी०—अपि त्वक्लिष्टकर्मणो रामस्य विषये दुष्टो दुष्टभावो न व्रजसि कच्चिद्रामद्रोहं कर्तुं न व्रजसि कच्चिदित्यर्थः। ननु का ते दोषशङ्का तत्राह—इयं ते इति । रामसंदर्शनमात्राय गमने एतावत्सेनाया व्यर्थत्वान्मम संदेह इति भावः ॥ ७ ॥

रा० टी०—कच्चिदिति । अक्लिष्टकर्मणो रामस्य दुष्टः दूषकः सन् कच्चिन्न व्रजसि कच्चिदिति शङ्कायाम् । ननु कुत एवमाशङ्कसे इत्यत आह—महती अतिप्रवृद्धा इयं ते सेना शङ्कां जनयति ॥ ७ ॥

गो० टी०—कच्चिदिति । न दुष्टः अदुष्टः सुप्सुपेति समासः, रामस्य रामविषये अदुष्टो व्रजसि कच्चित् दुष्टो न व्रजसि कच्चिदिति वा संबन्धः। अक्लिष्टकर्मण इत्यनेन निरपायत्वमुक्तम्। शङ्काप्रसक्तौ हेतुमाह—इयमिति। अनुकूलो व्रजसि चेत् सेना व्यर्थेति भावः। इवशब्दः शङ्काया ईषत्त्वं द्योतयति ॥७॥

८ ] ति० टी०—आकाश इवेत्युपमया त्रैकालिकमलसंबन्धाभावो दर्शितः ॥ ८ ॥

रा० टी०—तमिति । एवमभिभाषन्तं तं गुहमाकाश इव निर्मलः सर्वकालं दोषसंसर्गरहितः भरतः अब्रवीत् ॥ ८ ॥

गो० टी०—तमिति । आकाश इव निर्मल इत्यनेन तच्छङ्कितदोषस्य तत्र प्रसक्तिरेव नास्तीत्युच्यते आकाशे हि पङ्कानुलेपे स तत्र न प्रसजति किंतु स्वहस्त एव मलिनो भवति । श्लक्ष्णया स्वस्मिन्दोषारोपेऽप्यक्रोधया ॥ ८ ॥

९ ] ति० टी०—यत्र काले कष्टं त्वदाशङ्कितं रामद्रोहरूपं जायते स कालो मा भूत् हि यतो राघवो ज्येष्ठो भ्राता पितृसमः, अतो मां शङ्कितुं नार्हसि ॥ ९ ॥

रा० टी०—मेति । यस्मिन् काले कष्टं त्वदाशङ्कास्पदीभूतदुःखमूलं भ्रातृद्रोह इत्यर्थः, स कालो मा भूत्। विरोधायोग्यतां बोधयन्नाह—ज्येष्ठो मे भ्राता राघवो रामः मम पितृसमः, एतेन तत्र विरोधाशङ्का कदाचिन्न कर्तव्येति सूचितम् ॥ ९ ॥

गो० टी०—मा भूदिति । यत् यस्मिन् काले कष्टं त्वया आशङ्कितं कष्टं जायते स कालो मा भूत् कलिकाले हि तादृशप्रसङ्गः अतो मां शङ्कितुं नार्हसि । तत्र हेतुः—राघव इत्यादि । न ते कार्या त्वया न कार्या ॥ ९ ॥ १० ॥

१०–१२ ] ति० टी०—तदेवाह—तमिति । मे मयि । 'न ते कार्या' इति पाठान्तरम् ॥ १०–१२ ॥

रा० टी०—ननु किमर्थं गमनमित्यत आह—तमिति । वनवासिनं तं रामं निवर्तयितुं यामि ते तुभ्यं सत्यं ब्रवीमि अतः अन्या विरोधविषयिणी बुद्धिर्न कार्या ॥ १० ॥

रा० टी०—स इति । भरतभाषितं श्रुत्वा संहृष्टवदनः स गुहः भरतं पुनरब्रवीत् ॥ ११ ॥

१ गुहेति गो. पाठः । २ वाक्यमिति गो. पाठः । ३ त्वान्वितं गो. पाठः । ४ धन्विन इति गो. पाठः । ५ त्वाऽनिलात्म गो. पाठः । ६ यत्र इति गो. पाठः । ७ मेति रा. पाठः । ८ ते इति गो. पाठः ।

शाश्वती खलु ते कीर्तिर्लोकाननु चरिष्यति । यस्त्वं कृच्छ्रगतं रामं प्रत्यानयितुमिच्छसि ॥ १३ ॥
एवं संभाषमाणस्य गुहस्य भरतं तदा । बभौ नष्टप्रभः सूर्यो रजनी चाभ्यवर्तत ॥ १४ ॥
संनिवेश्य स तां सेनां गुहेन परितोषितः । शत्रुघ्नेन समं श्रीमाञ्छयनं पुनरागमत् ॥ १५ ॥
रामचिन्तामयः शोको भरतस्य महात्मनः । उपस्थितो ह्यनर्हस्य धर्मप्रेक्ष्यस्य तादृशः ॥ १६ ॥
अन्तर्दाहेन दहनः संतापयति राघवम् । वनदाहाग्निसंतप्तं गूढोऽग्निरिव पादपम् ॥ १७ ॥
प्रसृतः सर्वगात्रेभ्यः स्वेदं शोकाग्निसंभवम् । यथा सूर्याग्निसंतप्तो हिमवान्प्रसृतो हिमम् ॥ १८ ॥
ध्याननिर्दरशैलेन विनिःश्वसितधातुना । दैन्यपादपसंघेन शोकायासाधिशृङ्गिणा ॥ १९ ॥
प्रमोहानन्तसत्त्वेन संतापौषधिवेणुना । आक्रान्तो दुःखशैलेन मज्जता कैकयीसुतः ॥ २० ॥

रा० टी०—तद्वचनाकारमाह—धन्य इति । यस्त्वमयत्नात्प्रयत्नमन्तरा आगतं पित्राथाज्ञया प्राप्तं राज्यं त्यक्तुमिच्छसि स त्वं धन्यः त्वया तुल्यं सदृशं जगतीतले न पश्यामि ॥ १२ ॥

गो० टी०—स त्विति । संहृष्टवदनः प्रसन्नवदन इत्यर्थः, हर्षितः संजातहर्षः ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—चरिष्यति प्रचरिष्यति ॥ १३ ॥

रा० टी०—शाश्वतीति । यस्त्वं कृच्छ्रगतं वनवासजनितक्लेशवन्तं रामं प्रत्यानयितुं प्रत्यानेतुमिच्छसि तस्य ते शाश्वती कीर्तिः लोकाननुचरिष्यति ॥ १३ ॥

गो० टी०—शाश्वतीति । कृच्छ्रगतं व्यसनगतं प्रत्यानयितुं प्रत्यानेतुम् इडार्षः ॥ १३ ॥

१४ ] ति० टी०—नष्टप्रभो मन्दीभूतरश्मिः ॥ १४ ॥

रा० टी०—एवमिति । भरतमेवं संभाषमाणस्य गुहस्य संबन्धी सूर्यः नष्टप्रभः सन् बभौ अत एव रजनी रात्रिः अभ्यवर्तत । सूर्ये गुहसंबन्धस्तु तात्कालिकपरिदृश्यमानत्वरूपः यदि तु "षष्ठी चानादरे" इति षष्ठी तदा नैवं संबन्धकल्पना ॥ १४ ॥

गो० टी०—एवमिति । संभाषमाणस्य संभाषमाणे सति नष्टप्रभः अदृष्टप्रभः ॥ १४ ॥

१५ ] ति० टी०—'गुहेन परिरक्षितः' इति पाठे परिहृतचोरबाध इत्यर्थः ॥ १५ ॥

रा० टी०—सामिति । गुहेन परितोषितः भरतः तां सेनां संनिवेश्य संनिवेशयितुमाज्ञाप्य शत्रुघ्नेन समं शयनमागमत् ॥ १५ ॥

गो० टी०—संनिवेश्येति । शयनं पुनरागमदिति अत्र पुनःशब्देन गुहागमनात्पूर्वं श्रान्तः शयने स्थित इति गम्यते 'समुपागमत्' इति वा पाठः । पुनः परितोषित इति वा संबन्धः, वाक्यालंकारो वा ॥ १५ ॥

१६ ] ति० टी०—अनर्हस्य दुःखानर्हस्य । धर्मप्रेक्ष्यस्य धर्मदृष्टेः तादृशो वागगोचरः उपस्थितः प्राप्तः ॥ १६ ॥

रा० टी०—रामेति । धर्मप्रेक्षस्य धर्ममात्रदृष्टेः अत एव अनर्हस्य शोकायोग्यस्य महात्मनो भरतस्य तादृशः अतिदुःसहः रामचिन्तामयः रामचिन्ताप्रचुरः शोकः उपस्थितः ॥ १६ ॥

गो० टी०—रामचिन्तामय इति । अनर्हस्य गर्भैश्वर्येण शोकानर्हस्य महात्मनः महाधीरस्यापि धर्मप्रेक्षस्य शोकमूलपापशून्यस्य तादृशः अवाङ्मनसगोचरः भ्रातृभक्तस्येति भरतविशेषणं वा ॥ १६ ॥

१७ ] ति० टी०—दहनः शोकाग्निः राघवं भरतं वनदाहकोऽग्निर्वनदाहाग्निर्दावाग्निस्तेन संतप्तं शुष्कम् । गूढोऽग्निः कोटरसंसक्तोऽग्निः ॥ १७ ॥

रा० टी०—अन्तरिति । दहनः शोकवह्निर्दाहेन शोकाग्निना संतप्तं राघवं भरतमन्तः संतापयति, तत्र दृष्टान्तः वनदाहाग्निना वनदाहकवह्निना संतप्तं पादपं वृक्षं गूढः कोटरादौ केनचित्प्रक्षिप्तः अग्निरिव, अत्र वनदाहकाग्निस्थानापन्नो दशरथशोको बोध्यः ॥ १७ ॥

गो० टी०—अन्तर्दाहेनेति । दहनः शोकाग्निः अन्तर्दाहेन चिन्ताग्निना तप्तं राघवं भरतं संतापयति सम्यक् ग्लपयति स्म, वनदाहाभिसंतप्तं वनदाहेन पर्यन्तवनाग्नेरूष्मणा संतप्तं शुष्कं पादपं गूढोऽग्निरिव कोटराग्निरिव अन्तरारभ्य बहिर्दहत् अन्तस्थोऽप्यात्मा दह्यते अदाह्यत्वं केवलाग्नेर्हि ॥ १७ ॥

१८ ] ति० टी०—स्वेदं प्रसृतः कर्तरि निष्ठा गत्यर्थत्वात् ॥ १८ ॥

रा० टी०—प्रस्नुत इति । सर्वगात्रेभ्यः शोकाग्निसंभवं स्वेदं प्रस्नुतः प्रस्नावयामास, भरत इति शेषः कर्तरि निष्ठा । तत्र दृष्टान्तः सूर्याग्निसंतप्तो हिमं प्रस्नुतो हिमवान् यथा ॥ १८ ॥

गो० टी०—प्रसृत इति । शोकाग्निसंभवं स्वेदं प्रसृतः भरत इति शेषः 'स्वेदः शोकाग्निसंभवः' इति पाठस्तु न दृष्टान्तानुरूपः स्वेदं प्रसृतः हिमं प्रसृत इत्यत्र गत्यर्थत्वात् कर्तरि क्तः ॥ १८ ॥

१९ ] ति० टी०—दुःखे पर्वतरूपकम् । रामविषयध्यानान्येव निर्दरशैला विदारणरहितशिलासमूहा यस्मिन्, निःशेषतो दीर्णशिलासमूहा यस्मिन्निति वा । विनिःश्वसितमेव गैरिकादिधातुर्यस्मिन्, श्वाससंपर्केण भूषणानामन्यवर्णजननात् । दैन्यं करणानां स्वस्वविषयप्रवृत्तिवैमुख्यं स एव पादपसंघो यस्मिन् । शोकजा आयासाश्चित्तश्रान्तयस्ता एवाध्यधिरूढानि शृङ्गाणि तद्वता ॥ १९ ॥

२० ] ति० टी०—प्रमोहा एवानन्तसत्त्वानि वन्यप्राणिनो

१ सहेति गो. पाठः । २ प्रेक्षस्येति गो. रा. पाठः । ३ ऽभिसंतप्तमिति गो. पाठः । ४ प्रस्नुतं इति रा. पाठः । ५ सूर्यांशुसंतप्त इति गो. पाठः । ६ महतेति गो. रा. पाठः ।

विनिःश्वसन्वै भृशदुर्मनास्ततः प्रमूढसंज्ञः परमापदं गतः ।
शमं न लेभे हृदयज्वरार्दितो नरर्षभो यूथहतो यथर्षभः ॥ २१ ॥
गुहेन सार्धं भरतः समागतो महानुभावः सजनः समाहितः ।
सुदुर्मनास्तं भरतं तदा पुनः शनैः समाश्वासयदग्रजं प्रति ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

## षडशीतितमः सर्गः ।

गुहो भरतं प्रति रामस्य तत्रत्यरामनिवासं तन्निद्रासमये स्वस्य लक्ष्मणेन सह वृत्तं संवादं च निवेद्य प्रातः सीतातृतीयौ तौ जटाः संग्रथ्य गङ्गामुत्तीर्य भरद्वाजाश्रमं प्रस्थिताविति तं न्यवेदीत् ।

आचचक्षेऽथ सद्भावं लक्ष्मणस्य महात्मनः । भरतायाप्रमेयाय गुहो गहनगोचरः ॥ १ ॥

---

यस्मिंस्तेन । संतापोऽन्तर्बहिःकरणसंताप एव ओषधयो वेणवश्च यस्मिन् । मज्जता मग्नं कुर्वता सकरणग्राममात्मानमधो नयता एवंभूतेन दुःखरूपशैलेनाक्रान्तः अभूदिति शेषः ॥२०॥

रा० टी०—वियोगदुःखस्य पर्वतरूपकत्वं वर्णयन्नाह—ध्यानेति द्वाभ्याम् । ध्यानमुत्कण्ठापूर्वकरामस्मरणमेव निर्दरशैलः निश्छिद्रप्रस्तरो यस्मिंस्तेन विनिःश्वसितमुच्छ्वास एव धातुर्गैरिकादिर्यस्मिंस्तेन, दैन्यं दीनता एव पादपसंघः वृक्षसमूहो यस्मिंस्तेन, शोकायासः शोकजनितखेद एव अधि अधिरूढं शृङ्गं तद्वता, प्रमोहा एव अनन्तसत्त्वानि व्याघ्रादयो यस्मिन् तेन, संतापा एव ओषधिवेणवो यस्मिन् तेन, महता अतिप्रवृद्धेन दुःखशैलेन दुःखपर्वतेन आक्रान्तः कैकेयीसुतः अभवदिति शेषः । 'मज्जता' इति भट्टपाठः मग्नं कुर्वतेति तद्व्याख्या । श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०—भरतस्य दुःखं शैलत्वेन रूपयति—ध्यानेत्यादिना । ध्याननिर्दरशैलेन दरो गर्तस्तस्मान्निर्गतं निर्दरं शिलानां समूहः शैलं रामविषयध्यानमेव निर्दरशैलं यस्मिंस्तेन ध्यानस्य निरन्तरत्वेन दरीविदीर्णशिलापङ्क्तिसाम्यं, विविधं निःश्वसितं विनिःश्वसितं तदेव धातुर्यस्मिन् विविधत्वसाम्यात् दैन्यं करणानां स्वस्वविषयप्रवृत्तिवैमुख्यं तस्य पादपसाम्यमबोधरूपतया शोकायासाधिशृङ्गिणा शोकादय एव शृङ्गिणः कृष्णसारादयो यस्मिंस्तेन यद्वा शोकायासादिभिः शृङ्गिणा शृङ्गवता दृढत्वसाम्यात्,प्रमोहानन्तसत्त्वेन प्रमोहा एवाऽनन्तानि सत्त्वानि जन्तवो यस्मिंस्तेन 'द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु' इत्यमरः । प्राणभयशङ्काकरत्वात् संतापौषधिवेणुना संतापा एव ओषधयो वेणवश्च यस्मिंस्तेन ओषधिवेणुसाम्यं दुष्प्रवेशत्वात् आक्रान्तः अभूदिति शेषः महता अतिगुरुणा 'मज्जता' इतिपाठे मज्जता अवयवेषु प्रविशता ॥ १९ ॥ २० ॥

२१ ] ति० टी०—प्रकर्षेण मूढा संज्ञा चेतना यस्य । यूथहतो यूथभ्रष्टः ॥ २१ ॥

रा० टी०—विनिःश्वसन्निति । ततः तस्माद्दुःखपर्वताद्धेतोः भृशदुर्मनाः अत एव प्रमूढसंज्ञः प्रमूढा विवेकरहिता संज्ञा बुद्धिर्यस्य सः अत एव परमापदमत्यापत्तिं गतः प्राप्तः अत एव हृदयज्वरेण आर्तः पीडितः नरर्षभो भरतः विनिःश्वसन्सन् शमं शान्तिं न लेभे, तत्र दृष्टान्तः यूथहतः यूथच्युतः ऋषभो वृषभ इव 'यूथगतः' इति भूषणपाठः । यूथगतः यूथाद्गतः यूथाद्भ्रष्ट इत्यर्थः, इति तद्व्याख्या ॥ २१ ॥

गो० टी०—विनिःश्वसन्निति । विनिःश्वसन् चिन्तातिरेकेण श्वासं कुर्वन् भृशदुर्मनाः अत्यन्तकलुषहृदयः प्रमूढा नष्टा संज्ञा यस्य सः प्रमूढसंज्ञः अत एव परमापदं मरणायार्थसंपत्तिरूपां मूर्छां गतः शमं ज्वरशान्तिम् अयूथगतः यूथाद्भ्रष्ट इत्यर्थः 'यूथहतः' इति पाठे हतयूथ इत्यर्थः ॥ २१ ॥

२२ ] ति० टी०—समाहित एकाग्रचित्तः, सजनः सपरिवारः, गुहेन सार्धं समागतो मिलितो भरतोऽग्रजं प्रति सुदुर्मना बभूव । तादृशं तं भरतं गुहः पुनराश्वासयत् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

रा० टी०—गुहेनेति । गुहेन सार्धं समागतः आलिङ्गितो यो भरतः अग्रजं प्रति दुर्मनाः तं भरतं सजनः स्वजनसहितः समाहितः एकाग्रचित्तः गुहः शनैः पुनः समाश्वासयत् ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

गो० टी०—अथ गुहः समागत इत्याह—गुहेनेति । सजनः सपरिवारः समाहितः एकाग्रचित्तो भरतः गुहेन सार्धं सह समागतः संगतः अथ गुहः सुदुर्मनाः भरतक्लेशदर्शनेन भरतादपि भृशं दुर्मनाः सन् भरतम् अग्रजं प्रति अग्रजं लक्षीकृत्य समाश्वासयत् ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चाशीतितमः सर्गः ॥ ८५ ॥

१ ] ति० टी०—सद्भावं ज्येष्ठानुवर्तनरूपं साधुत्वम् ॥ १ ॥

---

१ गत इति गो. पाठः । २ गुह इति गो. पाठः ।

तं जाग्रतं गुणैर्युक्तं वरचापेषुधारिणम् । भ्रातृगुप्त्यर्थमत्यन्तमहं लक्ष्मणमब्रुवम् ॥ २ ॥
इयं तात सुखा शय्या त्वदर्थमुपकल्पिता । प्रत्याश्वसिहि शेष्वास्यां सुखं राघवनन्दन ॥ ३ ॥
उचितोऽयं जनः सर्वो दुःखानां त्वं सुखोचितः । धर्मात्मंस्तस्य गुप्त्यर्थं जागरिष्यामहे वयम् ॥ ४ ॥
नहि रामात्प्रियतरो ममास्ति भुवि कश्चन । मोत्सुको भूर्ब्रवीम्येतदथ सत्यं तवाग्रतः ॥ ५ ॥
अस्य प्रसादादाशंसे लोकेऽस्मिन्सुमहद्यशः । धर्मावाप्तिं च विपुलामर्थकामौ च केवलौ ॥ ६ ॥
सोऽहं प्रियसखं रामं शयानं सह सीतया । रक्षिष्यामि धनुष्पाणिः सर्वैः स्वैर्ज्ञातिभिः सह॥ ७ ॥
नहि मेऽविदितं किंचिद्वनेऽस्मिंश्चरतः सदा । चतुरङ्गं ह्यपि बलं प्रसहेम वयं युधि ॥ ८ ॥
एवमस्माभिरुक्तेन लक्ष्मणेन महात्मना । अनुनीता वयं सर्वे धर्ममेवानुपश्यता ॥ ९ ॥
कथं दाशरथौ भूमौ शयाने सह सीतया । शक्या निद्रा मया लब्धुं जीवितानि सुखानि वा॥१० ॥
यो न देवासुरैः सर्वैः शक्यः प्रसहितुं युधि । तं पश्य गुह संविष्टं तृणेषु सह सीतया ॥ ११ ॥
महता तपसा लब्धो विविधैश्च परिश्रमैः । एको दशरथस्यैष पुत्रः सदृशलक्षणः ॥ १२ ॥
अस्मिन्प्रव्राजिते राजा न चिरं वर्तयिष्यति । विधवा मेदिनी नूनं क्षिप्रमेव भविष्यति ॥ १३ ॥
विनद्य सुमहानादं श्रमेणोपरताः स्त्रियः । निर्घोषो विरतो नूनमद्य राजनिवेशने ॥ १४ ॥

---

रा० टी०—आश्वासनप्रकारमाह—आचचक्ष इत्यादिभिः। अथ भरतदुर्मनस्त्वप्राप्त्यनन्तरं महात्मनो लक्ष्मणस्य सद्भावं ज्येष्ठानुवर्तनरूपसत्स्वभावं गुहः भरताय आचचक्षे ॥ १ ॥

गो० टी०—आचचक्ष इत्यादि । अथ आश्वासनानन्तरं सद्भावं ज्येष्ठानुवर्तनरूपं समीचीनस्वभावम् । आचचक्ष इत्यादि भगवद्विषयोपदेशे नूतनपुरातनविभागो नास्ति देशिका वक्तारः सादराः श्रोतार इत्याह आशीषदर्थे स्ववागिन्द्रियविषयमेवावदत् नतु कार्त्स्न्येन । अथ भरतस्वभावज्ञानानन्तरं सद्भावं बाल्यात्प्रभृति स्निग्ध इति सत्ताव्याप्तं स्वभावं लक्ष्मणस्य महात्मनः पयोधिं पाणिना परिच्छेत्तुमुद्युक्तः भरतायाप्रमेयाय एतादृशस्योपदेष्टेति नास्ति गुहो गहनगोचरः वन्यस्थलादितारतम्यमात्रज्ञः एतादृशस्वभावमविज्ञातवान्, यद्वा रामविरहेण कुत्रचित् कुञ्जे स्थितः तद्देशीयागमने सद्युत्थाय निर्गतः॥ १ ॥

२ ] ति० टी०—तदेवाह—तमिति । भ्रातृगुप्त्यर्थं जाग्रतं विनिद्रं गुणैः स्नेहसौशील्यादिगुणैः क्षत्रगुणैश्च युक्तम् ॥ २ ॥

रा० टी०—तत्कथनप्रकारमाह—तमिति । गुणैः सेवानुकूलधर्मैः युक्तं भ्रातृगुप्त्यर्थं भ्रातुः रक्षायै वरचापेषुधारिणं जाग्रतं तं लक्ष्मणमहमब्रुवम् । 'शरचापासिधारिणम्' इति भूषणपाठः एकहस्ते शरयुक्तचापमपरहस्तेन असिं च दधानमिति तद्व्याख्या॥२॥

गो० टी०—भरतस्य रामविषयस्नेहमभिवर्धयितुं लक्ष्मणस्य ज्येष्ठानुवर्तनरूपं पूर्ववृत्तान्तमाह—तं जाग्रतमित्यादिना । भ्रातृगुप्त्यर्थमत्यन्तं जाग्रतं शरचापासिधारिणम् एकहस्ते शरयुक्तचापम् अपरहस्ते असिं च दधानमित्यर्थः, गुणैर्भ्रातृभक्त्यादिगुणैर्युक्तम् ॥ २ ॥ ३ ॥

३ ] ति० टी०—इयं तातेत्यादिरुक्तानुवादः पूर्वमेव व्याख्यातः ॥ ३ ॥

रा० टी०—तद्वचनप्रकारमाह—इयमित्यादिभिः । इयमित्यारभ्य परिदेवयमानस्येत्येतत्पर्यन्तं श्लोकाः न व्याख्यायन्ते एकपञ्चाशत्तमे सर्गे गुहलक्ष्मणसंवादे प्राय एतदानुपूर्वीकत्वेनैव पठितत्वादिति तद्व्याख्यानेनैवैषां व्याख्यानं बोध्यम् ॥३ ॥

४–२५ ] ति० टी०—तस्य रामस्य ॥ ४–२५ ॥

पञ्चविंशतिश्लोका अत्र सर्गे ।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

रा० टी०—उचित इति ॥ ४ ॥

गो० टी०—उचित इति । तस्य रामस्य ॥ ४ ॥

रा० टी०—नहीति । रामात्प्रियतरो मम कश्चन न अतः उत्सुकः जागरणविषयकौत्सुक्यविशिष्टः मा भूः ॥ ५–२३ ॥

गो० टी०—नहीति । मोत्सुको भूः अस्यां रात्रौ रामरक्षणौत्सुक्यं मा कृथा इत्यर्थः, एतद्रक्षणं प्रति तवाग्रतः असत्यं ब्रवीम्यपि ब्रवीमि किं न ब्रवीम्येवेत्यर्थः ॥ ५ ॥

गो० टी०—स्वस्यैहिकमामुष्मिकं च फलं रामायत्तमित्याह—अस्येत्यादिना । धर्मावाप्तिम् आमुष्मिकफलसाधनसिद्धिं केवलां न्यायप्राप्तामिति यावत् ॥ ६ ॥ ७ ॥

गो० टी०—नेति । मे विदितमित्यत्र अविदितमिति पदच्छेदः ॥ ८–११ ॥

गो० टी०—महतेति । तपसा अनशनेन परिश्रमैः यज्ञादिभिरित्यर्थः एकः मुख्यः 'एके मुख्यान्यकेवलाः' इत्यमरः॥१२॥

गो० टी०—प्रव्राजनकालिकदशरथदशां स्मरन्नाह—अस्मिन्निति । वर्तयिष्यति जीविष्यति ॥ १३ ॥

गो० टी०—विनद्येति । सुमहानादं विनद्य कृत्वेत्यर्थः, अद्य स्त्रियः उपरता इति मन्ये इत्युपस्कार्यं निवेशनं निवेशनं च॥१४॥

---

१ शरचापासीति गो. पाठः । २ ऽप्यसत्यमिति गो. ऽथेति रा. पाठः । ३ अर्थावाप्तिं च केवलामिति गो. पाठः । ४ जीवितं वेति गो. पाठः । ५ निर्घोषोपरतमिति गो. पाठः । ६ निवेशनमिति गो. पाठः ।

कौसल्या चैव राजा च तथैव जननी मम । नाशंसे यदि ते सर्वे जीवेयुः शर्वरीमिमाम् ॥ १५ ॥
जीवेदपि च मे माता शत्रुघ्नस्यान्ववेक्षया । दुःखिता या [1]हि कौसल्या वीरसूर्विनशिष्यति॥ १६ ॥
अतिक्रान्तमतिक्रान्तमनवाप्य मनोरथम् । राज्ये राममनिक्षिप्य पिता मे विनशिष्यति ॥ १७ ॥
सिद्धार्थाः पितरं वृत्तं तस्मिन्काले ह्युपस्थिते । प्रेतकार्येषु सर्वेषु संस्करिष्यन्ति भूमिपम् ॥ १८ ॥
रम्यचत्वरसंस्थानां सुविभक्तमहापथाम् । हर्म्यप्रासादसंपन्नां सर्वरत्नविभूषिताम् ॥ १९ ॥
गजाश्वरथसंबाधां तूर्यनादविनादिताम् । सर्वकल्याणसंपूर्णां हृष्टपुष्टजनाकुलाम् ॥ २० ॥
आरामोद्यानसंपूर्णां समाजोत्सवशालिनीम् । सुखिता विचरिष्यन्ति राजधानीं पितुर्मम ॥ २१ ॥
अपि सत्यप्रतिज्ञेन सार्धं कुशलिना वयम् । निवृत्ते समये ह्यस्मिन्सुखिताः प्रविशेमहि ॥ २२ ॥
परिदेवयमानस्य तस्यैवं [2]हि महात्मनः । तिष्ठतो राजपुत्रस्य शर्वरी सात्यवर्तत ॥ २३ ॥
प्रभाते विमले सूर्ये कारयित्वा जटा उभौ । अस्मिन्भागीरथीतीरे सुखं संतारितौ मया ॥ २४ ॥
जटाधरौ तौ द्रुमचीरवाससौ महाबलौ कुञ्जरयूथपोपमौ ।
वरेषु[3]धीचापधरौ परंतपौ [4]व्यपेक्षमाणौ सह सीतया गतौ ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

## सप्ताशीतितमः सर्गः।

गुहमुखाच्छ्रुतरामलक्ष्मणजटाधारणो भरतः शोकाकुलत्वान्मुह्यन्भूमौ पपात । तस्य शोककारणत्वेन रामादिविपच्छङ्किनीं कौसल्यां प्रति तत्त्वनिवेदनेन समाश्वास्य रामवृत्तं वर्णयितुं गुहं प्रैरयत् । लक्ष्मणरचितकुशमयशयनीये रामनिद्रादिकं निवेद्य तद्रक्षणार्थं स्वस्य लक्ष्मणेन समं जागरादि न्यवेदीत् ।

गुहस्य वचनं श्रुत्वा भरतो भृशमप्रियम् । ध्यानं जगाम तत्रैव यत्र तच्छ्रुतमप्रियम् ॥ १ ॥

गो० टी०—कौसल्येति । सर्वे ते जीवेयुरिति नाशंसे यदि जीवेयुरिमां शर्वरीमेवेति संबन्धः ॥ १५ ॥

गो० टी०—जीवेदिति । शत्रुघ्नस्यान्ववेक्षया शत्रुघ्नसंबन्ध्यवेक्षणेच्छया वीरसूः कौसल्या दुःखितेति यत् अतो विनशिष्यति 'दुःखिता या तु' इति पाठः समीचीनः तत्पक्षे या दुःखिता वीरसूः कौसल्या सा तु विनशिष्यत्येवेत्यर्थः ॥ १६ ॥

गो० टी०—अतिक्रान्तमिति । अतिक्रान्तमतिक्रान्तं सर्वं प्रयोजनमतीतेत्यर्थः ॥ १७ ॥

गो० टी०—सिद्धार्था इति। वृत्तमतीतं मृतमिति यावत्१८

गो० टी०—रम्यचत्वरसंस्थानामित्यादि । हर्म्यप्रासादसंपन्नां हर्म्याणि धनिनां गृहाणि प्रासादा देवानां राज्ञां च गृहाणि तैः संपन्नां समृद्धां सर्वरत्नविभूषितां सर्वैः श्रेष्ठवस्तुभिरलंकृतां तूर्यनादविनादितां तूर्यस्य नृत्यगीतादिकस्य नादेन विनादितां—हर्म्यादिषु कृतप्रतिध्वनिमित्यर्थः, सर्वकल्याणैः सर्वमङ्गलैः संपूर्णां सर्वोत्सवैः संपूर्णां वा, आरामोद्यानसंपूर्णाम् आरामाः उपवनानि उद्यानानि राज्ञामसाधारणवनानि तैःसमृद्धां समाजोत्सवशालिनीम् उत्सवसमूहशालिनीम् ॥ १९–२१ ॥

गो० टी०—अपीति । सत्यप्रतिज्ञेन तीर्णवनवासप्रतिज्ञेन रामेण प्रविशेमहि पुरीमिति शेषः ॥ २२ ॥

गो० टी०—परिदेवयमानस्येति । तिष्ठतो राजपुत्रस्य राजपुत्रसंबन्धिनी शर्वरी अत्यवर्तत निरन्तरपरिदेवनेन रात्रिं यापितवानित्यर्थः ॥ २३ ॥ २४ ॥

रा० टी०—प्रभात इति । प्रभाते प्रातःकाले विमले अन्धकारनिवर्तके सूर्ये सूर्योदयकाले इत्यर्थः । उभौ रामलक्ष्मणौ जटाः कारयित्वा मया सुखं संतारितौ गङ्गापारं प्रापितौ ॥ २४ ॥

रा० टी०—जटेति । जटाधरौ धृतजटौ द्रुमचीरवाससौ वरेषुचापासिधरौ व्यपेक्षमाणौ इतस्ततोऽवलोकयन्तौ सीतया सह गतौ ॥ २५ ॥

इति श्रीवाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

गो० टी०—जटाधराविति ' व्यवेक्षमाणौ सर्वतो दत्तावधानौ ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

१ ] ति० टी०—भृशमप्रियं जटाधारणरूपम् । यत्र तत्रैव

१ स्विति गो. पाठः । २ स्विति गो. पाठः । ३ चापासिधराविति गो. रा. पाठः । ४ व्यवेक्षेति गो. पाठः ।

सुकुमारो महासत्त्वः सिंहस्कन्धो महाभुजः । पुण्डरीकविशालाक्षस्तरुणः प्रियदर्शनः ॥ २ ॥
प्रत्याश्वस्य मुहूर्तं तु कालं परमदुर्मनाः । ससाद सहसा तोत्रैर्हृदि विद्ध इव द्विपः ॥ ३ ॥
भरतं मूर्छितं दृष्ट्वा विवर्णवदनो गुहः । बभूव व्यथितस्तत्र भूमिकम्पे यथा द्रुमः ॥ ४ ॥
तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरस्थितः । परिष्वज्य रुरोदोच्चैर्विसंज्ञः शोककर्शितः ॥ ५ ॥
ततः सर्वाः समापेतुर्मातरो भरतस्य ताः । उपवासकृशा दीना भर्तृव्यसनकर्शिताः ॥ ६ ॥
ताश्च तं पतितं भूमौ रुदत्यः पर्यवारयन् । कौसल्या त्वनुसृत्यैनं दुर्मनाः परिषस्वजे ॥ ७ ॥
वत्सला स्वं यथा वत्समुपगुह्य तपस्विनी । परिपप्रच्छ भरतं रुदती शोकलालसा ॥ ८ ॥
पुत्र व्याधिर्न ते कच्चिच्छरीरं प्रति बाधते । अस्य राजकुलस्याद्य त्वदधीनं हि जीवितम् ॥ ९ ॥
त्वां दृष्ट्वा पुत्र जीवामि रामे सभ्रातृके गते । वृत्ते दशरथे राज्ञि नाथ एकस्त्वमद्य नः ॥ १० ॥

यत्र क्षण इत्यर्थः । ध्यानं जगाम स्वाभिलषितकार्यसंकटं जातमिति चिन्तां प्रापेत्यर्थः ॥ १ ॥

रा० टी०—गुहवचनश्रवणानन्तरकालिकं भरतवृत्तमाह—गुहस्येत्यादिभिः । अप्रियं दुःखसूचकजटाधारणादिवाचकपदवत्तया प्रीतिविषयत्वाभाववद्गुहस्य वचनं भृशं श्रुत्वा यत्र यस्मिन् रामविषये अप्रियं श्रुतं तत्र तस्मिन् विषये एव ध्यानं चिन्तां जगाम, यत्र स्थले श्रुतं तत्रैव ध्यानं जगामेति वा ॥१॥

गो० टी०—गुहस्येति । यत्रतत्रैव यत्र क्षणे अप्रियं श्रुतं तत्रैवेत्यर्थः, यद्वा यत्र विषये अप्रियं श्रुतं तत्रैव ध्यानं जगाम स्वाभिलषितकार्यसंकटं जातमिति चिन्तापारवश्यं प्राप्त इत्यर्थः ॥ १ ॥

२ ] ति० टी०—सुकुमारत्वादिगुणेन जटादिकं धृतम् अतो निवृत्तिर्दुर्लभेति चिन्तां जगाम ॥ २ ॥

३–४ ] ति० टी०—ततो मूहूर्तं कालं परमदुर्मनाः परमखिन्नः प्रत्याश्वस्य पुनश्च सहसा दुःखवेगेन ससादावशोऽभूत् । तोत्रैरङ्कुशैः, हृदि हृदयदेशे ॥ ३ ॥ ४ ॥

रा० टी०—सुकुमार इति । सुकुमारत्वादिविशिष्टो भरतः मुहूर्तं कालं प्रत्याश्वस्य चित्तस्वास्थ्यं प्राप्य सहसा दुर्मनाः सन् तोत्रैरङ्कुशैर्विद्धो द्विपो गज इव ससाद अतिदुःखं प्राप । श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

रा० टी०—भरतमिति । भरतं मूर्छितं दृष्ट्वा भूमिकम्पे द्रुम इव व्यथितः अत एव विवर्णवदनः विपरीतवर्णविशिष्टमुखवान् गुहोऽभवत् ॥ ४ ॥

गो० टी०—सुकुमार इत्यादि श्लोकद्वयमेकान्वयम् । प्रत्याश्वस्य मुहूर्तं कालं परमदुर्मनाः सन् सहसा पपात । 'ससाद' इति वा पाठः सुकुमार इत्यादिना तदवस्थानर्हत्वमुच्यते ॥ २ ॥ ३ ॥

५–६ ] ति० टी०—तदवस्थमचेतनावस्थम् । अनन्तरस्थितः समीपस्थितः ॥ ५ ॥ ६ ॥

रा० टी०—तदवस्थमिति । अनन्तरस्थितः समीपस्थितिमान् शत्रुघ्नः तदवस्थं सा अतिदुःखविशिष्टा अवस्था स्थितिर्यस्य तं भरतं परिष्वज्य शोककर्षितः अत एव विसंज्ञः कर्तव्यविषयकविवेकरहितः सन् उच्चैः रुरोद ॥ ५ ॥

रा० टी०—तत इति । ततः शत्रुघ्नरोदनश्रवणानन्तरं भर्तृव्यसनकर्षिताः अत एव दीनाः क्षीणचित्ताः अत एव उपवासकृशाः सर्वा भरतस्य मातरः समापेतुः भरतस्य समीपं प्रापुः ॥ ६ ॥

गो० टी०—तदवस्थमिति । अन्तरस्थितः निरन्तरं समीपे स्थितः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—अनुसृत्य समीपं प्राप्य ॥ ७ ॥

रा० टी०—ता इति । ताः भरतमातरः रुदन्त्यः सत्यः भूमौ पतितं तं भरतं पर्यवारयन् परिवृत्य अतिष्ठन् कौशल्या तु एनं भरतमनुसृत्य उत्थाप्य परिषस्वजे ॥ ७ ॥

गो० टी०—ता इति । अनुसृत्य समीपं प्राप्य ॥ ६ ॥

८ ] ति० टी०—स्वं वत्सं स्वपुत्रं यथा तथोपगुह्य ॥ ८ ॥

रा० टी०—वत्सलेति । वत्सला धेनुः स्वं वत्समिव उपगुह्य शोकलालसा शोकव्याप्ता तपस्विनी अतिविचारशीला कौशल्या भरतं परिपप्रच्छ ॥ ८ ॥

गो० टी०—वत्सलेति । उपगुह्य परिष्वज्य ॥ ७ ॥

९–१० ] ति० टी०—व्याधिः पित्तप्रकोपादिलक्षणो भ्रममूर्छादिः ॥ ९ ॥ १० ॥

रा० टी०—प्रश्नाकारमाह—पुत्रेति । हे पुत्र ! ते शरीरं व्याधिस्तु कच्चिन्न बाधते अस्य राजकुलस्य जीवितं स्थितिः त्वदधीनम् ॥ ९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—त्वामिति । हे पुत्र ! राज्ञि वृत्ते साकेतं प्राप्ते सति सभ्रातृके रामे गते वनं प्राप्ते सति एकस्त्वमेव नोऽस्माकं नाथः ॥ १० ॥

गो० टी०—पुत्रेति । नहि भरतस्य व्याधिशङ्कातुर्यैकः अपि तु रामविरह एव रामविरहः ते शरीरं बाधते कच्चिदित्यर्थः । अद्येति । रामो वनं गतः चक्रवर्ती तु संस्थितः अतस्त्वमेव-

१ पपातेति गो. पाठः । २ शतैरिति गो. पाठः । ३ श्लोकोऽयं गो. नास्ति । ४ रुदन्त्य इति गो. रा. पाठः । ५ गूह्येति गो. रा. पाठः । ६ रुदन्तीति गो. रा. पाठः । ७ परीति गो. पाठः । ८ चेति गो. पाठः ।

कच्चिन्न लक्ष्मणे पुत्र श्रुतं ते किंचिदप्रियम् । पुत्रे वा ह्येकपुत्रायाः सहभार्ये वनं गते ॥ ११ ॥
स मुहूर्तं समाश्वस्य रुदन्नेव महायशाः । कौसल्यां परिसान्त्व्येदं गुहं वचनमब्रवीत् ॥ १२ ॥
भ्राता मे क्वावसद्रात्रिं क्व सीता क्व च लक्ष्मणः । अस्वपच्छयने कस्मिन्किं भुक्त्वा गुह शंस मे ॥ १३ ॥
सोऽब्रवीद्भरतं हृष्टो निषादाधिपतिर्गुहः । यद्विधं प्रतिपेदे च रामे प्रियहितेऽतिथौ ॥ १४ ॥
अन्नमुच्चावचं भक्ष्याः फलानि विविधानि च । रामायाभ्यवहारार्थं बहुशोऽपहृतं मया ॥ १५ ॥
तत्सर्वं प्रत्यनुज्ञासीद्रामः सत्यपराक्रमः । न हि तत्प्रत्यगृह्णात्स क्षत्रधर्ममनुस्मरन् ॥ १६ ॥
नह्यस्माभिः प्रतिग्राह्यं सखे देयं तु सर्वदा । इति तेन वयं सर्वे अनुनीता महात्मना ॥ १७ ॥

---

दानीमस्माकं रक्षक इति नार्थः । किंतु रामो भवतो मुखवैवर्ण्यं दृष्ट्वा न पुनरनागतो भवेत् अवश्यमागमिष्यतीत्येतदवेक्ष्य वयं जीवामः भवान्नास्तीति श्रुतं चेत् क इमां दिशमवलोकयेत्॥८॥९॥

११ ] ति० टी०—भ्रममूर्छादेः कारणान्तरं पृच्छति—कच्चिदिति। अप्रियं प्राणात्ययरूपम् एकपुत्रायाः ममेति शेषः॥११॥

रा० टी०—शोकहेतुं पृच्छति—कच्चिदिति । वनं गते लक्ष्मणे एकपुत्राया मम सहभार्ये पुत्रे वा किंचिदप्रियं कच्चिन्न श्रुतम्, किंच हे पुत्र! सहभार्ये भार्यासहिते वनं गते एकपुत्राया मम पुत्रे पुत्रसमीपे विद्यमाने लक्ष्मणे किंचिदप्रियं कच्चिन्न श्रुतम् ॥ ११ ॥

गो० टी०—कच्चिदिति । लक्ष्मणे विषये ते त्वया एकपुत्रायाः ममेति शेषः ॥ १० ॥

१२–१३]ति०टी०—मुहूर्तं विसंज्ञः सन्पश्चात्समाश्वस्येत्यर्थः, परिसान्त्व्य त्वच्छङ्कितं किमपि नास्ति, किं तु तयोर्जटाधारणश्रवणजदुःखेन मूर्छितोऽस्मीत्युक्त्वा ॥ १२ ॥ १३ ॥

रा० टी०—स इति । सः कौशल्यया प्रतिबोधितो भरतः मुहूर्तं रुदन्नेव समाश्वास्य स्वास्थ्यं प्राप्य कौशल्यां परिसान्त्व्य इदं वचनमब्रवीत् ॥ १२ ॥

रा० टी०—वचनाकारमाह—भ्रातेति । रात्रिं मे भ्राता क्व अवसत् किं भुक्त्वा कस्मिन् शयने अस्वपत् इति मे शंस कथय ॥ १३ ॥

गो० टी०—स इति । परिसान्त्व्य त्वच्छङ्कितं किमपि न भवेदिति वदन् परिसान्त्व्येत्यर्थः ॥ ११ ॥ १२ ॥

१४ ] ति० टी०—हृष्टो लक्ष्मणवद्भरतस्यापि पूर्णभ्रातृभक्तिदर्शनेन तुष्टः यद्विधं यादृशं व्यवहारं रामे प्रतिपेदे कृतवांस्तमब्रवीद्रामकृतं चेत्यन्वयः ॥ १४ ॥

रा० टी०—स इति । सः भरतेन पृष्टः अत एव हृष्टः निषादाधिपतिर्गुहः प्रियहिते प्रियः स्वविषयकप्रीतिमान् हितः स्वप्रीतिविषयीभूतः स एव स इति कर्मधारयः तस्मिन्नतिथौ रामे यद्विधं यादृशं सेवनं प्रतिपेदे प्राप चकारेत्यर्थः, तादृशमब्रवीत् ॥ १४ ॥

गो० टी०—स इति । गुहः हृष्टः रामवृत्तान्तकीर्तनस्यावकाशो लब्ध इति संजातहर्षः सन् रामे यद्विधं यादृशमुपचारादिकं प्रतिपेदे अकरोदिति यावत् तदब्रवीत्, चकारेण रामकृतं समुच्चीयते ॥ १३ ॥

१५ ] ति० टी०—तमेवाह—अन्नमित्यादि ॥ १५ ॥

रा० टी०—सेवाकारमाह—अन्नमिति । उच्चावचमनेकविधमन्नमोदनं भक्ष्या अपूपादयः बहुशः फलमूलानि च अभ्यवहारार्थं रामाय मयापहृतं प्रापितम् ॥ १५ ॥

गो० टी०—अन्नमिति । उच्चावचं नानाविधमित्यर्थः भक्षाः भक्षणीयानि अपूपादीनि अभ्यवहारार्थं भोजनार्थं बहु चेति अन्यच्च बहु चोष्यलेह्यादिकमुपाहृतम् ॥ १४ ॥

१६ ] ति० टी०—प्रत्यनुज्ञासीन्मदनुग्रहार्थं केवलमङ्गीकृत्य पुनर्मह्यमेव दत्तवान् । क्षत्रधर्ममप्रतिग्रहरूपम् । न प्रत्यगृह्णादभ्यवहाराय न स्वीकृतवान् ॥ १६ ॥

रा० टी०—तदिति । क्षत्रधर्मं क्षतो यमदूतकर्तृकहिंसनात् त्रायते स्वसंगिजनं रक्षतीति क्षत्रं भागीरथीतीरं तत्र यो धर्मः अन्यदीयवस्तुग्रहणान्निवृत्तिः तम्, किंच क्षत्राणामुपदेशद्वारा संसारदुःखाद्रक्षकाणां मनुप्रभृतीनामुक्तो यो धर्मः भागीरथीतीरे अन्यदीयवस्तुग्रहणान्निवृत्तिः तमनुस्मरन् बोधयन् सन् तदन्नादिकं सर्वं प्रत्यनुज्ञासीत् न भक्षयिष्यामीति प्रतिज्ञां कृतवान् अतः तन्मदुपहृतमन्नादिकं न प्रत्यगृह्णात् ॥ १६ ॥

गो० टी०—तत्सर्वमिति । रामः तत्र प्रत्यगृह्णात् किंतु तत्सर्वं प्रत्यनुज्ञासीत् प्रत्यन्वज्ञासीत् पुनर्नीयतामित्यनुज्ञातवान् क्षत्रधर्मं दानमेव क्षत्रधर्मः न त्वादानमिति अत्र हीनजातिपरिग्रहत्वात्तत्प्रत्याख्यानम् ऋषिभ्यस्तु स्वीकरिष्यतीत्याहुः ॥ १५॥

१७ ] ति० टी०—तमेव धर्ममाह—नहीति । नन्वेवं भरद्वाजादिदत्ताङ्गीकारः कथमिति चेन्न, मधुपर्कादिना राजपूजाया ब्राह्मणं प्रति विधानेन तद्दत्ताङ्गीकारस्य स्वाभ्युदयफलकत्वेन च तस्य युक्तत्वात् गुहस्य निषादत्वेन राजपूजानधिकारात् अस्वदेश्यत्वेन करग्रहणायोग्यत्वाच्च तदीयानङ्गीकार इति न दोषः । यद्यपि गुहस्य तत्त्वज्ञत्वे नास्त्येव भगवत्पूजाधिकारस्तथापि व्रतस्थत्वात्तद्भोजनमिति तत्त्वम् ॥ १७ ॥

रा० टी०—अन्नादिग्रहणाभावबोधकं रामवचनमाह—नहीति । हे सखे ! सर्वदा गङ्गातीरप्राप्तिकाले देयं वस्तु अन्ना-

---

१ न्विति गो. पाठः । २ समाश्वास्येति रा. पाठः । ३ रात्राविति गो. पाठः । ४ भक्षा इति गो. पाठः । ५ फलमूलानि चैव हीति रा. पाठः । ६ न्विति गो. पाठः । ७ राजन्निति गो. पाठः ।

लक्ष्मणेन यैदानीतं पीतं वारि महात्मना । औपवास्यं तदाऽकार्षीद्राघवः सह सीतया ॥ १८ ॥
ततस्तु जलशेषेण लक्ष्मणोऽप्यकरोत्तदा । वाग्यतास्ते त्रयः संध्यां समुपासन्त संहिताः ॥ १९ ॥
सौमित्रिस्तु ततः पश्चादकरोत्स्वास्तरं शुभम् । स्वयमानीय बर्हींषि क्षिप्रं राघवकारणात् ॥ २० ॥
तस्मिन्समाविशद्रामः स्वास्तरे सह सीतया । प्रक्षाल्य च तयोः पादौ व्यपाक्रामत्सलक्ष्मणः ॥ २१ ॥
एतत्तदिङ्गुदीमूलमिदमेव च तत्तृणम् । अँस्मिन्रामश्च सीता च रात्रिं तां शयितावुभौ ॥ २२ ॥
नियम्य पृष्ठे तु तलाङ्गुलित्रवाञ्शरैः सुपूर्णाविषुधी परंतपः ।
महद्धनुः सज्जमुपोह्य लक्ष्मणो निशामतिष्ठत्परितोऽस्य केवलम् ॥ २३ ॥

दिकमस्माभिर्न प्रतिग्राह्यं दीयते एवेत्यर्थः, इति अनेन प्रकारेण तेन महात्मना रामेण सर्वे वयमनुनीताः प्रत्युक्ताः ॥१७॥

गो० टी०–प्रत्यनुज्ञाने हेतुमाह–नेत्यादिना । इत्यनुनीता वयमित्यनेन स्वाङ्घ्रिभक्ताग्रेसरगुहसमर्पितफलादेर्भक्तिपूतत्वेन शबरीविदुरादिन्यायेन परमभागवततया स्वीकार्यत्वेऽपि स्वप्रियतमपितृमातृप्रमुखबहुजनविश्लेषदुःखप्राग्भारानुभवजनितवैमनस्येन पुण्यनदीतीरे उपवासचिकीर्षया च गुहसमर्पितं न प्रतिजग्राह राम इति च गुहेनापि विदितमिति गम्यते ॥ १६ ॥

१८] ति० टी०–औपवास्यमुपवासं स्वार्थे ष्यञ् ॥ १८ ॥

रा० टी०–लक्ष्मणेति । लक्ष्मणेन यद्वारि आनीतं तदेव महात्मना रामेण पीतमतः उपवासं तीर्थविधिप्रयुक्तभोजनाभावमेवाकार्षीत् क्षत्रधर्ममप्रतिग्रहरूपामिति भट्टाद्युक्तिस्तु चिन्त्या शबर्यादिफलानामग्रहणापत्तेः भरद्वाजाश्रमस्य तु तदानीमपि प्रवाहादूरवर्तित्वान्न तदीयवस्तुनो निषेधविषयतेति दिक् ॥१८॥

गो० टी०–लक्ष्मणेनेति । औपवास्यम् उपवासं स्वार्थे ष्यञ् ॥ १७ ॥

१९ ] ति० टी०–अकरोत् पानक्रियामिति शेषः । त्रयः सुमन्त्रेण सहिताः समाहितचित्ताः ॥ १९ ॥

रा० टी०–तत इति । ततः सीतारामजलपानानन्तरं जलशेषेण रामकर्तृकपानोर्वरितजलेन लक्ष्मणोऽपि अकरोत्, तीर्थविधिमिति शेषः । संहिताः सहिताः वाग्यताः त्रयो रामादयः संध्यां समुपासत ॥ १९ ॥

गो० टी०–तत इति । जलशेषेण रामपीतजलशेषेण अकरोत्पानमिति शेषः । वाग्यताः नियतवाचः सीताया अपि संध्यायां ध्यानजपादिकमस्त्येव संहिताः समाहिताः । ननु पूर्वं गुहोवादे ततश्चीरोत्तरासङ्गः संध्यामन्वास्य पश्चिमाम् । जलमेवादद भोज्यं लक्ष्मणेनाहृतं स्वयम् ॥ इत्युक्तं कथमत्रानुवादे प्रथमं जलादानं पश्चात्संध्योपासनं चोच्यते सत्यं तथैव क्रमः इह तु गुहानीतान्नानङ्गीकारे किं भुक्तवान् राम इत्याकाङ्क्षायां लक्ष्मणेन यद्वार्यानीतं तत्पीतमिति प्रसक्तसंगत्या जलपानं प्रथममुक्त्वाऽथ संध्योपासनमुक्तमिति न दोषः ॥ १८ ॥

२० ] ति० टी०–ततः पश्चात्संध्यावन्दनोत्तरम् । बर्हींषि दर्भान्, स्वास्तरं शयनम् ॥ २० ॥

रा० टी०–सौमित्रिरिति । ततः पश्चात्संध्योपासनानन्तरं सौमित्रिः लक्ष्मणः क्षिप्रं बर्हींषि दर्भादीनानीय राघवकारणात् राघवहेतोः स्वास्तरं शोभनमास्तरणमकरोत् ॥ २० ॥

गो० टी०–सौमित्रिरिति । ततः पश्चात् वारिपानानन्तरं स्वयं बर्हींषि कुशान् 'बर्हिर्नाग्नौ न ना कुशे' इति वैजयन्ती । क्षिप्रमानीय राघवकारणात् राघवनिमित्तं शुभं पवित्रं स्वास्तरं सुष्ठु आस्तीर्णं शयनमिति यावत् अकरोत् कृतवान् ॥ १९ ॥

२१–२२ ] ति० टी०–व्यपाक्रामत् शयनप्रदेशाद्बहिर्दूरमिति शेषः ॥ २१ ॥ २२ ॥

रा० टी०–तस्मिन्निति । तस्मिन् लक्ष्मणेन कृते स्वास्तरे सीतया सह रामः समाविशत् तयोः सीतारामयोः पादौ प्रक्षाल्य लक्ष्मणः व्यपाक्रामत् रामशयनात् किंचिद्दूरं प्राप्य अतिष्ठत् ॥ २१ ॥

गो० टी०–तस्मिन्निति । पादौ प्रक्षाल्य गङ्गातीरगमनकृतपङ्कशोधनं कृत्वेत्यर्थः, इदं च रामस्य स्वहस्ताभ्यां सीतायास्तूदकप्रदानेनेति बोध्यम् । अपचक्राम शयनकाले समीपवर्तनस्यानुचितत्वात् दूरे स्थितः ॥ २० ॥

रा० टी०–एतदिति । तदिङ्गुद्याः वृक्षविशेषस्य मूलमंतदेव तत् तृणमिदमेव । ननु किमेतत्कथनेनेत्यत आह–अस्मिन् इङ्गुदीमूलस्थतृणास्तरणे तां रात्रिमुभौ रामः सीता च शयितौ ॥ २२ ॥

गो० टी०–एतदिति । शयितौ "गत्यर्थाकर्मकश्लिषशीङ्" इत्यादिना कर्तरि निष्ठा ॥ २१ ॥

२३ ] ति० टी०–इषुधी पृष्ठे बद्ध्वा तलयोः करतलयोरङ्गुलित्राणवान् सज्जं धनुरुपोह्य धृत्वास्य परितो भ्रमन्नतिष्ठत् केवलं निद्रारहितः ॥ २३ ॥

रा० टी०–नियम्येति । तलाङ्गुलित्रवान् तलं ज्याघातवारणमङ्गुलित्रमङ्गुलित्राणं तदुभयविशिष्टः परंतपो लक्ष्मणः शरैः बाणैः पूर्णौ इषुधी तूणीरौ पृष्ठे पश्चाद्भागे नियम्य बद्ध्वा सज्यं ज्यासहितं महद्धनुः उपोह्य संधार्य अस्य सीतारामस्य परितश्चतुर्दिक्षु केवलं सहायान्तरानाकाङ्क्षन् यथा स्यात्तथा निशां रात्रिमतिष्ठत् "कालाध्वनोः–" इति विहिता द्वितीया 'तले ज्याघातवारणम्' इत्यमरः ॥ २३ ॥

१ समानीतं पीत्वा वारि महायशा इति गो. पाठः । २ उपवासमिति रा. पाठः । ३ समुपासतेति गो. रा. पाठः । ४ पादावपचक्रामेति गो. पाठः । ५ तस्मिन्निति गो. पाठः ।

ततस्त्वहं चोत्तमबाणचापभृत्स्थितोऽभवं तत्र स यत्र लक्ष्मणः ।
अतन्द्रितैर्ज्ञातिभिरात्तकार्मुकैर्महेन्द्रकल्पं परिपालयं तदा ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

## अष्टाशीतितमः सर्गः ।

कौसल्यादीन्प्रति रामोपभुक्तकुशमयशयनीयं प्रदर्श्य संस्मृततद्वैभवो भरतस्तं परिशोचन्नात्मोपलम्भनपूर्वकं लक्ष्मणादीन्प्रशस्य रामं निवर्तयितुं बहुशः प्रयतमानोऽपि रामेण तदनङ्गीकारादद्यारभ्याहं जटाधारी रामप्रतिनिधित्वेन वन एव निवत्स्यामीति प्रतिजज्ञे ।

तच्छ्रुत्वा निपुणं सर्वं भरतः सह मन्त्रिभिः । इङ्गुदीमूलमागम्य रामशय्यामवेक्षत ॥ १ ॥
अब्रवीज्जननीः सर्वा इह तेस्य महात्मनः । शर्वरी शयिता भूमाविदमस्य विमर्दितम् ॥ २ ॥
महाराजकुलीनेन महाभागेन धीमता । जातो दशरथेनोर्व्यां न रामः स्वप्तुमर्हति ॥ ३ ॥
अजिनोत्तरसंस्तीर्णे वरास्तरणसंचये । शयित्वा पुरुषव्याघ्रः कथं शेते महीतले ॥ ४ ॥

गो० टी०–नियम्येति । पृष्ठे पश्चाद्भाग इषुधी तूणीरद्वयं नियम्य बद्ध्वा शराणां सव्यापसव्यप्रयोगार्थमिषुधिद्वयधारणमस्ति तलाङ्गुलित्रवान् 'तलं ज्याघातवारणम्' इत्यमरः । उपोष्य भूत्वा अस्य परितो तिष्ठन् सर्वतो रक्षणार्थं प्रदक्षिणं चचारेत्यर्थः, निशां निशायाम् अत्यन्तसंयोगे द्वितीया, केवलमित्यनेन शयननिद्राराहित्यं लक्ष्मणस्योच्यते ॥ २२ ॥

२४ ] ति० टी०–परिपालयं पर्यपालयम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

रा० टी०–तत इति । ततः लक्ष्मणसेवादर्शनानन्तरं यत्र लक्ष्मणस्तत्र उत्तमबाणचापभृत् अतन्द्रितैः निद्रारहितैः आत्तकार्मुकैः गृहीतधनुर्भिः ज्ञातिभिरुपलक्षितोऽहं महेन्द्रकल्पं रामं परिकल्पयन् रक्षन् सन् स्थितः अभवम् ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

गो० टी०–तत इति । अहं चोत्तमबाणचापधृत् एको भ्राता नगरात् वनानि निरगमयत् अयमपरः सुप्तदशायां किमपि कुर्यादिति शङ्कया सज्जायुधः सन्यत्र यत्र स लक्ष्मणः स्थितः तत्र तत्र स्थितोऽभवं प्रतिपदं तमनुसृतवानभवमित्यर्थः । अतन्द्रिभिर्ज्ञातिभिरात्तकार्मुकैः मम परिकराश्च अयं वनचरो निषादजातीयः रामे किंचित्करिष्यति चेद् एनं च प्रहराम इति सावधाना मां प्रतिपदमन्वसरन्नित्यर्थः । एवमस्थाने भयशङ्किभिः कृतं वस्तुतः स न केनचित्परिभाव्य इत्याह–महेन्द्रकल्पमिति ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने ऽयोध्याकाण्डव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥

१ ] ति० टी०–तदिति ॥ १ ॥

रा० टी०–निषादवचनश्रवणानन्तरकालिकं भरतवृत्तान्तमाह–तदित्यादिभिः । निपुणं सुयुक्तं तन्निषादभाषितं सर्वं श्रुत्वा मन्त्रिभिः सह भरतः इङ्गुदीमूलमागम्य रामशय्याम् अवैक्षत ॥ १ ॥

गो० टी०–तदित्यादिश्लोकद्वयमेकं वाक्यम् । निपुणं सावधानमित्यर्थः, तेन रामेण इह भूमौ शर्वरी शयिता शर्वर्यां शयनं कृतं निष्ठया अधिकरणत्वस्याभिहितत्वाच्छर्वरीशब्दात् प्रथमा इदमेषामासितमितिवत् इदमस्य विमर्दितमित्यत्राप्यधिकरणे निष्ठा "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी । अस्मिन्नेतत्कर्तृकं विमर्दनमित्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०–इह भूमौ शर्वरी शयिता अधिकरणे निष्ठा, एतद्देशावच्छिन्नशयनाधिकरणं शर्वरीत्यर्थः । इदमस्य विमर्दितम् अङ्गानामिति शेषः, विमर्दनाधिकरणमित्यर्थः ॥ २ ॥

रा० टी०–अब्रवीदिति । इह अस्यां भूमावेव महात्मनस्तस्य रामस्य शर्वरी रात्रिः शयिता अधिकरणे निष्ठा अत एव कर्तरि षष्ठी, अस्य विमर्दितं शयनमिदमेव ॥ २ ॥

३ ] ति० टी०–उक्तविशेषणेन दशरथेन हेतुना जातो नोर्व्यां स्वप्तुमर्हति ॥ ३ ॥

रा० टी०–तादृशशयनस्यानौचित्यं बोधयन्नाह–महाराजेति । महाराजकुलीनेन महाराजकुलोद्भवेन दशरथेन जातः प्रादुर्भूतो रामः उर्व्यां प्रासादपर्यङ्कादिरहितभूमौ स्वप्तुं नार्हति ॥ ३ ॥

गो० टी०–महाभागेति । महाभागेन महानुभावेन दशरथेनेति पञ्चम्यर्थे तृतीया ॥ ३ ॥

४ ] ति० टी०–अजिनेन राजार्हकन्दलीचमूर्वादिमृगाजिनविशेषरूपेणोत्तरेण मध्योत्तरच्छदेन संस्तीर्णे तानि चाजिनानि शीतोष्णयोरुष्णशीते । वरास्तरणानां कार्पासवस्त्ररत्नकम्बलाद्यास्तरणानां संचयः समूहो यत्र पर्यङ्के, शीतकाल औष्ण्यार्थं तद्बाहुल्यम् ॥ ४ ॥

१ भृदिति गो. पाठः । २ अतन्द्रिभिरिति गो. पाठः । ३ पालयंस्तदेति गो. पाठः । ४ अवेक्ष्य तामिति गो. पाठः । ५ तेन महात्मनेति गो. पाठः । ६ भागेति गो. पाठः ।

प्रासादाग्रविमानेषु वलभीषु च सर्वदा । हैमराजतभौमेषु वरास्तरणशालिषु ॥ ५ ॥
पुष्पसंचयचित्रेषु चन्दनागुरुगन्धिषु । पाण्डुराभ्रप्रकाशेषु शुकसंघरुतेषु च ॥ ६ ॥
प्रासादवरवर्येषु शीतवत्सु सुगन्धिषु । उषित्वा मेरुकल्पेषु कृतकाञ्चनभित्तिषु ॥ ७ ॥
गीतवादित्रनिर्घोषैर्वराभरणनिःस्वनैः । मृदङ्गवरशब्दैश्च सततं प्रतिबोधितः ॥ ८ ॥
बन्दिभिर्वन्दितः काले बहुभिः सूतमागधैः । गाथाभिरनुरूपाभिः स्तुतिभिश्च परंतपः ॥ ९ ॥
अश्रद्धेयमिदं लोके न सत्यं प्रतिभाति मा । मुह्यते खलु मे भावः स्वप्नोऽयमिति मे मतिः ॥ १० ॥

रा० टी०–अजिनेति । अजिनोत्तरसंस्तीर्णे अजिनं राजोत्तरास्तरणयोग्यातिमृदु मृगविशेषचर्म उत्तरमुत्तरास्तरणं तेन संस्तीर्णे आच्छादिते वराणां बहुमूल्यानामास्तरणानां संचयो यस्मिंस्तस्मिन् पर्यङ्के शयित्वा महीतले कथं शेते अनुचितमेतदित्यर्थः ॥ ४ ॥

गो० टी०–अजिनोत्तरसंस्तीर्ण इति । अजिनोत्तरसंस्तीर्णे अजिनरूपोत्तरच्छदेन संस्तीर्णे अजिनशब्देन 'कदलीकन्दलीचीनश्चमूरुप्रियकावपि । समूरुश्चेति हरिणा अमी अजिनयोनयः' इत्युक्तकदल्याद्यजिनं विवक्षितं वरास्तरणसंचये वराणि अमूल्यानि आस्तरणानि येषु पर्यङ्केषु तेषां संचये समूहे पर्यङ्कानां बहुत्वं शीतोष्णादि कालोचितान्तर्गृहशिरोगृहादिबाहुल्यात्, यद्वा मार्दवातिशयायानेकास्तरणत्वम् अतिमृदुत्वादजिनस्योपर्यास्तरणत्वम् ॥ ४ ॥

५ ] ति० टी०–प्रासादाग्रविमानेषु विमानाकारप्रासादाग्रगृहेषु वलभी कूटागारम् हैमानि राजतानि च भौमानि भूतलानि येषु ॥ ५ ॥

रा० टी०–प्रासादेति । हैमानि हेमनिर्मितानि राजतानि रजतनिर्मितानि भौमानि भूतलानि येषु वराणां बहुमूल्यानामास्तरणानां शालिषु आश्रयेषु प्रासादाग्रविमानेषु प्रासादाकारोत्तमविमानेषु वलभीषु कूटागारेषु च ॥ ५ ॥

गो० टी०–प्रासादाग्रविमानेष्वित्यादि । प्रासादाग्रविमानेषु विमानतुल्यप्रासादशिखरेषु वलभीषु कूटागारेषु 'कूटागारे तु वलभी' इति वैजयन्ती । हैमराजतभौमेषु हैमानि राजतानि भौमानि भूतलानि येषु ते, वरास्तरणशालिषु चित्रकम्बलादिशालिषु पुष्पसंचयचित्रेषु चित्रपुष्पसमूहेषु चन्दनागरुगन्धिषु चन्दनागरुधूपगन्धिषु पाण्डुराभ्रप्रकाशेषु तद्वद्धवलेषु शुकसंघरुतेषु शुकसमूहनादवत्सु अर्शआदित्वादच् मत्वर्थीयः । प्रासादवरवर्येषु प्रासादवराणामुत्तमेषु शीतवत्सु शैत्यवत्सु 'शीतं गुणे तद्वत्' इत्यमरः । सुगन्धिषु घनसारादिभिरिति शेषः, उषित्वा शयित्वेत्यर्थः उपरि प्रतिबोधोक्तेः मेरुतुल्यत्वे हेतुः–कृतकाञ्चनभित्तिष्विति । गीतवादित्रनिर्घोषैः गीतैस्तदनुगुणवीणादिरवैः वराभरणनिस्वनैः परिचारिकापाणिचरणनूपुरकङ्कणाद्याभरणसिञ्जितैः मृदङ्गवरशब्दैः मर्दलविशेषध्वनिभिश्च सततं प्रतिबोधितः अथ प्रबोधनानन्तरं काले प्रातःकाले बन्दिभिः कर्तृभिः सूतमागधैश्च गाथाभिः गद्यविशेषैः । पाठभेदः पद्यविशेषैः स्तुतिभिः स्तोत्रप्रबन्धैश्च वन्दितः स्तुतः 'वदि अभिवादनस्तुत्योः' इति धातुः परंतपः अन्यराजशिक्षणपरो रामः । पाठभेदः अथ राज्यशिक्षणपरो रामः कथं भूमौ केवलायां शेते कथं श्वापदरवैः प्रतिबोध्यते कथमेकाकी तिष्ठतीति चोपस्कार्यं गम्यमानत्वादप्रयोगः 'यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः ॥' इत्यादिवत् ॥ ५–९ ॥

६ ] ति० टी०–शुकसंघरुतेषु तद्रुतवत्सु ॥ ६ ॥

रा० टी०–पुष्पाणां संचयेन समूहेन चित्राणि तेषु चन्दनागरूणां गन्धो येषु पाण्डुराभ्रवत्प्रकाशो येषां तेषु शुकसंघानां रुताः शब्दा येषु तेषु ॥ ६ ॥

७ ] ति० टी०–प्रासादवराणां प्रासादश्रेष्ठानां मध्ये वर्येषु श्रेष्ठेषु तेषूषित्वा कथं भूमौ शेत इति संबन्धः ॥ ७ ॥

रा० टी०–शीतवत्सु यथेच्छं स्वाभाविकशैत्ययुक्तेषु सुगन्धिषु स्वाभाविकगन्धविशिष्टेषु मेरुकल्पेषु सुमेरुसदृशेषु कृताः काञ्चनभित्तयो येषु प्रासादवरवर्येषु अत्युत्तमप्रासादेषु च उषित्वा ॥ ७ ॥

८–९ ] ति० टी०–वराभरणानां परिचारिकानूपुराद्याभरणानां निःस्वनैर्गीतादिशब्दैः स्तुतिभिश्च प्रतिबोध्यमानः कथं भूमौ केवलं शेत इति संबन्धः ॥ ८–९ ॥

रा० टी०–वराभरणानां परिचारिकाद्याभरणानां निःस्वनाः शब्दाः येषु तैर्गीतवादित्रनिर्घोषैः मृदङ्गवरशब्दैश्च प्रतिबोधितः ॥ ८ ॥

रा० टी०–काले बन्दिभिर्बहुभिः सूतमागधैश्च अनुरूपाभिः योग्याभिः गाथाभिः प्रबन्धैः स्तुतिभिर्वंशप्रशंसावचनैश्च वन्दितः परंतपो रामः भूमौ कथं शेते इत्यनुकर्षः । पञ्चानामेकत्रान्वयः ॥ ९ ॥

१० ] ति० टी०–इदं रामस्य भूशयनम् । लोकेऽश्रत्यजनेषु तन्मध्ये तन्मुखाच्छ्रुतमप्यश्रद्धेयमेव । तदेव विवृणोति–मा मां सत्यं न प्रतिभाति । तस्मादेतद्विषये भावोऽन्तःकरणं मुह्यते, मम मोह इत्यर्थः । अथवा स्वप्नोऽयं भवितुमर्हतीति मतिः । स्वप्ने ह्यसंभावितमपि संभाव्यते ॥ १० ॥

रा० टी०–अश्रद्धेयमिति । इदं रामभूशयनं मा मां सत्यं

१ अगर्वितेति गो. रा. पाठः ।

न नूनं दैवतं किंचित्कालेन बलवत्तरम् । यत्र दाशरथी रामो भूमावेवमशेत सः ॥ ११ ॥
यस्मिन्विदेहराजस्य सुता च प्रियदर्शना । दयिता शयिता भूमौ स्नुषा दशरथस्य च ॥ १२ ॥
इयं शय्या मम भ्रातुरिदमावर्तितं शुभम् । स्थण्डिले कठिने सर्वं गात्रैर्विमृदितं तृणम् ॥ १३ ॥
मन्ये साभरणा सुप्ता सीतास्मिञ्शयने शुभा । तत्र तत्र हि दृश्यन्ते सक्ताः कनकबिन्दवः ॥ १४ ॥
उत्तरीयमिहासक्तं सुव्यक्तं सीतया तदा । तथा ह्येते प्रकाशन्ते सक्ताः कौशेयतन्तवः ॥ १५ ॥
मन्ये भर्तुः सुखा शय्या येन बाला तपस्विनी । सुकुमारी सती दुःखं न विजानाति मैथिली ॥ १६ ॥
हा हतोऽस्मि नृशंसोऽस्मि यत्सभार्यः कृते मम । ईदृशीं राघवः शय्यामधिशेते ह्यनाथवत् ॥ १७ ॥
सार्वभौमकुले जातः सर्वलोकसुखावहः । सर्वप्रियकरस्त्यक्त्वा राज्यं प्रियमनुत्तमम् ॥ १८ ॥
कथमिन्दीवरश्यामो रक्ताक्षः प्रियदर्शनः । सुखभागी न दुःखार्हः शयितो भुवि राघवः ॥ १९ ॥

न प्रतिभाति अत एव अश्रद्धेयमत एव भावो मम मनः सुश्यते श्रुत्वेति शेषः, अतः अयं स्वप्नः इति मे मतिर्निश्चयः एतेन रामस्य नित्यं सर्वसामग्रीपूर्णत्वं व्यक्तं तेन अघटितघटनापटीयस्त्वं व्यक्तम् ॥ १० ॥

गो० टी०—अश्रद्धेयमिति । इदं रामस्य तृणशय्याशयनादिकम् अश्रद्धेयं लोके पश्यामि 'लोकृ दर्शने' इति धातुः। तत्र हेतुमाह—न सत्यमिति । किं च मे भावः हृदयं क्षुभ्यते खलु मुह्यति किंतु रामस्य भूमिशयनश्रवणादिकं भ्रमो वेत्यर्थः, अथवा अयं पूर्वोक्तश्रवणं स्वप्नापेक्षया पुंलिङ्गत्वं स्वप्न इति मे मतिः मतं सिद्धान्त इत्यर्थः कथमन्यथा सर्वमिदमसंभाव्यं संभाव्यत इति भावः ॥ १० ॥

११ ] ति० टी०—कालेन कालतो बलवत्तरं किंचित्किमपि दैवतं नास्तीति नूनं मन्ये । यत्र काले प्राप्ते सति रामोऽपि भूमावशेत ॥ ११ ॥

रा० टी०—सत्यत्वमङ्गीकृत्याह—नेति । कालेन कालात्परमात्मेच्छाया बलवत्तरं किंचिद्दैवतं न यत्र यस्मिन् सति रामो भूमौ अशेत ॥ ११ ॥

गो० टी०—नेति । कालेन कालात् दैवतं बलवत्तरं न नूनं काल एव बलीयानित्यर्थः, यत्र यस्मात् दाशरथिः दशरथपुत्रोऽपि भूमावेव शयीत तस्मादित्यर्थः ॥ ११ ॥

१२–१३ ] ति० टी०—यस्मिन्काले दशरथदयिता प्रिया स्नुषा भूमौ शयिता ततो न बलवत्किंचित् ॥ १२ ॥ १३ ॥

रा० टी०—यस्मिन्निति । यस्मिन्परमात्मेच्छारूपकाले सति दशरथस्य स्नुषा सीता भूमौ शयिता ॥ १२ ॥

गो० टी०—विदेहराजस्येति । प्रियदर्शना अतदर्हेत्यर्थः दयिता रामस्य प्राणेभ्योऽपि प्रेयसी शयिता शयितवती कर्तरि क्तः हन्तेति शेषः ॥ १२ ॥

रा० टी०—इयमिति । मम भ्रातुः इयं शय्या इदमावर्तितमावर्तनचिह्नम् । चिह्नमेवाह—कठिने स्थण्डिले विद्यमानं तृणं गात्रैर्विमृदितं क्षुण्णम् ॥ १३ ॥

गो० टी०—इयमिति । परिवर्तितं परिवर्तनं स्वापकाले श्रमातिशयादितस्ततः शरीरपरिवर्तनपदम् । परिवर्तनज्ञापकमाह—स्थण्डिल इति । स्थण्डिले भूतले कठिनस्थलत्वात् गात्रैः विमृदितं क्षुण्णं तृणम् इदमित्यनुषङ्गः ॥ १३ ॥

१४–१५ ] ति० टी०—कनकबिन्दवो भूषणावयवकनकशकलानीति कतकः ॥ १४ ॥ १५ ॥

रा० टी०—मन्य इति । अस्मिन् शयने साभरणा आभरणसहिता सीता सुप्ता इत्यहं मन्ये हि यतः तत्र तत्र शयनस्य प्रदेशे प्रदेशे कनकबिन्दवः कनकाभरणानि सक्ताः रेखारूपेण संलग्ना दृश्यन्ते ॥ १४ ॥

गो० टी०—मन्य इति । साभरणा सुप्ता मार्गश्रमादाभरणमनुन्मुच्य सुप्तवती शयनोत्तमे भर्तृशय्यात्वादितरतल्पेभ्यः श्रेष्ठतमे । साभरणा सुप्तेत्यत्र सूचकमाह—तत्र तत्रेति । तत्र तत्र तृणेषु सक्ताः कनकबिन्दवः जाम्बूनदाभरणनिर्गलिताः सूक्ष्मरेणवः ॥ १४ ॥

रा० टी०—उत्तरीयमिति । इह असक्तं पतितमुत्तरीयं सीतया सुव्यक्तं धृतमित्यर्थः, हि यतः सक्ताः तृणादिषु संलग्नाः एते कौशेयतन्तवः तथा धारणानुमापकतया प्रकाशन्ते । यदि तु आसक्तमिति छेदः तदा संस्थापितमित्यर्थः अस्मिन्नर्थे सुव्यक्तमित्यस्य स्फुटमित्यर्थः ॥ १५ ॥

गो० टी०—उत्तरीयमिति । इह कुशाग्रेषु आसक्तम् इदमासञ्जनं सुव्यक्तं सीतया सीतायाः ॥ १५ ॥

१६ ] ति० टी०—भर्तुः शय्या कोमला वा कठिना वा स्त्रीणां सुखैव मन्ये, यतः—सुकुमारीत्यादि ॥ १६ ॥

रा० टी०—मन्ये इति । भर्तुः रामस्य शय्या सुखा अतिसुखप्रदा इत्यहं मन्ये । तत्र गमकमाह—येन सुखेन हेतुना सुकुमारी अपि सीता दुःखं प्रवासजनितखेदं न विजानाति ॥१६॥

गो० टी०—मन्य इति । या कापि भर्तुः शय्या पतिव्रतायाः सुखेति मन्ये यतः सुकुमारी मैथिली सती पतिव्रता अस्मिन्नपि शयने शयिता दुःखं न जानाति ॥ १६ ॥

१७–१९ ] ति० टी०—मम कृते कैकेयीप्रवृत्तेः स्वानुमतिराहित्येऽपि स्वमुद्दिश्य जातत्वादिति भावः ॥ १७–१९ ॥

१ एव शयीतेति गो. पाठः । २ विदेहराजस्य सुता सीतेति गो. पाठः । ३ हि परिवर्तितमिति गो. पाठः । ४ शयनोत्तम इति गो. पाठः । ५ सर्वलोकस्य संमत इति गो. पाठः । ६ सर्वलोकप्रिय इति गो. पाठः । ७ सुखमिति गो. पाठः ।

धन्यः खलु महाभागो लक्ष्मणः शुभलक्षणः । भ्रातरं विषमे काले यो राममनुवर्तते ॥ २० ॥
सिद्धार्था खलु वैदेही पतिं यानुगता वनम् । वयं संशयिताः सर्वे हीनास्तेन महात्मना ॥ २१ ॥
अकर्णधारा पृथिवी शून्येव प्रतिभाति [1]मे । गते दशरथे स्वर्गे रामे चारण्यमाश्रिते ॥ २२ ॥
न च प्रार्थयते कश्चिन्मनसापि वसुंधराम् । वने निवसतस्तस्य बाहुवीर्याभिरक्षिताम् ॥ २३ ॥
शून्यसंवरणारक्षामयन्त्रितहयद्विपाम् । अनावृतपुरद्वारां राजधानीमरक्षिताम् ॥ २४ ॥
अप्रहृष्टबलां शून्यां विषमस्थामनावृताम् । शत्रवो नाभिमन्यन्ते भक्ष्यान्विषकृतानिव ॥ २५ ॥
अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा । फलमूलाशनो नित्यं जटाचीराणि धारयन् ॥ २६ ॥

---

रा० टी०—हेति । यत् यस्य मम संबन्धिनः कृते प्रयत्ने सति अनाथवत् नाथत्वाभाववानिव ईदृशीं शय्यामधिशेते सोऽहं हतोऽस्मि नृशंसः क्रूरोऽस्मि हा अतिकष्टमेतत् ॥ १७ ॥

गो० टी०—हाहन्तेति । हाहन्तेत्येकनिपातः खेदार्थः अहं नृशंसोऽस्मि निर्दयोऽस्मि मम कृते मन्निमित्तं कृते इत्यव्ययम् ॥ १७ ॥

रा० टी०—कष्टहेतुं वदन्नाह—सार्वभौमेति । सर्वप्रियकरः इन्दीवरश्यामो रामः राज्यं त्यक्त्वा भुवि कथं शयितः । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०—जन्मना शक्तिमत्तया प्रजारञ्जकत्वेन शरीरलक्षणेन च राज्यार्हो रामः कथमेतादृशीं दुर्दशां प्राप्त इति खिद्यति—सार्वभौमकुले जात इत्यादिना श्लोकद्वयेन ॥ १८–१९ ॥

२० ] ति० टी०—विषमे काले संकटकाले ॥ २० ॥

रा० टी०—धन्य इति । विषमे अननुकूले काले यो लक्ष्मणः राममनुवर्तते स धन्यः ॥ २० ॥

गो० टी०—धन्य इति । विषमे काले संकटे काले ॥२०॥

२१] ति०टी०—या पतिमनु अनुसृत्य वनं गता सा सिद्धार्था वयं संशयिता रामसेवाविषयसंशयमापन्नाः कालान्तरप्रार्थनीयसेवत्वात्, इदानीमस्मत्सेवानुमतौ संशयादिति भावः ॥ २१ ॥

रा० टी०—सिद्धार्थेति । या अवनं सर्वरक्षकं पतिमनुगता सा वैदेही सिद्धार्था सिद्धाः अर्थाः प्रयोजनानि यस्याः सा तेन सीतापतिना महात्मना हीनाः वयं संशयिताः प्राप्तसंशयाः अतो न सिद्धार्था इत्यर्थः ॥ २१ ॥

गो० टी०—सिद्धार्थेति । पतिमनु पतिमनुसृत्य वनं गतेति संबन्धः संशयिताः अस्मत्सेवां रामोऽङ्गीकरिष्यति नवेति संशयिताः ॥ २१ ॥

२२ ] ति० टी०—अकर्णधारा नौरिव शून्या प्रवृत्तिशून्या ॥ २२ ॥

रा० टी०—अकर्णेति । अकर्णधारा कर्णधाररहिता नौरिव पृथिवी शून्या प्रतिभाति नौरित्यध्याहृतम् ॥ २२ ॥

गो० टी०—अकर्णधारेति । अकर्णधारा प्रधानपुरुषरहितेति यावत् अत एव शून्येव प्रतिभाति ॥ २२ ॥

२३ ] ति० टी०—कश्चिन्मादृशः ॥ २३ ॥

रा० टी०—न चेति । तस्य रामस्य बाहुवीर्येण अभिरक्षितां वसुन्धरां पृथ्वीं कश्चिदस्मदादिः मनसापि न प्रार्थयते पृथिवीं पालयेयमिति कथंचिदपि नेच्छामीत्यर्थः ॥ २३ ॥

गो० टी०—अनायकत्वे कथं राज्यं निरुपद्रवं तत्राह—नचेति । कश्चित् सामन्तः न प्रार्थयते आक्रमितुं नेच्छति ॥२३॥

२४ ] ति० टी०—शून्यसंवरणारक्षां संवरणानां प्राकाराणामासमन्ताद्रक्षया शून्यां हीनाम् । अनावृतत्वं रक्षकाभावात् ॥ २४ ॥

२५ ] ति० टी०—अप्रहृष्टं बलं यस्याम् अत एव शून्यां क्षीणबलां नाभिमन्यन्ते स्वीकर्तुं नेच्छन्ति अत्र तद्बाहुवीर्यरक्षितत्वं हेतुः ॥ २५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—शून्येति । शून्या अभावप्रतियोगिनी संवरणस्य प्राकारस्य आसमन्तात् रक्षा यस्यां ताम् अयन्त्रिताः अनियमिताः हयद्विपाः यस्यां न आवृतानि पुरद्वाराणि यस्यास्तां न प्रहृष्टानि बलानि सैन्यानि यस्यामत एव न्यूनां क्षीणामत एव विषमस्थां विषमाणामनवस्थितचित्तानां स्थः स्थितिर्यस्यामत एव अनावृतां बाह्यावरणरहितामरक्षितामिदानीं रामकर्तृकरक्षारहितां राजधानीमयोध्यां विषकृतान् भक्ष्यानिव शत्रवो नाभिमन्यन्ते स्वीकर्तुं नेच्छन्ति तेन रामस्य प्रतापातिशयः सूचितः । श्लोकद्वयमेकान्वयि॥२४॥२५॥

गो० टी०—रामवीर्यं विना रक्षकान्तरशून्यत्वमाह—शून्यसंवरणेत्यादि । शून्यसंवरणारक्षाम् अविद्यमानप्राकाररक्षकाम्, यद्वा शून्यसंवरणः शुषिररहितः आरक्षः गुल्मस्थानं यस्याः सा तथा अयन्त्रिताः रक्षकाणां रामपारवश्येन तैरबद्धाः हयद्विपाः यस्यास्ताम् अपावृतानि अपिहितानि पुरद्वाराणि यस्यास्ताम् अप्रहृष्टबलत्वमरक्षितत्वे हेतुः न्यूनां साधनविहीनां विषमस्थां दुर्दशापन्नाम् अनावृतां बाह्यरक्षकरहितां नाभिमन्यन्ते अभिभवितुं न स्मरन्ति । भक्षान् अपूपादीन् विषैः विषमिश्रैः कृतान् ॥ २५ ॥ २६ ॥

२६ ] ति० टी०—अतस्तमेव राज्यार्हमानेष्यामि, यदि स व्रतभङ्गः कथं कार्य इति वदेत्तदा तत्प्रतिनिधितयाहं व्रतमवधास्ये इत्याह—अद्येत्यादि ॥ २६ ॥

---

१ सेति गो. पाठः । २ अपावृतेति गो. पाठः । ३ न्यूनामिति गो. रा. पाठः । ४ भक्षानिति गो. पाठः । ५ खिद्यते इति युक्तं भाति ।

तस्याहमुत्तरं कालं निवत्स्यामि सुखं वने । तत्प्रतिश्रुतमार्यस्य नैव मिथ्या भविष्यति ॥ २७ ॥
वसन्त भ्रातुरर्थाय शत्रुघ्नो मानुवत्स्यति । लक्ष्मणेन सहायोध्यामार्यो मे पालयिष्यति ॥ २८ ॥
अभिषेक्ष्यन्ति काकुत्स्थमयोध्यायां द्विजातयः । अपि मे देवताः कुर्युरिमं सत्यं मनोरथम् ॥ २९ ॥
प्रसाद्यमानः शिरसा मया स्वयं बहुप्रकारं यदि नं प्रपत्स्यते ।
ततोऽनुवत्स्यामि चिराय राघवं वनेचरं नार्हति मामुपेक्षितुम् ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

## एकोननवतितमः सर्गः ।

प्रातर्भरतमनुगतेन गुहेनादिष्टदाशैर्नौवादिभिः प्रतीरं प्रापितान्स्वानुयायिनः प्रयागवने संनिवेश्य भरद्वाजं दिदृक्षुर्भरतो वसिष्ठादिभिः सह तदाश्रमं प्रतस्थे ।

व्युष्य रात्रिं तु तत्रैव गङ्गाकूले स राघवः । काल्यमुत्थाय शत्रुघ्नमिदं वचनमब्रवीत् ॥ १ ॥
शत्रुघ्नोत्थाय किं शेषे निषादाधिपतिं गुहम् । शीघ्रमानय भद्रं ते तारयिष्यति वाहिनीम् ॥ २ ॥

---

रा० टी०–अद्येति । अद्यप्रभृति इतः कालादारभ्य भूमौ विद्यमानेषु तृणेष्वेव अहं शयिष्ये ॥ २६ ॥

गो० टी०–उक्तसर्वानर्थस्य आत्ममूलकतया तत्प्रायश्चित्तमाह–अद्येत्यादि । श्लोकद्वयमेकान्वयम् । तं प्रतिश्रवं तां प्रतिज्ञाम् आमुच्य स्वस्मिन्नासज्य तस्यार्थं रामार्थमित्यर्थः. उत्तरं कालं चतुर्दशवर्षात्मके काले रामानुष्ठितव्यतिरिक्तोत्तरकालं वने वत्स्यामि मिथ्या न भविष्यति प्रतिज्ञेति शेषः॥२६–२८

२७ ] ति० टी०–तस्य व्रतसंकल्पं स्वयं गृहीत्वा तत्परिपालनार्थमुत्तरं कालं चतुर्दशवर्षपर्यन्तमहं वने वत्स्यामि । एवं सति नार्यस्य तत्प्रतिश्रुतं मिथ्या भविष्यति ॥ २७ ॥

रा० टी०–तत्प्रयोजनमाह–तस्येति । तस्य रामस्य प्रतिनिधिरहमुत्तरं कालं सुखं वने वत्स्यामि । तत्फलमाह–तत्प्रसिद्धमार्यस्य प्रतिश्रुतं प्रतिज्ञातं मिथ्या नैव भविष्यति ॥२७॥

२८–२९ ] ति० टी०–वसन्तमिति ॥ २८–२९ ॥

रा० टी०–वसन्तमिति । भ्रातुः अर्थाय आगमनप्रयोजनाय वसन्तं मां शत्रुघ्नोऽनुवत्स्यति आर्यो रामः अयोध्यां पालयिष्यति पालयिता ॥ २८ ॥

रा० टी०–अभीति । काकुत्स्थं राममभिषेक्ष्यन्ति इमं मे मनोरथं देवाः सत्यं कुर्युरपि । अपिः संभावनायाम् ॥ २९ ॥

गो० टी०–अभिषेक्ष्यन्तीति । देवताः इमं मनोरथं सत्यं कुर्युरपि । संभावनायामपिशब्दः ॥ २९ ॥

३० ] ति० टी०–प्रसाद्येति । प्रपत्स्यते निवृत्तिविषये प्रसादमिति शेषः, उपेक्षितुं नार्हति भक्तवत्सलत्वादिति भावः ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

रा० टी०–प्रसाद्यमान इति । बहुप्रकारं शिरसा मया प्रसाद्यमानो रामः यदि न प्रपत्स्यते अयोध्यां प्राप्स्यति तदा वने चिराय बहुकालं राघवमनुगमिष्यामि तत्र हेतुः चिरं मामुपेक्षितुं नार्हति ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

गो० टी०–प्रसाद्यमान इति । शिरसा प्रणामपूर्वकं स्वयं नतु मन्त्रिमुखेन नाभिपत्स्यते नाङ्गीकरिष्यति प्रसादमिति शेषः, ततस्तदा वने वसन् राघवमनुवत्स्यामि तदनुचरो भवामि । अनुचरणं वा कथमङ्गीकरिष्यतीत्यत्राह–नार्हति मामुपेक्षितुमिति मां भ्रातरं शिष्यं दासमित्यर्थः ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

१–२ ] ति० टी०–व्युष्योषित्वा । काल्यमुषःकाले उषःपर्यायौ कल्यकाल्यावुभावपीति ज्ञायते ॥ १ ॥ २ ॥

रा० टी०–रात्रिनिवासानन्तरकालिकं वृत्तान्तमाह–व्युष्येत्यादिभिः । तत्र गङ्गाकूले एव राघवो भरतः रात्रिं व्युष्य उषित्वा कल्यं प्रातरुत्थाय शत्रुघ्नमब्रवीत् ॥ १ ॥

गो० टी०–व्युष्येति । व्युष्य उषित्वा रात्रिं रात्रौ तत्रैव यत्र रामोऽशयिष्ट तत्रैव काल्यं प्रत्यूषः 'प्रत्यूषोऽहर्मुखं काल्यम्' इत्यमरः । तस्मिन्नित्यर्थः ॥ १ ॥

रा० टी०–तद्वचनाकारमाह–शत्रुघ्नेति । हे शत्रुघ्न ! त्वं किं शेषे उत्तिष्ठेत्यर्थः । तत्प्रयोजनमाह–उत्थाय गुहं शीघ्रमानय । तस्य प्रयोजनमाह–वाहिनीं गङ्गां तारयिष्यति ॥२॥

गो० टी०–शत्रुघ्नेति । शत्रुघ्न भद्रं त इति सान्त्वोक्तिः । वाहिनीं गङ्गाम् अस्मानित्यर्थसिद्धम् ॥ २ ॥

---

१ तस्यार्थमिति गो. पाठः । २ तं प्रतिश्रवमामुच्य नास्येति गो. पाठः । ३ सह त्वार्यो ह्ययोध्यामिति गो. पाठः । ४ नाभीति गो. पाठः । ५ वसन्निति गो. पाठः । ६ भरतः काल्यमुत्थाय शत्रुघ्नमिदमिति गो. कल्यमिति रा. पाठः । ७ उत्तिष्ठेति गो. पाठः ।

जागर्मि नाहं स्वपिमि तथैवार्य विचिन्तयन् । इत्येवमब्रवीद्भ्राता शत्रुघ्नो विप्रचोदितः ॥ ३ ॥
इति संवदतोरेवमन्योन्यं नरसिंहयोः । आगम्य प्राञ्जलिः काले गुहो वचनमब्रवीत् ॥ ४ ॥
कच्चित्सुखं नदीतीरेऽवात्सीः काकुत्स्थ शर्वरीम् । कच्चिच्च सहसैन्यस्य तव नित्यमनामयम् ॥ ५ ॥
गुहस्य तत्तु वचनं श्रुत्वा स्नेहादुदीरितम् । रामस्यानुवशो वाक्यं भरतोऽपीदमब्रवीत् ॥ ६ ॥
सुखा नः शर्वरी धीमन्पूजिताश्चापि ते वयम् । गङ्गां तु नौभिर्बह्वीभिर्दाशाः संतारयन्तु नः ॥ ७ ॥
ततो गुहः संत्वरितः श्रुत्वा भरतशासनम् । प्रतिप्रविश्य नगरं तं ज्ञातिजनमब्रवीत् ॥ ८ ॥
उत्तिष्ठत प्रबुध्यध्वं भद्रमस्तु हि वः सदा । नावः समुपकर्षध्वं तारयिष्यामि वाहिनीम् ॥ ९ ॥
ते तथोक्ताः समुत्थाय त्वरिता राजशासनात् । पञ्च नावां शतान्येव समानिन्युः समन्ततः ॥ १० ॥
अन्याः स्वस्तिकविज्ञेया महाघण्टाधराधराः । शोभमानाः पताकिन्यो युक्तवाहाः सुसंहताः ॥ ११ ॥

३-४ ] ति० टी०—आर्यं विचिन्तयन्नहमपि यथा त्वं तथैव जागर्मि न स्वपिमीत्येवमब्रवीदित्यन्वयः ॥ ३ ॥ ४ ॥

रा० टी०—जागर्मीति । विप्रचोदितः भरतेन प्रेरितः भ्राता शत्रुघ्नस्तथैव भवत्सदृशम् आर्यं रामं विचिन्तयन्सन् जागर्मि न स्वपिमि इत्येवं वचोऽब्रवीत् ॥ ३ ॥

गो० टी०—जागर्मीति । नाहं स्वपिमि जागर्मीति भ्रात्रा प्रचोदितः शत्रुघ्नोऽपि तमेवार्थं यस्त्वया चिन्त्यते तमेवार्थं विचिन्तयन् सन् अहमपि जागर्मि न स्वपिमि इत्येवमब्रवीत् 'तथैव' इतिपाठे यथा त्वं तथैवाहमार्यं विचिन्तयन्नित्यर्थः । चरमपर्वनिष्ठस्य प्रथमपर्वाभिनिवेशस्तत्प्रीत्यर्थंतयेति व्यञ्जितं तदवस्थं तु भरतं शत्रुघ्नोऽनन्तरस्थित इति हि पूर्वमप्युक्तम् ॥ ३ ॥

रा० टी०—इतीति । नरसिंहयोः पुरुषश्रेष्ठयोः भरतशत्रुघ्नयोः एवमनेन प्रकारेण अन्योन्यं संवदतोः सतोः प्राञ्जलिः गुहः आगम्य इति इदं वचनमब्रवीत् ॥ ४ ॥

गो० टी०—इतीति । संवदतोः सतोः काले गमनोचितकाले ॥ ४ ॥

५ ] ति० टी०—शर्वरीमवात्सीः अत्यन्तसंयोगे द्वितीया ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—कच्चिदिति । हे काकुत्स्थ भरत! नदीतीरे सुखं कच्चित् अवात्सीः सहसैन्यस्य तव कच्चिन्नित्यमनामयं रोगादिराहित्यम् । कच्चिदिति प्रश्ने ॥ ५ ॥

गो० टी०—कच्चिदिति । शर्वरीं तावत् शर्वर्यां साकल्येन 'यावत्तावच्च साकल्ये' इत्यमरः । सहसैन्यस्य ते सेनासहितस्य तव सर्वमुपकरणम् अनामयं निरुपद्रवम् ॥ ५ ॥

६ ] ति० टी०—रामस्यानुवशो रामाधीनः ॥ ६ ॥

रा० टी०—गुहस्येति । स्नेहादुदीरितमुच्चारितं गुहस्य इदं वचनं श्रुत्वा रामस्य अनुवशः अनुचरः भरतोऽपि इदं वचनमब्रवीत् ॥ ६ ॥

गो० टी०—गुहस्येति । रामस्यानुवशः रामायत्तः ॥ ६ ॥

७ ] ति० टी०—ते त्वया पूजिताः ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—सुखेति । हे धीमन्! ये वयं सुपूजिताः तेषां नः अस्माकं शर्वरी रात्रिः सुखाऽभवदिति शेषः, बह्वीभिः नौभिः दाशाः कैवर्तकाः गङ्गां नः संतारयन्तु ॥ ७ ॥

गो० टी०—सुखेति । सुखा सुखावहा जातेति शेषः, राजन्निति रामभक्ततया स्तौति ते त्वया ॥ ७ ॥

८-९ ] ति० टी०—प्रतिप्रविश्य ततो निवृत्तिपूर्वकं प्रविश्य ॥ ८ ॥ ९ ॥

रा० टी०—तत इति । गुहः भरतशासनं श्रुत्वा ततः संतारणहेतोः नगरं प्रति प्रविश्य तं ज्ञातिजनमब्रवीत् ॥ ८ ॥

गो० टी०—तत इति । प्रतिप्रविश्य पुनः प्रविश्य ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—उत्तिष्ठतेति । उत्तिष्ठत प्रबुध्यध्वं यूयमिति शेषः । नावः नौकाः समुपकर्षध्वं वाहिनीं गङ्गां तारयिष्यामि भरतसेनामिति शेषः ॥ ९ ॥

गो० टी०—उत्तिष्ठतेति । प्रबुध्यध्वम् उत्तिष्ठतेति क्रमः तारयिष्यामेत्यत्र विसर्गलोप आर्षः । 'तारयिष्यामि' इति च पाठः ॥ ९ ॥

१० ] ति० टी०—नावां पञ्चशतानि समानिन्युः ॥ १० ॥

रा० टी०—ते इति । तथोक्तास्ते कैवर्तकाः राजशासनात् त्वरिताः सन्तः नावां पञ्चशतानि स्वस्तिकविज्ञेयाः स्वस्तिकेन नाम्ना राजनौकाबोधकचिह्नविशेषेण वा विज्ञेयो विज्ञानं यासां ताः महाघण्टाधराः बृहद्घण्टाविशिष्टाः पुरुषास्तान् आसमन्ताद्भावेन धरन्ति ताः पताकिन्यः पताकाविशिष्टाः युक्तवाहाः युक्ताः वाहाः वाहकाः यासु ताः सुसंहताः दृढबन्धनादियुक्ताः शोभमानाः अन्याः ताभ्यो विलक्षणाश्च नावः समानिन्युः । 'युक्तवाता' इति पाठान्तरम् । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—त इति । नावां पञ्चशतानीत्यन्वयः, समन्ततः सर्वावतारेभ्यः ॥ १० ॥

११ ] ति० टी०—अन्याः पञ्चशतनौकाभ्योऽन्याः

१ तमेवेति गो. पाठः । २ भ्रात्रेति गो. पाठः । ३ ऽपीति गो. पाठः । ४ भरतमिति गो. पाठः । ५ ते इति गो. पाठः । ६ तावत्सर्वमिति गो. पाठः । ७ राजन्निति गो. पाठः । ८ त्वरितमिति गो पाठः । ९ समनुकर्षध्वं तारयिष्यामेति गो. पाठः । १० आश्विति गो. पाठः । ११ पताकामिर्युक्ता वाता इति गो. वाता इति रा. पाठः ।

ततः स्वस्तिकविज्ञेयां पाण्डुकम्बलसंवृताम् । सनन्दिघोषां कल्याणीं गुहो नावमुपाहरत् ॥ १२ ॥
तामारुरोह भरतः शत्रुघ्नश्च महाबलः । कौसल्या च सुमित्रा च याश्चान्या राजयोषितः ॥ १३ ॥
पुरोहितश्च तत्पूर्वं गुरवो ब्राह्मणाश्च ये । अनन्तरं राजदारास्तथैव शकटापणाः ॥ १४ ॥
आवासमादीपयतां तीर्थं चाप्यवगाहताम् । भाण्डानि चाददानानां घोषस्त्रिदिवमस्पृशत् ॥ १५ ॥
पताकिन्यस्तु ता नावः स्वयं दाशैरधिष्ठिताः । वहन्त्यो जनमारूढं तदा संपेतुराशुगाः ॥ १६ ॥
नारीणामभिपूर्णास्तु काश्चित्काश्चित्तु वाजिनाम् । काश्चित्तत्र वहन्ति स्म यानयुग्यं महाधनम् ॥ १७ ॥

स्वस्तिकविज्ञेयाः स्वस्तिकाख्यया लोकप्रसिद्धा राजार्हनौभेदाः महाघण्टां धारयन्ति ता महाघण्टाधराः पताकास्ता धारयन्तीत्यर्थः । शोभमानाः स्वर्णादिरूपितचित्रैः शोभमानाः पताकिन्यो बद्धरित्रवत्यः अरित्रं नावाकर्षणदण्डः युक्तवाहा नौवहने नाविकवत्यः । 'युक्तवाताः' इति पाठे युक्तगतयः सुसंहता दृढसंघिबन्धाः ॥ ११ ॥

गो० टी०–अन्या इति । अन्याः क्षुद्राभ्यः पञ्चशतनौभ्यः अन्याः स्वस्तिकविज्ञेयाः 'स्वस्तिकः सर्वतोभद्रः' इत्युक्तस्वस्तिकाख्यरचनाविशेषविशिष्टतया निर्मितत्वात् स्वस्तिका इति विज्ञेयाः ताश्च नौद्वयसंघटनेन संपद्यन्ते चतुर्षु कोणेषु महाघण्टाधराः वराः राजार्हतया श्रेष्ठाः शोभमानाः कनकरूषिततया शोभमानाः युक्तवाताः फलककुड्यकरणेन मध्ये मध्ये गवाक्षनिर्माणेन च महावातनिवारणादुचितवाताः सुसंहताः राजरोहणस्थानत्वेनायसकीलादिभिर्दृढसंधिबन्धाः अत्रापि नाव अभिन्युरित्यनुकृष्यते ॥ ११ ॥

१२-१३ ] ति० टी०–सनन्दिघोषां सुपरिप्रतिष्ठितमङ्गलवादित्रघोषसहितां ततः इतरस्वस्तिकाभ्यो विलक्षणां स्वस्तिकाख्यां पाण्डुकम्बलो राजास्तरणकम्बलस्तद्वतीं राजार्हां नावं गुहः स्वयमेवोपाहरत् ॥ १२ ॥ १३ ॥

रा० टी०–तत इति । ततः सर्वनौकासमानयनानन्तरं पाण्डुकम्बलेन राजोचितास्तरणीभूतकम्बलविशेषेण संवृतां सनन्दिघोषां सनन्दी आनन्दजनकः घोषो यस्यां तां स्वस्तिकविज्ञेयां नावमुपाहरत् ॥ १२ ॥

रा० टी०–तामिति । तां स्वस्तिकाख्यां नावं भरतादिः आरुरोह ॥ १३ ॥

गो० टी०–तत इति । ततः तासु स्वस्तिकविज्ञेयादिषु मध्ये पाण्डुकम्बलेन संवृताम् आच्छन्नतलप्रदेशां सनन्दिघोषां हर्षजनककिङ्किण्यादिघोषयुक्तां कल्याणीं शोभनाम् ॥ १२ ॥

गो० टी०–भरतशत्रुघ्नव्यतिरिक्तानामन्यासु नौष्वारोहणक्रममाह–कौसल्येत्यादिना । राजयोषितः आगता इति शेषः, तत्पूर्वं तासां पूर्वं पुरोहितो गुरवो ब्राह्मणाश्च ये आगतास्ते आरुरुहुः, अनन्तरं राजदाराः कौसल्यादयः आरुरुहुः तथैव शकटापणाः शकटाश्चापणस्थपदार्थाश्चारुरुहुः, एतदारोहणं कर्तृद्वारा ॥ १३ ॥

१४ ] ति० टी०–तत्पूर्वं समातृकभरतारोहात्पूर्वमनन्तरं तेषां तासां चानन्तरम् । राजदारा अनुचरप्रभृतिस्त्रियः । शकटान्यापणाः पण्यानीतरनौष्वारोपिता इति शेषः ॥ १४ ॥

रा० टी०–पुरोहित इति । तत्पूर्वं भरतसहितकौसल्यायारोहणात्पूर्वस्मिन्काले पुरोहितो वशिष्ठः गुरवः महान्तः ब्राह्मणाश्च ये सन्ति तेऽप्यारुरुहुः । अनन्तरं भरतसहितकौसल्यारोहणादव्यवहितोत्तरकाले राजदाराः राजकुलस्त्रियः आरुरुहुः, तथा तदनन्तरं शकटापणाः शकटाः आपणाः आपणसामग्र्यश्च आरुरुहुः ॥ १४ ॥

१५ ] ति० टी०–आवासमुषितावासमादीपयतामग्निसात्कुर्वताम् अयं सेनाधर्मः । तीर्थं नद्यवतारमवगाहतामहमहमिकया विशताम्, भाण्डान्युपकरणानि ॥ १५ ॥

रा० टी०–आवासमिति । आवासं निवासस्थानमादीपयतां वस्तुनिरीक्षणार्थं महादीपादिना प्रकाशं कुर्वतां तीर्थं गङ्गामवगाहतां च भाण्डानि पाकसाधनानि आददानानां गृह्णतां च घोषः शब्दस्तु दिवं स्वर्गमस्पृशत् ॥ १५ ॥

गो० टी०–आवासमिति । आवासं सेनानिवेशम् आदीपयतामग्निना ज्वलयतां राजभटा हि निर्गमनकाले श्रीसमागमार्थमावासं दहन्तीति प्रसिद्धिः । तीर्थम् अवतरणप्रदेशम् अवगाहतां नावारोहणार्थमहमहमिकया आगच्छतामित्यर्थः, स्नानं कुर्वतामिति वा, भाण्डानि उपकरणानि आददानानां मदीयमिदं मदीयमिदमिति त्वरया स्वीकुर्वतां जनानां घोषः त्रिदिवमस्पृशत् महान् घोषो जात इत्यर्थः ॥ १५ ॥

१६ ] ति० टी०–आशुगाः शीघ्राः ॥ १६ ॥

रा० टी०–पताकिन्य इति । दाशैर्धीवरैः अधिष्ठितास्ताः भरतादिभिरारूढा आशुगाः पताकिन्यो नावस्तु वहन्त्यः सत्यः जनं भरतादिं स्वयं संपेतुः अनायासेन उत्तारयामासुरित्यर्थः ॥ १६ ॥

गो० टी०–पताकिन्य इति । पताकिन्यः वाय्वाकर्षणापकृतपताकाः स्वयं संपेतुः आशुगत्वेन दाशाधिष्ठानमात्रेणानायासेन जग्मुरित्यर्थः ॥ १६ ॥

१७ ] ति० टी०–नारीणामित्यादौ तृतीयार्थस्य शेषत्वविवक्षायां षष्ठी नारीभिः पूर्णा इत्याद्यर्थः । यानानि शकटादीनि, युग्या अश्वाश्वतरबलीवर्दाद्याः । महाधनं बहुमूल्यम् यद्वा महाधनं जीवाजीवरूपनानाप्रकारम् ॥ १७ ॥

१ त्रिदिवमिति गो. पाठः । २ चेति गो. पाठः । ३ अत्रेति गो. पाठः । ४ युग्यमहाधनमिति रा. पाठः ।

तास्तु गत्वा परं तीरमवरोप्य च तं जनम् । निवृत्ता काण्डचित्राणि क्रियन्ते दाशबन्धुभिः ॥ १८ ॥
सवैजयन्तास्तु गजा गजारोहैः प्रचोदिताः । तरन्तः स्म प्रकाशन्ते सपक्षा इव पर्वताः ॥ १९ ॥
नावश्चारुरुहुस्त्वन्ये प्लवैस्तेरुस्तथापरे । अन्ये कुम्भघटैस्तेरुरन्ये तेरुश्च बाहुभिः ॥ २० ॥
सा पुण्या ध्वजिनी गङ्गां दाशैः संतारिता स्वयम् । मैत्रे मुहूर्ते प्रययौ प्रयागवनमुत्तमम् ॥ २१ ॥
आश्वासयित्वा च चमूं महात्मा निवेशयित्वा च यथोपजोषम् ।
द्रष्टुं भरद्वाजमृषिप्रवर्यं ऋत्विक्सदस्यैर्भरतः प्रतस्थे ॥ २२ ॥

रा० टी०–नारीणामिति । काश्चिन्नावस्तु नारीणां नारीभिः अभिपूर्णाः काश्चित्तु वाजिनामभिपूर्णाः काश्चित्तु महाधनं बहुधनविशिष्टं यानयुग्यं यानानि रथादीनि युग्यानि अश्वबलीवर्दादयस्तेषां समाहारस्तत् वहन्ति स्म ॥ १७ ॥

गो० टी०–संप्रति ता नावः कीदृग्विधा इत्यपेक्षायामाह–नारीणामित्यादि । नारीणामभिपूर्णाः नारीभिरभिपूर्णाः वाजिनामभिपूर्णाः आरोहणार्हवाजिभिरभिपूर्णाः "वध्रः पूर्णः" इति महाभाष्यकारवचनप्रामाण्यात् पूर्णशब्दयोगे पूरणगुणेत्यादिना षष्ठी तृतीयार्थे षष्ठी वा । यानयुग्यं यानानि रथशकटादीनि युग्यानि अश्वतरबलीवर्दादीनि सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः महाधनं बहुमूल्यम् 'बहुमूल्यं महाधनम्' इत्यमरः ॥ १६ ॥

१८ ] ति० टी०–तं जनमवरोप्य निवृत्ताः नावः समस्तदाशबन्धुभिः क्रीडार्थं काण्डचित्राणि काण्डे जले चित्राणि चित्रगमनानि लघुत्वात्क्रियन्ते स्मेत्यर्थः । 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः ॥ १८ ॥

रा० टी०–ता इति । परं तीरं गत्वा तं स्वेषु स्थितं जनमवरोप्य निवृत्तास्ताः भरताद्यधिष्ठिताः नावः दाशबन्धुभिः काण्डचित्राणि काण्डे जले चित्राणि खेलनोपस्करणानि क्रियन्ते 'काण्डोऽस्त्री दण्डबाणार्ववर्गावसरवारिषु' इत्यमरः॥१८॥

गो० टी०–ता इति । काण्डचित्राणि काण्डे वारिणि चित्राणि चित्रगमनानि क्रियन्ते अक्रियन्त "काण्डोऽस्त्रीदण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । दाशबन्धुभिः दाशाभासै दाशस्य गुहस्य बन्धुभिरिति वा भाराभावकृतलाघवातिशयेन निवर्तनकालिकदाशलीलोच्यते ॥ १७ ॥

१९ ] ति० टी०–सवैजयन्ताः सध्वजाः ॥ १९ ॥

रा० टी०–सेति । गजारोहैः प्रचोदिताः प्रेरिताः सवैजयन्ताः ध्वजसहितास्तरन्तो गजाः सपक्षाः पर्वता इव प्रकाशन्ते स्म ॥ १९ ॥

गो० टी०–सवैजयन्ता इति । सवैजयन्ताः सपताकाः सगृहा वा राजानो हि गजोपरि गृहाणि निर्माय गच्छन्ति तरन्तः प्लवन्तः 'तॄ प्लवनतरणयोः' । सध्वजाः सगमनाः 'ध्वज गतौ' जङ्गमपर्वता इव प्रकाशन्ते इत्यर्थः ॥ १८ ॥

२० ] ति० टी०–प्लवा वेणुतृणादिनिर्मिताः । कुम्भा महान्तः, घटाः स्वल्पा विपरीतं वा ॥ २० ॥

रा० टी०–तरणप्रकारमेवाह–नाव इति । अन्ये बहवः नावमारुरुहुः अपरे प्लवैः वेणुतृणादिनिर्मितैस्तेरुः अन्ये कुम्भघटैः घटयुक्तघटैस्तेरुः अन्ये बाहुभिस्तेरुः ॥ २० ॥

गो० टी०–नाव इति । नावः क्षुद्रनावः प्लवैस्तृणकाष्ठनिर्मितैः कुम्भघटैः कुम्भरूपघटैः सूक्ष्मवदना घटाः कुम्भाः ते हि तरणसाधनानि न घटमात्रं, बाहुभिः केवलबाहुभिः ॥ १९ ॥

२१ ] ति० टी०–मैत्रे मुहूर्ते उदयानृतीयमुहूर्ते । नाडीद्वयं मुहूर्तः 'रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च । आप्यो वैश्वस्तथा ब्राह्मः प्राजो रौद्रोऽग्निरेव च ॥ ऐन्द्रोऽथ निर्ऋतिश्चैव वारुणो यमसाधकौ । एते क्रमेण विज्ञेया मुहूर्ता दश पञ्च च ॥' इत्युक्तेः ॥ २१ ॥

रा० टी०–सेति । पुण्या नित्यं वसिष्ठादिसंसर्गेण पूता दाशैः कैवर्तकैः स्वयं गङ्गां संतारिता ध्वजिनी सा सेना मैत्रे मैत्रसंज्ञके मुहूर्ते सूर्योदयात्तृतीये घटिकाद्वयात्मके उत्तमं प्रयागवनं प्रययौ, एतेन मुहूर्तद्वयेन गङ्गासंतरणमिति सूचितम् । 'रौद्रः सार्पस्तथा मैत्रो पैत्रो वासव एव च । आप्यो वैश्यस्तथा ब्राह्मः प्राजो रौद्रोऽग्निरेव च । ऐन्द्रोऽथ निर्ऋतिश्चैव वारुणो यमसायकौ । एते क्रमेण विज्ञेया मुहूर्ता दश पञ्च च ॥' इति वचनमिति ॥ २१ ॥

गो० टी०–सेति । पुण्या गङ्गास्नानादिना पूता ध्वजिनी सेना स्वयं नतु परप्रेरणेन मैत्रे मुहूर्ते दिवसस्य पञ्चदशभागेषु घटिकाद्वयात्मके तृतीये मुहूर्ते 'द्वे तु नाड्यौ मुहूर्तोऽस्त्री' इति वैजयन्ती । मुहूर्तसंख्योक्ता बृहस्पतिना–'रौद्रः सार्पस्तथा मैत्रः पैत्रो वासव एव च । आप्यो वैश्वस्तथा ब्राह्मप्राजेशैन्द्रास्तथैव च ॥ ऐन्द्राग्नो नैर्ऋतश्चैव वारुणार्यमणो भगी । एतेऽह्नि क्रमशो ज्ञेया मुहूर्ता दश पञ्च च ॥' इति पाठभेदः तस्य मैत्रनामत्वं विष्णुमाधवीये प्रोक्तं यथा 'आर्द्रोरगमित्रमघावसुजलविश्वाभिजिद्विरिञ्चेन्द्राः । ऐन्द्राग्नमूलवरुणार्यमभगयुक्ता दिवा मुहूर्ताः स्युः ॥' इति ॥ मैत्रे मुहूर्ते तारिता सती प्रयागवनं ययावित्यन्वयः घटिकाषट्क एव गङ्गातरणमिति भावः, यद्वा मैत्रे प्रयागवनं ययावित्यन्वयः तत्रातिथ्येन निरवधिकभोगलाभात् मुहूर्तविशेषोक्तिः ॥ २० ॥

२२ ] ति० टी०–यथोपजोषं यथासुखमाश्वासयित्वा विश्राम्य निवेशयित्वा प्रयागवने स्थापयित्वा ॥ २२ ॥

१ स्मेति गो. पाठः । २ गजारोहप्रचोदिता इति गो. पाठः । ३ सध्वजा इति गो. रा. पाठः । ४ चान्ये इति गो. पाठः । ५ गङ्गेति गो. पाठः । ७ प्रययाविति गो. रा. पाठः । ८ वृतः सन्निति गो. पाठः ।

स ब्राह्मणस्याश्रममभ्युपेत्य महात्मनो देवपुरोहितस्य ।
ददर्श रम्योटजवृक्षदेशं महद्वनं विप्रवरस्य रम्यम् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ।

आश्रमाद्बहिः क्रोशमात्रे भरतः सेनां संस्थाप्य तत्समीपं प्राप । वसिष्ठभरद्वाजयोः परस्परसत्कारसमनन्तरं कृतपादाभिवन्दनं भरतं कुशलप्रश्नपूर्वकं कस्ते रामविषयकोऽभिप्राय इति प्रश्ने खिद्यमानो भरतो राममयोध्यां निनीषुरहं तद्वसतिं जिज्ञासु इति ब्रुवन्तं भरतं चित्रकूटगिरौ स्थितं रामं श्वःप्रभाते द्रष्टुमर्हसीति भरद्वाजः समादिदेश ।

भरद्वाजाश्रमं गत्वा क्रोशादेव नरर्षभः । जनं सर्वमवस्थाप्य जगाम सह मन्त्रिभिः ॥ १ ॥
पद्भ्यामेव तु धर्मज्ञो न्यस्तशस्त्रपरिच्छदः । वसानो वाससी क्षौमे पुरोधाय पुरोहितम् ॥ २ ॥

रा० टी०-आश्वासयित्वेति । महात्मा भरतः चमूं सेनामाश्वासयित्वा आश्वास्य यथोपजोषं यथासुखं निवेशयित्वा निवेश्य प्रस्थाप्य ऋषिप्रवर्यं भरद्वाजं द्रष्टुं प्रतस्थे 'तूष्णीमर्थे सुखे जोषम्' इति वैजयन्ती ॥ २२ ॥

गो० टी०-आश्वासयित्वेति । आश्वासयित्वा सान्त्वयित्वा यथोपजोषं यथासुखम् 'तूष्णीमर्थे सुखे जोषम्' इति वैजयन्ती । ऋषिप्रवर्यम् ऋषिश्रेष्ठम् पाठभेदः 'आश्वासयित्वा' इति महात्मा महामतिः स्वयं खिन्नोऽपि अखिन्न इव पराश्वासनपरः भरतः राज्यभरणदक्षः भरत इति राज्यस्य भरणादिति सहस्रानीकवचनात् , चमूं महाजनम् अविशेषेण आश्वासयित्वा महानायासो वो जात इति प्रियोक्तिभिः सान्त्वयित्वा यथोपजोषं यथासुखं निवेशयित्वा यत्र प्रदेशे तेषां सुखं भवति तत्र प्रदेशे तान्निवेशयित्वा प्रवर्षं प्रकृष्टवर्षं बहुवयस्कमिति यावत् "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास तं ह जीर्णि स्थविरं शयानम्" इति श्रुतेः एतेन वयोवृद्धत्वमुक्तम् । ज्ञानवृद्धत्वमाह-ऋषिमिति । 'ऋष दर्शने' इति धातुः भरद्वाजम् "बृहतो भरद्वाजः" इति श्रुतिप्रसिद्धं द्रष्टुं दर्शनपूर्वकमभिवन्दितुं तादृशस्य ऋषेर्विना तवैवदर्शनीयत्वेन ऋत्विग्भिर्वसिष्ठादिभिः वृतः सन् प्रतस्थे पद्भ्यामेव जगाम ॥ २१ ॥

२३ ] ति० टी०-देवपुरोहितस्य । भरद्वाजो ह्युतथ्यभार्यायां ममतायां बृहस्पतेर्जात इति पुराणे प्रसिद्धम् । तं च भर्तृभिया त्यक्तुकामां ममतां देवा ऊचुः—'उतथ्यस्य क्षेत्रजत्वेन बृहस्पतेरौरसत्वेन भरद्वाजानमम्नुं भर' इति । तस्माद्भरद्वाज इति तस्य नाम ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

रा० टी०-स इति । स भरतः महात्मनो देवपुरोहितस्य उतथ्यभार्यायां बृहस्पतिजनितत्वेन देवपुरोहितत्वं प्राप्तस्य विप्रवरस्य साङ्गवेदाभ्यासिश्रेष्ठस्य ब्राह्मणस्य परब्रह्मवेदितुः भरद्वाजस्य आश्रममभ्युपेत्य प्राप्य रम्योटजवृक्षदेशं रम्यपर्णशालासहितवृक्षसामीप्यविशिष्टं रम्यं महद्वनं ददर्श ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ अयोध्याकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

गो० टी०-स ब्राह्मणस्येति । ब्राह्मणस्य ब्रह्म वेदः तदधीते ब्राह्मणः "तदधीते तद्वेद" इत्यण्प्रत्ययः अधीतबहुवेदस्येत्यर्थः । "भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास" इत्यादिना काठके तथाभिधानात् महात्मनो महाज्ञानस्य देवपुरोहितस्य बृहस्पतिपुत्रत्वेन देवपुरोहितत्वम् 'आत्मा वै पुत्रनामासि' इतिन्यायात् भरद्वाजो ममताख्यायामुतथ्यभार्यायां बृहस्पतेर्जात इति भागवते प्रसिद्धम् । आश्रममभ्युपेत्य आश्रममुद्दिश्य गत्वा प्रथमं तस्य महद्वनं ददर्श । पाठभेदः स इति ब्राह्मणस्य ब्रह्म परमात्मानं वेत्तीति ब्राह्मणः "तदधीते तद्वेद" इत्यण्प्रत्ययः । उत्तरसर्गरीत्या समाधिबलेन समस्तवस्त्वाह्वानक्षमस्येत्यर्थः, यद्वा "ब्रह्म बृहस्पतिः" इति श्रुत्या ब्रह्मणो बृहस्पतेरपत्यं ब्राह्मणस्तस्य महात्मनः महास्वभावस्य अचिन्त्यशक्तेरित्यर्थः, देवपुरोहितस्य देवपुरोहितपुत्रत्वात् "आत्मा वै पुत्रनामासि" इति श्रुतेः विप्रवरस्य निरवधिकवेदाध्ययनसंपन्नस्य 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः । वेदाभ्यासेन विप्रस्त्वं ब्रह्म जानाति ब्राह्मणः ॥' इत्यादिस्मृतेः । श्रुतिश्चास्य निरवधिकवेदाध्ययनसंपत्तिं दर्शयति—"भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमनेन कुर्या इति ब्रह्मचर्यमेवैनेन चरेयमिति होवाच" इत्यादिना । आश्रममभ्युपेत्य प्राप्य रम्योटजवृक्षखण्डरमणीयपर्णशालाप्रान्तवर्तिवृक्षसमूहयुक्तं रम्यं स्वत एव मनोज्ञप्रदेशं महत् स्वसेनानिवेशक्षमं वनं ददर्श ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

१ ] ति० टी०-जगाम द्रष्टुमिति शेषः । अवस्थाप्य आश्रमोपरोधनिवृत्तय इति शेषः ॥ १ ॥

२ ] ति० टी०- पद्भ्यामिति विनयप्रदर्शनार्थम् ॥ २ ॥

१ दृष्ट्वेति गो. पाठः । २ बलमिति गो. पाठः । ३ होति गो. पाठः । ४ पुरोगमिति गो. पाठः ।

ततः संदर्शने तस्य भरद्वाजस्य राघवः । मन्त्रिणस्तानवस्थाप्य जगामानुपुरोहितम् ॥ ३ ॥
वसिष्ठमथ दृष्ट्वैव भरद्वाजो महातपाः । संचचालासनात्तूर्णं शिष्यानर्घ्यमिति ब्रुवन् ॥ ४ ॥
समागम्य वसिष्ठेन भरतेनाभिवादितः । अबुध्यत महातेजाः सुतं दशरथस्य तम् ॥ ५ ॥
ताभ्यामर्घ्यं च पाद्यं च दत्त्वा पश्चात्फलानि च । आनुपूर्व्याच्च धर्मज्ञः पप्रच्छ कुशलं कुले ॥ ६ ॥
अयोध्यायां बले कोशे मित्रेष्वपि च मन्त्रिषु । जानन्दशरथं वृत्तं न राजानमुदाहरत् ॥ ७ ॥
वसिष्ठो भरतश्चैनं पप्रच्छतुरनामयम् । शरीरेऽग्निषु [1]शिष्येषु वृक्षेषु मृगपक्षिषु ॥ ८ ॥
तथेति तु[2] प्रतिज्ञाय भरद्वाजो महायशाः । भरतं प्रत्युवाचेदं राघवस्नेहबन्धनात् ॥ ९ ॥
किमिहागमने कार्यं तव राज्यं प्रशासतः । एतदाचक्ष्व सर्वं मे न हि मे शुध्यते मनः ॥ १० ॥

---

रा० टी०–भरद्वाजाश्रमगमनप्रकारं वर्णयन्नाह–भरद्वाजेत्यादिभिः । क्रोशात्क्रोशपरिमितभूमेः भरद्वाजाश्रमं गत्वा ज्ञात्वा दृष्ट्वेत्यर्थः, सर्वं जनमवस्थाप्य न्यस्तशस्त्रपरिच्छदः न्यस्ताः परित्यक्ताः शस्त्रपरिच्छदाः येन सः क्षौमे वाससी वसानः धर्मज्ञो भरतः पुरोहितं वसिष्ठं पुरोधाय अग्रे कृत्वा मन्त्रिभिः सह पद्भ्यामेव जगाम । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–भरद्वाजाश्रममित्यादि । श्लोकद्वयमेकान्वयम् । क्रोशादेव क्रोशात्पूर्वमेव क्रोशमात्रव्यवहितदेश इत्यर्थः, न्यस्तशस्त्रपरिच्छदः परिच्छदः आभरणादिकं भृङ्गाराद्युपकरणजातं च वसानो वाससी क्षौमे भरद्वाजसेवार्थमुष्णीषकञ्चुकादिकमपहाय परिधानमुत्तरीयं च धृत्वा गत इत्यर्थः । ननु पूर्वं जटाचीराणि धारयन्नित्युक्तं जटिलं चीरवसनमिति च वक्ष्यति कथमत्र क्षौमवासस्त्वमुच्यते नैष दोषः पूर्वं प्रतिज्ञामात्रं कृतं भरद्वाजाश्रमात्परं जटाधारणमिति पुरोधाय पुरस्कृत्य ॥१॥२॥

३ ] ति० टी०–ततः संदर्शने आश्रमप्रवेशानन्तरमृषिदर्शनावसरे अनुपुरोहितं पुरोहितस्य पश्चात् ॥ ३ ॥

रा० टी०–तत इति । ततः आश्रमसमीपप्राप्त्यनन्तरं राघवो भरतः तान्सहागतान्मन्त्रिणः अवस्थाप्य संस्थाप्य अनुपुरोहितं पुरोहितस्य वसिष्ठस्य पश्चात्तस्य भरद्वाजस्य संदर्शने संदर्शनार्थं जगाम 'हर्षवान् दर्शने तस्य' इति भूषणपाठः ॥ ३ ॥

गो० टी०–तत इति । संदर्शने दूरादर्शने राघवः रघुवंशवृत्ताभिज्ञः अनुपुरोहितं पुरोहितस्य पश्चात् अनोः पश्चादर्थेऽव्ययीभावः ॥ ३ ॥

४ ] ति० टी०–शिष्यान्प्रति अर्घ्यमानयतेति ब्रुवन् ॥४॥

रा० टी०–वशिष्ठमिति । अथ स्वाश्रमागमनानन्तरं वसिष्ठं दृष्ट्वैव अर्घ्यं तूर्णमानयेति शिष्यान् ब्रुवन्सन् तूर्णमासनात्संचचाल । तूर्णमित्युभयान्वयि, आनयेति शेषः ॥ ४ ॥

गो० टी०–वसिष्ठमिति । संचचाल उदतिष्ठत् अर्घ्यम् आनयतेति शेषः ॥ ४ ॥

५] ति० टी०–अबुध्यत वसिष्ठेन सहागमनादिति शेषः॥५॥

रा० टी०–समागम्येति । भरतेन अभिवादितः महातेजाः भरद्वाजः वसिष्ठेन समागम्य परस्परं नमस्कारपूर्वकमालिङ्ग्य तं भरतं दशरथस्य सुतमबुध्यत ॥ ५ ॥

गो० टी०–समागम्येति । सवयस्कत्वान्नमस्काराभावः अबुध्यतेति वसिष्ठसाहचर्यादिति भावः ॥ ५ ॥

६ ] ति० टी०–ताभ्यां वसिष्ठभरताभ्याम् । आनुपूर्व्यात्क्रमेण प्रथमं ब्राह्मणस्य पश्चात्क्षत्रियस्य कुले गृहे ॥ ६ ॥

रा० टी०–ताभ्यामिति । ताभ्यां गुरुशिष्याभ्यामर्घ्यं पाद्यं च पश्चात्फलानि च आनुपूर्व्यात् क्रमशो दत्त्वा धर्मज्ञो भरद्वाजः कुले उभयोर्वंशे अयोध्यादिषु च कुशलं पप्रच्छ, दशरथं वृत्तं साकेतभोगे प्रवृत्तं जानन्सन् नोदाहरदपृच्छत् । श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०–ताभ्यामिति । आनुपूर्व्यात् प्रधानक्रमात् धर्मज्ञः पूजाक्रमधर्मज्ञः, कुले गृहे ॥ ६ ॥

७ ] ति० टी०–वृत्तमतीतम् अत एव राजानं नोदाहरद्राजकुशलं न पृष्टवान् ॥ ७ ॥

गो० टी०–अयोध्यायामिति । वृत्तमतीतं मृतमिति यावत् नोदाहरत् तत्प्रसङ्गमेव न कृतवान् ॥ ७ ॥

८ ] ति० टी०–शरीरादित्रयस्य यथायोगं तपःसाधनत्वात्तदनामयप्रश्नः, मृगपक्षिणामभयावस्थानद्वारा धर्मसाधनत्वाच्छिष्यवत्प्रियत्वाच्च तदनामयप्रश्नः ॥ ८ ॥

रा० टी०–वशिष्ठ इति । वसिष्ठो भरतश्च एनं भरद्वाजं शरीरादिषु अनामयं कुशलं पप्रच्छतुः ॥ ८ ॥

गो० टी०–तपोधनानां शरीराग्न्यादेः तपःसाधनत्वान्मृगपक्ष्यादीनामाश्रमवासित्वेन शिष्यवत्प्रीतिविषयत्वाच्च तद्विषयः प्रश्नः कृत इत्याह–वसिष्ठ इत्यादिना ॥ ८ ॥

९ ] ति० टी०–तथेति प्रतिज्ञायानामयमित्युक्त्वा राघवो रामः ॥ ९ ॥

रा० टी०–तथेति । महायशाः भरद्वाजस्तथा कुशलमस्तीति प्रतिज्ञाय उक्त्वा राघवस्नेहबन्धनात् राघवे रामे स्नेहबन्धनात्स्नेहानुवृत्तेर्हेतोः भरतमिदं प्रत्युवाच ॥ ९ ॥

गो० टी०–तथेति । तथेति तत्प्रतिज्ञाय सर्वत्र तत्पृष्टमनामयमङ्गीकृत्य राघवस्नेहबन्धनात् राघवविषये स्नेहानुबन्धनात् नतु भरते दोषदर्शनात् ॥ ९ ॥

१० ] ति० टी०–न शुध्यते न विश्वसिति ॥ १० ॥

---

१ पक्षिष्विति रा० पाठः । २ वृक्षेषु मृगेष्वपि च मांक्षष्विति रा० पाठः । ३ तदिति गो० पाठः । ४ तपा इति गो० पाठः ।

सुषुवे यममित्रघ्नं कौसल्याऽऽनन्दवर्धनम् । भ्रात्रा सह सभार्यो यश्चिरं प्रव्राजितो वनम् ॥ ११ ॥
नियुक्तः स्त्रीनिमित्तेन पित्रा योऽसौ महायशाः । वनवासी भवेतीह समाः किल चतुर्दश ॥ १२ ॥
कच्चिन्न तस्यापापस्य पापं कर्तुमिहेच्छसि । अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च ॥ १३ ॥
एवमुक्तो भरद्वाजं भरतः प्रत्युवाच ह । पर्यश्रुनयनो दुःखाद्वाचा संसज्जमानया ॥ १४ ॥
हतोऽस्मि यदि मामेवं भगवानपि मन्यते । मत्तो न दोषमाशङ्के[3]मैवं मामनुशाधि हि ॥ १५ ॥
न चैतदिष्टं माता मे यदवोचन्मदन्तरे । नाहमेतेन तुष्टश्च न तद्वचनमाददे ॥ १६ ॥
अहं तु तं नरव्याघ्रमुपयातः प्रसादकः । प्रतिनेतुम[4]योध्यायां पादौ चा[5]स्याभिवदितुम् ॥ १७ ॥

रा० टी०—तत्प्रतिवचनाकारमाह—किमिति । राज्यं प्रशासतस्तव इहागमने कार्यं प्रयोजनं किम् एतन्मत्पृष्टं सर्वमाचक्ष्व । तत्र हेतुः मे मनो न शुध्यते प्रयोजनशङ्कातो न निवर्तते ॥ १० ॥

गो० टी०—किमिति । न शुध्यते शुद्धिं न प्राप्नोति न विश्वसितीति यावत् ॥ १० ॥

११ ] ति० टी०—अविश्वासबीजमाह—सुषुवे इति । कौसल्या यं सुषुवे । चिरं चिरकालमुद्दिश्य प्रव्राजितः ॥११॥

रा० टी०—शुद्ध्यभावे हेतुं वदन्नाह—सुषुव इति । आनन्दवर्धनममित्रघ्नं यं रामं कौसल्या सुषुवे जनयामास यश्च रामो वनं प्रव्राजितः साक्षात्परंपरया वा युष्माभिरिति शेषः, एतेन भवस्तु अकार्यकर्मकारित्वं प्रतीयते इति सूचितम् ॥११॥

गो० टी०—सुषुव इत्यादि । श्लोकत्रयमेकान्वयम् । नन्दवर्धनम् आनन्दवर्धनं चिरं प्रव्राजितः चिरकालमुद्दिश्य प्रव्राजितः यः एतादृशः तस्य रामस्य राज्यमकण्टकं भोक्तुमनाः अपापस्य तस्यानुजस्य च पापं कर्तुं नेच्छसि कच्चिदिति संबन्धः ॥ ११–१३ ॥

१२ ] ति० टी०—वनवासी भवेति नियुक्तः ॥ १२ ॥

१३ ] ति० टी०—इह वने तस्य रामस्य तस्यानुजस्य लक्ष्मणस्य च पापं कर्तुमिहेच्छसीत्यन्वयः । तत्र हेतुः—अकण्टकमसपत्नम् ॥ १३ ॥

रा० टी०—नियुक्त इति । स्त्रीनिमित्तेन स्त्रीहेतोः चतुर्दशसमाः वर्षाणि वनवासी भवेति पित्रा योऽसौ महायशा रामो नियुक्तस्तस्य अपापस्य पापनिवर्तकस्य रामस्य तस्यानुजस्य लक्ष्मणस्य वा पापमपराधं कर्तुमिह राज्यं भोक्तुमनास्त्वं नेच्छसि कच्चित् । श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—पर्यश्रुनयनः परिप्लुतनयनः संसज्जमानया स्खलन्त्या ॥ १४ ॥

रा० टी०—एवमिति । एवमुक्तः भरतः अत एव दुःखात् संभावितरामापराधजनितक्लेशात् पर्यश्रुनयनः सन् संसज्जमानया रामविषयकासक्तिविशिष्टया वाचा भरद्वाजं प्रत्युवाच ॥ १४ ॥

गो० टी०—एवमिति । पर्यश्रुनयनः परिप्लुताश्रुनयनः संसज्जमानया स्खलन्त्या ॥ १४ ॥

१५ ] ति० टी०—मामेवं पापप्रसक्तं यदि भगवान्सर्वज्ञो मन्यते तदा हतोऽस्मि व्यर्थजन्मास्मि । दोषं प्रव्राजनदोषं मत्तो मद्रूपनिमित्ततो नेत्यहमाशङ्के स्वानुभवतो जानामि अतो मामेवं मानुशाधि मैवं कर्णकठोरं ब्रूहि ॥ १५ ॥

रा० टी०—तद्वचनाकारमाह—हत इति । भगवान् ज्ञानाद्यैश्वर्यवान् यदि एवमभिमन्यते जानाति तर्हि अहं हतः निहतप्रायः । तत्र हेतुः—मत्तो मद्धेतोः दोषं कंचित् रामापराधं नाशङ्के न पश्यामीत्यर्थः, अत एव मा अनुशाधि कथयेत्यर्थः॥१५॥

गो० टी०—हत इति । हतोऽस्मि व्यर्थजन्मास्मि भगवानपि भूतभविष्यद्वर्तमानज्ञोऽपीत्यर्थः, मत्तः मत्सकाशात् मयि दोषं नाशङ्के नोत्प्रेक्षे मत्कृतो दोषो नास्तीति संदेहोऽपि मे नास्तीत्यर्थः, अभावादिति भावः । अतो मामेवं नानुशाधि एवं कर्णारुन्तुदं वक्तुं नार्हसि ॥ १५ ॥

१६ ] ति० टी०—ननु कथमपलापः क्रियतेऽत आह—न चेति । मदन्तरे मद्विषये । यत्तु मया विनेत्यर्थ इति तन्न, अन्तरेणेत्यव्ययस्यैव तदर्थत्वात्, मम त्ववसरवाची अन्तरशब्द इति न दोषः । यन्मे मातावोचन्मदभिषेकरामवनवासादि तन्मे नेष्टम् । तदेव विवृणोति—नाहमिति । एतेन मातृकृतव्यापारेण । न च तद्वचममाददेऽङ्गीकरोमि इदानीमपीति शेषः॥१६॥

रा० टी०—ननु त्वन्मातृहेतुकप्रव्राजनस्य प्रसिद्धत्वात्तवानुमतिः प्रतीयत इत्यत आह—नेति । मदन्तरे मम अन्तरं दूरगमनं यस्मिन् काले तस्मिन् मे माता यदवोचत् रामप्रव्राजनार्थमकथयत् एतेन तद्वचनेन अहं न तुष्टः अत एव तद्वचनं न आददे समीचीनत्वेन स्वीकरोमि ॥ १६ ॥

गो० टी०—मातृकृतं त्वत्कृतमेवेत्याशङ्क्याह—नेति । मदन्तरे मदसंनिधौ नाददे नाङ्गीकृतवानस्मि ॥ १६ ॥

१७ ] ति० टी०—अथ स्वागमनकारणमाह—अहं त्विति । प्रसादक उपयातः प्रसादयितुमागत इत्यर्थः ॥ १७ ॥

रा० टी०—स्वागमनप्रयोजनमाह—अहमिति । अहं तु नरव्याघ्रं रामं प्रसादकः प्रसादयितुमयोध्यायां प्रति नेतुं च अभिवन्दितुं च उपयातः प्राप्तः ॥ १७ ॥

गो० टी०—अहमिति । प्रसादकः प्रसादयितुम् "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति ण्वुल् ॥ १७ ॥

१ स्त्रीनियुक्तेनेति गो. पाठः । २ अभिमन्यत इति रा. पाठः । ३ नैवमिति गो. पाठः । ४ अयोध्यां चेति गो. पाठः । ५ तस्येति गो. पाठः ।

तं मामेवंगतं मत्वा प्रसादं कर्तुमर्हसि । शंस मे भगवन्रामः क्व संप्रति महीपतिः ॥ १८ ॥
वसिष्ठादिभिर्ऋत्विग्भिर्याचितो भगवांस्ततः । उवाच तं भरद्वाजः प्रसादाद्भरतं वचः ॥ १९ ॥
त्वय्येतत्पुरुषव्याघ्र युक्तं राघववंशजे । गुरुवृत्तिर्दमश्चैव साधूनां चानुयायिता ॥ २० ॥
जाने चैतन्मनस्थं ते दृढीकरणमस्त्विति । अपृच्छं त्वां तवात्यर्थं कीर्तिं समभिवर्धयन् ॥ २१ ॥
जाने च रामं धर्मज्ञं ससीतं सहलक्ष्मणम् । अयं वसति ते भ्राता चित्रकूटे महागिरौ ॥ २२ ॥
श्वस्तु गन्तासि तं देशं वसाद्य सह मन्त्रिभिः । एतं मे कुरु सुप्राज्ञ कामं कामार्थकोविद ॥ २३ ॥
ततस्तथेत्येवमुदारदर्शनः प्रतीतरूपो भरतोऽब्रवीद्वचः ।
चकार बुद्धिं च तदाश्रमे तदा निशानिवासाय नराधिपात्मजः ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवतितमः सर्गः ॥ ९० ॥

---

१८ ] ति० टी०—एवंगतमेवंबुद्धिम् । क्व संप्रति कस्मिन्प्रदेशे ॥ १८ ॥

रा० टी०—तमिति । एवमनेन प्रकारेण गतं प्राप्तं मां मत्वा प्रसादं प्रीतिं कर्तुमर्हसि अतः संप्रति इदानीं रामः क्व अस्तीति शेषः, शंस कथय ॥ १८ ॥

गो० टी०—त्वमिति । एवंगतमेवं बुद्धा प्राप्तं महीपतिः वर्तत इति शेषः ॥ १८ ॥

१९ ] ति० टी०—याचितो भरताय प्रसन्नो भवेति प्रार्थितः, प्रसादात्प्रसादं प्राप्य ॥ १९ ॥

रा० टी०—वशिष्ठादिभिरिति । वशिष्ठादिभिः याचितः अस्य नापराधः अतोऽस्मिन् प्रसादं कुर्वित्यादिना प्रार्थितः भरद्वाजः प्रसादात् प्रीतेः भरतमुवाच ॥ १९ ॥

गो० टी०—वसिष्ठादिभिरिति । याचितः भरताय प्रसन्नो भवेति प्रार्थितः प्रसादादुवाच प्रसादं प्राप्योवाच ल्यब्लोपे पञ्चमी ॥ १९ ॥

२० ] ति० टी०—एतदुक्तरूपं वचस्त्वयि युक्तं तवोचितम् । तदेव समर्थयति—गुर्विति । गुरुवृत्तिर्गुरुसेवा यतो गुरुसेवादित्रयं राघववंशजे प्रायो दृष्टमिति शेषः, यद्वा एतत्त्रयं त्वयि युक्तमित्यन्वयः ॥ २० ॥

रा० टी०—तद्वचनाकारमाह—त्वयीति । गुरुवृत्तिः पित्रादिसेवा, दमः दुष्टदमनं, साधूनामनुयायिता अनुवर्तनमेतत्त्रयं त्वयि युक्तमुचितम् ॥ २० ॥

गो० टी०—त्वयीति । गुरुवृत्तिर्ज्येष्ठानुवर्तनं दम इन्द्रियनिग्रहः राज्यालोलत्वमिति यावत् साधूनां चानुयायिता सचित्तानुवर्तनम् इत्येतत्त्रयं त्वयि युक्तमित्यन्वयः ॥ २० ॥

२१ ] ति० टी०—दृढीकरणमन्यथाभावानिवृत्तिः । बहुनामध्ये उक्तो ह्यर्थो नान्यथा कर्तुं शक्यते । मुख्यप्रयोजनमाह—कीर्तिं समभिवर्धयन् असर्वज्ञजनं प्रतीति शेषः । हेतौ शता कीर्त्यभिवृद्धिहेतवेऽपृच्छमित्यर्थः ॥ २१ ॥

रा०टी०—जाने इति । ते तव मनःस्थं एतद्रामानुकूलवर्तनमहं जाने तस्यैव दृढीकरणमस्तु इति हेतोः तव कीर्तिं समभिवर्धयन् सन् अत्यर्थमत्यन्तं त्वामपृच्छम् ॥ २१ ॥

गो० टी०—जान इति । जाने योगप्रभावेनेति शेषः, दृढीकरणमस्त्वित्यपृच्छं स्थूणानिखननन्यायेन दृढीकर्तुमपृच्छमित्यर्थः। कीर्तिं रामविषयसौभ्रात्रजनितां समभिवर्धयन् “लक्षणहेत्वोः क्रियायाः” इति हेत्वर्थे शतृप्रत्ययः ॥ २१ ॥

२२ ] ति० टी०—अथ रामः क्वेति प्रश्नस्योत्तरमाह—जाने चेति ॥ २२ ॥

रा० टी०—जाने इति । रामादिकं तत्स्थितिं जाने। ननु तर्हि बोधयेत्यत आह—अयं मद्हृदयस्थः चित्रकूटे वसति ॥२२॥

गो० टी०—जान इति । रामं जाने देशविशेषे स्थितं रामं जान इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०—एतमथवासरूपम् । कामार्थकोविद वाञ्छितार्थप्रदानसमर्थ ! ॥ २३ ॥

रा० टी०—श्व इति । श्वः प्रातः काले तं देशं गन्तासि अतः अद्य वस एतं कामं मनोरथं कुरु पूरय, कामार्थकोविद इच्छाविषयीभूतार्थज्ञातः ! ॥ २३ ॥

गो० टी०—श्व इति । काममभीष्टं कामार्थकोविद ! काङ्क्षितार्थप्रदानदक्षेत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—प्रतीतरूपः प्रसिद्धयशाः ‘ रूपं यशस्याभिरूप्ये वर्णे चैव निरूपणे ’ इति कोशात् । तदाश्रमे भरद्वाजाश्रमे ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवतितमः सर्गः ॥ ९० ॥

रा० टी०—तत इति । ततः भरद्वाजोक्तिश्रवणानन्तरमुदारं भरद्वाजौदार्यं पश्यति सः प्रतीतरूपः प्रतीतं बोधितं रूपं रामानुयायित्वरूपस्वस्वरूपं येन स भरतः तथेत्येवं वचोऽब्रवीत् अत एव महाश्रमे निशानिवासाय बुद्धिं निश्चयं चकार ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे नवतितमः सर्गः ॥ ९० ॥

---

१ त्वमिति गो. पाठः । २ भगवानिति रा. पाठः । ३ त्वा तवेति गो. पाठः । ४ मसाविति गो. पाठः । ५ महाश्रमे इति रा. पाठः ।

# एकनवतितमः सर्गः ।

सेनापरिजनयुताय भरताय तपःसिद्धैश्वर्येण भरद्वाजेन विहितं सकलपृथ्वीपतिनापि विधातुमशक्यमातिथ्यं वर्ण्यते ।

कृतबुद्धिं निवासाय तत्रैव स मुनिस्तदा । भरतं केकयीपुत्रमातिथ्येन न्यमन्त्रयत् ॥ १ ॥
अब्रवीद्भरतस्त्वेनं नन्विदं भवता कृतम् । पाद्यमर्घ्यमथातिथ्यं वने यदुपपद्यते ॥ २ ॥
अथोवाच भरद्वाजो भरतं प्रहसन्निव । जाने त्वां प्रीतिसंयुक्तं तुष्येस्त्वं येनकेनचित् ॥ ३ ॥
सेनायास्तु तवैवास्याः कर्तुमिच्छामि भोजनम् । मम प्रीतिर्यथारूपा त्वमर्हो मनुजर्षभ ॥ ४ ॥
किमर्थं चापि निक्षिप्य दूरे बलमिहागतः । कस्मान्नेहोपयातोऽसि सबलः पुरुषर्षभ ॥ ५ ॥
भरतः प्रत्युवाचेदं प्राञ्जलिस्तं तपोधनम् । न सैन्येनोपयातोऽस्मि भगवन्भगवद्भयात् ॥ ६ ॥
राज्ञा हि भगवन्नित्यं राजपुत्रेण वा तथा । यत्नतः परिहर्तव्या विषयेषु तपस्विनः ॥ ७ ॥

---

गो० टी०—तत इति । प्रतीतरूपः प्रसिद्धकीर्तिः 'रूपं यशस्याभिरूप्ये वर्णे चैव निरूपणे' इति निघण्टुः । यद्वा प्रतीतरूपः प्रकर्षेण हृष्टः प्रशंसायां रूपप् चकार बुद्धिं चेति मद्युक्तिरन्या बुद्धिरन्येति भावः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने-ऽयोध्याकाण्डव्याख्याने नवतितमः सर्गः ॥ ९० ॥

१ ] ति० टी०—कृतबुद्धिं कृतनिश्चयम् । आतिथ्येन विशिष्टभोजनोपेतातिथिसत्काररूपहेतुना फलमपि हेतुः ॥ १ ॥

रा० टी०—भरद्वाजप्रभावं वर्णयन्नाह—कृतेति । निवासाय कृतबुद्धिं कृतनिश्चयं भरतं तत्र तस्मिन् समये एव भरद्वाज आतिथ्येन अतिथ्युचितसत्कारवचनेन न्यमन्त्रयन्ययोजयत् ॥ १ ॥

गो० टी०—कृतबुद्धिमिति । तत्रैवाश्रमे निवासाय कृतबुद्धिं निश्चितबुद्धिं भरतं स मुनिः आतिथ्येन भोजनपर्यन्तातिथिसत्काराय न्यमन्त्रयत् प्रार्थयामास ॥ १ ॥

२ ] ति० टी०—वने यदुपपद्यते तेनातिथ्यं कृतं नन्वित्यब्रवीदित्यन्वयः ॥ २ ॥

रा० टी०—अब्रवीदिति । वने यत् उपपद्यते युज्यते तेन पाद्यादिरूपमातिथ्यं भवता कृतमिति भरतः एवं निमन्त्रयितारं भरद्वाजमब्रवीत्, एतेन इतःपरं निमन्त्रणं न कर्तव्यमिति ध्वनितम् ॥ २ ॥

गो० टी०—अब्रवीदिति । वने यत्फलमूलादिकमुपपद्यते लभ्यते तेन तापसाहारेणातिथ्यं कृतम्, ननु एतावन्मात्रेण तुष्टोऽस्मीति भावः ॥ २ ॥

३ ] ति० टी०—वनवासित्वेन दरिद्रत्वादेतदधिकातिथ्यकरणेऽसामर्थ्यं मन्यत इत्याशयेन प्रहसन्निवेति । येनकेनचिदपि तुष्येस्तुष्टो भवेरिति मन्ये वन्येनाप्यातिथ्येन प्रीतियुक्त इति जाने ३

रा० टी०—अथ इति । अथ भरतोक्तिश्रवणानन्तरं प्रहसन्निव भरद्वाजः भरतमुवाच । तद्वचनाकारमाह—यतः त्वं येनकेनचित्तुष्येः अतः प्रीतिसंयुक्तं मद्विषयकप्रीतिमन्तं त्वां जाने॥३॥

गो० टी०—अथेति । प्रहसन्निव प्रहासावेदकानुभावयुक्त इत्यर्थः, मुनिरितः परं किं करिष्यतीति भरताशयज्ञानेन हासः । त्वां प्रीतिसंयुक्तं मद्विषये संतुष्टं जाने अत एव-केनचिदुपचारेण तुष्येः तुष्टो भवेः ॥ ३ ॥

४ ] ति० टी०—अथापि—सेनाया इत्यादि । मम प्रीतिर्यथारूपा ममेच्छा यादृशी तथारूपां तां त्वमर्होऽसि अङ्गीकर्तुमिति शेषः ॥ ४ ॥

रा० टी०—ननु तर्हि किमर्थं निमन्त्रणमित्यत आह—सेनाया इति । तवास्याः सेनायाः सेनाकर्तृकं भोजनमिच्छामि अतः अयथारूपा यादृशी मम प्रीतिः तादृश्याः प्रीतेस्त्वमर्हः योग्योऽसि ॥ ४ ॥

गो० टी०—सेनाया इति । भुज्यत इति भोजनमन्नम् अत्रादौ तथापीत्युपस्कार्यं तथापि मम प्रीतिर्यथारूपा यादृक्प्रकारा तथा त्वमर्हः त्वं तथा प्रीतो भवितुमर्ह इत्यर्थः, तथाऽनुमन्तुमर्हसीत्यर्थो वा ॥ ४ ॥

५ ] ति० टी०—बलं दूरे निक्षिप्यैकाकी किमर्थमागतः । अयमेवार्थो व्यतिरेकमुखेन दर्श्यते—कस्मादिति ॥ ५ ॥

रा० टी०—किमिति । बलं सेनां दूरे किमर्थं निक्षिप्य इहागतः सबलः ससैन्यः कस्मात्न इह उपयातः प्राप्तोऽसि ॥५॥

गो० टी०—किमर्थमिति । उक्तमेवार्थं व्यतिरेकमुखेनाप्याह—कस्मादित्यादिना ॥ ५ ॥

६ ] ति० टी०—अत्रोत्तरमाह—भरत इति । भगवद्भयाद्भगवदाश्रमपीडाप्रसङ्गभयादित्यर्थः ॥ ६ ॥

रा० टी०—भरत इति । प्राञ्जलिर्भरतः तपोधनं भरद्वाजं प्रत्युवाच । तत्प्रतिवचनाकारमाह—हे भगवन्! भगवतो भवतो भयात् सैन्येन सह न उपयातोऽस्मि ॥ ६ ॥

गो० टी०—भरत इति । भगवद्भयात् भवान्कुप्येदिति भयात् ॥ ६ ॥

७ ] ति० टी०—विषयेषु देशेषु परिहर्तव्यास्तदाश्रमवर्तिवृक्षोदकादिबाधाप्रसक्तिनिमित्तमनुपरोध्याः ॥ ७ ॥

रा० टी०—राज्ञेति । हे भगवन्! तपस्विनः विषयेषु

---

१ एतस्या इति गो. पाठः । २ मनुजाधिपेति गो. पाठः । ३ ससैन्य इति गो. पाठः । ४ संदेति गो. पाठः ।

वाजिमुख्या मनुष्याश्च मत्ताश्च वरवारणाः । प्रच्छाद्य भगवन्भूमिं महतीमनुयान्ति माम् ॥ ८ ॥
ते वृक्षानुदकं भूमिमाश्रमेषूटजांस्तथा । न हिंस्युरिति तेनाहमेक एवागतस्ततः ॥ ९ ॥
आनीयतामितः सेनेत्याज्ञप्तः परमर्षिणा । तैथानुचक्रे भरतः सेनायाः समुपागमम् ॥ १० ॥
अग्निशालां प्रविश्याथ पीत्वापः परिमृज्य च । आतिथ्यस्य क्रियाहेतोर्विश्वकर्माणमाह्वयत् ॥ ११ ॥
आह्वये विश्वकर्माणमहं त्वष्टारमेव च । आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १२ ॥
आह्वये लोकपालांस्त्रीन्देवाञ्शक्रपुरोगमान् । आतिथ्यं कर्तुमिच्छामि तत्र मे संविधीयताम् ॥ १३ ॥
प्राक्स्रोतसश्च या नद्यस्तिर्यक्स्रोतस एव च । पृथिव्यामन्तरिक्षे च समायान्त्वद्य सर्वशः ॥ १४ ॥
अन्याः स्रवन्तु मैरेयं सुरामन्याः सुनिष्ठिताम् । अपराश्चोदकं शीतमिक्षुकाण्डरसोपमम् ॥ १५ ॥

---

तत्समीपवर्तिदेशेषु राज्ञा तत्पुत्रेण वा यत्नतः परिहर्तव्याः त्यक्तव्याः उपद्रवा इति शेषः, एतेनोपद्रवभीतेरेव सैन्यं नात्रानीतमिति सूचितम् ॥ ७ ॥

गो० टी०—राज्ञेति । विषयेषु तपस्विनः स्वकीयदेशेषु वर्तमाना ऋषयः यत्नतः परिहर्तव्याः ससैन्येन तत्समीपं न गन्तव्यमित्यर्थः ॥ ७ ॥

८-९ ] ति० टी०—तदेवाह—वाजीत्यादि ॥ ८-९ ॥

रा० टी०—उपद्रवहेतुभूतानाह—वाजीति । वाजिमुख्याः अश्वश्रेष्ठाः मनुष्याश्च वरवारणाः श्रेष्ठगजाश्च महतीं भूमिं प्रच्छाद्य संरुध्य मामनुयान्ति ॥ ८ ॥

रा० टी०—त इति । ते वाज्यादयः वृक्षान् भवत्संरक्षिततरून् उदकं जलं च भूमिं लेपनादिविशिष्टपृथिवीं च उटजान् पर्णशालाश्च न हिंस्युः दूषयेयुस्तेन हेतुना ततः स्थापितसैन्यादिस्थलात् एकः उपद्रवहेतुभिः रहित आगतः । इतिश्चार्थः, एकशब्दः केवलार्थकः, तेन वसिष्ठस्य सहागमनेऽपि न विरोधः॥९॥

गो० टी०—कोपनिमित्तमाह—वाजिमुख्या इत्यादिना । उटजान् पर्णशालाः ॥ ८ ॥ ९ ॥

१० ] ति० टी०—परमर्षिणा श्रुतभरतवचसा समुपागमं समीपानयनम् ॥ १० ॥

रा० टी०—आनीयतामिति । सेना इतः अस्मिन् स्थले आनीयतामित्यनेन प्रकारेण परमर्षिणा आज्ञप्तो भरतः सेनायाः समुपागममानयनमनुचक्रे ॥ १० ॥

गो० टी०—आनीयतामिति । ततः सेनानिवेशस्थलाद् इतः इह समुपागमं समानयनम् ॥ १० ॥

११ ] ति० टी०—पीत्वापः परिमृज्येति हृदयंगमाभिर्द्विरोष्ठौ परिमृज्येत्सकृदाचम्येत्युक्तरीत्याऽऽचम्य आतिथ्यक्रियाहेतोरातिथ्यसंपादननिमित्तम्, विश्वकर्मा सृष्टिकर्तृविशेषः॥११॥

रा० टी०—मुनिवृत्तमाह—अग्नीति । अग्निशालां प्रविश्य अपः जलानि पीत्वा त्रिराचम्येत्यर्थः, परिमृज्य यथाविधि मार्जनं कृत्वा च आतिथ्यकर्मिकायाः क्रियायाः हेतोः विश्वकर्माणमाह्वयत् ॥ ११ ॥

गो० टी०—अग्निशालामिति । अग्निशालाप्रवेशः पावनत्वार्थः देवतासंनिधानस्थलत्वात्, अपः पीत्वा त्रिरिति शेषः "त्रिराचामेत्" इति श्रुतेः । परिमृज्य आस्यं द्विरिति शेषः "द्विः परिमृज्य" इतिश्रुतेः, चकारेण सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमारभ्य इत्युक्तसंग्रहः । अनेन सर्वकर्माङ्गमाचमनमिति दर्शितं क्रियाहेतोः करणनिमित्तम् ॥ ११ ॥

१२ ] ति० टी०—आह्वानप्रकारमाह—आह्वये इति । त्वष्टारं तक्षणादिव्यापारोपेतं विश्वकर्माणम्, संविधीयतां विश्वकर्मसाध्यगृहादि सर्वं सिद्धं क्रियताम् ॥ १२ ॥

रा० टी०—आह्वानप्रकारमाह—आह्वय इति । त्वष्टारं तक्षकर्मसमर्थं विश्वकर्माणम् आह्वये, आह्वाने हेतुः अहम् आतिथ्यं कर्तुमिच्छामि । तत्र आतिथ्यकर्मणि संविधीयतां तन्निर्वाहकसामग्री संप्राप्यतामित्यर्थः ॥ १२ ॥

गो० टी०—आह्वानमन्त्रमाह—आह्वय इत्यादिना । आह्वय इत्यात्मनेपदमार्षम् । विश्वकर्मा सर्वशिल्पकर्ता त्वष्टा तु तक्षणेन गृहादिनिर्माता, यद्वा त्वष्टारमेव चेत्यवधारणेनासुरविश्वकर्मा मयो व्यावर्त्यते तत्रातिथ्यनिमित्तं संविधीयतां गृहादिसंविधानं क्रियताम् ॥ १२ ॥

१३ ] ति० टी०—त्रीन्यमवरुणकुबेरानिति तीर्थः । कार्यविशेषेष्वेषामपि नियोगो बोध्यः ॥ १३ ॥

रा० टी०—आह्वये इति । शक्रपुरोगमान् इन्द्रमुख्यान् लोकपालान् त्रीन् यमवरुणकुबेरान् देवान् आह्वये तद्गुणसंविज्ञानो बहुव्रीहिः ॥ १३ ॥

गो० टी०—वक्ष्यमाणान्नपानादिरक्षणाय लोकपालानाह्वयति—आह्वय इति । शक्रमुखान् इन्द्रप्रधानान् शक्रस्य पृथक् निर्देशात् त्रीन् लोकपालान् यमवरुणकुबेरान् देवानित्यग्न्यादय उच्यन्ते, संविधीयतां पालनं क्रियताम् ॥ १३ ॥

१४ ] ति० टी०—अन्तरिक्षे नदी आकाशगङ्गा ॥ १४ ॥

रा० टी०—प्रागिति । पृथिव्यामन्तरिक्षे च याः प्राक्स्रोतसः पूर्वाभिमुखप्रवाहाः याः तिर्यक्स्रोतसः पश्चिमाभिमुखवाहिन्यश्च नद्यस्ताः सर्वशः अद्य समायान्तु ॥ १४ ॥

गो० टी०—सर्वा नदीर्द्वेधा विभज्याह्वयति—प्राक्स्रोतस इति । सह युगपत् ॥ १४ ॥

१५ ] ति० टी०—तासां कृत्यमाह—अन्या इति । मैरेयं

---

१ समागत इति गो. पाठः । २ ततस्त्विति गो. पाठः । ३ मुखांस्तथेति गो. पाठः । ४ प्रत्यगिति गो. पाठः ।

आह्वये देवगन्धर्वान्विश्वावसुहहाहुहून् । तथैवाप्सरसो [१]देवगन्धर्वैश्चापि सर्वशः ॥ १६ ॥
घृताचीमथ विश्वाचीं मिश्रकेशीमलंबुषाम् । नागदत्तां च हेमां च सोमामद्रिकृतस्थलीम् ॥ १७ ॥
शक्रं याश्चोपतिष्ठन्ति ब्रह्माणं याश्च भामिनीः । सर्वास्तुम्बुरुणा सार्धमाह्वये सपरिच्छदाः ॥ १८ ॥
वनं कुरुषु यद्दिव्यं वासोभूषणपत्रवत् । दिव्यनारीफलं शश्वत्तत्कौबेरमिहैवं तु ॥ १९ ॥
इह मे भगवान्सोमो विधत्तामन्नमुत्तमम् । भक्ष्यं भोज्यं च चोष्यं च लेह्यं च विविधं बहु ॥ २० ॥

मद्यभेदो धात्रीधातकीप्रभृतिनिर्मितः । सुरा गौडी माध्वी पैष्टी चेति त्रिविधा । सुनिष्ठितां सुनिष्पादिताम् । इक्षुकाण्डरसोपमं तद्वन्मधुरम् ॥ १९ ॥

रा० टी०—तदागमने प्रयोजनमाह—अन्या इति । अन्याः कादिचन्मैरेयमन्याः सुनिष्ठितां सुनिष्पादितां सुरामपराः शन्याः इक्षुकाण्डरसोपमं शीतमुदकं जलं स्रवन्तु ॥ १९ ॥

गो० टी०—तासां कर्तव्यमाह—अन्या इति । अन्याः काश्चन मैरेयं मिरादेशे भवं खर्जूरादिहेतुकं मद्यविशेषं, सुराम् 'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा' इत्युक्तां त्रिविधां सुरां सुनिष्ठितां सुनिष्पादिताम् इक्षुकाण्डरसोपमं काण्डो वर्गः ॥ १९ ॥

१६–१७ ] ति० टी०—हहा हाहाः छन्दोवशाद्ध्रस्वपाठः ॥ १६ ॥ १७ ॥

रा० टी०—आह्वये इति । देवगन्धर्वान् देवानां गन्धर्वान् विश्वावसुहहाहुहूंश्च त्रयाणां द्वन्द्वः । हहाहुहूनित्यत्र ह्रस्वश्छान्दसः एतन्नामकावन्यौ वा, देवीर्देवसंबन्धिनीः गन्धर्वीर्गन्धर्वसंबन्धिनीश्च सर्वशः अप्सरसः आह्वये ॥ १६ ॥

गो० टी०—गानार्थमाह्वयति—आह्वय इति । देवगन्धर्वान् मनुष्यगन्धर्वभिन्नान् हहाहुहूरिति छान्दसो ह्रस्वः । अप्सरसां द्वैविध्यमाह—देवीर्गन्धर्वीरिति । देवीः देवजातीः गन्धर्वीः गन्धर्वजातीः अत एव "एते वै गन्धर्वाप्सरसां ग्रहाः" इति श्रौतप्रयोगः ॥ १६ ॥

रा० टी०—प्रधानाप्सरसां नामानि निर्दिशन्नाह—घृताचीमिति । घृताचीप्रभृतीराह्वये इति पूर्वेणान्वयः ॥ १७ ॥

गो० टी०—आवश्यकत्वेन प्रधानाप्सरसो विशिष्याह्वयति—घृताचीमित्यादिना । घृतवदच्यते पूज्यत इति घृताची विश्वैः समस्तैः अच्यत इति विश्वाची मिश्रकेशीं मिरन्तरकेशीं श्रेष्ठकेशीं वा, बुसेभ्योऽलमलम्बुसां बुसा बुधाः देवाः वर्णविपर्ययः नागानां दन्ता इव शुभ्राः दन्ताः यस्यास्तां नागदन्तां हेमां हेमवर्णां पुनश्च 'हेमाम्' इति पाठे पूर्वोक्तहेमापेक्षया अस्या व्यावृत्तिमाह । अद्रिकृतस्थलामिति अद्रौ महेन्द्रे मयेन कृतनिवासां स्वयं प्रभाबिलस्थामित्यर्थः 'हिमाम्' इति पाठे हिमवच्छीतलाङ्गीं, यद्वा हिममस्यास्तीति हिमा अद्रिकृतस्थला चान्या एवमेतान्यन्वर्थनामानि ॥ १७ ॥

१८ ] ति० टी०—सपरिच्छदाः सालंकाराः नृत्यगीताद्यपेक्षितपरिकरोपेताश्च । 'ब्राह्मणम्' इति पाठे बृहस्पतिं या उपतिष्ठन्तीत्यत्युत्कर्ष इति कतकः ताः सर्वा भामिनीराह्वये इति संबन्धः ॥ १८ ॥

रा० टी०—शक्रमिति । याः शक्रमुपतिष्ठन्ति याश्च ब्रह्माणमुपतिष्ठन्ति ताः तुम्बुरुणा स्वशिक्षकेन सार्धं विद्यमानाः सपरिच्छदाः सामग्रीसहिता भामिनीः स्त्रियः आह्वये ॥ १८ ॥

गो० टी०—शक्रमिति । शक्रं या उपतिष्ठन्ति रम्भोर्वशीमेनकादयः ब्रह्माणं चतुर्मुखं तल्लोकेऽप्यप्सरसः सन्ति "तं पञ्चशतान्यप्सरसां प्रति धावन्ति" इति श्रुतेः इदं च मतान्तरमनुसृत्योक्तं, तुम्बुरुणा तासां गानशिक्षकेण सपरिच्छदाः नृत्यगीताद्युपकरणसहिताः सालंकारा वा ॥ १८ ॥

१९–२० ] ति० टी०—कुरुषूत्तरकुरुषु यद्दिव्यं वनं चैत्ररथाख्यम् । दिव्यत्वोपपादकं वासोभूषणान्येव पत्राणि यद्वातिवृक्षाणां तत् । दिव्यनार्य एव फलानि यत्र तत् । इहैव तु इह वने एवागच्छत्विति शेषः । 'इहैतु वै' इति पाठान्तरम् तद्देवताधिष्ठानादिदमेव वनं तथा भवत्वित्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—वनमिति । वासो भूषणपत्रवत् वासांसि च भूषणानि च तान्येव पत्राणि तद्वत्, दिव्यनार्य एव फलानि यस्य तत् कुरुषु उत्तरकुरुषु विद्यमानं यद्दिव्यं वनं चैत्ररथसंज्ञकमित्यर्थः, तत्कौबेरं वनमिहैव आगच्छतु इति शेषः ॥ १९ ॥

गो० टी०—भोगोपकरणान्याहूय भोगस्थानान्याह्वयति—वनमिति । वनं चैत्ररथाख्यं तच्चोत्तरकुरुदेशे वर्तते दिव्यं देवार्हं वासोभूषणान्येव पत्राण्यस्मिन्सन्तीति वासोभूषणपत्रवत् शश्वत् सर्वदा दिव्यनार्य एव फलानि यस्मिंस्तत् तथा एवंभूतं यत्कौबेरमस्ति तत् इह वने एतु आगच्छतु उत्तरदिक्पालत्वेन कुबेराधिष्ठितत्वात् कौबेरमित्युक्तम् इयं च कुबेरं प्रत्येवोक्तिः नदीनामिव वनस्याह्वानं तदधिष्ठातृदेवताद्वारा ॥ १९ ॥

रा० टी०—इहेति । उत्तममन्नं विविधमनेकविधं बहुभक्ष्यादिकं च विचित्राणि माल्यानि पुष्पाणि पादपप्रच्युतानि वृक्षेभ्यः पतितानि सुरादीनि च विविधानि पेयानि मांसानि राजभोग्यवस्तूनि च भगवान् सोमः चन्द्रः इह मे विधत्तां प्रापयत्वित्यर्थः । श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

गो० टी०—एवं कुबेरं प्रत्युक्त्वा अन्नपतिं चन्द्रं प्रत्याह—

१ देवीर्गन्धर्वीरिति गो. रा. पाठः । २ बुसामिति गो. पाठः । ३ हिमा……स्थलामिति गो. पाठः । ४ योषित इति गो. पाठः । ५ एतु चेति गो. पाठः । ६ चूष्यमिति रा. पाठः ।

विचित्राणि च माल्यानि पादपप्रच्युतानि च । सुरादीनि च पेयानि मांसानि विविधानि च ॥ २१ ॥
एवं समाधिना युक्तस्तेजसाऽप्रतिमेन च । [1]शिक्षास्वरसमायुक्तं [2]सुव्रतश्चाब्रवीन्मुनिः ॥ २२ ॥
मनसा ध्यायतस्तस्य प्राङ्मुखस्य कृताञ्जलेः । आजग्मुस्तानि सर्वाणि दैवतानि पृथक्पृथक् ॥ २३ ॥
मलयं दर्दुरं चैव ततः स्वेदनुदोऽनिलः । उपस्पृश्य ववौ युक्त्या सुप्रियात्मा [3]सुखं शिवः ॥ २४ ॥
ततोऽभ्यवर्षन्त घना दिव्याः कुसुमवृष्टयः । देवदुन्दुभिघोषश्च दिक्षु सर्वासु शुश्रुवे ॥ २५ ॥
प्रववुश्चोत्तमा वाता ननृतुश्चाप्सरोगणाः । प्रजगुर्देवगन्धर्वा वीणाः प्रमुमुचुः स्वरान् ॥ २६ ॥

इहेति । मे मन्निमित्तं भगवान् माहात्म्यवान् सोम ओषधीनामधिपतिश्चन्द्रः उत्तममन्नं विधत्तां संपादयतु । अन्नं चतुर्विधत्वेन विशेषयति—भक्ष्यमित्यादि । भक्ष्यं खाद्यमपूपादि, भोज्यम् ओदनादि, चोष्यं शुष्कादि लेह्यं रसायनादि विविधम् एकैकमनेकविधं तदपि बहु अनल्पम् ॥ २० ॥

२१ ] ति० टी०—पादपप्रच्युतानि वृक्षेभ्यः स्वयं जातानि ॥ २१ ॥

गो० टी०—विचित्राणीति । पादपप्रच्युतानि नवानीति भावः ॥ २१ ॥

२२ ] ति० टी०—शिक्षास्वरसमायुक्तं शिक्षाप्रतिपाद्यवर्णोच्चारणलक्षणोपेतम् , तथा व्याकरणोपदिश्यमानप्रकृतिप्रत्ययस्वरोपेतम् । स्वरेत्युपलक्षणम् 'एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति' इत्युक्तेः । समाधितेजस्तपोभिर्युक्त एवंगुणोपेतमाह्वानवाक्यमब्रवीदित्यर्थः । महर्षेस्तपोबलात्स्वर्गे कामधुक्त्वेन प्रसिद्धादपि वचनादिहैव सर्वं सिद्धमिति भावः ॥ २२ ॥

रा० टी०—एवमिति । समाधिना चित्तैकाग्र्येण युक्तः अप्रतिमेन उपमारहितेन तेजसा च युक्तः सुव्रतो मुनिः शिक्षास्वरसमायुक्तं शिक्षया शिक्षाप्रतिपादितोच्चारणविधिना स्वरेण व्याकरणप्रतिपादितप्रकृत्यादिनिष्ठोदात्तादिना समायुक्तं यथा स्यात्तथा मुनिरब्रवीत् ॥ २२ ॥

गो० टी०—एवमाह्वाने शक्तिविशेषं दर्शयति—एवमित्यादिना । समाधिना योगेन तपसा ज्ञानेन, यद्वा अनशनादिकायक्लेशरूपेण अत एव तेजसा अनागमे दण्डनसामर्थ्येन च युक्तः मुनिः शीक्षास्वरसमायुक्तं शिक्ष्यन्ते उपदिश्यन्ते वर्णस्वरादयोऽनयेति शीक्षा छान्दसो दीर्घः शीक्षाप्रतिपाद्यस्वरयुक्तमिति क्रियाविशेषणम् "दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति स्वरापराधस्य प्रत्यवायहेतुत्वश्रवणात्, एवम् आह्वये विश्वकर्माणमित्यारभ्योक्तरीत्या अब्रवीत् आह्वानमन्त्रानजपदित्यर्थः ॥ २२ ॥

२३ ] ति० टी०—मनसा ध्यायतो मनसा ध्यानपूर्वककृताह्वानस्य सम्याहृतानि ॥ २३ ॥

रा० टी०—मनसेति । ध्यायतस्तस्य मुनेः अग्रे इति शेषः, सर्वाणि दैवतानि देवाः पृथक् पृथगाजग्मुः ॥ २३ ॥

गो० टी०—मनसेति । मनसा अनन्यपरेणेत्यर्थः, ध्यायतः निरन्तरं चिन्तयतः प्राङ्मुखस्येत्यदृष्टविशेषार्थं कृताञ्जलेरिति आह्वानमुद्रोक्ता तानि पूर्वोक्तानि दैवतानि विश्वकर्मादीनि मुनिदृष्टिविषयत्वाय पृथक् पृथक् आजग्मुः ॥ २३ ॥

२४ ] ति० टी०—मलयदर्दुरौ चन्दनपर्वतौ उपस्पृश्य स्पृष्ट्वा युक्त्या यथोचितवृत्त्या शैत्यमान्द्यसौरभयोगेन सुप्रियात्मा सुप्रियस्वरूपः अत एव शिवः सुखद ईदृशोऽनिलः सुखं ववौ ॥ २४ ॥

रा० टी०—आगतानां तेषां कृत्यमाह—मलयमित्यादिभिः । ततः आगमनानन्तरं मलयं तदभिधं दर्दुरं तदभिधं च चन्दनपर्वतं युक्त्या उपस्पृश्य स्वेदनुदः स्वेदस्य निवर्तकः सुप्रियः सर्वेषामतिप्रीतिविषयीभूतः आत्मा प्रयत्नो यस्य शिवः कल्याणप्रदोऽनिलो वायुः सुखं ववौ ॥ २४ ॥

गो० टी०—मलयमिति । मलयश्चन्दनालयः दर्दुरस्तत्समीपस्थश्चन्दनोत्पत्तिस्थानभूतो गिरिः तदुभयं चोपस्पृश्य सुप्रियात्मा सुप्रियस्वभावः सुगन्ध इत्यर्थः, अत एव सुखः सुखकरः शिवः शीतलः युक्त्या अङ्गस्पर्शेन स्वेदनुदः स्वेदनिवर्तकः "इगुपधज्ञा—" इत्यादिना कप्रत्ययः अनिलः वायुः ततः गिरिद्वयाद्ववौ इन्द्राद्याह्वानेन वाय्वाह्वानमर्थसिद्धम् ॥२४॥

२५] ति० टी०—घना मेघाः ॥ २५

रा०टी०—तत इति । ततः अनन्तरं घनाः मेघाः अभ्यवर्षन्त दिव्याः देवकृताः कुसुमवृष्टयश्च अभ्यवर्तन्तेति शेषः, सर्वासु दिक्षु देवदुन्दुभिघोषश्च शुश्रुवे घनशब्दस्य निरन्तरार्थकत्वे तु घना इति कुसुमवृष्टिविशेषणम् अस्मिन्पक्षे अभ्यवर्षन्तेत्यस्यैव अभ्यवर्तन्तेत्यर्थः 'घनं निरन्तरं सान्द्रम्' इत्यमरः॥ २५॥

गो० टी०—तत इति । घनाः निरन्तराः 'घनं निरन्तरं सान्द्रम्' इत्यमरः। पुष्पवृष्टयोऽभ्यवर्तन्त आसन्नित्यर्थः ॥२५॥

२६ ] ति० टी०—वीणा वाद्यमाना इति शेषः। स्वरान्षड्जादीन् ॥ २६ ॥

रा० टी०—प्रववुरिति । उत्तमाः अनुकूलाः वाताः प्रीत्यतिशयेन विविधजनव्यजनसंभूतपवनाः प्रववुः चेलुः अत एव पूर्वेण न पौनरुक्त्यं देवगन्धर्वाः प्रजगुः वीणाः स्वरान् षड्जादीन् प्रमुमुचुः ॥ २६ ॥

१ शीक्षेति गो. पाठः । २ तपसेति गो. पाठः । ३ सुख इति गो. पाठः । ४ ऽवर्तन्तेति गो. पाठः ।

स शब्दो द्यां च भूमिं च प्राणिनां श्रवणानि च । विवेशोच्चावचः श्लक्ष्णः समो लयगुणान्वितः ॥ २७ ॥
तस्मिन्नेवंगते शब्दे दिव्ये श्रोत्रसुखे नृणाम् । ददर्श भारतं सैन्यं विधानं विश्वकर्मणः ॥ २८ ॥
बभूव हि समा भूमिः समन्तात्पञ्चयोजनम् । शाद्वलैर्बहुभिश्छन्ना नीलवैदूर्यसंनिभैः ॥ २९ ॥
तस्मिन्बिल्वाः कपित्थाश्च पनसा बीजपूरकाः । आमलक्यो बभूवुश्च चूताश्च फलभूषिताः ॥ ३० ॥
उत्तरेभ्यः कुरुभ्यश्च वनं दिव्योपभोगवत् । आजगाम नदी सौम्या तीरजैर्बहुभिर्वृता ॥ ३१ ॥
चतुःशालानि शुभ्राणि शालाश्च गजवाजिनाम् । हर्म्यप्रासादसंयुक्ततोरणानि शुभानि च ॥ ३२ ॥
सितमेघनिभं चापि राजवेश्म सुतोरणम् । शुक्लमाल्यकृताकारं दिव्यगन्धसमुक्षितम् ॥ ३३ ॥

गो० टी०—प्रववुरिति । प्रववुश्चोत्तमा वाता इति पूर्वोक्तस्यैवाविच्छेद उच्यते । वीणाः प्रमुमुचुः स्वरान् वीणाशब्देन वीणावन्तो लक्ष्यन्ते तदेकपरत्वव्यञ्जनाय स्वरान्मुमुचुः उत्पादयामासुः, असिश्छिनत्तीतिवत् करणे कर्तृत्वोपचारो वा॥२६॥

२७ ] ति० टी०—लयो नृत्तगीताद्यनुगततालप्रमाणम्॥२७॥

रा० टी०—स इति । समः समविशिष्टः लयगुणान्वितः लयाः नृत्यगीतानुकूलतालप्रमाणानि तैर्युक्तः उच्चावचः यथोचितमूर्ध्वाधोगतिविशिष्टः सः गन्धर्वगानादिशब्दः द्यां दिवं भूमिं च श्रवणानि च विवेश ॥ २७ ॥

गो० टी०—स शब्द इति । स शब्दः द्यां च भूमिं चाधिवसतामिति शेषः, प्राणिनां श्रवणानि श्रोत्राणि विवेश । स शब्दः कीदृशः उच्चारितः वीणादिभिरुत्पादितः श्लक्ष्णः कोमलसमः निषादादिषु कुत्रचित् औत्कण्ठ्यरहितः मन्द्रमध्यमतारश्रुतिसाम्ययुक्तो वा लयगुणान्वितः लयो नाम नृत्यगीतवाद्यानामेककालविरामः स एव गुणस्तेनान्वितः ॥ २७ ॥

२८ ] ति० टी०—भरतस्येदं भारतं सैन्यं विश्वकर्मणो विधानं ददर्श ॥ २८ ॥

रा० टी०—तस्मिन्निति । दिव्ये देवसंबन्धिनि श्रोत्रसुखे कर्णसुखप्रदे एवमनेन प्रकारेण तस्मिन् शब्दे गते प्राप्ते सति भारतं भरतसंबन्धि सैन्यं विश्वकर्मणो विधानं रचनां ददर्श॥२८॥

गो० टी०—तस्मिन्निति । अनेन गन्धर्वाप्सरसामागमनमात्रं सूचितं, विधानं निर्माणं तच्च प्रपञ्चयिष्यति—चतुःशालानीत्यादिना ॥ २८ ॥

२९ ] ति० टी०—तदेव विधानं दर्शयति—बभूवेत्यादि । छन्ना बभूवेत्यनुकर्षः । शाद्वलं कोमलतृणमत्र ॥ २९ ॥

रा० टी०—विधानमेवाह—बभूवेत्यादिभिः । समन्तात्चतुर्दिक्षु नीलवैदूर्यसंनिभैः बहुभिः शाद्वलैः कोमलतृणैः छन्ना भूमिः पञ्चयोजनं विंशतिक्रोशं समा बभूव ॥ २९ ॥

गो० टी०—देवताकृत्यमाह—बभूवेति । शाद्वलैर्बालतृणवत्प्रदेशैः छन्ना व्याप्ता नीलवैदूर्यसंनिभैः इन्द्रनीलवैदूर्याभ्यां तुल्यैः ॥ २९ ॥

३० ] ति० टी०—तस्मिन्पञ्चयोजनमिते देशे फलभूषिताः कपित्थादयो बभूवुरित्यन्वयः ॥ ३० ॥

रा० टी०—तस्मिन्निति । फलभूषिताः फलैः शोभिताः बिल्वादयस्तस्मिन् पञ्चयोजनात्मकप्रदेशे बभूवुः अजायन्त॥३०॥

गो० टी०—तस्मिन्निति । तस्मिन् भूप्रदेशे बीजपूरकाः मातुलुङ्गकाः फलान्येव भूषणानि येषां ते फलभूषणा इति सर्ववृक्षविशेषणम् 'आमलक्यो बभूवुः' इति पाठः ॥ ३० ॥

३१ ] ति० टी०—वनं चैत्ररथम् नदी जातावेकवचनम् तीरजैर्वृक्षैः ॥ ३१ ॥

रा० टी०—उत्तरेभ्य इति । दिव्योपभोगवत् देवसंबन्ध्युपभोगविशिष्टं वनं तीरजैर्वृक्षैर्वृता सौम्या रम्या नदी च उत्तरेभ्यः कुरुभ्यः आजगाम ॥ ३१ ॥

गो० टी०—उत्तरेभ्य इति । वनमाहृतं कौबेरवनं दिव्योपभोगवत् दिव्योपभोगार्हम् । नदीति जात्येकवचनं तीरजैः वृक्षैरिति शेषः ॥ ३१ ॥

३२ ] ति० टी०—चतुःशालानि शुभ्राणि गृहाणि जातानीति शेषः तथा गजादीनां शालाश्च जाताः तोरणानि पुरद्वाराणि ॥ ३२ ॥

रा० टी०—चतुरिति । चतुःशालानि शालाचतुष्टयविशिष्टानि हर्म्यप्रासादसंयुक्तानि तोरणानि येषु तानि अत एव शुभ्राणि शोभनानि गृहाणि गजवाजिनां शालाश्च अजायन्तेति शेषः ॥ ३२ ॥

गो० टी०—चतुःशालानीति । चतुःशालानि संजवनानि 'चतुःशालं संजवनम्' इति हलायुधः । आजग्मुरिति विपरिणामः । तोरणानि बन्धनमालाः 'बन्धो बन्धनमाला तु तोरणं परिकीर्तितम्' इति हलायुधः । 'वन्दनमाले' इतिपाठान्तरम्॥३२॥

३३ ] ति० टी०—सितमेघनिभं सुधालेपेन, शुक्लमाल्यैः कृत आकारो यस्य, दिव्यैर्गन्धैर्गन्धवज्जलैरुक्षितं सिक्तम् ॥३३॥

रा० टी०—सितेति । सितमेघसदृशं सुतोरणं शोभनतोरणविशिष्टं शुक्लमाल्यैः श्वेतपुष्पैः कृता आकारा भूषणानि यस्मिन् दिव्यगन्धैः समुक्षितं सिक्तम् ॥ ३३ ॥

गो० टी०—सितमेघेत्यारभ्य धौतनिर्मलभाजनमित्यन्तमेकं वाक्यम् । आजगामेति क्रिया द्रष्टव्या सितमेघनिभं सुधालेपनधवलत्वात् दिव्यमाल्यकृताकारं दिव्यमालाभिः कृता-

१ उच्चारित इति गो. पाठः । २ उपरते इति गो. पाठः । ३ श्रोत्रसुखे इति गो. पाठः । ४ योजनेति गो. पाठः । ५ ऽथ जम्बूश्च बभूवुः फलभूषणा इति गो. पाठः । ६ दिव्येति गो. पाठः । ७ संबाधा इति गो. पाठः । ८ दिव्येति गो. पाठः ।

चतुरस्रमसंबाधं शयनासनयानवत् । दिव्यैः सर्वरसैर्युक्तं दिव्यभोजनवस्त्रवत् ॥ ३४ ॥
उपकल्पितसर्वान्नं धौतनिर्मलभाजनम् । क्लृप्तसर्वासनं श्रीमत्स्वास्तीर्णशयनोत्तमम् ॥ ३५ ॥
प्रविवेश महाबाहुरनुज्ञातो महर्षिणा । वेश्म तद्रत्नसंपूर्णं भरतः कैकयीसुतः ॥ ३६ ॥
अनुजग्मुश्च [1]ते सर्वे मन्त्रिणः सपुरोहिताः । बभूवुश्च मुदा युक्तास्तं दृष्ट्वा वेश्मसंविधिम् ॥ ३७ ॥
तत्र राजासनं दिव्यं व्यजनं छत्रमेव च । भरतो मन्त्रिभिः सार्धमभ्यवर्तत राजवत् ॥ ३८ ॥
आसनं पूजयामास रामायाभिप्रणम्य च । वालव्यजनमादाय न्यषीदत्सचिवासने ॥ ३९ ॥
आनुपूर्व्यान्निषेदुश्च सर्वे मन्त्रिपुरोहिताः । ततः सेनापतिः पश्चात्प्रशास्ता च [2]न्यषीदत ॥ ४० ॥
ततस्तत्र मुहूर्तेन नद्यः पायसकर्दमाः । उपातिष्ठन्त भरतं भरद्वाजस्य शासनात् ॥ ४१ ॥

लंकारं दिव्यगन्धैर्दिव्यचन्दनैः समुक्षितं सिक्तं चतुरस्रं चतुष्कोणम् असंबाधं विशालं शयनासनयानवत् यानं शिबिकादि रसैः शर्करादिभिः दिव्यभोजनवस्त्रवत् दिव्यभोजनानि सूक्ष्मशाल्यन्नादीनि दिव्यवस्त्राणि सूक्ष्मवस्त्राणि उपकल्पितानि सर्वान्नानि नानाविधापूपादीनि यस्मिँस्तत् धौतनिर्मलभाजनं धौतत्वेन निर्मलानि भाजनानि यस्मिँस्तत्तथा ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०—यानं शिबिकादि ॥ ३४ ॥

रा० टी०—चतुरस्रं चतुःकोणमसंबाधं जनबाधारहितं विशालमित्यर्थः, शयनासनयानवत् शयनासनयानविशिष्टं दिव्यैः सर्वरसैर्युक्तं विशिष्टं दिव्यभोजनवस्त्रवत् उपकल्पितानि सर्वान्नानि यस्मिन् तत् धौतानि शुद्धानि निर्मलभाजनानि येषु तत् क्लृप्तानि सर्वाणि अनेकविधानि आसनानि येषु तत् श्रीमत् सकलसंपत्तिविशिष्टं स्वास्तीर्णाः सम्उपकल्पिताः शयनोत्तमाः उत्तमपर्यङ्काः येषु तत् राजवेश्म अजायतेति शेषः । श्लोकत्रयमेकान्वयि ॥ ३४ ॥ ३५ ॥

३५–३६ ] ति० टी०—धौतत्वेन प्रक्षालितत्वेन निर्मलानि भाजनानि यस्मिन् ॥ ३५ ॥ ३६ ॥

गो० टी०—क्लृप्तसर्वासनमिति । क्लृप्तसर्वासनमित्यत्र स्नानभोजनाद्यासनान्युच्यन्ते, शयनासनेत्यत्र राजासनं तत्साहचर्याच्छयनं च महाशयनं स्वास्तीर्णशयनोत्तममित्यत्र निद्रार्थशयनम् । तत्र भरतस्य प्रवेशमाह—प्रविवेशेति । महाबाहुरित्यनेन तदर्हत्वमुच्यते कैकयीसुत इत्यनेन कैकयीदत्तराज्येऽप्यनादरः किमत्र आदरं करिष्यतीति द्योत्यते महर्षिणा भरद्वाजेन ॥ ३५ ॥

३७ ] ति० टी०—वेश्मसंविधिं वेश्मसंविधानम् ॥ ३७ ॥

रा० टी०—प्रविवेशेति । रत्नसंपूर्णं वेश्म राजगृहं महर्षिणा अनुज्ञातः कैकेयीसुतो भरतः प्रविवेश सपुरोहिताः पुरोहितसहिताः मन्त्रिणश्च अनुजग्मुः तं विलक्षणं वेश्मसंविधिं तत्क्षणवेश्मनिर्माणं दृष्ट्वा मुदा हर्षेण युक्ताश्च बभूवुः । श्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

गो० टी०—अनुजग्मुरिति । वेश्मसंविधिं वेश्मसंविधानम् ॥ ३६ ॥

३८ ] ति० टी०—राजासनं सिंहासनं राजवद्राजयोग्यं तदभ्यवर्तत प्रदक्षिणीकृतवान् ॥ ३८ ॥

रा० टी०—तत्रेति । राजवत् राजयोग्यताविशिष्टं तत्र तस्मिन् गृहे विद्यमानं दिव्यं राजासनं व्यजनं च छत्रं च भरतः अभ्यवर्तत प्रदक्षिणामकरोत् ॥ ३८ ॥

गो० टी०—तत्रेति । राजासनं राजार्हासनम् अभ्यवर्तत अभितोऽवर्तिष्ट प्रदक्षिणं कृतवानिति यावत्, राजवत् राजतुल्यं राममिवेत्यर्थः ॥ ३७ ॥

३९ ] ति० टी०—न तु तत्रोपविष्ट इत्याह—आसनं पूजयामासेति । रामचन्द्रीयमेतदिति बुद्ध्या रामाय प्रणम्यासनोपरि प्रतिष्ठितं रामं ध्यात्वेति शेषः । वालव्यजनमादाय रामसेवाशेषतयेति शेषः । सचिवासने सचिवार्थक्लृप्तासने सिंहासनाधस्तले । अत्रेदं बोध्यम्—भरतेन वाचोक्तमपि राज्यानभिलाषं लोका न श्रद्दध्युः, अतः क्रिययापि सर्वलोकप्रत्यायनाय महर्षिणा तपोव्ययेनापीदृशमातिथ्यकरणम् । किं च पुष्पादिभिः पूजेवेयमपि क्रिया विष्णोरंशभूतभरततुष्ट्ये इति तत्करणम् । किं च भरतं प्रति त्वं दुष्टबुद्ध्याऽऽगतोऽसि किम् इति प्रश्ने तस्य ऋषेरसर्वज्ञत्वासामर्थ्यादिशङ्कावारणाय स्वसामर्थ्यदर्शनम् । अपि च भगवदेकचित्तानां स्वर्गसुखमिहापि भवतीति भगवद्रामप्रीतिमाहात्म्यं प्रदर्शयितुं तद्दर्शनेन च तेषां तत्राधिकां प्रीतिमुत्पादयितुं तथाकरणं मुनेरिति दिक् ॥ ३९ ॥

रा० टी०—आसनमिति । रामाय अभिप्रणम्य वालव्यजनमादाय गृहीत्वा आसनं पूजयामास रामयोग्यमिदमिति बुद्ध्या आनर्च सचिवासने अमात्योचितासने न्यषीदच्च ॥ ३९ ॥

गो० टी०—आसनमिति । आसनं पूजयामासेत्यत्र राजवदित्यनुकर्षः । रामायासनोपरि स्थितत्वेन भाविताय वालव्यजनमादाय स्वशेषत्वानुगुणतयेति भावः । सचिवासने सचिवार्थं क्लृप्ते आसने सिंहासनाधःप्रदेशस्थ इत्यर्थः ॥ ३८ ॥

४०–४१ ] ति० टी०—आनुपूर्व्या यथोचितोपवेशनप्रकारेण प्रशास्ता शिबिररक्षकः ॥ ४० ॥ ४१ ॥

रा० टी०—आनुपूर्व्यादिति । मन्त्रिपुरोहिताः आनुपूर्व्या-

१ तामिति गो. पाठः । २ निषेदुरिति गो. पाठः ।

आसामुभयतः कूलं पाण्डुमृत्तिकलेपनाः । रम्याश्चावसथा दिव्या ब्राह्मणस्य प्रसादजाः ॥ ४२ ॥
तेनैव च मुहूर्तेन दिव्याभरणभूषिताः । आगुर्विंशतिसाहस्रा ब्रह्मणा प्रहिताः स्त्रियः ॥ ४३ ॥
सुवर्णमणिमुक्तेन प्रवालेन च शोभिताः । आगुर्विंशतिसाहस्राः कुबेरप्रहिताः स्त्रियः ॥ ४४ ॥
याभिर्गृहीतः पुरुषः सोन्माद इव लक्ष्यते । आगुर्विंशतिसाहस्रा नन्दनादप्सरोगणाः ॥ ४५ ॥
नारदस्तुम्बुरुर्गोपः प्रभया सूर्यवर्चसः । एते गन्धर्वराजानो भरतस्याग्रतो जगुः ॥ ४६ ॥
अलम्बुषा मिश्रकेशी पुण्डरीकाथ वामना । उपानृत्यन्त भरतं भरद्वाजस्य शासनात् ॥ ४७ ॥
यानि माल्यानि देवेषु यानि चैत्ररथे वने । प्रयागे तान्यदृश्यन्त भरद्वाजस्य तेजसा ॥ ४८ ॥
बिल्वा मार्दङ्गिका आसञ्शम्याग्राहा बिभीतकाः । अश्वत्था नर्तकाश्चासन्भरद्वाजस्य तेजसा ॥ ४९ ॥

---

क्रमशः निषेदुः ततः सेनापतिः न्यषीदत् पश्चात् प्रशास्ता तद्गृहरक्षकश्च न्यषीदत ॥ ४० ॥

गो० टी०—आनुपूर्व्यादिति । सेनापतिः दण्डनायकः प्रशास्ता शिबिरनियन्ता ॥ ३९ ॥

रा० टी०—तत इति । तत्र तद्गृहसमीपे पायसा एव कर्दमाः यासु ताः नद्यः मुहूर्तेन घटिकाद्वयेन भरतमुपातिष्ठन्त ॥ ४१ ॥

गो० टी०—तत इति । मुहूर्तेन अल्पकालेन ॥ ४० ॥

४२ ] ति० टी०—उभयतः कूलमुभयोः कूलयोः पाण्डुमृत्तिकालेपनाः सुधालिप्ताः ब्राह्मणस्य भरद्वाजस्य ॥ ४२ ॥

रा० टी०—आसामिति । ब्राह्मणस्य भरद्वाजस्य प्रसादजाः अतिप्रीत्योत्पादिताः आसां नदीनामुभयतःकूलं कूलद्वये पाण्डुमृत्तिकाभिः लेपनं येषां ते आवसथाः गृहाणि बभूवुरिति शेषः ॥ ४२ ॥

गो० टी०—तासामिति । उभयतः कूलम् उभयोः कूलयोरित्यर्थः, पाण्डुमृत्तिकलेपनाः सुधानुलिप्ता इत्यर्थः "ङ्यापोः—" इति ह्रस्वः ब्रह्मणः भरद्वाजस्य उपातिष्ठन्तेत्येतदनुषज्यते ॥४१॥

४३ ] ति० टी०—आगुरागतवत्यः ॥ ४३ ॥

रा० टी०—तेनेति । तेनैव तस्मिन्नेवेत्यर्थः, मुहूर्तेन मुहूर्ते दिव्यैराभरणैर्भूषिताः ब्रह्मणा प्रहिताः भरद्वाजेन प्रापिताः विंशतिसाहस्राः स्त्रियः आगुः आजग्मुः ॥ ४३ ॥

गो० टी०—तेनेति । आगुराजग्मुः सहस्रमेव साहस्रं ब्रह्मणा चतुर्मुखेन स्त्रियः अप्सरसः ॥ ४२ ॥

४४] ति० टी०—सुवर्णमणिमुक्तेनेति समाहारद्वन्द्वः॥४४॥

रा० टी०—सुवर्णेति । सुवर्णादित्रयेण समाहारद्वन्द्वः प्रवालेन च शोभिताः आगुः ॥ ४४ ॥

गो० टी०—सुवर्णमणिमुक्तेनेति । सुवर्णमणिमुक्तेन सुवर्णानि सुवर्णमयाभरणानि मणयो रत्नानि मुक्ताश्च सुवर्णमणिमुक्तं तेन "जातिरप्राणिनाम्" इति एकवद्भावः ॥ ४३ ॥

४५ ] ति० टी०—गृहीतो दर्शनादिनात्मवशीकृतः सोन्मादः अद्भुतसंतोषसहित इत्यर्थः । नन्दनमिन्द्रवनम् ॥४५ ॥

रा० टी०—याभिरिति । याभिः अप्सरोभिः गृहीतः स्वीकृतः पुरुषः सोन्मादः उन्मादसहित इव लक्ष्यते तन्मात्रनिरतो भवतीत्यर्थः, तद्भिन्नं निखिलं तुच्छवत्पश्यतीति तात्पर्यं ता अप्सरोगणाः नन्दनान्नन्दनवनादागुः ॥ ४५ ॥

गो० टी०—याभिरिति । गृहीत आलिङ्गितः याभिः यैरित्यर्थः, एतदर्थस्य पूर्वेण वान्वयः । कुबेरप्रहिताः गन्धर्वाप्सरसः तथाहि श्रुतिः "गन्धर्वाप्सरसो वा एतमुन्मादयन्ति । य उन्माद्यतीति याभिर्गृहीताः पुरुषाः सोन्मादा इति होच्यते" इति च पाठः तदा उच्यते श्रुत्येति शेषः । हेति प्रसिद्धौ ॥ ४४ ॥

४६–४७ ] ति० टी०—नारदादयो गन्धर्वराजाः कान्त्या सूर्यसमा जगुः ॥ ४६ ॥ ४७ ॥

रा० टी०—नारद इति । प्रभया कान्त्या सूर्यवर्चसः सूर्यतेजस्तुल्यतेजोविशिष्टाः एते नारदादयो गन्धर्वराजानः गन्धर्वराजाः अग्रतः अग्रे जगुः ॥ ४६ ॥

गो० टी०—नारद इति । नारदो ब्रह्मपुत्रादन्यः तुम्बुरुसाहचर्यात् स हि पर्वतसहचरः आह्वानसमये तुम्बुरुणेत्यस्योपलक्षणार्थत्वात् गन्धर्वराजान इति टजभाव आर्षः ॥ ४५ ॥

रा० टी०—अलम्बुसेति । अलम्बुसादयः भरतमुपानृत्यन्त ॥ ४७ ॥

गो० टी०—अलम्बुसेति । भरतमुपानृत्यन् भरतमुद्दिश्याधिकमनृत्यन् "उपोऽधिके च" इति कर्मप्रवचनीयसंज्ञा । अत्र भरद्वाजस्य शासनादुपानृत्यन्नित्यनेन भरतस्य रामे वृत्तिविशेषमातिथ्यव्याजेन परीक्षितवानृषिरिति गम्यते ॥ ४६ ॥

४८ ] ति० टी०—प्रयागे प्रयागक्षेत्रे ॥ ४८ ॥

रा० टी०—यानीति । तानि माल्यानि प्रयागे अदृश्यन्त ४८

गो० टी०—एवं भरतस्य रामशेषतयैवावस्थानं नतु भोगकौल्येनेत्युक्त्वा सेनाभोगं प्रपञ्चयति—यानीत्यादिना । देवेषु देवोद्यानेषु नन्दनादिष्वित्यर्थः, चैत्ररथस्य पूर्वं कुरुदेशस्थत्वेनोक्तेरिदं चैत्ररथं तद्बोध्यं, प्रयागे प्रयागस्थितभरद्वाजाश्रमवनवृक्षेष्वित्यर्थः, तेजसा प्रभावेन ॥ ४७ ॥

४९ ] ति० टी०—बिल्वा बिल्ववृक्षाः मार्दङ्गिका मृदङ्गवादकरूपधराः, एवं बिभीतकाः शम्याक्यताळग्राहकाः 'शम्या ताळविशेषे च क्षमे ताळक्रियान्तरे । शम्या यज्ञायुधे' इति॥४९॥

---

१ तासामिति गो. पाठः । २ ब्रह्मणास्त्विति गो. पाठः । ३ प्रवरा इति गो. पाठः । ४ नृत्यंस्त्विति गो. पाठः । ५ शासनाद्धिति गो. पाठः ।

ततः सरलतालाश्च तिलकाः [1]सतमालकाः । प्रहृष्टास्तत्र संपेतुः कुब्जा भूत्वाथ वामनाः ॥ ५० ॥
[2]शिंशपामलकी [3]जम्ब्वूर्याश्चान्याः [4]कानने लताः । [ [5]मालती मल्लिका जातिर्याश्चान्याः कानने लताः ]
प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमे[6]ऽवसन् ॥ ॥ ५१ ॥
[7]सुरां सुरापाः पिबत पायसं च बुभुक्षिताः । मांसानि च सुमेध्यानि भक्ष्यन्तां [8]यो यदिच्छति॥५२॥
[9]उच्छोद्य स्नापयन्ति स्म नदीतीरेषु वल्गुषु । अप्येकमेकं[10] पुरुषं प्रमदाः सप्त चाष्ट च ॥ ५३ ॥
संवाहन्त्यः समापेतुर्नार्यो विपुललोचनाः । परिमृज्य [11]तदान्योन्यं पाययन्ति वराङ्गनाः ॥ ५४ ॥
हयान्गजान्खरानुष्ट्रांस्तथैव सुरभेः सुतान् । अभोजयन्वाहनपास्तेषां भोज्यं यथाविधि ॥ ५५ ॥

रा० टी०—बिल्वा इति । बिल्वाः बिल्वतरवः मार्दङ्गिका मृदङ्गवादकाः आसन् बभूवुः । शम्यास्तदभिधतरवः ग्राहाः तालानां ग्राहकाः आसन्, विभीतकाः अश्वत्थाश्च नर्तका आसन् ॥ ४९ ॥

गो० टी०—आहूतानां भरतशेषत्वेन विनियोगात् सैनिकानां नर्तकादीनि दर्शयति—बिल्वा इति । बिल्वाः बिल्ववृक्षाः मार्दङ्गिकाः मृदङ्गवादकाः "तदस्य शिल्पम्" इति ठक् । आसन् तद्रूपास्तत्कार्यकारिणोऽभवन्नित्यर्थः । विभीतकाः कलिवृक्षाः शम्याग्राहास्तालग्राहका आसन् 'शम्या यशायुधे ताले मशके च क्रियान्तरे' इति वैजयन्ती । भरते चोक्तम् 'वह्निंतालशम्यातालक्रिया' इति ॥ ४८ ॥

५० ] ति० टी०—सरलो देवदारुविशेषः ॥ ६० ॥

रा० टी०—तत इति । सरलतालाः सरलाः देवदारवस्तालाः तालवृक्षाः सतमालकाः तमालकसहिताः तिलकाः तिलकवृक्षाः हृष्टाः सन्तः कुब्जाः वामनाश्च भूत्वा संपेतुः ॥ ६० ॥

गो० टी०—तत इति । सरलाः देवदारुविशेषाः तालाः प्रसिद्धाः तिलकाः क्षुरकनामका वृक्षाः नक्तमालकाः करञ्जनाख्या वृक्षाः कुब्जाः स्थगुमन्तः वामना ह्रस्वाः संपेतुः संपन्नाः ॥ ४९ ॥

५१ ] ति० टी०—शिंशपादयो ये स्त्रीलिङ्गशब्दवाच्या वृक्षाः लता मल्लिकामालत्यादयः मुनेस्तपोमाहात्म्यादेव वृक्षादीनां तत्तद्रूपतापत्तिः पुनर्लतादिरूपप्रत्यापत्तिश्चेति मन्तव्यम् ॥६१॥

रा० टी०—शिंशपेति । शिंशपादयः प्रमदाविग्रहं कृत्वा भरद्वाजाश्रमे अवसन् ॥ ६१ ॥

गो० टी०—अथ स्त्रीलिङ्गवृक्षाणां स्त्रीभावपरिग्रहमाह—शिंशुपेत्यादि । सार्धश्लोकद्वयमेकान्वयम् । शिंशुपादयः प्रमदाविग्रहं कृत्वा यावदिच्छथ तावद्भक्ष्यन्तामित्यवदन्निति संबन्धः। सुरापाः हे सुरापानप्रवृत्ताः! इमाः सुराः पिबत हे बुभुक्षिताः पायसपानेच्छवः इदं पायसं भक्ष्यतामिति वचनविपरिणामेनान्वयः । सुमेध्यानि परिशुद्धानि ॥ ६०—६१ ॥

५२ ]ति० टी०—तत्र प्रमदारूपं धृत्वा किं कुर्युस्तदाह—सुरामिति । एवमूचुरिति शेषः ॥ ६२ ॥

रा० टी०—सुरामिति । हे सुरापाः ! यूयं सुरां पिबत हे बुभुक्षिताः ! यावदिच्छथ तावत्पायसं पिबत खादत मांसानि भक्ष्यन्तामिति परस्परमवदन्निति शेषः ॥ ६२ ॥

५३ ] ति टी०—उच्छोद्योद्वर्तनं कृत्वा एकमेकं पुरुषम् । अत्र "एकं बहुव्रीहिवत्" इति बहुव्रीहिवद्भावाभाव आर्षः॥६३॥

रा० टी०—उच्छोद्येति । वल्गुषु नदीतीरेषु एकमेकपुरुषं प्रत्येकं पुरुषं सप्त अष्ट च प्रमदाः उच्छोद्य उद्वर्तनं कृत्वा स्नापयन्ति स्म एकमेकपुरुषमित्यत्र " एकं बहुव्रीहिवत् " इति बहुव्रीहिवद्भावाभाव आर्षः इति भट्टाः ॥ ६३ ॥

गो० टी०—उच्छाद्येति । उच्छाद्य उद्वर्तनं कृत्वा 'उद्वर्तनोच्छादने द्वे' इत्यमरः तैलादिना शरीरमर्दनं कृत्वेत्यर्थः, वल्गुषु रम्येषु एकमेकमिति "एकं बहुव्रीहिवत्" इति बहुव्रीहिवद्भावाभाव आर्षः । संवाहन्त्यः संवाहयन्त्यः पादसंवाहनं कुर्वन्त्यः परिमृज्य जलार्द्रमङ्गं वस्त्रादिना परिमृज्य अलंकृत्येति वार्थः, अन्योन्यं रहसि पाययन्ति सुरा इति शेषः ॥ ६२ ॥ ६३ ॥

५४ ] ति० टी०—संवाहन्त्यः पादसंवाहनादि कुर्वत्यः । परिमृज्य जलार्द्रमङ्गं वस्त्रादिना परिमृज्यालंकृत्य च पाययन्ति मध्वादिकमिति शेषः॥ ६४ ॥

रा० टी०—संवाहन्त्य इति । संवाहन्त्यः पादसंवाहनां कारयन्त्यो विपुललोचनाः वराङ्गनाः वराः अङ्गना परिचारिकाः यासां ताः नार्यः समापेतुः नद्यामिति शेषः । तदा स्नानोत्तरकाले अन्योन्यं परिमृज्य जलार्द्रमङ्गं वस्त्रैरिति शेषः । अन्योन्यं पाययन्ति मध्वादीति शेषः ॥ ६४ ॥

५५ ] ति० टी०—सुरभेः सुता वृषभाः । तेषां हयादीनां भोज्यं तांस्तत्तत्पालका अभोजयन्नित्यर्थः ॥ ६५ ॥

रा० टी०—हयानिति । वाहनपाः हयादिपालकास्तेषां हयादीनां भोज्यं हयादीन् यथाविधि अभोजयन् ॥ ६५ ॥

गो० टी०—हयानिति । वाहनपाः ऋषिप्रभावसिद्धा वाहनपाः वाहनरक्षकाः तेषां हयादीनां यथाविधि यथायोग्यं भोज्यं तत्तद्वाहनानुगुणं भोज्यमित्यर्थः, हयादीन् अभोजयन् ण्यन्तत्वाद्द्विकर्मकत्वं सुरभेः सुतान् वृषभान् ॥ ६४ ॥

१ नक्तेति गो. पाठः । २ शिंशुपेति गो. पाठः । ३ जम्ब्वोभिति गो. पाठः । ४ काननेषु ता इति गो. पाठः । ५ अर्धमेतदधिकं गो. पाठे । ६ ऽवदन्निति गो. पाठः । ७ सुरा इति गो. पाठः । ८ यावदिच्छथेति गो. रा. पाठः । ९ उच्छाद्येति गो. पाठः । १० एकपुरुषमिति रा. पाठः । ११ तथेति गो. पाठः ।

इक्षूंश्च मधुलाजांश्च भोजयन्ति स्म वाहनान् । इक्ष्वाकुवरयोधानां चोदयन्तो महाबलाः ॥ ५६ ॥
नाश्वबन्धोऽश्वमाजानान्न गजं कुञ्जरग्रहः । मत्तप्रमत्तमुदिता सा चमूस्तत्र संबभौ ॥ ५७ ॥
तर्पिताः सर्वकामैश्च रक्तचन्दनरूषिताः । अप्सरोगणसंयुक्ताः सैन्या वाचमुदीरयन् ॥ ५८ ॥
नैवायोध्यां गमिष्यामो न गमिष्याम दण्डकान् । कुशलं भरतस्यास्तु रामस्यास्तु तथा सुखम् ॥ ५९ ॥
इति पादातयोधाश्च हस्त्यश्वारोहबन्धकाः । अनाथास्तं विधिं लब्ध्वा वाचमेतामुदीरयन् ॥ ६० ॥
संप्रहृष्टा विनेदुस्ते नरास्तत्र सहस्रशः । भरतस्यानुयातारः स्वर्गोऽयमिति चाब्रुवन् ॥ ६१ ॥
नृत्यन्तश्च हसन्तश्च गायन्तश्चैव सैनिकाः । समन्तात्परिधावन्तो माल्योपेताः सहस्रशः ॥ ६२ ॥
ततो भुक्तवतां तेषां तदन्नममृतोपमम् । दिव्यानुद्वीक्ष्य भक्ष्यांस्तानभवद्भक्षणे मतिः ॥ ६३ ॥

---

५६ ] ति० टी०—इक्ष्वाकुवरयोधानां वाहनानि चोदयन्तो भक्षणाय प्रेरयन्तः । तानिक्ष्वादीन्भोजयन्ति स्म ॥ ५६ ॥

रा० टी०—तद्भोज्यपदार्थान् विशिष्य निर्दिशन्नाह—इक्षूनिति । इक्ष्वाकुवरयोधानां वाहनानि हयादीनि चोदयन्तः भक्षणाय प्रेरयन्तः महाबलाः अश्वादिपालकाः इक्ष्वादीन् भोजयन्ति स्म ॥ ५६ ॥

गो० टी०—इक्षूनिति । महाबला ऋषिप्रभावसिद्धवाहनपाः इक्ष्वाकुवरयोधानां वाहनान् वाहनानि इक्षून् मधुलाजान् मधुमिश्रलाजान् "भक्ष्येण मिश्रीकरणम्" इति समासः चोदयन्तः भक्षणार्थं प्रेरयन्तः सन्तः भोजयन्ति स्म ॥ ५६ ॥

५७ ] ति० टी०—मत्ता मदकरद्रव्यसेवया, प्रमत्ता मधुपानेन कार्याकार्यविवेकशून्या, मुदिता स्रक्चन्दनकयादिभोगेन ॥५७॥

रा० टी०—नेति । तत्र मादकरसादिपानानन्तरसमये मत्तप्रमत्तमुदिताः मत्तेन मादकरसादिपानेन प्रमत्ताः कार्याकार्यविवेकरहिता एव मुदिता यस्यां सा चमूः संबभौ, अत एव अश्वबन्धः अश्वानां बन्धकः अश्वं न आजानात् कुञ्जरग्रहः हस्तिपालकः गजं हस्तिनं नाजानात् ॥ ५७ ॥

गो० टी०—नेति । अश्वं बध्नातीत्यश्वबन्धः अश्वग्राहकः नाजानात् न ज्ञातवान् । तत्र हेतुमाह—मत्तेति । मदकरद्रव्यसेवया मत्ताः प्रमत्ताः मधुपानादिना कार्याकार्यविवेकशून्याः मुदिताः स्रक्चन्दनादिभोगातिशयेन हृष्टाः तत्र तदा ॥ ५६ ॥

५८] ति० टी०—सैन्याः सेनासमवेताः उदीरयन्नुदैरयन् ५८

रा० टी०—तर्पिता इति । सर्वकामैः निखिलेप्सितैः । किंच सर्वेषां कामाः मनोरथाः येषु तैर्भक्ष्यादिभिः तर्पिताः अप्सरोगणैः संयुक्ताः सैन्याः सैन्यसंबन्धिनः जनाः वाचं प्रमत्तोचितवचनमुदीरयन् उदैरयन् ॥ ५८ ॥

गो० टी०—तर्पिता इति । अप्सरोगणाः वनलताभूताः न स्वाहूताः तासां भरतवेश्माप्रवेशकथनात् , सैन्याः सेनायां समवेताः उदैरयन् उक्तवन्तः ॥ ५७ ॥

५९ ] ति० टी०—तां वाचमाह—नैवेति । न गमिष्यामेत्यार्षः सलोपः । भरतस्य कुशलमस्तु यत्संगत्या भूमौ स्वर्गसुखलाभः ॥ ५९ ॥

६० ] ति० टी०—हस्त्यश्वारोहास्तद्बन्धकाश्च पादातरूपयोधाः चेन रथिकसंग्रहः । तं विधिं तादृशसत्कारम् अनाथा अपरतन्त्रा इवेत्यर्थ इति कतकः अयाचका इत्यर्थ इत्यन्ये । वक्तॄणामतिहर्षयुक्ततया कवेरपि वर्णनीयमयीभावात्पुनरुक्तिर्न दोषाय ॥ ६० ॥

रा० टी०—तद्वचनाकारं बोधयन्नाह—नैवेति । तद्विधिं सत्काररीतिं लब्ध्वा प्राप्य अनाथाः मादकरसादिपानहेतुकनाथाभाववत्त्वेन आत्मनो मन्यमानाः पादातयोधाः पादैः अतन्ति गच्छन्ति ते ते एव योधाः बन्धकाश्च न गमिष्याम न गमिष्यामः इति एतां वाचमुदीरयन्नुदैरयन् । श्लोकद्वयमेकान्वयि ॥ ५९ ॥ ६० ॥

गो० टी०—उदीरणप्रकारमाह—नेत्यादिना । न गमिष्याम इत्यत्र विसर्गलोपश्छान्दसः । भरतस्य कुशलमस्तु भरतो यथा तथा त्रा तिष्ठत्वित्यर्थः, एवं रामस्येत्यत्रापि । पादाभ्यामतन्तीति पादाताः 'अत सातत्यगमने' इति धातुः ते च ते योधाश्च पादातयोधाः चकाराद्रथिकसमुच्चयः हस्त्यश्वानामारोहाः सादिनः हस्त्यादिबन्धकास्तद्भृत्याः तं विधिं सत्कारं लब्ध्वा अनाथाः स्वामिरहिताः स्वतन्त्रा इति यावत् नैवायोध्यामित्येतां वाचमुदैरयन्निति संबन्धः ॥ ५८ ॥ ५९ ॥

६१–६२] ति० टी०—विनादः प्रहृष्टानां शब्दविशेषः६१॥६२

रा० टी०—संप्रहृष्टा इति । तत्र भरतसैन्ये हस्तिनामश्वानां च आरोहा आरोहकाः सहस्रशो भरतस्यानुयातारो नराः संप्रहृष्टा वयमतितुष्टा इति विनेदुः स्वर्गोऽयमित्यब्रुवंश्च॥६१॥

रा० टी०—नृत्यन्त इति । माल्योपेताः सहस्रशः सैनिकाः समन्तात्परिधावन्ति ॥ ६२ ॥

गो० टी०—संप्रहृष्टा इति । विनेदुः जगर्जुः ॥६०॥६१॥

६३ ] ति० टी०—अभवद्भक्षणे मतिः क्षुत्तानामपि भक्ष्यसौष्ठवात्पुनराकाङ्क्षाऽभूदित्यर्थः ॥ ६३ ॥

रा० टी०—तत इति । अमृतोपमं तदन्नं भुक्तवतां तेषां

---

१ चोदयन्त्य इति रा. पाठः । २ ते इति गो. पाठः । ३ उदैरयन्निति गो. पाठः । ४ नृत्यन्ति स्म हसन्ति स्म गायन्ति स्मेति गो. पाठः । ५ धावन्तीति गो. रा. पाठः ।

प्रेष्याश्चेट्यश्च वध्वश्च बलस्थाश्चापि सर्वशः । बभूवुस्ते भृशं प्रीताः सर्वे चाहतवाससः ॥ ६४ ॥
कुञ्जराश्च खरोष्ट्राश्च गोश्वाश्च मृगपक्षिणः । बभूवुः सुभृतास्तत्र नातो ह्यन्यमकल्पयम् ॥ ६५ ॥
नाशुक्लवासास्तत्रासीत्क्षुधितो मलिनोऽपि वा । रजसा ध्वस्तकेशो वा नरः कश्चिददृश्यत ॥ ६६ ॥
आजैश्चापि च वाराहैर्निष्ठानवरसंचयैः । फलनिर्यूहसंसिद्धैः सूपैर्गन्धरसान्वितैः ॥ ६७ ॥
पुष्पध्वजवतीः पूर्णाः शुक्लस्यान्नस्य चाभितः । ददृशुर्विस्मितास्तत्र नरा लौहीः सहस्रशः ॥ ६८ ॥
बभूवुर्वनपार्श्वेषु कूपाः पायसकर्दमाः । ताश्च कामदुघा गावो द्रुमाश्चासन्मधुश्च्युतः ॥ ६९ ॥

---

सैनिकानां दिव्यान् भक्ष्यानुद्वीक्ष्य भक्षणे मतिः अभवत् । तृप्तानामपीच्छोत्पादकत्वेन भक्ष्याणामतिमनोहरत्वं व्यक्तम् ॥ ६३ ॥

गो० टी०—तत इति । तदन्नं पूर्वोक्तभक्ष्यादिचतुर्विधान्नम् भक्षणे पुनर्भक्षणे मतिरभवत् भक्ष्यसौष्ठवादिति भावः ॥ ६२ ॥

६४ ] ति० टी०—प्रेष्याः सेवकाः, चेट्यो दास्यः, बलस्थाः सेनास्थाः, अहतवाससो नूतनवस्त्रपरीधानाः ॥ ६४ ॥

रा० टी०—प्रेष्या इति । अहतवाससः नवीनवस्त्रधारिणस्ते सर्वे प्रेष्या भृत्याः चेट्यः दास्यः बलस्थाः सैन्यनिवासिन्यः सर्वशो वध्वश्च भृशमत्यन्तं प्रीता बभूवुः ॥ ६४ ॥

गो० टी०—प्रेष्या इति । प्रेष्याः परिचारकाः चेट्यो दास्यः वध्वो योषाङ्गनाः बले सेनायां तिष्ठन्तीति बलस्थाः सर्वविशेषणमेतत् अहतवाससः नूतनवस्त्राः, यद्वा आहतवाससः निर्णिक्तवाससः ॥ ६३ ॥

६५–६६ ] ति० टी०—अतो मुनिदत्तादन्यपदार्थं नाकल्पयन् नाभुञ्जन्नित्यर्थः । 'नान्यो ह्यन्यमकल्पयत्' इति पाठे हिरप्यर्थे । अन्योऽपि सेनामन्तर्गतोऽपि मार्गस्थः प्रसङ्गात्तद्देशमागतः अन्यमृषिकल्पितादन्यं पदार्थं नाकल्पयन्न भुक्तवानित्यर्थः, अनेनात्याधिक्यं सामग्र्याः सूचितम् ॥६५॥६६॥

रा टी०—कुञ्जरा इति । तत्र तस्मिन्समये कुञ्जरादयोऽपि सुभृताः अत्यन्तं पोषिताः अतो हेतोः अतः अस्माद्भक्ष्यादेः अन्यं कंचन पदार्थं न अकल्पयन् अवाञ्छन् सर्वेषां सर्वमनोरथपूर्तिरभवदिति तात्पर्यम् ॥ ६५ ॥

रा० टी०—नेति । तत्र भरद्वाजाश्रमे कश्चिन्नरः अशुक्लवासाः शुक्लवस्त्ररहितः क्षुधितः क्षुधाविशिष्टो वा मलिनः शरीरादिमालिन्यविशिष्टो वा रजसा धूल्या ध्वस्तकेशः पराभूतकेशविशिष्टो वा नासीत्, अत एव नादृश्यत । नकार उभयान्वयी । यः कश्चित् अशुक्लवासा अदृश्यत दृश्येत स नासीत् इत्याद्यर्थे तु न नकाराष्टस्तिः ॥ ६६ ॥

गो० टी०—कुञ्जरा इति । खरसहितोष्ट्रा खरोष्ट्राः मृगपक्षिणः क्रीडार्थं सैनिकैरानीताः सुभृताः सुपुष्टा वा तत्र सेनायाम् अन्यः अन्यं नाकल्पयत् ऋषिकृतव्यतिरिक्तम् अन्नादिकं नाकरोदित्यर्थः ॥ ६४ ॥ ६५ ॥

६७–६८ ] ति० टी०—'निष्ठानं व्यञ्जनं ज्ञेयम्' इति हलायुधः । आम्रादिफलसंबन्धिकथितरससिद्धैरित्याजादिविशेषणं गन्धरसान्वितैरिति च । 'वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके' इति वैजयन्ती । एतैराजादिभिः पूर्णा लौहीः स्वर्णरजतादिपात्रीर्ददृशुरित्यन्वयः । लोहशब्दः पञ्चलोहसाधारणः । पात्रीणां विशेषणं शोभार्थम् । कल्पितपुष्पध्वजयुक्ता अभितः शुक्लस्यान्नस्यौदनस्य च पूर्णाः पात्रीर्ददृशुः ॥ ६७ ॥ ६८ ॥

रा० टी०—सैन्यान्तर्गतश्वादिभक्ष्याणि निर्दिशन्नाह—आजैरिति । फलनिर्यूहसंसिद्धैः फलानामाम्रादीनां निर्यूहाः क्वाथीकृतरसाः तैः संसिद्धैः साधितैः आजैः छागमांसैः वाराहैर्वराहमांसैः निष्ठानवरसंचयैः निष्ठानवराणां व्यञ्जनश्रेष्ठानां संचयाः तैश्च गन्धरसान्वितैः सुगन्धरसविशिष्टैः सूपैः मौद्गादिभिश्च शुक्लस्य स्वच्छस्य अन्नस्य ओदनस्य ओदनेन च पूर्णाः पुष्पध्वजवतीः पुष्पनिर्मितध्वजविशिष्टाः सहस्रशः लौहीः सुवर्णादिपात्रीः नराः ददृशुः । श्लोकद्वयमेकान्वयि । 'निष्ठानं व्यञ्जनं ज्ञेयम्' इति हलायुधः । 'वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके' इति वैजयन्ती ॥ ६७ ॥ ६८ ॥

गो० टी०—आजैरित्यादि । श्लोकद्वयमेकान्वयम् । आजैः अजमांसैः वाराहैः वराहमांसैः निष्ठानवरसंचयैः व्यञ्जनश्रेष्ठसमूहैः 'निष्ठानं व्यञ्जनं स्मृतम्' इति हलायुधः । फलनिर्व्यूहसंसिद्धैः सम्यक्निष्पन्नफलयुक्तशर्करादिक्वाथरसैः 'वार्यापीडे क्वाथरसे निर्व्यूहो नागदन्तके' इति वैजयन्ती । सूपैः मुद्गाढकीचणकादिसूपैः गन्धरसान्वितैः पाकभेदोत्थगन्धरसयुक्तैः पुष्पध्वजवतीः अलंकारार्थपरिकल्पितपुष्पशिल्पवतीः । शुक्लस्यान्नस्य पूर्णाः शुक्लेनान्नेन च पूर्णाः लौहीः लोहमयपात्रीः सर्वलोहेषु प्रधानत्वात् सुवर्णमत्र लोहशब्देनोच्यते ॥ ६६ ॥ ६७ ॥

६९ ] ति० टी०—वनपार्श्वेषु चैत्ररथवनवत्प्रतिभासमानवनप्रदेशेषु पञ्चयोजनमितेषु तत्रत्याः कूपाः पायसकर्दमा बभूवुः । तत्रत्या गावश्च कामदुघा बभूवुः ॥ ६९ ॥

रा० टी०—बभूवुरिति । पायसा एव कर्दमा येषु ते कूपाः वनपार्श्वेषु बभूवुः ताः तत्र स्थिताः गावः कामदुघाः इच्छाविषयीभूतपदार्थदात्र्यः आसन् द्रुमाश्च मधुच्युतः आसन् ॥ ६९ ॥

गो० टी०—बभूवुरिति । पायसान्येव कर्दमानि येषु ते तथोक्तास्ताः गावः पूर्वमेव वनचर्यः कामदुघाः यावदभीष्टक्षीरपूरकाः आसन् "दुहः कब्घश्च" मधुस्रुतः मधुस्राविणः । पाठान्तरे मधुश्च्युतः मधुस्राविणः ॥ ६८ ॥

---

१ च सहस्रश इति गो. पाठः । २ द्रुमा इति गो. पाठः । ३ निर्व्यूहेति गो. पाठः । ४ स्रुत इति गो. च्युत इति रा. पाठः । ५ गो. पुस्तके निर्व्यूहशब्दस्य दृष्टत्वात्स एव शुद्धः कोशेषु तथा दृष्टत्वादिति भाति ।

वाप्यो मैरेयपूर्णाश्च मृष्टमांसचयैर्वृताः । प्रतप्तपैठरैश्चापि मार्गमायूरकौक्कुटैः ॥ ७० ॥
पात्रीणां च सहस्राणि स्थालीनां नियुतानि च । न्यर्बुदानि च पात्राणि शातकुम्भमयानि च ॥ ७१ ॥
स्थाल्यः कुम्भ्यः करम्भ्यश्च दधिपूर्णाः सुसंस्कृताः । यौवनस्थस्य गौरस्य कापित्थस्य सुगन्धिनः ॥ ७२ ॥
ह्रदाः पूर्णा रसालस्य दध्नः श्वेतस्य चापरे । बभूवुः पैयसश्चान्ये शैर्कराणां च संचयाः ॥ ७३ ॥
कल्कांश्चूर्णकषायांश्च स्नानानि विविधानि च । ददृशुर्भाजनस्थानि तीर्थेषु सरितां नराः ॥ ७४ ॥

---

७० ] ति० टी०—निषादादिबलतृप्त्यर्थं प्रतापमात्रेण संस्कार्याः प्रतप्तास्तथा पिठरः कपालं तेषु संस्कृताः पक्काः पैठरास्तैर्मृगादिसंबन्धिमांसचयैर्वृताः ॥ ७० ॥

रा० टी०—गजादिभक्ष्याणि निर्दिशन्नाह—वाप्य इति । मैरेयपूर्णाः मद्यपूरिताः मार्गमायूरकौक्कुटैः मृगमयूरकुक्कुटशरीरजनितैः मृष्टमांसचयैः स्वच्छमांससमूहैः प्रतप्तपैठरैः प्रतप्तपिठरसंस्कृतैः पिष्टैश्च वृताः वाप्यः आसन्निति शेषः, प्रतप्तपैठरैरित्यस्य मृष्टमांसचयविशेषणत्वं वा 'पिठरः कुण्ड उच्यते' इति हलायुधः ॥ ७० ॥

गो० टी०—वाप्य इति । अत्रासन्नित्यनुषज्यते । प्रतप्तपिठरैः प्रतप्तपिठरसंस्कृतैः "संस्कृतं भक्षाः" इत्यण् तस्य लुक् । पिठराः कुण्डानि 'उखा स्थाली चरुः कुम्भी पिठरः कुण्डमुच्यते' इति हलायुधः । मार्गमायूरकौक्कुटैः मृगमयूरकुक्कुटमांसैः ॥६९॥

७१ ] ति० टी०—पात्रीणामन्नाधाराणां स्थालीनां व्यञ्जनस्थालीनाम् । पात्राणि भोजनपात्राणीति कतकः । पात्राणां हस्तप्रक्षालनाद्युपयुक्तानां, स्थालीनां क्षुद्रजनपानपात्राणामिति तीर्थः ७१

रा० टी०—पात्रीणामिति । शातकुम्भमयानि सुवर्णनिर्मितानि पात्रीणामन्नस्थापनयोग्याल्पपात्राणां सहस्राणि स्थालीनां व्यञ्जनपात्राणां नियुतानि लक्षाणि पात्राणि भोजनपात्राणि न्यर्बुदानि शतकोट्यः ॥ ७१ ॥

गो० टी०—पात्रीणामित्यारभ्य संचया इत्यन्तमेकं वाक्यम् । पात्रीणाम् अन्नधानकुम्भीनां स्थालीनां व्यञ्जनपात्राणां नियुतानि लक्षाणि न्यर्बुदानि दशकोटयः पात्राणि भोजनपात्राणि अमत्राणीति यावत् दधिपूर्णा इति स्थाल्यादित्रयविशेषणं, स्थाल्यः पिठराः कुम्भ्यः क्षुद्रकुम्भाः करम्भ्यः विशालास्यगुरुस्थाल्यः करम्भ्यः कर्कर्यः इत्याहुः सुसंस्कृताः दधिसंस्कारकशुण्ठ्यादियुक्ताः यौवनस्थस्य नातिनूतनस्य नातिपुराणस्येत्यर्थः । मथनानन्तरं यामान्तरितस्येत्यर्थः कपित्थस्य कपित्थपरिमलयुक्ततक्रस्येत्यर्थः 'तक्रं कपित्थं मथितम्' इति वैजयन्ती । गौरस्य शुभ्रस्य रसालस्य तक्रविशेषस्य 'अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम् । सजीरकं रसालं स्यान्मज्जिका शिखरिण्यपि' इति वैजयन्ती । सव्योषं शुण्ठीपिप्पलीमरीचियुक्तं चतुर्जातगुडार्द्रकं चतुर्जातैः एलात्वक्कक्कोलनागपुष्पैः गुडेन शर्करया आर्द्रकेण च युक्तं कपित्थेन पूर्णा अपरे ह्रदा बभूवुः । रसालेन पूर्णा अपरे ह्रदा बभूवुः । दध्ना पूर्णाश्चापरे ह्रदा अन्ये पायसेन पूर्णाः 'पायसस्यान्ये' इति पाठः सर्वत्र तृतीयार्थे षष्ठी । तद्व्यञ्जनार्थं शर्करायाः संचयाः राशयश्च बभूवुरित्यर्थः 'शर्करायावसंचयाः' इति च पाठः शर्करामिश्रयवविकारापूपसंचया इत्यर्थः ॥ ७०–७२ ॥

७२ ] ति० टी०—कुम्भ्यः स्थाल्यो जलपानपात्रविशेषाः । करम्भ्यो दधिमन्थनपात्राणि । यौवनस्थस्य मथनोत्तरं यामान्तरितस्य सुपक्वस्य च केसरादिसंबन्धाद्गौरस्य पीतवर्णस्य 'पीतो गौरो हरिद्राभः' । कपित्थस्य तक्रस्य सुगन्धिनस्तादृशद्रव्यसंयुक्तस्य ॥ ७२ ॥

७३ ] ति० टी०—ह्रदाः पूर्णा इति पूर्वोन्वयि । तथा रसालस्य तक्रविशेषस्य । 'अपक्वतक्रं सव्योषं चतुर्जातं गुडार्द्रकम् । सजीरकं रसालं स्यान्मज्जिका शिखरिण्यपि' इति वैजयन्ती । तक्रमत्र निर्जलम् । व्योषं शुण्ठीमरीचिपिप्पल्यः । चतुर्जातम् 'त्रिगन्धमेलात्वक्पत्रैश्चतुर्जातं सकेसरैः' इति शार्ङ्गधरे । पत्रं तजपत्रम्, गुडः खण्डशर्करा, आर्द्रकं प्रसिद्धं, तस्य च पूर्णा ह्रदाः । श्वेतस्य दध्नश्चापरे पयसोऽन्ये पूर्णा ह्रदा इत्यनुषङ्गः । शर्कराणां च संचया राशयः ॥ ७३ ॥

रा० टी०—स्थाल्यः कुम्भ्यः जलपात्रविशेषाः सुसंस्कृताः अग्निप्रतापनादिरूपसंस्कारयुक्ताः दधिपूर्णाः करम्भ्यः दधिमन्थनपात्राणि यौवनस्थस्य नातिनवीनस्य नातिजीर्णस्य मन्थनानन्तरं यामं स्थितस्येत्यर्थः, गौरस्य केशरादिसंसर्गात् पीतवर्णस्य सुगन्धिनः सुगन्धविशिष्टस्य कापित्थस्य तक्रस्य तक्रेण पूर्णाः ह्रदाः अपरे रसालस्य जीरकादिमिश्रिताः पक्वतक्रविशेषस्य पूर्णाः अपरे श्वेतस्य दध्नः पूर्णा अन्ये पयसः पूर्णाः अन्ये शर्कराणां सम्यक् चयो येषु ते च ह्रदाः बभूवुः 'तक्रं कापित्थम्' इति वैजयन्ती 'पीतो गौरो हरिद्राभः' इति कोशः । कपित्थस्येत्यादिसंबन्धसामान्ये षष्ठी । श्लोकद्वयमेकान्वयि ॥ ७२ ॥ ७३ ॥

७४ ] ति० टी०—कल्कानामामलकादीनाम् । चूर्णकषायान्सुरभिचूर्णानि । 'कषायोऽथ सुरभौ लोहितेऽपि च' । चूर्णकषाया नलदादिचूर्णक्वथितकषाया इति कतकः । स्नानानि स्नानार्थान्युष्णोदकानि तदर्थान्यन्यद्रव्याणि च । सरितां तीर्थेषु स्नानघट्टेषु ॥ ७४ ॥

रा० टी०—कल्कानिति । कल्कान् आमलक्यादिकषायान् चूर्णकषायान् लाजाचूर्णादिकल्कान् सरितां तीर्थेषु स्नानार्हघट्टेषु विद्यमानानि भाजनस्थानि विविधानि स्नानानि स्नानसाधकानि उष्णजलादीनीत्यर्थः, नरा ददृशुः ॥ ७४ ॥

---

१ पिठरैरिति गो. पाठः । २ पायसस्येति गो. पाठः । ३ शर्करायां इति गो. पाठः ।

शुक्लानंशुमतश्चापि दन्तधावनसंचयान् । शुक्लांश्चन्दनकल्कांश्च समुद्गेष्ववतिष्ठतः ॥ ७५ ॥
दर्पणान्परिमृष्टांश्च वाससां चापि संचयान् । पादुकोपानहं चैव युग्मान्यत्र सहस्रशः ॥ ७६ ॥
आञ्जनीः कङ्कतान्कूर्चांश्छत्राणि च धनूंषि च । मर्मत्राणानि चित्राणि शयनान्यासनानि च ॥ ७७ ॥
प्रतिपानह्रदान्पूर्णान्खरोष्ट्रगजवाजिनाम् । अवगाह्य सुतीर्थांश्च ह्रदान्सोत्पलपुष्करान् ॥
आकाशवर्णप्रतिमान्स्वच्छतोयान्सुखाप्लुवान् ॥ ॥ ७८ ॥
नीलवैदूर्यवर्णांश्च मृदून्यवससंचयान् । निर्वापार्थं पशूनां ते ददृशुस्तत्र सर्वशः ॥ ७९ ॥
व्यस्मयन्त मनुष्यास्ते स्वप्नकल्पं तदद्भुतम् । दृष्ट्वातिथ्यं कृतं तादृग्भरद्वाजमहर्षिणा ॥ ८० ॥
इत्येवं रममाणानां देवानामिव नन्दने । भरद्वाजाश्रमे रम्ये सा रात्रिर्व्यत्यवर्तत ॥ ८१ ॥

गो० टी०—कल्कानिति । कल्कान् आमलक्यादिकल्कान् चूर्णकषायान् चूर्णानि माषादिचूर्णानि कषायाः क्वथितानि स्नान्त्येभिरिति स्नानानि तैलोष्णोदकादीनि भाजनस्थानि कटाहादिमहापात्रस्थानि तीर्थेषु अवतारेषु ॥ ७३ ॥

७५ ] ति० टी०—शुक्लान्निर्मलानंशुमतोऽग्रे कूर्चवतो दन्तधावनानामपामार्गादिकाष्ठानां संचयान् । चन्दनकल्कान्घृष्टचन्दनात् समुद्गेषु संपुटेषु ददृशुरिति संबन्धः ॥ ७५ ॥

रा० टी०—शुक्लानिति । शुक्लान् स्वच्छान् अंशुमतः अग्रे कूर्चविशिष्टान् दन्तधावनसंचयान् दन्तधावनानां समूहान् समुद्गेषु संपुटेषु अवतिष्ठतः चन्दनकल्कान् घृष्टचन्दनानि च ददृशुः ॥ ७५ ॥

गो० टी०—शुक्लानिति । शुक्लान् निर्मलान् अंशुमतः कूर्चवतः दन्तधावनसंचयान् दन्तकाष्ठसमूहान् । स्नानानन्तरमलंकारोपकरणानि दर्शयति—शुक्लानिति । चन्दनकल्कान् चन्दनपङ्कान् समुद्गेषु संपुटकेषु 'समुद्गकः संपुटकः' इत्यमरः । अवतिष्ठतः वर्तमानान् परिमृष्टान् निर्मलीकृतान् पादुकाः दारुनिर्मिताः उपानहश्चर्मनिर्मिताः युग्मानि द्वन्द्वानि आञ्जनीः अञ्जनयुक्ताः करण्डिकाः कङ्कतान् केशमार्जनान् 'कङ्कतः केशमार्जनम्' इति निघण्टुः । कूर्चान् स्नानाद्युपयुक्तासनानि श्मश्रुप्रसाधकान् वा, शस्त्राणि योधैरलंकारार्थं धार्याणि मर्मत्राणानि कवचादीनि प्रतिपानह्रदान् ग्रासग्रहणानन्तरं भुक्तजीर्णार्थं पानार्हह्रदान् अवगाह्य सुतीर्थान् अवगाहनयोग्यावतारप्रदेशयुक्तान् सोत्पलपुष्करान् उत्पलमिन्दीवरं पुष्करं पद्मम् आकाशवर्णप्रतिमान् आकाशवन्निर्मलानित्यर्थः, सुखप्लुवान् सुखेन प्लवः स्नानं येषु तथोक्तान् यवससंचयान् तृणसमूहान् 'यवसं तृणमर्जुनम्' इत्यमरः । पशूनां निर्वापार्थान् पशुभ्यो विश्राणनार्थान् ॥ ७४–७९ ॥

७६ ] ति० टी०—पादुकोपानहं पादुका दार्वादिनिर्मिताः उपानहश्चर्मादिकृताः समाहारे टच्समासान्तः ॥ ७६ ॥

रा० टी०—दर्पणानिति । परिमृष्टान् परिमार्जनं प्राप्तान् दर्पणान् वाससां वस्त्राणां संचयांश्च युग्मानि द्वन्द्वानि सहस्रशः पादुकोपानहं पादुकोपानहानि तत्र पादुका काष्ठादिनिर्मितं उपानच्चर्मादिनिर्मितं पादत्राणमिति विवेकः ॥ ७६ ॥

७७ ] ति०टी०—आञ्जनीरञ्जनयुक्तकरण्डिकाः, कङ्कतान्केशमार्जनानि कूर्चान्श्मश्रुप्रसाधकान्,मर्मत्राणानि कवचानि॥७७॥

रा० टी०—आञ्जनीः साञ्जनकरण्डिकाः कङ्कतान् केशमार्जनान् 'कङ्कतः केशमार्जनम्' इत्यमरः कूर्चान् श्मश्रुशोधकान् मर्मत्राणानि कवचप्रभृतीनि चित्राणि विचित्राणि शयनानि आसनानि च ॥ ७७ ॥

७८ ] ति०टी०—भुक्तजरणार्थं यत्पीयते तत्प्रतिपानम् । खरादीनामवगाहनयोग्यसुखावतारान्पद्मोत्पलसहितान्ह्रदान्ददृशुरिति संबन्धः । आकाशेत्याद्यर्धं पूर्वान्वयि । उपाधिविशेषान्नीलवर्णानित्यर्थः । सुखेनाप्लुवः स्नानं येषु तान् ॥ ७८ ॥

रा० टी०—पूर्णान् प्रतिपानानां भुक्तपरिपाचकपेयक्षारादीनां ह्रदान् अवगाह्यानि अवगाहनार्हाणि सुतीर्थानि सुघट्टाः येषु तान् सोत्पलपुष्करान् उत्पलपुष्करसहितान् ॥ ७८ ॥

७९ ] ति० टी०—यवसं तृणम् । निर्वापार्थं भक्षणार्थम् ॥ ७९ ॥

रा० टी०—आकाशवर्णप्रतिमान् नीलवर्णविशिष्टत्वेन प्रतीयमानान् स्वच्छतोयान् निर्मलतोयविशिष्टान् सुखप्लवान् सुतरान् ह्रदांश्च पशूनां निर्वापार्थं भक्षणार्थं यवससंचयान् तृणसमूहांश्च सर्वशः ते सैनिकाः अत्र भरद्वाजाश्रमे ददृशुः । सार्धपद्यानामेकत्रान्वयः ॥ ७९ ॥

८०–८१ ] ति० टी०—स्वप्नकल्पं मर्त्यदुर्लभं द्रागुत्पन्नविचित्रपदार्थत्वात् ॥ ८० ॥ ८१ ॥

रा० टी०—व्यस्मयन्तेति । मनुष्याः स्वप्नसदृशमद्भुतं यथा स्यात्तथा कृतमातिथ्यं दृष्ट्वा व्यस्मयन्त । अर्धद्वयमेकान्वयि ॥ ८० ॥

रा० टी०—इतीति । भरद्वाजाश्रमे रममाणानां रात्रिर्व्यत्यवर्तत ॥ ८१ ॥

गो० टी०—व्यस्मयन्तेति । स्वप्नकल्पत्वोक्तिरयत्नसिद्धत्वात् अपूर्वत्वात् आश्चर्यत्वाच्च तादृक् वाचामभूमिम् । भरतस्य भरताय ॥ ८० ॥ ८१ ॥

१ उपावहामिति गो. पाठः । २ चेति गो. पाठः । ३ सुखप्लवानिति गो. रा. पाठः । ४ निर्वापार्थानिति गो. पाठः । ५ तादृग्भरतस्येति गो. पाठः ।

प्रतिजग्मुश्च ताः सर्वा गन्धर्वाश्च यथागतम् । भरद्वाजमनुज्ञाप्य ताश्च सर्वा वराङ्गनाः ॥ ८२ ॥
तथैव मत्ता मदिरोत्कटा नरास्तथैव दिव्यागुरुचन्दनोक्षिताः ।
तथैव दिव्या विविधाः स्रगुत्तमाः पृथग्विकीर्णा मनुजैः प्रमर्दिताः ॥ ८३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

## द्विनवतितमः सर्गः ।

भरतेन साञ्जलिबन्धं चित्रकूटमार्गं प्रति पृष्टो भरद्वाजस्तं प्रत्यध्वानं प्रदर्श्य वन्दमानानां तिसृणां मातॄणां नामधेयान्यपृच्छत । भरतोऽप्येकैकस्याश्चरितपूर्वकं तानि निवेद्य सेनां संनाह्य परिजनसहितश्चित्रकूटं प्रतस्थे ।

ततस्तां रजनीं व्युष्य भरतः सपरिच्छदः । कृतातिथ्यो भरद्वाजं कामादभिजगाम ह ॥ १ ॥
तमृषिः पुरुषव्याघ्रं [3]प्रेक्ष्य प्राञ्जलिमागतम् । हुताग्निहोत्रो भरतं भरद्वाजोऽभ्यभाषत ॥ २ ॥
कच्चिदत्र सुखा रात्रिस्तवास्मद्विषये गता । समग्रस्ते जनः कच्चिदातिथ्ये शंस मेऽनघ ॥ ३ ॥
तमुवाचाञ्जलिं कृत्वा भरतोऽभिप्रणम्य च । आश्रमादुपनिष्क्रान्तमृषिमुत्तमतेजसम् ॥ ४ ॥

८२ ] ति० टी०—ताः सर्वा अप्सरसः । अनुज्ञाप्य दत्तानुमतिकं कृत्वा ॥ ८२ ॥

रा० टी०—प्रतिजग्मुरिति । भरद्वाजमनुज्ञाप्य तदाज्ञां गृहीत्वा नयादयो यथागतं जग्मुः ॥ ८२ ॥

गो० टी०—प्रतिजग्मुरिति । अनुज्ञाप्य अनुज्ञां कारयित्वा ८२

८३ ] ति० टी०—स्वप्नादिवदेतदृषिकृतमातिथ्यं मिथ्या नेति दर्शयति—तथैवेति । मत्ता तृप्ता मदिरया उत्कटाः प्रमत्ताः । 'मत्ते शौण्डोत्कटक्षीबाः' तथैव अनुभवकाल इव वर्तन्त इति शेषः । स्रक्षूत्तमाः स्रगुत्तमा उपभोगवशात्प्रकीर्णाः प्रमर्दिताश्च ॥ ८३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

रा० टी०—तथैवेति । मदिरोत्कटा मदिरामत्ताः नराः तथैव अनुभवसमय इव मत्ताः एकाकारतया अवर्तन्त इत्यर्थः । मनुजैः विकीर्णाः प्रक्षिप्ता अपि स्रगुत्तमाः तथैवासन्निति शेषः, म्लानतां न प्रापुरित्यर्थः ॥ ८३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

गो० टी०—इदं चातिथ्यकरणमैन्द्रजालिकवन्न मिथ्येत्याह—तथैवेति । मत्ताः तृप्ताः भोगैस्तृप्ताः मदिरोत्कटाश्च मद्येन मत्ताश्च 'मत्ते शौण्डोत्कटक्षीबाः' इत्यमरः । तथैव अनुभवकाल इवावर्तिषतेत्यर्थः । प्रमर्दिताः प्रकीर्णाश्च भोगवशादिति भावः । पृथक् पूर्वस्रग्भ्यो विलक्षणाः ॥ ८३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

१–२ ] ति० टी०—व्युष्योषित्वा सपरिच्छदः सपरिवारः, कामाद्रामप्राप्तिकामात् ॥ १ ॥ २ ॥

रा० टी०—रात्रिनिवासानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । कृतमातिथ्यं यस्य स सपरिच्छदः परिकरसहितः भरतः तां भरद्वाजाश्रमे प्राप्तां रजनीं व्युष्य कामात् रामसमीपगमनविषयकेच्छाया हेतोः भरद्वाजमभिजगाम ॥ १ ॥

रा० टी०—तमिति । पुरुषव्याघ्रं भरतमागतं प्रेक्ष्य हुताग्निहोत्रो भरद्वाजः अभ्यभाषत ॥ २ ॥

गो० टी०—ततस्तामित्यादि । व्युष्य विशेषेणोषित्वा सपरिच्छदः सपरिवारः । 'परिवारः परिकरः परिष्कन्दः परिग्रहः । तथोपकरणं प्रोक्तं परिबर्हः परिच्छदः' इति हलायुधः । कामात् रामप्राप्तीच्छया ॥ १ ॥ २ ॥

३ ] ति० टी०—अस्मद्विषयेऽस्मदाश्रमे सुखा सुखरूपा आतिथ्ये ते जनः समग्रः सम्यक्तृप्तिकः अभूदिति शेषः । अनेन हि तप एव महत्सर्वेष्टसाधनं न तु राज्यादीति ऋषिणा बोधितो भरतः ॥ ३ ॥

रा० टी०—तदभिभाषणमेवाह—कच्चिदिति । अस्मद्विषये अस्माकमाश्रमे गता व्यतीता रात्रिः तव सुखा सुखप्रदा कच्चित् ते जनः मे आतिथ्ये समग्रः सम्यक् सत्कृतः कच्चित् अभवदिति शेषः, इति शंस कथय ॥ ३ ॥

गो० टी०—कच्चिदिति । अस्मद्विषयं अस्मदाश्रमं रात्रिः सुखा गता कच्चिदित्यन्वयः । आतिथ्ये विषये समग्रः संपूर्णस्तृप्त इति यावत् । अनघेत्यनेन पूर्वं भरताशयपरीक्षणार्थमेवातिथ्यकरणमिति द्योतितं रामविषयभक्त्यभावे भोगप्रवणः स्यादिति हृदयम् ॥ ३ ॥

४ ] ति० टी०—जनसमूहस्य बहुत्वात्सर्वेषां स्वदर्शनेन कृतकृत्यत्वायाश्रमान्निष्क्रान्तमृषिमुवाच ॥ ४ ॥

रा० टी०—तमिति । आश्रमादुपनिष्क्रान्तं स्वसमीपे प्राप्तं तं भरद्वाजं भरत उवाच ॥ ४ ॥

१ नघ-इति गो. पाठः । २ प्रकीर्णा इति गो. पाठः । ३ प्राञ्जलिं प्रेक्ष्य चेति गो. पाठः । ४ अभीति गो. पाठः ।

सुखोषितोऽस्मि भगवन्समग्रबलवाहनः । बलवत्तर्पितश्चाहं[1] बलवान्भगवंस्त्वया ॥ ५ ॥
अपेतक्लमसंतापाः सुभिक्षाः[2] सुप्रतिश्रयाः । अपि प्रेष्यानुपादाय सर्वे स्म सुसुखोषिताः ॥ ६ ॥
आमन्त्रयेऽहं भगवन्कामं त्वामृषिसत्तम । समीपं प्रस्थितं भ्रातुर्मैत्रेणेक्षस्व चक्षुषा ॥ ७ ॥
आश्रमं तस्य धर्मज्ञ धार्मिकस्य महात्मनः । आचक्ष्व कतमो मार्गः कियानिति च शंस मे ॥ ८ ॥
इति पृष्टस्तु भरतं भ्रातृदर्शनलालसम् । प्रत्युवाच महातेजा भरद्वाजो महातपाः ॥ ९ ॥
भरतार्धतृतीयेषु योजनेष्वजने वने । चित्रकूटगिरिस्तत्र[3] रम्यनिर्दरकाननः[4] ॥ १० ॥
उत्तरं पार्श्वमासाद्य तस्य मन्दाकिनी नदी । पुष्पितद्रुमसंछन्ना रम्यपुष्पितकानना ॥ ११ ॥

गो० टी०—तमिति । अभिनिष्क्रान्तमित्यनेन कौसल्यादिसर्वजनदर्शनार्थं भरतागमनकाल एव बहिर्निर्गतत्वान्मुनेरिति व्यञ्जितम् ॥ ४ ॥

५ ] ति० टी०—बलवदत्यन्तम् । बलवान्सेनासहितः ॥५॥

रा० टी०—तद्वचनाकारमाह—सुखेति । सामात्यः अमात्यसहितः समग्रबलवाहनः समस्तबलवाहनवान् अहं सर्वकामैर्बलवदत्यन्तं तर्पितः अत एव सुखोषितः ससुखमुषितोऽस्मि ॥५॥

गो० टी०—सुखोषितोऽस्मीति । बलवत्तर्पितः अतीव तर्पितः किमुतातीव बलवत् 'स्वति सुष्ठु च निर्भरे' इति वैजयन्ती ॥ ५ ॥

६ ] ति० टी०—क्लमो ग्लानिः, संतापो देहौष्ण्यम्, अपि प्रेष्यानुपादाय प्रेष्यानप्यादाय तैरपि सहेत्यर्थः । सुभिक्षाः सुसमृद्धान्नपानाः सुप्रतिश्रयाः शोभनावासाः ॥ ६ ॥

रा० टी०—अपेतेति । प्रेष्यान् भृत्यवर्गानपि उपादाय आरभ्य सुभक्ष्याः प्राप्तशोभनभक्ष्यवन्तः सुप्रतिश्रयाः प्राप्तशोभनवासस्थानाः अत एव अपेतक्लमसंतापाः अपेताः निवृत्ताः क्लमाः ग्लानयः संतापाः अध्वश्रमजनितदेहक्लेशाः येषां ते अत एव सुसुखोषिताः सुसुखं सुखपूर्वमुषितं यैः ते सर्वे वयं स्म स्मः ॥ ६ ॥

गो० टी०—अपेतेति । क्लमो ग्लानिः संतापो देहौष्ण्यम् अपि प्रेष्यानुपादाय प्रेष्यानपि आरभ्य सुभिक्षाः समृद्धान्नपानाः सुप्रतिश्रयाः शोभनस्थानाः शोभनगृहा इति यावत् 'स्थाने गोष्ठ्यां सत्रयागे प्रत्याहारे प्रतिश्रयः' इति वैजयन्ती ॥ ६ ॥

७ ] ति० टी०—आमन्त्रये पृच्छामि काममधिकं मैत्रेण स्निग्धेन ॥ ७ ॥

रा० टी०—आमन्त्रये इति । हे ऋषिसत्तम ! त्वामहमामन्त्रये प्रार्थयामि । प्रार्थनमेवाह—भ्रातुः समीपं प्रस्थितं मां मैत्रेण स्नेहयुक्तेन चक्षुषा ईक्षस्व गन्तुमाज्ञापयेत्यर्थः ॥ ७ ॥

गो० टी०—आमन्त्रय इति । कामं यथेष्टम् 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्' इत्यमरः । हे भगवन् ! त्वामामन्त्रये आपृच्छे, भ्रातुः समीपं कामं प्रस्थितं मां त्वं मैत्रेण मित्रसंबन्धिना चक्षुषा ईक्षस्व ॥ ७ ॥

८-९ ] ति० टी०—तस्य रामस्य कियान्कियद्दूरदेशे कतमस्तस्य मार्ग इति शंस ॥ ८ ॥ ९ ॥

रा० टी०—आश्रममिति । धार्मिकस्य तस्य रामस्य आश्रममाचक्ष्व यत्रास्ति तं देशं कथयेत्यर्थः, मार्गः तदाश्रमप्रापकः पन्थाः कतमः एषां मध्ये क इत्यर्थः, कियान् कियत्क्रोशमितः इति च मे शंस ॥ ८ ॥

गो० टी०—आश्रममिति । धर्मेण योगजधर्मेण जानातीति धर्मज्ञ योगप्रभावविदितसर्ववृत्तान्तेत्यर्थः । धार्मिकस्य पितृवचनपरिपालनरूपं धर्ममाचरतः महात्मनः महाधैर्यस्य तस्य रामस्याश्रममाचक्ष्व स चाश्रमः कियान् कियद्दूरतः तस्य मार्गः कतम इति पृच्छते मे मह्यं शंसेति योजना ॥ ८ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण पृष्टो भरद्वाजः भ्रातुर्दर्शनलालसं भरतं प्रत्युवाच ॥ ९ ॥

गो० टी०—इतीति । महातपाः अत एव महातेजाः सर्वज्ञानसमर्थ इत्यर्थः, रामाश्रमप्रदेशाभिज्ञेषु गुहज्ञातिषु विद्यमानेषु मुनिं प्रति प्रश्नस्तस्य पूजार्थम् ॥ ९ ॥

१० ] ति० टी०—अर्धतृतीययोजनेषु सार्धयोजनद्वयेऽतीते इत्यर्थः । निर्दरा विदीर्णाः पाषाणाः, वर्तत इति शेषः ॥ १० ॥

रा० टी०—तत्प्रतिवचनाकारमाह—भरतेति । अर्धतृतीयेषु अर्धमेव तृतीयं यस्मिन् सार्धद्वयमित्यर्थः, तस्यैकशेषेण कपिञ्जलाधिकरणन्यायात् सार्धसप्तेत्यर्थः, तेषु योजनेषु चित्रकूटगिरिस्तत्र गिरौ विद्यमाने अजने दुर्जनरहिते वने रम्याणि निर्झरकाननानि यस्मिन् स चित्रकूटगिरिरस्ति तस्य गिरेः उत्तरं पार्श्वमासाद्य प्राप्य पुष्पितद्रुमैः संछन्ना रम्याणि पुष्पितकाननानि यस्याः सा मन्दाकिनी नदी अस्ति । श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—भरतेति । अर्धतृतीयेष्विति अर्धं तृतीयं येषां तेष्वर्धतृतीयेषु सार्धयोजनद्वितय इत्यर्थः, अतीतेष्विति शेषः । अजने मुनिव्यतिरिक्तग्राम्यजनरहिते वने तत्र प्रसिद्धो गिरिः वर्तत इति शेषः ॥ १० ॥

११ ] ति० टी०—मन्दाकिनी तदाख्या काचिन्नदी चित्रकूटोत्तरपार्श्वं प्राप्य तिष्ठतीति शेषः ॥ ११ ॥

गो० टी०—उत्तरमिति । तस्य गिरेरुत्तरं पार्श्वमासाद्य

१ तर्पितः सर्वकामैश्च सामात्यो बलवादिति गो. रा. पाठः । २ सुभक्ष्या इति रा. पाठः । ३ कूटो गिरिरिति गो. पाठः । ४ निर्झरेति रा.पाठः ।

अनन्तरं तत्सरितश्चित्रकूटं च पर्वतम् । तयोः पर्णकुटीं तात तत्र तौ वसतो ध्रुवम् ॥ १२ ॥
दक्षिणेन च मार्गेण सव्यदक्षिणमेव च । गजवाजिसमाकीर्णां वाहिनीं वाहिनीपते ॥ १३ ॥
वाहयस्व महाभाग ततो द्रक्ष्यसि राघवम् । प्रयाणमिति च श्रुत्वा राजराजस्य योषितः ॥ १४ ॥
हित्वा यानानि यानार्हा ब्राह्मणं पर्यवारयन् । वेपमाना कृशा दीना सह देव्या सुमित्रया ॥ १५ ॥
कौसल्या तत्र जग्राह कराभ्यां चरणौ मुनेः । असमृद्धेन कामेन सर्वलोकस्य गर्हिता ॥ १६ ॥
कैकेयी तत्र जग्राह चरणौ सव्यपत्रपा । तं प्रदक्षिणमागम्य भगवन्तं महामुनिम् ॥ १७ ॥
अदूराद्भरतस्यैव तस्थौ दीनमनास्तदा । तत्र पप्रच्छ भरतं भरद्वाजो महामुनिः ॥ १८ ॥

स्थिता मन्दाकिनी नाम काचिन्नदी अस्तीति शेषः. द्रुमाः काननभिन्नाः ॥ ११ ॥

१२ ] ति० टी०–तस्या अनन्तरं तत्परपार्श्वे चित्रकूटं पर्वतं तयो रामलक्ष्मणयोः पर्णकुटीं च द्रक्ष्यसि तत्र पर्वते वसतः ध्रुवं निश्चयेन ॥ १२ ॥

रा० टी०–अनन्तरमिति । तत्सरितो मन्दाकिन्याः अनन्तरं समीपे यश्चित्रकूटः पर्वतः तत्र तयोः सीतारामयोः पर्णकुटी पर्णशाला तत्र तस्यां तौ सीतारामौ ध्रुवं वसतः ' चित्रकूटम् ' इति द्वितीयान्तपाठे चित्रकूटं प्राप्येत्यर्थः ॥ १२ ॥

गो० टी०–अनन्तरमिति । तत्सरितो मन्दाकिन्याः अनन्तरं समीपे चित्रकूटस्तिष्ठति न तु व्यवहितपार्श्वे तयोः सरिद्गिर्योर्मध्ये पर्णकुटी पर्णशाला कृता तत्र वसतः ध्रुवं योगप्रभावेन जानामीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०–दक्षिणेनैव मार्गेण यमुनाया दक्षिणतीरमार्गेणैव गत्वा किंचिद्दूरं ततः पश्चात्सव्यदक्षिणं तस्य मार्गस्य शाखामार्गयोः सव्यभागवर्ती यो दक्षिणदिग्गामी मार्गोऽस्ति तं मार्गं वाहिनीं वाहयस्व, न त्वन्यं शाखामार्गं तस्याल्पत्वाद्गहनमार्गत्वाच्च ॥ १३ ॥

रा० टी०–पृष्टमार्गमुपदिशति–दक्षिणेनेति । दक्षिणेन यमुनोत्तरकूलवर्तिना मार्गेण किंचिद्दूरं गत्वेति शेषः सव्यदक्षिणं यमुनामुल्लङ्घ्य नैर्ऋत्यकोणं वाहिनीं सेनां वाहयस्व, हे वाहिनीपते सेनाधीश ! हे महाभाग ! ततः तादृग्गमनाद्राघवं द्रक्ष्यसि । सार्धश्लोक एकान्वयी ॥ १३ ॥

गो० टी०–दक्षिणेनेति । अस्मादाश्रमात् दक्षिणेन मार्गेण किंचिद्दूरं गत्वा ततः सव्यदक्षिणं नैर्ऋतदिग्भागो यथा भवति तथा वाहिनीं वाहयस्व किंचिद्दूरं दक्षिण एको मार्गः ततः शाखामार्गेण नैर्ऋतदिग्भागगामिना गन्तव्यमिति भावः । कान्तारमार्गस्य सूक्ष्मत्वाद्यथायोग्यं मार्गस्य वामतो दक्षिणतश्च विरलप्रदेशे वाहिनीं प्रापयस्वेत्यर्थं इत्यप्याहुः ॥ १३ ॥

१४ ] ति० टी०–राजराजस्य दशरथस्य ॥ १४ ॥

रा० टी०–प्रयाणमिति । प्रयाणमिति शब्दं श्रुत्वैव यानार्हाः वेपमानाः सुमित्रया सह राजराजस्य योषितः यानानि हित्वा त्यक्त्वा ब्राह्मणं भरद्वाजं पर्यवारयन् पर्यवेष्टयन्त । सार्धश्लोक एकान्वयी ॥ १४ ॥ १५ ॥

गो० टी०–प्रयाणमिति । इति उक्तप्रकारेण तत्प्रयाणं प्रस्थानं श्रुत्वा राजराजस्य महाराजस्य दशरथस्य योषितः कौसल्याद्याः यानार्हाः यानत्यागानर्हा अपि यानानि त्यक्त्वा ब्राह्मणं ब्रह्मविदं भरद्वाजं पर्यवारयन् वन्दनायेति शेषः ॥ १४ ॥

१५ ] ति० टी०–ब्राह्मणं भरद्वाजं पर्यवारयन् नमस्कारार्थं स्त्रिय इति शेषः । वेपमानत्वादिगुणविशिष्टा कौसल्या॥ १५॥

गो० टी०–वेपमानेति । वेपमाना वार्धकाद्दृषिदर्शनाच्च कृशा दीना रामविरहादिति शेषः ॥ १५ ॥

१६ ] ति० टी–असमृद्धेन फलसमृद्धिरहितेन कामेन मनोरथेनोपलक्षिता इत्यादि कैकेयीविशेषणम् ॥ १६ ॥

रा० टी०–कौसल्येति । तत्र तस्मिन्समये मुनेः चरणौ असमृद्धेन अपरिपूर्णेन कामेन रामराज्याभिषेकेच्छयोपलक्षिता कौशल्या मुनेः चरणौ जग्राह सर्वलोकस्य गर्हिता रक्षिकात्वेन स्वीकारकर्त्री सव्यपत्रपा सव्यं कौशल्यावामभागं पाति सव्यपा त्रपते इति त्रपा स्वस्य रामविवासनहेतुत्वस्मृत्या किंचिल्लज्जावती सा एव सेति कर्मधारयः कैकेयी च चरणौ जग्राह तदाचरणग्रहणोत्तरकाले तं मुनिं प्रदक्षिणमागम्य दीनमनाः कैकेयी भरतस्यैव अदूरात्समीपे तस्थौ । सार्धश्लोकद्वयं संमिलितान्वयि ॥ १६ ॥ १७ ॥

गो० टी०–असमृद्धेनेति । असमृद्धेन अपूर्णेन फलापर्यवसायिनेति यावत् कामेन मनोरथेन उपलक्षितेति शेषः, लोकस्य गर्हिता लोकेन गर्हिता सव्यपत्रपा सलज्जा रामविवासनहेतुत्वात् ॥ १६ ॥

१७ ] ति० टी०–सव्यपत्रपा अत एव सलज्जा ॥ १७ ॥

गो० टी०–लज्जावशादेव कौसल्यादिभिः सह मुनेः पुरतः स्थातुमशक्ता प्रदक्षिणव्याजेन भरतं गतेत्याह–तमित्यादिना । दीनमनाः कैकेयी ॥ १७ ॥

१८ ] ति० टी०–दीनमनाः अप्राप्तमनोरथत्वात् कैकेयीति विशेष्यम् ॥ १८ ॥

रा० टी०–तत्रेति । हे राघव भरत ! तव मातॄणां

१ कूटश्च पर्वत इति गो. रा. पाठः । २ कुटीति गो. रा. पाठः । ३ पन्थेति गो. पाठः । ४ वेति गो. पाठः । ५ रथेति गो. पाठः । ६ तदिति गो. पाठः । ७ तस्येति गो. पाठः । ८ तत इति गो. पाठः । ९ दृढव्रत इति गो. पाठः ।

विशेषं ज्ञातुमिच्छामि मातॄणां तव राघव । एवमुक्तस्तु भरतो भरद्वाजेन धार्मिकः ॥ १९ ॥
उवाच प्राञ्जलिर्भूत्वा वाक्यं वचनकोविदः । यामिमां भगवन्दीनां शोकानशनकर्शिताम् ॥ २० ॥
पितुर्हि महिषीं देवीं देवतामिव पश्यसि । एषा तं पुरुषव्याघ्रं सिंहविक्रान्तगामिनम् ॥ २१ ॥
कौसल्या सुषुवे रामं धातारमदितिर्यथा । अस्या वामभुजं श्लिष्टा या सा तिष्ठति दुर्मनाः ॥२२॥
इयं सुमित्रा दुःखार्ता देवी राज्ञश्च मध्यमा । कर्णिकारस्य शाखेव शीर्णपुष्पा वनान्तरे ॥ २३ ॥
एतस्यास्तौ सुतौ देव्याः कुमारौ देववर्णिनौ । उभौ लक्ष्मणशत्रुघ्नौ वीरौ सत्यपराक्रमौ ॥ २४ ॥
यस्याः कृते नरव्याघ्रौ जीवनाशमितो गतौ । राजा पुत्रविहीनश्च स्वर्गं दशरथो गतः ॥ २५ ॥
क्रोधनामकृतप्रज्ञां दृप्तां सुभगमानिनीम् । ऐश्वर्यकामां कैकेयीमनार्यामार्यरूपिणीम् ॥ २६ ॥

विशेषं ज्येष्ठत्वादिना न्यूनाधिकभावं ज्ञातुमिच्छामि । भरतं भरद्वाजः पप्रच्छ । अर्धद्वयमेकान्वयि ॥ १८ ॥

गो० टी०—तत इति । दृढव्रत इत्यनेन सर्वज्ञत्वं लक्ष्यते सर्वज्ञोऽपि कैकेयीशिक्षार्थं पप्रच्छेत्यर्थः विशेषं संज्ञासंज्ञिसंबन्धादिविशेषम् इतिकरणमध्याहृत्य इति पप्रच्छेत्यन्वयः ॥ १८ ॥

१९ ] ति० टी०—विशेषं तत्तन्नामरूपम् ॥ १९ ॥

रा० टी०—एवमिति । भरद्वाजेन एवमुक्तो भरतः प्राञ्जलिर्भूत्वा उवाच ॥ १९ ॥

गो० टी०—एवमिति । धार्मिकः सत्यवादीत्यर्थः, वचनकोविदः वचने पण्डितः भरद्वाजवचनतात्पर्यज्ञ इत्यर्थः, भरतमुखेन मातॄणां स्वभावविशेषप्रतिपादनं हि मुनेराशयः ॥ १९ ॥

२० ] ति० टी०—शोकानशनकर्शितां शोकवशप्राप्तानशनेन कृशीकृताम् ॥ २० ॥

२१ ] ति० टी०—यां पश्यसि एषेत्यन्वयः । सिंहवद्विक्रान्तगमनशीलम् ॥ २१ ॥

रा० टी०—तदाकारमाह—यामिति । शोकानशनकर्शितां शोकहेतुकभोजनाभावहेतुककृशताविशिष्टामत एव दीनां क्षीणचित्तां देवतामिव यां महिषीं पश्यसि सा एषा कौशल्या धातारमदितिरिव पुरुषव्याघ्रं रामं सुषुवे । अर्धचतुष्टयमेकान्वयि ॥ २०—२२ ॥

गो० टी०—यामिति । शोकानशनकर्शितां शोकानशनाभ्यां कर्शितां देवतामिव धर्मदेवतामिव सिंहविक्रान्तगामिनं सिंहवद्विक्रान्तं विक्रमयुक्तं यथा भवति तथा गामिनं गमनशीलं धातारं विष्णुम् एष धाता विधाता चेति वक्ष्यमाणत्वात् सर्वगुणसंपन्ना राममाता एषा कौसल्येत्यर्थः ॥ २० ॥ २१ ॥

२२ ] ति० टी०—धातारमुपेन्द्रम् ॥ २२ ॥

२३ ] ति० टी—कर्णिकारो वृक्षविशेषः ॥ २३ ॥

रा० टी०—अस्या इति । वनान्तरे शीर्णपुष्पा कर्णिकारस्य शाखेव अस्याः कौसल्यायाः वामभुजं श्लिष्टा दुर्मनाः या तिष्ठति सा इयं राज्ञो मध्यमा देवी सुमित्रा । सार्धश्लोक एकान्वयी ॥ २३ ॥

गो० टी०—अस्या इति । वामभुजं श्लिष्टा कौसल्याया वेपमानाङ्गत्वात्तद्धारणार्थं तद्वामभुजमवधृत्य स्थितेत्यर्थः दुर्मनाः दुःखितमनाः, दुर्मनस्त्वे दृष्टान्तः कर्णिकारस्येति शीर्णपुष्पा म्लानपुष्पा । एतस्या इति । एतस्या इत्यत्र उक्तगुणसंपन्नयोर्लक्ष्मणशत्रुघ्नयोर्मातेयमिति बोध्यं देववर्णिनौ अश्विनीदेवतुल्यौ ॥ २२ ॥ २३ ॥

२४ ] ति० टी०—देववर्णिनौ देवतुल्यरूपौ ॥ २४ ॥

रा० टी०—एतस्या इति । एतस्याः सुमित्रायाः देववर्णिनौ देववर्णसदृशवर्णविशिष्टौ उभौ लक्ष्मणशत्रुघ्नौ तौ प्रसिद्धौ सुतौ स्तः इति शेषः ॥ २४ ॥

२५ ] ति० टी—यस्याः कैकेय्या जीवनाशं गतौ तादृशापदं प्राप्तौ ॥ २५ ॥

रा० टी०—यस्या इति । यस्याः कृते प्रयत्ने सति नरव्याघ्रौ रामलक्ष्मणौ जीवनाशं जीवस्य प्रजापालनस्य नाशमभावं गतौ प्राप्तौ अत एव राजा दशरथः पुत्रविहीनः श्रेष्ठपुत्ररहितः सन् स्वर्गं साकेतं गतः ॥ २५ ॥

गो० टी०—यस्या इति । जीवनाशं राक्षसभूयिष्ठं दण्डकारण्यं प्रति विवासनात् जीवस्य जीवनस्य नाशम् इत इह वने क्रुध्यतीति क्रोधना कर्तरि ल्युट् । अकृतप्रज्ञाम् अशिक्षितबुद्धिं सुभगमानिनीं सुभगां सुन्दरीमात्मानं मन्यत इति सुभगमानिनी तां वस्तुतोऽनार्याम् आर्यरूपिणीमार्यवद्भासमानाम् यतोमूलं यत्कारणकम् आत्मनो मम ॥ २४—२६ ॥

२६ ] ति० टी०—दृप्तां गर्विताम् अकृतप्रज्ञामशिक्षितबुद्धिम् आर्यरूपिणीं सतीमिव प्रतिभासमानाम् ॥ २६ ॥

रा० टी०—क्रोधनामेति । क्रोधे नाम प्रसिद्धिर्यस्याः सा क्रोधनामा मन्थरा तस्यां कृता स्थापिता प्रज्ञा बुद्धिर्यया ताम्, मन्थरानुकूलवर्तिनीमित्यर्थः । दृप्तामहमतीव राजप्रियेति गर्वविशिष्टां राजातिप्रीतिविषयीभूतामित्यर्थः, अत एव शुभगमानिनीं शुभगानां राज्ञः स्वशुभप्राप्तीच्छावतां कर्तॄणां मानः पूजास्ति अस्यास्तामत एव ऐश्वर्यैः कामयते शोभते सा तामार्यरूपिणीं प्रशस्तरूपविशिष्टां सत्ववेत्तृसत्कृतिनिरतां वा नृशंसां रामवियोगहेतुत्वेन नृभिः कथ्यमानां पापनिश्चयां पापे स्वहेतु-

१ एषेति गो. पाठः । २ अर्धमेतत् गो. नास्ति ।

मम्मैतां मातरं विद्धि नृशंसां पापनिश्चयाम् । यतोमूलं हि पश्यामि व्यसनं महदात्मनः ॥ २७ ॥
इत्युक्त्वा नरशार्दूलो बाष्पगद्गदया गिरा । [1]विनिःश्वस्य स ताम्राक्षः क्रुद्धो नाग इव [2]श्वसन् ॥ २८ ॥
भरद्वाजो महर्षिस्तं ब्रुवन्तं भरतं [3]तदा । प्रत्युवाच महाबुद्धिरिदं वचनम[4]र्थवित् ॥ २९ ॥
न दोषेणावगन्तव्या कैकेयी भरत त्वया । रामप्रव्राजनं ह्येतत्सुखोदर्कं भविष्यति ॥ ३० ॥
देवानां दानवानां च ऋषीणां भावितात्मनाम् । हितमेव भविष्यद्धि रामप्रव्राजनादिह ॥ ३१ ॥
अभिवाद्य तु संसिद्धः कृत्वा चैनं प्रदक्षिणम् । आमन्त्र्य भरतः सैन्यं युज्यतामिति [5]चाब्रवीत् ॥ ३२ ॥
ततो वाजिरथान्युक्त्वा दिव्यान्हेमवि[6]भूषितान् । अध्यारोहत्प्रयाणा[7]र्थं बहून्बहुविधो जनः ॥ ३३ ॥
गजकन्या गजाश्चैव हेमकक्ष्याः पताकिनः । जीमूता इव घर्मान्ते सघोषाः संप्रतस्थिरे ॥ ३४ ॥
विविधान्यपि यानानि महान्ति च लघूनि च । प्रययुः सुमहार्हाणि पादै[8]रपि पदातयः ॥ ३५ ॥

---

कवियोदुःखदानरूपापराधे निश्चयो यस्यास्तां यतो यस्याः अमूलमकारणकमात्मनो व्यसनमनवस्थितिं पश्यामि तामनार्यां कनिष्ठामेतां कैकेयीं मम मातरं विद्धि जानीहि । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

२७–२९ ] ति० टी०—यतो मूलं यन्मूलम् ॥ २७–२९ ॥

रा० टी०—इतीति । नरशार्दूलो भरतः बाष्पगद्गदया वियोगहेतुभूतमन्थरास्मृति जनिताश्रूद्गमहेतुकगद्गदात्वविशिष्टया गिरा इति अनेन प्रकारेण उक्त्वा ताम्राक्षः सन् क्रुद्धो नाग इव निशश्वास ॥ २८ ॥

गो० टी०—इतीति । बाष्पगद्गदया रामविवासस्मरणजबाष्पेण गद्गदया स्खलन्त्या गिरा इत्युक्त्वा नागः सर्पः ॥ २७ ॥

रा० टी०—भरद्वाज इति । तं ब्रुवन्तं भरतं महाबुद्धिः अत एव अर्थवित् सर्वपदार्थवेत्ता भरद्वाजः भरतं प्रत्युवाच ॥ २९ ॥

गो० टी०—भरद्वाज इति । तथा ब्रुवन्तमित्यन्वयः । महाबुद्धिः भाविज्ञः, अर्थवत् प्रयोजनवत् ॥ २८ ॥

३० ] ति० टी०—दोषेण दुष्टकृत्यकर्तृत्वेन । सुखोदर्कं देवानामृषीणां च सुखफलम् ॥ ३० ॥

रा० टी०—तद्वचनाकारमाह–नेति । हे भरत ! दोषेण अकालकप्रव्राजनजनितापराधेन विशिष्टा कैकेयी त्वया नावगन्तव्या तस्यां दोषबुद्धिर्न कर्तव्येत्यर्थः । तत्र हेतुः–एतद्रामप्रव्राजनं सुखोदर्कं सुखप्रवर्धक भविष्यति ॥ ३० ॥

गो० टी०—नेति । दोषेण दोषवत्तया नावगन्तव्या तस्याः देवप्रेरितत्वादित्यभिप्रायः । तत्र हेतुमाह–रामेति । सुखोदर्कं सुखोत्तरम् अतीतानागतवर्तमानज्ञो महर्षिर्भाविरावणवधादिकं हृदि निधाय देवादीनां सुखोदर्कं भविष्यतीत्युक्तवान् ॥ २९ ॥ ३० ॥

३१ ] ति० टी०—तदेवाह–देवानामित्यादि । भविष्यदिति भवन्तम् जानीहीति शेषः । एवं देवादिकृतोऽयं मन्थराद्वारा कैकेय्या बुद्धिमोह इति भावः, अत एव नैषा दोषभागिति बोध्यं देवादीनां सुखदत्वात् ॥ ३१ ॥

रा० टी०—ननु प्रव्राजनस्य कथं सुखप्रवर्धकत्वमित्यत आह–देवानामिति । रामप्रव्राजनाद्भविष्यत्प्राप्स्यद्देवादीनां हितमेव अवेहीति शेषः । भावितात्मनामित्यस्य भावितः परिशीलितः आत्मा परमात्मा यैस्तेषामित्यर्थः ॥ ३१ ॥

३२–३३ ] ति० टी०—संसिद्धः प्राप्ताशीर्वादरूपानुग्रहः । स्वमातृकृत्यस्य ज्ञातिहितावहत्वाच्च युज्यतां गमनाय संनह्यताम् ॥ ३२ ॥ ३३ ॥

रा० टी०—अभिवाद्येति । संसिद्धः रामस्थितिनिश्चयरूपसिद्धिं प्राप्तो भरतः आमन्त्र्य भरद्वाजाज्ञां गृहीत्वा सैन्यं युज्यतामित्यब्रवीत् ॥ ३२ ॥

गो० टी०—अभिवाद्येति । संसिद्धः लब्धाशीर्वादः आमन्त्र्य आपृच्छ्य युज्यतां गमनाय संनह्यतामिति स्वसैन्यमचोदयत् ॥ ३१ ॥

रा० टी०—तत इति । ततः भरताज्ञापनानन्तरं हेमविभूषितां बहून्वाजिरथान् प्रयाणार्थं युक्त्वा बहुविधो जनः अध्यारोहत् ॥ ३३ ॥

गो० टी०—तत इति । वाजिरथान् वाजिनो रथांश्च युक्त्वा संनह्य 'युक्तान्' इति पाठे सज्जीकृतान् प्रयाणार्थी प्रयाणकाङ्क्षी ॥ ३२ ॥

३४ ] ति० टी०—गजकन्याः करेणवः सघोषा घण्टाघोषसहिताः ॥ ३४ ॥

रा० टी०—गजेति । हेमकक्ष्याः पताकिनः पताकाविशिष्टाः गजकन्याः करेणवः गजाश्च घर्मान्ते ग्रीष्मापाये जीमूता मेघा इव संप्रतस्थिरे ॥ ३४ ॥

गो० टी०—गजकन्या इति । गजकन्याः करेणवः हेमकक्ष्याः हेममयबन्धनरज्जवः सघोषाः घण्टाघोषयुक्ताः पताकिन इत्यत्र "पुमान् स्त्रिया" इत्येकशेषः ॥ ३३ ॥

३५ ] ति० टी०—सुमहार्हाणि यानान्यारुह्य तद्योग्याः प्रययुः, पदातयस्तु पादैरेव प्रययुः ॥ ३५ ॥

रा० टी०—विविधानीति । सुमहार्हाणि अतिबहुमूल्या-

---

१ स निशश्वासेति गो. निशश्वास स इति रा. पाठः । २ असकृदिति रा. पाठः । ३ तथेति गो. पाठः । ४ अर्थवदिति गो. पाठः । ५ मचोदयदिति गो. पाठः । ६ परिष्कृतानिति गो. पाठः । ७ अर्थीति गो. पाठः । ८ एवेति गो. पाठः ।

अथ यानप्रवेकैस्तु कौसल्याप्रमुखाः स्त्रियः । रामदर्शनकाङ्क्षिण्यः प्रययुर्मुदितास्तदा ॥ ३६ ॥
चन्द्रार्कतरुणाभासां नियुक्तां शिबिकां शुभाम् । आस्थाय प्रययौ श्रीमान्भरतः सपरिच्छदः ॥३७॥
सा प्रयाता महासेना गजवाजिसमाकुला । दक्षिणां दिशमावृत्य महामेघ इवोत्थितः ॥ ३८ ॥
वनानि च व्यतिक्रम्य जुष्टानि मृगपक्षिभिः । गङ्गायाः परवेलायां गिरिष्वथ नदीष्वपि ॥ ३९ ॥
सा संप्रहृष्टद्विपवाजियूथा वित्रासयन्ती मृगपक्षिसंघान् ।
महद्वनं तत्प्रविगाहमाना रराज सेना भरतस्य तत्र ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

## त्रिनवतितमः सर्गः ।

सैन्यपरिजनैश्चित्रकूटं प्राप्तो भरतो भरद्वाजोक्तलक्षणैस्तं चित्रकूटं निर्धार्य तत्र रामाश्रमान्वेषणे सैनिकान्ययोजयत् । विचिन्वन्तस्ते नातिदूरे दृष्टधूमलिङ्गेन तत्रैव रामवसतिं निश्चिक्युरथ सेनां संस्थाप्य भरतो वसिष्ठादिभिः समं तद्देशगमननिश्चयं चक्रे ।

तया महत्या यायिन्या ध्वजिन्या वनवासिनः । अर्दिता यूथपा मत्ताः सयूथाः संप्रदुद्रुवुः ॥ १ ॥
ऋक्षाः पृषतमुख्याश्च रुरवश्च समन्ततः । दृश्यन्ते वनवाटेषु गिरिष्वपि नदीषु च ॥ २ ॥

---

नि विविधानि अनेकप्रकाराणि महान्ति लघूनि च यानानि ययुः पदातयश्च पादैर्ययुः ॥ ३९ ॥

गो० टी०-विविधानीति । प्रययुरित्यत्र सादिन आरुह्येति शेषः, यद्वा यानानीति तत्स्था लक्ष्यन्ते पदातयः पादैरेव ययुः यानैः समं ययुरिति भावः॥ ३४ ॥

३६ ] ति० टी०-यानप्रवेकैर्यानोत्तमैः ॥ ३६ ॥

रा० टी०-अथेति । तदा तस्मिन् काले रामदर्शनकाङ्क्षिण्यः कौशल्याप्रमुखाः स्त्रियः यानप्रवेकैरुत्तमयानैः अथ ययुः मङ्गलगमनं चक्रुः ॥ ३६ ॥

गो० टी०-अथेति । यानप्रवेकैर्यानोत्तमैः 'प्रवेकानुत्तमोत्तमाः' इत्यमरः ॥ ३९ ॥

३७-३८ ] ति० टी०-चन्द्रार्कतरुणाभासां तरुणचन्द्रार्कसदृशीं क्वचिद्भागे स्फटिकादिनिर्मितां क्वचिद्भागे पद्मरागादिनिर्मितामिति यावत्। नियुक्ताम् वाहकैरिति शेषः ॥ ३७ ॥ ३८ ॥

रा० टी०-चन्द्रार्केति । चन्द्रार्कतरुणाभासां तरुणचन्द्रार्कदीप्तिसदृशदीप्तिमतीं नियुक्तां वाहकैर्गृहीतां शुभां शिबिकामास्थाय सपरिच्छदः सामग्रीसहितो भरतः ययौ ॥ ३७ ॥

गो० टी०-चन्द्रार्कतरुणाभासामिति । चन्द्रार्कतरुणाभासां तरुणचन्द्रार्ककान्तिं नियुक्तां वसिष्ठादिभिराज्ञप्तां सपरिच्छदः सपरिवारः ॥ ३६ ॥

रा० टी०-सेति । प्रयाता सा महासेना दक्षिणां दिशमावृत्य उत्थितो महामेघ इवासीदिति शेषः ॥ ३८ ॥

गो० टी०-सेत्यादिश्लोकद्वयमेकं वाक्यम् । गङ्गायाः दक्षिणवाहिन्याः परवेलायां पश्चिमभागे स्थितेति शेषः, महासेना वनानि व्यतिक्रम्य गिरिषु नदीषु च विश्रम्येति शेषः, उत्थितो मेघ इव दक्षिणां दिशमावृत्य प्रयातेति संबन्धः, यद्वा महासेना गिरिषु नदीषु च वनानि व्यतिक्रम्येति वा अन्वयः ॥३७॥३८॥

३९ ] ति० टी०-गङ्गायाः परवेलायां पश्चिमतीरस्थिता सेना गिरिषु नदीषु च वर्तमानवनान्यतिक्रम्य प्रयाता बभूवेति शेषः ॥ ३९ ॥

रा० टी०-वनानीति । गङ्गायाः परवेलायां परतीरे विद्यमानेषु गिरिषु गिरिसमीपे नदीषु नदीसमीपे विद्यमानानि मृगपक्षिभिर्जुष्टानि वनानि व्यतिक्रम्य संप्रहृष्टाः द्विपवाजिनां यूथाः यस्यां सा मृगपक्षिसंघान् वित्रासयन्ती भरतस्य सेना रराज शुशुभे । श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशीरोमणावयोध्याकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

४० ] ति० टी०-सेति ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

गो० टी०-सेति । तत्र तदेत्यर्थः ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्विनवतितमः सर्गः ॥ ९२ ॥

---

१] ति० टी०-यायिन्या गच्छन्त्या। यूथपा यूथनाथाः॥१॥

रा० टी०-यात्राकालिकं वृत्तान्तमाह-तयेत्यादिभिः । यायिन्या गमनशीलया तया ध्वजिन्या सेनया अर्दिताः पीडिताः अत एव मत्ताः दैन्यं प्राप्ताः सयूथाः यूथसहिताः वनवासिनो यूथपाः गजप्रभृतयः संप्रदुद्रुवुः ॥ १ ॥

गो० टी०-तयेत्यादि । यायिन्या गच्छन्त्या अर्दिताः पीडिताः यूथपाः गजादियूथनाथाः 'यूथनाथस्तु यूथपः' इत्यमरः॥ १॥

२ ] ति० टी०-पृषताः सबिन्दवः रुरवोऽबिन्दवः अर्दिता दृश्यन्त इत्यर्थः ॥ २ ॥

---

१ रथेति गो. पाठः । २ अपि नदीषु चेति गो. पाठः । ३ योधेति गो. पाठः । ४ प्रतीति गो. पाठः । ५ संघा इति गो. पाठः । ६ राजीविति गो. रा. पाठः ।

स संप्रतस्थे धर्मात्मा प्रीतो दशरथात्मजः । वृतो महत्या नादिन्या सेनया चतुरङ्गया ॥ ३ ॥
सागरौघनिभा सेना भरतस्य महात्मनः । महीं संछादयामास प्रावृषि द्यामिवाम्बुदः ॥ ४ ॥
तुरङ्गौघैरवतता वारणैश्च महाबलैः । अनालक्ष्या चिरं कालं तस्मिन्काले बभूव सा[1] ॥ ५ ॥
स गत्वा[2] दूरमध्वानं [3]संपरिश्रान्तवाहनः । उवाच वचनं[4] श्रीमान् वसिष्ठं मन्त्रिणां वरम् ॥ ६ ॥
यादृशं लक्ष्यते रूपं यथा चैव मया श्रुतम् । व्यक्तं प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् ॥ ७ ॥
अयं गिरिश्चित्रकूटस्तथा[5] मन्दाकिनी नदी । एतत्प्रकाशते दूरान्नीलमेघनिभं वनम् ॥ ८ ॥
गिरेः सानूनि रम्याणि चित्रकूटस्य संप्रति । वारणैरवमृद्यन्ते मामकैः पर्वतोपमैः ॥ ९ ॥
मुञ्चन्ति कुसुमान्येते नगाः पर्वतसानुषु । नीला इवातपापाये तोयं तोयधरा घनाः ॥ १० ॥
किंनराचरितं देशं पश्य शत्रुघ्न पर्वते[6] । हयैः[7] समन्तादाकीर्णं मकरैरिव सागरम् ॥ ११ ॥

---

रा० टी०—ऋक्षा इति । ऋक्षादयः वनराज्यादिषु समन्ततो दृश्यन्ते, तत्र ऋक्षाः भल्लूकाः पृषताः बिन्दुसहिताः रुरवस्तद्रहिताः ॥ २ ॥

गो० टी०—ऋक्षा इति । पृषतसंघाः बिन्दुमन्मृगसंघाः, ऋक्षाः भल्लूकाः, रुरवो बिन्दुरहिताः स्थूलकायाः विकटश्रृङ्गा मृगाः दृश्यन्ते अदृश्यन्त । वनराजीष्वित्यादिना अपूर्वमनुष्यादिदर्शनेन स्तब्धेक्षणाः स्थिता इत्युच्यन्ते ॥ २ ॥

३-४ ] ति० टी०—नादिन्या घोषवत्या ॥ ३ ॥ ४ ॥

रा० टी०—स इति । प्रीतः रामनिवासश्रुतिहेतुकप्रीतिविशिष्टः नादिन्या नादविशिष्टया सेनया वृतो भरतः संप्रतस्थे ॥ ३ ॥

गो० टी०—स इति । नादिन्या रथघोषहेषितबृंहितादिभिरिति शेषः ३ ॥

रा० टी०—सागरेति । सागरौघनिभा सागरौघसदृशी महात्मनो भरतस्य सेना प्रावृषि वर्षतीं द्यामम्बुदो मेघ इव महीं संछादयामास ॥ ४ ॥

गो० टी०—सागरौघेति । द्यामाकाशम् ॥ ४ ॥

५] ति० टी०—तस्मिन्काले मार्गगमनकाले । सा मही॥५॥

रा० टी०—तुरङ्गेति । तुरङ्गौघैरश्वसमूहैः महाबलैर्वारणैर्गजैश्च अवतता विस्तृता सा सेना तस्मिन्काले चिरंकालमनालक्ष्या लक्षयितुमशक्या बभूव ॥ ५ ॥

गो० टी०—तुरङ्गौघैरिति । अवतता निरन्तरा तस्मिन्काले गमनकाले चिरकालमित्यवेन कदाचिल्लक्ष्यत इति गम्यते ॥ ५ ॥

६ ] ति० टी०—मन्त्रिणां मन्त्रविदां वरं श्रेष्ठम् ॥ ६ ॥

रा० टी०—स इति । स भरतः दूरमध्वानं गत्वा मन्त्रिणां वरं श्रेष्ठं वशिष्ठमुवाच ॥ ६ ॥

गो० टी०—स इति । मन्त्रिणां मन्त्रविदां, यद्वा औचित्यान्मन्त्रशब्दः कार्यविचारे वर्तते ॥ ६ ॥

७ ] ति० टी०—भरद्वाजो यं देशं चित्रकूटं यादृशमब्रवीयथा चास्माभिः श्रुतं तथैवास्य देशस्य रूपं लक्ष्यते, तस्माद्व्यक्तं तं देशं प्राप्ताः स्म । छान्दसो विसर्गलोपः ॥ ७ ॥

रा० टी०—यादृशमिति । यं देशं चित्रकूटं यादृशं यादृशरूपविशिष्टं भरद्वाजोऽब्रवीत् मया च श्रुतं तादृशमेव रूपमत्र लक्ष्यते अतस्तं व्यक्तं चित्रकूटं वयं प्राप्ताः स्मः ॥ ७ ॥

गो० टी०—यादृशमिति । अस्य देशस्य यादृशं रूपं लक्ष्यते मन्दाकिनीचित्रकूटमध्यवर्तित्वरूपं मया च यथा येन प्रकारेण श्रुतं भरद्वाजात् तथा दृश्यत इति शेषः ॥ ७ ॥

८ ] ति० टी०—प्राप्तिमेव विवृणोति—अयमिति ॥ ८ ॥

रा० टी०—अयमिति । यतः नीलमेघनिभं नीलमेघसदृशमेतद्वनं दूरात्प्रकाशते अतः अयमेव चित्रकूटो गिरिः मन्दाकिनी तदभिधा नदी इयमेव, एतेनेदमेव रूपं भरद्वाजेन बोधितमिति सूचितम् ॥ ८ ॥

गो० टी०—तदेवाह—अयमित्यादिना । अयं पुरोवर्ती गिरिश्चित्रकूटो भवति तथेयं मन्दाकिनी भवति एतत् अनयोर्मध्यवर्ति वनं नीलमेघनिभं प्रकाशते ॥ ८ ॥

९ ] ति० टी०—अवमृद्यन्ते पीड्यन्ते ॥ ९ ॥

रा० टी०—गिरेरिति । चित्रकूटस्य गिरेः सानूनि मामकैर्वारणैर्गजैः अवमृद्यन्ते पीड्यन्ते ॥ ९ ॥

गो० टी०—अथ तद्देशप्राप्तिं दर्शयति—गिरेः सानूनीति । सानूनि एतानीति सिद्धम् अवमृद्यन्ते भज्यन्ते ॥ ९ ॥

१०-११ ] ति० टी०—अत एवैते नगा वृक्षा गजानामाघातेन चलितशाखाः पर्वतसानुषु कुसुमानि मुञ्चन्ति ॥ १० ॥ ११ ॥

रा० टी०—मुञ्चन्तीति । एते नीलाः नगाः वृक्षाः पर्वतसानुषु कुसुमानि मुञ्चन्ति, तत्र दृष्टान्तः आतपापाये तोयधराः घनाः तोयमिव ॥ १० ॥

गो० टी०—अथ रामनिवासत्वेन भोग्यताबुद्ध्या तद्वनं भ्रातरं प्रति वर्णयति—मुञ्चन्तीत्यादि । एते बकुला इत्यर्थः, आतपापाये घर्मान्ते वर्षाकाल इति यावत् तोयधरा इति नीलत्वे हेतुः ॥ १० ॥

---

१ भूरिति गो. पाठः । २ यात्वेति गो. पाठः । ३ स्विर्विति गो. पाठः । ४ भरत इति गो. पाठः । ५ इयमिति गो. पाठः । ६ पर्वतमिति गो. पाठः । ७ मृगैरिति गो. पाठः ।

एते मृगगणा भान्ति शीघ्रवेगाः प्रचोदिताः । वायुप्र[1]विद्धाः शरदि मेघ[2]जाला इवाम्बरे ॥ १२ ॥
कुर्वन्ति कुसुमापीडाञ्शिरःसु सुरभीनमी । मेघप्रकाशैः फलकैर्दाक्षिणात्या नरा यथा ॥ १३ ॥
निष्कूजमिव भूत्वेदं वनं घोरप्रदर्शनम् । अयोध्येव जनाकीर्णा संप्रति प्रतिभाति मे[3] ॥ १४ ॥
खुरैरुदीरितो रेणुर्दिवं प्रच्छाद्य तिष्ठति । तं वहत्यनिलः शीघ्रं कुर्वन्निव मम प्रियम् ॥ १५ ॥
स्यन्दनांस्तुरगोपेतान्सूतमुख्यैरधिष्ठितान् । एतान्संपततः शीघ्रं पश्य शत्रुघ्न कानने ॥ १६ ॥
एतान्वित्रासितान्पश्य बर्हिणः प्रियदर्शनान् । [4]एवमापततः शैलमधिवासं [5]पतत्रिणाम् ॥ १७ ॥
अतिमात्रमयं देशो मनोज्ञः प्रतिभाति [3]मे । तापसानां निवासोऽयं व्यक्तं स्वर्गपथोऽ[6]नघ ॥ १८ ॥

रा० टी०—किन्नरेति । हे शत्रुघ्न ! मकरैराकीर्णं सागरमिव हयैराकीर्णं किन्नराचरितं देशं पश्य ॥ ११ ॥

गो० टी०—किंनराचरितमिति । किन्नराचरितं देशं किंनराचरितदेशरूपं पर्वतम् ॥ ११ ॥

१२ ] ति० टी०—प्रचोदिताः सैनिकैः । वायुप्रविद्धाः वायुप्रेरिताः मेघजाला मेघसमूहाः । 'मेघराज्यः' इति पाठान्तरम् ॥ १२ ॥

रा० टी०—एते इति । प्रचोदिताः सेनाजनैः प्रेरिताः प्रचालिता इत्यर्थः, अत एव शीघ्रवेगाः एते मृगगणाः भान्ति, तत्र दृष्टान्तः शरदि वायुप्रविद्धाः वायुना प्रचालिताः अम्बरे आकाशे मेघजाला इव ॥ १२ ॥

गो० टी०—एत इति । प्रचोदिताः सैनिकैरिति शेषः प्रविद्धा प्रेरितेति यावत् ॥ १२ ॥

१३ ] ति० टी०—अमी भटा मेघप्रकाशैः फलकैः शस्त्रनिवारणचर्मभिरुपलक्षिता दाक्षिणात्या नरा इव शिरःसु कुसुमापीडान्कुसुमनिर्मितभूषणविशेषान्कुर्वन्ति धारयन्तीति तीर्थः। अमी वृक्षा निबिडप्रत्यग्रपलाशभूयिष्ठतया मेघवदवभासमानैः फलकैर्महास्कन्धशाखाभिरुपलक्षिता दाक्षिणात्या दक्षिणदिग्भवाः शशिप्रभान्सुरभीन्कुसुमापीडान्स्तबकशेखरान्कुर्वन्ति । 'दाक्षिणात्याः शशिप्रभान्' इति पाठ इति कतकः ॥ १३ ॥

रा० टी०—कुर्वन्तीति । अमी सैनिकाः तरवो वा शिरःसु सुरभीन् सुगन्धवतः कुसुमापीडान् कृष्णपुष्पनिर्मितभूषणविशेषान् कुसुमगुच्छान्वा कुर्वन्ति धारयन्तीत्यर्थः, तत्र दृष्टान्तः मेघप्रकाशैः मेघसंकाशैः फलकैः खड्गादिप्रहारनिवारकचर्मभिः उपलक्षिताः दाक्षिणात्याः नरा यथा ॥ १३ ॥

गो० टी०—कुर्वन्तीति । अमी भटाः मेघप्रकाशैः फलकैः केशबन्धविशेषैः वनसंचारार्थं कल्पितैरुपलक्षिताः सन्तः दाक्षिणात्या नरा यथा दाक्षिणात्या नरा इव शिरःसु कुसुमापीडान् कुर्वन्ति 'आपीडशेखरोत्तंसावतंसाः शिरसि स्रजः' इति हलायुधः। दाक्षिणात्या हि केशानुद्धृत्य बद्ध्वा कुसुमापीडैरलंकुर्वन्ति ॥१३॥

१४ ] ति० टी०—इदं वनं पूर्वं निष्कूजं जनशब्दरहितम्, अत एव घोरदर्शनं भूत्वा सांप्रतमस्मदागमने जनाकीर्णायोध्येव भाति । पाठान्तरे जनाकीर्णमिदं वनमयोध्येव भाति ॥ १४ ॥

रा० टी०—निष्कूजमिति । निष्कूजं शब्दरहितमत एव घोरं प्रदर्शनं यस्य तदिदं वनं संप्रति जनाकीर्णं भूत्वा अयोध्येव मे प्रतिभाति ॥ १४ ॥

गो० टी०—निष्कूजमिति । घोरप्रदर्शनं क्रूरदर्शनमिदं वनं पुरा निष्कूजमिव भूत्वा निर्जनं भूत्वेति यावत् संप्रति जनाकीर्णा अयोध्या सौम्यनगरीव मा मां प्रति भाति ॥१४॥

१५ ] ति० टी०—वहत्यपनयति । मम प्रियं कुर्वन्निव चित्रकूटदर्शनेन निरोधनिवर्तकत्वादिति भावः ॥ १५ ॥

रा० टी०—खुरैरिति । खुरैः अश्वादिशफैः उदीरितो यो रेणुः दिवं प्रच्छाद्य तिष्ठति तं रेणुं मम प्रियं कुर्वन्निव अनिलः वायुः शीघ्रं वहति अन्यत्र प्रापयति ॥ १५ ॥

गो० टी०—खुरैरिति । हयादिखुरैरुदीरित उत्थापितो रेणुर्दिवं प्रच्छाद्य तिष्ठति वहति द्रुतमपनयति कुर्वन्निव मम प्रियं रामाश्रमदर्शनप्रदानादिति भावः। अनेनावगम्यते रामाश्रमवर्णनं तदधिष्ठितत्वेन प्रीतिहेतुत्वादिति ॥ १५ ॥

१६–१७ ] ति० टी०—संपततो गच्छतः ॥ १६ ॥ १७ ॥

रा० टी०—स्यन्दनानिति । तुरगोपेतान् अश्वैर्युक्तान् शीघ्रं संपततो गच्छतः एतान् स्यन्दनान् रथान् त्वं पश्य ॥ १६ ॥

गो० टी०—वक्ष्यमाणत्रासहेतुत्वेनाह—स्यन्दनानिति । सूतमुख्यैः सारथिमुख्यैः संपततः रामदर्शनकुतूहलेन सम्यग्गच्छतः ॥ १६ ॥

रा० टी०—एतानिति । प्रियदर्शनान् एतान् बर्हिणो मयूरान्वित्रासितान्सेनादर्शनहेतुकवित्रासविशिष्टान्पश्य, एवं शीघ्रमापततः पतत्रिणः पक्षिणः अधिवासं निवासाश्रयं शैलं पश्य ॥१७॥

गो० टी०—एतानिति । वित्रासितान् रथैरिति शेषः, बर्हिणः मयूरान् एतं शैलं पतत्रिणः प्रशस्तपक्षानिति बर्हिविशेषणम् ॥ १७ ॥

१८ ] ति० टी०—व्यक्तं स्पष्टम् । स्वर्गपथः स्वर्गप्रदेशः ॥१८॥

रा० टी०—अतीति । अयं देशः अतिमात्रमतीव मनोज्ञो रमणीयः मे प्रतिभाति, तत्र हेतुः यतोऽयं तापसानां निवासः अत एव स्वर्गपथः स्वर्गतुल्यः व्यक्तं प्रस्फुटमेतत् ॥ १८ ॥

गो० टी०—अतिमात्रमिति । अतिमात्रं मनोज्ञ इति

१ प्रविद्धेति गो. पाठः । २ राजिरिति गो. पाठः । ३ मेति गो. पाठः । ४ एतमाविशतः शीघ्रमिति गो. पाठः । ५ पतत्रिण इति गो. रा. पाठः । ६ यथेति गो. पाठः ।

मृगा मृगीभिः सहिता बहवः पृषता वने । मनोज्ञरूपा लक्ष्यन्ते कुसुमैरिव चित्रिताः ॥ १९ ॥
साधु सैन्याः प्रतिष्ठन्तां विचिन्वन्तु च काननम् । यथा तौ पुरुषव्याघ्रौ दृश्येते रामलक्ष्मणौ ॥ २० ॥
भरतस्य वचः श्रुत्वा पुरुषाः शस्त्रपाणयः । विविशुस्तद्वनं शूरा धूमाग्रं ददृशुस्ततः ॥ २१ ॥
ते समालोक्य धूमाग्रमूचुर्भरतमागताः । नामनुष्ये भवत्यग्निर्व्यक्तमत्रैव राघवौ ॥ २२ ॥
अथ नात्र नरव्याघ्रौ राजपुत्रौ परंतपौ । अन्ये रामोपमाः सन्ति व्यक्तमत्र तपस्विनः ॥ २३ ॥
तच्छ्रुत्वा भरतस्तेषां वचनं साधुसंमतम् । सैन्यानुवाच सर्वांस्तानमित्रबलमर्दनः ॥ २४ ॥
यत्ता भवन्तस्तिष्ठन्तु नेतो गन्तव्यमग्रतः । अहमेव गमिष्यामि सुमन्त्रो धृतिरेव च ॥ २५ ॥
एवमुक्तास्ततः सैन्यास्तत्र तस्थुः समन्ततः । भरतो यत्र धूमाग्रं तत्र दृष्टिं समादधत् ॥ २६ ॥

संबन्धः अत एव स्वर्गपथो यथा स्वर्गप्रदेश इव मा मां प्रति भाति ॥ १८ ॥

१९ ] ति० टी०—पृषतानां सबिन्दुत्वात्कुसुमैश्चित्रिता इवेत्युक्तिः ॥ १९ ॥

रा० टी०—मृगा इति । मृगीभिः सहिताः मनोज्ञरूपाः पृषताः सबिन्दवो मृगाः कुसुमैः चित्रिता इव लक्ष्यन्ते ॥ १९ ॥

गो० टी०—मृगा इति । पृषताः बिन्दुमृगाः ॥ १९ ॥

२० ] ति० टी०—साधु यथोचितं प्रतिष्ठन्तां गच्छन्तु । गमनफलं विचिन्वन्त्वित्यादि ॥ २० ॥

रा० टी०—साध्विति । सैन्याः साधु यथा स्यात्तथा प्रतिष्ठन्तां काननं वनं विचिन्वन्तु च । तत्प्रयोजनमाह—यथा पुरुषव्याघ्रौ रामलक्ष्मणौ दृश्येते ॥ २० ॥

गो० टी०—साध्विति । साधुसैन्या उचिताः सैनिकाः 'साधुः त्रिषूचिते सौम्ये सज्जने वार्धुषौ पुमान्' इति वैजयन्ती । प्रतिष्ठन्तां गच्छन्त्वित्यर्थः, दृश्येते दृश्येयातां लकारव्यत्यय आर्षः ॥ २० ॥ २१ ॥

२१ ] ति० टी०—धूमाग्रं धूमशिखां तेन वह्निमनुमाय तत्संपादकत्वेन राघवावनुमाय भरतमूचुः ॥ २१ ॥

रा० टी०—भरतस्येति । भरतस्य वचः श्रुत्वा शस्त्रपाणयः पुरुषाः तद्वनं विविशुः, ततोऽनन्तरं दूराद्धूमाग्रं ददृशुः ॥ २१ ॥

२२ ] ति० टी०—नामनुष्ये वनदाहाभावविशिष्टतया प्रत्यक्षं दृश्यमाने इति शेषः । तस्मान्मनुष्यकारणकवह्न्यनुपपत्त्या अत्रैव राघवाविति जानीमः ॥ २२ ॥

रा० टी०—ते इति । ते वनप्रवेशनकर्तारः पुरुषाः धूमाग्रं समालोक्य भरतमागताः प्राप्ताः सन्तः ऊचुः । तद्वचनाकारमाह—अमनुष्ये मनुष्यरहिते देशे अग्निर्न भवति एतादृशवने इति शेषः, तेन धूमलिङ्गकानुमानेन वह्निरस्माभिर्निश्चित इति ध्वनितमतः राघवौ अत्रैव इति व्यक्तमस्माभिर्निश्चितम् । एतेन तस्मिन् वने दावाभावः सूचितः तेन जलाधिक्यं व्यञ्जितम् ॥ २२ ॥

गो० टी०—ते इति । धूमाग्रं धूमशिखाम् अमनुष्ये मनुष्यरहिते देशे अग्निः धूमरेखाविशेषनिश्चितः न भवति अत्र अत्रैव वह्निमत्प्रदेशे राघवौ स्तः व्यक्तं ध्रुवम् ॥ २२ ॥

२३ ] ति० टी०—राजभीत्या निश्चयेन तथा वक्तुमशक्नुवन्तः पक्षान्तरमाहुः—अथेति । अत्र न तौ तथाप्यन्ये तपस्विनोऽत्र भविष्यन्ति तन्मुखात्तद्वासस्थानलाभो भविष्यतीति भावः ॥ २३ ॥

रा० टी०—इदमनुमानं जनसामान्यबोधकमिति द्योतयन्नाह—अथेति । अथ यदि नरव्याघ्रौ न तर्हि रामोपमा अन्ये तपस्विनः सन्ति, रामोपमा इत्यनेन तद्वननिवासस्य असमर्थजनाशक्यत्वं व्यञ्जितमेतेनात्र रामस्याभावेऽपि रामनिवासस्थलनिश्चयोऽवश्यं भविष्यतीति सूचितम् ॥ २३ ॥

गो० टी०—अथेति । अथ यदि न स्त इत्यर्थः तपस्विनः सन्ति ते प्रष्टव्या इति भावः ॥ २३ ॥

२४ ] ति० टी०—साधुसंमतं न्यायवित्संमतं तेषां वचनं श्रुत्वा तत्र प्रदेशे रामावस्थितिं निश्चित्य सर्वान्सैन्यानुवाच ॥ २४ ॥

रा० टी०—तदिति । अमित्रबलमर्दनः शत्रुसेनानिषूदनो भरत उवाच ॥ २४ ॥

गो०टी०—तदिति । साधुसंमतं साधूनां न्यायविदां संमतम् अमित्रबलमर्दनः अमोघशासन इति यावत् ॥ २४ ॥

२५–२६ ] ति० टी०—वचनमाह-यत्ता इति । यत्ताः सावधानाः, कोलाहलमकुर्वन्तः । धृतिरित्यशोकमन्त्रिणो नामान्तरम् ॥ २५ ॥ २६ ॥

रा० टी०—तद्वचनाकारमाह—यत्ता इति । यत्ताः सावधानाः भवन्तस्तिष्ठन्तु इतः अस्मात् स्थानात् अग्रतोऽग्रे न गन्तव्यमहमेव गमिष्यामि ॥ २५ ॥

रा० टी०—एवमिति । सैन्याः समन्ततः चतुर्दिक्षु तस्थुः भरतस्तु यत्र धूमाग्रं तत्र दृष्टिं समादधत् समस्थापयत् ॥ २६ ॥

गो० टी०—यत्ता इति । यत्ताः निःशब्दा इतः अस्माद्देशात् परम् अग्रतः भवद्भिर्न गन्तव्यम् अहमेव राजसु मन्त्रिषु सुमन्त्र एव ऋत्विक्षु गुरुर्वसिष्ठ एव 'धृतिः' इति पाठे सुमन्त्र एवोच्यते ॥ २५ ॥ २६ ॥

१ कानने इति गो. पाठः । २ एतौविति रा. पाठः । ३ धूमं चेति गो. पाठः । ४ मन्य इति गो. पाठः । ५ चेदमब्रवीदिति रा. पाठः । ६ गुरुरिति गो. पाठः । ७ सर्वे इति गो. पाठः । ८ समादधादिति गो. पाठः ।

व्यवस्थिता या भरतेन सा चमूर्निरीक्षमाणापि च भूमिमग्रतः।
बभूव हृष्टा न चिरेण जानती प्रियस्य रामस्य समागमं तदा ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

## चतुर्नवतितमः सर्गः।

स्वचित्तं प्रसादयन्वैदेह्याः प्रियं चाकाङ्क्षन्रामस्तत्तद्विशेषं निर्दिशंश्चित्रकूटं वर्णयति ।

दीर्घकालोषितस्तस्मिन्गिरौ गिरिवरप्रियः । वैदेह्याः प्रियमाकाङ्क्षन्स्वं च चित्तं विलोभयन् ॥ १ ॥
अथ दाशरथिश्चित्रं चित्रकूटमदर्शयत् । भार्याममरसंकाशः शचीमिव पुरंदरः ॥ २ ॥
न राज्यभ्रंशनं भद्रे न सुहृद्भिर्विनाभवः । मनो मे बाधते दृष्ट्वा रमणीयमिमं गिरिम् ॥ ३ ॥
पश्येममचलं भद्रे नानाद्विजगणायुतम् । शिखरैः खमिवोद्विद्धैर्धातुमद्भिर्विभूषितम् ॥ ४ ॥

२७ ] ति० टी०—अपि च या चमूर्भरतेन व्यवस्थिता भरतेन व्यवस्थापिता सा वासाय अग्रतो भूमिं निरीक्षमाणा न चिरेण शीघ्रम् ॥ २७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

रा० टी०—व्यवस्थितेति । या चमूः भरतेन व्यवस्थिता व्यवस्थापिता सा चमूः अग्रतः भूमिं धूमधूमवद्देशं निरीक्षमाणा अत एव रामस्य समागमं न चिरेण झटिति जानती सती हृष्टा बभूव ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

गो० टी०—व्यवस्थितेति । अग्रतो धूमं निरीक्षमाणापि च अनेन रामदर्शनत्वरातिशयः सूच्यते व्यवस्थिता भरतेन व्यवस्थापितेत्यर्थः, भरतेन हेतुना व्यवस्थिता वा सा चमूः प्रियस्य रामस्य न चिरेण अचिरेण समागमं जानती सती तदा व्यवस्थाकालेऽपि हृष्टा बभूव 'जानकीप्रियस्य' इति च पाठः॥२७॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रिणवतितमः सर्गः ॥ ९३ ॥

१–२ ] ति० टी०—अथ कविस्तत्रस्थितरामवृत्तान्तं वर्णयति–दीर्घेत्यादि । प्रियं संतोषमाकाङ्क्षमिच्छन्स्वानुरोधेन घोरं वनमागतायाश्चित्तखेदस्योपशमनीयतया चित्रकूटरामणीयकदर्शनेन तच्चित्तमुपलालयन्स्वं च चित्तं वनवासादिखिन्नं तथा कुर्वंश्चित्रकूटमदर्शयदित्यन्वयः ॥ १ ॥ २ ॥

रा० टी०—रामवृत्तान्तमाह–दीर्घेत्यादिभिः । गिरिवरप्रियः अत एव तस्मिन् चित्रकूटे गिरौ दीर्घकालोषितः त्रीन् मासान् उषितः अमरसंकाशः दाशरथिः रामः वैदेह्याः प्रियं प्रीतिमाकाङ्क्षन् स्वं चित्तं च विलोभयन् वनवासे नियोजयन् सन् चित्रमनेकविधाश्चर्यविशिष्टं चित्रकूटं शचीं पुरन्दर इव भार्यामदर्शयत् । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—एवमेतावत्पर्यन्तं भरतकथां प्रस्तुत्य रामस्य चित्रकूटप्रवेशानन्तरदिनेषु विहारतारतम्याभावात् भरतप्राप्तिदिनसंभूतविहारविशेषान् वर्णयति–दीर्घकाले इत्यादिना सर्गद्वयेन । आदौ श्लोकद्वयमेकान्वयम् । अथ प्रातःकर्तव्यकर्मानुष्ठानानन्तरं तस्मिन् गिरौ चिरपरिचयेऽपि वैलक्षण्यातिशयादपूर्ववद्भासमाने दीर्घकालोषितः मासमात्रमुषितोऽपि गिरिवनप्रियः 'नवं नवं प्रीतिरहो करोति' इत्युक्तरीत्या गिरिवनयोः नवनवत्वापादकप्रीतिकः वैदेह्याः प्रियेण सहैव वनदर्शनकुतूहलायाः प्रियं प्रीतिमाकाङ्क्षन् तद्द्वारा स्वचित्तं च विलोभयन् प्रीणयन् अमरसंकाशः कुत्रापि निर्भय इत्यर्थः, दाशरथिः रामः चित्रमन्वर्थं चित्रकूटं भार्यां सर्वात्मना भरणीयां सीतां शचीं पुरन्दर इव अदर्शयत् "गतिबुद्धि-" इत्यादिना द्विकर्मकत्वम्॥१॥२॥

३ ] ति० टी०—विनाभवो विनावस्थानं मे मनो न बाधत इत्यन्वयः । दृष्ट्वा स्थितस्येति शेषः ॥ ३ ॥

रा० टी०—दर्शनप्रकारं बोधयन्नाह—नेति । हे भद्रे ! राज्यभ्रंशनं राज्यत्यागः गिरिं दृष्ट्वा विद्यमानस्य मे मनो न बाधते सुहृद्भिर्विनाभवः स्थितिश्च न बाधते ॥ ३ ॥

गो० टी०—नेति । राज्यात् भक्तजनपूर्णात् विनाभवो विनावस्थानम् अप् छान्दसः, दृष्ट्वा स्थितस्येति शेषः, मनो न बाधते न दुःखाकरोतीत्यर्थः, अयोध्यावासिजनविरहजः खेदः सर्वो निवृत्त इति भावः ॥ ३ ॥

४ ] ति० टी०—खमिवोद्विद्धः शीलितादिवत्कर्तरि निष्ठा खस्य वेधकैरित्यर्थः, अभ्रंलिहैरिति यावत् ॥ ४ ॥

रा० टी०—पश्येति । नानाद्विजगणैः आयुतं व्याप्तं खमाकाशमुद्विद्धैः छिद्रकारकैरिव धातुमद्भिः अनेकधातुविशिष्टैः शिखरैर्विभूषितमिमममचलं पर्वतं पश्य ॥ ४ ॥

गो० टी०—स्वचित्तविलोभनमुक्त्वा मैथिलीप्रियकरणं दर्शयति–पश्येति । खमाकाशम् उद्विद्धैरिव स्थितैः विद्धोत्थितैरिव स्थितैः अभ्रंलिहैरिति यावत्, कर्तरि निष्ठा ॥ ४ ॥

१ धूमस्थित गो. पाठः । २ ववेति गो. पाठः ।

केचिद्रजतसंकाशाः केचित्क्षतजसंनिभाः । पीतमाञ्जिष्ठवर्णाश्च केचिन्मणिवरप्रभाः ॥ ५ ॥
पुष्पार्ककेतकाभाश्च केचिज्ज्योतीरसप्रभाः । विराजन्तेऽचलेन्द्रस्य देशा धातुविभूषिताः ॥ ६ ॥
नानामृगगणैर्द्वीपितरक्ष्वृक्षगणैर्वृतः । अदुष्टैर्भात्ययं शैलो बहुपक्षिसमाकुलः ॥ ७ ॥
आम्रजम्ब्वसनैर्लोध्रैः प्रियालैः पनसैर्धवैः । अङ्कोलैर्भव्यतिनिशैर्बिल्वतिन्दुकवेणुभिः ॥ ८ ॥
काश्मर्यारिष्टवरणैर्मधूकैस्तिलकैरपि । बदर्यामलकैर्नीपैर्वेत्रधन्वनबीजकैः ॥ ९ ॥
पुष्पवद्भिः फलोपेतैश्छायावद्भिर्मनोरमैः । एवमादिभिराकीर्णः श्रियं पुष्यत्ययं गिरिः ॥ १० ॥
शैलप्रस्थेषु रम्येषु पश्येमान्कामहर्षणान् । किंनरान्द्वन्द्वशो भद्रे रममाणान्मनस्विनः ॥ ११ ॥
शाखावसक्तान्खड्गांश्च प्रवराण्यम्बराणि च । पश्य विद्याधरस्त्रीणां क्रीडोद्देशान्मनोरमान् ॥ १२ ॥
जलप्रपातैरुद्भेदैर्निष्पन्दैश्च क्वचित्क्वचित् । स्रवद्भिर्भात्ययं शैलः स्रवन्मद इव द्विपः ॥ १३ ॥

---

५] ति०टी०–क्षतजं रुधिरम् । पीतवर्णा माञ्जिष्ठवर्णाश्च ५

६] ति० टी०–पुष्पः पुष्परागः, अर्कः स्फटिकः, केतकानि केतकपुष्पाणि, ज्योतिर्नक्षत्रम्, रसः पारदरसः ॥ ६ ॥

रा० टी०–केचिदिति । क्षतजसंनिभाः रुधिरारुण्यसदृशारुण्यविशिष्टाः केचित्पीतमाञ्जिष्ठवर्णाः पीतमाञ्जिष्ठसदृशवर्णवन्तः मणिवरप्रभाः इन्द्रनीलमणिप्रभासदृशप्रभावन्तः केचित् पुष्पार्ककेतकाभाः पुष्पः पुष्परागः अर्कः स्फटिकः 'अर्कः स्फटिकसूर्ययोः' इत्यमरः । केतकानि केतकपुष्पाणि तत्सदृशाः केचिज्ज्योतीरसप्रभाः ज्योतींषि तारागणाः रसः पारदः तादृशप्रभावन्तः धातुविभूषिताः अचलेन्द्रस्य देशाः प्रदेशाः विराजन्ते । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०–केचिदिति । धातुविभूषिताः नानाधात्वलंकृता अत एवाचलेन्द्रस्य चित्रकूटस्य केचिद्देशाः रजतसंकाशाः अत्यन्तशुभ्राः केचित् क्षतजसंकाशाः रुधिरसदृशवर्णाः मणिवरप्रभाः इन्द्रनीलप्रभाः पुष्पार्ककेतकाभाः पुष्पः पुष्परागः अर्कः स्फटिकः 'अर्कः स्फटिकसूर्ययोः' इत्यमरः । केतकाभाः ईषत्पाण्डुराः ज्योतीरसप्रभाः ज्योतींषि ताराः ज्वाला वा 'ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वराग्निषु' इति वैजयन्ती । रसः पारदः श्वेतवर्णावान्तरभेदा उच्यन्ते ॥ ५ ॥ ६ ॥

७ ] ति० टी०–द्वीपी महाव्याघ्रः, तरक्षुः क्षुद्रव्याघ्रः, अदुष्टैस्तपस्विवैभवाद्धिंसादिदोषरहितैः ॥ ७ ॥

रा० टी०–नानेति । अदुष्टैर्दुष्टतात्यागिभिः, तत्र द्वीपिनो महाव्याघ्राः तरक्षवः क्षुद्रव्याघ्रास्तेषां गणैः समूहैश्च वृतः अयं शैलो भाति ॥ ७ ॥

गो० टी०–नानामृगगणेति । द्वीपी महाव्याघ्रः तरक्षुः क्षुद्रव्याघ्रः अदुष्टैर्मुनिजनसंनिधानेन शान्ततया हिंसादिदोषरहितैः ॥ ७ ॥

८ ] ति० टी०–असनः पीतसारः, प्रियालो राजादनम्, धवाङ्कोलभव्यतिनिशा वृक्षविशेषाः ॥ ८ ॥

९ ] ति० टी०–अरिष्टो निम्बः, धन्वन इन्द्रयवः, बीजप्रचुरफलविशेषा दाडिमादयः ॥ ९ ॥

१० ] ति० टी०–पुष्यति वर्धयति ॥ १० ॥

रा०टी०–आम्रेति । पुष्पवद्भिः पुष्पविशिष्टैः फलोपेतैः फलयुक्तैः छायावद्भिः अतिशयछायाविशिष्टैः अत एव मनोरमैः आम्रादिभिः एवमादिभिरन्यैरपि आकीर्णः व्याप्तः अयं गिरिः श्रियं पुष्यति वर्धयतीत्यर्थः । तत्राम्रजम्ब्वौ प्रसिद्धौ असनः पतिशाकः, प्रियालः राजादनः, अङ्कोलादयो वृक्षविशेषाः । श्लोकत्रयमेकान्वयि ॥ ८–१० ॥

गो० टी०–आम्रेत्यादि । असनैः पीतसालैः, लोध्रैः तिरीटैः, प्रियालैः राजादनैः, अङ्कोलैः भव्यैः न्युब्जैः, तिनिशैः स्यन्दनैः बिल्वैः तिन्दुकैः कालस्कन्धैः, वेणुभिः वंशैः, काश्मरीभिः मधुपर्णिकाख्यैर्वृक्षैः, अरिष्टैः निम्बैः, वरुणैः तिक्तशाकैः, मधूकैः गुडपुष्पैः, तिलकैः क्षुरकैः, बदरीभिः आमलकैः, नीपैः कदम्बैः, वेत्रैः, धन्वनैः इन्द्रवृक्षैः, बीजकैः बीजप्रचुरफलैः दाडिमैः, पुष्पवद्भिरित्यादि सर्ववृक्षविशेषणं पुष्यति वर्धयति ॥ ८–१० ॥

११] ति० टी०–कामहर्षणान् देशानिति शेषः, तत्र रममाणान्किंनरान्पश्य ॥ ११ ॥

रा० टी०–शैलेति । रम्येषु शैलप्रस्थेषु शैलप्रस्तरेषु कामहर्षणान् यथेच्छं हर्षविशिष्टान् द्वन्द्वशो रममाणान् किंनरान्पश्य ॥ ११ ॥

गो० टी०–शैलप्रस्थेष्विति । रोमहर्षणान् दर्शनमात्रतः पुलककरान् द्वन्द्वशः स्त्रीपुरुषौ द्वौ द्वावित्यर्थः, मनस्विनः अन्योन्यबद्धमनस्कान् ॥ ११ ॥

१२ ] ति० टी०–खड्गान् किंनराणामिति शेषः, तथा विद्याधरीणां क्रीडोद्देशान्पश्य तासां शाखावसक्तान्यम्बराणि च पश्य ॥ १२ ॥

रा० टी०–शाखेति । शाखावसक्तान् शाखाश्रितान् खड्गान् विद्याधराणामसीन् विद्याधरस्त्रीणां प्रवराण्यम्बराणि च मनोरमान् क्रीडोद्देशान् विहारदेशांश्च पश्य ॥ १२ ॥

गो० टी०–शाखावसक्तानिति । खड्गादीनि विद्याधराणामेव, विद्याधराः देवयोनिविशेषाः ॥ १२ ॥

१३ ] ति० टी०–जलप्रपातैरुच्चप्रदेशात्पतद्भिर्जलप्रवाहै-

---

१ गणद्वीपीति गो. पाठः । २ युत इति गो. पाठः । ३ काश्मर्यरिष्टवरुणैरिति गो. वरुणैरिति रा. पाठः । ४ तथेति गो. पाठः । ५ रोमेति गो. पाठः ।

गुहासमीरणो गन्धान्नानापुष्पभवान्बहून् । घ्राणतर्पणमभ्येत्य कं नरं न प्रहर्षयेत् ॥ १४ ॥
यदीह शरदोऽनेकास्त्वया सार्धमनिन्दिते । लक्ष्मणेन च वत्स्यामि न मां शोकः प्रधर्षति ॥ १५ ॥
बहुपुष्पफले रम्ये नानाद्विजगणायुते । विचित्रशिखरे ह्यस्मिन्रतवानस्मि भामिनि ॥ १६ ॥
अनेन वनवासेन मम प्राप्तं फलद्वयम् । पितुश्चानृण्यता धर्मे भरतस्य प्रियं तथा ॥ १७ ॥
वैदेहि रमसे कच्चिच्चित्रकूटे मया सह । पश्यन्ती विविधान्भावान्मनोवाक्कायसंमतान् ॥ १८ ॥
इदमेवामृतं प्राहू राज्ञि राजर्षयः परे । वनवासं भवार्थाय प्रेत्य मे प्रपितामहाः ॥ १९ ॥

रुद्भेदैर्भुवस्रुद्भिव निर्गतैर्निष्पन्दैरल्पनिर्झरैः स्रवद्भिरित्युभयविशेषणं प्रवहद्भिरित्यर्थकम् ॥ १३ ॥

रा० टी०—जलेति । स्रवद्भिः वहद्भिः जलप्रपातैः उन्नतदेशादधोदेशे निपतितैर्महानिर्झरैरित्यर्थः, उद्भेदैः भुवस्त्रद्भिः निर्गच्छद्भिः निष्यन्दैरल्पनिर्झरैश्चोपलक्षितः अयं शैलः स्रवन्मदो द्विप इव भाति ॥ १३ ॥

गो० टी०—जलप्रपातैरिति । जलप्रपातैः निर्झरैः उद्भेदैर्भुवस्रुद्भिव निर्गतैः स्रवद्भिरिति सर्वविशेषणम् ॥ १३ ॥

१४ ] ति० टी०—गुहासमीरणो गुहाद्वारप्रवृत्तः समीरणः घ्राणतर्पणं कुर्वाण इति शेषः । अभ्येत्य प्राप्य ॥ १४ ॥

रा० टी०—गुहेति । नानापुष्पभवान् गन्धानभ्येत्य प्राप्य गुहासमीरणो गुहासंबन्धी वायुः घ्राणतर्पणं यथा स्यात्तथा कं नरं न प्रहर्षयेत्प्रहर्षयेदेवेत्यर्थः ॥ १४ ॥

गो० टी०—गुहासमीरण इति । घ्राणतर्पणमिति क्रियाविशेषणम् ॥ १४ ॥

१५ ] ति० टी०—शरदः संवत्सरान् ॥ १५ ॥

रा० टी०—यदीति । अनेकाः शरदो वर्षाणि वत्स्यामि तदापि मां शोको न प्रधर्षयति ॥ १५ ॥

गो० टी०—यदीति । हे अनिन्दिते सर्वाङ्गसुन्दरि ! इह वने अनेकाः शरदः संवत्सरान् त्वया लक्ष्मणेन कैङ्कर्यलक्ष्मीवता च सार्धं यदि वत्स्यामि तदा मां शोकः नगरत्यागजं दुःखं न प्रधक्ष्यति[1] न पीडयिष्यतीत्यर्थः, अत्र यदीत्युक्त्या भाविविवासः सूच्यते ॥ १५ ॥

१६ ] ति० टी०—रतवान्रतिमान् रतिः प्रीतिः ॥ १६ ॥

रा० टी०—तत्र हेतुमाह—बह्विति । विचित्राणि शिखराणि यस्य तस्मिन् अस्मिन् चित्रकूटे रतवानतिप्रीतिमानस्मि ॥ १६ ॥

गो० टी०—बहुपुष्पफल इति । घ्राणरसनचक्षुस्त्वक्श्रोत्रप्रीतिकरेऽस्मिन्वने रतवानस्मि प्रीतियुक्तोऽस्मि भामिनि ! [illegible]सन्निधानादिति भावः ॥ १६ ॥

१७ ] ति० टी०—धर्मे सत्यपालनलक्षणे ॥ १७ ॥

रा० टी०—अनेनेति । अनेन संप्रति प्राप्तेन वनवासेन फलद्वयं प्राप्तम् । तदेवाह—धर्मे निरतस्य पितुः आनृण्यता ऋणराहित्यं भरतस्य प्रियं भरतविषयकातिप्रीतिश्च ॥ १७ ॥

गो० टी०—न केवलं सुखस्य लाभः किंतु पित्रानृण्यबन्धुहर्षावपीत्याह—अनेनेति । फलद्वयमेवाह—पितुरिति । धर्मे विषये पितुः अनृणता आनृण्यं तद्वाक्यकरणमित्यर्थः, भरतस्य प्रियं च भरतस्य भाविस्वकैङ्कर्यमिति भावः ॥ १७ ॥

१८ ] ति० टी०—मनोवाक्कायसंमतांस्तत्प्रियान्वर्णने वाक्प्रियता । भावाः पदार्थाः । 'संयता' इति पाठे सम्यङ्नियमितकरणत्रयेत्यर्थः । 'संयताः' इति बहुवचनान्तपाठे भावानित्यस्य विशेषणम् । लिङ्गव्यत्यय आर्ष इति तीर्थः । तत्र न कंचिद्युक्तमर्थं पश्यामः ॥ १८ ॥

रा० टी०—वैदेहीति । मनोवाक्कायसंमतान्मनआद्यनुकूलान् विविधान् भावान् पदार्थान् पश्यन्ती त्वं रमसे कच्चित् ॥ १८ ॥

गो० टी०—एवं स्वप्रीतिमुक्त्वा सीताप्रीतिं पृच्छति—वैदेहीत्यादिना । वैदेहि! भोगोपोद्घातकेलीचुलकितभगवद्विभरूप्यानुभावां त्वां जानासि किं मया भोगस्रोतसि त्वां प्रधानीकुर्वन्तं मां जानासि । पाठभेदः मया भोगस्रोतसि त्वामप्रधानीकुर्वन्तं मां जानासि किं चित्रकूटे भोगस्थानसौभाग्यमपि वाङ्मनसाविषयं जानासि । तटस्थोद्दीपनविभावानप्याह—पश्यन्तीति । मनोवाक्कायाः संयताः यैस्तान् स्ववशीकृतजनमनोवाक्कायानित्यर्थः 'मनोवाक्कायसंयता' इति पाठे संनियमितकरणत्रयेत्यर्थः । विविधान् मलयानिलकोकिलालापभ्रमरझङ्कारपुष्पहासप्रभृतिभेदान् भावान् विभावान् पश्यन्ती रमसे कच्चित्, यद्वा भावान् किंनरमृगादीनां चेष्टाः 'भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु' इति वैजयन्ती ॥ १८ ॥

१९ ] ति० टी०—इदमेव नियमसहितं वनेऽवस्थानमेव अमृतं प्राहुर्मोक्षसाधनं प्राहुः । मे प्रपितामहा मन्वादयः । वनवासे प्रेत्यैतच्छरीरत्यागोत्तरं भवार्थाय भवः शिवो हिरण्यगर्भस्तल्लोकप्राप्तिरूपायार्थाय प्रयोजनायाहुरित्येके । [illegible] संसारक्लेशनिवृत्तये इति कतको व्याचष्टे ॥ १९ ॥

रा० टी०—वनवासस्योत्तमत्वे शिष्टाचारं प्रमाणयन्नाह—इदमिति । हे राज्ञि ! भवार्थाय लोककल्याणाय प्रवृत्ता इति शेषः, परे उत्कृष्टाः राजर्षयो मे प्रपितामहाः मनुप्रभृतयः प्रेत्य विचार्य इदं सनियमं वनवासममृतं प्राहुः । सर्वनाम्नामुद्देश्यविधेयान्यतरलिङ्गतेति नियमात् क्लीबता ॥ १९ ॥

गो० टी०—न केवलमयं वनवासो भोगाय आमुष्मिकसाधनञ्चेत्याह—इदमिति । वनवासं वनवासरूपम् इदम् अमृ-

१ प्रधक्ष्यतीति गो. पाठः ।

शिलाः शैलस्य शोभन्ते विशालाः शतशोऽभितः । बहुला बहुलैर्वर्णैर्नीलपीतसितारुणैः ॥ २० ॥
निशि भान्त्यचलेन्द्रस्य हुताशनशिखा इव । ओषध्यः स्वप्रभालक्ष्म्या भ्राजमानाः सहस्रशः॥२१ ॥
केचित्क्षयनिभा देशाः केचिदुद्यानसंनिभाः । केचिदेकशिला भान्ति पर्वतस्यास्य भामिनि ॥ २२ ॥
भित्त्वेव वसुधां भाति चित्रकूटः समुत्थितः । चित्रकूटस्य कूटोऽयं दृश्यते सर्वतः शुभः ॥ २३ ॥
कुष्ठस्थगरपुंनागभूर्जपत्रोत्तरच्छदान् । कामिनां स्वास्तरान्पश्य कुशेशयदलायुतान् ॥ २४ ॥
मृदिताश्चापविद्धाश्च दृश्यन्ते कमलस्रजः । कामिभिर्वनिते पश्य फलानि विविधानि च ॥ २५ ॥
वस्वौकसारां नलिनीमतीत्यैवोत्तरान्कुरून् । पर्वतश्चित्रकूटोऽसौ बहुमूलफलोदकः ॥ २६ ॥

तम् अमृतवद्भोग्यं वस्तु मे प्रपितामहाः मत्पितृवंश्याः परे पूर्वे राजर्षयः प्रेत्य प्रारब्धशरीरवियोगं प्राप्य भवार्थाय संसारविनाशायेत्यर्थः, तमसे दीपो मशकार्थो धूम इत्यादिवन्निर्देशः प्राहुः प्रोचुः । यद्वा इदमिति लिङ्गव्यत्यय आर्षः इदम् इमं वनवासं वानप्रस्थोचितनियमसहितं वनवासम् अमृतं प्राहुः मोक्षसाधनं प्राहुः 'अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे च धन्वन्तरिसुवर्णयोः' इति वैजयन्ती । प्रेत्य भवार्थाय देवादिदेहान्तरपरिग्रहरूपप्रयोजनाय च प्राहुः। रघुवंश्याः राजर्षयः वानप्रस्थोचितं वनवासं स्वर्गसाधनम् अपवर्गसाधनं च प्राहुरित्युक्तं भवति ॥ १९ ॥

२० ] ति० टी०—अभित इति पदम् ॥ २० ॥

रा० टी०—शिला इति । अभितः चतुर्दिक्षु विशालाः विस्तीर्णाः बहुलाः अनेकविधाः नीलादिभिर्बहुलैर्वर्णैरुपलक्षिताः शैलस्य शतशः बहवः शिलाः शोभन्ते ॥ २० ॥

गो० टी०—शिला इति। विशालाः विपुलाः बहुलैः उल्बणैः नीलादिभिर्वर्णैरुपलक्षिताः बहुलाः बहुविधाः शैलस्य चित्रकूटस्य शिलाः शतशः अभितः शोभन्ते ॥ २० ॥

२१ ] ति० टी०—अचलेन्द्रसंबन्ध्योषध्यः स्वकान्तिसंपदा शोभमाना अग्निशिखा इव निशि भान्ति ॥ २१ ॥

रा० टी०—निशीति । स्वप्रभालक्ष्म्या स्वकान्तिसंपत्त्या भ्राजमानाः सहस्रशः ओषध्यः निशि हुताशनशिखा इव भान्ति २१

गो० टी०—निशीति । अचलेन्द्रस्य ओषध्यः महौषधयः स्वप्रभालक्ष्म्याः प्रभालक्ष्म्यस्वस्वरूपाः अत एव भ्राजमानाः भासमानाः निशि सहस्रशो भान्ति ॥ २१ ॥

२२ ] ति० टी०—क्षयनिभा गृहसदृशाः अतिनिबिडबहुपलाशवृक्षकत्वात् उद्यानसंनिभाश्चम्पकमालत्यादिबाहुल्यात् एकशिला अनेकजनावस्थानक्षमैकशिलायुक्ताः ॥ २२ ॥

रा० टी०—केचिदिति । अस्य पर्वतस्य केचिद्देशाः प्रदेशाः क्षयनिभाः भवनसदृशाः केचिदुद्यानसंनिभाः कृत्रिमपुष्पवाटिकासदृशाः केचिदेकशिलाः केवलप्रस्तरवन्तश्च भान्ति ॥ २२ ॥

गो० टी०—केचिदिति । अस्य पर्वतस्य देशाः केचित्क्षयनिभाः गृहसदृशाः 'धिष्ण्यं धाम निकेतनं च सदनं वस्त्यं च वास्तु क्षयः' इति हलायुधः बहुगुहावत्त्वादिति भावः । उद्यानसंनिभाः बहुलताद्यक्षवत्त्वात् एकशिलाः शिलाभेदरहिताः॥२२॥२३॥

२३ ति० टी०—कूटोऽग्रभागः ॥ २३ ॥

रा० टी०—भित्त्वेति । वसुधां पृथ्वीं भित्त्वा इव समुत्थितः चित्रकूटो भाति अयं कूटः शृङ्गं च सर्वतः शुभो दृश्यते॥२३॥

२४ ति० टि०—कुष्ठमुत्पलमिति तीर्थः । स्थगरः पुत्रजीवकः, भूर्जो भूर्जपत्रवृक्षः, एतेषां पत्राण्युत्तरच्छदा येषां तान्कामिनां स्वास्तरानास्तरणानि कुशेशयं पद्मं तद्दलैरासमन्तायुतान्पश्य ॥ २४ ॥

रा० टी०—कुष्ठेति । कुष्ठस्थगरपुन्नागभूर्जपत्राणि उत्तरच्छदाः उत्तरास्तरणानि येषां तान्कुशेशयदलायुतान् कमलच्छदविशिष्टान् कामिनां स्वास्तरान् शोभनास्तरणानि पश्य । तत्र कुष्ठमुत्पलमिति तीर्थः स्थगरः पुत्रजीविकः । किंच कुशेशयदलायुतान् कुष्ठादीनामुत्तरच्छदान् श्रेष्ठपत्राणि कामिनां स्वास्तरान्पश्य ॥ २४ ॥

गो० टी०—कुष्ठेति। कुष्ठं पारिभाव्यम् 'व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम्' इत्यमरः। पुन्नागपुष्पाणि स्थगराणि पुत्रकसंज्ञिकवृक्षविशेषपुष्पाणि भूर्जपत्राणि भूर्जवृक्षत्वचः एतानि उत्तरच्छदाः उपर्यास्तरणानि येषां तान् कुशेशयदलायुतान् पद्मदलव्याप्तान् स्वास्तरान् शयनानीत्यर्थः ॥ २४ ॥

२५ ] ति० टि०—फलानि भुक्तानीति शेषः ॥ २५ ॥

रा० टी०—मृदिता इति । कमलस्रजः कामिभिर्मृदिताः प्रमर्दिताः अपविद्धाः त्यक्ताश्च दृश्यन्ते विविधानि फलानि पश्य ॥ २५ ॥

गो० टी०—मृदिता इति । मृदिताः कृतमर्दनाः घ्राणादिभोगेन म्लाना इत्यर्थः, अपविद्धास्त्यक्ताः । फलानीत्यत्रापि मृदितान्यपविद्धानीति योज्यम् ॥ २५ ॥

२६ ] ति० टि०—वस्वौकसारा कुबेरनगरी, नलिनी शक्रनगरी 'वस्वौकसारा श्रीदस्य शक्रस्य नलिनी पुरी' इति हरिः। अतीत्य शोभते इति शेषेणान्वयः ॥ २६ ॥

रा० टी०—वस्त्विति। वस्वोकसारां कुबेरनगरीं नलिनीमिन्द्रनगरीमुत्तरान् कुरूंश्च अतीत्य अतिक्रम्य असौ चित्रकूटः पर्वतः वर्तते नगरद्वयसुखादप्यधिकं सुखमत्रेति तात्पर्यम् ॥२६॥

१ मत्येतीवेति गो. पाठः ।

इमं तु कालं वनिते विजह्रिवांस्त्वया च सीते सह लक्ष्मणेन ।
रतिं प्रपत्स्ये कुलधर्मवर्धिनीं सतां पथि स्वैर्नियमैः परैः स्थितः ॥ २७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

## पञ्चनवतितमः सर्गः ।

मैथिलीप्रियकामेण रामेण तत्तद्विशेषप्रदर्शनपूर्वककृतं मन्दाकिनीवर्णनम् ।

अथ शैलाद्विनिष्क्रम्य मैथिलीं कोशलेश्वरः । अदर्शयच्छुभजलां रम्यां मन्दाकिनीं नदीम् ॥ १ ॥
अब्रवीच्च वरारोहां चन्द्रचारुनिभाननाम् । विदेहराजस्य सुतां रामो राजीवलोचनः ॥ २ ॥
विचित्रपुलिनां रम्यां हंससारससेविताम् । कुसुमैरुपसंपन्नां पश्य मन्दाकिनीं नदीम् ॥ ३ ॥
नानाविधैस्तीररुहैर्वृतां पुष्पफलद्रुमैः । राजन्तीं राजराजस्य नलिनीमिव सर्वतः ॥ ४ ॥
मृगयूथनिपीतानि कलुषाम्भांसि सांप्रतम् । तीर्थानि रमणीयानि रतिं संजनयन्ति मे ॥ ५ ॥
जटाजिनधराः काले वल्कलोत्तरवाससः । ऋषयस्त्ववगाहन्ते नदीं मन्दाकिनीं प्रिये ॥ ६ ॥

गो० टी०—वस्वौकसारामिति । वस्वौकसारा पूर्वदिगवस्थिता शक्रपुरी 'वस्वौकसारा शक्रस्य पूर्वस्यां दिशि संस्थिता' इति विष्णुपुराणवचनात्, यद्वा वस्वौकसारा कुबेरपुरी 'पुरी वस्वौकसारा स्यादिमानं पुष्पकोऽस्त्रियाम्' इति यादवः। नलिनीं मानससरसीं सौगन्धिकाख्यसरसीं वा अत्येतीव रमणीयतया अतिक्रामतीव ॥ २६ ॥

२७ ] ति० टी०—हे वनिते सीते ! परैः श्रेष्ठैः स्वैः स्वीयैर्नियमैः सह सतां पथि स्थितः सन् इमं कालं चतुर्दशवर्षमितं त्वया लक्ष्मणेन च सह विजह्रिवान्प्राप्तविहारो यदि भाविष्यामि तदा कुलधर्मवर्धिनीं रतिं सौख्यं प्रपत्स्ये प्राप्स्यामि ॥ २७ ॥

अष्टाविंशतिश्लोका अत्रेति कतकः ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्नवतितमः सर्गः ॥ ९४॥

रा० टी०—इममिति । हे वनिते ! परैः उत्कृष्टैः स्वैर्नियमैरुपलक्षितः अत एव सतां पथि स्थितोऽहमिमं चतुर्दशवर्षप्रमितं कालं यदि विजह्रिवान् विहारवान् तदा कुलधर्मवर्धिनीं रतिं प्रपत्स्ये ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

गो० टी०—इममिति । हे वनिते सीते ! परैः श्रेष्ठैः नियमैः सतां राजर्षीणां पथि स्थितः सन् इमं कालं चतुर्दशसमासंमितं कालं त्वया लक्ष्मणेन च सह इह चित्रकूटे विजह्रिवान् विहृतवान् विपूर्वाद्धरतेर्लिटः क्वसुरादेशः पश्चात्कुलधर्मवर्धनीं कुलधर्मः प्रजापालनं तद्वर्धनीं रतिं राज्यसुखं प्रपत्स्ये ॥ २७॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥

१] ति० टी०—अथ नदीप्रदर्शनेनोपलालयति—अथेति॥१॥

रा० टी०—शैलविनिष्क्रमणानन्तरकालिकरामोक्तिं वर्णयितुमाह—अथेति । अथ शैलशोभाप्रदर्शनानन्तरं कोशलेश्वरो रामः शैलाद्विनिष्क्रम्य निर्गत्य मन्दाकिनीमदर्शयत् ॥ १ ॥

गो० टी०—एवं वनगिरिप्रदर्शनेनोपलाल्य नदीप्रदर्शनेनापि लालयति—अथेत्यादिना॥ १ ॥

२ ] ति० टी०—वरारोहामुत्तमस्त्रीम् ॥ २ ॥

रा० टी०—अब्रवीदिति । वरोऽद्भुतः आरोहः प्रादुर्भावो यस्यास्तां विदेहराजस्य सुतां रामोऽब्रवीत् ॥ २ ॥

गो० टी०—अब्रवीदिति । वचने हेतुः तत्सौन्दर्यनित्याशयेनोक्तम्—वरारोहामित्यादि । वरारोहाम् आरुह्यत इति आरोहो जघनं गुरुजघनामित्यर्थः चारुचन्द्रनिभाननामित्यनेन रतिरमणनिदर्शितवनगिरिविलोकनकुतूहलविकसितवदनत्वमुक्तम् । राजीवलोचनः विस्मयोत्फुल्लनयन इत्यर्थः॥ २॥

३ ]ति० टी०—कुसुमैः पद्मादिभिः॥ ३ ॥

रा० टी०—तद्वचनाकारमाह—विचित्रेति । विचित्राणि पुलिनानि यस्यां तां हंसादिसेवितां कुसुमैः पुष्पैः उपसंपन्नां युक्तां तीररुहैः तीरजनितैः पुष्पफलद्रुमैः सर्वतो वृतां राजराजस्य कुबेरस्य नलिनीं सौगन्धिकसरसीमिव दशरथस्य सरयूमिव वा राजन्तीं मन्दाकिनीं नदीं पश्य । श्लोकद्वयमेकान्वयि॥ ३ ॥ ४॥

गो० टी०—विचित्रेति । पुलिनस्य विचित्रत्वं नवोलपालंकृतत्वात् । सारसाः हंसविशेषाः अत्र वस्तुना पृथुजघनकलत्रपुरसुन्दरकरपदवदनवती भवतीव भातीत्यलंकारध्वनिः ॥ ३ ॥

४ ] ति० टी०—पुष्पफलयुतैर्द्रुमैस्तीरभवै राजन्तीं शोभमानाम् । राजराजः कुबेरस्तस्य नलिनी सौगन्धिकाख्या ॥४॥

गो० टी०—नानाविधैरिति । राजराजस्य कुबेरस्य नलिनीं सौगन्धिकसरसीम् ॥ ४ ॥

५–६]ति०टी०—तीर्थान्यवतारमार्गाः। रतिं प्रीतिम्॥५॥६॥

१ वर्धनीमिति गो. पाठः।

आदित्यमुपतिष्ठन्ते नियमादूर्ध्वबाहवः । एते परे विशालाक्षि मुनयः संशितव्रताः ॥ ७ ॥
मारुतोद्धूतशिखरैः प्रनृत्त इव पर्वतः । पादपैः पुष्पपत्राणि सृजद्भिरभितो नदीम् ॥ ८ ॥
क्वचिन्मणिनिकाशोदां क्वचित्पुलिनशालिनीम् । क्वचित्सिद्धजनाकीर्णां पश्य मन्दाकिनीं नदीम् ॥ ९ ॥
निर्धूतान्वायुना पश्य विततान्पुष्पसंचयान् । पोप्लूयमानानपरान्पश्य त्वं तनुमध्यमे ॥ १० ॥
पश्यैतद्वल्गुवचसो रथाङ्गाह्वयना द्विजाः । अधिरोहन्ति कल्याणि निष्कूजन्तः शुभा गिरः ॥ ११ ॥
दर्शनं चित्रकूटस्य मन्दाकिन्याश्च शोभने । अधिकं पुरवासाच्च मन्ये तव च दर्शनात् ॥ १२ ॥
विधूतकल्मषैः सिद्धैस्तपोदमशमान्वितैः । नित्यविक्षोभितजलां विगाहस्व मया सह ॥ १३ ॥

रा० टी०—मृगेति । मृगयूथैर्निपीतानि अत एव कलुषाणि अम्भांसि येषु तानि अत एव रमणीयानि तीर्थानि अवताराध्वानः मे रतिं संजनयन्ति ॥ ६ ॥

गो० टी०—मृगयूथेति । मृगयूथनिपीतानि अत एव कलुषाणि रमणीयानि कुङ्कुमरसाभानि अम्भांसि येषु तानि तीर्थानि अवताराः रतिम् अवगाहनविषयां प्रीतिम् ॥ ६ ॥

रा० टी०—जटेति । जटाजिनधराः जटाश्च अजिनानि मृगत्वचश्च तेषां धराः धारकाः वल्कलान्येवोत्तरवासांसि येषां ते ऋषयः काले मन्दाकिनीमवगाहन्ते ॥ ६ ॥

गो० टी०—जटेति । काले स्वनियमोचितकाले अवगाहन्ते मज्जन्ति । प्रिये इत्यन्यत्र दृष्टिर्निवार्यते ॥ ६ ॥

७ ] ति० टी०—उपतिष्ठते मन्त्रैरुपस्थानं कुर्वते । एते परे मुनयः प्रकाशन्ते जपपरा इति शेषः ॥ ७ ॥

रा० टी०—आदित्यमिति । हे विशालाक्षि ! नियमात् शास्त्रोक्तनियोगाद्धेतोः ऊर्ध्वबाहवः परे पूर्वोक्तात् भिन्ना संशितव्रताः मुनयः आदित्यमुपतिष्ठन्ते ॥ ७ ॥

गो० टी०—आदित्यमिति । उपतिष्ठन्ते "उपान्मन्त्रकरणे" इत्यात्मनेपदम् । नियमाद्धेतोः परे पूर्वोक्तमुनिभ्योऽन्ये संशितव्रताः तीक्ष्णनियमाः ॥ ७ ॥

८ ] ति० टी०—प्रनृत्त इव नृत्तं कर्तुमुपक्रान्त इव अत एव पुष्पाञ्जलिकरणं पादपैः ॥ ८ ॥

रा० टी०—मारुतेति । मारुतेन वायुना उद्धूतानि शिखराणि शिखाः येषां तैः अत एव नदीमभितः सर्वतः पुष्पपत्राणि सृजद्भिः विसृजद्भिः पादपैर्वृक्षैः उपलक्षितः पर्वतः प्रनृत्तः नृत्यप्रारम्भं वा आस्तेति(?)शेषः ॥ ८ ॥

गो० टी०—मारुतोद्धूतशिखरैरिति । मारुतोद्धूतशिखरैः वायुकम्पितशाखैः पुष्पाणि सृजद्भिः मुञ्चद्भिः पादपैः प्रनृत्त इव नृत्यं कर्तुमुद्युक्त इव आदिकर्मणि क्तः लोके हि नृत्तोद्युक्तः पुष्पाणि परिविकीर्य हस्तौ चालयति तद्वदित्युत्प्रेक्षा ॥ ८ ॥

९ ] ति० टी०—मणिनिकाशं मुक्तानिकाशमुदकं यस्यास्ताम् ॥ ९ ॥

रा० टी०—क्वचिदिति । क्वचित् कस्मिंश्चित्प्रदेशे मणिनिकाशोदां मुक्तासदृशजलां क्वचित् पुलिनशालिनीं पुलिनाश्रयाम् अगाधजलवत्तया नीलजलत्वेन प्रतीयमानामित्यर्थः, क्वचित् सिद्धजनैः आकीर्णां व्याप्तां मन्दाकिनीं पश्य ॥ ९ ॥

गो० टी०—क्वचिदिति । मणिनिकाशोदां मुक्तामणिनिभजलाम् उदकस्योदभाव आर्षः क्वचित्तीरे सिद्धजनेनावगाहनोद्युक्तेनावकीर्णाम् एतेन श्वेतवसना पृथुजघना कामुकावृता नारी द्योत्यते ॥ ९ ॥

१० ] ति० टी०—अम्भसि पोप्लूयमानान्पुनः पुनः प्लवमानान्पुष्पसंचयान्पश्य । 'पश्येहाचलमध्यमे' इति पाठः कृशत्वाच्चलनाशक्तमध्यवतीत्यर्थ इति कतकः ॥ १० ॥

रा० टी०—निर्धूतानिति । वायुना निर्धूतानत एव विततान् नद्युभयकूले व्याप्तान् पुष्पसंचयान् त्वं पश्य अपरान् त्वं पश्य भिन्नान् पोप्लूयमानान् पुनः पुनर्जले प्लवमानान् त्वं पश्य १०

गो० टी०—निर्धूतानिति । वायुना निर्धूतान् विततान् तीरे व्याप्तान् पुष्पसंचयान्पश्य, जलमध्यगान् पोप्लूयमानान् भृशं पुनः पुनर्वा प्लवमानान् अपरान् पुष्पसंचयांश्च त्वं पश्य । प्रियहृतार्धगलितवसना नारीव लक्ष्यत इति व्यङ्ग्यम् ॥ १० ॥

११ ] ति० टी०—रथाङ्गाह्वयनाश्चक्रवाकाः रथाङ्गं तद्वाचकः शब्दे आह्वयने नामनि येषामिति विग्रहः । अधिरोहन्ति पुलिनानीति शेषः ॥ ११ ॥

रा० टी०—पश्येति । वल्गुवचसः मनोहरवाचः अत एव शुभाः गिरः निष्कूजन्तः रथाङ्गाह्वयनाः रथाङ्गम् आह्वयनं संज्ञा येषां ते चक्रवाका द्विजाः पक्षिणः अधिरोहन्ति पुलिनमिति शेषः, त्वं पश्य ॥ ११ ॥

गो० टी०—तानिति । वल्गुवचसः रत्यर्थाह्वानकालिकरम्यवचसः शुभाः गिरः विकूजन्तः रतिकालिकस्वरान् कुर्वन्तः रथाङ्गाह्वयनाश्चक्राह्वयाः द्विजाश्चक्रवाकाः तान् पुष्पसंचयान् अधिरोहन्ति शयनमारोहन्तीत्यर्थः । अनेन चक्रवाकरतिर्दर्शिता ॥ ११ ॥

१२–१३ ] ति० टी०—तव दर्शनाच्चाधिकमधिकसुखावहम् ॥ १२ ॥ १३ ॥

१ जलमध्यगानिति गो. पाठः । २ तांश्चातिवल्गुवचस इति गो. पाठः । ३ विकूजन्त इति गो. पाठः । ४ कलुषैरिति गो. पाठः ।

सखीवच्च विगाहस्व सीते मन्दाकिनीं नदीम् । कमलान्यवमज्जन्ती पुष्कराणि च भामिनि ॥ १४ ॥
त्वं पौरजनवद्व्यालानयोध्यामिव पर्वतम् । मन्यस्व वनिते नित्यं सरयूवदिमां नदीम् ॥ १५ ॥
लक्ष्मणश्चैव धर्मात्मा मन्निदेशे व्यवस्थितः । त्वं चानुकूला वैदेहि प्रीतिं जनयती मम ॥ १६ ॥
उपस्पृशंस्त्रिषवणं मधुमूलफलाशनः । नायोध्यायै न राज्याय स्पृहये चै त्वया सह ॥ १७ ॥
इमां हि रम्यां गैजयूथलोडितां निपीततोयां गजसिंहवानरैः ।
सुपुष्पितां पुष्पभैरैरलंकृतां न सोऽस्ति यः स्यान्न गतक्लमः सुखी ॥ १८ ॥

रा० टी०—दर्शनमिति । हे शोभने ! चित्रकूटस्य मन्दाकिन्याश्च दर्शनं तव दर्शनात् एकान्ते निरन्तरं समावलोकाद्धेतोः पुरवासात् अयोध्यावाससुखात् अधिकं मन्ये ॥ १२ ॥

गो० टी०—दर्शनमिति । हे शोभने निर्मत्सरे ! चित्रकूटस्य दर्शनं पुरवासाधिकं चित्रकूटवासः पुरवासादप्यधिकसुखावहः एकान्तभोगस्थानत्वादिति भावः । मन्दाकिन्या दर्शनं तव दर्शनादप्यधिकसुखकरम् उद्दीपनत्वादिति भावः ॥ १२ ॥

रा० टी०—विधूतेति । तपोदमसमन्वितैः तपआदियुक्तैः अत एव विधूतकल्मषैः सिद्धैः नित्यविक्षोभितजलां नित्यं विक्षोभितमवगाहितं जलं यस्यास्तां मन्दाकिनीं मया सह विगाहस्व ॥ १३ ॥

गो० टी०—विधूतकलुषैरिति । तपोदमशमान्वितैः अत एव विधूतकलुषैः निष्पापैः सिद्धैः सिद्धसाधननिष्ठैः नित्यविक्षोभितजलां सदा तत्स्नानेन तत्पादरेणुधन्यां मन्दाकिनीं मया सह विगाहस्व मामप्रधानीकृत्य जलक्रीडारसमनुभवेत्यर्थः नित्यविक्षोभितजलामित्यनेन जलक्रीडोपकरणकुसुम्भादिसामग्री दर्शिता ॥ १३ ॥

१४-१६ ] ति० टी०—सखीवत् मन्दाकिन्या इति शेषः । कमलपुष्करे रक्तसितपद्मे तान्यवमज्जन्ती प्रक्षिपन्ती ॥ १४-१६ ॥

रा० टी०—सखीवदिति । हे सीते ! कमलानि रक्तपद्मानि पुष्कराणि सितपद्मानि च अवमज्जन्ती जले निमज्जयन्ती सती सखीवत् विद्यमानां मन्दाकिनीं नदीं त्वं विगाहस्व । निमज्जयन्तीत्यनेन तत्रत्यजलस्य कमलाच्छादत्वं ध्वनितम् ॥ १४ ॥

गो० टी०—सखीवदिति । सख्या यथा सलिलमवगाहसे तथा मया सह विगाहस्व कमलानि रक्ताब्जानि पुष्कराणि सिताम्भोजानि अवमज्जन्ती अवमज्जयन्ती स्तनजघनाघातजनिततरङ्गैरिति भावः । यद्वा तव वदनकान्तिनिर्जिततया लज्जया अवमज्जयन्ती वेत्युत्प्रेक्षा ॥ १४ ॥

रा० टी०—त्वमिति । व्यालान् वनचरान् पौरजनवत् मन्यस्व अयोध्यामिव पर्वतं मन्यस्व सरयूमिव मन्दाकिनीं मन्यस्व ॥ १५ ॥

गो० टी०—त्वमिति । त्वं व्यालान् वनचरजन्तून् पौरजनवत्पश्य पौरजनप्रीतिं व्यालेषु कुर्वित्यर्थः, एवमुत्तरत्रापि अतः पौरजनाद्यनवलोकनक्लेशो न कार्य इति भावः ॥ १५ ॥

रा० टी०—लक्ष्मण इति । मन्निदेशे आज्ञायां व्यवस्थितः संस्थितः लक्ष्मणः अनुकूला त्वं च मम प्रीतिं जनयथः ॥ १६ ॥

गो० टी०—लक्ष्मण इति । सौभ्रात्रम् अनुकूलभार्यत्वं च सौख्यरसायनमिति भावः ॥ १६ ॥

१७ ] ति० टी०—उपस्पृशन् स्नानं कुर्वन् ॥ १७ ॥

रा० टी०—उपस्पृशन्निति । त्वया सह त्रिषवणं त्रिकालमुपस्पृशन् स्नानं कुर्वन्सन् मधुमूलफलाशनोऽहमयोध्यायै राज्याय च न स्पृहये ॥ १७ ॥

गो० टी०—उपस्पृशन्निति । हे वैदेहि ! त्वया सह त्रिषवणं त्रिसंध्यम् उपस्पृशन् स्नानं कुर्वन् मधुमूलफलाशनोऽहमयोध्यायै न स्पृहये राज्याय च न स्पृहये "स्पृहेरीप्सितः" इति संप्रदानसंज्ञा ॥ १७ ॥

१८ ] ति० टी०—सुपुष्पितां सुपुष्पितवनान्तामवगाह्य यः सुखी न स्यात्स नास्तीत्यन्वयः ॥ १८ ॥

रा० टी०—इमामिति । गजयूथलोडितां गजयूथैः लोडितां गजादिभिः पीततोयां सुपुष्पितां शोभनपुष्पविशिष्टतरुमतीम् अत एव पुष्पभरैः अलंकृतामिमां रम्यां मन्दाकिनीमवगाह्य गतक्लमः निवृत्तग्लानिः अत एव सुखी परमानन्दविशिष्टः यो न स्यात् स जनो नास्ति ॥ १८ ॥

गो० टी०—इमामिति । इमां मन्दाकिनीं मृगयूथशालिनीं 'मृगयूथलोलिताम्' इति च पाठः गजसिंहवानरैः आश्रममहिम्ना शान्तवैरैरित्यर्थः । निपीततोयामिति पापहरत्वमुक्तं, पुष्पधरैः वृक्षैः अनेनोद्दीपनत्वमुक्तम्, उपस्पृशन्नित्यनुषज्यते यः अगतक्लमः सुखी न स्यात्स नास्ति सर्वोऽप्यत्र स्नात्वा गतक्लमो भवतीत्यर्थः ॥ १८ ॥

१ अपीति गो. पाठः । २ जनयथ इति गो. रा. पाठः । ३ ऽथेति गो. पाठः । ४ मृगयूथशालिनीमिति गो. पाठः । ५ पुष्पितैरिति गो. पाठः । ६ धरैरिति गो. पाठः । ७ स्यादगतक्लम इति गो. पाठः ।

इतीव रामो बहुसंगतं वचः प्रियासहायः सरितं प्रति ब्रुवन् ।
चचार रम्यं नयनाञ्जनप्रभं स चित्रकूटं रघुवंशवर्धनः ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चनवतितमः सर्गः ॥ ९९ ॥

---

१ इतः परं प्रक्षिप्तोऽयं सर्गो दृश्यते ।

वैदेह्या समं विहरमाणो रामः कदाचन चित्रकूटाधित्यकास्थकन्दरं प्रविश्य स्वाङ्कशायिन्याः सीतायाः फालपट्टके मनःशिलापङ्कतिलकं विधाय केसरादिकुसुमैर्धम्मिल्लमलंकृत्य स्वाश्रमं ययौ । रामचोदिता सीता लक्ष्मणानीतमृगमांसैर्भूतेभ्यो बलिं विधायावशिष्टं ताभ्यां पर्यवेषयदथावशिष्टं काकेभ्यो रक्षन्त्यास्तस्याः कश्चित्काकस्तनान्तरं प्राप्य पीडां जनयामास । तद्विलोक्य क्रुद्धो रामस्तस्मिन्नैषीकास्त्रं मुमोच । अथ कुत्राप्यलब्धशरणत्वात्पादमूलमेवागतस्य तस्यैकाक्षि संछिद्य तं ररक्ष ।

रामस्तु नलिनीं रम्यां चित्रकूटं च पर्वतम् । उत्तरे तु गिरेः पादे चित्रकूटस्य राघवः ॥ १ ॥
ददर्श कन्दरं रम्यं शिलाधातुसमन्वितम् । सुखप्रसेकैस्तरुभिः पुष्पभारावलम्बिभिः ॥ २ ॥
संवृतं च रहस्यं च मत्तद्विजगणायुतम् । तद्दृष्ट्वा सर्वभूतानां मनोदृष्टिहरं वनम् ॥ ३ ॥
उवाच सीतां काकुत्स्थो वनदर्शनविस्मितः । वैदेहि रमते चक्षुस्तवास्मिन्गिरिकन्दरे ॥ ४ ॥
परिश्रमविघातार्थं साधु तावदिहास्यताम् । त्वदर्थमिह विन्यस्ता त्वियं श्लक्ष्णसमा शिला ॥ ५ ॥
यस्याः पार्श्वे तरुः पुष्पैः प्रविष्ट इव केसरैः । राघवेणैवमुक्ता सा सीता प्रकृतिदक्षिणा ॥ ६ ॥
उवाच प्रणयस्निग्धमिदं श्लक्ष्णतरं वचः । अवश्यकार्यं वचनं तव मे रघुनन्दन ॥ ७ ॥
बहुशो भ्रमितश्चाद्य तव चैवं मनोरथः । एवमुक्त्वा वरारोहा शिलां तामुपसर्प ह ॥ ८ ॥
सह भर्त्राऽनवद्याङ्गी रन्तुकामा मनस्विनी । तामेवं ब्रुवतीं सीतां रामो वचनमब्रवीत् ॥ ९ ॥
रम्यं पश्यसि भूतार्थे वनं पुष्पितपादपम् । पश्य देवि गिरौ रम्ये रम्यपुष्पाङ्कितानिमान् ॥ १० ॥
गजदन्तक्षतान्वृक्षान्पश्य निर्यासवर्षिणः । झिल्लिकाविरुतैर्दीर्घैं रुदन्तीव समन्ततः ॥ ११ ॥
पुत्रप्रियोऽसौ शकुनिः पुत्रपुत्रेति भाषते । मधुरां करुणां वाचं पुरेव जननी मम ॥ १२ ॥
विहगो भृङ्गराजोऽयं शालस्कन्धसमास्थितः । संगीतमिव कुर्वाणः कोकिलेनावकूजति ॥ १३ ॥
अयं वा बालकः शङ्के कोकिलानां विहङ्गमः । सुखबद्धमसंबद्धं तथा ह्येष प्रभाषते ॥ १४ ॥
एषा कुसुमिता नूनं पुष्पभारानता लता । दृश्यते मामिवात्यर्थं श्रमाद्देवि त्वमाश्रिता ॥ १५ ॥
एवमुक्ता प्रियस्याङ्के मैथिली प्रियभाषिणी । भूयस्तरां त्वनिन्द्याङ्गी समारोहत भामिनी ॥ १६ ॥
अङ्के तु परिवर्तन्ती सीता सुरसुतोपमा । हर्षयामास रामस्य मनो मनसिजार्पितम् ॥ १७ ॥
स निघृष्याङ्गुलिं रामो धौते मनःशिलोच्चये । चकार तिलकं तस्या ललाटे रुचिरं तदा ॥ १८ ॥
बालार्कसमवर्णेन तेजसा गिरिधातुना । चकासे विनिविष्टेन सर्सध्येव निशा सिता ॥ १९ ॥
केसरस्य च पुष्पाणि करेणामृद्य राघवः । अलकं पूरयामास मैथिल्याः प्रीतमानसः ॥ २० ॥
अभिरम्य तदा तस्यां शिलायां रघुनन्दनः । अन्वीयमानो वैदेह्या देशमन्यं जगाम ह ॥ २१ ॥

---

१९ ] ति० टी०—सरितं प्रति सरितं वर्णयन् । नयनयोग्याञ्जनवन्नीलप्रभम् ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

रा० टी०—इतीति । प्रियासहायः प्रियैव सहायो यस्य स रामः इतीव एतादृशं बहु अनेकविधं संगतं समीचीनं सरितं प्रति सरित्संबन्धि वचः ब्रुवन्सन्नयनाञ्जनप्रभं नीलवर्णविशिष्टमित्यर्थः, चित्रकूटं चचार ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

गो० टी०—इतीति । प्रियासहायो रामः सरितं प्रति सरिद्विषये संगतं प्रसक्ताप्रसक्तं बहु वचो ब्रुवन् सन् नयनाञ्जनप्रभं नयनयोग्याञ्जनकान्तिं तद्वन्नीलमित्यर्थः, चित्रकूटं चचार चित्रकूटप्रान्ते चचारेत्यर्थः, एतेन पुनः पुरवासनिस्पृहत्वद्योतनाय रामस्य वनवासनिर्भरत्वमुक्तम् ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

विचरन्ती तदा सीता ददर्श हरियूथपम् । वने बहुमृगाकीर्णे वित्रस्ता राममाश्लिषत् ॥ २२ ॥
रामस्तां परिरब्धाङ्गीं परिरभ्य महाभुजः । सान्त्वयामास वामोरूमवभर्त्स्याथ वानरम् ॥ २३ ॥
मनःशिलायास्तिलकः सीतायाः सोऽथ वक्षसि । समदृश्यत संक्रान्तो रामस्य विपुलौजसः ॥ २४ ॥
प्रजहास तदा सीता गते वानरपुंगवे । दृष्ट्वा भर्तरि संक्रान्तमपाङ्गं समनःशिलम् ॥ २५ ॥
नातिदूरे त्वशोकानां प्रदीप्तमिव काननम् । ददर्श पुष्पस्तबकैस्तर्जेद्भिरिव वानरैः ॥ २६ ॥
वैदेही त्वब्रवीद्राममशोककुसुमार्थिनी । वयं तदभिगच्छामो वनमिक्ष्वाकुनन्दन ॥ २७ ॥
तस्याः प्रिये स्थितो रामो देव्या दिव्यार्थरूपया । सहितस्तदशोकानां विशोकः प्रययौ वनम् ॥ २८ ॥
तदशोकवनं रामः सभार्यो व्यचरत्तदा । गिरिपुत्र्या पिनाकीव सह हैमवतं वनम् ॥ २९ ॥
तावन्योन्यमशोकस्य पुष्पैः पल्लवधारिभिः । समलंचक्रतुरुभौ कामिनौ नीललोहितौ ॥ ३० ॥
आबद्धवनमालौ तौ कृतापीडावतंसकौ । भार्यापती तावचलं शोभयांचक्रतुर्भृशम् ॥ ३१ ॥
एवं स विविधान्देशान्दर्शयित्वा प्रियां प्रियः । आजगामाश्रमपदं सुसंश्लिष्टमलंकृतम् ॥ ३२ ॥
प्रत्युज्जगाम तं भ्राता लक्ष्मणो गुरुवत्सलः । दर्शयन्विविधं धर्मं सौमित्रिः सुकृतं तदा ॥ ३३ ॥
शुद्धबाणहतांस्तत्र मेध्यान्कृष्णमृगान्दश । राशीकृताञ्शुष्यमाणानन्यान्कांश्चन कांश्चन ॥ ३४ ॥
तद्दृष्ट्वा कर्म सौमित्रेर्भ्राता प्रीतोऽभवत्तदा । क्रियन्तां बलयश्चेति रामः सीतामथान्वशात् ॥ ३५ ॥
अग्रं प्रदाय भूतेभ्यः सीताथ वरवर्णिनी । तयोरुपददद्भ्रात्रोर्मधु मांसं च तद्दृशम् ॥ ३६ ॥
तयोस्तुष्टिमथोत्पाद्य वीरयोः कृतशौचयोः । विधिवज्जानकी पश्चाच्चक्रे सा प्राणधारणम् ॥ ३७ ॥
शिष्टं मांसं निकृष्टं यच्छोषणायावकल्पितम् । तद्रामवचनात्सीता काकेभ्यः पर्यरक्षत ॥ ३८ ॥
तां ददर्श तदा भर्ता काकेनायासितां दृढम् । यस्या हारान्तरचरः कमचारी विहंगमः ॥ ३९ ॥
काकेनारोप्यमानां तां सा मुमोह तदातुरम् । सा चुकोपानवद्याङ्गी भर्तृप्रणयदर्पिता ॥ ४० ॥
इतश्चेतश्च तां काको वारयन्तीं पुनः पुनः । पक्षतुण्डनखाग्रैश्च कोपयामास कोपनाम् ॥ ४१ ॥
तस्याः प्रस्फुरमाणौष्ठं भ्रुकुटीपुटसूचितम् । मुखमालोक्य काकुत्स्थस्तं काकं प्रत्यषेधयत् ॥ ४२ ॥
स धृष्टमानो विहगो रामवाक्यमचिन्तयन् । सीतामभिपपातैव ततश्चुक्रोध राघवः ॥ ४३ ॥
सोऽभिमन्त्र्य शरैषीकामैषीकास्त्रेण वीर्यवान् । काकं तमभिसंधाय ससर्ज पुरुषर्षभः ॥ ४४ ॥
स तेनाभिद्रुतः काकस्त्रीँल्लोकान्पर्यगात्ततः । देवैर्दत्तवरः पक्षी हारान्तरचरो लघुः ॥ ४५ ॥
यत्र यत्रागमत्काकस्तत्र तत्र ददर्श ह । इषीकां भूतसंकाशां स रामं पुनरागमत् ॥ ४६ ॥
स मूर्ध्ना न्यपतत्काको राघवस्य महात्मनः । सीतायास्तत्र पश्यन्त्या मानुषीमैरयद्गिरम् ॥ ४७ ॥
प्रसादं कुरु मे राम प्राणैः साम्यमस्तु मे । अस्त्रस्यास्य प्रभावेण शरणं न लभे क्वचित् ॥ ४८ ॥
तं काकमब्रवीद्रामः पादयोः शिरसा गतम् । सानुक्रोशतया धीमानिदं वचनमर्थवत् ॥ ४९ ॥
मया रोषपरीतेन सीताप्रियहितार्थिना । अस्त्रमेतत्समाधाय त्वद्वधायाभिमन्त्रितम् ॥ ५० ॥
यत्तु मे चरणौ मूर्ध्ना गतस्त्वं जीवितेप्सया । अत्रास्त्यवेक्षा त्वयि मे रक्ष्यो हि शरणागतः ॥ ५१ ॥
अमोघं क्रियतामस्त्रमेकमङ्गं परित्यज । किमङ्गं शातयतु ते शरैषीका ब्रवीहि मे ॥ ५२ ॥
एतावद्धि मया शक्यं तव कर्तुं प्रियं खग । एकाङ्गहीनं ह्यस्त्रेण जीवितं मरणाद्वरम् ॥ ५३ ॥
एवमुक्तस्तु रामेण संप्रधार्य स वायसः । अभ्यगच्छद्द्वयोरक्ष्णस्त्यागमेकस्य पण्डितः ॥ ५४ ॥
सोऽब्रवीद्राघवं काको नेत्रमेकं त्यजाम्यहम् । एकनेत्रोऽपि जीवेऽहं त्वत्प्रसादान्नराधिप ॥ ५५ ॥
रामानुज्ञातमस्त्रं तत्काकस्य नयनेऽपतत् । वैदेही विस्मिता तत्र काकस्य नयने हृते ॥ ५६ ॥
निपत्य शिरसा काको जगामाशु यथेप्सितम् । लक्ष्मणानुचरो रामश्चकारानन्तरक्रियाः ॥ ५७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे प्रक्षिप्तः सर्गः ।

---

## षण्णवतितमः सर्गः ।

चित्रकूटरम्यसानुनि वैदेह्या समं विहरमाणो रामोऽकस्मात्सूर्यालोकरोधि रजो दृष्ट्वा महान्तं कोलाहलं च श्रुत्वा कुत एतदिति जिज्ञासुना तेन प्रेषितो लक्ष्मण आकाशचुम्बि वृक्षाग्रमारुह्य कोविदारध्वजाङ्कितनायकं सेनासमूहमवलोक्यास्माञ्जिघांसुः प्राप्तोऽयं भरतो मया हन्यत इति संरम्भसंभ्रान्तो रामं बभाषे ।

तां तदा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम् । निषसाद गिरिप्रस्थे सीतां मांसेन छन्दयन् ॥ १ ॥
इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना । एवमास्ते स धर्मात्मा सीतया सह राघवः ॥ २ ॥
तथा[1] तत्रासतस्तस्य भरतस्योपयायिनः । सैन्यरेणुश्च शब्दश्च प्रादुरास्तां नभस्पृशौ ॥ ३ ॥
एतस्मिन्नन्तरे त्रस्ताः शब्देन महता ततः । अर्दिता यूथपा मत्ताः स्वयूथाद्दुद्रुवुर्दिशः ॥ ४ ॥
स तं सैन्यसमुद्भूतं शब्दं शुश्राव राघवः । तांश्च विप्रद्रुतान्सर्वान्यूथपानन्ववैक्षत ॥ ५ ॥
तांश्च [2]विप्रद्रुतान्दृष्ट्वा तं च श्रुत्वा [3]महास्वनम् । उवाच रामः सौमित्रिं लक्ष्मणं दीप्ततेजसम् ॥ ६ ॥
हन्त लक्ष्मण पश्येह सुमित्रा सुप्रजास्त्वया । भीमस्तनितग[4]म्भीरं तुमुलः श्रूयते स्वनः ॥ ७ ॥

---

१ ] ति० टी०—मांसेन छन्दयन्मांसविशेषप्रदर्शनेन लालयन्सान्त्वयन् गिरिनिम्नगां मन्दाकिनीम् ॥ १ ॥

रा० टी०—मन्दाकिनीदर्शनानन्तरकालिकं वृत्तान्तमाह—तामित्यादिभिः । गिरिनिम्नगां तां मन्दाकिनीं मैथिलीं दर्शयित्वा मांसेन तापसोपभोग्यफलादिना सीतां छन्दयन् तत्प्रीतिमुत्पादयन् सन् गिरिप्रस्थे पर्वतैकशिलायां निषसाद ॥ १ ॥

गो० टी०—एवं प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति—तामित्यादिना । गिरिनिम्नगां गिरिनदीं मांसेन छन्दयन् वशीकुर्वन् 'वशाभिप्राययोश्छन्दः' इति वैजयन्ती ॥ १ ॥

२ ] ति० टी०—तेन लालनप्रकारमाह—इदमिति । एवमित्यस्य ब्रुवन्निति शेषः ॥ २ ॥

रा० टी०—छन्दनप्रकारं निरूपयन्नाह—इदमिति । इदं फलं मेध्यं शुद्धमत एव इदमग्निना निष्टप्तमेवमुक्त्वा सीतया सह धर्मात्मा राघवः आस्ते ॥ २ ॥

गो० टी०—वशीकरणप्रकारमाह—इदमित्यादिना । इदं मांसं मेध्यं शुद्धं निर्मलमिति यावत् स्वादु रसवत् निष्टप्तं प्रतप्तम् इदंशब्देन स्वभुक्तशेषमिति गम्यते एवमास्ते एवं ब्रुवन्नास्त इत्यर्थः ॥ २ ॥

३ ] ति० टी०—आसतो गिरिप्रदेश आसीनस्य उपयायिनो रामसमीप आगच्छतो भरतस्य सैन्यरेणुः सैन्यशब्दश्च प्रादुरास्तां प्रादुर्बभूवतुः ॥ ३ ॥

रा० टी०—तथेति । तत्र शैलप्रस्थे तथा तेन प्रकारेण आसतः तिष्ठतस्तस्य रामस्य समीपे उपयायिनः रामसमीपमागच्छतः भरतस्य नभस्पृशौ सैन्यरेणुः शब्दः सैन्यस्वनश्च प्रादुरास्ताम् ॥ ३ ॥

गो० टी०—तथेति । तथा उक्तरीत्या तत्र गिरिप्रस्थे तस्य आसतः तस्मिन्नासीने सति सैन्यरेणुः शब्दः सैन्यशब्दश्चोभौ नभस्स्पृशौ सन्तौ प्रादुरास्ताम् ॥ ३ ॥

४ ] ति० टी०—एतस्मिन्नन्तरे सेनाशब्दप्रवृत्तिसमये ॥४॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे सैन्यरेणुशब्दप्रादुर्भावसमये ततः महता सेनाशब्देन आर्दिताः मनोव्यथां प्राप्ताः सयूथाः यूथसहिताः मत्ताः यूथपाः दिशः दुद्रुवुः ॥ ४ ॥

गो० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे अस्मिन् शब्दश्रवणसमये ततस्तेन ॥ ४ ॥

५ ] ति० टी०—स राघवो रामः । सैन्यसमुद्भूतं तदुत्पादितम् ॥ ५ ॥

रा० टी०—स इति । सैन्यसमुद्भूतं तं शब्दं राघवो रामः शुश्राव विद्रुताँस्तान्यूथपानन्ववैक्षत अवालोकत च ॥ ५ ॥

गो० टी०—स इति । सैन्यसमुद्भूतं सैन्योत्पादितम् ॥५॥

६] ति० टी०—'स निस्वनम्' इति पाठे स इति पदम्॥६॥

रा० टी०—तानिति । विप्रद्रुतान् तान्यूथपान्दृष्ट्वा तं महास्वनं च श्रुत्वा रामः दीप्ततेजसं लक्ष्मणमुवाच ॥ ६ ॥

गो० टी०—तानिति । दीप्ततेजसमित्यनेन वक्ष्यमाणावेक्षणक्षमत्वमुच्यते ॥ ६ ॥

७ ] ति० टी०—भीमं भयंकरं यत्स्तनितं मेघशब्दस्तद्वद्गम्भीरं यथा भवति तथा योऽयं स्वनः श्रूयतेऽस्य कारणं पश्येति योजना ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—हन्तेति । हे लक्ष्मण ! कौसल्या सुप्रजास्त्वमिह पश्य । ननु किं पश्यामि इत्यत आह—भीमं भयंकरं स्तनितं मेघशब्दः तद्वद्गम्भीरं यथा स्यात्तथा तुमुलः स्वनः त्वया हन्त श्रूयते एतेन एतच्छब्दकारणं त्वया निश्चीयतामिति सूचितम् ॥ ७ ॥

गो० टी०—हन्तेति व्यग्रतायामव्ययं वाक्यारम्भे वा । 'वाक्यारम्भेऽनुकम्पायां हन्त हर्षविषादयोः' इति वैजयन्ती । पश्य वृक्षमारुह्य प्रेक्षस्व सुमित्रा सुप्रजास्त्वया त्वया सुमित्रा सत्पुत्रेति सान्त्वोक्तिः भीमस्तनितगम्भीरः भयंकरमेघनिर्घोषवद्गम्भी-

---

१ तथेति गो. पाठः । २ विद्रवत इति गो. पाठः । ३ च निःस्वनमिति गो. पाठः । ४ गम्भीर इति गो. पाठः ।

गजयूथानि वारण्ये महिषा वा महावने । वित्रासिता मृगाः सिंहैः सहसा प्रद्रुता दिशः ॥ ८ ॥
राजा वा राजपुत्रो वा मृगयामटते वने । अन्यद्वा श्वापदं किंचित्सौमित्रे ज्ञातुमर्हसि ॥ ९ ॥
सुदुश्चरो गिरिश्चायं पक्षिणामपि लक्ष्मण । सर्वमेतद्यथातत्त्वमभिज्ञातुमिहार्हसि ॥ १० ॥
स लक्ष्मणः संत्वरितः सालमारुह्य पुष्पितम् । प्रेक्षमाणो दिशः सर्वाः पूर्वां दिशमवैक्षत ॥ ११ ॥
उदङ्मुखः प्रेक्षमाणो ददर्श महतीं चमूम् । गजाश्वरथसंबाधां यत्तैर्युक्तां पदातिभिः ॥ १२ ॥
तामश्वरथसंपूर्णां रथध्वजविभूषिताम् । शशंस सेनां रामाय वचनं चेदमब्रवीत् ॥ १३ ॥
अग्निं संशमयत्वार्यः सीता च भजतां गुहाम् । सज्जं कुरुष्व चापं च शरांश्च कवचं तथा ॥ १४ ॥

रः 'महीस्तनितगम्भीरः' इतिपाठे भूकम्पजनितशब्दवद्गम्भीर इत्यर्थः ॥ ७ ॥

८ ] ति० टी०—यत्सहसा मृगाः प्रद्रुता दिशस्तस्य कारणम् । तथा सिंहैर्वित्रासितानि गजयूथानि वा, अथ तैर्वित्रासिता महिषा वा दिशः प्रद्रुतास्तत्कारणं च पश्य । वा शब्दौ चार्थे ॥ ८ ॥

रा० टी०—शब्दस्य भयंकरत्वे हेतुं वदन्नाह—गजेति । महावने सिंहैर्वित्रासिता इव गजयूथप्रभृतयः अरण्ये अस्मिन्वने दिशः प्रद्रुताः एको वा इवार्थे एतेन सकारणकमेवेदमिति सूचितम् ॥ ८ ॥

गो० टी०—गजयूथानीति । मृगा इत्यत्रापि वाशब्दः संबन्धनीयः ॥ ८ ॥

९-१०] ति० टी०—तत्कारणमुन्नयन्स्वयमाह—राजा वेति । राजादिर्मृगयामटते ज्ञातुमर्हसि । अन्यद्वा श्वापदं दुष्टजन्तुः वनं क्षोभयतीति शेषः ॥ ९ ॥ १० ॥

रा० टी०—कारणमेव बोधयन्नाह—राजेति । राजा मृगयामटते राजपुत्रो वा अटते अन्यत्किंचिच्छ्वापदं वा हे सौमित्रे ! एतत्सर्वं ज्ञातुं निश्चेतुं त्वमर्हसि ॥ ९ ॥

गो० टी०—राजेति । राजमात्रः राजतुल्यः कश्चिन्मृगयामुद्दिश्य अटते आत्मनेपदमार्षं श्वापदं व्याघ्रादिर्हिंस्रपशुः नपुंसकत्वमार्षम् 'व्याघ्रादयो वनचराः पशवः श्वापदा मताः' इति हलायुधः । अन्यो वा यः कश्चित् श्वापदः अटत इति संबन्धः ॥ ९ ॥

रा० टी०—कश्चिन्महान् प्रबलोऽयमागत इति सूचयन्नाह—सुदुश्चर इति । हे लक्ष्मण ! पक्षिणां देशान्तरवर्तिखगानामपि अयं गिरिः सुदुश्चरः किंच अयं गिरिः पक्षिणां सहाययुक्तानामपि सुदुश्चरः स्वतन्त्रतया चरितुमशक्यः अत एतत्सर्वं यथातत्त्वं याथार्थ्यमनतिक्रम्य विज्ञातुं निश्चेतुं त्वमर्हसि ॥ १० ॥

गो० टी०—सुदुश्चर इति । अयं गिरिः पक्षिणामपि सुदुश्चरो वर्तते पक्षिसंचारोऽपीदानीं नास्तीत्यर्थः, सर्वमेतत्पूर्वोक्तकारणेष्वन्यतमं ज्ञातुमर्हसीत्यर्थः ॥ १० ॥

११ ] ति० टी०—सालो वृक्षः ॥ ११ ॥

रा० टी०—स इति । सः रामेणानुज्ञातः संत्वरितो लक्ष्मणः पुष्पितं शालं वृक्षविशेषमारुह्य दिशः प्रेक्षमाणः सन् पूर्वां दिशमवैक्षत ॥ ११ ॥

गो० टी०—स इति । पुष्पितमित्यनेन विरलपत्रतया नावारकत्वमुक्तं सर्वा दिशः प्रेक्षमाणः सामान्येन प्रेक्षमाणः सन् पूर्वां दिशमुदैक्षत सविशेषमलोकयत् ॥ ११ ॥

१२ ] ति० टी०—यत्तैः सज्जैः ॥ १२ ॥

रा० टी०—उदङ्मुख इति । प्रेक्षमाणः गजादिभिः संबाधां निबिडां यत्तैः अतिप्रयत्नैः पदातिभिः युक्तां महतीं चमूं ददर्श ॥ १२ ॥

गो० टी०—तत्र हेतुदर्शनमाह—उदङ्मुख इत्यादिना । यत्तैः सन्नद्धैः ॥ १२ ॥

१३ ] ति० टी०—सेनां शशंस सेनां श्रुतशब्दकारणमुक्तवान् ॥ १३ ॥

रा० टी०—तामिति । अश्वादिभिः संपूर्णां रथध्वजविभूषितां तां सेनां रामाय शशंस महती सेनेयमिति कथयामास इदं वचनं चाब्रवीत् ॥ १३ ॥

गो० टी०—तामिति । रथध्वजविभूषितां रथबद्धध्वजैरलंकृताम् ॥ १३ ॥

१४ ] ति० टी०—अग्निं संशमयतु परसेनादर्शनजक्षोभकालिकोऽयं व्यापारः सर्वजनसिद्धः । गुहामन्तर्गृहं, शरांश्च गृहाणेति शेषः ॥ १४ ॥

रा० टी०—तद्वचनाकारमाह—अग्निमिति । अग्निमन्याकारसेनाक्षोभमार्यो भवान् संशमयतु । संशमनप्रकारमाह—सीता गुहां भजतां प्राप्नोतु चापं सज्यं ज्यासहितं कुरुष्व शरान् कवचं च गृहाणेति शेषः ॥ १४ ॥

गो० टी०—अग्निमिति । अग्निं संशमयतु अन्यथा धूमानुसारेणागच्छेत्सेनेति भावः । सज्यं ज्यया मौर्व्या सहितं कुरुष्व शरांश्च कवचं तथा शरांश्च कवचं च गृहाणेति शेषः, यद्वा कुरुष्वेत्यनुषङ्गः करोतेः क्रियासामान्यवाचित्वात् औचित्येन शरान् गृहाण कवचं धारयेत्यर्थः ॥ १४ ॥

१ मात्र इति गो. पाठः । २ अचिराज्ज्ञातुमर्हसीति गो. पाठः । ३ उदैक्षतेति गो. पाठः । ४ रथाश्वगजेति गो. पाठः । ५ गजेति गो. पाठः । ६ सज्यमिति गो. रा. पाठः ।

तं रामः पुरुषव्याघ्रो लक्ष्मणं प्रत्युवाच ह । अङ्गावेक्षस्व सौमित्रे कस्येमां मन्यसे चमूम् ॥ १५ ॥
एवमुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् । दिधक्षन्निव तां सेनां रुषितः पावको यथा ॥ १६ ॥
संपन्नं राज्यमिच्छंस्तु व्यक्तं प्राप्याभिषेचनम् । आवां हन्तुं समभ्येति कैकेय्या भरतः सुतः ॥ १७ ॥
एष वै सुमहाञ्छ्रीमान्विटपी संप्रकाशते । विराजत्यु[1]ज्ज्वलस्कन्धः कोविदारध्वजो रथे ॥ १८ ॥
भजन्त्येते यथाकाममश्वानारुह्य शीघ्रगान् । एते भ्राजन्ति संहृष्टा गजानारुह्य सादिनः ॥ १९ ॥
गृहीतधनुषा[2]वावां गिरिं वीर श्र[3]यावहे । अथवेहैव तिष्ठावः संनद्धावुद्यतायुधौ ॥ २० ॥
अपि नौ वशमागच्छेत्कोविदारध्वजो रणे । अपि द्र[4]क्ष्यामि भरतं यत्कृते व्यसनं महत् ॥ २१ ॥

१५ ] ति० टी०—तं युद्धसंनाहवादिनं रामो विमृश्यकारित्वादाह—अङ्गेति । यामिमां चमूं भयहेतुं मन्यसे सा कस्येत्यवेक्षस्वेत्यर्थः ॥ १५ ॥

रा० टी०—तमिति । पुरुषव्याघ्रो रामः लक्ष्मणं प्रत्युवाच । तद्वचनाकारमाह—हे अङ्ग हे सौमित्रे ! इमां चमूं कस्य मन्यसे न कस्यापि मन्ये इति चेदवेक्षस्व अवधारय ॥ १५ ॥

गो टी०—तमिति । तमेवं समीक्ष्य वदन्तं पुरुषव्याघ्रः समीक्ष्यकारीति भावः । अङ्गेति संबोधने । अवेक्षस्व ध्वजचिह्नेन सम्यगवलोकय इमां त्वया दृष्टां चमूं कस्येति मन्यसे वदेति शेषः ॥ १५ ॥

१६ ] ति० टी०—रुषितः क्रुद्धः ॥ १६ ॥

रा० टी०—एवमिति । रामेण एवमुक्तो लक्ष्मणस्तां सेनां सेनाहेतुकभीर्ति रुषितो दाहक इत्यर्थः, पावक इव दिधक्षन्सन् यथा यथावत् अब्रवीत् सेनाशब्दः अर्शआद्यजन्तः ॥ १६ ॥

गो० टी०—एवमिति । रुषितः कुपितः कर्तरि क्तः पावको यथा वह्नितुल्यः ॥ १६ ॥

१७ ] ति० टी०—अभिषेचनं राज्यं प्राप्य । संपन्नमकण्टकम् ॥ १७ ॥

रा० टी०—तद्वचनाकारमाह—संपन्नमिति । प्राप्य त्वामयोध्यां प्रापय्य राज्यं संपन्नं संपत्तिविशिष्टमिच्छन् अभिषेचनं भवतोऽभिषेकं च इच्छन्नावामासमन्तादिन्द्रियशोषकं भवद्वियोगजनितशोकमित्यर्थः, हन्तुं दूरीकर्तुं केकय्याः सुतो भरतः समभ्येति आगच्छति । आवामित्यत्र शोषणार्थक 'ओवै' धातो रूपम् ॥ १७ ॥

गो० टी०—संपन्नमिति । कैकेय्याः सुतः तत्सुतत्वेन क्रूरप्रकृतिः भरतः अभिषेचनं प्राप्य कैकेयीवरानुरोधेनाभिषिक्तः तावताप्यतृप्तः संपन्नं समृद्धं निष्कण्टकमिति यावत् राज्यमिच्छन् सन् तदंशभागिनौ आवां हन्तुं समभ्येति ॥ १७ ॥

१८ ] ति० टी०—तच्चिह्नमाह—एष इति । य एष वृक्षो महान्संप्रकाशते तत्समीपे तं लक्ष्यीकृत्य रथे कोविदारध्वजो विराजते ॥ १८ ॥

रा० टी०—तत्र ज्ञापकमाह—एष इति । एषः महान् अत्युन्नतः श्रीमान् पुष्पफलादिसंपन्नः विटपी वृक्षः संप्रकाशते तत्र विद्यमाने रथे उज्ज्वलस्कन्धकोविदारध्वजः विराजति । वैशब्दस्तत्रार्थे । एतेन भरतसेनैवेषेति सूचितम् ॥ १८ ॥

गो० टी०—भरतागमने किं चिह्नमित्यत्राह—एष इति । विटपी ध्वजचिह्नीभूतो वृक्षः प्रकाशते स्पष्टं दृश्यते । तमेव विशिनष्टि—विराजतीति । उद्गतस्कन्धः उन्नतस्कन्धः उन्नतस्कन्धत्वं लिखितवृक्षद्वारा, कोविदारध्वजः कोविदारवृक्षयुक्तो ध्वजः ॥ १८ ॥

१९ ] ति० टी०—भजन्त्येतद्देशमागच्छन्ति । सादिनो गृहीतसादिचिह्ना गजारोहाः ॥ १९ ॥

रा० टी०—भजन्तीति । सादिनः अश्वारोहाः एते शीघ्रगानश्वान् यथाकाममारुह्य भजन्ति अस्मिन् स्थाने तिष्ठन्तीत्यर्थः, एते सादिनो गजारोहा गजान् आरुह्य संहृष्टाः सन्तो भजन्ति तेऽपि तत्रैव तिष्ठन्तीत्यर्थः ॥ १९ ॥

गो० टी०—भजन्तीति । एते अश्वारोहाः अश्वानारुह्य भजन्ति इमं देशं प्राप्नुवन्तीत्यर्थः, सादिनः गजारोहाः ॥ १९ ॥

२० ] ति० टी०—अतः—गृहीतधनुषाविति ॥ २० ॥

रा० टी०—इदानीं भरतान्यसत्वे स्वकर्तव्यं प्रार्थयन्नाह—गृहीतेति । हे वीर! गृहीतधनुषावावां गिरिं श्रयावहे अथवा सन्नद्धौ धृतकवचौ उद्यतायुधौ आवामिहैव तिष्ठावः यथेच्छमाज्ञापयेत्यर्थः ॥ २० ॥

गो० टी०—गृहीतधनुषाविति । दुर्गं स्थित्वा युद्धार्थं गिरेः श्रयणम् ॥ २० ॥

२१ ] ति० टी०—अपि नौ वशमागच्छेदिति कामप्रवेदने लिङ् । महद्व्यसनं त्वया प्राप्तमित्युत्तरेणान्वयः ॥ २१ ॥

रा० टी०—नन्वायुधधारणादेः किं प्रयोजनमित्यत आह—अपीति । विदारः सज्जनहृदयविदारको ध्वजो यस्य स कः कस्यचित्संबन्धीत्यर्थः, रथः रणे नौ आवयोः वशमागच्छेत् यत्कृते यत्प्रयत्ने सति महद्व्यसनं रहस्यसंभाषणभङ्गजनितदुःखं त्वया सीतया च संप्राप्तमत एव मयापि संप्राप्तं यन्निमित्तं यद्राक्षसवधकारणाच्छाश्वतात् निरन्तरभोग्यात् राज्यात् भवान् च्युतः इह प्राप्तः तं भरतं पृथ्वीभारविस्तारकं किंच भीः भयमस्ति अस्मिन् कर्मणि तत्र रतं रतिर्यस्य तं सत्पुरुषेभ्योऽतिभयप्रदातारमित्यर्थः, राक्षसं द्रक्ष्याम द्रक्ष्यामः । श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

१ उद्गतेति गो. पाठः । २ धनुषौ चावामिति गो. पाठः । ३ श्रयावहे इति गो. पाठः । ४ द्रक्ष्यामेति रा. पाठः ।

त्वया राघव संप्राप्तं सीतया च मया तथा । यन्निमित्तं भवान्राज्याच्च्युतो राघव शाश्वतात्॥ २२ ॥
संप्राप्तोऽयमरिर्वीर भरतो वध्य एव [1]हि । भरतस्य वधे दोषं नाहं पश्यामि राघव ॥ २३ ॥
पूर्वापका[2]रिणं हत्वा न ह्यधर्मेण युज्यते । पूर्वापकारी भरतस्त्या[3]गे धर्मश्च राघव ॥ २४ ॥
एतस्मिन्निहते कृत्स्नामनुशाधि वसुंधराम् । अद्य पुत्रं हतं संख्ये कैकेयी राज्यकामुका ॥ २५ ॥
मया पश्येत्सुदुःखार्ता हस्तिभि[4]र्भग्नमिव द्रुमम् । कैकेयीं च वधिष्यामि सानुबन्धां सबान्धवाम्॥ २६ ॥
कलुषेणाद्य महता मेदिनी परिमुच्यताम् । अद्येमं संयतं क्रोधमसत्कारं च मानद ॥ २७ ॥
मोक्ष्यामि शत्रुसैन्येषु कक्षेष्विव हुताशनम् । अद्यै[5]वं चित्रकूटस्य काननं निशितैः शरैः ॥ २८ ॥
[6]छिन्दञ्छत्रुशरीराणि करिष्ये शोणितोक्षितम् । शरैर्निर्भिन्नहृदयान्कुञ्जरांस्तुरगांस्तथा ॥ २९ ॥

गो० टी०—अपीति । अपिः कामप्रवेदने नौ आवयोः॥२१॥

गो० टी०—अपि द्रक्ष्यामीत्यारभ्य श्लोकः ॥ २२ ॥

२२ ] ति० टी०—यन्निमित्तं यस्माद्धेतोः ॥ २२ ॥

गो० टी०—यन्निमित्तमिति । यन्निमित्तं यस्माद्भरताद्धेतोः ॥ २३ ॥

२३ ] ति० टी०—वध्यत्वेऽयमेव हेतुः ॥ २३ ॥

रा० टी०—दर्शने प्रयोजनमाह—समिति । भरतः इह मद्गमनजनितभाराद्यदि अरिः राक्षसादिः संप्राप्तः तर्हि स वध्य एव । ननु ब्रह्मचर्ये स्थितत्वात् कथमस्मत्कर्तृको वध इत्यत आह—हे राघव ! भरतस्य पृथ्वीभारविस्तारकस्य अपराधिनो जनस्य वधे अहं दोषं न पश्यामि ॥ २३ ॥

गो० टी०— भरतस्येति । त्यागे वधे ॥ २४ ॥

२४ ] ति० टी०—त्यागे वधे ॥ २४ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—पूर्वेति । पूर्वापकारिणं पौर्वकालिकापकारविशिष्टं हत्वा अधर्मेण न युज्यते अधर्मः ते न प्राप्नोतीत्यर्थः । एतस्य पूर्वापकारित्वं तु त्वन्यादिवधादिकर्तृत्वेन । ननु वधादिकर्तृत्वं प्रधानस्यैवेति सर्वे न पूर्वापराधिन इति तद्वधोऽनुचित एव तद्वधाभावे कथं तदधिपतेर्वधः इत्यत आह—पूर्वापकारिणः इं कामं भरतः पालयतः पुरुषस्यापि त्यागे वधाकरणे अधर्मः एतेन राक्षससैन्यं चेन्निहन्तव्यमेवेति सूचितम् ॥ २४ ॥

गो० टी०—पूर्वापकारीति । अपकारश्च न प्रामादिक इत्याह—त्यक्तधर्म इति ॥ २५ ॥

२५ ] ति० टी०—संख्ये युद्धे मया पश्येदित्युत्तरेणान्वयः 'मृधमास्कन्दनं संख्यं समीकं सांपरायिकम्' ॥ २५ ॥

रा० टी०—एतस्मिन्निति । हस्तिभिन्नं द्रुममिव यथा स्यात्तथा एतस्मिन् राक्षससैन्ये निहते सति कृत्स्नां वसुन्धरामनुशाधि पालय अद्य ससैन्यराक्षसवधोत्तरकाले राजि स्वकर्तृकपालनजनितदीप्तौ अकामुका इच्छारहिता अत एव दुःखार्ता राज्यपालकाभावहेतुकदुःखवती कैकेयी संख्ये सम्यक् ख्याः ख्यातिर्यस्य तस्मिन् सेवकोचितज्ञाने विद्यमानं तं पुत्रं भरतं मया सहैव पश्येत् एतेन ससैन्यराक्षसवधे वनवासस्य न प्रयोजनमिति व्यञ्जितम् । हशब्द एवार्थे । सार्धश्लोक एकान्वयी॥२५॥

गो० टी०—अद्येति । संख्ये युद्धे 'मृधमास्कन्दनं संख्यम् । इत्यमरः ॥ २६ ॥

२६ ] ति० टी०—सानुबन्धां सकुब्जाम् ॥ २६ ॥

रा० टी०—ननु वननिवासमन्तरा मन्थरायाः संतोषो न भवितेत्यत आह—कैकेयीमिति । सानुबन्धामाग्रहविशिष्टां सबान्धवां तद्बान्धवसहितां कैकेयीं मन्थरामहं वधिष्यामि तदा गृहं निवर्तयिष्यामीत्यर्थः ॥ २६ ॥

गो० टी०—कैकेयीमिति । वधिष्यामि हन्तेर्वधादेश आर्षः सानुबन्धां मन्थराद्यनुबन्धसहितां कलुषेण पापेन 'कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम्' इत्यमरः ॥ २७ ॥

२७–२९ ] ति० टी०—कलुषेण पापेन कैकेयीरूपेण असत्कारं कैकेयीकृतम् ॥ २७–२९ ॥

रा० टी०—राक्षसवधोऽवश्यं कर्तव्य इति बोधयन्नाह—कलुषेणेति । कलुषेण पापेन मेदिनी पृथ्वी परिमुच्यताम् । अर्धं पृथक् । भवदाज्ञामात्रेणैव सर्वं सेत्स्यतीति बोधयन्नाह—अद्येति । हे मानद ! असत्कारमसदपि कारयति तं किंच न सत्कारः रिपुसत्कृतिर्येन तं, किंच असतां कारो विनाशो येन तं संयतं निरोधितमिमं क्रोधं शत्रुसैन्येषु मोक्ष्यामि, तत्र दृष्टान्तः कक्षेषु हुताशनं वह्निमिव । अर्धद्वयमेकान्वयि ॥ २७ ॥

गो०टी०—अद्येति । संयतं स्तम्भितम् असत्कारं तिरस्कारं मोक्ष्यामि तत्कार्यं करिष्यामीत्यर्थः, शरव्याजेन मोक्ष्यामीति वार्थः । कक्षेषु शुष्कगुल्मेषु, मानदेत्यनेन मानं मा च्छैत्सीरित्युच्यते ॥ २८ ॥

रा० टी०—अद्येति । निशितैः शरैः शत्रुशरीराणि छिन्दन् सन् चित्रकूटस्य काननं शोणितोक्षितं कुञ्जरान् तुरगांश्च शरैर्निर्भिन्नहृदयान् करिष्ये ॥ २८ ॥ २९ ॥

गो० टी०—अद्यैतदिति । शत्रुशरीराणि भिन्दन् एतत् काननं शोणितोक्षितं करिष्य इत्यन्वयः ॥ २९ ॥ ३० ॥

१ मे इति गो. पाठः । २ कारिणां त्यागे नह्यधर्मो विधीयत इति गो. पाठः । ३ त्यक्ताधर्म इति गो. पाठः । ४ भग्नमिति गो. पाठः । ५ एतदिति गो. पाठः । ६ भिन्दन्निति गो. पाठः ।

श्वापदाः परिकर्षन्तु नरांश्च निहतान्मया । शराणां धनुषश्चाहमनृणोऽस्मिन्महावने ॥
ससैन्यं भरतं हत्वा भविष्यामि न संशयः ॥ ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

## सप्तनवतितमः सर्गः ।

भरतमुद्दिश्य संरब्धं लक्ष्मणं प्रति भरतनाशने दोषं प्रदर्श्य तच्छुद्धभावकथनेन रामो लक्ष्मणं सान्त्वयति । रामोक्तश्रवणेन स्वात्मनि लज्जमानो लक्ष्मणो वृक्षादवरुह्य वचनान्तरव्याजेनापत्रपां जुगोप । रामाश्रमोपसर्गं परिजिहीर्षुणा भरतेनादिष्टा सेना चित्रकूटाभित एव निविष्टोवास ।

सुसंरब्धं तु भरतं लक्ष्मणं क्रोधमूर्छितम् । रामस्तु परिसान्त्व्याथ वचनं चेदमब्रवीत् ॥ १ ॥
किमत्र धनुषा कार्यमसिना वा सचर्मणा । महाबले महोत्साहे भरते स्वयमागते ॥ २ ॥
पितुः सत्यं प्रतिश्रुत्य हत्वा भरतमाहवे । किं करिष्यामि राज्येन सापवादेन लक्ष्मण ॥ ३ ॥
यद्द्रव्यं बान्धवानां वा मित्राणां वा क्षये भवेत् । नाहं तत्प्रतिगृह्णीयां भक्ष्यान्विषकृतानिव ॥ ४ ॥

३० ] ति० टी०–भरतलक्ष्मणयोः समतया रामोपकरणत्वाल्लक्ष्मणस्य भरतविषय एवं वादः रामस्य तूभयोरपि स्वोपकरणत्वान्न क्वापि क्रोध इति तत्त्वमत्र ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

रा० टी०–श्वापदा इति । मया निहतान्नरान् नरसदृशान् राक्षसानित्यर्थः, श्वापदाः शृगालादयः परिकर्षन्तु अहं तु अस्मिन् महावने ससैन्यं सैन्यसहितं भरतं भीर्भयमास्ति अस्मिन्कर्मणि तत्र रतं रतिर्यस्य तं सत्पुरुषेभ्योऽतिभयप्रदातारं राक्षसगणमित्यर्थः, हत्वा शराणां धनुषश्च अनृणः ऋणरहितो भविष्यामि । सार्धश्लोक एकान्वयी ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

गो० टी०–शराणामिति । अहं यतः पूर्वं तत्र तत्र युद्धे शराणां धनुषश्च विषये अनृणः ऋणरहितः शत्रुकलेवराहारदानेन परिहृतऋणः स्वयं युद्धे क्वाप्यपराजितः शत्रुजयैकशील इत्यर्थः, अतः अस्मीत्यहमर्थेऽव्ययम् अस्मि अहं महामृधे भाविन्यपि युद्धे ससैन्यं भरतं हत्वा अनृण इत्यनुकर्षः अनृणो भविष्यामीत्यन्वयः वनवासात्पूर्वमपि शम्बरहतजयादिप्रतिपादनात् तत्र लक्ष्मणस्यापि सहभावावश्यंभावाद्युद्धसंभवः अस्मीति क्रियापदं वा तदा अभवमित्यर्थः यतः अनृणोऽभवमित्यर्थः त्वयापि मद्वीर्यं ज्ञातपूर्वमित्यर्थः ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥

१ ] ति० टी०–अथ तत्क्रोधमपनयति भगवांस्सर्वभूतभावज्ञस्तदागमनप्रयोजनकथनेन–सुसंरब्धमिति । भरतं प्रति सुसंरब्धमस्वस्थमपि युद्धोद्योगवन्तम् ॥ १ ॥

रा० टी०–रामोक्तिं वर्णयितुमुपक्रमते–सुसंरब्धमिति । भरतमवलोक्य सुसंरब्धं शत्रुभ्रमाद्युद्धोद्योगवन्तमत एव क्रोधमूर्छितं लक्ष्मणं परिसान्त्व्य इदं वचनमब्रवीत् ॥ १ ॥

गो० टी०–अथ कुपितपरिसान्त्वनं सप्तनवतितमे–सुसंरब्धमित्यादि । पूर्वं सुसंरब्धं सुतरां प्रीतं 'संरम्भः प्रणयेऽपि च' इत्यमरः । अथ तु तद्वैलक्षण्येन क्रोधमूर्छितं, यद्वा क्रोधमूर्छितत्वादेव सुसंरब्धं क्रोधकार्ययुद्धोन्मुख्ययुक्तं, तत्र हेतुः सपत्नीपुत्रत्वमित्याह–सौमित्रिमिति । यद्वा सुमित्रापुत्रत्वस्मारणपूर्वकमुक्तवानिति द्योत्यते रामस्तु इदं वचनं रामादन्यैर्वक्तुमशक्यमिति भावः ॥ १ ॥

२ ] ति० टी०–अत्र भरतविषये ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–किमिति । अत्र अस्मिन्समये धनुरादिना किं कार्यम् । ननु शत्रुनिवारणार्थमपेक्षितमित्यत आह–महोत्साहः अस्मद्दर्शनविषयकौत्सुक्यविशिष्टः महाबलो भरत एव स्वयमागतः एवेन शत्र्वागमनव्यवच्छेदः ॥ २ ॥

गो० टी०–किमिति । अत्र इदानीं परिवृढे महेष्वासे उचितविषयशरसंधातरि, तत्र हेतुः महाप्राज्ञ इति । स्वयं पुरुषप्रेरणं विना आगते भरते विषये धनुरादिभिः किं कार्यं न किमपीत्यर्थः । महाप्राज्ञो भरतोऽपि यदि धनुर्गृहीत्वा स्वयमागतः तदा किमस्माकं युद्धोद्योगेनेति भावः ॥ २ ॥

३ ] ति० टी०–पितुः सत्यं पालयिष्यामीति प्रतिज्ञाय सापवादेन पित्रा भरताय दत्तं रामोऽपहृतवानित्येवंरूपापवादसहितेन ॥ ३ ॥

रा० टी०–नन्वेवं चेद्राज्यपरिपालनार्थमयोध्यागमनोद्योगः कर्तव्य इत्यत आह–पितुरिति । आहवे राक्षससंग्रामार्थं पितुः सत्यं चतुर्दशवर्षपरिमितवनवासबोधकवाक्यं प्रतिश्रुत्य करिष्यामीति प्रतिज्ञाय सापवादेन निन्दासहितेन राज्येन

१ सौमित्रिमिति गो.पाठः। २ महेष्वासे महाप्राज्ञे इति गो.महाबलो महोत्साहो भरतः स्वयमागत इति रा.पाठः। ३ आगतमिति गो.पाठः। ४ भक्ष्यानिति गो.पाठः।

धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण । इच्छामि भवतामर्थे एतत्प्रतिशृणोमि ते ॥ ५ ॥
भ्रातॄणां संग्रहार्थं च सुखार्थं चापि लक्ष्मण । राज्यमप्यहमिच्छामि सत्येनायुधमालभे ॥ ६ ॥
नेयं मम मही सौम्य दुर्लभा सागराम्बरा । नहीच्छेयमधर्मेण शक्रत्वमपि लक्ष्मण ॥ ७ ॥
यद्विना भरतं त्वां च शत्रुघ्नं वापि मानद । भवेन्मम सुखं किंचिद्भस्म तत्कुरुतां शिखी ॥ ८ ॥
मन्येऽहमागतोऽयोध्यां भरतो भ्रातृवत्सलः । मम प्राणैः प्रियतरः कुलधर्ममनुस्मरन् ॥ ९ ॥
श्रुत्वा प्रव्राजितं मां हि जटावल्कलधारिणम् । जानक्या सहितं वीर त्वया च पुरुषोत्तम ॥ १० ॥
स्नेहेनाक्रान्तहृदयः शोकेनाकुलितेन्द्रियः । द्रष्टुमभ्यागतो ह्येष भरतो नान्यथाऽऽगतः ॥ ११ ॥

---

इदानीं राज्यग्रहणेन हत्वा निवर्त्य च भरतं किं करिष्यामि सापवादपुरुषस्य स्वजनादिप्राप्तिरपि दुःखदैवेति तात्पर्यम् ॥३॥

गो० टी०–तत्र युक्तिमाह–पितुरिति । सापवादेन पित्रा भरताय दत्तं राज्यं रामस्तं हत्वा गृहीतवान् इत्येवंरूपेणापवादेन युक्तम् ॥ ३ ॥

४ ] ति० टी०–क्षये नाशे कृत इति शेषः ॥ ४ ॥

रा० टी०–यदिति । बान्धवानां मित्राणां वा क्षये तदीयत्वेन स्वीकारिते राज्यादौ यद्द्रव्यं भवेत् उत्पद्येत तदहं न प्रतिगृह्णीयां, तत्र दृष्टान्तः विषकृतान् विषमिश्रितान् भक्ष्यानिव ऐतेनेदानीं राज्यग्रहणे दत्तापहारदोषोऽप्यापतिष्यतीति सूचितम् ॥ ४ ॥

गो० टी०–युक्त्यन्तरमाह–यदिति । बान्धवादीनां क्षये नाशे लब्धं यद्धनं तन्न गृह्णीयां नेच्छेयमित्यर्थः । विषकृतान्विषमिश्रद्रव्यकृतान् भक्षान् अपूपादीनिव ॥ ४ ॥

५ ] ति० टी०–एतदुक्तार्थजातमुद्दिश्य प्रतिशृणोमि प्रतिजाने ॥ ५ ॥

रा० टी०–वस्तुतस्तु स्वार्थं किंचिन्न स्वीकुर्म इत्याह–धर्ममिति । भवतामर्थे एव धर्मादिकमिच्छामि एतत्प्रतिशृणोमि प्रतिजानामि ॥ ५ ॥

गो० टी०–धर्ममिति ,अर्थं पृथिवीभिन्नं रत्नादिकं भवतां भ्रातॄणामर्थे भवन्निमित्तमित्यर्थः । एतत् उक्तरूपं प्रतिशृणोमि नातिवर्ते इत्यर्थः ॥ ५ ॥

६] ति० टी०–तमेवार्थं शपथेन द्रढयति–भ्रातॄणामिति । संग्रहार्थं सम्यक्पालनार्थम् अत एव तेषां सुखार्थं च ॥ ६ ॥

रा० टी०–तदेव द्रढयन् भङ्ग्यन्तरेणाह–भ्रातॄणामिति । संग्रहार्थं स्वसमीपस्थापनार्थं सुखार्थं च राज्यमिच्छामि सत्येन सत्यत्वेन बोधनार्थमायुधमालभे शपथविधिना स्पृशामि ॥ ६ ॥

गो० टी०–भ्रातॄणामिति । संग्रहार्थं धनसंचयार्थं सुखार्थं तत्सुखार्थं तत्तदभिमतवस्तुप्रदानेन तत्प्रीत्यर्थमित्यर्थः । अपिना तद्वृद्धिः समुच्चीयते राज्यमपि बहुच्छिद्रत्वेन अपरिग्राह्यतया ममानिष्टमपि आलभे स्पृशामि स्पृष्ट्वा शप इत्यर्थः । सत्येनेति मदुक्तं यथा सत्यं भवति तथा आयुधं स्पृशामीत्यर्थः ॥ ६ ॥

७–८ ] ति० टी०–दुर्लभेति नापि तु सुलभैव, किं तु तां नेच्छामि । शक्रत्वमपि नेच्छेयम्, इमां महीमेव नेच्छामीति नेत्यर्थः ॥ ७ ॥ ८ ॥

रा० टी०–नेति । इयं मही शक्रत्वं च मम दुर्लभा दुर्लभं च न यत् यस्मै इच्छेयं तत्तस्मै दद्यामित्यर्थः, तथापि अधर्मेण हेतुना नेच्छेयं यथेच्छं दातुमिति शेषः । दुर्लभेति लिङ्गविपरिणामेनान्यत्राप्यन्वेति ॥ ७ ॥

गो० टी०–नेति । नेच्छेयम् इमामिति शेषः ॥ ७ ॥

रा० टी०–भरतादिपरिपालनमेव नित्यं ममेप्सितमिति बोधयन्नाह–यदिति । यत्किंचित्सुखं भरतादीन् विना भरतादिसंबन्धशून्यं सत् भवेत् प्राप्तियोग्यतां प्राप्नुयात्तत्सुखं शिखी वह्निः भस्म कुरुताम् ॥ ८ ॥

गो० टी०–यदिति । शिखी अग्निः भरतादिसुखाननुगुणं यत्सुखं तदग्निर्भस्मीकरुतां न तन्मम ग्राह्यमित्यर्थः ॥ ८ ॥

९–११ ] ति० टी०–मन्येऽहमिति । द्रष्टुमभ्यागत इति मन्ये इत्यन्वयः । आगतः मातुलगृहादिति शेषः । कुलधर्म ज्येष्ठस्य राज्यमित्येवंरूपम् ॥ ९–११ ॥

रा० टी०–मन्य इति । अयोध्यामागतः स्नेहेनाक्रान्तहृदयो भरतः मां प्रव्राजितं श्रुत्वा शोकेनाकुलितेन्द्रियः सन् मां द्रष्टुमागतः इत्यहं मन्ये निश्चिनोमि, एतेनानयनार्थकत्वमपि तस्य सूचितम् । ननु आनयनार्थमागतस्य भरतस्येप्सितभङ्गे बलात्कारेणाप्यानेष्यतीति सावधानतया भवितव्यमित्यत आह–अन्यथा बलात्कारेण मां नेतुमागतः । श्लोकत्रयमेकान्वयि ॥ ९–११ ॥

गो० टी०–एवं लक्ष्मणचित्तानुसारेण परिहृत्य वस्तुतत्त्वमाह–मन्य इत्यादि । श्लोकत्रयमेकान्वयम् । द्रष्टुमभ्यागतो ह्येष भरतो नान्यथाऽऽगत इति मन्ये इत्यन्वयः अयोध्यामागतः मातुलगृहादिति शेषः भ्रातृवत्सलः भ्रातृषु वत्सलः स्नेही कुलधर्मं ज्येष्ठस्य राज्यपरिपालनरूपं स्नेहेन मद्विषयप्रीत्या आक्रान्तहृदयः तत्परवश इत्यर्थः, शोकेन मद्विवासजनितदुःखेन आकुलितेन्द्रियः व्याकुलहृदयः अन्यथा मद्विरोधितया नागतः ॥ ९–११ ॥

---

१ नेति गो. पाठः । २ प्राणादिति गो. पाठः । ३ पुरुषर्षभेति गो. पाठः ।

अम्बां च केकयीं रुष्य भरतश्चाप्रियं वदन् । प्रसाद्य पितरं श्रीमान्राज्यं मे दातुमागतः ॥ १२ ॥
प्राप्तकालं यथैषोऽस्मान्भरतो द्रष्टुमर्हति । अस्मासु मनसाप्येष नाहितं किंचिदाचरेत् ॥ १३ ॥
विप्रियं कृतपूर्वं ते भरतेन कदा नु किम् । ईदृशं वा भयं तेऽद्य भरतं यद्विशङ्कसे ॥ १४ ॥
नहि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः । अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥ १५ ॥
कथं नु पुत्राः पितरं हन्युः कस्यांचिदापदि । भ्राता वा भ्रातरं हन्यात्सौमित्रे प्राणमात्मनः ॥ १६ ॥
यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे । वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥ १७ ॥
उच्यमानो [6]हि भरतो मया लक्ष्मण तद्वचः । राज्यमस्मै प्रयच्छेति बाढमित्येव मंस्यते ॥ १८ ॥

१२ ] ति० टी०—रुष्य तद्विषयरोषं कृत्वेत्यर्थः । प्रसाद्य त्वद्दत्तं राज्यं मया प्राप्तम्, तन्मया रामाय दीयते, अतो न ते सत्यभ्रंशदोष इति तदनुमन्यस्वेति प्रसाद्य ॥ १२ ॥

रा० टी०—भरतस्नेहमेव दृढीकुर्वन्नाह—अम्बामिति । अप्रियं रामप्रव्राजनं मम प्रीतिविरोधीति वदन् सन् कैकेयीमम्बां रुष्य प्रव्राजनहेतुत्वेन किंचित्परुषमुक्त्वेत्यर्थः, अपितरं पितृरहितं मां प्रसादी प्रसादनशीलः सन् मे राज्यं दातुमागतः ॥ १२ ॥

गो० टी०—अम्बामिति । रुष्य संरुष्य ॥ १२ ॥

१३] ति० टी०—यथैष भरतस्तथा एतत्कर्तृकमस्मद्दर्शनयोग्यत्वं प्राप्तकालमुचितम् ॥ १३ ॥

रा० टी०—प्राप्तेति । प्राप्तः कालः अनेकविधोपदेशो यस्मात्तं मां प्राप्नोति शेषः, यथा यथावत् अस्मान् द्रष्टुमर्हति अस्मासु मनसापि अप्रियं बलात्कारेणायोध्यानयनं नाचरेत्, प्राप्तं कालं प्राप्तोपदेशो यथा भवति तथेति क्रियाविशेषणं वा१३

गो० टी०—प्राप्तकालमिति । एषः भरतः अस्मान् द्रष्टुमिच्छतीति यदेतत् प्राप्तकालं कालोचितमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—कृतपूर्वं यदद्य भरतं शङ्कसे ईदृशं वा भयं भयजनकं वाक्यं कृतपूर्वमुक्तपूर्वं वा यदद्य भरतं शङ्कसे इत्यन्वयः ॥ १४ ॥

रा० टी०—विप्रियमिति । यद्यस्माद्बलात्कारानयनाहेतोः अभयं भयनिवर्तकं मदीयत्वं विशङ्कसे तदीदृशं विप्रियं बलात्कारकरणं कदानु कदापि भरतेन कृतपूर्वं किं नेत्यर्थः ॥१४॥

गो० टी०—विप्रियमिति । ते तुभ्यं भरतेन कदानु कदाचित् विप्रियं कृतपूर्वं किम् ईदृशं भयं वा त्वदुक्तसदृशं भयजनकवाक्यं वा कृतपूर्वं किम् उक्तपूर्वं किं यस्त्वमद्य अत्रार्थे अत्रस्थाने वा भरतं शङ्कस इति योजना ॥ १४ ॥

१५ ] ति० टी०—अतस्ते त्वया भरतोऽप्रियं निष्ठुरं न वाच्यः, यतो भरतस्याप्रिये अप्रियवचने कृते उक्ते अहमप्यप्रियमुक्तः स्यां त्वया ॥ १५ ॥

रा० टी०—नहीति । निष्ठुरं परुषमप्रियं प्रियविरोधि वचः त्वया भरतो न वाच्यः । तत्र हेतुः—भरतस्य अप्रिये त्वत्कर्तृकाप्रियाचरणे कृते वचनेनापि संपादिते सति अहमप्रियं त्वद्विषयकप्रीत्यभाववान् स्याम् ॥ १५ ॥

गो० टी०—नहीति । त इति "कृत्यानां कर्तरि वा" इति षष्ठी । ते त्वया भरतः निष्ठुरम् अप्रियं च वचः न वाच्यः भरतस्य अप्रिये अप्रियवचने कृते उक्ते सति अहं हि अहमेवाप्रियमुक्तः स्यामिति संबन्धः स्वाश्रितविषये कृतापचारः स्वस्मिन्नेव कृत इति भगवदभिप्रायोऽनेन गम्यते ॥ १५ ॥

१६ ] ति० टी०—आत्मनः प्राणं प्राणसमं भ्रातरमित्यन्वयः ॥ १६ ॥

रा०टी०—भरतविरोधस्यायोग्यत्वं बोधयन्नाह—कथमिति । प्राणं प्राणवत्प्रियं पितरं पुत्राः कथं हन्युः दुरुक्त्या ताडयेयुः, भ्राता भ्रातरं वा कथं हन्यान्न संभवतीत्यर्थः ॥ १६ ॥

गो० टी०—पूर्वं दशरथो वध्यतामित्युक्तम् इदानीं भरतो वध्यत इति इत उपरि तूष्णीमवस्थाने कार्यहानिर्भविष्यतीति भयात् तां रौद्रीं बुद्धिं नियम्य निवर्तयति—कथं न्वित्यादिना । प्राणं प्राणभूतम् ॥ १६ ॥

१७] ति० टी०—इमां वाचं भरतवधविषयां प्रदीयतामिति वक्ष्यामीत्यन्वयः ॥ १७ ॥

रा० टी०—यदीति । यदि राज्यस्य हेतोः इमां सावधानभवनार्थिकामहितां वाचं प्रभाषसे तदा भरतं दृष्ट्वा अस्मै लक्ष्मणाय राज्यं प्रदीयतामिति भरतं वक्ष्यामि ॥ १७ ॥

गो० टी०—यदीति । यदि राज्यस्य हेतोः त्वम् इमां भरतहिंसारूपां वाचं प्रभाषसे तर्हि वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयतां, प्रदीयतामित्यनन्तरमितिकरणं द्रष्टव्यम् ॥१७॥

१८ ] ति० टी०—ननु त्वदुक्तेऽपि स न दद्यात्तत्राह—उच्यमान इति । प्रयच्छेत्युच्यमान इत्यर्थः, राज्यलिप्सा चेत्तदेव दापयिष्यामि, किं भ्रातृवधेनेत्याशयः ॥ १८ ॥

रा० टी०—ननु ततः किमित्यत आह—उच्यमान इति । अस्मै लक्ष्मणाय राज्यं प्रयच्छ देहि इति वचः मया उच्यमानो भरतः बाढमङ्गीकृतमित्येव मंस्यते क्षिप्रं दास्यतीत्यर्थः, एतेन अप्रियं नैव वक्तव्यमिति सूचितम् ॥ १८ ॥

गो० टी०—उच्यमान इति । भरतः अस्मै राज्यं प्रयच्छे-

१ परुषं चेति गो. पाठः । २ यादिति गो. पाठः । ३ इच्छतीति गो. पाठः । ४ नाप्रियमिति गो. पाठः । ५ योऽत्र शङ्कसे इति गो. पाठः । ६ ऽपीति गो. पाठः । ७ तत्त्वत इति गो. पाठः । ८ प्राप्नोति भाति ।

तथोक्तो धर्मशीलेन भ्रात्रा तस्य हिते रतः । लक्ष्मणः प्रविवेशेव स्वानि गात्राणि लज्जया ॥ १९ ॥
तद्वाक्यं लक्ष्मणः श्रुत्वा व्रीडितः प्रत्युवाच ह । त्वां मन्ये द्रष्टुमायातः पिता दशरथः स्वयम् ॥ २० ॥
व्रीडितं लक्ष्मणं दृष्ट्वा राघवः प्रत्युवाच ह । एष मन्ये महाबाहुरिहास्मान्द्रष्टुमागतः ॥ २१ ॥
अथवा नौ ध्रुवं मन्ये मन्यमानः सुखोचितौ । वनवासमनुध्याय गृहाय प्रतिनेष्यति ॥ २२ ॥
इमां चाप्येष वैदेहीमत्यन्तसुखसेविनीम् । पिता मे राघवः श्रीमान्वनादादाय यास्यति ॥ २३ ॥
एतौ तौ संप्रकाशेते गोत्रवन्तौ मनोरमौ । वायुवेगसमौ वीरौ जवनौ तुरगोत्तमौ ॥ २४ ॥
स एष सुमहाकायः कम्पते वाहिनीमुखे । नागः शत्रुंजयो नाम वृद्धस्तातस्य धीमतः ॥ २५ ॥

ति मया उच्यमानोऽपि अहृदयमुक्तोऽपि तत्त्वतः बाढमिति वक्ष्यत्येव तथा दास्यामीति वक्ष्यत्येवेत्यर्थः । एवकारेण तस्य पुनर्निरुत्यभाव उच्यते ॥ १८ ॥

१९ ] ति० टी०—लज्जया गात्राणि प्रविवेशेव अत्यन्तसंकुचितोऽभूदित्यर्थः । तस्य रामस्य हिते रतः ॥ १९ ॥

रा० टी०—तथेति । धर्मशीलेन भ्रात्रा तथोक्तः लक्ष्मणः लज्जया स्वानि गात्राणि प्रविवेश इव अत्याकुञ्चितस्वशरीरः सन् तस्थावित्यर्थः, एतेन सेनालिङ्गकानुमानेन भरते लक्ष्मणशङ्का जातेति ध्वनितम् ॥ १९ ॥

गो० टी०—तथेति । तस्य रामस्य हिते रतः नतु स्वार्थपरः अत एव मङ्गलाशासनपरत्वात् अस्थाने भयशङ्कया तथोक्तवानिति गम्यते गात्राणि अवयवान् प्रविवेशेव लज्जातिशयेनात्यन्तसंकुचितगात्रोऽभूदित्यर्थः ॥ १९ ॥

२० ] ति० टी०—एवमनुचितोक्तिलज्जापरिहारायोचितं वाक्यमाह—तदिति । भरतप्रसङ्गस्तु स्वदाशयपरिज्ञानायैव केवलमुपन्यस्त इत्याशयः ॥ २० ॥

टी०—तदिति । लक्ष्मणः तद्वाक्यं श्रुत्वा व्रीडितः सन् प्रत्युवाच, तद्वचनाकारमाह—त्वां द्रष्टुं पिता दशरथः एव स्वयमायातः इति भरतमहं मन्ये, एतेन अप्रियं प्रवदिष्यामीति सूचितम् ॥ २० ॥

गो० टी०—तद्वाक्यमिति । व्रीडया प्रसङ्गान्तरं प्रस्तौति—त्वामिति । लोके स्वोक्तिभङ्गेन व्रीडितः पुरुषः प्रस्तावान्तरं हि वदति आयात इति मन्य इत्यन्वयः ॥ २० ॥

२१ ] ति० टी०—एवं पितृप्रसङ्गो लक्ष्मणस्य व्रीडापरिहारमूल इति ज्ञात्वा तदेवानुकुर्वन्नाह—व्रीडितमिति । एष लक्ष्मणप्रस्तावितः पिता ॥ २१ ॥

रा० टी०—व्रीडितमिति । राघवो रामः प्रत्युवाच व्रीडादूरीकारकवचनमुच्चारयामासेत्यर्थः । तत्प्रवचनाकारमाह—अस्मान्द्रष्टुमागतः एष भरतः महाबाहुर्दशरथः सत्कारार्हत्वेन दशरथसदृश इति मन्ये तेनोचितमेव त्वयोक्तमिति सूचितम् २१

गो० टी०—भावज्ञो रामोऽपि औचित्येन लक्ष्मणकृतप्रस्तावं व्रीडाकरमेव प्रपञ्चयामासेत्याह—व्रीडितमिति । तदेवोच्यते—एष इत्यादिना ॥ २१ ॥

२२ ] ति० टी०—नौ सुखोचितौ मन्यमानः वनवासमनुध्याय कष्टं विचिन्त्य ॥ २२ ॥

रा० टी०—अथेति । नौ आवां सुखोचितौ मन्यमानः भरतः वनवासं वनवासक्लेशमनुध्याय संचिन्त्य गृहाय अथ प्रतिनेष्यति माङ्गलिकानयनानुकूलव्यापारं करिष्यति इत्यहं मन्ये २२

गो० टी०—नाविति द्विवचनं प्राधान्यात् मन्यमानः स्मरन् वनवासं वनवासक्लेशम् अनुध्याय अनुचिन्त्य ॥ २२ ॥

२३ ] ति० टी०—इमां सीताम् ॥ २३ ॥

रा० टी०—इमामिति । एषः भरतः मे वैदेहीं पिता इव आदाय आनयनानुकूलव्यापारं कृत्वा यास्यति । चशब्द इवार्थे॥२३॥

गो० टी०—इमामिति । अत्यन्तेत्यनेन तन्मात्रनयने हेतुरुक्तः ॥ २३ ॥

२४ ] ति० टी०—गोत्रवन्तौ प्रशस्तनामानौ प्रशस्तकुलौ वा । 'गात्रवन्तौ' इति पाठे प्रशस्तशरीरौ जवनौ वेगवन्तौ॥२४॥

रा०टी०—भरतशत्रुघ्नागमनचिह्नं बोधयन्नाह—एताविति । गोत्रवन्तौ प्रशस्तकुलौ वायुवेगसमौ वायुवेगसदृशवेगवन्तौ जवनौ जं मृत्युञ्जयत्वं वनतो रचयतः तौ स्वारोहकमृत्युप्रहारकलक्षणवन्तावित्यर्थः, अत एव न पौनरुक्त्यम्, एतौ तुरगोत्तमौ संप्रकाशेते 'जो ना मृत्युञ्जये जन्यां तातमात्रे जनार्दने' इति मेदिनी ॥ २४ ॥

गो० टी०—गोत्रवन्तौ प्रशस्तनामानौ यद्वा प्रशस्तकुलप्रसूतौ 'गोत्रं नाम्नि कुलेऽपि च' इति वैजयन्ती । वायुवेगसमौ वेगेन वायुसमावित्यर्थः । तुरगोत्तमौ राजौपवाह्यौ ॥ २४ ॥

२५ ] ति० टी०—पितुरागमने चिह्नान्तरमाह—स एष इति । कम्पते चलत्यागच्छति । अयं शत्रुंजयो रामेण छत्रय दत्तादन्य एव अत एव तातस्य शत्रुंजय इत्युक्तम् ॥२५॥

रा० टी०—इदानीं राजागमनचिह्नं बोधयन्नाह—स इति । सुमहाकायः अतिबृहच्छरीरः वृद्धः वयोधिकः शत्रुञ्जयो नाम तातस्य नागो हस्ती वाहिनीमुखे सेनाग्रे कम्पते शनैश्चलति राजाप्यागच्छतीत्यनुमीयते इति तात्पर्यम् ॥ २५ ॥

गो० टी०—स एष इति । कम्पते 'कपि चलने' इति धातुः मत्तगजस्वभावोऽयं वृद्धः उन्नतः धीमतः गजपरिपालनज्ञस्य तातस्य नागः शत्रुंजयः नतु मया छत्राय दत्तो मातुलाद्लब्धशत्रुंजय इत्यर्थः, लोकसत्कृतं लोकोत्तरमित्यर्थः ॥ २५ ॥

१ वेति गो. पाठः । २ वीरेति गो. पाठः ।

न तु पश्यामि तच्छत्रं पाण्डुरं लोकविश्रुतम् । पितुर्दिव्यं महाभाग संशयो भवतीह मे ॥ २६ ॥
वृक्षाग्रादवरोह त्वं कुरु लक्ष्मण मद्वचः । इतीव रामो धर्मात्मा सौमित्रिं तमुवाच ह ॥ २७ ॥
अवतीर्य तु सालाग्रात्तस्मात्स समितिंजयः । लक्ष्मणः प्राञ्जलिर्भूत्वा तस्थौ रामस्य पार्श्वतः ॥ २८ ॥
भरतेनाथ संदिष्टा संमर्दो न भवेदिति । समन्तात्तस्य शैलस्य सेना वासमकल्पयत् ॥ २९ ॥
अध्यर्धमिक्ष्वाकुचमूर्योजनं पर्वतस्य ह[३] । पार्श्वे न्यविशदावृत्य गजवाजिनराकुला[४] ॥ ३० ॥
सा चित्रकूटे भरतेन सेना धर्मं पुरस्कृत्य विधूय दर्पम् ।
प्रसादनार्थं रघुनन्दनस्य [५]विरोचते नीतिमता प्रणीता ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

---

## अष्टनवतितमः सर्गः ।

रामदर्शनेऽत्युत्कमना भरतः सपरिवारौ गुहशत्रुघ्नौ रामाश्रमान्वेषणे नियोज्यात्युत्कत्वात्स्वयमप्यमात्यसहितस्तदेवोपक्रममाणो रामसाहचर्यात्सीतालक्ष्मणयोर्धन्यत्वं भावयन्स्वयमपि तदनुचरत्वेन पादचार्येवाटन्कंचित्सालमूलमुपागतस्तद्दृर्तिर्धूमलिङ्गेन मानुषवसतिमनुमायैतादृक्कान्तारेऽन्येषां वसतिं निषिध्य रामाश्रम एवायमित्युत्कण्ठयाऽग्रतः ससार ।

**निवेश्य सेनां तु विभुः पद्भ्यां पादवतां वरः । अभिगन्तुं स काकुत्स्थमियेष गुरुवर्तकम् ॥ १ ॥**

---

२६ ] ति० टी०—इह छत्रविषये ॥ २६ ॥

रा० टी०—इदानीं राजानागमनचिह्नं बोधयन्नाह—नेति । लोकविश्रुतं सर्वत्र प्रसिद्धं पाण्डुरं तद्दिव्यं पितुः छत्रं न पश्यामि अत इह अस्मिन् विरुद्धदर्शनद्वये मे अतीव संशयो भवति॥२६॥

गो० टी०—इह पितरि विषये संशयो भवतीह मे इति राघवः प्रत्युवाचेति पूर्वेणान्वयः ॥ २६ ॥

२७ ] ति० टी०—इतीवेत्येव सौमित्रिं वृक्षाग्रस्थितम् । अथ वृक्षावरोहणमाज्ञापयति—वृक्षाग्रादिति । मद्वचः कुरु शङ्कां विहाय मद्वचसा सालावरोहणं कुर्वित्यर्थः ॥ २७ ॥

रा० टी०—वृक्षेति । हे लक्ष्मण ! वृक्षाग्रादवरोह इतीव इति वचः रामः सौमित्रिमुवाच ॥ २७ ॥

गो० टी०—वृक्षाग्रादिति । मद्वचः भरतविषये शान्तो भवेति मत्प्रचितं वचः प्रथममर्धमुत्तरार्धेन योजनीयम् ॥ २७ ॥

२८ ] ति० टी०—अवतीर्येति । रामाश्रयेत्यादिः ॥२८॥

रा० टी०—अवतीर्येति । शालाग्रादवतीर्य समितिंजयः संग्रामजेता लक्ष्मणः रामस्य पार्श्वतः पार्श्वे तस्थौ ॥ २८ ॥

गो० टी०—अवतीर्येति । समितिं परसैन्यं जयतीति समितिंजयः "संज्ञायां भृतॄवृजिधारिसहितपिदमः" इत्यत्र योगविभागेन खच् मुमागमश्च । समद्द इति यावत्, पार्श्वतः भ्रातर्यस्थाने भयशङ्कयेति भावः ॥ २८ ॥

२९ ] ति० टी०—रामाश्रमस्य संमर्दो न भवेदिति संदिष्टा आज्ञप्ता सेना शैलस्य समन्ताद्दूरभागे वासमकल्पयत् ॥ २९ ॥

रा० टी०—भरतेनेति । संमर्दो बाधा न भवेदिति भरतेनादिष्टा सेना शैलस्य समन्ताद्वासमकल्पयत् ॥ २९ ॥

गो० टी०—भरतेनेति । संमर्दः रामाश्रमस्य पीडा न भवेदिति भरतेन संदिष्टा आज्ञप्ता सेना तस्य शैलस्य समन्तात् नतु तदाश्रमसमीपे ॥ २९ ॥

३० ] ति० टी०—अध्यर्धं सार्धयोजनम् ॥ ३० ॥

रा० टी०—अध्यर्धमिति । पर्वतस्य पार्श्वे अध्यर्धं योजनं षट्षट्क्रोशानावृत्य गजवाजिरथाकुला इक्ष्वाकुचमूः न्यविशत् ३०

गो० टी०—अध्यर्धमिति । अधिकमर्धं यस्मिन् तत् अध्यर्धं योजनं सार्धयोजनमित्यर्थः पर्वतस्य पार्श्वे आवृत्य न्यविशत् मण्डलाकारेण स्थिता ॥ ३० ॥

३१ ] ति० टी०—धर्मं पुरस्कृत्य दर्पं विधूय प्रणीता शिक्षिता सेना ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

रा० टी०—सेति । धर्मं पुरस्कृत्य प्रवर्त्य दर्पं भटादीनां गर्वं विधूय त्याजयित्वा नीतिमता भरतेन प्रणीता शिक्षिता सा सेना चित्रकूटे रघुनन्दनस्य रामस्य प्रसादनार्थं विरोचते ३१

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

गो० टी०—सेति । चित्रकूटे चित्रकूटसमीपे नीतिमता सेनयोपरोधे रामस्य प्रसादो न स्यादिति नीतिज्ञेन भरतेन धर्मं पुरस्कृत्य विनीतवेषेण राजाभिमन्तव्य इति धर्ममङ्गीकृत्य दर्पं विधूय स्थितेन रघुनन्दनस्य प्रसादनार्थं प्रणीता आनीता सा सेना विराजते भाति स्म ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तनवतितमः सर्गः ॥९७॥

१ ] ति० टी०—पादवतां चरप्राणिनां वरः श्रेष्ठो विभुर्भरतः गुरुवर्तकं गुरुशुश्रूषापरम् ॥ १ ॥

---

१ अव्यक्तमिति गो. पाठः । २ बाहो इति गो. पाठः । ३ सेति गो. पाठः । ४ रथेति गो. पाठः । ५ विराजते इति गो. पाठः ।

निविष्टमात्रे सैन्ये तु यथोद्देशं विनीतवत् । भरतो भ्रातरं वाक्यं शत्रुघ्नमिदमब्रवीत् ॥ २ ॥
क्षिप्रं वनमिदं सौम्य नरसंघैः समन्ततः । लुब्धैश्च सहितैरेभिस्त्वमन्वेषितुमर्हसि ॥ ३ ॥
गुहो ज्ञातिसहस्रेण शरचापासिपाणिना । समन्वेषतु काकुत्स्थावस्मिन्परिवृतः स्वयम् ॥ ४ ॥
अमात्यैः सह पौरैश्च गुरुभिश्च द्विजातिभिः । सह सर्वं चरिष्यामि पद्भ्यां परिवृतः स्वयम् ॥ ५ ॥
यावन्न रामं द्रक्ष्यामि लक्ष्मणं वा महाबलम् । वैदेहीं वा महाभागां न मे शान्तिर्भविष्यति ॥ ६ ॥
यावन्न चन्द्रसंकाशं तद्द्रक्ष्यामि शुभाननम् । भ्रातुः पद्मविशालाक्षं न मे शान्तिर्भविष्यति ॥ ७ ॥
"सिद्धार्थः खलु सौमित्रिर्यश्चन्द्रविमलोपमम् । मुखं पश्यति रामस्य राजीवाक्षं महाद्युति ॥ ८ ॥
यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ । शिरसा प्रग्रहीष्यामि न मे शान्तिर्भविष्यति ॥ ९ ॥
यावन्न राज्ये राज्यार्हः पितृपैतामहे स्थितः । अभिषिक्तो जलक्लिन्नो न मे शान्तिर्भविष्यति ॥ १० ॥
कृतकृत्या महाभागा वैदेही जनकात्मजा । भर्तारं सागरान्तायाः पृथिव्या यानुगच्छति ॥ ११ ॥
सुशुभश्चित्रकूटोऽसौ गिरिराजसमो गिरिः । यस्मिन्वसति काकुत्स्थः कुबेर इव नन्दने ॥ १२ ॥

रा० टी०–भरतवृत्तान्तमाह–निवेश्येति । पादवतां वरः द्विपदानां श्रेष्ठः भरतः सेनां निवेश्य यथोचितं संस्थाप्य गुरुवर्तकं पितृवचनपरिपालकं राममभिगन्तुमियेष ॥ १ ॥

गो० टी०–अथ भरतस्य रामप्राप्तिरष्टनवतितमे सर्गे–निवेश्येत्यादि । गुरुवर्तकं गुरुवचनानुवर्तकम् ॥ १ ॥ २ ॥

२ ] ति० टी०–यथोद्देशममुकस्यामुकदिशि वास इति स्वाम्युपदिष्टप्रदेशमनतिक्रम्य निविष्टे सैन्ये इत्यर्थः । विनीतवद्विनीतार्हं ॥ २ ॥

रा० टी०–निविष्टेति । यथोद्देशं भरतोपदेशमनतिक्रम्य सैन्ये निविष्टमात्रे सति भरतः शत्रुघ्नमब्रवीत् ॥ २ ॥

३ ] ति० टी०–लुब्धा निषादाः । एभिरासन्नैर्गुहभृत्यैः॥३॥

रा० टी०–तद्वचनाकारमाह–क्षिप्रमिति । लुब्धैः निषादैः सहितैरेभिर्नरसंघैः स्वभृत्यसमूहैः इदं वनं क्षिप्रमन्वेषितुमर्हसि ॥ ३ ॥

गो० टी०–क्षिप्रमिति । लुब्धैः व्याधैः ॥ ३ ॥ ४ ॥

४ ] ति० टी०–ज्ञातिसहस्रेण परिवृत इत्यन्वयः ॥ ४ ॥

रा० टी०–गुह इति । ज्ञातिसहस्रेण परिवृतो गुहः अस्मिन्वने काकुत्स्थौ रामलक्ष्मणौ समन्वेषतु ॥ ४ ॥

५–६ ] ति०टी०–चरिष्यामि अहमन्वेषयन्निति शेषः । पौरैः सह वर्तमानैरमात्यैर्द्विजातिभिः सह वर्तमानैर्गुरुभिश्च परिवृतः ॥ ५ ॥ ६ ॥

रा० टी०–अमात्यैरिति । अमात्यादिभिः परिवृतः स्वयमहं सर्वं वनं चरिष्यामि ॥ ५ ॥

गो० टी०–अमात्यैरिति । अमात्यैः सह पौरैः सह गुरुभिः द्विजातिभिश्च परिवृतः पद्भ्यां सर्वं वनं चरिष्यामीति संबन्धः ॥ ५ ॥

रा० टी०–यावदिति । यावन्न द्रक्ष्यामि तावत्कालं मे शान्तिर्न भविष्यति ॥ ६ ॥

गो० टी०–यावदिति । शान्तिः दुःखशान्तिः मङ्गलं वा । 'शान्तिः प्रशममङ्गले' इति वैजयन्ती ॥ ६ ॥ ७ ॥

७ ] ति० टी०–शुभाननमिति कर्मधारयः । शान्तिर्दुःखशान्तिः ॥ ७ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–यावदिति । चन्द्रसंकाशं चन्द्रसदृशम् ॥ ७ ॥

८ ] ति० टी०–चन्द्रविमलोपमं विमलचन्द्रसदृशम् ॥८॥

रा० टी०–सिद्धार्थ इति । यः सौमित्रिर्लक्ष्मणः रामस्य मुखं पश्यति स सिद्धार्थः ॥ १० ॥

गो० टी०–सिद्धार्थ इति । चन्द्रविमलोपमं निर्मलचन्द्रसदृशम् ॥ १० ॥

९–११ ] ति० टी०–पार्थिवव्यञ्जनं रेखाध्वजकुलिशातपत्रादि । तावन्मे न शान्तिरित्यन्वयः ॥ ९–११ ॥

रा० टी०–यावदिति । पार्थिवव्यञ्जनान्वितौ पार्थिवव्यञ्जनैः पार्थिवचिह्नैः रेखाध्वजकुलिशातपत्रादिभिः अन्वितौ भ्रातुश्चरणौ यावच्छिरसा न प्रग्रहीष्यामि तावच्छान्तिर्न भविष्यति॥८॥

रा० टी०–यावदिति । यावन्नाभिषिक्तः तावच्छान्तिर्न॥९॥

गो० टी०–यावदिति । पार्थिवव्यञ्जनान्वितौ वज्रध्वजारविन्दाङ्कुशसुधाकलशादिमहाराजलक्षणयुक्तौ चरणौ यावन्न शिरसा धारयिष्यामि तावत्पर्यन्तं मे शान्तिर्न भविष्यति यदा रामः स्वयोग्यसिंहासनाधिराज्यमौलिं धृत्वा मम योग्यं श्रीपादाख्यमौलिं ददाति तदा मे सकलदुःखशान्तिर्भविष्यतीति भावः ॥ ८ ॥ ९ ॥

रा० टी०–कृतकृत्येति । या वैदेही सागरान्तायाः पृथिव्याः भर्तारमनुगच्छति सा कृतकृत्या कृतार्था ॥ ११ ॥

गो० टी०–कृतकृत्येति । महाकुलप्रसूता वैदेही महाभागा महाभाग्यवती कृतकृत्या कृतार्था च । तत्फलं तद्धेतुं चाह–भर्तारमिति । पृथिव्या भर्तारमित्यन्वयः ॥ ११ ॥

१२ ] ति० टी०–गिरिराजसमो हिमवत्सदृशः ॥ १२ ॥

१ धारिणेति गो. पाठः । २ वनमिति गो. पाठः । ३ द्रक्ष्यामि शुभमाननमिति गो. पाठः । ४ पलाशाक्षमिति गो. पाठः । ५ श्लोकोऽयमेकादशस्य स्थाने गो. रा. पाठे । ६ धारयिष्यामीति गो. पाठः । ७ सुभग इति गो. पाठः । ८ राजोपम इति गो. पाठः ।

कृतकार्यमिदं दुर्गं[1] वनं व्यालनिषेवितम् । यदध्यास्ते महाराजो[2] रामः शस्त्रभृतां वरः ॥ १३ ॥
एवमुक्त्वा महाबाहुर्भरतः[3] पुरुषर्षभः । पद्भ्यामेव महातेजा[4] प्रविवेश महद्वनम् ॥ १४ ॥
स तानि द्रुमजालानि जातानि गिरिसानुषु । पुष्पिताग्राणि मध्येन जगाम वदतां वरः ॥ १५ ॥
स गिरेश्चित्रकूटस्य सालमारुह्य[5] सत्वरम् । रामाश्रमगतस्याग्नेर्ददर्श ध्वजमुच्छ्रितम् ॥ १६ ॥
तं दृष्ट्वा भरतः श्रीमान्मुमोद[6] सहबान्धवः । अत्र राम इति ज्ञात्वा गतः पारमिवाम्भसः ॥ १७ ॥

स चित्रकूटे तु गिरौ निशम्य रामाश्रमं पुण्यजनोपपन्नम् ।
गुहेन सार्धं त्वरितो जगाम पुनर्निवेश्यैव चमूं महात्मा ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

---

रा० टी०—स्विति । यस्मिन् काकुत्स्थो रामो वसति सोऽसौ चित्रकूटः सुशुभः अत्यन्तं शुभकारकः ॥ १२ ॥

गो० टी०—सुभग इति । असौ चित्रकूटः सुभगः भाग्यशाली गिरिराजोपमश्च गिरिराजोपमः हिमवत्पर्वतसदृशः नन्दने नन्दयतीति नन्दनं चैत्ररथं सुभग इत्यादि सुभगः प्रदेशान्तरेभ्योऽतिरमणीयः सुभगः सर्वेषामुद्देश्यतमः अत्र हेतुः यस्मिन्नित्युत्तरार्धे वक्ष्यति । चित्रकूटः स्वभावतोऽपि रमणीयः असौ गिरिः अयोध्यां परित्यज्यापि रामेण आदरणीयः, यद्वा गिरिराजोपमः गिरिराजोऽत्र श्रीनिवाससान्निध्यस्थानभूतो वेङ्कटाचलः, तत्र उभयत्र हेतुमाह—यस्मिन्निति । काकुत्स्थः अयोध्याधिपतिः स्वदेशं विहाय अपरिचिते यस्मिन् वसति तत्रानुरूपं दृष्टान्तमाह—कुबेर इति । चैत्ररथवासयोग्यः कुबेरः इन्द्रोद्याने नन्दन इव, यद्वा स्वगृहं विहाय स्वगृहोद्याने विहरमाणो वैश्रवण इव वसतीत्यर्थः । इक्ष्वाकूणामियं भूमिः सशैलवनकानना इत्युक्तेश्चित्रकूटोऽपि रामविषयो हि नन्दनोपमानेन रामस्य चित्रकूटे भोग्यताप्रकर्ष उच्यते । काकुत्स्थः ककुत्स्थकुलोद्भवः यथा स्वकुलमकृतार्थयत् तथा स्ववासस्थलमप्यकृतार्थयदिति भावः, यद्वा कुबेर इव नन्दने भूवाचकेन कुशब्देन जगदुपलक्ष्यते बेरं शरीरं कुबेरो जगच्छरीरः परमात्मा नन्दन इव वैकुण्ठनन्दनवन इव ॥ १२ ॥

१३-१४ ] ति० टी०—कृतकार्यं कृतार्थम् स्थावरत्वमोचकरामपादरजोव्याप्ततयेति भावः । दुर्गं दुष्प्रवेशम् । व्यालाः सर्पाः ॥ १३ ॥ १४ ॥

रा० टी०—कृतेति । यन्महाराजो रामः अध्यास्ते तदिदं वनं कृतकार्यम् ॥ १३ ॥

गो० टी०—कृतकार्यमिति । कृतकार्यं कृतार्थं दुर्गं दुष्प्रवेशं व्यालनिषेवितं दुष्टसर्पाश्रितम् । कृतकृत्यत्वे हेतुः—यदित्यादि । वनं दुर्गमिति स्थलस्वभावेन वासानर्हत्वमुक्तं, महातेजा इत्यादिना रामवैभवापेक्षयापि वासानर्हत्वमुच्यते ॥ १३ ॥

रा० टी०—एवमिति । महाबाहुर्भरतः एवमुक्त्वा पद्भ्यामेव महद्वनं प्रविवेश ॥ १४ ॥

गो० टी०—एवमिति । महातेजा इत्यादिना पद्भ्यां गमनानर्हत्वमुच्यते ॥ १४ ॥

१५ ] ति० टी०—मध्येनेत्येनबन्तम् तद्योगे तानीति द्वितीया । द्रुमजालानां मध्ये इत्यर्थः ॥ १५ ॥

रा० टी०—स इति । गिरिसानुषु जातानि द्रुमजालानि द्रुमसमूहान् मध्येन वदतां वरो भरतः जगाम ॥ १५ ॥

गो० टी०—स इति । द्रुमजालानि मध्येन द्रुमजालानां मध्येनेत्यर्थः, मध्यशब्दस्य दिग्वाचित्वात् "एनपा द्वितीया" इति द्वितीया । वदतां वर इत्यनेन रामसन्निधौ वक्तव्यविशेषं चिन्तयन्नेव जगामेत्युक्तम् ॥ १५ ॥

१६ ] ति० टी०—अग्नेर्ध्वजं धूमम् । 'रामाश्रमगतस्यान्ते' इति पाठे तदाश्रमगतस्य सालस्यान्ते उपरि बद्धमुच्छ्रितं ध्वजं कोविदारध्वजं दृष्ट्वेत्यर्थः । धूमदर्शनस्य पूर्वमेव जातत्वेन तस्यानिर्णायकत्वादिति कतकः ॥ १६ ॥

रा० टी०—स इति । स भरतः चित्रकूटस्य सालं वृक्षविशेषमारुह्य रामाश्रमगतस्य अग्नेर्ध्वजं धूमं ददर्श ॥ १६ ॥

गो० टी०—स इति । अग्नेर्ध्वजं धूमं पूर्वं धूमाग्रदर्शनम् अधुना समीपत्वात्तन्मूलदर्शनमिति न पुनरुक्तिः ॥ १६ ॥

१७ ] ति० टी०—तं ध्वजम् ॥ १७ ॥

रा० टी०—तमिति । तं धूमं दृष्ट्वा अत्रैव राम इति ज्ञात्वा अम्भसोऽगाधजलस्य पारं गत इव मुमोद ॥ १७ ॥

गो० टी०—तमिति । मुमोह मोहसदृशं पारवश्यं प्राप 'मुमोद' इति च पाठः अम्भसः समुद्रस्य पारं गत इव अभूदिति शेषः ॥ १७ ॥

१८ ] ति० टी०—पुण्यजनास्तपस्विनः । पुनर्निवेश्यान्वेषणनियोजितामपि चमूं स्थापयित्वा । गुहेनेति प्रधानजनोपलक्षणम् ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

रा० टी०—स इति । स भरतः पुण्यजनैर्महात्मभिः उपपन्नं

---

१ दुर्गमिति गो. रा. पाठः । २ महातेजा इति गो. पाठः । ३ महातेजा इति गो. पाठः । ४ महाबाहुरिति गो. पाठः । ५ आसाद्य पुष्पितमिति गो. पाठः । ६ प्रमोदेति गो. पाठः ।

## नवनवतितमः सर्गः ।

मातॄरानेतुं वसिष्ठं संदिशन्प्रचलन्भरतस्तत्तदाश्रमलिङ्गानि शत्रुघ्नाय दर्शयन्पर्णशालामाससाद । रामादीन्दृष्ट्वा तेषां पादाभिवादने प्रयतमानोऽपि भरतस्तापसवेषदर्शनेन बाष्पाकुलनयनोऽबन्धुरेऽपि स्खलन्पपात । अभिवादयमानौ भरतशत्रुघ्नौ रामः समालिलिङ्ग । सुमन्त्रगुहरामलक्ष्मणाः समाजग्मुः ।

निविष्टायां तु सेनायामुत्सुको भरतस्तैतः । जगाम भ्रातरं द्रष्टुं शत्रुघ्नमनुदर्शयन् ॥ १ ॥
ऋषिं वसिष्ठं संदिश्य मातॄर्मे शीघ्रमानय । इति त्वरितमग्रे स जगाम गुरुवत्सलः ॥ २ ॥
सुमन्त्रस्त्वपि शत्रुघ्नमदूरादन्वपद्यत । रामदर्शनजस्तर्षो भरतस्येव तस्य च ॥ ३ ॥
गच्छन्नेवाथ भरतस्तापसालयसंस्थिताम् । भ्रातुः पर्णकुटीं श्रीमानुटजं च ददर्श ह ॥ ४ ॥

---

सेवितं रामाश्रमं निशम्य चमूमन्वेषणार्थं सहागतसैन्यं पुनर्निवेश्य संस्थाप्य गुहेन सार्धं त्वरितः सन् जगाम ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामयणशिरोमणावयोध्याकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

गो० टी०–स इति । निशम्य दृष्ट्वा दीर्घाभाव आर्षः, तत्समीपस्थजनेभ्यः श्रुत्वेति वार्थः अत एव पुण्यजनोपपन्नमित्युच्यते । गुहेनेति प्रधानजनोपलक्षणपरं चमूं पुनर्निवेश्य अन्वेषणार्थमागतां चमूमपि स्थापयित्वा महात्मा दृढाध्यवसायः ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टनवतितमः सर्गः ॥ ९८ ॥

१ ] ति० टी०–निविष्टायामिति । शत्रुघ्नमिति प्रतियोगे द्वितीया । शत्रुघ्नस्य रामाश्रमप्रत्यासत्तिचिह्नादि दर्शयन्नित्यर्थः ॥ १ ॥

रा० टी०–सेनासंनिवेशानन्तरकालिकं वृत्तान्तमाह—निविष्टायामिति । सेनायां निविष्टायां संस्थापितायां सत्यामुत्सुकः भ्रातृदर्शनविषयकोत्साहवान् भरतः शत्रुघ्नमनुदर्शयन् भ्रातरं द्रष्टुं जगाम "दृशेश्च" इति कर्मत्वं शत्रुघ्नस्य ॥ १ ॥

गो० टी०–अथ भरतस्य रामसंगम एकोनशततमे–निविष्टायामित्यादि । निविष्टायां सेनायां स्वयं तत्र क्षणं निविष्टः सन् उत्सुकः साभिलाषः शत्रुघ्नमनुदर्शयन् अनुः कर्मप्रवचनीयः शत्रुघ्नस्य रामाश्रमसामीप्यचिह्नानि प्रदर्शयन् जगाम ॥ १ ॥

२ ] ति० टी०–आनयेति संदिश्य स्वयं त्वरितः सन्नग्रे जगाम न तु मातॄः प्रतीक्ष्य स्थित इत्यर्थः ॥ २ ॥

रा० टी०–ऋषिमिति । मे मातॄः शीघ्रमानयेति वसिष्ठं संदिश्य संप्रार्थ्य गुरुवत्सलः रामविषयकातिप्रीतिमान् स भरतः त्वरितमग्रे जगाम ॥ २ ॥

गो० टी०–ऋषिमिति । मातॄर्मे शीघ्रमानयेति ऋषिं वसिष्ठं संदिश्य जगामेत्यन्वयः, अनेन रामावासं निश्चित्य पश्चादानेष्यामीति धिया महासेनानिवेशे मातॄर्निवेशितवानिति गम्यते ॥ २ ॥

३ ] ति० टी०–रामदर्शनजस्तर्षो रामदर्शनमुद्दिश्य जनितोऽभिलाषः । स भरतवत्तस्य च शत्रुघ्नस्य सुमन्त्रस्य च । अतः शत्रुघ्नं भरतमनुधावन्तमदूरात्तत्समीपं यथा भवति तथान्वपद्यतान्वधावत् ॥ ३ ॥

रा० टी०–सुमन्त्र इति । शत्रुघ्नमदूराच्छत्रुघ्नसमीपवर्तित्वं यथा भवति तथा सुमन्त्रोऽप्यन्ववर्तत, तत्र हेतुः–रामदर्शनजः ईप्सितरामदर्शनजनितः तर्षोऽत्यभिलाषः भरतस्येव तस्य सुमन्त्रस्याप्यस्तीति शेषः । चोऽप्यर्थे ॥ ३ ॥

गो० टी०–तत्पश्चात् शत्रुघ्नः तत्पश्चात्सुमन्त्रश्च गत इत्याह–सुमन्त्र इति । सुमन्त्रोऽप्यदूरात् समीपे शत्रुघ्नमन्वपद्यत अन्वगच्छत् । तत्र हेतुमाह–रामेति । रामदर्शनजस्तर्षः रामदर्शनमुद्दिश्य जनितोऽभिलाषः 'कामोऽभिलाषस्तर्षश्च' इत्यमरः । तस्य शत्रुघ्नस्य चकारात् सुमन्त्रस्य चास्ति हीत्यर्थः । सुमन्त्रस्य त्वरितागमनाद्वसिष्ठ एव मात्रानयने नियुक्त इत्यावेदितम् ॥ ३ ॥

४ ] ति० टी०–तापसानामालयैः सह संस्थिताम्, यद्वा तापसालयसमानसंस्थानां पर्णकुटीं पर्णप्राधान्येन निर्मितां कुटीं शालाम् । इयं दर्शनार्थमागततपस्व्यादिसंव्यवहारप्रयोजना उटजबहिःस्था, उटजं सभित्तिकवाटं दारुबद्धं गृहं सीतानिवेशार्थं कृतम् ॥ ४ ॥

रा० टी०–गच्छन्निति । गच्छन्नेव भरतस्तापसालयसंस्थितां तापसकुटीमध्ये वर्तिनीं भ्रातुः पर्णकुटीं पत्रप्रचुरशालामुटजं गृहान्तर्वर्ति काष्ठादिनिर्मितोन्नतस्थानविशेषं च ददर्श ॥ ४ ॥

गो० टी०–गच्छन्निति । तापसालयसंस्थितां तापसालयानां मध्ये स्थितां तापसालयसमानसंस्थानामिति वार्थः पर्णकुटीं अग्न्यगारभूतां पर्णशालाम् उटजं दिदृक्षया समागतैः तापसैः सह सुखावस्थानार्थमुपकल्पितां पर्णशालां, यद्वा भ्रातुः पर्णकुटीं सीतया सह शयनार्थं निर्मितां पर्णशालां श्रीमान् तादात्विकप्रीतिजनितकान्तिमान् उटजं दिवावस्थानार्थं कल्पितं

---

१ तथेति गो० पाठः । २ अन्ववर्ततेति रा० पाठः ।

शालायास्त्वग्रतस्तस्या ददर्श भरतस्तदा । काष्ठानि चावभग्नानि पुष्पाण्य[1]पचितानि च ॥ ५ ॥
स लक्ष्मणस्य रामस्य ददर्शाश्रममे[2]युषः । कृतं वृक्षेष्वभिज्ञानं कुशचीरैः क्वचित्क्वचित् ॥ ६ ॥
ददर्श [3]भवने तास्मिन्महतः संचयान्कृतान् । मृगाणां महिषाणां च करीषैः शीतकारणात् ॥ ७ ॥
गच्छन्नेव महाबाहुर्द्युतिमान्भरतस्तदा । शत्रुघ्नं चाब्रवीद्धृष्टस्तानमात्यांश्च सर्वशः ॥ ८ ॥
मन्ये प्राप्ताः स्म तं देशं भरद्वाजो यमब्रवीत् । नातिदूरे हि मन्येऽहं नदीं मन्दाकिनीमितः ॥ ९ ॥
उच्चैर्बद्धानि चीराणि लक्ष्मणेन भवेदयम् । अभिज्ञानकृतः पन्था विकाले गन्तुमिच्छता ॥ १० ॥
[4]इतश्चोदात्तदन्तानां कुञ्जराणां तरस्विनाम् । शैलपार्श्वे परिक्रान्तमन्योन्यमभिगर्जताम् ॥ ११ ॥

पर्णमण्डपं, यद्वा पर्णशालां महाशालाम् उटजं तन्मध्यवर्ति सद्वादस्थानास्थानं, तथैव वक्ष्यति ददर्श महतीमित्यादिना ददर्श चिह्नैरुत्प्रेक्षितवान् ॥ ४ ॥

५ ] ति० टी०—तस्याः शालायाः पर्णकुटीसंज्ञायाः । अवभग्नानि होमार्थमपचितानि बल्यर्थं संपादितानि ॥ ५ ॥

रा० टी०—शालाया इति । अवभग्नानि हवनोपयोगितया छिन्नानि काष्ठानि अपचितानि पूजाङ्गत्वेन संपादितानि पुष्पाणि च शालाया अग्रतः अग्रे ददर्श ॥ ५ ॥

गो० टी०—चिह्नान्येवाह—शालाया इत्यादिना । काष्ठानि रात्रौ प्रकाशाय ज्वलनीयानि, पुष्पाणि पूजार्थानि ॥ ५ ॥

६ ] ति० टी०—एयुषः आङ्पूर्वादिणः क्वसुः । कुशैर्वल्कलैश्च मार्गपरिज्ञानार्थं कृतमभिज्ञानं चिह्नं ददर्श ॥ ६ ॥

रा० टी०—स इति । आश्रममेयुषः नदीसमीपादिदेशाद्गमनकर्तुः लक्ष्मणस्य रामस्य च कृतं कुशचीरैः दर्भैः पटखण्डैश्च वृक्षेषु क्वचित्क्वचित्कस्यांचित्कस्यांचिच्छाखायां कृतमभिज्ञानं मार्गबोधकचिह्नं ददर्श ॥ ६ ॥

गो० टी०—स लक्ष्मणस्येति । ईयुषः जलाशयादाश्रमं गच्छतो रामस्य "उपेयिवाननाश्वाननूचानश्च" इत्यत्र नात्रोपसर्गस्तन्त्रम् अन्योपसर्गपूर्वान्निरुपसर्गाच्च भवत्येवेति वृत्तिकृतोक्तत्वादनुपसर्गपूर्वादिणः क्वसुः कुशादिभिः कृतम् अभिज्ञानं चिह्नम् अन्योन्यस्य गमनागमनपरिज्ञानार्थं कृतं चिह्नं ददर्श ॥ ६ ॥

७ ] ति० टी०—शीतकारणाच्छीतनिवृत्तिकारणात्तद्रूपप्रयोजनार्थं मृगादीनां करीषैः कृतान्संचयान्ददर्श । चैत्रशुक्लदशम्यां प्रस्थानेन तत्र काले वैशाखान्तमपररात्रे शीतस्य जायमानत्वात् ॥ ७ ॥

रा० टी०—ददर्शेति । तस्मिन्प्रत्यक्षीभूते भवने पर्णशालासमीपे शीतकारणाच्छीतनिवारणहेतोः मृगानां महिषाणां च करीषैः कृतान् संचयान् ददर्श 'गोविट् गोमयमस्त्रियाम् । तत्तु शुष्कं करीषोऽस्त्री ' इत्यमरः ॥ ७ ॥

गो० टी०—ददर्श चेति । करीषैः कृतान् संचयानित्यन्वयः, शीतकारणात् शीतनिवारणार्थम् ॥ ७ ॥

८ ] ति० टी०—एवमेतान्पदार्थान्पश्यन्गच्छन्नेव शत्रुघ्नमब्रवीत् ॥ ८ ॥

रा० टी०—गच्छन्निति । तदा रामस्थितिबोधकचिह्नादिदर्शनोत्तरकाले हृष्टो महाबाहुर्भरतः शत्रुघ्नं सर्वशोऽमात्यांश्च अब्रवीत् । सर्वश इत्यनेन सुमन्त्रातिरिक्तानामप्यागमनं सूचितम् ॥ ८ ॥

गो० टी०—गच्छन्निति । अमात्यान् सुमन्त्रं बहुवचनं पूजार्थं, यद्वा अनेनैवावगम्यते अन्येऽप्यमात्याः सुमन्त्रेण सहागता इति ॥ ८ ॥

९ ] ति० टी०—मन्दाकिनीमित इति । आश्रम इति शेषः ॥ ९ ॥

रा० टी०—वृद्धवचनाकारमाह—मन्ये इति । यं देशं भरद्वाजोऽब्रवीत् तं देशं वयं प्राप्ताः स्म इति मन्ये असाधारणलक्षणैर्निश्चिनोमि अत एव इतः अस्मात्स्थानान्नातिदूरे समीप एवेत्यर्थः, मन्दाकिनीं नदीं मन्ये निश्चिनोमि ॥ ९ ॥

गो० टी०—मन्य इति । इतः अस्मात्प्रदेशात् मन्दाकिनीं नातिदूरे मन्ये प्रत्यासन्नां मन्य इत्यर्थः, अतः यं देशं भरद्वाजोऽब्रवीत् तं देशं प्राप्ताः स्मेति मन्ये । प्राप्ताः स्मेत्येव वक्तव्ये मन्य इत्युक्त्या अयमर्थोऽवगम्यते—कैकेय्या राजनित्याहृतस्य भाग्यहीनस्य मे नेयं तद्देशप्राप्तिर्भवितुमर्हति किंतु भ्रमस्वप्नादिष्वन्यतमोऽयमिति ॥ ९ ॥

१० ] ति० टी०—यत उच्चैर्बद्धानि चीराणि तस्माद्विकाले मार्गस्य स्पष्टदर्शनायोग्ये काले जलाहरणाद्यर्थं गन्तुमिच्छता लक्ष्मणेनाभिज्ञानकृतः कृताभिज्ञान आश्रमपन्था अयमेव भवेत् ॥ १० ॥

रा० टी०—लक्षणान्येवाह—उच्चैरिति । यतः उच्चैः अत्युन्नतवृक्षप्रदेशे बद्धानि चीराणि लक्ष्यन्त इति शेषः अतः विकाले अन्धकारादिसमये गन्तुं जलाद्याहरणार्थमिति शेषः, इच्छता लक्ष्मणेन अभिज्ञानकृतः लक्ष्मणकर्तृकचिह्नज्ञाप्यः पन्थाः रामाश्रमप्रापको मार्गः अयं भवेत् ॥ १० ॥

गो० टी०—उच्चैरिति । उच्चैर्बद्धानि चीराणि उन्नतप्रदेशे चीराणि बद्धानि दृश्यन्ते तस्मादयं पन्थाः विकाले अकाले सायंकालादौ गन्तुमिच्छता फलमूलजलादिसंग्रहणार्थं गन्तुमिच्छता लक्ष्मणेनाभिज्ञानकृतः कृताभिज्ञानो भवेत् अतोऽनेनैवास्माभिर्गन्तव्यमिति भावः ॥ १० ॥

११ ] ति० टी०—अभिज्ञानकरणकारणं वनमार्गं दर्शयति—इतश्चेति । 'इदं च' इति पाठान्तरम् । उदात्तदन्तान

१ उपचितानीति गो. पाठः । २ ईयुष इति गो. पाठः । ३ च वने इति गो पाठः । ४ इदमिति गो. रा. पाठः ।

यमेवाधातुमिच्छन्ति तापसाः सततं वने । तस्यासौ दृश्यते धूमः संकुलः कृष्णवर्त्मनः ॥ १२ ॥
अत्राहं पुरुषव्याघ्रं गुरुसंत्कारकारिणम् । आर्यं द्रक्ष्यामि संहृष्टं महर्षिमिव राघवम् ॥ १३ ॥
अथ गत्वा मुहूर्तं तु चित्रकूटं स राघवः । मन्दाकिनीमनु प्राप्तस्तं जनं चेदमब्रवीत् ॥ १४ ॥
जगत्यां पुरुषव्याघ्र आस्ते वीरासने रतः । जनेन्द्रो निर्जनं प्राप्य धिङ्मे जन्म सजीवितम् ॥ १५ ॥
मत्कृते व्यसनं प्राप्तो लोकनाथो महाद्युतिः । सर्वान्कामान्परित्यज्य वने वसति राघवः ॥ १६ ॥

महादन्तानाम् । परिक्रान्तं परिक्रमणं स्यात् गमनमार्गं इति यावत् । तत्र गमननिर्हरयथं चेदमभिज्ञानकारणमिति भावः॥११॥

रा०टी०–इदमिति । इदमुदात्तदन्तानां महादन्तविशिष्टानां तरस्विनामत एव अन्योन्यमभिगर्जतां गजानां परिक्रान्तं परिक्रमणं मार्ग इत्यर्थः ॥ ११ ॥

गो० टी०–मार्गचिह्नकरणं गजपदमर्दनक्लिष्टत्वेन दुर्ज्ञानादित्याशयेनाह–इदं चेति । उदात्तदन्तानां महादन्तानाम् 'महत्युदात्त उच्चोक्तौ' इति वैजयन्ती । तरस्विनां वेगवताम् अन्योन्यमभिगर्जताम् अन्योन्यं प्रति गर्जताम् गजानां शैलपार्श्वे परिक्रान्तमिदं परिक्रमणस्थानमिदम् "क्तोऽधिकरणे च-"इत्यधिकरणे क्तः इदमेषामासितमित्यादिवत्, अस्मिन्मार्गे कुञ्जराः परिक्रान्ता इत्यर्थः । अन्योन्यकोपातिशयेन वेगाद्दन्तादन्तिप्रहारं कुर्वतामाश्रमप्रवेशस्याशक्यत्वादाश्रमप्रान्तगमनमाश्रमप्रदेशं सूचयतीत्यर्थः ॥ ११ ॥

१२–१३] ति० टी०–तापसा वने यमाधातुं सायंप्रातर्होमार्थमिच्छन्ति तस्यायं दृश्यते धूमः ॥ १२ ॥ १३ ॥

रा० टी०–यमिति । यं सततमाधातुं विधिना संस्थापयितुं तापसा इच्छन्ति तस्य कृष्णवर्त्मनो वह्नेः असौ धूमो दृश्यते 'कृष्णवर्त्मा पुमानग्नौ दुराचारे विधुन्तुदे' इति मेदिनी ॥ १२ ॥

गो० टी०–रामाश्रमस्यात्यन्तसंनिहितत्वज्ञापकं धूमबाहुल्यं दर्शयति–यमिति । तापसाः यमग्निमाधातुमिच्छन्ति सायंप्रातर्होमार्थं सर्वदा रक्षितुमिच्छन्ति तस्य कृष्णवर्त्मनः संकुलोऽसौ धूमो दृश्यते पचनाग्नेर्होमाग्नेश्च व्यावृत्तं संततस्थायिगार्हपत्याग्निं दर्शयितुं संकुलशब्दः अतिनिबिड इत्यर्थः । पचने ज्वालानां होमे च शरोऽङ्गाराणामपेक्षितत्वान्न तदा धूमनिबिडसंभव इति भावः । अनेन रामस्याग्न्याधानाभावाच्छ्रौताग्निरत्र नोच्यते किंतु धार्यः स्मार्ताग्निः यदि हि तस्य त्रेताग्निः स्यात्तदा रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् । अग्निहोत्रं व्रजत्वग्रे सर्पिर्ज्वलितपावकम् इतिचरमयात्रायामग्निहोत्रपुरस्कारश्रवणाद्वनयात्रायामपि तथा दृश्येत अनुसरन्तोऽपि हि पौरवृद्धाः साग्नय एव समागता इत्युच्यन्ते । किंच दीक्षितं व्रतसंपन्नं वराजिनधरं शुचिम् । कुरङ्गशृङ्गपाणिं च पश्यन्ती त्वां भजाम्यहम् इति सीतामनोरथश्रवणाद्राज्याभिषेकात्पूर्वं न यज्ञोऽनुष्ठित इति गम्यते ततोऽयमग्निर्गृह्याग्निरेव । न च तस्याप्यानयनं न पूर्वमुक्तमिति वाच्यं, तस्यात्मसमारोपणेनानेतुं शक्यत्वात् । न च आत्मसमारोपणेऽपि सायंप्रातर्होमः कार्यः स तु नोक्तः प्रत्युत तमसातीरे गङ्गाकूले वृक्षमूले भरद्वाजाश्रमे यमुनातटे च संध्यावन्दनमेवोक्तम् अत्र च श्लोके तापसवनशब्दाभ्यां वने तापसानां शीतनिवारणप्रकाशकरणकन्दमूलादिपचनसाधनतया संग्राह्य एवाग्निरुच्यत इति वक्तुं शक्यते आधातुं संग्रहीतुमित्यर्थः । अतोऽयमग्निः पचनाद्यर्थ एव न तु धार्यः स्मार्ताग्निरिति चेन्न, प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकामिति वक्ष्यमाणविरोधात् । नह्यसंस्कृताग्नेर्वेदिसंबन्धः प्रसिद्धः प्रागुदक्प्रवणत्वादि वेदिलक्षणं चोच्यमानं वेदिं तत्स्थमग्निं च संस्कृताववगमयति यद्येवं कथं तर्हि सायंप्रातर्होमावचनमिति चेन्न श्लोकं स्वच्छन्दगामिना मुनिना असत्यामिच्छायामसति च फले पुनः पुनर्वक्तव्यं वक्ष्यति तु उपरिष्टात् सुतीक्ष्णाश्रमे–अथ तेऽग्निं सुरांश्चैव वैदेही रामलक्ष्मणौ । काल्यं विधिवदभ्यर्च्य तपस्विशरणे वने ॥ उदयन्तं दिनकरं दृष्ट्वा विगतकल्मषाः । सुतीक्ष्णमभिगम्यैवमिदं वचनमब्रुवन् ॥ इति । अत्रानुदितहोमपक्षेण उदयात्पूर्वमग्निकार्यवचनादग्निमित्येकवचनाच्च औपासनं सम्यगुक्तमिति, एवमेव सर्वत्र द्रष्टव्यमिति । अत्र चाग्निकार्ये रामस्य साक्षात्प्रधानकर्तृत्वेन सीतायाः सहभावेन प्रणयनादिना च लक्ष्मणस्य समिदादिसंपादनरूपसहकारित्वेन चान्वय इति ज्ञेयम् । तपस्विशरणे वन इत्यनेनातिसंकटदेशेऽपि यथावदनुष्ठानश्रद्धाविशेष उच्यते अतश्चतुर्दशसु वनवाससंवत्सरेषु सीताहरणपर्यन्तं रामस्य चित्रकूटादिपञ्चवट्यन्तेषु प्रदेशेषु यत्र माससंवत्सरादिवासेन चिरकालावस्थानं तत्र बहिः स्मार्तनित्याग्निधारणम् अन्यत्रात्मनि समिधि वा समारोप्य होमकालेऽवरोप्य सायंप्रातरौपासनमिति दिक् । अस्मिन् श्लोके च तापसा यमाधातुमिच्छन्तीत्यस्यार्थश्च वर्णितः तेन च रामाश्रमचिह्नत्ववत्पावनत्वमप्युक्तं भवति ॥ १२ ॥

रा० टी०–अत्रेति । पुरुषव्याघ्रं पुरुषश्रेष्ठं गुरुसत्कारकारिणमतिसत्कारकरणशीलं महर्षिमिव राघवं रामं द्रक्ष्यामि॥१३॥

गो० टी०–अत्रेति । गुरुसंस्कारकारिणं गुरुसंस्कारः श्रेष्ठसंस्कारः मन्त्रोपदेशादिस्तत्कारिणम् ॥ १३ ॥

१४ ] ति० टी०–स राघवो भरतो मन्दाकिनीमनु चित्रकूटं प्राप्त इत्यन्वयः । तं जनममात्यादिजनम् ॥ १४ ॥

रा० टी०–अथेति । अथ एवं विचारकरणादनन्तरं मन्दाकिनीमनुप्राप्तो राघवो भरतः चित्रकूटं मुहूर्तं मुहूर्तेन गत्वा तममात्यादिजनमिदमब्रवीत् ॥ १४ ॥

गो० टी०–अथेति । राघवः भरतः तं जनं सहागतं शत्रुघ्नादिकम् ॥ १४ ॥

१५–१६] ति० टी०–वीरासने योगिनामासने॥१५॥१६॥

१ संस्कारेति गो. पाठः । २ नत्वेति रा. पाठः ।

इति लोकसमाक्रुष्टः पादेष्वद्य प्रसादयन् । रामं तस्य पतिष्यामि सीतायां लक्ष्मणस्य च ॥ १७ ॥
एवं स विलपंस्तस्मिन्वने दशरथात्मजः । ददर्श महतीं पुण्यां पर्णशालां मनोरमाम् ॥ १८ ॥
सालतालाश्वकर्णानां पर्णैर्बहुभिरावृताम् । विशालां मृदुविस्तीर्णां कुशैर्वेदिमिवाध्वरे ॥ १९ ॥
शक्रायुधनिकाशैश्च कार्मुकैर्भारसाधनैः । रुक्मपृष्ठैर्महासारैः शोभितां शत्रुबाधकैः ॥ २० ॥
अर्करश्मिप्रतीकाशैर्घोरैस्तूणगतैः शरैः । शोभितां दीप्तवदनैः सर्पैर्भोगवतीमिव ॥ २१ ॥
महारजतवासोभ्यामसिभ्यां च विराजिताम् । रुक्मबिन्दुविचित्राभ्यां चर्मभ्यां चापि शोभिताम् ॥ २२ ॥

रा० टी०—तद्वचनाकारमाह—जगत्यामिति । जनेन्द्रो रामः निर्जनं जनराहित्यं प्राप्य वीरासने रतः कृतवीरासन इत्यर्थः, जगत्यां राजोचितासनरहितभूमौ आस्ते अतः सजीवितं जीवितसहितं मे जन्म धिक् ॥ १६ ॥

गो० टी०—जगत्यामित्यादि । जगत्यां भूमौ वीरासने दक्षिणजानूपरिन्यस्तवामपादतयावस्थाने धिङ् मे जन्म सजीवितमिति मे जन्म प्राणनं च धिगित्यर्थः ॥ १६ ॥

रा० टी०—ननु तव कोऽपराधो यदात्मानं धिक्करोषीत्यत आह—मदिति । लोकनाथो महाद्युतिः यो राघवः सर्वान् कामान् परित्यज्य वने वसति सः मत्कृते मत्प्रयत्ने मत्कर्तृकमातुलगृहप्राप्तौ सत्यामित्यर्थः, व्यसनं वननिवासक्लेशं प्राप्तः एतेन मत्कर्तृकास्थितौ तत्प्रव्राजनं न स्यादिति सूचितं तेन चिरं कालमन्यत्र स्थितिमत्त्वेन ममैवापराध इति ध्वनितम् ॥ १६ ॥

गो० टी०—मत्कृत इति । मत्कृते व्यसनं प्राप्तः कैकेय्या मम राज्यप्रापणकृते राज्यभ्रंशरूपव्यसनं प्राप्तः इति लोकसमाकुष्टः एवंप्रकारेण लोकैरपवादं प्रापितः प्रसादयन् प्रसादनाद्धेतोः लक्ष्मणस्य चेति तस्य कनिष्ठत्वेऽपि कार्यगौरवात्पादपतनम् यदि मया प्रसाद्यमाने रामे लक्ष्मणः कैकेयीकृतापकारं मय्यारोप्य मा प्रसीदेति रामं निरुन्ध्यात्तर्हि लक्ष्मणस्यापि पादयोर्निपत्य तमपि प्रसादयिष्यामि, यदि रामप्रसादनरूपं कार्यं केवलं सुसाधितं भवेत् तदानीं कनिष्ठपादपतनं दोषायेति भरतहृदयम् । पाठभेदः 'सीतायाश्च पुनः पुनः' इतिपाठः । 'सीताया लक्ष्मणस्य च' इति पाठे रामभक्तत्वेन वयो नादृतमिति बोध्यम् 'न परीक्ष्य वयो वन्द्या' इति स्मरणात् ॥ १६ ॥ १७ ॥

१७–१८ ] ति० टी०—इति लोकेन समाकुष्टो निन्दितो यस्मादतो मे जन्म धिक् । सोऽहमेतदपयशःपरिहाराय रामं प्रसादयन्रामप्रसादहेतवे तस्य रामस्य पादेषु पूजायां बहुवचनम् सीताया लक्ष्मणस्य च पादयोः पतिष्यामि । स्वापराधप्रसादनाय कनीयःस्वपि प्रणामो लोकप्रसिद्ध इति कतकः । अन्यस्तु श्रद्धाजाड्यात् 'सीतायाश्च पुनः पुनः' इति पाठं कल्पयति ॥ १७ ॥ १८ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण लोको विचारः तेन समाकृष्टः व्याकुलचित्तोऽहं रामं प्रसादयन्सँल्लक्ष्मणस्य सन्निधौ तस्य रामस्य सीतायाश्च पादेषु अद्य पतिष्यामि लक्ष्मणस्य सन्निधावित्यनेन मदतिप्रार्थनादर्शनं तस्मिन्नप्यार्द्रचित्तत्वं जनयिष्यतीति व्यञ्जितम् ॥ १७ ॥

रा० टी०—एवमिति । एवं विलपन् दशरथात्मजो भरतः महतीं विशालां पुण्यां पुण्यप्रापिकां मनोरमां पर्णशालां ददर्श १८

गो० टी०—एवमित्यारभ्य गुहामिवेत्यन्तमेकं वाक्यम् । सालोऽश्वकर्णादन्यो वृक्षः अश्वकर्णः सर्जतरुः तालो मृदुपर्णः श्रीतालः कार्मुकैरिति बहुवचनादभ्यासयोग्यं कार्मुकान्तरमस्तीति गम्यते । भारसाधनैः गुर्ववयवैः, यद्वा अतिगुरुतररणकार्यसाधनभूतैः, यद्वा भारो धनुष्परिमाणविशेषः । यथोक्तं धनुर्वेदे ईशानसंहितायाम् 'भारं पलशतं विदुः' तेन भारेण चापानां प्रमाणमुपलभ्यत इति, रुक्मपृष्ठैः कनकानुलिप्तपृष्ठप्रदेशैः महासारैः महास्थिरांशैः 'सारो बले स्थिरांशे च' इत्यमरः । भोगवती सर्पनगरी महारजतवासोभ्यां स्वर्णमयकोशाभ्यां रुक्मबिन्दुविचित्राभ्यां शोभाविशेषाय मध्ये मध्ये शिल्पिनिर्मितकनकबिन्दुविचित्राभ्याम् । पाठभेदः आत्मबिन्दुविचित्राभ्यां व्याघ्रचर्मकृततया स्वाभाविकनानावर्णबिन्दुविचित्राभ्यां चर्मभ्यां खेटकाभ्याम् 'खेटकं फलकं चर्म' इति हलायुधः । गोधाङ्गुलित्रैः 'गोधा ज्याघातवारणम्' अङ्गुलित्रमङ्गुलित्राणम् उपलक्षणे तृतीया शोभितामित्यनुकर्षो वा, अनाधृष्याम् अप्रधृष्याम् ॥ १८–२३ ॥

१९ ] ति० टी०—साला वटपलाशादिदृढविशालपर्णवन्तो वृक्षाः । अश्वकर्णो वृक्षविशेषः ॥ १९ ॥

२० ] ति० टी०—भारसाधनैरतिगुरुकार्यसाधनैः । 'सारो बले स्थिरांशे च' ॥ २० ॥

रा० टी०—शालेति । शालतालाश्वकर्णानां सालादित्रयवृक्षविशेषाणां बहुभिः विपुलैः पर्णैः पत्रैः प्रावृतामध्वरे यज्ञे विशालां विपुलस्थलवतीं वेदीमिव कुशैर्मृदुविस्तीर्णां शक्रायुधनिकाशैः शक्रधनुस्सदृशैः भारसाधनैः गुर्ववयवविशिष्टैः रुक्मपृष्ठैः सुवर्णपृष्ठविशिष्टैर्महासारैः अतिपुष्टैः शत्रुबाधकैः कार्मुकैर्धनुर्भिः शोभिताम् ॥ १९ ॥ २० ॥

२१ ] ति० टी०—भोगवती नागलोकः ॥ २१ ॥

रा० टी०—अर्करश्मिप्रतीकाशैः सूर्यकिरणसदृशैर्घोरैर्भयंकरैः शरैः दीप्तवदनैः सर्पैर्भोगवतीमिव शोभिताम् ॥ २१ ॥

२२ ] ति० टी०—महारजतवासोभ्यां स्वर्णमयकोशाभ्याम् । चर्म फलकम् ॥ २२ ॥

१ आक्रुष्ट इति रा० पाठः । २ मृदुभिरिति गो. पाठः । ३ तूणिगतैरिति गो. पाठः ।

गोधाङ्गुलित्रैरासक्तैश्चि[1]त्रकाञ्चनभूषितैः । अरिसंघैरनाधृष्यां मृगैः सिंहगुहामिव ॥ २३ ॥
प्रागुदक्प्रवणां वेदिं विशालां दीप्तपावकाम् । ददर्श भरतस्तत्र पुण्यां रामनिवेशने ॥ २४ ॥
निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् । उटजे राममासीनं जटामण्डलधारिणम् ॥ २५ ॥
कृष्णाजिनधरं तं[2] तु चीरवल्कलवाससम् । ददर्श राममासीनमभितः पावकोपमम् ॥ २६ ॥
सिंहस्कन्धं महाबाहुं पुण्डरीकनिभेक्षणम् । पृथिव्याः सागरान्ताया भर्तारं धर्मचारिणम् ॥ २७ ॥
उपविष्टं महाबाहुं ब्रह्माणमिव शाश्वतम् । स्थण्डिले दर्भसंस्तीर्णे सीतया लक्ष्मणेन च ॥ २८ ॥
तं दृष्ट्वा भरतः श्रीमान्दुःख[3]मोहपरिप्लुतः । अभ्यधावत धर्मात्मा भरतः केकयीसुतः ॥ २९ ॥
दृष्ट्वैव विललापार्तो बाष्पसंदिग्धया गिरा । अशक्नुवन्वा[4]रयितुं धैर्याद्वचनमब्रु[5]वन् ॥ ३० ॥

रा० टी०—महारजतवासोभ्यां स्वर्णमयकोशविशिष्टाभ्यामसिभ्यां खड्गाभ्यां विराजितां रुक्मबिन्दुभिः स्वर्णपुष्पैर्विचित्राभ्यां चर्मभ्यां च शोभिताम् ॥ २२ ॥

२३ ] ति० टी०—काञ्चनभूषितैर्गोधाङ्गुलित्रैः उपलक्षितामिति शेषः । सिंहगुहामिव पर्णशालां ददर्शेत्यन्वयः ॥ २३ ॥

रा० टी०—चित्रकाञ्चनभूषितैः आसक्तैः संस्थापितैः गोधाङ्गुलित्रैर्मृगैः सिंहगुहामिव अरिसंघैः अनाधृष्याम् ॥ २३ ॥

२४ ] ति० टी—प्रागुदक्प्रवणामीशानभागे निम्नाम् ॥२४॥

रा० टी०—प्रागुदक्प्रवणामीशानदिग्भागे निम्नां दीप्तः पावको यस्यां तां पुण्यां वेदीं तत्र प्रसिद्धे रामनिवेशने पर्णशालायां भरतो ददर्श । षण्णामेकत्रान्वयः ॥ २४ ॥

गो० टी०—प्रागुदक्प्रवणामिति । प्रागुदक्प्रवणां प्रागुदग्भागे क्रमनिम्नाम् 'प्रवणो दक्षिणे प्रह्वे क्रमनिम्ने चतुष्पथे' इति वैजयन्ती। तत्र रामनिवेशने पूर्वोक्तपर्णशालायामित्यर्थः ॥२४॥

२५ ] ति० टी०—निरीक्ष्येति । अग्निमिति शेषः । गुरुं रामं ददर्श । कृष्णाजिनेत्याद्युच्यमानविशेषणं रामम् ॥ २५ ॥

रा० टी०—निरीक्ष्येति । निरीक्ष्य अवलोक्य पर्णशालामिति शेषः, उटजे काष्ठादिनिर्मितोन्नतस्थानविशेषे आसीनं गुरुं रामं ददर्श ॥ २५ ॥

गो० टी०—निरीक्ष्येति । जटामण्डलधारित्ववैलक्षण्येन निश्चयार्थं मुहूर्तं निरीक्ष्य तेजोविशेषेण सामान्येन स्वगुरुं ज्ञातवानित्यर्थः । अस्मिन् श्लोके उत्तरार्धे जटामण्डलधारिणमित्यत्र णकारो गायत्र्याः सप्तमाक्षरं षट्सहस्रं श्लोका गताः॥२५॥

२६-२७] ति० टी—अभितः समीपे ददर्श ॥ २६ ॥ २७ ॥

२८ ] ति० टी०—शाश्वतं ब्रह्माणं हिरण्यगर्भम् ॥ २८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—कृष्णेति । पावकोपमं रामं ददर्श ॥ २६ ॥

रा० टी०—सिंहेति । सागरान्तायाः पृथिव्याः भर्तारं प्रकृतत्वापि रक्षकं दर्भैः कुशैः संस्तीर्णे स्थण्डिले शाश्वतं नित्यं ब्रह्माणमिव उपविष्टं तं रामं भरतो दृष्ट्वा दुःखमोहपरिप्लुतः सन् अभ्यधावत द्रुतमगच्छत् । श्लोकत्रयमेकान्वयि ॥ २७-२९ ॥

गो० टी०—विशेषतो दर्शनमाह—तं त्वित्यादिना । महाव्यसनोपेतस्य इदानीं ततो वैलक्षण्यमाह—तं त्विति । तदेव वैलक्षण्यं दर्शयति—कृष्णाजिनधरमिति । कृष्णाजिनधरम् उत्तरीयतया कृष्णाजिनधरम् अधराम्बरत्वेन चीरवल्कलवाससं कृष्णाजिनधरं चीरवल्कलवाससं पूर्वस्माच्छोभाविशेषयुक्तं रामं वल्कलादिधारणेऽप्यपरावर्तमानं रामणीयकमुच्यते आसीनं किंचिदासनमास्थायात्मानं ध्यायन्तम् अभितः पावकोपमं तादृशतपोविशेषेण समन्तात्तेजःपरिवृतं, यद्वा 'नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा' इत्युक्तरीत्या विद्युल्लेखामध्यवर्तिनीलतोयदमिव स्थितमित्यर्थः, यद्वा विरोधिनामनभिभवनीयमित्यर्थः, यद्वा उटजे राममासीनम् अयोध्यास्थितसमाजापेक्षया अल्पतरापीयं सभा महती जाता कुतः अभितः पावकोपमं तत्सभायां समीपस्थस्य भ्रातुरपि अत्र समीपमागन्तुं न शक्यते नहि ज्वलत्यनले कस्यापि समीपमागन्तुं शक्यम्, यद्वा उटजे राममित्यत्र रामं श्यामम् अथो रामौ साविग्नावित्यत्र तथा प्रयोगात्, यद्वा पावकोपमं दुर्दर्शमित्यर्थः । अत एव पूर्वश्लोके निरीक्ष्य स मुहूर्तमित्युक्तं ब्रह्मापेक्षयास्य वैलक्षण्यमुच्यते—शाश्वतमिति स्थण्डिले भूमौ ॥ २६-२८ ॥

२९ ] ति० टी०—अभ्यधावत धावन्निव त्वरया जगाम । अत्र भरतस्येव कवेरपि वर्णनीयमयीभावेनातिहर्षाविष्टत्वादत्र प्रकरणे द्विरुक्तिर्न दोषाय ॥ २९ ॥

गो० टी०—तमिति । द्वितीयो भरतशब्द उत्तरश्लोकेन संबध्यते ॥ २९ ॥

३० ] ति० टी०—दृष्ट्वैव दर्शनमात्रेणैवार्तः खिन्नः सन् तां चार्तिं धैर्याद्वारयितुमशक्नुवन् अत एव बाष्पसंदिग्धवर्णया गिरा वागिन्द्रियेण वचनमब्रुवन्नव्यक्तं वदन्विललाप ॥ ३० ॥

रा० टी०—दृष्ट्वेति । दृष्ट्वैव आर्तः सेवकादिरहितरामदर्शनजनितखेदं प्राप्तो भरतः धैर्याद्वारयितुं खेदं निवारयितुमशक्नुवन् अत एव वचनं व्यक्तवाचमब्रुवन् सन् बाष्पसंदिग्धया गद्गदास्वरयेत्यर्थः, गिरा विललाप ॥ ३० ॥

गो० टी०—दृष्ट्वेति । दृष्ट्वैव दर्शनमात्रेणेत्यर्थः । आर्तः

१ चित्रैरिति गो. पाठः । २ तं तु कृष्णेति गो. पाठः । ३ शोकेति गो. पाठः । ४ धारयितुमिति गो. पाठः । ५ अब्रवीदिति गो. पाठः ।

यः संसदि प्रकृतिभिर्भवेद्युक्त उपासितुम् । वन्यैर्मृगैरुपासीनः सोऽयमास्ते ममाग्रजः ॥ ३१ ॥
वासोभिर्बहुसाहस्रैर्यो महात्मा पुरोचितः । मृगाजिने सोऽयमिह प्रवस्ते धर्ममाचरन् ॥ ३२ ॥
अधारयद्यो विविधाश्चित्राः सुमनसः सदा । सोऽयं जटाभारमिमं सहते राघवः कथम् ॥ ३३ ॥
यस्य यज्ञैर्यथादिष्टैर्युक्तो धर्मस्य संचयः । शरीरक्लेशसंभूतं स धर्मं परिमार्गते ॥ ३४ ॥
चन्दनेन महार्हेण यस्याङ्गमुपसेवितम् । मलेन तस्याङ्गमिदं कथमार्यस्य सेव्यते ॥ ३५ ॥
मन्निमित्तमिदं दुःखं प्राप्तो रामः सुखोचितः । धिग्जीवितं नृशंसस्य मम लोकविगर्हितम् ॥ ३६ ॥
इत्येवं विलपन्दीनः प्रस्विन्नमुखपङ्कजः । पादावप्राप्य रामस्य पपात भरतो रुदन् ॥ ३७ ॥
दुःखाभितप्तो भरतो राजपुत्रो महाबलः । उक्त्वार्येति सकृद्दीनं पुनर्नोवाच किंचन ॥ ३८ ॥
बाष्पैः पिहितकण्ठश्च प्रेक्ष्य रामं यशस्विनम् । आर्येत्येवाभिसंक्रुश्य व्याहर्तुं नाशकत्ततः ॥ ३९ ॥
शत्रुघ्नश्चापि रामस्य ववन्दे चरणौ रुदन् । तावुभौ च समालिङ्ग्य रामोऽप्यश्रूण्यवर्तयत् ॥ ४० ॥
ततः सुमन्त्रेण गुहेन चैव समीयतू राजसुतावरण्ये ।
दिवाकरश्चैव निशाकरश्च यथाम्बरे शुक्रबृहस्पतिभ्याम् ॥ ४१ ॥

खिन्नः तामार्तिं धारयितुमशक्नुवन् बाष्पसंदिग्धया शोकोष्मणा संदिग्धवर्णया गिरा उपलक्षितः ॥ ३० ॥

३१ ] ति० टी०—विलापप्रकारमाह—यः संसदीति ॥ ३१ ॥

रा० टी०—विलापाकारमाह–य इत्यादिभिः । यः रामः संसदि राजादिसेवितसभायां प्रकृतिभिः प्रजाभिः उपासितुं सेवितुं युक्तो भवेत् सः वन्यैः मृगैरुपासीन आस्ते ॥ ३१ ॥

गो० टी०—य इति । संसदि सभायां युक्तः अर्हः ॥ ३१ ॥

३२–३३ ] ति० टी०—बहुसहस्रद्रव्यमूल्यैर्वासोभिरलंकर्तुं यः पुरे उचितः स मृगाजिनेऽन्तरीयोत्तरीयरूपे मृगचर्मणी प्रवस्ते धर्मं पितृवचनपरिपालनरूपम् ॥ ३२ ॥ ३३ ॥

रा० टी०—वासोभिरिति । यः बहुसाहस्रैरसंख्यातैर्वासोभिरुचितः स मृगाजिने प्रवस्ते ॥ ३२ ॥

रा० टी०—अधारयदिति । यः विविधाः चित्राः सुमनसः स्रजः पुरा अधारयत् सः राघवः इमं जटाभारं कथं सहते ॥ ३३ ॥

गो० टी०—वासोभिरिति । बहुसाहस्रैः बहुसहस्रमूल्यैः उचितः अलंकर्तुमिति शेषः, षष्ठ्यर्थे तृतीया वा । मृगाजिने मृगचर्मणी प्रवस्ते आच्छादयति ॥ ३२ ॥ ३३ ॥

३४] ति० टी०—यथादिष्टैर्यथाविहितैर्ऋत्विक्क्लेशसाध्यैर्यस्य धर्मसंचयो युक्तः स स्वशरीरक्लेशेन संभूतमुत्पन्नं धर्मं मार्गते ॥ ३४ ॥

रा० टी०—यस्येति । यथादिष्टैः विधिवदनुष्ठितैः यस्य यज्ञैः धर्मसंचयो युक्तः योग्यः सः शरीरक्लेशसंभूतं धर्मं परिमार्गते ३४

गो० टी०—यस्येति । यथोद्दिष्टैर्यथाविहितैः 'यथाकृष्टैः' इतिपाठे आकृष्टैरिति शेषः । युक्तः योग्यः ॥ ३४–३८ ॥

३५–३६] ति० टी०—मलेन दण्डवात्रिषवणाप्लवमात्राम्मलस्थितिरङ्गे ॥ ३५ ॥ ३६ ॥

रा० टी०—चन्दनेनेति । महार्हेण अतिप्रशंसनीयेन चन्दनेन यस्याङ्गमुपसेवितं तस्याङ्गं मलेन कथं सेव्यते ॥ ३५ ॥

रा० टी०—यदिति । अहमेव निमित्तं यस्मिन् तद्दुःखं रामः प्राप्तः अतः नृशंसस्य मम लोकविगर्हितं जीवितं धिक् ॥ ३६ ॥

३७ ] ति० टी०—पादावप्राप्येति दुःखातिशयवशात् ॥ ३७ ॥

रा० टी०—इतीति । प्रस्विन्नमुखपङ्कजो भरतः इत्येवं विलपन्सन् रामस्य पादौ अप्राप्य रुदन् सन् पपात ॥ ३७ ॥

३८ ] ति० टी०—तत एव पुनर्नोवाच ॥ ३८ ॥

रा० टी०—दुःखेति । दीनं यथा स्यात्तथा हे आर्येति ! सकृदुक्त्वा पुनः किंचन नोवाच ॥ ३८ ॥

३९-४०] ति० टी०—ततो बाष्पावरुद्धकण्ठत्वात् ॥ ३९ ॥ ४० ॥

रा० टी०—वचनाभावे हेतुं वदन्नाह–बाष्पैरिति । रामं प्रेक्ष्य बाष्पैः पिहितकण्ठो भरतो व्याहर्तुं वक्तुं नाशकत् ॥ ३९ ॥

रा० टी०—शत्रुघ्न इति । शत्रुघ्नो रुदन् सन् ववन्दे, उभौ तौ शत्रुघ्नरामौ समालिङ्ग्य अतिष्ठतामिति शेषः, रामोऽपि अश्रूणि अवर्तयत् अत्यजत् ॥ ४० ॥

गो० टी०—वक्तुमशक्यत्वे हेतुमाह–बाष्पापिहितकण्ठ इत्यादिना । बाष्पापिहितकण्ठः बाष्पनिरुद्धकण्ठः ॥ ३९ ॥ ४० ॥

४१ ] ति० टी०—राजसुतौ रामलक्ष्मणौ ॥ ४१ ॥

रा० टी०—तत इति । राजसुतौ रामलक्ष्मणौ सुमन्त्रेण गुहेन च समीयतुः आलिलिङ्गतुः, तत्र दृष्टान्तः अम्बरे आकाशे दिवाकरो निशाकरश्च शुक्रबृहस्पतिभ्यां यथा ॥ ४१ ॥

गो० टी०—तत इति । राजसुतौ रामलक्ष्मणौ ॥ ४१ ॥

१ अधारयदिति गो. पाठः । २ स्रज इति रा. पाठः । ३ वहत इति गो. पाठः । ४ यथोद्दिष्टैरिति गो. पाठः । ५ यन्निमित्तमिति रा. पाठः । ६ बाष्पापिहितेति गो. पाठः । ७ तदेति गो. पाठः । ८ स इति गो. पाठः । ९ रामश्चाश्रूणीति गो. पाठः ।

तान्पार्थिवान्वारणयूथपार्हान्समागतांस्तत्र महत्यरण्ये ।
वनौकसस्ते[2]ऽभिसमीक्ष्य सर्वे त्वश्रूण्यमुञ्चन्प्रविहाय हर्षम् ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवनवतितमः सर्गः ॥ ९९ ॥

## शततमः सर्गः ।

रामो भरतं स्वाङ्क आनीय पित्रादीनां कुशलप्रश्नापदेशेन दण्डनीतिं शिक्षयति ।

जटिलं चीरवसनं प्राञ्जलिं पतितं भुवि । ददर्श रामो दुर्दर्शं युगान्ते भास्करं यथा ॥ १ ॥
कथंचिदभिविज्ञाय विवर्णवदनं कृशम् । भ्रातरं भरतं रामः परिजग्राह पाणिना ॥ २ ॥
आघ्राय रामस्तं मूर्ध्नि परिष्वज्य च राघवम् । अङ्के भरतमारोप्य पर्यपृच्छत सादरम् ॥ ३ ॥

४२ ] ति० टी०–अश्रूण्यमुञ्चन्प्रविहाय हर्षम् । पूर्वं तद्दर्शनजसंतोषः, पश्चात्तद्दुःखदर्शनजदुःखादश्रुपाताश्च ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवनवतितमः सर्गः ॥ ९९ ॥

रा० टी०–तानिति । महत्यरण्ये समागतान्वारणयूथपार्हांस्तारामादीन् पार्थिवान् राजपुत्रान् वनौकसः समीक्ष्य हर्षं दर्शनजनितानन्दं प्रविहाय संत्यज्य अश्रूणि अमुञ्चन्॥४२॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे नवनवतितमः सर्गः ॥ ९९ ॥

गो० टी०–तानिति । तान तादृशसुखयुक्तान् समागतान् संगतान् ॥ ४२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

१-२ ] ति० टी०–जटिलमिति । अद्यप्रभृति भूमौ तु शयिष्ये, जटाचीराणि धारयन् इत्यष्टाशीतितमे भरतोक्तेर्भरतस्य जटिलत्वम् । यद्यपि नवतितमे सर्गे वसानो वाससी क्षौमे इति भरद्वाजदर्शनवेलायां श्रूयते, तथापि गुहग्रामे प्रतिज्ञातस्य भरद्वाजाश्रमनिर्गमनानन्तरं धारणमिति न विरोधः । युगान्ते भास्करं यथेति भुवि पतितमिति शेषः ॥ १ ॥ २ ॥

रा० टी०–रामोक्तिं वर्णयितुमुपक्रमते–जटिलमिति । जटिलं रामवृत्तान्तश्रवणोत्तरकाले धृतजटं चीरवसनं युगान्ते भास्करमिव भुवि पतितं प्राञ्जलिं भरतं रामो ददर्श ॥ १ ॥

गो० टी०–दर्शनमात्रेण भरतो राज्यं पालयतीति कृत्वा राज्यनीतिं पृच्छति शततमे–जटिलमिति । यद्वा अथ भगवान् रामः प्रश्नव्याजेन राज्यरक्षणनीतिप्रकारान् शिक्षयति पश्चाद्दशरथात्ययश्रवणभरतस्थण्डिलशयनादिव्यापारेण तदुपदेशावकाशाभावात्–जटिलमित्यादि । जटिलं समीचीनमाणिक्या बुद्धा चेदिदं भरतस्य केशार्हत्स्येवं दशरथो वदति स एव जटां बद्धा तिष्ठतीति रामो विस्मयते, चीरवसनं श्लाघ्यचीनाम्बरं दृष्टं चेद्बालस्य भरतस्य वसनार्हमिदमिति पिता वदति स एवेदानीं वल्कलधारी तिष्ठति, प्राञ्जलिं पिता याचनापूर्वकं दिशति चेत् यः स्वीकरोति सः स (त स्वाभिमतस्य स्वयमर्थी भवति, पतितं भुवि अङ्के भरतमारोप्येति स्थितिर्न लब्धा कुसुमशय्यापि कठिनीभवेदिति मत्वा उत्सङ्ग एव पित्रा शायितः स संप्रति स्थले पतितः, ददर्श रामो दुर्दर्शं दत्तां दृष्टिमनाकृष्य स्थितस्य रामस्य दर्शनायोग्यतया स्थितं, यद्वा दुर्दर्शं जटिलत्वादिवेषेण मोहितजनस्य दुष्प्रेक्षं दुर्दर्शं दुःखेन द्रष्टुं योग्यं कृच्छ्रेणाप्यभिज्ञातुमयोग्यमिति यावत् युगान्ते भास्करं यथा न केवलं रामस्य सर्वस्यापि जनस्य दुर्दर्शतया स्थितमिति भावः, यद्वा युगान्ते भास्करं यथा युगान्ते भुवि पतितं भास्करमिव स्थितमनेन पूर्ववन्महत्तरतेजोराशित्वं तादृशावस्थानर्हत्वं च व्यज्यते । पाठभेदः युगान्ते भुवि पतितं भास्करं यथेत्यनेन महत्तरतेजोराशित्वं तादृशावस्थानर्हत्वं चोच्यते । ननु गङ्गातीरे अद्यप्रभृति भूमौ तु शयिष्येऽहं तृणेषु वा । फलमूलाशनो नित्यं जटाचीराणि धारयन्निति जटावल्कलधारणं प्रतिज्ञातं पुनर्नवतितमे भरद्वाजदर्शनसमये वसानो वाससी क्षौमे इति क्षौमवस्त्रं धृतवानित्युच्यते अत्र तु जटिलं चीरवसनमिति सिद्धवदनूद्यते कथमेतत् संगच्छत इति चेदत्राहुः–प्रतिज्ञाया रात्रौ कृतत्वादपरेद्युर्भरद्वाजदर्शनानन्तरं जटावल्कले धृतवानित्यविरोध इति, अयं च परिहारः पुरैवास्माभिः प्रतिपादितः ॥ १ ॥

रा० टी०–कथंचिदिति । विवर्णवदनं वियोगदुःखातिशयेन प्राप्तविवर्णताविशिष्टमुखविशिष्टं कृशं भ्रातरं भरतं कथंचित् अनुमानादिना अभिविज्ञाय पाणिना जग्राह ॥ २ ॥

गो० टी०–कथंचिदिति । कथंचिदभिविज्ञातत्वे हेतुद्वयं विवर्णवदनं कृशमिति ॥ २ ॥ ३ ॥

३ ] ति० टी०–'पर्यपृच्छत्समाहितः' इति पाठे समाहितः कुशलप्रश्नद्वारा धर्मबोधने सावधानचित्तः ॥ ३ ॥

१ यूथपामानिति गो. पाठः । २ ऽपीति गो. पाठः । ३ ऽप्यश्रूणीति गो. पाठः । ४ भरतामिति रा. पाठः । ५ बाहुनेति गो. पाठः । ६ राघव इति गो. पाठः । ७ पर्यपृच्छत्समाहित इति गो. पाठः ।

क्व नु तेऽभूत्पिता तात यदरण्यं त्वमागतः । न हि त्वं जीवतस्तस्य वनमागन्तुमर्हसि ॥ ४ ॥
चिरस्य बत पश्यामि दूराद्भरतमागतम् । दुष्प्रतीकमरण्येऽस्मिन्किं तात वनमागतः ॥ ५ ॥
कच्चिन्नु[1] धरते तात राजा यत्त्वमिहागतः । कच्चिन्न दीनः सहसा राजा लोकान्तरं गतः ॥ ६ ॥
कच्चित्सौम्य न ते राज्यं भ्रष्टं बालस्य शाश्वतम् । कच्चिच्छुश्रूषसे तात [2]पितुः सत्यपराक्रम ॥ ७ ॥
कच्चिद्दशरथो राजा कुशली सत्यसंगरः । राजसूयाश्वमेधानामाहर्ता धर्मनि[3]श्चितः ॥ ८ ॥
स कच्चिद्ब्राह्मणो विद्वान्धर्मनित्यो महाद्युतिः । इक्ष्वाकूणामुपाध्यायो यथावत्तात पूज्यते ॥ ९ ॥

---

रा० टी०—आघ्रायेति । राघवं भरतं मूर्ध्नि आघ्राय अङ्के आरोप्य सादरं पर्यपृच्छत ॥ ३ ॥

४ ] ति० टी०—हे तात! ते पिता क्वाभूत् इह परत्र वेत्यर्थः, कुत एवं संशयस्तत्राह—न हीति । जीवतस्तस्य सेवां हित्वेति शेषः, नार्हसि मदसंनिधौ तवैव पितृशुश्रूषाया अवश्यकर्तव्यत्वादिति भावः ॥ ४ ॥

रा० टी०—प्रश्नाकारमाह—क्वेत्यादिभिः । हे तात! ते पिता क्व अभूत् प्राप्नोत् यत् येन हेतुना त्वमरण्यमागतः । प्रश्ने हेतुमाह—जीवतः प्रजाः पालयतः तस्य राज्ञः हित्वा वनमागन्तुं नार्हसि संबन्धसामान्यविवक्षया षष्ठी, एतेन पिता ध्रुवं लोकान्तरं गत इति स्वनिश्चयः सूचितः ॥ ४ ॥

गो० टी०—अतिदुःखितस्य भरतस्य दुःखमपनेतुं प्रश्नव्याजेन धर्मानुपदिशति—क्व न्वित्यादि । ते पिता क्व न्वभूत् इति प्रश्नभङ्ग्या लोकान्तरं गतः किमिति सिध्यति । तत्र हेतुः—यदिति । तदुपपादयति—नहीति । जीवतः जीवति अनादरे षष्ठी वनं नागन्तुमर्हसि शुश्रूषणपरत्वादिति भावः, यद्वा तस्य त्वद्विरहासहिष्णुत्वादिति रामस्य प्रश्नान्तरसंबन्धदर्शनेन भरतो नोत्तरमुक्तवानिति बोध्यम् ॥ ४ ॥

५ ] ति० टी०—दूरान्मातामहदेशाच्चिरस्यागतं भरतं पश्यामि । बतेति हर्षे । दुष्प्रतीकमिति भरतविशेषणं वनविशेषणं च । आद्ये कार्श्यवैवर्ण्यादिना दुर्ज्ञेयताकारम्, वनमपि भीषणतया । तथा ईदृशं वनं किमागतः किमागमनप्रयोजनमीदृशारण्ये इत्यर्थः, अरण्यं गजाद्युपभोग्यम् तद्वर्ति वनमाम्रादियुतं मनुष्यभोग्यम् ॥ ५ ॥

रा० टी०—चिरस्येति । दूरात् अतिदूरदेशस्थितमातुलगृहादागतं दुष्प्रतीकं ज्ञानाभावप्रापककृशत्वादिप्रतीत्या दुरवयवं भरतं त्वां चिरस्य बहुकालानन्तरं पश्यामि हे तात ! अस्मिन् अरण्ये गजादिसेवितमहावने विद्यमानं वनमाम्रादिवृक्षसमूहं किं किमर्थमागतः 'अङ्गं प्रतीकोऽवयवः' इत्यमरः ॥ ५ ॥

गो० टी०—चिरस्येति । बतेत्यव्ययं 'खेदानुकम्पासंतोषविस्मयामन्त्रणे बत' इत्यमरः । दूरात् दूरावस्थितकेकयनगरात् दुष्प्रतीकं वैवर्ण्यादिना दुर्ज्ञेयावयवम् 'अङ्गं प्रतीकोऽवयवः' इत्यमरः । किं किमर्थम् ॥ ५ ॥

६ ] ति० टी०—अथ भरतागमनं राजाज्ञया वा स्याद्राजमरणे दुःखाद्वा । तत्राद्यमुपन्यस्यति—कच्चिन्न्विति । धरते प्राणान्धारयति अथवा लोकान्तरं गतः यत्त्वमिहागत इत्यनुकर्षः ॥ ६ ॥

रा० टी०—कच्चिदिति । यत् यं त्यक्त्वेति शेषः, त्वमिहागतः सः राजा धरते प्रजाः पाल्यत्वेन स्वीकरोति कच्चित् राजा दीनः सँल्लोकान्तरं न गतः कच्चित् ॥ ६ ॥

गो० टी०—अस्मिन्नरण्ये तव किं प्रयोजनम् । प्रयोजनं द्वेधा संभवति राजनि जीवति तदाज्ञया मम दर्शनं, राजनि मृते स्वबाल्येन बलवद्भिरपहृतराज्यत्वं वा, आद्यमाह—कच्चिदिति । धारयत इति प्राणानिति शेषः । यस्मात्त्वमिहागतः तस्माद्राजा प्राणान् धारयते कच्चित् राजा जीवति चेत् त्वामत्रागच्छन्तं न सहेतेति भावः । 'कच्चिन्न धरते' इति पाठान्तरं तदा देहं धारयितुं न शक्नोति कच्चिदित्यर्थः ॥ ६ ॥

७ ] ति० टी०—अन्त्यमेव पक्षमवलम्ब्याह—न ते राज्यं भ्रष्टमिति । मूलप्रश्नोत्तरस्यायाःप्राप्तभ्रंशकम् अनिश्चयाल्लोकप्रतारणाय वा । पुनर्जीवनपक्षमवलम्ब्याह—कच्चिच्छुश्रूषस इति ॥ ७ ॥

रा० टी०—कच्चिदिति । शाश्वतं सार्वकालिकं बालस्य ते तव राज्यं भ्रष्टं न कच्चित्, हे सत्यपराक्रम ! हे तात ! पितुः शुश्रूषसे कच्चित् कर्मणः शेषत्वविवक्षया षष्ठी ॥ ७ ॥

गो० टी०—द्वितीयं पक्षं प्रश्नद्वयेन दर्शयति—कच्चिदित्यादि । राज्यं भ्रष्टं न कच्चित् प्रजानुरागो विद्यते कच्चिदित्यर्थः ॥ ७ ॥

गो० टी०—कच्चिच्छुश्रूषस इति । पितृशुश्रूषाऽऽनादरेण किमागतोऽसीति पक्षान्तरम् ॥ ८ ॥

८ ] ति० टी०—धर्मनिश्चितो धर्मे निश्चितं निश्चयो यस्य सः ॥ ८ ॥

रा० टी०—कच्चिदिति । सत्यसङ्गरः निष्कपटयोद्धा राजसूयाश्वमेधानामाहर्ता कर्ता धर्मे निश्चितं निश्चयो यस्य सः राजा कुशली कच्चित् ॥ ८ ॥

गो० टी०—अथ राज्ञः आरोग्यं पृच्छति—कच्चिद्दशरथ इति । कुशली अनामयः राज्ञो व्याधिपरिभूतत्वात् तत्कथनाय किमागतोऽसीति पक्षान्तरम्, सत्यसङ्गरः सत्यप्रतिज्ञः सत्यप्रतिज्ञां प्रेक्ष्य पश्चात्तापेन किमकुशलं प्राप्त इति हार्दो भावः । कच्चिदिति आहर्ता संपादयिता कर्तेति यावत् धर्मे निश्चयो यस्य स धर्मनिश्चयः ॥ ९ ॥

९ ] ति० टी०—उपाध्यायो वसिष्ठः ॥ ९ ॥

---

१ कच्चिद्धारयते इति गो० पाठः । २ पितरं सत्यविक्रममिति गो० पाठः । ३ निश्चय इति गो० पाठः ।

तात कच्चिच्च कौसल्या सुमित्रा च प्रजावती । सुखिनी कच्चिदार्या च देवी नन्दति कैकयी ॥ १० ॥
कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः । अनसूयुरनुद्रष्टा सत्कृतस्ते पुरोहितः ॥ ११ ॥
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः । हुतं च होष्यमाणं च काले वेदयते सदा ॥ १२ ॥
कच्चिद्देवान्पितॄन्भृत्यान्गुरून्पितृसमानपि । वृद्धांश्च तात वैद्यांश्च ब्राह्मणांश्चाभिमन्यसे ॥ १३ ॥
इष्वस्त्रवरसंपन्नमर्थशास्त्रविशारदम् । सुधन्वानमुपाध्यायं कच्चित्त्वं तात मन्यसे ॥ १४ ॥
कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः । कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात मन्त्रिणः ॥ १५ ॥

रा० टी०—स इति । धर्मनित्यः धर्मः नित्यो यस्य स नित्यं धर्मविशिष्ट इत्यर्थः, विद्वान् निखिलनिगमागमज्ञाता ब्राह्मणः कृतपरब्रह्मसाक्षात्कारः ब्रह्मपुत्रो वा स वसिष्ठः यथावत् पूज्यते, त्वयेति शेषः ॥ ९ ॥

गो० टी०—स कच्चिदिति । सः प्रसिद्धः ब्राह्मणः ब्रह्मवित् "तदधीते तद्वेद" इत्यण् । विद्वान् सर्वविद्यासु कुशलः धर्मनित्यः ज्ञानानुगुणमनुष्ठातेत्यर्थः, महाद्युतिः तत्कृतब्रह्मचर्यसंयुक्तः इक्ष्वाकूणामुपाध्यायः कुलगुरुः वसिष्ठः यथावत् यथापूर्वं तातवत्संपूज्यते बहु मन्यते ॥ १० ॥

१० ] ति० टी०—नन्दति मद्वनवासत्वद्राज्यलाभाभ्यामिति व्यङ्ग्यम् ॥ १० ॥

रा० टी०—तातेति । हे तात ! कौसल्यादिः सुखिनी कच्चित् ॥ १० ॥

गो० टी०—सा[1] तातेति । सा पूर्वं दुःखिततया अनुभूता कौसल्या सुखिनी कच्चित् प्रजावती सुप्रजाः सुमित्रा च सुखिनी कच्चिदित्यन्वयः । आर्येति स्वमातुरपि[2] बहुमानोक्तिः, कैकेयी नन्दति कच्चित् राज्यलाभेनेति शेषः ॥ ११ ॥

११ ] ति० टी०—कुलपुत्रो महाकुलप्रसूतस्ते पुरोहितस्तावकसकलहितकृत्यानुष्ठाता । एतेन वसिष्ठपुत्रः कश्चिदुक्तः ॥११॥

रा० टी०—कच्चिदिति । विनयसंपन्नः विनीतियुक्तः कुलपुत्रः शुद्धकुलप्रसूतः अनसूयुः असूयारहितः अनुद्रष्टा सकलसत्कर्मनिपुणः ते तव सवयस्कः पुरोहितः वसिष्ठपुत्रः सत्कृतः कच्चित् सवयस्क इति षष्ठीमहिम्ना लब्धम् ॥ ११ ॥

गो० टी०—कच्चिद्विनयसंपन्न इति । विनयसंपन्नः निरहंकारः कुलपुत्रः सत्कुलप्रसूतः बहुश्रुतमवधारणं यस्य स तथा अनसूयुः छान्दस उप्रत्ययः । अनुद्रष्टा वसिष्ठोपदिष्टानामुपद्रष्टा ते पुरोहित इत्यनेन रामस्य सुयज्ञ इव भरतस्यापि प्रातिस्विकः कश्चित्पुरोहितोऽस्तीति गम्यते सुयज्ञ एवोच्यत इत्यप्याहुः । सत्कृतः पूजितः कच्चिदित्यन्वयः । अनेन पुरोहितः सदा सत्कर्तव्य इति शिक्षितमेवमुत्तरत्रापि योजनीयम् ॥ १२ ॥

१२] ति० टी०—विधिज्ञः सकलहोमविधिज्ञः युक्तो नियुक्तः, काले होमकाले वेदयते हुतं होष्यमाणं चाग्निषु ॥ १२ ॥

रा० टी०—कच्चिदिति । विधिज्ञो हवनविधिज्ञाता मतिमान् प्रशस्तबुद्धिः ऋजुः सरलस्वभावः अग्निकार्येषु ते त्वया युक्तो नियुक्तः पुरोहितः हुतं होष्यमाणं च वह्निं काले यथोचितसमये वेदयते यथाविधि चेतयते ॥ १२ ॥

गो० टी०—'पितृव्यपुत्रे सापत्ने परनारीसुतेषु च । विवाहदानयज्ञादौ परिवेदो न दूषणम्' इति स्मरणाद्वैमातुरेष्वधिवेदनदोषाभावाद्यज्ञोऽपि कृत इत्यारोप्य पृच्छति—कच्चिदग्निष्विति । अथवा अग्निषु अग्निकार्येषु युक्तः सावधानः नियुक्तो वा अग्निशुश्रूषणपर इत्यर्थः, विधिज्ञः अग्निहोत्राद्यश्वमेधान्तः सकलयागविधिज्ञः मतिमान् ऊहापोहादिकल्पनचतुरः ऋजुः प्रत्यक्षपरोक्षयोरेकरूपानुष्ठानवान् एकरूपकरणत्रय इति वार्थः, पुरोहित इति शेषः । काले तत्तद्धोमकाले वेदयते तुभ्यं ज्ञापयति कच्चित् ॥ १३ ॥

१३ ] ति० टी०—वैद्या विद्यासु सर्वासु निपुणास्तान्ब्राह्मणानभिमन्यसे बहु मन्यसे, ब्राह्मणसामान्यविषयः प्रभोऽग्रे भविष्यति, यद्वा वैद्यांश्चिकित्साप्रवीणान्ब्राह्मणानित्यर्थः । "अपूतो ह्येषो मेध्यो योऽभिषज्यति" इति श्रुत्युक्तनिन्दा तु शास्त्रानभिज्ञचिकित्साप्रवृत्तपरा । शास्त्राभिज्ञस्य भैषज्यं महते पुण्याय । तज्जीविकापरो वा निषेध इति दिक् ॥ १३ ॥

रा० टी०—कच्चिदिति । देवादीनभिमन्यसे कच्चित्॥१३॥

गो० टी०—कच्चिद्देवानिति । अभिमन्यसे बहु मन्यसे देवेषु बहुमतिर्यज्ञादिभिराराधनं पितृषु मातृषु च वचनकरणशुश्रूषणे 'भृत्यान्' इति पाठे तत्र बहुमतिर्दानं गुरुष्वनुवर्तनाभिमतकरणादि पितृसमेषु ज्ञातिष्वर्थदानं वृद्धादिषु नमस्कारादि वृद्धाः ज्ञानशीलवयोभिः विद्या येषां सन्तीति वैद्याः विद्वांसस्तान् ब्राह्मणान् ब्रह्मविदः, यद्वा वैद्यान् भिषजः तेषां बहुमतिश्च धनादिना परितोषणं, ब्राह्मणानिति जातिमात्रपरो वा तदा विद्याशीलादिकमपरीक्ष्य ब्राह्मणत्वमात्रेण यथायोग्यं बहुमानं विवक्षितम् ॥ १४ ॥

१४–१५ ] ति० टी०—इषुरमन्त्रो बाणप्रयोगः, अस्त्रं समन्त्रः सः । वरशब्द उभयसंबद्धः । अर्थशास्त्रं राजनीतिशास्त्रं तत्र विशारदं पण्डितं सुधन्वानं तन्नामानमुपाध्यायं धनुर्वेदाचार्यम् ॥ १४ ॥ १५ ॥

रा० टी०—इष्विति । इष्वस्त्रवरसंपन्नमिषुषु अस्त्रवरेषु च संपन्नं तद्विषयकातिज्ञानवन्तमर्थशास्त्रविशारदं राजनीतिप्र-

[1] सा तात कच्चिदिति गो० पाठः । [2] मातृरिति गो० पाठः ।

मन्त्रो विजयमूलं हि राज्ञां भवति राघव । सुसंवृतो मन्त्रिधुरैरमात्यैः शास्त्रकोविदैः ॥ १६ ॥
कच्चिन्निद्रावशं [2]नैषि कच्चित्कालेऽवबुध्यसे । कच्चिच्चापररात्रेषु चिन्तयस्यर्थनैपुणम् ॥ १७ ॥
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह । कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति ॥ १८ ॥
कच्चिदर्थं विनिश्चित्य लघुमूलं महोदयम् । क्षिप्रमारभसे कर्म न दीर्घयसि राघव ॥ १९ ॥
कच्चिन्नु सुकृतान्येव कृतरूपाणि वा पुनः । [3]विदुस्ते सर्वकार्याणि न कर्तव्यानि पार्थिवाः ॥ २० ॥
कच्चिन्न तर्कैर्युक्त्या वा ये चाप्यपरिकीर्तिताः । त्वया वा तव वामात्यैर्बुध्यते तात मन्त्रितम् ॥ २१ ॥

तिपादकेषु निपुणं सुधन्वानं तन्नामकमुपाध्यायं मन्यसे कच्चित् । अस्त्रवरशब्देनैवेषूणां ग्रहणे सिद्धे पुनरिषूपादानं तद्विषयकज्ञानवत्ताया अतिशयत्वप्रतिपादनाय ॥ १४ ॥

गो० टी०—इष्वस्त्रवरसंपन्नमिति । इषवः अमन्त्रका बाणाः अस्त्राणि समन्त्रकाः, वरशब्दः प्रत्येकमभिसंबध्यते अर्थशास्त्रं नीतिशास्त्रं सुधन्वानं सुधन्वनामकम् उपाध्यायं धनुर्वेदाचार्यं मन्यसे बहु मन्यसे ॥ १९ ॥

रा० टी०—कच्चिदिति । आत्मसमाः स्वसदृशाः शूराः शौर्यविशिष्टाः श्रुतवन्तो बहुश्रुताः इङ्गितज्ञाः कथनमन्तराप्यभिप्रायविज्ञातारः मन्त्रिणः ते त्वया कृताः संपादिताः कच्चित् १९

गो० टी०—कच्चिदात्मसमा इति । आत्मसमाः विश्वसनीया इति यावत् , शूराः धीरा इति यावत् , श्रुतवन्तः नीतिशास्त्रज्ञाः ' श्रुतं शास्त्रावधृतयोः' इत्यमरः, जितेन्द्रियाः परैरलोभनीया इति यावत् , कुलीनाः प्रामाणिककुलोत्पन्नाः ते त्वया ॥ १६ ॥

१६ ] ति० टी०—मन्त्रिधुरैर्मन्त्रिश्रेष्ठैः शास्त्रकोविदैर्नीतिशास्त्रज्ञैः सुसंवृतः सुतरां गुप्तः ॥ १६ ॥

रा० टी०—मन्त्रिसंपादने प्रयोजनं वदन्नाह—मन्त्र इति । हे राघव ! मन्त्रः राज्ञां विजयमूलं भवति अतो मन्त्रिधुरैः मन्त्रिनिपुणैः अमात्यैः सुसंवृतो भवति राजेति शेषः ॥ १६ ॥

गो० टी०—एतादृशमन्त्रिकरणे किं कारणं तत्राह—मन्त्र इति । सुसंवृतः सुतरां गुप्तः शास्त्रकोविदैः नीतिशास्त्रनिपुणैः मन्त्रधरैरमात्यैः सुसंवृतो मन्त्रो हि विजयमूलं भवतीत्यन्वयः ॥ १७ ॥

१७ ] ति० टी०—अर्थनैपुणमर्थप्राप्त्युपायम् ॥ १७ ॥

रा० टी०—कच्चिदिति । निद्रावशं न एषि प्राप्नोषि, काले यथोचितसमये अवबुध्यसे जागर्षि अपररात्रेषु रात्रिपरभागेषु अर्थनैपुण्यमर्थसंपादनरीतिं चिन्तयसि विचारयसि॥१७॥

गो० टी०—कच्चिन्निद्रावशमिति । अर्थनैपुणम् अर्थविषयसामर्थ्यमिति यावत् ॥ १८ ॥

१८ ] ति० टी०—नैकः एकेन मन्त्रे क्रियमाणे स्वकार्याभिनिवेशेन गुणागुणयोर्याथार्थ्यग्रहणं न सिध्यति, बहुभिर्मन्त्रणे प्रथममैकमत्यमेव न घटेत, मन्त्रभेदश्च भवेदिति भावः । राष्ट्रं न परिधावति लोकैर्न ज्ञायत इत्यर्थः ॥ १८ ॥

रा० टी०—कच्चिदिति । नैकः न एकः स्वान्यसाधारणजनो यस्य स त्वं मन्त्रयसे बहुभिः सह न मन्त्रयसे अत एव ते मन्त्रितो मन्त्रः राष्ट्रं न परिधावति अन्ये न जानन्तीत्यर्थः ॥ १८ ॥

गो० टी०—कच्चिन्मन्त्रयस इति । एको न मन्त्रयसे कच्चित् एकेन मन्त्रे क्रियमाणे तस्य कुत्रचिदभिनिवेशेन गुणागुणयोर्याथार्थ्यग्रहणं न सिध्येदिति भावः । बहुभिः सह न मन्त्रयसे कच्चित्, बहुभिः सह मन्त्रणेऽपि प्रथमं तावदैकमत्यं न घटते मन्त्रभेदश्च भवेदिति भावः । राष्ट्रं जनपदं न परिधावति न व्याप्नोति पूर्वं मन्त्रसंवरणमन्यहेतुतयोक्तम् । अत्र तु स्वतन्त्रतयोच्यत इति न पुनरुक्तिः ॥ १९ ॥

१९ ] ति० टी०—लघुमूलमल्पयत्नसाध्यम्, महोदयं महाफलम्, न दीर्घयसि न विलम्बयसि ॥ १९ ॥

रा० टी०—कच्चिदिति । अर्थं स्वार्थं विनिश्चित्य लघुमूलमल्पयत्नसाध्यं महोदयं महाफलकं कर्म क्षिप्रमारभसे दीर्घयसि विलम्बयसि तु न ॥ १९ ॥

गो० टी०—कच्चिदर्थमिति । लघुमूलं लघुसाधनं महोदयं महाफलम् अर्थं कार्यं विनिश्चित्य क्षिप्रमारभसे कच्चित् न दीर्घयसि [न] विलम्बसे कच्चित् एवमन्वयव्यतिरेकाभ्यामुक्तम् 'क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम्' इति भावः ॥२०॥

२० ] ति० टी०—पार्थिवाः सामन्तास्ते मन्त्रितानि सर्वकार्याणि सुकृतानि निष्पन्नान्येव कृतरूपाणि कृतकल्पानि वा विदन्ति, न कर्तव्यानि भावित्वेनेत्यर्थः ॥ २० ॥

रा० टी०—कच्चिदिति । कृतरूपाणि प्रारम्भविषयीभूतानीत्यर्थः, ते तव सर्वकार्याणि सुकृतानि सुनिष्पादितान्येव पार्थिवाः खण्डमण्डलेश्वराः विदुः कर्तव्यानि कर्तुं योग्यानि करिष्यमाणानीत्यर्थः, न विदुः कच्चित् ॥ २० ॥

गो० टी०—कच्चित्ते सुकृतानीति । पार्थिवाः सामन्तनृपाः ते सर्वकार्याणि मन्त्रितसर्वकार्याणि सुकृतान्येव सुनिष्पन्नान्येव विदुः कच्चित् कृतरूपाणि कृतप्रायाणि वा क्षिप्रमेव फलोन्मुखानीति यावत्, कर्तव्यानि न विदुः मन्त्रेण कर्तव्यतया निश्चितानि करणात् पूर्वं न विदुरित्यर्थः ॥ २१ ॥

२१ ] ति० टी०—ये त्वदीया मन्त्रास्त्वयाऽमात्यैश्चापरिकीर्तिता अपि शुक्रस्यार्थापत्त्या तर्कैस्तत्साध्यैरनुमानैर्वा यद्वा

१ मन्त्रधरैरिति गो.पाठः । २ नैषीरिति गो.पाठः। ३ प्रबुध्यसे इति गो.पाठः। ४ कर्तुमिति गो.पाठः। ५ त इति गो. पाठः। ६ तद्रसमिति पाठः श्रूयते।

कच्चित्सहस्रैर्मूर्खाणामेकमिच्छसि पण्डितम् । पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं महत् ॥ २२ ॥
सहस्राण्यपि मूर्खाणां यद्युपास्ते महीपतिः । अथवाप्ययुतान्येव नास्ति तेषु सहायता ॥ २३ ॥
एकोऽप्यमात्यो मेधावी शूरो दक्षो विचक्षणः । राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ २४ ॥
कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः । जघन्याश्च जघन्येषु भृत्यास्ते तात योजिताः ॥ २५ ॥
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् । श्रेष्ठाञ्छ्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ २६ ॥

तर्कास्तत्कारणानुमापकाः, युक्तयः साक्षात्तदनुमापिकाः परैर्न बुध्यन्ते किल। किं च परकृतं मन्त्रितं त्वया त्वदमात्यैर्वा बुध्यते किल ॥ २१ ॥

रा० टी०–कच्चिदिति। अपरिकीर्तिता अकथिता अपि ये तव मन्त्रास्ते तर्कैर्युक्त्या वा न बुध्यन्ते परैरिति शेषः, मन्त्रितमन्यमन्त्रविषयीभूतं त्वया तवामात्यैर्वा बुध्यते, बुध्यते इत्यस्य वचनविपरिणामेनान्यत्राप्यन्वयः ॥ २१ ॥

गो० टी०–कच्चिन्नेति। मन्त्रितं कार्यं त्वया वा तवामात्यैर्वा हेतुभिस्तर्कैः ऊहैः युक्त्या वा अनुमानेन वा ये चाप्यपरिकीर्तिताः अनुक्ता इङ्गितादयः तैर्वा न बुध्यते कच्चित् परैरिति शेषः, भवान् भवदीयामात्याश्च मन्त्रितार्थविषयपराभ्यूह्यस्थानानि सूक्ष्माण्यपि स्थगयन्ति कच्चिदित्यर्थः ॥ २२ ॥

२२ ] ति० टी०–सहस्रैः त्यक्तैरपीति शेषः। पण्डितपरिग्रहे हेतुमाह–पण्डित इति। अर्थकृच्छ्रेष्वर्थसंकटेषु निःश्रेयसं कुर्यात्। अव्यभिचरितनिस्तारोपायबोधनेनेति शेषः ॥२२॥

रा०टी०–कच्चिदिति। मूर्खाणां सहस्रैः सहस्राणि परित्यज्येति शेषः, एकं पण्डितमिच्छसि। ननु किमेतेनेत्यत आह–अर्थकृच्छ्रेषु अर्थसंकटेषु प्राप्तेषु सत्सु पण्डितो महत् निःश्रेयसं कल्याणं कुर्यात् ॥ २२ ॥

गो० टी०–कच्चित्सहस्रादिति। मूर्खाणां सहस्रात् मूर्खसहस्रं परित्यज्यापि ल्यब्लोपे पञ्चमी पण्डितं विमृश्यकारिणमेकमिच्छसि कच्चित्। पण्डितपरिग्रहे हेतुमाह–पण्डित इति। अर्थकृच्छ्रेषु कार्यसंकटेषु। पाठान्तरम् अर्थकृच्छ्रेषु अर्थसंकटेषु महन्निःश्रेयसं महदैश्वर्यं प्रापयेदित्यर्थः। पाठान्तरं महन्निःश्रेयसम् अव्यभिचारितफलसाधनोपायं कुर्यात् उपदिशेदित्यर्थः ॥ २३ ॥

२३ ] ति० टी०–सहायता सहायकार्यक्षमता ॥ २३ ॥

रा० टी०–सहस्राणीति। मूर्खाणां सहस्राणि अथवा अयुतानि दशसहस्राणि महीपतिः यद्युपास्ते तदापि तेषु उपासितेषु सहायता साहाय्यकर्तृत्वं नास्ति, एतेन मूर्खजनेष्वतिस्नेहो न कार्य इति ध्वनितम् ॥ २३ ॥

गो० टी०–एवमन्वयेनोपपाद्य व्यतिरेकमुखेनोपपादयति–सहस्राणीति। उपास्ते आश्रयति संगृह्णातीत्यर्थः। नास्तीत्यस्मात्पूर्वं तथापीत्युपस्कार्यम् सहायता मन्त्रोपायसहायत्वम् ॥ २४ ॥

२४ ] ति० टी०–विचक्षणोऽभ्यस्तनीतिशास्त्रः ॥ २४ ॥

रा० टी०–एक इति। मेधावी शास्त्रसंस्कारजनितमेधाविशिष्टः अत एव विचक्षणः नीतिनिपुणः एको प्यमात्यः महतीं श्रियं प्रापयेत् ॥ २४ ॥

गो० टी०–पण्डितशब्दार्थं विवृण्वन्नाह–एक इति। मेधाऽस्यास्तीति मेधावी "अस्मायामेधास्रजो विनिः" इति विनिः। झटिति परोपन्यस्तार्थग्रहणपटुरित्यर्थः। शूरः स्थिरबुद्धिः, दक्षः विचारसमर्थः, विचक्षणः अभ्यस्तनीतिशास्त्रः॥२५॥

२५ ] ति० टी०–मुख्या महान्तः ॥ २५ ॥

रा० टी०–कच्चिदिति। महदादिषु कर्मसु मुख्यादयः भृत्याः क्रमेणैव योजिताः। तत्र मुख्या महान्तः जघन्याः निकृष्टाः, एतेन विपरीतयोजना न कर्तव्येति सूचितम् ॥ २५ ॥

गो० टी०–कच्चिन्मुख्या इति। मुख्याः भृत्याः महत्सु मुख्येष्वेव कार्येषु वचनपरिवेषणादिषु कच्चिन्नियोजिताः न तु हीनेषु कार्येषु, मध्यमाः जात्यादिना मध्यमा भृत्याः मध्यमेष्वेव कार्येषु शय्यासनानयनादिषु नियोजिताः न तूत्तमाधमकार्येषु, जघन्याः जात्यादिहीनाः भृत्याः जघन्येष्वेव कार्येषु पादप्रक्षालनपादुकानयनपादसंवाहनादिषु नियोजिताः न तूत्तममध्यमेषु कार्येषु योजिताः कच्चित्, अन्यथा महद्वैशसं भवेदिति भावः ॥ २६ ॥

२६ ] ति० टी०–उपधा उत्कोचस्तमतीतांस्तद्ग्राहिणः, यद्वोपाधिप्रयुक्तसंश्रयरहितान् अत एव पितृपैतामहान् शुचीन्बाह्यान्तरेन्द्रियशुद्धान् ॥ २६ ॥

रा० टी०–अमात्यानिति। उपधातीतान् उपधा सुपरीक्षा अतीता व्यतीता येषां तान् सुपरीक्षितानित्यर्थः, शुचीन् कापट्यरहितान् अमात्यान् श्रेष्ठेषु कर्मसु त्वं नियोजयसि कच्चित् 'उपधा सुपरीक्षा स्यात्' इति वैजयन्ती। उपधा उत्कोचः तमतीतान् तदग्राहिण इति भट्टाः ॥ २६ ॥

गो० टी०–भृत्येषूक्तं न्यायममात्येषु अतिदिशति–अमात्यानिति। उपधातीतान् स्वव्यतिरिक्तेष्वर्थाद्युपाधिरहितान्, यद्वा सुपरीक्षातीतान् 'उपधा सुपरीक्षा स्यात्' इति वैजयन्ती। श्लाघ्यवस्त्राभरणादिकं पुरुषमुखेन संप्रेष्य अन्तःपुरप्रेषितं परराजप्रेषितमिति प्रलोभ्य परीक्षां कुर्वन्ति राजानः तामतीतानित्यर्थः। पितृपैतामहान् कुलक्रमागतान् शुचीन् करणत्रयशुद्धियुक्तान् ॥ २७ ॥

१ सहस्रादिति गो. पाठः। २ राजमात्रमिति गो. पाठः। ३ स्विति गो. पाठः। ४ कर्मस्विति गो. पाठः।

कच्चिन्नोग्रेण दण्डेन भृशमु[1]द्वेजिताः प्रजाः । रा[2]ष्ट्रे तवा[3]वजानन्ति मन्त्रिणः कैकयीसुत ॥ २७ ॥
कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा । उ[4]ग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ २८ ॥
उपायकुशलं वैद्यं भृत्यं संदूषणे रतम् । शूरमैश्वर्यकामं च यो हन्ति न स ह[5]न्यते ॥ २९ ॥
कच्चिद्धृष्टश्च शूरश्च धृतिमान्मतिमाञ्छुचिः । कुलीनश्चानुरक्तश्च दक्षः सेनापतिः कृतः ॥ ३० ॥
बलवन्तश्च कच्चित्ते मुख्या युद्धविशारदाः । दृष्टापदाना विक्रान्तास्त्वया सत्कृत्य मानिताः ॥ ३१ ॥

---

२७ ] ति० टी०—उद्वेजिताः प्रजा मन्त्रिणश्च राष्ट्रे तव त्वां नावजानन्ति नावमन्यन्ते ॥ २७ ॥

रा० टी०—कच्चिदिति । उग्रेण शास्त्रातिवर्तिना दण्डेन उद्वेजिताः भयं प्रापिताः प्रजाः मन्त्रिणो वा तव त्वामनुजानन्ति अवमन्यन्ते न कच्चित् ॥ २७ ॥

गो० टी०—कच्चिन्नोग्रेणेति । तत्र उग्रेण दण्डेन उद्वेजितप्रजं पीडितप्रजायुक्तं राष्ट्रं राज्यं मन्त्रिणः नानुजानन्ति नानुमन्यन्ते कच्चित्, राजानं त्वामुग्रदण्डात् निवर्तयन्ति कच्चिदित्यर्थः ॥ २८ ॥

२८ ] ति० टी०—याजकाः किंचित्पापानुसंधानेन पतितमिव त्वामयाज्योऽयमिति मत्वा नावजानन्ति किल । तत्र दृष्टान्तः—उग्रेत्यादि । स्त्रियः कुलस्त्रियः उग्राख्यहीनजातीयस्त्रीप्रतिग्रहीतारम् । तां च कामयानं कामयमानं तस्यामत्यन्तासक्तं यथावजनन्तीत्यर्थ इति कतकः । 'उग्रप्रति–' इति पाठः उग्रेण कर्मणा बलात्कारादिना प्रतिग्रहीतारं कामयानं कामुकं स्त्रिय इव याजकाः पतितमिव च नावजानन्ति प्रजा इति शेषः । प्रजातिक्रमणमुग्रकरग्रहणं च त्वयि नास्ति कच्चिदिति भाव इति तीर्थः । परे तु—उग्रप्रतिग्रहीतारम् उग्रः शिवस्तत्प्रतिग्रहीतारमल्पपुंस्त्वम्, तत्प्रतिग्रहीतुरीदृशपण्ढतायाः कर्मविपाकशास्त्रे उक्तेरित्याहुः ॥ २८ ॥

रा० टी०—कच्चिदिति । याजकाः पतितं सुरापानादिना यागानर्हमिव त्वां नावजानन्ति कच्चित् । तत्र दृष्टान्तः—उग्रप्रतिग्रहीतारं हीनजातिस्त्रीस्वीकारकारिणमत एव कामयानं कामयमानं तत्रैवासक्तमित्यर्थः, जनं स्त्रियः पाणिगृहीत्य इव ॥ २८ ॥

गो० टी०—कच्चित्त्वामिति । उग्रप्रतिग्रहीतारमित्युपमानोपमेययोः साधारणविशेषणम् । उग्रेण दण्डोपायेनादण्ड्येभ्यो धनग्रहणं कुर्वन्तं त्वाम् उग्रप्रतिग्रहीतारम् उग्रेण दुर्दानेन धनप्रतिग्रहीतारं पतितं यष्टुकामं पतितं याजका ऋत्विज इव उग्रेण कर्मणा बलात्कारेण प्रतिग्रहीतारं कामयानं पुरुषं स्त्रिय इव वचनाज्जानन्ति कच्चित्, प्रजा इति शेषः । प्रजावमानहेतुभूतं न्यायातिक्रमेण उग्रकरग्रहणं त्वयि नास्ति कच्चिदिति भावः ॥ २९ ॥

२९ ] ति० टी०—उपायकुशलं सामाद्युपायचतुरम् । वैद्यं विद्याविदं राजनीतिशास्त्रज्ञं भृत्यं संदूषणे रतं येन केनापि हेतुनाऽऽत्मभृत्यविघटने रतं शूरं मरणानिर्भयं ऐश्वर्यकामं राज्याभिलाषिणं यो न हन्ति स हन्यते वध्यते इत्यर्थः इति तीर्थः । उपायकुशलं राज्ञः सकाशादर्थग्रहणार्थं व्याधिवर्धनोपायकुशलं वैद्यं भिषजं स्वामिसंदूषणे रतं भृत्यं सेवकं च राजानमपेच्छिद्य तदैश्वर्यकामं शूरं सेवकरूपं प्रभुं च यो न हन्ति स राजा तैरेवं भिषजादिभिर्हन्यते इत्यर्थं कतक आह ॥ २९ ॥

रा० टी०—उपायेति । ऐश्वर्यकामं स्वातन्त्र्येण राजैश्वर्यभोगेच्छावन्तमत एव भृत्यसंदूषणे भृत्यचित्तचालकयत्ने रतमुपायेषु रोगप्रवर्तननिवर्तनयत्नेषु कुशलं निपुणं शूरं वैद्यं भिषजं यो न हन्ति स हन्यते तेन वैद्येनेति शेषः ॥ २९ ॥

गो० टी०—उपायकुशलमिति । उपायेषु सामाद्युपायेषु कुशलं निपुणं वैद्यं कणिकोक्तकुटिलनीतिविद्याविदम् । पाठान्तरं चाणक्याद्युक्तकुटिलनीतिशास्त्रविदं. भृत्यसंदूषणे रतम् अन्तरङ्गभृत्यानां संदूषणे असद्दोषोद्घाटनेन तद्विघटने रतं शूरं राजहिंसनेऽपि निर्भयम् ऐश्वर्यकामं क्रमेण राजैश्वर्याक्रमणकामं च पुरुषं यो न हन्ति स राजा तेनैव वध्यते राज्याद्भ्रष्टो भवतीत्यर्थः । एवंविधः पुरुषः स्वत्सन्निधौ न वर्तते कच्चिदित्यर्थः ॥ ३० ॥

३० ] ति० टी०—शूराः परयोधाभिभवनसमर्थाः, धृतिमान्विपदि प्रशस्तधैर्यः, दक्षश्चतुरः ॥ ३० ॥

रा० टी०—कच्चिदिति । हृष्टः युद्धोत्साहविशिष्टः धृतिमान् धैर्यवान् अनुरक्तः स्वविषयकानुरागविशिष्टः दक्षः सामदानादिसमर्थः सेनापतिः कृतः कच्चित् ॥ ३० ॥

गो० टी०—संग्राह्यसेनापतिगुणानाह—कच्चिद्धृष्ट इति । हृष्यतीति हृष्टः राजकृतसत्कारेण संतुष्टः, यद्वा धृष्ट इतिच्छेदः धृष्टः व्यवहारेषु प्रगल्भः शूरः परनिग्रहपरः मतिमान् तत्तत्समयानुगुणस्वपरसेनाव्यूहतद्भेदनसेनानयनादिचतुरबुद्धियुक्तः धृतिमान् विपदि प्रशस्तधैर्यः शुचिः बाह्याभ्यन्तरशुद्धियुक्तः, यद्वा शुचिः स्वामिनि सविश्वासः कुलीनः सत्कुलप्रसूतः अनुरक्तः स्वस्मिन्निरवधिकप्रीतिमान् दक्षः कार्यकुशलः एवंविधः सेनापतिः कृतः कच्चित्, तादृशं पूर्वसेनापतिं विहायातादृशमन्यं न परिगृहीतवानसि कच्चिदित्यर्थः ॥ ३१ ॥

३१ ] ति० टी०—मुख्या गणमुख्याः, दृष्टापदाना दृष्टं द्वित्रिवारानुभूतमपदानं पूर्ववृत्तं पौरुषं येषां ते विक्रान्ताः शूराः ३१

रा० टी०—बलवन्त इति । दृष्टापदानाः दृष्टानि पूर्वं बहुवारमनुभूतानि अपदानानि वृत्तानि येषां ते विक्रान्ताः स्वसमीपं प्राप्ताः बलवन्तः सत्कृत्य वचनसत्कारं कृत्वा मानिताः वस्त्राभरणादिदानेन संतोषिताः ॥ ३१ ॥

गो० टी०—बलवन्त इति । बलवन्तः अत्यन्तबलाः ते प्रसिद्धाः मुख्याः गुणमुख्याः युद्धविशारदाः युद्धे समर्थाः दृष्टं

---

१ उद्वेजितप्रजमिति गो. पाठः । २ राष्ट्रं तवान्विति गो. पाठः । ३ अन्विति रा. पाठः । ४ उग्रप्रतीति गो. रा. पाठः । ५ वध्यत इति गो. पाठः ।

कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् । संप्राप्तकालं दातव्यं ददासि न विलम्बसे ॥ ३२ ॥
कालातिक्रमणे ह्येव भक्तवेतनयोर्भृताः । भर्तुरप्यतिकुप्यन्ति सोऽनर्थः सुमहान्कृतः ॥ ३३ ॥
कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः । कच्चित्प्राणांस्तवार्थेषु संत्यजन्ति समाहिताः ॥ ३४ ॥
कच्चिज्जानपदो विद्वान्दक्षिणः प्रतिभानवान् । यथोक्तवादी दूतस्ते कृतो भरत पण्डितः ॥ ३५ ॥
कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च । त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारणैः ॥ ३६ ॥

साक्षात्कृतम् अपदानं पूर्ववृत्तं पौरुषं येषां ते तथोक्ताः विक्रान्ताः शूराः 'शूरो वीरश्च विक्रान्ते' इत्यमरः । सत्कृत्य मानिताः पारितोषिकदानपूर्वकं श्लाघिताः कच्चित् ॥ ३२ ॥

३२ ] ति० टी०—भक्तं दैनंदिनदेयान्नम्, वेतनं प्रतिमासदेयम् ॥ ३२ ॥

रा० टी०—कच्चिदिति । संप्राप्तः कालो दानसमयो यस्य तत् अत एव दातव्यं द्रुतं देयं बलस्य सैन्यजनस्य भक्तं प्रतिदिनं देयमन्नादिकं वेतनं च यथोचितं ददासि विलम्बसे तु न ॥ ३२ ॥

गो० टी०—कच्चिद्बलस्येति । बलस्य सैन्यस्य संप्राप्तकालं कालप्राप्तं दातव्यं तत्तत्काले देयं भक्तमन्नं वेतनं प्रतिमासं देयां भृतिं च यथोचितं तत्तत्कार्योचितं ददासि न विलम्बयसे कच्चित् कालातिक्रमणं विना ददासि कच्चित् ॥ ३३ ॥

३३ ] ति० टी०—भृता भृतिजीविनो भृत्याः ॥ ३३ ॥

रा० टी०—विलम्बे दोषमाह—कालेति । भृताः भृतिजीवनवन्तो भृत्या भक्तवेतनयोः नियुक्तान्नभृत्योः कालातिक्रमणे सति भर्तुः भर्त्रे अतिकुप्यन्ति स कोपः सुमहान् अनर्थः अर्थविघातकः स्मृतः ॥ ३३ ॥

गो० टी०—विलम्बे दोषमाह—कालातिक्रमणादिति । भृत्याः भृतिजीविनः भटा इति यावत्, भर्तुः कुप्यन्ति भर्तारं प्रति कुप्यन्ति दुष्यन्ति कोपेन विकृता भवन्ति स विकारः सुमहाननर्थः स्मृतः अनर्थकरो भवेदित्यर्थः ॥ ३४ ॥

३४] ति० टी०—कुलपुत्रा ज्ञातयः । प्रधानतः प्रधानाः ॥ ३४ ॥

रा० टी०—कच्चिदिति । प्रधानतः प्रधानाः कुलपुत्राः तव कुलप्रसूताः त्वामनुरक्ताः त्वद्विषयकानुरागवन्तः सन्तीति शेषः, अत एव तवार्थेषु प्रयोजनेषु समाहिताः सन्तः प्राणान् संत्यजन्ति त्यागाद्यनुकूलव्यापारानुकूलकृतिमन्तो भवन्तीत्यर्थः ॥ ३४ ॥

गो० टी०—कच्चित्सर्व इति । कुलपुत्राः क्षत्रियकुलप्रसूताः ज्ञातय इति वा प्रधानतः प्रधानाः सार्वविभक्तिकस्तसिः ॥ ३५ ॥

३५ ] ति० टी०—प्रतिभानवान्प्रत्युत्पन्नमतिः यथोक्तवादी यथोक्तसंदेशप्रतिसंदेशवक्ता पण्डितः परिच्छेत्ता 'दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् । इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्गतम् ॥' इति मनुः ॥ ३५ ॥

रा० टी०—कच्चिदिति । विद्वान् नीतिज्ञः दक्षिणः चतुरः प्रतिभानवान् विस्मृतिरहितः पण्डितः सदसत्कार्यविवेकी अत एव यथोक्तवादी संदेशप्रतिसंदेशयोर्यथोक्तं वक्ता दूतस्ते त्वया कृतः ॥ ३५ ॥

गो० टी०—कच्चिज्जानपद इति । जानपदः स्वजनपदभवः परजनपदभवश्चेत्पक्षपातमाचरेत् विद्वान् पराभिप्रायज्ञः दक्षिणः समर्थः प्रतिभानवान् प्रत्युत्पन्नमतिः परोक्तस्याविलम्बसुचितोत्तरज्ञ इति यावत्, यथोक्तवादी उक्तमनतिक्रम्य संदेशप्रतिसंदेशवदनशीलः कार्योपयोगितया बहुमुखं व्याहरन्नपि स्वाम्युक्तमजहदेव व्यवहर्तेति यावत्, पण्डितः परिच्छेत्ता 'परिच्छेदो हि पाण्डित्यम्' इत्युक्तेः ॥ ३६ ॥

३६ ] ति० टी०—कच्चिदष्टादशेति । तानि च—मन्त्री, पुरोहितः, युवराजा, सेनापतिः, दौवारिकः, अन्तःपुराधिकृतः, बन्धनागाराधिकृतः, धनाध्यक्षः, राजाज्ञया आज्ञाप्येषु वक्ता, प्राड्विवाकसंज्ञो व्यवहारप्रष्टा, धर्मासनाधिकृतः, व्यवहारनिर्णेता सभ्याख्यः, सेनाया जीवितभृतिदानाध्यक्षः, कर्मान्ते वेतनग्राहिणः, नगराध्यक्षः, राष्ट्रान्तःपालः अयमेवाटविकः, दुष्टानां दण्डनाधिकारी, जलगिरिवनस्थलदुर्गपालाः, एतान्येव स्वपक्षे मन्त्रिपुरोहितयुवराजान्हित्वा च पञ्चदश । एकैकस्मिन्विषये त्रिभिस्त्रिभिरभिज्ञातैः परस्परमितरैश्चाभिज्ञातैरेतान्यष्टादश तीर्थानि वेत्सि कच्चित् । 'योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि ॥' इति । स्वदेशेऽप्येतैर्न्यायतो व्यवहारः प्रवर्त्यते न वेति विचारणीयं परदेशे चेति भावः ॥ ३६ ॥

रा० टी०—कच्चिदिति । अविज्ञातैः परस्परमन्यैर्वा ज्ञानरहितैः त्रिभिस्त्रिभिः एकैकस्मिन्विषये नियुक्तैरिति शेषः, चारणैः चारैः अन्येषु अन्यराजसमीपेषु अष्टादशतीर्थानि मन्त्र्यादीनि स्वपक्षे स्वसमीपे दशपञ्च मन्त्रिपुरोहितयुवराजान् संत्यज्य दशपञ्चसंख्याकानि तीर्थानि त्वं वेत्सि परीक्षया जानासि कच्चित् । मन्त्र्यादयस्तु १ मन्त्री, २ पुरोहितः, ३ युवराजः, ४ सेनापतिः, ५ दौवारिकः, ६ अन्तःपुराधिकृतः, ७ बन्धनागाराधिकृतः, ८ धनाध्यक्षः, ९ राजाज्ञाया आज्ञाप्येषु वक्ता, १० प्राड्विवाकसंज्ञो व्यवहारप्रष्टा, ११ धर्मासनाधिकृतः, १२ व्यवहारनिर्णेता सभ्याख्यः, १३ सेनायां जीवितभृतिदानाध्यक्षः, १४ कर्मान्ते वेतनग्राही, १५ नगराध्यक्षः,

१ क्रमणाच्चैवेति गो. पाठः । २ भर्तुः कुप्यन्ति दुष्यन्तीति गो.पाठः । ३ स्मृत इति गो.रा.पाठः । ४ चारकैरिति गो.पाठः । ५ राज इति युक्तं भाति ।

कच्चिद्व्यपास्तानहितान्प्रतियातांश्च सर्वदा । दुर्बलाननवज्ञाय वर्तसे रिपुसूदन ॥ ३७ ॥
कच्चिन्न लोकायतिकान्ब्राह्मणांस्तात सेवसे । अनर्थकुशला ह्येते बालाः पण्डितमानिनः ॥ ३८ ॥

---

१६ राष्ट्रान्तःपालः अयमेवाटविकः, १७ दुष्टानां दण्डनाधिकारी, १८ जलगिरिवनदुर्गस्थलपालः इति । ‘योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि’ इति कोशः ॥ ३६ ॥

गो० टी०—कच्चिदष्टादशान्येष्विति । अन्येषु परपक्षेषु अष्टादशतीर्थानि स्वपक्षे पञ्चदश तीर्थानि च अविज्ञातैः परस्परमन्यैश्चाविज्ञातैः विज्ञातत्वे तेषां सांकेतिकव्यवहारः प्रादुष्यात् एकस्मिन् तीर्थे त्रिभिस्त्रिभिः चारकैः वेषान्तरधारिभिश्चारैः कुत्रिमार्थे कप्रत्ययः। वेत्सि कच्चित् एतानि न्यायतोऽन्यायतो वा प्रवर्तन्त इति जानासि कच्चिदित्यर्थः। तानीमानि अष्टादशनीतिशास्त्रोक्तानि तीर्थानि मन्त्रिपुरोहितयुवराजसेनापतिदौवारिकान्तर्वंशिककारागाराधिकृतार्थसंचयकृत्कार्यनियोजकप्राड्विवाकसेनानायकनगराध्यक्षकर्मान्तिकसभ्यधर्माध्यक्षदण्डपालदुर्गपालराष्ट्रान्तपालाः । एष्वेव मन्त्रिपुरोहितयुवराजव्यतिरिक्तानि स्वपक्षे पञ्चदश तीर्थानि । मन्त्रिपुरोहितयुवराजसेनापतयः प्रसिद्धाः, दौवारिकः अन्तःपुरादिद्वाररक्षणाधिकृतजननिर्वाहकः, अन्तर्वंशिकः अन्तःपुरकार्यनिर्वाहकः, कारागारम् अपराधिनां बन्धनगृहं तत्राधिकृतः कारागाराधिकृतः, अर्थसंचयकृत् धनाध्यक्षः, कार्यनियोजकः राजाज्ञायाः बहिः प्रचारकर्ता, प्राड्विवाकः व्यवहारप्रष्टा, तल्लक्षणमुक्तम्—‘विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च । प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः’ इति । सेनानायकः सेनायाः भृतिजीवनादिदानाध्यक्षः, नगराध्यक्षः रात्रौ नगरशोधननगरद्वारप्राकारादिरक्षणसंविधानादिकर्ता, कर्मान्तिकः कार्यान्ते वेतनग्राहिणां सैनिकव्यतिरिक्तानां सर्वेषां राज्ञः सकाशात् एकधा स्वयं वेतनं गृहीत्वा प्रत्येकं तथो दापयति सः, सभ्यः प्रतिदिनं सभालंकरणराजमन्त्रिप्रभृतिसमुचितासनविधानसभ्यानयनासभ्यनिरोधनयथोचितनिवेशनसभानिःशब्दीकरणसभारक्षणादिविधायिजननिर्वाहकः, धर्माध्यक्षः दायभागादिविषये विवादं कुर्वतां विवादपदविशोधनपूर्वकं यथाधर्मशास्त्रं विवादशमनकर्ता, दण्डपालः परस्वापहरणाद्यपराधकारिणां राजाज्ञाप्रकारेण करशिरश्छेदादिविधायिजननियोजकः, दुर्गपालः गिरिजलवनादिदुर्गसंततरक्षकजननिर्वाहकः, राष्ट्रान्तपालः स्वराष्ट्रसीमान्ते सर्वासु दिक्षु परराजाक्रमणादिनिवारणाय सदा तद्रक्षणं कुर्वतां निर्वाहकः, स्वकीयमन्त्रिपुरोहितयुवराजा न परीक्ष्याः तेषां सदा स्वसमीपवर्तित्वेन तत्स्वभावस्य स्वेनैव ज्ञातत्वात्, तथोक्तं नीतिशास्त्रे—‘चारान्विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाषण्डादीनविज्ञातानन्योन्यमितरैरपि ॥ मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम्’ इति । स्वेषु मन्त्रिणं युवराजं पुरोहितं च हित्वेत्यन्वयः । एषां तीर्थशब्दवाच्यत्वमुक्तं हलायुधे—‘योनौ जलावतारे च मन्त्र्याद्यष्टादशस्वपि । पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद्दर्शनेष्वपि’ इति ॥ ३७ ॥

३७ ] ति० टी०—व्यपास्तान्निष्कासितान् प्रतियातान्पुनरागतान् दुर्बलान्दुर्बलानपि अनवज्ञायेति दुर्बलोऽयमहितः किमस्माकं करिष्यतीत्युपेक्षां न करोषि कच्चित् ॥ ३७ ॥

रा० टी०—कच्चिदिति । व्यपास्तान् देशविशेषात् निष्काशितान् अत एव दुर्बलान् प्रतियातान् पुनः स्वदेशं कथंचित्प्राप्तान् अहितान् शत्रून् अवज्ञाय अतिदुर्बलत्वान्न कंचिदपकारं कर्तुं समर्था इमे इति बुद्ध्या अनुपेक्ष्य वर्तसे कच्चित् ॥ ३७ ॥

गो० टी०—कच्चिद्व्यपास्तानिति । व्यपास्तान् निष्कासितान् प्रतियातान् पुनरागतान् अहितान् शत्रून् दुर्बलाननवज्ञाय वर्तसे कच्चित् दुर्बला इत्यवज्ञां कृत्वा न वर्तसे कच्चिदिति भावः । प्रतियानमवष्टम्भमन्तरेण न संभवतीति मत्वा तेषु सावधानतया स्थातव्यमिति भावः ॥ ३८ ॥

३८ ] ति० टी०—लोकायतिकांश्चार्वाकमतानुचारिणः प्रत्यक्षमात्रप्रमाणकान् अपरे लोकायतिकाः शुष्कतर्कवावदुकाः । ब्राह्मणत्वेऽपि तदपरिग्रहे हेतुमाह—अनर्थेति । परलोकतत्साधनाभावरूपानर्थप्रतिपादनकुशलाः अत एव बाला अज्ञाः वेदज्ञसंनिधाविति शेषः, पण्डितमानिनः स्वयूथ्येष्वेव केवलमात्मनः पण्डितान्मन्यन्ते नान्यत्र ॥ ३८ ॥

रा० टी०—कच्चिदिति । ब्राह्मणान् ब्राह्मणकुलोत्पन्नान् अपि लोकायतिकान् प्रत्यक्षमात्रप्रमाणकान् शुष्कतर्कवादिनश्च तदुपलक्षितचार्वाकबौद्धादीनपि न सेवसे कच्चित् । तत्सेवने दोषमाह—बालाः परलोकविषयकज्ञानाभाववन्तः पण्डितमानिनः पण्डितंमन्याः एते लोकायतिकप्रभृतयः अनर्थकुशलाः अनर्थे सर्वार्थविघातके परमार्थबुद्धिनिवर्तने कुशलाः निपुणाः सन्तीति शेषः ॥ ३८ ॥

गो० टी०—कच्चिन्न लोकायतिकानिति । लोकायतिकान् लोकेष्वायतं विस्तृतं लोकायतं प्रत्यक्षप्रमाणं, यद्वा लोकायतशब्दाभ्यां प्रत्यक्षमनुमानं चोच्यते लोक्यते साक्षात्क्रियतेऽनेनेति लोकः प्रत्यक्षप्रमाणम् आसमन्ताद्व्याप्य धूमादिसमीपवर्ती वह्न्यादिर्यत्यते गृह्यतेऽनेनेति आयतमनुमानं तदेषामस्तीति लोकायतिकाः “अत इनिठनौ” इति ठन्प्रत्ययः। नास्तिका बौद्धचार्वाकादयः तान् ब्राह्मणान् न सेवसे कच्चित् । असेवायां हेतुमाह—अनर्थेति । अर्थेषु तत्त्वार्थेषु कुशलाः यथावज्ज्ञानवन्तः ते न भवन्तीत्यनर्थकुशलाः, यद्वा अनर्थः धर्मोल्लङ्घनश्रद्धावैकल्यं तन्मूलकसज्जनबहिष्कारनरकपतनादिः तत्र कुशलाः दुर्बोधनेन तत्संपादका इत्यर्थः, बालाः

धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्बुधाः । बुद्धिमान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते ॥ ३९ ॥
वीरैरध्युषितां पूर्वमस्माकं तात पूर्वकैः । सत्यनामां दृढद्वारां हस्त्यश्वरथसंकुलाम् ॥ ४० ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः स्वकर्मनिरतैः सदा । जितेन्द्रियैर्महोत्साहैर्वृतामार्यैः सहस्रशः ॥ ४१ ॥
प्रासादैर्विविधाकारैर्वृतां वैद्यजनाकुलाम् । कच्चित्समुदितां[1] स्फीतामयोध्यां परिरक्षसे[2] ॥ ४२ ॥
कच्चिच्चैत्यशतैर्जुष्टः[3] सुनिविष्टजनाकुलः । देवस्थानैः प्रपाभिश्च तटाकैश्चोपशोभितः ॥ ४३ ॥
प्रहृष्टनरनारीकः समाजोत्सवशोभितः । सुकृष्टसीमापशुमान्हिंसाभिरभिवर्जितः[4] ॥ ४४ ॥
अदेवमातृको रम्यः श्वापदैः परिवर्जितः । परित्यक्तो भयैः सर्वैः खनिभिश्चोपशोभितः ॥ ४५ ॥
विवर्जितो नरैः पापैर्मम पूर्वैः सुरक्षितः । कच्चिज्जनपदः स्फीतः सुखं वसति राघव ॥ ४६ ॥

तत्त्वज्ञानविरोध्यज्ञानयुक्ताः अथ च पण्डितमानिनः अपण्डितः मात्मानं पण्डितं मन्वानाः एते अनर्थकुशला हि ॥ ३९ ॥

३९ ] ति० टी०—द्वितीयलोकायतानां त्यागे हेतुमाह—धर्मेत्यादि । मुख्येषु मुख्यप्रमाणभूतेषु । आन्वीक्षिकी तर्कविद्या । शुष्कतर्कविद्याजनितां बुद्धिमवलम्ब्य निरर्थं निष्प्रयोजनं वदन्ति । "यथात्मनो ज्ञानाश्रयत्वमीशो जगन्निमित्तकारणं नित्यज्ञानादिगुणकश्च" इत्यादिश्रुतिविरुद्धवादाभिप्रायमिदम् ३९॥

रा० टी०—अनर्थकुशलत्वं प्रकटयन्नाह—धर्मेति । मुख्येषु प्रमाणप्रधानेषु धर्मशास्त्रेषु विद्यमानेषु सत्सु दुर्बुधाः वेदविरुद्धज्ञानवन्तस्ते लोकायतिकादयः आन्वीक्षिकीं शुष्कतर्कजनितां बुद्धिं प्राप्य निरर्थं परमार्थशून्यं प्रवदन्ति । एतेन स्वहिताकाङ्क्षिभिः बौद्धादिसंसर्गः दूरतः परिहर्तव्य इति सूचितम् ॥ ३९ ॥

गो० टी०—अनर्थकुशलत्वमेवोपपादयति—धर्मशास्त्रेष्विति । दुर्बुधाः वेदमार्गविपरीतबुद्धयः ते मुख्येषु तामसस्मृतिपुराणादिव्यावृत्तेषु सात्त्विकमहर्षिप्रणीतेषु सज्जनादरणीयेषु धर्मशास्त्रेषु धर्मप्रमापकशास्त्रेषु विद्यमानेषु तत्संप्रदायपरंपरया पठ्यमानेषु सत्सु आन्वीक्षिकीं बुद्धिं प्राप्य शुष्कतर्कविषयां बुद्धिमास्थाय निरर्थं निष्प्रयोजनं प्रवदन्ति 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' इति स्मृतेः ॥ ४० ॥

४० ] ति० टी०—सत्यनामामयोध्येत्यन्वर्थनामाम् ॥ ४०॥

४१ ] ति० टी—आर्यैरुक्तत्रैवर्णिकैः ॥ ४१ ॥

४२] ति० टी०—समुदितां सिद्धाम्, स्फीतां समृद्धाम्॥४२॥

रा० टी०—वीरैरिति । हे तात! अस्माकं पूर्वकैः वीरैः पूर्वमध्युषितामधिष्ठितां दृढद्वारां दृढानि द्वाराणि यस्यास्तां हस्त्यश्वरथसंकुलां हस्त्यादिव्याप्तां स्वकर्मनिरतैः जितानि इन्द्रियाणि यैस्तैः महोत्साहैः दुःखास्पृष्टत्वेनात्युत्साहविशिष्टैः अत एव आर्यैः श्रेष्ठैः सहस्रशो ब्राह्मणादिभिः वृतां विविधाकारैः अनेकविधाकारविशिष्टैः प्रासादैर्वृतां वैद्यजनैः वैद्यानां जनैर्मुख्यभिषग्भिरित्यर्थः, आकुलां व्याप्तां समुदितां सम्यगुदितं स्वकल्याणार्थमुच्चारणं यस्यास्तां सत्यनामां सत्यमन्वर्थं नाम यस्यास्तां स्फीतामतिसमृद्धामयोध्यां परिरक्षसे कच्चित् । श्लोकत्रयमेकान्वयि सत्यनामामित्यत्र "डाबुभाभ्यां–" इति डाप् ॥४०–४२॥

गो०टी०—वीरैरित्यादिश्लोकत्रयमेकं वाक्यम् । अयोध्यां सत्यनामां परिक्षरसि कच्चित् सत्यनामाम् "डाबुभाभ्यामन्यतरस्याम्" इति डाप् । अयोध्येति नाम सत्यं यथा भवति तथा रक्षसि कच्चिदित्यर्थः । सत्यनामात्वमूलम्—वीरैरध्युषितामित्यादि । तत्फलानि सत्यनामात्वादीनि आर्यैः पूज्यैः । तत्र हेतवः स्वकर्मनिरतत्वादयः । वैद्यजनाकुलां वैद्यजनाः विद्वज्जनाः तैरावृतां समुदितां सुसंतुष्टजनामित्यर्थः । स्फीतां समृद्धाम् ॥४१–४३॥

४३ ] ति० टी०—चैत्यशतैरश्वमेधान्तयागानेकचयनप्रदेशैः 'कच्चिच्चैत्यशतैः' इति पाठः । सुनिविष्टैः सुप्रतिष्ठितैर्जनैराकुलो निबिडः ॥ ४३ ॥

४४] ति०टी०—'प्रभिन्ननरनारीकः' इति पाठे प्रभेदः संतोषः। सुकृष्टाः सीमास्तत्तत्क्षेत्रप्रान्तदेशाः पशवश्च यस्मिन्स तथा॥४४॥

४५] ति० टी०—अदेवमातृक इति । नदीमातृक इत्यर्थः । 'नद्यम्बुजीवनो देशो नदीमातृक उच्यते । वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः॥' इति । खनिः स्वर्णरत्नाद्याकरः ईदृशो जनपदः सर्वैर्भयैः परित्यक्तः कच्चिदस्ति ॥ ४५ ॥

४६ ] ति० टी०—स च सुखं वसति कच्चिदित्यर्थः ॥४६॥

रा० टी०—कच्चिदिति । चैत्यशतैः शतशोऽग्निचयनैः अनेकविधयागैरित्यर्थः, जुष्टः सेवितः प्रीतो वा सुनिविष्टजनैः सुनिविष्टाः सर्वत्र प्रविष्टबुद्धय एव जनास्तैः आकुलः व्याप्तः देवस्थानादिभिरुपशोभितः तत्र प्रपाः पानीयशालाः 'प्रपा पानीयशाला स्यात्' इति हलायुधः । प्रहृष्टाः नरनार्यो यस्मिन् सः समाजोत्सवशोभितः समाजेषु सभासु य उत्सवास्तैः शोभितः सुकृष्टाः विदारिताः सीमा यैस्ते एव पशवः तद्वान् हिंसाभिः अभिवर्जितो रहितः अदेवमातृकः वृष्टिनिष्पाद्यसस्यविशिष्टदेशभिन्नः नद्यम्बुजीवन इत्यर्थः, 'नद्यम्बुजीवनो देशो नदीमातृक उच्यते । वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः' इति हलायुधः । रम्यः रमणीयः श्वापदैः क्रूरजन्तुभिः

१ समुदितामिति गो. पाठः । २ रक्षसीति गो. पाठः । ३ चित्येति गो. पाठः । ४ परिवर्जित इति गो. पाठः ।

कच्चित्ते दयिताः सर्वे कृषिगोरक्ष्यजीविनः । वार्तायां सांप्रतं तात लोकोऽयं सुखमेधते ॥ ४७ ॥
तेषां गुप्तिपरीहारैः कच्चित्ते भरणं कृतम् । रक्ष्या हि राज्ञा धर्मेण सर्वे विषयवासिनः ॥ ४८ ॥
कच्चित्स्त्रियः सान्त्वयसे कच्चित्तास्ते सुरक्षिताः। कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ ४९ ॥
कच्चिन्नागवनं गुप्तं कच्चित्ते सन्ति धेनुकाः । कच्चिन्न गणिकाश्वानां कुञ्जराणां च तृप्यसि ॥ ५० ॥

परिवर्जितः सर्वैर्भयैः परित्यक्तः खनिभिः स्वर्णाद्याकरैः उपशोभितः पापैः पापविशिष्टैः नरैः विवर्जितः स्फीतः स्वच्छः जनपदः कोशलदेशः सुखं वसति 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । श्लोकचतुष्टयमेकान्वयि ॥ ४३–४६ ॥

गो० टी०–कच्चिच्चित्यशतैरित्यादिश्लोकचतुष्टयमेकं वाक्यम्। 'चित्यशतैः' 'चैत्यशतैः' इति च पाठः।अभयत्रापि अश्वमेधान्तमहायज्ञचयनप्रदेशसमूहैरित्यर्थः।सुनिविष्टजनाकुलः सुप्रतिष्ठितजनव्याप्तः सुप्रतिष्ठितत्वं च राजन्यत्वसुदृष्टयारोग्यादिदेशगुणाकृष्टचित्ततया देशान्तरजिगमिषाराहित्येन तत्रैवावासकत्वं, देवस्थानैः देवालयैः प्रपाभिः पानीयशालाभिः मार्गप्रवर्तिताभिरिति शेषः, 'प्रपा पानीयशालिका' इत्यमरः । तटाकैः सस्यादिवृद्धिनिमित्तैः महाजलाशयैः समाजोत्सवशोभितः समाजैः धर्मनिर्णयार्थसभाभिः, यद्वा नदीतटाकादितीरवनेषु समस्तवस्तुविक्रयसौकर्याय निखिलजनविदिततया कृतवारसंकेतः कृतापणो वणिजां समूहः समाज इत्युच्यते, यद्वा समाजयुक्तोत्सवशोभितः । सुकृष्टसीमा आकृष्टा ईषत्कृष्टा च भूमिर्न तत्रास्तीत्यर्थः, यद्वा सर्वदा सुकृष्टप्रायसीमा अकृष्टपच्यभूमियुक्त इत्यर्थः । पशुमान् गवाजादिपशुसमृद्धः हिंसाभिः ईतिभिः षड्भिः 'अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः खगाः । अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः' इत्युक्ताभिः परिवर्जितः, यद्वा परस्परहिंसारहित इत्यर्थः । अदेवमातृकः देवमातृकदेशरहितः वृष्ट्येकनिष्पाद्यसस्यकदेशरहितः इत्यर्थः, सरयूतीरस्थत्वेन सर्वतो नदीमातृक इति यावत् । 'नद्यम्बुजीवनो देशो नदीमातृक उच्यते । वृष्टिनिष्पाद्यसस्यस्तु विज्ञेयो देवमातृकः' इति हलायुधः । रम्यः आरामादिशोभितत्वेन रमणीयः श्वापदैः व्याघ्रादिहिंस्रपशुभिः परिवर्जितः भयैः सर्वैः भयहेतुभिश्चोरादिभिः सर्वैः परित्यक्तः परितस्त्यक्तः तत्समीपदेशेऽपि चोरादिभयं नास्तीत्यर्थः । खनिभिः रत्नसुवर्णरजताद्याकरैः 'खनिः स्त्रियामाकरः स्यात्' इत्यमरः । पुनः कच्चिच्छब्देन प्रतिविशेषणं प्रश्ना इति गम्यते 'आद्यन्तयोः प्रयुक्तोऽयं कुतो नान्वेति मध्यतः । प्रष्टव्यतायां तुल्यायां केनार्धजरतीक्रमः ॥ आदरातिशयोऽनेन श्रीमत्कोसलगोचरः । गम्यते रघुनाथस्य भुक्तिर्यैनापिपीलिकम्' ॥ ४४–४७ ॥

४७ ] ति० टी०–कृषिगोरक्ष्यजीविनो वैश्याः वार्ता 'कृषिगोरक्ष्यवाणिज्यक्रेयं वार्तेत्युदाहृतम्' तत्र सांप्रतं वर्तन्ते इति शेषः । लोको जीवलोकः कृष्यादौ स्थितः सुखमेधते कच्चित् ॥ ४७ ॥

रा० टी०–कच्चिदिति । ते दयिताः प्रियाः कृषिगोरक्षजीविनः वैश्याः वार्तायां कृषिगोरक्षवाणिज्यकुसीदात्मिकायां वर्तन्ते इति शेषः, संश्रितो यदाश्रितः अयं लोकः सुखमेधते॥४७॥

गो० टी०–कच्चित्ते दयिता इति । कृषिगोरक्षजीविनः वैश्याः दयिताः कच्चित् अर्थसंपादनद्वारा अभिमताः वार्तायां क्रयविक्रयात्मकवाणिज्ये सति 'वार्ता वागिङ्गितोदन्तवाणिज्यादिषु वर्तते' इति वैजयन्ती । संश्रितो लोकः त्वत्संश्रितो जनः सुखमेधते हि ॥ ४८ ॥

४८ ] ति० टी०–गुप्तिपरीहारैः गुप्तिरिष्टप्रापणम्, परीहारोऽनिष्टपरिहारः, तैः । तेषां कृष्यादिजीविनां भरणं कृतं कच्चिदिति तीर्थः । 'गुप्तपरीहारैः' इति पाठः गुप्त्यर्थनियुक्तैः राजमनुष्यैः क्रियमाणतस्कराद्यनर्थपरिहारैस्ते त्वया भरणं कृतं कच्चिदिति कतकः ॥ ४८ ॥

रा० टी०–तेषामिति । तेषां वैश्यानां गुप्तिपरीहारैः गुप्तयः इष्टप्रापणानि परीहाराः अनिष्टनिवारणानि तैर्भरणं रक्षणं कच्चित्ते कृतं हि यतः विषयवासिनः स्वदेशवर्तिनः सर्वे जनाः राज्ञा धर्मेण रक्ष्याः ॥ ४८ ॥

गो० टी०–तेषामिति । गुप्तिपरीहारैः इष्टप्रापणानिष्टनिवारणैः ते त्वया तेषां भरणं पोषणं कृतं कच्चित् । तस्यावर्जनीयत्वमाह–रक्ष्या हीति ॥ ४९ ॥

४९ ] ति० टी०–ताः स्त्रियः सुरक्षिताः, त्वयेत्यर्थः । न श्रद्धास्यासामिति वचनादिकं वास्तवमिति शेषः, गुह्यमप्रकाश्यवृत्तान्तमिष्टेति,मत्वा न भाषसे कच्चित् ॥ ४९ ॥

रा० टी०–कच्चिदिति । स्त्रियः स्वभार्याः सान्त्वयसे कच्चित् ताः स्त्रियः ते त्वया सुरक्षिताः आसां स्त्रीणां न श्रद्धासि अतिविश्वासं करोषि कच्चित् अत एव गुह्यमप्राकाश्यं न भाषसे कच्चित् ॥ ४९ ॥

गो० टी०–कच्चित्स्त्रिय इति । स्त्रियः स्वस्त्रियः सान्त्वयसि तदनुकूलतया वर्तसे, सुरक्षिताः अन्यपुरुषसंभाषणादिभ्य इति शेषः । आसां स्त्रीणां वचनमिति शेषः, न श्रद्धासि आदरेण यथार्थबुद्ध्या न शृणोषीत्यर्थः । गुह्यं न भाषसे ताभ्य इति शेषः, स्त्रीणामतिचञ्चलमतित्वेन रहस्यभेदप्रसङ्गादिति भावः ॥ ५० ॥

५० ] ति० टी०–नागवनं गजोत्पत्तिस्थानभूतं वनम् । धेनुका धेनवः स्वार्थे कः । गणिकाः करिण्यः 'वेश्याकरिण्योर्गणिका' करिण्यादिसंपादनविषये तृप्तिं नाप्नोषि कच्चित् ॥५०॥

रा० टी०–कच्चिदिति । नागवनं गजसेव्यारण्यं गुप्तं

१ संश्रित इति गो. रा. पाठः । २ हीति गो. पाठः । ३ सान्त्वयसीति गो. पाठः । ४ चेति गो. पाठः । ५ इष्टा इति युक्तं भाति ।

कच्चिद्दर्शयसे नित्यं मानुषाणां विभूषितम् । उत्थायोत्थाय पूर्वाह्णे राजपुत्र महापथे ॥ ५१ ॥
कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया । सर्वे वा पुनरुत्सृष्टा मध्यमे वात्र कारणम् ॥ ५२ ॥
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः । यन्त्रैश्च प्रतिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ५३ ॥
आयस्ते विपुलः कच्चित्कच्चिदल्पतरो व्ययः । अपात्रेषु न ते कच्चित्कोशो गच्छति राघव ॥ ५४ ॥
देवतार्थे च पित्रर्थे ब्राह्मणाभ्यागतेषु च । योधेषु मित्रवर्गेषु कच्चिद्गच्छति ते व्ययः ॥ ५५ ॥
कच्चिदार्योऽपि शुद्धात्मा क्षारितश्चापकर्मणा । अदृष्टः शास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥ ५६ ॥

छेदकेभ्यः रक्षितं कच्चित्, धेनुकाः धनवः सन्ति कुशलिन्य इति शेषः, स्वार्थेकः। गणिकाश्वानां करिणी तुरङ्गमानां कुञ्जराणां च कच्चिन्न तृप्यसि एतत्संपादने तृप्तिं न प्राप्नोषि 'वेश्याकरिण्योर्गणिका' इति वैजयन्ती ॥ ५० ॥

गो० टी०—कच्चिन्नागवनमिति । नागवनं गजोत्पत्तिस्थानभूतं वनं तदरक्षणे परैर्गजग्रहणप्रसङ्ग इति भावः। धेनुकाः गजग्रहणसाधनभूताः करिण्यः 'करिणी धेनुका वशा' इत्यमरः। गणिकाश्वानां गणिकाः करिण्यः 'वेश्या करिण्योर्गणिका' इति वैजयन्ती । गणिकाश्चाश्वाश्च गणिकाश्वाः तेषां गणिकाश्वानां कुञ्जराणां च न तृप्यसि कच्चित् तत्संपादनविषये तृप्तिं न प्राप्नोषि कच्चिदित्यर्थः। "पूरणगुण—" इत्यादिना समासप्रतिषेधेन सूचिता षष्ठी ॥ ५१ ॥

५१ ] ति० टी०—भूषितम् सभायां स्थित्वात्मानमिति शेषः, तथा महापथे चात्मानं दर्शयसे ॥ ५१ ॥

रा० टी०—कच्चिदिति । मानुषाणां मानुषैः भृत्यवर्गैरित्यर्थः, विभूषितमलंकृतमात्मानमिति शेषः, पूर्वाह्णे उत्थायोत्थाय महापथे राजमार्गे दर्शयसे कच्चित् प्रतिदिनं दर्शनेन प्रजानां संतोषातिशयो भवतीति सूचितम् ॥ ५१ ॥

गो० टी०—कच्चिद्दर्शयस इति । विभूषितम् आत्मानमिति शेषः, महापथे सभायामिति यावत्, प्रातः सभायां स्थित्वा मनुष्याणां विभूषितमात्मानं दर्शयसे कच्चिदिति संबन्धः अन्यथा राजारोग्ये तेषां शङ्का स्यादिति भावः॥५२॥

५२–५३ ] ति० टी०—कर्मान्ताः कर्मकरा अविशङ्कया निर्भयतया ते प्रत्यक्षा न किल । वाथवा सर्वे ते उत्सृष्टाः परित्यक्तदर्शना न । अत्र कर्मकरविषये मध्यमे वनातिदर्शनादर्शनयोर्मध्यरीत्या करणमेव कारणमर्थप्राप्तिकारणम् ॥ ५२ ॥ ५३॥

रा० टी०—कच्चिदिति । सर्वे कर्मान्ताः कर्मसु नियुक्ताः अविशङ्कया शङ्काराहित्येन ते प्रत्यक्षाः अतिसमीपवर्तिनस्तु न वा अथवा सर्वे ते उत्सृष्टाः अतिदूरं प्रापितास्तु न मध्यभाग एव संस्थाप्या इत्यर्थः । तत्र हेतुः—अत्र अतिनिकटादिषु मध्यं मध्यस्थितिरेव कारणं प्रयोजनसाधकम् ॥ ५२ ॥

गो० टी०—कच्चिन्न सर्वे इति । कर्मान्ताः कर्मान्तिकाः कर्मकरा इति यावत्, अविशङ्कया ते न प्रत्यक्षाः कच्चित् निर्भयतया त्वत्सन्निधिं प्राप्ता न कच्चिदित्यर्थः । अथवा ते सर्वे पुनः उत्सृष्टा न कच्चित् दर्शनाप्रदानेन परित्यक्ता न कच्चिदित्यर्थः । अविशङ्कया प्रवेशे अवज्ञादिकं संभवेत् दर्शनाभावे कार्यहानिः स्यात् अतः अत्र कर्मान्तिकविषये मध्यमेव कारणम् अतिदर्शनादर्शनयोर्मध्यमरीत्याश्रयणमेवार्थसिद्धिकारणम् अतिदर्शने दृप्तानां तेषां स्वामिन्यनादरः स्यात् अत्यदर्शने स्वकार्यविज्ञापनावसरालाभात्किमनेनेति कोपः स्यात् राजकार्यहानिश्च तस्माद्यथोचितसमये दर्शनप्रदानमेवोचितमिति भावः ॥ ५३ ॥

रा० टी०—कच्चिदिति । सर्वाणि दुर्गाणि धनादिभिः यन्त्रैः शतघ्न्यादिभिश्च शिल्पिधनुर्धरैः क्रियाकुशलधनुर्धारिभिश्च पूर्णानि सन्तीति शेषः ॥ ५३ ॥

गो० टी०—कच्चित्सर्वाणीति । दुर्गाणि औदकपार्वतवार्क्षैरिणधान्वनानि धनधान्यायुधोदकैः यन्त्रैः शिल्पिभिर्धनुर्धरैश्च परिपूर्णानि कच्चित् । अत्र कामन्दकः 'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । जलान्नायुधयन्त्राढ्यं वीरयोधैरधिष्ठितम् । गुप्तिप्रधानमाचार्या दुर्गं समनुमेनिरे' इति ॥ ५४ ॥

५४ ] ति० टी०—आयो धनागमः व्ययो भोगबलरक्षार्थं त्यागः, अपात्रेषु नटगायकादिषु ॥ ५४ ॥

रा० टी०—आय इति । आयो धनागमः विपुलः अधिकः कच्चिद्व्ययः भोगाद्यर्थं त्यागः अल्पतरः आयापेक्षया न्यूनः कच्चित्, अपात्रेषु दानानर्हेषु ते कोशः न गच्छति अपात्रेभ्यो न ददासीत्यर्थः ॥ ५४ ॥

गो० टी०—आय इति । आयः धनागमः कोशः संचितधनम् अपात्रेषु नटविटगायकेषु न गच्छति कच्चित् तेभ्योऽपरिमितं न देयमिति भावः ॥ ५५ ॥

५५ ] ति० टी०—अभ्यागतोऽतिथिर्यः कच्चित् । व्ययः आयान्न्यून इति शेषः ॥ ५५ ॥

रा० टी०—देवतेति । देवतार्थादौ ते व्ययः त्यागाश्रयीभूतद्रव्यं गच्छति प्राप्नोति कच्चित् ॥ ५५ ॥

गो० टी०—धनव्ययस्योचितविषयमाह—तदेवार्थ इत्यादिना ॥ ५६ ॥

५६ ] ति० टी०—आर्यः साधुः शुद्धात्मापि सन्नपकर्मणा

१ मनुष्याणामिति गो. पाठः । २ परीति गो. पाठः । ३ चोरेति गो. पाठः । ४ अपृष्ट इति गो. पाठः । ५ वध्यत इति गो. पाठः ।

गृहीतश्चैव पृष्टश्च काले दृष्टः सकारणः । कच्चिन्न मुच्यते चोरो धनलोभान्नरर्षभ ॥ ५७ ॥
व्यसने कच्चिदाढ्यस्य दुर्बलस्य च राघव । अर्थं विरागाः पश्यन्ति तवामात्या बहुश्रुताः ॥ ५८ ॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि[1] राघव । तानि पुत्रपशून्घ्नन्ति प्रीत्यर्थमनुशासतः ॥ ५९ ॥
कच्चिद्वृद्धांश्च बालांश्च [2]वैद्यान्मुख्यांश्च राघव । दानेन मनसा वाचा त्रिभिरेतैर्बुभूषसे ॥ ६० ॥
कच्चिद्गुरूंश्च वृद्धांश्च तापसान्देवतातिथीन् । चैत्यांश्च सर्वान्सिद्धार्थान्ब्राह्मणांश्च नमस्यसि ॥ ६१ ॥

स्तेयागम्यागमनादिदोषेण क्षारितोऽभिशस्तः शास्त्रकुशलैर्धर्मशास्त्रकुशलैरदृष्ट एवानिर्णीतदोष एव लोभाद्धनलोभाच्छुचिरपि न बध्यते न दण्ड्यते कच्चित् ॥ ५६ ॥

रा० टी०—कच्चिदिति । अपकर्मणा स्तेयादिदोषेण आक्षारितः मिथ्याभिशस्तः किंच क्षारितस्त्यक्तः अत एव शास्त्रकुशलैः अदृष्टः अदृष्टपापकः अत एव शुद्धात्मा शुद्धमनस्कः अत एव शुचिः अत एव आर्यः श्रेष्ठः लोभाद्बध्यते तु न 'आक्षारितोऽभिशस्तः स्यात्' इत्यमरः ॥ ५६ ॥

गो० टी०—कच्चिदार्य इति । विशुद्धात्मा विशुद्धस्वभावः शुचिः करणत्रयशुद्धियुक्तः आर्यः सज्जनः यदृच्छया चोरकर्मणा आक्षारितः अभिशस्तः 'आक्षारितः क्षारितोऽभिशस्ते' इत्यमरः। शास्त्रकुशलैः अपृष्टः प्रश्नेन अशोधितः सन् लोभाद्धनलोभान्न बध्यते कच्चित् ॥ ५७ ॥

५७ ] ति० टी०—गृहीतः पालकैर्धनस्वामिना वा सकारणो दृष्टश्चोरत्वेन ग्रहणकारणैर्युक्तो दृष्टः पृष्टः प्रश्नेनापि निश्चितचौर्यः धनलोभाच्चोरेणैवोत्कोचतया दीयमानधनलोभात्पालकैर्न मुच्यते कच्चित् ॥ ५७ ॥

रा० टी०—गृहीत इति । काले चुरासमये दृष्टः वस्तुस्वामिनाऽवलोकितः अत एव सकारणः बन्धनकारणविशिष्टः अत एव गृहीतः चोरोचितबन्धनेन बद्धः पृष्टः प्रश्नेनाप्यवधारितचौर्यः चोरः धनलोभाच्चोराद्धनलाभवाञ्छया मुच्यते तु न कच्चित् ॥ ५७ ॥

गो० टी०—गृहीत इति । पृष्टः प्रश्नैः शोधितः काले कालविशेषे दृष्टः सकारणः चौर्यलब्धद्रव्यवत्तया वा दृष्टः लोभात् मुषितं धनं तव दास्यामीति तद्दत्तधनलोभात् न मुच्यते कच्चित् ॥ ५८ ॥

५८ ] ति० टी०—आढ्यस्य धनिकस्य दुर्बलस्य दरिद्रस्य च व्यसने विवादरूपसंकटे राजकीयैकनिवर्त्ये प्राप्ते तवामात्या विरागाः सन्तो विगतधनरागाः सन्तोऽर्थं तयोर्व्यवहारं पश्यन्ति कच्चित् ॥ ५८ ॥

रा० टी०—व्यसन इति । आढ्यस्य प्रचुरद्रव्यवतः दुर्बलस्य द्रव्यरहितत्वेन बलरहितस्य व्यसने परस्परनिमित्तकदुःखप्राप्तिहेतुकविवादे सति बहुश्रुताः तवामात्याः विरागाः आकोचविषयकानुरागरहिताः सन्तः अर्थं यथार्थं पश्यन्ति कच्चित् ॥ ५८ ॥

गो० टी०—व्यसन इति । आढ्यस्य दुर्गतस्य दरिद्रस्य च व्यसने विवादरूपसंकटे प्राप्ते अर्थं व्यवहारम् 'अर्थः स्याद्विषये मोक्षे शब्दवाच्ये प्रयोजने । व्यवहारे धने शास्त्रे वस्तुहेतुनिवृत्तिषु' इति वैजयन्ती । विरागाः विगतधनरागाः पश्यन्ति परीक्षन्ते कच्चित् ॥ ५९ ॥

५९ ] ति० टी०—मिथ्याभिशस्तानां राज्ञा विचार्यानिवर्तितमिथ्याभियोगानां प्रजानां यान्यश्रूणि पतन्ति । 'पादन्यासानि' इति पाठान्तरम् । तदा जायन्ते इति शेषः, आर्षं नपुंसकत्वम् । तानि प्रीत्यर्थं राज्यभोगजप्रीतिमात्रार्थं राज्यमनुशासतो राज्ञः पुत्रादीन्घ्नन्ति ॥ ५९ ॥

रा० टी०—मृषाभिशंसने दोषमाह—यानीति । हे राघव! मिथ्याभिशस्तानां दोषवत्त्वाभावेऽपि दोषवत्तया कथितानां जनानां यानि अस्राणि अश्रूणि पतन्ति तानि प्रीत्यर्थमेकत्र प्रीतिसंपादनार्थम् अनुशासतः पुरुषस्य पुत्रपशून् पुत्रान् पशूंश्च घ्नन्ति विनाशयन्ति ॥ ५९ ॥

गो० टी०—यानीति । मिथ्याभिशस्तानां राज्ञाम् अविचार्य प्रवर्तितमिथ्याभियोगानां प्रजानां यानि अस्राणि अश्रूणि पतन्ति तानि प्रीत्यर्थमनुशासतः राज्ये न्यायान्यायावविचार्य केवलभोगार्थं राज्यं कुर्वत इत्यर्थः ॥ ६० ॥

६० ] ति० टी०—वैद्या भिषजः। दानमभिमतवस्तुनः मनः स्नेहयुतम् वाक्सान्त्वयुता, एतैस्त्रिभिः प्रत्येकं बुभूषसे प्राप्तुमिच्छसि वशीकर्तुमिच्छसि संभावयितुमिच्छसि वा कच्चित् ॥ ६० ॥

रा० टी०—कच्चिदिति । दानेन ईप्सितप्रापणेन मनसा अभिलाषातिशयेन वाचा मृदुवचनेन च एभिः त्रिभिः वृद्धादीन् बुभूषसे प्राप्तुमिच्छसि कच्चित् ॥ ६० ॥

गो० टी०—कच्चिद्वृद्धानिति । दानेन अभिमतवस्तुप्रदानेन मनसा स्नेहेन वाचा सान्त्ववचनेन एतैस्त्रिभिर्बुभूषसे प्राप्तुमिच्छसि वशीकर्तुमिच्छसि कच्चिदिति यावत् । भू प्राप्तावात्मनेपदीति गणपाठे पठितत्वादात्मनेपदी ॥ ६१ ॥

६१ ] ति० टी०—चैत्यांश्चतुष्पथस्थमहावृक्षान्देवतावासभूतान्। सिद्धार्थान्विद्यावृत्ततपोभिः कृतार्थितजन्मनो ब्राह्मणान् ६१

रा० टी०—कच्चिदिति । गुर्वादीन् नमस्यसि कच्चित् तत्र चैत्याः अग्निचयनस्य स्थलानि सिद्धः अर्थो येभ्यस्तानिति बहुव्रीहिः ॥ ६१ ॥

गो० टी०—कच्चिद्गुरूनिति । चैत्यान् देवतावासभूत-

१ अस्राणीति गो. पाठः । २ वैद्यमुख्यानिति गो. पाठः ।

कच्चिदर्थेन वा धर्ममर्थं धर्मेण वा पुनः । उभौ वा प्रीतिलोभेन कामेन न विबाधसे ॥ ६२ ॥
कच्चिदर्थं च कामं च धर्मं च जयतां वर । विभज्य काले कालज्ञ सर्वान्वरद सेवसे ॥ ६३ ॥
कच्चित्ते ब्राह्मणः शर्म सर्वशास्त्रार्थकोविदः । आशंसते महाप्राज्ञ पौरजानपदैः सह ॥ ६४ ॥
नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् । अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ॥ ६५ ॥
एकचिन्तनमर्थानामनर्थज्ञैश्च मन्त्रणम् । निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ॥ ६६ ॥

चतुष्पथस्थमहावृक्षान् सिद्धार्थान् निष्पन्नप्रयोजनान् यागादिना लब्धामुष्मिकप्रयोजनानिति यावत् ॥ ६२ ॥

६२] ति० टी०—कच्चिदर्थेनेति । धर्मार्जनयोग्यपूर्वाह्णेऽर्थार्जनेन धर्मबाधः, तथा तद्योग्यमध्याह्ने धर्मार्जनेन तद्बाधः, प्रीतिलोभेन कामेन विषयसंतोषलोभरूपेण कामेन तदुभयकालसेवितेन तयोर्बाध इति तीर्थः । अर्थप्राप्तिरूपेण हेतुना धर्मं न बाधसे धर्मं हित्वार्थं न गृह्णासीत्यर्थः । धर्मेण धर्मप्राप्तिहेतुनार्थं कुटुम्बनिर्वाहापेक्षितमर्थं न बाधसे, उभयमपि विषयसंतोषलोभेन गणिकाद्यासक्त्या बाधसे नेत्यर्थ इति कतकः॥६२॥

रा० टी०—कच्चिदिति । अर्थेन धर्मोचितब्राह्ममुहूर्तादौ द्रव्यादिप्रयत्नेन धर्मं धर्मेण द्रव्याद्यर्जनकाले धर्मचिन्तनेन अर्थं वा प्रीतिलोभेन प्रीत्या लोभो विमोहनं यस्मिंस्तेन कामेन धर्मार्थार्जनसमये कामसेवनेन उभौ धर्मार्थौ वा कच्चिन्न विबाधसे॥६२॥

गो० टी०—कच्चिदर्थेनेति । अर्थेन धर्मं न बाधसे कच्चित् धर्मार्जनयोग्ये पूर्वाह्णे अर्थार्जनं कृत्वा धर्मं न बाधसे कच्चिदित्यर्थः । धर्मेणार्थं न बाधसे अर्थार्जनयोग्ये अपराह्णे धर्मार्जनं कृत्वा अर्थं न नाशयसि कच्चिदित्यर्थः । प्रीतिलोभेन सुखाभिलाषेण हेतुना कामेन सायंकालविहितेन कामेन उभौ वा न बाधसे कच्चित्, यद्वा अर्थेन हेतुना धर्मं न बाधसे कच्चित्, धर्मं हित्वा अर्थं न गृह्णासीत्यर्थः । तथा धर्मेण हेतुना कुटुम्बनिर्वाहापेक्षितमर्थं न बाधसे धर्मार्थावुभावपि प्रीतिलोभेन सुखेच्छया कामेन च हेतुना न बाधसे गणिकाविसक्तावुभयमपि हि नश्यति ॥ ६२ ॥

६३ ] ति० टी०—विभज्य सेवसे । काले पूर्वाह्णतदुत्तरकालसार्धयामोत्तररात्रिरूपेण क्रमेण धर्मार्थकामसेवाकाले॥६३॥

रा० टी०—कच्चिदिति । सर्वानर्थादीन् त्रीन् काले तत्तत्सेवनोचितसमये विभज्य सेवसे कच्चित् ॥ ६३ ॥

गो० टी०—उक्तमर्थं सविशेषमाह–कच्चिदिति । अर्थं च धर्मं च कामं च सर्वान् काले विभज्य सेवसे–प्रातर्दानादिधर्मकालः, तदनन्तरम् आस्थान्यां राज्यविचारेणार्थकालः, रात्रौ कामकाल इत्येवं विभज्य सेवस इत्यर्थः । जयतां वर ! तेषां कालान्तरे प्रवृत्तिनिवर्तनसमर्थेत्यर्थः ॥ ६४ ॥

६४ ] ति० टी०—शर्म सुखमाशंसते प्रार्थयते ॥ ६४ ॥

रा० टी०—कच्चिदिति । पौरादिभिः सह सर्वशास्त्रार्थकोविदा ब्राह्मणास्ते शर्म कल्याणमाशंसन्ते कच्चित् ॥ ६४ ॥

गो० टी०—कच्चित्त इति । शर्म सुखम् आशंसन्ते प्रार्थयन्ते ॥ ६५ ॥

६५ ] ति० टी०—'प्रमादोऽनवधानता' 'दीर्घसूत्रश्चिरक्रियः' तद्भावः अवश्यकर्तव्यस्य विचारादिना कालविलम्बनम् । ज्ञानवतां विदुषामदर्शनम्, आलस्यं नित्यकृत्यालस्यम्, पञ्चवृत्तितां चक्षुरादिपञ्चेन्द्रियपरवशताम् ॥ ६५ ॥

रा० टी०—नास्तिक्यमिति । नास्तिक्यं परलोको नास्तीति वादमनृतं लोभादिना मिथ्याभाषणं क्रोधं ब्राह्मणसंप्रदानकं कोपानुचितान्यसंप्रदानकं वा यागादौ सर्वसंप्रदानकं वा कोपं प्रमादमनवधानतां दीर्घसूत्रतां चिरक्रियत्वं ज्ञानवतां परमार्थविषयकज्ञानिनामदर्शनं कामाद्यासक्त्या दर्शनाभावमालस्यं पञ्चवृत्तितां चक्षुरादिपञ्चेन्द्रियवशत्वम् 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः ॥ ६५ ॥

गो० टी०—नास्तिक्यमित्यादि । नास्ति परलोक इति मतिर्यस्य स नास्तिकः "अस्ति नास्ति दिष्टं मतिः" इति ठक् तस्य भावः नास्तिक्यम् अनृतमसत्यवचनं क्रोधं मातापित्राचार्यब्राह्मणदुर्बलादिषु कृतापराधेष्वपि तद्विषयकं क्रोधं प्रमादम् अनवधानत्वं दीर्घसूत्रतां चिरक्रियत्वं 'दीर्घसूत्रश्चिरक्रियः' इत्यमरः । ज्ञानवतां सज्जनानाम् अदर्शनं दर्शनाकरणं ज्ञानिनां दर्शनं हि निखिलश्रेयोमूलम् आलस्यं मदकरवस्तुसेवाजनितं कार्योपद्रुकरणकत्वमित्यर्थः । पञ्चवृत्तितां पञ्चेन्द्रियपरवशताम् अर्थानामेकचिन्तनं राज्यकार्याणां मन्त्र्यनादरेण स्वयमेक एव स्थित्वा पर्यालोचनम् अनर्थज्ञैः विपरीतार्थदर्शिभिः मङ्गलस्य प्रातर्दर्पणाद्यवलोकनस्य अप्रयोगम् अननुष्ठानम् 'मङ्गलाद्यप्रयोगम्' इति पाठे अमङ्गलाचरणमित्यर्थः । सर्वतः प्रत्युत्थानं नीचस्थानीयस्याप्यागमने प्रत्युत्थानमित्यर्थः, यद्वा सर्वदिगवस्थितशत्रूद्देशेन युगपद्दण्डयात्रामिति वा एतांश्चतुर्दशेत्येनेन अन्येषामपि बहूनां दोषाणां विद्यमानत्वं तेषु सर्वेषूक्तानामवश्यहेयत्वं च ज्ञायते ॥ ६६–६८ ॥

६६ ] ति० टी०—अर्थानां राज्यप्रयोजनानामेकेन चिन्तनम् । अनर्थज्ञैर्विपरीतदर्शिभिः । निश्चितानां मन्त्रिभिः सह कर्तव्यत्वेन निश्चितानामनारम्भम् ॥ ६६ ॥

रा० टी०—अर्थानां राजनिर्वाहकवस्तूनामेकचिन्तनमेकेन द्वितीयराहित्येन चिन्तनं विचारमनर्थज्ञैः विरुद्धार्थबोधकजनैः मन्त्रणं संमतिकरणं निश्चितानां मन्त्रकर्तव्यत्वेन निश्चयं प्राप्तानां

१ च नेति गो. पाठः । २ ब्राह्मणा इति गो. रा. पाठः । ३ कोविदा इति गो. रा. पाठः । ४ आशंसन्त इति गो. रा. पाठः ।

मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः । कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ॥ ६७ ॥
दशपञ्चचतुर्वर्गान्सप्तवर्गं च तत्त्वतः । अष्टवर्गं त्रिवर्गं च विद्यास्तिस्रश्च राघव ॥ ६८ ॥
इन्द्रियाणां जयं बुद्ध्या षाड्गुण्यं दैवमानुषम् । कृत्यं विंशतिवर्गं च तथा प्रकृतिमण्डलम् ॥ ६९ ॥
यात्रादण्डविधानं च द्वियोनी संधिविग्रहौ । कच्चिदेतान्महाप्राज्ञ यथावदनुमन्यसे ॥ ७० ॥

---

कार्याणामनारम्भं मन्त्रस्य मन्त्रविषयीभूतार्थस्य अपरिरक्षणं परिरक्षणाभावं प्रकटनमित्यर्थः ॥ ६६ ॥

६७ ] ति० टी०—मङ्गलस्यादौ प्रातःकालेऽप्रयोगमननुष्ठानम् । सर्वतः प्रत्युत्थानं सर्वदिगवस्थितरिपूद्देशेन युगपद्दण्डयात्रामित्यर्थं इति तीर्थः । कंचन प्रत्युत्थानायोग्यं पुरुषमुद्दिश्यापि प्रभावमुक्त्वा चापल्यादासनाच्चलनमित्यर्थ इति कतकः ॥ ६७ ॥

रा० टी०—मङ्गलाद्यप्रयोगं मङ्गलानां माङ्गलिकशब्दानामादौ कार्यप्रारम्भसमये अप्रयोगं सर्वतः नीचेभ्योऽपि प्रत्युत्थानमेतान् चतुर्दश राजदोषान् वर्जयसि कच्चित् । श्लोकत्रयमेकान्वयि 'मङ्गलातिप्रयोगम्' इति भूषणपाठः ॥ ६७ ॥

६८ ] ति० टी०—दशवर्गादीन्बुद्ध्वा यथावदनुमन्यसे । तेषु त्याज्यांशमुपादेयांशं च ज्ञात्वाऽनुजानासीति तृतीयस्थेन संबन्धः । दशवर्गस्तु—'मृगयाक्षा दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥' इति मनूक्तः । तौर्यत्रिकं नृत्यगीतवाद्यम् , वृथाट्या वृथापर्यटनम् । पञ्चवर्गस्तु—'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । इति दुर्गं पञ्चविधं पञ्चवर्ग उदाहृतः ॥' ईरिणं सर्वसस्यशून्यप्रदेशः । तत्संबन्धिदुर्गमैरिणं तस्यापि परैर्गन्तुमशक्यत्वात् । धान्वनमुष्णकाले दुर्गं भवति । चतुर्वर्गस्तु—'साम दानं च भेदश्च दण्डश्चेति चतुर्गुणः' । सप्तवर्गस्तु—'स्वाम्यमात्यश्च राष्ट्रं च दुर्गकोशौ बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते ॥' अष्टवर्गस्तु—'पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम् । वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः', इति । कृषिवाणिज्यदुर्गसेतुकुञ्जरबन्धनखन्याकरकरादानशून्यनिवेशनान्यष्टवर्ग इति तीर्थः । त्रिवर्गो धर्मार्थकामाः, उत्साहप्रभुमन्त्रशक्तित्रयं वा । तिस्रो विद्यास्त्रयी वार्ता दण्डनीतिः । त्रयी वेदत्रयी , वार्ता कृष्यादि , दण्डनीतिर्नीतिशास्त्रम् ॥ ६८ ॥

६९ ] ति० टी०—इन्द्रियाणां जयं जयोपायम् । स च योगाभ्यास एव । षाड्गुण्यं षड्गुणाः । 'संधिर्नो विग्रहो यानमासनं द्वैधमाश्रयः' इति । द्वैधं शत्रुवर्ग्याणामुपजापः । दैवमानुषम् दैवं मानुषं च व्यसनमित्यर्थः । 'हुताशनो जलं व्याधिर्दुर्भिक्षो मरकस्तथा' इत्येतद्दैवम् । मरको मरणनिमित्तं मार्यादि : मानुषं तु—'आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च व्यसनं मानुषं त्विदम्' इति । आयुक्तकाः अधिकारिणः । कृत्यं तु—'अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः । भेद्याः शत्रौ त्र चत्वारो नृपकृत्यमिदं स्मृतम्' विंशतिवर्गस्तु असंधेयोऽविग्राह्य एव । स च—'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतो बलव्यसनसंयुतः ॥ अदेशस्थो बहुरिपुर्युक्तो कालेन यश्च वै । सत्यधर्मरतश्चैव विंशतिः पुरुषा अमी । एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ॥' इति । कतकस्तु—राज्यस्त्रीस्थानदेशानां ज्ञातिधनयोश्च यस्यापहारस्ते षट्, मदमानदेशपीडावन्तस्त्रयः, ज्ञानार्थशक्तिधर्माणां येषां विघातस्ते चत्वारः, दैवचिन्तकः, रिपुमित्रावमन्तारौ, बन्धुविनाशनं यस्य, लोकानुग्रहरहितः, दूषितमण्डलः, एकार्थाभिनिवेशित्वं यस्य, एते विग्राह्या इत्याह । प्रकृतयश्च मण्डलं च प्रकृतिमण्डलम् । प्रकृतिवर्गस्तु—'अमात्यो राष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः ॥' इति । मण्डलं द्वादशराजमण्डलम् । तत्र विजिगीषुर्मध्ये । 'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । मित्रारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥' आसारौ पार्ष्णिग्राहासाराक्रन्दासाराविति । आसारपृष्ठभागस्थौ मध्यमोदासीनाविति 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः ॥' इति । 'मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ॥' इति ॥ ६९ ॥

७० ] ति० टी०—यात्रा यानम् । तच्च पञ्चविधम्—'विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः । उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं स्मृतम् ॥' बलवत्तया पार्ष्णिग्राहादिभिर्विगृह्यान्यत्र शत्रौ यानं विगृह्ययानम्, तैः संधायान्यत्र यानं संधाययानम्, सामन्तैः सह यानं संभूययानम्, अन्योद्देशेन यात्राप्रसङ्गमुत्पाद्यान्यं प्रति यानं प्रसङ्गयानम्, बलवत्तया शत्रुमुपेक्ष्य तस्य मित्रेषु यानमुपेक्ष्ययानम्, दण्डविधानं दण्डः सेना तद्विधानं व्यूहरचनाभेदः । 'दण्डो धर्मे मानभेदे लकुटे मदसैन्ययोः' । 'द्वियोनी संधिविग्रहौ' इति । संधिविग्रहयानेत्यादिषड्गुणानां मध्ये संधिविग्रहौ द्वयोर्योनी । तत्र द्वैधीभावसमाश्रयौ संधियोनिकौ यानासने विग्रहयोनिके इति भेदः । तत्र द्वैधीभावो नाम—'बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितम् ॥' इति । अरिभिः पीड्यमानस्य बलवदाश्रयणं समाश्रयः । कालप्रतीक्षया तूष्णीमवस्थानमासनम् ॥ ७० ॥

१ मङ्गलस्याप्रयोगमिति गो. पाठः । २ बुद्ध्वेति गो. रा. पाठः । ३ धर्मरत इति भाति शिरोमणिभूषणयोस्तथोपलब्धेः ।

रा० टी०—दशेति । दशपञ्चचतुर्वर्गान् दशवर्गान् पञ्चवर्गान् चतुर्वर्गांश्च सप्तवर्गादिकं च तिस्रो विद्याश्च इन्द्रियाणां जयं जयोपायं च दैवं देवकृतं व्यसनं मानुषं मनुष्यकृतं च व्यसनं कृत्यं नृपकृत्यं च विंशतिवर्गं च प्रकृतिमण्डलं पञ्चप्रकृतीश्च द्वादशमण्डलानि च यात्रादण्डविधानं यात्राविधानं दण्डविधानं च द्वियोनी सन्धिविग्रहौ च एतान् प्रसिद्धान् बुद्ध्वा यथावत् अनुमन्यसे कांश्चिदुपादेयत्वेन कांश्चित् हेयत्वेन चावबुध्यसे । दशवर्गास्तु—'मृगयाऽक्षा २ दिवास्वप्नः ३ परीवादः ४ स्त्रियो ५ मदः । ६ तौर्यत्रिकं ९ वृथाट्या १० च कामजो दशको गणः ॥' इति मनुनोक्तः तत्र तौर्यत्रिकमातिनृत्यगीतवाद्यम् । वृथाट्या अकारणकपर्यटनम् । पञ्चवर्गास्तु—'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । इति दुर्गं पञ्चविधं पञ्चवर्ग उदाहृतः' इति मनुः । तत्र इरिणं सर्वसस्यशून्यप्रदेशः तत्संबन्धिदुर्गमैरिणं तस्यापि परैर्गन्तुमशक्यत्वेन दुर्गत्वमक्षतम् । चतुर्वर्गस्तु—'साम दानं च भेदश्च दण्डश्चेति चतुर्गणः' इति कामन्दकीये । सप्तवर्गस्तु 'स्वाम्यमात्यश्च राष्ट्रं च दुर्गकोशौ बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते' इति । अष्टवर्गस्तु 'पैशुन्यं साहसं द्रोहमीर्ष्यासूयार्थदूषणम् । वाक्दण्डयोश्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः' इति । कामन्दकस्तु 'कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरकरादानं शून्यानां च निवेशनम् । अष्टवर्गमिमं साधुः स्वस्थवृत्तिर्न लोपयेत्' इति । त्रिवर्गो धर्मार्थकामाः, प्रभुशक्तिरुत्साहशक्तिर्मन्त्रशक्तिश्चेति वा । तिस्रो विद्यास्तु त्रयी वार्ता दण्डनीतिरिति, तत्र त्रयी वेदत्रयी वार्ता कृष्यादिचतुष्टयं नीतिर्दण्डनिर्णायकशास्त्रम् । षड्गुणास्तु 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः' इति । तत्र द्वैधं शत्रुवर्ग्याणां दूरीकरणम् । दैवकृतव्यसनं तु—'हुताशनो जलं व्याधिर्दुर्भिक्षो मरकस्तथा' इति । तत्र मरको मरणनिमित्तं महामार्यादि, मानुषं तु—'आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च व्यसनं मानुषं त्विदम् ॥' इति । तत्र आयुक्तकाः अधिकारिणः । कृत्यं तु—'अलब्धवेतनो लुब्धो मानी चाप्यवमानितः । क्रुद्धश्च कोपितोऽकस्मात्तथाभीतश्च भीषितः । भेद्याः शत्रौ च चत्वारो नृपकृत्यमिदं स्मृतम् ॥' इति कामन्दकः । विंशतिवर्गस्तु—'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः । भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् । अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च । दुर्भिक्षव्यसनोपेतः बलव्यसनसंयुतः ॥ अदेशस्थो बहुरिपुर्युक्तो कालेन यश्च सः । सत्यधर्मारतश्चैव विंशतिः पुरुषा अमी । एतैः सख्यं न कुर्वीत विगृह्णीयात्तु केवलम् ॥' इति कामन्दकप्रदिष्टाः । प्रकृतयस्तु—'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः । एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः' इति कामन्दकोक्तेः । मण्डलानि द्वादशात्मकानि तत्र मध्ये विजिगीषुः 'अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम् । मित्रारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥ अत्र आसाराविति द्विवचनान्तेन तयोर्द्वैविध्यम् पार्ष्णिग्राहासार आक्रन्दासारश्च । आसारपृष्ठभागस्थौ मध्यमोदासीनौ । तथाहि 'अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः' इति । 'मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः' इति । यात्राविधानं पञ्चविधं, तथाहि'—विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः । उपेक्ष्यश्चेति[1] निपुणैर्यानं पञ्चविधं स्मृतम् ॥' इति । तत्र बलवत्तया पार्ष्णिग्राहादिभिर्विगृह्य शत्र्वन्तरे गमनं विगृह्य यानं, तैः संधिं कृत्वाऽन्यत्र गमनं संधाय यानम्, सामन्तैः सह गमनं संभूय यानम्, अन्योद्देशेन यात्रोद्योगं कृत्वा अन्यं प्रति गमनं प्रसङ्गतो यानम्, अतिप्रौढतया शत्रुमुपेक्ष्य तन्मित्रं प्रति गमनमुपेक्ष्य यानम् । दण्डविधानम् दण्डः सैन्यं तद्विधानं व्यूहरचनया तत्संस्थापनम् । 'दण्डो धर्मे मानभेदे लकुटे मदसैन्ययोः' इति कोशः । द्वियोनी द्विहेतुकौ संधिविग्रहाविति । 'संधिर्ना विग्रहो यानम्' इत्यादिना षड्गुणानां मध्ये यद्यप्युक्तौ तथापि षड्गुणान्तःपातिनौ द्वैधीभावसमाश्रयपराविति भेदः तत्र द्वैधीभावो नाम 'बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितम्[2] ॥' इति । अरिभिः पीड्यमानस्य बलवदाश्रयणं समाश्रयः । कालप्रतीक्षया तूष्णीमवस्थानमासनम् । श्लोकत्रयमेकान्वयि ॥ ६८—७० ॥

गो० टी०—दशेत्यादि । दशवर्गादिकान् बुद्ध्वा यथावदनुमन्यसे कच्चित् दशवर्गादिकान् त्याज्यत्वेनोपादेयत्वेन च ज्ञात्वा यथावदनुतिष्ठसि कच्चिदिति वाक्यार्थः । पूर्वोक्तसंग्रहोयमुपदेशः । दशवर्गस्तावत् 'मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥' इति मनुनोक्तः । तौर्यत्रिकं नृत्यगीतवाद्यं, वृथाट्या वृथापर्यटनम् । कामन्दकस्तु प्रकारान्तरेण लोभक्रोधालस्यासत्यवचनत्वप्रमादभीरुत्वास्थिरत्वमौढ्यानयावमन्तृत्वानि दशवर्ग इत्याशयेनाह—'लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः । मूढोऽनयोऽवमन्ता च सुखच्छेद्यो रिपुर्मतः ॥' इति । पञ्चवर्गः पञ्चदुर्गाणि, तथाह मनुः—'औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा । शस्तं प्रशस्तमतिभिर्दुर्गं दुर्गोपचिन्तकैः ॥' इति । यद्वा पञ्चवर्गः पञ्चविधवैराणि, अत्रापि कामन्दकः—'सापत्नं वस्तुजं स्त्रीजं वाग्जातमपराधजम् । वैरप्रभेदनिपुणैर्वैरं पञ्चविधं स्मृतम्' इति । चतुर्वर्गः सामदानभेददण्डाः, यथाकामन्दकीये—'साम दानं च भेदश्च दण्डश्चेति चतुर्विधम्' इति, यद्वा चतुर्विधमित्राणि वा, यथाह कामन्दकः—'औरसं तंतुसंबन्धं तथा वंशक्रमागतम् । रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥' इति । यद्वा धनानां न्यायार्जनादिधर्मचतुष्टयं वा, तदपि तत्रैवोक्तम् 'न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा । सत्पात्रे प्रतिपत्तिश्च राज्यवृत्तं चतुर्विधम् ॥' इति । सप्तवर्गः स्वाम्यमात्यादिः, यथोक्तम् 'स्वाम्यमात्याश्च राष्ट्रं च दुर्गं

१ उपेक्ष्य चेति युक्तम्, उत्तरग्रन्थानुरोधाल्लक्षणक्रमाद्भूषणे तथोपलब्धेश्च । २ लक्षित इति भूषणे ।

कोशो बलं सुहृत् । परस्परोपकारीदं राज्यं सप्ताङ्गमुच्यते' इति। यद्वा स्वपक्षस्थजनावान्तरभेदसप्तकं वा, यथाह—'निजोऽथ मैत्रश्च समाश्रितश्च सुबन्धुजः कार्यसमुद्भवश्च । भृत्यो गृहीतो विविधोपचारैः पक्षं बुधाः सप्तविधं वदन्ति' इति। यद्वा प्रधानव्यूहाः सप्त वा सप्तवर्गः, यथा—'श्येनः सूची च वज्रश्च शकटो मकरस्तथा । दण्डाख्यः पद्मनामा च व्यूहाः सप्त प्रधानतः' इति । अष्टवर्गमाह कामन्दकः—'कृषिवाणिज्यदुर्गाणि सेतुः कुञ्जरबन्धनम् । खन्याकरः करादानं शून्यानां च निवेशनम् । अष्टवर्गमिमं साधु स्वस्थवृत्तो न लोपयेत्' इति। यद्वा पैशुन्याद्यष्टकं वा अष्टवर्गः। यथा—पैशुन्यं साहसं द्रोहमीर्ष्याऽसूयार्थदूषणम् । वाग्दण्डयोश्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः' इति। ईर्ष्या क्षान्त्यभावः क्षान्तिविरोधी वा कश्चिद्गुणः अशक्तदुर्बलकृतापराधासहिष्णुत्वमिति यावत्, असूया तु गुणेष्वपि दोषारोपः, वाक्पारुष्यं दण्डपारुष्यं च गुणद्वयम्। अथ त्रिवर्गः धर्मार्थकामाः, यद्वा उत्साहप्रभुत्वमन्त्रशक्तयस्त्रिवर्गः, यद्वा परेषां क्षयस्थानवृद्धयः 'क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्' इत्यमरः। यद्वा अशक्यसमुद्यमादिकार्यव्यसनत्रयं वा। यथाह कामन्दकः—'वस्तुष्वशक्येषु समुद्यमश्च शक्येषु मोहादसमुद्यमश्च । शक्येष्वकालेषु समुद्यमश्च त्रिधैव कार्यं व्यसनं वदन्ति' इति। तिस्रो विद्या त्रयीवार्तादण्डनीतयः आन्वीक्षिकी त्रयीवार्ता दण्डनीतिश्चेति विद्यायाश्चतुर्विधत्वेऽपि आन्वीक्षिक्यास्त्रय्यामन्तर्भावः तथाह कामन्दकः—'त्रयी वार्तादण्डनीतिरिति विद्या हि मानवाः। त्रय्या एव विशेषोऽयमियमान्वीक्षिकी मता' इति। त्रयी वेदः वार्ता कृषिगोरक्षवाणिज्यं दण्डनीतिर्नीतिशास्त्रम् इन्द्रियाणां जयं जयोपायं षड्गुणा एव षाड्गुण्यं स्वार्थे ष्यञ् ते च संधिविग्रहयानासनद्वैधीभावसमाश्रयाः दैवमानुषं दैवमनुष्येभ्य आगतं व्यसनमित्यर्थः। दैवं मानुषं च व्यसनं प्रत्येकं पञ्चविधं, यथाह कामन्दकीये—'हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा। इति पञ्चविधं दैवं मानुषं व्यसनं परम् ॥ आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात्। पृथिवीपतिलोभाच्च व्यसनं पञ्चधा भवेत्' इति। आयुक्तकाः अधिकारिणः कृत्यम् अलब्धवेतनावमानितकोपितभीषितेषु शत्रुसंबन्धिष्वभिमतवस्तुप्रदानेन कर्तव्यं भेदनम्। अत्राप्याह कामन्दकः—'अलब्धवेतनो लुब्धो मानी चाप्यवमानितः। क्रुद्धश्च कोपितोऽकस्मात्तथा भीतश्च भीषितः। यथाभिलषितैः कामैर्भिन्द्यादेतांश्चतुर्विधान्' इति। असंधेयाः विग्राह्याः बालवृद्धादयो विंशतिविधाः प्रतिपक्षनृपतयो विंशतिवर्ग इत्युच्यते। यथाह कामन्दकीये—'बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः। भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्। अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ दैवोपहतकश्चैव दैवचिन्तक एव च। दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः॥ अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च सः। सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम्' इति। ज्ञातिबहिष्कृतः बन्धुजनबहिष्कृतः, भीरवः जनाः मन्त्रिसेनापतियोधाः यस्य सः भीरुजनकः, एवमेव लुब्धजन इत्यत्रापि। लुब्धाः अत्यन्तधनाशापराः, दैवोपहतकः महर्षिशापाद्यभिहतः, दैवचिन्तकः दैवमेव सर्वं कुर्यादिति मत्वा पुरुषव्यापारमकुर्वाणः, बलव्यसनं सेनाविलयः, अदेशस्थः प्रोषितः, अकालेन युक्तः क्रूरग्रहदशाभागादियुक्तः, यद्वा विग्रहकारणभूतो राज्यापहारादिर्वा विंशतिवर्गः। अत्र च कामन्दकः—'राज्यस्त्रीस्थानदेशानां ज्ञातीनां च धनस्य च। अपहारो मदो मानः पीडा वैषयिकी तथा ॥ ज्ञानार्थशक्तिधर्माणां विघातो दैवमेव च। मित्रार्थयोश्चावमानस्तथा बन्धुविनाशनम् ॥ भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम्। एकार्थाभिनिवेशित्वमिति विग्रहयोनयः' इति। अत्रापहारशब्दः पूर्वैः षड्भिः संबध्यते वैषयिकी पीडा विषयपारवश्यं, विघातशब्दो ज्ञानादिभिश्चतुर्भिरन्वेति दैवशब्देन देवा इन्द्रादय उच्यन्ते तेषां विरोध्यपि विग्राह्यः यथा दशरथस्य इन्द्रविरोधी शम्बरः। मित्रार्थयोरित्यत्र मित्रं मित्रार्थस्तदनुबन्धी चेत्यर्थः, यद्वा मित्रं मित्रस्यार्थः[१] तद्धनम् अर्थस्यावमानो हरणमेव भूतानुग्रहविच्छेदः लोकानुग्रहराहित्यं, मण्डलदूषणं मण्डलशब्देन स्वमन्त्रिसेनापतिसुहृदादिरुच्यते तस्य दूषणं तद्विघटनम् एकार्थाभिनिवेशित्वं स्वाभिमतविषयाभिलाषित्वं प्रकृतयश्च मण्डलं च प्रकृतिमण्डलं, प्रकृतयस्तावत् 'अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चमः। एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः' इति कामन्दकोक्ताः मण्डलं द्वादशविधराजात्मकं मध्यतो विजिगीषुः तस्य शत्रुः मित्रं शत्रोर्मित्रं मित्रमित्रं शत्रुमित्रमित्रं चेति पुरोवर्तिनः पञ्च, पार्ष्णिग्राहः आक्रन्दः पार्ष्णिग्राहासारः आक्रन्दासारश्चेति पृष्ठभागस्थाश्चत्वारः, पार्श्वस्थो मध्यमः तेषां बहिरवस्थित उदासीनश्चेति। तथा च कामन्दकः—'संपन्नस्तु प्रकृतिभिर्महोत्साहः कृतश्रमः। जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥ अरिर्मित्रमरेर्मित्रं मित्रमित्रमतः परम्। तथारिमित्रमित्रं च विजिगीषोः पुरःसराः ॥ पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरः। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः॥ अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः। अनुग्रहे संहतयोर्व्यस्तयोर्निग्रहे प्रभुः॥ मण्डलाद्बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः' इति। अत्र शत्रुमित्रशब्दौ पुरस्तादव्यवहितानन्तरराष्ट्राधिपतिमेकव्यवहितानन्तरराष्ट्राधिपतिं च क्रमेण वदतः पार्ष्णिग्राहाक्रन्दशब्दावपि पृष्ठतस्तादृशौ क्रमेण वदतः न तु प्रसिद्धशत्रुमित्रपरौ 'विषयानन्तरो राजा शत्रुर्मित्रमतः परम्। उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः' इत्यमरः। आसारः सुहृद्बलम् 'आसारः स्यान्मित्रबले' इति रत्नमाला। मध्यमशब्देन च अरिविजिगीषोर्व्यस्तयोः समस्तयोश्च निग्रहानुग्रहसमर्थः पार्श्वदेशस्थः कश्चिदुक्तेभ्योऽन्यो राजोच्यते न तु मध्यवर्ती। उदासीनशब्देन च एतेषां सर्वेषामपि व्यस्तानां समस्तानां च निग्रहानुग्रहसमर्थः कश्चिद्विप्रकृष्टदेशस्थो राजो-

१ विजिगीष्वोरिति युक्तं व्यस्तयोरिति विशेषणात् इति भाति ।

मन्त्रिभिस्त्वं यथोदिष्टं चतुर्भिस्त्रिभिरेव वा । कच्चित्समस्तैर्व्यस्तैश्च मन्त्रं मन्त्रयसे बुध ॥ ७१ ॥
कच्चित्ते सफला वेदाः कच्चित्ते सफलाः क्रियाः । कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ ७२ ॥
कच्चिदेषैव ते बुद्धिर्यथोक्ता मम राघव । आयुष्या च यशस्या च धर्मकामार्थसंहिता ॥ ७३ ॥
यां वृत्तिं वर्तते तातो यां च नः प्रपितामहः । तां वृत्तिं वर्तसे कच्चिद्या च सत्पथगा शुभा ॥ ७४ ॥

च्यते । यात्रादण्डविधानं यात्रा यानं दण्डस्य सैन्यस्य विधानं संविधानं व्यूहभेदविधानं, यद्वा दण्डः शत्रुनिरसनं तस्य विधानं प्रकारः यात्रा च दण्डविधानं च यात्रादण्डविधानम् । प्रकृतिमण्डलमित्यत्राप्त्र चैकवद्भावः । सेनाव्यूहभेदाः पूर्वमुक्ताः शत्रुनिरसनप्रकाराश्च स्फुटाः सुज्ञेया इति यात्राशब्दितं यानं प्रदर्श्यते । तच्च पञ्चविधं बलातिशयेन पार्ष्णिग्राहादिभिर्विगृह्य शत्रूद्देशेन यानं विगृह्ययानं, पार्ष्णिग्राहादिभिः संधिं कृत्वा शत्रूद्देशेन यानं संधाययानं, सामन्तैः समेत्य यानं संभूययानम्, अन्योद्देशेन यात्राप्रसङ्गमुत्पाद्य अन्यं प्रति यानं प्रसङ्गतो यानम्, अन्यप्रसङ्गं कृत्वा बलवत्तया तमुपेक्ष्य तन्मित्रोद्देशेन यानमुपेक्ष्य यानमिति । यथा कामन्दकीये–'विगृह्य संधाय तथा संभूयाथ प्रसङ्गतः । उपेक्ष्य चेति निपुणैर्यानं पञ्चविधं स्मृतम्' इति । द्वियोनी इति संधिविग्रहयानासनद्वैधीभावसमाश्रयाः । षड्गुणाः पृथक्पृथक्प्रतिपादिताः इदानीं द्वैगुण्यमतावलम्बनेन यानादीन् संधिविग्रहयोरन्तर्भाव्य वदति–यानासने विग्रहस्य स्वरूपं, द्वैधीभावसमाश्रयौ संधेरूपं, तत्र विजिगीषोररिं प्रति यात्रा यानं तयोर्मिथः प्रतिबद्धशक्त्योः कालप्रतीक्षया तूष्णीमवस्थानमासनं दुर्बलस्य प्रबलयोर्द्विषतोर्वाचिकमात्मसमर्पणं द्वैधीभावः । तथाह–'बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् । द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः' इति । अरिणा पीड्यमानस्य बलवदाश्रयणं समाश्रयः इति विवेकः । तदुक्तं कामन्दकेन–'यानासने विग्रहस्य रूपं सद्भिरिति स्मृतम् । संधेश्च संधिमार्गज्ञैर्द्वैधीभावसमाश्रयौ' इति । एतान् पूर्वोक्तान् यथावदलमन्यसे अनुतिष्ठसि कच्चिदित्यर्थः, उक्तदशवर्गादीनां तत्त्वं ज्ञात्वा हेयान् जहासि ग्राह्यान् गृह्णासि कच्चिदिति यावत् ॥ ६९–७१ ॥

७१ ] ति० टी०–यथोदिष्टं नीतिशास्त्रोक्तमन्त्रविचारमार्गमनतिक्रम्येत्यर्थः । 'यथोदिष्टैः' इति पाठे मन्त्रिलक्षणलक्षितैरित्यर्थः । व्यस्तैरेकैकशः । एवं हि तत्तन्मनःपरिज्ञानं भवति । त्रिभिश्चतुर्भिरित्यनेन बहुभिर्नैकेनेति सूचितम् ॥ ७१॥

रा० टी०–मन्त्रिभिरिति । यथोदिष्टं शास्त्रमनतिक्रम्य समस्तैर्मिलितैः व्यस्तैरमिलितैश्च चतुर्भिः त्रिभिर्वा मन्त्रिभिर्मन्त्रं संमतिं मन्त्रयसे करोषि ॥ ७१ ॥

गो० टी०–मन्त्रिभिरिति । यथोदिष्टैः शास्त्रोक्तमन्त्रिलक्षणलक्षितैः 'यथोदिष्टम्' इतिपाठे नीतिशास्त्रोक्तमन्त्रविचारमार्गमनतिक्रम्येत्यर्थः । बहुभिर्मन्त्रकरणे मन्त्रभित्त्वसंभवादेकमत्याभावाच्च चतुर्भिस्त्रिभिरेव वा इत्युक्तं व्यस्तैस्तत्तन्मतं परिज्ञाय समस्तैश्चतुर्भिस्त्रिभिर्वा परिगणितैर्मन्त्रिभिः मिथः रहसि मन्त्रं मन्त्रयसे कच्चित् ॥ ७१ ॥

७२ ] ति० टी०–वेदाः सफलास्तद्विहितकर्मप्रवृत्त्या । क्रिया राजकार्याणि तत्तदुद्देश्यफलयुक्तानि । यद्वा क्रियाः संपादितधनादीनि क्रियास्तेषां सफलत्वं च दानभोगाभ्याम् । दाराणां सफलत्वं धर्मरतिप्रजाभिः । श्रुतसाफल्यं विनीतत्वम् ॥ ७२॥

रा० टी०–कच्चिदिति । वेदा अधीतसामादयः सफलाः तदनुष्ठानादिरूपफलसहिताः कच्चित् ते क्रिया अनुष्ठानानि सफलाः महत्समागमरूपफलसहिताः कच्चित्, दाराः सफलाः सत्पुत्रादिरूपफलसहिताः श्रुतं शास्त्रश्रवणं सफलं विनम्रताप्रापणरूपफलसहितं कच्चित् ॥ ७२ ॥

गो० टी०–राज्ञामवश्यं संपादनीयानर्थान् पृच्छति–कच्चित्ते सफला वेदा इति । ते वेदाः त्वदधीता वेदाः सफलाः कच्चित् अग्निहोत्राद्यनुष्ठानेन सफलीकृताः कच्चित् क्रियन्ते साध्यन्त इति क्रियाः धनानि धनानि त्वत्संपादितानि दानभोगाभ्यां सफलीकृतानि कच्चित् ते दाराः सफलाः कच्चित् रतिपुत्राभ्यां सफलाः कच्चित् ते श्रुतं शास्त्रश्रवणं सफलं कच्चित् शीलवृत्ताभ्यां सफलं कच्चित् तथाच महाभारते–'अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् । रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम्' इति ॥ ७२ ॥

७३ ] ति० टी०–उक्ता एषा बुद्धिर्यथा मम तथैव तवापि वर्तते कच्चित् । 'कच्चिदेष्वेव' इति पाठान्तरम् ॥ ७३ ॥

रा० टी०–कच्चिदिति । उक्ता कथिता एषा बुद्धिर्निश्चयः यथा मम तथा ते तवापि अस्तीति शेषः ॥ ७३ ॥

गो० टी०–कच्चिदेषैवेति । आयुष्या यशस्या धर्मकामार्थसंहिता उक्ता एषा बुद्धिर्मम यथा तथैव तव वर्तते कच्चित् ॥ ७४ ॥

७४ ] ति० टी०–सत्पथगा शिष्टानुष्ठानमार्गगा ॥ ७४ ॥

रा० टी०–यामिति । या सत्पथगा सत्पथैर्महात्मभिः सेव्या अत एव शुभा शुभमूलम् अत एव यामेव नः प्रपितामहाः वर्तन्ते अत एव यामेव तातो वर्तते तां वृत्तिं कच्चिद्वर्तसे ॥ ७४ ॥

गो० टी०–अथ उक्तानुक्तं सकलं संग्रहेण दर्शयति–यामित्यादिना । वृत्तिमाचरन् वर्तते अवर्तिष्ट, यद्वा दशरथमरणस्याज्ञातत्वाद्वर्तत इत्युक्तिः । पितामहस्य अजस्य

१ यथोदिष्टैरिति गो. पाठः । २ मिथ इति गो. पाठः । ३ मता इति गो. रा. पाठः ।

कच्चित्स्वादुकृतं भोज्यमेको नाश्नासि राघव । कच्चिदाशंसमानेभ्यो मित्रेभ्यः संप्रयच्छसि ॥ ७५ ॥
राजा तु धर्मेण हि पालयित्वा महीपतिर्दण्डधरः प्रजानाम् ।
अवाप्य कृत्स्नां वसुधां यथावदितश्च्युतः स्वर्गमुपैति विद्वान् ॥ ७६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे शततमः सर्गः ॥ १०० ॥

## ऐकाधिकशततमः सर्गः ।

कस्मात्त्वं राज्यं विहाय तापसवेषेण वनं प्रविष्ट इति भरतं प्रति रामः पप्रच्छाथ मातरं कुत्सयन्भरतस्तं प्रति राज्याङ्गीकारायार्थयते । रामस्तु पित्राज्ञाया अवश्यपालनीयत्वात्तदाज्ञायाः पूर्वांशरूपवनवासस्य मयाऽवश्यं स्वीकृतत्वादवशिष्टराज्यपालनरूपांशस्वीकरणं तेऽवश्यकर्तव्यमिति तं तत्राग्रहेण नियुङ्क्ते ।

तं तु रामः समाज्ञाय भ्रातरं गुरुवत्सलम् । लक्ष्मणेन सह भ्रात्रा प्रष्टुं समुपचक्रमे ॥ १ ॥
किमेतदिच्छेयमहं श्रोतुं प्रव्याहृतं त्वया । यस्मात्त्वमागतो देशमिमं चीरजटाजिनी ॥ २ ॥
यन्निमित्तमिमं देशं कृष्णाजिनजटाधरः । हित्वा राज्यं प्रविष्टस्त्वं तत्सर्वं वक्तुमर्हसि ॥ ३ ॥

चिरं राज्यपरिपालनाभावात् प्रपितामहा इत्युक्तं प्रपितामहाः प्रपितामहप्रभृतयः यथा सप्तमीशौण्डैरित्यत्र शौण्डादिभिरिति वृत्तिकारः । अत्र अवर्तन्तेत्यध्याहार्यं पित्राद्यनुष्ठितस्यानुष्ठाने प्राप्ते आह—या च सत्पथगा शुभा इति सत्पथगा सन्मार्गानुसारिणी शुभा अनिन्दिता ॥ ७९ ॥

७५] ति० टी०—स्वादुकृतं स्वादुतया कृतं सिद्धम् । आशंसमानेभ्यः स्नेहस्त्वद्यपेक्षयेच्छद्भ्यः मित्रेभ्यः स्निग्धेभ्यः ॥ ७९ ॥

रा० टी०—कच्चिदिति । स्वादुकृतं स्वादुपूर्णं भोज्यम् एको नाश्नासि कच्चित् । आशंसमानेभ्यः प्रशंसापूर्वकमिच्छद्भ्यः मित्रेभ्यः संप्रयच्छसि ॥ ७९ ॥

गो० टी०—कच्चिदिति । स्वादुकृतं मधुरतया सिद्धम् आशंसमानेभ्यः धनमिति शेषः ॥ ७६ ॥

७६ ] ति० टी०—महीपती राजा क्षत्रियः इतश्च्युत एतदेहलोकाभ्याम् ॥ ७६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽशततमः सर्गः ॥ १०० ॥

रा० टी०—राजेति । राजा सर्वत्र प्रकाशमानेन धर्मेणोपलक्षितः प्रजानां दण्डधरो महीपतिः कृत्स्नां सकलां वसुधामवाप्य संप्राप्य यथावत् पालयित्वा इतो लोकाच्च्युतो गतोऽपि स्वर्गमुपैति ॥ ७६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे शततमः सर्गः ॥ १०० ॥

गो० टी०—एवमाचरतो राज्ञ ऐहिकामुष्मिकफले दर्शयति—राजा त्वित्यादिना । तुशब्देन राजवैलक्षण्यमुच्यते हिः प्रसिद्धौ पालयित्वा महीमिति शेषः । महामतिः उक्तनीतिधर्मज्ञः दण्डधरः युक्तदण्डधरः यथावत् पूर्वराजवत् इतः अस्माल्लोकाच्च्युतः प्रारब्धकर्मावसाने मृत इत्यर्थः । विद्वान् शरीरभिन्नात्मज्ञानवान् ॥ ७७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने शततमः सर्गः ॥१००॥

१ ] ति० टी०—एवं कचित्प्रश्नानन्तरं स्वस्य राजत्वाभावं सूचयितुं तदुत्तरमप्रयच्छन्तं भरतं प्रति रामेणागमनप्रयोजनप्रश्नः—तं त्विति । समाज्ञाय कुशलप्रश्नव्याजेन सर्वधर्माञ्ज्ञापयित्वा, यद्वा प्राप्तराज्यपरित्यागेन जटादिधारणेन गुरौ स्वस्मिन्भक्तियुक्तं ज्ञात्वा ॥ १ ॥

रा० टी०—रामस्यैव वचनान्तराण्याह—तमित्यादिभिः । तं स्वसमीपे प्राप्तं भरतं गुरुवत्सलं गुरुविषयकातिप्रीतिमन्तं समाज्ञाय स्वस्थतया स्थितं ज्ञात्वा भ्रात्रा लक्ष्मणेन सह रामः प्रष्टुं समुपचक्रमे ॥ १ ॥

गो० टी०—अथ रामभरतयोरुक्तिप्रत्युक्ती चतुरुत्तरशततमे—तं त्वित्यादिना । गुरुवत्सलं गुरौ स्वस्मिन् भक्तं समाज्ञाय ज्ञात्वा प्राप्तराज्यपरित्यागेन जटावल्कलधारणादिना च स्वस्मिन् भक्तियुक्तं ज्ञात्वेत्यर्थः 'समाश्वास्य' इति पाठे प्रियवचनादिभिः सम्यगाश्वास्येत्यर्थः ॥ १ ॥

२.] ति० टी०—यस्मात्त्वमिमं देशं चीरजटाजिनी भूत्वाऽऽगतोऽसि तस्मादेवंरूपेणागमनं किंकारणकमिति त्वया प्रस्पष्टं व्याहृतं श्रोतुमहमिच्छेयम् ॥ २ ॥

रा० टी०—प्रश्नाकारमाह—किमिति । यस्मात्कारणाच्चीरजटाजिनी चीरजटाजिनविशिष्टस्त्वमिमं देशमागतः प्राप्तः तस्माद्धेतोस्त्वया प्रव्याहृतं कथितमेतत्किम् किमपि कारणमहं श्रोतुमिच्छेयम् ॥ २ ॥

गो० टी०—किमिति । यस्मात् कारणात् त्वं चीरजटाजिनी सन् इमं देशमागतः एतत् एतत्कारणं किम् अहं त्वया प्रव्याहृतं श्रोतुमिच्छेयं श्रोतुमिच्छामि न तु ऊहेयेति भावः॥२॥

३] ति० टी०—एतस्यैव श्लोकस्य व्याख्यानम्—यदिति॥३॥

१ महामतिरिति गो. पाठः । २ सर्गोऽयं गो. रा. पाठे शताधिकचतुर्थतयाऽवतिष्ठते किंतु मूलस्य तिलकानुरोधित्वादस्माभिस्तट्टीकोक्त्यात्रैव निवेश्यते । ३ किमिति गो. पाठः ।

इत्युक्तः केकयापुत्रः काकुत्स्थेन महात्मना । प्रगृह्य बलवद्भूयः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४ ॥
आर्य[1] तातः परित्यज्य कृत्वा कर्म सुदुष्करम् । गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः ॥ ५ ॥
स्त्रिया नियुक्तः कैकेय्या मम मात्रा परंतप । चकार सा[2] महत्पापमिदमात्मयशोहरम् ॥ ६ ॥
सा राज्यफलमप्राप्य विधवा शोककर्शिता । पतिष्यति महाघोरे नरके[3] जननी मम ॥ ७ ॥
तस्य मे दासभूतस्य प्रसादं कर्तुमर्हसि । अभिषिञ्चस्व चाद्यैव राज्येन मघवानिव ॥ ८ ॥
इमाः प्रकृतयः सर्वा विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि ॥ ९ ॥
तथा[4]नुपूर्व्या युक्तश्च[5] युक्तं चात्मनि मानद । राज्यं प्राप्नुहि धर्मेण सकामान्सुहृदः कुरु ॥ १० ॥
भवत्वविधवा भूमिः समग्रा पतिना त्वया । शशिना विमलेनेव शारदी रजनी यथा ॥ ११ ॥
एभिश्च सचिवैः सार्धं शिरसा याचितो मया । भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुमर्हसि ॥ १२ ॥

रा०टी०—यदिति । कृष्णाजिनजटाधरः सन् राज्यं हित्वा इमं देशं यन्निमित्तं यदर्थं त्वं प्रविष्टस्तत्सर्वं वक्तुमर्हसि ॥ ३ ॥

गो० टी०—एवमुक्तेऽपि शोकेन तूष्णीं स्थितं पुनः पृच्छति—किं निमित्तमित्यादिश्लोकद्वयेन । काकुत्स्थेन बलवत्प्रगृह्य गाढं परिष्वज्य तत्सर्वं वक्तुमर्हसीति भूय उक्तः कैकेयीपुत्रः प्राञ्जलिर्वाक्यमब्रवीदित्यन्वयः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—प्रगृह्य बलवत् यथा तथा शोकं निगृह्येत्यर्थः ॥ ४ ॥

रा० टी०—इतीति । महात्मना काकुत्स्थेन रामेण बलवत्प्रगृह्य भरतमालिङ्ग्य भूयः अत्यन्तमुक्तः कैकेयीपुत्रो भरतः प्राञ्जलिः सन् इति इदं वाक्यमब्रवीत् ॥ ४ ॥

५ ] ति० टी०—पूर्वपृष्टमेवार्थं क्व नु तेऽभूत्पितेत्येवंरूपं भङ्ग्यन्तरेण पुनः पृष्टं ज्ञात्वा तदुत्तरमाह—आर्येति । परित्यज्य अस्मान्सर्वानिमं च लोकमिति शेषः । 'आर्यं परित्यज्य' इति पाठे विवास्येत्यर्थः । सुदुष्करं कर्म ज्येष्ठार्हं राज्यं कनिष्ठसात्कृत्वा ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—आर्येति । हे आर्य ! स्त्रिया मत्पत्न्या प्रार्थितयेति शेषः, मम मात्रा कैकेय्या नियुक्तः प्रार्थितस्तातः सुदुष्करं कर्तुमशक्यं कर्म कृत्वा त्वां प्रव्राज्येत्यर्थः, पुत्रशोकाभिपीडितः सन् परित्यज्य प्रकटायोध्यामिति शेषः, स्वर्गमप्रकटसाकेतं गतः अतः सा कैकेयी आत्मयशोहरं स्वत्प्रव्राजनकर्त्रीत्वेन इयं रामस्य अतिप्रियेति स्वयशोविध्वंसकमिदं महत्पापं चकार । स्त्रिया प्रार्थितयेत्यनेन मन्थरामाण्डव्योरतिप्रीतिः सूचिता तेन माण्डवीकर्तृकमेवेदं सर्वमिति सूचितम् । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—आर्यमिति । सुदुष्करं कर्म कृत्वा ज्येष्ठार्हं राज्यं स्त्रीनियोगात् कनिष्ठसात्कृत्येत्यर्थः । आर्यं त्वां परित्यज्य विवास्य ॥ ५ ॥

६-७ ] ति० टी०—मम मात्रा कैकेय्या नियुक्त इति पूर्वश्लोकान्वयि सा चकारेत्यन्वयः ; 'सुमहत्' इति पाठे सेत्यध्याहारः ॥ ६ ॥ ७ ॥

गो० टी०—स्त्रियेति । सुमहत्पापं सुपुत्रस्य वने प्रव्राजनरूपम् ॥ ६ ॥

रा० टी०—सेति । सा कृतरामप्रव्राजना कैकेयी राज्यफलं राज्ये फलं स्वयशोनिष्पत्तिमप्राप्य विधवा पतिसांनिध्यरहिता अत एव शोककर्षिता सती महाघोरे नरके नरोच्चारितनिन्दाशब्दे पतिष्यति अपतत् लृङुपात्तभविष्यत्वस्याविवक्षा ॥ ७ ॥

गो० टी०—सेति । सा एवंरूपपापप्रेरणकर्त्री ॥ ७ ॥

८ ] ति० टी०—एवं पितृमरणे श्रुते तदुचितकृत्ये कृते ततःपरं यद्वक्तव्यं तत्संक्षेपेणाधुनैव ब्रूते भरतः—तस्य म इति । कैकेयीपुत्रत्वात्प्राप्तापवादस्य । राज्येन राज्यनिमित्तम् ॥ ८ ॥

रा० टी०—तस्येति । दासभूतस्य मम प्रसादं कर्तुमर्हसि । तदुपायमाह—अद्यैव मघवानिव अभिषिञ्चस्व अभिषेचय आत्मानमिति शेषः ॥ ८ ॥

गो० टी०—तस्येति । तस्य कैकेयीसंबन्धात् प्राप्तापवादस्येत्यर्थः राज्येन हेतुना ॥ ८ ॥ ९ ॥

९ ] ति० टी०—यस्मान्मातरो वयं च सर्वे त्वत्प्रसादनार्थमागताः ॥ ९ ॥

रा० टी०—इमा इति । विधवाः स्वामिरहिताः याः प्रकृतयः प्रजाः मातरश्च त्वत्सकाशं त्वत्समीपं प्राप्तास्तासां प्रसादं कर्तुं त्वमर्हसि ॥ ९ ॥

१० ] ति० टी०—यतश्च त्वमानुपूर्व्या ज्येष्ठत्वलक्षणया युक्तो यतश्चात्मनि त्वयि अभिषेचनं युक्तं तस्माद्धर्मेण राज्यं प्राप्नुहि ॥ १० ॥

रा० टी०—तथेति । यतस्तथा अभिषेचनयोग्यया आनुपूर्व्या आनुपूर्वीघटकप्रथमत्वेन त्वं युक्तः अतः आत्मनि युक्तं धर्मेण राज्यं आप्नुहि अत एव सुहृदः सकामान् कुरु ॥ १० ॥

गो० टी०—तदानुपूर्व्येति । आनुपूर्व्या युक्तं ज्येष्ठानुक्रमेण संगतम् आत्मनि युक्तं च भरणसमर्थे त्वय्येव प्राप्तम् ॥ १० ॥

११-१२ ] ति० टी०—रजनी यथा तादृशी भूमिः शशिनेव त्वया युताऽविधवा भवत्वित्यन्वयः । पतिनेत्यार्षम् । 'विमलेनेह' इति पाठान्तरम् ॥ ११ ॥ १२ ॥

१ आर्यमिति गो. पाठः । २ स्विति गो. पाठः । ३ निरय इति गो. पाठः । ४ तदेति गो. पाठः । ५ युक्तं चेति गो. पाठः ।

तदिदं शाश्वतं पित्र्यं सर्वं सचिवमण्डलम् । पूजितं पुरुषव्याघ्र नातिक्रमितुमर्हसि ॥ १३ ॥
एवमुक्त्वा महाबाहुः सबाष्पः कैकयीसुतः । रामस्य शिरसा पादौ जग्राह भरतः पुनः ॥ १४ ॥
तं मत्तमिव मातङ्गं निःश्वसन्तं पुनः पुनः । भ्रातरं भरतं रामः परिष्वज्येदमब्रवीत् ॥ १५ ॥
कुलीनः सत्त्वसंपन्नस्तेजस्वी चरितव्रतः । राज्यहेतोः कथं पापमाचरेन्मद्विधो जनः ॥ १६ ॥
न दोषं त्वयि पश्यामि सूक्ष्ममप्यरिसूदन । न चापि जननीं बाल्यात्त्वं विगर्हितुमर्हसि ॥ १७ ॥
कामकारो महाप्राज्ञ गुरूणां सर्वदानघ । उपपन्नेषु दारेषु पुत्रेषु च विधीयते ॥ १८ ॥
वयमस्य यथा लोके संख्याताः सौम्य साधुभिः। भार्याः पुत्राश्च शिष्याश्च त्वमपि ज्ञातुमर्हसि ॥ १९ ॥

रा० टी०—भवत्विति । समग्रा संपूर्णा भूमिः अविधवा धवराहित्यरहिता पतिना त्वया भवतु, तत्र दृष्टान्तः शशिना रजनी रात्रिरिव ॥ ११ ॥

गो० टी०—भवत्विति । पतिनेति नाभाव आर्षः । रजनी यथा रजनीव भूमिः शशिनेव त्वया अविधवा भवतु ॥ ११ ॥

रा० टी०—एभिरिति । मया शिरसा याचितस्त्वं भ्रातृत्वादिविशिष्टस्य मम प्रसादं कर्तुमर्हसि ॥ १२ ॥

गो० टी०—एभिश्चेति । ममैकस्य शोकाश्रुपातमसहमानः कथमेषामश्रूणि सहिष्युत इति मत्वा युद्धाय संनद्धैरिव रथगजतुरगपदातिभिः सार्धमागतोऽस्मि सचिवैः मम हि याचनमुपेक्ष्यमस्मद्राज्यनिर्वाहकैः पूजनीयैः सचिवैर्याचितं तवानतिक्रमणीयं हि याचितः ममाग्रतः स्थितिरेवालं तव कार्यकरणाय किं पुनर्याचनेऽपि कृते शिरसा याचितः शिरसा याचतस्तस्य वचनं न कृतं मयेति खलु तव हृदयमनुशेते मया एतावत्पर्यन्तं त्वमेव मां याचित्वा मम मनोरथं पूरितवानसि भ्रातुः किमर्थं याचितव्यं तवानुजो न भवामि किं शिष्यस्य अनुजो भूत्वा भवता सह किमंशभाक् तिष्ठामि मन्त्रसंबन्धोऽपि त्वत्तः खलु दासस्य शिष्यो भूत्वा क्रयविक्रयार्हो न भवामि किम् अतः प्रसादं कर्तुमर्हसि उक्तैरमोघैः हेतुभिर्मम याच्ञां सफलां कुरुष्व ॥ १२ ॥

१३–१४] ति० टी०—शाश्वतं परंपराप्राप्तं सचिवमण्डलं तत्प्रार्थनं पूर्वं सदा पूजितं सफलं कृतं तदिदानीमतिक्रमितुं नार्हसि ॥ १३ ॥ १४ ॥

रा० टी०—तदिति । शाश्वतं कुलपरंपराप्राप्तं पूजितं सत्कृतं पित्र्यं पितृसंबन्धि सर्वं सचिवमण्डलमतिक्रमितुमुल्लङ्घितुं नार्हसि ॥ १३ ॥

गो० टी०—एभिश्च सचिवैरित्यस्य विवक्षितं दर्शयति—तदिति । तत्प्रवर्तनदशायामसन्निहितमिदम् इदानीं सन्निहितं शाश्वतं सनातनं परंपराप्राप्तमिति यावत्, पूजितं पूजार्हं प्रकृतीनां मन्त्रिप्रभृतीनां मण्डलं समूहं नातिक्रमितुमर्हसि तद्वचनं नातिक्रमणीयमित्यर्थः ॥ १३ ॥

रा० टी०—एवमिति । महाबाहुः भरतः एवमुक्त्वा रामस्य पादौ शिरसा पुनर्जग्राह ॥ १४ ॥

गो० टी०—एवमिति । महाबाहुः प्रसारितबाहुरिति यावत् कैकेयीसुतः मातुर्दोषादियमवस्थेति भावः । पुनरिति पूर्वं याचितवान् ततः शरणागतिमकरोदित्यर्थः ॥ १४ ॥१५॥

१५ ] ति० टी०—मत्तमथाप्यकस्मात्प्राप्तदुःखेन निःश्वसन्तं मातङ्गमिव स्थितं भरतमित्यन्वयः ॥ १५ ॥

रा० टी०—तमिति । मत्तं मातङ्गं गजमिव निश्वसन्तं भरतं परिष्वज्य इदमब्रवीत् ॥ १५ ॥

१६] ति० टी०—पापं पित्राज्ञाभङ्गरूपम् ॥ १६ ॥

रा० टी०—तद्वचनाकारमाह—कुलीन इति । कुलीनः सत्कुले प्रादुर्भूतः अत एव सत्त्वसंपन्नः शुद्धसत्त्वगुणयुक्तः अत एव तेजस्वी चरितानि व्रतानि येन सः त्वद्विधः त्वत्सदृशो जनः राज्यहेतोः राज्यार्थं पापं कथमाचरेत् कथमपि नेत्यर्थः, यदि त्वत्सदृशो नाचरेत्तर्हि त्वं नाचरेः इति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो ध्वनितः । एतेन त्वयि राज्याकाङ्क्षा नास्तीत्यस्माभिर्ज्ञातमिति सूचितम् ॥ १६ ॥

गो० टी०—कुलीन इति । कुलीनः महाकुलप्रसूतः सत्त्वसंपन्नः सत्त्वगुणसंपन्नः पापं ज्येष्ठविषयप्रातिकूल्यरूपम् ॥१६॥

१७ ] ति० टी०—बाल्यादज्ञानात् ॥ १७ ॥

रा० टी०—नेति । हे अरिसूदन! सूक्ष्ममपि दोषं त्वयि न पश्यामि अतो बाल्यान्मात्रभिप्रायाविज्ञानाद्धेतोः जननीं विगर्हितुं निन्दितुं नार्हसि । एतेन तद्विगर्हणे त्वयि दोषः स्यादिति सूचितम् ॥ १७ ॥

गो० टी०—न दोषमिति । बाल्यात् अज्ञानादित्यर्थः ॥१७॥

१८ ] ति० टी०—कथं कैकेयीगर्हणमज्ञानमूलं तत्राह—कामकार इति । स्वच्छन्दाचरणमित्यर्थः, स्वेच्छया नियोजनमिति यावत् । गुरूणां पित्रादीनाम् उपपन्नेषु संमतेषु दारेषु पुत्रेषु च कामकारो विधीयत इति संबन्धः ॥ १८ ॥

रा० टी०—तद्गर्हाभावे हेतुं वदन्नाह—कामकार इति । हे अनघ ! उपपन्नेषु स्वसंमतेषु दारेषु पुत्रेषु च गुरूणां कामकारः स्वेच्छया वर्तनं विधीयते शास्त्रेणेति शेषः, एतेन पित्रादयः कथंचिदपि न दूष्या इति ध्वनितम् ॥ १८ ॥

गो० टी०—कामकार इति । कामकारः स्वच्छन्दकरणम् उपपन्नेषु शिष्यदासादिषु ॥ १८ ॥

१९ ] ति० टी०—ततः किमत आह—वयमिति । भार्याः

१ प्रकृतीति गो. पाठः । २ विधिवदिति गो. पाठः । ३ त्वविति गो. रा. पाठः । ४ अन्विति गो. पाठः ।

वने वा चीरवसनं सौम्य कृष्णाजिनाम्बरम् । राज्ये वापि महाराजो मां वासयितुमीश्वरः ॥ २० ॥
यावत्पितरि धर्मज्ञ गौरवं लोकसत्कृते । तावद्धर्मकृतां श्रेष्ठ जनन्यामपि गौरवम् ॥ २१ ॥
एताभ्यां धर्मशीलाभ्यां वनं गच्छेति राघव । मातापितृभ्यामुक्तोऽहं कथमन्यत्समाचरे ॥ २२ ॥
त्वया राज्यमयोध्यायां प्राप्तव्यं लोकसत्कृतम् । वस्तव्यं दण्डकारण्ये मया वल्कलवाससा ॥ २३ ॥
एवमुक्त्वा महाराजो विभागं लोकसंनिधौ । व्यादिश्य च महाराजो दिवं दशरथो गतः ॥ २४ ॥
स च प्रमाणं धर्मात्मा राजा लोकगुरुस्तव । पित्रा दत्तं यथाभागमुपभोक्तुं त्वमर्हसि ॥ २५ ॥
[ चतुर्दश समाः सौम्य दण्डकारण्यमाश्रितः । उपभोक्ष्ये त्वहं दत्तं भागं पित्रा महात्मना ॥ ]
यदब्रवीन्मां नरलोकसत्कृतः पिता महात्मा विबुधाधिपोपमः ।
तदेव मन्ये परमात्मनो हितं न सर्वलोकेश्वरभावमव्ययम् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकाधिकशततमः सर्गः ॥ १०१ ॥

पुत्राः शिष्याश्च लोके साधुभिर्यथा समाख्याता इच्छाविनियोगार्हतया तथास्य राज्ञो वयं सर्वे इति त्वमपि ज्ञातुमर्हसि॥१९॥

रा० टी०–वयमिति । यथा येन प्रकारेण लोके भार्यादयः साधुभिः धर्मज्ञैः संख्याताः गुर्वधीनत्वेन कथितास्तथा अस्य पितुः वयमपि संख्याता इति ज्ञातुमर्हसि ॥ १९ ॥

गो० टी०–वयमिति । लोके भार्यादयः साधुभिर्यथा संख्याताः नियाम्यत्वेन परिगणिताः वयमपि तथा दशरथस्येति त्वं ज्ञातुमर्हसि । अत्रुर्निरर्थकः ॥ १९ ॥

२० ] ति० टी०–प्रकृते किं तत्राह–वने इत्यादि ॥२०॥

रा० टी०–वन इति । चीरवसनादिविशिष्टं मां वने राज्ये वा आवासयितुं महाराज एव ईश्वरः समर्थः ॥ २० ॥

गो० टी०–वन इति । चीरं द्रुमवल्कलं वसनमुत्तरीयं यस्य तं कृष्णाजिनम् अम्बरं मधराम्बरं यस्य तम् ईश्वरः नियन्ता ॥ २० ॥

२१ ] ति० टी०–प्रकृतमन्वागर्हाभावमुपसंहरति–यावदिति । तावत्तावत्परिमाणकमित्यर्थः, अतः कैकेय्या अप्यस्मन्नियोजने तथैवाधिकार इति भावः ॥ २१ ॥

रा० टी०–तथैव जनन्यपि मन्तव्येति बोधयन्नाह–यावदिति । यावत् गौरवं गुरुत्वं पितरि तावत् जनन्यामपि वर्तते इति शेषः ॥ २१ ॥

गो० टी०–यावदिति । पितरि यावत् यत्परिमाणकं गौरवं जनन्यामपि तावत् तत्परिमाणकं गौरवं कर्तव्यमिति शेषः । यत्तच्छब्दाभ्याम् "यत्तदेतेभ्यः परिमाणे वतुप्" इति वतुप् ॥ २१ ॥

२२ ] ति० टी०–समाचरे समाचरिष्यामि ॥ २२ ॥

रा० टी०–एताभ्यामिति । एताभ्यां मातापितृभ्यां वनं गच्छेति उक्तोऽहमन्यत्तद्विरुद्धं कथं समाचरे ॥ २२ ॥

गो० टी०–फलितमाह–एताभ्यामिति । समाचरे समाचरामि कथं समाचराणीत्यर्थः ॥ २२–२४ ॥

२३ ] ति० टी०–त्वया राज्यं प्राप्तव्यम् मया दण्डके वस्तव्यम् ॥ २३ ॥

२४ ] ति० टी०–एवं विभागं लोकसंनिधौ मन्त्रिपुरोहितादिजनसंनिधावुक्त्वा तानेवं विभागं कुरुतेति व्यादिश्य च आज्ञाप्य च दिवं गत इत्यन्वयः ॥ २४ ॥

रा० टी०–त्वयेति । त्वया भरतेन अयोध्यायां राज्यं प्राप्तव्यं मया रामेण अरण्ये वस्तव्यमेवं विभागं विभागबोधकं वाक्यमुक्त्वा केकयीसन्निधौ प्रतिज्ञायेत्यर्थः, लोकसंनिधौ व्यादिश्य मामाज्ञाप्य च महातेजाः महाराजो दशरथः दिवं ब्रह्मादिस्तुत्यमप्रकटसाकेतं गतः । श्लोकद्वयमेकान्वयि॥२३॥२४॥

२५ ] ति० टी०–यथाभागं पितृकल्पितचतुर्दशवर्षपर्यन्तम् अनेन तदनन्तरमहं भोक्ष्यामीति सूचितम् । मात्रापि चतुर्दशवर्षपर्यन्तं वनवास एव वृतः न तु सर्वथा मे राज्यत्यागः पित्रापि तावदेवानुमतमिति भावः ॥ २५ ॥

रा० टी०–स इति । लोकगुरुः स प्रसिद्धो राजा तव प्रमाणमतः पित्रा दत्तं भागं यथा यथावत् उपभोक्तमर्हसि ॥ २५ ॥

रा० टी०–चतुर्दशेति । चतुर्दश समाः वर्षाणि अरण्यमाश्रितोऽत एव यत् तद्विषयकयत्नवानहं पित्रा दत्तं भागमुपभोक्ष्ये ॥ २६ ॥

गो० टी०–स चेति । पित्रा दत्तं भागं यथा यथावत् उपभोक्तुमित्यन्वयः ॥ २५ ॥ २६ ॥

२६ ] ति० टी०–पिता महात्मा ब्रह्मणा तुल्यः । अव्ययं सर्वलोकेश्वरत्वं ब्रह्मत्वं पित्रननुमतमिति शेषः । नहि तमित्यन्वयः । ननु पितृमरणश्रवणोत्तरं शोकमुक्त्त्वाभिषेकप्रस्ता-

१ धर्मज्ञे इति गो. पाठः । २ सत्कृतमिति गो. पाठः । ३ भृतामिति गो. पाठः । ४ कृत्वेति गो. पाठः । ५ तेजा इति गो. पाठः । ६ श्लोकोऽयमधिको गो. रा. पाठे । ७ च यद्दत्तमिति रा. पाठः । ८ अप्यहमिति गो. पाठः ।

## द्व्युत्तरशततमः सर्गः ।

अग्रजसेवारूपधर्माद्भ्रष्टस्य किं मे राज्येन, त्वामनुचिन्तयन्नेव तातः स्वर्गतोऽतस्तत्प्रीत्यै कुरूदकमभिषिञ्चयामास कृतनिवापाविवावामभ्यागताविति भरतो रामं प्रार्थयते ।

**रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच ह । किं मे धर्माद्विहीनस्य राजधर्मः करिष्यति ॥ १ ॥**
**शाश्वतोऽयं सदा धर्मः स्थितोऽस्मासु नरर्षभ । ज्येष्ठे पुत्र स्थिते राजा न कनीयान्भवेन्नृपः ॥ २ ॥**

ख्यानमेव कुत इति चेच्छृणु । भरतस्याभिषेककरणप्रत्याशावारणाय कैकेय्या लोकानां चान्यथासंभावनावारणाय शोककालेऽपि धैर्यमवलम्ब्य तत्करणं शोककालेऽप्येवं धैर्यं कर्तव्यमिति लोकोपदेशायेति मम प्रतिभाति । तीर्थस्तु–पूर्वं न स्वर्गं गतो मृतकल्पो विधवास्तत्कल्पा इत्यर्थं मत्वा मरणनिश्चयाभावेन राज्यस्वीकारायैव राजानं मृतकल्पं वदतीति बुद्ध्या शोकाकरणपूर्वकमभिषेकप्रत्याख्यानं कृतवान् । स्ववाक्ये दिवं गत इत्यत्राप्येवमेवेत्याह । कतकस्तु–गतः स्वर्गमिति भरतेनोक्तेऽपि पितृमरणोचितसर्वकार्यकरणे कृते भरतस्तस्य मे इत्याग्रकवान् । कविस्तु संक्षेपेणादावुक्त्वाग्रे विस्तरेण वदतीति अयं कवेः स्वभाव इत्याह ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय-आदिकाव्येऽयोध्याकाण्डे एकाधिकशततमः सर्गः ॥१०१॥

**रा० टी०–यदिति ।** नरलोकसत्कृतः महात्मा पिता यन्मामब्रवीत्तदेवाहं हितं मन्ये अव्ययं विनाशरहितं सर्वलोकेश्वरभावं सर्वलोकेश्वरत्वं तु न हितं मन्ये ॥ २७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

**गो० टी०–यदिति ।** परमात्मनो हितम् आत्मनः परं हितम् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुरुत्तरशततमः सर्गः ॥१०४॥

१ ] **ति० टी०–अथ भरतः** पितृवृत्तान्तप्रश्नोत्तरमुक्त्वा कथितप्रश्नोत्तरमाह–रामस्येति । धर्माद्राज्यायोग्यत्वेन राजधर्माद्राज्याद्विहीनस्य त्वत्पृष्टराजधर्मो मे कोपयुक्तः अनुपनीतयागवत् अतोऽनवसरदुःस्थो मयि कथितादिप्रश्न इति भावः ॥ १ ॥

**रा० टी०–रामवचनश्रवणानन्तरकालिकं भरतवृत्तान्तमाह–रामस्येति ।** भरतः प्रत्युवाच तत्प्रतिवचनमेवाह धर्मात्स्वकुलोचितरीतेः विहीनस्य मे राजधर्मः राजधर्मोपदेशः किं करिष्यति धर्माचरणरहितेषूपदेशो निरर्थक इति तात्पर्यम् ॥१॥

**गो० टी०–रामस्य वचनं श्रुत्वा भरतः प्रत्युवाच हे-** त्यादि । अयं सर्ग एवात्र लेखनीयः। 'तं तु रामः समाश्वास्य भ्रातरं गुरुवत्सलम्' इत्यादिसर्गस्तु लेखकैः प्रमादाल्लिखितः तस्योक्तप्रश्नोत्तरत्वाभावात् अत्र भरतोच्यमानपितृमरणश्रवणानन्तरं रामस्य दुःखितत्वाश्रवणात् अत्र महेश्वरतीर्थेन सर्गपौर्वापर्यवैपरीत्यमनालोच्य स्वदृष्टकोशमात्रप्रामाण्येन तं तु रामः समाश्वास्येत्यादिकं सर्गमेवैकोत्तरशततमं मत्वानेन तत्सर्गव्याख्यानान्ते तत्रत्यार्थविरोधमालोच्यैव आक्षेपपरिहारावुक्तौ ननु 'आर्यं तातः परित्यज्य कृत्वा कर्म सुदुष्करम् । गतः स्वर्गं महाबाहुः पुत्रशोकाभिपीडितः' इति । 'इमाः प्रकृतयः सर्वा विधवा मातरश्च याः। त्वत्सकाशमनुप्राप्ताः' इति च भरतेनोक्ते रामस्तदानीमशोचन् तदुल्लङ्घ्याभिषेकप्रत्याख्यानमेव किमिति कृतवान् नैष दोषः तस्मिन् भग्नवाक्यप्रबन्धे पितृमरणमात्रपङ्क्तिकत्वेनोक्तं राज्यस्वीकरणमेव प्राधान्येनोक्तम् अतो रामस्तु देवं मन्यते । पिता पुत्रशोकेन मृतकल्पो न पुनर्जीविष्यतीति मृत इत्युच्यते मातरश्च विधवाकल्पा इति विधवा इत्युच्यन्ते अनेन ममाभिषेचनमेव प्राधान्येनोच्यत इति अशोचन्नभिषेकप्रत्याख्यानं कृतवान् स्ववाक्ये पितृमरणानुवादस्य चायमेवार्थ इति । अत्रायं परिहारो न युज्यते यदि च पिता मृतकल्पत्वेन मृत इत्युच्यत इति रामो गृह्णीयात् तदा ज्यादिश्य च महातेजा दिवं दशरथो गत इति नानुवदेत् । यस्तु स्वाशयं स्वयमेवैवमिति वदति तस्यान्येन गत्यन्तरे सति तद्विरुद्धाभिप्रायकल्पनं कथं कर्तुं शक्यम् अतोऽनेनैवानुवादेन रामेण पिता मृत इत्येव गृहीतमिति भाति किं च प्रकृतीनां मातृणां च समागमनात्पूर्वम् 'इमाः प्रकृतयः सर्वा विधवा मातरश्च याः । त्वत्सकाशमनुप्राप्ताः प्रसादं कर्तुमर्हसि' इत्युक्त्यादिनिर्देशाद्यनुपपत्तेश्च । अतः तं तु रामः समाश्वास्येत्यादिसर्गः वसिष्ठं पुरतः कृत्वेति त्र्युत्तरशततमसर्गानन्तरं चतुरुत्तरशततमसर्गत्वेन लेखनीयः पठनीयश्च तथा चेत्संगतः स्यात् अतोऽत्र रामस्य वचनं श्रुत्वेत्ययं सर्ग एव व्याख्यायते रामस्य वचनं श्रुत्वेत्यादि । धर्मात् त्वत्सेवारूपमुख्यधर्मात्, यद्वा धर्मात् त्वदुक्तराजधर्मानुष्ठानहेतुभूतराजभावात् राजधर्मः त्वदुक्तनीतिरित्यर्थः ॥ १ ॥

२ ] **ति० टी०–कुतस्तं उक्तवर्गाभावोऽत आह–शाश्वत इति ।** शाश्वतः कुलक्रमागतः अस्मास्वस्मत्पूर्वेषु सदा सर्वदा । 'यथा' इति पाठे यथाशास्त्रं स्थितः प्रतिष्ठितः। अयं कस्तत्राह–ज्येष्ठे इति । एवं च कनीयस्त्वान्मे न राजत्वमिति भावः॥२॥

१ ज्येष्ठपुत्र इति गो. पाठः । २ राजानिति गो. पाठः ।

स समृद्धां मया सार्धमयोध्यां गच्छ राघव । अभिषेचय चात्मानं कुलस्यास्य भवाय नः ॥ ३ ॥
राजानं मानुषं प्राहुर्देवत्वे संमतो मम । यस्य धर्मार्थसहितं वृत्तमाहुरमानुषम् ॥ ४ ॥
केकयस्थे च मयि तु त्वयि चारण्यमाश्रिते । [1]धीमान्स्वर्गं गतो राजा यायजूकः सतां मतः ॥ ५ ॥
निष्क्रान्तमात्रे भवति सहसीते सलक्ष्मणे । दुःखशोकाभिभूतस्तु राजा त्रिदिवमभ्यगात् ॥ ६ ॥
उत्तिष्ठ पुरुषव्याघ्र क्रियतामुदकं पितुः । अहं चायं च शत्रुघ्नः पूर्वमेव कृतोदकौ ॥ ७ ॥
प्रियेण [2]किल दत्तं हि पितृलोकेषु राघव । [3]अक्षयं भवतीत्याहुर्भवांश्चैव पितुः प्रियः ॥ ८ ॥
त्वामेव शोचंस्तव दर्शनेप्सुस्त्वय्येव सक्तामनिवर्त्य बुद्धिम् ।
त्वया विहीनस्तव शोकरुग्णस्त्वां संस्मरन्नेर्वे गतः पिता ते ॥ ९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

रा० टी०—धर्मच्युतिमेवोपपादयन्नाह—शाश्वत इति । ज्येष्ठपुत्रे स्थिते सति कनीयान् कनिष्ठः नृपो न भवेत् इति शाश्वतः सार्वकालिकः अयं धर्मः अस्मासु अस्मत्पूर्वजेषु सदा नित्यं स्थितः ॥ २ ॥

गो० टी०—कुतस्ते राजभावाभाव इत्यत्राह—शाश्वत इति । अस्मासु अस्मत्पूर्वेषु ॥ २ ॥

३ ] ति० टी०—यदेवमतः—स इति । गच्छागच्छ, भवायाभ्युदयाय ॥ ३ ॥

रा० टी०—ननु कथं तस्य धर्मस्य स्थितिरित्यत आह—स इति । नोऽस्माकमस्य कुलस्य कुलधर्मस्य भवाय स्थित्यै मया सह अयोध्यां गच्छ आत्मानं च अभिषेचय ॥ ३ ॥

गो० टी०—ससमृद्धामिति । भवाय भद्राय 'भवो भद्रे हरे प्राप्तौ सत्तासंसारजन्मसु' इति वैजयन्ती ॥ ३ ॥

४ ] ति० टी०—ननु देवत्वप्रापकं तपो विहाय किं मे राज्येन तत्राह—राजानमिति । सर्वे जना यद्यपि राजानं मानुषं प्राहुस्तथापि मम स देवत्वे संमतः । तत्र हेतुमाह—यस्येति । अमानुषं मनुष्येऽसंभावितमित्यर्थः ॥ ४ ॥

रा० टी०—ननु महाराजस्य विद्यमानत्वे कथमेवं प्रार्थनेत्यत आह—राजानमिति । यं मानुषं राजानं प्राहुः यस्य धर्मार्थसहितं वृत्तं वृत्तान्तममानुषं प्राहुः स मत्पिता देवत्वे नित्यप्रमोदे संमतः प्राप्त इत्यर्थः ॥ ४ ॥

गो० टी०—न सर्वसुलभं राजत्वमित्याह—राजानमिति । प्राहुः प्राकृता जना इति शेषः, स राजा मम देवत्वेन संमत इत्यर्थः ॥ ४ ॥

५–६ ] ति० टी०—उक्तमपि राजमरणं रामेण विषयान्तरोत्तरदानादश्रुतमिव मत्वा पुनस्तदेवाह—केकयस्थे इति । सतां मतः सद्भिः पूज्यमानः ॥ ५ ॥ ६ ॥

रा० टी०—ननु स्वाभाविकनित्यप्रमोदविशिष्टस्य तस्य किमिदमुच्यते इत्यत आह—केकयस्थ इति । मयि केकयस्थे केकयराजवेश्मस्थे सति त्वयि च अरण्यमाश्रिते सति यायजूकः अश्वमेधादियागकर्ता सतां मतः इष्टः धीमान् राजा स्वर्गमप्रकटसाकेतं गतः प्राप्तः ॥ ५ ॥

गो० टी०—एवं सन्निहितानीति प्रश्नस्योत्तरमुक्त्वा प्राथमिकराजविषयप्रश्नस्योत्तरमाह—केकयस्थ इति । यायजूक इज्याशीलः 'इज्याशीलो यायजूकः' इत्यमरः ॥ ५ ॥

रा० टी०—गमने हेतुं वदन्नाह—निष्क्रान्तेति । सहसीते सीतासहिते भवति निष्क्रान्ते सति दुःखशोकाभिभूतो राजा त्रिदिवं ब्रह्मादित्रयस्तुत्यमप्रकटसाकेतमभ्यगात् ॥ ६ ॥

गो० टी०—मन्निर्गमनानन्तरं कतिदिवसेषु राजा दिवं गत इत्यत्राह—निष्क्रान्तमात्र इति ॥ ६ ॥ ७ ॥

७ ] ति० टी०—कृतोदकाविति । कृतसपिण्डीकरणान्तसर्वकृत्यौ ॥ ७ ॥

रा० टी०—उत्तिष्ठेति । हे पुरुषव्याघ्र! पितुः लोकान्तरप्राप्तपित्रुद्देश्यकमुदकदानं क्रियताम् । अहं शत्रुघ्नश्च पूर्वमेव कृतोदकौ, एतेन आवाभ्यां न कर्तव्यमिति सूचितम् ॥ ७ ॥

८ ] ति० टी०—तर्हि किं कृतकरणेनेत्यत आह—प्रियेणेति । भवान्प्रियः ज्येष्ठत्वादिति भावः ॥ ८ ॥

रा० टी०—उदकक्रियाकरणे प्रयोजनमाह—प्रियेणेति । हे राघव! प्रियेण प्रीतिविशिष्टेन पुत्रेण दत्तमुदकादिकं पितृलोके पित्राद्यभिमानिदेवविशेषसंनिधौ अक्षयं विनाशरहितं भवति इति आहुः तत्त्वज्ञा इति शेषः । दानयोग्यत्वं प्रतिपादयति हि यतः भवान् पितुः प्रियः ॥ ८ ॥

गो० टी०—भवद्भ्यां दत्ते किं मयापि दातव्यमित्यत्राह—प्रियेणेति ॥ ८ ॥

९ ] ति० टी०—प्रकारान्तरेणापि प्रियत्वमेवोपपादयति—त्वामेवेति । तव शोकरुग्ण इत्यनेन त्वच्छोक एव तदवसादहेतुरिति दर्शितम् ॥ ९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

१ दिवमार्य इति गो. पाठः । २ खल्विति गो. पाठः । ३ अक्षय्यमिति गो. पाठः । ४ अस्तमित इति गो. पाठः ।

## द्व्युत्तरशततमः सर्गः ।

पितुः स्वर्गतिश्रवणात्संमूर्छितोऽतो भरतादिभिः सलिलसेकाद्युपचारैर्निराकृतमूर्छो रामो बहुधा पर्यदेवीन् । ततो भरतादिभिः कृतसमाश्वासः सीतामाश्वास्य गङ्गामुपेत्योदकं निवापं च निर्वर्त्योटजं प्राप । रुदतां तेषामाक्रोशमवधार्य सैनिकाः समीपमीयुः । रामस्तान् यथार्हं संमेने ।

तां श्रुत्वा करुणां वाचं पितुर्मरणसंहिताम् । राघवो भरतेनोक्तां बभूव गतचेतनः ॥ १ ॥
तं तु वज्रमिवोत्सृष्टमाहवे दानवारिणा । वाग्वज्रं भरतेनोक्तममनोज्ञं परंतपः ॥ २ ॥
प्रगृह्य रामो बाहू वै पुष्पिताङ्ग इव द्रुमः । वने परशुना कृत्तस्तथा भुवि पपात ह ॥ ३ ॥
तथा हि पतितं रामं जगत्यां जगतीपतिम् । कूलघातपरिश्रान्तं प्रसुप्तमिव कुञ्जरम् ॥ ४ ॥
भ्रातरस्ते महेष्वासं सर्वतः शोककर्शितम् । रुदन्तः सह वैदेह्या सिषिचुः सलिलेन वै ॥ ५ ॥
स तु संज्ञां पुनर्लब्ध्वा नेत्राभ्यामश्रुमुत्सृजन् । उपाक्रामत काकुत्स्थः कृपणं बहु भाषितुम् ॥ ६ ॥
स रामः स्वर्गतं श्रुत्वा पितरं पृथिवीपतिम् । उवाच भरतं वाक्यं धर्मात्मा धर्मसंहितम् ॥ ७ ॥
किं करिष्याम्ययोध्यायां ताते दिष्टां गतिं गते । कस्तां राजवराद्धीनामयोध्यां पालयिष्यति ॥ ८ ॥

रा० टी०—प्रियत्वमेवोपपादयन्नाह—त्वामिति । तव दर्शनेप्सुः त्वद्दर्शनविषयकेच्छावान् ते पिता त्वामेव स्मरन् त्वामेव शोचंश्च सन् त्वय्येव सक्तां बुद्धिमनिवर्त्य गतः ॥ ९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

गो० टी०—प्रियत्वमेव दर्शयति—त्वामेवेति । रुग्णः पीडित इति यावत् ॥ ९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोत्तरशततमः सर्गः ॥१०१॥

---

१ ] ति० टी०—करुणां शोकावहाम् ॥ १ ॥

रा० टी०—भरतवचनश्रवणानन्तरकालिकं रामवृत्तान्तमाह—तामित्यादिभिः । मरणसंहितामन्यागम्यलोकान्तरगमनकर्तृत्वेन मरणसदृशगमनसंयुक्तामत एव करुणां शोकप्रापिकां भरतेनोक्तां तां वाचं श्रुत्वा राघवो रामः गतचेतनः तिरोहितचैतन्यो बभूव ॥ १ ॥

गो० टी०—तामित्यादि । करुणां शोकावहां यद्वा अकरुणां करुणारहितां क्रूरामिति यावत् ॥ १ ॥

२ ] ति० टी०—तं भरतोक्तं वाग्वज्रं रण इन्द्रोत्सृष्टवज्रतुल्यं श्रुत्वा ॥ २ ॥

रा० टी०—तमिति । आहवे संग्रामे दानवारिणा इन्द्रेणोत्सृष्टं वज्रमिव भरतेनोक्तममनोज्ञं वाग्वज्रं श्रुत्वेति शेषः । बाहू प्रगृह्य शिरसि कृत्वा परशुना कृत्तः विदारितः पुष्पिताङ्गो द्रुमो यथा तथा भुवि पपात । श्लोकद्वयमेकान्वयि ॥२॥३॥

गो० टी०—तं त्वित्यादिश्लोकद्वयमेकं वाक्यम् । दानवारिणा इन्द्रेण बाहू प्रगृह्य पाणिना पाणिं निष्पीड्य उद्धृत्य वा वाग्वज्रमित्यस्य पूर्वश्लोकादनुषक्तेन श्रुत्वेत्यनेनान्वयः ॥२॥३॥

३–४ ] ति० ति०-बाहू प्रगृह्यातिशिथिलौ कृत्वोद्धृत्य वा निष्पीड्य वा भुवि पपात । भरतादिदर्शनेन हर्षात्पुष्पिताङ्गद्रुमसादृश्यम् ॥ ३ ॥ ४ ॥

५ ] ति० ति०—सिषिचुर्मोहशान्तये सर्वगात्राणि जलेन सिषिचुः ॥ ५ ॥

रा० टी०—तथेति । कूलघातेन कूलविदारणेन परिश्रान्तमत एव प्रसुप्तं कुञ्जरमिव महेष्वासं शोककर्शितमत एव जगत्यां पतितं रामं वैदेह्या सह रुदन्तो भ्रातरः सलिलेन मोहापमार्जकजलेन सिषिचुः । श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०—तथेत्यादिश्लोकद्वयम् । कूलघातेन मदेन दन्तकण्ड्वा च कृतेन कूलप्रहारेण परिश्रान्तम् अत एव प्रसुप्तं कुञ्जरमिव स्थितं मूर्च्छितमित्यर्थः, सलिलेन सर्वतः सिषिचुः सर्वगात्राणि मोहशान्तये सिक्तवन्तः यतः "अमृतं वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चन्ति" इति श्रुतिरपि हि वदति ॥ ४ ॥ ५ ॥

६–७] ति० टी०—कृपणं भाषितुम् लोकानुसारेण विलपितुमित्यर्थः ॥ ६ ॥ ७ ॥

रा० टी०—स इति । स जलेन सिक्तो रामः पुनः संज्ञां लब्ध्वा अस्रमश्रु उत्सृजन् सन् बहु अधिकं कृपणं भाषितुमुपाक्रामत ॥ ६ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । पितरं स्वर्गतमप्रकटसाकेतं प्राप्तं श्रुत्वा भरतमुवाच ॥ ७ ॥

गो० टी०—स त्विति । उपाक्रामत उपाक्रमत दीर्घ आर्षः ॥ ६ ॥ ७ ॥

८ ] ति०—टी०—दिष्टां गतिं दैवकल्पितां गतिं स्वसुकृतातिसृष्टां वा ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—किमिति । दिष्टामतिशा-

१ पुष्पिताग्रो यथेति गो. पाठः । २ आस्रमिति गो. अस्रमिति रा. पाठः ।

किं नु तस्य मया कार्यं दुर्जातेन महात्मनः । यो मृतो मम शोकेन [1]मे मया न च संस्कृतः ॥ ९ ॥
अहो भरत सिद्धार्थो येन राजा त्वयानघ । शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु सत्कृतः ॥ १० ॥
निष्प्रधानामनेकाग्रां नरेन्द्रेण विना कृताम् । निवृत्तवनवासोऽपि नायोध्यां गन्तुमुत्सहे ॥ ११ ॥
समाप्तवनवासं मामयोध्यायां परंतप । कोऽनुशासिष्यति पुनस्ताते [2]लोकान्तरे गते ॥ १२ ॥
पुरा प्रेक्ष्य सुवृत्तं मां पिता यान्याह सान्त्वयन् । वाक्यानि तानि श्रोष्यामि कुतः कर्णसुखान्यहम् ॥ १३ ॥
एवमुक्त्वाथ भरतं भार्यामभ्येत्य राघवः । उवाच शोकसंतप्तः पूर्णचन्द्रनिभाननाम् ॥ १४ ॥
सीते मृतस्ते श्वशुरः [3]पितृहीनोऽसि लक्ष्मण । भरतो दुःखमाचष्टे [4]स्वर्गतिं पृथिवीपतेः ॥ १५ ॥
ततो बहुगुणं तेषां [5]बाष्पं नेत्रेष्वजायत । तथा ब्रुवति काकुत्स्थे कुमाराणां यशस्विनाम् ॥ १६ ॥
ततस्ते भ्रातरः सर्वे भृशमाश्वास्य दुःखितम् । अब्रुवञ्जगतीभर्तुः क्रियतामुदकं पितुः ॥ १७ ॥
सा सीता [6]स्वर्गतं श्रुत्वा श्वशुरं तं महानृपम् । नेत्राभ्यामश्रुपूर्णाभ्यां [7]न शशाकेक्षितुं प्रियम् ॥ १८ ॥
सान्त्वयित्वा तु तां रामो [8]रुदतीं जनकात्मजाम् । उवाच लक्ष्मणं तत्र दुःखितो दुःखितं वचः ॥ १९ ॥

---

ग्यलभ्यां गतिं ताते गते सति अयोध्यायां किं करिष्यामि राजवराद्धीनां तामयोध्यां कः पालयिष्यति ॥ ८ ॥

गो० टी०—किमिति । दिष्टां कालकल्पितम् ‘कालो दिष्टोऽप्यनेहापि’ इत्यमरः । यद्वा दिष्टां दैवकल्पिताम् ‘दैवं दिष्टं भागधेयम्’ इत्यमरः । राजवरात् तृतीयार्थे पञ्चमी । पाठान्तरं किं करिष्यामीत्यस्य भावमुद्घाटयति—राजवरेति राजवराधीनां तद्रक्षणाधीनामित्यर्थः ॥ ८ ॥

९ ] ति० टी०—दुर्जातेन वृथाजन्मना ॥ ९ ॥

रा० टी०—किमिति । दुर्जातेन दुःखेन पितृकर्तृकातियागादिना जातं जनिर्यस्य तेन मया महात्मनस्तस्य पितुः किं कार्यम् । यः पिता मम शोकेन अमृतः लोकान्तरगमनकर्तृत्वेन मृतसदृशः सः मया न संस्कृतः यात्राकाले मत्कर्तृकसंस्कारं न प्राप्तः ॥ ९ ॥

गो० टी०—पितृमरणहेतुभूतत्वात्तत्संस्कारानुपयोगाच्चात्मानं विगर्हते—किं नु तस्येति ॥ ९ ॥

१० ] ति० टी०—सत्कृतः संस्कारकर्मणा पूजितः ॥१०॥

रा० टी०—अहो इति । शत्रुघ्नेन सहितेन येन त्वया सर्वेषु प्रेतकृत्येषु प्रेतेषु लोकान्तरं गतेषु यानि कृत्यानि पुत्रैः कर्तव्यानि तेषु राजा संस्कृतः स त्वं धन्योऽसि ॥ १० ॥

गो० टी०—अहो इति । अनघ पुत्रमन्त्ये तु कर्मणीत्युक्तपितृसंस्काररूपभाग्यविघटकपापरहित ! अहं हि तादृशपापवानिति भावः । येन कारणेन त्वया शत्रुघ्नेन च सर्वेषु प्रेतकृत्येषु प्राप्तेषु राजा सत्कृतः ॥ १० ॥

११ ] ति० टी०—निष्प्रधानां प्रधानहीनामत एवानेकाग्रां बहुनायकाम् । अत्रोभयत्र हेतुः नरेन्द्रेण विना कृतामिति ॥ ११ ॥

रा० टी०—निरिति । नरेन्द्रेण विनाकृतामत एव निष्प्रधानां प्रधानरहितामत एव अनेकाग्रां स्वास्थ्यरहितामयोध्यां गन्तुं निवृत्तवनवासोऽपि नोत्सहे ॥ ११ ॥

गो० टी०—निष्प्रधानामिति । एकाग्रा अनाकुला ‘अनाकुलेऽपि चैकाग्रः’ इत्यमरः । सा न भवतीत्यनेकाग्रा तामाकुलामिति यावत् ॥ ११ ॥

१२ ] ति० टी०—अनुशासिष्यति हिताहितविषयप्रवृत्तिनिवृत्ती कारयिष्यति ॥ १२ ॥

रा० टी०—समाप्तेति । ताते लोकान्तरं गते सति समाप्तवनवासं मामयोध्यायां कः अनुशासिष्यति ॥ १२ ॥

गो० टी०—समाप्तवनवासमिति । शासिष्यति कार्येषु नियोक्ष्यतीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—सुवृत्तं शोभननियोगाचरणम् । कुतः पुरुषात् ॥ १३ ॥

रा० टी०—पुरेति । सुवृत्तं शोभनवृत्तिमन्तं मां प्रेक्ष्य सान्त्वयन् शान्तिं शिक्षयन् सन् कर्णसुखानि यानि वाक्यानि पिता आह तानि पुनः कुतः कस्मात् श्रोष्यामि ॥ १३ ॥

गो० टी०—पुरेति । सुवृत्तं शोभनं नियोगाचरणरूपं वृत्तं यस्य तं कुतः कस्मात्पुरुषात् ॥ १३ ॥

१४ ] ति० टी०—अभ्येत्याभिमुखो भूत्वा ॥ १४ ॥

रा० टी०—एवमिति । भरत एवमुक्त्वा भार्यामभ्येत्य अभिमुखो भूत्वा शोकसंतप्तो राघवो रामः उवाच ॥ १४ ॥

गो० टी०—एवमिति । अभ्येत्य अभिमुखो भूत्वा । सीत इति । दुःखमित्येतत् क्रियाविशेषणम् इत्युवाचेति पूर्वेणान्वयः ॥ १४–१६ ॥

१५–१६ ] ति० टी०—स्वर्गतिरूपं दुःखम् ॥ १५ ॥ १६॥

रा० टी०—तद्वचनाकारमाह—सीते इति । हे सीते ! ते श्वशुरः अमृतो लोकान्तरगमनकर्तृत्वेन मृतसदृशः हे लक्ष्मण ! त्वं पितृहीनोऽसि । तज्ज्ञापकहेतुमाह पृथिवीपतेः स्वर्गतिं भरतः दुःखं यथा भवति तथा आचष्टे कथयति ॥ १५ ॥

रा० टी०—तत इति । काकुत्स्थे रामे तथा ब्रुवति सति कुमाराणामेषां लक्ष्मणादीनां नेत्रेषु बहुगुणमत्यधिकं बाष्पमश्रु अजायत ॥ १६ ॥

१७–१९ ] ति० टी०—क्रियतामित्यब्रुवन् ॥ १७–१९ ॥

---

१ मया चापि नेति गो. पाठः । २ लोकान्तरमिति गो. रा. पाठः । ३ पित्रेति गो. पाठः । ४ स्वर्गतं पृथिवीपतिमिति गो. पाठः । ५ बाष्प इति गो. पाठः । ६ श्वशुरं श्रुत्वा स्वर्गलोकगतमिति गो. रा पाठः । ७ अशक्नोत्सैवं पीतीमिति गो. पाठः । ८ रुदन्तीमिति गो. पाठः ।

आनयेङ्गुदिपिण्याकं चीरमाहर चोत्तरम् । जलक्रियार्थं तातस्य गमिष्यामि महात्मनः ॥ २० ॥
सीता पुरस्ताद्व्रजतु त्वमेनामभितो व्रज । अहं पश्चाद्गमिष्यामि गतिर्ह्येषा सुदारुणा ॥ २१ ॥
ततो नित्यानुगस्तेषां विदितात्मा महामतिः । मृदुर्दान्तश्च[१] कान्तश्च रामे च दृढभक्तिमान् ॥ २२ ॥
सुमन्त्रस्तैर्नृपसुतैः सार्धमाश्वास्य राघवम् । अवतारयदालम्ब्य नदीं मन्दाकिनीं शिवाम् ॥ २३ ॥
ते सुतीर्थां ततः कृच्छ्रादुपगम्य यशस्विनः । नदीं मन्दाकिनीं रम्यां सदा पुष्पितकाननाम् ॥ २४ ॥
शीघ्रस्रोतसमासाद्य तीर्थं शिवमकर्दमम् । सिषिचुस्तूदकं राज्ञे तत[२] एतद्भवत्विति ॥ २५ ॥

रा० टी०–तत इति । ततः रामोक्तिश्रवणानन्तरं सर्वे भ्रातरः भृशमत्यन्तं राघवं राममाश्वास्य पितुः उदकमुदकक्रिया क्रियतामित्यब्रुवन् ॥ १७ ॥

रा० टी०–सेति । नृपं श्वशुरं स्वर्गलोकगतं स्वः स्वर्गे गीयते स्तूयते इति स्वर्गः स एव लोको प्रकटस्थानकेतस्तं गतं प्राप्तं श्रुत्वा अश्रुपूर्णाभ्यां नेत्राभ्यां प्रियं पतिम् ईक्षितुं द्रष्टुं न शशाक ॥ १८ ॥

रा० टी०–सान्त्वयित्वेति । रुदतीं तां जनकात्मजां सान्त्वयित्वा दुःखितो रामः दुःखितं वचः लक्ष्मणमुवाच । दुःखितमिति लक्ष्मणविशेषणं वा ॥ १९ ॥

गो० टी०–तत इति । क्रियतामित्यत्रेतिकरणं द्रष्टव्यम् ॥ १७–१९ ॥

२० ] ति० टी०–इङ्गुदिपिण्याकं तपस्विभोज्यतापसतरुफलपिण्याकम् अनिःसारिततैलं पिष्ट्वा चूर्णीकृतमिङ्गुदीबीजमत्र पिण्याकत्वेनोपचर्यते निःसारितसारस्य तस्य निषिद्धत्वात् । उत्तरमुत्तमं नवीनं चीरम् ॥ २० ॥

रा० टी०–तद्वचनाकारमाह–आनयेति । इङ्गुदिपिण्याकं तापसोपभोग्येङ्गुदिफलसारांशमुत्तरं चीरं च आनय महात्मनस्तातस्य जलक्रियार्थं गमिष्यामि ॥ २० ॥

गो० टी०–आनयेति । इङ्गुदिपिण्याकं तपस्विभोज्यं तापसतरुबीजपिण्याकम् अनिःसारिततैलं पिष्ट्वा चूर्णीकृत्य पिण्डीकृतमिङ्गुदीबीजमेव पिण्याकत्वेनोपचर्यते 'इङ्गुदी तापसतरुः' इत्यमरः । चीरं वास उदकदानार्थम् । पाठभेदः चीरं स्नानार्थं परिधानम् उत्तरम् उत्तरीयं च ॥ २० ॥

२१ ] ति० टी०–अभितः पश्चात् । एषा गतिः सुदारुणा शोकादिकालिकी । तदुक्तम्–'सर्वे कनिष्ठप्रथमा इतरे तु स्त्रियोऽग्रतः' इत्याशौचस्नानप्रकरणे ॥ २१ ॥

रा० टी०–गमनप्रकारं बोधयन्नाह–सीतेति । पुरस्तात् अग्रे सीता व्रजतु एनां सीतामभितः समीपतः पश्चादित्यर्थः, त्वं व्रज पश्चादहं गमिष्यामि हि यतः एषा गतिर्गमनं सुदारुणा शोकहेतुत्वेन क्रूरा । तथा च सूत्रम् 'सर्वे कनिष्ठप्रथमाऽनुपूर्वा इतरे तु स्त्रियोऽग्रतः' इति ॥ २१ ॥

गो० टी०–सीतेति । अभितः पश्चात् "अभितः परितः–" इत्यादिना एनामिति द्वितीया सुदारुणा सुतरां दुःसहा गतिः दुःखिनां गतिः एषा हि स्नानार्थं स्त्रीबालपुरःसरा खल्वित्यर्थः । तथा च सूत्रम् 'सर्वे कनिष्ठप्रथमा अनुपूर्वं इतरे स्त्रियोऽग्रे' इति ॥ २१ ॥

२२ ] ति० टी०–नित्यानुगः कुलक्रमादागतानुचरः । विदितात्मा ज्ञातात्मस्वरूपः । तेषां कुमाराणाम् ॥ २२ ॥

२३ ] ति० टी०–अवतारयदवातारयत् ॥ २३ ॥

रा० टी०–तत इति । ततः रामोक्तिश्रवणानन्तरं तेषां इक्ष्वाकूणां नित्यानुगः नित्यानुचरः विदितात्मा विदितः प्रख्यातः आत्मा स्वरूपं यस्य सः मृदुः सरलस्वभावः दान्तः नियमितोभयकरणः कान्तस्तेजस्वी रामे दृढभक्तिमांश्च सुमन्त्रः नृपसुतैर्भरतादिभिः सह राघवं रामम् आश्वास्य आलम्ब्य रामबाहुं गृहीत्वेत्यर्थः, शिवां नित्यकल्याणस्वरूपां मन्दाकिनीमुद्दिश्य अवतारयत् अवातारयत् । श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

गो० टी०–तत इति । नित्यानुगः कुलक्रमानुगतानुचरः विदितात्मा ज्ञातात्मस्वरूपः ॥ २२ ॥ २३ ॥

२४ ] ति० टी०–ते सीतादयः ॥ २४ ॥

२५ ] ति० टी०–अकर्दमं तीर्थमवतारमार्गम् । तत एतद्भवत्वित्युच्चार्य सिषिचुर्ददुः । ततेत्येतत्पितुर्नामगोत्ररूपोपलक्षणं बोध्यम् । संबोधने प्लुतकरणादसंधिः । केचित्तु–ततेत्युक्तौ नामाद्युच्चारणस्य न प्रयोजनमस्मादेवाचारादित्याहुः ॥ २५ ॥

रा० टी०–ते इति । सुतीर्थां शोभनस्नानमार्गविशिष्टां शीघ्रस्रोतसं शीघ्रप्रवाहवतीं मन्दाकिनीं नदीं यशस्विनस्ते सीताप्रभृतयः कृच्छ्रादुपगम्य प्राप्य तत्र अकर्दमं कर्दमरहितं शिवं कल्याणप्रदं तीर्थम् ऋषिभिः सेवितम् उदकमासाद्य गृहीत्वेत्यर्थः, तत हे तात! एतज्जलं भवतु त्वत्सन्निधौ तिष्ठतु इति वचनेन सिषिचुः । ततेति नामगोत्रयोरप्युपलक्षणमिति न न्यूनता । श्लोकद्वयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०–ते इति । ते सीतालक्ष्मणरामाः स्त्रियोऽपि उदकं दिशन्तीति शास्त्रसिद्धम् । शीघ्रस्रोतसं नदीमुपागम्य अकर्दमं तीर्थम् अवतारप्रदेशमासाद्य तत हे तात! ते तुभ्यमेतद्भवत्वित्युच्चार्य उदकं सिषिचुः ददुरित्यर्थः । स्नानमर्थात्सिद्धं सीतायाः स्नानमात्रेऽन्वयो वा । कृच्छ्रादित्यनेन तेषां दुःखातिशयात् स्खलितगमनमुच्यते, सुतीर्थामित्यनेन पुण्यतीर्थत्वमु-

१ शान्तश्चेति गो. पाठः । २ तत्रैतत्ते भवत्वितीति गो. पाठः ।

प्रगृह्य तु महीपालो जलापूरितमञ्जलिम् । दिशं याम्यामभिमुखो रुदन्वचनमब्रवीत् ॥ २६ ॥
एतत्ते राजशार्दूल विमलं तोयमक्षयम् । पितृलोकगतस्याद्य मद्दत्तमुपतिष्ठतु ॥ २७ ॥
ततो मन्दाकिनीतीरं प्रत्युत्तीर्य स राघवः । पितुश्चकार तेजस्वी निर्वापं भ्रातृभिः सह ॥ २८ ॥
ऐङ्गुदं बदरैर्मिश्रं पिण्याकं दर्भसंस्तरे । न्यस्य रामः सुदुःखार्तो रुदन्वचनमब्रवीत् ॥ २९ ॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम् । यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ ३० ॥
ततस्तेनैव मार्गेण प्रत्युत्तीर्य सरित्तटात् । आरुरोह नरव्याघ्रो रम्यसानुं महीधरम् ॥ ३१ ॥
ततः पर्णकुटीद्वारमासाद्य जगतीपतिः । परिजग्राह पाणिभ्यामुभौ भरतलक्ष्मणौ ॥ ३२ ॥
तेषां तु रुदतां शब्दात्प्रतिशब्दोऽभवद्गिरौ । भ्रातॄणां सह वैदेह्या सिंहानां नर्दतामिव ॥ ३३ ॥

---

क्रमम्, उपगम्येत्यनेन नदीतीरेऽपि कंचित्कालं रोदनाचार उक्तः, यशस्विन इत्यनेन शासनातिक्रम उक्तः, रम्यामित्यनेन दुःखशान्तिहेतुत्वसूचकं, पुष्पितकाननामित्यनेन उदकदानसमाप्तिपर्यन्तमनातपत्वसूचकं, शीघ्रस्रोतसमित्यनेन स्नानकाले स्रोतोऽभिमुखत्वसूचकं, शिवं शुद्धम् अकर्दमं तीर्थमासाद्येत्यनेन तीरे सेचनसूचकम् ॥ २५ ॥ २६ ॥

२६–२७ ] ति० टी०—एतदेव विवृणोति—प्रगृह्येति । याम्यां दक्षिणाम् । यत्त्वाधुनिकनिबन्धेषु सुमन्तुनाम्ना लिखितं वचनं क्षत्रियाणामुदङ्मुखजलदानबोधकं तन्निर्मूलम् एतदाचारविरोधात् निकृष्टक्षत्रियपरं वा । रुदन्नित्यनेन पित्रादिविषये रोदने न निषेध इति सूचितम् ॥ २६ ॥ २७ ॥

रा० टी०—प्रगृह्येति । महीपालो रामोऽब्रवीत् ॥ २६ ॥

गो० टी०—दानप्रकारमाह—प्रगृह्येत्यादिना ॥ २६ ॥

रा० टी०—तदाकारमाह—एतदिति । अक्षयं ध्वंसाप्रतियोगि एतत् मद्दत्तं ते तव उपतिष्ठतु ॥ २७ ॥

गो० टी०—दानमन्त्रमाह—एतदित्यादिना ॥ २७ ॥

२८ ] ति० टी०—प्रत्युत्तीर्य तीरमागत्य निर्वापं चकार पिण्डं ददौ । न च यदाकदाचित्पितुर्मरणश्रवणे पुत्रस्य दशाहाशौचतायाः स्मृतिपृक्तत्वेन कथं कृतक्रियस्य पितुः प्रथमदिन एव पिण्डदानमिति वाच्यम् तस्याः स्मृतेः क्षत्रियेतरविषयत्वात्कलिविषयत्वाद्वा न दोषः ॥ २८ ॥

रा० टी०—तत इति । ततः जलप्रदानानन्तरं भ्रातृभिः सह राघवो रामः मन्दाकिनीतीरं प्रत्युत्तीर्य समागत्य पितुर्निर्वापं पिण्डदानं चकार । न च पितृमरणश्रवणे दशाहाशौचस्य स्मृतिषु नियमितत्वात् श्रवणदिने एव पिण्डप्रदानादिकमनुचितमिति वाच्यम्, अशौचस्य शरीरदाहविषयत्वेनादोषात् । एवमधिकारिनिरूपणमपि विगतदेहविषयकमिति न भरतकर्तृकपिण्डदानस्यानुपपत्तिः । राज्ञो यथा सशरीरगमनं तथाऽवोचाम । 'मन्दाकिनीतीरात्' इति भूषणपाठः तत्र तीरात् जलप्रदानदेशादित्यर्थः ॥ २८ ॥

गो० टी०—तत इति । भ्रातृभिः सह मन्दाकिनीतीरात् प्रत्युत्तीर्य पितुर्निर्वापं पिण्डप्रदानं चकार मन्दाकिनीतीरात्समुत्तीर्येत्युदकदानदेशात् किंचित्प्रदेशान्तरगमनवचनात् सपिण्डीकरणमेव कृतमित्यवगम्यते दशाहात्यये उदकदानं विना पिण्डदानस्याचोदितत्वात् उदकसेचनवत् कनिष्ठेन लक्ष्मणेन पिण्डदानानुक्तेश्च ॥ २८–३२ ॥

२९ ] ति० टी०—ऐङ्गुदमिङ्गुदीबीजसंबन्धि । बदरैर्बदरफलैः २९

रा० टी०—तत्प्रकारमाह—ऐङ्गुदमिति । बदरैः बदरफलपिष्टैः मिश्रम् ऐङ्गुदम् इङ्गुदीफलसंबन्धि पिण्याकं पिष्टं दर्भसँस्तरे कुशास्तरणे न्यस्य रामः अब्रवीत् ॥ २९ ॥

३० ] ति० टी०—ननु राज्ञे कथं पिण्याकपिण्डदानं तत्राह—यदशना इति । यदशना इत्यस्य तदशना अस्मत्पितर इति शेषः। तत्र सामान्येनार्थान्तरन्यासमाह—यदन्न इति ॥ ३० ॥

रा० टी०—तद्वचनाकारमाह—इदमिति । हे महाराज ! यतो वयं यदशनाः यत् पिण्याकमेव अशनं येषामतः तत् इदं पिण्याकं भुङ्क्ष्व । ननु महाराजाय मह्यं कथमिदं ददासीत्यत आह—पुरुषः यदन्नः यद्भक्ष्यको भवति तस्य देवता अपि तदन्नाः भवन्ति । अक्षराधिक्यं छन्दसां वैलक्षण्यद्योतनाय ॥ ३० ॥

३१–३२ ] ति० टी०—प्रत्युत्तीर्य परावृत्य ॥ ३१॥३२ ॥

रा० टी०—तत इति । ततः पिण्डदानानन्तरं तेन आगमनसाधकेनैव मार्गेण सरित्तटात् प्रत्युत्तीर्य रम्यसानुं मनोहरशिखरवन्तं महीधरं चित्रकूटमारुरोह ॥ ३१ ॥

रा० टी०—तत इति । ततः आरोहणानन्तरं पर्णकुटीद्वारमासाद्य प्राप्य पाणिभ्यामुभौ भरतलक्ष्मणौ परिजग्राह ग्रहणपूर्वकं रोदनं चकार शत्रुघ्नस्य भरतेऽन्तर्भावान्न पृथगुक्तिः ॥ ३२ ॥

३३ ] ति० टी०—प्रतिशब्दः प्रतिध्वनिः । 'प्रतिश्रुत्वा' इति पाठेऽप्ययमेवार्थः ॥ ३३ ॥

रा० टी०—तेषामिति । नर्दतां सिंहानामिव वैदेह्या सह रुदतां भ्रातॄणां प्रतिशब्दः प्रतिध्वनिः गिरौ अभवत् ॥ ३३ ॥

गो० टी०—तेषामिति । प्रतिश्रुत्कः प्रतिध्वनिः ॥ ३३ ॥

---

१ चेति गो. पाठः । २ जलपूरितमिति गो. पाठः । ३ तीरादिति गो. पाठः । ४ बदरामिश्रमिति गो. पाठः । ५ नदीति गो. पाठः । ६ बाहुभ्यामिति गो. पाठः । ७ श्रुत्क इति गो. पाठः ।

महाबलानां रुदतां कुर्वतामुदकं पितुः । विज्ञाय तुमुलं शब्दं त्रस्ता भरतसैनिकाः ॥ ३४ ॥
अब्रुवंश्चापि रामेण भरतः संगतो ध्रुवम् । तेषामेव महाञ्शब्दः शोचतां पितरं मृतम् ॥ ३५ ॥
अथ वाहान्परित्यज्य तं सर्वेऽभिमुखाः स्वनम् । अप्येकमनसो जग्मुर्यथास्थानं प्रधाविताः ॥ ३६ ॥
हयैरन्ये गजैरन्ये रथैरन्ये स्वलंकृतैः । सुकुमारास्तथैवान्ये पद्भिरेव नरा ययुः ॥ ३७ ॥
अचिरप्रोषितं रामं चिरविप्रोषितं यथा । द्रष्टुकामो जनः सर्वो जगाम सहसाश्रमम् ॥ ३८ ॥
भ्रातॄणां त्वरितास्ते तु द्रष्टुकामाः समागमम् । ययुर्बहुविधैर्यानैः खुरनेमिसमाकुलैः ॥ ३९ ॥
सा भूमिर्बहुभिर्यानै रथनेमिसमाहता । मुमोच तुमुलं शब्दं द्यौरिवाभ्रसमागमे ॥ ४० ॥
तेन वित्रासिता नागाः करेणुपरिवारिताः । आवासयन्तो गन्धेन जग्मुरन्यद्वनं ततः ॥ ४१ ॥
वराहमृगसिंहाश्च महिषाः सृमरास्तथा । व्याघ्रगोकर्णगवया वित्रेसुः पृषतैः सह ॥ ४२ ॥

---

३४] ति० टी०—त्रस्ताः का विपत्प्रादुरभूदिति भीताः॥ ३४॥

३५ ] ति० टी०—ततो निश्चित्याब्रुवन्निति ॥ ३५ ॥

रा० टी०—महाबलानामिति । पितुः उदकं कुर्वतां रुदतां महाबलानां तुमुलं शब्दं विज्ञाय त्रस्ताः भरतसैनिकाः भरतः रामेण ध्रुवं संगतः संमिलितः मृतं मृतसदृशं पितरं शोचतां तेषां रामादीनामेव महान् शब्द इत्यब्रुवन्। श्लोकद्वयमेकान्वयि ॥ ३४ ॥ ३५ ॥

गो० टी०—महाबलानामित्यादि । श्लोकद्वयमेकं वाक्यम् । त्रस्ताः किं भविष्यतीति धिया उद्विग्नाः, उद्वेगानन्तरं निश्चित्य वदन्ति स्मेत्याह—अब्रुवन्नित्यादिना । मृतं पितरमुद्दिश्येति शेषः ॥ ३४ ॥ ३५ ॥

३६] ति० टी०—स्वनमभिमुखाः स्वनोत्पत्तिदेशमभिमुखाः यथास्थानं यथोचितं प्रधावितास्त्वरिता गच्छन्ति स्म ॥ ३६ ॥

रा० टी०—अथेति । अथ प्रतिध्वनिश्रवणानन्तरमेकमनसः समानहृदयाः सर्वे सैनिकाः वाहान् परित्यज्य स्वनं प्रतिध्वनिमभिमुखाः सन्तः यथास्थानं यथोचितं प्रधाविताः सन्तः जग्मुः ॥ ३६ ॥

गो० टी०—अथेति । स्वनमभिमुखाः स्वनोत्पत्तिदिगभिमुखा इत्यर्थः। यथास्थानं शब्दोत्पत्तिप्रदेशमनतिक्रम्य प्रधाविताः शीघ्रगतियुक्ताः ॥ ३६ ॥

३७ ] ति० टी०—कैस्तत्राह—हयैरित्यादि । सुकुमारा इति पूर्वान्वयि । अन्ये तेभ्यो भिन्नाः ॥ ३७ ॥

रा० टी०—हयैरिति । अन्ये सुकुमाराः हयादिभिर्ययुः अन्ये पद्भिरेव ययुः॥ ३७ ॥

गो० टी०—हयैरिति । सुकुमारा इति हयैरित्यादिभिरुक्तानां त्रयाणां विशेषणं सुकुमारत्वाभावे दुःखितं रामं प्रति पद्भ्यामेव गन्तव्यत्वात् ॥ ३७ ॥ ३८ ॥

३८ ] ति० टी०—आश्रममिति पदम् ॥ ३८ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अचिरेति। अचिरप्रोषितमल्पकालकप्रवासविशिष्टं रामं चिरविप्रोषितमिव द्रष्टुकामः सर्वो जनः जगाम ॥ ३८ ॥

३९ ] ति० टी०—खुरसमाकुलयानाः पश्वादयः, नेमिसमाकुलानि रथशकटादीनि ॥ ३९ ॥

रा० टी०—सयानगमनकर्तॄणां वृत्तमाह—भ्रातॄणामिति । भ्रातॄणां रामादीनां समागमं परस्परं संमेलनं द्रष्टुकामास्ते बहवो भरतसैनिकाः खुरनेमिसमाकुलैः खुरसमाकुलाः अश्वादयः नेमिसमाकुलाः रथादयः तैर्विविधैर्यानैः त्वरिताः सन्तो ययुः ३९

गो० टी०—भ्रातॄणामिति । एषां यानैर्गमनं दर्शनत्वरया ययुर्बहुविधैर्यानैः'खुरनेमिसमाहता' इति पाठः। 'ययुर्बहुविधैर्युक्तैः' इति पाठे युक्तैः सज्जैः यानैरिति शेषः ॥ ३९ ॥ ४० ॥

४० ] ति० टी०—समाहता अभिहता आक्रान्तेति यावत् ॥ ४० ॥

रा० टी०—सेति । बहुभिर्यानैरुपलक्षिता अत एव खुरनेमिसमाहता सा भरतसेनाधिष्ठिता भूमिः अत्र समागमे द्यौरिव तुमुलं शब्दं मुमोच चकार ॥ ४० ॥

४१ ] ति० टी०—तेन शब्देन, गन्धेनावासयन्तो मदगन्धेन दिङ्मुखानि सुरभीकुर्वन्तः ॥ ४१ ॥

रा० टी०—तेनेति । तेन तुमुलशब्देन वित्रासिताः करेणुभिः हस्तिनीभिः परिवारिता युक्ताः नागाः गजाः गन्धेन स्वच्युतमदजनितामोदेन आवासयन्तः सन्तः ततस्तस्माद्वनादन्यद्वनं जग्मुः ॥ ४१ ॥

गो० टी०—तेनेति । आवासयन्तः मदगन्धेनावासयन्तः एतेन वनगजानामपि रामदर्शनहर्षो द्योत्यते ॥ ४१ ॥

४२ ] ति० टी०—गोकर्णसृमरौ मृगविशेषौ ॥ ४२ ॥

रा० टी०—वराहेति । वराहादयः वित्रेसुः तत्र सृमरगोकर्णौ मृगविशेषौ ॥ ४२ ॥

गो० टी०—वराहेति । गोकर्णः गोरिव कर्णौ यस्य स गोकर्णः महापृषतविशेषः ॥ ४२ ॥

---

१ वासयन्निति गो. पाठः । २ तत्रेति गो. पाठः । ३ खुरेति गो. पाठः । ४ वृक संघाश्चेति गो. पाठः । ५ सर्पवानरा इति गो. पाठः ।

रथाङ्गहंसानत्यूहाः प्लवाः कारण्डवाः परे । तथा पुंस्कोकिलाः क्रौञ्चा विसंज्ञा भेजिरे दिशः ४३ ॥
तेन शब्देन वित्रस्तैराकाशं पक्षिभिर्वृतम् । मनुष्यैरावृता भूमिरुभयं प्रबभौ तदा ॥ ४४ ॥
ततस्तं पुरुषव्याघ्रं यशस्विनमकल्मषम् । आसीनं स्थण्डिले रामं ददर्श सहसा जनः ॥ ४५ ॥
विगर्हमाणः कैकेयीं मन्थरासहितामपि । अभिगम्य जनो रामं बाष्पपूर्णमुखोऽभवत् ॥ ४६ ॥
तान्नरान्बाष्पपूर्णाक्षान्समीक्ष्याथ सुदुःखितान् । पर्यष्वजत धर्मज्ञः पितृवन्मातृवच्च सः ॥ ४७ ॥
स तत्र कांश्चित्परिषस्वजे नरान्नराश्च केचित्तु तमभ्यवादयन् ।
चकार सर्वान्सवयस्यबान्धवान्यथार्हमासाद्य तदा नृपात्मजः ॥ ४८ ॥
ततः स तेषां रुदतां महात्मनां भुवं च खं चानुविनादयन्स्वनः ।
गुहागिरीणां च दिशश्च संततं मृदङ्गघोषप्रतिमो विशुश्रुवे ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

---

## चतुरुत्तरशततमः सर्गः ।

कौसल्यादियुतो वसिष्ठो रामाश्रमं प्रतस्थे । मध्येमार्गमनुगङ्गातीरं दक्षिणाग्रदर्भेषु दशरथाय रामन्यस्तमिङ्गुदिपिण्याकं सपत्नीभ्यः प्रदर्श्य कौसल्या राजानं परिशोचति । आश्रमगताः कौसल्याद्यो रामं ददृशुः । रामलक्ष्मणौ तत्पादावभ्यवादयताम् । स्वपादाभिवादिनीं सीतां कौसल्या परिशोचति । वसिष्ठचरणावभिवाद्य रामः समुपाविशत् । मन्त्रियुतो भरतोऽपि तत्समीप उपाविशत ।

वसिष्ठः पुरतः कृत्वा दारान्दशरथस्य च । अभिचक्राम तं देशं रामदर्शनतर्षितः ॥ १ ॥

---

४३-४६ ] ति० टी०—रथाङ्गश्चक्रवाकः, नत्यूहो जलकुक्कुटः, प्लवा बकविशेषाः ॥ ४३-४६ ॥

रा० टी०—रथाङ्गेति । रथाङ्गः चक्रवाकः, नत्यूहः जलकुक्कुटः, प्लवाः स्थूलबकविशेषाः ॥ ४३ ॥

रा० टी०—तेनेति । तेन शब्देन वित्रस्तैस्त्रासविशिष्टैः पक्षिभिः आकाशं वृतं मनुष्यैर्भूमिरावृता इति हेतोः उभयं प्रबभौ ॥ ४४ ॥

रा० टी०—तत इति । अकल्मषं कल्मषनिवर्तकं स्थण्डिले आसीनं रामं जनः ददर्श ॥ ४५ ॥

गो० टी०—रथाङ्गेति । नत्यूहाः जलरङ्कवः 'नत्यूहो जलरङ्कुः स्यात्' इति हलायुधः । प्लवाः स्थूलबकविशेषाः ॥४३-४५॥

रा० टी०—विगर्हमाण इति । मन्थरासहितां कैकेयीं विगर्हमाणः जनः राममभिगम्य रामसंमुखं प्राप्य बाष्पपूर्णमुखोऽभवत् । अत्र विगर्हणं थिक्सी नष्ट इत्यादाविव विशेषणांशे पर्यवसन्नमत एवोत्तरत्र रामालिङ्गनं संगच्छते ॥ ४६ ॥

गो० टी०—विगर्हमाण इति । सहितः अन्योन्य संगतः ॥ ४६ ॥ ४७ ॥

४७] ति०टी०—पर्यष्वजत परिष्वक्तयोग्यानिति शेषः ॥४७॥

रा० टी०—तानिति । तानागतान् सुदुःखितान् नरान् समीक्ष्य धर्मज्ञो रामः पर्यष्वजत ॥ ४७ ॥

४८ ] ति० टी०—तदेवाह—स तत्रेति ॥ ४८ ॥

रा० टी०—स इति । स रामः तत्र तस्मिन् समये कांश्चिन्नरान् परिषस्वजे केचिन्नरास्तु तं राममभ्यवादयन् तदा तस्मिन् समये नृपात्मजो रामः सर्वान् समासाद्य प्राप्य यथार्हं यथोचितसत्कारं चकार ॥ ४८ ॥

गो० टी०—स इति । चकार संमानमिति शेषः॥४८॥४९॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

४९ ] ति० टी०—अनुविनादयन्प्रतिध्वनयन् ॥ ४९ ॥

अत्र कतकरीत्या श्लोकद्वयं गतम् ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

रा० टी०—तत इति । तेषां समागतानां रुदतां महात्मनामयोध्यावासिनां स्वनः भ्वादिकमनुविनादयन् सन् मृदङ्गघोषप्रतिमः मृदङ्गघोषसदृशः विशुश्रुवे श्रवणविषयीभूतो बभूव ॥ ४९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्व्यधिकशततमः सर्गः ॥१०२॥

१ ] ति० टी०—दशरथस्य दारानित्यन्वयः । तर्षितः साभिलाषः ॥ १ ॥

रा० टी०—राममातृणां वृत्तान्तं वर्णयन्नाह—वसिष्ठ इ-

---

१ रथाङ्गसाह्वा नत्यूहा हंसाः कारण्डवाः प्लवा इति गो. पाठः । २ अरिंदममिति गो. पाठः । ३ सहितो मन्थरयापीति गो. पाठः । ४ स तत्रेति गो. पाठः । ५ निनादयन्निति गो. पाठः । ६ प्रशुश्रुवे इति गो. पाठः । ७ कर्षित इति रा. पाठः ।

राजपत्न्यश्च गच्छन्त्यो मन्दं मन्दाकिनीं प्रति । ददृशुस्तत्र तत्तीर्थं रामलक्ष्मणसेवितम् ॥ २ ॥
कौसल्या बाष्पपूर्णेन मुखेन परिशुष्यता । सुमित्रामब्रवीद्दीनां याश्चान्या राजयोषितः ॥ ३ ॥
इदं तेषामनाथानां क्लिष्टमक्लिष्टकर्मणाम् । वने प्राक्कलनं तीर्थं ये ते निर्विषयीकृताः ॥ ४ ॥
इतः सुमित्रे पुत्रस्ते सदा जलमतन्द्रितः । स्वयं हरति सौमित्रिर्मम पुत्रस्य कारणात् ॥ ५ ॥
जघन्यमपि ते पुत्रः कृतवान्न तु गर्हितः । भ्रातुर्यदर्थरहितं सर्वं तद्गर्हितं गुणैः ॥ ६ ॥
अद्यायमपि ते पुत्रः क्लेशानामतथोचितः । नीचानर्थसमाचारं सज्जं कर्म प्रमुञ्चतु ॥ ७ ॥

---

त्यादिभिः । रामदर्शनतर्षितः वसिष्ठः दशरथस्य दारान् पुरतः अग्रे कृत्वा तं रामाधिष्ठितं देशमभिचक्राम ययौ ॥ १ ॥

गो० टी०—अथ मातृसमागमस्त्र्युत्तरशततमे—वसिष्ठ इति। रामदर्शनतर्षितः रामदर्शने संजाताभिलाषः 'कामोऽभिलाषस्तर्षः' इत्यमरः ॥ १–३ ॥

२–३ ] ति० टी०—तीर्थमवतारमार्गम् ॥ २ ॥ ३ ॥

रा० टी०—राजपत्न्य इति । तत्र तस्मिन् समये गच्छन्त्यो राजपत्न्यः मन्दाकिनीं प्रति मन्दाकिनीसमीपे रामलक्ष्मणसेवितं तीर्थं स्नानादियोग्यं घट्टं ददृशुः ॥ २ ॥

रा० टी०—कौसल्येति । बाष्पपूर्णेन परिशुष्यता मुखेन उपलक्षिता कौशल्या सुमित्रामन्याश्च राजयोषितः अब्रवीत्॥३॥

४–५ ] ति० टी०—ये ते प्रसिद्धा रामादयो निर्विषयीकृता राज्यान्निष्काशितास्तेषां वने वसताम् । प्राक्कलनम् बहुव्रीहीरयम् । प्रथमपरिग्रहवत् । तीर्थं पुण्यतीर्थम् । गङ्गायमुनापरपारभवमिदमेव । 'प्राक्केवलम्' इति पाठ आधुनिककल्पितः नापि तत्रार्थसामञ्जस्यमिति कतकः । 'तत्रापि' पाठे प्राक्परिगृहीतमिति शेषः, प्राक्परिगृहीतं तीर्थं जलानयनादिव्यवहारोपयोगी मार्गः । इदमेवेति केवलं निश्चितमित्यर्थो वक्तुं शक्यः । 'केवलं निश्चिते क्लीबं वाच्यवच्चैककृत्स्नयोः' इति ॥ ४ ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—इदमिति । ये रामादयो निर्विषयीकृताः अयोध्यादेशरहितत्वं प्रापिताः अनाथानामक्लिष्टकर्मणां सरलस्वभावानां तेषाम् अते विस्तृते वने प्राक्कलनं प्राक् पूर्वं कालनं प्राप्तिर्यस्मिन् तत्पौर्वकालिकप्राप्त्याश्रयीभूतं क्लिष्टं दुर्गममिदं तीर्थं राजते इति शेषः । 'प्राक्केवलम्' इति पाठ आधुनिककल्पितः नापि तत्रार्थसामञ्जस्यमिति कतकः तत्रापि पाठे प्राक्परिगृहीतमिति शेषः, प्राक्परिगृहीतं तीर्थं जलानयनादिव्यवहारोपयोगी मार्गः । इदमेवेति केवलं निश्चितमित्यर्थो वक्तुं शक्यः।'केवलं निश्चिते क्लीबं वाच्यवच्चैककृत्स्नयोः' इति भट्टाः ॥ ४ ॥

रा० टी०—इत इति । हे सुमित्रे! इतः अस्मादेव मार्गादतन्द्रितः तन्द्रारहितः सौमित्रिः मम पुत्रस्य कारणाद्धेतोः स्वयं जलं हरति ॥ ५ ॥

गो० टी०—इदं तेषामिति । ते प्रसिद्धाः रामादयः ये प्राक् निर्विषयीकृताः राज्यान्निष्कासिताः वने तेषां क्लिष्टमुपमर्दितम् इदं तीर्थमवतरणं केवलं निश्चितम् 'केवलं निश्चिते क्लीबे वाच्यवत्स्वैककृत्स्नयोः' इति वैजयन्ती ॥ ४ ॥ ५ ॥

६ ] ति० टी०—जघन्यं हीनमपि जलाहरणादिकं ते पुत्रः कृतवानथाप्यसौ न गर्हितः । कुतस्तत्राह—गुणैर्ज्येष्ठत्वसौभ्रात्रधार्मिकत्वादिभिर्विशिष्टस्य भ्रातुर्यदर्थरहितं प्रयोजनरहितं तदेव गर्हितं भवति । तीर्थस्तु—भ्रातुर्यदर्थसहितं प्रयोजनसहितम् तद्गुणैः प्रयोजनैर्विहितं कल्पितं तत्सर्वगुणफलकमित्यर्थसहितम् । 'विहितम्' इति पाठं चाह ॥ ६ ॥

रा० टी०—जघन्यमिति । जघन्यं नीचोचितमपि जलाहरणादि कर्म कृतवान् ते पुत्रः नैव गर्हितः कैश्चिन्निन्दितः, तत्र हेतुः भ्रातुः अर्थरहितं यत् तदेव सर्वं गुणैः गुणवद्भिः गर्हितं निन्दितं भवति ॥ ६ ॥

गो० टी०—जघन्यमिति । जघन्यं हीनं जलाहरणादि कर्मकृतवानपि न गर्हितः । कुत इत्यत्राह—भ्रातुरिति । भ्रातुर्ज्येष्ठभ्रातुः अर्थसहितं प्रयोजनसहितं यत्कर्म तत्सर्वगुणैर्विहितं 'ज्येष्ठभ्राता पितृसमः' इति वचनात् पितृशुश्रूषावत् गुणाय कल्पत इत्यर्थः ॥ ६ ॥

७ ] ति० टी०—क्लेशानामनुभूयमानानां तथा यथानुभवमुचितो नेत्यतथोचितस्तेऽयं पुत्रो नीचार्हो योऽनर्थो दुःखजनकः समाचारोऽनुष्ठानं यस्मिंस्तत्तथा सज्जं प्रस्तुतं यथोक्तं कर्म मुञ्चतु । रामस्य प्रत्यावर्तिष्यमाणत्वादिति भावः । एकः शत्रुघ्नस्तु भरतसङ्गादेतत्कर्म न करोत्येवायमपि मुञ्चत्विति अपेरर्थः ॥ ७ ॥

रा० टी०—अद्येति । क्लेशानामतथोचितः क्लेशप्राप्त्ययोग्यः अयं ते पुत्रः अद्य इदानीं सज्जं प्रसक्तं नीचानर्थसमाचारं नीचं नीचयोग्यमनर्थस्य प्रतिष्ठारूपार्थविरोधिनः स्वसेवायाः स्वेनैव करणस्य समाचारः प्राप्तिर्यस्मिँस्तत् कर्म प्रमुञ्चतु, एतेन रामोऽयोध्यां गमिष्यतीति सूचितम् । 'नीचानर्थसमाचारान्' इति भूषणपाठः ॥ ७ ॥

गो० टी०—अद्यायमिति । क्लेशानामतथोचितः इदानीं यादृशक्लेशानुभवस्तादृशक्लेशानामनुचितः ते अयं पुत्रः नीचानर्थसमाचारं निकृष्टदुःखप्रचुरसमाचारसहितं सज्जम् उपयुक्तं कर्म अद्य प्रमुञ्चत्वपि । अपिशब्दः संभावनायाम् 'अपिः संभावनाप्रश्नगर्हाशङ्कासमुच्चये' इति वैजयन्ती । भरतप्रार्थनया रामेण

---

१ दीनेति गो. रा. पाठः । २ प्राक्केवलमिति गो. प्राक्कालनमिति रा. पाठः । ३ सहितमिति गो. पाठः । ४ विहितमिति गो. पाठः ।

दक्षिणाग्रेषु दर्भेषु सा ददर्श महीतले । पितुरिङ्गुदिपिण्याकं न्यस्तमायतलोचना ॥ ८ ॥
तं भूमौ पितुरार्तेन न्यस्तं रामेण वीक्ष्य सा । उवाच देवी कौसल्या सर्वा दशरथस्त्रियः ॥ ९ ॥
इदमिक्ष्वाकुनाथस्य राघवस्य महात्मनः । राघवेण पितुर्दत्तं पश्यतैतद्यथाविधि ॥ १० ॥
तस्य देवसमानस्य पार्थिवस्य महात्मनः । नैतदौपयिकं मन्ये भुक्तभोगस्य भोजनम् ॥ ११ ॥
चतुरन्तां महीं भुक्त्वा महेन्द्रसदृशो भुवि[1] । कथमिङ्गुदिपिण्याकं स भुङ्क्ते वसुधाधिपः ॥ १२ ॥
अतो दुःखतरं लोके न किंचित्प्रतिभाति मे[2] । यत्र रामः पितुर्दद्यादिङ्गुदीक्षोदमृद्धिमान् ॥ १३ ॥
रामेणेङ्गुदिपिण्याकं पितुर्दत्तं समीक्ष्य मे । कथं दुःखेन हृदयं न स्फोटति सहस्रधा ॥ १४ ॥
श्रुतिस्तु खल्वियं सत्या लौकिकी प्रतिभाति मे[2] । यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥ १५ ॥
एवमार्तां सपत्न्यस्ता जग्मुराश्वास्य तां तदा । ददृशुश्चाश्रमे रामं स्वर्गच्युतमिवामरम् ॥ १६ ॥
[3]तं भोगैः संपरित्यक्तं रामं संप्रेक्ष्य मातरः । आर्ता मुमुचुरश्रूणि सस्वरं शोककर्शिताः ॥ १७ ॥
तासां रामः समुत्थाय जग्राह चरणाम्बुजान्[4] । मातॄणां मनुजव्याघ्रः सर्वासां सत्यसंगरः ॥ १८ ॥

स्वराज्ये स्वीकृते लक्ष्मणस्य नीचकर्मप्रमोचनं संभवेदिति भावः ॥ ७ ॥

८ ] ति० टी०—न्यस्तं रामेण ॥ ८ ॥

रा० टी०—दक्षिणेति । महीतले पृथिव्यां दक्षिणाग्रेषु दर्भेषु कुशेषु न्यस्तं संस्थापितमिङ्गुदिपिण्याकमायतलोचना कौसल्या ददर्श ॥ ८ ॥

गो० टी०—दक्षिणाग्रेष्विति । पितुरिति चतुर्थ्यर्थे षष्ठी ॥ ८–१० ॥

९–१० ] ति० टी०—स्त्रियः प्रतीति शेषः ॥ ९ ॥ १० ॥

रा० टी०—तमिति । आर्तेन रामेण पितुः पित्रे भूमौ न्यस्तं विधिना संस्थापितं तं पिण्याकं वीक्ष्य सा कौसल्या देवी सर्वाः दशरथस्त्रिय उवाच ॥ ९ ॥

रा० टी०—तद्वचनाकारमाह—इदमिति । राघवस्य रघुकुलप्रसूतस्य इक्ष्वाकुनाथस्य महात्मनः पितुः राघवेण रामेण यथाविधि दत्तमेतत्पिण्याकं पश्य ॥ १० ॥

११ ] ति० टी०—औपयिकमुचितं न भवतीति मन्ये । तत्र हेतुः—भुक्तभोगस्येति भुक्ता भोगा येन तस्य ॥ ११ ॥

रा० टी०—तस्येति । भुक्तभोगस्य देवसमानस्य तस्य पार्थिवस्य औपयिकं युक्तं भोजनमेतत् पिण्याकं न मन्ये ॥ ११ ॥

गो० टी०—तस्येति । औपयिकं प्राप्तम् 'युक्तं स्यादुचितं न्याय्यं प्राप्तमौपयिकं तथा' इति हलायुधः ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—चतुरन्तां चतुःसमुद्रावसानाम् ॥ १२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—चतुरिति । चतुरन्तां चतुःसागरपर्यन्तां महीं भुक्त्वा संपाल्य महेन्द्रसदृशो वसुधाधिपो भुवि स्थितमिङ्गुदिपिण्याकं कथं भुङ्क्ते ॥ १२ ॥

१३ ] ति० टी०—क्षोदं पिष्टम् ॥ १३ ॥

रा० टी०—अत इति । ऋद्धिमान् सकलसंपत्तिविशिष्टो रामः यत्र यस्मिन् समये इङ्गुदीक्षोदमिङ्गुदीपिष्टं पितुर्दद्यात् तस्मिन् समये अत एतद्दानदर्शनजनितदुःखात् दुःखतरमधिकं दुःखं मे किंचिन्न प्रतिभाति ॥ १३ ॥

गो० टी०—अत इति । राज्यैश्वर्ययोग्यतया ऋद्धिमान् इत्युक्तिः ॥ १३ ॥

१४ ] ति० टी०—न स्फोटति न स्फुटति न विशीर्णं भवति १४

रा० टी०—रामेणेति । रामेण दत्तं पितुः पिण्याकं समीक्ष्य जातेन दुःखेन मे हृदयं सहस्रधा कथं न स्फोटति स्फुटति ॥ १४ ॥

गो० टी०—रामेणेति । स्फोटति स्फुटति ॥ १४ ॥

१५ ] ति० टी०—श्रुतिरित्याद्याश्वासनप्रकारः । सत्या सत्यार्था लौकिकी लोकविदिता लोकप्रसिद्धा ॥ १५ ॥

रा० टी०—श्रुतिरिति । 'यदन्नः यद्भक्ष्यकः पुरुषो भवति तदन्नास्तद्भक्ष्यकास्तस्य देवताः भवन्ति' इति लौकिकी लोकप्रसिद्धा श्रुतिस्तु मे सत्या प्रतिभाति ॥ १५ ॥

गो० टी०—श्रुतिरिति । सत्या सत्यार्था लौकिकी लोकविदिता लोकप्रसिद्धेति यावत् । देवता इति श्रुतिः सत्येत्यन्वयः ॥ १५–१८ ॥

१६–१८ ] ति०टी०—एवं श्रुतिस्त्वित्यादिप्रकारेण १६–१८

रा० टी०—एवमिति । एवमार्तां दुःखितां तां कौसल्यां सपत्न्यः आश्वास्य जग्मुः आश्रमे पर्णशालायां स्वर्गच्युतममरं देवविशेषमिव रामं ददृशुश्च ॥ १६ ॥

रा० टी०—तमिति । भोगैः संपरित्यक्तं तं राममार्ता मातरः संप्रेक्ष्य सस्वरं यथा स्यात्तथा अश्रूणि मुमुचुः ॥ १७ ॥

रा० टी०—तासामिति । सत्यसंगरः सत्यप्रतिज्ञो रामस्तासां स्वसमीपे प्राप्तानां मातॄणां चरणाम्बुजान् चरणकमलानि जग्राह ॥ १८ ॥

१ विभुरिति गो. पाठः । २ मेति गो. पाठः । ३ सर्वभोगैरिति गो. पाठः । ४ चरणाम्बुभानिति गो. पाठः ।

ताः पाणिभिः सुखस्पर्शैर्मृद्वङ्गुलितलैः शुभैः । प्रममार्जू रजः पृष्ठाद्रामस्यायतलोचनाः ॥ १९ ॥
सौमित्रिरपि ताः सर्वा मातॄः संप्रेक्ष्य दुःखितः । अभ्यवादयदासक्तं शनै रामादनन्तरम् ॥ २० ॥
यथा रामे तथा तस्मिन्सर्वा वव्रृतिरे स्त्रियः । वृत्तिं दशरथाज्जाते लक्ष्मणे शुभलक्षणे ॥ २१ ॥
सीतापि चरणांस्तासामुपसंगृह्य दुःखिता । श्वश्रूणामश्रुपूर्णाक्षी संबभूवाग्रतः स्थिता ॥ २२ ॥
तां परिष्वज्य दुःखार्ता माता दुहितरं यथा । वनवासकृतां दीनां कौसल्या वाक्यमब्रवीत् ॥ २३ ॥
[3]वैदेहराजन्यसुता स्नुषा दशरथस्य च । रामपत्नी कथं दुःखं संप्राप्ता [4]विजने वने ॥ २४ ॥
पद्ममातपसंतप्तं परिक्लिष्टमिवोत्पलम् । काञ्चनं रजसा ध्वस्तं क्लिष्टं चन्द्रमिवाम्बुदैः ॥ २५ ॥
मुखं ते प्रेक्ष्य मां शोको दहत्यग्निरिवाश्रयम् । भृशं मनसि वैदेहि व्यसनारणिसंभवः ॥ २६ ॥
ब्रुवन्त्यामेवमार्तायां जनन्यां भरताग्रजः । पादावासाद्य जग्राह वसिष्ठस्य च राघवः ॥ २७ ॥

पुरोहितस्याग्निसमस्य तस्य वै बृहस्पतेरिन्द्र इवामराधिपः ।
प्रगृह्य पादौ सुसमृद्धतेजसः सहैव तेनोपविवेश राघवः ॥ २८ ॥

ततो जघन्यं सहितैः स्वमन्त्रिभिः पुरप्रधानैश्च तथैव सैनिकैः ।
जनेन धर्मज्ञतमेन धर्मवानुपोपविष्टो भरतस्तदाऽग्रजम् ॥ २९ ॥

---

१९] ति० टी०—पृष्ठात्पृष्ठदेशात् 'पृष्ठं तु चरमं तनोः' ॥१९॥

रा० टी०—ता इति । सुखः स्पर्शो येषां तैः मृदूनि अङ्गुलितलानि येषां तैः शुभैः पाणिभिः आयतलोचनास्ता मातरः रामस्य पृष्ठात्पृष्ठप्रदेशाद्रजः धूलीं प्रममार्जुः ॥ १९ ॥

गो० टी०—ता इति । 'रामस्यायतलोचना' इति पाठः १९

२०] ति० टी०—आसक्तम् भावे निष्ठा । स्नेहासङ्गोपेतम् २०

रा० टी०—सौमित्रिरिति । मातॄः संप्रेक्ष्य दुःखितः सौमित्रिः रामादनन्तरमासक्तमासक्तिविशिष्टं यथा भवति तथा शनैः अभ्यवादयत् ॥ २० ॥

गो० टी०—सौमित्रिरपीति । असक्तम् अविरतम् 'अविरतमनवरतम् 'स्यादेकार्थमनारतमसक्तमपि' इति हलायुधः २०

२१ ] ति० टी०—वव्रृतिरे वर्तितवत्यः ॥ २१ ॥

रा० टी०—यथेति । यथा रामे वृत्तिं पृष्ठात् रजोमार्जनादि वव्रृतिरे चक्रुस्तथा दशरथाज्जाते अस्मिन् लक्ष्मणे वव्रृतिरे॥२१॥

गो० टी०—यथेति । वव्रृतिरे चक्रुरित्यर्थः ॥ २१–२४ ॥

२२ ] ति० टी०—उपसंगृह्य स्पृष्ट्वा ॥ २२ ॥

रा० टी०—सीतेति । दुःखिता अश्रुपूर्णाक्षी सीताऽपि तासां श्वश्रूणां चरणान् उपसंगृह्य अग्रतः स्थिता संबभूव ॥ २२ ॥

२३–२४ ] ति० टी०—वनेत्यादि । वनवासकृतदीनत्ववतीमिति यावत् ॥ २३ ॥ २४ ॥

रा० टी०—तामिति । वनवासे कृतं प्रयत्नो यस्यास्तामत एव दीनां क्षीणात्वेन प्रतीयमानां दुःखार्तां तां सीतां माता दुहितरमिव परिष्वज्य कौशल्या वाक्यमब्रवीत् ॥ २३ ॥

रा० टी०—तद्वचनाकारमाह—विदेहेति । विजने वने रामपत्नी दुःखं कथं संप्राप्ता अत्र कारणं न पश्याम इत्यर्थः ॥ २४ ॥

२५ ] ति० टी०—परिक्लिष्टं परिमर्दितमुत्पलं रक्तोत्पलं ध्वस्तमभिभूतम् ॥ २५ ॥

रा० टी०—पद्ममिति । आतपेन घर्मेण संतप्तं पद्ममिव परिक्लिष्टं मर्दितमुत्पलं रक्तकमलमिव रजसा ध्वस्तं पराभूतं व्याप्तमित्यर्थः 'काञ्चनमिव अम्बुदैः मेघैः क्लिष्टं चन्द्रमिव ते मुखं प्रेक्ष्य स्थितां मां व्यसनारणिसंभवः व्यसनेन संघर्षणेन विशिष्टा याऽरणिस्तस्मात्संभवो यस्य स वह्निः आश्रयमरणिमिव मनसि विद्यमानः शोको दहति । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०—पद्ममित्यादि । ते मुखं प्रेक्ष्य स्थितामिति शेषः, मां मनसि स्थितः सन्निति शेषः, आश्रयमाश्रयभूतं काष्ठादिकम् ॥ २५–२८ ॥

२६–२८ ] ति० टी०—ते मुखं प्रेक्ष्य स्थितामिति शेषः । मनसि संक्रान्तो व्यसनारणिसंभवः शोकोऽग्निराश्रयं गृहमिव काष्ठानीव वा मां दहति । 'आशयम्' इति पाठेऽप्याशयो गृहमेव आशय्यतेऽत्रेति व्युत्पत्तेः ॥ २६–२८ ॥

रा० टी०—ब्रुवत्यामिति । जनन्यामेवं ब्रुवत्यां सत्यां भरताग्रजो राघवो रामः आसाद्य वसिष्ठसमीपं प्राप्य वसिष्ठस्य पादौ जग्राह ॥ २७ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—पुरोहितस्येति । बृहस्पतेः पादौ अमराधिप इन्द्र इव अग्निसमस्य पुरोहितस्य वशिष्ठस्य पादौ प्रगृह्य राघवो रामः तेन वशिष्ठेन सहैवोपविवेश ॥ २८ ॥

२९] ति०टी०—तत इति। वसिष्ठरामोपवेशनानन्तरं जघन्यं जघनभागं पृष्ठभागमाश्रितः सन्नुपोपविष्टो बभूवेत्यन्वयः ॥ २९ ॥

---

१ सेति गो. पाठः । २ कृशामिति गो. पाठः । ३ विदेहराजस्येति गो. पाठः । ४ निर्जने इति गो. पाठः । ५ ब्रुवत्यामिति रा. पाठः । ६ स इति गो. पाठः । ७ वै तदेति गो. पाठः । ८ सहैवेति गो. पाठः ।

उपोपविष्टस्तु तदातिवीर्यवांस्तपस्विवेषेण समीक्ष्य राघवम् ।
श्रिया ज्वलन्तं भरतः कृताञ्जलिर्यथा महेन्द्रः प्रयतः प्रजापतिम् ॥ ३० ॥
किमेष वाक्यं भरतोऽद्य राघवं प्रणम्य सत्कृत्य च साधु वक्ष्यति ।
इतीव तस्यार्यजनस्य तत्त्वतो बभूव कौतूहलमुत्तमं तदा ॥ ३१ ॥
स राघवः सत्यधृतिश्च लक्ष्मणो महानुभावो भरतश्च धार्मिकः ।
वृताः सुहृद्भिश्च [3]विरेजिरेऽध्वरे यथा सदस्यैः सहितास्त्रयोऽग्नयः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुरुत्तरशततमः सर्गः ॥ १०४ ॥

## पञ्चोत्तरशततमः सर्गः ।

पित्रा मह्यं वितीर्णमपि राज्यमहं कैकेय्यनुमत्यैव तुभ्यं ददे तत्स्वीकारेण मामनुगृह्णीष्वेति भरतो राममभ्यर्थयते । रामवनगमने स्वात्मनो हेतुत्वमारोप्य बलवत्प्रताम्यन्तं भरतमाश्वास्य राज्यभारे नियोजयन् रामो बहुधावष्टभ्नाति ।

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः । शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥ १ ॥
रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः । मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥ २ ॥
तूष्णीं ते समुपासीना न कश्चित्किंचिदब्रवीत् । भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥ ३ ॥

रा० टी०—तत इति । ततः रामोपवेशनानन्तरं धर्मवान् स भरतः हितादिभिः सह जघन्यं निम्नदेशमवलोक्य तदाग्रजमग्रजासनमुपोपविष्टः ॥ २९ ॥

गो० टी०—तत इति । ततो जघन्यं वसिष्ठरामोपवेशादनन्तरमुपोपविष्टः "प्रसमुपोदः पादपूरणे" इति द्विर्वचनम् ॥२९॥

३० ] ति० टी०—उपोपविष्ट इत्यादि जनाभिप्रायानुभाषणम् ॥ ३० ॥

रा० टी०—उपोपविष्ट इति । उपोपविष्टः रामासनसमीपे स्थितः अतिवीर्यवान् भरतः राघवं रामं तपस्विवेषेण वीक्ष्य प्रजापतिं प्रति महेन्द्र इव कृताञ्जलिर्बभूवेति शेषः ॥३०॥

गो० टी०—उपोपविष्ट इति । कृताञ्जलिः अभूदिति शेषः ३०

३१ ] ति० टी०—किमिति । किं साधु वक्ष्यति वदिष्यतीति योजना ॥ ३१ ॥

रा० टी०—किमिति । राघवं प्रणम्य सत्कृत्य वियमानो भरतः अद्य किं वक्ष्यति इतीव एवंरूपं कौतूहलं हर्षविशेषः तस्य आर्यस्य जनस्य हृदि तत्त्वतो बभूव ॥ ३१ ॥

गो० टी०—किमिति । इतीवेत्यत्र इवशब्दो वाक्यालंकारे ॥ ३१ ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

३२ ] ति० टी०—त्रयोऽग्नयः शत्रुघ्नस्याप्राधान्येन परिहरणात् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुरुत्तरशततमः सर्गः ॥१०४॥

रा० टी०—स इति । राघवो रामः सत्यधृतिर्लक्ष्मणश्च भरतश्च सुहृद्भिर्विरेजिरे, तत्र दृष्टान्तः अध्वरे यागे सदस्यैः सहितास्त्रयोऽग्नय इव ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

१ ] ति० टी०—पूर्वसर्गान्तोक्तरीत्या सुहृद्गणवृतत्वम् । शोचतां पितृमरणदुःखेन ॥ १ ॥

रा० टी०—भरतोक्तिं वर्णयितुमुपक्रमते—तत इति । सुहृद्गणैर्वृतानां शोचतां रामानयनोपायं चिन्तयतामित्यर्थः, पुरुषसिंहानां भरतादीनां दुःखेनैव रजनी रात्रिर्व्यत्यवर्तत ॥१॥

गो० टी०—अथ पुनर्भरतस्य कैकेयीनिर्बन्धकृतपितृनियोगपरिहारोचितवचनपूर्वकं प्रार्थनं रामस्य च तत्समाश्वासनं तत्त्वोपदेशेनेत्येतत्पञ्चोत्तरशततमे—ततः पुरुषसिंहानामित्यादि ॥ १ ॥

२-३ ] ति० टी०—मन्दाकिन्यां तत्तीरे हुतं प्रातरौपासनहोमम् जप्यं गायत्रीजपम् । 'द्वारम' इति पाठे उटजद्वारमित्यर्थ इति केचित्, तन्न, उत्तरसर्गे मन्दाकिनीतीरे रामस्य वासोक्तेः तस्मात् 'रामम्' इति पाठो रामाधिष्ठितनदीतीरमित्यर्थ उचितः ॥ २ ॥ ३ ॥

रा० टी०—रजन्यामिति । रजन्यां सुप्रभातायां सत्यां सुहृद्वृतास्ते भ्रातरो भरतादयः मन्दाकिन्यां तत्समीपे हुतं जप्यं जपं च कृत्वा राममुपागमन् रामसमीपं प्रापुः ॥ २ ॥

रा० टी०—तूष्णीमिति । यतस्ते रामादयस्तूष्णीमुपा·

१ तथा स इति गो. पाठः । २ वृता इति गो. पाठः । ३ विरेजुरिति गो. पाठः ।

सान्त्विता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥ ४ ॥
महतेवाम्बुवेगेन भिन्नः सेतुर्जलागमे । [1]दुरावरं त्वदन्येन राज्यखण्डमिदं महत् ॥ ५ ॥
गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः । अनुगन्तुं न शक्तिर्मे गतिं तव महीपते ॥ ६ ॥
[2]सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते । राम तेन तु दुर्जीवं यः परानुपजीवति ॥ ७ ॥
यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः । ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः ॥ ८ ॥
स यदा पुष्पितो भूत्वा फलानि न विदर्शयेत् । स तां नानुभवेत्प्रीतिं यस्य हेतोः प्ररोपितः ॥ ९ ॥
एषोपमा महाबाहो [3]तदर्थं वेत्तुमर्हसि । [4]यत्र त्वमस्मान्वृषभो भर्ता भृत्यान्न शाधि हि ॥ १० ॥

सीनाः अतः कश्चित्पुरुषः किंचिदपि नाब्रवीत् भरतस्तु अब्रवीत् ॥ ३ ॥

गो० टी०—रजन्यामिति । हुतं होमम् ॥ २ ॥ ३ ॥

४ ] ति० टी०—माता कैकेयी प्रथमं राज्ञा राज्यदानेन सान्त्विता कृताश्वासा, अनन्तरं तया ममेदं राज्यं दत्तम् । तद्राज्यमकण्टकमुक्तप्रकारेण पितृवचनस्यापि परिपालनात्प्रत्यूहरहितम् ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—सान्त्वितेति । येन त्वया मामिका माता सान्त्विता मम मह्यं यत् राज्यं च दत्तं तस्य तव तुभ्यं तत् राज्यं ददामि अतः अकण्टकं कण्टकरहितमिदं राज्यं भुङ्क्ष्व ॥ ४ ॥

गो० टी०—दत्तमन्यथयितुमशक्तोऽहमिति रामो वदेदिति मत्वा तस्य परिहारानुगुणं वचनमाह—सान्त्वितेति । ममेयं मामिका शैषिकोऽण् "तवकममकावेकवचने" इत्यण्सन्नियोगेनास्मच्छब्दस्य ममकादेशः आदिवृद्धिश्च प्रत्ययस्थादित्यत्र मामकनरकयोरुपसंख्यानात् ककारात्पूर्वस्याकारस्य इकारः । मातृविरोधे न स्वीकुर्यादिति मत्वाह—सान्त्वितेति । दत्तस्यान्यथाकरणमनुचितमिति रामो वदेदिति परिहरति—दत्तमिति । 'त्रय एवाधनाः' इति न्यायेन दासस्य स्वं त्वदीयमिति ददामीत्यर्थः ॥ ४ ॥

५ ] ति० टी०—जलागमे वर्षाकालेऽम्बुवेगेन भिन्नः सेतुरिव इदं महदयोध्यादेशीयं राज्यखण्डं भरतखण्डाख्यं राज्यं त्वदन्येन दुरावरमावरितुमशक्यम् ॥ ५ ॥

रा० टी०—ननु त्वयैव कुतो न भुज्यते इत्यत आह—महतेति । जलागमे वर्षागमकाले अम्बुवेगेन भिन्नः सेतुरिव राजिशोभितमखण्डम् खण्डरहितं राज्यानां खण्डानि यस्मिन्निति वा महदिदं राज्यं त्वदन्येन मयेत्यर्थः, दुरावरं ग्रहीतुमशक्यम् ॥ ५ ॥

गो० टी०—त्वमेव राज्यं रक्षेत्याशङ्कयाह—महतेति । जलागमे वर्षाकाले दुरावारम् आवरीतुमशक्यं राज्यखण्डं नवखण्डेषु भरतखण्डाख्यं राज्यं कोसलराज्यखण्डं वा ॥ ५ ॥

६ ] ति० टी०—ननु त्वया वीरेण सुरक्ष्यमेतत्तत्राह—गतिमिति । अश्वगतिमनुगन्तुं खरो यथा न शक्तः तार्क्ष्यगत्यनुगमने यथेतरपक्षिणोऽशक्ताः तथा तव गतिं त्वदीयां राज्यपालनशक्तिमनुगन्तुं मे न शक्तिः । इवशब्दो यथार्थे निपातानामनेकार्थत्वात् ॥ ६ ॥

रा० टी०—तदेव दृष्टान्तान्तराभ्यामाह—गतिमिति । अश्वस्य गतिं गमनं खरो गर्दभ इव तार्क्ष्यस्य गरुडस्य गतिं पतत्रिणः बकादय इव तव गतिं सामर्थ्यमित्यर्थः, अनुगन्तुं प्राप्तुं मे शक्तिर्न ॥ ६ ॥

गो० टी०—राज्यस्य दुरावारत्वमुक्त्वा स्वस्याशक्तिमाह—गतिमिति । खरेत्यविभक्तिकनिर्देशः खरस्येत्यर्थः प्रकृतिभाव आर्षः पतत्रिणः पक्षिमात्रस्य, अश्वस्य गतिमनुगन्तुं खरस्य यथा न शक्तिः गरुडस्य गतिमनुगन्तुं केवलपक्षिणो यथा च शक्तिर्नास्ति तथेत्यर्थः ॥ ६ ॥

७ ] ति० टी०—यः परैर्नित्यश उपजीव्यते तस्य सुजीवं शोभनं जीवनमित्यर्थः । भावघञन्तं क्लीबमपि क्वचित् 'घञजपाः पुंसि' इति तु प्रायिकमिति बोध्यम् । तस्येत्यर्थे तेनेत्यार्षम् । दुर्जीवं दुःखं जीवनं तस्मात्तव राज्यकरणमेवोचितमिति भावः ॥ ७ ॥

रा० टी०—ननु राज्यस्य मम किं प्रयोजनमित्यत आह—सुजीवमिति । यः राजा परैः जनैः उपजीव्यते सेव्यते तस्य सुजीवं शोभनां स्थितिमवेहि यो राजा तु परानुपजीवति तेन तस्य दुर्जीवं दुःखं जीवनमवेहि तस्येत्यर्थे तेनेत्यार्षमिति भट्टाः 'सुजीवन्' इति भूषणपाठः ॥ ७ ॥

गो० टी०—तव शक्तिर्नास्ति चेदन्यः कश्चिद्राज्यं रक्षत्वित्यत्राह—सुजीवमिति । नित्यशः नित्यम् ॥ ७ ॥

८–१० ] ति० टी०—लोकरक्षणार्थं दशरथेनोत्पाद्य वर्धितः सकलगुणसंपन्नो यदि लोकरक्षणं न करिष्यसि तदा व्यर्थस्तत्प्रयास इत्यमुमर्थमुपमानप्रदर्शनमुखेनाह—यथा त्विति । यथा वृक्षः फलार्थिना पुंसा रोपितः कृतबीजावापोऽनन्तरं शनैर्वर्धितः । तत्र वृद्ध्यतिशयमाह—ह्रस्वकेन वामनेन दुरारोहोऽत एव रूढस्कन्धो महाद्रुमोऽथ पुष्पितो भूत्वा यदा फलानि न दर्शयति तदा स तदारोपकः पुमान्यस्य फलस्य हेतोः स द्रुमः प्रभावित उत्पादितः स तां प्रीतिं स्वाभिमतफलप्राप्तिजां प्रीतिं नानुभवेत्, तथा त्वमिति एषोपमा त्वयि भवति । यत्र रक्षणकाले वृषभः श्रेष्ठस्त्वं भर्ता पालनसमर्थोऽस्मान्भृत्यान्न शाधि न

१ दुरावारमिति गो. पाठः । २ सुजीवन्निति गो. पाठः । ३ तमर्थमिति गो. पाठः । ४ यदीति गो. पाठः ।

श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः । प्रतपन्तमिवादित्यं [1]राज्यस्थितमरिंदमम् ॥ ११ ॥
[2]तथा नु याने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः । अन्तःपुरगता नार्यो नन्दन्तु सुसमाहिताः ॥ १२ ॥
तस्य साध्व[3]नुमन्यन्त नागरा विविधा जनाः । भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥ १३ ॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् । रामः कृतात्मा भरतं समाश्वासयदात्मवान् ॥ १४ ॥
नात्मनः कामकारो [4]हि पुरुषोऽयमनीश्वरः । इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥ १५ ॥

शिक्षयसि, अतस्तदर्थं तस्या उपमाया अर्थं राजप्रयासानर्थक्यरूपं वेत्तुमर्हसि ॥ ८-१० ॥

रा० टी०-इदानीं तव वनागमनमनुचितमिति बोधयन्नाह-यथेति । यो वृक्षः पुरुषेण फलाभिकाङ्क्षिणा जनेन रोपितः आरोपितः पश्चाद्विवर्धितः अत एव ह्रस्वकेन वामनेन दुरारोहो जातः स एव रूढस्कन्धो महाद्रुमः यदा पुष्पितो भूत्वा फलानि न विदर्शयेत् तदा स वृक्षारोपको जनः यस्य हेतोः प्ररोपितस्तस्याभावादिति शेषः, तां वृक्षविषयिणीं प्रीतिं नानुभवेत् यत्र यस्मिन् काले वृषभः सर्वश्रेष्ठः भर्ता त्वमस्मान्भृत्यान्न शाधि तदा एषा तव उपमा हे महाबाहो! तत् तस्माद्धेतोस्तदर्थं राज्यरूपार्थं वेत्तुं लब्धुमर्हसि । श्लोकत्रयमेकान्वयि ।' वृषभः श्रेष्ठवृषयोः ' इति मेदिनी ॥ ८-१० ॥

गो० टी०-उचितं च त्वद्रक्षणमेवेत्याह-यथेत्यादिना । श्लोकत्रयमेकान्वयम् । यथात्विति निपातसमुदायोऽयमुदाहरणोपक्रमद्योतनार्थः केनचित्पुरुषेण रोपितः बीजावापेनोत्पादितः यो वृक्षः पुनः संवर्धितः ह्रस्वकेन वामनेन दुरारोहः क्रमेण रूढस्कन्धः महाद्रुमो जातः स यथा पुष्पितो भूत्वा फलानि न विदर्शयेत् स रोपयिता यस्य फलस्य हेतोः हेतुना तं वृक्षं रोपितवान् तां फलविषयिणीं प्रीतिं नानुभवेत् विनयेन प्रत्येकं वक्तुमशक्तः समुदायरूपेण दर्शयति भर्ता त्वमस्मान् भृत्यान् न शाधि यदि एषोपमेति पूर्वोक्तमर्थजातमुपमा उपमाशब्दापेक्षया स्त्रीलिङ्गत्वं रोपयिता अभिवृद्धो वृक्षः पुष्पदर्शनं फलादर्शनं चोपमेत्यर्थः, तमर्थमुपमेयमर्थजातं वेत्तुमर्हसि भावज्ञानकुशलः खल्वसीत्यर्थः । रोपयितुर्दशरथ उपमेयः वर्धितमहावृक्षस्य भवान् पुष्पदर्शनस्याभिषेचनौन्मुख्यं फलानवाप्तस्य भवतो राज्यापरिपालनमित्येतत् सर्वं त्वं जानासीत्यर्थः । एवमेतत्सर्वं महाबाहो इत्यनेन सूचितम् ॥ ८-१० ॥

११-१२ ] ति० टी०-श्रेणयो नानाजातीयसंघाः अग्र्याः प्रधानाः ॥ ११ ॥ १२ ॥

रा० टी०-स्वाभिलाषं प्रार्थयते-श्रेणय इति । अग्र्याः श्रेष्ठाः श्रेणयः नानाविधजनाः प्रतपन्तमादित्यमिव राज्यस्थितं त्वां पश्यन्तु ॥ ११ ॥

रा० टी०-तवेति । हे काकुत्स्थ ! तवानुयाने त्वत्कर्तृकायोध्यागमने कुञ्जराः मत्ताः सन्तो नर्दन्तु सुसमाहिताः अन्तःपुरचरा नार्यो नन्दन्तु ॥ १२ ॥

गो० टी०-श्रेणय इति । श्रेणयः पौरश्रेणयः अग्र्याः प्रधानाः ॥ ११-१२ ॥

१३ ] ति० टी०-तस्य वचः साध्वित्यनुमन्यन्तेति योजना अन्वमन्यन्तेत्यर्थः ॥ १३ ॥

रा० टी०-तस्येति । विविधाः नागराः जनाः रामं प्रत्यनुयाचतः प्रार्थयतस्तस्य भरतस्य वचः श्रुत्वा साधु समीचीनमनुमन्यन्त अन्वमन्यन्त ॥ १३ ॥

१४ ] ति० टी-दुःखितं प्रेक्ष्य दुःखेनैवं वक्तीत्यालोच्य कृतात्मा शिक्षितबुद्धिः, आत्मवान्धीरः ॥ १४ ॥

रा० टी०-तमिति । एवं विलपन्तं कथयन्तं दुःखितं भरतं प्रेक्ष्य आत्मवान् अतिधैर्यवान् कृतात्मा कृतः आत्मा वनगमनाय प्रयत्नो येन स रामः भरतं समाश्वासयत् ॥ १४ ॥

गो० टी०-तमिति । दुःखितं स्वप्रार्थनानङ्गीकारेण दुःखितं विलपन्तं मम हेतोरार्यविवासनं पितुर्मरणमित्यादि जातमिति प्रलपन्तं कृतात्मा सुशिक्षितबुद्धिः धैर्यवान् वा ॥ १४ ॥

१५ ] ति० टी०-आश्वासनप्रकारो-नात्मन इति । आत्मनो जीवस्य कामकारः स्वेच्छया यत्किंचित्प्रवर्तनसामर्थ्यं न नास्ति, हि यतोऽयं पुरुषोऽनीश्वर ईश्वरवत्स्वातन्त्र्यरहितः, तस्मादेनमितश्चास्माद्देहाच्च लोकाच्चेतरतः परस्माद्देहाच्च लोकाच्च कृतान्तः कालोऽन्तर्यामिरूपः कर्मानुरूपं कर्षति, एवं च मम वनवासे न राजा नापि कैकेयी कारणं किंतु देवादीनामदृष्टमित्यान्तरो भावः ॥ १६ ॥

रा० टी०-आश्वासनप्रकारमाह-नात्मन इत्यादिभिः । आत्मनः जीवस्य कामकारः स्वेच्छावर्तनं नास्ति हि यतः अयं पुरुषो जीवः अनीश्वरः स्वेच्छावर्तने असमर्थः अत एवं इतोऽस्माल्लोकादितरतः स्वर्गादेश्च एनं जीवं कृतान्तः कालः परिकर्षति ॥ १६ ॥

गो० टी०-कैकेयीप्रेरितो राजा भवांश्च न मद्वनवासहेतुः किं तु दैवमेवेति तत्त्वदृष्ट्या भरतं दुःखान्निवर्तयितुमुपक्रमते-नात्मनः इत्यादि । आत्मनः पुरुषस्य कामकारः ऐच्छिकव्यापारो नास्ति यतोऽयं पुरुषः अनीश्वरः अस्वतन्त्र इत्यर्थः । इतश्च एतस्माद्देशाद्देशान्तरम् इतरतः अन्यदेशाच्च एनं देवं कृतान्तः स्वतन्त्रदैवमेव परिकर्षति आकर्षति 'दैवे कृतान्तः सिद्धान्ते यमाकुशलकर्मणोः' इति वैजयन्ती । यथोक्तं भगवता गीताचार्येण-'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ' इति ॥ १६ ॥

१ राज्ये इति गो. पाठः । २ तवान्विति रा. पाठः । ३ इत्यमन्यन्तेति गो. पाठः । ४ ऽस्तीति गो. पाठः ।

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ १६ ॥
यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् । एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ १७ ॥
यथाऽऽगारं दृढस्थूणं जीर्णं भूत्वोपसीदति[1] । तथावसीदन्ति[2] नरा जरामृत्युवशंगताः ॥ १८ ॥
अत्येति रजनी या तु सा न प्रतिनिवर्तते । यात्येव यमुना पूर्णं[3] समुद्रमुदकार्णवम्[4] ॥ १९ ॥
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह । आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥ २० ॥
आत्मानमनुशोच त्वं किमन्यमनुशोचसि । आयुस्तु[5] हीयते यस्य स्थितस्यार्थ[6] गतस्य च ॥ २१ ॥

१६] ति० टी०—इदानीं राजमरणशोकावकाशोऽपि नास्तीत्याह—सर्वे इति । निचयाः संग्रहा नाशान्ताः समुच्छ्रया विषादिकृतमौन्नत्यम्, तस्मान्नश्वरत्वेन निश्चिते कः शोक इति भावः १६

रा० टी०—सर्वे इति । सर्वे निचयाः संगृहीताः क्षयान्ताः क्षयेण विनाशेन अन्तः अभावो येषां ते, समुच्छ्रयाः उन्नतप्रदेशाः पतनान्ताः पतनेन अधस्खलनेन अन्तः येषां ते, संयोगाः विप्रयोगान्ताः विप्रयोगेन वियोगेन अन्तो येषां ते सन्तीति शेषः, जीवितं जीवनं मरणान्तं मरणेन प्राणवियोगेन अन्तो यस्य तत् अस्तीति शेषः । एतेन जीवप्रारब्धानुसारेव सुखादीति सूचितं तेन त्वत्कर्तृकवनगमने प्रजानां सुखं न भवितेति न वक्तव्यमिति व्यञ्जितम् ॥ १६ ॥

गो० टी०—अपरिहरणीयवस्तुस्वभावपर्यालोचनायां पितृमरणेनापि शोकस्यावकाशो नास्तीत्यमुमर्थमाह—सर्वे इति । निचयाः धनसंचयाः सर्वे बहुशः संपादिता अपि क्षयान्ताः क्षयपर्यवसायिनः चोरेण कामेन राज्ञा वा नश्यन्तीत्यर्थः । समुच्छ्रयाः अत्यन्तसमुन्नता अपि पतनान्ताः अत्युन्नतपदस्थिताः ब्रह्मेन्द्रादयोऽपि स्वस्वाधिकारसमाप्तिदशायां तत्पदभ्रंशपर्यवसायिन इति यावत् । संयोगाः पुत्रमित्रकलत्रादिसंबन्धा अपि विप्रयोगान्ताः विरहपर्यवसायिनः जीवितं च उत्कृष्टजीवनमपि मरणान्तम् अपरिहार्यमरणाधीनभङ्गशालीत्यर्थः । पितृमरणशोकेनैवमुच्यते भरतेनेत्याशङ्क्य तदपनोदनं कृतमस्मिन् श्लोके पादत्रयोक्तार्थत्रयं दृष्टान्तार्थं तुरीयपादश्च दार्ष्टान्तिकं दशरथमरणमभिप्रैति अतः अपरिहार्यकालकृतत्वात् पितृमरणमपि न शोचनीयमिति भावः ॥ १६ ॥

१७ ] ति० टी०—यथा फलानां पतनमशक्यपरिहारम् एवं मरणमपि तथा तस्मान्नृपस्य तस्य न शोच्यता ॥ १७ ॥

रा० टी०—मुख्यं दुःखं मरणदुःखमिति तस्यैव प्रतिक्रिया विचारणीयेति बोधयन्नाह—यथेति । यथा पक्वानां फलानां ताडादिजन्यानां पतनात् अन्यत्र अन्यस्मिन् काले भयं काकादिपक्षिभक्षणभीतिर्नास्ति तथा जातस्य नरस्य मरणात् मर्त्यलोकादन्यत्र भयं नास्ति एतेन मर्त्यलोकादन्यत्र नयने यत्नः कर्तव्य इति सूचितम् ॥ १७ ॥

गो० टी०—प्रथमश्लोके वनगमनं न मया स्वतन्त्रेण कृतमपि त्वीश्वरकृतमित्युक्तं, द्वितीयश्लोके दशरथमरणं च कालकृतमतस्तत्रापि न शोचनीयमित्युक्तम् । अथ द्वितीयश्लोकोक्तं सदृष्टान्तं प्रपञ्चयति—यथेत्यादिना ॥ १७ ॥ १८ ॥

१८] ति० टी०—तदेव दृष्टान्तान्तरेणोपपादयति—यथेति १८

रा० टी०—अस्मिन् लोके प्राकृतानां मृत्युरवश्यं भावीति बोधयन्नाह—यथेति । दृढं स्थूलं यस्मिंस्तदागारं गृहं यथा जीर्णं भूत्वा उपसीदति विनश्यति तथा जरामृत्युवशं गताः नरा अवसीदन्ति ॥ १८ ॥

१९ ] ति० टी०—अतीतरजन्यप्रतिनिवृत्तौ दृष्टान्तो यमुना यात्येव न प्रतिनिवर्तत इत्यर्थः । उदकार्णवमित्यत्रोदकपदमधिकम् ॥ १९ ॥

रा० टी०—मृत्युग्रस्तस्य पुनर्न निवृत्तिरित्यत्र दृष्टान्तमाह—अतीति । या रजनी रात्रिः अत्येति सा न प्रतिनिवर्तते एवं मृत्युना ग्रस्तस्य पुनर्न निवृत्तिरित्यर्थः । मृत्योरनिवार्यत्वे दृष्टान्तमाह—पूर्णमुदकैः परिपूरितमुदकार्णवमुदकसमुद्रं यमुना यात्येव एवं मृत्युरपि प्राकृतजनं प्राप्नोत्येवेत्यर्थः ॥ १९ ॥

गो० टी०—अत्येतीति । समुद्रस्योदकाकुलत्वविशेषणं यमुनायाः सर्वथा अनिवर्त्यत्वाय ॥ १९ ॥

२० ] ति० टी०—गच्छन्तीति शत्रन्तम् । अंशवो रविकिरणाः । 'आशये' इति पाठे जलाशय इत्यर्थः ॥ २० ॥

रा० टी०—कालगतिर्दुर्लक्ष्येति बोधयन्नाह—अहोरात्राणीति । गच्छन्ति गमनकर्तॄणि अहोरात्राणि ग्रीष्मे अंशवः सूर्यकिरणाः जलमिव सर्वेषां प्राणिनामायूंषि क्षपयन्ति विनाशयन्ति ॥ २० ॥

गो० टी०—अहोरात्राणीति । गच्छन्तीति प्रथमा बहुवचनमहोरात्रविशेषणम् अंशवः सूर्यस्येति शेषः ॥ २० ॥

२१ ] ति० टी०—यद्येवमतस्त्वमात्मानं प्रति अनुशोच मृत्युर्दुर्वार आयाति का मे गतिरिहामुत्रेति चिन्तय । अन्यं राजानं तदेव शोच्यत्वमाह—आयुरिति । आयुस्तु यस्य, यस्य कस्यापि हीयत इत्यर्थः ॥ २१ ॥

रा० टी०—प्राकृतानां दुःखानि निवर्तनीयानीति बोधयन्नाह—आत्मानमिति । स्थितस्य कदाचिदिहलोके विद्यमानस्य गतस्य कदाचित्परलोकं प्राप्तस्य च यस्य प्राकृतज-

१ भूत्वावसीदतीति गो. पाठः । २ तथैव सीदन्तीति गो. पाठः । ३ पूर्णेति गो. पाठः । ४ ऽऽकुलमिति गो. पाठः । ५ ते इति गो. पाठः । ६ चेति गो. पाठः ।

सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति । गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥ २२ ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः । जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥ २३ ॥
नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमितेऽहनि । आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥ २४ ॥
हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिवागतम् । ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥ २५ ॥
यथा काष्ठं च काष्ठं च समेयातां महार्णवे । समेत्य तु व्यपेयातां कालमासाद्य कंचन ॥ २६ ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च । समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥ २७ ॥
नात्र कश्चिद्यथाभावं प्राणी समतिवर्तते । तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥ २८ ॥

नस्य आयुः हीयते तमात्मानं शरीरिणमनुशोच तद्दुःखनिवर्तकयत्नं कुर्वित्यर्थः, अन्यं प्राकृतविलक्षणं मां किं किमर्थमनुशोचसि ॥ २१ ॥

गो० टी०—शोकविषयं निर्धारयति—आत्मानमिति । आयुस्ते यतो हीयते अतः परलोकचिन्तामेव कुर्वित्यर्थः ॥२१॥

२२ ] ति० टी०—तदेवाह—सहेति । मृत्युः सह व्रजति सह निषीदति सह गत्वा सह निवर्तते अन्तर्यामिण एव मृत्युरूपत्वात् अतोऽपरिहार्यः स इति भावः ॥ २२ ॥

रा० टी०—सहेति । मृत्युः सहैव व्रजति गच्छति सहैव निषीदति तिष्ठति सहैव दीर्घं विरजापर्यन्तं संलग्नमध्वानं गत्वा निवर्तते विरजापारं न गच्छतीत्यर्थः, एतेन लोकानां विरजापारप्राप्त्युपायः कर्तव्य इति व्यञ्जितम् ॥ २२ ॥

गो० टी०—मृत्युः सर्वथा दुष्परिहर इत्याह—सहैवेति॥२२॥

२३ ] ति० टी०—वलयो जराकृताः । किं हि कृत्वा किं बलं प्राप्य प्रभावयेत्प्रभुत्वं भावयेत्, यद्वा किं कृत्वा कमुपायं कृत्वा एतत्सर्वपरिहारे समर्थो भवेदित्यर्थः ॥ २३ ॥

रा० टी०—गात्रेष्विति । यस्य गात्रेषु शरीरेषु वलयः जराकृताकारविशेषाः प्राप्ताः अत एव शिरोरुहाः केशाः श्वेताः स जरया जीर्णः पुरुषः किं कृत्वा प्रभावयेत् मृत्युनिवर्तने समर्थो भवेत्, एतेन अस्मत्प्रयत्नमन्तरा मृत्युनिवृत्तिर्न भवितेति सूचितम् ॥ २३ ॥

गो० टी०—कालान्तरे तथैव करिष्यामीत्यत्राह—गात्रेष्वित्यादिना । तस्मात् बाल्य एव आत्मलाभाय यतेतेत्युक्तं भवति किं हि कृत्वा पूर्वोक्तोपद्रवपरिहारस्येन कमुपायं कृत्वा आत्मानं प्रभुं कुर्यादित्यर्थः ॥ २३ ॥

२४ ] ति० टी०—आयुःक्षयकारकत्वेनानिष्टसाधनरव्युदयादाविष्टसाधनत्वबुद्ध्यातिमूढा मनुष्या इत्याह—नन्दन्तीति२४

रा० टी०—नन्दन्तीति । आदित्ये उदिते सति केचित् नन्दन्ति केचित् अस्तमिते नन्दन्ति मनुष्याः जनाः आत्मनो जीवितक्षयमुदितमस्तमितं च नावबुध्यन्ते ॥ २४ ॥

गो० टी०—बाल्येऽपि पुरुषाणां विवेको दुर्लभ इत्याह—नन्दन्तीत्यादिना । आदित्ये उदिते नन्दन्ति अर्थार्जनकालोऽयमागत इति, रवौ अस्तमितेऽपि नन्दन्ति कामोपभोगकालोऽयमागत इति, आत्मनो जीवितक्षयं नावबुध्यन्ते सच्छिद्रघटे गृहीतं जलमिव प्रतिक्षणमायुः क्षीयत इति न जानन्ति । जीवितकाल एव परलोकहितं कर्तुं नेच्छन्तीत्यर्थः ॥ २४ ॥

२५ ] ति० टी०—नवं नवमिवेतः प्रागप्राप्तमिव । ऋतुमुखमृतुप्रारम्भः, परिवर्तः पुनः पुनः प्राप्तिः, तं दृष्ट्वा हृष्यन्ति न जानन्ति तत्परिवर्तनेन प्राणिनां नाश इतीत्यन्वयः । 'आस्यमुखम्' इति पाठे स्वस्वाभिमुखमृतूनां परिवर्तं दृष्ट्वा हृष्यन्तीत्यर्थः ॥ २५ ॥

रा० टी०—हृष्यन्तीति । येषाम् ऋतूनां परिवर्तेन परिवर्तनेन प्राणिनां प्राणसंक्षयो भवति तदागतं नवं नवमृतुमुखं दृष्ट्वा हृष्यन्ति एतेन लोकानां स्वाहिताज्ञत्वं सूचितम् ॥ २५ ॥

गो० टी०—हृष्यन्तीति । तत्तदृत्वागमनं दृष्ट्वा नानाभोगहेतुरिति हृष्यन्ति, प्रत्युत ऋत्वागमोऽनर्थहेतुरित्याह—ऋतूनां परिवर्तेनेति ॥ २५ ॥

२६ ] ति० टी०—काष्ठं काष्ठं पोतद्वयम् ॥ २६ ॥

२७ ] ति० टी०—विनाभवः विप्रयोग इति यावत् ॥ २७ ॥

रा० टी०—यथेति । कंचन कालमासाद्य प्राप्य महार्णवे यथा काष्ठं च काष्ठं च काष्ठद्वयमित्यर्थः, समेयातामेकीभूय वर्तेयातां समेत्य तु कंचित्कालमासाद्य व्यपेयातां वियुज्येयाताम् एवं भार्यादयः समेत्य संयुज्य व्यवधावन्ति वियुज्यन्ते अतः एषां भार्यादीनां विनाभवः वियोगः ध्रुवः निश्चितः । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—श्लिष्टानां विश्लेषस्यावश्यं भावित्वात्तदपि न शोचनीयमित्यभिप्रायेणाह—यथा काष्ठमिति श्लोकद्वयेन । विनाभवः वियोगः ॥ २६ ॥ २७ ॥

२८ ] ति० टी०—अत्र संसारे कश्चिदपि प्राणी यथाभावं यथाप्राप्तं स्वभावं मृतिजनिलक्षणं न समतिवर्तते न लङ्घयति, तेन हेतुना प्रेतस्य संबन्धसामान्ये षष्ठी । प्रेतमनुशोचतोऽस्य तस्मिन्स्वीयप्रेतभावनिवर्तने सामर्थ्यं नास्ति ॥ २८ ॥

रा० टी०—नेति । अत्र अस्मिन् संसारे यथाभावं यथाकालप्राप्तं सुखदुःखादिकं कश्चित् प्राणी न समतिवर्तते उल्लङ्घते तेन तस्मिन्नुल्लङ्घने प्रेतस्य प्रयतमानस्येत्यर्थः, अनुशो-

१ रवाविति गो. पाठः । २ चेति गो. पाठः । ३ धनानीति गो. पाठः । ४ ऽभीति गो. पाठः ।

यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः । अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥ २९ ॥
एवं पूर्वैर्गतो मार्गः [1]पैतृपितामहैर्ध्रुवः । तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥ ३० ॥
वयसः पतमानस्य स्रोतसो वानिवर्तिनः । आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ३१॥
धर्मात्मा [2]सुशुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः । [ [3]धूतपापो गतः स्वर्गं पिता नः पृथिवीपतिः ॥
भृत्यानां भरणात्सम्यक्प्रजानां परिपालनात् । अर्थादानाच्च धर्मेण पिता नस्त्रिदिवं गतः ॥
कर्मभिस्तु शुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः । स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः ॥
इष्ट्वा बहुविधैर्यज्ञैर्भोगांश्चावाप्य पुष्कलान् । उत्तमं चायुरासाद्य स्वर्गतः पृथिवीपतिः ॥
आयुरुत्तममासाद्य भोगानपि च राघवः ।[4] न स शोच्यः पिता तात स्वर्गतः सत्कृतः सताम् ॥ ३२ ॥

---

चतः पुरुषस्य सामर्थ्यं न विद्यते तेन ते एव शोच्या इति ध्वनितम् ॥ २८ ॥

गो० टी०—नात्रेति । अस्मिंल्लोके कश्चिदपि प्राणी यथा भावं न समभिवर्तते यथाभिलाषं बन्धुभिः सह न वर्तते तेन कारणेन प्रेतस्य मृतस्य हेतोः अनुशोचतः पुरुषस्य तस्मिन्मरणनिवारणे सामर्थ्यं नास्ति । पाठान्तरम् अस्मिन् बहुलोके कश्चिदपि ब्रह्मादिस्तम्बपर्यन्तेषु कोऽपि जन्तुः यथाभावं यथाभिलाषम् अप्रतिहतसंकल्पतयेत्यर्थः । न समभिवर्तते कश्चिदित्यनेन मानुषाद्यपेक्षया चिरकालवर्तिनां शक्त्यतिशयभाजामपि ब्रह्मादीनामधिकारावसाने मरणं दुर्निवारमेवेत्याशयः । तेन एवमप्रतिहतसंकल्पत्वाभावेन प्रेतस्य मृतस्य हेतोः अनुशोचतः पुरुषस्य तस्मिन्मरणनिवारणे सामर्थ्यं नास्ति अतः ब्रह्मादीनामप्यपरिहार्ये शोकं विहाय सर्वानर्थनिवृत्तये प्रयतेतेति भावः ॥ २८ ॥

२९ ] ति० टी०—पूर्वगतिसमानगतित्वे दृष्टान्तः—यथेति । पुरतो गच्छन्तं सार्थं पथि स्थितः पथिकः ॥ २९ ॥

३० ] ति० टी०—उक्ताया लोकस्थितेः प्रकृतोपयोगमाह—एवमिति । पैतृपितामहैः । वृद्धिरार्षी । पितृपैतामहैरित्यर्थः । 'पितृपैतामहः' इति पाठे तत्संबन्धी मार्ग इत्यर्थः, ध्रुवोऽवश्यं प्राप्यः । यस्य मार्गस्य व्यतिक्रमो लङ्घनं नास्ति तमापन्नः स्वयमपि तं प्राप्तः पित्रादीन्कथं शोचेत् ॥ ३० ॥

रा० टी०—यथेति । यथा गच्छन्तं सार्थं वणिक्समूहं भवतां पृष्ठतः अहमप्यागमिष्यामि इति पथि स्थितः कश्चित् ब्रूयात् कथनपूर्वकं गच्छेत् एवं यस्य व्यतिक्रमो व्यत्ययः नास्ति पूर्वैः पितृपैतामहैः गतो यो मार्गः तं मार्गमापन्नः प्राप्तः स पुरुषः कथं शोचेत् 'सार्थो वणिक्समूहे स्यादपि संघातमात्रके' इति मेदिनी । श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥

गो० टी०—यथेत्यादिश्लोकद्वयम् । गच्छन्तं सार्थं पथिकसमूहं पथि स्थितः पुरुषो यथा अहमप्यागमिष्यामीति ब्रूयादनुगच्छति च एवं पूर्वैर्वंश्यैः गतः प्राप्तो मार्गः पितृपैतामहः पितृपितामहसंबन्धी तैरपि प्राप्त इति यावत् । ध्रुवः पुत्रादिभिरपि गन्तव्यत्वेन निश्चितः ॥ २९ ॥ ३० ॥

३१ ] ति० टी०—स्रोतसो वा गङ्गादिप्रवाहस्येवानिवर्तिनः प्रत्यावृत्तिरहितस्य पतमानस्य गच्छतो वयसः नाशं दृष्ट्वेति शेषः, आत्मा सुखे तत्साधने धर्मे नियोक्तव्यः । कुतः यतः प्रजाः सुखभाजः सुखसाधनाप्तिनिमित्तजन्मभाजः स्मृताः ॥ ३१ ॥

रा० टी०—वयस इति । स्रोतसः नदीप्रवाहस्य वा इव अनिवर्तिनः पतमानस्य वयसः कौमारादेः संबन्धी आत्मा सुखे तत्साधनीभूतधर्मे नियोक्तव्यः राज्ञा उपदेष्टव्य इत्यर्थः, अत एव प्रजाः सुखभाजः स्मृताः ॥ ३१ ॥

गो० टी०—उक्तमर्थमुपसंहरति—वयस इत्यादिना । "यस्य च भावेन भावलक्षणम्" इत्यर्थे सप्तम्यर्थे षष्ठी । वाशब्द इवार्थः अनिवर्तिनि स्रोतसीव वयसि पतमाने अनिवर्तितया गच्छति सति आत्मा सुखे सुखहेतौ धर्मे नियोक्तव्यः परलोकहितचिन्तयेति शेषः । यतः प्रजाः सुखभाजः धर्मसाध्यसुखासक्ताः स्मृता इति योज्यम् ॥ ३१ ॥

३२ ] ति० टी०—यदेवमतः—धर्मात्मेति । उपसंहरति—न स इति । सतां सत्कृतः सद्भिः पूज्यमानः ॥ ३२ ॥

रा० टी०—प्राकृतानां दुःखस्य राजनिवार्यत्वेन तद्विषयकशोकानर्हत्वमुपपाद्य प्राकृतविलक्षणानां तु दुःखास्पृष्टत्वेन तद्विषयकशोकस्याप्यनर्हत्वमुपपादयन्नाह—धर्मेति । हे तात ! असुशुभैः असवः इन्द्रियाणि शुभानि दिव्यानि येषु तैः किंच सुशुभैः प्राकृतविलक्षणैरित्यर्थः कृत्स्नैः सकलैः अवयवैः प्राप्तदक्षिणैः क्रतुभिश्च सहितः सतां सत्कृतः यो धर्मात्मा मम पिता स्वः सर्वलोकपरं लोकं साकेतं गतः प्राप्तः स न शोच्यः ॥ ३२ ॥

गो० टी०—एवं लोकस्थितिः अस्मत्पितरं प्रति तु न शोकगन्धोऽपि कार्य इत्याशयेनाह—धर्मात्मेत्यादिना ॥ ३२ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—भृत्यानामिति । भृत्यादीनां भरणादिभ्यः आज्ञाप्य नः पिता त्रिदिवं त्रिभिर्लक्षा-

---

१ पितृपैतामह इति गो. महैरिति रा. पाठः । २ स शुभैरिति गो. पाठः । ३ श्लोकचतुष्टयमेतदधिकं गो. पाठे । ४ श्लोकोऽयमधिको द्वात्रिंशादुत्तरः रा. पाठे ।

स जीर्णमानुषं देहं परित्यज्य पिता हि नः । दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥ ३३ ॥
तं तु नैवंविधः कश्चित्प्राज्ञः शोचितुमर्हति । त्वद्विधो मद्विधश्चापि श्रुतवान्बुद्धिमत्तरः ॥ ३४ ॥
एते बहुविधाः शोका विलापरुदिते तदा । वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥ ३५ ॥
स स्वस्थो भव मा शोको यात्वा चावस तां पुरीम् । तथा पित्रा नियुक्तोऽसि वशिना वदतां वर ॥ ३६ ॥
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा । तत्रैवाहं करिष्यामि पितुरार्यस्य शासनम् ॥ ३७ ॥
न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम । स त्वयापि सदा मान्यः स वै बन्धुः स नः पिता ॥ ३८ ॥
तद्वचः पितुरेवाहं संमतं धर्मचारिणाम् । कर्मणा पालयिष्यामि वनवासेन राघव ॥ ३९ ॥
धार्मिकेणानृशंसेन नरेण गुरुवर्तिना । भवितव्यं नरव्याघ्र परलोकं जिगीषता ॥ ४० ॥

दिभिः दिवं स्तुत्यमप्रकष्टसाकेतं गतः शरीरेण सह प्राप्तः अतो न शोच्य इत्यनुकृष्यते ॥ ३२ ॥

गो० टी०—भृत्यानामिति । धर्मेण अर्थादानात् धर्मेण करादिग्रहणात् ॥ ३३ ॥

गो० टी०—कर्मभिरिति । इष्टैः जनानां स्वस्य चाभिमतैः शुभैः कर्मभिः महापथेषु तटाकनिर्माणादिभिः ॥ ३४ ॥ ३५ ॥

गो० टी०—आयुरिति । उत्तमं तत्पूर्वराजायुरपेक्षया अधिकतमम् आयुः भोगानपि चासाद्य स्वर्गतः सतां सत्कृतः स पिता न शोच्य इति अन्वयः ॥ ३६ ॥

३३ ] ति० टी०—ब्रह्मलोकविहारिणीं तल्लोके विहारार्हां दैवीमृद्धिं देवसंबन्धिनीं तपआदिसमृद्धिम् ॥ ३३ ॥

रा० टी०—ननु सशरीरं लोकान्तरं गतेऽपि एतद्राज्यैश्वर्यत्यागहेतुकः शोकः कार्य एवेत्यत आह—स इति । जीर्णं बहुकालं भुक्तं मानुषं प्राकृतमनुष्यसंबन्धिनं देहमैश्वर्यसमृद्धिं परित्यज्य ब्रह्मलोकविहारिणीं ब्रह्मादीनां लोकेषु विहारयति प्रापयति तच्छीलां यथेच्छं सर्वलोकगमनसंपादिकामित्यर्थः, दैवीं प्राकृतविलक्षणाम् ऋद्धिं संपत्तिमनुप्राप्तः ॥ ३४ ॥

गो० टी०—स जीर्णमिति । दैवीमृद्धिं देवसंबन्धिसंपदं दिव्यदेहादिलाभरूपामित्यर्थः ॥ ३७ ॥

३४ ] ति० टी०—श्रुतवानधीतात्मविद्यः । 'तद्विधो यद्विधश्चासि' इति पाठे श्रुतवान्बुद्धिमत्तरश्च यद्विधोऽसि तद्विधो भवान् शोचितुमर्हतीत्यर्थ इति तीर्थः । ब्रह्मलोकं प्राप्तस्यात्यन्तं शोकोऽनुचित इति भावः ॥ ३४ ॥

रा० टी०—तमिति । तं प्राकृतविलक्षणसंपत्तिविशिष्टं राजानमेवंविधः राजसदृशः कश्चित् प्राज्ञः त्वद्विधो मद्विधश्च श्रुतवान् शास्त्रज्ञः बुद्धिमत्तरः शोचितुं नार्हति ॥ ३५ ॥

गो० टी०—तं त्विति । एवंविधः प्राज्ञ इति भरतगुणं प्रत्यक्षेण निर्दिशति । एवंविध इत्युक्तमुद्घाटयति—तद्विध इति । श्रुतवान् बुद्धिमत्तरश्च यद्विधोऽसि तद्विध इत्यर्थः ॥ ३८ ॥

३५ ] ति० टी०—बहुविधा दशरथमरणमद्विवासनादिविषयभेदेन बहुप्रकाराः । शोको मानसो विलापरुदिते तत्कार्ये ३६

रा० टी०—वस्तुतस्तु शोकमात्रपरित्यागः कर्तव्य इति बोधयन्नाह—एते इति । विविधाः शोकाः वर्जनीयाः विलापरुदिते च वर्जनीये, वर्जनीया इत्यस्य लिङ्गवचनविपरिणामेनान्यत्राप्यन्वयः ॥ ३६ ॥

गो० टी०—एत इति । बहुविधाः दशरथमरणमद्विवासनादिभेदेन बहुप्रकाराः विलापरुदिते प्रलापाश्रुमोचने च वर्जनीये इति विपरिणामेनान्वयः ॥ ३९ ॥

३६ ] ति० टी०—स्वस्थः शोकरहितः । मा शोकः त्वां परिभवत्विति शेषः । यात्वा गत्वा तां पुरीमयोध्यामावस । कुत एवं नियोगस्तत्राह—तथेति । वशिना सत्यवशवता सत्याधीनत्ववता ॥ ३६ ॥

रा० टी०—स इति । यतः वशिना स्वतन्त्रेण पित्रा त्वं तथा नियुक्तोऽसि अतः स्वस्थो भव शोकः मा न प्राप्नोतु इति शेषः, अत एव तां पित्राज्ञप्तां पुरीमयोध्यां यात्वा प्राप्य स त्वमावस ॥ ३७ ॥

गो० टी०—मद्विवासनं त्वयापि मान्यमित्याह—स स्वस्थ इत्यादिना । यात्वा गत्वा तां पुरीम् आवस अधितिष्ठ ॥ ४० ॥

३७ ] ति० टी०—यत्र यस्मिंकृत्ये तत्रैव प्रवृत्तः स्यामिति शेषः ॥ ३७ ॥

रा० टी०—यत्रेति । यत्र यस्मिन् वनवासरूपे कर्मणि पुण्यकर्मणा पित्रा नियुक्तः तत्रैव स्थितोऽहं पितुरनुशासनं करिष्यामि ॥ ३८ ॥

गो० टी०—यत्रेति । यत्र वनरूपे स्थाने ॥ ४१—४४ ॥

३८ ] ति० टी०—त्यागस्यान्याय्यत्वे हेतुः—सदा मान्य इत्यादि ॥ ३८ ॥

रा० टी०—नेति । त्वया मयाऽपि तस्य शासनं त्यक्तुं न शक्यं, तत्र हेतुः सदा मान्यः पूजनीयः ॥ ३९ ॥

३९ ] ति० टी०—कर्मणा तदुचितव्यापारेण ॥ ३९ ॥

रा० टी०—तदिति । धर्मचारिणां संमतं तत्पितुर्वचः वनवासेन कर्मणा पालयिष्यामि ॥ ४० ॥

४० ] ति० टी०—नरेण 'नृपेण' इति पाठः क्षत्रियेणे-

१ जीर्णमिति गो. पाठः । २ तद्विधो यद्विध इति गो. पाठः । ३ तथेति गो. पाठः । ४ ऽशोचारिति गो. पाठः । ५ तावति गो. पाठः । ६ मान्यमिति गो. पाठः । ७ चारिण इति गो. पाठः ।

आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ । निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः ॥ ४१ ॥
इत्येवमुक्त्वा वचनं महात्मा पितुर्निदेशप्रतिपालनार्थम् ।
यवीयसं भ्रातरमर्थवच्च प्रभुर्मुहूर्ताद्विरराम रामः ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

## षडुत्तरशततमः सर्गः ।

सहेतूपन्यासं समर्थ्य रामं प्रति राज्यस्वीकारेऽभ्यर्थयमानो भरतः प्रार्थनानङ्गीकारेऽहमपि नैव निवर्ते किंतु वन एव निवत्स्यामीति प्रतिजानीते । पितृवचःपरिरक्षणे साग्रहतया भरतवचने शिथिलं रामं कौसल्याद्यस्तदङ्गीकारे प्रार्थयन्ते ।

एवमुक्त्वा तु विरते रामे वचनमर्थवत् । ततो मन्दाकिनीतीरे रामं प्रकृतिवत्सलम् ॥ १ ॥
उवाच भरतश्चित्रं धार्मिको धार्मिकं वचः । को हि स्यादीदृशो लोके यादृशस्त्वमरिंदम ॥ २ ॥
न त्वां प्रव्यथयेद्दुःखं प्रीतिर्वा न प्रहर्षयेत् । संमतश्चापि वृद्धानां तांश्च पृच्छसि संशयान् ॥ ३ ॥
यथा मृतस्तथा जीवन्यथासति तथा सति । यस्यैष बुद्धिलाभः स्यात्परितप्येत केन सः ॥ ४ ॥

त्यर्थ इति कतकः । परलोकं जिगीषता धार्मिकत्वादिस्वभाववता भवितव्यम् ॥ ४० ॥

रा० टी०–तत्र हेतुमाह–धार्मिकेणेति । परलोकं जिगीषता धार्मिकेण पुरुषेण गुरुवर्तिना पित्राद्याज्ञानुसरणेन भवितव्यम् ॥ ४१ ॥

४१-४२ ] ति० टी०–नः पितुर्वृत्तं शुभं निशाम्य पर्यालोच्य तेन स उत्तमां गतिं गत इति ज्ञात्वा त्वं स्वभावेन धार्मिकत्वादिलक्षणेनोपलक्षितः आत्मानमात्मनः परलोकहितमनुतिष्ठ चिन्तयेत्यर्थः ॥ ४१ ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चोत्तरशततमः सर्गः ॥१०५॥

रा० टी०–आत्मानमिति । नः पितुः दशरथस्य शुभं वृत्तं सत्यप्रतिज्ञत्वमित्यर्थः, निशाम्य संस्मृत्य आत्मानं स्वमनः स्वभावे पालकस्वरूपराजधर्मे अनुतिष्ठ संस्थापय ॥४२॥

गो० टी०–आत्मानमिति । स्वभावेनात्मानमनुतिष्ठ राजभावेन भवन्तं योजयेत्यर्थः, निशाम्य दृष्ट्वा ज्ञात्वेति यावत्॥४६॥

रा० टी०–इतीति । महात्मा रामः पितुः निदेशप्रतिपालनार्थमेवमर्थवद्वचनं यवीयसं यवीयांसं कनिष्ठं भ्रातरं मुहूर्तादुक्त्वा विरराम ॥ ४३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चाधिकशततमः सर्गः ॥ १०५ ॥

गो० टी०–इतीति । यवीयसं यवीयांसम् ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

१ ] ति० टी०–अथ भरतः क्षात्रधर्मावष्टम्भेन रामप्रत्यावृत्तिं प्रार्थयते–एवमुक्त्वेति ॥ १ ॥

२ ] ति० टी०–चित्रयुक्तियुक्तिविशेषोपपन्नत्वाच्छ्लोकस्य विस्मयजनकम् । को हि स्यात् न कोऽपीत्यर्थः । यादृशो यादृशमाहात्म्यवान् ॥ २ ॥

रा० टी०–भरतवृत्तान्तं वर्णयन्नाह–एवमित्यादिभिः । एवमर्थवद्वचः उक्त्वा रामे विरते निवृत्ते सति प्रकृतिवत्सलं रामं धार्मिको भरतः धार्मिकं धर्मसहितं चित्रम् अनेकविधयुक्तिविशिष्टं वचः उवाच । तद्वचनाकारमाह–हे अरिन्दम ! यादृशः यादृशगुणविशिष्टस्त्वमसि ईदृशः लोके भुवने कः स्यान्न कोऽपीत्यर्थः । श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०–अथ रामं प्रति भरतस्य श्लाघ्यतरोचितोत्तरं षट्शततमे–एवमुक्त्वेत्यादि । अस्मिन् सर्गे श्लोकव्यत्यासः सर्गभेदश्च दृश्यते तच्छ्रद्वये क्रमेण व्याक्रियते–एवमुक्त्वात्विति । निरुत्तरमुक्तवन्तं रामं प्रति मुखान्तरेण उत्तरस्योच्यमानत्वाच्चित्रमित्युक्तम् ॥ १ ॥ २ ॥

३ ] ति० टी०–वृद्धानां संमतोऽपि धर्मविषये रामवदेव वर्तितव्यमिति दृष्टान्तभूतोऽपि लोकमर्यादामनुसरंस्तान्वृद्धान्संशयान्संशयास्पदधर्मान्पृच्छसि एवं च सर्वज्ञासकामत्वात्तव न दुःखमिति भावः ॥ ३ ॥

रा० टी०–नेति । दुःखं दुःखश्रवणं त्वां न प्रव्यथयेत् न वा प्रीतिः प्रीतिवचनं प्रहर्षयेत् तथापि वृद्धानां संमतस्त्वं तान् वृद्धान् संशयान् पृच्छसि, एतेन मर्यादापालनार्थमेव तव प्रश्न इति सूचितम् ॥ ३ ॥

गो० टी०–संमत इति । वृद्धानां त्रैविद्यवृद्धानां संमतः सर्वज्ञत्वेन संमतः तथापि तान् संशयान् पृच्छसीति संबन्धः३

४] ति० टी०–यथा मृतस्तथा जीवन् अस्य यथा जीवंस्तथा मृत इति वाक्यशेष आर्थिको बोध्यः । यथा मृतस्यकदेह आत्मा देहपुत्रादिभिरसंबद्धस्तथा जीवन्नपि तैरसंबद्धः । नित्य-

१ असीति गो० पाठः ।

परावरज्ञो यश्च स्याद्[1]यथा त्वं मनुजाधिप । स एव व्यसनं प्राप्य न विषीदितुमर्हति ॥ ५ ॥
अमरोपमसत्त्वस्त्वं महात्मा सत्यसंगरः । सर्वज्ञः सर्वदर्शी च बुद्धिमांश्चासि राघव ॥ ६ ॥
न त्वामेवं[2]गुणैर्युक्तं प्रभवाभवकोविदम् । अविषह्यतमं दुःखमासादयितुमर्हति ॥ ७ ॥
प्रोषिते मयि यत्पापं मात्रा मत्कारणात्कृतम् । क्षुद्रया तदनिष्टं मे प्रसीदतु भवान्मम ॥ ८ ॥
धर्मबन्धेन बद्धोऽस्मि तेनेमां नेह मातरम् । हन्मि तीव्रेण दण्डेन दण्डार्हां पापकारिणीम् ॥ ९ ॥
कथं दशरथाज्जातः शु[3]भाभिजनकर्मणः । जानन्धर्म[4]मधर्मं च कुर्यां कर्म जुगुप्सितम् ॥ १० ॥

शुचिसुखचिदात्मनो नित्याशुचिदुःखजडेन देहेन तदीयश्चासंबन्धात् । यथा च जीवन्स्वकर्मानुरूपं संसरति तथा मृतोऽपि स्वकर्मानुरूपं परत्र । किंच यथा जीवन्सर्वैः संबद्धस्तथा मृतोऽपि सर्वात्मत्वादस्य । किंच यथाऽसति अविद्यमाने न रागो जायते तथा सति विद्यमानेऽपि रागो न युक्तः। यथा वा सति साधौ द्वेषो न युक्तस्तथाऽसति असाधावपि द्वेषो न युक्तः । किंच यथाऽसति प्रपञ्चेऽनुरागस्तथा सति ब्रह्मणि युक्तः । किंच सति ब्रह्मणि तन्निष्ठस्य यथा न बन्धो मुक्तिश्च भवति तथा लोकसंग्रहार्थमसन्निष्ठस्यापि न बन्धो मुक्तिश्च भवति । यस्य त्वादृशस्य एष उक्तार्थविषयको बुद्धिलाभः स्यात्स राजयोगी केन परितप्येत न केनापि हेतुनेत्यर्थः ॥ ४ ॥

रा० टी०–यथेति । यथा मृतः लोकान्तरं प्राप्तः तथा जीवन् इह लोके स्थितोऽपि यथा सति सत्पुरुषे यथाऽपराधदण्डस्तथा असति असत्पुरुषेऽपि यस्य एष बुद्धिलाभः स्यात् स केन हेतुना परितप्यते न केनापीत्यर्थः ॥ ४ ॥

गो० टी०–पितृवियोगादिजनितदुःखेन मया कथितमिति हि भवतोक्तं मम तादृग्दुःखप्रसङ्ग एव नास्तीत्याह–यथा मृत इति । मृतः पुरुषो यथा द्वेषविषयो न भवति जीवन्नपि तथा, यथा असति तथा सति अविद्यमाने वस्तुनि यथा रागो नास्ति विद्यमाने वस्तुन्यपि तथा इत्येष बुद्धिलाभो यस्य स केन हेतुना परितप्येत न केनापीत्यर्थः, भवदुक्तप्रकारेण मम दुःखलेशोऽपि नास्तीति भावः ॥ ४ ॥

५ ] ति० टी०–परावरज्ञः सप्रपञ्चात्मतत्त्वज्ञः । विषीदितुमित्यार्षम् विषत्तुमित्यर्थः ॥ ५ ॥

रा० टी०–परावरज्ञ इति । हे मनुजाधिप ! यथा त्वं परावरज्ञः निखिलतत्त्वज्ञः तथा यः स्यात् सः पुरुषः एवं व्यसनं दुःखं प्राप्यापि विषीदितुं विषत्तुं नार्हति ॥ ५ ॥

गो० टी०–किमर्थं तर्हि शोकमूलवचनं त्वयोक्तमित्याशङ्क्य भवद्व्यसनासहतयेत्याह–परावरज्ञ इति । यः परावरज्ञः त्रिकालज्ञः आत्मानात्मज्ञो वा परमात्मजीवात्मस्वरूपज्ञो वा सः एवं व्यसनं प्राप्यापि व्यथितुं नार्हति तथा त्वमपीति संबन्धः । अथापि तव राज्यभ्रंशवनवासरूपव्यसनं त्वद्विश्लेषं चाहं कथं सहेयेति भावः ॥ ५ ॥

६ ] ति० टी०–अमर ईश्वरः स यथा शुद्धसत्त्वोपाधिस्तद्वच्छुद्धसत्त्वप्रधानः । अत्रोपमाशब्दप्रयोगो लोकप्रतारणाद सत्त्वोपाधिरीश्वरस्त्वमेवेति भावः । सर्वज्ञः सर्वविषयकज्ञानरूपोपाधिवृत्तिमान्, सर्वदर्शी सर्वसाक्षी बुद्धिमान्सर्वबुद्धिप्रवर्तकः अन्तर्यामीति यावत् ॥ ६ ॥

रा० टी०–अमर इति । राघव हे राम ! अमरोपमसत्त्वः देवतुल्यपराक्रमः महात्मा सर्वपूज्यस्वरूपः सत्यसङ्गरः सत्यवक्ता सर्वज्ञः निखिलज्ञाता सर्वदर्शी सर्वनियन्ता बुद्धिमान् अतिशयबुद्धिविशिष्टस्त्वमसि ॥ ६ ॥

गो० टी०–अमरेति । अमरोपमेति पृथक्पदं, सत्त्वः सत्त्वगुणसंपन्नः अर्शआद्यच् स्वाश्रितानां सत्त्वगुणकार्यतत्त्वज्ञानप्रवर्तकत्वाद्वा सत्त्व इत्युच्यते “ सत्त्वस्यैष प्रवर्तकः” इति हि श्रुतिः । महात्मा महाधैर्यः अत एव सत्यसंगरः सत्यप्रतिज्ञः सर्वज्ञ इत्यादिभिस्त्रिभिर्भूतवर्तमानभावियावद्वस्तुज्ञानवत्त्वमुक्तम् ॥ ६ ॥

७ ] ति० टी०–प्रभवाभवकोविदं भूतानामुत्पत्तिनाशज्ञम्। आसादयितुमवसादयितुम् । एवं च त्वामेवंविधं यद्यपि दुःखं न पीडयति तथापि मादृशं पीडयत्येवेति स्वस्थो भव । मा शोक इत्यस्योत्तरमेतत्पर्यन्तम् ॥ ७ ॥

रा० टी०–नेति । एवं पूर्वोक्तैः गुणैर्युक्तमत एव प्रभवाभवकोविदं प्रवृत्तिनिवृत्तिकारणतत्त्वज्ञाननिपुणं त्वाम् विषह्यतममन्यैरसह्यमपि दुःखमासादयितुमाक्रमितुं नार्हति ॥ ७ ॥

गो० टी०–न त्वामिति । प्रभवाभवकोविदम् उत्पत्तिविनाशज्ञमित्यर्थः, भूतानामिति शेषः । अविषह्यतममपि अस्मदादीनामिति शेषः, दुःखं राज्यभ्रंशवनवासादिहेतुकं नासादयितुमर्हति नाभिभवितुमर्हति ॥ ७ ॥ ८ ॥

८ ] ति० टी०–मत्कारणान्मद्राज्यनिमित्तो मेऽनिष्टं मदसंमतमेव अतो भवान्प्रसीदतु । मद्दत्तं राज्यं परिगृह्णात्विति यावत् ॥ ८ ॥

रा० टी०–प्रोषिते इति । मत्कारणात् मदभावहेतोः क्षुद्रया मात्रा मातृसदृशीत्वेन माननीयया मन्थरया यत्पापं कृतं तत् मे अनिष्टम् ईप्सितं न अतः मम भवान् प्रसीदतु । अयं मातृशब्द आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः ॥ ८ ॥

९-१०] ति० टी०–धर्मबन्धेन धर्मरूपेण बन्धनेन । इहेदृ-

१ तथेति गो. पाठः । २ एवमिति गो. पाठः । ३ शुद्धामीति गो. पाठः । ४ अधर्मिष्ठमिति गो. पाठः ।

गुरुः क्रियावान्वृद्धश्च राजा प्रेतः पितेति च । तातं न परिगर्हेऽहं दैवतं चेति संसदि ॥ ११ ॥
को हि धर्मार्थयोर्हीनमीदृशं कर्म किल्बिषम् । [2]स्त्रियः प्रियचिकीर्षुः सन्कुर्याद्धर्मज्ञ धर्मवित् ॥ १२ ॥
अन्तकाले हि भूतानि मुह्यन्तीति पुरा श्रुतिः । राज्ञैवं कुर्वता लोके प्रत्यक्षा सा श्रुतिः कृता ॥ १३ ॥
साध्वर्थमभिसंधाय क्रोधान्मोहाच्च साहसात् । तातस्य यदतिक्रान्तं प्रत्याहरतु तद्भवान् ॥ १४ ॥
पितुर्हि समतिक्रान्तं पुत्रो यः साधु मन्यते । तदपत्यं मतं लोके विपरीतमतोऽन्यथा ॥ १५ ॥
तदपत्यं भवानस्तु मा भवान्दुष्कृतं पितुः । अति यत्तत्कृतं कर्म लोके धीरविगर्हितम् ॥ १६ ॥

शापराधविषये इमां सर्वान्तर्यामिणस्तव द्वेषिणीम् अत एव दण्डार्हाम् ॥ ९ ॥ १० ॥

रा० टी०—धर्मेति । धर्मबन्धेन स्त्री न हन्तव्येति वचनरूपबन्धनेन बद्धोऽस्मि अत एव पापकारिणीं पापकर्मप्रयोजिकामत एव दण्डार्हां मातरं मातृसदृशीं मन्थरां तीव्रेण दण्डेन न हन्मि ॥ ९ ॥

गो० टी०—धर्मबन्धेनेति । धर्मबन्धेन धर्मपाशेन ॥९॥

रा० टी०—कथमिति । शुभाभिजनकर्मणः शुभे अभिजनकर्मणी यस्य तस्माद्दशरथाज्जातः अत एव धर्ममधर्मं च जानन् अहं जुगुप्सितं कर्म कथं कुर्याम् ॥ १० ॥

गो० टी०—कथमिति । जुगुप्सितं लोकगर्हितम् ॥१०॥

११] ति० टी०—मातृवत्पिताप्यन्याय्यकारीत्याह—गुरुरिति । क्रियावान्कृतश्रेष्ठक्रतुः । प्रेतः सन्श्राद्धादौ ॥ ११ ॥

रा० टी०—गुरुरिति । क्रियावान् निखिलविहितक्रियाविशिष्टः वृद्धः ज्ञानवयोभ्यामधिकः अत एव गुरुः पूजनीय इत्यर्थः, प्रेतः लोकान्तरं प्राप्तः यो राजा पिता तं दैवतं तातं संसदि सभायामहं न गर्हे ॥ ११ ॥

गो० टी०—गुरुरिति । क्रियावान् यज्ञादिक्रियावान् संसदि सभायाम् ॥ ११ ॥

१२] ति० टी०—एवं गुरुत्वातिहेतुभिर्यद्यप्यहं न परिगर्हे तथापि वस्तुतो गर्ह्य एवेत्याह—को हीति । को हि धर्मवित् धर्मार्थयोर्हीनं ताभ्यां हीनं कामप्रधानम् ॥ १२ ॥

रा० टी—ननु तत्र किं गर्हणीयमित्यत आह—क इति । किल्बिषं सर्वजनदुःखहेतुत्वेन पापरूपमत एव जुगुप्सितं सुजनैर्निन्दितमत एव हीनं त्यक्तव्यमीदृशं प्रतिज्ञाताभिषेकनिवृत्तिरूपं प्रियपुत्रप्रव्राजनरूपं कर्म धर्मार्थयोः हेतोः स्त्रियाः प्रियं चिकीर्षुः सन् धर्मवित् धर्मरचनाशीलः कः पुरुषः कुर्यात् न कोऽपीत्यर्थः । एतेन राज्याभिषेकनिवर्तनं नोचितमिति सूचितम् ॥ १२ ॥

गो० टी०—क इति । धर्मार्थयोर्हीनं धर्मार्थाभ्यां हीनं कामप्रधानमिति यावत् ॥ १२ ॥

१३] ति० टी०—अन्तकाले मृतिकाले मुह्यन्ति विपरीतबुद्धिं प्राप्नुवन्ति । पुरा श्रुतिः पुरातनी गाथा प्रत्यक्षा सत्या ॥ १३ ॥

रा० टी०—अन्तेति । अन्तकाले लोकान्तरगमनसमये भूतानि प्राणिनो मुह्यन्ति इति पुरा पौर्वकालिकी या श्रुतिः श्रवणविषयीभूतवाक्यं सा श्रुतिः एवं विवेकराहित्यहेतुकाभिषेकनिवृत्तिं कुर्वता राज्ञा प्रत्यक्षा कृता ॥ १३ ॥

गो० टी०—अन्तकाल इति । अन्तकाले विनाशकाले मुह्यन्ति मोहं प्राप्नुवन्ति विपरीतबुद्धिं प्राप्नुवन्तीति यावत् पुरा श्रुतिः पुरातनी गाथेत्यर्थः ॥ १३ ॥

१४] ति० टी०—क्रोधाद्विषमद्यैव पास्यामीत्युक्तिरूपाच्चिः तात् कैकेयीक्रोधात् तत्क्रोधभयादिति यावत्, मोहात्कैकेयीविषयात् साहसादविमृश्यकारित्वात् तातस्य यदतिक्रान्तम् भावे निष्ठा ज्येष्ठाभिषेकलक्षणसाध्वर्थाननुष्ठानं तत्साध्वर्थमभिसंधाय राजोक्तार्थेषु कतमस्य साधुत्वमिति विचार्य प्रत्याहरतु निवर्तयतु ॥ १४ ॥

रा० टी०—साध्विति । क्रोधात् कैकेयीकोपभयात् मोहात् चित्तविक्षेपाद्वा साहसात् विचाराभावाद्वा अर्थमभिसंधाय अर्थबुद्धिं कृत्वा तातस्य यदतिक्रान्तमभिषेकातिक्रमणं तद्भवान्प्रत्याहरतु निवर्तयतु ॥ १४ ॥

गो० टी०—साध्वर्थमिति । क्रोधात् विषमद्यैव पास्यामीत्युक्तकैकेयीक्रोधात् मोहात् कैकेयीविषयमोहात् साहसात् साहसकरणात् अविमृश्यकारित्वादिति यावत्, तातस्य यदतिक्रान्तं यद्धर्मातिक्रमणं तत्साध्वर्थमभिसंधाय समीचीनार्थं स्मृत्वा भवान् प्रत्याहरतु निवर्तयतु ॥ १४ ॥

१५] ति० टी०—तदेवोपपादयति—पितुर्हीति । अतिक्रान्तमतिक्रमस्तं साधु मन्यते तद्वैपरीत्याचरणेन साधु यथा तथा संपादयति—तदपत्यं मतमपतनहेतुत्वादपत्यशब्दवाच्यम् ॥१५॥

रा० टी०—पितुरिति । पितुः समतिक्रान्तं साधुपथात्प्रच्युतिं यः साधु मन्यते बोधयति तत्प्रच्युतिं निवर्तयतीत्यर्थः, तदेवापत्यं लोके मतमतो विपरीतं साधु न मन्यते इत्यर्थः, तर्हि अन्यथा अपत्यं न भवतीत्यर्थः ॥ १५ ॥

गो० टी०—पितुरिति । साधु मन्यते साधु कर्तुं मन्यत इत्यर्थः । तदपत्यं मतं पितुरपतनहेतुत्वात्तदेवापत्यत्वेन संमतम् ॥ १५ ॥

१६] ति० टी०—अपत्यमस्तु अन्वर्थापत्यमस्तु । मा भवान्दुष्कृतं पितुः अनुमन्यतामिति शेषः । तदेवाह—

१ गर्ह्यमिति गो. पाठः । २ स्त्रियाः प्रियमिति गो. रा. पाठ । ३ प्रत्यक्षामिति गो. पाठः । ४ यदतीति गो. पाठः । ५ अभिपरैति गो. पाठः । ६ लोके इति गो. रा. पाठः ।

कैकेयीं मां च तातं च सुहृदो बान्धवांश्च नः । पौरजानपदान्सर्वांस्त्रातुं सर्वमिदं भवान् ॥ १७ ॥
क्व चारण्यं क्व च क्षात्रं क्व जटाः क्व च पालनम् । ईदृशं व्याहतं कर्म न भवान्कर्तुमर्हति ॥ १८ ॥
एष हि प्रथमो धर्मः क्षत्रियस्याभिषेचनम् । येन शक्यं महाप्राज्ञ प्रजानां परिपालनम् ॥ १९ ॥
कश्च प्रत्यक्षमुत्सृज्य संशयस्थमलक्षणम् । आयतिस्थं चरेद्धर्मं क्षत्रबन्धुरनिश्चितम् ॥ २० ॥
अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि । धर्मेण चतुरो वर्णान्पालयन्क्लेशमाप्नुहि ॥ २१ ॥
चतुर्णामाश्रमाणां हि गार्हस्थ्यं श्रेष्ठमुत्तमम् । आहुर्धर्मज्ञ धर्मज्ञास्तं कथं त्यक्तुमिच्छसि ॥ २२ ॥

अतीति । यत्तत्कृतं दशरथकृतं कर्म तदति धर्ममतिक्रम्य प्रवृत्तम् अत एव लोके धीरैर्विगर्हितम् अतस्तदनुमननमनुचितमिति पितृवचसः परिपाल्यत्वे युक्तं धर्मवदभिषेकवचनमेव परिपालयेति व्यक्तार्थम् ॥ १६ ॥

रा० टी०—तद्विति । यतः अतियत्न अतिप्रयत्नवान् भवान् तदपत्यम् अतः धीरविगर्हितं धीरैर्निन्दितं यत् पितुः कृतं निष्पादितं दुष्कृतं कर्तुमनर्हं कर्म तद्भवान् मास्तु न स्थापयतु अभिषेकं कारयत्वित्यर्थः । अन्तर्भावितणिजर्थोऽस्तिः॥१६॥

गो० टी०—तदिति । तदपत्यं भवानस्तु तादृशमपत्यमस्तु नाभिपत्ता प्राप्तुं नार्हतीत्यर्थः ॥ १६–१८ ॥

१७ ] ति० टी०—सर्वांस्त्रातुमिदं सर्वं मदुक्तं भवाननुमन्यतामिति भावः ॥ १७ ॥

रा० टी०—कैकेयीमिति । कैकेय्यादीन् त्रातुमर्हतीति शेषः ॥ १७ ॥

१८ ] ति० टी०—पितृकृतवनवासस्य गर्हितत्वमेवाह—क्व चेति ॥ १८ ॥

रा० टी०—वनवासस्यायोग्यतां वर्णयन्नाह—क्वेति । क्व अरण्यं क्व च क्षात्रं क्व जटाः पालनं क्व च द्वयोर्द्वन्द्वयोः परस्परं संयोगः न संभवतीत्यर्थः, अतः व्याहतं विरुद्धम् ईदृशं संयोजनरूपं कर्म कर्तुं भवान्नार्हति ॥ १८ ॥

१९ ] ति० टी०—ननु वानप्रस्थाश्रमः क्षत्रियस्याप्यस्ति तत्राह—एष हीति । येनाभिषेचनेन पालनं तद्रूपधर्मसंपादनं प्रथम आद्यो धर्म इत्यर्थः । एवं च स आश्रमो राज्यपरिपालनोत्तरं वार्धके उचितो नापि स मुख्यो धर्म इति भावः॥१९॥

रा० टी०—ननु वानप्रस्थधर्मस्य क्षत्रियाणां विहितत्वात्कथं विरोध इत्यत आह—एष इति । हे महाप्राज्ञ ! येन धर्मेण प्रजानां परिपालनं शक्यं स एव अभिषेचनं धर्मः प्रथमः पूर्वं विहितः, एतेन पूर्वप्राप्तधर्मस्य परित्यागोऽनुचित इति सूचितम् ॥ १९ ॥

गो० टी०—तापसधर्मावलम्बनं क्षत्रियाणामप्यस्तीत्याशङ्क्याह—एष हीत्यादिना ॥ १९ ॥

२० ] ति० टी०—तस्यामुख्यत्वमेव दर्शयति—कश्चेति । प्रत्यक्षं प्रत्यक्षसुखसाधनं धर्मं प्रजापालनरूपमुत्सृज्य संशयस्थमप्रत्यक्षत्वात्को हि तद्वेद यदमुष्मिँल्लोकेऽस्ति वा न वेति श्रुत्याभिनीय मानसं देहास्पदम् अलक्षणमशुभलक्षणम् आयतिस्थमुत्तरवयःप्राप्यम् अनिश्चितमनित्यानुष्ठानम् । नहि प्रजापालनवत्क्षत्रियस्य नित्यप्राप्तोऽयं धर्मः नित्यत्वे तद्रहितदशरथादेः पापित्वप्रसङ्गः । तं क्षत्रबन्धुः क्षत्राणां बन्धुरिति समासेन क्षत्रियकुलसंमत इत्यर्थः । निन्दायां बन्धुप्रत्ययान्तस्तु निन्द्यक्षत्रियादिवाचीति कतकः । कश्चरेत् न कोऽपीत्यर्थः । अन्ये तु—क्षत्रबन्धुरपि निन्द्यक्षत्रियोऽपि राज्यानर्होऽपीदृशं धर्मं न चरेत्, किं पुनर्वाच्यं राज्याधिकारीत्यर्थमाहुः ॥ २० ॥

रा० टी०—वस्तुतस्तु अयमेव धर्मः क्षत्रियैः कर्तव्य एवेति बोधयन्नाह—क इति । प्रत्यक्षं शाश्वतो लोकतश्च पूर्वं प्राप्तत्वेन प्रत्यक्षसुखरूपफलप्रापकत्वेन चेन्द्रियविषयीभूतं पालनरूपं धर्ममुत्सृज्य त्यक्त्वा आयतिस्थमुत्तरकालभावि अत एव अलक्षणं न लक्षयति सुखं साक्षादनुभावयति अत एव अनिश्चितमेतस्मिन् काले एतत्सुखं भविष्यतीति निश्चयरहितमत एव संशयस्थं संशयविषयीभूतं धर्मं कः क्षत्रबन्धुश्चरेत् न कोऽपीत्यर्थः। तथा च श्रुतिः "को हि तद्वेद यदमुष्मिँल्लोके अस्ति न वा" इति ॥ २० ॥

गो० टी०—क इति । प्रत्यक्षं परिदृश्यमानत्यागभोगयुक्तं धर्मं परलोकश्रेयःसाधनं प्रजापालनरूपं धर्ममुत्सृज्य संशयस्थमप्रत्यक्षमङ्गलोपादिसंभावनया संशयितफलसिद्धिकमित्यर्थः, अलक्षणं लक्षणरहितं क्रियाशक्तिरपूर्वं वेति दुर्निरूपमित्यर्थः, आयतिस्थं कालान्तरभाविफलम् अनिश्चितं क्षत्रियेण प्रथममिदमनुष्ठेयमिति केनापि प्रमाणेनानिश्चितं तापसधर्मं कः क्षत्रियः चरेत् न कोऽपीत्यर्थः ॥ २० ॥

२१ ] ति० टी०—ननु शरीरक्लेशसाध्यधर्म एवान्तरङ्गस्तत्राह—अथेति । पक्षान्तरेऽथेतिशब्दः ॥ २१ ॥

रा० टी०—ननु शरीरक्लेशदानमुत्कृष्टो धर्म इत्यत आह—अथेति । क्लेशजं शरीरक्लेशजनितमेव धर्मं चरितुं कर्तुं यदीच्छसि तर्हि धर्मेण चतुरो वर्णान् पालयन् चाराद्यङ्गीकृत्य रक्षन् क्लेशं शरीरखेदमाप्नुहि ॥ २१ ॥

गो० टी०—अथ क्लेशजमेव त्वं धर्मं चरितुमिच्छसि तथापि चातुर्वर्ण्यपालनतत्तद्धर्मस्थापनादिक्लेशयुक्तत्वाद्राज्यपालनमेवाचरेत्याह—अथेति ॥ २१ ॥

२२ ] ति० टी०—नन्त्तमत्वेन श्रुतत्वात्तदाश्रमकरण

१ त्रातुमिति गो॰ पाठः । २ आश्रममिति गो. रा. पाठः । ३ प्राहुरिति गो. पाठः ।

श्रुतेन बालः स्थानेन जन्मना भवतो ह्यहम् । स कथं पालयिष्यामि भूमिं भवति तिष्ठति ॥ २३ ॥
हीनबुद्धिगुणो बालो हीनस्थानेन चाप्यहम् । भवता च विनाभूतो न वर्तयितुमुत्सहे ॥ २४ ॥
इदं निखिलमप्यग्र्यं राज्यं पित्र्यमकण्टकम् । अनुशाधि स्वधर्मेण धर्मज्ञः सह बान्धवैः ॥ २५ ॥
इहैव त्वाभिषिञ्चन्तु सर्वाः प्रकृतयः सह । ऋत्विजः सवसिष्ठाश्च मन्त्रविन्मन्त्रकोविदाः ॥ २६ ॥
अभिषिक्तस्त्वमस्माभिरयोध्यां पालने व्रज । विजित्य तरसा लोकान्मरुद्भिरिव वासवः ॥ २७ ॥
ऋणानि त्रीण्यपाकुर्वन्दुर्हृदः साधु निर्दहन् । सुहृदस्तर्पयन्कामैस्त्वमेवात्रानुशाधि माम् ॥ २८ ॥
अद्यार्य मुदिताः सन्तु सुहृदस्तेऽभिषेचने । अद्य भीताः पलायन्तु दुष्प्रदास्ते दिशो दश ॥ २९ ॥
आक्रोशं मम मातुश्च प्रमृज्य पुरुषर्षभ । अद्य तत्रभवन्तं च पितरं रक्ष किल्बिषात् ॥ ३० ॥

---

युक्तमत आह—चतुर्णामिति । सर्वेषां गृहस्थपाल्यत्वादिति भावः ॥ २२ ॥

रा० टी०—चतुर्णामिति । हे धर्मज्ञ ! चतुर्णामाश्रमाणां मध्ये गार्हस्थ्यं श्रेष्ठं त्रयाणामाश्रयीभूतत्वात्प्रधानमाश्रममाहुः तमाश्रमं त्यक्तुं कथमिच्छसि न त्यक्तव्य इत्यर्थः । 'श्रेष्ठमाश्रमम्' इति पाठः ॥ २२ ॥

गो० टी०—सर्वाश्रमधर्मापेक्षया श्रेष्ठतमो गार्हस्थ्यधर्मः कथं त्यज्यत इत्याह—चतुर्णामिति ॥ २२ ॥

२३ ] ति० टी०—श्रुतेन विद्यया बालोऽवरः जन्मना तत्संपाद्येन स्थानेन कनिष्ठभ्रातृत्वेन च बालः ॥ २३ ॥

रा० टी०—ननु त्वयैव पाल्यतामित्यत आह—श्रुतेनेति । जन्मना अवरकालप्रादुर्भूत्या अत एव स्थानेन उचितनिम्नदेशस्थित्या च श्रुतेन विद्यया च भवतो बालः अवरो यः सोऽहं भवति तिष्ठति सति भूमिं कथं पालयिष्यामि ॥ २३ ॥

गो० टी०—स्वशक्त्यापि भवतैव राज्यं पालयितव्यमित्याह—श्रुतेनेति । श्रुतेन विद्यया स्थानेन पदेन प्राप्तिक्रमेणेति यावत् ॥ २३ ॥

२४–२५] ति० टी०—हीनो बुद्धिगुणः सत्त्वं यस्य सः तेन हीनसत्त्वगुण इत्यर्थः । हीनस्थानेन चोपलक्षितः अत एव बालः त्वया विना वर्तयितुं जीवितुमपि नोत्सहे किं पुना राज्यं पालयितुमित्यर्थः ॥ २४ ॥ २५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—हीनेति । हीनाः त्वद्बुद्धिगुणेभ्यः अवराः बुद्धिगुणाः यस्य सः अत एव हीनस्थानेन निम्नदेशस्थित्या उपलक्षितः भवता विनाभूतो रहितश्च बालोऽहं वर्तयितुं प्रजाः पालयितुं नोत्सहे ॥ २४ ॥

रा० टी०—इदमिति । अकण्टकं विघ्नरहितम् अग्र्यं पौर्वकालिकं निखिलम् इदं पित्र्यं राज्यं स्वधर्मेण अनुशाधि पालय ॥ २५ ॥

गो० टी०—कथमेवमुच्यते बालत्वस्य ममापि तुल्यत्वात् भवदपेक्षया अहं कियानित्यत आह—हीनेति । हीनबुद्धिगुणः सद्गुणबुद्धिरहितः वर्तयितुं स्थातुं भवता विना तूष्णीं स्थातुमपि नोत्सहे किं पुना राज्यं कर्तुमिति भावः ॥ २४ ॥ २५ ॥

२६] ति० टी०—सह संभूय मन्त्रविदिति संबोधनम् ॥ २६ ॥

रा० टी०—इहेति । हे मन्त्रवित् ! सवसिष्ठाः वसिष्ठसहिताः ऋत्विजः प्रकृतयश्च सह एकीभूय इहैव त्वामभिषिञ्चन्तु ॥ २६ ॥

गो० टी०—इहेति । सह संभूय ॥ २६ ॥

२७ ] ति० टी०—पालने राज्यपरिपालननिमित्तम् । तरसा बलेन । लोकाञ्शत्रुलोकान्मरुद्भिरिवास्माभिः सह वासव इव त्वं विजित्य तां पालयेति शेषः ॥ २७ ॥

रा० टी०—अभिषिक्त इति । अस्माभिरभिषिक्तस्त्वं तरसा वेगेन लोकान् विजित्य मरुद्भिर्देवैः सहितः वासव इन्द्र इव पालने पालनार्थम् अयोध्यां व्रज ॥ २७ ॥

गो० टी०—अभिषिक्त इति । विजित्य स्थित इति शेषः, मरुद्भिर्देवैः ॥ २७ ॥

२८ ] ति० टी०—ऋणानीति "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति श्रुतौ ब्राह्मणपदमुपलक्षणमिति भावः । अत्रायोध्यायां स्थित्वेति शेषः ॥ २८ ॥

रा० टी०—ऋणानीति । त्रीणि ऋणानि देवऋणादीनि अपाकुर्वन् मोचयन् सन् दुर्हृदः दुष्टहृदयान् निर्दहन् सुहृदः कामैस्तदिच्छाविषयीभूतपदार्थैस्तर्पयन् सन् त्वमेवात्रायोध्यायां मामनुशाधि शिक्षय ॥ २८ ॥

गो० टी०—रामं राज्याङ्गीकरणाय प्रोत्साहयति—ऋणानीत्यादिना । दुर्हृदः शत्रून् ॥ २८ ॥ २९ ॥

२९ ] ति० टी०—दुष्प्रदा दुःखप्रदाः ॥ २९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अद्येति । हे आर्य ! ते अभिषेचने सुहृदः मुदिताः सन्तु ये दुःप्रदाः दुःखदानमनस्काः ते भीताः सन्तः पलायन्तु ॥ २९ ॥

३०] ति० टी०—आक्रोशं निन्दाम् । तत्रभवन्तं पूज्यम् ३०

रा० टी०—आक्रोशमिति । हे पुरुषर्षभ ! मम मातुश्च आक्रोशं जनापवादं प्रमृज्य तत्रभवन्तं पूज्यं पितरं किल्बिषात्पश्चात्तापाद्रक्ष ॥ ३० ॥

---

१ अनुशाधीति गो. पाठः । २ धर्मज्ञेति गो. पाठः । ३ मन्त्रविदिति गो. पाठः । ४ पलायन्तां दुर्हृदस्ते इति गो. पाठः ।

शिरसा त्वाभियाचेऽहं कुरुष्व करुणां मयि । बान्धवेषु च सर्वेषु भूतेष्विव महेश्वरः ॥ ३१ ॥
अथवा पृष्ठतः कृत्वा वनमेव भवानितः । गमिष्यति गमिष्यामि भवता सार्धमप्यहम् ॥ ३२ ॥
तथाभिरामो भरतेन ताम्यता प्रसाद्यमानः शिरसा महीपतिः ।
न चैव चक्रे गमनाय सत्त्ववान्मतिं पितुस्तद्वचने प्रतिष्ठितः ॥ ३३ ॥
तदद्भुतं स्थैर्यमवेक्ष्य राघवे समं जनो हर्षमवाप दुःखितः ।
न यात्ययोध्यामिति दुःखितोऽभवत्स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितः ॥ ३४ ॥
तमृत्विजो नैगमयूथवल्लभास्तथा विसंज्ञाश्रुकलाश्च मातरः ।
तथा ब्रुवाणं भरतं प्रतुष्टुवुः प्रणम्य रामं च ययाचिरे सह ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्येऽयोध्याकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

गो० टी०—आक्रोशमिति । आक्रोशं शापम् 'शाप आक्रोश आक्षेप' इति हलायुधः । जनकर्तृकमिति शेषः । तत्रभवन्तं पूज्यं तत्रभवानत्रभवानिति शब्दौ वृद्धैः पूज्येते ॥ ३० ॥

३१ ] ति० टी०—त्वा त्वाम् । मयि बान्धवेषु च करुणां कुर्विति संबन्धः ॥ ३१ ॥

रा० टी०—शिरसेति । शिरसा नम्रीभूतमूर्ध्ना त्वा त्वामभियाचे प्रार्थये भूतेषु महेश्वरो महादेव इव करुणां दयां कुरुष्व ३१

गो० टी०—शिरसेति । मयि बान्धवेषु च करुणां कुर्विति संबन्धः । महेश्वरो विष्णुः । 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ' इति । पूर्वप्रकृतदहरविद्याकरणमन्त्रप्रणवप्रकृतिभूताकारवाच्यो महेश्वर इत्युक्तेः । दहरोपास्यश्चापहतपाप्मत्वादिगुणकः "पुरुषोत्तमः स उत्तमः पुरुषः" इति तत्समानप्रकरणे छान्दोग्ये श्रवणात् अपहतपाप्मत्वं च रुद्रस्य नास्ति अनपहतपाप्मा वा अहमस्मीति रुद्रेणैवोक्तेः । भूतसंहाराधिकृतस्य रुद्रस्य भूतेषु करुणा च गगनकुसुमतुल्या अतः "स एकाकी न रमेत न ततो विजुगुप्सितः" इत्यादि श्रुतिस्मृत्यादिभिः सुप्रसिद्धापारकारुण्यवात्सल्यादिगुणगणः पुरुषोत्तम एव महेश्वर इति दिक् ॥ ३१ ॥ ३२ ॥

३२ ] ति० टी०—पृष्ठतः कृत्वा तिरस्कृत्य । मत्प्रार्थनामिति शेषः । इतोऽपि वनमेव जनसंबाधभयेनास्माद्वनादपि वनान्तरमित्यर्थः ॥ ३२ ॥

रा० टी०—अथवेति । अथवा यदि पृष्ठतः कृत्वा मत्प्रार्थनां तिरस्कृत्य इतो अस्माद्देशात् वनमेव भवान् गमिष्यति तदा भवता सार्धम् अहमपि गमिष्यामि ॥ ३२ ॥

३३ ] ति० टी०—ताम्यता क्लाम्यता गमनाय अयोध्यां प्रतीति शेषः ॥ ३३ ॥

रा० टी०—तथेति । ताम्यता ग्लानिं प्राप्नुवता भरतेन तथा तेन प्रकारेण प्रसाद्यमानः पितुस्तद्वचने तदाज्ञाविषयीभूतवनवासे प्रतिष्ठितः कृतनिश्चयः रामः गमनाय मतिं नैव चक्रे ३३

गो० टी०—तथेति । गमनाय अयोध्यां प्रतीति शेषः । तद्वचने तस्मिन् वचने ॥ ३३ ॥

३४ ] ति० टी०—तत्स्थैर्यं पितृवचनास्थितिस्थैर्यम् । दुःखहर्षयोर्युगपत्प्रवृत्तौ निमित्तं स्वयमेव व्याकरोति कविः—न यातीति ॥ ३४ ॥

रा० टी०—तदिति । अद्भुतं प्राकृतविलक्षणं स्थैर्यं सत्ये व्यवस्थितिं राघवे अवेक्ष्य दुःखितो जनः समं दुःखेन सहितं हर्षमवाप । तदेव विवृण्वन् आयोध्यां न याति इति हेतोः दुःखितः स्थिरप्रतिज्ञत्वमवेक्ष्य हर्षितश्चाभवत् जन इति शेषः ॥ ३४ ॥

गो० टी०—तदद्भुतमिति । समं युगपत् ॥ ३४ ॥

३५ ] ति० टी०—नैगमाः पुरे भवाः ' निगमो निश्चये वेदे पुरे पथि वणिक्पथे ' इति । तद्यूथवल्लभास्तद्गणमुख्याः । विसंज्ञा विचित्ताश्च ता अश्रुकला अश्रुप्रचुराश्च ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय-आदिकाव्येऽयोध्याकाण्डे षडुत्तरशततमः सर्गः ॥१०६॥

रा० टी०—तमिति । ऋत्विगादयः विसंज्ञा एव अश्रुकला मातरश्च सह एककालावच्छेदेनैव तथा ब्रुवाणं भरतं प्रतुष्टुवुः प्रशशंसुः तं रामं प्रणम्य चकारेण यथोचितं प्रत्यभिवाद्य सहभरतप्रार्थनासमानकाले ययाचिरे प्रार्थयामासुः । तत्र नैगमाः पुरवासिनः ' निगमो निश्चये वेदे पुरे पथि वणिक्पथे ' इति वैजयन्ती । यूथवल्लभा मन्त्र्यादिगणस्वामिनः प्रणम्य एव राम स्तमिति कर्मधारयो वा ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामयणशिरोमणावयोध्याकाण्डे षडधिकशततमः सर्गः ॥१०६॥

गो० टी०—तमिति । नैगमयूथवल्लभाः निगमः पुरं तत्र भवाः नैगमाः । ' निगमो निश्चये वेदे पुरे पथि वणिक्पथे' इति वैजयन्ती । यूथवल्लभा गणमुख्याः विसंज्ञाश्रुकलाः विगतसंज्ञाः अश्रुक्लिन्नाश्चेत्यर्थः ॥ ३५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने-ऽयोध्याकाण्डव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

---

१ अथैतदिति गो. पाठः । २ तथाद्वीति गो. पाठः । ३ व्यवस्थित इति गो. पाठः । ४ तदेति गो. पाठः ।

# सप्तोत्तरशततमः सर्गः ।

स्वस्मै दशरथकृतराज्यदाने कैकेय्यां तस्य कामासक्तिं मन्वानं भरतं राज्यदाने कन्याशुल्कं प्रत्युपकृतं चेत्युभयोर्हेतुत्वं दशरथे दोषसंसर्गशून्यत्वं च प्रदर्श्य पुत्रशब्दनिर्वचनेन पितृत्तारणमेव पुत्रेतिकर्तव्यमतस्तदादिष्टं राज्यमेवानुशाधीति रामस्तं प्रवर्तयति ।

पुनरेवं ब्रुवाणं तं भरतं लक्ष्मणाग्रजः । प्रत्युवाच ततः श्रीमाञ्ज्ञातिमध्ये [1]सुसत्कृतः ॥ १ ॥
उपपन्नमिदं वाक्यं [2]यस्त्वमेवमभाषथाः । जातः पुत्रो दशरथात्कैकेय्यां राजसत्तमात् ॥ २ ॥
पुरा भ्रातः पिता नः स मातरं ते समुद्वहन् । मातामहे समाश्रौषीद्राज्यशुल्कमनुत्तमम् ॥ ३ ॥
[3]देवासुरे च संग्रामे जनन्यै तव पार्थिवः । संप्रहृष्टो ददौ राजा वरमाराधितः प्रभुः ॥ ४ ॥
ततः सा संप्रतिश्राव्य तव माता यशस्विनी । अयाचत नरश्रेष्ठं द्वौ वरौ वरवर्णिनी ॥ ५ ॥
तव राज्यं नरव्याघ्र मम प्रव्राजनं तथा । [4]तच्च राजा [5]तथा तस्यै नियुक्तः प्रददौ [6]वरम् ॥ ६ ॥

१ ] ति० टी०–रामो राजनियोगपालनमेव परमो धर्मो बहूनां सुखसाधनत्वादित्याशयेनावददित्याह–पुनरिति ॥१॥

रा० टी०–भरतवचनश्रवणानन्तरकालिकरामोक्तिं वर्णयन्नाह–पुनरित्यादिभिः । ज्ञातिमध्ये सुसत्कृतो रामः एवं ब्रुवाणं भरतं प्रत्युवाच ॥ १ ॥

गो० टी०–पुनरित्यादि–अभिसत्कृतः भरतेन स्तोत्रादिना सम्यगभिपूजितः ॥ १ ॥ २ ॥

२ ] ति० टी०–इदमुक्तवाक्यम् उपपन्नं युक्तिमत् । तत्र हेतुः–जात इत्यादि ॥ २ ॥

रा० टी०–तदाकारमाह–उपपन्नमित्यादिभिः । राजसत्तमात् राजश्रेष्ठात् दशरथात् जातस्त्वं यत् वाक्यम् अभाषथाः तत् उपपन्नं युक्तमेव ॥ २ ॥

३ ] ति० टी०–इदानीं त्वया राज्यस्य मया वनवासस्य चाकरणे राज्ञः प्रतिज्ञाहानिकृतो महानधर्म इत्याह–पुरेति । तव पुत्र्यां जनिष्यते तस्मै राज्यं दास्यामीति प्रतिज्ञातवानित्यर्थः ॥ ३ ॥

रा० टी०–ननु मदुक्तस्योपपन्नत्वे तथैव क्रियतामित्यत आह–पुरेत्यादिभिः । हे भ्रातः! नः पिता ते मातरं समुद्वहन् सन् राज्यशुल्कं तव पुत्र्यां यः पुत्रो भविता तस्मै राज्यं दास्यामीति मूल्यं ते मातामहे मातामहसन्निधौ समाश्रौषीत् प्रतिज्ञामकरोत् ॥ ३ ॥

गो० टी०–काममोहेन पित्रा कृतमिति पितरं निन्दन्तं भरतं प्रति रामो मोहहेतुप्रसक्तिरेव नास्तीति दुष्परिहरं हेत्वन्तरमाह–पुरेत्यादिना । राज्यशुल्कं समाश्रौषीत् तव पुत्रिकायां यो जनिष्यते तस्मै राज्यं दास्यामीति प्रतिज्ञां कृतवान् ॥ ३ ॥

४ ] ति० टी०–ननु ‘स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे । गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥’ इति स्मृतेः कौसल्यायां विद्यमानायां कैकेयीविवाहस्य नर्मविवाहत्वात्तत्प्रतिज्ञाहानिर्न दोषायेत्यत आह–देवासुरे चेति । देवासुरे तत्संबन्धिनि । एवं चोपकारप्रत्युपकाररूपत्वादेतदनृते महान्दोष इति भावः । वरं वरद्वयम् ॥ ४ ॥

रा० टी०–देवेति । देवासुरे सङ्ग्रामे च तव जनन्यै संप्रहृष्टः राजा अत्यनुरागवान् पार्थिवः नः पिता वरं वरद्वयं ददौ ॥४॥

गो० टी०–दैवासुर इति । दैवासुरे देवासुरसंबन्धिनि वरं वरद्वयम् ॥ ४ ॥

५ ] ति० टी०–ततो हेतोः संप्रतिश्राव्य प्रतिज्ञां कारयित्वा ॥ ५ ॥

रा० टी०–तत इति । ततः वरद्वयप्रदानाद्धेतोः सा यशस्विनी वरवर्णिनी विलक्षणगौराङ्गी किंच वरदानवृत्तान्तवर्णनकर्त्री तव माता संप्रतिश्राव्यं संस्मार्य किंच पूर्वदत्तं वरद्वयमिदानीमवश्यं ददामीति प्रतिज्ञां कारयित्वा नरश्रेष्ठं राजानं तव राज्यं मम प्रव्राजनं च द्वौ वरौ अयाचत वरं नियुक्तस्तया प्रार्थितो राजा तस्यै तव मात्रे प्रददौ । श्लोकद्वयमेकान्वयि । जात्यभिप्रायेणैकवचनम् ॥ ५ ॥ ६ ॥

गो० टी०–तत इति । तव माता संप्रतिश्राव्य शपथं कारयित्वा ततः द्वौ वरौ अयाचतेति संबन्धः ॥ ५ ॥

६ ] ति० टी०–याचनप्रकारमाह–तवेति । नियुक्तो वरबलेन नियोजितः । तद्वरं तद्रूपवरम् ॥ ६ ॥

गो० टी०–याच्ञाप्रकारमाह–तवेत्यादिना । ननु कैकेयी स्वोद्वाहकाले कन्याशुल्कत्वेन भरतस्य प्राप्तं राज्यं वरविषयत्वेन कथमयाचत, उच्यते बाल्यवृत्तान्तत्वाच्चिरकालान्तरितत्वाच्च सन्निहितं वरद्वयमेव याचितवतीति न दोषः । मध्ये प्राप्तस्यापि वरद्वयस्य किं न स्मरसि कैकेयीति मन्थरया स्मारितत्वात् चिरकालवृत्तान्तस्य विस्मरणमुपपन्नमेव । ननु दशरथ उद्वाहकाले कैकेयीपुत्राय प्रतिश्रुतं राज्यं रामाय दातुं कथमुद्युक्तवान् सत्यम् ‘उद्वाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे । विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्याहुरपातकानि’ इति न्यायेन दोषाभावं हृदि निधाय तथा कृतवानिति न दोषः केकयोऽपि रामगुणानुविद्धतया राज्यं न

१ ऽभीति गो. पाठः । २ यस्त्वमिति गो. पाठः । ३ दैवासुरे इति गो. पाठः । ४ तौ चेति गो. पाठः । ५ तदेति गो. पाठः । ६ वरानिति गो.पाठः ।

तन पित्राहमप्यत्र नियुक्तः पुरुषर्षभ । चतुर्दश वने वासं वर्षाणि वरदानिकम् ॥ ७ ॥
सोऽहं वनमिदं प्राप्तो निर्जनं लक्ष्मणान्वितः । सीतया चाप्रतिद्वन्द्वः सत्यवादे स्थितः पितुः ॥ ८ ॥
भवानपि तथेत्येव पितरं सत्यवादिनम् । कर्तुमर्हसि[1] राजेन्द्र क्षिप्रमेवाभिषिञ्चनात्[2] ॥ ९ ॥
ऋणान्मोचय राजानं मत्कृते भरत प्रभुम् । पितरं त्राहि धर्मज्ञ[3] मातरं चाभिनन्दय ॥ १० ॥
श्रूयते [4]धीमता तात श्रुतिर्गीता यशस्विना[5] । गयेन यजमानेन गयेष्वेव पितॄन्प्रति ॥ ११ ॥
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः पितॄन्यः पाति सर्वतः[6] ॥ १२ ॥
एष्टव्या बहवः पुत्रा गुणवन्तो बहुश्रुताः । तेषां वै समवेतानामपि कश्चिद्गयां व्रजेत् ॥ १३ ॥

---

हित्राय याचितवान् रामोऽपि सुमन्त्रादिभ्य इदं रहस्यं तवान् अत एव हि ते शृण्वन्तोऽनुमान्य स्थितवन्त इति ष्टव्यम् ॥ ६ ॥

७ ] ति० टी०—अत्र दण्डकाख्ये वने चतुर्दश वर्षाणि दानिकं वरदाननिमित्तकं वासं नियुक्तः तं प्रति प्रेरित यर्थः। अत्रायमप्यर्थः—देवेभ्यो मद्दत्तवरदाननिमित्तकम् अन्तमिणा तथा प्रेरणाद् अत एवात्र दण्डकारण्ये एतत्प्रसङ्गेनैव प्रयोजननिष्पत्तेरिति ॥ ७ ॥

रा० टी०—तेनेति । तेन हेतुना अत्र अस्मिन् दण्डकाण्ये वने वरदानिकं वरदानहेतुकं चतुर्दश वर्षाणि वा संप्रति त्राऽहं नियुक्तः ॥ ७ ॥

गो० टी०—तेनेति । तेन कैकेय्यै प्रतिश्रुतराज्येन अत्र । दण्डकारण्ये वरदानिकं वरदाननिमित्तकं वासं नियुक्त इति न्धः ॥ ७ ॥

८ ] ति० टी०—नन्च वने रक्षआदिभ्यो नानादुःखसंभावयतोऽप्रतिद्वन्द्व इति । समाधिकबलशत्रुहीनः सर्वेऽपि मत्तो नबला एवेति न तद्भयावकाश इति व्यङ्ग्योऽर्थः, आपाततस्तु प्रतिद्वन्द्वः स्पर्धारहितः इति ॥ ८ ॥

रा० टी०—स इति । सः पित्राज्ञप्तः पितुः सत्यवादं स्थितः प्रतिद्वन्द्वः शीतोष्णादिबाधारहितोऽहमिदं वनं प्राप्तः ॥ ८ ॥

गो० टी०—स इति । अप्रतिद्वन्द्वः केनापि वारयितुमश्य इति यावत् ॥ ८ ॥ ९ ॥

९ ] ति० टी०—तथेत्येव तथैवेति पितृनियुक्त एवेति । र्हसीत्यार्षम् । ' अर्हति ' इति पाठान्तरम् अत एव संबोधनं जेन्द्रेति ॥ ९ ॥

रा० टी०—भवानिति । अभिषेचनाद् अभिषेचनेन स्वकर्तृराज्यपालनेन राजेन्द्र पितरं सत्यवादिनं कर्तुं भवान् क्षिप्रं प्रमेवार्हति ॥ ९ ॥

१० ] ति० टी०— ऋणात्कैकेयीसंबन्ध्यृणाद् । मत्कृते प्रीत्यर्थम् । त्राहीत्यार्षम् । अभिनन्दय न तु निन्दय कृतस्यार्थस्य बहूपकारकत्वादिति व्यङ्ग्यम् ॥ १० ॥

रा० टी०—ऋणादिति । हे भरत ! मत्कृते मन्नियोगे सति राजानं पितरं ऋणान्मातृसंबन्ध्यावश्यदेयात् मोचय अत एव मातरमभिनन्दय पितरं त्राहि सत्यप्रतिज्ञत्वपालनया रक्ष च । त्राहीत्यत्रात्मनेपदाभावः संज्ञापूर्वकविधेरनित्यत्वात्, व्याख्यानान्तरं च चक्रिँत्रायस्वेत्यत्रत्यमनोरमायुक्तदिशाऽवगन्तव्यम् ॥ १० ॥

गो० टी०—ऋणादिति । ऋणान्मोचय राजानं स्वाभिषेचनेन कैकेय्या ऋणाद्राजानं मोचयेत्यर्थः ॥ १० ॥

११ ] ति० टी०—स्वोक्तस्यावश्यकत्वे संमतिमाह—श्रूयते इति । गयेषु गयाप्रदेशेषु यजमानेन यागं कुर्वता पितॄन्प्रति पितृप्रीतिमुद्दिश्य ॥ ११ ॥

रा० टी०—पितृवचनपालनस्यावश्यकत्वे शिष्टाचारं प्रमाणयन्नाह—श्रूयत इत्यादिभिः । गयेषु गयाभिधतीर्थप्रदेशेषु यजमानेन यागं कुर्वता गयेन तदभिधराजेन पितॄन्प्रति गीता कथिता श्रुतिः प्रमाणिकात्वेन वेदसदृशवचनविशेषः श्रूयते ॥ ११ ॥

गो० टी०—स्वोक्तार्थस्यावश्यकर्तव्यत्वे संमतिमाह—श्रूयत इत्यादिना । गयेन गयाख्येन गयेषु गयाख्येषु प्रदेशेषु ११

१२ ] ति० टी०—तां श्रुतिमाह—पुन्नाम्न इति । पुदिति नरकनाम त्रायतेः कः प्रत्ययः । व्युत्पत्त्यन्तरमाह—पितॄनिति । पितॄन्पाति इत्यर्थे पुत्रस्य पृषोदरादित्वात्साधुत्वम् । पितॄनुद्दिश्य कृतेष्टापूर्तादिना स्वर्लोकप्रापणेन तेषां रक्षणमित्याहुः १२

रा० टी०—ननु का सा श्रुतिरित्यत आह—पुन्नाम्न इति । यस्माद्धेतोः पुन्नाम्नस्तदभिधात् नरकात् पितरं यः सुतस्त्रायते तस्माद्धेतोः स पुत्र इति प्रोक्तः संज्ञां प्राप्तः अत एव पितॄन् सर्वतः पाति रक्षति ॥ १२ ॥

गो० टी०—पुन्नाम्न इति । पुन्नाम्नो नरकात्त्रायत इति पुत्रः पितॄन् पाति तदुद्देशकृतेष्टापूर्तादिना स्वर्लोकं प्रापय्य रक्षतीत्यर्थः ॥ १२ ॥

१३ ] ति० टी०—गयां पितृस्वर्गसाधनं गयाक्षेत्रम् । एषा च पितॄणां परलोकसाधनं पुत्रेणावश्यं कार्यमित्यर्थे संमतिः १३

रा० टी०—एष्टव्या इति । गुणवन्तः सौशील्यादिगुणविशिष्टाः बहुश्रुताः अनेकशास्त्रसंपन्नाः बहवः पुत्राः एष्टव्या

---

१ अर्हतीति गो. रा. पाठः । २ अभिषेचनादिति गो. रा. पाठः । ३ चापि धर्मज्ञमिति गो. पाठः। ४ हि पुरेति गो. पाठः । ५ यशस्विनीति पाठः । ६ यस्पाति वा सुत इति गो. पाठः ।

एवं राजर्षयः सर्वे प्रतीता र[1]घुनन्दन । तस्मात्त्राहि नरश्रेष्ठ पितरं नरकात्प्रभो ॥ १४ ॥
अयोध्यां गच्छ भरत प्रकृती[2]रुपरञ्जय । शत्रुघ्नसहितो वीर सह सर्वैर्द्विजातिभिः ॥ १५ ॥
प्रवेक्ष्ये दण्डकारण्यमहमप्यविलम्बयन् । आभ्यां तु सहितो[3] वीर वैदेह्या लक्ष्मणेन च ॥ १६ ॥

त्वं राजा भरत भव स्वयं नराणां वन्यानामहमपि राजराण्मृगाणाम् ।
गच्छ त्वं पुरवरमद्य संप्रहृष्टः संहृष्टस्त्वहमपि दण्डकान्प्रवेक्ष्ये ॥ १७ ॥
छायां ते दिनकरभाः प्रबाधमानं वर्षत्रं भरत करोतु मूर्ध्नि शीताम् ।
एतेषामहमपि काननद्रुमाणां छायां तामतिश[4]यिनीं शनैः श्रयिष्ये ॥ १८ ॥
शत्रुघ्नस्त्व[5]तुलमतिस्तु ते सहायः सौमित्रिर्मम विदितः प्रधानमित्रम् ।
चत्वारस्तनयवरा वयं नरेन्द्रं सत्यस्थं भरत चराम मा [6]विषीद ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

## अष्टोत्तरशततमः सर्गः ।

रामेणाऽऽकुण्ठितवचसि भरते रामे राज्येप्साम्रुत्पिपादयिषुः कृतनास्तिकमतानुवादो जावालिनामा महर्षिस्तस्मै राज्योपभोगं रोचयते।

आश्वासयन्तं भरतं जावालिर्ब्राह्मणोत्तमः । उवाच रामं धर्मज्ञं धर्मापेतमिदं वचः ॥ १ ॥

अभिकाङ्क्षणीयाः । तत्प्रयोजनमाह—समवेतानां प्राप्तानां तेषां पुत्राणां मध्ये कश्चित्पुत्रो गयां व्रजेत् ॥ १३ ॥

गो० टी०—एष्टव्या इति । एष्टव्याः काङ्क्षितव्याः ॥१३॥

१४-१६ ] ति० टी०—एवं पितृपरलोकसाधनम्१४-१६

रा० टी०—एवमिति । हे रघुनन्दन ! यतः सर्वे राजर्षय एवं प्रतीताः विश्वासं प्राप्तास्तस्माद्धेतोः पितरं नरकात् जनापवादशब्दात् त्राहि ॥ १४ ॥

रा० टी०—रक्षणप्रकारमाह—अयोध्यामिति । अयोध्यां गच्छ प्रकृतीः प्रजा उपरञ्जय पालयेत्यर्थः ॥ १५ ॥

रा० टी०—प्रवेक्ष्य इतिं । अहमपि अविलम्बयन् सन् दण्डकारण्यं प्रवेक्ष्ये ॥ १६ ॥

गो० टी०—एवमिति । एवमुक्तप्रकारेण प्रतीताः निश्चितवन्तः ॥ १४—१६ ॥

१७ ] ति० टी०—वन्यानामिति अनेन भाविवानरराजाधिपत्यादि सूचितम् ॥ १७ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—त्वमिति द्वाभ्याम् । हे भरत! त्वं नराणां राजा भव राजराट् राजराजोऽप्यहं मृगाणां राजा भवामीति शेषः, अतः संप्रहृष्टस्त्वं पुरवरमयोध्यां गच्छ अहमपि दण्डकान् प्रवेक्ष्ये ॥ १७ ॥

गो० टी०—त्वमिति । मृगाणां राजराट् भवामि मृगाणां रक्षकः शिक्षकश्च भवामीत्यर्थः । अत्र मृगशब्देन तत्तुल्या ऋषयो लक्ष्यन्ते, यद्वा भाविसुग्रीवरजनवालिवधादीनां बीजन्यासोऽयम् ॥ १७ ॥

१८ ] ति० टी०—दिनकरभा इति द्वितीयाबहुवचनम् । वर्षत्रं छत्रम् । शीतां छायामित्यन्वयः ॥ १८ ॥

रा० टी०—छायामिति । हे भरत ! दिनकरभाः सूर्यतेजांसि प्रबाधमानं पराभावयमानं वर्षत्रं छत्रं ते मूर्ध्नि शीतां छायां करोतु, एतेषां काननद्रुमाणां तां शीतामतिशयनीं निबिडां छायामहमपि श्रयिष्ये ॥ १८ ॥

गो० टी०—छायां त इति । वर्षत्रं छत्रम् 'सुखी श्रयिष्य' इति पाठः ॥ १८ ॥

१९ ] ति० टी०—सौमित्रिर्लक्ष्मणः । चराम विषौ कोट् संपादयामेत्यर्थः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्ताधिकशततमः सर्गः॥१०७॥

रा० टी०—शत्रुघ्न इति । अतुलमतिः शत्रुघ्नस्ते तव सहायोऽस्तु, विदितः प्रसिद्धः सौमित्रिः मम प्रधानमित्रमस्तु, अतः हे भरत ! चत्वारस्तनयवराः पुत्रोत्तमाः वयं नरेन्द्रं पितरं सत्यस्थं सत्यप्रतिज्ञत्वं चराम प्रापयाम अतः मा विषीद ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

गो० टी०—शत्रुघ्न इति । चराम करवामेत्यर्थः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तोत्तरशततमः सर्गः ॥१०७॥

१ ] ति० टी०—भरताश्वासनं कुर्वन्तं रामं धर्मापेतं धर्ममार्गविरुद्धं लोकायतिकमतावलम्बनमिति यावत्, वच उवाचेत्यन्वयः ॥ १ ॥

रा० टी०—रामकर्तृकाश्वासनानन्तरकालिकं वृत्तान्तमाह—

१ राजनन्दनेति गो.पाठः। २ अन्विति गो.पाठः। ३ राजसिति गो.पाठः। ४ शमिमीं सुखीति गो.पाठः। ५ कुशलमतिरिति गो.पाठः। ६ विषादमिति गो.पाठः।

साधु राघव मा भूत्ते बुद्धिरेवं निरर्थिका । प्राकृतस्य नरस्येव ह्यार्यबुद्धेस्तपस्विनः ॥ २ ॥
कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित् । एको हि जायते जन्तुरेक एव विनश्यति ॥ ३ ॥
तस्मान्माता पिता चेति राम सज्जेत यो नरः । उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित् ॥ ४ ॥
यथा ग्रामान्तरं गच्छन्नरः कश्चिद्बहिर्वसेत् । उत्सृज्य च तमावासं प्रतिष्ठेतापरेऽहनि ॥ ५ ॥
एवमेव मनुष्याणां पिता माता गृहं वसु । आवासमात्रं काकुत्स्थ सज्जन्ते नात्र सज्जनाः ॥ ६ ॥
पित्र्यं राज्यं समुत्सृज्य स नार्हसि नरोत्तम । आस्थातुं कापथं दुःखं विषमं बहुकण्टकम् ॥ ७ ॥
समृद्धायामयोध्यायामात्मानमभिषेचय । एकवेणीधरा हि त्वां नगरी संप्रतीक्षते ॥ ८ ॥
राजभोगाननुभवन्महार्हान्पार्थिवात्मज । विहर त्वमयोध्यायां यथा शक्रस्त्रिविष्टपे ॥ ९ ॥

---

आश्वासयन्तमित्यादिभिः । भरतमाश्वासयन्तं रामं धर्मापेतं वेदोक्तधर्मरहितमिदं वचः ब्राह्मणोत्तमः जाबालिरुवाच ॥ १ ॥

गो० टी०—एवं रामेणोक्ते निरुत्तरतया स्थितं भरतमालोक्य हितपरतया जाबालिश्चार्वाकमतमाश्रित्योत्तरमाह अष्टोत्तरशततमे—आश्वासयन्तमित्यादिना । ब्राह्मणोत्तम इत्यनेन वक्ष्यमाणं नास्तिकवचनमहृदयमिति द्योत्यते, धर्मापेतं वैदिकधर्मापेतम् ॥ १ ॥

२ ] ति० टी०—साधु सम्यग्युक्तिमदिदं वच इति पूर्वान्वय्येतत् । इदंशब्दार्थो राघवेत्यादि । प्राकृतस्य पामरस्य नरस्येव निरर्थिका एवं बुद्धिः पितृवचः पालनीयमित्येवंरूपा आर्यबुद्धेस्तपस्विनस्ते मा भूत् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—साध्वित्यादिभिः । हे राघव ! आर्यबुद्धेः प्रशस्तबुद्धिमतः तपस्विनः कर्मनिरतस्य प्राकृतस्य नरस्य निरर्थिका परमार्थरहिता बुद्धिरिव एवं इयं ते बुद्धिः साधु यथा स्यात्तथा मा भूत्, प्राकृतस्येवेत्युक्त्या रामस्य प्राकृतविलक्षणत्वं सूचितम् ॥ २ ॥

गो० टी०—साध्विति । बुद्धिः साधु मा भूत् सम्यक् निवर्त्यतामित्यर्थः ॥ २ ॥

३ ] ति० टी०—कुतो मा भूदित्यत्र पितापुत्रसंबन्धस्यैव मिथ्यात्वादित्याह—क इति । कस्य पुरुषस्य केनचित्संबन्धात् किमाप्यं किं प्राप्यं न किमपीत्यर्थः, संबन्धाभावादिति भावः । संबन्धाभावे हेतुमाह—एको हीति ॥ ३ ॥

रा० टी०—तद्बुद्धेर्निरर्थकत्वं बोधयन्नाह—क इति । यतः जन्तुः एक एव जायते उत्पद्यते एकः पुत्रादिरहित एव विनश्यति अतः कः पुरुषः कस्य बन्धुः अनुरागवान् केनचित्पुरुषेण कस्य पुरुषस्य किं वस्तु प्राप्यं स्वकीयत्वेन प्राप्यं केनचित्कस्यचित्संबन्धाभावात्सर्वं निरर्थकमित्यर्थः ॥ ३ ॥

गो० टी०—क इति । कस्य पुरुषस्य केनचित्साधनेन किमाप्यं न किमपीत्यर्थः ॥ ३ ॥ ४ ॥

४–५ ] ति० टी०—यः सज्जेत स उन्मत्त इव ज्ञेयः ॥ ४ ॥ ५ ॥

६ ] ति० टी०—आवासमात्रं पान्थानामिव अतो नात्र सज्जनाः सज्जन्ते ॥ ६ ॥

रा० टी०—तस्मादिति । तस्मात्संबन्धाभावाद्धेतोः इयं मम माता अयं च मत्पिता इति बुद्ध्या यः सज्जेत आसक्तो भवेत् सः उन्मत्त इव ज्ञेयः यतः कस्यचित् संबन्धी कश्चिन्नास्ति ॥ ४ ॥

रा० टी०—यथेति । यथा ग्रामान्तरं गच्छन् कश्चिन्नरः बहिः वसेत् अपरे अहनि तमावासमुत्सृज्य परित्यज्य प्रतिष्ठेत अन्यत्र गच्छेत् एवं मनुष्याणां पित्रादिः आवासमात्रं मार्गगृहसदृशम् अतः अत्र पित्रादिषु सज्जनाः न सज्जन्ते । श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—यथेत्यादि । आवासमात्रमिति मार्गस्थसत्रशालायां विश्रमार्थं क्षणं निवासेऽपि तद्विसृज्य गच्छतः पथिकस्य तच्चिन्तानवृत्तिवत् यावत्संश्लेषमेव मातापित्रादयोऽनुवर्तनीयाः विश्लेषे तत्स्मृतिरपि विफला किमुत तत्प्रीत्यर्थकार्याचरणमिति भावः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—पित्र्यं राज्यमित्यास्तिकमतावलम्बिरामाभिप्रायेणोक्तिः । कापथं वनमार्गम् आस्तिकसेव्यं मार्गं च ॥ ७ ॥

रा० टी०—पित्र्यमिति । सः ज्ञाततत्त्वस्त्वं राज्यं समुत्सृज्य बहुकण्टकं विषमं निम्नोन्नतविशिष्टमत एव दुःखं दुःखप्रदं कुपथं कुत्सितमार्गमास्थातुं त्वं नार्हसि ॥ ७ ॥

गो० टी०—पित्र्यमिति । रामाभिप्रायेणेदं परप्रतीत्या परो बोधनीय इति न्यायात् कापथं कुत्सितमार्गं दुःखं दुःखप्रदं विषमं यौवनानुचितं बहुकण्टकम् अनेकोपप्लवसहितम् । कापथमित्यनेनानुचितवानप्रस्थमार्ग एवोच्यते ॥ ७ ॥

८–९ ] ति० टी०—एकवेणीधरत्वं विरहिणीलक्षणम् । त्वा त्वाम् ॥ ८ ॥ ९ ॥

रा० टी०—समृद्धायामिति । आत्मानमभिषेचय हि यतः नगरी अयोध्या एकवेणीधरा सती त्वां संप्रतीक्षते, एकवेणीधरात्वं प्रोषितभर्तृकाया लक्षणं तेनायोध्यानिष्ठोऽत्यनुरागः सूचितः ॥ ८ ॥

रा० टी०—राजभोगानिति । महार्हान् अतिप्रशंसनी-

---

१ मनस्विन इति गो. पाठः । २ यदेक इति गो. पाठः । ३ कश्चित्कचिदिति गो. पाठः । ४ परित्यज्येति गो. रा. पाठः । ५ त्वामिति गो. रा. पाठः ।

न ते कश्चिद्दशरथस्त्वं च तस्य न कश्चन । अन्यो राजा त्वमन्यस्तु तस्मात्कुरु यदुच्यते ॥ १० ॥
बीजमात्रं पिता जन्तोः शुक्रं शोणितमेव च । संयुक्तमृतुमन्मात्रा पुरुषस्येह जन्म तत् ॥ ११ ॥
गतः स नृपतिस्तत्र गन्तव्यं यत्र तेन वै । प्रवृत्तिरेषा भूतानां त्वं तु मिथ्या विहन्यसे ॥ १२ ॥
अर्थधर्मपरा ये ये तांस्ताञ्शोचामि नेतरान् । ते हि दुःखमिह प्राप्य विनाशं प्रेत्य लेभिरे ॥ १३ ॥
अष्टकापितृदैवत्यमित्ययं प्रसृतो जनः । अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ १४ ॥

ग्यान् राजभोगान् अनुभवन् सन् त्रिविष्टपे स्वर्गे शक्र इव अयोध्यायां विहर ॥ ९ ॥

गो० टी०—समृद्धायामिति । एकवेणीधरा व्रतपरायणेत्यर्थः, नगरी तदधिदेवता ॥ ८ ॥ ९ ॥

१०] ति० टी०—उक्तं संबन्धाभावमुपसंहरति—न ते इति । मिथ्यापितृवचनाभिनिवेशं मुक्त्वा राज्यं कुर्विति यदुच्यते तत्कुरु । अन्यस्त्वज्जनकादन्यः संप्रति राजा । एवं क्षणभङ्गवादेनान्यत्वं गूढाशयतयोक्तम् । नन्वेवमपि तत्संतानविविष्टतया कश्चित्संबन्धो भवेत्, अन्यथा पितरं विनापि पुत्रोत्पत्तिः स्यादिति चेन्न, तावतापि निमित्तकारणत्वमेव नोपादानत्वम्, तेन यूकालिक्षादेरिव तवापि तेन न कश्चित्संबन्ध इत्याशयः ॥ १० ॥

रा० टी०—ननु पित्रा वनवासाय नियुक्तत्वात्कथमेवं कर्तव्यमित्यत आह—नेति । तस्मात्संबन्धाभावाद्धेतोः यन्मयोच्यते तत्कुरु ॥ १० ॥

गो० टी०—न ते कश्चिदिति । यदुच्यते मयेति शेषः ॥ १० ॥

११ ] ति० टी०—बीजमात्रं निमित्तकारणमात्रम् । मात्रपदेनोपादानत्वव्यावृत्तिः । तर्ह्युपादानं किं तत्राह—ऋतुमन्मात्रेति ऋतुमत्या मात्रेत्यर्थे पुंवद्भावः । यत्तादृश्या मात्रा गर्भे धृतं संयुक्तं परस्परमिलितं शुक्रं शोणितं च तदिह लोके पुरुषस्य शरीरस्य जन्मोपादानकारणं भवतीत्यर्थः । एवं च शुक्रशोणितयोगादाकृष्टपञ्चभूतसमूह एव पुरुषश्चेतनो न तस्य केनचित्संबन्ध इत्याशयः ॥ ११ ॥

रा० टी०—नन्वेतद्देहस्य पितुरुपादानत्वात् कथं संबन्धाभाव इत्यत आह—बीजेति । यतः ऋतुमती चासौ माता च तया संयुक्तं संयोजितं यत् शुक्रं शोणितं च तत्तस्मादेवास्य इह जन्म, एतेन शुक्रशोणितयोरुपादानत्वं सूचितं पिता बीजमात्रहेतुरेव न तूपादानमित्यर्थः ॥ ११ ॥

गो० टी०—बीजमात्रमिति । पिता जन्तोर्बीजमात्रम् अल्पकारणं प्रधानकारणं तु ऋतुमन्मात्रा संयुक्तं धृतं शुक्रं रुधिरमेव च शुक्रशोणितमेव तत् शुक्रशोणितं पुरुषस्य जन्मकारणम् ॥ ११ ॥

१२ ] ति० टी०—गत इति । यत्र येषु भूतेषु गन्तव्यं तत्र तेषु गतो लयं प्राप्तः त्वमपि तथैव लयं प्राप्स्यसीति स्थिरस्य कस्यचिदभावात्कः केन संबन्ध इति भावः । इयं एषा भूतसमूहरूपस्य तेषु लयप्राप्तिरूपा प्रवृत्तिर्मर्त्यानां स्वभावप्राप्तेति शेषः, अतस्त्वं मिथ्या विहन्यसे राज्यरूपात्पुरुषार्थादिति शेषः ॥ १२ ॥

रा० टी०—ननु निमित्तत्वेऽपि संबन्धाभावोऽनुपपन्न इत्यत आह—गत इति । यत्र तेन नृपतिना गन्तव्यं तत्र गतः एतेन एकस्य संबन्धिनो नष्टत्वात्संबन्धोऽपि नष्ट इत्यर्थः, अतः यया पितृत्वादिविषयिण्या प्रवृत्त्या त्वं मिथ्या विहन्यसे पराभाव्यसे सा एषा प्रवृत्तिः भूतानां प्राकृतजन्तूनाम्, एतेन तवायं त्यागो नोचित इति सूचितम् ॥ १२ ॥

गो० टी०—गत इति । तेन नृपेण यत्र येषु गन्तव्यं स नृपतिस्तत्र गतः पञ्चभूतेषु लयं प्राप्त इत्यर्थः, पञ्चभूतमयत्वान्नरपतिशरीरस्य तदतिरिक्तस्य आत्मनोऽभावात् मर्त्यानां मरणशीलानामेषा प्रवृत्तिरयं स्वभाव इत्यर्थः, त्वं तु मिथ्या विहन्यसे मिथ्याभूतेन संबन्धेन पीड्यसे ॥ १२ ॥

१३ ] ति० टी०—नन्वर्थविघातेऽपि धर्मो मे भविष्यतीत्यत्राह—अर्थेत्यादि । अर्थे प्रत्यक्षसिद्धपुरुषार्थे प्राप्ते तं परित्यज्य ये ये आस्तिका धर्मपरास्तांस्ताञ्शोचामि धर्मफलभोक्तुरभावादिति भावः । तदेवाह—ते हीति । प्रेत्यान्तसमयं प्राप्य विनाशं भेजिरे, न स्वत्रोपार्जितधर्मस्य तत्रावस्थितिरस्ति । ‘ प्राप्य विनाशं प्रतिपेदिरे ’ इति पाठान्तरम् ॥ १३ ॥

रा० टी०—अर्थेति । ये ये पुरुषाः अर्थधर्मपराः अर्थधर्मयोरर्जने कृतश्रमास्तांस्तान् शोचामि तच्छ्रमाणां निरर्थकत्वात्पश्चात्तापं करोमीत्यर्थः । निरर्थकत्वमेवोपपादयति—ते कृतश्रमा जनाः इहास्मिन् भोगसमये दुःखं तत्कर्मश्रमजनितखेदं प्राप्य विनाशं स्वविध्वंसं लेभिरे, एतेन भोगं चिकीर्षोर्विनाशस्यावश्यकत्वात् श्रमस्यैव तेषां लाभ इति सूचितम् ॥ १३ ॥

गो० टी०—अर्थधर्मपरा इति । अर्थधर्मपराः प्रत्यक्षसौख्यं विहाय केवलार्थसंपादनपराः धर्मपराश्च इतरान् केवलप्रत्यक्षसुखानुभवपरान् । अर्थधर्मपरविषयशोकहेतुमाह—ते हीति । प्रेत्यापि विनाशं दुःखं भेजिर इति संबन्धः ॥ १३ ॥

१४ ] ति० टी०—नन्वेवं श्राद्धाद्याचारासंगतिस्तत्राह—अष्टकेति । तथाहि यत्पितृदेवत्यं श्राद्धकर्मेति तत्र प्रसृतः प्रवृत्तोऽयं जनस्तस्यान्नस्य स्वभोगसाधनस्योपद्रवं नाशं केवलं करोति पश्य विचारय । तामेव विचार्यां युक्तिमाह—मृतो हीति ॥ १४ ॥

रा० टी०—धर्मपराणामज्ञानं बोधयन्नाह—अष्टकेति ।

१ स इति गो.पाठः। २ शुक्रं रुधिरमिति गो. पाठः। ३ मर्त्यानामिति गो.पाठः। ४ भेजिरे इति गो. पाठः। ५ दैवत्यमिति गो.रा.पाठः।

यदि भुक्तमिहान्येन देहमन्यस्य गच्छति । दद्यात्प्रवसतां श्राद्धं न तत्पथ्यशनं भवेत् ॥ १५ ॥
दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः । यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ १६ ॥
स नास्ति परमित्येतत्कुरु बुद्धिं महामते । प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ १७ ॥
सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शिनीम् । राज्यं स त्वं निगृह्णीष्व भरतेन प्रसादितः ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

---

अष्टका तदुपलक्षितश्राद्धकर्मजातं पितृदैवत्यं पितृभोक्तृकमित्यर्थः । इति बुद्ध्या प्रसृतः श्राद्धकर्मणि प्रवृत्तो जनः अन्नस्य जीवद्भोग्यस्य उपद्रवं विनाशं करोति हि यतः मृतः ध्वंसप्रतियोगी जनः किं कथमशिष्यति, एतेन मृतानामपि भोगकर्तृत्वे ध्वंसप्रतियोगिभिर्घटादिभिरपि जलाहरणादिक्रिया प्रसज्जेत इति सूचितम् ॥ १४ ॥

गो० टी०—धर्मस्याफलत्वे स्थालीपुलाकन्यायेन किंचिदुदाहरणमाह—अष्टका पितृदैवत्यमिति । अयं जनः अष्टका अष्टकाश्राद्धं पितृदैवत्यं प्रतिसांवत्सरिकमिति यत्कर्म कर्तुमिति शेषः, प्रसृतः प्रवृत्तः अत्र तत्सर्वमिति शेषः, अन्नस्य उपद्रवं क्षयं पश्य तत्सर्वं स्वभोज्यान्नस्य निरर्थकक्षयहेतुम् आलोचयेत्यर्थः । तत्र हेतुमाह—मृतो हि किमशिष्यतीति ॥ १४ ॥

१५ ] ति० टी०—ननु तैरन्नाभोजनेऽपि तदुद्देशेन दत्तं लोकान्तरे तमुपतिष्ठतीत्येतमर्थं भोक्त्रभावेन दूषितमपि युक्त्यन्तरेण दूषयति—यदीति । प्रवसतामुद्देशं कृत्वा श्राद्धं दद्यात् प्राप्तकाले किन्तु । तद्दानमेवोचितमित्यर्थः । न तु तत्पथ्यध्यशनं तस्मै दीयमानं पथ्यशनं पाथेयं न्याय्यं भवेत् । भारवहनेन दुःखदत्वादिति भावः एतेनैव न्यायेन देवार्थदानमपि व्यर्थमित्युपपादितम् ॥ १५ ॥

रा० टी०—पित्रुद्देश्यकपिण्डदानादेर्वैयर्थ्यमुपपाद्य तदुद्देश्यकब्राह्मणभोजनस्यापि वैयर्थ्यमुपपादयन्नाह—यदीति । यदि अन्येन भुक्तमन्नमन्यस्य देहं गच्छति प्राप्नोति तदा प्रवसतां[1] प्रवसतः विदेशं प्राप्तानुद्दिश्य श्राद्धं श्रद्धया निष्पादितमन्नं दद्यात् ब्राह्मणान्भोजयेदित्यर्थः, तद्ब्राह्मणभुक्तं प्रवसतां पथ्यशनं न भवेत् भवेदेवेत्यर्थः । प्रवसतामित्युभयान्वयि ॥ १५ ॥

गो० टी०—उक्तमेवार्थं तर्कमुखेन द्रढयति—यदीति । अन्येन भुक्तमन्नमन्यस्य देहं गच्छति यदि तर्हि प्रवसतः श्राद्धं दद्यात् पथि गच्छन्तमुद्दिश्य भोजयेत् तत् अन्यभुक्तमन्नं पथ्यशनं भवेत् पथिकस्य पाथेयं भवेत् न चैवं दृश्यते अतः श्राद्धादिकं मृतस्याशन न भवतीति भावः ॥ १५ ॥

१६ ] ति० टी०—एवं वैदिकाचारं प्रदूष्य तत्प्रतिपादकागमाप्रामाण्यमाह—दानेति । यजस्व देवपूजां कुरु, देहि अन्नादिदानम्, दीक्षस्व यागार्थम्, तपश्चान्द्रायणादि, संत्यज प्रव्रजेत्येवं परा वेदादयो ग्रन्था दानसंवनना दानाय वशीकरणोपायभूता मेधाविभिर्वार्तोदिना जीवने क्लेशं पश्यद्भिः पामरप्रतारणायानायासेन धनग्रहणाय कृताः अतो न ते प्रमाणमिति भावः ॥ १६ ॥

रा० टी०—ननु श्राद्धादेर्वैयर्थ्ये तत्र शास्त्राणि कथं प्रवृत्तानीत्यत आह—दानेति । यजस्व संत्यज धनादि दत्त्वा गृहत्यागं कुरु, एते दानसंवननाः दानरचनावन्तो ग्रन्थाः मेधाविभिः बुद्धिमद्भिः कृताः धनप्राप्त्यर्थं रचिताः ॥ १६ ॥

गो० टी०—एवमेकत्र वैदिककर्मणि फलव्यभिचारदर्शनात्सर्वत्रापि वैदिके न फलप्रसक्तिरित्याह—दानसंवनना इत्यादिना । दानसंवननाः दानाय वशीकरणोपायाः 'संवननं कर्मणा वशीकरणम्' इति हलायुधः । मेधाविभिः परद्रव्यग्रहणकुशलबुद्धिभिः यजस्व देवताराधनं कुरुष्व, संत्यज अर्थेषणादीन् सम्यक् त्यज । अत्रेतिकरणं द्रष्टव्यं यजस्वेत्यादिरूपा ग्रन्थाः मेधाविभिः कृता इत्यन्वयः ॥ १६ ॥

१७ ] ति० टी०—परमैहिकात्परं परलोकप्रयोजनं किंचिद्धर्माख्यं नास्तीति बुद्धिं कुरु । परोक्षमनुमानशब्दादिगम्यं पृष्ठतः कुरु त्यज ॥ १७ ॥

रा० टी०—स इति । हे महामते ! सः ज्ञाततत्त्वस्त्वं परमितोऽन्यत् भोग्यं नास्ति इति बुद्धिं कुरु अतः यदेतत् प्रत्यक्षं राज्यसुखं तदातिष्ठ गृहाणेत्यर्थः, परोक्षं प्रत्यक्षभिन्नं पृष्ठतः कुरु त्यजेत्यर्थः ॥ १७ ॥

गो० टी०—स इति । सः पितृवचनं परिपालनीयमिति मन्यमानः स त्वं परं परलोकानुभाव्यं यत्प्रत्यक्षं प्रत्यक्षसिद्धं राज्यभोगादिकं तदाऽऽतिष्ठ प्रतिगृह्णीष्व परोक्षं परोक्षसुखफलकं पितृवचनपरिपालनादिकम् ॥ १७ ॥

१८ ] ति० टी०—सतां प्रत्यक्षसिद्धस्यैव सत्यत्वं वदताम् । त एव साधवो न तु शब्दप्रमाणकादेः सत्यत्वं वदन्त इति भावः । भिन्ने पदे वा । स त्वं तानुक्तामित्यर्थो वा । सर्वलोकनिदर्शिनीं सर्वलोकसंमतामित्यर्थः ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

रा० टी०—उपसंहरन्नाह—सतामिति । सर्वलोकनिदर्शिनीं सर्वजनबोधनशीलां सतां प्रत्यक्षैकप्रमाणवादिसज्जनानां बुद्धिं ज्ञानं पुरस्कृत्य आश्रित्य भरतेन प्रसादितस्त्वं राज्यं निगृह्णीष्व ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टाधिकशततमः सर्गः ॥ १०८ ॥

---

१ प्रवसत इति गो. पाठः । २ इत्येवेति गो. पाठः । ३ त्वं प्रतीति गो. पाठः ।

## नवोत्तरशततमः सर्गः ।

जाबाल्युक्ताचारस्य धर्मरूपाधर्मत्वादनादेयत्वं प्रतिपादयन्तं रामं नास्तिकवादपरिग्रहे कारणं निवेद्य जाबालिः क्षमां याचते ।

जाबालेस्तु वचः श्रुत्वा रामः सत्यपराक्रमः । उवाच परया सूक्त्या बुद्ध्या विप्रतिपन्नया ॥ १ ॥
भवान्मे प्रियकामार्थं वचनं यदिहोक्तवान् । अकार्यं कार्यसंकाशमपथ्यं पथ्यसंनिभम् ॥ २ ॥
निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः । मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥ ३ ॥
कुलीनमकुलीनं वा वीरं पुरुषमानिनम् । चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिम् ४ ॥
अनार्यस्त्वार्यसंस्थानः शौचाद्धीनस्तथा शुचिः । लक्षण्यवदलक्षण्यो दुःशीलः शीलवानिव ॥ ५ ॥

गो० टी०—स इति । तां बुद्धिं प्रत्यक्षादन्यत् नास्तीति बुद्धिं सर्वलोकनिदर्शिनीं सर्वजनसंमतामित्यर्थः ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

१ ] ति० टी०—तदेतत्खण्डयति रामः—जाबालेरिति । सत्यपराक्रमः सत्यप्रधानः पराक्रमो यस्य सः । 'सत्यात्मनां वरः' इति पाठे सत्यस्वभावानां श्रेष्ठ इत्यर्थः । विप्रतिपन्नया जाबाल्युक्तार्थे प्रतिपत्तिरहितया बुद्ध्या युक्तः सन् उक्त्या वेदलक्षणसुवचनालम्बनेनोवाच ॥ १ ॥

रा० टी०—जाबालिवचनश्रवणानन्तरकालिकरामवचनं वर्णयन्नाह—जाबालेरित्यादिभिः । जाबालेः वचः श्रुत्वा विप्रतिपन्नया चालयितुमशक्यया सूक्त्या वेदसंमतार्थवचनकारणीभूतया अत एव परया बुद्ध्योपलक्षितो रामः उवाच ॥ १ ॥

गो० टी०—अथ जाबालिमतनिरासपूर्वकं वैदिकमतस्थापनं नवोत्तरशततमे सर्गे—जाबालेरित्यादिना । सत्यात्मनां सत्यबुद्धीनां भक्त्या वैदिकधर्मश्रद्धया अविपन्नया जाबालिवचनैः सांदृष्टिकैरप्यचलितया ॥ १ ॥

२ ] ति० टी०—प्रियकामार्थं प्रीतिहेतुकामभोगसंपादनार्थम् अकार्यं परमार्थतः कर्तुमनर्हं कार्यसंकाशं प्रमाणाभासयुक्तत्वात् । अपथ्यं दुःखोदर्कम् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—भवानित्यादिभिः । मे प्रियकामार्थं मत्प्रीतीच्छया इह अस्मिन् काले यद्वचनं भवान् उक्तवान् तद्वचनमकार्यं कर्तुमनर्हमपि कार्यसंकाशं कर्तुमर्हमिव प्रकाशते अपथ्यमहितमपि पथ्यसन्निभं पथ्यवत्प्रकाशते ॥ २ ॥

गो० टी०—भवानिति । प्रियकामार्थं प्रियविषयेच्छासिद्ध्यर्थं यद्वचनमुक्तवान् तत् कार्यसंकाशं कार्यवत्प्रतीयमानमकार्यं पथ्यसंमितं पथ्यवदवभासमानमपथ्यं दुःखोदर्कमिति यावत्, एवं वचनं दूषितम् ॥ २ ॥

३ ] ति० टी०—निर्मर्याद उत्पथवर्ती भिन्नचारित्रदर्शनः साधुसंमतचारित्रप्रतिपादकशास्त्राद्विपरीतव्यवहारप्रतिपादकलोकायतिकादिशास्त्रप्रसक्तः सत्सु मानं पूजां न लभते ॥ ३ ॥

रा० टी०—निर्मर्याद इति । निर्मर्यादः त्यक्तवेदमार्गः अत एव भिन्नचारित्रदर्शनः वेदोक्ताचारप्रतियोगिकभेदविशिष्टाचारदर्शकः अत एव पापाचारसमन्वितः पापाचरणविशिष्टः पुरुषः सत्सु सज्जनसमाजेषु मानं सत्कारं न लभते एतेन भवदुक्तिः सज्जनैस्तिरस्कृतेति सूचितम् ॥ ३ ॥

गो० टी०—अथ वक्तारं दूषयति—निर्मर्याद इत्यादिना । निर्मर्यादः मर्यादारहितः अत एव पापाचारसमन्वितः तत्र हेतुः भिन्नचारित्रदर्शन इति दर्शनं मतं वेदविहिताद् भिन्नाचारप्रतिपादकमतप्रवर्तक इत्यर्थः, एवंभूतः पुरुषः सत्सु मानं पूजां न लभते प्रत्युत निन्दामेव लभत इत्यर्थः ॥ ३ ॥

४ ] ति० टी०—इदानीं वेदोक्ताचार एव पुंसामिहामुत्र संमानहेतुरित्याह—कुलीनमिति । पुरुषमानिनम् अधीरमिति यावत्, चारित्रं वेदानुमताचारः, तत्संपन्नः सत्कुलीनत्वादिख्यातिं ख्यापयति—असंपन्नश्चाकुलीनत्वादिति भावः ॥ ४ ॥

रा० टी०—वेदमर्यादास्वीकारे प्रयोजनान्तरमाह—कुलीनमिति । कुलीनं शोभनकुलोत्पन्नत्वमकुलीनं तद्विपरीतं वा वीरं शौर्यं पुरुषमानिनं तद्राहित्यं वा शुचिं पवित्रत्वम् अशुचिं तद्विपरीतं वा चारित्रम् आचरणमेव व्याख्याति बोधयति विहिताचरणशीले सुकुलोपन्नत्वादिप्रतीतिः तदशीले तद्विपरीतप्रतीतिराचरणादेवेति तात्पर्यम्, एतेन वेदमर्यादात्यागे सांकर्यं प्रसज्येतेति सूचितम् ॥ ४ ॥

गो० टी०—पापाचारत्वे किं प्रमाणमित्याशङ्क्य तदुक्तिरेव प्रमाणमित्याह—कुलीनमित्यादिना । पुरुषमानिनम् अतिधीरमित्यर्थः । चारित्रम् उक्तरूपाचारः ॥ ४ ॥

५ ] ति० टी०—किं च स्वसंमताचाराङ्गीकारे सर्वथानर्थप्राप्तिरेवेत्याह—अनार्य इत्यादि । आर्यसंस्थानस्तत्सदृशः शुचिः शुचिरिव भासमान इति शेषः, लक्षण्यवल्लक्षणयुक्तवदाभासमानो भवति त्वदुक्ताचारव्यवहर्तेति शेषः ॥ ५ ॥

रा० टी०—सांकर्यमेव प्रदर्शयन्नाह—अनार्य इति । अनार्यो नीचः आर्यसंस्थानः श्रेष्ठसदृशः स्यात्, शौचाद्धीनः रहितः शुचिः स्यात्, अलक्षण्यो लक्षणहीनः लक्षण्यवत् लक्षणयुक्तवत् स्यात्, दुःशीलः शीलरहितः शीलवानिव स्यात् ॥ ५ ॥

गो० टी०—एतादृशपुरुषोपदेशश्रवणं महानर्थं दर्श-

१ सत्यात्मनां वर इति गो. पाठः । २ भक्त्या स्वबुद्ध्या चाविपन्नयेति गो. पाठः । ३ संमितमिति गो. पाठः । ४ संकाश इति गो. पाठः ।

अधर्मं धर्मवेषेण यद्यहं[1] लोकसंकरम् । अभिपत्स्ये शुभं हित्वा [2]क्रियां विधिविवर्जिताम् ॥ ६ ॥
कश्चेतयानः पुरुषः कार्याकार्यविचक्षणः । बहु मंस्येत[3] मां लोके दुर्वृत्तं लोकदूषणम् ॥ ७ ॥
कस्य यास्याम्यहं[4] वृत्तं केन वा स्वर्गमाप्नुयाम् । अनया वर्तमानोऽहं[5] वृत्त्या हीनप्रतिज्ञया ॥ ८ ॥
कामवृत्तोऽन्वयं[6] लोकः कृत्स्नः समुपवर्तते । यद्वृत्ताः सन्ति राजानस्तद्वृत्ताः सन्ति हि प्रजाः ॥ ९ ॥
सत्यमेवानृशंसं च राजवृत्तं सनातनम् । तस्मात्सत्यात्मकं राज्यं सत्ये लोकः प्रतिष्ठितः ॥ १० ॥

यति श्लोकत्रयेण—अनार्य इत्यादिना। अनार्य एव सन्नार्यसंकाशः शौचाद्धीन एव सन् शुचिरेव लक्षण्यवत् शिष्टलक्षणयुक्ततुल्य एव सन् अलक्षण्यः लक्षणहीनः शीलवानिव सन् दुःशीलः अहं शुभं हित्वा शुभसाधनं वैदिकधर्मं हित्वा लोकसंकरं लोकसंकरकारकं क्रियाविधिविवर्जितं वैदिकक्रियया वेदविधिना च वर्जितमिमं त्वदुक्तमधर्मं धर्मवेषेण धर्मत्वेनाभिपत्स्ये स्वीकरिष्यामि यदि दुर्वृत्तं मां चेतयानः ज्ञानवान् कः पुरुषः लोके बहु मंस्यति न कोऽपीत्यर्थः ॥ ५-७ ॥

६ ] ति० टी०—यद्यहं त्वदुपदिष्टं लोकसंकरकारकमधर्ममार्गं धर्मवेषेण युक्तोऽभिपत्स्ये, तदा विधिविवर्जितां श्रुत्याद्युक्तविधानरहितां क्रियां कृत्वा तत एव शुभं हित्वाशुभं प्राप्नुयामिति शेषः ॥ ६ ॥

रा० टी०—अधर्ममिति । लोकसंकरं लोकसांकर्यहेतुमधर्मं धर्मविरुद्धं धर्मवेषेण धर्मत्वरूपेण यत् यदि अभिपत्स्ये स्वीकरिष्यामि तर्हि शुभं वेदबोधितत्वेन मङ्गलप्रदं कर्म हित्वा विधिविवर्जितां वेदोक्तहीनां क्रियामभिपत्स्ये प्राप्स्यामि ॥ ६ ॥

७ ] ति० टी०—तामेवाशुभप्राप्तिं दर्शयति—कश्चेतयान इति । चेतन इत्यर्थः, लोकदूषणं परलोकदूषणमार्गालम्बनम् ॥ ७ ॥

रा० टी०—ननु स्वतःसिद्धनित्यसर्वसंपत्तिविशिष्टस्य तव फलाभिकाङ्क्षाराहित्यात् वेदविरुद्धाचरणेऽपि का क्षतिरित्यत आह—क इति। कार्याकार्यविचक्षणः कर्तव्याकर्तव्यविषयकविवेकविशिष्टः इत्यर्थः, कः पुरुषः दुर्वृत्तं वेदविरुद्धवृत्तिविशिष्टमत एव लोकदूषणं प्रवृत्तिजनकविरुद्धस्वाचरणदर्शनेन सर्वजनदूषकं मां बहु मन्येत न कोऽपीत्यर्थः ॥ ७ ॥

८ ] ति० टी०—अनया त्वदुपदिष्टया वृत्त्या हीना सत्यपरिपालनविषयिणी प्रतिज्ञा यस्यां तया वर्तमानः केन साधनेन स्वर्गमाप्नुयां न केनापि । किं चेदं त्वदुपदिष्टं वृत्तं कस्य किंसंबन्धि अहं यास्यामि यत्पित्रादिषु न कस्यापि । पित्रादिवृत्तानुसरणमेव च 'येनास्य पितरो याताः' इति श्रुतिविहितमिति भावः ॥ ८ ॥

रा० टी०—ननु किं बहुमानेनेत्यत आह—कस्येति । हीनप्रतिज्ञया हीना निवृत्ता प्रतिज्ञा यस्यां तया अनया वृत्त्या वर्तमानोऽहं वृत्तं स्वधर्मच्युतिरूपवृत्तान्तं कस्य यास्यामि प्रापयिष्यामि कथयिष्यामीत्यर्थः, केन कर्मणा उपलक्षितं जनं स्वर्गमाप्नुयां प्राप्नुयाम् 'दास्यामि' इति भूषणपाठः ॥ ८ ॥

गो० टी०—न केवलं बहुमानहानिः परलोकहानिश्चेत्याह—कस्येत्यादिना । अहं हीनप्रतिज्ञया वनवासप्रतिज्ञारहितया अनया वृत्त्या परोक्षं पृष्ठतः कुर्वीति त्वदुक्तया वृत्त्या वर्तमानः सन् वृत्तं त्वदुक्ताचरणं कस्य धास्यामि आधास्यामि उपदेक्ष्यामीत्यर्थः । 'दास्यामि' इति पाठान्तरं केन वा साधनेन स्वर्गमाप्नुयामिति योजना ॥ ८ ॥

९ ] ति० टी०—किं च त्वदुपदिष्टमार्गे तिष्ठन्नहं प्रथमतः कामवृत्तो यथेच्छचारी स्याम् । तदनु अयं कृत्स्नो लोकस्तथा समुपवर्तते इत्यर्थः । एवं निर्बन्धे कारणमाह—यद्वृत्ता इति ॥ ९ ॥

रा० टी०—ननु ताभ्यामपि भवतो न हानिरिति तदाशङ्कां मनसि निधाय मम दुर्मार्गवर्तित्वे सर्वेषां तद्भविष्यतीत्याह—कामेति । अनु मत्कामवृत्तिदर्शनानन्तरं कृत्स्नः अयं लोकः कामवृत्तः यथेष्टाचरणः समुपवर्तते भविष्यति, तत्र हेतुः यद्वृत्ताः यादृशवृत्तिविशिष्टाः राजानः तद्वृत्ताः तादृशवृत्तिविशिष्टाः प्रजाः सन्ति ॥ ९ ॥

गो० टी०—त्वदुक्ताचरणे सर्वलोकस्यापि परलोकहानिः स्यादित्याह—कामवृत्त इत्यादिना ॥ ९ ॥

१० ] ति० टी०—तस्मात्त्वदुपदिष्टस्य मार्गस्य सर्वलोकनाशकत्वेन शास्त्रीयमार्गालम्बनमेवोचितमित्याह—सत्यमिति । अनृशंसं भूतानुकम्पाप्रधानं सनातनमनादिशास्त्रसिद्धं राजवृत्तं च सत्यमेव सत्यवचनमेव मुख्यो राजाचार इत्यर्थः, यतो राजवृत्तं सत्यात्मकम्, तस्मात्तेषां राज्यमपि सत्यात्मकं सत्यैकप्रतिष्ठितम् । न केवलं राज्यमेव, अपि तु सर्वोऽपि लोकः सत्ये प्रतिष्ठितः ॥ १० ॥

रा० टी०—धर्मप्रवृत्तौ राजैव निमित्तमिति बोधयन्नाह—सत्यमिति । सत्यमनृशंसं क्रूरताराहित्यं च सनातनं सार्वकालिकं राजवृत्तं राजभिराचरितं तस्माद्धेतोः राज्यं सत्यात्मकं सत्यप्रचुरमत एव लोको जनः सत्ये सत्यप्राप्तौ सत्येव प्रतिष्ठितः प्रतिष्ठावान् भवति ॥ १० ॥

गो० टी०—सत्यप्रशंसापूर्वकं सत्यनिष्ठां दर्शयन् सत्यपरत्वरूपस्वमतं स्थापयति—सत्यमेवेत्यादिना । अनृशंसं भूतानुकम्पाप्रधानं सनातनं च राजवृत्तं सत्यमेव सत्यरूपमेव

१ यदीममिति गो. पाठः । २ क्रियाविधिविवर्जितमिति गो. पाठः । ३ मंस्यतीति गो. पाठः । ४ धास्यामीति गो. पाठः । ५ हीति गो. पाठः । ६ त्वयमिति गो. पाठः ।

ऋषयश्चैव देवाश्च सत्यमेव हि मेनिरे । सत्यवादी हि लोकेऽस्मिन्परं[1] गच्छति चाक्षयम् ॥ ११ ॥
उद्विजन्ते यथा सर्पान्नरादनृतवादिनः । धर्मः सत्यपरो लोके मूलं सर्वस्य[2] चोच्यते ॥ १२ ॥
सत्यमेवेश्वरो लोके सत्ये[3] धर्मः सदाश्रितः । सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ १३ ॥
दत्तमिष्टं हुतं चैव तप्तानि च तपांसि च । वेदाः सत्यप्रतिष्ठानास्तस्मात्सत्यपरो भवेत् ॥ १४ ॥
एकः पालयते लोकमेकः पालयते कुलम् । मज्जत्येको हि निरय एकः स्वर्गे महीयते ॥ १५ ॥
सोऽहं पितुर्निदेशं[4] तु किमर्थं नानुपालये । सत्यप्रतिश्रवः सत्यं सत्येन समयीकृतम् ॥ १६ ॥

तस्माद्राजवृत्तस्य सत्यरूपत्वात् राज्यं राज्यस्थजनजातं सत्यात्मकं सत्यरूपं सत्यप्रधानमिति यावत्. लोक इति जात्येकवचनम् ॥ १० ॥

११ ] ति० टी०—सत्यमेव हि मेनिरे सत्यलोकान्तसकललोकप्रदमिति शेषः । परमक्षयं ब्रह्मलोकम् ॥ ११ ॥

रा० टी०—ऋषय इति । ऋषयो देवाश्च सत्यमेव मेनिरे श्रेयःप्रापकत्वेन स्वीचक्रुः । तत्र हेतुः अस्मिँल्लोके सत्यवादी पुरुषः अक्षयं विनाशरहितं परं लोकं गच्छति ॥ ११ ॥

गो० टी०—ऋषय इति । मेनिरे उत्कृष्टमिति शेषः परमं क्षयं परमं धाम 'धिष्ण्यं धाम निकेतनं च सदनं वस्त्यं च वास्तु क्षयः' इति वैजयन्ती ॥ ११ ॥

१२ ] ति० टी०—अनृतवादिनो नरात्तथोद्विजन्ते यथा सर्पात् । सत्यं परं श्रेष्ठं यस्य स धर्मःसर्वस्य मूलमुच्यते॥१२॥

रा० टी०—उद्विजन्त इति । सर्वे जनाः यथा सर्पादुद्विजन्ते बिभ्यति तथा अनृतवादिनः मिथ्याकथनशीलात् उद्विजन्ते एतेनानृतवादः सर्वपापमूलमिति सूचितम् । लोके धर्मः सत्यपरः सत्येनैव पूर्यते पूर्णो भवति अतः सर्वस्य धर्मस्य मूलं सत्यमुच्यते ॥ १२ ॥

गो० टी०—उद्विजन्त इति । उद्विजन्ते जना इति शेषः१२

१३ ] ति० टी०—लोके ईश्वरः सत्यमेव सत्यपदवाच्य इति प्रसिद्ध इत्यर्थः । तथा सद्भिराश्रितो धर्मः सत्ये सत्यपदवाच्ये ईश्वरे प्रतिष्ठितः आदौ तस्यैव धर्मोपदेष्टृत्वादित्यर्थः । 'सत्ये पद्मा प्रतिष्ठिता' इति पाठान्तरम् पद्मा लक्ष्मीः । सत्यमूलानि सर्वाणीत्यनेन जगदुपादानप्रवर्तकत्वेन सर्वाधिष्ठानत्वेन च तत्सिद्धिर्दर्शिता । तस्यैव तत्त्वे हेतुमाह—सत्यात्परं पदं नास्ति । अनेन तदितरस्य सर्वस्य मिथ्यात्वमचेतनत्वं च दर्शितम् । एतेन चेतनानधिष्ठिता मायैव जगदुपादानकारणमिति निरस्तं चेतनाधिष्ठानं विना तत्परिणामासंभवात् तस्याः परिणामित्वेन मिथ्यात्वेन चेतनाधिष्ठानत्वासंभवाच्च ॥ १३ ॥

रा० टी०—सत्यमिति । सर्वाणि कर्माणि सत्यमूलानि भवन्ति अत एव धर्मः सदा नित्यं सत्ये एवाश्रितः अतः सत्यमेव लोके ईश्वरः अतः सत्यात्परमन्यत् पदमाश्रयो नास्ति ॥ १३ ॥

गो० टी०—सत्यमिति । ईश्वरः नियन्ता व्यवस्थापक इति यावत् ॥ १३ ॥

१४ ] ति० टी०—एवं नास्तिकं प्रतीश्वरं प्रसाध्य वेदप्रामाण्यं साधयति—दत्तमित्यादि । दत्तादीनि प्रतिपादयन्तो वेदाः सत्यप्रतिष्ठानाः सत्यादीश्वराच्छ्वासप्रश्वासवदाविर्भूता इति वक्तृदोषशङ्काकलङ्कराहित्येन तत्प्रतिपादितदानादीनां फलसंवाददर्शनेन च सर्वत्राप्रामाण्यशङ्कारहिताः किं तु स्वतः प्रमाणभूता एवेति भावः । तस्मात्सत्यस्येश्वरवाचकवाच्यत्वेन तदभेदात् सत्यपरः सत्यपालनतत्परो भवेदित्यर्थः ॥ १४ ॥

रा० टी०—दत्तमिति । दत्तादिकं वेदाश्च सत्यप्रतिष्ठानाः सत्येन प्रतिष्ठानं प्रतिष्ठा येषां ते तस्मात् सत्यपरः सत्यनिष्ठः भवेत् कल्याणाभिलाषी जन इति शेषः ॥ १४ ॥

गो० टी०—दत्तमिति । सत्यप्रतिष्ठानाः सत्याधाराः सत्यप्रतिष्ठानानीति विपरिणम्य पूर्वार्धेन योज्यम् ॥ १४ ॥

१५ ] ति० टी०—वेदोक्तधर्माधर्मफलस्य प्रत्यक्षमनुभूयमानत्वेन तत्प्रामाण्यं सिद्धमित्याह—एक इति । लोकं राज्यम् , कुलं स्वकुलमात्रम् । एतेन पालनसाधनधर्मफलतारतम्यस्य वेदोक्तस्यानुभवो दर्शितः । निरयोऽत्र दुःखं स्वर्गश्च सुखम् तेन धर्माधर्मफलानुभवो दर्शितः ॥ १५ ॥

रा० टी०—कर्मणां सफलत्वे प्रमाणमाह—एक इति । एकः कश्चित् निरये नरके मज्जति एकः स्वर्गे महीयते पूज्यते एतेन विचित्रकर्मणां विचित्रफलप्रापकत्वादिदं सर्वं सङ्गच्छत इति सूचितम् ॥ १५ ॥

गो० टी०—प्रस्तुतसत्यनिष्णातस्य ऐहिकामुष्मिकफलं तद्रहितस्य निरयप्राप्तिं च दर्शयति—एक इत्यादिना ॥ १५ ॥

१६ ] ति० टी०—सोऽहमुक्तरीत्या एवं विवेकवानित्यर्थः । ननु जीवन्मृततया पितृकृते नियोगे किमियता निर्बन्धनेन तत्राह—सत्येति । यतो मेऽपिता सत्यप्रतिश्रवः सत्यप्रतिज्ञः स्वप्रतिज्ञातसत्याङ्गीकारवान्समयी सदाचारवान् अतस्तेन सत्येन सत्यपरिपालनेन हेतुना सत्यमेव मां प्रतिकृतम् उक्तमित्यर्थः १६

रा० टी०—स इति । सः ज्ञातकर्मफलतत्त्वोऽहं पितुर्निर्देशमाज्ञां किमर्थं नानुपालये समयी सदाचारसंपन्नो राजा यतः सत्यप्रतिश्रवः सत्यप्रतिज्ञः अतः सत्येन सत्यपरिपालनहेतुना

१ परमं गच्छति क्षयमिति गो. पाठः । २ स्वर्गस्येति गो. पाठः । ३ सत्यं पद्माश्रिता सदेति गो. पाठः । ४ नियोगमिति गो. पाठः ।

नैव लोभान्न मोहाद्वा न चाज्ञानात्तमोन्वितः । सेतुं सत्यस्य भेत्स्यामि गुरोः सत्यप्रतिश्रवः ॥ १७ ॥
असत्यसंधस्य सतश्चलस्यास्थिरचेतसः । नैव देवा न पितरः प्रतीच्छन्तीति नः श्रुतम् ॥ १८ ॥
प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं ध्रुवम् । भारः सत्पुरुषैश्चीर्णस्तदर्थमभिनन्द्यते ॥ १९ ॥
क्षात्रं धर्ममहं त्यक्ष्ये ह्यधर्मं धर्मसंहितम् । क्षुद्रैर्नृशंसैर्लुब्धैश्च सेवितं पापकर्मभिः ॥ २० ॥
कायेन कुरुते पापं मनसा संप्रधार्य तत् । अनृतं जिह्वया चाह त्रिविधं कर्म पातकम् ॥ २१ ॥

सत्यमेव कृतमाज्ञापितमित्यर्थः । एतेन धर्मपरिपालनमेव प्राव्राजनहेतुरिति सूचितम् ॥ १६ ॥

गो० टी०—स इत्यादि । सत्यप्रतिश्रवः सत्यसंधः ॥१६॥

१७ ] ति० टी०—अतो लोभाद्राज्यस्य, मोहादुक्तस्य विस्मरणात् प्रतिज्ञात्यागे दोषस्याज्ञानाद्वा त्वदुक्तवाक्याच्छाणादावश्रद्धारूपतमोयुक्तो वा । पूर्वं सत्यप्रतिश्रवः शपथपूर्वकं कृतप्रतिज्ञः सन्नैव भेत्स्यामि न भेत्स्यामि न च भेत्स्यामीति त्रिवारोक्त्या सर्वथा दार्ढ्यं सूचितम् ॥ १७ ॥

रा० टी०—नैवेति । यतोऽहं सत्यप्रतिश्रवः अतः तमोन्वितः तमोरूपेण त्वयान्वितः प्रेरितोऽपि सन् लोभादिना गुरोः पितुः सत्यस्य सेतुं मर्यादां न भेत्स्यामि । नञ्त्रयोक्त्या सत्यत्यागविषयिणी वार्ता पुनर्न वक्तव्येति सूचितम् ॥ १७ ॥

गो० टी०—नैवेति । लोभात् राज्यलोभात् मोहात् विप्रलम्भवाक्यजनितचित्तविभ्रमात् अज्ञानात् तमोन्वितः तमोगुणयुक्तः सत्यस्य करिष्यामि तव प्रीतिं सुकृतेनापि ते शपे इत्यस्य सत्यवचनस्य सेतुं मर्यादाम् ॥ १७ ॥

१८ ] ति० ति०—एवं सत्ये दृढस्थितौ हेतुमाह—असत्यसंधस्य प्रतिज्ञाविषयसत्यहीनस्य चलस्य चञ्चलस्वभावस्य । तस्यैव विवरणम्—अस्थिरेत्यादि । ईदृशस्य सतः एतैर्गुणैर्युक्तस्य देवादयो हव्यकव्यादि न गृह्णन्तीति नः श्रुतम् ॥१८॥

रा० टी०—सत्यप्रतिज्ञात्यागे दोषमाह—असत्येति । असत्यसंधस्य निवृत्तसत्यप्रतिज्ञत्वस्य अत एव चलस्य धर्माच्युतस्य अत एव अस्थिरचेतसः चञ्चलचित्तस्य सतो विद्यमानस्य जनस्य हव्यकव्यादीनि न प्रतीच्छन्ति गृह्णन्तीत्यर्थः, इति नोऽस्माभिः श्रुतम् ॥ १८ ॥

गो० टी०—असत्यसंधस्येति । चलस्य चलस्वभावस्य प्रतीच्छन्ति हव्यकव्यादिकमिति शेषः, नः अस्माभिः श्रुतम् ॥१८॥

१९ ] ति० ति०—प्रत्यगात्मनो जीवानुद्दिश्य प्रवृत्तमित्यर्थे प्रत्यगात्ममित्यार्षत्वात्साधुः । इमं सत्यं सत्यपालनरूपं धर्ममहं ध्रुवं सर्वधर्मेषु मुख्यं पश्यामि । अयं भारो वनवासे जटावल्कलादिभारः सत्यपालनरूपो वा पूर्वैः सत्पुरुषैराचीर्णस्तदर्थं मयाप्यभिनन्द्यत आद्रियते ॥ १९ ॥

रा० टी०—प्रत्यगिति । सत्यं सत्यरूपमिमं धर्मं प्रत्यगात्मं सर्वात्मविहितं पश्यामि भरो जटादिभरः सत्पुरुषैः चीर्णः कृतः तदर्थं तस्माद्धेतोः अभिनन्द्यते मयेति शेषः ॥ १९ ॥

गो० टी०—प्रत्यगात्ममिति । अहं सत्यं सत्यरूपमिमं धर्मं प्रत्यगात्मं स्वयं पश्यामि आत्मानं प्रत्यविनाभूतत्वेन प्रवृत्तं पश्यामीत्यर्थः । सत्पुरुषाचीर्णः सत्पुरुषैराचरितः संपादित इति यावत्, भारः जटावल्कलादिभारः तदर्थं सत्यरूपधर्मार्थम् अभिमन्यते अभिमतो भवति ॥ १९ ॥

२० ] ति० टी०—ननु स्वधर्मो राज्यपालनमेव किमिति नाभिनन्द्यते तत्राह—क्षात्रमिति । धर्मसंहितं धर्मवत्प्रतिभासमानं वस्तुतोऽधर्मं क्षुद्रादिभिः सेवितमीदृशं क्षात्रधर्मं पित्राज्ञाभङ्गेन राज्यकरणरूपमहं त्यक्ष्ये न तु न्याय्यं क्षात्रधर्ममिति भावः ॥ २० ॥

रा० टी०—ननु पालनस्य क्षत्रियधर्मत्वे स एव हठादपि कुतो न स्वीक्रियते इत्यत आह—क्षात्रमिति । अधर्मं विरुद्धधर्मेण गृहीतं पापकर्मभिः क्षुद्रादिभिः सेवितं धर्मसंहितं धर्मत्वेन प्रतीयमानं क्षात्रधर्ममहं त्यक्ष्ये, एतेन पित्राद्याज्ञापनमन्तरा हठाद्राज्यग्रहणमधर्म एवेति सूचितम् ॥ २० ॥

गो० टी०—पूर्वैराचरितं सत्यं परित्यज्य त्वदुक्तरीत्या राज्यं नाङ्गीकरिष्यामीत्याह—क्षात्रमित्यादिना । अधर्मम् अधर्मप्रचुरं धर्मसंहितं धर्मलेशसहितम् अधर्मप्रचुरधर्मलेशयुक्तक्षत्रियधर्ममहं त्यक्ष्य इत्यर्थः ॥ २० ॥ २१ ॥

२१ ] ति० टी०—अस्य पापस्य शरीरसाध्यत्वेऽपि कायिकवाचिकमानसिकसकलपापप्रसक्तिरित्याह—कायेनेति । आदौ मनसा एवं कर्म करिष्य इति तत्पापं संप्रधार्य ततो जिह्वया ऋतं धर्मजनकं ततो भिन्नमनृतं तत्कर्म कर्तव्यत्वेन जिह्वया तत्सहायभूतेषु पुरुषेष्वाह, ततः कायेन कुरुते, अतः पापं कर्म क्रियारूपम् । पापं त्रिविधं कायिकवाचिकमानसिकरूपत्रिविधजनकमित्यर्थः । तेन कायिकं पापं बहुदुःखजनकमिति भावः । कलौ तु पापसंकल्पादितो न दोष इत्युक्तं भागवते—' नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् । कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥' सम्राट् परीक्षित् । सारमाह—कुशलानि पुण्यान्याशु संकल्पमात्रात्सिध्यन्ति, यथा मानसपूजा । इतराणि पापानि संकल्पमात्रान्न फलन्ति । यत्तस्तानि कृतान्येव फलन्तीति तदर्थः ॥ २१ ॥

रा० टी०—त्रिविधानामपि पापकर्मणामेवं राज्यकरणे प्रसक्तिर्भविष्यतीति बोधयितुं कर्मणां विभागमाह—कायेनेति । कायेन यत्पापं कुरुते तज्जिह्वया अनृतं यत् आह तच्च मनसा

१ ह्यज्ञानादिति गो. पाठः । २ स्वयमिति गो. पाठः । ३ भरं इति रा. पाठः । ४ सत्पुरुषाचीर्णं इति गो. पाठः । ५ मन्यत इति गो. पाठः । ६ चेति गो. पाठः ।

भूमिः कीर्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि । [1]सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ॥ २२ ॥
श्रेष्ठं ह्यनार्यमेव स्याद्यद्भवानवधार्य माम् । आह युक्तिकरैर्वाक्यैरिदं भद्रं कुरुष्व ह ॥ २३ ॥
कथं ह्यहं प्रतिज्ञाय वनवासमिमं [2]गुरोः । भरतस्य करिष्यामि वचो हित्वा गुरोर्वचः ॥ २४ ॥
स्थिरा मया प्रतिज्ञाता प्रतिज्ञा गुरुसंनिधौ । [3]प्रहृष्टमानसा देवी कैकेयी चाभवत्तदा ॥ २५ ॥
वनवासं वसन्नेव शुचिर्नियतभोजनः । [4]मूलपुष्पफलैः पुण्यैः पितॄन्देवांश्च तर्पयन् ॥ २६ ॥
संतुष्टपञ्चवर्गोऽहं लोकयात्रां [5]प्रवाहये । अकुहः श्रद्दधानः सन्कार्याकार्यविचक्षणः ॥ २७ ॥
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् । अग्निर्वायुश्च सोमश्च कर्मणां फलभागिनः ॥ २८ ॥

असंप्रधार्य अनिश्चित्यैव यत्कुरुते दुर्मार्गे धावतीत्यर्थः, तच्च पापमतः पातकं त्रिविधं मनोवाक्कायत्रितयसंबन्धित्वात् त्रिप्रकारकमेतेन सत्यप्रतिज्ञत्वत्यागपूर्वकैतद्राज्यकरणे त्रिविधपापसंबन्धो भविष्यतीति सूचितम् ॥ २१ ॥

२२ ] ति० टी०—अथ सत्यस्य सर्वार्थसाधनत्वमाह—भूमिरिति । प्रार्थयन्तीति सत्यवन्तामिति शेषः । समनुवर्तन्ते इति शिष्टा इति शेषः । यदेवं ततः सत्यमेव भजेदित्यर्थः ॥ २२॥

रा० टी०—भूमिरिति । भूम्यादयः सत्यविशिष्टं पुरुषं प्रार्थयन्ति सत्यविशिष्टमित्यध्याहृतमतः सत्यं समनुवर्तन्ते सेवन्ते महान्त इति शेषः, ततस्तस्माद्धेतोः सत्यमेव भजेत् सर्वो जन इति शेषः ॥ २२ ॥

गो० टी०—भूमिरिति । कीर्तिः वितरणजनिता प्रथा यशः पौरुषनिबन्धनं पुरुषं करणत्रयेण सत्यनिष्णातम् अनुपश्यन्ति अनुसृत्य पश्यन्ति अनुबध्नन्तीति यावत् ॥ २२ ॥

२३ ] ति० टी०—यद्भवानवधार्य युक्तत्वेन निश्चित्य मां प्रति युक्तिरेव करः करणं येषां तैर्वाक्यैरिदं भद्रं राज्यं ह निश्चयेन कुरुष्व स्वीकुरुष्वेति श्रेष्ठं हि श्रेष्ठमिवाह तदनार्यमन्याय्यमेव स्याद्भवेत् ॥ २३ ॥

रा० टी०—श्रेष्ठमिति । युक्तिकरैः शुष्कतर्कसंपादितैर्वाक्यैर्भद्रं कल्याणकरमिदं राज्यं त्वं कुरुष्व इति भवान् यच्छ्रेष्ठं वचोऽवधार्य निश्चित्य मामाह तदनार्यमेव स्यात् ॥ २३ ॥

गो० टी०—श्रेष्ठमिति । श्रेष्ठमित्यवधार्य निश्चित्य इदं भद्रं कुरुष्वेति भवान् युक्तिकरैर्वाक्यैः यदाह तदनार्यमेव स्यात् ॥ २३ ॥

२४ ] ति० टी०—अनार्यत्वमेव दर्शयन् 'राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादितः' इत्यस्योत्तरमाह—कथमिति । गुरोः पुरत इमं गुर्वाज्ञप्तं गुरोर्वचो हित्वेत्यन्वयः ॥ २४ ॥

रा० टी०—तद्वचनस्यानार्यत्वं द्योतयन्नाह—कथमिति । गुरोः पितुः अग्रे वनवासं प्रतिज्ञाय गुरोर्वचो हित्वा भरतस्य वचः कथं करिष्यामि ॥ २४ ॥

गो० टी०—प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुर्विस्यन्तस्य जाबालिवाक्यजातस्योत्तरमभिधाय राज्यं त्वं प्रतिगृह्णीष्व भरतेन प्रसादित इत्यस्याप्युत्तरमाह—कथमित्यादिना ॥२४॥

२५ ] ति० टी०—कैकेयी चेति । एवं च तस्या हर्षदस्य पुनरहर्षदत्वमत्यन्तमनुचितमिति भावः ॥ २५ ॥

रा० टी०—वनवासत्यागस्यानौचित्यमेव द्रढयन्नाह—स्थिरेति । गुरुसंनिधौ राजसमीपे स्थिरा निश्चला प्रतिज्ञा मया प्रतिज्ञाता कृता तदा देवी कैकेयी प्रहृष्टमानसा अभवत् ॥२५॥

गो० टी०—स्थिरेति । प्रतिज्ञा प्रतिज्ञाता कृतेत्यर्थः॥२५॥

२६] ति० टी०—तर्पयन् प्रतिज्ञां पालयिष्यामीमि शेषः२६

२७ ] ति० टी०—संतुष्टपञ्चवर्गो मूलादिभिस्तुष्टपञ्चेन्द्रियवर्गः लोकयात्रां पितृवचनपालनव्यवहारं प्रवाहये प्रवाहरूपेण प्रवर्तयामीत्यर्थः । अकुहोऽकपटशीलः श्रद्धानः आस्तिकः॥२७॥

रा० टी०—वनवासमिति । वनवासं वसन् कुर्वन् पित्रादींस्तर्पयन् श्रद्दधानश्च सन् मूलादिभिर्नियतभोजनः अत एव संतुष्टपञ्चवर्गः संतुष्टः पञ्चवर्गः पञ्चेन्द्रियगणो यस्य सः किंच संतुष्टेन संतोषेण पञ्चौ व्यक्तौ वर्गौ सीतालक्ष्मणौ यस्य स शुचिः अकुहः कापट्यसंसर्गरहितः कार्याकार्यविचक्षणः कर्तव्याकर्तव्यविषयकनिश्चयविशिष्टोऽहं लोकयात्रां स्वजनमर्यादां प्रवाहये निर्वाहयामि । श्लोकद्वयमेकान्वयि ॥ २६ ॥ २७ ॥

गो० टी०—वनवासमित्यादि । श्लोकद्वयमेकं वाक्यम् । वनवासं वसन् कुर्वन्नित्यर्थः, नियतभोजनः नियतवन्याहारः संतुष्टपञ्चवर्गः परितुष्टपञ्चेन्द्रियवर्गः लोकयात्रां पितृवचनपरिपालनरूपलोकवर्तनम् । 'गमने वर्तने यात्रा' इति वैजयन्ती । अकुहः अकृत्रिमः ॥ २६ ॥ २७ ॥

२८]ति० टी०—शुभकरणे हेतुः—अग्निरित्यादि । यच्छुभं कर्म कर्तव्यं तेषां शुभकर्मणां तत्तल्लोकप्राप्तिः फलमिति भावः २८

रा० टी०—ननु नित्यपुरुषाणां कर्मफलं संसर्गित्वाभावेन कर्मफलानां का गतिरित्यत आह—कर्मेति । इमां कर्मभूमिं प्राप्य यच्छुभं कर्म तत्कर्तव्यं, कर्मणां फलभागिनस्तु अग्न्यादयो भवन्तीति शेषः ॥ २८ ॥

गो० टी०—अष्टकोदाहरणेन वैदिककर्मणां निष्फलत्वं यदुक्तं तत्र परिहारमाह—कर्मभूमिमित्यादिना । यत्र शुभं कर्म तत्कर्तव्यं जनैरिति शेषः । तत्र फलदर्शनं दर्शयति—अग्निरित्यादि । कर्मणां कर्मभूमिकृतस्वस्वकर्मणां फलभागिनः अग्नित्वादिफलं प्राप्तवन्तः ॥ २८ ॥

१ स्वर्गस्थं चानु पश्यन्ति सत्यमेव भजेत तदिति गो० पाठः । २ गुराविति गो० पाठः ३ प्रहृष्यमाणा सेति गो० पाठः । ४ मूलैः पुष्पैरिति गो० पाठः । ५ प्रवर्तय इति गो० पाठः ।

शतं क्रतूनामाहृत्य देवराट् त्रिदिवं गतः । तपांस्युग्राणि चास्थाय दिवं प्राप्ता महर्षयः ॥ २९ ॥
अमृष्यमाणः पुनरुग्रतेजा निशम्य तन्नास्तिकवाक्यहेतुम् ।
अथाब्रवीत्तं नृपतेस्तनूजो विगर्हमाणो वचनानि तस्य ॥ ३० ॥
सत्यं च धर्मं च पराक्रमं च भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ३१ ॥
तेनैवमाज्ञाय यथावदर्थमेकोदयं संप्रतिपद्य विप्राः ।
धर्मं चरन्तः सकलं यथावत्काङ्क्षन्ति लोकागममप्रमत्ताः ॥ ३२ ॥
निन्दाम्यहं कर्म कृतं पितुस्तद्यस्त्वामगृह्णाद्विषमस्थबुद्धिम् ।
बुद्ध्यानयैवंविधया चरन्तं सुनास्तिकं धर्मपथादपेतम् ॥ ३३ ॥

२९ ] ति० टी०—शतमिति । अनेन पूर्वोक्तं समर्थितम् 'अतीतानागतश्चेन्द्रादीनां तत्तत्फलानुभवेन तत्तद्वेदभागप्रामाण्यं दर्शितं च ॥ २९ ॥

रा० टी०—कर्मणां सफलत्वे शिष्टाचारं प्रमाणयन्नाह—शतमिति । क्रतूनां यागानां शतमाहृत्य कृत्वा देवराट् इन्द्रः सन् त्रिदिवं स्वर्गं गतः महर्षयः दिवं प्राप्ताः ॥ २९ ॥

गो० टी०—शतमिति । क्रतूनां शतम् आहृत्य कृत्वेत्यर्थः, प्रवासिनं प्रति श्राद्धकरणविधेरभावात् विहितस्थले कुत्रापि न व्यभिचार इति भावः ॥ २९॥

३० ] ति० टी०—नास्तिकवाक्यहेतुं नास्ति परलोक इति वचनोपपादकम् 'यदि भुक्तमिहान्येन' इत्याद्युक्तशुष्कतर्करूपम् अमृष्यमाणः जाबालिमिति शेषः । तस्य जाबालेः अनेन नास्तिकवृत्तयो ब्राह्मणा अपि राज्ञोऽवश्यं वाग्दण्डेन दण्ड्या इति सूचितम् ॥ ३० ॥

रा० टी०—अमृष्यमाण इति । उग्रतेजाः नृपतेस्तनूजो रामस्तं जाबालिनोक्तं नास्तिकवाक्यहेतुं निशम्य तस्य वचनानि अमृष्यमाणः अत एव विगर्हमाणः निन्दयन् सन् तं जाबालिं पुनरब्रवीत् ॥ ३० ॥

गो० टी०—अमृष्यमाण इति । नास्तिकवाक्यहेतुं 'यदि भुक्तमिहान्येन देहमन्यस्य गच्छति । दद्यात्प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत्' इत्यादि नास्तिकवाक्यरूपतर्कं विगर्हमाणः मनसि विगर्हमाणः ॥ ३० ॥ ३१ ॥

३१ ] ति० टी०—पराक्रमश्चान्द्रायणादि तपः । यत इमानि त्रिदिवस्य पन्थानमाहुः सन्तः ॥ ३१ ॥

रा० टी०—तद्वचनाकारमाह—सत्यमिति । सन्तः सत्यादीनि त्रिदिवस्य पन्थानमाहुः, एतेन त्वदुक्तकर्मनिष्फलत्ववादः सज्जनविरुद्ध इति सूचितम् ॥ ३१ ॥

३२] ति० टी०—यतश्च तेन सद्वचनेनैवमर्थमेकोदयं शुल्यफलवन्तं यथावदाज्ञाय श्रुत्वा संप्रतिपद्य शुष्कतर्ककैर्निर्णीय तं धर्ममप्रमत्ताः सावधाना यथावच्चरन्तो लोकागमं तत्तल्लोकप्राप्तिं काङ्क्षन्ति ॥ ३२ ॥

रा० टी०—तेनेति । तेन कर्मणां सफलत्वेन हेतुना अर्थं कर्मनिर्वाहकपदार्थं यथावत् आज्ञाय एकोदयं परस्परं संमतिं संप्रतिपद्य प्राप्य सकलं साङ्गं धर्मं यथावत् चरन्तः विप्राः लोकागमं स्वाभिमतलोकप्राप्तिं काङ्क्षन्ति ॥ ३२ ॥

गो० टी०—तेनेति । तेन हेतुना विप्राः एवमर्थं यथावत् आज्ञाय ज्ञात्वा एकोदयं संप्रतिपद्य ऐककण्ठ्यं प्राप्य सकलं धर्मं स्वस्ववर्णाश्रमोचितधर्मम् अप्रमत्ताः सावधानाः यथावच्चरन्तः अनुतिष्ठन्तः लोकागमं स्वर्गादिलोकप्राप्तिं काङ्क्षन्तीति ॥ ३२ ॥

३३ ] ति० टी०—अतः—निन्दामीति । अनयानुपदोक्तया एवंविधया प्रत्यक्षैकप्रमाणवादिचार्वाकमतानुसारिण्या चरन्तं लोकनाशायाटन्तम् अत एव नास्तिकत्वादिगुणयुक्तं विषमस्थबुद्धिमवैदिकदुर्मार्गप्रतिष्ठितबुद्धिं त्वां यो मे पिताऽगृह्णात् याजकत्वेनाङ्गीकृतवांस्तत्पितुः कर्म निन्दामि ॥ ३३ ॥

रा० टी०—निन्दामीति । विषमस्थबुद्धिं वेदविरुद्धविषयकनिश्चयवन्तमनया कर्मनिवारिकया बुद्ध्या एवं चरन्तमत एव सुनास्तिकं परलोकाभावविषयकनिश्चयवन्तमत एव धर्मपथादपेतं च्युतं त्वां मत्पिता यत् अगृह्णात् तत् पितुः कृतं कर्म निन्दामि इदं न शोभनं कृतमिति वदामीत्यर्थः, एतेन यत्संबन्धादन्यस्य निन्दा तस्य निन्देति किं वक्तव्यमिति काव्यार्थापत्तिरलंकारो व्यक्तः ॥ ३३ ॥

गो० टी०—निन्दामीति । विषमस्थबुद्धिम् अवैदिकमार्गनिष्णातबुद्धिम् अनया बुद्ध्या चरन्तं चार्वाकमतानुसारिणीं बुद्धिं परान् प्रत्युपदिश्याचरन्तमित्यर्थः, सुनास्तिकं परलोको नास्तीति बुद्धियुक्तं सुशब्देन वैदिकवत् स्थित्वा चार्वाकमतप्रवर्तक इत्युच्यते । निन्दामि वैदिककर्मभ्यो बहिष्करोमि ॥ ३३ ॥

१ वाता इति गो. पाठः ।

यथा हि चोरः स तथा हि बुद्धस्तथागतं नास्तिकमत्र विद्धि ।
तस्माद्धि यः [1]शक्यतमः प्रजानां [2]स नास्तिकेनाभिमुखो बुधः स्यात् ॥ ३४ ॥
त्वत्तो जनाः पूर्वतरे [3]द्विजाश्च शुभानि कर्माणि बहूनि चक्रुः ।
[4]छित्त्वा सदेमं च परं च लोकं तस्माद्विजाः स्वस्ति कृतं हुतं च ॥ ३५ ॥
धर्मे रताः सत्पुरुषैः समेतास्तेजस्विनो दानगुणप्रधानाः ।
अहिंसका वीतमलाश्च लोके भवन्ति पूज्या मुनयः प्रधानाः ॥ ३६ ॥
इति ब्रुवन्तं वचनं [5]सदोषं रामं महात्मानमदीनसत्त्वम् ।
उवाच [6]पथ्यं पुनरास्तिकं च सत्यं वचः सानुनयं च विप्रः ॥ ३७ ॥

३४ ] ति० टी०–बौद्धादयो राज्ञश्चोरवद्दण्ड्या इत्याह–यथा हीति । बुद्धो बुद्धमतानुसारी तथा चोरवद्दण्ड्य इति हि प्रसिद्धम् । नास्तिकं चार्वाकं तथागतं तत्सदृशं चोरवद्दण्ड्यं विद्धि । नास्तिकविशेषस्तथागतः तमपि चोरवद्दण्ड्यमिति शेष इत्यन्ये । वेदप्रामाण्यापहर्तृत्वेन तेषामपि चोरत्वात् । हि निश्चयेन तस्मात्प्रजानामनुग्रहाय राज्ञा चोरवदेव दण्डयितुं शक्यतमो यः स चोरवदेव दण्ड्यः दण्डायोग्ये तु बुधो ब्राह्मणो नास्तिकेऽभिमुखो न स्यात् तत्संभाषणादि न कुर्वीतेत्यर्थः, तुल्यन्यायाद्दण्डासमर्थो ब्राह्मणोऽपि तद्विमुखः स्यादिति सूचितम् ॥ ३४ ॥

रा० टी०–यथेति । यथा चोरः तथैव बुद्धः चोरवत् बुद्धो दण्ड्य इत्यर्थः । अत्र अस्मिन् चोरसादृश्ये विद्यमानं तथागतं लोकायतिकं नास्तिकं चार्वाकं च विद्धि जानीहि एतावपि चोरवद्दण्ड्यावित्यर्थः, तस्माद्धेतोः प्रजानां मध्ये यः शक्यतमः दण्डदाने अत्यन्तं समर्थः स एव बुद्धः नास्तिकेन बौद्धादिना अभिमुखः स्यात्, एतेन यो दण्डदाने असमर्थः स नास्तिकं दूरतः परिवर्जयेदिति सूचितम् ॥ ३४ ॥

गो० टी०–प्रत्यक्षैकप्रमाणवादी यदि कश्चिद्राज्ये स्यात् सोऽपि बहिष्करणीय इत्याह–यथेत्यादिना । चोरो यथा निराकरणीयः स वेदबाह्यत्वेन प्रसिद्धोऽपि तथाहि तथैव अत्र अस्मिन् लोके नास्तिकं चार्वाकं तथागतं बुद्धतुल्यं विद्धि तस्माद्यः प्रजानां शङ्क्यतमः अवैदिकत्वेन शङ्कनीयः तेन नास्तिकेन बुधोऽभिमुखो न स्यात् ॥ ३४ ॥

३५ ] ति० टी०–अथ वेदोक्तधर्मे शिष्टाचारं प्रमाणयति–यतः त्वत्तोऽन्ये इति शेषः, त्वदन्ये द्विजाः जनाः पूर्वतरे श्रेष्ठाः । आर्षमिदम् । 'यदा' इति पाठे नाध्याहारापेक्षा तस्यैव यत इत्यर्थकत्वात् । बहूनि शुभानि चक्रुः इमं लोकं परं च लोकं छित्त्वा ऐहिकामुष्मिकफलकामनां त्यक्त्वापि वेदोक्तोऽयं धर्म इत्येतावतैव कर्माणि चक्रुरिति तात्पर्यम् । तस्माद्ये द्विजाः स्वस्ति अहिंसा सत्यादिकम्, कृतं तपोदानपरोपकारादि, हुतं यज्ञादि कुर्वते वेदप्रामाण्यादेव ॥ ३५ ॥

रा० टी०–कर्माचरणे शिष्टाचारं प्रमाणयन्नाह–त्वत्त इति । त्वत्तः पूर्वतरे द्विजा जनाः सर्वे द्विजा इत्यर्थः, शुभानि कर्माणि चक्रुस्तस्मात्कर्माचरणस्यावश्यकत्वाद्धेतोः इमं परं च लोकं छित्त्वा सर्वलोकविषयकाभिलाषं त्यक्त्वेत्यर्थः, विद्यमानाः द्विजाः स्वस्तिकृतं कल्याणोत्पादकं हुतं यागं चकारेण सत्यसंभाषणादि च चक्रुः, एतेन नास्तिकमतस्याधुनिकत्वं सूचितम् ॥ ३५ ॥

गो० टी०–ऐहिकामुष्मिकफलसाधने धर्मे शिष्टाचारं प्रमाणयति–त्वत्त इत्यादिना । त्वत्तः पूर्वतरे पुरातनाश्च वराश्च ज्ञानतः श्रेष्ठाश्च जनाः बहूनि शुभानि कर्माणि चक्रुः ते इमं परं च लोकं जित्वा सदा वर्तन्त इति शेषः । सदा वर्तमानत्वं च ग्रहनक्षत्रादिरूपेण दृश्यमानत्वात् "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि" इति श्रुतेः । तस्मात् कर्मानुष्ठानस्यैहिकामुष्मिकसकलफलसाधनत्वात् द्विजाः स्वस्तिमङ्गलात्मकं कर्म हुतं यज्ञादिकृतं च तपोदानादिकं च कुर्वन्तीति शेषः । एवं प्रत्यक्षमेव न प्रमाणं तदतिरिक्तानां वेदानामपि प्रमाणत्वात् तत्त्वं च तेषां महाजनपरिग्रहात् । स चापौरुषेयत्वेन तथाविच्छिन्नसंप्रदायत्वे सति अस्मर्यमाणकर्तृकत्वात् वैदिकानि च कर्माणि सफलानि अग्निरविसोमनक्षत्रेन्द्रादिफलभोगस्याबाधितप्रत्यक्षसिद्धत्वात् । अन्यकृतभोजनस्य पथिकाशनत्वाभावस्तु अदर्शनादविहितत्वाच्चेत्युक्तम् ॥ ३५॥३६॥

३६ ] ति० टी०–तथा धर्मे रता निष्ठावन्तो ये ते प्रधानाः श्रेष्ठा मुनयो वसिष्ठाद्या ऋषयः पूज्या भवन्ति लोके न त्वादृशा इत्यर्थः ॥ ३६ ॥

रा० टी०–धर्मे इति । सत्पुरुषैः समेताः सहिताः तेजस्विनः दानगुणप्रधानाः अतिदानशीलाः अहिंसकाः हिंसारहिता वीतमलाः मलसंसर्गरहिताः प्रधानाः वसिष्ठादयो मुनयः लोके पूज्याः भवन्ति कर्माचरणस्य निरर्थकत्वे कर्मप्रवर्तकमुनीनां वञ्चकत्वापत्त्या पूज्यत्वं न स्यादिति तात्पर्यम् ॥ ३६ ॥

३७ ] ति० टी०–इति धिक्कृतो जाबालिः स्वविषयकोपशमनायाह–इतीति । पथ्यं परमार्थम् ॥ ३७ ॥

रा० टी०–इतीति । महात्मानं सर्वपूज्यस्वरूपमदीनसत्त्वं दैन्यसंसर्गशून्यमिति सरोषं ब्रुवन्तं रामं सानुनयमनुनयसहितं

१ शक्यतम इति गो. पाठः । २ नेति गो. पाठः । ३ वरा इति गो. पाठः । ४ जित्वेति गो. पाठः । ५ सरोषमिति गो. पाठः । ६ तथ्यमिति गो. पाठः ।

न नास्तिकानां वचनं ब्रवीम्यहं न नास्तिकोऽहं न च नास्ति किंचन ।
समीक्ष्य कालं पुनरास्तिकोऽभवं भवेय काले पुनरेव नास्तिकः ॥ ३८ ॥
स चापि कालोऽयमुपागतः शनैर्यथा मया नास्तिकवागुदीरिता ।
निवर्तनार्थं तव राम कारणात्प्रसादनार्थं च मयैतदीरितम् ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

## दशोत्तरशततमः सर्गः ।

जाबाल्ये रुष्टं रामं परिसान्त्वयन्वसिष्ठ आब्रह्माणं दशरथावधेर्ज्येष्ठैनैव राज्यकरणात्त्वमेव ज्येष्ठो योग्यश्चातोऽभिषेचयात्मानमिति प्रवर्तयति ।

क्रुद्धमाज्ञाय रामं तु वसिष्ठः प्रत्युवाच ह । जाबालिरपि जानीते लोकस्यास्य गतागतिम् ॥ १ ॥

पथ्यं लोकोपकारकं सत्यं कापट्यरहितमास्तिकं वचः विप्रः पुनरुवाच ॥ ३७ ॥

गो० टी०—इति ब्रुवन्तमिति तथ्यं यथार्थं सत्यं सद्भ्यो हितम् ॥ ३७ ॥

३८ ] ति० टी०—तदेवाह—नेति । किंच न परलोकादि नास्तीति न, किं त्वस्त्येव । कालं पारलौकिकव्यवहारकालम् । काले लौकिकव्यवहारकाले । एवं च सर्वमतज्ञेन कालविशेषेऽन्यथावाग्व्यवहारेऽपि न तस्य नास्तिकत्वं भवतीति भावः ३८

रा० टी०—तद्वचनाकारमाह—नेति । अहं नास्तिकानां वचनं ब्रवीमि नास्तिको नाहं, तत्र हेतुः यतः किंचन परलोकादिकं नास्तीति न सर्वमस्त्येवेत्यर्थः । इति कालं महात्मोपदेशं पुनः पुनः समीक्ष्य विचार्य आस्तिकोऽभवम् एतेन मयि नास्तिकत्वप्राप्तिशङ्का न कर्तव्येति सूचितम् । ननु किमर्थं नास्तिकवचनमुच्चारितवानित्यत आह—काले अयोध्याकर्मकभवद्गमनार्थं नास्तिकः नास्तिकवचनवक्ता भवेय ॥ ३८ ॥

गो० टी०—धर्मसंकटे प्राप्ते सर्वमतज्ञेन विदुषा यत्किंचिन्मतमवलम्ब्यापि तस्य परिहरणीयत्वात् महतो राज्यस्यानायकत्वरूपसंकटपरिहाराय त्वां निवर्तयितुं मया नास्तिकमतमुपन्यस्तं नत्वहं वस्तुतो नास्तिक इत्याह—न नास्तिकानामित्यादिना । किंच न परलोकादिकं नास्तीति न अस्त्येव समीक्ष्य कालं पुनरास्तिकोऽभवं यदा वादिनान्येन नास्तिकमतमवलम्ब्यते तं कालं समीक्ष्य अहं पुनरास्तिकमतमवलम्ब्याभवम् अन्यैर्वादिभिर्नास्तिकमतमवलम्ब्य कृतकोलाहले तदानीमहमेव त्वदुक्तरीत्या शतशस्तत्खण्डनमकार्षमित्यर्थः । तर्हीदानीं नास्तिकमतं कुतोऽवलम्बितवानसीत्यत्राह—भवेय काले पुनरेव नास्तिक इति । तादृशोऽहमेव पुनः काले धर्मसंकटकाले नास्तिको भवेय धर्मसंकटकालप्रयुक्तोऽयं मम नास्तिकवाद इत्यर्थः । भवेयेत्यनेन इतः परमपि कस्मिंश्चिद्धर्मसंकटकाले नास्तिकमतमवलम्बनीयमेव न च तावता वस्तुतो नास्तिकत्वं मम भवेदिति भावः ॥ ३८ ॥

३९ ] ति० टी०—स चापि कालः लौकिकव्यवहारप्रयोजन इत्यर्थः । तत्प्रयोजनमाह—निवर्तनार्थमिति । निवर्तनरूपं प्रयोजनमुद्दिश्य कारणात्त्वदीयास्तिकत्वातिशयस्य लोकेतिप्रसिद्धिसंपादनरूपकारणान्नास्तिकवागुक्ता तादृशीं वाणीं श्रुत्वा क्रुद्धस्य तव प्रसादनार्थं चैतन्न नास्तिकानामित्याद्युदीरितम् ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे नवोत्तरशततमः सर्गः ॥१०९॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । यतः सः अयोध्यागमनयोग्यः अयं काल उपागतः प्राप्तः अतः कारणात् यत्नतः तव प्रसादनार्थं निवर्तनार्थं च ईरितं सकम्पं नास्तिकवाक् शनैर्मयोदीरिता । एतदिति सामान्ये नपुंसकम् ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे नवोत्तरशततमः सर्गः ॥ १०९ ॥

गो० टी०—तादृशधर्मसंकटकाल एवायमित्याह—स चापीति । एवमपि परमवैदिकस्य तव न युक्तमेतादृशं वचनमित्याशङ्क्याह—निवर्तनार्थमित्यादिना । निवर्तनार्थं तव विप्रतिज्ञापज्ञार्थं तव वेदमार्गादविचाल्यत्वस्य लोकानां प्रकटीकरणार्थमित्यर्थः, कारणात् भरतकारणात् भरतमुखोल्लासाय तव प्रसादनार्थं चेत्यर्थः ॥ ३९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

१ ] ति० टी०—अथ वसिष्ठो भगवतो जाबालिविषयकोपनाटनं शमयितुमभिषेकस्वीकारशेषतया ब्रह्माणमारभ्य ज्येष्ठाभिषेकरूपं कुलाचारं कथयति—क्रुद्धमित्यादि । गतागतिं परलोकगमनं ततः पुनरिहागतिं च, अनेनास्तिकतामुक्तं जाबालयुक्तौ ॥ १ ॥

रा० टी०—रामजाबालिवचनश्रवणानन्तरकालिकां वसिष्ठोक्तिमाह—क्रुद्धमित्यादिभिः । क्रुद्धं नास्तिकवचनश्रवणहेतु-

१ लिंति गो० पाठः । २ तमिति गो० पाठः ।

निवर्तयितुकामस्तु त्वामेतद्वाक्यमब्रवीत् । इमां लोकसमुत्पत्तिं लोकनाथ निबोध मे ॥ २ ॥
सर्वं सलिलमेवासीत्पृथिवी तत्र निर्मिता । ततः समभवद्ब्रह्मा स्वयंभूर्दैवतैः सह ॥ ३ ॥
स वराहस्ततो भूत्वा प्रोज्जहार वसुंधराम् । असृजच्च जगत्सर्वं सह पुत्रैः कृतात्मभिः ॥ ४ ॥
आकाशप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः । तस्मान्मरीचिः संजज्ञे मरीचेः कश्यपः सुतः ॥ ५ ॥
विवस्वान्कश्यपाज्जज्ञे मनुर्वैवस्वतः स्वयम् । स तु प्रजापतिः पूर्वमिक्ष्वाकुस्तु मनोः सुतः ॥ ६ ॥
यस्येयं प्रथमं दत्ता समृद्धा मनुना मही । तमिक्ष्वाकुमयोध्यायां राजानं विद्धि पूर्वकम् ॥ ७ ॥

---

कोपविशिष्टं राममाज्ञाय वसिष्ठ उवाच । तद्वचनाकारमाह—अस्य लोकस्य गतागतिं गमनागमनं जाबालिरपि जानीते, एतेन जाबालिर्न नास्तिक इति व्यञ्जितम् ॥ १ ॥

गो॰ टी॰—अथ वसिष्ठो जाबालिवचनयाथार्थ्यप्रदर्शनेन तद्विषयकोपं निवर्त्य स्वाभिमतं ज्येष्ठस्यैव राज्यार्हतारूपं निवर्तनोपायं प्रतिपादयति—क्रुद्धमित्यादिना । लोकस्य जनस्य गतं गमनं भावे निष्ठा परलोकप्राप्तिं तत इहागतिं च जानीते नासौ नास्तिक इत्यर्थः । निवर्तनार्थमिति तदुक्तमपि सत्यमित्याह—निवर्तयितुकाम इत्यादिना । ज्येष्ठस्यैव राज्यार्हतां वक्तुमारभते—इमामित्यादि । लोकनाथ! तवैव तत्प्रत्यक्षं हीति भावः ॥ १–३ ॥

२ ] ति॰ टी॰—लोकनाथेत्यनेन लोकनाथावतारत्वं ध्वनयति ॥ २ ॥

रा॰ टी॰—ननु तद्वचनज्ञापिततन्नास्तिकत्वं कथं निवर्तयसीत्यत आह—निवर्तयित्विति । त्वां निवर्तयितुकामः एतद्वाक्यमब्रवीत् हे लोकनाथ ! इमां लोकसमुत्पत्तिं मे निबोध जानीहि ॥ २ ॥

३ ] ति॰ टी॰—सर्वमिति । पूर्वाहान्तेऽपहृतं सर्वं जगत्पराहादौ सलिलमेव सविग्रहहिरण्यगर्भात्मनावस्थितमभूत् । तत्र सलिलान्तः पृथिवी निर्मिता सलिलरूपेण भगवता स्वेच्छया ब्रह्मा विराड्रूपो दैवतैः सहाग्निर्वाग्भूत्वा मुखं प्राविशदित्याद्युपदिष्टरीत्या ॥ ३ ॥

रा॰ टी॰—उत्पत्तिप्रकारमाह—सर्वमिति । पूर्वं सृष्टेः पूर्वस्मिन्काले सर्वं सलिलमेवासीत् आत्मकार्यभूताकाशकार्यभूतवायुकार्यभूताग्निकारणकं सलिलमसृजदित्यर्थः । तत्र तस्मिन्सलिले पृथिवी निर्मिता तत्प्रकाशपरब्रह्मणेति शेषः, ततः तत् परब्रह्मैव दैवतैः इन्द्रियाण्यधिष्ठातृदेवैः सह स्वयंभूर्ब्रह्मा समभवत् । अयं भावः, उत्पत्तिकारणीभूतरजोगुणधारणेन परब्रह्मैव ब्रह्मेति संज्ञां प्राप्नोत् तदनन्तरं स ब्रह्मा देवान् असृजदिति॥३॥

४ ] ति॰ टी॰—ततः स त्रिमूर्तेर्विराजो विष्ण्वात्मकोंऽशो वराहरूपो भूत्वा वसुंधरां प्रोज्जहार । तस्यैव विराजो रजःप्रधानः सृष्टिव्यापारवानंशो ब्रह्मा इति व्यवह्रियमाणः सर्वं जगत्पुत्रैः सह निजानुग्रहप्राप्तसृष्ट्यादिशक्तिमद्भिर्दक्षादिभिः सहासृजत् ॥ ४ ॥

रा॰ टी॰—स इति । सः परब्रह्मशब्दवाच्यः ततः पालनहेतोः वसुंधरां जलान्तर्वर्तिपृथ्वीं वराहो भूत्वा प्रोज्जहार, अनन्तरं कृतात्मभिः कृतप्रयत्नैः पुत्रैः सह सर्वं जगत् असृजत् ब्रह्मेति शेषः ॥ ४ ॥

गो॰ टी॰—असृजदिति । आकाशप्रभव इत्यत्राकाशशब्दः परब्रह्मपरः " आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इति श्रुतेः । इत्थमेवाव्यक्तप्रभवो ब्रह्मेति बालकाण्डोक्तमपि शाश्वतः प्रवाहरूपेण नित्यः, नित्यः इतरापेक्षया चिरकालस्थायी अन्यथा आकाशप्रभव इति विरुध्यते अव्ययः तस्मात् स्थानात्तस्य मोक्षसिद्धेः ॥ ४ ॥ ५ ॥

५ ] ति॰ टी॰—नन्वसावेव सर्वादिर्नेत्याह—आकाशप्रभव इति । आकाशपदेन कारणोपाधिकं ब्रह्मेश्वराख्यम् । ब्रह्मेति त्रिमूर्तेर्ग्रहणम् । अस्मिञ्शाश्वतत्वनित्यत्वाव्ययत्वान्यापेक्षिकाणि । तस्माद्विराजो ब्रह्मणः ॥ ५ ॥

रा॰ टी॰—तत्सर्जनप्रकारमाह—आकाशेत्यादिभिः । शाश्वतः सार्वकालिकः अत एव नित्यः ध्वंसाप्रतियोगी अत एव अव्ययः विकारशून्यः आकाशात् आकाशब्रह्मणः प्रभवो यस्य सः यो ब्रह्मा परमपुरुषेच्छामात्रेण गृहीतरजोगुणहेतुकः लब्धब्रह्मसंज्ञः प्रकाशब्रह्मेत्यर्थः । तस्मान्मरीचिः संजज्ञे मरीचेः सुतः कश्यपः संजज्ञे अत एव ' सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः ' इतिभागवतेनैकवाक्यता । तत्र प्रकाशब्रह्मणः परपुरुषत्वं प्रकाशिपरपुरुषतादात्म्यादिति नानुपपत्तिः, आकाशशब्दस्य परब्रह्मत्वं तु "आकाशो ह वै एतयोः नामरूपयोर्निर्वहिता" इत्यादिश्रुतौ प्रसिद्धम् । निर्णीतं चैतद्विशेषेण " आकाशस्तल्लिङ्गात् " इतिसूत्रे भाष्ये ॥ ५ ॥

६ ] ति॰ टी॰—तत्र मन्वन्ता मानसी सृष्टिः । मनोः क्षेत्रे इक्ष्वाकुः ॥ ६ ॥

रा॰ टी॰—विवस्वानिति । कश्यपात् विवस्वान् सूर्यः जज्ञे वैवस्वतः विवस्वत्पुत्रः मनुः जज्ञे स मनुः पूर्वं प्रजापतिः मनोः सुतः इक्ष्वाकुः ॥ ६ ॥

गो॰ टी॰—विवस्वानिति । वैवस्वतः विवस्वत्संबन्धी । तस्येक्ष्वाकुवंशकूटस्थत्वं च दर्शयति—स त्वित्यादिना । मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयमिति तस्यायोध्यानिर्मातृत्वोक्तिः ॥ ६–११ ॥

७ ] ति॰ टी॰—तस्य साक्षात्स्वप्रियत्वात्समृद्धा चतुःसमुद्रवसना मही सर्वा भूर्दत्ता पित्रा मनुनेति शेषः ॥ ७ ॥

---

१ उक्तवानिति गो॰ पाठः । २ काश्यप इति गो॰ पाठः । ३ सुत इति गो॰ पाठः ।

इक्ष्वाकोस्तु सुतः श्रीमान्कुक्षिरित्येव[1] विश्रुतः । कुक्षेरथात्मजो वीर[2] विकुक्षिरुदपद्यत ॥ ८ ॥
विकुक्षेस्तु महातेजा बाणः पुत्रः प्रतापवान् । बाणस्य च महाबाहुरनरण्यो महातपाः[3] ॥ ९ ॥
नानावृष्टिर्बभूवास्मिन्न दुर्भिक्षः[4] सतां वरे । अनरण्ये महाराजे तस्करो वापि[5] कश्चन ॥ १० ॥
अनरण्यान्महाराज[7] पृथू राजा बभूव ह । तस्मात्पृथोर्महातेजास्त्रिशङ्कुरुदपद्यत[6] ॥ ११ ॥
स सत्यवचनाद्वीरः सशरीरो दिवं गतः । त्रिशङ्कोरभवत्सूनुर्धुंधुमारो[8] महायशाः ॥ १२ ॥
धुंधुमारान्महातेजा युवनाश्वो व्यजायत । युवनाश्वसुतः श्रीमान्मांधाता समपद्यत ॥ १३ ॥
मांधातुस्तु महातेजाः सुसंधिरुदपद्यत । सुसंधेरपि पुत्रौ द्वौ ध्रुवसंधिः प्रसेनजित् ॥ १४ ॥
यशस्वी ध्रुवसंधेस्तु भरतो रिपुसूदनः । भरतात्तु महाबाहोरसितो नाम जायत ॥ १५ ॥
यस्यैते प्रतिराजान उदपद्यन्त शत्रवः । हैहयास्तालजङ्घाश्च शूराश्च शशबिन्दवः[9] ॥ १६ ॥
तांस्तु सर्वान्प्रतिव्यूह्य युद्धे राजा प्रवासितः । स च शैलवरे रम्ये बभूवाभिरतो मुनिः ॥ १७ ॥

रा० टी०—यस्येति । यस्य यस्मै इक्ष्वाकवे प्रथमं पूर्वं समृद्धा मही मनुना दत्ता तमिक्ष्वाकुमयोध्यायां पूर्वकं प्रथमं राजानं विद्धि ॥ ७ ॥

८-९ ] ति० टी०—विश्रुतः प्रसिद्धः ॥ ८ ॥ ९ ॥

रा० टी०—इक्ष्वाकोरिति । इक्ष्वाकोः सुतः कुक्षिः इत्येव नाम्ना विश्रुतो विख्यातः, कुक्षेः आत्मजः विकुक्षिः उदपद्यत॥८॥

रा० टी०—विकुक्षेरिति । विकुक्षेस्तु बाणः उदपद्यत, बाणस्य च अनरण्यः उदपद्यतेति शेषः ॥ ९ ॥

१०-११ ] ति० टी०—सतां वरे श्रेष्ठेऽस्मिन्ननरण्ये राज्यं कुर्वति नानावृष्टिर्न तन्मूलो वा दुर्भिक्षः ॥ १० ॥ ११ ॥

रा० टी०—नेति । सतां वरे महतां स्वीकारकर्तरि अस्मिन् अनरण्ये महाराजे सति अनावृष्टिः दुर्भिक्षश्च न बभूव कश्चन तस्करश्च न बभूव ॥ १० ॥

रा० टी०—अनरण्यादिति । हे महाराज! अनरण्यात् पृथू राजा बभूव । तस्मात्पृथोः त्रिशङ्कुः उदपद्यत ॥ ११ ॥

१२ ] ति० टी०—स त्रिशङ्कुः सत्यवचनात्स्वीयाद्भगवतो विश्वामित्रस्य सत्यप्रतिज्ञानाच्च ॥ १२ ॥

रा० टी०—स इति । स त्रिशङ्कुः सत्यवचनात् विश्वामित्रसत्यप्रतिज्ञानात् दिवं गतः । त्रिशङ्कोः धुन्धुमारः सुतः प्राभवत् ॥ १२ ॥

गो० टी०—त्रिशङ्कोरिति । युवनाश्व एव महातेजाः महातेजःप्रभावेन महाबलधुन्धुनामकासुरमारणाद्धुन्धुमारसंज्ञामलभतेत्यर्थः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—धुन्धुमाराद्युवनाश्व इति । त्रिशङ्कुसुतो युवनाश्व इत्यन्यत्र श्रूयमाणं कल्पान्तरविषयम्, यद्वान्यत्र त्रिशङ्कुसुत इत्यस्य तत्पौत्र इत्यर्थः ॥ १३ ॥

रा० टी०—धुन्धुमारादिति । धुन्धुमारात् युवनाश्वो व्यजायत, युवनाश्वसुतः मांधाता समपद्यत ॥ १३ ॥

१४-१५ ] ति० टी०—पुत्रौ द्वाविति । तत्र ध्रुवसंधिर्ज्येष्ठः । तत्पुत्रावलम्बनेनाग्रेऽयोध्याराज्यपरम्परावचनेन ज्येष्ठस्यैवाभिषेक इति सूचितम् ॥ १४ ॥ १५ ॥

रा० टी०—मान्धातुरिति । मान्धातुः सुसन्धिः उदपद्यत, सुसन्धेः ध्रुवसंधिः प्रसेनजित् द्वौ पुत्रौ उदपद्येताम् ॥ १४ ॥

गो० टी०—सुसन्धेरिति । ज्येष्ठस्य ध्रुवसन्धेः वंशकथनाज्ज्येष्ठस्यैव राज्ये स्थापितत्वमुक्तम् ॥ १४ ॥

रा० टी०—यशस्वीति । ध्रुवसंधेस्तु भरतोऽजायत, भरतात्तु असितो नाम जायत अजयत अडभावस्तु आगमशास्त्रस्यानित्यत्वात् ॥ १५ ॥

गो० टी०—भरतादिति । जायतेत्यत्राडभावः अनित्यत्वात् प्रतिराजानः सामन्ताः शत्रवः उदपद्यन्त आसन्नित्यर्थः, हैहयाद्यास्तत्तद्देशाधिपतयः ॥ १५ ॥

१६ ] ति० टी०—यस्यासितस्य एते प्रतिशत्रव उदपद्यन्त सोऽभवदित्यन्वयः ॥ १६ ॥

रा० टी०—यस्येति । यस्य असितस्य हैहयाद्याः चत्वारो राजानः प्रतिशत्रवः उदपद्यन्त, सोऽसितः तान् हैहयादीन् युद्धे प्रतिव्यूह्य स्वसैन्येनावृत्य विद्यमानोऽपि राजा पित्रा प्रवासितः शत्रुबाहुल्यात् पराजयशङ्कया विवासितः अत एव रम्ये शैलवरे अभिरतः सन् मुनिः परमात्ममननशीलो बभूव । श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—तान्हैहयादिचतुर्विधशत्रून् युद्धे स्वसैन्यं प्रतिव्यूह्यावस्थितोऽपि शत्रुबाहुल्यात्तज्जयोऽशक्य इति बुद्ध्या प्रवासितः संजातप्रवासो बभूव । शत्रुजयोद्देशेन हिमवद्गिरिं तपसे जगामेत्यन्वयः ॥ १७ ॥

गो० टी०—तानिति । प्रतिव्यूह्य युद्धं कृत्वा राजा अ-

१ ऐवेतीति गो. पाठः । २ वीरः इति गो. पाठः । ३ यशा इति गो. रा. पाठः । ४ दुर्भिक्षमिति गो. पाठः । ५ नापीति गो. पाठः । ६ बाहुरिति गो. पाठः । ७ महाराज इति गो. पाठः । ८ धुन्धुमार इति गो. पाठः । ९ शशिरिति गो. पाठः ।

द्वे चास्य भार्ये गर्भिण्यौ बभूवतुरिति श्रुतिः । तत्र चैका महाभागा भार्गवं देववर्चसम् ॥ १८ ॥
ववन्दे पद्मपत्राक्षी काङ्क्षिणी पुत्रमुत्तमम् । एका गर्भविनाशाय सपत्न्यै गरलं ददौ ॥ १९ ॥
भार्गवश्च्यवनो नाम हिमवन्तमुपाश्रितः । तमृषिं साभ्युपागम्य कालिन्दी त्वभ्यवादयत् ॥ २० ॥
स तामभ्यवदत्प्रीतो वरेप्सुं पुत्रजन्मनि । पुत्रस्ते भविता देवि महात्मा लोकविश्रुतः ॥ २१ ॥
धार्मिकश्च सुभीमश्च वंशकर्तारिसूदनः । श्रुत्वा प्रदक्षिणं कृत्वा मुनिं तमनुमान्य च ॥ २२ ॥
पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभम् । ततः सा गृहमागम्य पत्नी पुत्रमजायत ॥ २३ ॥
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया । गरेण सह तेनैव तस्मात्स सगरोऽभवत् ॥ २४ ॥
स राजा सगरो नाम यः समुद्रमखानयत् । इष्ट्वा पर्वणि वेगेन त्रासयान इमाः प्रजाः ॥ २५ ॥
असमञ्जस्तु पुत्रोऽभूत्सगरस्येति नः श्रुतम् । जीवन्नेव स पित्रा तु निरस्तः पापकर्मकृत् ॥ २६ ॥
अंशुमानपि पुत्रोऽभूदसमञ्जस्य वीर्यवान् । दिलीपोऽंशुमतः पुत्रो दिलीपस्य भगीरथः ॥ २७ ॥
भगीरथात्ककुत्स्थश्च काकुत्स्था येन तु स्मृताः । ककुत्स्थस्य तु पुत्रोऽभूद्रघुर्येन तु राघवाः ॥ २८ ॥
रघोस्तु पुत्रस्तेजस्वी प्रवृद्धः पुरुषादकः । कल्माषपादः सौदास इत्येवं प्रथितो भुवि ॥ २९ ॥

सितः शैलवरे हिमवति रम्ये निर्भयतया स्थातुं योग्ये मुनिः समभिरतो बभूव अन्यथा तस्मादपि शैलात्प्रवासयेयुरिति भावः ॥ १६ ॥

१८-२३ ] ति० टी०—इति श्रुतिः प्रसिद्धिः। तत्र चे-त्यादि बालकाण्डे व्याख्यातप्रायम् ॥ १८-२३ ॥

रा० टी०—द्वे इति । अस्य असितस्य द्वे भार्ये गर्भिण्यौ बभूवतुः । तत्र तयोर्मध्ये एका भार्या उत्तमं पुत्रं काङ्क्षिणी सती देववर्चसं भार्गवं च्यवनं ववन्दे वन्दनपूर्वकपुत्ररक्षां संप्रार्थ्य स्वगृहे तस्थावित्यर्थः । एका परा गर्भविनाशाय सपत्न्यै गरं विषं ददौ इति श्रुतिः श्रवणम् । श्लोकद्वयमेकान्वयि॥१८॥१९॥

रा० टी०—भार्गव इति । च्यवनो नाम भार्गवः हिमवन्तमुपाश्रितः प्राप्तः संजातसपत्नीकर्तृकगरदाना असितभार्या कालिन्दी तमृषिं च्यवनमभ्युपागम्य अभ्यवादयत् ॥ २० ॥

गो० टी०—द्वे इति । श्रूयत इति श्रुतिः जनवाद इत्यर्थः ॥ १७ ॥ १८ ॥

रा० टी०—स इति । सः कालिन्द्या अभिवादितः अत एव प्रीतः च्यवनः पुत्रजन्मनि पुत्रजन्मार्थं वरेप्सुं कालिन्दीं हे देवि ! लोकविश्रुतः धार्मिकत्वादिगुणविशिष्टः महात्मा ते पुत्रो भविता इति अभ्यवदत् । सार्धश्लोक एकान्वयी ॥ २१ ॥

गो० टी०—स इति । सः अभिवादनप्रसन्नो विप्रः पुत्रजन्मनि विषये वरेप्सुं तामभ्यवदत् उवाच, महात्मा महामतिः लोकविश्रुतः सर्वलोकप्रसिद्धः पुत्रो भवितेत्यभ्यवददित्यन्वयः१९

रा० टी०—श्रुत्वेति । श्रुत्वा च्यवनोक्तमाकर्ण्य पद्मपत्रसमानाक्षं तं मुनिमनुमान्य संपूज्य प्रदक्षिणं कृत्वा च ततः मुनिसमीपाद्गृहमागम्य पत्नी असितस्य स्त्री पुत्रमजायत अजनयत् ॥ २२ ॥ २३ ॥

गो० टी०—कृत्वेति । सा देवी तमृषिमनुमान्य संपूज्य ततो गृहमागम्य पद्मपत्रसमानाक्षं पद्मगर्भसमप्रभं पुत्रं व्यजायत व्यजीजनत् ॥ २० ॥ २१ ॥

२४ ] ति० टी०—तेनैव सह जात इति शेषः ॥ २४ ॥

रा० टी०—सपत्न्येति । यः गरः गर्भजिघांसया सपत्न्या दत्तः तेन गरेण सहैव जात इति शेषः, तस्माद्धेतोः सः गरसहितजन्मा सगरः सगरनामा अभवत् ॥ २४ ॥

२५-२७ ] ति० टी०—अखानयत् स्वपुत्रैरिति शेषः । इष्ट्वा दीक्षितो भूत्वा वेगेन खननवेगेन त्रासयान उद्वेजयन् २५-२७

रा० टी०—स इति । यः पर्वणि इष्ट्वा दीक्षां गृहीत्वा वेगेन खननशब्दतरसा इमाः प्रजास्त्रासयन् सन् यः समुद्रमखानयत् स्वपुत्रैरिति शेषः, तस्य सगरस्य असमञ्जः पुत्रोऽभूत् इति नः श्रुतं, सः असमञ्जः पापकर्मकृत् इव पित्रा निरस्तः परित्यक्तः । एव इवार्थे । श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

रा० टी०—अंशुमानिति । असमञ्जस्य अंशुमान् पुत्रोऽभूत्, अंशुमतः पुत्रो दिलीपोऽभूत्, दिलीपस्य भगीरथोऽभूत् २७

गो० टी०—स राजेति । यः इष्ट्वा दीक्षां कृत्वा पर्वणि वेगेन अम्बुवेगेन इमाः प्रजाः त्रासयन्तं समुद्रमखानयत् ॥२२॥

गो० टी०—असमञ्ज इति । नः श्रुतम् अस्माभिः श्रुतमित्यर्थः ॥ २३-२६ ॥

२८ ] ति० टी०—येन कुत्स्थेन ककुत्स्थेन । येन रघुणा राघवपदवाच्याः ॥ २८ ॥

रा० टी०—भगीरथादिति । भगीरथात्ककुत्स्थोऽभूत् येन तद्वंश्याः काकुत्स्थाः स्मृताः । ककुत्स्थस्य पुत्रो रघुरभूत् येन राघवाः स्मृताः ॥ २८ ॥

२९ ] ति० टी०—रघोः पुत्रः प्रवृद्धाभिनामकतुकयेन प्रसिद्धः ॥ २९ ॥

१ एतदावर्धद्वयं गो. नास्ति । २ सगरमिति गो. तु गरमिति रा. पाठः । ३ समुपेति गो. पाठः । ४ विप्र इति गो. पाठः । ५ सुशील इति गो. पाठः । ६ कृत्वा प्रदक्षिणं हृष्टेति गो. पाठः । ७ देवी पुत्रं व्यजायतेति गो. पाठः । ८ जातः स इति गो. पाठः । ९ त्रासयन्तमिति गो. पाठः । १० त्विति गो. पाठः । ११ विश्रुताः इति गो. पाठः । १२ ककुत्स्थस्य चेति गो. रा. पाठः ।

कल्माषपादपुत्रोऽभूच्छङ्खणस्त्विति नः श्रुतम्। यस्तु तद्वीर्यमासाद्य सहसैन्यो व्यनीनशत् ॥ ३० ॥
शङ्खणस्य तु पुत्रोऽभूच्छूरः श्रीमान्सुदर्शनः। सुदर्शनस्याग्निवर्ण अग्निवर्णस्य शीघ्रगः ॥ ३१ ॥
शीघ्रगस्य मरुः पुत्रो मरोः पुत्रः प्रशुश्रुवः। प्रशुश्रुवस्य पुत्रोऽभूदम्बरीषो महामतिः ॥ ३२ ॥
अम्बरीषस्य पुत्रोऽभून्नहुषः सत्यविक्रमः। नहुषस्य च नाभागः पुत्रः परमधार्मिकः ॥ ३३ ॥
अजश्च सुव्रतश्चैव नाभागस्य सुतावुभौ। अजस्य चैव धर्मात्मा राजा दशरथः सुतः ॥ ३४ ॥
तस्य ज्येष्ठोऽसि दायादो राम इत्यभिविश्रुतः। तद्गृहाण स्वकं राज्यमवेक्षस्व जगन्नृप ॥ ३५ ॥
इक्ष्वाकूणां हि सर्वेषां राजा भवति पूर्वजः। पूर्वजे नावरः पुत्रो ज्येष्ठो राजाऽभिषिच्यते ॥ ३६ ॥
स राघवाणां कुलधर्ममात्मनः सनातनं नाद्य विहन्तुमर्हसि।
प्रभूतरत्नामनुशाधि मेदिनीं प्रभूतराष्ट्रां पितृवन्महायशाः ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥

---

रा० टी०—रघोरिति। रघोः पुत्रस्तु प्रवृद्धादिनामचतुष्टयवान् प्रथितः प्रसिद्धोऽभवत् ॥ २९ ॥

३०-३३ ] ति० टी०—कल्माषपादपुत्रः शङ्खणनामा। यः शङ्खणस्तु तत्प्रसिद्धं वीर्यं पराक्रमं युद्धे प्राप्य दैवात्सहसैन्यो व्यनीनशन्नष्टोऽभूत्। स्वार्थे णिरिति कतकः। तीर्थस्तु—यः शङ्खणस्तद्वीर्यं वसिष्ठवीर्यमासाद्य तच्छापाद्राक्षसत्वं प्राप्य कल्माषपादो राक्षसभावेन स्वसैन्यं स्वपुत्रं शङ्खणं च भक्षितवानिति कथेत्याह ॥ ३०-३३ ॥

रा० टी०—कल्माषेति। कल्माषपादपुत्रः शङ्खणोऽभूत् यः शङ्खणः तद्वीर्यं वसिष्ठशापवीर्यजनितराक्षसत्वमासाद्य प्राप्य सहसैन्यः व्यनीनशत् विनाशं प्राप्नोत्, राक्षसानां विवेकाभावेन स्वसैन्यमप्यभक्षयदित्यर्थः, इति नः श्रुतम् ॥ ३० ॥

रा० टी०—शङ्खणस्येति। शङ्खणस्य पुत्रः सुदर्शनोऽभूत्, सुदर्शनस्य अग्निवर्णः अग्निवर्णस्य शीघ्रगः अभूत् ॥ ३१ ॥

रा० टी०—शीघ्रगस्येति। शीघ्रगस्य मरुः मरोः प्रशुश्रवः, प्रशुश्रवस्य पुत्रः अम्बरीषः अभूत् ॥ ३२ ॥

रा० टी०—अम्बरीषस्येति। अम्बरीषस्य पुत्रो नहुषोऽभूत्, नहुषस्य नाभागः पुत्रोऽभूत् ॥ ३३ ॥

गो० टी०—कल्माषपादेति। तद्वीर्यं वसिष्ठशापाद्राक्षसत्वं प्राप्तस्य कल्माषपादस्य पराक्रममासाद्य व्यनीनशत् विनाशं प्राप्तवानित्यर्थः, राक्षसत्वात् कल्माषपादेन स्वपुत्र एव विनाशित इत्यर्थः ॥ २७-३१ ॥

३४ ] ति० टी०—अजो नाभागज्येष्ठपुत्रः ॥ ३४ ॥

रा० टी०—अज इति। अजः सुव्रतश्च उभौ नाभागस्य सुतौ, अजस्य सुतो राजा दशरथः ॥ ३४ ॥

३५ ] ति० टी०—दायादः सुतः 'दायादौ सुतबान्धवौ' ततस्मात्स्वकं राज्यं गृहाण ॥ ३५ ॥

रा० टी०—तस्येति। तस्य दशरथस्य राम इत्यभिविश्रुतः ज्येष्ठः दायादः सुतः यतस्त्वमसि अतः स्वकं ज्येष्ठस्यैव परंपराप्राप्तत्वेन स्वकीयं राज्यं गृहाण जगत् तद्व्यवहारमवेक्षस्व च 'दायादौ सुतबान्धवौ' इत्यमरः ॥ ३५ ॥

गो० टी०—तस्येति। दायादः सुतः 'दायादौ सुतबान्धवौ' इत्यमरः ॥ ३२ ॥

३६ ] ति० टी०—पूर्वजे विद्यमानेऽवरः कनिष्ठो नाभिषिच्यते, अपि तु ज्येष्ठ एवाभिषिच्यते ॥ ३६ ॥

रा० टी०—इक्ष्वाकूणामिति। सर्वेषामिक्ष्वाकूणां पूर्वजः ज्येष्ठ एव राजा भवति। पूर्वजे विद्यमाने सति अवरः गुणैर्न्यूनः अज्येष्ठः कनिष्ठः राजा राज्ञा राजा राजत्वेन वा नाभिषिच्यते ॥ ३६ ॥

गो० टी०—इक्ष्वाकूणामिति। पूर्वजे विद्यमाने अपरः कनिष्ठपुत्रो राज्ये नाभिषिच्यते किंतु ज्येष्ठ एवेत्यन्वयः ॥ ३३ ॥

३७ ] ति० टी०—कुलधर्मं कुलक्रमागतं ज्येष्ठाभिषेकधर्मं विहन्तुं नार्हसि। प्रभूतराष्ट्रां प्रभूतावान्तरदेशाम् ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे दशोत्तरशततमः सर्गः ॥ ११० ॥

रा० टी०—स इति। राघवाणां संबन्धी स त्वमात्मनः कुलधर्मं विहातुं त्यक्तुं नार्हसि अतः प्रभूतरत्नामनेकविधरत्नविशिष्टां प्रभूतराष्ट्रां बहुदेशविशिष्टां मेदिनीं पितृवत् अनुशाधि ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

गो० टी०—स राघवाणामिति। स त्वमात्मनः संबन्धिनां राघवाणां सनातनं परंपरयाऽऽगतं कुलधर्मं ज्येष्ठाभिषेचनरूपम् अद्य भवन्तमारभ्य न विहन्तुमर्हसि। अन्येन रक्षितुं

---

१ विश्रुत इति गो. पाठः। २ चेति गो. रा. पाठः। ३ प्रशुश्रुक इति गो. प्रशुश्रव इति रा. पाठः। ४ प्रशुश्रुकस्येति गो. प्रशुश्रवस्येति रा. पाठः। ५ श्रुतिरिति गो. पाठः। ६ स्वजनं नृपेति गो. पाठः। ७ राज्येऽभीति गो. पाठः। ८ यश इति गो. पाठः।

# एकादशोत्तरशततमः सर्गः ।

पितुरपि मातुराचार्यस्य चाधिकपूज्यत्वं प्रतिपादयन्वसिष्ठस्तदनुरोधेनाश्रितपरिपालनसिद्ध्यर्थं च भरतप्रार्थनां सफलयितुं राममचोदयत् । रामस्तु आचार्यापित्रोरेवाभ्यर्हितत्त्वं समर्थयंस्तद्वचसश्च पूर्वमेवाङ्गीकृतत्वाच्चानतिक्रमणीयत्वं निरणैषीत् । एवं निरुत्तरीकृतो भरतः प्रायोपवेशार्थं कुशासनं तस्तार । रामस्तस्य क्षात्रधर्मबहिष्कृतत्वं प्रत्यपादयत्तर्हि त्वदङ्गीकृतवनवासं प्रतिनिधिभूतोऽहं पूरय इतिब्रुवन्तं भरतमसामर्थ्यमेव प्रतिनिधिर्विषयस्तदविषयोऽहं निन्द्यः स्यामतो गच्छायोध्यां प्रतिज्ञापूर्तिसमनन्तरमेवाहमयोध्यां प्रवेक्ष्य इति प्रतिज्ञाय पर्यसान्त्वयत् ।

वसिष्ठः स तदा राममुक्त्वा राजपुरोहितः । अब्रवीद्धर्मसंयुक्तं पुनरेवापरं वचः ॥ १ ॥
पुरुषस्येह जातस्य भवन्ति गुरवः सदा । आचार्यश्चैव काकुत्स्थ पिता माता च राघव ॥ २ ॥
पिता ह्येनं जनयति पुरुषं पुरुषर्षभ । प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते ॥ ३ ॥
स तेऽहं पितुराचार्यस्तव चैव परंतप । मम त्वं वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥ ४ ॥
इमा हि ते परिषदो ज्ञातयश्च नृपास्तथा । एषु तात चरन्धर्मं नातिवर्तेः सतां गतिम् ॥ ५ ॥
वृद्धाया धर्मशीलाया मातुर्नार्हस्यवर्तितुम् । अस्या हि वचनं कुर्वन्नातिवर्तेः सतां गतिम् ॥ ६ ॥

---

चाग्रक्यमित्याह–प्रभूतेति । रत्नानि श्रेष्ठवस्तूनि प्रभूतराष्ट्रं बहुविधावान्तरजनपदयुक्ताम् ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्याने-ऽयोध्याकाण्डव्याख्याने दशोत्तरशततमः सर्गः ॥ ११० ॥

१ ] ति० टी०–मनुमारभ्य स्वपर्यन्तं ज्येष्ठेनैव राज्यं पाल्यते इति न्यायेन निवर्त्यमानस्यापि तदनङ्गीकारमालोक्य पितृवचनादपि मद्वचनं गरीय इति वाक्यमुपक्रमते–वसिष्ठ इति ॥ १ ॥

रा० टी०–वसिष्ठस्य वचनान्तरं वर्णयितुमाह–वसिष्ठ इति । राजपुरोहितो वसिष्ठः राममुक्त्वा धर्मसंयुक्तमपरं वचः अब्रवीत् ॥ १ ॥

गो० टी०–अथ रामनिवर्तनोपायान् पुनरुपन्यस्य निरस्यति एकादशोत्तरशततमे–वसिष्ठस्त्वित्यादिना ॥ १ ॥

२ ] ति० टी०–गुरव उपास्याः ॥ २ ॥

रा० टी०–तद्वचनाकारमाह–पुरुषस्येति । जातस्य पुरुषस्य आचार्यादयस्त्रयो गुरवो भवन्ति ॥ २ ॥

गो० टी०–एवं कुलधर्मोपपादनेऽपि सर्वं तत् पितृनियोगव्यतिरिक्तविषयमिति मत्वा तूष्णीं स्थितस्य रामस्याशयं जानन् वसिष्ठः पुनर्निवर्तनहेत्वन्तरमाह–पुरुषस्येत्यादिना ॥ २ ॥

३ ] ति० टी०–जनयति शरीरमात्रेण प्रज्ञां ददाति । उपनयनसंस्कारपूर्वं वेदविषयां प्रज्ञां ददाति । तस्मादाचार्य एव गुरुसमवाये गुरुरुच्यते । तदुक्तमापस्तम्बेन–"आचार्यः श्रेष्ठो गुरूणां स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः वीर्यत्स्वभावं सर्वयोनिषुलभं प्राकृतं मलजं शरीरम्" इति ॥ ३ ॥

रा० टी०–गुरूणां कर्माणि विभजन्नाह–पितेति । पिता हिशब्देन माता एनं पुरुषं जनयति उत्पादयति, आचार्यः प्रज्ञां ददाति तस्माद्धेतोः सः पितृप्रभृतिः गुरुरुच्यते ॥ ३ ॥

गो० टी०–पितेति मातुरप्युपलक्षणं शरीरमेव मातापितरौ जनयत इत्यर्थः, तस्मात्प्रज्ञादानात् गुरुः मातापितृभ्यां गरीयानित्यर्थः "स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म" इति वचनादिति भावः ॥ ३ ॥ ४ ॥

४ ] ति० टी०–नातिवर्तेर्नातिवर्तेथाः सद्गतिभ्रंशो न भवतीत्यर्थः ॥ ४ ॥

रा० टी०–स इति । सोऽहं पितुः दशरथस्य तव च आचार्यः अतः मम वचनं कुर्वन्सन् सतां गतिं सज्जनमार्गं त्वं नातिवर्तेः उल्लङ्घयेथाः ॥ ४ ॥

५ ] ति० टी०–परिषदस्त्वत्संबन्धिन्यः श्रेणयः, ज्ञातयो बान्धवाः, नृपाः सेवकनृपाः, एषु रक्षारूपं धर्मं चरन्ननुतिष्ठन्नित्यर्थः ॥ ५ ॥

रा० टी०–इमा इति । इमास्ते परिषदः प्रजाः ज्ञातयश्च नृपाः खण्डमण्डलेश्वराश्च एषु धर्मं यथा स्यात्तथा चरन् तत्तत्प्रार्थनां स्वीकुर्वन्नित्यर्थः, एवं त्वं नातिवर्तेः ॥ ५ ॥

गो० टी०–इमा इति । परिषदः ब्राह्मणसमूहाः श्रेण्यः पौरजनाः द्विजाः क्षत्रियाः वैश्याश्च ते त्वत्संबन्धिनः येषु विषये धर्मं परिपालनरूपं चरन् सतां गतिं सतां पूर्वेषां राज्ञां मार्गं नातिवर्तेः नातिवर्तेथाः ॥ ५ ॥

६ ] ति० टी०–मातुः शुश्रूषणे वचनकरणे चावर्तितुं नार्हसीत्यर्थः । 'पितुः शतगुणं माता गौरवेणातिरिच्यते' इति स्मृतेरित्याशयः ॥ ६ ॥

रा० टी०–वृद्धाया इति । मातुः शुश्रूषणमिति शेषः, अवर्तयितुम् अप्रवर्तयितुं नार्हसि अस्याः वचनं कुर्वन्सन् सतां गतिं नातिवर्तेः ॥ ६ ॥

---

१ त्विति गो. पाठः । २ त्रय इति गो. पाठः । ३ श्रेण्यश्च द्विजा इति गो. पाठः । ४ त्विति गो. पाठः ।

भरतस्य वचः कुर्वन्याचमानस्य राघव । आत्मानं नातिवर्तेस्त्वं सत्यधर्मपराक्रम ॥ ७ ॥
एवं मधुरमुक्तः स गुरुणा राघवः स्वयम् । प्रत्युवाच समासीनं वसिष्ठं पुरुषर्षभः ॥ ८ ॥
यन्मातापितरौ वृत्तं तनये कुरुतः सदा । न सुप्रतिकरं तत्तु मात्रा पित्रा च यत्कृतम् ॥ ९ ॥
यथाशक्तिप्रदानेन स्वापनोच्छादनेन च । नित्यं च प्रियवादेन तथा संवर्धनेन च ॥ १० ॥
स हि राजा दशरथः पिता जनयिता मम । आज्ञापयन्मां यत्तस्य न तन्मिथ्या भविष्यति ॥ ११ ॥
एवमुक्तेन रामेण भरतः प्रत्यनन्तरम् । उवाच विपुलोरस्कः सूतं परमदुर्मनाः ॥ १२ ॥
इह तु स्थण्डिले शीघ्रं कुशानास्तर सारथे । आर्यं प्रत्युपवेक्ष्यामि यावन्मे संप्रसीदति ॥ १३ ॥

गो० टी०—वृद्धाया इति । अन्नर्तितुं शुश्रूषामकर्तुं नार्हसि अस्यास्तु 'पितुः शतगुणं माता' इत्युक्तायाः ॥ ६ ॥

७–८ ] ति० टी०—आत्मानं त्वां प्रति राज्यप्रत्यर्पणपूर्वं प्रतिनिवृत्तिं याचमानस्य भरतस्य वचः कुर्वन्नित्यर्थः ॥ ७ ॥८॥

रा० टी०—भरतस्येति । हे सत्यधर्मपराक्रम ! आत्मानं त्वां याचमानस्य प्रार्थयतो भरतस्य वचस्त्वं नातिवर्तेः ॥ ७ ॥

रा० टी०—एवमिति । एवमनेन प्रकारेण मधुरं यथा स्यात्तथा गुरुणा उक्तः स रामः समासीनं वसिष्ठं प्रत्युवाच ॥८॥

गो० टी०—भरतस्येति । सान्त्विता मामिका मातेत्यादिप्रार्थयमानस्य आत्मानम् आत्मभूतं भरतं नातिवर्तेथा इत्युदारधीः सत्यधर्मनिष्णातत्वस्वभावमित्यपरे स्वसाधारणधर्मत्वादाश्रितपारतन्त्र्यं नातिवर्तेथा इत्याचार्याः स एव हि सर्वेश्वरस्य स्वभावः स्वतःसिद्धः । सत्यधर्मपराक्रमेति दृष्टान्तार्थं यथा सत्यवचनमनातिक्रमणीयं यथा च धर्मो नातिक्रमणीयः तथा आश्रितपारतन्त्र्यमपीत्यर्थः, सत्यधर्मयोः पराक्रमः अनुष्ठानशूरत्वं यस्येति बहुव्रीहिः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—मातापितरौ यद्वृत्तं तनये कुरुतो यादृशं पुत्रस्योपकारं कुरुतस्ताभ्यां कृतमुपकाररूपं वस्तु यत्तन्न सुप्रतिकरम् अशक्यप्रत्युपकारमित्यर्थः ॥ ९ ॥

१० ] ति० टी०—तदेवाह—यथाशक्तिप्रदानेन बालस्य जीवनार्थं पदार्थभोजनशक्त्यनुरोधतः क्षीरान्नादिप्रदानेन । उच्छादनमुद्वर्तनं तिलपिष्टादिना, संवर्धनं क्रीडनम्, एतैर्यत्ताभ्यां कृतं तन्न सुप्रतिकरमित्यन्वयः ॥ १० ॥

रा० टी०—तद्वचनाकारमाह—यदिति । तनये पुत्रे यद्वृत्तं सेवामित्यर्थः, मातापितरौ कुरुतः तत् सुप्रतिकरं न, तस्य प्रत्युपकृतिर्नास्तीत्यर्थः । तदेव विशदयन्नाह—मात्रा पित्रा च यथाशक्ति शक्तिमनतिक्रम्य प्रदानेन भोजनादिप्रापणेन स्वापनोच्छादनेन स्वापनं शयनप्रवर्तनमुच्छादनं तैलादिना अङ्गप्रमर्दनं ताभ्यां नित्यं प्रियवादेन प्रियवचनेन च संवर्धनेन संवृद्ध्युपाकरणेन च यत्कृतं तत् न सुप्रतिकरम् । न सुप्रतिकरमित्युभयान्वयि । श्लोकद्वयं संमिलितान्वयि ॥ ९ ॥ १० ॥

गो० टी०—सति धर्मिणि धर्माश्चिन्त्यन्त इति न्यायेन सर्वधर्मसंपादनबीजभूतशरीरोत्पादकत्वात् अत्यन्ताज्ञानदशायामपि सर्वप्रकारसंरक्षणेन बहुविधोपकारकत्वाच्चाचार्यवचनादपि पितृवचनमवश्यं कर्तव्यम् अत एव "मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव" इतिचरमपर्वण्याचार्य उपात्त इत्यभिप्रायेणाह—यन्मातेत्यादिना श्लोकद्वयेन । तनयेन तनयसंपादननिमित्तं यद्वृत्तं व्रतोपवासदेवताराधनादिकं कुरुतः तन्न सुप्रतिकरं सुतरामशक्यप्रत्युपक्रियं मात्रा पित्रा च उत्पत्त्यनन्तरं यथाशक्तिप्रदानेन स्तन्यान्नादिप्रदानेन स्नापनोत्सादनेन नित्यं प्रियवादेन सदा संवर्धनेन च यत्कृतं तच्च न सुप्रतिकरम् ॥९॥१०॥

११ ] ति० टी०—जनयितोत्पादकः पिता, न तु गौणः पिता यदाज्ञापयद्वनवासरूपम् । एवं च भवदाज्ञातः पूर्वं तेनाज्ञादानान्मया चावश्यमिति प्रतिज्ञानात् भवदाज्ञयापि तदन्यथाकरणमधुनात्यन्तमनुचितमिति भावः ॥ ११ ॥

रा० टी०—स इति । मम जनयिता प्रकटनहेतुः अत एव पिता राजा दशरथः यद्यस्माद्धेतोः मामाज्ञापयत् भवदाज्ञातः पूर्वमेव न्ययोजयत्तस्माद्धेतोस्तस्य राज्ञः नियोजनं मिथ्या न भविष्यति ॥ ११ ॥

गो० टी०—स हीति । जनयिता पितेति गौणपितृव्यावृत्तिः आज्ञातम् प्रतिज्ञातम् एवं प्रथमं प्रतिज्ञातत्वात् मातृवचनं भ्रातृवचनं च कर्तुं नार्हामीति भावः ॥ ११ ॥

१२ ] ति० टी—प्रत्यनन्तरं समीपवर्तिनम् ॥ १२ ॥

रा० टी०—एवमिति । रामेण एवमुक्ते सति विपुलोरस्कः विशालवक्षाः परमदुर्मनाः भरतः प्रत्यनन्तरं समीपवर्तिनं सूतमुवाच ॥ १२ ॥

गो० टी०—एवमिति । प्रत्यनन्तरं समीपस्थं परमोदारः सान्त्विता मामिकेत्यादिना दत्तराज्यनिर्वाहकः ॥ १२॥

१३ ] ति० टी०—आर्यं प्रत्युपवेक्ष्यामि आर्यमुद्दिश्य प्रत्युपवेशनकर्म करिष्ये इत्यर्थः । तच्चोपरोद्धव्यस्य गृहद्वारसमीपे कुशेषु यावत्कार्यसिद्धि निराहारतयावगुण्ठिताननस्यैकपार्श्वेनैव पार्श्वान्तरपरिवृत्तिराहित्येन शयनमिति ॥ १३ ॥

रा० टी०—तद्वचनाकारमाह—इहेति । हे सारथे ! इह स्थण्डिले भूमिविशेषे कुशान् शीघ्रमास्तर । तत्प्रयोजनमाह आर्यं

१ स्थितिं गो. पाठः । २ स्नापनोत्सादनेनेति गो. पाठः । ३ आज्ञातं यन्मयेति गो. पाठः । ४ उक्तस्त्विति गो. पाठः । ५ परमोदार इति गो. पाठः । ६ मे इति गो. पाठः । ७ नेति गो. पाठः ।

निराहारो निरालोको धनहीनो यथा द्विजः । शेये पुरस्ताच्छालायां यावन्मां प्रतियास्यति ॥ १४ ॥
स तु राममवेक्षन्तं सुमन्त्रं प्रेक्ष्य दुर्मनाः । कुशोत्तरमुपस्थाप्य भूमावेवास्थितः स्वयम् ॥ १५ ॥
तमुवाच महातेजा रामो राजर्षिसत्तमः । किं मां भरत कुर्वाणं तात प्रत्युपवेक्ष्यसे ॥ १६ ॥
ब्राह्मणो ह्येकपार्श्वेन नरान्रोद्धुमिहार्हति । न तु मूर्धाभिषिक्तानां विधिः प्रत्युपवेशने ॥ १७ ॥
उत्तिष्ठ नरशार्दूल हित्वैतद्दारुणं व्रतम् । पुरवर्यामितः क्षिप्रमयोध्यां याहि राघव ॥ १८ ॥
आसीनस्त्वेव भरतः पौरजानपदं जनम् । उवाच सर्वतः प्रेक्ष्य किमार्यं नानुशासथ ॥ १९ ॥
ते तदोचुर्महात्मानं पौरजानपदा जनाः । काकुत्स्थमभिजानीमः सम्यग्वदति राघवः ॥ २० ॥

---

प्रति राममुद्दिश्य यावन्मे न प्रसीदति तावत् प्रत्युपवेक्ष्यामि कुशास्तरणभूमौ संस्थास्यामि ॥ १३ ॥

गो० टी०—इहेति । इह स्थण्डिले भूमौ कुशानास्तर आस्तृणीहि पावनत्वार्थमित्यर्थः, अत एव वक्ष्यति कुशानास्तीर्य राघव इति । प्रत्युपवेक्ष्यामि प्रतिरोत्स्यामीत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—एतदुत्तरम्—निराहारः इत्यादि पद्यं प्रक्षिप्तमिति कतकस्वरसः । धनहीनोऽधमर्णेन धनहीनः कृतो द्विज उत्तमर्णो यथा स्वधनग्रहणायाधमर्णद्वारि शेते तद्वदहं शये यावन्मां मद्वचनमङ्गीकृत्य प्रतियास्यस्ययोध्यामित्यर्थस्तस्य ॥ १४ ॥

रा० टी०—प्रत्युपस्थितिप्रकारमाह—निराहार इति । निराहारः आहाररहितः निरालोकः दीपादिप्रकाशरहितोऽहं शालायां पुरस्ताद्धनहीनो द्विज इव यावत् प्रतियास्यति अयोध्यां गमिष्यति तावच्छये शयनं करोमि ॥ १४ ॥

गो० टी०—प्रत्युपवेशप्रकारमाह—अनाहार इति । निरालोकः अवकुण्ठिताननः धनहीनः वृद्धयर्थम् ऋणप्रदानानिर्धनः शेष्ये शयिष्ये इडभाव आर्षः ॥ १४ ॥

१५ ] ति० टी०—स तु भरतो राममवेक्षन्तं प्रतीक्षमाणं सुमन्त्रं प्रेक्ष्य तदनुरोधात्कुशानयने विलम्बमानमिति यावत्, कुशोत्तरं कुशास्तरणं स्वयमेवोपस्थाप्यास्तीर्य भूमावेवास्थितः, प्रत्युपवेशनमनुष्ठितवानित्यर्थः ॥ १५ ॥

रा० टी०—स इति । दुर्मनाः स भरतः राममवेक्षन्तं कुशास्तरणकरणाय रामाज्ञां संप्रतीच्छन्तं सुमन्त्रं प्रेक्ष्य अवलोक्य कुशोत्तरं भूमौ स्वयमुपस्थाप्य संस्तीर्य आस्थितः ॥ १५ ॥

गो० टी०—स त्विति । राममवेक्षन्तं रामाज्ञां काङ्क्षन्तमित्यर्थः, कुशोत्तरं कुशास्तरणम् उपस्थाप्य आनीय स्वयमेवास्तरत् आस्तृणात् शयनं कृतवानित्यर्थः ॥ १५ ॥

१६ ] ति टी०—किं कुर्वाणं किमन्याय्यं कुर्वाणम् ॥ १६ ॥

रा० टी०—तमिति । राजर्षिसत्तमो रामस्तं भरतमुवाच । तद्वचनाकारमाह—हे भरत ! किमपकरणमिति शेषः, कुर्वाणं मामुद्दिश्य प्रत्युपवेक्ष्यसे मया न किंचिदपकृतमिति तात्पर्यं तेन प्रत्युपवेशनमनुचितमिति सूचितम् ॥ १६ ॥

गो० टी०—तमिति । किं कुर्वाणं किमपकारं कुर्वाणं तात इति सान्त्वनार्थमुक्तम् ॥ १६ ॥

१७ ] ति० टी०—ब्राह्मणः धनादिना वियोजित इति शेषः, एकपार्श्वेनेति प्रत्युपवेशधर्मोपलक्षणम् अनेन क्षत्रियाणामेतत्करणे प्रायश्चित्तमिति सूचितम् ॥ १७ ॥

रा० टी०—ब्राह्मण इति । एकपार्श्वेन एकपार्श्वशयनादिना नरान् स्वापकारिजनान् रोद्धुमपकृतेर्निवर्तयितुं ब्राह्मण एवार्हति अतः मूर्धाभिषिक्तानां राजन्यानां प्रत्युपवेशने न विधिः, एतेन विधिविरुद्धकरणे त्वां पापं प्राप्स्यतीति बोधितम् ॥ १७ ॥

गो० टी०—ब्राह्मण इति । एकपार्श्वेन एकपार्श्वशयनेन मूर्धाभिषिक्तानामभिषिक्तक्षत्रियाणाम् ॥ १७ ॥ १८ ॥

१८ ] ति० टी०—तस्मादुत्तिष्ठेति ॥ १८ ॥

रा० टी०—पापस्पर्शाभावे उपायं वदन्नाह—उत्तिष्ठेति । नरशार्दूल ! एतदुक्तं दारुणं व्रतं हित्वा इतोऽस्माद्वनात् पुरवर्यां पुरश्रेष्ठामयोध्यां क्षिप्रं याहि ॥ १८ ॥

१९ ] ति० टी०—आसीन एव प्रत्युपविष्ट एव । नानुशासथ नानुशिष्टेत्यर्थः, इत्युवाचेत्यन्वयः ॥ १९ ॥

रा० टी०—आसीन इति । आसीन एव भरतः सर्वतः चतुर्दिक्षु प्रेक्ष्य अवलोक्य यूयमार्यं रामं किं किमर्थं नानुशासथ इति पौरजानपदं जनमुवाच ॥ १९ ॥

गो० टी०—आसीन इति । नानुशासथेत्यत्र इति करणं बोध्यम् ॥ १९ ॥

२० ] ति० टी०—काकुत्स्थं रामं प्रति राघवो भवान्भरतः सम्यग्वदतीति जानीमः ॥ २० ॥

रा० टी०—त इति । ते भरतेन प्रबोधिताः जनाः काकुत्स्थं रामं राघवो भवान् सम्यग्वदति इति वयं जानीम इति महात्मानं भरतमूचुः ॥ २० ॥

गो० टी०—त इति । काकुत्स्थं राममभिजानीमः अभितो जानीमः सत्यसंधं जानीम इत्यर्थः ॥ २० ॥

---

१ अनाहार इति गो. पाठः । २ शेष्य इति गो. पाठः । ३ शालया इति गो. पाठः । ४ नेति गो. रा. पाठः । ५ आस्तरदिति गो. पाठः । ६ उपवेक्ष्यसीति गो. पाठः । ७ किमर्थमिति रा. पाठः । ८ तमूचुरिति गो. पाठः ।

एषोऽपि हि महाभागः पितुर्वचसि तिष्ठति । अत एव न शक्ताः स्मै व्यावर्तयितुमञ्जसा ॥ २१ ॥
तेषामाज्ञाय वचनं रामो वचनमब्रवीत् । एवं निबोध वचनं सुहृदां धर्मचक्षुषाम् ॥ २२ ॥
एतच्चैवोभयं श्रुत्वा सम्यक्संपश्य राघव । उत्तिष्ठ त्वं महाबाहो मां च स्पृश तथोदकम् ॥ २३ ॥
अथोत्थाय जलं स्पृष्ट्वा भरतो वाक्यमब्रवीत् । शृण्वन्तु मे परिषदो मन्त्रिणः शृणुयुस्तथा ॥ २४ ॥
न याचे पितरं राज्यं नानुशासामि मातरम् । एवं परमधर्मज्ञं नानुजानामि राघवम् ॥ २५ ॥
यदि त्ववश्यं वस्तव्यं कर्तव्यं च पितुर्वचः । अहमेव निवत्स्यामि चतुर्दश वने समाः ॥ २६ ॥
धर्मात्मा तस्य सत्येन भ्रातुर्वाक्येन विस्मितः । उवाच रामः संप्रेक्ष्य पौरजानपदं जनम् ॥ २७ ॥
विक्रीतमाहितं क्रीतं यत्पित्रा जीवता मम । न तल्लोपयितुं शक्यं मया वा भरतेन वा ॥ २८ ॥

२१ ] ति० टी०–एषोऽपि महाभागो रामः पितुर्वचसि तिष्ठति त्वदपि सम्यगेव । यदेवमत एवेत्यर्थः । अत्र भगवता स्वव्यावर्तननिश्चयेनागतानामपि पौरादीनामन्तर्यामिविधया स्वानुकूलवचनप्रयोगः कारितः भरतस्य तु यशःख्यापनाय ज्येष्ठे कनिष्ठेनैवं वर्तितव्यमिति लोकव्यवहारबोधनाय च तथा प्रवर्तनमिति प्रतिभाति ॥ २१ ॥

रा० टी०–नहु मम वचनस्य सम्यक्त्वे रामः कथं न भवद्भिः बोध्यते इत्यत आहुः–एष इति । महाभागः एष रामोऽपि पितुर्वचसि आज्ञायां तिष्ठति अत एव व्यावर्तयितुं निवर्तयितुं न शक्ताः स्मः ॥ २१ ॥

गो० टी०–सम्यग्वदतीत्येतदुपपादयति–एष इत्यादिना । अञ्जसा शीघ्रं व्यावर्तयितुं न शक्ताः स्म इति तं भरतमूचुरित्यन्वयः ॥ २१ ॥ २२ ॥

२२ ] ति० टी०–रामो वचनमब्रवीदिति भरतं प्रतीति शेषः । धर्मचक्षुषां धर्मदर्शिनां निबोध शृणु ॥ २२ ॥

रा० टी०–तेषामिति । तेषां पौरजनानां वचनमाज्ञाय रामोऽब्रवीत् भरतमिति शेषः । तद्वचनाकारमाह–धर्मचक्षुषां सुहृदामेवं वचनं निबोध जानीहि ॥ २२ ॥

२३ ] ति० टी०–उभयं त्वद्विषयं मद्विषयं च वचनं श्रुत्वा संपश्य विचारय । विचारेणापि कर्तव्यं निश्चेतुमशक्तश्चेन्मयोक्तं कुरु इति शेषः । तत्स्वोक्तमाह–उत्तिष्ठेति । क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तमाह–मां च स्पृश तथोदकम् । उदकस्पर्श आचमनार्थः ॥ २३ ॥

रा० टी०–वचनाकारमाह–एतदिति । राघव हे भरत! एतत्पौरजनैः मया चोच्चारितमुभयं श्रुत्वा सम्यक् संपश्य द्वयोर्वचनयोः साम्यं निश्चिनु तस्मात् हे महाबाहो! त्वमुत्तिष्ठ मामुदकं च स्पृश, एतेन अविहितप्रत्युपवेशनस्य प्रायश्चित्तं जलादिस्पर्श इति प्रबोधितम् ॥ २३ ॥

गो० टी०–एतदिति । एतदुभयं मद्वचनं पौरजनवचनं चेत्यर्थः । सम्यक्संपश्य कर्तव्यं सम्यङ्निरूपय मां च स्पृश तथोदकमिति क्षत्रियाविहितप्रत्युपवेशनप्रायश्चित्तार्थमित्यर्थः, वसिष्ठादिषु विप्रमात्रेषु स्वस्पर्शेनविधेः इतः परमेवंविधं न क्रियत इति शपथार्थं जलं स्पृष्ट्वा मां स्पृशेत्यपि सिद्धम् ॥ २३ ॥

२४ ] ति० टी०–परिषदः सभ्याः ॥ २४ ॥

रा० टी०–अथेति । अथ प्रायश्चित्तोपदेशरूपरामवचनश्रवणानन्तरं भरतः उत्थाय जलं तदुपलक्षितरामं च स्पृष्ट्वा वाक्यमब्रवीत् । तद्वचनाकारमाह–परिषदादयो यूयं मद्वचनं शृण्वन्तु, तत्र परिषदः सभ्याः श्रेणयः प्रजासमूहाः ॥ २४ ॥

गो० टी०–अथेत्यादि । न याचे न याचितवान् नानुशासामि नानुशास्मि एवं कुर्विति नानुशिष्टवानस्मीत्यर्थः, नानुजानामि वनवासाय नानुज्ञातवानस्मीत्यर्थः ॥ २४ ॥ २५ ॥

२५ ] ति० टी०–न याचे न याचितवान् । नानुशासामि नानुशिष्टवान् सर्वार्थः । नानुजानामि वनवासायेति शेषः । 'नाभिजानामि' इति पाठे वनवासोद्युक्तमिति शेषः ॥ २५ ॥

रा० टी०–तद्वचनाकारमाह–नेति । पितरं पितुः राज्यं नानुयाचे अन्वयाचं, मातरं नानुशासामि अन्वशासं परमधर्मज्ञं राघवं रामं नानुजानामि वनवासायानुमतिं नाकार्षम्, एतेन स्वापराधाभावः सूचितः ॥ २५ ॥

२६ ] ति० टी०–अहमेव प्रतिनिधित्वेनेति शेषः ॥२६॥

रा० टी०–तात्कालिकं स्वकर्तव्यं बोधयन्नाह–यदीति । यदि पितुर्वचः अवश्यं कर्तव्यमत एव वने अवश्यं वस्तव्यं तर्हि अहमेव वने नि॰त्स्यामि रामप्रतिनिधिभूतत्वेन वनवासं करिष्यामि ॥ २६ ॥

गो० टी०–यदीति । अवश्यं पितुर्वचः कर्तव्यं वने वस्तव्यं चेति यदि मन्यसे तर्हि अहमेव त्वत्प्रतिनिधित्वेन वने वत्स्यामि त्वं तु मत्प्रतिनिधित्वेनाऽयोध्यां पालय एवं च सत्युभाभ्यां सम्यक्पितृवचनं कृतं भवेदिति भावः, इति भरतो वाक्यमब्रवीदित्यन्वयः ॥ २६ ॥ २७ ॥

२७ ] ति० टी०–तस्य भ्रातुर्भरतस्य ॥ २७ ॥

रा० टी०–धर्मात्मेति । सत्येन भ्रातुः भरतेन वाक्येन विस्मितः धर्मात्मा रामः संप्रेक्ष्य निश्चित्य पौरजानपदं जनमुवाच ॥ २७ ॥

२८ ] ति० टी०–यज्जीवता पित्रा विक्रीतं मूल्यं गृहीत्वा

१ स्मः इति गो. पाठः । २ श्रेणय इति गो. रा. पाठः । ३ तथोदकेमि गो. पाठः ।

उपाधिर्न मया कार्यो वनवासे जुगुप्सितः । युक्तमुक्तं च कैकेय्या पित्रा मे सुकृतं कृतम् ॥ २९ ॥
जानामि भरतं क्षान्तं गुरुसत्कारकारिणम् । सर्वमेवात्र कल्याणं सत्यसंधे महात्मनि ॥ ३० ॥
अनेन धर्मशीलेन वनात्प्रत्यागतः पुनः । भ्रात्रा सह भविष्यामि पृथिव्याः पतिरुत्तमः ॥ ३१ ॥
वृतो राजा हि कैकेय्या मया तद्वचनं कृतम् । अनृतान्मोचयानेन पितरं तं महीपतिम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

## द्वादशाधिकशततमः सर्गः ।

रामभरतयोर्वचःशुश्रूषवो व्योमाजिरगता द्युसदस्तत्संवादं प्राशंसन् । पितुरानृण्यकामो रामः स्वकर्तव्यं निश्चित्य स्वावासाभिमुखोऽभूत्तथा रामनिवर्तने निरस्तोपायो भरतो राज्यरक्षणे स्वासामर्थ्यं कथयन्रामं प्रार्थयते । तेन स्वप्रतिज्ञाया दुस्त्यजत्व उक्ते हैमपादुकायुगुलं रामाग्रे विन्यस्य तत्र पादोपन्यासं ययाच । रामस्तदनुष्ठाय तत्पादयुगुलं भरताय ददावथ वनवासपूर्तिसमनन्तरदिने त्वदनागमनेऽहमग्निं प्रवेष्टेति भरतः प्रतिजज्ञे । रामस्तदुररीकुर्वन्ननुजावाश्लिष्य यथार्हं सकलजनान् संमानपूर्वं गमनेऽनुज्ञाप्य स्वोटजं प्राविशत् ।

तमप्रतिमतेजोभ्यां भ्रातृभ्यां रोमहर्षणम् । विस्मिताः संगमं प्रेक्ष्य समुपेता[1] महर्षयः ॥ १ ॥

दत्तम्, आहितमाधिरूपेण न्यस्तम्, क्रीतं मूल्यं दत्त्वा गृहीतम् । एवं चेदं राज्यं कैकेय्यै आधिरूपेण दत्तं विक्रीतं वेति भावः ॥ २८ ॥

रा० टी०—तद्वचनाकारमाह—विक्रीतमिति । जीवता पालयता मम पित्रा यद्विक्रीतं मूल्यं गृहीत्वा कस्मैचिद्दत्तमाहितं न्यासरूपतया संस्थापितं क्रीतं मूल्यं दत्त्वा स्वीकृतं तन्मया भरतेन वा लोपयितुमन्यथा कर्तुं न शक्यमेतेन तुल्यन्यायात्प्रीतिदत्तमप्यन्यथा कर्तुं न शक्यते इति ध्वनितम् २८

गो० टी०—विक्रीतमिति । आहितमाधिरूपेण न्यस्तं विक्रयस्त्यागः क्रयः स्वीकार इति भेदः मत्तं वनवासं दत्त्वा तन्मूल्यत्वेन राज्यं स्वीकृतवान्, यद्वा मम वनवासमाधिं कृत्वा तव राज्यं दापितवान् तल्लोपयितुं न शक्यमित्यर्थः ॥ २८ ॥

२९ ] ति० टी०—उपाधिः प्रतिनिधिः । जुगुप्सितत्वं च स्वस्य तत्समर्थत्वात् । असमर्थे हि कर्तरि स विहितः । उक्तौ कृतौ च युक्तत्वं वररूपऋणापाकरणार्थत्वाद्बहूपकारकत्वाच्च । अतस्तस्या मातुस्तस्य पितुश्च वचनमवश्यमेव कार्यमिति शेषः, अयुक्तवादित्वे हि 'गुरोरप्यवलिप्तस्य' इत्यादिन्यायविषयत्वं स्यादिति भावः ॥ २९ ॥

रा० टी०—ननु प्रतिनिधिकरणे तद्वचनत्यागो न भवतीत्यत आह—उपाधिरिति । यतः युक्तं मम योग्यं कैकेय्या उक्तमत एवं पित्रा सुकृतमङ्गीकृतमतः जुगुप्सितः असामर्थ्यसूचकत्वेन निन्दितः उपाधिः प्रतिनिधिः मया न कार्यः ॥२९॥

गो० टी०—वारुणस्नानाशक्तस्य मान्त्रस्नानवदशक्तस्यैव प्रतिनिधिस्वीकार अहं तु वनवासे शक्तः अतः प्रतिनिध्याचरणं न पितृऋणमोचनमित्याह—उपाधिरित्यादिना । उपाधिः प्रतिनिधिरित्यर्थः, मया शक्तेन जुगुप्सितः हीनकल्पत्वेन निन्दितः 'हीनकल्पं न सेवेत पुरुषो विभवे सति' इति वचनादिति भावः । कैकेय्या युक्तं योग्यमेवोक्तं पित्रा च सुकृतं धर्म्यं कृतम् आवाभ्यां तदकरणे हीनकल्पकरणे च पितुरनृतं स्यात् ॥ २९—३१ ॥

३०—३१ ] ति० टी०—अत्र भरते सर्वमेव कल्याणं राज्यपरिपालनादिरूपं संभावयामीति शेषः ॥ ३० ॥ ३१ ॥

रा० टी०—भरतस्य राज्ययोग्यतां बोधयन्नाह—जानामीति । क्षान्तं क्षमाशीलं गुरुसत्कारकारिणं अतिसत्कारकरणशीलं भरतमहं जानामि अत एव सत्यसंधे सत्यप्रतिज्ञे अत्र अस्मिन् भरते सर्वं कल्याणमेव, एतेन राज्यपरिपालनस्य क्षतिर्न भवितेति सूचितम् ॥ ३० ॥

रा० टी०—अनेनेति । वनात्पुनः प्रत्यागतोऽहं धर्मशीलेन भ्रात्रा भरतेन सह पृथिव्याः उत्तमः पतिर्भविष्यामि ॥ ३१ ॥

३२ ] ति० टी०—तद्वचनं कैकेयीवचनं मोचयानेन मोचयमानेन । एवं मदुक्तकरणेन त्वमपि पितरमनृतान्मोचयेति ध्वनितम् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकादशोत्तरशततमः सर्गः॥१११॥

रा० टी०—वृत इति । राजा कैकेय्या वृतः वरदायकत्वेन स्वीकृतः मया च तद्वचनं कृतं स्वीकृतमतः अनेन त्वत्कर्तृकराज्यपरिपालनेन मत्कर्तृकवनवाससंमतिदानेन च पितरमनृतात् मृषासंसर्गात् मोचय ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकादशाधिकशततमः सर्गः ॥ १११ ॥

गो० टी०—वृत इति । पितरम् अनेन राज्यपरिपालनेन अनृतात् मोचयेत्यर्थः ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकादशोत्तरशततमः सर्गः ॥१११॥

१ ] ति० टी०—भ्रातृभ्यामित्यार्षी तृतीया भ्रात्रोः संगम-

[1] समवेता इति गो. पाठः ।

अन्तर्हिता मुनिगणाः स्थिताश्च परमर्षयः । तौ भ्रातरौ महाभागौ काकुत्स्थौ प्रशशंसिरे ॥ २ ॥
सदार्यौ राजपुत्रौ द्वौ धर्मज्ञौ धर्मविक्रमौ । श्रुत्वा वयं हि संभाषामुभयोः स्पृहयामहे ॥ ३ ॥
ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः । भरतं राजशार्दूलमित्यूचुः संगता वचः ॥ ४ ॥
कुले जात महाप्राज्ञ महावृत्त महायशः । ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥ ५ ॥
सदानृणमिमं रामं वयमिच्छामहे पितुः । अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥ ६ ॥
एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः । राजर्षयश्चैव तथा सर्वे स्वां स्वां गतिं गताः ॥ ७ ॥
ह्लादितस्तेन वाक्येन शुशुभे शुभदर्शनः । रामः संहृष्टवदनस्तानृषीनभ्यपूजयत् ॥ ८ ॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया । कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥ ९ ॥

---

मित्यर्थः । संगमं प्रेक्ष्य विस्मिता इत्यन्वयः । समुपेताः स्वार्थं-रावणवधसंपत्तये तत्र स्थले समवेता महर्षयो नारदाद्याः ॥१॥

रा० टी०—रामवचनानन्तरकालिकवृत्तमाह—तमित्यादिभिः । अप्रतिमतेजोभ्यामुपमारहिततेजोविशिष्टाभ्यां भ्रातृभ्यां जातं संगमं प्रेक्ष्य समुपेताः तत्र प्राप्ता महर्षयः विस्मिता आसन्निति शेषः ॥ १ ॥

गो० टी०—अथ भरतस्य समाधानं कृत्वा प्रस्थापनं द्वादशोत्तरशततमे—तमित्यादि । भ्रातृभ्यां संगमं भ्रातृभ्यामन्योन्यसौहार्देन कृतं संगमं प्रेक्ष्य विस्मिता अभूवन्निति शेषः ॥ १ ॥

२ ] ति० टी०—अन्तर्हितास्तयोः संगमं द्रष्टुमागता अदृश्यरूपा आकाशस्थाः ॥ २ ॥

रा० टी०—अन्तर्हिता इति । अन्तर्हिताः शक्तिविशेषेणालक्षितस्वरूपाः मुनिगणाः स्थिताः प्रत्यक्षतो विद्यमानाश्च परमर्षयश्च काकुत्स्थौ भ्रातरौ प्रशशंसिरे ॥ २ ॥

गो० टी०—अन्तर्हिता इति । अन्तर्हिताः पूर्वमेवान्तर्धानं प्राप्ताः ऋषिगणाः राजर्षिगणाः सिद्धाः देवजातिविशेषाः परमर्षयः देवर्षयः । इदमुत्तरत्र एतावदुक्त्वा वचनं गन्धर्वाः समहर्षयः । राजर्षयश्चैवेत्यत्र व्यक्तीभविष्यति ॥ २ ॥

३ ] ति० टी०—धर्मविक्रमौ धर्ममार्गवर्तिनौ । उभयोः संभाषां संभाषणं श्रुत्वोभाभ्यां स्पृहयामहे प्रीता भवामः, यद्वा तादृशसंभाषणं श्रोतुं पुनः पुनर्वाञ्छामहे इति ॥ ३ ॥

रा० टी०—प्रशंसाकारमाह—सदेति । धर्मविक्रमौ धर्मप्रवर्तकौ यौ द्वौ राजपुत्रौ तयोरुभयोः संभाषां परस्परं संभाषणं श्रुत्वा वयं सदा स्पृहयामहे पुनः पुनः श्रोतुं वाञ्छामः ॥ ३ ॥

गो० टी०—स धन्य इति । धर्मविक्रमौ धर्मशूरौ वयमुभयोः संभाषां श्रुत्वा स्पृहयामहे पुनः पुनः श्रोतुं वाञ्छाम इत्यर्थः, वयं ययोरुभयोः संभाषां श्रुत्वा स्पृहयामहे तादृशौ धर्मज्ञौ धर्मविक्रमौ द्वौ पुत्रौ यस्य स धन्य इत्यन्वयः ॥ ३ ॥

४ ] ति० टी०—संगता ऐकमत्यं प्राप्ताः ॥ ४ ॥

रा० टी०—तत इति । ततः मुनिकर्तृकप्रशंसानन्तरं दशग्रीवस्य रावणस्य वधैषिणः वधविषयकेच्छावन्तः संगताः ऋषिगणाः भरतमित्यूचुः ॥ ४ ॥

गो० टी०—तत इति । संगताः ऐककण्ठ्यं प्राप्ताः ॥ ४ ॥

५ ] ति० टी०—पितरं यद्यवेक्षसे पितुः सुखं यदीच्छसीत्यर्थः ॥ ५ ॥

रा० टी०—तद्वचनाकारमाह—कुले इति । पितरं पितृसुखं यद्यवेक्षसे वाञ्छसि तर्हि रामस्य वाक्यं ग्राह्यम् ॥ ५ ॥

गो० टी०—कुल इति । पितरं यद्यवेक्षसे पितरं सुखास्थितं यदि मन्यस इत्यर्थः ॥ ५–८ ॥

६–७ ] ति० टी०—सदानृणं सता स्वकृतसमीचीनानुष्ठानेन सर्वतोऽनृणमित्यर्थः । अनृणत्वात् रामप्रतिज्ञयेति शेषः, यदि राम इदानीं विपरीतं कुर्यात्प्रतिनिधिद्वारा वानुतिष्ठेत्तदा ते पितुः पुनः स्वर्गाद्भ्रंश एवेति ध्वनिः ॥ ६ ॥ ७ ॥

रा० टी०—सदेति । यतः कैकेय्याः अनृणत्वात् अनृणत्वं प्राप्य केकय्यै वरं दत्त्वेत्यर्थः, दशरथः स्वर्गं गतः अतः रामं सदा वनवासक्लेशेनापि पितुरनृणम् ऋणनिवर्तकं वयमिच्छामहे एतेन रामकर्तृकवनवासमन्तरा राज्ञोऽभिलाषपूर्तिर्न भविष्यतीति सूचितम्, तेन रावणवधार्थमेव राज्ञा रामः प्रेषित इति व्यञ्जितम् ॥ ६ ॥

रा० टी०—एतावदिति । एतावद्वचनमुक्त्वा समहर्षयः महर्षिसहिताः गन्धर्वाः राजर्षयश्च स्वां स्वां गतिं स्थानं गताः प्राप्ताः ॥ ७ ॥

८ ] ति० टी०—अभ्यपूजयत् सत्यज्ञां धर्मतो रक्षितवन्त इत्युक्तवानित्यर्थः ॥ ८ ॥

रा० टी०—ह्लादित इति । तेन ऋषिगणोक्तेन वाक्येन ह्लादितः सुखं प्राप्तः अत एव संहृष्टवदनः रामः तान् ऋषीन् अभ्यपूजयत् ॥ ८ ॥

९ ] ति० टी०—त्रस्तगात्र उद्विग्नगात्रः । 'स्रस्त' इति पाठान्तरम् ॥ ९ ॥

रा० टी०—त्रस्तेति । सज्जमानया रामकर्तृकवनवासविषयकासक्तिसंपादिकया वाचा त्रस्तगात्रः शिथिलशरीरः कृताञ्जलिर्भरतः इदं वाक्यं पुनरब्रवीत् ॥ ९ ॥

---

१ समुपेतेति गो. पाठः । २ सिद्धा इति गो. पाठः । ३ महरस्मानावितिं गो. पाठः । ४ तदेति गो. पाठः । ५ शुभेनेति गो. पाठः ।

राम धर्ममिमं प्रेक्ष्य कुलधर्मानुसंततम् । कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥ १० ॥
रक्षितुं सुमहद्राज्यमहमेकस्तु नोत्सहे । पौरजानपदांश्चापि रक्तान्रञ्जयितुं तदा ॥ ११ ॥
ज्ञातयश्चापि योधाश्च मित्राणि सुहृदश्च नः । त्वामेव हि प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ १२ ॥
इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि । शक्तिमानसि हि काकुत्स्थ लोकस्य परिपालने ॥ १३ ॥
एवमुक्त्वापतद्भ्रातुः पादयोर्भरतस्तदा । भृशं संप्रार्थयामास राघवेऽतिप्रियं वदन् ॥ १४ ॥
तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् । श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम् ॥ १५ ॥
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या । भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥ १६ ॥

गो० टी०—त्रस्तगात्र इति । सज्जमानया स्खलन्त्या स्वमनोरथस्य सर्वथा असिद्धत्वात् शिथिलगात्रत्वं सज्जमानवाक्त्वं च ॥ ९ ॥

१०] ति० टी०—राम इमं धर्मं ज्येष्ठस्य राज्यमित्येवंरूपं कुले कुलधर्मबुद्ध्याऽनुसंततं संबद्धम् । 'धर्ममथ प्रेक्ष्य कालधर्मांश्च संततम्' इति पाठे धर्मनुक्तम् । अथाथवा कालधर्मान्कालकृतस्वशक्तिमन्निश्चितदभावलक्षणान्प्रेक्ष्य विचार्य मम मातुः कौसल्यायाश्च याचनां कर्तुमर्हसि ॥ १० ॥

रा० टी०—तद्वाक्याकारमाह—रामेति । हे राम ! कुलधर्मानुसंततं कुलस्य धर्मानुसंततं धर्मबुद्ध्यानुष्ठितमिमं प्रजापालनरूपं धर्मं प्रेक्ष्य विचार्य मम मातुः कौशल्यादेश्च याचनं याचितं कर्तुं स्वीकर्तुमर्हसि ॥ १० ॥

गो० टी०—राजधर्ममिति । राजधर्मं राज्यपरिपालनधर्मं कुलधर्मानुसंततिं ज्येष्ठाभिषेकरूपकुलधर्मस्यानुस्यूतिम् १०॥११

११] ति० टी०—अथ कालकृतां स्वस्य रक्षणाशक्तिं दर्शयति—रक्षितुमिति । एकोऽसहायः, रक्ताननुरक्तान् ॥ ११ ॥

रा० टी०—ननु पालनार्थं त्वन्नियुक्त एवेत्यत आह—रक्षितुमिति । सुमहद्राज्यं रक्षितुमेकस्त्वत्साहाय्यरहितोऽहं नोत्सहे अत एव रक्तान् त्वद्विषयकानुरागविशिष्टान् पौरजानपदान् रञ्जयितुं च नोत्सहे ॥ ११ ॥

१२ ] ति० टी०—हि यतस्त्वामेव प्रतीक्षन्ते ॥ १२ ॥

रा० टी०—ज्ञातय इति । ज्ञात्यादयः पर्जन्यं कर्षका इव त्वामेव प्रतीक्षन्ते, एतेन त्वमेव राज्यं परिपालयेति सूचितम् ॥ १२ ॥

गो० टी०—ज्ञातय इति । सुहृदः शोभनहृदयाः पर्जन्यं रसदब्दम् इन्द्रं वा । 'पर्जन्यौ रसदब्देन्द्रौ' इत्यमरः॥१२॥१३॥

१३ ] ति० टी०—अत इदं राज्यं प्रतिपद्य स्वीकृत्य कस्मिंश्चित्स्थापय हि । हिर्वाक्यालंकारे हि यतः स त्वदत्तराज्यो लोकपालने शक्तिमान्भवति । 'शक्तिमानसि' इति पाठेऽयं मदीय इति स्वीकारमात्रेण लोकस्य समस्तस्य पालने शक्तिमानसि । रामस्य राज्यमित्येतावल्लोकपरिपालनेऽपेक्षितसहायतयेत्यर्थः ॥ १३ ॥

रा० टी०—ननु वनवासे नियुक्तेन मया कथं राज्यपरिपालनमित्यत आह—इदमिति । हे काकुत्स्थ ! लोकस्य परिपालने शक्तिमान् [illegible] प्रतिपद्य अयोध्यां प्राप्य इदं राज्यं स्थापय यथायोग्यं मन्त्र्यादीन् नियुज्य पालयेत्यर्थः, एतेन यथायोग्यं नियोगानन्तरं वने समागन्तव्यमिति सूचितम् ॥ १३ ॥

१४ ] ति० टी०—एवमुक्तप्रकारम् ॥ १४ ॥

रा० टी०—एवमिति । भरतः एवमुक्त्वा भ्रातुः पादयोः अपतत्, हे राघव ! इति प्रियं वचो वदन् सन् भृशं संप्रार्थयामास च ॥ १४ ॥

गो० टी०—एवं स्वबुद्धिशक्त्युपन्यस्तोपायान्तरवैफल्यदर्शनेन गत्यन्तराभावात् भरतो राममेव प्रपद्यते—इत्युक्त्वेति ॥ १४ ॥

१५ ] ति० टी०—स्वयमङ्के कृत्वेत्यन्वयः ॥ १५ ॥

रा० टी०—तमिति । नलिनपत्राक्षं भरतमङ्के कृत्वा मत्तहंसस्वरः रामः वचनमब्रवीत् ॥ १५ ॥

गो० टी०—तमङ्क इति । स्वप्रपदनस्यामोघत्वात् तदानीं पूर्वकृतदेवसंघशरणागतिफलप्रदानप्रवृत्त्यनुकूलपितृवचनपरिपालनावरुद्धावसरतया तन्निर्वर्तनानन्तरं फलप्रदित्सुस्तावद्विलम्बसहनाय सान्त्वपूर्वमङ्कमारोपयति । रामदिव्यदेहसंस्पर्शकृतपुष्ट्यतिशयद्योतनाय श्याममित्यादिविशेषणं मत्तहंसस्वरत्वमादरातिशयं द्योतयति । किं च स्वररामणीयकेन पूर्वहंसभूतावस्थासूचकेन सदा त्वत्करपुष्करहंसभूतमपि मां कथं वियोजयितुमिच्छसीति च सूच्यते । स्वयमङ्के कृत्वेत्यन्वयः॥१५॥

१६ ] ति० टी०—इयं बुद्धिर्मद्वनवासविरोधिनी स्वीयत्वेनाङ्गीकृत्य स्थापनविषया आगता जाता सा स्वजा स्वाभाविकी, गुरुसेवया प्राप्तो यो विनयः शिक्षा तज्जन्या च इतरा च सर्वा दुष्टेति भावः । अथ या त्वया स्वस्याशक्तिरुक्ता पालने सा नास्त्येवेत्याह—भृशमिति ॥ १६ ॥

रा० टी०—तद्वचाकारमाह—आगतेति । वैनयिकी पित्रादिसेवाजनितविनयजन्या स्वजा स्वं स्वकीयधर्मं प्रजापालनमित्यर्थः, जनयति उत्पादयति सा या त्वाऽऽगता प्राप्ता इयं बुद्धिः तया बुद्ध्या पृथिवीं रक्षितुं त्वं भृशमुत्सहसे एतेन

१ राजधर्ममन्विति गो. पाठः । २ संततिमिति गो. पाठः । ३ याचनमिति रा. पाठः । ४ तथेति गो. पाठः । ५ हीति गो. पाठः । ६ प्रतिकाङ्क्षन्त इति गो. पाठः । ७ असीति गो. पाठः । ८ इत्युक्त्वा न्यपतदिति गो. पाठः । ९ राममेव प्रियंवद इति गो. पाठः । १० स्वरमिति गो. पाठः ।

अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः । सर्वकार्याणि संमन्त्र्य महान्त्यपि हि कारय ॥ १७ ॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् । अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥ १८ ॥
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम् । न तन्मनासि कर्तव्यं वर्तितव्यं च मातृवत् ॥ १९ ॥
एवं ब्रुवाणं भरतः कौसल्यासुतमब्रवीत् । तेजसादित्यसंकाशं प्रतिपच्चन्द्रदर्शनम् ॥ २० ॥
अधिरोहार्यपादाभ्यां पादुके हेमभूषिते । एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥ २१ ॥
सोऽधिरुह्य नरव्याघ्रः पादुके ह्यवमुच्य च । प्रायच्छत्सुमहातेजा भरताय महात्मने ॥ २२ ॥

मत्कर्तृकायोध्यागमनं न प्रार्थनीयमिति सूचितं तेनायोध्यागमने निरन्तरवनवासविषयकप्रतिज्ञाहानिर्भवितेति सूचितम् १६

गो० टी०—आगतेति । स्वजा सहजा वैनयिकी विनयो गुरुशिक्षा ततः प्राप्ता इयमुभयाकारा बुद्धिः त्वामागता त्वां पूर्वमेव प्राप्तवती अतो भृशमुत्सहसे शक्नोषि ॥ १६ ॥

१७ ] ति० टी०—अमात्याः प्रधानमन्त्रिणः, मन्त्रिण उपमन्त्रिणः, कारय राजाज्ञयेति शेषः ॥ १७ ॥

रा० टी०—अमात्यैरिति । महान्त्यपि सर्वकार्याणि अमात्यादिभिः संमन्त्र्य कारय ॥ १७ ॥

गो० टी०—अमात्यैरिति । अमात्यैः प्रधानसचिवैः मन्त्रिभिः उपमन्त्रिभिः ॥ १७ ॥

१८ ] ति० टी०—अथ मातृयाचनयापीदानीं परावृत्तिरशक्येत्याह—लक्ष्मीरित्यादि । पितुः प्रतिज्ञां न त्यजेयमिति शेषः ॥ १८ ॥

रा० टी०—मत्प्रतिनिवर्तनप्रार्थना व्यर्थेति बोधयन्नाह—लक्ष्मीरिति । चन्द्रात् पूर्णचन्द्रमसः लक्ष्मीः शोभा अपेयात् रात्रौ अपगच्छेत्, हिमवान् हिमं त्यजेत्, सागरो वेलां स्वमर्यादामतीयात् उल्लङ्घेत, अहं तु पितुः प्रतिज्ञां नातीयाम् । अतीयादित्यस्य पुरुषविपरिणामेनोत्तरत्राप्यन्वयः योग्यतया तुरध्याहृतः ॥ १८ ॥

गो० टी०—मया देवर्षिसंघैश्च पुनः पुनरुच्यमानोऽप्ययं निवर्तनेच्छां न त्यजेदिति तदिच्छा सवासना त्याजयितव्येति स्वप्रतिज्ञादार्ढ्यं दर्शयति—लक्ष्मीरित्यादिना । न प्रतिज्ञामतीयामिति शेषः ॥ १८ ॥

१९ ] ति० टी०—कामात्त्वद्गतस्नेहात् लोभात्त्वद्व्याजेन राज्यकरणलोभात् तुभ्यं मात्रा तव मात्रा षष्ठ्यर्थे आर्षी चतुर्थी, यदिदं कृतं तत्तवानिष्टमप्यनिष्टमिति मनसि न कर्तव्यं मदाज्ञयेति शेषः, अतस्तस्यां मातृवदेव वर्तितव्यं शुश्रूषितव्यम् । "तदर्हम्" इति वतिः । कामादेवानामिच्छातः लोभाद्वा लोभादेव तेषां देवलोकराज्यलोभात् तव मात्रा देवैरेव मन्थराद्वारा इदं कृतं कारितमिति गूढोऽर्थः । शेषं प्राग्वत् ॥ १९ ॥

रा० टी०—कामादिति । तात हे भ्रातः ! कामान्मन्थरेच्छातः लोभात् अतियशोविषयकेच्छातिशयाद्वा तुभ्यं त्वदर्थं यन्मात्रा कृतं तन्मनासि न कर्तव्यं न स्मर्तव्यमित्यर्थः, अत एव मातृवत् मातृस्नेहवत् वर्तितव्यं मातरि पूर्ववदेव स्नेहः कर्तव्य इत्यर्थः ॥ १९ ॥

गो० टी०—स्त्रियाः कामकृतत्वादयुक्तमियं प्रतिज्ञेत्याशङ्क्याह—कामादित्यादिना । कामाद्विषयस्नेहाल्लोभात्तद्व्याजेन राज्यकरणलोभान्मातृवन्मातरीव ॥ १९ ॥

२० ] ति० टी०—प्रतिपच्चन्द्रदर्शनमित्यनेन तद्वदादरणीयदर्शनत्वं वर्धिष्णुत्वं चिरमदर्शनं च सूचितम् ॥ २० ॥

रा० टी०—एवमिति । एवं ब्रुवाणं आदित्यसंकाशं कौशल्यासुतं रामं भरतोऽब्रवीत् ॥ २० ॥

गो० टी०—एवमिति । तेजसादित्यसंकाशमित्यनेनानिवर्त्यप्रतिज्ञत्वमुच्यते प्रतिपच्चन्द्रदर्शनमित्यनेन क्रमेण राज्ये पूर्णप्रतिष्ठत्वं सर्वैरपि पूज्यत्वं च द्योत्यते ॥ २० ॥

२१ ] ति० टी०—एते उटजसंनिहिते । अधिरोहेत्यनेन भद्रासनस्थानीयपादुकयोः प्रतिनिधिभूतयोरारोहणेन राज्यप्रतिपत्तिः कारिता । एषा च प्रार्थना वसिष्ठनियोगानन्तरं बोध्या भरद्वाजं प्रति 'एते प्रयच्छ संहृष्टः पादुके हेमभूषिते' इति वसिष्ठोक्तित्वेन वक्ष्यमाणत्वात् । प्रतिनिधित्वमेवाह—एते हीत्यादिना ॥ २१ ॥

रा० टी०—तद्वचनाकारमाह—अधीति । हे आर्य ! हेमविभूषिते एते स्वसंनिधौ संस्थापिते पादुके पादाभ्यां त्वमधिरोह । तत्प्रयोजनमाह—एते पादाधिरोहणास्पदीभूते पादुके सर्वलोकस्य योगक्षेमं विधास्यतः, विधास्यत इत्यनेन पादुकयोश्चेतनात्वं ध्वनितं तेन तयोः प्राकृतविलक्षणात्वं सूचितम् । एते इति शब्दावृत्त्योभयान्वयि ॥ २१ ॥

गो० टी०—अथ मध्यस्थेनोभयोर्हितपरेण वसिष्ठेन नियुक्तो भरतः प्रार्थयते—अधिरोहेत्यादिना । अत एव भरद्वाजं प्रति भरतो वसिष्ठोक्तिमनुवदिष्यति ऐते प्रयच्छ संहृष्टः पादुके हेमभूषिते इति ॥ २१ ॥

२२ ] ति० टी०—स रामः पादुके अधिरुह्य व्यवमुच्य पुनस्ततोऽवरुह्य भरताय प्रायच्छत् एतेन प्रतिनिधिदानद्वारा राज्यरक्षानियोगः कृतः । प्रतिपद्य स्थापयेति चिरं भरतप्रार्थनं च साधितम् । अधिरोहणेन शक्तिविशेषस्य तत्र स्थापनम् यद्दर्शनेन सर्वज्ञत्वसंपत्तिरिति बोध्यम् । तदुक्तं पाद्मे—'ज्ञात्वा तदाज्ञां ताभ्यां च भरतः क्षितिमन्वशात्' इति । ताभ्यां

१ सुमहान्त्यपीति गो. पाठः । २ ह्यवरुह्येति गो. पाठः ।

स्वपादुके संप्रणम्य रामं वचनमब्रवीत् । चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥ २३ ॥
फलमूलाशनो वीर भवेयं रघुनन्दन । तवागमनमाकाङ्क्षन्वसन्वै नगराद्बहिः ॥ २४ ॥
तव पादुकयोर्न्यस्य[2] राज्यतन्त्रं परंपर । चतुर्दशे हि संपूर्णे वर्षेऽहनि रघूत्तम ॥ २५ ॥
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् । तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ॥ २६ ॥
शत्रुघ्नं च परिष्वज्य वचनं चेदमब्रवीत् । मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥ २७ ॥
मया च सीतया चैव शप्तोऽसि रघुनन्दन । इत्युक्त्वाऽश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥ २८ ॥

स पादुके ते भरतः स्वलंकृते महोज्ज्वले संपरिगृह्य धर्मवित् ।
प्रदक्षिणं चैव चकार राघवं चकार चैवोत्तमनागमूर्धनि ॥ २९ ॥
अथानुपूर्व्या प्रतिपूज्य तं जनं गुरूंश्च मन्त्रीन्प्रकृतीस्तथानुजौ ।
व्यसर्जयद्राघववंशवर्धनः स्थितः स्वधर्मे हिमवानिवाचलः ॥ ३० ॥
तं मातरो बाष्पगृहीतकण्ठ्यो दुःखेन नामन्त्रयितुं हि शेकुः ।
स चैव मातॄरभिवाद्य सर्वा रुदन्कुटीं स्वां प्रविवेश रामः ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥

पादुकाभ्यां तद्दर्शनमात्रेणेदृशे विषये भगवत एवमाज्ञेति ज्ञात्वा तथा व्यवहारमकरोदित्यर्थः । भरतस्तु पाञ्चजन्यावतारत्वादाच्छादितसार्वज्ञ्य इत्यनेन सूचितम् । भगवत्स्पर्शेनाचेतनेऽपि सार्वज्ञ्यदानशक्तिमत्त्वमिति भगवन्माहात्म्यातिशयद्वारा रामस्येश्वरत्वं च सूचितम् ॥ २२ ॥

रा० टी०—स इति । स भरतेन प्रार्थितो नरव्याघ्रो रामः पादुके अधिरुह्य व्यवमुच्य च महात्मने भरताय प्रायच्छत्२२

गो० टी०—अथ रामः स्वप्रतिज्ञां भरतकृतप्रपत्तिं च निर्वहन् तथा करोति—स इति । प्रायच्छद्ददाणेत्यन्वयुङ्क्त ॥२२॥

२३–२४ ] ति० टी०—जटाचीरधर इत्यादिना राज्यकृतभोगाभावः सूचितः ॥ २३ ॥ २४ ॥

रा० टी०—स इति । स भरतः पादुके संप्रणम्य अब्रवीत् । अर्धं पृथक् । तद्वचनाकारमाह—चतुर्दशेति । हे वीर ! अहं चतुर्दश वर्षाणि तवागमनमाकाङ्क्षन् नगराद्बहिरेव वसंश्च सन् जटाचीरधरः फलमूलाशनो भवेयम् । सार्धश्लोक एकान्वयी ॥ २३ ॥ २४ ॥

गो० टी०—स इत्यादि । सार्धश्लोकत्रयमेकान्वयम् । चतुर्दशे वर्षे संपूर्णे सति अहनि उत्तरवर्षादिमदिने प्रवेक्ष्यामीत्यन्ते इतिकरणम् इत्यब्रवीदिति पूर्वेणान्वयः ॥ २३–२१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने द्वादशोत्तरशततमः सर्गः ॥११२॥

२५–२७ ] ति० टी०—राज्यतन्त्रं राज्यव्यापारं न्यस्य स्वबुद्धया विनिवेश्य । चतुर्दशे वर्षे संपूर्णे पञ्चदशवर्षाद्यदिवसे यदि त्वां न द्रक्ष्यामि तदाग्निं प्रवेक्ष्यामि ॥ २५–२७ ॥

रा० टी०—तवेति । हे परंतप ! राज्यतन्त्रं राज्यभारं तव पादुकयोर्न्यस्य समर्प्य विद्यमानोऽहं चतुर्दशे वर्षे संपूर्णे सति अहनि तदुत्तरे दिवसे यदि त्वां न द्रक्ष्यामि तर्हि हुताशनं वह्निं प्रवेक्ष्यामि 'न्यस्तराजतन्त्रः' इति पाठान्तरम् । सार्धश्लोक एकान्वयी ॥ २५ ॥

रा० टी०—तथेति । तथा इति प्रतिज्ञाय चतुर्दशवर्षान्ते आगमिष्यामीति प्रतिज्ञां कृत्वेत्यर्थः, तं भरतं परिष्वज्य अब्रवीत् ॥ २६ ॥

रा० टी०—तद्वचनाकारमाह—मातरमिति । मातरं कैकेयीं रक्ष तां प्रति रोषं मा कुरु मया सीतया च त्वं शप्तः एतदर्थं कारितशपथोऽसि इत्युक्त्वा अश्रुपरीताक्षो रामः भ्रातरं विससर्ज प्रेषयामास ॥ २७ ॥ २८ ॥

२८ ] ति० टी०—शप्तोऽसि रोषाकरणायेति शेषः ॥ २८ ॥

२९–३० ] ति० टी०—संपरिगृह्य शिरसेति शेषः । उत्तमनागमूर्धनि राजोपवाह्यगजमस्तके तत्कालाभिषिक्तरामाधिरोहणधियेति शेषः । सर्वलोकप्रख्यापनार्थमेतत् ॥२९॥ ३०॥

रा० टी०—स इति । भरतः स्वलंकृते शोभनालंकारविशिष्टे महोज्ज्वले पादुके प्रदक्षिणं चकार उत्तमनागमूर्धनि राजारोहणयोग्यगजशिरसि पादुके चकार संस्थापयामास, पादुके इत्युभयान्वयि ॥ २९ ॥

रा० टी०—उपसंहरन्नाह—अथेति । आनुपूर्व्या यथोचितक्रमेण जनादीन् प्रतिपूज्य यथोचितं सत्कृत्य स्वधर्मे हिमवान् इव अचलः स्थितः राघववंशवर्धनो रामः अथ व्यसर्जयत् समङ्गलं यापयामास ॥ ३० ॥

३१ ] ति० टी०—सर्वाः सकैकेयीकाः अनेन कैकेय्या दोषराहित्यं सूचितम् । रुदन् रुदन्निव ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे द्वादशोत्तरशततमः सर्गः ॥११२॥

१ स पादुके इति गो. रा. पाठः । २ न्यस्तराज्यतन्त्र इति गो. पाठः । ३ भरतमिति गो पाठः । ४ सत्तमेति गो. पाठः । ५ प्रतापवान्स्वलंकृते संपरिपूज्येति गो. पाठः । ६ मन्त्रिप्रकृतीरिति गो. पाठः । ७ स्थिर इति गो. पाठः । ८ स्वेवेति गो. पाठः ।

# त्रयोदशाधिकशततमः सर्गः ।

वसिष्ठादिभिः सममयोध्यां प्रति निवृत्तो भरतोऽन्तरा भरद्वाजमभिवाद्य चित्रकूटवृत्तवृत्तान्तं निवेदयन्नुपलब्धरामपादुकाद्वयं निवेश्याग्रे प्रवृत्तः परिजनयुतो गङ्गायमुने उत्तीर्य शृङ्गवेरतः प्रातिष्ठन्दृष्टायोध्यः सुमन्त्रं प्रति तस्याः कान्तिराहित्यं दर्शयति ।

ततः शिरसि कृत्वा तु पादुके भरतस्तदा । आरुरोह रथं हृष्टः शत्रुघ्नसहितस्तदा ॥ १ ॥
वसिष्ठो वामदेवश्च जाबालिश्च दृढव्रतः । अग्रतः प्रययुः सर्वे मन्त्रिणो मन्त्रपूजिताः ॥ २ ॥
मन्दाकिनीं नदीं रम्यां प्राङ्मुखास्ते ययुस्तदा । प्रदक्षिणं च कुर्वाणाश्चित्रकूटं महागिरिम् ॥ ३ ॥
पश्यन्धातुसहस्राणि रम्याणि विविधानि च । प्रययौ तस्य पार्श्वेन ससैन्यो भरतस्तदा ॥ ४ ॥
अदूराच्चित्रकूटस्य ददर्श भरतस्तदा । आश्रमं यत्र स मुनिर्भरद्वाजः कृतालयः ॥ ५ ॥
स तमाश्रममागम्य भरद्वाजस्य वीर्यवान् । अवतीर्य रथात्पादौ ववन्दे कुलनन्दनः ॥ ६ ॥
ततो हृष्टो भरद्वाजो भरतं वाक्यमब्रवीत् । अपि कृत्यं कृतं तात रामेण च समागतम् ॥ ७ ॥
एवमुक्तः स तु ततो भरद्वाजेन धीमता । प्रत्युवाच भरद्वाजं भरतो धर्मवत्सलः ॥ ८ ॥

---

रा० टी०—तमिति । दुःखेन बाष्पगृहीतकण्ठ्यः मातरः तं राममामन्त्रयितुं कस्मिंश्चिद्विषये नियोजयितुं न शेकुः स रामस्तु सर्वाः मातॄः अभिवाद्य प्रणम्य रुदन् स्वगमनाभावेन रोदयन् सन् स्वां कुटीं प्रविवेश ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे द्वादशाधिकशततमः सर्गः ॥ ११२ ॥

१ ] ति० टी०—तत इति । पूर्वं सर्वलोकज्ञानाय गजमस्तके स्थापयित्वा पुनः सादरं तत आदाय स्वमस्तके कृत्वेत्यर्थः, यद्वा शिरसीत्यस्य गजशिरसीत्येवार्थः ॥ १ ॥

रा० टी०—रामकर्तृकस्वकुटीप्रवेशानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । ततः पादुकास्थापितशत्रुंजयगजात् पादुके आहृत्येति शेषः, सिरसि स्वमूर्धनि कृत्वा संस्थाप्य हृष्टो भरतः रथमारुरोह ॥ १ ॥

गो०टी०—अथ भरतस्यायोध्याप्रवेशः त्रयोदशोत्तरशततमे—तत इत्यादि । पादुके शिरसि कृत्वा शत्रुंजयमूर्ध्नि निक्षिप्ते पादुके सादरमादाय स्वमूर्ध्न्याधायेत्यर्थः ॥ १ ॥

२ ] ति० टी०—मन्त्रे गाढकार्यविचारे निश्चेतृत्वेन पूजिता इत्यर्थः ॥ २ ॥

रा० टी०—वसिष्ठ इति । मन्त्रपूजिता मन्त्रैः सत्कृताः वसिष्ठादयः अग्रतः प्रययुः ॥ २ ॥

गो० टी०—वसिष्ठ इति । मन्त्रपूजिताः अमोघकार्यविचारनैपुण्यात्पूजिताः ॥ २ ॥

३ ] ति० टी०—मन्दाकिनीं चित्रकूटोत्तरपार्श्ववर्तिनीम् । प्रदक्षिणमिति । उत्तरपार्श्वस्थां मन्दाकिनीं प्राप्य प्राङ्मुखतया गमनादिस्सिद्धं तस्य प्रदक्षिणकरणम् ॥ ३ ॥

रा० टी०—मन्दाकिनीमिति । मन्दाकिनीं नदीं चित्रकूटं गिरिं च प्रदक्षिणं कुर्वाणाः प्राङ्मुखास्ते भरतादयो ययुः ॥ ३॥

गो० टी०—मन्दाकिनीमिति । सीतारामयोर्जलक्रीडादिभिः रम्यां मन्दाकिनीं रामनिवासत्वेन महाप्रभावं चित्रकूटं गिरिं च प्रदक्षिणं कुर्वाणाः सन्तः प्राङ्मुखा ययुः ॥ ३ ॥

४ ] ति० टी०—पार्श्वेनोत्तरपार्श्वेन ॥ ४ ॥

रा० टी०—गमनमेव भङ्ग्यन्तरेणाह—पश्यन्निति । विविधानि अनेकप्रकाराणि रम्याणि मनोहराणि धातुसहस्राणि पश्यन् सन् तस्य गिरेः चित्रकूटस्य पार्श्वेन ससैन्यो भरतः प्रययौ ॥४॥

गो० टी०—पश्यन्निति । द्रुतगतिं विहाय नानाधातून् दृग्भ्यां पिबन्निव पश्यन् तस्य चित्रकूटस्य पार्श्वेन ययौ ॥ ४ ॥

५–६ ] ति० टी०—यत्र यमुनादक्षिणकूले अत एव चित्रकूटस्यादूरात् । अनेन यमुनादक्षिणतटेऽपि क्वचिद्भरद्वाजाश्रम इति ज्ञायते अत एवाग्रे भरद्वाजामन्त्रणोत्तरं ततस्ते यमुनां तीर्त्वेति वक्ष्यति संप्रति तत्र स्थितिस्तु रामभरतयोः संवादं शिष्यद्वारा झटिति श्रोतुमिति बोध्यम् ॥ ५ ॥ ६ ॥

रा० टी०—अदूरादिति । यत्र भरद्वाजो मुनिः कृतालयः कृतस्थितिः तमाश्रमं चित्रकूटस्य अदूरात्समीपतः भरतो ददर्श, एतेन भरतरथस्य भरद्वाजाश्रमस्य च अत्युन्नतत्वं व्यञ्जितम् ॥ ५ ॥

गो० टी०—अदूरादिति । चित्रकूटसौन्दर्यदर्शनाकृष्टचित्ततया अदूरादिव भासमानम् ॥ ५ ॥

रा० टी०—स इति । स कुलनन्दनो भरतः भरद्वाजस्य आश्रममागम्य प्राप्य रथात् अवतीर्य भरद्वाजस्य पादौ ववन्दे॥६॥

गो० टी०—स इति । भरद्वाजस्य पादौ ववन्द इत्यन्वयः ॥ ६ ॥

७–८ ] ति० टी०—कृत्यं कर्तव्यं कृतमपि अपिः प्रश्ने । कृत्यमेवाह—रामेण चेति ॥ ७ ॥ ८ ॥

रा० टी०—तत इति । ततः भरतप्रणामानन्तरं हृष्टो भर-

---

१ शत्रुघ्नेन समन्वित इति गो. पाठः । २ बुद्धिमानिति गो. पाठः । ३ भरतस्तदेति गो. पाठः । ४ भ्रातृवत्सल इति गो. पाठः ।

स याच्यमानो गुरुणा मया च दृढविक्रमः । राघवः परमप्रीतो वसिष्ठं वाक्यमब्रवीत् ॥ ९ ॥
पितुः प्रतिज्ञां तामेव पालयिष्यामि तत्त्वतः । चतुर्दश हि वर्षाणि या प्रतिज्ञा पितुर्मम ॥ १० ॥
एवमुक्तो महाप्राज्ञो वसिष्ठः प्रत्युवाच ह । वाक्यज्ञो वाक्यकुशलं राघवं वचनं महत् ॥ ११ ॥
एते प्रयच्छ संहृष्टः पादुके हेमभूषिते । अयोध्यायां महाप्राज्ञ योगक्षेमकरो भव ॥ १२ ॥
एवमुक्तो वसिष्ठेन राघवः प्राङ्मुखः स्थितः । पादुके [1]हेमविकृते मम राज्याय [2]ते ददौ ॥ १३ ॥
निवृत्तोऽहमनुज्ञातो रामेण सुमहात्मना । अयोध्यामेव गच्छामि गृहीत्वा पादुके शुभे ॥ १४ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः । भरद्वाजः शुभतरं मुनिर्वाक्यमुदाहरत् ॥ १५ ॥
नैतच्चित्रं नरव्याघ्रे शीलवृत्तविदां वरे । यदार्यं त्वयि तिष्ठेत्तु निम्नोत्सृष्टमिवोदकम् ॥ १६ ॥
अनृणः स महाबाहुः पिता दशरथस्तव । यस्य त्वमीदृशः पुत्रो धर्मात्मा धर्मवत्सलः ॥ १७ ॥

द्वाजः हे तात ! कृत्यं कर्तव्यं रामेण समागतं समागमनं कृतं निष्पादितमपि इति वाक्यं भरतमब्रवीत् । अपिः प्रश्ने ॥ ७ ॥

रा० टी०–एवमिति । भरद्वाजेन एवमुक्तः स भरतः तं प्रत्युवाच ॥ ८ ॥

गो० टी०–तत इति । अपिशब्दः प्रश्ने रामेण किं समागतं संगतं भवता रामेण कृत्यं भवत्प्रयोजनं किं कृतमित्यर्थः॥७॥८॥

९-१० ] ति० टी०–गुरुणा वसिष्ठेन मात्रा च परमप्रीतः सत्यपरिपालनविषये इति शेषः । या कैकेयीनिमित्तं मम पितुः प्रतिज्ञा चतुर्दशवर्षाणि रामेण वने वस्तव्यमिति, तामेव पितुः प्रतिज्ञां पालयिष्यामीति संबन्धः ॥ ९ ॥ १० ॥

रा० टी०–तत्प्रतिवचनाकारमाह–स इति । गुरुणा मया च याच्यमानः दृढविक्रमः स रामः वसिष्ठं वाक्यमब्रवीत् ॥ ९॥

रा० टी०–तद्वचनाकारमाह–पितुरिति । मम पितुः या प्रतिज्ञा तां पितुः प्रतिज्ञां तत्त्वतः पालयिष्याम्येव ॥ १० ॥

गो० टी०–स इति । गुरुणा वसिष्ठेन । पितुरिति । चतुर्दशवर्षाणि वने वस्तव्यमिति कैकेयीनिमित्तं कृता पितुर्या प्रतिज्ञास्ति तामेव पितुः प्रतिज्ञां तत्त्वतः पालयिष्यामीत्यब्रवीदिति संबन्धः ॥ ९ ॥ १० ॥

११ ] ति० टी०–एवमुक्तः रामेणेति शेषः ॥ ११ ॥

रा० टी०–एवमिति । एवमनेन प्रकारेण उक्तः रामेण प्रार्थितः वाक्यज्ञो वसिष्ठः राघवं रामं प्रत्युवाच ॥ ११ ॥

गो० टी०–एवमित्यादि । हेमभूषिते इत्यनेन रामाय प्रीत्या समर्पयितुमभिनवतया निर्माय नगरात् भरतेनानीते इति गम्यते । योगक्षेमकरे अपूर्ववस्तुलाभो योगः, लब्धस्य परिपालनं क्षेमः, एते पादुके प्रयच्छेति वसिष्ठः प्रत्युवाचेति संबन्धः ॥ ११–१९ ॥

१२ ] ति० टी०–प्रयच्छ प्रतिनिधित्वेनेति शेषः । अप्राप्तप्राप्तिर्योगः, प्राप्तस्य परिपालनं क्षेमः, तत्करो भवेति । एतद्द्वारा भरते सार्वश्यसंपादनेनेति शेषः॥ १२ ॥

रा० टी०–तत्प्रतिवचनाकारमाह–एते इति । हे महाप्राज्ञ ! संहृष्टस्त्वं हेमभूषिते एते पादुके प्रयच्छ भरताय देहि, अयोध्यायां योगक्षेमकरो भव पादुकाद्वारेति शेषः, तत्र अलभ्यलाभो योगः, लब्धस्य परिपालनं क्षेमः ॥ १२ ॥

१३-१५ ] ति० टी०–हेमविकृते हेम्ना विचित्रतया कृते । मम राज्याय मम राज्यरक्षाशक्त्यनुग्रहार्थमित्यर्थः ॥१३–१५॥

रा० टी०–एवमिति । वसिष्ठेन एवमुक्तः प्राङ्मुखः पूर्वाभिमुखं स्थितः राघवो रामः हेमविकृते पादुके मम राज्याय ददौ । न च पूर्वं भरतप्रार्थनया रामकर्तृकपादुकादानस्योक्तत्वेनेदं विरुद्धमिति वाच्यं, "गुरावीश्वरत्वबुद्धया कर्तृत्वं करणत्वं च" इत्यादिश्रुत्या कर्तृत्वस्य ईश्वरे पर्यवसन्नत्वेन वसिष्ठस्यैव मुख्यकर्तृत्वेनादोषात् ॥ १३ ॥

रा० टी०–निवृत्त इति । रामेण अनुज्ञातो पादुके गृहीत्वा अयोध्यामेव गच्छामि ॥ १४ ॥

रा० टी०–एतदिति । भरतस्य एतद्वाक्यं श्रुत्वा भरद्वाजो मुनिः शुभतरं वाक्यमुदाहरत् ॥ १५ ॥

१६-१७ ] ति० टी०–यदार्यं शोभनचरित्रं त्वयि तिष्ठेदिति यत्तदुत्सृष्टमुदकं निम्ने तिष्ठेदितिवन्न चित्रम् । निम्नेति लुप्तसप्तम्यन्तम् ॥ १६ ॥ १७ ॥

रा० टी०–तद्वाक्याकारमाह–नेति । शीलवृत्तविदां वरे श्रेष्ठे नरव्याघ्रे त्वयि निम्नोत्सृष्टं निम्नदेशे तडागादौ स्थापितमुदकमिव यदार्यमार्यानुवर्तनं तिष्ठेत् तत् एतत् चित्रं न 'निम्ने सृष्टम्' इति भूषणपाठः ॥ १६ ॥

गो० टी०–नैतदिति । आर्यं ज्येष्ठानुवर्तनरूपं श्रेयः निम्ने तटाकादौ सृष्टं धृतम् । ॥ १६ ॥

रा० टी०–अनृण इति । यस्य त्वमीदृशो धर्मात्मा पुत्रः स तव पिता दशरथः अनृणः ऋणविनिर्मुक्तः आसीदिति शेषः ॥ १७ ॥

गो० टी०–" प्रजामनुप्रजायसे तदु ते मर्त्यामृतम् "

१ करे तवेति गो. पाठः । २ अधिरुह्यैत इति गो. पाठः । ३ ते इति गो. पाठः । ४ उवाच तामिति गो. पाठः । ५ व्याघ्र शीलवृत्तवतां वरेति गो. पाठः । ६ निम्ने सृष्टमिति गो. पाठः । ७ अमृत इति गो. पाठः । ८ धर्मज्ञ इति गो. पाठः ।

तमृषिं तु महाप्राज्ञमुक्तवाक्यं कृताञ्जलिः । आमन्त्रयितुमारेभे चरणावुपगृह्य च ॥ १८ ॥
ततः प्रदक्षिणं कृत्वा भरद्वाजं पुनः पुनः । भरतस्तु ययौ श्रीमानयोध्यां सह मन्त्रिभिः ॥ १९ ॥
यानैश्च शकटैश्चैव हयैर्नागैश्च सा चमूः । पुनर्निवृत्ता विस्तीर्णा भरतस्यानुयायिनी ॥ २० ॥
ततस्ते यमुनां दिव्यां नदीं तीर्त्वोर्मिमालिनीम् । ददृशुस्तां पुनः सर्वे गङ्गां शिवजलां नदीम् ॥ २१ ॥
तां रम्यजलसंपूर्णां संतीर्य सहबान्धवः । शृङ्गवेरपुरं रम्यं प्रविवेश ससैनिकः ॥ २२ ॥
शृङ्गवेरपुराद्भूय अयोध्यां संददर्श ह । अयोध्यां तु तदा दृष्ट्वा पित्रा भ्रात्रा विवर्जिताम् २३ ॥
भरतो दुःखसंतप्तः सारथिं चेदमब्रवीत् । सारथे पश्य विध्वस्ता अयोध्या न प्रकाशते ॥ २४ ॥
निराकारा निरानन्दा दीना प्रतिहतस्वना ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

---

इति श्रुत्युक्तरीत्या सत्पुत्रकाभान्मृतोऽपि दशरथः अमृत इत्याह—अमृत इति ॥ १७ ॥

१८–२० ] ति॰ टी॰—उक्तवाक्यम् उक्तरीत्येति शेषः । आमन्त्रयितुमारेभे आमन्त्रणं कृतवान् ॥ १८–२० ॥

रा॰ टी॰—तमिति । महाप्राज्ञमुक्तवाक्यं तमृषिं भरद्वाजं चरणावुपगृह्य आमन्त्रयितुं गमनाय प्रार्थयितुं कृताञ्जलिः भरत आरेभे ॥ १८ ॥

गो॰ टी॰—तमिति । आमन्त्रयितुमारेभे विनयेनामन्त्रणोद्युक्त इव स्थित इत्यर्थः ॥ १८ ॥

रा॰ टी॰—तत इति । ततः भरद्वाजाज्ञापनानन्तरं भरद्वाजं पुनः पुनः प्रदक्षिणं कृत्वा मन्त्रिभिः सह भरतः अयोध्यां ययौ ॥ १९ ॥

गो॰ टी॰—तत इति । ततस्तदनुज्ञानन्तरम् अत्र पुनः पुनरित्यनेन एकं प्रदक्षिणं न कार्यमित्युक्तम् । प्रदक्षिणविशेषणेन प्रणामस्तु सकृदेवेत्युक्तं भवतीत्याचार्याः । केचित्तु एकहस्तप्रणामैकप्रदक्षिणयोरिव एकप्रणामस्यापि निषिद्धत्वात् पुनः पुनरिति विशेषणस्यात्रार्थिके वा पूर्वश्लोकोक्ताभिवादनवलक्ष्ये वा प्रणामेऽप्यन्वयेन न कोऽपि विरोध इत्याहुः । अयोध्यामुद्दिश्य ययावित्यन्वयः ॥ १९ ॥

रा॰ टी॰—भरतगमनमुक्त्वा भरतसैन्यगमनप्रकारमाह—यानैरिति । विस्तीर्णा अनुयायिनी पश्चाद्गमनशीला यानादिभिः उपलक्षिता भरतस्य सा चमूः पुनर्निवृत्ता चित्रकूटात् परावृत्ता बभूवेति शेषः ॥ २० ॥

गो॰ टी॰—भरतस्येव सेनायाश्चित्रकूटान्निवृत्तिमाह—यानैरिति ॥ २० ॥

२१–२२ ] ति॰ टी॰—यमुनां तीर्त्वा गङ्गां ददृशुरिति । यमुनां तीर्त्वा तस्मिन्नेव दिने भरद्वाजं दृष्ट्वा गङ्गां ददृशुरित्यर्थ इति कश्चित्, तत्तु पूर्वोक्तरीत्यासामञ्जस्यादुपेक्ष्यम् । जलस्य शिवत्वं रम्यत्वं च दर्शनमात्रेण सकलपापापहन्तृत्वं मधुरत्वं च ॥ २१ ॥ २२ ॥

रा॰ टी॰—तत इति । ते सर्वे भरतसैनिकाः ऊर्मिमालिनीं लहरीसमूहविशिष्टां दिव्यां यमुनां नदीं तीर्त्वा शिवजलामूर्मिमालिनीं दिव्यां गङ्गानदीं पुनर्ददृशुः । विशेषणान्युभयान्वयीनि ॥ २१ ॥

रा॰ टी॰—तामिति । सहबान्धवः शत्रुघ्नसहितः ससैनिकः सेनासहितो भरतः रम्यजलसंपूर्णां तां गङ्गां संतीर्य रम्यं शृङ्गवेरपुरं प्रविवेश ॥ २२ ॥

गो॰ टी॰—भरतमनुसृत्य सेनानुयानप्रकारमाह—तत इति । यमुनां तीर्त्वा गच्छन्तस्ते सर्वे गङ्गां ददृशुरिति संबन्धः ॥ २१–२४ ॥

२३ ] ति॰ टी॰—शृङ्गवेरपुरादिति निर्गत्येति शेषः ॥२३॥

रा॰ टी॰—शृङ्गेति । शृङ्गवेरपुरात् आगत्य अयोध्यां भूयः संददर्श । पित्रादिवर्जितामयोध्यां दृष्ट्वा तु दुःखसंतप्तो भरतः सारथिमब्रवीत् । सार्धश्लोक एकान्वयी ॥ २३ ॥

२४ ] ति॰ टी॰—विध्वस्ता विध्वस्तशोभा, निराकारा निरलंकारा ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे त्रयोदशाधिकशततमः सर्गः॥११३॥

रा॰ टी॰—तद्वचनाकारमाह—सारथे इति । हे सारथे ! विध्वस्ता तिरोहितशोभा अत एव निराकारा निर्गतः आकारः शुभाकारो यस्याः सा निरानन्दा आनन्दरहिता दीना क्षीणात्वेन प्रतीयमाना प्रतिहतस्वना निवृत्तशब्दा अयोध्या न प्रकाशते इति पश्य । अर्धद्वयमेकान्वयि ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे त्रयोदशाधिकशततमः सर्गः ॥ ११३ ॥

---

१ महात्मानमिति गो. पाठः । २ शृङ्गिवेरेति गो. पाठः । ३ भूयस्त्वयोध्यामिति गो. पाठः । ४ च तत इति गो. पाठः । ५ साऽयोध्येति गो. पाठः । ६ स्वरेति गो. पाठः ।

## चतुर्दशाधिकशततमः सर्गः ।

बहुनिदर्शनैरयोध्यायाः कान्तिराहित्यं वाल्मीकिर्वर्णयति । प्रविष्टो भरतः सुमन्त्रं प्रत्ययोध्यायाः हतकान्तित्वं वर्णयन्नेव दुःखितमनाः पितुर्वेश्म प्रविवेश ।

स्निग्धगम्भीरघोषेण स्यन्दनेनोपयान्प्रभुः । अयोध्यां भरतः क्षिप्रं प्रविवेश महायशाः ॥ १ ॥
बिडालोलूकचरितामालीननरवारणाम् । तिमिराभ्याहतां कालीमप्रकाशां निशामिव ॥ २ ॥
राहुशत्रोः प्रियां पत्नीं श्रिया प्रज्वलितप्रभाम् । ग्रहेणाभ्युदितेनैकां रोहिणीमिव पीडिताम् ॥ ३ ॥
अल्पोष्णक्षुब्धसलिलां घर्मतप्तविहंगमाम् । लीनमीनझषग्राहां कृशां गिरिनदीमिव ॥ ४ ॥
विधूमामिव हेमाभां शिखामग्नेः समुत्थिताम् । हविरभ्युक्षितां पश्चाच्छिखां विप्रलयं गताम् ॥ ५ ॥
विध्वस्तकवचां रुग्णगजवाजिरथध्वजाम् । हतप्रवीरामापन्नां चमूमिव महाहवे ॥ ६ ॥
सफेनां सस्वनां भूत्वा सागरस्य समुत्थिताम् । प्रशान्तमारुतोद्धूतां जलोर्मिमिव निःस्वनाम् ॥ ७ ॥

गो० टी०—सारथ इति । निराकारा निर्गतशोभनाकारा ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने त्रयोदशोत्तरशततमः सर्गः ॥११३॥

१ ] ति० टी०—उपयान्नुपगच्छन् ॥ १ ॥

रा० टी०—भरतकर्तृकनगरप्रवेशं वर्णयन्नाह—स्निग्धेति । स्निग्धः स्नेहोत्पादकः गम्भीरो घोषो यस्य तेन स्यन्दनेन रथेन प्रभुर्महायशाः भरतः अयोध्यामुपयान् उपगच्छन् सन् क्षिप्रं प्रविवेश ॥ १ ॥

गो० टी०—पूर्वसर्गान्तिमश्लोकोक्तं विस्तरेण दर्शयति चतुर्दशोत्तरशततमे—स्निग्धगम्भीरघोषेणेत्यादि । उपयान् समीपमागच्छन् ॥ १ ॥

२ ] ति० टी०—बिडालादिभिश्चरितां तत्संचारवतीम् । आ समन्ताल्लीनानि श्लिष्टानि लग्नानि नराणां वारणानि कवाटानि यस्याम्, तिमिरेणालक्ष्यतां प्राप्ताम् अत एव कालीं तत एवाप्रकाशां निशामिव स्थितामयोध्यां प्रविवेशेत्यन्वयः ॥ २ ॥

रा० टी०—अयोध्यामेव विशिनष्टि—बिडालेत्यादिभिः । बिडालाश्च उलूकाश्च तैश्चरिताम्, आलीनानि पिहितानि नरचारणानि नराणां चारणानि मुखानि यस्यां तां, किंच आलीनानि निवृत्तानि नराणां प्रतीहाराणां चारणानि निवारणानि यस्यां सा तामप्रकाशां चन्द्रादिप्रकाशरहितां निशामिव तिमिराभ्याहतामन्धकारव्याप्तामत एव कालीं कालवर्णात्वेन प्रतीताम् ॥ २ ॥

गो० टी०—बिडालेति । कालीं कृष्णपक्षसंबन्धिनीम् ॥२॥

३ ] ति० टी०—राहुशत्रोश्चन्द्रस्य श्रिया दिव्यैश्वर्येण युक्तामत एव प्रज्वलितप्रभाम् अभ्युदितेन ग्रहेण राहुणा पीडितभर्तृकामत एवैकामसहायां रोहिणीमिव स्थिताम् ॥ ३ ॥

४ ] ति० टी०—आतपवशादल्पोष्णं क्षुब्धं कलुषं च सलिलं यस्यास्ताम् । झषो मत्स्यविशेषः, क्षुब्धेत्यार्षम् ॥ ४ ॥

रा० टी०—राह्विति । अभ्युदितेन अभ्युदयकालं प्राप्तेन ग्रहेण राहुणा पीडितां निपीडितपतिकामत एव एकां सहायरहितामत एव श्रिया अनेकविधसंपत्त्या अप्रज्वलिता प्रभा दीप्तिर्यस्यास्तां राहुशत्रोः चन्द्रमसः प्रियां पत्नीं रोहिणीमिव अल्पोष्णक्षुब्धसलिलामल्पमल्पत्वविशिष्टमत एव उष्णं घर्मेण तप्तमत एव क्षुब्धं प्राप्तक्षोभं सलिलं जलं यस्यास्तामत एव घर्मेण तप्ता विहङ्गमाः पक्षिणो यस्यास्तामत एव लीनाः कर्दमादौ निगूढाः मीना झषा ग्राहाः यस्यास्ताम्, झषो मीनजातिविशेष इति न पौनरुक्त्यमत एव कृशां कृशत्वविशिष्टां गिरिनदीमिव ॥ ३ ॥ ४ ॥

गो० टी०—राहुशत्रोरिति । राहुशत्रोश्चन्द्रस्य ॥ ३ ॥ ४ ॥

५–६ ] ति० टी०—विधूमामत एव हेमाभामग्नेः समुत्थितां शिखामिव पूर्वं रामस्थितिसमये जाज्वल्यमानरूपतया स्थितां पश्चाद्रामविवासनकाले हविरभ्युक्षितां पयोहोमीयपयःसिक्तामत एव विप्रलयं गतां शिखामिव स्थिताम् । 'अध्वराग्नेः समुत्थिताम्' इति पाठो बहुसंमतस्तत्राप्यर्थः प्राग्वदेव, शिखामित्यस्य चावृत्तिः ॥ ५ ॥ ६ ॥

रा० टी०—विधूमामिति । पूर्वं विधूमां धूमरहितामत एव हेमाभां स्वर्णसदृशीमग्नेः समुत्थितां शिखां शिखासदृशीमपि पश्चात् हविरभ्युक्षितां देवतोद्देश्यकपयसा सिक्तामत एव विप्रलयं गतां शिखां ज्वालामिव ॥ ५ ॥

रा० टी०—महाहवे महासंग्रामे विध्वस्तकवचां विध्वस्ताः कवचा योधानां वर्माणि यस्यां, रुग्णाः भग्नाः गजवाजिरथध्वजाः यस्यामत एव हतप्रवीरामत एव आपन्नामापदं प्राप्तां चमूमिव ॥ ६ ॥

गो० टी०—विधूमामिति । हविरभ्युक्षितां दध्यादिहविषा अभ्युक्षितां शिखां प्रवर्ग्योत्थितज्वालाम् ॥ ५–७ ॥

७ ] ति० टी०—समुत्थितां प्रबलमारुतेन समुत्थिताम्,

१ चारणामिति रा. पाठः । २ अभ्युत्थितेनेति गो. पाठः । ३ घर्मोत्तप्तेति गो. पाठः । ४ अध्वराग्नेरिति गो. पाठः । ५ सफेनां सस्वनेति गो. पाठः । ६ उद्घातामिति गो. पाठः ।

त्यक्तां यज्ञायुधैः सर्वैरभिरूपैश्च याजकैः। सुत्याकाले सुनिर्वृत्ते वेदिं गतरवामिव ॥ ८ ॥
गोष्ठमध्ये स्थितामार्तामचरन्तीं नवं तृणम्। गोवृषेण परित्यक्तां गवां पत्नीमिवोत्सुकाम् ॥ ९ ॥
प्रभाकराद्यैः सुस्निग्धैः प्रज्वलद्भिरिवोत्तमैः। [3]वियुक्तां मणिभिर्जात्यैर्नवां मुक्तावलीमिव ॥ १० ॥
सहसाचरितां स्थानान्महीं पुण्यक्षयोद्गताम्। संहृतद्युतिविस्तारां तारामिव दिवश्च्युताम् ॥ ११ ॥
पुष्पनद्धां वसन्तान्ते मत्तभ्रमरशालिनीम्। द्रुतदावाग्निविप्लुष्टां क्लान्तां वनलतामिव ॥ १२ ॥
संमूढनिगमां सर्वां संक्षिप्तविपणापणाम्। प्रच्छन्नशशिनक्षत्रां द्यामिवाम्बुधरैर्युताम् ॥ १३ ॥
क्षीणपानोत्तमैर्भग्नैः शरावैरभिसंवृताम्। हतशौण्डामिव ध्वस्तां पानभूमिमसंस्कृताम् ॥ १४ ॥

---

अत एव सफेनां सस्वनामूर्मिमिव भूत्वा तत्सदृशं रूपं प्राप्य पश्चात्प्रशान्तमारुतेनोद्धूतां कम्पितामत एव निःस्वनां सागरस्य जलोर्मिमिव स्थिताम् ॥ ७ ॥

रा० टी०—समुत्थितां प्रबलवायुना समुद्धूतां सफेनां फेनसहितात्वं सस्वनां स्वनसहितात्वं च भूत्वा प्राप्य पश्चात्प्रशान्तेन मारुतेन वायुना उद्धूतामल्पं चलितामत एव निस्वनां स्वनरहितां सागरस्य समुद्रस्य जलोर्मिमिव ॥ ७ ॥

८ ] ति० टी०—यज्ञायुधैः स्फ्यादिभिः । अभिरूपैः प्रशस्तैः । सुत्याकाले यागकाले । निवृत्ते समाप्ते सति ॥ ८ ॥

रा० टी०—सुत्याकाले सुनिर्वृत्ते समाप्ते सतीत्यर्थः, याजकैः अभिरूपैः रमणीयैः सर्वैः यज्ञायुधैः स्रुवादिभिस्त्यक्तामपवर्जितां गतरवां निवृत्तशब्दां वेदिमिव ॥ ८ ॥

गो० टी०—त्यक्तामिति । यज्ञायुधैः स्फ्यादिभिः सुत्याकाले सुत्यादिवसे ॥ ८ ॥

९ ] ति० टी०—गोष्ठो व्रजं तत्र स्थिताम् । गोवृषेण श्रेष्ठगवां वृषभेण, यद्वा गवां प्रियेण वृषेण त्यक्तामत एवार्तां तत्रोत्सुकां नवं तृणमचरन्तीमभक्षयन्तीं गवां तरुणवृषाणां पत्नीमिव स्थिताम् । 'गवां पङ्क्तिमिव' इति पाठान्तरम् । पत्नीमित्यस्य पङ्क्तिमित्यर्थं तीर्थ आह, तच्चिन्त्यम् ॥ ९ ॥

रा० टी०—गोवृषेण श्रेष्ठवृषभेण परित्यक्तामाभीरादिभिः पृथक्कृतामत एव आर्तामत एव तृणमचरन्तीं गोष्ठे स्थितां निरुद्धामुत्सुकां गवां पत्नीमिव ॥ ९ ॥

गो० टी०—गोष्ठमध्य इति । अचरन्तीमभक्षयन्तीम् ॥ ९ ॥

१० ] ति० टी०—प्रभाकराद्यैः पद्मरागाद्यैः । स्फटिकाद्यैरिति कतकोक्तं तु न युक्तम् ॥ १० ॥

रा० टी०—अभिजात्यैः उत्तमजातिभिः सुस्निग्धैः अतिस्नेहोत्पादकैः प्रज्वलद्भिरेव उत्तमैः प्रभाकराद्यैः पद्मरागादिभिर्मणिभिर्वियुक्तां नवां मुक्तावलीमिव ॥ १० ॥

गो० टी०—प्रभाकराद्यैरिति । प्रभाकराद्यैः पद्मरागाद्यैः ॥ १० ॥ ११ ॥

११ ] ति० टी०—स्थानात्सहसा चरितां चलिताम् । पुण्यक्षयेति लुप्तसप्तम्यन्तम्, पुण्यक्षये सति महीं प्राप्ताम्, संहृतो द्युतिविस्तारो यस्यास्ताम् ॥ ११ ॥

रा० टी०—चरितां भुक्तभोगाम् पुण्यक्षये स्थानात् दिवः च्युतामत एव महीमुद्गतां प्राप्तामत एव सुसंहृतद्युतिविस्तारां तारामिव ॥ ११ ॥

१२ ] ति० टी०—द्रुतदावाग्निविप्लुष्टां वेगवद्दावाग्निना व्याप्ताम् ॥ १२ ॥

रा० टी०—पुष्पनद्धाम् पुष्पैर्ग्रथितामत एव मत्तभ्रमरशालिनीं पश्चात् द्रुतदावाग्निना विप्लुष्टामत एव क्लान्तां नष्टहर्षां लतामिव ॥ १२ ॥

गो० टी०—पुष्पनद्धामिति । वसन्तान्ते ग्रीष्मे द्रुतदावाग्निविप्लुष्टां वेगवद्दावाग्निना ईषद्दग्धाम् ॥ १२ ॥

१३ ] ति० टी०—संमूढाः शोकाकुलचित्ता निगमा वणिजो यस्याम्, यद्वा संमूढो जनसंचाररहितो निगमः पन्था यस्याम्, 'निगमो निश्चये वेदे पुरे पथि वणिक्पथे'। संक्षिप्ता विपणापणाः पण्यवीथयोऽस्याम् ॥ १३ ॥

रा० टी०—संमूढाः निगमा वणिजो यस्यामत एव संक्षिप्ताः अल्पाः विपणापणाः यस्यामत एव अम्बुधरैर्मेघैर्युताः मत एव प्रच्छन्नशशिनक्षत्रां द्यामिव ॥ १३ ॥

गो० टी०—संमूढनिगमामिति । संमूढनिगमां जनसंचाररहितमार्गाम् । 'निगमो निश्चये वेदे पुरे पथि वणिक्पथे' इति वैजयन्ती । संक्षिप्तविपणापणां संकुचितविक्रयां संकुचितनिषद्यां च ॥ १३ ॥

१४ ] ति० टी०—क्षीणपानोत्तमैः क्षीणमद्यैः । भग्नैः शरावैः संवृताम् । हतशौण्डां हतमद्यपाम् ॥ १४ ॥

रा० टी०—क्षीणेति । क्षीणानि पानोत्तमानि येषां तैः भग्नैः शरावैः अभिसंवृतां हताः शौण्डाः पानकर्तारो यस्यामत एव ध्वस्तामसंस्कृतां पानभूमिमिव ॥ १४ ॥

गो० टी०—क्षीणपानोत्तमैरिति । क्षीणपानोत्तमैः क्षीणमधूत्तमैः शरावैः चषकाकारैः हतशौण्डां हतमत्तजनाम् आकाशेऽनावृतप्रदेशे ॥ १४ ॥

---

१ वीति गो. पाठः । २ पत्तिमिति गो. पाठः । ३ विमुक्तामिति रा. पाठः । ४ क्षयाद्गत मिति गो. पाठः । ५ नादितामिति गो. पाठः । ६ स्तब्धामिति गो. पाठः । ७ भिन्नैरिति गो. पाठः । ८ आकाशे इति गो. पाठः ।

वृक्णभूमितलां निम्नां वृक्णपात्रैः समावृताम् । उपयुक्तोदकां भग्नां प्रपां निपतितामिव ॥ १५ ॥
विपुलां विततां चैव युक्तपाशां तरस्विनाम् । भूमौ बाणैर्विनिकृत्तां[1] पतितां ज्यामिवायुधात् ॥ १६ ॥
सहसा युद्धशौण्डेन हयारोहेण वाहिताम् ।
[[2]निक्षिप्तभाण्डामुत्सृष्टां किशोरीमिव दुर्बलाम् । शुष्कतोयां महामत्स्यैः कूर्मैश्च बहुभिर्वृताम् ॥
प्रभिन्नतटविस्तीर्णां वापीमिव हृतोत्पलाम् । पुरुषस्याप्रहृष्टस्य प्रतिषिद्धानुलेपनाम् ॥
संतप्तामिव शोकेन गात्रयष्टिमभूषणाम् । प्रावृषि प्रविगाढायां प्रविष्टस्याभ्रमण्डलम् ॥
प्रच्छन्नां नीलजीमूतैर्भास्करस्य प्रभामिव ।] [3]निहतां प्रतिसैन्येन वडवामिव पातिताम् ॥ १७ ॥
भरतस्तु रथस्थः सञ्श्रीमान्दशरथात्मजः । वाहयन्तं रथश्रेष्ठं सारथिं वाक्यमब्रवीत् ॥ १८ ॥
किं नु खल्वद्य गम्भीरो मूर्च्छितो न निशम्यते[4] । यथापुरमयोध्यायां गीतवादित्रनिःस्वनः ॥ १९ ॥
वारुणीमदग[5]न्धश्च माल्यगन्धश्च मूर्छितः । चन्दनागुरुगन्धश्च न प्रवाति समन्ततः ॥ २० ॥
यानप्रवरघोषश्च सुस्निग्धहयनिःस्वनः[6] । प्रमत्तगजनादश्च महांश्च रथनिस्वनः ॥ २१ ॥
नेदानीं श्रूयते पुर्यामस्यां रामे विवासिते । चन्दनागुरुगन्धांश्च[7] महार्हांश्च वनस्रजः[8] ॥ २२ ॥
गते रामे हि तरुणा संतप्ता नोपभुञ्जते । बहिर्यात्रां न गच्छन्ति चित्रमाल्यधरा नराः ॥ २३ ॥

---

१५ ] ति० टी०–वृक्णभूमितलां भिन्नचत्वराम्, भिन्नपात्रैर्युक्ताम्, भग्नां भग्नस्तम्भाम्, उपयुक्तोदकां समाप्तोदकाम् ॥१५॥

रा० टी०–वृक्णेति । वृक्णं विदीर्णं भूमितलं यस्याः अत एव भग्नामत एव निम्नां ध्वस्तौन्नत्यां वृक्णपात्रैः समावृतामुपयुक्तोदकां समाप्तसलिलां निपतितां पिपासया विपतितजनां प्रपामिव ॥ १५ ॥

गो० टी०–वृक्णभूमितलामिति । वृक्णभूमितलां विदीर्णभूमितलां वृक्णपात्रैः भिन्नपात्रैः ॥ १५ ॥

१६ ] ति० टी०–विपुलां विशालाम्, विततां धनुष्पाततताम्, युक्तपाशां धनुष्कोटयोर्ज्याबन्धनार्थपाशयुताम्, तरस्विनां बाणैर्विनिकृतां छिन्नाम्, आयुधाद्धनुषः पतिताम् ॥ १६ ॥

रा० टी०–विपुलामिति । विपुलां विस्तीर्णां विततां चापे संयोजितां युक्तपाशां चापकोट्योर्ज्याबन्धनप्रयोजकीभूतरज्जुविशिष्टां तरस्विनां बाणैर्विनिष्कृत्तां छिन्नामत एव आयुधात् धनुषः भूमौ पतितां ज्यामिव ॥ १६ ॥

गो० टी०–विपुलामिति । विततां अटनीद्वयव्याप्ताम् आरोपितामिति यावत्, युक्तपाशां युक्तरज्जुं तरस्विनां वीराणां बाणैः विनिष्कृत्तां छिन्नामिति यावत्, आयुधाद्धनुषः ॥ १६ ॥

१७–१८] ति० टी०–सहसा बलात्कारेण वाहितां प्रधाविताम्, प्रतिसैन्येन निहतामत एव पातिताम् ॥ १७ ॥ १८ ॥

रा० टी०–सहसेति । युद्धशौण्डेन युद्धकुशलेन हयारोहेण वाहितां द्रुतं चालितां प्रतिसैन्येन शत्रुसेनया निहतामत एव पतितां वडवामिव अयोध्यां प्रविवेशेति पूर्वेणान्वयः॥१७॥

रा० टी०–भरत इति । रथस्थो भरतस्तु रथश्रेष्ठं वाहयन्तं सारथिमब्रवीत् ॥ १८ ॥

गो० टी०–सहसेति । युद्धशौण्डेन आहवसमर्थेन निक्षिप्तभाण्डाम् अवरोपिताभ्भूषाम् उत्सृष्टाम् वाहनानर्हां किशोरीं बालवडवाम् ॥ १७–१९ ॥

. गो० टी०–प्रावृषीति । प्रविगाढायां प्रवृद्धायां भास्करस्य प्रभामिव स्थिताम् उक्तविशेषणविशिष्टामयोध्यां प्रविवेशेति पूर्वेणान्वयः ॥ २० ॥ २१ ॥

१९ ] ति० टी०–यथापुरं यथापूर्वं न निशाम्यते खलु अत्र किं कुर्म इति योजना ॥ १९ ॥

रा० टी०–तद्वचनाकारमाह–किमिति । गम्भीरः निविडः मूर्छितः प्रवृद्धो गीतवादित्रनिःस्वनः यथापुरं पूर्ववत् अयोध्याय न निशाम्यते किं कुत्सितमेतत् नु नेत्यर्थः ॥ १९ ॥

गो० टी०–किं न्विति । किं नु खलु अहो कष्टं जातमित्यर्थः ॥ २२ ॥

२०–२३ ] ति० टी०–मदकरो गन्धो मदगन्धः मूर्छितो व्याप्तः ॥ २०–२३ ॥

रा० टी०–वारुणीति । समन्ततो मूर्छितः सर्वत्र व्याप्तः वारुणी वरुणप्रेषिता औषधिविशेषः तस्या मदगन्धः मादकः सुगन्धः माल्यगन्धः पुष्पसुगन्धश्च चन्दनादिगन्धश्च न प्रवाति॥२०॥

रा० टी०–यानेति । यानप्रवरघोषः यानप्रवरस्य उत्तमरथादेर्घोषः सुस्निग्धः सुस्नेहोत्पादक एव हयस्वनः प्रमत्तगजानां महान्नादश्च रथानां रथिनां स्वनश्च अस्यां पुर्यामिदानीं न श्रूयते । सार्धश्लोक एकान्वयी ॥ २१ ॥

रा० टी०–चन्दनेति । चन्दनादिगन्धान् महार्हान् वनस्रजो नवीनमालाश्च संतप्ताः वर्मादिजनिततापविशिष्टास्तरुणाः युवानो जनाः नोपभुञ्जते न सेवन्ते, चित्रमाल्यधरा नरा अपि बहिर्यात्रां न गच्छन्ति ॥ २२ ॥ २३ ॥

---

१ निष्कृत्तामिति गो. पाठः । २ श्लोकत्रयं सार्धमेतदधिकं गो. पाठे । ३ अर्धमेतत् गो. नास्ति । ४ निशाम्यत इति गो. पाठ. । ५ नृपितागर्विति गो. अगर्विति रा. पाठः । ६ स्निग्धश्चेति गो. पाठः । ७ अगर्नेति गो. रा. पाठः । ८ नवेति गो. पाठः ।

नोत्सवाः संप्रवर्तन्ते रामशोकार्दिते पुरे । सा हि नूनं मम भ्रात्रा पुरस्यास्य द्युतिर्गता ॥ २४ ॥
नहि राजत्ययोध्येयं सासारेवार्जुनी क्षपा । कदा नु खलु मे भ्राता महोत्सव इवागतः ॥ २५ ॥
जनयिष्यत्ययोध्यायां हर्षं ग्रीष्म इवाम्बुदः । तरुणैश्चारुवेषैश्च नरैरुन्नतगामिभिः ॥ २६ ॥
संपतद्भिरयोध्यायां नाभिभान्ति महापथाः । इति ब्रुवन्सारथिना दुःखितो भरतस्तदा ॥ २७ ॥
अयोध्यां संप्रविश्यैव विवेश वसतिं पितुः । तेन हीनां नरेन्द्रेण सिंहहीनां गुहामिव ॥ २८ ॥
तदा तदन्तःपुरमुज्झितप्रभं सुरैरिवोत्कृष्टमभास्करं दिनम् ।
निरीक्ष्य सर्वत्र विभक्तमात्मवान्मुमोच बाष्पं भरतः सुदुःखितः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥

---

गो० टी०—वारुणीमदगन्ध इति । वारुणीमदगन्धः वारुण्याः मदोत्पादको गन्ध इत्यर्थः ॥ २३–२६ ॥

२४ ] ति० टी०— मम भ्रात्रा सहेति शेषः ॥ २४ ॥

रा० टी०—नेति । रामशोकार्दिते रामशोकपीडिते पुरे उत्सवाः न प्रवर्तन्ते । तत्र हेतुः—अस्य पुरस्य सा पौर्वकालिकी द्युतिः मम भ्रात्रा रामेण सह गता ॥ २४ ॥

गो० टी०—सहेति । सासारा वेगवद्वृष्टिसहिता 'आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' इति वैजयन्ती । अर्जुनी शुक्लपक्षसंबन्धिनी ॥ २७ ॥

२५] ति० टी०—अर्जुनी शारदी शुक्लपक्षसंबन्धिनी वा, सासारा वेगवद्वृष्टिधारासहिता, महोत्सव इव ग्रीष्मेऽम्बुद इव च २६

रा० टी०—नहीति । सासारा वेगवद्वृष्टिविशिष्टा आर्जुनी शुक्लपक्षसंबन्धिनी क्षपा रात्रिरिव इयमयोध्या नैव राजति 'आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले' इति वैजयन्ती । अर्धं पृथक्—कदेति । अयोध्यामेवागतो मे भ्राता रामः ग्रीष्मे महोत्सवः अत्युत्सवहेतुः अम्बुदो मेघ इव हर्षं कदा जनयिष्यत्येव । इव एवार्थे अर्धद्वयमेकान्वयि ॥ २५ ॥

गो० टी०—कदा न्विति । महोत्सवः ग्रीष्मे अम्बुद इव च अयोध्यायां कदा मे भ्राता हर्षं जनयिष्यतीति संबन्धः ॥२८॥

२६–२८ ] ति० टी०—उन्नतगामिभिः संतोषादुद्धतगामिभिः ॥ २६–२८ ॥

रा० टी०—तरुणैरिति । उन्नतगामिभिर्गर्वसूचकगमनकर्तृभिरित्यर्थः, चारुवेषैस्तरुणैः अयोध्यायां संपतद्भिः आगच्छद्भिर्नरैः महापथाः राजमार्गाः नाभिभान्ति ॥ २६ ॥

गो० टी०—तरुणैरिति । उन्नतगामिभिः सगर्वगमनैरित्यर्थः, महापथाः राजमार्गाः ॥ २९ ॥

रा० टी०—इतीति । इति अनेन प्रकारेण ब्रुवन् सारथिना सह दुःखितो भरतः अयोध्यां संप्रविश्य सिंहहीनां गुहामिव नरेन्द्रेण हीनां पितुः वसतिं गृहं विवेश ॥२७॥२८॥

गो०टी०—एवमिति । 'एवं बहुविधं जल्पन्' इति पाठः॥३०॥

२९ ] ति० टी०—सुरैरुत्कृष्टं कृतशोकमभास्करं दिनमिव । एवं हि श्रूयते—पुरा देवासुरे युद्धेऽसुरैर्देवाः पराजिताः राहुणा च भानुः पातितः तदा दिवारात्रिविभागरहिते काले स्वस्वलोकाद्ब्रह्मलोकं गतैर्देवैः प्रार्थितस्य ब्रह्मणो नियोगादत्रिः सप्तरात्रं सूर्याधिपत्यं चकारेति तीर्थः । देवैरुत्कृष्टं भास्करहीनं दिनं कविकल्पितमत्रोपमानमिति कतकः । विभक्तं विगतसंस्कारम् । भक्तं सेवितं संस्कृतं तद्भिन्नमिति यावत् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे चतुर्दशोत्तरशततमः सर्गः ॥११४॥

रा० टी०—तदेति । उज्झितप्रभं त्यक्तशोभमत एव सुरैरुत्कृष्टं शोककर्मीभूतमभास्करं भास्कररहितं दिनमिव विभक्तं मार्जनादिसेवारहितं तत् अन्तःपुरं सर्वत्र निरीक्ष्य सुदुःखितः आत्मवान् अतिधैर्यविशिष्टो भरतः बाष्पमश्रु मुमोच । अत्रेयं पुराणप्रसिद्धिः—पुरा देवासुरसङ्ग्रामे असुरैः देवाः पराजिताः भानुश्च राहुणा पातितस्तदा दिवारात्रिविभागाभावात् स्वलोकाद्ब्रह्मलोकं गतैर्देवैः प्रार्थितस्य ब्रह्मणो नियोगात् सप्तरात्रं सूर्यकार्यमत्रिश्चकारेति तेनाभास्करदिनस्य नाप्रसिद्धिः । अभास्करमित्यस्य अकालकघनाद्याच्छिन्नत्वेन भास्करदर्शनरहितमित्यर्थं तु न शङ्कान्तरे ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे चतुर्दशाधिकशततमः सर्गः ॥ ११४ ॥

गो० टी०—तदेति । सुरैरुत्सृष्टमभास्करं दिनमिव उज्झितप्रभम् अन्तपुरं निरीक्ष्येति संबन्धः । विविक्तं विजनम् 'विविक्तौ पूतविजनौ' इत्यमरः । पुरा किल देवासुरयुद्धे असुरैर्देवाः पराजिताः स्वर्भानुना च भानुः पातितस्तदानीं कियान् कालो दिवारात्रिविभागरहितोऽभूत् । ततःपरं ब्रह्मनियोगादत्रिः स्वतेजसा सप्तरात्रं सूर्याधिपत्यं चकारेति पौराणिकी कथा । 'अत्रिः स्वतेजसा' इति पाठान्तरम् ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने चतुर्दशोत्तरशततमः सर्गः ॥११४॥

---

१ सहेति गो. पाठः । २ एवं बहुविधं जल्पन्निति पादत्रयस्थाने गो. पाठे । ३ उत्सृष्टमिति गो. पाठः । ४ सर्वं तु विविक्तमिति गो. पाठः

## पञ्चदशाधिकशततमः सर्गः।

भरतः स्वमातॄरयोध्यां प्रवेश्य वसिष्ठानुमतः शत्रुघ्नादिभिः सह नन्दिग्रामं प्राप्तः पादुकायुगुलं राज्येऽभिषिच्य स्वयं मुनिवेषधारी तदुपरि छत्रं बिभ्राणो राष्ट्रं प्रशशास।

ततो निक्षिप्य मातॄस्ता अयोध्यायां दृढव्रतः। भरतः शोकसंतप्तो गुरूनिदमथाब्रवीत् ॥ १ ॥
नन्दिग्रामं गमिष्यामि सर्वानामन्त्रयेऽत्र वः। तत्र दुःखमिदं सर्वं सहिष्ये राघवं विना ॥ २ ॥
गतश्चाहो दिवं राजा वनस्थः स गुरुर्मम। रामं प्रतीक्षे राज्याय स हि राजा महायशाः ॥ ३ ॥
एतच्छ्रुत्वा शुभं वाक्यं भरतस्य महात्मनः। अब्रुवन्मन्त्रिणः सर्वे वसिष्ठश्च पुरोहितः ॥ ४ ॥
सुभृशं श्लाघनीयं च यदुक्तं भरत त्वया। वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ॥ ५ ॥
नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृसौहृदे। मार्गमार्यं प्रपन्नस्य नानुमन्येत कः पुमान् ॥ ६ ॥
मन्त्रिणां वचनं श्रुत्वा यथाभिलषितं प्रियम्। अब्रवीत्सारथिं वाक्यं रथो मे युज्यतामिति ॥ ७ ॥
प्रहृष्टवदनः सर्वा मातॄः समभिभाष्य च। आरुरोह रथं श्रीमाञ्शत्रुघ्नेन समन्वितः ॥ ८ ॥
आरुह्य तु रथं क्षिप्रं शत्रुघ्नभरतावुभौ। ययतुः परमप्रीतौ वृतौ मन्त्रिपुरोहितैः ॥ ९ ॥
अग्रतो गुरवः सर्वे वसिष्ठप्रमुखा द्विजाः। प्रययुः प्राङ्मुखाः सर्वे नन्दिग्रामो यतो भवेत् ॥ १० ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—भरतकर्तृकगृहप्रवेशानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः। ततः गृहप्रवेशानन्तरं ताः सहगताः मातॄः अयोध्यायां निक्षिप्य संस्थाप्य दृढव्रतः अनिवार्यसंकल्पः शोकसंतप्तो भरतः गुरून् वशिष्ठप्रभृतीन् अथाब्रवीत् समक्षमुच्चारयामास ॥ १ ॥

गो० टी०—अथ भरतस्य नन्दिग्रामे स्थित्वा राज्यपरिपालनं पञ्चदशोत्तरशततमे—तत इत्यादिना ॥ १ ॥

२ ] ति० टी०—अत्रायोध्यायाम्। तेन सहागमनकारितं राघवं विना दुःखं पितृभ्रातृवियोगजं दुःखमिति यावत् ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—नन्दिग्राममिति। अहं नन्दिग्रामं गमिष्यामि अत्र अस्मिन् विषये वो युष्मान् आमन्त्रये प्रार्थयामि, तद्गमनाय भवदाज्ञां वाञ्छामीत्यर्थः। गमने प्रयोजनमाह—तत्र नन्दिग्रामे राघवं रामं विना गतोऽहमिदमनुभूयमानं सर्वं दुःखं सहिष्ये ॥ २ ॥

गो० टी०—नन्दिग्राममिति। राघवं विना दुःखं राघवं विना प्राप्तं दुःखम् ॥ २–४ ॥

३–५ ] ति० टी०—तदेवाह—गतश्चेति ॥ ३–५ ॥

रा० टी०—दुःखहेतुं वदन्नाह—गत इति। राजा दिवं ब्रह्मादिस्तुतं साकेतं गतः, गुरुः ममातीव पूज्यः स रामः वनस्थोऽस्तीति शेषः, अतः राज्याय राज्यं प्राप्तुं रामं प्रतीक्षे यतः महायशाः स राम एव राजा ॥ ३ ॥

रा० टी०—एतदिति। महात्मनो भरतस्य एतच्छुभं वाक्यं श्रुत्वा सर्वे मन्त्रिणः पुरोहितो वसिष्ठश्च अब्रुवन् ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—सुभृशमिति। हे भरत! भ्रातृवात्सल्यात् यत् त्वयोक्तं तत् इदं तवैव अनुरूपमतः सुभृशमत्यन्तं श्लाघनीयम्। एतेनेदं गमनमस्माकमनुमतमिति सूचितम् ॥ ५ ॥

गो० टी०—सुभृशमिति। 'सुभृशं श्लाघनीयं च' इति पाठः 'सदृशम्' इति पाठे कुलस्य सदृशमित्यर्थः ॥ ५ ॥

६ ] ति० टी०—बन्धुलुब्धस्य बन्धुजनपरिपालनेऽधिकस्पृहावतः। आर्यं श्रेष्ठम्. नानुमन्येत त्वद्वचनमिति शेषः ॥ ६ ॥

रा० टी०—सर्वानुमतौ हेतुं वदन्नाह—नित्यमिति। बन्धुलुब्धस्य बन्धुप्राप्तिविषयकातीच्छावतः अत एव भ्रातृसौहृदे भ्रातृसौहार्दसंपादने तिष्ठतः अत एव आर्यमत्युत्तमं मार्गं पन्थानं प्रपन्नस्य प्राप्तस्य ते तव आर्यं मार्गं कः पुमान् नानुमन्येत सर्वोऽपि अनुमन्येतेत्यर्थः, मार्गमित्युभयान्वयि ॥ ६ ॥

गो० टी०—नित्यमिति। नानुमन्येत वचनमिति शेषः ६ ॥ ७ ॥

७–९ ] ति० टी०—यथाभिलषितं स्वाभिलषितमनतिक्रम्य प्रवृत्तम् ॥ ७–९ ॥

रा० टी०—मन्त्रिणामिति। यथाभिलषितमभिलषितमनतिक्रम्य प्रियं मन्त्रिणां वचनं श्रुत्वा मे रथो युज्यतामिति वाक्यं सारथिमब्रवीत् ॥ ७ ॥

रा० टी०—प्रहृष्टेति। प्रहृष्टवदनो भरतः मातॄः समभिभाष्य समभिभाषणपूर्वकाज्ञां गृहीत्वा रथमारुरोह ॥ ८ ॥

रा० टी०—आरुह्येति। क्षिप्रं शीघ्रं रथमारुह्य मन्त्रिपुरोहितैर्वृतौ उभौ शत्रुघ्नभरतौ ययतुः ॥ ९ ॥

गो० टी०—प्रहृष्टवदन इति. सम्यक् ॥ ८ ॥ ९ ॥

१० ] ति० टी०—नन्दिग्रामो यतो भवेद्येन मार्गेण स प्राप्तो भवेत्तेन ययुः ॥ १० ॥

१ स इति गो. पाठः। २ ऽत्रेति गो. पाठः। ३ हीति गो. पाठः। ४ चेति गो. पाठः। ५ वाच स इति गो. पाठः। ६ चेति गो. पाठः। ७ शीघ्रमिति गो. पाठः। ८ तत्रेति गो. पाठः। ९ ऽभवदिति गो. पाठः।

बलं च तदनाहूतं गजाश्वरथसंकुलम् । प्रययौ भरते याते सर्वे च पुरवासिनः ॥ ११ ॥
रथस्थः स तु[1] धर्मात्मा भरतो भ्रातृवत्सलः । नन्दिग्रामं ययौ तूर्णं शिरस्यादाय[2] पादुके ॥ १२ ॥
भरतस्तु ततः क्षिप्रं नन्दिग्रामं प्रविश्य सः । अवतीर्य रथात्तूर्णं गुरूनिदमभाषत[3] ॥ १३ ॥
एतद्राज्यं मम भ्रात्रा दत्तं संन्यासमुत्तमम् । योगक्षेमवहे चेमे पादुके हेमभूषिते ॥ १४ ॥
भरतः शिरसा कृत्वा संन्यासं पादुके ततः । अब्रवीद्दुःखसंतप्तः सर्वं प्रकृतिमण्डलम् ॥ १५ ॥
छत्रं धारयत क्षिप्रमार्यपादाविमौ मतौ । आभ्यां राज्ये स्थितो धर्मः पादुकाभ्यां गुरोर्मम ॥ १६ ॥
भ्रात्रा तु[4] मयि संन्यासो निक्षिप्तः सौहृदादयम् । तमिमं पालयिष्यामि राघवागमनं प्रति ॥ १७ ॥
क्षिप्रं संयोजयित्वा तु राघवस्य पुनः स्वयम् । चरणौ तौ तु रामस्य द्रक्ष्यामि सहपादुकौ ॥ १८ ॥

रा० टी०—गमनप्रकारमाह—अग्रत इति । वसिष्ठप्रमुखा गुरवः सर्वे द्विजाश्च प्राङ्मुखाः सन्तः यतः येन मार्गेण सर्वे नन्दिग्रामः सर्वेषां कामानाम प्राप्तिर्यस्मात् स एव नन्दिग्रामः भवेत् प्राप्नुयादित्यर्थः, तेन प्रययुः ॥ १० ॥

गो० टी०—अग्रतो गुरवस्तत्र नन्दिग्रामो यतोऽभवत् इति पाठः ॥ १०–१२ ॥

११–१३] ति० टी०—तदनाहूतं भरतेनाकृताह्वानमपि ११-१३

रा० टी०—बलमिति । अनाहूतमपि गजादिसंकुलं बलं सैन्यं प्रययौ पुरवासिनश्च प्रययुः ॥ ११ ॥

रा० टी०—रथस्थ इति । शिरसि पादुके आदाय रथस्थो भरतस्तूर्णं ययौ ॥ १२ ॥

रा० टी०—भरत इति । स भरतः क्षिप्रं नन्दिग्रामं प्रविश्य रथादवतीर्य गुरूनिदमभाषत ॥ १३ ॥

गो० टी०—नन्दिग्रामं ययौ तूर्णं शिरस्याधाय पादुके इत्यतःपरं 'ततस्तु भरतः क्षिप्रं नन्दिग्रामं प्रविश्य सः । अवतीर्य रथात्तूर्णं गुरूनिदमुवाच ह' इति श्लोकः ॥ १३ ॥

१४ ] ति० टी०—एतदयोध्याराज्यं मम भ्रात्रा संन्यासवत्समीचीनवस्तुनिक्षेपवन्मयि दत्तं स्थापितम् । कालान्तरे ग्रहणाय विश्वस्तपुरुषे रक्षणार्थं वस्तुस्थापनं न्यासो निक्षेप इति च । न्यासस्यापि राज्यस्य रक्षणं भगवत्पादुकाधीनमेव न मदधीनमित्याह—योगेत्यादि । इत्युवाचेति पूर्वेणान्वयः ॥ १४ ॥

रा० टी०—तद्भाषणप्रकारमाह—एतदिति । यत् एतत् उत्तमं राज्यं संन्यासं यथा स्यात्तथा भ्रात्रा दत्तं तस्य राज्यस्य योगक्षेमवहे हेमभूषिते इमे पादुके एव ॥ १४ ॥

गो० टी०—मातृवरव्याजेन पित्रा दत्तं राज्यं भरतः करोतीति जनवादो मा भूदिति धिया वदति—एतदित्यादिना । संन्यासवत् सम्यक् निक्षिप्तद्रव्यमिव अनेनान्यूनतया प्रत्यर्पणीयत्वं ध्वन्यते । निक्षेपवत्तस्य राज्यस्य रक्षणादिस्वातन्त्र्यमपि स्वस्य नास्तीति दर्शयति—योगक्षेमवहे चेति ॥ १४ ॥

१५ ] ति० टी०—पादुके संन्यासं पादुकात्मकं सद्वस्तुन्यासम्, 'वेदाः प्रमाणम्' इति वत्साधु । शिरसा कृत्वा प्रणम्येति यावत् ॥ १५ ॥

रा० टी०—भरत इति । पादुके उद्दिश्य संन्यासं राज्यसमर्पणं शिरसा प्रणतमूर्ध्नोपलक्षितो भरतः कृत्वा सर्वं प्रकृतिमण्डलं प्रजासमूहमब्रवीत् ॥ १५ ॥

गो० टी०—भरत इति । संन्यासं पादुके स्वप्रतिनिधित्वेन न्यस्ते पादुके ॥ १५ ॥

१६ ] ति० टी०—इमौ पादुकारूपावार्यपादाविति । पादशब्दः पूजावाची । विधेयाभिप्रायेण चेमाविति पुंलिङ्गनिर्देशः । 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इति तत्परमपूज्यरामभावनाविषये इमे पादुके इत्यर्थः । राज्येऽपेक्षितो मम गुरोर्धर्मव्यवहारोऽनयोरेव स्थितः, अत आभ्यां पादुकाभ्यां छत्रं धारयत । एतत्संनिधानादेव तत्तद्व्यवहारे धर्मव्यवहारांशज्ञानं ममेति भावः ॥ १६ ॥

रा० टी०—तद्वचनाकारमाह—छत्रमिति । यतः इमौ पादुकारूपपदार्थौ आर्यपादावभिमतौ रामपादत्वेन स्वीकृतौ अतः छत्रं तदुपलक्षितचामरादि च धारयत पादुकयोरुपरीति शेषः, तत्र हेतुः आभ्यां मम गुरोः रामस्य पादुकाभ्यामेव राज्ये धर्मः स्थितः स्थापितः अन्तर्भावितणिजर्थः ॥ १६ ॥

गो० टी०—छत्रमिति । छत्रमित्येतच्चामरादीनामुपलक्षणम् अत एव धारयतेति बहुवचनम् । आर्यपादाभेदभावनया पादुकयोरिमाविति पुंलिङ्गनिर्देशः । पादुकाभ्यामिति हेतौ तृतीया ॥ १६ ॥

१७ ] ति० टी०—अयं राज्यरूपः संन्यासो निक्षेपो निक्षिप्तः राघवागमनं प्रति तावत्पर्यन्तम् ॥ १७ ॥

रा० टी०—भ्रात्रेति । सौहृदाद्धेतोः भ्रात्रा मयि निक्षिप्तः संस्थापितः अयं पादुकारूपपदार्थः संन्यासः भ्रातृप्रतिनिधिभूत इत्यर्थः, अतः तमिमं पादुकारूपपदार्थं राघवागमनं प्रति रामागमननिमित्तं पालयिष्यामि सेविष्ये ॥ १७ ॥

गो० टी०—भ्रात्रेति । अयं संन्यासः पादुकारूपप्रतिनिधिः । पालयिष्यामि रक्षिष्यामि ॥ १७ ॥ १८ ॥

१८ ] ति० टी०—संयोजयित्वा चरणयोः पादुके ॥ १८ ॥

१ हीति गो. पाठः । २ आधायेति गो. पाठः । ३ उवाच हेति गो. पाठः । ४ त्वस्वयमिति गो. पाठः ।

ततो निक्षिप्तभारोऽहं राघवेण समागतः । निवेद्य गुरवे राज्यं भजिष्ये गुरुवर्तिताम् ॥ १९ ॥
राघवाय च संन्यासं दत्त्वेमे वरपादुके । राज्यं चेदमयोध्यां च धूतपापो भवाम्यहम् ॥ २० ॥
[ अभिषिक्ते तु काकुत्स्थे प्रहृष्टमुदिते जने । प्रीतिर्मम यशश्चैव भवेद्राज्याच्चतुर्गुणम् ॥
एवं तु विलपन्दीनो भरतः स महायशाः । नन्दिग्रामेऽकरोद्राज्यं दुःखितो मन्त्रिभिः सह ॥ ]
स वल्कलजटाधारी मुनिवेषधरः प्रभुः । नन्दिग्रामेऽवसद्वीरः ससैन्यो भरतस्तदा ॥ २१ ॥
[ रामागमनमाकाङ्क्षन्भरतो भ्रातृवत्सलः । भ्रातुर्वचनकारी च प्रतिज्ञापारगस्तथा ॥
पादुके त्वभिषिच्याथ नन्दिग्रामेऽवसत्तदा । ]
सवालव्यजनं छत्रं धारयामास स स्वयम् । भरतः शासनं सर्वं पादुकाभ्यां निवेदयन् ॥ २२ ॥
ततस्तु भरतः श्रीमानभिषिच्यार्यपादुके । तदधीनस्तदा राज्यं कारयामास सर्वदा ॥ २३ ॥
तदा हि यत्कार्यमुपैति किंचिदुपायनं चोपहृतं महार्हम् ।
स पादुकाभ्यां प्रथमं निवेद्य चकार पश्चाद्भरतो यथावत् ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

---

रा० टी०—क्षिप्रमिति । राघवस्य चरणयोः पादुके इति शेषः ' संयोजयित्वा संक्षोज्य सहपादुकौ मत्संयोजितपादुकासहितौ तौ रामस्य चरणौ पुनर्द्रक्ष्यामि ॥ १८ ॥

१९-२० ] ति० टी०—समागतो मिलितः । निवेद्य प्रत्यर्प्य । गुरुवर्तितां गुरूचितशुश्रूषाम् ॥ १९ ॥ २० ॥

रा० टी०—तत इति । राघवेण समागतोऽहं गुरवे रामाय राज्यं निवेद्य समर्प्य ततः समर्पणात् निक्षिप्तभारः सन् गुरुवर्तितां गुरुसेवां भजिष्ये करिष्यामि ॥ १९ ॥

गो० टी०—तत इति । राघवेण समागतः संगतः गुरवे राज्यं निवेद्य रामाय राज्यं प्रत्यर्प्य ततः गुरुवृत्तितां भजिष्ये पितरीव शुश्रूषां करिष्यामीत्यर्थः ॥ १९ ॥

रा० टी०—राघवायेति । संन्यासं न्यासत्वेन मयि संस्थापितं राज्यमयोध्यां च पादुके च राघवाय दत्त्वा धूतपापः निवृत्तवियोगजनितदुःखोऽहं भवामि भवितास्मि ॥ २० ॥

गो० टी०—राघवायेति । धूतपाप इत्यत्र पापशब्देन कैकेयीनिमित्तमयश उच्यते ॥ २० ॥

गो० टी०—अभिषिक्त इति । प्रहृष्टमुदिते प्रहृष्टः पुलकितगात्रः मुदितः संजातमानसहर्षः ॥ २१-२३ ॥

२१ ] ति० टी०—अवसद्वीरो धीमान् ॥ २१ ॥

रा० टी०—स इति । वल्कलजटाधारी मुनिवेषधरः स भरतः नन्दिग्रामेऽवसत् ॥ २१ ॥

गो० टी०—रामागमनमाकाङ्क्षन्नित्यादि । पादुकाभ्यां न्यवेदयत् विज्ञापयामास ॥ २४ ॥ २५ ॥

२२ ] ति० टी०—वालव्यजनेन सहितं छत्रम् । स भरतः सर्वं शासनं ताभ्यां निवेदयन्नुक्तविशेषणं छत्रं स्वयमेव धारयामास ॥ २२ ॥

रा० टी०—सेति । सर्वं शासनं पादुकाभ्यां निवेदयन् तदनुसारेण कुर्वन्सन्नित्यर्थः ' भरतः सवालव्यजनं वालव्यजनसहितं छत्रं स्वयं धारयामास पादुकयोरुपरीति शेषः ' न्यवेदयत् ' इति भूषणपाठः ॥ २२ ॥

२३ ] ति० टी०—आर्यपादुके अभिषिच्य तयो राज्याभिषेकं कृत्वा तदधीनः पादुकाधीनः ॥ २३ ॥

रा०टी०—तत इति । ततः नन्दिग्रामस्थितिकालादनन्तरम् आर्यपादुके अभिषिच्य आर्यपादुकयोः राज्याभिषेकं कृत्वेत्यर्थः, सर्वदा तदधीनः पादुकायत्तो भरतः राज्यं कारयामास ॥ २३ ॥

गो० टी०—ततस्त्विति । आर्यपादुके अभिषिच्य राज्याभिषेकमार्यपादुकयोः कृत्वेत्यर्थः, तदधीनः पादुकापरतन्त्रः॥२६॥

२४ ] ति० टी०—यत्कार्यं राज्यविषयम् । पश्चाद्यथावत्कोशागारस्थमुपायनं चकार, प्रजान्यायकार्यं च यथावच्छास्त्रानतिक्रमेण चकार ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

रा० टी०—तदेति । तदा पादुकायत्तपालनसमये यत्किंचित्कार्यमुपैति तदुपहृतं केनचित्प्रापितमुपायनं च प्रथमं पादुकाभ्यां निवेद्य पश्चात् यथावत् यथायोग्यं भरतश्चकार विनियोजयामासेत्यर्थः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे पञ्चदशाधिकशततमः सर्गः ॥ ११५ ॥

गो० टी०—तदेति । तदा पादुके पुरस्कृत्य राज्यपालनसमये । उपायनम् उपहारः 'उपायनमुपग्राह्यमुपहारः' इत्यमरः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने पञ्चदशोत्तरशततमः सर्गः॥११५॥

---

१ वृत्तितामिति गो. पाठः । २ चेति गो. पाठः । ३ एतदादि श्लोकद्वयमधिकं गो. पाठे । ४ वरि इति गो. रा. पाठः । ५ सार्धश्लोकोऽयमधिको गो. पाठे । ६ अर्धमेतत् गो. नास्ति ।

## षोडशाधिकशततमः सर्गः ।

इङ्गितज्ञेन रामेण सहचरमुनिकुलमाश्रमान्तरजिगमिषु विलोक्य जिगमिषाकारणं प्रति पृष्टो कुलपतिः खरादिराक्षसेभ्यः संप्राप्तं दुःसहोपद्रवं तत्कारणत्वेन उपन्यस्य सगणोऽन्यत्र गमनेऽभ्यनुज्ञामयाचत कृतानुज्ञश्च रामः सबहुमानं तान्विसृज्य स्वाश्रमं प्रविवेश ।

प्रतियाते तु भरते वसन्रामस्तदा वने । लक्षयामास सोद्वेगमथौत्सुक्यं तपस्विनाम् ॥ १ ॥
ये तत्र चित्रकूटस्य पुरस्तात्तापसाश्रमे । राममाश्रित्य निरतास्तानलक्षयदुत्सुकान् ॥ २ ॥
नयनैर्भृकुटीभिश्च रामं निर्दिश्य शङ्किताः । अन्योन्यमुपजल्पन्तः शनैश्चक्रुर्मिथः कथाः ॥ ३ ॥
तेषामौत्सुक्यमालक्ष्य रामस्त्वात्मनि शङ्कित । कृताञ्जलिरुवाचेदमृषिं कुलपतिं ततः ॥ ४ ॥

१ ] ति० टी०—सोद्वेगं सभयम् । औत्सुक्यमाश्रमान्तरगमनौत्सुक्यम् ॥ १ ॥

रा० टी०—भरतवृत्तान्तमुक्त्वा चित्रकूटस्थरामवृत्तान्तं वर्णयन्नाह—प्रतीति । भरते प्रतियाते सति तपोवने वसन् रामः सोद्वेगं भयसहितं तपस्विनामौत्सुक्यं किंचिद्वक्तव्यविषयकोत्सुकतां लक्षयामास ॥ १ ॥

गो० टी०—अथ रामस्य चित्रकूटान्निर्गमनं षोडशोत्तरशततमे—प्रतिप्रयात इत्यादि । सोद्वेगं सभयम् औत्सुक्यम् आश्रमान्तरगमनाभिलाषं लक्षयामास इङ्गिताकारादिभिरिति शेषः ॥ १ ॥

२ ] ति० टी०—पुरस्तात्पूर्वं ये तापसाः । चित्रकूटस्याश्रमे । संधिरार्षः । राममाश्रित्य निरता नितरां रताः सानन्दास्तानुत्सुकानलक्षयत् । अत्रेदं बोध्यम्—चैत्रशुक्लदशम्यां पुष्ये रामवनप्रस्थानम्, ततः पूर्णिमायामर्धरात्रे दशरथमरणम्, ततः पक्षेण भरतागमनमयोध्यायाम्, तत और्ध्वदेहिकेन पक्षो गतः । एवं वैशाखे गते ज्येष्ठे भरतस्य चित्रकूटं प्रति प्रस्थानम्, अग्रे वर्षाकाले संनिहिते सति कार्तिकयन्तं चित्रकूटे वासो रामस्य, तदनन्तरं तापसौत्सुक्यलक्षणम् न तु भरतनिवृत्त्यनन्तरमेवैतदिति । अत एव पाद्मे भरतस्यायोध्यां प्रतिनिवृत्त्यनन्तरमुक्तम्— 'राघवश्चित्रकूटाद्रौ सानुजोऽरमत श्रिया । कदाचिदङ्के वैदेह्या निद्राणे रघुनन्दने ॥ ऐन्द्रः काकः समागम्य जानकीं वीक्ष्य कामुकः । विददार नखैस्तीक्ष्णैः पीनोन्नतपयोधरम् ॥ तदृष्ट्वा राघवः क्रुद्धः कुशं जग्राह पाणिना । ब्राह्मेणास्त्रेण संयोज्य चिक्षेप ध्वाङ्क्षमारणे ॥ तं दृष्ट्वा घोरसंकाशं ज्वलत्कालानलोपमम् । दृष्ट्वा काकः प्रदुद्राव निनदन्दारुणस्वनम् ॥ वायसस्त्रिषु लोकेषु बभ्राम भयपीडितः । यत्र यत्र ययौ काकः शरणार्थी च वायसः॥ तत्र तत्र तदस्त्रं तु प्रविवेश भयावहम् । ब्रह्माणमिन्द्रं रुद्रं मां शरणार्थी जगाम सः ॥ तं दृष्ट्वा वायसं भीतं देवता न ररक्षिम । न शक्ताः स्म वयं त्रातुं राघवाद्भयंकरात् ॥ इत्यमूम महादेवा अन्यथास्त्रं दहेन्न नः । पुनश्चागाद्दिविं काको दयया विधिराह तम् ॥ भो भो बलिभुजां श्रेष्ठ तमेव शरणं व्रज । स एव रक्षकः श्रीशः शरणागतवत्सलः ॥ इत्युक्तः सोऽथ बलिभुग्ब्रह्मणा रघुनन्दनम् । उपेत्य सहसा भूमौ निपपात भयातुरः ॥ प्राणसंशयमापन्नं दृष्ट्वा सीता तु वायसम् । त्राहि त्राहीति भर्तारमुवाच दयिता विभुम् ॥ तच्छिरः पादयोस्तस्य युयुजे चाथ जानकी । तमुत्थाप्य करेणाथ कृपापीयूषसागरः ॥ ररक्षासौ निजास्त्राय तदेकाक्षि ददौ तदा । वायसोऽपि मुहुर्नत्वा सीतायै राघवाय च ॥ स्वर्लोकं प्रययौ हृष्टो राघवेणाभिपालितः । ततो रामो महातेजा वैदेह्या लक्ष्मणेन च ॥ उवास चित्रकूटाद्रौ स्तूयमानो महर्षिभिः ॥' इति ॥ २ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—य इति । पुरस्तात् पूर्वं तत्र तस्मिन् चित्रकूटस्य तापसाश्रमे राममाश्रित्य ये निरताः नितरां प्रीतिं प्राप्तास्तान् उत्सुकान् किंचिद्वक्तव्यविषयकौत्सुक्यविशिष्टान् अलक्षयत् अबुध्यत ॥ २ ॥

गो० टी०—य इति । पुरस्तात् पूर्वं चित्रकूटस्य तापसाश्रमे राममाश्रित्य ये निरतास्तानुत्सुकान् गमनोत्सुकान् अलक्षयत् राम इत्यनुषङ्गः ॥ २ ॥

३ ] ति० टी०—कथमलक्षयत्तत्राह—नयनैरित्यादि । निर्दिश्य प्रदर्श्य शङ्किता रामः किं मंस्यत इति भीताः नयनादिभिः प्रदर्श्यान्योन्यमुपजल्पन्त आह्वयन्तः शनैरुपांशु कथाश्चक्रुः । अयं राम इह सन्निक आस्ते, राक्षसाश्चैतद्द्वेषेणेह संचरन्तोऽस्मान्बाधन्ते, अतोऽन्यत्र गन्तव्यमित्येवंरूपाः कथाश्चक्रुः ॥ ३ ॥

रा० टी०—बोधनहेतुं दर्शयन्नाह—नयनैरिति । शङ्किताः किंचिद्धेतुकशङ्कां प्राप्ताः मुनयः नयनादिभिः रामं निर्दिश्य शनैः अन्योन्यं जल्पन्तः मिथः परस्परं कथाः चक्रुः ॥ ३ ॥

गो० टी०—नयनैरिति । रामं निर्दिश्य प्रदर्श्य मिथः रहस्ये । 'मिथोऽन्योन्यरहस्ययोः' इति वैजयन्ती ॥ ३ ॥

४ ] ति० टी०—शङ्कित अशङ्कतेत्यर्थः । एतदाश्रमत्यागकारणमात्मनिष्ठं दोषमशङ्कतेत्यर्थः अत एव कृताञ्जलिः सन्कुलपतिमृषिसंघस्वामिनमाश्रमस्वामिनं वा । 'कुलमन्वयसंघातगृहोत्पत्त्याश्रमेषु च' ॥ ४ ॥

रा० टी०—तेषामिति । तेषामौत्सुक्यं किंचिद्वक्तव्य-

१ प्रयाते भरत इति गो. पाठः । २ तपोवन इति गो. पाठः । ३ शङ्कित इति गो. रा. पाठः ।

न कच्चिद्भगवन्किंचित्पूर्ववृत्तमिदं मयि । दृश्यते विकृतं येन विक्रियन्ते तपस्विनः ॥ ५ ॥
प्रमादाचरितं किंचित्कच्चिन्नावरजस्य मे । लक्ष्मणस्यर्षिभिर्दृष्टं नानुरूपं महात्मनः ॥ ६ ॥
कच्चिच्छुश्रूषमाणा वः शुश्रूषणपरा मयि । प्रमदाभ्युचितां वृत्तिं सीता युक्तां न वर्तते ॥ ७ ॥
अथर्षिर्जरया वृद्धस्तपसा च जरां गतः । वेपमान इवोवाच रामं भूतदयापरम् ॥ ८ ॥
कुतः कल्याणसत्त्वायाः कल्याणाभिरतेः सदा । चलनं तात वैदेह्यास्तपस्विषु विशेषतः ॥ ९ ॥
त्वन्निमित्तमिदं तावत्तापसान्प्रति वर्तते । रक्षोभ्यस्तेन संविग्नाः कथयन्ति मिथः कथाः ॥ १० ॥
रावणावरजः कश्चित्खरो नामेह राक्षसः । उत्पाट्य तापसान्सर्वाञ्जनस्थाननिवासिनः ॥ ११ ॥
धृष्टश्च जितकाशी च नृशंसः पुरुषादकः । अवलिप्तश्च पापश्च त्वां च तात न मृष्यते ॥ १२ ॥

विषयकौत्सुकतामालक्ष्य ज्ञात्वा आत्मनि शङ्कितः आत्मोद्देश्यकनिर्दर्शनेन प्राप्तस्वात्मविषयकशङ्कः रामः कृताञ्जलिः सन् कुलपतिं संघाधीशम् ऋषिं वाल्मीकिमुवाच । 'शङ्कते' इति भट्टपाठः अशङ्कतेति तद्व्याख्या ॥ ४ ॥

गो० टी०–तेषामिति । आत्मनि शङ्कितः स्वस्मिन् संजातशङ्कः ॥ ४ ॥

५ ] ति० टी०–मयि पूर्ववृत्तं पूर्वराजवृत्तं न दृश्यते कच्चित् विकृतं वा दृश्यते कच्चित् येन तपस्विविक्रियारूपं किंचित्कारणकं भवति तन्निवेदयतु भवानिति शेषः ॥ ५ ॥

रा० टी०–तद्वचनाकारमाह–नेति । हे भगवन्! येन कारणेन तपस्विनो विक्रियन्ते विकारं लभन्ते तदिदं विकृतं विकारकारणं किंचित्पूर्ववृत्तं मयि न दृश्यते कच्चित् ॥ ५ ॥

गो० टी०–न कच्चिदिति । हे भगवन्! मयि पूर्ववृत्तं विकृतं न दृश्यते कच्चित् येन तपस्विनो विक्रियन्ते इदं किंचित् किमिदमित्यर्थः ॥ ५ ॥

६ ] ति० टी०–अवरजस्य लक्ष्मणस्य नानुरूपं चरितमयुक्ताचरणं प्रमादाज्जातं किंचिदृषिभिर्न दृष्टं कच्चित् ॥ ६ ॥

रा० टी०–प्रमादादिति । मे अवरजस्य कनिष्ठस्य लक्ष्मणस्य प्रमादादनवधानतः महात्मनो नानुरूपमननुरूपं किंचिचरितं कृतम् । ऋषिभिर्न दृष्टं कच्चित् ॥ ६ ॥

गो० टी०–प्रमादादिति । प्रमादात् अनवधानात् मे अवरजस्य लक्ष्मणस्य आत्मनो नानुरूपमिव किंचिच्चरितम् ऋषिभिर्दृष्टं न कच्चिदित्यन्वयः ॥ ६ ॥ ७ ॥

७ ] ति० टी०–वः शुश्रूषमाणा अर्घ्यपाद्यादिना युष्मान्सेवमाना अधुना मच्छुश्रूषानुरोधात्प्रमदोचितां युष्मासु युक्तां वृत्तिं शुश्रूषाविषयां सीता न वर्तते कच्चित् ॥ ७ ॥

रा० टी०–कच्चिदिति । मयि शुश्रूषणपरा सीता वो युष्मान् शुश्रूषमाणा सती प्रमदाभ्युचितां स्त्रीजनविहितां युक्तां भवत्सु योग्यां वृत्तिं वर्तते प्रवर्तयति न कच्चित् ॥ ७ ॥

८ ] ति० टी०–तपसा च वृद्ध इत्यत्रकर्षः । वेपमान इव कथं वा रामो मंस्यत इति कम्पः जरया वा कम्पः । इव एवार्थे ॥ ८ ॥

रा० टी०–अथेति । अथ रामवचनश्रवणानन्तरं जरया अवस्थाविशेषेण अवृद्धोऽपि तपसा जरां गत इव वेपमानः ऋषिः भूतदयापरं राममुवाच ॥ ८ ॥

गो० टी०–अथेति । तापसा च जरां गतः वृद्धतपा इत्यर्थः ॥ ८ ॥

९ ] ति० टी०–सत्त्वं स्वभावः ॥ ९ ॥

रा० टी०–तद्वचनाकारमाह–कुत इति । कल्याणसत्त्वायाः कल्याणस्वभावायाः अत एव सदा नित्यं कल्याणाभिरतेः कल्याणमनस्कायाः वैदेह्याः विशेषतः तत्त्वतः तपस्विषु चलनं प्रकृतित्यागः कुतः किंनिमित्तकः ॥ ९ ॥

गो० टी०–कुत इति । कल्याणसत्त्वायाः कल्याणस्वभावायाः 'सत्त्वोऽस्त्री जन्तुषु क्लीबोऽध्यवसाये पराक्रमे । आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः' इति वैजयन्ती ॥ ९ ॥

१० ] ति० टी०–त्वन्निमित्तं त्वत्तो हेतोः । इदं भयं रक्षोभ्यः समागतमिति भावः ॥ १० ॥

रा० टी०–ननु किमर्थमृषीणां मदुद्देश्यकप्रदर्शनमित्यत आह–त्वदिति । त्वमेव निमित्तं कारणं यस्मिन् तत् रक्षोभ्यः समुपस्थितमिदं भयं तापसान् प्रति वर्तते तेन संविग्ना ऋषयः मिथः परस्परं कथाः कथयन्ति ॥ १० ॥

गो० टी०–त्वन्निमित्तमिति । त्वन्निमित्तं त्वत्तो हेतोः रक्षोभ्यः समागतम् इदं वक्ष्यमाणमुपद्रवजातं तापसान् प्रति वर्तते तेन रक्षःसंजातोपद्रवेण संविग्नाः तापसाः मिथः रहसि कथाः रक्षोविषयिणीः तदुपद्रवविषयिणीश्च कथयन्ति ॥ १० ॥

११ ] ति० टी०–कथं तत्राह—रावणेति । उत्पाट्य संपीड्य ॥ ११ ॥

१२ ] ति० टी०–जितकाशी जिताहवो जितभयो वा त्वां च न मृष्यते पीडयितुमिच्छति ॥ १२ ॥

रा० टी०–भयहेतुं वर्णयन्नाह–रावणेत्यादिभिः । रावणावरजः खरो नाम राक्षसः धृष्टादिश्च त्वां न मृष्यते स्व-

१ इवेति गो. पाठः । २ प्रमादेति गो. पाठः । ३ युक्तमिति गो. पाठः । ४ तथेति गो. पाठः । ५ निकेतनानिति गो. पाठः ।

त्वं यदाप्रभृति ह्यस्मिन्नाश्रमे तात वर्तसे । तदाप्रभृति रक्षांसि विप्रकुर्वन्ति तापसान् ॥ १३ ॥
दर्शयन्ति हि बीभत्सैः क्रूरैर्भीषणकैरपि । नानारूपैर्विरूपैश्च रूपैरसुखदर्शनैः ॥ १४ ॥
अप्रशस्तैरशुचिभिः संप्रयुज्य च तापसान् । प्रतिघ्नन्त्यपरान्क्षिप्रमनार्याः पुरतः स्थितान् ॥ १५ ॥
तेषु तेष्वाश्रमस्थानेष्वबुद्धमवलीय च । रमन्ते तापसांस्तत्र नाशयन्तोऽल्पचेतसः ॥ १६ ॥
अवक्षिपन्ति स्रुग्भाण्डानग्नीन्सिञ्चन्ति वारिणा । कलशांश्च प्रमर्दन्ति हवने समुपस्थिते ॥ १७ ॥
तैर्दुरात्मभिराविष्टानाश्रमान्प्रजिहासवः । गमनायान्यदेशस्य चोदयन्त्यृषयोऽद्य माम् ॥ १८ ॥
तत्पुरा राम शारीरीमुपहिंसां तपस्विषु । दर्शयन्ति हि दुष्टास्ते त्यक्ष्याम इममाश्रमम् ॥ १९ ॥
बहुमूलफलं चित्रमविदूरादितो वनम् । अश्वस्याश्रममेवाहं श्रयिष्ये सगणः पुनः ॥ २० ॥

त्स्थितिं न सहते अतः जनस्थाननिवासिनः सर्वान् तापसान् उत्पाट्य संपीड्य प्रवर्तते इति शेषः एतेनास्मान् भवदनुयायिनो जानन्तीति सूचितम् । श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—ता एवाह—रावणावरज इत्यादिना । श्लोकद्वयमेकं वाक्यम् । उत्पाट्य उत्खाय निष्कास्येति यावत् जितेन जयेन काशते प्रकाशते इति जितकाशी यद्वा जिताहवः—'जितकाशी जिताहवः' इति हलायुधः ॥ ११ ॥ १२ ॥

१३ ] ति० टी०—विप्रकुर्वन्त्यपकुर्वन्ति ॥ १३ ॥

रा० टी०—त्वमिति । यदाप्रभृति यत्कालादारभ्य अस्मिन्नाश्रमे त्वं वर्तसे तदाप्रभृति रक्षांसि विप्रकुर्वन्ति ॥ १३ ॥

गो० टी०—त्वमिति । विप्रकुर्वन्ति अपकुर्वन्ति ॥ १३ ॥

१४ ] ति० टी०—तमपकारं दर्शयति—दर्शयन्तीति । बीभत्सैर्जुगुप्सितरूपैरात्मानं दर्शयन्तीत्यन्वयः ॥ १४ ॥

रा० टी०—विप्रकारप्रकारमाह—दर्शयन्तीति । बीभत्सैः निन्दितैः क्रूरैः क्रूरभाषणादिभिः भीषणकैः भयोत्पादकैः नानारूपैः व्याघ्रादिस्वरूपैः असुखदर्शनैः सुखनिवर्तकदर्शनविशिष्टैः विरूपैः विगतनासिकादिभिः रूपैः स्वरूपैः दर्शयन्ति आत्मानमिति शेषः ॥ १४ ॥

गो० टी०—दर्शयन्तीति । बीभत्सैर्जुगुप्सितैः क्रूरैः भीषणकैः भयंकरैः नानारूपैः अनेकप्रकारैः विरूपैः लोकविलक्षणसंस्थानैः विकृतदर्शनैः विकृतदृष्टिभिः रूपैः शरीरैः दर्शयन्ति भयमिति शेषः ॥ १४ ॥

१५ ] ति० टी०—अप्रशस्तैः पापजनकैरशुचिभिः पदार्थैस्तापसान्संप्रयुज्य विप्रकुर्वन्ति । अपरानपि मृदून्प्रतिघ्नन्त्यपि पीडयन्त्यपि ॥ १५ ॥

रा० टी०—अप्रशस्तैरिति । अनार्याः राक्षसाः अप्रशस्तैः प्राशस्त्यनिवर्तकैः अशुचिभिःमद्यादिभिः पुरतः स्थितान् अपरान् तापसान् संप्रयुज्य संयोज्य प्रतिघ्नन्ति ॥ १५ ॥

गो० टी०—अप्रशस्तैरिति । अप्रशस्तैः अशुभैः अशुचिभिः अशुचिद्रव्यैः संप्रयोज्य ॥ १५ ॥

१६ ] ति० टी०—अबुद्धमविदितं यथा भवति तथा निद्रादाववलीय च निर्भयमाश्लिष्य च तदालिङ्गनेनाल्पचेतसो विचेतसस्तापसान्नाशयन्तो रमन्ते ॥ १६ ॥

रा० टी०—तेष्विति । तेषु आश्रमस्थानेषु अबुद्धमज्ञातं यथा स्यात्तथा अवलीय निलीय अल्पचेतसः अल्पज्ञान् तापसान् नाशयन्तो रमन्ते राक्षसा इति शेषः ॥ १६ ॥

गो० टी०—तेषु तेष्विति । अबुद्धमविदितं यथा भवति तथा अवलीय निलीय रमन्ते विहरन्ति अल्पचेतसः क्षुद्रबुद्धयः ॥ १६ ॥

१७ ] ति० टी०—स्रुग्भाण्डान्स्रुगादियज्ञसंभारानवक्षिपन्त्यवस्कन्दयन्ति । कलशानुदकपात्राणि । प्रमर्दो भङ्गः । हवने होमकर्मणि समुपस्थिते प्रवृत्ते ॥ १७ ॥

रा० टी०—अवेति । हवने हवनकाले समुपस्थिते सति स्रुग्भाण्डान् स्रुगादियागसामग्रीः अवक्षिपन्ति अग्नीन् वारिणा सिञ्चन्ति कलशान्प्रमर्दन्ति भिन्दन्ति ॥ १७ ॥

गो० टी०—अपक्षिपन्तीति । हवने समुपस्थिते होमकर्मणि प्रवृत्ते ॥ १७ ॥

१८ ] ति० टी०—प्रजिहासवः परित्यक्तुमिच्छवो मिथो मिलिताः ॥ १८ ॥

रा० टी०—तैरिति । दुरात्मभिः आविष्टान् दूषितानित्यर्थः आश्रमान् प्रजिहासवस्त्यक्तुमिच्छवः ऋषयः अन्यदेशस्य गमनाय मां चोदयन्ति प्रेरयन्ति ॥ १८ ॥

गो० टी०—तैरिति । प्रजिहासवः प्रकर्षेण हातुमिच्छवः ॥ १८ ॥

१९ ] ति० टी०—शारीरीमुपहिंसां प्राणवियोगरूपां पुरा दर्शयन्ति दर्शयिष्यन्ति, अत इममाश्रमं त्यक्ष्यामः ॥ १९ ॥

रा० टी०—तदिति । हे राम पुरा । अस्मिन् वने पूर्णास्ते राक्षसाः शारीरीं शरीरसंबन्धिनीं हिंसां तपस्विषु दर्शयन्ति ततस्तस्माद्धेतोः इममाश्रमं त्यक्ष्यामः ॥ १९ ॥

गो० टी०—तदिति । पुरा दर्शयन्ति दर्शयिष्यन्ति "यावत्पुरानिपातयोर्लट्" इति लट् ॥ १९ ॥ २० ॥

२० ] ति० टी०—अश्वस्य न विद्यते श्वः संचयो यस्य

१ विकृतदर्शनैरिति गो. पाठः । २ स्थिता इति गो. पाठः । ३ प्रमृद्नन्तीति गो. पाठः । ४ आमृष्टानिति गो. पाठः । ५ शारीरामिति गो. पाठः । ६ पुराणाश्रममिति गो. पाठः ।

खरस्त्वय्यपि चायुक्तं पुरा राम प्रवर्तते । सहास्माभिरितो गच्छ यदि बुद्धिः प्रवर्तते ॥ २१ ॥
सकलत्रस्य संदेहो नित्यं युक्तस्य राघव । समर्थस्यापि हि सतो वासो दुःखमिहाद्य ते ॥ २२ ॥
इत्युक्तवन्तं रामस्तं राजपुत्रस्तपस्विनम् । न शशाकोत्तरैर्वाक्यैरवरोद्धुं समुत्सुकम् ॥ २३ ॥
अभिनन्द्य समापृच्छ्य समाधाय च राघवम् । स जगामाश्रमं त्यक्त्वा कुलैः कुलपतिः सह ॥ २४ ॥

रामः संसाध्य ऋषिगणमनुगमनादेशात्तस्मात्कुलपतिमभिवाद्य ऋषिम् ।
सम्यक्प्रीतैस्तैरनुमत उपदिष्टार्थः पुण्यं वासाय स्वनिलयमुपसंपेदे ॥ २५ ॥

आश्रमं ऋषिविरहितं प्रभुः क्षणमपि न जहौ स राघवः ।
राघवं हि सततमनुगतास्तापसाश्चार्षचरिते धृतगुणाः ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षोडशाधिकशततमः सर्गः ॥ ११६ ॥

---

तस्य महर्षेः पृषोदरादित्वात्साधु । एतेन रक्षोभयनिवारणक्षमत्वं तस्य दर्शितम् ॥ २० ॥

रा० टी०—बह्विति । बहुमूलफलमितोऽविदूरान्निकटे अश्वस्य ऋषेः आश्रमं सगणोऽहं श्रयिष्ये एतेनाश्वऋषेः रक्षणसामर्थ्यं ध्वनितम् ॥ २० ॥

२१-२२ ] ति० टी०—पुरा प्रवर्तते प्रवर्तयिष्यति । अतस्तव नित्ययुक्तस्यापि सदा सावधानस्यापि रक्षोनिग्रहे समर्थस्यापि सकलत्रस्यापि हेतुगर्भमेतत् इहाश्रमे संदेहवानेव वासः अर्शआद्यच् । दुःखो दुःखजनकः अतस्तवाप्यत्रावस्थानमनुचितमिति व्यङ्ग्यम्, अतस्त्वमपि सहास्माभिरितो गच्छेत्यन्वयः ॥ २१ ॥ २२ ॥

रा० टी०—खर इति । हे राम ! खरो राक्षसः त्वय्यपि अयुक्तमयोग्यं कर्म पुरा त्वत्संनिधौ राक्षसपूर्त्या प्रवर्तते प्रवर्तयिष्यति अतः अस्माभिः सह इतो गच्छ यदि बुद्धिर्गमननिश्चयः प्रवर्तते ॥ २१ ॥

गो० टी०—खर इति । अयुक्तमिति क्रियाविशेषणं पुरा प्रवर्तते प्रवर्तिष्यते ॥ २१ ॥

रा० टी०—सेति । नित्यं युक्तस्य समर्थस्यापि सतस्तव अद्य इह वासः संदेहः संदेहास्पदीभूतः अत एव दुःखं दुःखप्रदः ॥ २२ ॥

गो० टी०—सकलत्रस्येति । संदेहः संदेहजनकः यतस्य संनद्धस्य दुःखं दुःखहेतुः ॥ २२ ॥

२३ ] ति० टी०—अवरोद्धुम् । अहं रक्षांसि निवारयिष्यामि, मा भैष्ट, इत्यादिवचनैर्निवारयितुं न शशाक । तत्र हेतुः—समुत्सुकमिति । कार्यशेषस्य स्वीयाभ्युदेशगमनसाध्यत्वात् ॥ २३ ॥

रा० टी०—इतीति । इत्युक्तवन्तं समुत्सुकं तपस्विनमवरोद्धुं निरोद्धुं न शशाक ॥ २३ ॥

गो० टी०—इतीति । उत्तरैर्वाक्यैरवरोद्धुं न शशाक मयि वर्तमाने युष्माकं का भीतिः अहमेव परितो रक्षामीत्युत्तरवाक्यैर्निरोद्धुं न शशाक ॥ २३ ॥

२४ ] ति० टी०—अभिनन्द्य स्तुत्वा, समाधाय स्ववियोगखिन्नं समाश्वास्य । कुलैर्ऋषिसंघैः ॥ २४ ॥

रा० टी०—अभीति । राघवमभिनन्द्य प्रशस्य समाश्वास्य समाश्वासनं कृत्वा समाधाय चित्ते निधाय आश्रमं त्यक्त्वा कुलैः ऋषिसमूहैः सह स कुलपतिः जगाम ॥ २४ ॥

गो० टी०—अभिनन्द्येति । कुलैः ऋषिसंघातैः 'कुलं संघातवंशयोः' इति वैजयन्ती ॥ २४ ॥

२५ ] ति० टी०—रामस्तस्माद्देशादपयान्तमृषिगणमनुगमनादनुव्रजनेन संसाध्य प्रस्थाप्य कुलपतिमृषिमभिवाद्य सम्यक्प्रीतैस्तैरनुमतः कृतानुमतिक उपदिष्टार्थो रक्षःसंदेहादत्रावस्थानमनुचितमिति कृतोपदेशः पुण्यं स्वनिलयं स्ववासायोपसंपेदे ॥ २५ ॥

रा० टी०—राम इति । अनुगमनात् अनुव्रजनात् ऋषिगणं कुलपतिं च संसाध्य प्रसाद्य अभिवाद्य च तैः प्रीतैः अनुमतः आज्ञप्तः उपदिष्टार्थः ज्ञाततत्त्वो रामः पुण्यं स्वनिलयं वासाय उपसंपेदे जगाम ॥ २५ ॥

गो० टी०—राम इति । रामः ऋषिगणं तस्माद्देशात् आश्रमप्रदेशात् अनुगमनात् संसाध्य प्रस्थाप्य कुलपतिमभिवाद्य तैरुपदिष्टार्थः उपदिष्टप्रयोजनः सन् वासाय पुण्यं स्वनिलयम् उपसंपेदे इति संबन्धः ॥ २५ ॥

२६ ] ति० टी०—क्षणमपि न जहौ सीतारक्षणार्थमिति भावः । आर्षमृषिसंबन्धि चरितं वृत्तं यस्य तादृशे राघवे धृतगुणा निश्चितनिजरक्षासामर्थ्यगुणाः केचित्तापसाः सततं निरन्तरं राघवमनुगता हि अनुगता एव नाश्रमान्तरं जग्मुः ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे षोडशाधिकशततमः सर्गः ॥११६॥

---

१ तातेति गो. पाठः । २ यतस्येति गो. पाठः । ३ वसत इति गो. हि सत इति रा. पाठः । ४ रोद्धुं समुत्सुक इति गो. पाठः । ५ त्वृषीति गो. पाठः । ६ विजहाविति गो. पाठः । ७ चर्षीति रा. पाठः । ८ चरितधृतगुणा इति गो. पाठः ।

## सप्तदशाधिकशततमः सर्गः ।

दोषबाहुल्याच्चित्रकूटवासादुद्विग्नो रामस्ततः प्रस्थायात्र्याश्रमं प्राप्तस्तमभ्यवादयताथात्रिरनसूयातपःप्रभावं प्रस्तुत्य तस्याः सकाशे सीतां प्रेषयितुं प्राचोदयत्तथा रामेणाज्ञप्तां प्राप्याभिवादयमानां सीतां सत्कृत्यानसूया पातिव्रत्यधर्ममुपादिदेश ।

राघवस्त्वपयातेषु सर्वेष्वनुविचिन्तयन् । न तत्रारोचयद्वासं कारणैर्बहुभिस्तदा ॥ १ ॥
इह मे भरतो दृष्टो मातरश्च सनागराः । सा च मे स्मृतिरन्वेति तान्नित्यमनुशोचतः ॥ २ ॥
स्कन्धावारनिवेशेन तेन तस्य महात्मनः । हयहस्तिकरीषैश्च उपमर्दः कृतो भृशम् ॥ ३ ॥
तस्मादन्यत्र गच्छाम इति संचिन्त्य राघवः । प्रातिष्ठत स वैदेह्या लक्ष्मणेन च संगतः ॥ ४ ॥
सोऽत्रेराश्रममासाद्य तं ववन्दे महायशाः । तं चापि भगवानत्रिः पुत्रवत्प्रत्यपद्यत ॥ ५ ॥
स्वयमातिथ्यमादिश्य सर्वमस्य सुसत्कृतम् । सौमित्रिं च महाभागं सीतां च समसान्त्वयत् ॥ ६ ॥

---

रा० टी०—आश्रममिति । ऋषिविरहितमाश्रमं राघवः क्षणमपि न जहौ । ऋषिचरिते रामे धृतगुणाः समर्पितमनसस्तापसाः राघवं सततमनुगताः मनसा प्राप्ताः ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे षोडशाधिकशततमः सर्गः ॥ ११६ ॥

गो० टी०—आश्रममिति । राघवः ऋषिविरहितमप्याश्रमं क्षणं न विजहौ मुनिशून्यतया तदैव त्याज्यमप्याश्रमं मुनिविषयप्रेम्णा क्षणं न त्यक्तवानित्यर्थः । आर्षचरितधृतगुणाः रामस्यार्षचरित्रेण संचितगुणाः हि यस्मात्कारणात्तापसाः राममनुगतास्तस्मात् तत्प्रेम्णा क्षणं न जहाविति । वृत्तं तु श्लोकद्वयस्यापि चिन्त्यम् ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने षोडशोत्तरशततमः सर्गः ॥ ११६ ॥

---

१] ति० टी०—अनुविचिन्तयन्वक्ष्यमाणकारणमुपाधिम ॥ १ ॥

रा० टी०—ऋषिगमनानन्तरकालिकं रामवृत्तान्तमाह—राघव इत्यादिभिः । सर्वेषु ऋषिषु अपयातेषु सत्सु चिन्तयन् राघवः बहुभिः कारणैः तत्र वासं न अरोचयत् ॥ १ ॥

गो० टी०—अथ रामस्यात्र्याश्रमप्रवेशः सप्तदशोत्तरशततमे—राघव इत्यादिना ॥ १ ॥

२ ] ति० टी०—तमेवाह—इहेति । मे मया संबन्धसामान्ये षष्ठी । सा मे स्मृतिर्मां नित्यमनुशोचतस्तानन्वेति विषयीकरोति, एवं च तादृशतत्स्मरणेन ममापि शोको वर्धत इति भावः ॥ २ ॥

रा० टी०—कारणान्येवाह—इहेति । इह अस्मिन् स्थाने मे ये भरतादयो दृष्टाः तान् नित्यमनुशोचतो मे ... तद्विषया स्मृतिः अन्वेति निरन्तरं प्राप्नोति ॥ २ ॥

गो० टी०—बहुकारणान्येवाह—इह म इत्यादिना ॥ २ ॥

३-४ ] ति० टी०—राजधानीतो निर्गतायाः सेनाया निवासस्थानं स्कन्धावारः । तस्य भरतस्य तेन पुरतो दृश्यमानेन, अनेन स्मृत्युद्बोधकमुक्तम् । उपमर्दो भूमेरशुचिता ॥ ३-४ ॥

रा० टी०—स्कन्धेति । महात्मनस्तस्य भरतस्य स्कन्धावारनिवेशेन स्कन्धावारः सेनासमूहस्तस्य निवेशेन निवासेन हेतुना हयहस्तिकरीषैः भृशमत्यन्तम् उपमर्दः भूमेरशुद्धिरित्यर्थः कृतः ॥ ३ ॥

गो० टी०—स्कन्धावारनिवेशेनेति । स्कन्धावारनिवेशेन सेनानिवेशेन करीषैश्च उपमर्द इत्यत्र वाक्यसंहिताया अनित्यत्वान्न संधिकार्यम् । 'पदेषु संहिता नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते' इतिवचनात् ॥ ३ ॥

रा० टी०—तस्मादिति । तस्माद्धेतोः अन्यत्र गच्छामि इति संचिन्त्य वैदेह्या लक्ष्मणेन च संगतः स रामः प्रातिष्ठत प्रस्थानमकरोत् ॥ ४ ॥

गो० टी०—तस्मादिति । प्रातिष्ठत प्रस्थितः ॥ ४ ॥ ५ ॥

५ ] ति० टी०— स रामः तमत्रिं तमपि जगत्कारणमपि रामं लोकव्यवहारानुसरणेन पुत्रवदालिङ्गनमूर्धाघ्राणादिभिः ॥ ५ ॥

रा० टी०—स इति । स कृतप्रस्थानो रामः अत्रेः आश्रममासाद्य तमत्रिं ववन्दे, भगवान् अत्रिरपि तं रामं पुत्रवत् पुत्रमिव प्रत्यपद्यत प्राप्नोत् ॥ ५ ॥

६ ] ति० टी०—स्वयमादिश्य शिष्यान्प्रत्यस्य सर्वमातिथ्यं सुसत्कृतं कृत्वा समसान्त्वयत्प्रीतियुक्तेन वचसाऽपचयत् ॥ ६ ॥

रा० टी०—स्वयमिति । अस्य रामस्य आतिथ्यं सुसत्कृतं यथा स्यात्तथा आदिश्य संपाद्य सौमित्रिं सीतां च समसान्त्वयत् वचनैरतोषयत् ॥ ६ ॥

गो० टी०—स्वयमिति । आतिथ्यमादिश्य आतिथ्यं कृत्वा ॥ ६ ॥

---

१ अत्रेति गो. पाठः । २ तपस्विष्विति गो. पाठः । ३ गच्छामीति रा. पाठः । ४ भागमिति गो. पाठः ।

पत्नीं च तमनुप्राप्तां वृद्धामामन्त्र्य सत्कृताम् । सान्त्वयामास धर्मज्ञः सर्वभूतहिते रतः ॥ ७ ॥
अनसूयां महाभागां तापसीं धर्मचारिणीम् । प्रतिगृह्णीष्व वैदेहीमब्रवीदृषिसत्तमः ॥ ८ ॥
रामाय चाचचक्षे तां तापसीं धर्मचारिणीम् । दश वर्षाण्यनावृष्ट्या दग्धे लोके निरन्तरम् ॥ ९ ॥
यया मूलफले सृष्टे जाह्नवी च प्रवर्तिता । उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता ॥ १० ॥
दश वर्षसहस्राणि यया तप्तं महत्तपः । अनसूयाव्रतैस्तात प्रत्यूहाश्च निबर्हिताः ॥ ११ ॥
देवकार्यनिमित्तं च यया संत्वरमाणया । दशरात्रं कृता रात्रिः सेयं मातेव तेऽनघ ॥ १२ ॥
तामिमां सर्वभूतानां नमस्कार्यां तपस्विनीम् । अभिगच्छतु वैदेही वृद्धामक्रोधनां सदा ॥ १३ ॥
एवं ब्रुवाणं तमृषिं तथेत्युक्त्वा स राघवः । सीतामालोक्य धर्मज्ञामिदं वचनमब्रवीत् ॥ १४ ॥

---

७-८ ] ति० टी०—तं देशमनुप्राप्तां वृद्धां पत्नीमनसूयानाम्नीं तापसीत्वादिगुणयुक्तां वाचा सत्कृतां सर्वैः सत्कृतां वामन्त्र्य संबोध्य सान्त्वयामास प्रीत्या सीतां दर्शयामास अनन्तरं वैदेहीं प्रतिगृह्णीष्वेत्यब्रवीदित्यर्थः ॥ ७ ॥ ८ ॥

रा० टी०—पत्नीमिति । तमत्रिसमीपमनुप्राप्तामत एव आमन्त्र्य संबोध्य सत्कृतामत्रिणा प्राप्तसत्कारां महाभागामतिशयभाग्यवतीं तापसीं परमात्मविचारनिरतामत एव धर्मचारिणीं विहितकर्माचरणशीलां वृद्धामनसूयां पत्नीं सर्वभूतहिते रतः धर्मज्ञः अत्रिः सान्त्वयामास सान्त्वनवचनैः संतोषयामासेत्यर्थः, वैदेहीं प्रतिगृह्णीष्व आकिङ्गनं कुरु इत्यब्रवीच । श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

गो० टी०—पत्नीमिति । सत्कृतां सर्वैः सत्कृताम् ॥ ७ ॥

गो० टी०—अनसूयामिति । प्रतिगृह्णीष्वेत्यत्र इतिकरणं द्रष्टव्यम् ॥ ८ ॥

९ ] ति० टी०—रामायाचचक्षे तत्प्रभवं कथितवान् । तदेव दर्शयति—दशेत्यादि ॥ ९ ॥

१० ]ति० टी०—मूलफले ऋषीणां जीवनायेति शेषः । जाह्नवी गङ्गा च प्रवर्तिता दशवर्षमनावृष्ट्या भूमेर्निर्जलत्वात्तेषां स्नानार्थं मन्त्रसिद्धिवैभवेनावाहिता स्वाश्रमे इति शेषः ॥ १० ॥

११ ] ति० टी०—अनसूयाव्रतैस्तत्कृतैर्व्रतैः । प्रत्यूहा ऋषीणां तपोविघ्नाः ॥ ११ ॥

रा० टी०—रामायेति । अथ तापसीं धर्मचारिणीं तामनसूयां रामाय आचचक्षे तत्प्रभावं कथयामासेत्यर्थः । कथनप्रकारमाह—निरन्तरं दशवर्षाणि अनावृष्ट्या वृष्ट्यभावेन लोके दग्धे सति यया मूलफले सृष्टे मुनिकर्तृकभोजनार्थं स्वतपोबलेन उत्पादयामास, जाह्नवी जह्नुप्रादुर्भूता गङ्गा प्रवर्तिता मुनीनां स्नानपानार्थं स्वसमीपं प्रापिता, यया च दशवर्षसहस्राणि महत्तपस्तप्तमत एव अनसूयाव्रतैः प्रत्यूहाः ऋषीणां तपोविघ्नाः निबर्हिताः दूरीकृताः, यया च देवकार्यनिमित्तं देवकार्यार्थं दशरात्रं रात्रिः एकनिशा कृता, सा उग्रेण तपसा युक्ता नियमैश्चालंकृता इयं तव माता इव पूजनीयेति शेषः । तथा च पौराणिकी गाथा—काचिद् ऋषिपत्नी अनसूयासखी दशाहाभ्यन्तरे प्रातर्विधवा भवेति माण्डव्यऋषिणा शप्ता ततः प्रातरेव मा भूदिति तत्सख्या प्रतिशापे उक्ते प्रातःकालमनुपलभ्य व्याकुलैः देवैः प्रार्थितयाऽनसूयया दशरात्रावधिकालमेकरात्रित्वेन प्रकल्प्य स्वसख्या वैधव्यं परिहृत्य देवकार्यं चकारेति । श्लोकचतुष्टयमेकान्वयि ॥ ९-१२ ॥

गो० टी०—दशवर्षाणीत्यारभ्य सेयं मातेव तेऽनघेत्यन्तमेकं वाक्यम् । दशवर्षाण्यनावृष्ट्या लोके दग्धे सति यया स्वतपोमहिम्ना निरन्तरं मूलफले सृष्टे जाह्नवी च प्रवर्तिता, यया दशवर्षसहस्राणि महत्तपस्तप्तं कृतं, यया व्रतैः कृच्छ्रचान्द्रायणादिभिः प्रत्यूहास्तपोविघ्नाश्च निवर्तिताः निरस्ताः, देवकार्यनिमित्तं संत्वरमाणया यया दशरात्रमेका रात्रिश्च कृता दशरात्रावधिकः कालः एकरात्रत्वेन कृत इत्यर्थः । इयं कथा पुराणेषु द्रष्टव्या । उग्रेण तपसा युक्ता नियमैश्चाप्यलंकृता सेयमनसूया ते मातेव मातृवत्पूजनीयेत्यर्थः ॥ ९-११ ॥

१२]ति०टी०—देवकार्यनिमित्तमिति । माण्डव्यऋषिणा 'प्रातर्विधवा भव' इति कस्यांचिदृषिपत्न्यामनसूयासख्यां शप्तायां 'प्रातरेव मा भूत्' इति तया प्रतिशापे दत्ते तत्प्रतिशापेन व्याकुलैर्देवैः प्रार्थितानसूया दशरात्रावधिकालमेकरात्रित्वेन कृत्वा देवकार्यं कृतवती, सख्या वैधव्यं च परिहृतवतीति गाथेति कतकः । सेयं मातेव ते पूज्येति शेषः ॥ १२ ॥

१३-१४ ] ति० टी०—अभिगच्छतु दर्शनार्थमिति शेषः । ननु वैदेह्या अल्पवयस्त्वेन व्यवहारानभिज्ञत्वात्कचिद्व्यवहारे स्खलनेऽनर्थः स्यादत आह—अक्रोधनां सदेति ॥ १३ ॥ १४ ॥

रा० टी०—तामिति । तां वर्णितप्रभावामत एव सर्वभूतानां नमस्कार्यां वृद्धां सदा नित्यमक्रोधनां तपस्विनीमिमामनसूयां वैदेही अभिगच्छतु पादवन्दनार्थं प्राप्नोतु ॥ १३ ॥

रा० टी०—एवमिति । एवं ब्रुवाणम् ऋषिं तथेत्युक्त्वा राघवः सीतामवलोक्य इदमब्रवीत् ॥ १४ ॥

गो० टी०—तामित्यादि । या कर्मभिरनन्यसाध्यैः परा-

---

१ समन्वितेति गो. पाठः । २ स्नातेति गो. पाठः । ३ निवर्तिता इति गो. पाठः । ४ यशस्विनीमिति गो. पाठः । ५ उवाचेति गो. पाठः । ६ उत्तममिति गो. पाठः ।

राजपुत्रि श्रुतं त्वेतन्मुनेरस्य समीरितम् । श्रेयोर्थमात्मनः शीघ्रमभिगच्छ तपस्विनीम् ॥ १५ ॥
अनसूयेति या लोके कर्मभिः ख्यातिमागता । तां शीघ्रमभिगच्छ त्वमभिगम्यां तपस्विनीम् ॥ १६ ॥
सीता त्वेतद्वचः श्रुत्वा राघवस्य यशस्विनी । तामत्रिपत्नीं धर्मज्ञामभिचक्राम मैथिली ॥ १७ ॥
शिथिलां वलितां वृद्धां जरापाण्डुरमूर्धजाम् । सततं वेपमानाङ्गीं प्रवाते कदलीमिव ॥ १८ ॥
तां तु सीता महाभागामनसूयां पतिव्रताम् । अभ्यवादयदव्यग्रा स्वं नाम समुदाहरत् ॥ १९ ॥
अभिवाद्य च वैदेही तापसीं तां दमान्विताम् । बद्धाञ्जलिपुटा हृष्टा पर्यपृच्छदनामयम् ॥ २० ॥
ततः सीतां महाभागां दृष्ट्वा तां धर्मचारिणीम् । सान्त्वयन्त्यब्रवीद्वृद्धा दिष्ट्या धर्ममवेक्षसे ॥ २१ ॥
त्यक्त्वा ज्ञातिजनं सीते मानवृद्धिं च मानिनि । अवरुद्धं वने रामं दिष्ट्या त्वमनुगच्छसि ॥ २२ ॥
नगरस्थो वनस्थो वा शुभो वा यदि वाशुभः । यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ २३ ॥
दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः । स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥ २४ ॥

---

नुग्रहार्थतपोविशेषैः अनसूया असूयारहितेति लोके ख्यातिमागता, यद्वा कर्मभिः पातिव्रत्यवर्धकैः अन्याभिः कर्तुमशक्यैः पतिरक्षणादिकर्मभिः अनसूया अस्पर्धनीयमाहात्म्ययुक्तत्वादसूयितुमशक्या इति लोके ख्यातिमागता तामिमां वैदेही अनुगच्छत्विति संबन्धः ॥ १२–१६ ॥

१५ ] ति० टी०–अस्य मुनेः समीरितं वचनं यतः श्रुतम् अत आत्मनः श्रेयोऽर्थमित्यादि ॥ १५ ॥

रा० टी०–तद्वचनाकारमाह–राजेति । हे राजपुत्रि ! यतः अस्य मुनेरेतं समीरितमस्माभिः श्रुतमतः आत्मनः श्रेयोऽर्थं तपस्विनीं शीघ्रमभिगच्छ ॥ १५ ॥

१६–१७ ] ति० टी०–तामनसूयेत्यन्वर्थनाम्नीम् , अभिगम्याम् अक्रोधनत्वात् ॥ १६ ॥ १७ ॥

१८ ] ति० टी०–शिथिलां श्लथसंधिबन्धाम्, वलितां संजातवलिम् , वृद्धामिति सर्वोपपादकं विशेषणम् । प्रवाते कदलीमिव वेपमानाङ्गीं स्थिताम् ॥ १८ ॥

रा० टी०–तदेव भङ्ग्यन्तरेणाह–अनसूयेति । कर्मभिः अन्यासाध्यक्रियाभिः अनसूयेति या लोके ख्यातिमागता तामभिगम्यामभिगन्तुं योग्यां शीघ्रमभिगच्छ ॥ १६ ॥

रा० टी०–सीतेति । राघवस्य तद्वचः सीता श्रुत्वैव शिथिलां शिथिलशरीरां वलितां वलीभूतचर्मविशिष्टां प्रवाते अतिवाते कदलीमिव वेपमानाङ्गीमत्रिपत्नीमनसूयामभिचक्राम । श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

१९ ] ति० टी०–समुदाहरत् अभिवादनाङ्गत्वेनेति शेषः ॥ १९

रा० टी०–तामिति । तामनसूयामव्यग्रा ९ । अभ्यवादयत् स्वं नाम च समुदाहरत् प्रणामविधित्वेनोच्चारयामास ॥ १९ ॥

गो० टी०–शिथिलामित्यादि । श्लोकद्वयमेकान्वयम् । शिथिलां श्लथसंधिबन्धावयवसंनिवेशां, वलितां संजातवलिकाम् ॥ १६ ॥ १७ ॥

२० ] ति० टी०–अनामयमिति तपस्विनां स्वायत्तकुशलतयाऽऽरोग्यप्रश्न एवोचित इति भावः ॥ २० ॥

रा० टी०–अभिवाद्येति । तापसीं तामनसूयामभिवाद्य प्रणम्य बद्धाञ्जलिपुटा वैदेही अनामयं कुशलं पर्यपृच्छत् ॥ २० ॥

गो० टी०–अभिवाद्येति । अनामयम् आरोग्यम् 'अनामयं स्यादारोग्यम्' इत्यमरः ॥ १८ ॥

२१ ] ति० टी०–धर्मचारिणीं भर्तृसमानधर्मचारिणीम् । दिष्ट्या दैवयोगेन ॥ २१ ॥

रा० टी०–तत इति । धर्मचारिणीं महाभागां सीतां दृष्ट्वा त्वं धर्ममवेक्षसे विचारयसि दिष्ट्या भाग्यमेतत् इति सान्त्वयन्ती अनसूया अब्रवीत् ॥ २१ ॥

गो० टी०–तत इति । दिष्ट्या भाग्येन धर्ममवेक्षसे पातिव्रत्यधर्ममवधानेन समीक्षसे ज्ञातिजनं बन्धुजनं मानमहंकारं वने अवरुद्धं चतुर्दश वर्षाणि वने वस्तव्यमिति पित्रा नियुक्तं सर्वत्रयोग्यं सर्वावस्थासु रक्षणसमर्थं कामवक्तव्यहृदयाः कामविषयवक्तव्यहृदयाः कामरूपार्थाभिलाषिण्य इति यावत् , यद्वा मदनविधेयहृदयाः भर्तृनाथाः भर्तॄणां नाथभूताः भर्तृनियामिका इत्यर्थः, यद्वा भर्तारं नाथन्ते याचन्त इति तथा परपुरुषकाङ्क्षिण्य इत्यर्थः ॥ १९–२६ ॥

२२ ] ति० टी०–मानं राजसुताहं कथं वनं गच्छेयमित्येवंरूपम् । वनेऽवरुद्धं वनवासे पित्रा नियुक्तम् ॥ २२ ॥

रा० टी०–तद्वचनाकारमाह–त्यक्त्वेति । हे सीते ! ज्ञातिजनं मानवृद्धिं च त्यक्त्वा वने अवरुद्धं नियुक्तं रामं यत् त्वमनुगच्छसि दिष्ट्या भाग्यमेतत् ॥ २२ ॥

२३ ] ति० टी०–शुभोऽनुकूलः, अशुभः प्रतिकूलः, प्रियो लौकिकालौकिकनिमित्ततोऽप्रियत्वानास्पदम् ॥ २३ ॥

रा० टी०–तत्र हेतुमाह–नगरस्थ इति । यासां स्त्रीणां भर्ता प्रियः तासामेव महोदयाः महान् उदयो येषां ते लोकाः भवन्तीति शेषः ॥ २३ ॥

२४ ] ति० टी०–आर्यस्वभावः पूज्यस्वभावः ॥ २४ ॥

---

१ अर्धमेतच्चतुर्दशश्लोकात्पूर्वं गो. पाठे । २ अर्धमेतत् गो. नास्ति । ३ द्वितीयेष्य इति गो. पाठः । ४ कदली यथेति गो. पाठः । ५ स्वनामेति गो. पाठः । ६ आनिन्दितामिति गो. दयान्वितामिति रा. पाठः । ७ धृष्टेति गो. पाठः । ८ भामिनीति गो. पाठः । ९ पापो वा यदि वा शुभ इति गो. पाठः ।

नातो विशिष्टं पश्यामि बान्धवं विमृशन्त्यहम् । सर्वत्र योग्यं वैदेहि तपःकृतमिवाव्ययम् ॥ २५ ॥
न त्वेवमनुगच्छन्ति गुणदोषमसत्स्त्रियः । कामवक्तव्यहृदया भर्तृनाथाश्चरन्ति याः ॥ २६ ॥
प्राप्नुवन्त्ययशश्चैव धर्मभ्रंशं च मैथिलि । अकार्यवशमापन्नाः स्त्रियो याः खलु तद्विधाः ॥ २७ ॥
त्वद्विधास्तु गुणैर्युक्ता दृष्टलोकपरावराः । स्त्रियः स्वर्गे चरिष्यन्ति यथा पुण्यकृतस्तथा ॥ २८ ॥
तदेवमेतं त्वमनुव्रता सती पतिप्रधाना समयानुवर्तिनी ।
भव स्वभर्तुः सहधर्मचारिणी यशश्च धर्मं च ततः समाप्स्यसि ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

## अष्टादशाधिकशततमः सर्गः ।

सीताऽनसूयां प्रति रामगुणान्संकथय्य स्वस्य तेन सह निरुपचरिताचारं कथयन्ती यदि निर्गुणोऽपि भर्ता स्त्रीणां सेव्यः किं गुणविशिष्ट इति निगमयति । तथा मात्राद्युपदेशेन ज्ञातपतिव्रताधर्मत्वं बोधयन्ती तदनुगुणं तदुपदेशं श्लाघते । अनुसूया स्वतपःसमृद्धिं संस्मार्याभीष्टवरणे सीतां छन्दयति, प्रतुष्टा चानिच्छन्त्या अपि दिव्यमाल्याभरणानि ददौ । अनसूयया पृष्टा सीता तस्यै स्वस्वयंवरवृत्तं प्रतिपादयति ।

सा त्वेवमुक्ता वैदेही त्वनसूयानसूयया । प्रतिपूज्य वचो मन्दं प्रवक्तुमुपचक्रमे ॥ १ ॥

रा० टी०-दुःशील इति । दुःशीलस्वाप्यन्यतमगुणविशिष्टोऽपि पतिः आर्यस्वभावानां सात्त्विकप्रकृतीनां स्त्रीणां परमं दैवतम् ॥ २४ ॥

२५ ] ति० टी०-अतो विशिष्टं भर्तुर्विशिष्टम् बान्धवमिष्टबन्धुम् । सर्वत्र योग्यमिहामुत्र चेष्टसाधनतया भजनयोग्यं तपःकृतम् भावे निष्ठा तपोऽनुष्ठानमिति यावत् ॥ २५ ॥

रा० टी०-नेति । अतः पत्युः विशिष्टमधिकं बान्धवं विमृशन्ती विचारयन्ती अहं न पश्यामि । तत्र हेतुः अव्ययम् अविनाशि तपःकृतं तपसा संपादितं फलमिव सर्वत्र सर्वावस्थासु योग्यं सुखदाने उचितं पतिमवेहीति शेषः । एतेन पतिसेवैव गुणस्तत्त्यागो दोष इति सूचितम् ॥ २५ ॥

२६ ] ति० टी०-याः कामवक्तव्यहृदयाः कामाधीनहृदयाः 'वृत्ताधीनौ तु वक्तव्यौ' भर्तृनाथा भर्तॄणां नाथभूतास्तन्नियन्त्र्यः, यद्वा भर्तॄन्भोगार्थं नाथन्ते याचन्ते ताः चरन्ति स्वेच्छया इतस्ततो यान्ति ॥ २६ ॥

रा० टी०-न त्विति । कामवक्तव्यहृदयाः कामः वक्तव्यो यस्मिन् तत् हृदयं यासां ताः । किंच कामस्य वक्तव्यमधीनं हृदयं यासां ताः । 'गर्ह्याधीनौ तु वक्तव्यौ' इत्यमरः । अत एव भर्तृनाथाः भर्तॄणामपि नियामिकाः याः असत्स्त्रियः चरन्ति ताः एवं गुणदोषं नैवानुगच्छन्ति जानन्ति ॥ २६ ॥

२७ ] ति० टी०-तद्विधा उक्तनिकृष्टगुणवत्यः ॥ २७ ॥

रा० टी०-प्राप्नुवन्तीति । अकार्यस्य परमार्थविरोधिनः कामस्य वशमापन्नाः प्राप्ताः अत एव तद्विधाः स्वपतिपारतन्त्र्यरहिताः याः स्त्रियस्ताः धर्मभ्रंशमयशश्च प्राप्नुवन्ति ॥ २७ ॥

२८ ] ति० टी०-दृष्टो लोकः परोऽवरश्च याभिस्ताः ॥ २८ ॥

रा० टी०-त्वद्विधा इति । दृष्टाः ज्ञाता लोकपरावराः उत्तममध्यमधमाः याभिस्ताः अत एव गुणैर्युक्ताः पत्यनुकूलवर्तनरूपगुणविशिष्टाः त्वद्विधाः त्वत्सदृशाः स्त्रियः यथा पुण्यकृतः पुरुषास्तथा स्वर्गे चरिष्यन्ति चरन्ति ॥ २८ ॥

२९ ] ति० टी०-समय आचारः ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीयआदिकाव्येऽयोध्याकाण्डे सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

रा० टी०-तदिति । पतिः प्रधानो यस्याः सा समयानुवर्तिनी यथाकालमनुवर्तनशीला एतं पतिसेवारूपधर्ममनुव्रता स्वीकारकर्त्री त्वं स्वभर्तुः सहधर्मचारिणी भव ततस्तस्मात् यशो धर्मं च समाप्स्यसि प्राप्स्यसि ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे सप्तदशाधिकशततमः सर्गः ॥ ११७ ॥

गो० टी०-समयानुवर्तिनी 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरः । भर्तुः सहधर्मचारिणी भवस्व भव । आर्षमात्मनेपदं ततः भर्तुः सहधर्मचारिणीत्वेन यशश्च धर्मं च कालान्तरानुभाव्यफलसाधनमदृष्टं च समाप्स्यसि, यद्वा भर्तुः सहधर्मचारिणी एवंभूता त्वं ततः भर्तुः सहधर्मचारिणीत्वरूपहेतोः यशश्च भवस्व प्राप्नुहीत्यर्थः । धर्मं च समाप्स्यसि भू प्राप्तावात्मनेपदीतिगणपाठात् प्राप्त्यर्थस्य भवतेरात्मनेपदं पातिव्रत्यधर्मेण सर्वैः श्लाघां प्राप्य कालान्तरे तज्जन्यादृष्टद्वारा निरतिशयं श्रेयः समवाप्स्यसीत्यर्थः । इति धर्मचारिण्यनसूया सीतामब्रवीदिति संबन्धः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने सप्तदशोत्तरशततमः सर्गः ॥ ११७ ॥

१ ] ति० टी०-अनयाऽसूयारहिता । अनसूययान्वर्थनाम्न्या । वचोऽनसूयायाः ॥ १ ॥

१ त्वेनमिति गो. पाठः । २ अवगच्छन्तीति गो. रा. पाठः । ३ धर्मकृत इति गो. पाठः । ४ एनमिति गो. पाठः । ५ अवाप्तामिति गो. पाठः ।

नैतदाश्चर्यमार्यायां यन्मां त्वमनुभाषसे । विदितं तु [1]ममाप्येतद्यथा नार्याः पतिर्गुरुः ॥ २ ॥
यद्यप्येष भवेद्भर्ता अनार्यो वृत्तिवर्जितः । अद्वैधमत्र [2]वर्तव्यं तथाप्येष मया भवेत् ॥ ३ ॥
किं पुनर्यो गुणश्लाघ्यः सानुक्रोशो जितेन्द्रियः । स्थिरानुरागो धर्मात्मा मातृवत्पितृवत्प्रियः ॥ ४ ॥
यां वृत्तिं वर्तते रामः कौसल्यायां महाबलः । तामेव नृपनारीणामन्यासामपि वर्तते ॥ ५ ॥
सकृद्दृष्टास्वपि स्त्रीषु नृपेण नृपवत्सलः । मातृवद्वर्तते वीरो मानमुत्सृज्य धर्मवित् ॥ ६ ॥
आगच्छन्त्याश्च विजनं वनमेवं भयावहम् । समाहितं [3]हि मे श्वश्र्वा हृदये [4]यत्स्थिरं मम ॥ ७ ॥
पाणिप्रदानकाले च यत्पुरा त्वग्निसंनिधौ । [5]अनुशिष्टं जनन्या मे वाक्यं तदपि मे धृतम् ॥ ८ ॥

रा० टी०—अनसूयावचनश्रवणानन्तरकालिकं सीतावृत्तान्तं वर्णयन्नाह—सेति । अनसूयया अत्रिपत्न्या एवमुक्ता अनसूया नित्यमसूयारहिता वैदेही सा सीता वचः अनसूयावचनं प्रतिपूज्य मन्दं प्रवक्तुमुपचक्रमे ॥ १ ॥

गो० टी०—अथ सीतानसूयासंवादोऽष्टादशोत्तरशततमे—सेति । अनसूया असूयारहिता पातिव्रत्यधर्मोपदेशं गुणत्वेन गृहीतवतीत्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०—अनुभाषसे शिक्षयसि । नार्या गुरुः पतिरिति यथा भवत्योपदिष्टमेतद्विदितमेतद्विषयकं ज्ञानं ममापि ॥ २ ॥

रा० टी०—तत्प्रवचनाकारमाह—नेति । यन्मां त्वमनुभाषसे तदेतदार्यायां सकलसद्धर्माश्रयत्वेन श्रेष्ठायां त्वयि आश्चर्यं न, नार्याः पतिरेव गुरुः एतन्ममापि यथावत् विदितम् ॥ २ ॥

३ ] ति० टी०—तदेव दर्शयति—यद्यपीति । एष भर्ता यद्यप्यनार्यः पूज्यचरित्रहीनो वृत्तिवर्जितो जीवनरहितो दरिद्रश्च भवेत्, तथापि मया मद्विषयात्र भर्तर्यद्वैधं प्रकारद्वयरहितं यथा भवति तथा वर्तव्यं वर्तितव्यम् प्रीतिप्रकारेणैव वर्तितव्यमित्यर्थः ॥ ३ ॥

रा० टी०—स्वविदितमेवाह—यद्यपीति । अनार्यः गुणैर्हीनः अत एव वृत्तिवर्जितः यथोचितवर्तनरहितः एष भर्ता यद्यपि भवेत् तथापि मया कल्याणशीलया स्त्रिया अत्र अस्मिन् पत्यौ अद्वैधं सेव्यत्वविषयकद्वैधीभावराहित्यं यथा स्यात्तथा वर्तव्यं वर्तितव्यं आगमप्रामाण्यात्स्वानित्यत्वादिदृभावः एष एव धर्मः भवेत् स्त्रीणामिति शेषः । 'उपचर्तव्यः' इति भूषणपाठः॥३॥

गो० टी०—यद्यपीति । अद्वैधं द्वैधीभावरहितमुपचर्तव्यः गुणवत्त्वनिर्गुणत्वभेदं विहाय सम्यगुपचरणीय इत्यर्थः, मातृवत्प्रियः प्रियपरत्वात् पितृवत्प्रियः अत्यन्तहितपरत्वेन॥३॥४॥

४ ] ति० टी०—गुणश्लाघ्यत्वादिविशिष्टे सा वृत्तिरिति किं पुनर्वक्तव्यम् । मातृवत्पितृवत्प्रियः मयीति शेषः । प्रियः प्रीतिमान् ममेति वा शेषः, प्रीतिविषय इत्यर्थः । 'मातृवर्ती पितृप्रियः' इति पाठे मातृवर्ती मातृसेवारतः पितुः प्रीतिविषय इत्यर्थ इति तीर्थः ॥ ४ ॥

रा० टी०—किमिति । गुणाः श्लाघ्याः प्रशंसनीयाः यस्य सः सानुक्रोशः दयासहितः जितेन्द्रियः नियमितोभयकरणः स्थिरः ध्वंसाप्रतियोगी अनुरागो यस्य सः पतिः सेव्यश्चेत् किम् ॥ ४ ॥

५ ] ति० टी०—अन्यासामपि नृपनारीणां सुमित्रादीनां विषयेऽपीत्यर्थः । तथान्यासामपि विषये मदतिरिक्तस्त्रीमात्रविषयेऽपि तामेव वृत्तिं कुरुत इत्यर्थः । नृपनारीणामित्यनेनैव सुमित्रादीनां लाभादित्यन्ये ॥ ५ ॥

रा० टी०—रामगुणान्वर्णयन्ती आह—यामिति । महाबलो रामः यां वृत्तिमनुवृत्तिं प्रीतिमित्यर्थः, कौसल्यायां मुख्यमातरि वर्तते वर्तयति करोतीत्यर्थः, तामेव वृत्तिमन्यासामपि नृपनारीणां नृपनारीषु वर्तते ॥ ५ ॥

गो० टी०—यामिति । नृपनारीणां सप्तम्यर्थे षष्ठी ॥५॥६॥

६ ] ति० टी०—नृपेण दशरथेन मानमहं महाप्रभुरित्यभिमानं त्यक्त्वेत्यर्थः । अन्यमते उक्तार्थे सत्यत्वप्रत्यायनायैतदुक्तिरिति बोध्यम् ॥ ६ ॥

रा० टी०—सकृदिति । नृपेण दशरथेन सकृदपि दृष्टासु भोग्यात्वबुद्ध्याऽवलोकितासु स्त्रीषु नृपवत्सलो रामः मानमुत्सृज्य मातृवत् मातरीव वर्तते ॥ ६ ॥

७ ] ति० टी०—यन्मे श्वश्र्वा समाहितं त्वदुक्तार्थकमेव वाक्यं शिक्षितम्, तन्मे हृदि स्थिरं वर्तते ॥ ७ ॥

रा० टी०—आगच्छन्त्या इति । एवं भयावहं विजनं वनमागच्छन्त्याः मम श्वश्र्वा यत् पत्यनुसरणं समाहितमुपदिष्टं तन्मे हृदये स्थिरम्, एतेन स एव धर्मो भवत्या अप्युपदिष्ट इति सूचितम् ॥ ७ ॥

गो० टी०—आगच्छन्त्या इति । श्वश्र्वा कौसल्यया यत्पातिव्रत्यधर्माचरणं समाहितमुपदिष्टमित्यर्थः ॥ ७—९ ॥

८ ] ति० टी०—तदपि मे धृतं मात्रनुशासनमपि मे हृद्गतमेवास्ति ॥ ८ ॥

रा० टी०—पाणीति । पाणिप्रदानकाले अग्निसंनिधौ मे जनन्या यद्वाक्यमनुशिष्टं शिक्षितम् तदपि मे धृतं स्थिरीकृतम् ॥ ८ ॥

१ ममार्थे कृतेति गो. पाठः । २ उपचर्तव्य इति गो. पाठः । ३ मे श्वश्र्वा चेति गो. पाठः । ४ तद्धृतं महदिति गो. पाठः । ५ अनुशिष्टा जनन्याऽस्मीति गो. पाठः ।

नै विस्मृतं तु मे सर्वं वाक्यैः स्वैर्धर्मचारिणि । पतिशुश्रूषणान्नार्यास्तपो नान्यद्विधीयते ॥ ९ ॥
सावित्री पतिशुश्रूषां कृत्वा स्वर्गे महीयते । तथावृत्तिश्च याता त्वं पतिशुश्रूषया दिवम् ॥ १० ॥
वरिष्ठा सर्वनारीणामेषा च दिवि देवता । रोहिणी न विना चन्द्रं मुहूर्तमपि दृश्यते ॥ ११ ॥
एवंविधाश्च प्रवराः स्त्रियो भर्तृदृढव्रताः । देवलोके महीयन्ते पुण्येन स्वेन कर्मणा ॥ १२ ॥
ततोऽनसूया संहृष्टा श्रुत्वोक्तं सीतया वचः । शिरस्याघ्राय चोवाच मैथिलीं हर्षयन्त्युत ॥ १३ ॥
नियमैर्विविधैराप्तं तपो हि महदस्ति मे । तत्संश्रित्य बलं सीते छन्दये त्वां शुचिव्रते ॥ १४ ॥
उपपन्नं चै युक्तं च वचनं तव मैथिलि । प्रीता चास्म्युचितां सीते करवाणि प्रियं च किम् १५॥
तस्यास्तद्वचनं श्रुत्वा विस्मिता मन्दविस्मया । कृतमित्यब्रवीत्सीता तपोबलसमन्विताम् ॥ १६ ॥
सा त्वेवमुक्ता धर्मज्ञा तया प्रीततराऽभवत । सफलं च प्रहर्षं ते हन्त सीते करोम्यहम् ॥ १७ ॥

९ ] ति० टी०—यच्च स्वैरात्मीयैर्बन्धुवर्गैः पतिशुश्रूषणादिप्रकारैर्बोधितमर्थजातं तच्च मे न विस्मृतं त्वित्यर्थः ॥ ९ ॥

रा० टी०—नवीकृतमिति । हे धर्मचारिणि ! ते वाक्यैः तवोपदिष्टवचनैः सर्वं श्वश्र्वाद्युपदिष्टं नवीकृतं नवीनतां प्रापितमतः नार्याः पतिशुश्रूषणात् अन्यत् तपो न विधीयते इति मे निश्चयोऽस्तीति शेषः, पूर्वार्धेन 'विस्मृतं तु मे सर्वं वाक्यैः स्वैः' इति भट्टपाठः ॥ ९ ॥

१० ] ति० टी०—सावित्री सत्यवतः स्त्री । तथावृत्तिः सावित्रीसमानवृत्तिः । त्वमनसूया । यातेत्युक्तिः पातिव्रत्यमहिम्ना स्वर्गस्य हस्तगतत्वादिति तीर्थः । तपोर्थमिह वर्तमानापि पतिसेवया मूर्त्यन्तरेण दिवं यातेत्यर्थ इति कतकः ॥ १० ॥

रा० टी०—पतिशुश्रूषायां सदाचारं प्रमाणयन्ती आह—सावित्रीति । सावित्री सत्यवतो भार्या पतिशुश्रूषां कृत्वा स्वर्गे महीयते पूज्यते तथावृत्तिः सावित्रीवृत्तिसदृशवृत्तिविशिष्टा त्वं पतिशुश्रूषया दिवं समस्तसिद्धिप्राप्तिजनितातिप्रमोदं याता प्राप्ता ॥ १० ॥

गो० टी०—सावित्रीति । तथावृत्तिस्त्वं च दिवं यातेत्युक्तिः पातिव्रत्यतपोमाहात्म्येन स्वर्गस्य हस्तगतत्वात् ॥१०॥११॥

११ ] ति० टी०—रोहिणी विना चन्द्रं मुहूर्तमपि न दृश्यते पूर्वकृतपतिशुश्रूषावशादेवं पतिसाहित्यं प्राप्तमिति भावः ॥११॥

रा० टी०—वरिष्ठेति । सर्वनारीणां वरिष्ठा पत्यतिशुश्रूषाकर्त्रीत्वेन श्रेष्ठा एषा रोहिणी देवता चन्द्रं स्वपतिं विना मुहूर्तमपि न दृश्यते ॥ ११ ॥

१२ ] ति० टी०—प्रवराः स्त्रियोऽरुन्धत्यादयः ॥ १२ ॥

रा० टी०—उपसंहरन्ती आह—एवमिति । एवंविधाः भर्तृदृढव्रता अत एव प्रवराः श्रेष्ठाः अरुन्धत्यादय इत्यर्थः, स्वेन स्वकीयेन पुण्येन कर्मणा पत्यनुवर्तनेन देवलोके महीयन्ते पूज्यन्ते ॥ १२ ॥

गो० टी०—एवंविधा इति । भर्तृदृढव्रता अतिसंकटदशायामपि भर्तृविषयदृढव्रतयुक्ताः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०—हर्षयन्त्युत हर्षयन्त्यपीत्यर्थः । 'उताप्यर्थविकल्पयोः' ॥ १३ ॥

रा० टी०—तत इति । ततः सीताकथनानन्तरं सीतयोक्तं वचः श्रुत्वा संहृष्टा अनसूया मैथिलीं शिरसि आघ्राय हर्षयन्ती सती उवाच ॥ १३ ॥

१४–१५ ]. ति० टी०—तद्बलं संश्रित्याश्रित्य छन्दये वरं वृणीष्वेति प्रार्थयामि ॥ १४ ॥ १५ ॥

रा० टी०—तद्वचनाकारमाह—नियमैरिति । विविधैः अनेकप्रकारैः नियमैः प्राणायामादिविधिभिः महत् बहु तपः तद्बलं मया आप्तं प्राप्तं तन्मेऽस्ति तत् बलं संश्रित्य हे सीते ! त्वां छन्दये वरं याचस्वेति प्रार्थये ॥ १४ ॥

रा० टी०—उपपन्नमिति । हे मैथिलि ! उपपन्नं श्रवणं प्राप्तं तव वचनं युक्तमुचितमतोऽहं प्रीतास्मि अतस्तेऽहं किं प्रियं करवाणि तदुच्यतां याच्यतामित्यर्थः ॥ १५ ॥

गो० टी०—नियमैरिति । छन्दये वरं वृणीष्वेति प्रार्थये ॥ १४ ॥ १५ ॥

१६ ] ति० टी०—विस्मिता जाताश्चर्या । अहो तपसो माहात्म्यं यन्ममापि वरदाने सामर्थ्यम् । मन्दविस्मया मन्दस्मिता, कृतं भवत्या अनुग्रहेणैव सर्वं मे पूर्णं न किंचित्कर्तव्यमस्तीति भावः ॥ १६ ॥

रा० टी०—तस्या इति । तस्या अनसूयायास्तद्वचनं श्रुत्वा अविस्मिता तदैश्वर्यविषयकविस्मयरहिता मन्दविस्मया ईषद्धासविशिष्टा सीता तपोबलसमन्वितामनसूयां कृतं त्वदनुग्रहेणैव सर्वं संपादितमित्यर्थः, इत्यब्रवीत् ॥ १६ ॥

गो० टी०—तस्या इति । मन्दविस्मया मन्दस्मितेत्यर्थः ॥ १६ ॥

१७ ] ति० टी०—तया लोभरहितवाचा । प्रहर्षं लोभराहित्यजं स्वनिष्ठम् । ते त्वद्विषयम् ॥ १७ ॥

रा० टी०—सेति । तया सीतया एवमनेन प्रकारेण उक्ता सा अनसूया प्रीतितरा प्रीतिप्रापिका अभवत् । प्रीतिप्राप-

१ नवीकृतं च तदिति गो. नवीकृतं चेति रा. पाठः । २ ते इति गो. रा. पाठः । ३ स्मिते इति गो. पाठः । ४ मनोज्ञं चेति गो. पाठः । ५ उचितं किं ते इति गो. उच्यतामिति रा. पाठः । ६ ब्रवीहि मे इति गो. पाठः । ७ प्रीतितरेति रा. पाठः ।

इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च । अङ्गरागं च वैदेहि महार्हमनुलेपनम् ॥ १८ ॥
मया दत्तमिदं सीते तव गात्राणि शोभयेत् । अनुरूपमसंक्लिष्टं नित्यमेव भविष्यति ॥ १९ ॥
अङ्गरागेण दिव्येन लिप्ताङ्गी जनकात्मजे । शोभयिष्यसि भर्तारं यथा श्रीर्विष्णुमव्ययम् ॥ २० ॥
सा वस्त्रमङ्गरागं च भूषणानि स्रजस्तथा । मैथिली प्रतिजग्राह प्रीतिदानमनुत्तमम् ॥ २१ ॥
प्रतिगृह्य च तत्सीता प्रीतिदानं यशस्विनी । श्लिष्टाञ्जलिपुटा [2]धीरा समुपास्त तपोधनाम् ॥ २२ ॥
तथा सीतामुपासीनामनसूया दृढव्रता । वचनं प्रष्टुमारेभे [3]कथां कांचिदनुप्रियाम् ॥ २३ ॥
स्वयंवरे किल प्राप्ता त्वमनेन यशस्विना । राघवेणेति मे सीते कथा श्रुतिमुपागता ॥ २४ ॥
तां कथां श्रोतुमिच्छामि विस्तरेण च मैथिलि । यथा[4]भूतं च कार्त्स्न्येन तन्मे त्वं वक्तुमर्हसि ॥ २५ ॥
एवमुक्ता तु सा सीता [5]तापसीं धर्मचारिणीम् । श्रूयतामिति चोक्त्वा वै कथयामास तां कथाम् ॥ २६ ॥
मिथिलाधिपतिर्वीरो जनको नाम धर्मवित् । क्षत्र[6]कर्मण्यभिरतो न्यायतः शास्ति मेदिनीम् ॥ २७ ॥

---

णमेवाह—हे सीते ! ते प्रहर्षं शोभराहित्यसूचितस्वनिष्ठस्वतःसिद्धनित्यप्रमोदं सफलं फलसहितमहं करोमि ॥ १७ ॥

गो० टी०—सेति । प्रहर्षं ते तुभ्यं सफलं करोमि करिष्यामि अङ्गरागः कुङ्कुमहरिचन्दनादिः, अनुलेपनं कर्पूरागरुकस्तूरीप्रमुखपरिमलमिलितम्, अनुरूपं स्वगात्रानुरूपम्, असंक्लिष्टम् अबाधितशोभमित्यर्थः, भर्तारं शोभयिष्यसीत्यन्ते इत्यब्रवीदित्यध्याहारः । सा अनसूया प्रीततराऽभवत् शोभयिष्यसीत्यब्रवीचेति संबन्धः ॥ १७–२२ ॥

१८] ति० टी०—अङ्गरागः उद्वर्तनेनाङ्गानि रञ्जयतीत्यङ्गरागः केशरचन्दनादिजः, अनुलेपनं तु 'कर्पूरागुरुकस्तूरीकङ्कोलैर्यक्षकर्दमः' इत्युक्तप्रकारो दिव्यगन्धद्रव्यकल्क इति तीर्थः । कतकस्तु—अङ्गरागमङ्गरञ्जनकरमनुलेपनं दिव्यगन्धद्रव्यकल्कमित्यर्थं इत्याह, इदमेव युक्तम् ॥ १८ ॥

१९ ] ति० टी०—शोभयेच्छोभयिष्यति । अनुरूपं त्वदेकोचितं नित्यमेवासंक्लिष्टमुपभोगेऽप्यग्लानत्वम्लानत्वादिदोषरहितं भविष्यति ॥ १९ ॥

रा० टी०—फलमेवाह—इदमिति । मया दत्तमिदं माल्यादि तव गात्राणि शोभयेदिदं माल्यादि अनुरूपं तवैव योग्यमत एव असंक्लिष्टं बाधारहितं संनित्यमेव भविष्यति स्थास्यति तत्राङ्गरागः मिश्रकेशरचन्दनादिः अनुलेपनं कर्पूरकस्तूर्यादि । श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

२० ] ति० टी०—शोभयिष्यसीत्यनेन स्वत्पूजया भर्तुरपि पूजा कृतेति सूचितम् ॥ २० ॥

रा० टी०—अङ्गरागेणेति । हे जनकात्मजे ! दिव्येन अङ्गरागेण लिप्ताङ्गी त्वं श्रीर्विष्णुमिव भर्तारं शोभयिष्यसि । किंच श्रीः लक्ष्मीः स्वमव्ययं विकारशून्यं विष्णुं स्वप्रकाशद्वारा सर्वत्र पूर्णं भर्तारं स्वपतिं यथा यथावत् शोभयिष्यति शोभां प्रापयिष्यति ॥ २० ॥

२१ ] ति० टी०—क्षत्रियत्वात्प्रतिग्रहानधिकारेण प्रीतिदानमित्युक्तम् । लक्ष्म्युद्देशेन ब्राह्मणादिभ्यो दत्तमक्षयं चेत्साक्षाल्लक्ष्म्यै प्रीत्या दत्तं तथेति किं वक्तव्यमिति देव्यै तद्दानमनसूयाया इति बोध्यम् ॥ २१ ॥

रा० टी०—सेति । सा अनसूयया प्रार्थिता मैथिली अनुत्तमं प्रीतिदानं वस्त्रादि जग्राह । प्रीतिदानमित्यनेन प्रतिषिद्धप्रतिग्रहाणां क्षत्रियाणामपि ग्रहणार्हत्वं सूचितम् ॥ २१ ॥

२२ ] ति० टी०—श्लिष्टाञ्जलिपुटा रचिताञ्जलिपुटा॥२२॥

रा० टी०—प्रतीति । यशस्विनी सीता तमनसूयासमर्पितं प्रीतिदानं प्रतिगृह्य श्लिष्टाञ्जलिपुटा प्रणयसूचकबद्धयुगलकरा सती तपोधनामनसूयां समुपास्त ॥ २२ ॥

२३ ] ति० टी०—अन्वनन्तरं प्रियां कांचित्कथां श्रोतुकामा वचनं प्रष्टुमारेभे ॥ २३ ॥

रा० टी०—तथेति । वचनं सीतोक्तिं श्रोतुकामेति शेषः । दृढव्रता अनसूया अनुप्रियां प्रतिक्षणं प्रीतिविषयीभूतां कांचित्कथां प्रष्टुमारेभे ॥ २३ ॥

गो० टी०—तथेति । प्रियकथामनुप्रियां कथामुद्दिश्य सीतां प्रष्टुं वचनमारेभे वचनं वक्तुमारेभे इत्यर्थः ॥ २३ ॥

२४ ] ति० टी०—अनेन रामेण, श्रुतिं मम श्रोत्रपथम्॥२४॥

रा० टी०—प्रभाकारमाह—स्वयंवर इति । हे सीते ! अनेन यशस्विना राघवेण स्वयंवरे त्वं प्राप्तेति या कथा मे श्रुतिं श्रवणमुपागता प्राप्ता तां कथां विस्तरेण श्रोतुमिच्छामि, तत् तस्माद्धेतोः यथाभूतं यथाजातं कार्त्स्न्येन मे वक्तुमर्हसि २४॥२५

गो० टी०—स्वयंवर इति । श्रुतिमुपागता श्रुतिपथं प्राप्ता ॥ २४–२७ ॥

२५-२७ ] ति० टी०—विस्तरेण च विस्तरेणैव ॥२५-२७॥

रा० टी०—एवमिति । एवमुक्ता पृष्टा सा सीता श्रूयतामित्युक्त्वा तामनसूयया पृष्टां कथां कथयामास ॥ २६ ॥

---

१ चान्विति गो. पाठः । २ तत्रेति गो. पाठः । ३ कांचित्प्रियकथामन्विति गो. पाठः । ४ ऽनुभूतमिति गो. पाठः । ५-सां तत इति गो. पाठः । ६ धर्मे ह्यमीति गो. पाठः ।

तस्य लाङ्गलहस्तस्य कृषतः क्षेत्रमण्डलम् । अहं किलोत्थिता भित्त्वा जगतीं नृपतेः सुता ॥ २८ ॥
स मां दृष्ट्वा नरपतिर्मुष्टिविक्षेपतत्परः । पांसुगुण्ठितसर्वाङ्गीं विस्मितो जनकोऽभवत् ॥ २९ ॥
अनपत्येन च स्नेहादङ्कमारोप्य च स्वयम् । ममेयं तनयेत्युक्त्वा स्नेहो मयि निपातितः ॥ ३० ॥
अन्तरिक्षे च वागुक्ता प्रतिमामानुषी किल । एवमेतन्नरपते धर्मेण तनया तव ॥ ३१ ॥
ततः प्रहृष्टो धर्मात्मा पिता मे मिथिलाधिपः । अवाप्तो विपुलामृद्धिं मामवाप्य नराधिपः ॥ ३२ ॥
दत्ता चास्मीष्टवद्देव्यै ज्येष्ठायै पुण्यकर्मणे । तया संभाविता चास्मि स्निग्धया मातृसौहृदात् ३३ ॥
पतिसंयोगसुलभं वयो दृष्ट्वा तु मे पिता । चिन्तामभ्यगमद्दीनो वित्तनाशादिवाधनः ॥ ३४ ॥

रा० टी०—तत्कथनाकारमाह—मिथिलेत्यादिभिः । जनको नाम जनकनामा मिथिलाधिपतिः न्यायतः मेदिनीं पृथ्वीं शास्ति पालयति ॥ २७ ॥

२८ ] ति० टी०—क्षेत्रमण्डलं यज्ञयोग्यक्षेत्रम्, चयनप्रकरणे "षड्गवेन कृषति" इति श्रुतेः । कृषतस्तस्य पुरो जगतीं भुवं भित्त्वोत्थिता एतावन्मात्रेणाहं नृपतेर्जनकस्य सुता ॥ २८ ॥

रा० टी०—तस्येति । क्षेत्रमण्डलं यागोपयोगि क्षेत्रं कृषतः लाङ्गलहस्तस्य यथाशास्त्रं गृहीतहलविशिष्टकरविशिष्टस्य तस्य जनकस्य अग्रे जगतीं भित्त्वाहमुत्थिता अतोऽहं नृपतेः सुता २८

गो० टी०—तस्येति । कर्षतः "षड्गवेन कृषति" इति श्रुत्या शोधनं कुर्वतः क्षेत्रमण्डलं यागोपयोगिक्षेत्रं चयनस्थानमित्यर्थः२८

२९ ] ति० टी०—मुष्टिविक्षेपतत्परः "या जाता ओषधयो देवेभ्यः" इत्यादिमन्त्रोक्तप्रकारेणौषधिमुष्टिविकिरणतत्पर इति तीर्थः । निम्नोन्नतसमीकरणाय मृत्तिकामुष्टिविक्षेपतत्पर इति कतकः ॥ २९ ॥

रा० टी०—स इति । मुष्टिविक्षेपतत्परः "या जाता ओषधयो देवेभ्यः" इत्यादिमन्त्रोक्तविधिना मुष्टिगतौषधिप्रक्षेपणशीलः स नरपतिर्जनकः पांसुगुण्ठितसर्वाङ्गीं धूलीव्याप्तशरीरां मां दृष्ट्वा विस्मितोऽभवत् ॥ २९ ॥

गो० टी०—स इति । मुष्टिविक्षेपतत्परः "या जाता ओषधयः" इति चतुर्दशभिरोषधीर्वपति इत्युक्तप्रकारेण ओषधिमुष्टिविकिरणतत्परः ॥ २९ ॥

३० ] ति० टी०—अत्र चौ त्वर्थे ॥ ३० ॥

रा० टी०—अनपत्येनेति । अनपत्येन अपत्यान्तररहितेन राज्ञा स्नेहात् अङ्कमारोप्य मामिति शेषः, मम इयं तनयेत्युक्त्वा मयि स्नेहः अत्यनुरागः निपातितः कृतः ॥ ३० ॥

गो० टी०—अनपत्येन चेति । अनपत्येन च तेन स्नेहान्मामङ्कमारोप्य इयं मम तनयेति चोक्त्वा स्नेहो मयि निपातितः अङ्कम् उत्सङ्गम् ॥ ३० ॥

३१ ] ति० टी०—प्रतिमामानुषी प्रतिमया स्वरूपेण मानुषी मनुष्यवाक्तुल्या वागन्तरिक्षे उक्ता । तां वाचमाह—एवमिति । एतन्ममेयं तनयेत्येतत् । एवमर्थवदेव । यतो हे नरपते ! धर्मेण न्यायेनैषा स्वक्षेत्रजातत्वात्तव तनयैव ॥ ३१ ॥

रा० टी०—अन्तरिक्ष इति । अन्तरिक्षे आकाशे अप्रतिमा उच्चारयितृस्वरूपरहिता ह्यमानुषी मानुषवाक्सदृशी वाक् उक्ता प्रादुर्भूता । तदाकारमाह—एतद्भवदुक्तमेवं समीचीनमित्यर्थः, यतः धर्मेण तव तनया ॥ ३१ ॥

गो० टी०—अन्तरिक्ष इति । मा प्रति मामुद्दिश्य 'एवमेतन्नरपते धर्मेण तनया तव' इति अन्तरिक्षे अमानुषी वागुक्ता, यद्वा वागुक्ता प्रतिमेत्यत्र अप्रतिमेति च्छित्वा वाग्विशेषणतया वा योज्यम् ॥ ३१ ॥ ३२ ॥

३२ ] ति० टी०—मामवाप्य यज्ञभूमेरिति शेषः, मल्लाभोत्तरं तस्य महती संमृद्धिर्जातेति भावः ॥ ३२ ॥

रा० टी०—तत इति । ततः मत्प्राप्तेः प्रहृष्टः प्राप्तहर्षः धर्मात्मा मिथिलाधिपः मिथिलापालयिता नराधिपो राजा मे पिता मामवाप्य विपुलामृद्धिमवाप्तः ॥ ३२ ॥

३३ ] ति० टी०—इष्टवद्देव्यै इष्टायै देव्यै राज्ञ्यै इष्टमिति भावे क्तः, इष्टमिच्छा तद्वत्यै विषयतासंबन्धेनेत्यक्षरार्थः । आर्षं वा साधुत्वमुक्तार्थे । यद्वा संतानेच्छावत्यै देव्यै इत्यर्थः पुण्यकर्मणे इति देवीविशेषणम् । तृतीयान्तः पाठः क्वचित् । संभाविता संवर्धिता ॥ ३३ ॥

रा० टी०—दत्तेति । पुण्यकर्मणे पुण्यकर्मविशिष्टायै ज्येष्ठायै इष्टवद्देव्यै अत्यभिमतपत्न्यै अहं दत्तास्मि । स्निग्धया स्नेहविशिष्टया तया मातृसौहृदान्मातृुचितसौहार्दात् संभाविता सेवितास्मि ॥ ३३ ॥

गो० टी०—दत्तेति । इष्टवद्देव्यै इच्छावत्यै पुण्यकर्मणा अनवरतयज्ञादिकर्मयुक्तेन जनकेन संभाविता संवर्धितेत्यर्थः३३

३४] ति०टी०—पतिसंयोगसुलभं पाणिग्रहणोचितम्॥३४॥

रा० टी०—पतीति । पतिसंयोगसुलभं पतिसंयोगः सुलभः सुलभ्यो यस्मिन् तन्मे वयो दृष्ट्वा वित्तनाशात् आर्जितवित्तस्यादर्शनात् अधन इव दीनो मे पिता चिन्तामभ्यगमत् ॥३४॥

गो० टी०—पतिसंयोगसुलभमिति । पतिसंयोगे सति सुलभम् अन्यथा दुर्लभमित्यर्थः । पतिसंयोगं विना स्थातुमशक्ययौवनावस्थावदित्यर्थः ॥ ३४ ॥

१ कर्षत इति गो. पाठः । २ कुण्ठितेति गो. पाठः । ३ कर्मणेति गो. पाठः ।

सदृशाच्चापकृष्टाच्च लोके कन्यापिता जनात् । प्रधर्षणमवाप्नोति शक्रेणापि समो भुवि ॥ ३५ ॥
तां धर्षणामदूरस्थां संदृश्यात्मनि पार्थिवः । चिन्तार्णवगतः पारं नाससादाप्लवो यथा ॥ ३६ ॥
अयोनिजां हि मां ज्ञात्वा नाध्यगच्छत्स चिन्तयन् । सदृशं चाभिरूपं च महीपालः पतिं मम ॥ ३७ ॥
तस्य बुद्धिरियं जाता चिन्तयानस्य संततम् । स्वयंवरं तनूजायाः करिष्यामीति धर्मतः ॥ ३८ ॥
महायज्ञे तदा तस्य वरुणेन महात्मना । दत्तं धनुर्वरं प्रीत्या तूणी चाक्षय्यसायकौ ॥ ३९ ॥
असंचाल्यं मनुष्यैश्च यत्नेनापि च गौरवात् । तन्न शक्ता नमयितुं स्वप्नेष्वपि नराधिपाः ॥ ४० ॥
तद्धनुः प्राप्य मे पित्रा व्याहृतं सत्यवादिना । समवाये नरेन्द्राणां पूर्वमामन्त्र्य पार्थिवान् ॥ ४१ ॥
इदं च धनुरुद्यम्य सज्जं यः कुरुते नरः । तस्य मे दुहिता भार्या भविष्यति न संशयः ॥ ४२ ॥
तच्च दृष्ट्वा धनुःश्रेष्ठं गौरवाद्गिरिसंनिभम् । अभिवाद्य नृपा जग्मुरशक्तास्तस्य तोलने ॥ ४३ ॥
सुदीर्घस्य तु कालस्य राघवोऽयं महाद्युतिः । विश्वामित्रेण सहितो यज्ञं द्रष्टुं समागतः ॥ ४४ ॥
लक्ष्मणेन सह भ्रात्रा रामः सत्यपराक्रमः । विश्वामित्रस्तु धर्मात्मा मम पित्रा सुपूजितः ॥ ४५ ॥

---

३५ ] ति० टी०—सदृशादपकृष्टाच्च वरवर्गजनात्कन्यायाः पिता इन्द्रसमोऽपि भुवि स्थितो लोके प्रधर्षणमसंमानादिरूपं क्लेशमाप्नोति किमुताधिकादिति शेषः ॥ ३५ ॥

रा० टी०—सदृशादिति । शक्रेण समोऽपि कन्यापिता सदृशात् कुलादिना स्वतुल्याद्वरपित्रादेः अपकृष्टात् वरमातुलादेश्च जनात् प्रधर्षणमनादरणमवाप्नोति ॥ ३५ ॥

गो० टी०—सदृशादिति । प्रधर्षणां तिरस्क्रियाम् ॥३५॥

३६ ] ति० टी०—अदूरस्थां निकटप्राप्तां धर्षणां कन्यानिमित्ततिरस्क्रियामात्मनि संदृश्य संभाव्य । प्लवः पोतः ॥३६॥

रा० टी०—तामिति । अदूरस्थां निश्चितोत्तरकालभाविनीमित्यर्थः । तां वरपित्रादिकृतां धर्षणां तिरस्कृतिमात्मनि संदृश्य निश्चित्य अप्लवः प्लवरहित इव चिन्तार्णवगतः चिन्तासमुद्रे निमग्नः पार्थिवः पारं न आससाद प्राप ॥ ३६ ॥

गो० टी०—तामिति । अप्लवः प्लवरहितः ॥ ३६ ॥

३७–३८ ] ति० टी०—सदृशं कुलविद्यादिना, अभिरूपं वयःसौन्दर्यादिना, वरमिति शेषः ॥ ३७ ॥ ३८ ॥

रा० टी०—अयोनिजामिति । अयोनिजां मां ज्ञात्वा सदृशमयोनिजत्वादिना तुल्यमनुरूपं प्रादुर्भूतवयःसौन्दर्यादिना च तुल्यं पतिं चिन्तयन् सन् स मत्पिता नाध्यगच्छत् निश्चयं न प्राप्नोत् ॥ ३७ ॥

रा० टी०—तस्येति । सन्ततं निरन्तरं चिन्तयानस्य तस्य मत्पितुः तनूजायाः धर्मतः स्वयंवरं करिष्यामि इति इयं बुद्धिर्निश्चयो जाता ॥ ३८ ॥

गो० टी०—अयोनिजामिति । सदृशम् अभिजनवृत्तादिना तुल्यम् अनुरूपं प्रादुर्भूतयौवनाप्रतिमरूपलावण्यादिना योग्यम् ॥ ३७ ॥ ३८ ॥

३९ ] ति० टी०—महायज्ञे दक्षयज्ञे । तस्य मत्पितृपूर्वजस्य देवरातस्य । तदा धनुर्जयसमर्थधनुर्लाभाय तपःकरणकाले । दक्षयज्ञे हि शिवेन पीडिता देवाः शिवं संप्रार्थ्य धनुर्याचितवन्तः स च देवेभ्यो दत्त्वोक्तवान् इदं देवरातय दीयतामिति, ततो देवैर्वरुणद्वारा देवरातय दत्तम् । यद्वा व्रियते सर्वदेवैरिति व्युत्पत्त्या वरुणः शिव एव ॥ ३९ ॥

रा० टी०—स्वयंवरप्रकारमाह—महायज्ञ इति । तदा तस्मिन् महायज्ञे दक्षकर्तृकमहायागसमये महात्मना वरुणेन वरुणद्वारा शिवाज्ञापितदैवतैः धनुर्वरं दत्तम् । देवराजनामकनिमिज्येष्ठपुत्रायेति शेषः । अक्षयसायकौ तूणी च दत्तौ किंच वरुणेन उः शंभुश्चासौ अरुणो लोहितश्च वरुणः तेन स्वभागाकल्पनजनितकोपहेतुकारुण्यविशिष्टशिवेनेत्यर्थः । धनुर्वरं दत्तं देवैर्दापितम् ॥ ३९ ॥

गो० टी०—महायज्ञ इति । वरुणेन दत्तं वरुणेनातिसहकारिणा दत्तम् ॥ ३९–४१ ॥

४०–४१ ] ति० टी०—गौरवाद्भारवत्त्वात् ॥ ४० ॥ ४१ ॥

रा० टी०—असंचाल्यमिति । गौरवात् अतिगुरुत्वाद्धेतोः यत्नेनापि मनुष्यैः असंचाल्यं यद्धनुस्तद्धनुर्नमयितुं नराधिपाः स्वप्नेष्वपि न शक्ताः ॥ ४० ॥

रा० टी०—तदिति । तद्धनुः प्राप्य पूर्वं पार्थिवान् आमन्त्र्य आमन्त्रणेन स्वस्थानं प्रापय्येत्यर्थः । नरेन्द्राणां समवाये समूहे इदं धनुः उद्यम्य यो नरः सज्यं कुरुते तस्य नरस्य भार्या मम दुहिता भविष्यति इति सत्यवादिना मे पित्रा व्याहृतं कथितम् । श्लोकद्वयमेकान्वयि ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०—न संशय इति पित्रा व्याहृतमिति पूर्वेण संबन्धः ॥ ४२ ॥

गो० टी०—इदमिति । भविष्यति न संशय इत्यत्र इतिकरणं द्रष्टव्यम् ॥ ४२ ॥

४३–४५ ] ति० टी०—तोलने चालने । अभिवाद्य नमस्कृत्य ॥ ४३–४५ ॥

---

१ दृष्ट्वा चेति गो. पाठः । २ वीति गो. पाठः । ३ अन्वितिति गो. रा. पाठः । ४ धीमत इति गो. पाठः । ५ अक्षय्येति गो. पाठः ।

प्रोवाच पितरं तत्र राघवौ रामलक्ष्मणौ । सुतौ दशरथस्येमौ धनुर्दर्शनकाङ्क्षिणौ ॥ ४६ ॥
[ धनुर्दर्शय रामाय राजपुत्राय दैविकम् । ]
इत्युक्तस्तेन विप्रेण तद्धनुः समुपानयत् । तद्धनुर्दर्शयामास राजपुत्राय दैविकम् ॥ ४७ ॥
निमिषान्तरमात्रेण तदानम्य महाबलः । ज्यां समारोप्य झटिति पूरयामास [4]वीर्यवान् ॥ ४८ ॥
[5]तेनापूरयता वेगान्मध्ये भग्नं द्विधा धनुः । तस्य शब्दोऽभवद्भीमः पतितस्याशनेर्[6]यथा ॥ ४९ ॥
ततोऽहं तत्र रामाय पित्रा सत्याभिसंधिना । उद्यता दातुमुद्यम्य जलभाजनमुत्तमम् ॥ ५० ॥
दीयमानां न तु तदा प्रतिजग्राह राघवः । अविज्ञाय पितुश्छन्दमयोध्याधिपतेः प्रभोः ॥ ५१ ॥
ततः श्वशुरमामन्त्र्य वृद्धं दशरथं नृपम् । मम पित्रा त्वहं दत्ता रामाय विदितात्मने ॥ ५२ ॥
मम चैवानुजा साध्वी ऊर्मिला शुभदर्शना । भार्यार्थे लक्ष्मणस्यापि दत्ता पित्रा मम स्वयम् ॥ ५३ ॥
एवं दत्तास्मि रामाय तथा तस्मिन्स्वयंवरे । अनुरक्तास्मि धर्मेण पतिं वीर्यवतां वरम् ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टादशाधिकशततमः सर्गः ॥ ११८ ॥

---

रा० टी०—तदिति । गिरिसंनिभं तद्धनुःश्रेष्ठं दृष्ट्वा गौरवाद्धेतोः तस्य तोलने इयत्ताकरणे अशक्ताः नृपा अभिवाद्य प्रणम्य जग्मुः ॥ ४३ ॥

रा० टी०—सुदीर्घस्येति । विश्वामित्रेण सहितः अयं महाद्युतिः राघवः सुदीर्घस्य कालस्य गते सतीति शेषः, यज्ञं द्रष्टुं समागतः ॥ ४४ ॥

रा० टी०—लक्ष्मणेनेति । लक्ष्मणेन सह रामः मम पित्रा सुपूजित आसीदिति शेषः । धर्मात्मा सुपूजितो विश्वामित्रस्तु धनुर्दर्शनकाङ्क्षिणौ दशरथस्य सुतौ रामलक्ष्मणौ इमौ इति हेतोः रामाय दैविकं दिव्यं धनुः दर्शय इति तत्र तस्मिन् समये पितरं प्रोवाच । सार्धश्लोकद्वयमेकान्वयि ॥४५॥ ४६ ॥

गो० टी०—तदिति । तोलने चालने ॥ ४३–६० ॥

४६–४७ ] ति० टी०—इमौ धनुर्दर्शनकाङ्क्षिणौ । अतो रामाय दैविकं देवदत्तं धनुर्दर्शयेति विश्वामित्रः पितरं प्रोवाचेति संबन्धः ॥ ४६ ॥ ४७ ॥

रा० टी०—इतीति । विप्रेण तेन विश्वामित्रेण इत्युक्तः पिता तद्धनुः समुपानयत् प्रापयत् दर्शयामासेत्यर्थः ॥ ४७ ॥

४८–४९ ] ति० टी०—पूरयामास सज्यं कृत्वा कृष्टवान् ॥ ४८ ॥ ४९ ॥

रा० टी०—निमेषान्तरेति । महाबलो वीर्यवान् अतिप्रभाववान् रामः तत् धनुर्निमेषान्तरमात्रेण आनम्य झटिति ज्यां धनुः समारोप्य पूरयामास आचकर्ष 'वीर्यं शुक्रे प्रभावे च तेजस्सामर्थ्ययोरपि' इति मेदिनी ॥ ४८ ॥

रा० टी०—तेनेति । वेगात्पूरयता तेन रामेण धनुः मध्ये द्विधा भग्नं भज्जितं पतितस्य धनुषः अशनेरिव भीमः शब्दोऽभवत् ॥ ४९ ॥

५० ] ति० टी०—उत्तमं जलभाजनमुद्यम्य पित्राहं रामाय दातुमुद्यतेति संबन्धः ॥ ५० ॥

रा० टी०—तत इति । ततः धनुर्भङ्गानन्तरं सत्याभिसंधिना सत्यप्रतिज्ञेन पित्रा उत्तमं जलभाजनमुद्यम्य गृहीत्वा रामाय दातुमहमुद्यता स्वसमीपं प्रापिता ॥ ५० ॥

५१–५४ ] ति० टी०—छन्दमभिप्रायम् ॥ ५१–५४ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्डेऽष्टादशाधिकशततमः सर्गः॥११८॥

रा० टी०—दीयमानामिति । तदा तस्मिन् काले अयोध्याधिपतेः दशरथस्य छन्दमभिप्रायमविज्ञाय दीयमानां मां राघवो न प्रतिजग्राह, एतेन पितुरनुमत्यनन्तरं ग्रहीतास्मीति सूचितम् ॥ ५१ ॥

रा० टी०—तत इति । ततः रामकर्तृकप्रतिग्रहाभावानन्तरं दशरथं मम श्वशुरमामन्त्र्य विदितात्मने रामायाऽहं दत्ता ॥ ५२ ॥

रा० टी०—ममेति । ममानुजा ऊर्मिला लक्ष्मणस्य भार्यार्थे दत्ता ॥ ५३ ॥

रा० टी०—उपसंहरन्ती आह—एवमिति । एवमुक्तप्रकारेण स्वयंवरे रामाय अहं दत्तास्मि अत एव वीर्यवतां प्रभावविशिष्टानां वरं श्रेष्ठं पतिमहं धर्मेण अनुरक्तास्मि ॥ ५४ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डेऽष्टादशाधिकशततमः सर्गः ॥ ११८ ॥

गो० टी०—दीयमानामिति । छन्दमभिप्रायम् । 'वशाभिप्राययोश्छन्दः' इति वैजयन्ती ॥ ५१ ॥ ५२ ॥
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्यानेऽष्टादशोत्तरशततमः सर्गः ॥ ११८ ॥

---

१ अर्धमेतदधिकं गो. रा. पाठे । २ अर्धमेतद् गो. रा. नास्ति । ३ स वीर्यवानिति गा. पाठः । ४ वीर्यवदिति गो. पाठः । ५ तेन पूरयतेति गो. रा. पाठः । ६ इवेति गो. पाठः । ७ निश्चितेति गो. पाठः । ८ प्रियदर्शनेति गो. पाठः । ९ तदेति गो. पाठः ।

# एकोनविंशत्यधिकशततमः सर्गः ।

संप्राप्तसायंकालमुपश्लोकयन्त्यनसूया स्वदत्ताभरणैर्विभूषिताङ्गीं वैदेहीं रामान्तिकं प्रैषीत् । दिव्याभरणभासुरां सीतां विलोक्य विस्मयमानं रामं सीताऽनसूयावृत्तं निवेद्य तस्यास्तदुपागमं न्यवेदीत् । तापसैरर्चितो रामस्तत्र तद्रात्रिमुषित्वा प्रातः पुरोगमनाय मुनिगणं पप्रच्छ । स्वेभ्यो जातं राक्षसोपद्रवं निवेदयन्तस्ते तेषां निधनं प्रार्थयेरंस्तथा मुनिदर्शितपथेन त्रयस्ते दण्डकां प्राविशन् ।

अनसूया तु धर्मज्ञा श्रुत्वा तां महतीं कथाम् । पर्यष्वजत बाहुभ्यां शिरस्याघ्राय मैथिलीम्॥ १ ॥
व्यक्ताक्षरपदं चित्रं भाषितं मधुरं त्वया । यथा स्वयंवरं वृत्तं तत्सर्वं च श्रुतं मया ॥ २ ॥
रमेयं कथया ते तु दृढं मधुरभाषिणि । रविरस्तगतः श्रीमानुपोह्य रजनीं शुभाम् ॥ ३ ॥
दिवसं परिकीर्णानामाहारार्थं पतत्रिणाम् । संध्याकाले निलीनानां निद्रार्थं श्रूयते ध्वनिः॥ ४ ॥
एते चाप्यभिषेकार्द्रा मुनयः कलशोद्यताः । सहिता उपवर्तन्ते सलिलाप्लुतवल्कलाः ॥ ५ ॥
अग्निहोत्रे च ऋषिणा हुते च विधिपूर्वकम् । कपोताङ्गारुणो धूमो दृश्यते पवनोद्धतः ॥ ६ ॥
अल्पपर्णा हि तरवो घनीभूताः समन्ततः । विप्रकृष्टेन्द्रिये देशे न प्रकाशन्ति वै दिशः ॥ ७ ॥
रजनीचरसत्त्वानि प्रचरन्ति समन्ततः । तपोवनमृगा ह्येते वेदितीर्थेषु शेरते ॥ ८ ॥

---

१ ] ति० टी०—अनसूयेति ॥ १ ॥

रा० टी०—सीतावचनश्रवणानन्तरकालिकमनसूयावृत्तमाह—अनसूयेत्यादिभिः । धर्मज्ञा अनसूया तु तां सीताविवाहसंबन्धिनीं महतीं कथां श्रुत्वा मैथिलीं शिरसि आघ्राय बाहुभ्यां पर्यष्वजत आलिङ्गयत् आलिङ्गनपूर्वकमुवाचेत्यर्थः ॥ १ ॥

गो० टी०—अथात्र्याश्रमे रजनीमुषित्वा प्रातर्निर्गम एकोनविंशत्युत्तरशततमे—अनसूयेत्यादि ॥ १ ॥ २ ॥

२ ] ति० टी०—स्वयंवरं वृत्तं स्वयंवरो वृत्तः अर्धर्चादिः स्वयंवरः ॥ २ ॥

रा० टी०—तद्वचनाकारमाह—व्यक्तेति । व्यक्तानि स्फुटानि अक्षराणि पदानि च यस्मिन् तच्चित्रं बहुविधव्यञ्जनाविशिष्टं मधुरं मनोहरं यथास्वयंवरं स्वयंवरमनतिक्रम्य यत् त्वया भाषितं तद्वृत्तं वृत्तान्तं सर्वं मया श्रुतम् ॥ २ ॥

३ ] ति० टी०—उपोह्य समीपं प्रापय्य ॥ ३ ॥

रा० टी०—रमेयेति । हे मधुरभाषिणि ! ते तव कथया दृढं यथा स्यात्तथा रमेय विहरेय श्रीमान् रविस्तु रजनीमुपोह्य समीपं प्रापय्य अस्तं गतः ॥ ३ ॥

गो० टी०—रविरित्यादि । उपोह्य समीपं प्रापय्य स्वसंचाराद्विप्रकृष्टं प्रदेशं प्रापय्येत्यर्थः ॥ ३ ॥

४ ] ति० टी०—दिवसं व्याप्याहारार्थं परितः कीर्णानां संचरताम् निलीनानां निलीयमानानाम् ॥ ४ ॥

रा० टी०—दिवसमिति । दिवसं दिनं संप्राप्य आहारार्थं परिकीर्णानां चतुर्दिक्षु गतानां संध्याकाले प्राप्ते सति निद्रार्थं निलीनानां स्वस्वावासस्थानेषु स्थितानां पतत्रिणां पक्षिणां ध्वनिः श्रूयते ॥ ४ ॥

५ ] ति० टी०—कलशोद्यता उद्यतकलशाः सहिताः परस्परं मिलिताः ॥ ५ ॥

रा० टी०—एते इति । कलशोद्यताः गृहीतकलशाः अभिषेकार्द्राः स्नानहेतुकार्द्रत्वविशिष्टाः अत एव सलिलेन जलेन आप्लुतानि व्याप्तानि वल्कलानि येषां ते सहिताः परस्परं मिलिताः मुनयः उपवर्तन्ते समीपे दृश्यन्ते इत्यर्थः ॥ ५ ॥

गो० टी०—एत इति । कलशोद्यताः उद्यतकलशाः ॥ ४ ॥

६ ] ति० टी०—कपोताङ्गवत्पारावतकण्ठवदरुणो मेचकः । 'श्यामे रक्तेऽरुणोऽर्के च' ॥ ६ ॥

रा० टी०—ऋषीणामिति । विधिपूर्वकं हुतेषु ऋषीणामग्निहोत्रेषु पवनोद्धतः वायुना समृद्धः कपोताङ्गारुणः पारावतकण्ठारुण्यसदृशारुण्यविशिष्टः धूमः दृश्यते । अरुणत्वं चाव्यक्तरागत्वम् , तथा च मेदिनी 'अरुणोऽव्यक्तरागेऽर्के संध्यारागेऽर्कसारथौ' इति ॥ ६ ॥

गो० टी०—ऋषीणामिति । कपोताङ्गारुणः कपोतकन्धरावदव्यक्तरागः 'अव्यक्तरागस्त्वरुणः' इत्यमरः ॥ ५ ॥

७ ] ति० टी०—अल्पपर्णा अपि तरवस्तमसाव्यक्तपर्णान्तरत्वाद्घनीभूता इव । विप्रकृष्टेन्द्रिये देशे इन्द्रियविप्रकृष्टे दूरे देश इत्यर्थः, न प्रकाशन्ति न प्रकाशन्ते ॥ ७ ॥

रा० टी०—अल्पेति । विप्रकृष्टानि दूरवर्तीनि इन्द्रियाणि यस्मात्तस्मिन् देशे समन्ततो विद्यमानाः अल्पपर्णा अपि तरवः घनीभूताः तमसा प्रौढत्वं प्राप्ताः दृश्यन्ते इति शेषः , अत एव दिशो न प्रकाशन्ति प्रकाशन्ते ॥ ७ ॥

गो० टी०—अल्पपर्णा इति । विप्रकृष्टेऽपि देशे अल्पपर्णाः ये तरवस्तेऽपि समन्ततः घनीभूता हि अव्यक्तपर्णान्तरालत्वात् सान्द्रीभूता इव । तत्र हेतुमाह—न प्रकाशन्ति वै दिश इति ॥ ६ ॥

८ ] ति० टी०—वेदितीर्थेष्वग्निहोत्रवेदिसंबन्धात्पुण्यक्षेत्ररूपाश्रमप्रदेशेषु तीर्थशब्दः पुण्यक्षेत्रवाची ॥ ८ ॥

---

१ हीति गो. पाठः । २ रमेऽहमिति गो. रमेयेति रा. पाठः । ३ शिवामिति गो. पाठः । ४ प्रतीति गो. पाठः । ५ ऋषीणामग्निहोत्रेषु हुतेष्विति गो. रा. पाठः

संप्रवृत्ता निशा सीते नक्षत्रसमलंकृता । ज्योत्स्नाप्रावरणश्चन्द्रो दृश्यतेऽभ्युदितोऽम्बरे ॥ ९ ॥
गम्यतामनुजानामि रामस्यानुचरी भव । कथयन्त्या हि मधुरं त्वयाहमपि तोषिता ॥ १० ॥
अलंकुरु च तावत्त्वं प्रत्यक्षं मम मैथिलि । प्रीतिं जनय मे वत्से दिव्यालंकारशोभिनी ॥ ११ ॥
सा तदा समलंकृत्य सीता सुरसुतोपमा । प्रणम्य शिरसा पादौ रामं त्वभिमुखी ययौ ॥ १२ ॥
तथा तु भूषितां सीतां ददर्श वदतां वरः । राघवः प्रीतिदानेन तपस्विन्या जहर्ष च ॥ १३ ॥
न्यवेदयत्ततः सर्वं सीता रामाय मैथिली । प्रीतिदानं तपस्विन्या वसनाभरणस्रजाम्[1] ॥ १४ ॥
प्रहृष्टस्त्वभवद्रामो लक्ष्मणश्च महारथः । मैथिल्याः सत्क्रियां दृष्ट्वा मानुषेषु सुदुर्लभाम् ॥ १५ ॥
ततः स शर्वरीं प्रीतः पुण्यां शशिनिभाननाम् । अर्चितस्तापसैः सर्वैरुवास रघुनन्दनः ॥ १६ ॥
तस्यां रात्र्यां व्यतीतायामभिषिच्य हुताग्निकान् । आपृच्छेतां[2] नरव्याघ्रौ तापसान्वनगोचरान् ॥ १७ ॥

---

रा० टी०—रजनीति । रजनीचरसत्त्वानि निशाचराः समन्ततः प्रचरन्ति । एते तपोवनमृगाः वेदितीर्थेषु पावनवेदिषु शेरते 'तीर्थमन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने । पात्रोपधावतरणेषु' इति वैजयन्ती ॥ ८ ॥

गो० टी०—रजनीचरेति । वेऽदितीर्थेषु वेद्यवतरणप्रदेशेषु 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने। पात्रोपधावतरणेषु' इति वैजयन्ती ॥ ७ ॥ ८ ॥

९ ] ति० टी०—चन्द्रो दृश्यते इत्यनेन कार्तिक्युत्तरं प्रतिपदि यात्रेति सूचितम् ॥ ९ ॥

रा० टी०—संप्रवृत्तेति । हे सीते! नक्षत्रसमलंकृता निशा संप्रवृत्ता अत एव ज्योत्स्नाप्रावरणः चन्द्रिकारूपावरणविशिष्टः अभ्युदितश्चन्द्रः अम्बरे आकाशे दृश्यते ॥ ९ ॥

१० ] ति० टी०—अनुचरी भव शुश्रूषुर्भव ॥ १० ॥

रा० टी०—गम्यतामिति । अहमनुजानामि आज्ञापयामि त्वया गम्यताम् । तत्प्रयोजनमाह—रामस्य अनुचरी भव हि यतः मधुरं कथयन्त्या त्वयाहं तोषिता ॥ १० ॥

गो० टी०—गम्यतामिति । अनुजानामि अनुमतिं करोमि 'अनुचरी भव' इति पाठः ॥ ९ ॥

११–१२ ] ति० टी०—अलंकुरु आत्मानमिति शेषः । प्रीतिं जनय अलंकृत्य दिव्यस्वस्त्ररूपानुभावनेनेति शेषः ११–१२

रा० टी०—अलमिति । हे मैथिलि ! दिव्यालंकारशोभिनि हे दिव्यालंकारशोभादायिनि मम प्रत्यक्षमलंकुरु मद्दत्तवस्त्रालंकारादीनि धारयेत्यर्थः । तत्प्रयोजनमाह—प्रीतिं मे जनय अलंकृतात्मदर्शनेन मत्प्रीतिमुत्पादयेत्यर्थः ॥ ११ ॥

रा० टी०—सेति । तदा अनसूयाज्ञापनकाले सुरसुतोपमा सा सीता समलंकृत्य पादौ अनसूयाचरणौ शिरसा प्रणम्य राममभिमुखी सती ययौ ॥ १२ ॥

रा० टी०—तथेति । तपस्विन्याः प्रीतिदानेन भूषितां सीतां राघवो ददर्श जहर्ष च ॥ १३ ॥

गो० टी०—अलंकुर्विति । अलंकुरु आत्मानमिति शेषः ॥ १०–१२ ॥

१४ ] ति० टी०—सर्वं न्यवेदयदित्यस्यैव प्रपञ्चः—प्रीतिदानमित्यादि । अत्र कर्मणि ल्युट् ॥ १४ ॥

रा० टी०—न्यवेदयदिति । ततः रामदर्शनानन्तरं मैथिली सीता तपस्विन्या वसनाभरणस्रजां प्रीतिदानं सर्वं सकारणं रामाय न्यवेदयत् । 'वसनाभरणस्रजम्' इति भूषणपाठः तत्पक्षे प्रीतिदानमित्यत्र कर्मणि ल्युट् ॥ १४ ॥

गो० टी०—न्यवेदयदिति । प्रीत्या दीयत इति प्रीतिदानं कर्मणि ल्युट् वसनाभरणस्रजां समाहारो वसनाभरणस्रजम् "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति समासान्तष्टच् । 'वसनाभरणस्रजाम्' इतिपाठे प्रीतिदानमिति भावे ल्युट्॥१३–१९॥

१५ ] ति० टी०—मानुषेषु मनुष्यलोकेषु ॥ १५ ॥

रा० टी०—प्रहृष्ट इति । मानुषेषु सुदुर्लभामनस्यां मैथिल्याः सत्क्रियामनसूयाकर्तृकसत्कारं दृष्ट्वा रामो लक्ष्मणश्च प्रहृष्टोऽभवत् ॥ १९ ॥

१६ ] ति० टी०—पुण्यामनसूयया पुण्यया कृतालंकारां सीतां दृष्ट्वा शर्वरीमुवास ॥ १६ ॥

रा० टी०—तत इति । ततः सीतासत्कृतिदर्शनानन्तरं तापसैः अर्चितः प्रीतः स रघुनन्दनो रामः पुण्यामनसूयासमर्पितपुण्यालंकारादिविशिष्टां शशिनिभाननां सीतां दृष्ट्वा शर्वरीं रात्रिमुवास ॥ १६ ॥

१७ ] ति० टी०—आपृच्छेताम् । वनान्तरगमनार्थमिति शेषः ॥ १७ ॥

रा० टी०—तस्यामिति । तस्यां वासाधिकरणीभूतायां रात्र्यां व्यतीतायां नरव्याघ्रौ रामलक्ष्मणौ अभिषिच्य स्नात्वा हुता अग्नयो यैस्तान् वनगोचरान् तापसान् अपृच्छेतां प्रार्थयेतां वनान्तरगमनायेति शेषः ॥ १७ ॥

गो० टी०—तस्यामिति । अभिषिच्य हुताग्निकान् स्नात्वा कृतहोमान् ॥ १६ ॥

---

१ स्रजमिति गो. पाठः । २ अपृच्छेतामिति रा. पाठः ।

तावूचुस्ते वनचरास्तापसा धर्मचारिणः । वनस्य तस्य संचारं राक्षसैः समभिप्लुतम् ॥ १८ ॥
रक्षांसि पुरुषादानि नानारूपाणि राघव । वसन्त्यस्मिन्महारण्ये व्यालाश्च रुधिराशनाः ॥ १९ ॥
उच्छिष्टं वा प्रमत्तं वा तापसं ब्रह्मचारिणम् । अदन्त्यस्मिन्महारण्ये तान्निवारय राघव ॥ २० ॥
एष पन्था महर्षीणां फलान्याहरतां वने । अनेन तु वनं दुर्गं गन्तुं राघव ते क्षमम् ॥ २१ ॥
इतीरितः प्राञ्जलिभिस्तपस्विभिर्द्विजैः कृतस्वस्त्ययनः परंतपः ।
वनं सभार्यः प्रविवेश राघवः सलक्ष्मणः सूर्य इवाभ्रमण्डलम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥

---

१८ ] ति० टी०—संचारं देशम् । द्वाविरार्षी । समभिप्लुतं सम्यगुपद्रुतम् ॥ १८ ॥

रा० टी०—ताविति । ते रामलक्ष्मणाभ्यां पृष्टाः धर्मचारिणस्तापसाः तस्य वनस्य संचारं देशं राक्षसैः समभिप्लुतं व्याप्तं तौ रामलक्ष्मणावूचुः संचारशब्दः स्वार्थाणन्तः ॥ १८ ॥

गो० टी०—ताविति । वनस्य संचारं कन्दमूलफलाद्याहरणार्थं संचारं राक्षसैः समभिप्लुतं सम्यक् उपद्रुतमूचुः ॥१७॥

१९ ] ति० टी०—व्याला हिंस्रपशवः । 'सर्पो हिंस्रःपशुर्व्यालः' इत्यमरः ॥ १९ ॥

रा० टी०—व्यापनप्रकारं वदन्नाह—रक्षांसीति । हे राघव ! नानारूपाणि अनेकवेषधराणि पुरुषादानि पुरुषभक्षणशीलानि रक्षांसि रुधिराशनाः व्यालाः सर्पाः हिंस्रपशवश्च अस्मिन् महारण्ये वसन्ति 'सर्पौ हिंस्रपशुर्व्यालः पुंसि श्वापदसर्पयोः' इत्यमरः उभयार्थलाभस्त्वेकशेषवृत्त्या ॥ १९ ॥

गो० टी०—रक्षांसीति । व्याला हिंस्रपशवः । 'सर्पहिंस्रपशू व्यालौ' इत्यमरः ॥ १८–२० ॥

२० ] ति० टी०—उच्छिष्टमशुचिम् । प्रमत्तमसावधानम् । तान्रक्षोव्यालान् ॥ २० ॥

रा० टी०—ननु किं तद्वासेनेत्यत आह—उच्छिष्टमिति । उच्छिष्टमुच्छिष्टस्पर्शादिना शुद्धिरहितमित्यर्थः । प्रमत्तमनवधानं वा तापसं ब्रह्मचारिणं च अस्मिन् महारण्ये अदन्ति तान् निवारय तद्राक्षसत्वं निवर्तयेत्यर्थः ॥ २० ॥

२१ ] ति० टी०—क्षमं युक्तम् ॥ २१ ॥

रा० टी०—एष इति । वने फलान्याहरताम् ऋषीणाम् एषः पन्थाः हे राघव ! अनेनैव पथा दुर्गं वनं गन्तुं ते क्षमम् उचितम् ॥ २१ ॥

२२ ] ति० टी०—इतीरित एवमुपदिष्टमार्गः । कृतस्वस्त्ययनः कृतमङ्गलाशीर्वादः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्येऽयोध्याकाण्ड एकोनविंशाधिकशततमः सर्गः ॥ ११९ ॥

रा० टी०—इतीति । प्राञ्जलिभिः प्रणयसूचकबद्धयुगुलकरैस्तपस्विभिर्द्विजैः इत्यनेन प्रकारेण ईरितः कथितः यात्रायै आज्ञापित इत्यर्थः, अत एव कृतस्वस्त्ययनः कृतं स्वस्त्ययनं यस्मै सः सभार्यः सलक्ष्मणः परंतपो राघवो रामः अभ्रमण्डलं सूर्य इव वनं प्रविवेश ॥ २२ ॥

स्वस्ति श्रीरघुनाथपादकमलद्वन्द्वप्रसादाद्वरो-
ऽयोध्याया हि शिरोमणिः समभवत्पूर्णस्त्रिवेणीतटे ।
स्वान्तध्वान्तनिवर्तनद्युमणिको रामायणस्थः सतां
वेद्यः श्रौतपथः शुभार्थनिचयः श्रीरामसंतोषकः ॥ १ ॥
नमो रामाय सीतायै लक्ष्मणाय हनूमते ।
यत्कृपालेशमात्रेण विघ्नबाधाः प्रभवन्ति हि ॥ २ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणावयोध्याकाण्डे एकोनविंशाधिकशततमः सर्गः ॥११९॥

गो० टी०—इतीवेति । तैः प्राञ्जलिभिः तपस्विभिः द्विजैः कृतस्वस्त्ययनः कृतमङ्गलाशीर्वचनः ॥ २१ ॥

इत्थं श्रीमच्छठारेश्चरणसरसिजद्वन्द्वनिर्द्वन्द्वसेवा-
निर्धूताशेषमोहो निरुपमधिषणः कौशिकानां कुलेन्दुः ।
गोविन्दार्यो निवार्य प्रतिकथकगजस्तोमपञ्चास्यरूप-
ष्टीकां पीताम्बराख्यां व्यतनुत विपुलां साधु साकेतकाण्डे ॥ १ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे पीताम्बराख्यानेऽयोध्याकाण्डव्याख्याने एकोनविंशोत्तरशततमः सर्गः ॥११९॥

इति श्रीमद्वाल्मीकिरामायणेऽयोध्याकाण्डं समाप्तम् ।

इति शिवम्